युक्तं सविनयमुपहरामः, येन विमर्शनदृष्ट्या तत्र तत्र तत्तदाचार्यसिद्धान्तविशेषा विज्ञाता नितरामेव विना पक्ष-पातं समालोचिता अलं कस्मै चन निर्णयाय भविष्यन्ति ॥

द्वैताद्वैतवादप्रस्थानात्मकेनानेनोभयेऽपि द्वैतिनोऽद्वैतिनश्चोपकृता भविष्यन्ति, यतोऽद्वैतसिद्ध्यादिवाक्यानि लघुचन्द्रिकादिनाऽव्याख्यातान्यपि तरङ्गिण्यादिना व्याख्यातानि, एवं न्यायामृतादिवाक्यान्यपि कठिनानि कानिचन सिद्ध्यादिना व्याख्यातानीति वस्तुस्थितिकथनमिदम् ॥

द्वैताद्वैतवादप्रस्थानप्रसङ्गेन तत्र तत्र न्यायमकरन्द-चित्सुखी-प्रमाणमालाऽद्वैतदीपिकादिग्रन्थेषु विशकलित-तयोपलभ्यमानानां खण्डन-मण्डनादिप्रसङ्गेनोट्टङ्कितानां प्रक्रियाविशेषाणामेकत्र संकलनेन विनैव कलङ्कं तत्तन्मत-प्रक्रियाविशेषाणामतिगभीरया प्रणाल्या सरलसरलयोपपादनेन श्रीव्यासतीर्था एव न्यायामृतकारा मूलाचार्या इति नेयमतिशयोक्तिः, इति वयं विश्वसिमः—यद् न केवलं द्वैतिनः, किन्त्वद्वैतिनोऽपि विमर्शनकुतूहला अधमर्णा एव न्यायामृतकाराणाम्, श्रीव्यासरायमठादिपुरुषाणां सर्वतन्त्रस्वतन्त्राणाम्, परश्शतनिबन्ध-निर्मातॄणाम् । विश्वसिमः—यत् श्रीव्यासतीर्था अनितरसाधारणमहिमशालिनस्तेजस्विनः सर्वविद्याधिष्ठानदेवताः शान्तप्रकृतयश्च यतिवर्या इदानीमपि स्वतेजसा जीवन्ति श्रीव्यासरायमठास्थाने, यत्र तत्पीठाधिष्ठानमात्रेण बालोऽपि बृहस्पतिसमानो मूकोऽपि वाग्मिप्रवरो भवति, इति वयमद्वैतमतावलम्बिनोऽपि तच्चरणकमलाश्रयण-मात्मनो भूषणमेव मन्महे । श्रीव्यासरायमठाधिष्ठानाः श्रीविजयीन्द्रतीर्थादयोऽपि विश्वसिमस्तत्पीठमहिम्नैव परश्शतनिबन्धनिर्माणेन लोकोपकारमादधुः ॥

सर्वतन्त्रस्वतन्त्राः सरस्वत्यपरावतारपुरुषाः श्रीमधुसूदनसरस्वत्यस्तु—"मधुरायाः समायाते मधुसूदन-वाक्पतौ । अनीशो जगदीशोऽभूद् न जगर्ज गदाधरः ॥" "मधुसूदनसरस्वत्याः सारं वेत्ति सरस्वती" इत्यादिवर्णनानां यथार्थपात्राणि द्वैतिनां श्रीव्यासतीर्था इवाद्वैतिनां परमाचार्याः, ये खलु स्वयमद्वैत-पीठमनधिष्ठायापि तदधिष्ठानभगवत्पादभक्तिमात्रेण स्वतःस्फुरत्सर्वविद्यावतारा अद्वैतसिद्ध्यादिबहुतर-निबन्धनिर्माणेनोत्तमर्णाः सर्वेषामपि धार्मिकाणां वैदिकानां च, इति द्वैतिनां न्यायामृतम्, अद्वैतिनामद्वैत-सिद्धिश्च यथायथं मूलनिबन्धौ द्वैताद्वैतवादप्रस्थानस्य, इति विवरणोपविवरणादिभिः साकं न्यायामृताद्वैत-सिद्ध्योस्समालोचनमेकमेव पर्याप्तं द्वैताद्वैतप्रक्रियाविज्ञानाय । न्यायामृतसौगन्ध्यपर्यन्तद्वैतप्रस्थानाचुम्बिताः प्रक्रिया न द्वैतप्रक्रियाः, विट्ठलेशयन्ताचुम्बितास्तु प्रक्रिया नाद्वैतिनां प्रक्रिया इति हि वस्तुस्थितिः । न्यायामृतसौगन्ध्यविमर्शो ह्यस्मदीयो विट्ठलेशयन्तापरामृष्टं कल्पितं नूतनं प्रक्रियाविशेषमवलम्ब्य कुत्रापि नात्मानं लभते, इति सौगन्ध्यविमर्शोऽयमस्माकमधीतानामेतेषामेव निबन्धानामंशविशेषत उपस्थापनमेव, न स्वतन्त्रो निबन्धविशेषोऽद्वैतसिद्ध्यादिरिव सर्वतन्त्रस्वतन्त्राणां श्रीमधुसूदनसरस्वत्यादीनामिति सप्रश्रयं निवेदयामः ॥

"श्रद्धाधनेन मुनिना मधुसूदनेन संगृह्य शास्त्रनिचयं रचिताऽतियत्नात् ॥"

इति सर्वतन्त्रस्वतन्त्रा अपि श्रीमधुसूदनसरस्वत्यः स्पष्टं वर्णयन्ति—यत्—पूर्वाचार्यप्रवर्तितशास्त्रार्थ-संग्रहण एव स्वस्याधिकारः, न तदमुक्तार्थकथन इति सर्वविदितमिदम् । न्यायामृतकारास्तु—

"विक्षिप्तसंग्रहात् क्वापि क्वाप्युक्तस्योपपादनात् । अनुक्तकथनात् क्वापि सफलोऽयं श्रमो मम ॥"

इति क्वचिदनुक्तकथनमपि स्वीयनिबन्धे प्रतिपादयन्ति, परन्तु स्वतन्त्रेच्छा मुनयो न नियोग-

पर्यनुयोगार्हाः। तरङ्गिणीकारादयस्तु—'अनुक्तकथनादि'त्युक्त्याऽप्यनुक्तवत्प्रतिभासमानानां कथनेनेत्यभिप्रायस्यैव विवक्षणादुक्तकथनमेव सर्वत्र न्यायामृतकाराणामपीति विवृण्वन्ति ॥

न्यायामृताद्वैतसिद्धी प्रायेण परस्परं प्रत्यक्षरविरुद्धार्थप्रतिपादिके, इति मङ्गलश्लोकमारभ्यान्तं समालोचनेन विशदीभविष्यति ॥

तदत्र तरङ्गिण्यादिसमव्याख्योपव्याख्योपबृंहितयोर्न्यायामृताद्वैतसिद्ध्योः, विना भागद्वयेन, प्रकाशनं न शक्यसम्भवम्, इति प्रथमं प्रत्यक्षप्राबल्यभङ्गप्रकरणावान्तरप्रकरणेन प्रत्यक्षयोग्यसत्त्वस्वरूपविचारेणालान्तिमेन प्रथमं भागं प्रियपाठकानामुपहरामः ॥

अत्र निबन्धद्वयेऽपि—चत्वारः परिच्छेदाः समुल्लसन्ति। तत्र खण्डनीयतया मण्डनीयतया च विचारिता विषया मार्कि शतसंख्याप्रमेया वर्तन्ते। यथा—

## प्रथमपरिच्छेदे

(१) विप्रतिपत्तिवाक्यस्य विचाराङ्गत्वम्
(२) पक्षतावच्छेदकविचारः
(३) प्रपञ्चमिथ्यात्वनिरूपणम्
(४) मिथ्यात्वमिथ्यात्वनिरूपणम्
(५) दृश्यत्वनिरुक्तिः
(६) जडत्वनिरुक्तिः
(७) परिच्छिन्नत्वनिरुक्तिः
(८) चित्सुखीयमिथ्यात्वनिरुक्तिः
(९) सोपाधिकत्वभङ्गः
(१०) आभाससाम्यभङ्गः
(११) प्रत्यक्षबाधोद्धारः*
(१२) प्रत्यक्षप्राबल्यभङ्गः
(१३) प्रत्यक्षस्यानुमानबाध्यत्वम्
(१४) प्रत्यक्षस्यागमबाध्यत्वम्
(१५) अपच्छेदन्यायवैषम्यभङ्गः
(१६) वह्निशैत्यानुमितिसाम्यभङ्गः
(१७) प्रत्यक्षस्याबाध्यत्वे बाधकम्
(१८) भाविबाधोपपत्तिः
(१९) सत्यत्वानुमानभङ्गः
(२०) मिथ्यात्वे विशेषतोऽनुमानानि
(२१) आगमबाधोद्धारः
(२२) असतः साधकत्वम्
(२३) असतः साधकत्वाभावे बाधकम्
(२४) दृग्दृश्यसम्बन्धभङ्गः
(२५) अनुकूलतर्कनिरूपणम्
(२६) प्रतिकर्मव्यवस्था
(२७) प्रतिकूलतर्कनिराकरणम्
(२८) मिथ्यात्वश्रुत्युपपत्तिः
(२९) अद्वैतश्रुतेर्बाधोद्धारः
(३०) ज्ञाननिवर्त्यत्वस्यानुपपत्तिः
(३१) दृष्टिसृष्ट्युपपत्तिः
(३२) एकजीवाज्ञानकल्पितत्वोपपत्तिः
(३३) अविद्यालक्षणम्
(३४) अविद्याप्रत्यक्षोपपत्तिः
(३५) अविद्यानुमानोपपत्तिः
(३६) अविद्याप्रतिपादकश्रुत्युपपत्तिः
(३७) अविद्यायामर्थापत्तिः
(३८) अविद्याप्रतीत्युपपत्तिः
(३९) अविद्यायाः शुद्धचिन्निष्ठत्वोपपत्तिः
(४०) अविद्याया जीवाश्रयत्वोपपत्तिः

* एतावदन्तो भागः प्रथमसंपुटेनानेन प्रकाश्यते।

## द्वितीयपरिच्छेदे



## तृतीयपरिच्छेदे

## चतुर्थपरिच्छेदे

(१) अविद्यानिवृत्तिनिरूपणम्
(२) अविद्यानिवर्तकनिरूपणम्
(३) मुक्तेरानन्दरूपत्वेन पुरुषार्थत्वनिरूपणम्
(४) चिन्मात्रस्य मोक्षभागित्वोपपत्तिः
(५) जीवन्मुक्त्युपपत्तिः
(६) मुक्तौ तारतम्यभङ्गः—इति ।

---

अत्र विप्रतिपत्तेर्विचाराङ्गत्वसम्भवासम्भवविचारो द्वैतिनामद्वैतिनां च तार्किकमतरीत्यैव, न स्वमतरीत्येति समानम् । अत्र प्रसङ्गे तार्किकमतखण्डने यावानाग्रहो द्वैतिनाम्, न तावानद्वैतिनाम् । अद्वैतिनस्तु तत्रैव भागे सर्वत्र खण्डनमावश्यकं मन्यन्ते, यत् साक्षात् परम्परया वाऽद्वैतवादं विरुणद्धि, नतु शिवद्रोहे तात्पर्येणांशविशेषे विरुद्धमिति स्वाविरुद्धमप्यंशं खण्डनीयं मन्यन्त इति व्यक्तमिदमस्मदीयनवव्याख्योपेतब्रह्मसूत्रभाष्यभूमिकायाम्, इति न्यायामृतकाराणां विप्रतिपत्त्युपयोगनिरसनमद्वैतिनां विप्रतिपत्त्युपयोगसमर्थनं च निबन्धद्वयेऽपि तत्तद्भावविशेषमात्रनिबन्धनम् । अतो न वयमपि विशेषतस्तत्र विचारणीयं किञ्चिदपि पश्यामः ॥

पक्षतावच्छेदकविचारोऽप्येतेन व्याख्यातः ; तत्रापि निबन्धद्वयेऽप्यद्वैतप्रक्रियामात्रमवलम्ब्यैव निरूपणप्रकाराणां विद्यमानत्वाद् न वाद-प्रतिवादयोर्विशेषतोऽस्त्यवसरः, इति प्रथमादिमिथ्यात्वस्वरूपमारभ्यैव वाद-प्रतिवादयोः संकलनमवसरप्राप्तम् ॥

तदत्र न्यायामृतादि-लघुचन्द्रिकापर्यन्तप्रबन्धसारसंकलनमावश्यकं पूर्वतनस्यास्मदीयस्य न्यायामृतादिसंग्रहस्यैव भूमिकान्ते पृथग् योजनेन चरितार्थं मन्महे, विश्वसिमः—प्रियपाठका अपि तस्यैव पुनरत्र योजनार्थमनुज्ञापनेनास्माननुग्रहीष्यन्तीति ॥

द्वैताद्वैतविप्रतिपन्ना मुख्या विषयाः—प्रपञ्चमिथ्यात्व-सत्यत्वे, भ्रान्तानिर्वचनीयत्वासद्रूपत्वे, भावरूपावरण-विक्षेपशक्तिमदविद्यास्वरूपसंभवासंभवौ, ब्रह्मनिर्विशेषत्व-सविशेषत्वे, जीवेश्वराभेद-तदभावौ, ब्रह्मणोऽभिन्ननिमित्तोपादानत्व-तत्केवलनिमित्तकारणत्वे, विचारस्य श्रवणविधिप्रयुक्तत्व-मननविधिप्रयुक्तत्वे, मुक्तौ जीवस्य ब्रह्मस्वरूपानतिरेक-तदभावौ, मुक्त्यैकरूप्य-तदभावौ च यथासंभवमूहनीयाः । तत्तदवान्तरप्रकरणानि त्वपरेषां विषयाणां तत्तद्विषयोपकारिणां प्रासङ्गिकानि, प्रसक्तानुप्रसक्तानि च ॥

तत्र जीवेशभेदप्रतिपादकत्वं "पृथगुपदेशात्" "तद्गुणसारत्वात्" इत्यादिसूत्रसिद्धमिति द्वैतमतम् । तत्र "तद्गुणसारत्वादि"त्यनेनैव गतार्थत्वात् 'पृथगुपदेशादि'त्यधिकरणं न केवलं तन्मते व्यर्थम्, किन्तु जीवाणुत्व-पराधीनकर्तृत्वादिनिरूपणानन्तरम्—"अंशो नाना व्यपदेशात्" इति जीवस्य स्वरूपांशत्वनिरासोऽप्यनुपपन्नः ; स्वरूपांशत्वशङ्काया एवानुपस्थितेः । खण्डनीयानि हि मतानि पूर्वपक्षतया विवक्ष्यमाणानि प्रायेण द्वितीयाध्यायद्वितीयपादसंगृहीतान्येव भवन्ति, अद्वैतमतं तु "अंशो नाना व्यपदेशात्" इत्यादिसूत्रतो निरस्यतया विध्रियमाणं न द्वितीयाध्यायद्वितीयपादनिरस्यतया द्वैतभाष्यकारा अपि मन्यन्ते । अद्वैतिनां तु भेदोऽपि कल्पितो वर्ततेऽभेदोऽपि पारमार्थिकः । जीवाणुत्व-व्यापकत्वादिपरस्परविरुद्धार्थप्रतिपादकानामविरोध औपाधिकत्वानौपाधिकत्वविवक्षणेनाद्वैतमते यथोपपद्यते, न तथा द्वैतमते । तथाच तत्र तत्र श्रुतौ सूत्रेषु भगवद्गीतायां वा जीव-ब्रह्मभेदप्रतीतिर्नाद्वैतिनां विरुद्धा, द्वैतिनां तु तदभेदप्रतीतिः सर्वत्रा-

त्यन्तमेव विरुद्धा, इति बहुतरक्लिष्टकल्पनादिकमपि समापद्यते। किञ्च सगुणेश्वर-जीवभेदप्रतिपादनमेव खलु द्वैतिनो मन्यन्ते, ननु निर्विशेषजीवेश्वरस्वरूपभेदप्रतिपादनम्। इदमेवात्रालोचनीयम्—यत् कथमिदमद्वैतवादस्य विरोधीति। अद्वैतिनोऽपि हि सगुणस्येश्वरस्य जीवस्य चाहमर्थस्य भेदज्ञानादिकमुपासनाद्युपयुक्तमेव मन्यन्ते। न ह्यद्वैतिनः सगुणेश्वरजीवाभेद एवाद्वैतमिति मन्यन्ते। सगुणेश्वरातिरिक्तं निर्गुणं ब्रह्म श्रुतिभिः प्रतिपाद्यमानमिति कृत्वा खलु द्वैतिभिः साकं विरोधः। निर्गुणस्वरूपं तु सकलप्रमाणमूर्धन्यश्रुत्यवगतं प्रमाणान्तरानवगतं च को नाम शक्नुयादपह्नोतुम्? यावत्सगुणमुक्ति जीवेश्वरभेदादिकं नाद्वैतिनोऽपि निह्नुवन्ति। न्यायामृत-तरङ्गिणी-न्यायामृतसौगन्ध्य-न्यायामृतकण्टकोद्धारादयो न केऽपि द्वैतग्रन्थाः—अद्वैतनिबन्धा व्यवहारदशायां जीव-ब्रह्मभेदप्रतिपादनपरा इत्यभिप्रेत्य प्रवर्तन्ते। 'स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमि'ति पक्षमपि यावद्व्यवहारं सत्तादात्म्येन प्रतीयमानत्वेनासद्विलक्षणत्वेन खल्वद्वैतिनो मन्यन्ते। सदसद्विलक्षणत्वं खलु मिथ्यात्वम्, नासत्त्वमात्रम्, इति बहुशोऽद्वैतसिद्ध्यादौ व्यवस्थापितम्, इति कुत्र वांऽशे न्यायामृतकारादीनामद्वैतिभिर्विरोधः प्रतिपाद्यते? इति विवेचनीयम्॥

अयं भावः—नाद्वैतिनो द्वैतमतं स्वस्य सर्वात्मना निरस्यं मन्यन्ते। अद्वैतिभिरपि यावद्ब्रह्मसाक्षात्कारं द्वैतमतस्योरीकारात्, परमार्थगतिस्त्वद्वैताभिमता द्वैताभिमता च भिन्नभिन्ना, इति खलु द्वैतिनोऽद्वैतिनां परमार्थावस्थां नामावस्थान्तरमसत्कल्पं व्यवस्थापयितुमेव प्रपञ्चमिथ्यात्ववादादिकं निरस्यन्ति। "किमिव वचनं न कुर्याद् नास्ति वचनस्यातिभारः" इति न्यायो हि न द्वैतिभिरपि प्रत्याख्यानमर्हति ; अन्यथा प्रत्यक्षादिप्रमाणासिद्धसगुणेश्वरस्वरूपमपि द्वैतिनां कथं नाम सिद्ध्येत्? इति त एव नाम विभावयन्तु। सति चैवमद्वैतिनोऽपि निर्विशेषवाक्यप्रामाण्येन परमार्थावस्थामपरामवगच्छन्तोऽवगमयन्तो वा कथं विरोद्धुं शक्यन्ते द्वैतिभिः॥

प्रत्यक्षविरोधः खलु प्रपञ्चमिथ्यात्वे न कथमपि भवतीति द्वैतिनोऽपि नियतमूरीकर्तुमर्हन्ति। सत्त्वं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपतयाऽन्ततो न्यायामृतकारादिभिर्निरुक्तं यदि स्वीक्रियते, तर्हि सामान्यलक्षणादिप्रत्यासत्तिस्वीकारेऽपि 'सन् घटः' इत्यादिलौकिकप्रत्यक्षबाध्यं न मिथ्यात्वानुमानम्, किन्त्वलौकिकप्रत्यक्षबाध्यम्। अलौकिकप्रत्यक्षं हि ज्ञानलक्षणप्रत्यासत्तिनिबन्धनं भ्रमात्मकं पूर्वतनं ज्ञानमादायापि भवितुमर्हति, सति चैवमलौकिकप्रत्यक्षस्य सत्तानिश्चयात्मकत्वानैयत्यात् कथमलौकिकप्रत्यक्षबाध्यं मिथ्यात्वानुमानम्? अत तरङ्गिणीकारा ज्ञानलक्षणप्रत्यासत्त्यादिनिरसनेन द्वैतमतेऽप्यलौकिक प्रत्यक्षं निराकुर्वन्तः 'सन् घटः' इति ज्ञानमनुमानरूपमेव, न प्रत्यक्षरूपमिति स्वीकुर्वन्ति। सर्वथा तु न 'सन् घटः' इति प्रत्यक्षबाध्यं मिथ्यात्वानुमानमिति तरङ्गिणीकारा अपि मन्यन्ते। न्यायामृतकण्टकोद्धारकारा अपि—अद्वैतसिद्धिमतं यत्किमपि स्वपूर्वाचार्यानुमतमपि प्रत्याख्येयमेव मन्वाना मिथ्यात्वविरोधिसत्त्वांशे सामान्यलक्षणप्रत्यासत्तिरपि द्वैतिनामादरणीयेति 'भिक्षानिषेधे नवोढायाः नाधिकारः' इति न्यायेन व्यवस्थापयन्तोऽपि परमार्थगत्या सामान्यलक्षणप्रत्यासत्तिनिरासेन 'सन् घटः' इत्यादीनां सत्त्वांशेऽनुमानमेव मन्यन्ते। नहि सन्निहिते विषयेऽनुमानसामग्री प्रबला, इति कथमलौकिकप्रत्यक्षेणासत्कल्पेन मिथ्यात्वानुमानबाधः?

परमार्थतस्तु—न्यायामृतसौगन्ध्यकारादयस्सर्वेऽपि तरङ्गिण्या अनुवादेन यथा स्वीयं मतं व्यवस्थापयन्ति, नैवं न्यायामृतकण्टकोद्धारादीनाम्, येषां तरङ्गिणीसिद्धान्तेऽपि विशेषतोऽनादरो दृश्यते, इति मिथ्यात्वानु-

मानस्य प्रत्यक्षबाधोक्तिरियं स्वनिबन्धस्यैव विरुद्धा ; यतस्तरङ्गिणीकारा अपि—अनुमानबाधव्यवस्थापन एवं प्रत्यक्षयोग्यसत्त्वविचारप्रकरणस्य पर्यवसानं मन्यन्ते ॥

ब्रह्मकेवलनिमित्तकारणत्वपक्षो हि न केवलम्—'प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्" "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" "परिणामात्" इत्यादिसूत्रार्थस्वारस्यविरुद्धः, किन्तु तत्र ब्रह्म-प्रपञ्चयोर्निमित्त-नैमित्तिकयोर्वैलक्षण्यस्याप्यनुपपत्त्यभावात्—"न विलक्षणत्वादस्य तथात्वं च शब्दात्" इति सूत्रानुपपत्तिरपि। सत्यं वेदाप्रामाण्यशङ्कानिराकरणपरतयोक्तं सूत्रं द्वैताचार्या योजयन्ति, परं तु वेदप्रामाण्यस्य पूर्वतन्त्रे, उत्तरतन्त्रे च पूर्वं देवताधिकरणादौ साधितत्वाद् दुष्परिहरोऽयमेतत्सूत्रवैतथ्यापत्तिरूपो दोषः। यथा च "यतो वा इमानि भूतानि जायन्ते" इत्यादीनां वाक्यानां द्वैताभिमतं योजनं न विचारसहम्, तथाऽस्मदीयाद्वैतदीपिकायां द्वितीयभागे विशदमेव। किं बहुना—"सर्वं खल्विदं ब्रह्म" "बहु स्यां प्रजायेय"इत्यादीनि वाक्यानि बहुक्लिष्टतया द्वैताचार्या योजयन्ति, इति ब्रह्माभिन्ननिमित्तोपादानतावाद एव क्षोदक्षमः, इति ब्रह्म-प्रपञ्चयोरुपादानोपादेयभावः प्रपञ्चमिथ्यात्वमन्तरा नोपपद्यते ॥

सति चैवं ब्रह्मविवर्तवादस्यैव सूत्रारूढत्वात् स्वरूपचैतन्याध्यस्तत्वेनैव सर्वेषां चैतन्यातिरिक्तानां सत्त्वेन भानाद् जीव-ब्रह्मस्वरूपचैतन्याभेदबोधनं परमार्थगत्याऽद्वैताभिमतं दुरपह्नवमेव ॥

स्पष्टं हि सर्वोपनिषत्सारभूतायां भगवद्गीतायाम्—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत। क्षेत्र-क्षेत्रज्ञयोर्ज्ञानं यत्तद् ज्ञानं मतं मम ॥"

इति जीव-ब्रह्माभेदप्रतिपादनमुपपद्यते। अत्र ह्युपाधिभूतसर्वक्षेत्रविवेकेन चैतन्यस्वरूपमात्रमभिप्रेत्य स्वस्वरूपचैतन्यमात्राभेदः प्रतिपाद्यत इति 'सर्वक्षेत्रेषु' 'क्षेत्रज्ञमि'तिपदद्वयप्रयोगेणावगम्यते। इदं चाद्वैतमतविवक्षायामेवोपपद्यते, नतु द्वैतमतविवक्षायाम्, यत्र क्षेत्रज्ञपदेनेश्वरस्वरूपं गृहीत्वा स्वस्येश्वरत्वं भगवता प्रतिपाद्यते। अत्र यदि जीववैलक्षण्यबोधनार्थं स्वस्येश्वरत्वोपदेशः, तर्हि—"न त्वेवाहं जातु नासम्" इत्युपक्रम एव तत्प्रतिपादनात्, विश्वरूपाध्यायेन च विशिष्यार्जुनस्य भगवत्स्वरूपप्रदर्शनेन तत्र जीवत्वशङ्काया व्युदासाच्च वितथमिदं वाक्यमापद्येत। "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इति 'इदं'-पदनिर्देशपूर्वकं निर्दिष्टम् 'अहं गच्छामी'त्यादौ प्रत्यक्षं शरीरं निर्दिश्य तदभिज्ञत्वमात्रेण क्षेत्रज्ञत्वं हि गीतायां प्रतिपाद्यमानं नेश्वरस्वरूपं भवितुमर्हति ॥

सत्यमत्र—'शरीरम्' इत्यत्र शर् च ईरश्च शरीरमिति समाहारद्वन्द्वेन चेतनाचेतनवर्गः सर्वोऽपि शरीरपदार्थतया विवक्षित इत्यस्ति विवरणं द्वैताचार्याणां केषांचन, परन्तु नेदं गीताक्षरानुगुणम्। अत्र हि प्रकरणे व्यष्टिरूपेणास्मदादिशरीरं क्षेत्रमित्यभिधाय समष्टिरूपेण महाभूतादिकं च क्षेत्रमित्यभिधायोभयोरपि ज्ञेयांशस्तु क्षेत्रांशविनिर्मुक्तं चैतन्यमात्रमेव, न तु सक्षेत्रम्, इति जीवानामिव स्वस्योपाधिना परिच्छेदः कल्पित एव, इत्युपाधिविलापनेन चैतन्यमात्रज्ञेयताप्रतिपादनार्थ एव त्रयोदशोऽध्यायः, न त्वीश्वरस्य क्षेत्रज्ञत्वप्रतिपादनार्थः।

मतद्वयसंप्रतिपन्नमिदम्—यत् क्षेत्रज्ञ एवात्र ज्ञेयतया विवक्ष्यते, इति क्षेत्रज्ञातिरेकेण न किमप्यस्मिन् अध्याये प्रतिपाद्यत इति। तत्र व्यष्टिरूपेण—"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इति क्षेत्रस्वरूपम्—"एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः" इति च क्षेत्रज्ञो वर्णितः, अनन्तरञ्च—"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः॥ इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।

एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥" "एतद् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।" इति च समष्टिरूपेण क्षेत्रस्वरूपमात्रमुपवर्ण्य वेत्तृतया क्षेत्रज्ञस्वरूपवर्णनं विनैव—"ज्ञेयं यत् तत् प्रवक्ष्यामि" इति ज्ञेयतयैव क्षेत्रज्ञरूपं प्रतिपाद्यते। तत्र प्रथमं व्यष्टिमुखेन क्षेत्रज्ञोपदेशप्रक्रमे प्रयुक्तस्य "एतद् यो वेत्ति" इत्यस्यैवात्राप्यनुषङ्गेण क्षेत्रज्ञस्वरूपं वेत्तृतयाऽप्युपक्षिप्तमिति तु वस्तुस्थितिः। एवं क्षेत्रज्ञस्वरूपानुवादेन तस्य स्वस्वरूपत्वं पारमार्थिकमुभयस्य बोधयितुं प्रवृत्ते हि—"अनादिमत् परं ब्रह्म न सत् तद् नासदुच्यते ।" इति वचने सत्तादिधर्मराहित्यमपि क्षेत्रज्ञस्य यत् प्रतिपाद्यते, तदिदमद्वैताभिमतस्वरूपचैतन्याभिप्रायत्व एवोपपद्यते, नान्यत्र। निर्गुणादिपदानामपि विना क्लिष्टकल्पनमत्रैवोपपत्तिः। अत्र प्रकरणे प्रतिपादनीयं वस्तु—क्षेत्रम्, क्षेत्रज्ञस्वरूपम्, तज्ज्ञानसाधनमिति त्रिविधमेव, तत्र क्षेत्रं कार्यमुखेन "महाभूतान्यहङ्कारः" इति वाक्यादवगम्यते, कारणमुखेन त्वेकरूपमेव क्षेत्रं प्रकृतिपदवाच्यम्, इति प्रकृतिः क्षेत्रम्, पुरुषस्तद्विविक्तः क्षेत्रज्ञः, महाभूतादिकं क्षेत्रम्, ईश्वरः क्षेत्रज्ञः, व्यष्टिशरीरं क्षेत्रम्, जीवः क्षेत्रज्ञः, इति त्रिविधं क्षेत्र-क्षेत्रज्ञस्वरूपविवेचनं दृश्यते। तत्र प्रथमतस्त्वंपदार्थशोधनेन क्षेत्रज्ञस्वरूपम्, ततस्तत्पदार्थविवेचनेन क्षेत्रज्ञस्वरूपम्, अनन्तरं तु महातात्पर्यदृष्ट्या स्वरूपचैतन्यमात्रं यदि प्रतिपादनीयम्, तर्हि शरीरादीनां स्वतस्तत्तत्कारणमहाभूतादिरूपेण, तत्कारणरूपेण चैकीकृत्य चैतन्यस्वरूपव्यतिरिक्तानां क्षेत्रपदेन, चैतन्यस्य जीवेश्वरानुगतस्य पुरुषपदेन च ग्रहणेनैव क्षेत्र-क्षेत्रज्ञस्वरूपं प्रतिपादनीयम्। प्रतिपाद्यते चैवमेव—"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।" इत्यादिना। अत्र हि पुरुषत्वेन जीवेश्वरस्वरूपानुवादेन तस्यैव परमात्मस्वरूपत्वं प्रतिपादयितुमेवेदं प्रकरणं प्रवृत्तम्, इति—"उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः" इति श्लोकतो विज्ञायते। अत्र "देहेऽस्मिन्" इति देहशब्देन प्रकृतिरूपस्य शरीरस्य व्यष्टि-समष्ट्यात्मकस्यैकवचनान्तेन ग्रहणाद् जीवब्रह्माभेदः स्पष्टं प्रतिपाद्यते। अत्र प्रकृत्यभिमानिन ईश्वरत्वस्य स्वतः सिद्धत्वात्, "प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया" इत्यादौ मायाधिष्ठातृत्वस्य निरूपणाच्च व्यर्थमिदं सर्वं प्रकरणमापद्येत, इत्यद्वैतमत एव त्रयोदशाध्यायस्वारस्यम्, न द्वैतमते। द्वैतमते हि—व्यष्टिरूपेण समष्टिरूपेण च जीवस्यापि क्षेत्रत्वं यदि विवक्षितं स्यात्, तर्हि 'महाभूतान्यहङ्कारः' इत्यादौ केन वा पदेन जीवस्वरूपं विवक्ष्यत इति वक्तव्यम्। वयं तु पश्यामो न केनापि पदेन। युक्तश्चैतत्। अत एव "प्रकृतिं पुरुषं चैव" इति श्लोकव्याख्यावसरे प्रकृतिशब्देन "महाभूतानी"त्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्त इति द्वैताचार्याणां विवरणमुपपद्यते। न हि चतुर्विंशतितत्त्वेषु जीवस्वरूपमपि समस्ति। तथाच—"एतत् क्षेत्रं समासेन सविकारमुदाहृतम्" "इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।" इत्युपसंहारद्वयमध्येऽपि द्वैतिभाष्यादिदृष्ट्याऽपि जीवस्वरूपस्याप्रतिपादनाद् जीवोऽपि क्षेत्रपदार्थ एवेति द्वैतिनां विवरणमिदं गीताक्षरस्वारस्यविरुद्धमेव। तदेवं भगवद्गीताक्षरस्वारस्यसिद्धोऽपि जीवब्रह्माभेदवाद एव, न तु द्वैतवादः। अत एव "नित्यः सर्वगतः स्थाणुरि"ति सर्वगतत्वं जीवस्य प्रतिपादितमुपपद्यत इति व्यक्तमिदमन्यत्र प्रतिपादितम्। जीवपदेनात्र मुख्यं जीवस्वरूपं विवक्ष्यते, नतु विशिष्टम्, तस्य क्षेत्रत्वं त्वौपाधिकं नाद्वैतानामपि विरुद्धम् ॥

अपरेऽपि विषया द्वितीयभागसंग्रहावसरे नियतमेव संगृहीता भविष्यन्ति। एतावत्त्वत्र सप्रश्रयं निवेद्यते—यद् द्वैताद्वैतवादप्रस्थानविचारो महनीयाचार्यवर्यप्रचार्यमाणो विचारशीलानां निरतिशयमुत्साहप्रदो भविष्यति, इति केवलं न्यायामृतादीनां निबन्धानां तत्तद्व्याख्योपव्याख्यादिभिस्साकं संस्करणेनेदानीं प्रकाशनार्थं

बद्धदीक्षाः 'मेट्रोपालिटन्-पब्लिषिङ् हौस्'मुद्राणालयाध्यक्षा भट्टाचार्य-चतुर्धुरीणमहोदयाश्शिरोत्तमर्णाः सर्वेषां द्वैताद्वैतविचारकुतूहलानाम् ॥

न्यायामृतादिसमयनिर्धारणं तत्तन्मतपरीक्षणपूर्वकमाङ्गलभाषामयभूमिकायां विस्तृतं कृतमस्तीति केवलम्—ग्रन्थानां क्रममात्रमत्र निर्दिशामः । श्रीव्यासतीर्थानां समयः—१४४६-१५३९ । तेषां संन्यासगुरवः—श्रीब्रह्मण्यतीर्थाः । तेषां विद्यागुरवः—श्रीलक्ष्मीनारायणमुनिपदेन श्रीपादराजपदेन च व्यपदिश्यन्ते । एतेषामन्तेवासिषु विशिष्य निर्देशमर्हन्ति सर्वतन्त्रस्वतन्त्रा विजयीन्द्रस्वामिनश्चतुःशतनिबन्धनिर्मातारः । श्रीव्यासतीर्थाधिष्ठितं स्थानं तु श्रीव्यासरायमठाख्यं महीशूरपुरान्तर्गतसोसलेप्रदेशवर्ति । तेषां निबन्धास्तु प्रधानतमा न्यायामृतम्, तर्कताण्डवम्, तात्पर्यचन्द्रिका, भेदोज्जीवनम्, तत्त्वविवेकटीका, मायावादखण्डनटीका, उपाधिखण्डनटीका, मिथ्यात्वानुमानखण्डनटीकेत्यादयः ॥

न्यायामृतटीकास्तु बहवो विद्यन्ते—तरङ्गिणी, न्यायामृतसौरभम्, न्यायामृतामोदः, इक्षकूलङ्कषा, श्रीनिवासतीर्थीयम्, कण्टकोद्धारः, यादवेन्द्रीयम्, माधुरी, न्यायामृतसौगन्ध्यम्, इत्यादयः ॥

तत्र तरङ्गिणीकाराः श्रीरामाचार्याः श्रीरामतीर्था वा(१) । श्रीरामाचार्याः, श्रीविजयीन्द्रस्वामिनः, श्रीमदप्पय्यदीक्षितेन्द्राः, श्रीमधुसूदनसरस्वत्यः, श्रीबलभद्रभट्टाचार्याश्च समानकालिकाः षोडशशतकस्यान्तिमभागवर्तिन आसन्, इति बहुभिः कारणैरवगच्छामः । तरङ्गिणीलेखनानन्तरमेव कण्टकोद्धारोऽवततार । तरङ्गिणीकण्टकोद्धारयोः पौर्वापर्यनिर्णयस्तु कण्टकोद्धारे बहुशस्तरङ्गिण्यनुवादेन तरङ्गिणीमतनिरसनेनावगम्यते । इदमप्यनेन विशदीभवति—यद् न्यायामृतकण्टकं न केवलमद्वैतसिद्धिः, किन्तु तरङ्गिण्यपीति द्वैतमतानुयायिनोऽपि केचन मन्यन्ते । तदयं क्रमः—यत् प्रथमं न्यायामृतम्, ततः श्रीमधुसूदनसरस्वतीनां षोडशशतकान्तिमभागवर्तिनामद्वैतसिद्धिः ॥

अद्वैतसिद्धिकाराणां श्रीमधुसूदनसरस्वतीनां देशो वङ्गदेशे कोटालीपाड़ानामा, एतेषां मूलपुरुषाः श्रीराममिश्रनाम्ना प्रसिद्धाः, तत आरभ्य तेषामद्यपर्यन्तं वंशावली मुद्रापितैवान्यत्र । एतेषां पितृपादा ज्येष्ठभ्रातरो वा पुरन्दरभट्टाचार्याः, सांप्रतं तद्वंश्या जीवन्तः पण्डितवर्यास्तु महामहोपाध्याय-श्रीहरिदासभट्टाचार्यसिद्धान्तवागीशमहोदयाः, श्रीसीतानाथसिद्धान्तवागीशाः, श्रीकालीपदतर्काचार्यप्रभृतयश्च । श्रीमधुसूदनसरस्वतीनां गुरवस्तु "श्रीराम-विश्वेश्वर-माधवानामि"त्युपक्रमश्लोकत एवावगम्यन्ते, तदन्तेवासिषु प्रधानतया श्रीरामाचार्याः, श्रीबलभद्रभट्टाचार्यादयश्च प्रसिद्धा एव । एतदीया निबन्धा अपि—अद्वैतसिद्धिः, गूढार्थदीपिका, संक्षेपशारीरकमहिम्नःस्तोत्र-श्रीमद्भागवतव्याख्यानानि, सिद्धान्तबिन्दुः, अद्वैतरत्नरक्षणम्, प्रस्थानभेदः, भक्तिरसायनम्, वेदान्तकल्पलतिकेत्यादयो विदितचरा एव विदुषाम् । अधिकमेतच्चरित्रविषये श्रीराजेन्द्रनाथघोषसंपादितवङ्गानुवाद-नूतनव्याख्यान्तरादिसहिताद्वैतसिद्धिभूमिकायां विस्तृतायां द्रष्टव्यम् ॥

---

(१) श्रीमध्वसंप्रदाये प्रायेणाचार्याः सर्वेऽपि तीर्थोपपदेन स्वशर्मणाऽऽचार्योपपदेन वा तेन व्यपदिश्यन्ते, श्रीरामाचार्यास्तु रामाचार्यपदेन व्यपदेशं स्वयं प्रतिपादयन्तस्तीर्थपदेनोपपदेनाप्यन्येषां दृष्ट्या व्यपदेशमर्हन्ति, इति कैश्चन्न रामतीर्थपदेनापि व्यपदिश्यन्ते । "रामो महत आनम्ये"त्युपक्रमश्लोकतः शर्म तु तरङ्गिणीकाराणां श्रीराम इत्येव जानीमः । श्रीरामाचार्यतीर्था इति व्यपदेशकल्पना तु निरालम्बना । सति चैवं मद्रासहिन्दुपत्रिकायामस्मदीयब्रह्मसूत्रभाष्यभूमिकायाः श्रीनागराजशर्मणां समालोचनमेतद्विषयं चिन्त्यमिति मन्तव्यम् ॥

अद्वैतसिद्धेरत्र न्यायामृतखण्डनपराया योजिताया व्याख्यानानि प्रसिद्धानि प्राचीनानि—बृहच्चन्द्रिका, लघुचन्द्रिका, सिद्धिव्याख्या च। बालबोधनाम्नी काचनापरा व्याख्येदानीं कलकताराजकीयमहाविद्यालय-वेदान्तविभागाध्यापकमहामहोपाध्यायश्रीयोगेन्द्रनाथतर्कवेदान्ततीर्थानां वङ्गाक्षरैर्मुद्राप्य प्रकाशिता वरीवर्ति। अस्मिन् संस्करणे सिद्धिव्याख्या, लघुचन्द्रिका च योजिताऽस्माभिः॥

तदनन्तरं तु तरङ्गिणीनाम्नी न्यायामृतव्याख्या, यस्यां प्रायेणाक्षरशोऽनुवादेनाद्वैतसिद्धिनिरसनार्थं प्रयतितम्, यस्याः पूर्वं पृथक् कुम्भघोणतः प्रकाशनमभूत्। कण्टकोद्धाराख्यं चापरमपि न्यायामृतव्याख्यान-मद्य यावदप्रकाशितं वर्तते। उभयमप्यत्र संस्करणे योजितं पाठकानां तदर्थग्रहणसौकर्याय॥

तदनन्तरं तु तरङ्गिण्या अक्षरशोऽनुवादेन निरसनपरं सिद्धिव्याख्यानं विवरणान्तरमद्वैतसिद्धेराविर-भूत्, यत्र न केवलं तरङ्गिण्याः, किन्तु बहूनामपरेषां द्वैतनिबन्धानां निरसनं पश्यामः, तदप्यत्र संस्करणे योजितं सिद्धिव्याख्याख्यम्—संभावयामः—श्रीबलभद्रभट्टाचार्या एव यस्य कर्तार इति, महानुपकारोऽद्वैतसिद्धि-भावग्रहणे स्यादिति। एतेषां गुरवः श्रीमधुसूदनसरस्वत्य इति जानीमः। अधिकं तु वक्तव्यमस्मदीय-निर्णयसागरभूमिकातोऽवगन्तव्यम्॥

ततो लघुचन्द्रिकाया अवतारः, यस्याः कर्तारः श्रीब्रह्मानन्दसरस्वत्यः। एतेषां गुरुपरम्पराक्रमस्तु श्रीमदा-चार्यबादरायणमारभ्य तदन्तेवासिनामभिनवद्राविडाचार्याणां सविवरण-श्लोकबद्ध-शारीरकमीमांसाभाष्यवार्तिक-निबन्धतः—यस्य प्रकाशनं नाद्य यावत् समभूत्, अतिगभीरमतिविस्तृतं च यत्, किं बहुना? दैववशेनास्माक-मेव दृष्टिपथं प्राप्तमिदानीमेव दशदिनाभ्यन्तरे, स्पष्टमवगन्तुं शक्यते, इति सविवरणं वार्तिकमेव तेषां यथावदत्र संगृह्य स्थालीपुलाकन्यायेन सांप्रतं तत्परिचयप्रदानार्थं प्रकाशयामः, विश्वसिमः—यस्यातिविस्तृतस्य प्रकाशनमपि नचिरेणेत एव मुद्रणालयात् चतुःसूत्रीपर्यन्त-भामती-कल्पतरु-परिमलाभोगादिभिः साकं भवितेति॥

तदन्तेमे सविवरणवार्तिकश्लोका अभिनवद्राविडाचार्यश्रीबालकृष्णानन्दसरस्वतीपादानां संगृह्य प्रकाश्यन्ते—

समन्तात् संवीतं सकलमुनिबृन्दैरपि सदा
समस्ताम्नायार्थप्रवचनसमुन्निद्रहृदयम्।
सचिन्मुद्रं व्यासं सजलजलदश्यामलतनुं
समासीनं वीरासनकलनया नौमि सततम्॥

अथ वेदान्तशास्त्रसूत्रप्रवर्तकं व्यासं नमस्यति—*समन्तादिति*॥ परितः सदर्षिभिर्वेष्टितं सकल-वेदार्थकथनजागरूकमनसं ज्ञानमुद्रासहितं मेघश्यामलं वीरासने समुपविष्टं व्यासं सदा नौमीति गोलार्थः॥ २॥

त्रिवर्गेणाक्रान्ते जनन-मरणादिव्रणभुवा
जनेऽस्मिन् सर्वस्मिंस्तिमिरपरिणाहैकशरणे।
निषेक्तुं निध्यातोऽमृतमगपतिः शङ्कर इति
स्वनाम व्याख्यातुं जयति कुहनाभिक्षुरनिशम्॥

अथ व्याससूत्रभाष्यकर्तारं भगवत्पादमनुसन्धत्ते—*त्रिवर्गेति*॥ जन्म-मरणादिदुःखस्फोटखनिभूतेन धर्मार्थ-कामलक्षणत्रिवर्गेण समावृते, *तिमिरपरिणाहैकशरणे=अविद्यासमृद्धिस्थानभूते परिदृश्यमानजने,

*अमृतम्=मुक्तिसुधां निषेक्तुं समर्थः, श्रीगिरिशः 'शङ्करः' इति स्वनाम व्याख्यातुम्=प्रकाशयितुं सुखकरो लोकानामिति प्रकटयितुम्, व्याजयतिः सन् सततं जयतीत्यर्थः ॥ ४ ॥

पुराणं पुण्यानामवधिरवसन्नं समरसं
दुरूहे पाथोधावपनयमहानक्रगहने ।
मनोमन्थानेन प्रतिनयसमावृत्ततनुना
जगत्यामद्वैतं जयति भगवत्पादनिचितम् ॥

अथ भगवत्पादप्रकाशितमखण्डं पुरुषार्थमनुस्मरति—*पुराणमिति* ॥ चिरन्तनम् । *पुण्यानामवधिः=निरतिशयानन्दत्वेन सर्वानन्दानामत्रान्तर्भावात् सकलपुण्यप्राप्यसुखसीमा । यद्वा—सकलपुण्यनिर्मलजनप्राप्यत्वात्, 'तमेतमि'त्यादिश्रुतेः, पुण्यावधिः । असन्न्यायनक्रत्वादनाक्रमणीये दुस्तर्कसमुद्रे समरसं सैन्धवखण्डवदवसन्नम्=लीनम्, *मनोमन्थानेन प्रतिनयसमावृत्ततनुना=सिद्धान्तन्यायरज्जुपरिवृत्तशरीर-मनोरूपमन्थनदण्डेन, *भगवत्पादनिचितम्=श्रीशङ्करयतीन्द्रसङ्गृहीतम्, *अद्वैतम्=अखण्डचित्स्वरूपम्, जगत्यां जयतीत्यन्वयः ॥ ५ ॥

समाधावम्भोधौ सकलकलिकः शारदविधुः
समाधानादीनां निरवधिमणीनां वरनिधिः ।
यतीनां गोविन्दो हृदयजलजानां दिनमणि-
श्चिरं चेतोऽम्भोजे सुभगचरितो मे विजयताम् ॥

अथ भाष्यकर्तुर्गुरुं संप्रदायशुद्धयै परिचिन्तयति—*समाधाविति* ॥ समाधिसमुद्रे सकलकलः शारदचन्द्रः, समाधान-शमादिगुणमणीनां निरवधिखनिः, यतिहृदयकमलरविः, शोभनचरितः श्रीगोविन्दभगवत्पादाचार्यो हृदयजलजे मे विजयतामित्यर्थः ॥ ६ ॥

परिव्राजामाद्याः परमगुरवः शङ्करयतेः
प्रणेतारः प्रौढं गहनतरमाण्डूक्यविवृतेः ।
परानन्दाभोगे पटुतरहृदो गौडचरणाः
पुरस्ताद् नः स्फूर्तिं विदधतु चिदानन्दमधुराम् ॥

अथ श्रीशङ्कराचार्यपरमगुरून् ब्रह्मविद्याप्रवर्तकाननुसन्धत्ते—*परिव्राजामिति* ॥ *परिव्राजामाद्याः=

"नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं यतीन्द्रं गोविन्दयोगीन्द्रमपि स्मरामि ॥"

इति सम्प्रदायवित्कारिकारीत्या ब्रह्मविद्यायां श्रीशुकशिष्याः परिव्राजामाद्याः, एतद्युगे प्रथमयतयः शङ्कराचार्यपरमगुरवः, *गहनतरमाण्डूक्यविवृतेः=अतिगहनाया माण्डूक्योपनिषद्विवृतेः श्रुतिविवरण-वैतथ्यप्रकरणाद्वैतप्रकरणालातशान्तिप्रकरणचतुष्टयरूपायाः प्रौढं यथा भवति तथा कर्तारः, *परानन्दाभोगे पटुतरहृदः=परानन्दानुभवे समर्थमनसः, गौडचरणाः=कुरुक्षेत्रदेशगत'हिररावती'नदीतीरभवगौडजातिश्रेष्ठाः देशविशेषभवजातिनाम्नैव प्रसिद्धाः द्वापरयुगमारभ्यैव समाधिनिष्ठत्वेनाधुनिकैर्जनैरपरिज्ञातविशेषाभिधानाः सामान्य-

नाम्नैव लोकविख्याताः, *चिदानन्दमधुराम्=अखण्डसच्चिदानन्दरूपाम्, स्फूर्तिम्=प्रतिभाम्, विदधतु=कुर्वन्तु, इत्यन्वयः ॥ ७ ॥

स्फुटाटोपं टीका व्यरचि गुरुवाचां नरहरेः
कृपापात्रीभूतैर्विशदवचसाऽऽपञ्चचरणम् ।
नयैः सद्भिर्यैस्ते कमलचरणाचार्यमणयो
नयन्त्वेनोहार्नि विनयमपि चेतो मम सदा ॥

अथ श्रीशङ्करभगवत्पादशिष्यं सर्वश्रेष्ठं पद्मपादाचार्यमौत्तरद्राविडाचार्यं प्रार्थयते—*स्फुटेति ॥ नरहरेः कृपापात्रीभूतैर्यैः पद्मपादाचार्यैः, *गुरुवाचाम्=गुरोः=श्रीशङ्कराचार्यस्य वाचाम्=शारीरकभाष्यगिराम्, आपञ्चचरणम्=पञ्चचरणपर्यन्तम्, *टीका=टीकेति प्रसिद्धा विवृतिः, स्फुटाटोपं यथा भवति तथा=सुरेशाचार्येण कनिष्ठेन मुख्यशारीरकभाष्यटीका मयि व्याख्यातरि जागरूके सति कथं विधेया ? मयैव विधेया टीकेत्याचार्याणामभ्यनुज्ञामाटोपसहितम्, परनिराकरणायाटोपापेक्षणात्, (प्राप्य) *सद्भिर्नयैर्व्यरचि=विरचिताऽभूत्, ते *कमलचरणाचार्यमणयः=पद्मपादाचार्यगुरवः, *एनोहानिम्=ब्रह्मविद्याप्रतिबन्धकपापहानिम्, महत्सु ब्रह्मविद्याप्रवर्तकेषु विनयमपि मम चेतः प्रापयन्तु, इत्यन्वयः ॥ ८ ॥

सुरेशार्या वर्याः सुरगुरुसमाना धिषणया
स्वतन्त्राः स्वं तन्त्रं शतपथशिरस्तित्तिरिगिराम् ।
मुहुर्भाष्ये भाष्ये विमलवचनैर्वार्तिकवरं
स्फुरन्तु स्वच्छन्दं सपदि कृतवन्तः सुकृतिनः ॥

अथातिकनिष्ठत्वेऽपि ब्रह्मविद्यारूपवार्तिकप्रवर्तकत्वेनातिश्रैष्ठ्यात् सुरेश्वराचार्यानादावेवाभ्यर्थयते—*सुरेशार्या इति ॥ सुरेशाचार्याः=विश्वरूपाचार्या इति प्रथमं प्रसिद्धाः, तदनन्तरं काश्यां दिक्पालावाहनेन सुरनाथस्यान्यैरदृष्टत्वाद् विश्वरूपैरेव दृष्टत्वाद् गुरुभिः सुरेश्वराचार्या इति दत्तनामानः । *धिषणया=बुद्ध्या सुरगुरुसमानाः=स्वतन्त्रवार्तिककृत्त्वेनोक्तानुक्तदुरुक्तचिन्तनकर्तृत्वेन भाष्यकारा इव, *स्वतन्त्राः=पृथक् प्रस्थानस्य व्याख्याभेदस्य प्रवर्तकाः, सुकृतिनः=पूर्वं पूर्वकाण्डप्रवर्तकाः कुमारिलभट्टाचार्यजामातरः 'शोणभद्रावीरवासिनः पञ्चगौडान्तर्गताः, शतपथशिरस्तित्तिरिगिरां भाष्ये श्रीशङ्करभगवत्पादप्रणीते *मुहुर्भाष्ये=मुहुरपि विचारार्हे *वार्तिकवरं स्वं तन्त्रम्=शास्त्रम्=उक्तानुक्त-दुरुक्तचिन्तनपरत्वेन भाष्यवदेव शास्त्रम्=शासकम्, *सपदि=सत्वरम्, पद्मपादाचार्या विघ्नं शारीरकभाष्य इव मा कुर्वन्तु, इति शीघ्रमेव कृतवन्तः निर्मितवन्तः, स्फुरन्तु=प्रतिभान्तु, इति समन्वयः ॥ ९ ॥

सदद्वैतानन्दे समरसतरे साधु चरतः
सदा द्वैताद् दूरे सकलमुनिमौलीन् समदृशः ।
समाराध्य स्वैरं सरससरसं तोटकगुरून्
समाधिप्रत्यूहान् हृदिह सहसा त्रोटयतु नः ॥

अथ सर्वकनिष्ठसुरेश्वरपरिग्रहात् कनिष्ठक्रमेण हस्तामलककनिष्ठान् सुरेश्वरज्येष्ठान् समाधिनिष्ठान् श्रीगुरुप्रसादेन तोटकवृत्तालम्बेनाद्वैतोपदेष्टॄननुसन्धत्ते—*सदिति* ॥ *समरसतरे=जीवेशसामरस्यलक्षणैक्ये, *सद-

द्वैतानन्दे=सति=कालत्रयाबाध्ये, अद्वैते=द्वैतविनिर्मुक्ते, आनन्दे=अखण्डे, *सदा द्वैताद् दूरे=द्वैतस्पर्शविनिर्मुक्ते, *चरतः=संचरतः, तत्रैव निष्ठावतः, समदृष्टिभाजः=शत्रु-मित्रविभागादिरहितान् सकलध्यानतत्परश्रेष्ठान् तोटक-गुरून् गुरोरनुग्रहतः शिष्यान्तरविश्वासाय तोटकवृत्तेनाद्वैतोपदेष्टृत्वेन गुरुणा तोटकाचार्य इति विहितनामानः *सरससरसम्=अतिसरसम्, *स्वैरम्=स्वेच्छयाऽऽराध्य *इह=वार्तिकप्रणयने, हृद् मदीयम्, *प्रत्यूहान्=विघ्नान्, *सहसा=हठेन, *लोटयतु=नाशयतु, इत्यन्वयः ॥ १० ॥

हृदम्भोजे हस्तामलकसममद्वैतममलं
हृतद्वन्द्वं यस्य स्फुरति लसदानन्दमधुरम् ।
तमाचार्यं हस्तामलकमखिलैर्मस्करिगणै-
र्निषेव्यं संसेवे निजगुणगणाराधितगुरुम् ॥

अथ तोटकज्येष्ठान् हस्तामलकानभिसन्धत्ते—*हृदम्भोज इति* ॥ यस्य हस्तामलकाचार्यस्य *हृदम्भोजे लसदानन्दमधुरम्, हृतद्वन्द्वम्=परिहृतशीतोष्णादिद्वन्द्वम्, अत एव—*अद्वैतम्=अखण्डसच्चिद्रूपम्, हस्तामलकसमम्=हस्तगतामलकसदृशमतिविस्पष्टम्, स्फुरति, तमाचार्यं *मस्करिगणैः=भिक्षुनिकरैः सेव्यमानं निजगुणगणेनाराधितश्रीभगवत्पादं हस्तामलकं संसेवे, इत्यन्वयः ॥ ११ ॥

परिव्राट्सूत्रोढो मणिरनुपमाम्नायशिखरा-
करोद्गीर्णः कीर्णः सुदृढतरशाणे नयमये ।
मनोमञ्जूषायां रहसि गुरुणा यस्य निहित-
स्ततः शीर्णं भूयात् तिमिरमिह हस्तामलकतः ॥

अथ पुनरपि हस्तामलकं प्रार्थयते—*परिव्राडिति* ॥ *परिव्राट्सूत्रोढः=परिव्राजो यतय एव सूत्रम्, तेनोढः=प्रोतः, मणिः, *अनुपमाम्नायशिखराकरोद्गीर्णः=अनुपमः=अतिकमनीयः, य आम्नायान्त एवाकरः=खनिः, तस्मादुद्गीर्णः=निर्गतः, नयमये भिक्षुसूत्रलक्षणे शाणोपले दृढतरे कीर्णः=घृष्टः, परिहृतकलङ्कः, गुरुणा=शङ्करदेशिकेन यस्य हस्तामलकस्य मनोमञ्जूषायाम्=हृदयपेटिकायाम्, रहसि गुप्ततया निहितः, ततो हस्तामलकाद् इह वार्तिकविरचने विद्यमानं तमः=अज्ञानं लीनं भूयात्, इत्यन्वयः ॥ १२ ॥

सदा पूर्णानन्दान् सकलयमिनां मानसलस-
त्सरोजे सद्धंसानपि च सदसत्क्षीर-पयसोः ।
परानाचार्यार्यान् परचिदमृताम्भोनिधिरस-
स्फुरच्चर्याधुर्यान् स्पृशतु धिषणा ध्यानसरणौ ॥

अथ श्रीशङ्करभगत्पादशिष्यप्रवर्तितदशविधसम्प्रदायेषु श्रीसुरेश्वराचार्यप्रवर्तितानन्दसरस्वतीसम्प्रदाय-प्रवर्तकान् स्वकुलगुरून् पूर्णानन्दाननुसरति—*सदेति* ॥ सकलयतिहृदयकमले सद्धंसान्=परमहंसान् सदसदर्थलक्षणक्षीर-पयोविषयेऽपि हंसान्=विभाजकान् प्रपञ्चात् पृथक्कृत्याखण्डविवेचकान्, *परान्=उत्कृष्टान्, अत एवाचार्याणामप्याचार्यान् परचिदमृतसमुद्रस्य यो रसः, तेन स्फुरन्ती या चर्या, तत्र धुर्यान्=तद्भारसहिष्णून्, पूर्णानन्दान् कुलगुरून् ध्यानमार्गे मे धिषणा *स्पृशतु=स्मरतु सदा, इत्यन्वयः ॥ १३ ॥

निषेवे निध्यातान् निखिलनिगमान्तप्रवचने
निरीहान् निर्व्याजं निजजनसमुद्धारणचणान् ।
निरूढज्ञानाढ्यान् नियमितविनेयांश्च पुरुषो-
त्तमानन्दान् वन्द्यान् विविधबुधबृन्दैरनुदिनम् ॥

अथ पूर्णानन्दशिष्यान् पुरुषोत्तमानन्दान् नमस्करोति—*निषेव इति* ॥ सकलवेदान्तार्थनिरूपणे समर्थान् निरीहान्, *निर्व्याजम्=निर्निमित्तम्, स्वीयजनानां संसारादुद्धारेण प्रसिद्धान्, *निरूढज्ञानाढ्यान्= परिपक्वात्मसाक्षात्कारभाजो मर्यादायां स्थापितस्वशिष्यान् सकलपण्डितैरप्यनुदिनं वन्द्यान् पुरुषोत्तमानन्दान् निषेवे, इत्यन्वयः ॥ १४ ॥

स्फुटं शैषे शैले सुरतरुसुमं नन्दनवनात्
स्फुरद्गन्धोन्नद्धं दिशि दिशि समानीय रभसात् ।
पदाम्भोजे पूजा व्यरचि विधिवद् यैर्मुररिपोः
पदद्वन्द्वं चित्ते मम लसतु तेषां मुहुरपि ॥

अथ पुनरपि पुरुषोत्तमानन्दान् गुणविशेषैरनुस्मरति—स्फुटमिति ॥ *शैषे शैले=शेषसम्बन्धिपर्वते, योगमाहात्म्याद् *नन्दनवनात्=इन्द्रोपवनात्, दिशि दिशि=सर्वदिक्षु, स्फुरद्गन्धोन्नद्धम्=परिमलसंबद्धम्, *सुरतरु-सुमम्=पारिजातकुसुमम्, रभसात्=वेगेनातित्वरितं *समानीय मुररिपोः पदाम्भोजे पूजा विधिवद् यैर्व्यरचि= विरचिताऽभूत्, तेषां पुरुषोत्तमानन्दानां पदद्वन्द्वं मम चित्ते मुहुरपि लसतादित्यन्वयः ॥ १५ ॥

पुरः काञ्चीनाम्न्या विमलमणिदीपायितवपुः
पुरा भोजंभोजं परमपरमान्नं प्रणिहितम् ।
परस्याश्चिच्छक्तेरतुलदयया तुन्दिलतरः
पुरस्ताद् मे नित्यं स्फुरतु शिवरामो यतिपतिः ॥

अथ पुरुषोत्तमानन्दविधेयान् शिवरामानन्दाननुस्मरति—*पुर इति* ॥ काञ्चीपुर्यां मणिदीपायित-स्फुरद्रूपः, *परस्याश्चिच्छक्तेः=काञ्चीनगर्यधिष्ठात्र्याः, दयया तुन्दिलतरः=विशिष्टतुन्दवान्, पुष्ट इति यावत्, *प्रणिहितम्=निकटे स्थापितं चिच्छक्त्या, *परमम्=उत्कृष्टम्, परमान्नं *पुरा=पूर्वम्, *भोजंभोजम्=भुक्त्वा भुक्त्वा, तुन्दिलः=दयया परमान्नेनापि तुन्दिलः शिवरामो यतिराजो मे पुरस्ताद् नित्यं स्फुरतु, इत्यन्वयः ॥१६॥

हृदब्जे गोपालो निवसतु यतीनामचरमो
निराघाटानन्दः सदयहृदयः सन्ततमपि ।
दयादीर्घापाङ्गैर्दलितमलमायो यमवतां
सतां सिद्धं सिद्धाञ्जनमिव विहीनाञ्जनचितिः ॥

अथ शिवरामानन्दविधेयं गोपालानन्दमनुचिन्तयति—*हृदब्ज इति* ॥ हृदयकमले यतीनामाद्यो निष्प्रतिबन्धज्ञानवान् सानुकम्पचित्तः सर्वदाऽपि सदयदवीयोऽपाङ्गैर्यमवतां विनेयानां *दलितमलमायः=विदारिताविद्यामायः, सिद्धं सिद्धाञ्जनमिव=विनेयानां सदर्थप्रदर्शकत्वात् सिद्धम्, सिद्धपुरुषाणामञ्जनमिव स्थितः, *विहीनाञ्जनचितिः=निर्मलचितिस्वरूपः, सततमपि गोपालानन्दः स्फुरत्विति गोलार्थः ॥ १७ ॥

स्वयंपूर्वान् सर्वानवितुमखिलाम्नायशिरसां
रसं दोहंदोहं सरसवचनैः साधु ददतः ।
वयं वारंवारं तदधिगमिताद्वैतसरलाः
प्रकाशानन्दार्यान् हृदयकमलान्तर्विचिनुमः ॥

अथ गोपालानन्दशिष्यान् स्वयंप्रकाशानन्दाननुस्मरति—*स्वयमिति* ॥ सर्वान् जनानवितुं सर्ववेदान्तानां रसं दुग्ध्वा दुग्ध्वा *सरसवचनैः=अनुनयोपेतवचनैः, *साधु=सम्यक्, अपरोक्षसाक्षात्कारो यथा भवति तथा ददतः, *स्वयंपूर्वान् प्रकाशानन्दार्यान्=स्वयंप्रकाशानन्दगुरून्, *तदधिगमिताद्वैतसरलाः= तैः=स्वयंप्रकाशानन्दपरमगुरुभिः, ज्ञापिताद्वैतेनाखण्डेन सरलाः, संसाराविष्टतया ऋजवः, वयं हृदय-कमलान्तर्विचिनुमः=ध्यायाम इति गोलार्थः ॥ १८ ॥

दयाया वृद्धायाः सदृशपरिणत्या सरसया
दृशा पूतः पोतो विगलितमहामोहविभवः ।
चिदानन्दद्योतच्छमरससुधासागरवरान्
श्रये चेतोरङ्गे श्रमहरगिरः श्रीधरगुरून् ॥

अथ स्वोपदेशगुरुमनुस्मरति—*दयाया इति* ॥ *वृद्धायाः=समृद्धाया दयायाः *सदृशपरिणत्या= समानपरिणामवत्या, *सरसया=आर्द्रया येषां दृशा *पोतः=डिम्भः, बाल एव पूतः सन् *विगलितमहामोह-विभवः=परिहृताविद्या-तद्विलासः, अहमभवम्, तान् *चिदानन्दद्योतच्छमरससुधासागरवरान्=अखण्डचिदानन्द-विलसच्छमरसामृतसागरस्वरूपान्, श्रमहरा गीर्येषां तान् श्रीधरगुरून् *चेतोरङ्गे=हृदयरूपनटनस्थाने *श्रये । तत्र गुरुमूर्तिर्नृत्यतादिति भावः ॥ १९ ॥

मदोन्मत्तद्वैतद्विरददृढकुम्भस्थलवर-
प्रभेदप्रद्योतन्नयनखरविस्फूर्जितवरान् ।
समन्तादुन्मुक्ताविरलवरमुक्तान् मृगपतीन्
सदा ब्रह्मानन्दान् सरलचरितान् साधु कलये ॥

अथ विद्यागुरून् गौडब्रह्मानन्दाननुस्मरति—*मदेति* ॥ कुतर्कलक्षणमदेनोन्मत्तो यो द्वैतगजः, तस्य दृढं यत् कुम्भस्थलवरम्, तस्य कुम्भस्थलवरस्य प्रभेदेन प्रद्योतन्तो नया एव नखराः, तेषां यत् स्फूर्जितम्=मस्तकपाटनशब्दः, तेन श्रेष्ठान्, *समन्तात्=परितः, *उन्मुक्ताविरलवरमुक्तान्=उन्मुक्ताः= ग्रहाद् निर्गताः, *अविरलाः=बहवः, वराः श्रेष्ठाः *मुक्ताः=जीवन्मुक्ता एव, कुम्भपाटनावसरे *उन्मुक्ताः= नखास्फालनवेगेनोर्ध्वं मुक्ताः; *अविरलाः=अधिकाः, *वराः=श्रेष्ठाः, *मुक्ताः=मुक्ताफलानि यैस्ते तादृशाः, तान् ब्रह्मानन्दान् *मृगपतीन्=सिंहान्, सरलचरितान्, साधु यथा तथा *कलये=अनुचिन्तयामीत्यन्वयः ॥ २० ॥

उपेन्द्रा निस्तन्द्रा मुहुरपि दयासान्द्रहृदया
यतीन्द्राणां चेतःसरसिजवने चण्डघृणयः ।
कलामन्दाश्चन्द्राः सकलकलिकासागरवरे-
ष्वमन्दानन्दानामधिवसतयो भान्तु हृदये ॥

अथ कनीयसोऽपि सब्रह्मचारिण उपेन्द्राननुस्मरति ; महाग्रन्थारम्भे सुहृदामनुस्मरणस्योचितत्वात् । *उपेन्द्रा इति* ॥ आलस्यरहिता वाक्यार्थविचारे दयापूर्णा यतीनां हृदयकमलवनरवयः सकलविद्यासागरेषु कलाभिः पूर्णचन्द्रा आनन्दसमुद्राधिवसतयो मद्धृदये भान्त्विति गोलार्थः ॥ २१ ॥

यतीन्द्राणामिन्द्रा मम कमलनाभेन्द्रयतिराड्-
विनेया विद्यानां विविधतरकेलीगृहभुवः ।
सदा देवा वासूत्तरकलितरूपा ननु पुरो
भवन्त्वग्रथन्यायाकलनकुशलाः सर्वसुहृदः ॥

अथातिवात्स्य एव शास्त्रारम्भकारयितॄन् गुरूननुस्मरति—*यतीन्द्राणामिति* ॥ पद्मनाभेन्द्रयति-शिष्याः *यतीन्द्राणामपीन्द्राः=नियन्तारः, विद्यानां विविधविलासभुवः, *अग्रथन्यायाकलनकुशलाः=आद्यं यद् न्यायाकलनम्, तत्र समर्थाः, प्रथमं न्यायारम्भकर्तार इति यावत् । *वासूत्तरकलितरूपा देवाः=वासुदेवा मम पुरो भवन्त्वित्यर्थः ॥ २२ ॥

स्वयंपूर्वाः सर्वैरपि यतिभिरासेवितपदाः
प्रकाशाः सन्त्वग्रे प्रथितयशसस्तीर्थमणयः ।
यदीयाभिर्गीर्भिः समभिलषितार्थाभिरभितः
पदं चित्ते दत्तं प्रथममखिलज्यौतिषनयैः ॥

अथास्मिन् शास्त्रे सर्वविद्यानामपि सन्निवेशात् तत्र तत्र तत्तद्विद्यास्फूर्तये तत्तद्विद्यागुरवो नमस्करणीया भवन्ति, इति ज्योतिःशास्त्रारम्भकर्तॄननुचिन्तयति—*स्वयमिति* ॥ सर्वयतिसमाश्रितचरणाः *स्वयंपूर्वाः प्रकाशास्तीर्थमणयः = स्वयंप्रकाशतीर्थवर्याः प्रथितकीर्तयो ममाग्रे विषयविशोधनकाले स्फुरन्तु, यदीयाभिर्गीर्भिः सन्दिग्धस्थले, *समभिलषितः=वाञ्छितोऽर्थो यासु ताभिः, अखिलज्यौतिषनयैः=सकलज्योतिःशास्त्र-सम्बन्धिन्यायैः, *प्रथमम्=आदौ, मम चित्ते *पदम्=स्थानं कृतम्, ते पुरो भवन्तु, इत्यन्वयः ॥ २३ ॥

यदीयापाङ्गानामहमभवमत्युद्भटदया-
रसार्द्राणां पात्रं प्रथममखिलध्वान्तमहसाम् ।
समुन्मीलद्विद्यापरिकरसमुन्मेषणकृतां
बलाद् बालास्ते स्युः स्वयमिह पुरः कृष्णशिरसः ॥

अथ विद्यासु प्रेरकान् सकलभेदमतनिराकर्तॄनुपदेशगुरुसतीर्थानलङ्कारवासुदेवशिष्यान् संस्मरति—*यदीयेति* ॥ *प्रथमम्=आदौ, *अखिलध्वान्तानाम्=अन्धकाराणाम्, *महसाम्=तेजोरूपाणाम्, तमो-निवर्तकानाम्, अत्युद्भटदयारसैरार्द्राणां यदीयापाङ्गानां समुन्मीलन्ती या विद्या, मम तस्याः परिकरः= समारम्भः, तदुन्मेषणकृताम् = बलादेव विद्योदयसामग्रीसम्पादकानां श्रीबालकृष्णानन्दसरस्वत्यपाङ्गानामहं पात्रमभवम्, ते *कृष्णशिरसो बालाः=बालकृष्णानन्दसरस्वतीनामानः, इह वार्तिकसमारम्भे स्वयमेव पुरः *स्युः=भवन्त्वित्यर्थः ॥ २४ ॥

विराजन्तां विद्यासरणिषु विचित्रासु विशदं
चिरं चित्ते चिन्तामणय इव तिप्पन्नमखिनः ।

पुराऽऽवाले बाले मयि तरलकेलावकलयन्
कलाङ्कूरान् कूरामृतरसभरैर्येऽद्भुतदयाः ॥

अथ गृहस्थानपि स्वस्य विद्याप्रवर्तकाननुस्मरति चतुर्भिः श्लोकैः—*विराजन्तामिति* ॥ मेऽधिक-कृपासरलास्तिप्पन्नदीक्षिताश्चपले बाले मय्यावाले सर्वविद्याङ्कुरान् अन्नामृतरूपरसभरैः कृतवन्तः, ते विद्यासरणिषु विचित्रासु चिन्तामणय इव चित्ते चिरं विराजन्ताम् ॥ २५ ॥

पुरस्तादास्तां मे सततमपि सौन्दर्यशिखरी
दयादृष्ट्या दत्ता दमितहृदयोल्लासितमसा ।
पुरा ज्योतिर्विद्यापुलकितनया फुल्लहृदया
द्विजाग्रण्या येन द्युमणिसमभासा मतिमता ॥

*पुरस्तादिति* ॥ पुरो मे भूयात् सुन्दरगिरिनामा, येन दयादृशा निराकृतमनस्तमसा द्विजवरेण ज्योतिर्विद्या पुष्कला दत्ता ॥ २६ ॥

यतीनामाज्ञाभिर्यम-नियम-चर्यापरवशः
शिशोः काव्यालापान् शिशिरतरवाचा व्यरचयत् ।
पुरा पुण्याग्रण्ये सततमपि योऽग्नीश्वरपुरे
स भूयोऽग्रे भूयात् चटुलचरितो वेङ्कटकविः ॥

*यतीनामिति* ॥ वेङ्कटकविरग्रे भूयात्, पूर्वं यश्चोलदेशस्थाग्नीश्वरक्षेत्रे काव्यकुशलं मामतनोत् ॥२७॥

वचांसि व्याकुर्वन् वररुचिगिरां यो विवरणं
विशालं व्यातेने विविधनयविन्यासविमलम् ।
त्रिजानंस्तज्जीनं(जीर्णं) पुनरपि नवीनं कलयितुं
स नागेशः श्रीमान् जयति जगतामादिमगुरुः ॥

*वचांसीति* ॥ यो महाभाष्यं स्वीयमेव नवीनं कर्तुमुद्युक्तो जगतां मूलभूतो नागेश्वरो जयतीति भावः ॥ २८ ॥

क्व वा भाष्याम्भोधिर्नयनिचयगम्भीरहृदयो
विपक्षैराकीर्णस्तरलतरभङ्गैर्भृशमपि ।
कृपैवैका नौका सपदि भगवत्पादविहिता
परं पारं गन्तुं जयति मतिपङ्गोर्मम सदा ॥

अथ भाष्याम्भोधेरतिगहनस्य वार्तिकलक्षणं सन्तरणं मतिपङ्गोः कथं घटेत ? इत्याशङ्क्य श्रीशङ्कर-देशिककृपामयी नौकैव तत्सन्तारणे मुख्यं साधनमित्याह—*कृपैवेति* ॥ *नयनिचयगम्भीरहृदयः*=न्याय-निकरपूर्णहृदयः, विपक्षैः=परवादिकृतपूर्वपक्षैः, *तरलतरभङ्गैः*=अतिचपलतरङ्गैः, भृशमाकीर्णः क्व वा भवति, मया मनसाऽपि स्मर्तुमशक्यः; मतिपङ्गुत्वात्, तथाच तदुपर्युक्तानुक्त-दुरुक्तचिन्तनरूपे वार्तिके मम नैवाधिकार इति भावः। तथापि भगवत्पादविहिता कृपैवैका नौका मतिपङ्गोर्मम भाष्याब्धिपारं परं गन्तुं सपदि जयति। तथाच श्रीभगवत्पाददयानौकया भाष्याब्धेर्वार्तिकलक्षणं सन्तरणं भवेदेवेत्याशयः ॥२९॥

अपनयतिमिरावृतायां हृदयगुहायां सदद्वयार्थाप्त्यै ।
श्रीमच्छङ्करयतिवरवाणी मणिदीपिकायिता जयति ॥

अथाखण्डार्थस्फूर्तिर्भाष्यकृद्वचसैव स्वस्य जायेतेति दर्शयति—*अपनयेति* ॥ *हृदयगुहायाम्=बुद्धिगुहायाम्, अपनयतिमिरावृतायां सदद्वयलक्षणार्थप्राप्त्यै श्रीभगवत्पादवाण्येव मणिदीपिकायिता प्रकाशत इत्यर्थः ॥ ३० ॥

पुरैव प्रत्नार्यैर्विशदविवृतं नीतिनिपुणैः
श्रुतिं सूत्रं भाष्यं मुहुरपि समालोच्य सकलम् ।
यतिर्बालो नव्यद्रविडमुनिराम्नायनगरा-
धिभूः कृष्णानन्दः स्वमतिपरिशुद्धिं वितनुते ॥

अथैतद्वार्तिककरणं न भाष्यविवृतये, न वाऽतीव परेषामुपकाराय, किन्तु ? स्वस्यैव भाष्यार्थपरिस्फूर्त्यर्थमित्याह—*पुरैवेति* ॥ नीतिनिपुणैः प्रत्नार्यैः पुरैव=पूर्वमेव विशदं यथा भवति, तथा विवृतम्, अनेन न गूढभाष्यविवरणं लोकोपकाराय वार्तिकेन भवेत्; प्राचीनटीकाभिरेव विशदीकरणादिति सूचितम् । प्राचीनैर्विवृतं श्रुतिं सूत्रं भाष्यं सर्वमपि समालोच्य=मुहुरपि विचार्य *नव्यद्रविडमुनिः=अभिनवद्रविडाचार्यः, *आम्नायनगराधिभूः=श्रुतिनगरेशनामा, *बालः कृष्णानन्दः=बालकृष्णानन्दः, वार्तिकेन करिष्यमाणेन *स्वमतिपरिशुद्धिम्=स्वमतेस्तत्तच्छ्रुतितात्पर्यनिर्णयेन स्वबुद्धिदार्ढ्यम्, *वितनुते=विस्तारयतीत्यर्थः ॥ ३१ ॥

महादेवः श्रीमान् समधिगततत्त्वो वटुवरो
महाकैलासेशः सकलयतिसंसेवनपरः ।
विशेषं जानीतां विशदवचनैर्भाष्यवचसाम्
इतीयं सञ्जाता जगति कृतिरग्र्या विजयताम् ॥

अथ स्वमतिपरिशुद्धिवत् स्वीयविनेयबुद्धिदार्ढ्यमपि वार्तिकस्यास्य फलमित्याह—*महादेव इति* ॥ *वटुवरः=ब्रह्मचारी महादेवः, *श्रीमान्=ज्ञानलक्ष्मीयुतः, अत एव *समधिगततत्त्वः=ज्ञातपरमार्थः, तत्र सन्देहनिवृत्तये सर्वयतिसेवनपरः, महान्; तत्त्वाभिज्ञत्वात्, स महादेवः कैलासेशः, भाष्यवचसां विशेषम्=तात्पर्यभेदं जानीतामिति हेतोः सञ्जाता *कृतिः=वार्तिकलक्षणा, *अग्र्या=श्रेष्ठा विजयतामित्यर्थः ॥ ३२ ॥

सज्जनमानससरसिजसहस्रकिरणं समस्तमुनिसेव्यम् ।
सत्यवतीसुतमनिशं संसेवेऽचरमयोगसंशुद्ध्यै ॥

अथैतावता प्रबन्धेन भाष्यमात्रविवरणाय स्फूर्त्यै प्रत्यूहनिवृत्तये च गुर्वादिस्मरणरूपं मङ्गलमाचरितं निबद्धम्, सम्प्रति जिज्ञासासूत्रभावस्फूर्त्यै वेदव्यासं प्रणमति—*सज्जनेति* ॥ *सज्जनमानससरसिजसहस्रकिरणम्=साधुजनमानसकमले सहस्रांशुं विकासकम्, *समस्तमुनिसेव्यम्=सर्वैर्मुनिभिः संसेव्यम्, *सत्यवतीसुतम्=श्रीवेदव्यासं सूत्रकर्तारम्, *अचरमयोगसंशुद्ध्यै=प्रथमसूत्रसंशुद्ध्यै प्रथमसूत्रार्थपरिष्काराय, *अनिशम्=सन्ततम्, अहं संसेव इत्यन्वयः ॥ ३३ ॥

शङ्करयतिवरचरणं शरणीकरवाणि शर्मकरणमहम् ।
गहनभेयमरान्तरजिज्ञासाभाष्यभावसंसिद्ध्यै ॥

प्रथमं जिज्ञासासूत्रभाष्यभावज्ञानाय भाष्यकृच्चरणावनुस्मरति—*शङ्करेति* ॥ *अहम्=वार्तिकोद्युक्तः *शर्मकरणम्=आनन्दहेतुभूतम्, *शङ्करयतिवरचरणम्=शङ्करभगवत्पादचरणम्, *गहनः=दुर्विज्ञेयो यो ज्ञेयार्थानां भरः=गौरवम्, तदान्तरे यस्येदृशं यद् जिज्ञासासूत्रस्य भाष्यम्, तस्य भावसंसिद्ध्यै=भावः=तात्पर्यम्, तत्संसिद्ध्यै=तज्ज्ञप्त्यै शरणीकरवाणीत्यर्थः। अनेन श्रीभगवत्पादानुस्मरणमेव भाष्यतात्पर्यज्ञापकमिति भावः ॥ ३४ ॥—इति ॥

एतैर्हि वचनैरानन्दसरस्वतीसंप्रदायप्रवर्तकाः श्रीसुरेश्वराचार्याः, तत्परम्परायां तु न तीर्थाश्रम-वनारण्य-गिरि-पूरी-पर्वत-सागर-भारतीनामानः परमहंसाः, श्रीपुरुषोत्तमानन्द-शिवरामानन्द-गोपालानन्द-प्रकाशानन्द-सरस्वत्यः श्रीगौडब्रह्मानन्दसरस्वतीनां पूर्वाचार्याः, अभिनवद्रविडाचार्यश्रीबालकृष्णानन्दसरस्वत्यस्तु श्रीगौड-ब्रह्मानन्दसरस्वतीनामन्ये च केचनोपेन्द्राभिधानादयोऽन्तेवासिन इति विशदमवगम्यते। एते हि—विश्वगुणादर्शचम्पूकर्तॄणां श्रीवेङ्कटकवीनामप्यन्तेवासिनोऽभिनवद्राविडाचार्या इत्यत इदं विशदम्—श्रीवेङ्कटकवीनां समकालिकाः श्रीगौडब्रह्मानन्दसरस्वत्य इति ॥

एते हि गदाधरादिसमकालिकाः सप्तदशशतकस्य भूषणान्येवासन् इत्यादि सविस्तरमाङ्ग्लभाषामय-भूमिकायां विवेचितम् ॥ श्रीगौडब्रह्मानन्दसरस्वतीनां विचारप्रणाली न्याय-मीमांसादिबहुतरनिबन्धपरिशीलन-परिशुद्धान्तःकरणैरेव सुष्ठु समालोचयितुं शक्यत इति नेयमतिशयोक्तिः ॥ एतदीया निबन्धा अपि न्यायरत्ना-वली-ब्रह्मसूत्रवृत्ति-मीमांसाचन्द्रिकादयोऽतिप्रसिद्धा एव पण्डितगोष्ठ्याम्। सर्वतन्त्रस्वतन्त्र-श्रीमधुसूदनसरस्वतीनां निगूढभाववेदनचातुरीसमलङ्कृतास्तु श्रीब्रह्मानन्दसरस्वत्य एव। किं बहुना?

एतैरेवाद्वैतसंप्रदायो द्वैतिनामाक्रमण-प्रत्याक्रमणादिभिरतितरां क्षोभ्यमाणोऽक्षोभ्यतां प्रापितः, इति सुष्ठूक्तम्—

मदोन्मत्तद्वैतद्विरददृढकुम्भस्थलवरप्रभेदप्रद्योतन्नयनखरविस्फूर्जितवरान्।

समन्तादुन्मुक्ताविरलवरमुक्तान् मृगपतीन् सदा ब्रह्मानन्दान् सरलचरितान् साधु कलये ॥ (१)

विठ्ठलेशीविषये तु वक्तव्यं निर्णयसागरप्रकाशिताद्वैतसिद्धिगततोऽधिकं नास्माकं वर्तते, इति तदेव समालोचनीयं प्रियपाठकैरिति सूचयामः ॥

प्रकाशितायामपि निर्णयसागरेणाद्वैतसिद्धौ द्वितीयमिथ्यात्वप्रकरणे मार्कि ५०-पृष्ठपर्यन्तं विठ्ठलेशी-

---

(१) इदमत्रानुसन्धेयम्—यद् माण्डूक्यकारिकाः केवलमुपनिषदः, नतु गौडपादानां कृतय इति सत्यं द्वैतिनो मन्यन्ते; अद्वैतिनस्तु नासामुपनिषत्त्वं स्वीकुर्वन्ति। एतदेवाभिप्रेत्योक्तम्—"प्रणेतारः प्रौढं गहनतरमाण्डूक्यविवृतेरि"ति। अद्वैत-सिद्ध्यादौ तत्र तत्र श्रुतित्वेन कारिकाणां कासांचन माण्डूक्यसम्बन्धिनीनामुल्लेखस्तु तुष्यतु दुर्जनन्यायेन परमतदृष्ट्यापि तन्मतनिरासार्थ एव, नतु वस्तुगतिमनुसृत्य। "मायामात्रमिदं द्वैतमित्याह परमा श्रुतिः" इति भगवत्पादानामुक्तौ तु श्रुत्यर्थः प्रपञ्चस्य मायामात्रत्वमित्येव विवक्षितम्, ननु मायामात्रमिदं द्वैतमिति वाक्यं श्रुतिरिति। तथासति हि—आहेत्यंशोऽनन्वित एव स्यात्। न वयमत्र कारिकाणामासां श्रुतित्वं द्वैताचार्याभ्युपगतं वारयितुं प्रवर्तामहे, किन्तु नायमद्वैतिनां राद्धान्त इति बोधनार्थमेव। नेदं तु दुरपह्नवं तत्त्वम्—यदद्वैतिनो माण्डूक्यकारिकाणामतिप्राचीनगौडपादकृतित्वमेव मन्यन्त इति। गौडपाद-समयस्तु न निर्धारयितुं शक्यत इति स्पष्टमेतद्वार्तिकविवरणतोऽवगम्यते। एतेषां नामादि न विज्ञायत इत्यपि तत एवावगम्यते। केवलं देशमात्रमेतेषां कुरुक्षेत्रसमीपवर्तीति वार्तिककारा इमे वदन्ति। सति चैवं श्रुतिसमानयोगक्षेमं प्रामाण्यं यदि द्वैतिनो मन्यन्ते गौडपादकारिकाणाम्, तर्हि स्वागतमेव वयमपि वदामः, तासां द्वैतमतानुगुण्यं तु लेशतोऽपि कथमपि न संभवतीति तु परमार्थो गतिः। "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इति वाक्यं हि कथं विना क्लिष्टकल्पनां द्वैतमतमनुकूलयिष्यति? अधिकं चात्र समालोचनीयमवसरान्तरे समालोचयिष्यते ॥

भागस्त्रुटित आसीत्, दैववशेन त्वस्मत्प्रियमित्र *श्रीराजेन्द्रनाथघोषमहोदयानां* सूचनानुसारं काशीवासिपरमहंस-वर*श्रीमहेशानन्दगिरिस्वामिनां* साहाय्येन हृषीकेशगतकैलासाश्रमाध्यक्षाणामनुग्रहेण च स भागः, न केवलं स भागः, किन्तु ज्ञाननिवर्त्यत्वमिथ्यात्वपर्यन्तमतिपरिशुद्धभागोऽपि विठ्ठलेशीयटिप्पण्या अधिगतः, इति तत्प्रदानेन प्रदापनेन चोपकृतवतां सर्वदर्शनतीर्थ-वेदान्ततीर्थादि-तीर्थवर*श्रीभागवतानन्दस्वामिपादानाम्* अन्येषां च सर्वेषां वयमत्यन्तमेवाधमर्णाः ॥

अस्मिन् प्रसङ्गे स्वीयसंशोधितविठ्ठलेशीपुस्तकस्य मुद्रापितस्यादर्शस्य चास्मदाधीन्यकरणेन मुद्रितस्यास्य पुस्तकस्य शुद्ध्यशुद्धिसंकलनेन च कृतोपकाराः *पण्डितप्रवर-वेदान्तविशारद-वेदान्तकेसर्यादिविविधभूषण-भूषिताः* मद्रपुरसंस्कृतमहाविद्यालयवेदान्तविभागाध्यापकाः परोपकारनिरताश्च *श्रीलक्ष्मणशास्त्रिमहाशयाः* अपि चिरचिन्तनीया अस्मानधमर्णयन्तीति सप्रश्रयं सान्तःकरणं च सूचयामः ॥

गौडब्रह्मानन्दी-पुस्तकद्वयमतिप्राचीनमद्वैतसिद्ध्यादिकं चैष्याटिक्सोसाइटीगतमेतत्संस्करणेऽस्माक-मत्यन्तमुपकारकमासीत्, इति तदध्यक्षा अपि विशेषतो धन्यवादमर्हन्ति ॥

संस्करणेऽस्मिन् अन्यत्र कुत्राप्यप्रकाशितं पुस्तकद्वयं प्राचीनं तु—न्यायामृतकण्टकोद्धारः, न्यायामृत-सौगन्ध्यं चेति विदितमिदं सर्वेषाम्। अनेन पुस्तकद्वयेन साकमेतत्संस्करणं स्वनामधन्य-पण्डितप्रकाण्ड-विद्यासागर-मद्रपुरराजकीयमहाविद्यालयसंस्कृतविभागसहाध्यक्षादि-बहुतरविशेषगुणपात्राणां श्रीमतां *पि० पि० एस्० शास्त्रिमहोदयानां* साहाय्याभावे न शक्यसंभवम्, इति यथासमयं स्वयं बहुतरक्लेशसहनेनापि कृतोपकाराणां तेषां कृतज्ञताप्रकाशनमन्तरा नान्यं प्रत्युपकारोपायं पश्यामः ॥

पण्डितप्रकाण्डास्मद्विद्यासोदरवेदान्तविशारद-वेदान्तभूषणादिविविधोपाधिभूषणानां श्रीपद्मनाभशास्त्रिमहो-दयानाम्—येषां तत्तादृशसूचनजातमेतत्संस्करणे फलेग्रहि समभूत्, चिराधमर्णा वयमिति वस्तुस्थितिः ॥

एतादृशानामतिगभीराणां दर्शनादिग्रन्थानां प्रकाशनमेकमेव परमपुरुषार्थं मन्वानाः पण्डितप्रवराः श्रीयुक्तामरेश्वरठाकुरवेदान्तशास्त्रिमहाशयाः, (M. A. PH. D.), तादृशाः श्रीसच्चिदानन्दभट्टाचार्याः, श्रीचतुर्धु-रीणमहोदयाश्च पण्डितकुलस्य, न केवलं पण्डितकुलस्य, किन्तु समस्तस्य भारतवर्षस्य, भूमण्डलस्य चोत्तमर्णाः, इति तेषां समुन्नतिमेकमेव वयमप्यस्मत्पुरुषार्थं मन्महे ॥

आङ्ग्लभाषामयभूमिकायाः स्वीयबहुमूल्यसमयविनियोगेन चिरसमालोचनेन तत्तादृशसूचनविशेषादि-प्रदानेन चास्माकं चिरचिन्तनीया मद्रपुरविश्वविद्यालयपाश्चात्यदर्शनगवेषणाविभागाध्यक्षाः श्रीसूर्यनारायण-शास्त्रिणः ( M. A. PH. D. ) महोदयाः, स्वनामधन्याः लोकविख्याता आन्ध्रविश्वविद्यालयाध्यक्षाश्च श्रीराधाकृष्णमहोदयाश्च विशेषतो धन्यवादमर्हन्ति ॥

संस्करणस्यास्य मुद्रणकार्ये, संशोधनकार्ये, आङ्ग्लभाषामयभूमिकासम्पादनेऽन्यत्र च तत्तादृशे कृतो-पकाराणां पण्डितप्रवर-मीमांसाशिरोमणि-सोमसुन्दरशास्त्रिणां मीमांसातीर्थानाम्, अशोकनाथवेदान्ततीर्थानाम्, श्रीरामधनभट्टाचार्यकाव्यतीर्थप्रभृतीनां च धन्यवादेन हार्देन प्रकृतं लेखमत्रैव समापयाम इति शम् ॥

इति सुधीजनविधेयः
**अनन्तकृष्णशास्त्री**



# द्वैताद्वैतवादप्रस्थानसंग्रहः

## प्रथममिथ्यात्वविचारः

### *न्यायामृतकाराः*—

न तावत् सदसद्विलक्षणत्वं मिथ्यात्वम्। तद्धि सत्त्वविशिष्टासत्त्वाभावो वा? सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयं वा? सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभाववत्त्वं वा? *नाद्यः; मन्मते सदेकस्वभावे जगति सत्त्वाप्रसिद्धत्वात्। *न द्वितीयः; सत्त्वासत्त्वयोः परस्परविरहरूपत्वेनैकाभावेऽपरसत्त्वावश्यकत्वेनोभयसाधनस्य व्याहतिपराहतत्वात्। यद्यप्यस्मन्मतेऽप्रामाणिकस्यैवात्यन्ताभावप्रतियोगित्वेन प्रामाणिकस्य सत्त्वस्याभावाप्रसिद्ध्या न सत्त्वाभावोऽसत्त्वम्, एवमसत्त्वस्यापि तुच्छे प्रामाणिकत्वेन तदभावोऽपि न सत्त्वम्, इति न परस्परविरहरूपत्वसंभवः, इत्यारोपितसत्त्वासत्त्वयोरेव परस्परविरहरूपत्वाद् वास्तवसत्त्वाभावसाधने न व्याहतिः, इति परस्परविरहव्यापकत्वतात्पर्यमेव वर्णनीयम्, तदपि तु यत्रारोपितसत्त्वाभावः, तत्रासत्त्वमिति व्याप्तिसिद्धावेवोपपद्यते; सा च न संभवति, वास्तवसत्त्वाधिकरणे घटादावारोपितसत्त्वाभाववत्त्वेऽप्यसत्त्वाभावादिति न दोषः; तथाप्यत्यन्ताभावस्य प्रतियोगिना सहेव प्रतियोग्यारोपे प्रधानभूतेनापि विरोधेनारोपितसत्त्वाभावस्यारोपितसत्त्वेनेव वास्तवसत्त्वेनापि विरोधस्याङ्गीकारादुक्तव्यापकत्वसंभवः। यत्र वास्तवसत्त्वम्, तत्रारोपितसत्त्वाभावो नास्तीति प्रतीत्या प्रतियोग्यारोपे प्रधानेनापि विरोधस्याङ्गीकार्यत्वात्, आरोपितसत्त्वात्यन्ताभावो नास्तीत्यस्य प्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिविषयाभावो नास्तीत्यर्थकरणात्, यत्र वास्तवं सत्त्वम्, तत्र सत्त्वाभावस्य सत्त्वारोपपूर्वकप्रतीतिविषयत्वाभावात्। अत एव हि दोषात्यन्ताभावो भगवल्लक्षणमिति सिद्धान्तोऽपि संगच्छते; अन्यथा तत्रापि पूर्वोक्तरीत्याऽऽरोपितदोषाभावस्यैव भगवल्लक्षणत्वापत्त्या तस्य जीवसाधारण्यापत्तेः, निर्धर्मकब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वापत्त्याऽर्थान्तराच्च। न द्वितीयः; असत्त्वाभावांशस्य सिद्धत्वात्, अंशतः सिद्धसाधनाच्च। *नापि तृतीयः; व्याहतेः, अर्थान्तरात्, साध्यवैकल्यात्, विशिष्टस्याप्रसिद्ध्याऽप्रसिद्धविशेषणत्वाच्च—*इति वर्णयन्ति* ॥

### *अद्वैतसिद्धिकाराः*—

यद्यपि सत्त्वविशिष्टासत्त्वाभावपक्षो न क्षोदक्षमः; तथापि द्वितीय-तृतीयपक्षौ विचारसहावेव, इति न मिथ्यात्वनिर्वचनासंभवः। *तथाहि*—न सत्त्वासत्त्वयोः परस्परविरहरूपत्वमङ्गीक्रियते; 'अप्रामाणिकस्यैवात्यन्ताभावप्रतियोगित्वमि'त्यादिभवदीयसिद्धान्तस्य प्रामाणिकानां घटादीनामप्यत्यन्ताभावप्रतियोगित्वदर्शनेनायुक्तत्वेन वास्तवसत्त्वाभाव-तादृशासत्त्वाभावरूपोभयस्यैवात्र विवक्षणेन 'सन् घटः' इतिवत् 'शुक्तिरूप्यं सदि'ति प्रतीत्याऽबाध्यत्वरूपसत्त्वव्यतिरेक एवासत्त्वमिति वर्णनासंभवेन क्वचिदप्युपाधौ सत्त्वेन प्रतीत्ययोग्यत्वस्यैवासत्त्वरूपताया अङ्गीकरणीयत्वात्। एवं च तादृशसत्त्वाभाव-सत्तादात्म्योभयसाध्यतायामेवात्र तात्पर्येण नोक्तव्याहतेरवसरः। अस्तु वा परस्परविरहरूपत्वम्, तावताऽपि भवत्सिद्धान्तानुसारेणारोपितसत्त्वाभावस्यैवासत्त्वरूपत्वमित्येवाङ्गीकरणीयतया वास्तवसत्त्वासत्त्वाभावसाधने न व्याघातावकाशः। यदि तु तदर्थं परस्परविरहरूपत्वोक्तेः परस्परविरहव्याप्यत्वे तद्व्यापकत्वे वा तात्पर्यमित्यङ्गीक्रियते, तावताऽपि प्रतियोग्यारोपस्य प्रधानेनापि विरोधस्यासंभवः, भिन्नसत्ताकयोरविरोधस्योपपादयिष्यमाणत्वात्, इति वास्तवसत्त्वाधिकरणे घटादौ प्रातीतिकसत्त्वप्रतियोगिकाभावरूपसत्त्वाभाववत्त्वेऽपि तादृशसत्त्वाभावाभावस्यासत्त्वेन परस्परविरहव्यापकत्वासंभवः, वास्तवसत्त्वाधिकरणे तस्य निषेधानर्हतया प्रातीतिकसत्त्वारोपपूर्वकमेव प्रातीतिकसत्त्वाभावस्य घटे विधेयताया वाच्यतया प्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिविषयाभावो नास्तीत्यर्थकरणेऽप्यनिस्तरात्, अन्यथा दोषाभावो भगवल्लक्षणमिति भवदीयसिद्धान्तस्यापि भङ्गापत्तेः; तत्रापि प्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिविषयदोषाभावस्याभावात्, वास्तवदोषादिसत्त्व एव दोषाद्यनारोपः, तदसत्त्वे तु तदारोप इत्यत्र विनिगमकाभावात्। अत एव—परस्परविरहव्याप्यत्वपक्षोऽपि निरस्तः; गोत्वाश्वत्वयोः

न्यायामृतम्

श्रीमद्धनुमद्भीम-मध्वान्तर्गतराम-कृष्ण-वेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

ॐ निखिलगुणनिकायं (१) नित्यनिर्धूतहेयं शुभतममतिमेयं शुद्धसौख्याप्त्युपायम् ।

तरङ्गिणी

छन्दस्साङ्गमुरङ्गमङ्गलगवीजैमिन्युपज्ञं मतं व्यासोदन्तमबूबुधच्च समधाद् यो विश्वनाथाभिधाम् ।
धर्मे व्याकृत पूर्णधीकृतसदाचारस्मृतिव्याकृतिव्याजेन प्रणमामि तं पितरमुद्बोधाय शब्दार्थयोः ॥ ५ ॥

पदादिविद्यां बहुविन्निषद्यामध्यैषि तत्त्वैषिवराद् यतोऽहम् ।
नमामि तं व्यासकुलावतंसं नारायणाचार्यमथाग्रजं मे ॥ ६ ॥

व्यासबिन्दुरसाचार्यकृतीष्वद्याकृतिच्छलात् ।
रामो महत आनम्य श्रुतं सौवं शुश्रुत्सति ॥ ७ ॥

उद्यद् व्यासमहोदधेर्यदुरुधीगम्भीरकुम्भीनयद् भङ्गान् सत्प्रतिबिम्बमम्बुजदृशा पत्तीविचिलीकृतम् ।
स्वच्छन्दोत्थतरङ्गिणीद्विजमुखैर्न्यायामृतं व्याकृतं सेवंसेवमिरासुरा इनसमे राजन्तु लेखा इव ॥ ८ ॥

इह खलु सकलविद्वन्मणिचिन्तामणिः श्रीव्यासतीर्थबिन्दुः पुण्यप्रचयपूर्णवेदान्तश्रवणः श्रुतमर्थमिमनिषया निविभन्त्सुर्निबन्धगोचरपरीक्षकप्रवृत्त्यङ्गविषयादि वक्तुं विशिष्टविषयादिमद्ब्रह्ममीमांसया निबन्धं संबन्धयितुं चतुर्लक्षणीविवक्षितविशेषणचतुष्टयवत्त्वेनेष्टदेवतामभिष्टौतीति—*निखिलगुणनिकायमित्यादिना* ॥

न्यायामृतकण्टकोद्धारः

अत्र ग्रन्थकृदभीष्टकर्मणो निर्विघ्नपरिसमाप्त्याद्यर्थं कृतं परदेवतास्तुति-नतिरूपं मङ्गलं शिष्यशिक्षार्थं ग्रन्थे निबध्नाति—*निखिलेति* ॥ अत्र परिच्छेदचतुष्टयात्मके ग्रन्थे "अथातो ब्रह्मजिज्ञासे"-त्याद्यध्यायचतुष्टयात्मकशास्त्रप्रतिपाद्यानामनन्तगुणपूर्णत्व-निर्दोषत्व-साधनविषयत्व-फलदातृत्वानां प्रतिपाद्यतया तत्तद्विशेषणत्वेन हरिः स्तूयते। तत्राऽऽद्याध्यायार्थः—"निखिलेति" ॥ अत्र निकाय इति

न्यायामृतसौगन्ध्यम्

कृतनिगमविभागं केशवांशं मुनीन्द्रं यतिगुरुमुरुवंशं देशिकाचार्यवर्यम् ।
कुमतघनकृशानू श्रीजय-व्यासतीर्थौ प्रणमति वनमाली तत्प्रसादैककामः ॥ ३ ॥

श्रीमच्छास्त्रदुग्धाब्धेर्यद् न्यायामृतमुत्थितम् ।
श्राव्यते (२) तस्य सौगन्ध्यं सुश्रुतस्य शुश्रुत्सया ॥ ४ ॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "तद् ब्रह्म" "तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम्" "ब्रह्मविदाप्नोति परम्"
"ज्ञात्वाऽऽत्मस्थं हरिं चैव न निवर्तन्ति तेऽव्ययाः । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥"

---

(१) ननु—निकायमिति कथम्? "निकाय्य-निलयालयाः"इत्यमरकोशे "पाय्य-सान्नाय्य-निकाय्य-धाय्या मान-हविर्निवास-सामिधेनीषु" इति सूत्रे च निकाय्यशब्दस्यैव निलयवाचित्वोक्तेर्निकाय्यमिति वक्तव्यत्वादिति—चेत्, अत्राहुः; निपूर्वकान्निवासार्थकाच्चिनोतेर्धातुविशेषाद् घञ्प्रत्ययेऽकारमात्रं विहाय सर्वस्यापि लोपे चकारस्थस्येकारस्यैकाररूपे गुणे प्राप्ते—"अचो ञ्णिति"त्यैकाररूपवृद्धौ सत्यां तस्य चाऽऽयादेशे चकारस्य ककारादेशे च निकायमिति रूपस्य "निवास-चिति-शरीरोप-समाधानेष्वादेश्च कः" इति सूत्रे निवासार्थे साधिततया निखिलगुणानां निवास आश्रय इत्यर्थो द्रष्टव्य इति । गुरुचरणास्तु—नायं निकायशब्दः कोशसूत्रोक्तरीत्या निवासार्थे रूढोऽभिप्रेतः, किन्तु अव्ययानामनेकार्थत्वान्निखिलगुणा एव नितरां कायो यस्येत्यर्थस्याभिप्रेततया न कोऽपि क्षुद्रोपद्रव इत्याहुः ॥ ( श्रीनि ) ।

(२) सौगन्ध्यस्य श्रावणप्रतिज्ञा, नाममात्रतोऽस्य ग्रन्थस्य सौगन्ध्यत्वम्, नत्वर्थतः, गन्धस्य श्राव्यत्वासम्भवादिति सूचयति ॥

न्यायामृतम्

सकलनिगमगेयं सर्वशब्दाभिधेयं नवजलधरकायं नौमि लक्ष्मीसहायम् ॥ १ ॥

अद्वैतसिद्धिः

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः सत्य-ज्ञान-सुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः ।

तरङ्गिणी

चतुर्लक्षण्यां प्रथमलक्षणे समन्वयाख्येऽपर्यायानन्तानन्दादिशब्दानां महायोग-विद्वद्रूढिभ्यां भगवत्परत्वे तत्तच्छब्दप्रवृत्तिनिमित्तलाभाद् निखिलगुणाश्रयत्वं भगवतः साधितम्, तद् आद्यविशेषणेन संगृहीतम्। द्वितीयेऽविरोधलक्षणे गुण-दोषयोः सहचारदर्शनाद् दोषशङ्कायां श्रुतीनां विरोधपरिहाराद् निर्दोषत्वमाघोषितम्, तद् द्वितीयविशेषणेन संजग्राह । एवंविधः परमात्मा कथं ज्ञेयः ? इत्यपेक्षायां वैराग्यादिसाधनसम्पन्नेनाधिकारिणा साक्षात्कर्तव्य इत्येतमर्थमभिदधत्तृतीयस्य साधनलक्षणस्यार्थं तृतीयविशेषणेन निर्दिदेश । ज्ञातः परमात्मा कं पुरुषार्थं दास्यति ? इत्यपेक्षायां स्वरूपानन्दमाविर्भावयतीति प्रतिपादयतश्चतुर्थस्य फललक्षणस्य चतुर्थविशेषणेन संग्रहः कृतः । 'निखिलगुणनिकाये'त्यादिचतुर्विशेषणोपपादकत्वेन 'सकलनिगमगेयमि'त्यादिचतुर्विशेषणानि । तत्रेन्द्रादिपरतया प्रतीयमानानां वाक्यानां भगवद्विषयत्वेन निखिलगुणाश्रयत्वं भगवतः सिद्ध्यतीति—'सकलनिगमगेयमि'त्यनेनोपपादितम् । जगत्कारणविषयत्वेन प्रतीयमानानां प्रकृत्यादिशब्दानां भगवद्विषयत्वे भगवतः सर्वकर्तृत्वादिना निर्दोषत्वं सिद्ध्यतीति 'सर्वशब्दाभिधेयमि'त्यनेनोपपादितम्। वाक्यार्थ-पदार्थरूपत्वेन निगमगेयत्व-शब्दाभिधेयत्वयोर्भेदः । निराकारस्य ध्यानादि न संभवतीति शङ्कां निराकुर्वता 'नवजलधरकायमि'त्यनेन भगवतः शुभतममतिमेयत्वमुपपादितम् । लक्ष्म्याः सहायं लक्ष्मीसहायमित्यनेन सर्वपुरुषार्थप्रदत्वोपपादनं द्रष्टव्यम्। लक्ष्म्या "यं कामये तं तमि"ति स्वमहिमानमुक्त्वा "मम योनिरप्स्वे"ति स्वसहायस्य

न्यायामृतकण्टकोद्धारः

निपूर्वकात् 'चिञ् चयने' इत्यस्माद्धातोः "निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः" इति सूत्रेण । तथाच निकाय्य इति निपातनान्निकाय इत्यनुपपन्नमित्यपास्तं भवति । द्वितीयाध्यायार्थः—*नित्येति* ॥ नित्येति विशेषणं मुक्तव्यावृत्त्यर्थम्। तृतीयाध्यायार्थः—*शुभतमेति* ॥ मतेः शुभतमत्वं यथार्थत्वम्, स्वयोग्यतया पूर्णत्वं वा। चतुर्थाध्यायार्थः—*शुद्धेति* ॥ सुखस्य शुद्धत्वं दुःखासम्भिन्नत्वं वाऽनन्तत्वं वा स्वयोग्यतया पूर्णत्वं वा। उपायत्वं च प्रदातृत्वम्। मत्युत्पादकमाह—*सकलेति* ॥ निगमशब्देन सदागमा गृह्यन्ते। आगमप्रतिपाद्यता लक्षणयेति शङ्कानिरासार्थमाह—*सर्वेति* ॥ *शब्दाः=संस्कृतशब्दाः। निराकारत्वनिवृत्त्यर्थमाह—*नवेति* ॥ ग्रन्थारम्भे वाग्व्यापारस्यापेक्षितत्वाद्वागभिमानित्वाच्च लक्ष्म्याः पार्थक्येन तद्वन्दने स्वातन्त्र्यप्रतीतिर्मा भूदिति भावेनाह—*लक्ष्मीसहायमिति* ॥ अत्र लक्ष्म्याः सहाय इति तत्पुरुषः ॥

एवं स्वेष्टोत्कृष्टदेवताः प्रणम्योत्तरग्रन्थोपपत्तेपाय प्रारिप्सितविघ्ननिवर्तकत्वेन हरिं स्तौति—

सिद्धिव्याख्या

श्रीः। प्रारिप्सितग्रन्थनिर्विघ्नपरिसमाप्त्यर्थं कृतमिष्टदेवतानुसन्धानरूपं मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति—*मायेति* ॥ मायया कल्पितं यद् मातृतामुखं प्रमातृताप्रधानम्, तत्प्रभृति यो द्वैतप्रपञ्चः, तस्याश्रयः । पुनः

विट्ठलेशीयटिप्पणी

परब्रह्मरूपविषय-प्रयोजनरूपं परममङ्गलमाह मूले—*मायेति*॥ *श्रुतिशिखोत्थाखण्डधीगोचरः=श्रुतीनाम्=कर्मोपासनाकाण्डरूपाणामुपकार्यत्वात् शिखेव मुख्यं यद् महावाक्यम्, तज्जन्यसंसर्गाविषयकमनोवृत्तिगोचरः, *विष्णुः=व्यापकं जीवस्वरूपम्, मोक्षं प्राप्त इव स्वयं विजयते=प्रकाशसम्बन्धं विनैव प्रकाशते ; प्रकाशाभिन्न इत्यर्थः। कीदृशो

न्यायामृतम्

विघ्नौघवारणं सत्याशेषविश्वस्य कारणम् । करुणासिन्धुमानन्दतीर्थबन्धुं हरिं भजे ॥ २ ॥
अभ्रमं भङ्गरहितमजडं विमलं सदा । आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ३ ॥

तरङ्गिणी

परमात्मनोऽभिधानात् । निकायशब्दस्तु चिनोतेर्घञि वृद्धौ चकारस्य ककारादेशे च "निवास-चिति-शरीरोप-समाधानेष्वादेश्च कः" इत्यनेन निवासार्थे साधितः ॥ १ ॥ स्वापेक्षितविघ्ननिवारणगुणत्वेन भगवन्तं सेवते—*विघ्नौघेति* ॥ २ ॥

भाष्यकृतं सेवते—*अभ्रममिति* ॥ अत्र'नन्दतीर्थमि'त्यनेन जलाशयतीर्थरूपतायां ध्वनितायां प्रसिद्धगङ्गादितीर्थसाम्यप्रसक्तौ तद्वैषम्यमाह—*अतुलमिति* ॥ अत्र भ्रमशब्देन प्रतीत आवर्तो नञा निषिद्ध्यते,इति प्रसिद्धतीर्थवैषम्यम्, तथा विपर्ययशून्यत्वं च ध्वन्यत इति ध्वनि-श्लेषयोरङ्गाङ्गिभावेन सङ्करः । 'भङ्ग'शब्देन तरङ्गाभिधानात् तद्राहित्योक्त्या प्रसिद्धतीर्थवैषम्यम् , तथा पराभवशून्यत्वं च ध्वन्यते । 'अजडमि'त्यनेन जलात्मता पर्युदस्यते, इति तद्वैषम्यम् , तथा ल-डयोरभेदात्पूर्णज्ञानात्मता च ध्वन्यते । 'तापत्रयापहमि'त्येकतापनिवारकजलाशयाद् वैषम्यम् । यद्यपि—"अपे क्लेश-तमसोः" इत्यनेनापपूर्वाद्धन्तेः क्लेश-तमसोः कर्मणोरुपपदयोर्डप्रत्यय उक्तः ; तथापि "ब्रह्म-भ्रूणे"त्यादिवदुपपदनियमस्यानाश्रितत्वाद् डप्रत्ययोपपत्तिः । "सूत्रारम्भस्त्वनाशीरर्थे" इति काशिकायां वृत्तावेवोक्तम् ॥ ३ ॥

न्यायामृतकण्टकोद्धारः

*विघ्नौघेति* ॥ शास्त्रकर्तारं मध्वाचार्यं प्रणमति—*अभ्रममिति* ॥ यद्यप्यत्र "अपे क्लेश-तमसोरि"ति अपपूर्वाद्धन्तेः क्लेश-तमसोः कर्मणोरुपपदयोर्डप्रत्ययविधानात् प्रकृते तदभावात् 'तापत्रयापहमि'त्ययुक्तम् । तथापि "अन्येष्वपि दृश्यते" इत्यपिग्रहणात् सर्वोपाधिव्यभिचारार्थाद्धात्वन्तरादनुपपदादुपपदान्तर-युक्तादपि डप्रत्यय इत्यर्थलाभेन डप्रत्ययोपपत्तिः ॥ अत एवोक्तं काशिकायाम्—"अपिशब्दः सर्वोपाधिव्यभिचारार्थः"—इति । तेन धात्वन्तरादपि डप्रत्ययो भवतीत्यर्थः । अत्र भ्रमेत्यज्ञानोप-लक्षकम्, तेनाज्ञानभ्रमरहितमित्यर्थः । 'भ्रमरहितमि'त्यनेन प्रमादराहित्यम्, 'अजडमि'त्यनेन करणापाट-वराहित्यम्, 'विमलमि'त्यनेन विप्रलिप्साराहित्यम् । एवं चाज्ञान-भ्रम-विप्रलिप्सा-करणापाटवानाम-भावोक्त्या परमात्मत्वं प्रसिद्धतीर्थवैलक्षण्योक्त्याऽतुलत्वं चोक्तं भवति ।

सदेति प्रत्येकमन्वयः । "आनन्दतीर्थमि"त्यनेनानन्दप्रदं शास्त्रं यस्मादिति व्युत्पत्त्या शास्त्रकर्तृत्व-

सिद्धिव्याख्या

*सत्य-ज्ञान-सुखात्मकः=“सत्यं ज्ञानमनन्तं ब्रह्म” इति श्रुतेः सच्चिदानन्दस्वरूपः । पुनश्च *श्रुतिशिखोत्थाखण्डधी-गोचरः=वेदान्तजन्याखण्डसाक्षात्कारविषय इत्यर्थः । पुनश्च *मिथ्याबन्धविधूननेन=मिथ्याभूतबन्धतिरस्कारेण,

विट्ठलेशीयटिप्पणी

विष्णुः ?—*मिथ्याबन्धविधूननेन विकल्पोज्झितः=अन्नात्मैक्याज्ञानरूपबन्ध-तत्कार्याभावेन, विकल्पेन=द्वयेन, अविद्या-चित्सम्बन्ध-तूलाज्ञानादिनेति यावत्, उज्झितः=रहितः ; तदभाववानित्यर्थः । ज्ञाप्यत्वं तृतीयार्थः । कीदृशं मोक्षम् ?—*परमानन्दैकतानात्मकम्=निरतिशयापरिच्छिन्नसुखमात्रस्वरूपम् । पुनः कीदृशो विष्णुः ?—*सत्य-ज्ञान-सुखात्मकः* । पुनः कीदृशो विष्णुः ?—*मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः=मायया कल्पितं प्रयुक्तम्, अत एव मृषाभूतं यन्मातृतामुखम्=प्रमातृत्वादिरूपम्, द्वैतम्=आत्मभिन्नम् , तद्रूपप्रपञ्चाश्रय इत्यर्थः । मोक्षप्राप्तिरखण्ड-धीगोचरत्वप्रयोज्या, नतु सत्त्वसमानकालीनेति 'मिथ्याबन्धे'त्यादिविशेषणं बन्धस्य ज्ञाननिवर्त्यत्वरूपमिथ्यात्वबोधनद्वारा

न्यायामृतम्

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः । गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ४ ॥
समुत्सार्य तमःस्तोमं सन्मार्गं संप्रकाश्य च । सदा विष्णुपदासक्तं सेवे ब्रह्मण्यभास्करम् ॥ ५ ॥
ज्ञान-वैराग्य-भक्त्यादिकल्याणगुणशालिनः । लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून् मम ॥ ६ ॥
श्रीमध्वशास्त्रदुग्धाब्धिं धीमन्दरमहीभृता । आमथ्योद्ध्रियते न्याया मृतं विबुधतृप्तये ॥ ७ ॥
विक्षिप्तसंग्रहात् क्वापि क्वाप्युक्तस्योपपादनात् । अनुक्तकथनात् क्वापि सफलोऽयं श्रमो मम ॥ ८ ॥

तरङ्गिणी

जयतीर्थवाक्स्तुतिव्याजेन जयतीर्थं स्तौति—*चित्रैरिति* ॥ चित्रैः पदैः, गम्भीरैर्वाक्यैः, अखण्डितैर्मानैः । पदानां चित्रत्वं नाम—*अन्वयबोधहेतुतावच्छेदकावच्छिन्नपदार्थोपस्थितिजनकतावच्छेदकावच्छिन्नत्वम् । वाक्यानां गम्भीरत्वं नाम—समासादिवृत्तिमत्त्वम् । प्रतिमानपराहतिशून्यत्वं मानानामखण्डितत्वम् । एतेन—पद-वाक्य-प्रमाणनिर्णायकव्याकरण-मीमांसा-न्यायविद्यावैदग्ध्यम्—उक्तम् ॥ ४ ॥

स्वस्य संन्यासगुरुं ब्रह्मण्यतीर्थं सेवते—*समुत्सार्येति* ॥ चशब्दोऽपिशब्दार्थः । *सदा= सर्वावस्थास्वपि । तदुक्तम्—"अत्यशक्ये तु निद्रादौ पुनरेव समभ्यसेदि"ति । तमस्स्तोमनिवृत्ति-सन्मार्गप्रकाशनरूपप्रयोजननिर्वृत्त्यनन्तरमपि 'विष्णुपदासक्तमि'त्युक्त्या स्वाभाविकं विष्णुपदैकसंश्रयत्वमुक्तम् ॥ ५ ॥ विद्योपदेष्टॄन् गुरून् नमति—*ज्ञानेति* ॥ 'ज्ञाने'त्यादिना विद्योपदेशहेतुत्वं व्यवस्थापितम् ॥६॥ ग्रन्थाभिधानमाह—*श्रीमध्वेति* ॥७॥ स्वकृतस्य निबन्धस्यावान्तरप्रयोजनवत्तामाह—*विक्षिप्तेति* ॥

न्यायामृतकण्टकोद्धारः

मुक्तं भवति । टीकाकर्तारं स्तौति—*चित्रैरिति* ॥ अत्र पदानां चित्रत्वमबोधकत्वादिराहित्यम् । वाक्यानां गम्भीरत्वं गहनार्थकत्वम् । मानानामखण्डितत्वं प्रतिपक्षादिविधुरत्वम् ॥

आश्रमगुरुं प्रणमति—*समुत्सार्येति* ॥ विद्यागुरून् प्रणमति—*ज्ञानेति* ॥ करिष्यमाणग्रन्थमूलं दर्शयन् ग्रन्थनाम निर्दिशति—*श्रीमध्वेति* ॥ स्वग्रन्थस्य साफल्यमाह—*विक्षिप्तेति* ॥ नच—अनुक्तकथनादित्ययुक्तम्, पूर्वाचार्यप्रणीतप्राचीनग्रन्थेषु कथितस्यैव सर्वस्यात्र कथनात्, अन्यथा तत्र तेषामज्ञानप्रतिपादनमनेन कृतं स्यात्; तथाच प्रमाणविरोध इति—वाच्यम्; ज्ञानिनामप्युक्तिवैमुख्यदर्शनात्, ज्ञातस्य सर्वस्योक्तिनियमाभावात्, अस्मदादिष्वपि ज्ञातसर्वानुक्तेरनुभवसिद्धत्वाच्चानुक्तकथनादिति यथाश्रुतमेव साध्वित्येके, तन्न मनोरमम्; अत्रोक्तसर्वार्थस्य मूलकोशे तत्र तत्र दर्शनात्, स्वोक्तार्थे मूलकोशसम्मत्यादेः कथितत्वाच्च । किञ्चात्राचार्यानुक्तोऽर्थः कथ्यमानः किमवश्यवक्तव्यः? किं वाऽवश्यावक्तव्यः? नान्त्यः; "आमथ्योद्ध्रियते न्यायामृतमि"ति स्वेनैव स्वग्रन्थस्यामृतत्वोक्त्याऽतिशयार्थप्रतिपादकत्वप्रतिपादनादवश्यावक्तव्यार्थवचने स्वोक्तिविरोधापत्तेः, नाद्यः; आचार्योक्तार्थस्य न्यूनत्वापत्त्या तस्याप्रेक्षावत्त्वापत्तेः, आलस्योपेक्षादिरहितस्याचार्यस्यावश्यवक्तव्यार्थानुक्तौ कारणाभावाच्च । तस्मादनुक्तत्वेन प्रतीयमानत्वमेवानुक्तशब्दार्थः ॥

विठ्ठलेशीयटिप्पणी

सूचयति । 'विजयते' इत्यस्य प्रकाशाश्रय इत्यर्थ इति भ्रमनिवारणाय—*स्वयमित्युक्तम्* ॥ विष्णौ मोक्षप्राप्तिविजययोरन्वययोग्यतालाभाय—*सत्येत्यादि* ॥ 'माये'त्यादिना द्वैतस्य मायाप्रयुक्तत्वोक्त्या तन्निवर्तकज्ञाननिवर्त्यत्वयोग्यता, मृषात्वोक्त्या मुमुक्षावानधिकारी च सूचितः । अखण्डधियः श्रुतिशिखोत्थत्वविशेषणेन निष्कामकर्मोपासनानुष्ठानजनितचित्तशुद्ध्येकाग्रतयोः सत्योरेव तस्या मोक्षप्राप्तिप्रयोजकतेति सूचितमिति टीकोक्तार्थसंक्षेपः ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नमो नवघनश्यामकामकामितदेहिने । कमलाकामसौदाम(१)कणकामुकगेहिने ॥ १ ॥
श्रीनारायणतीर्थानां गुरूणां चरणस्मृतिः । भूयान्मे साधिकेष्टानामनिष्टानां च बाधिका ॥ २ ॥
अद्वैतसिद्धिव्याख्यानं ब्रह्मानन्देन भिक्षुणा । संक्षिप्तचन्द्रिकार्थेन(२) क्रियते लघुचन्द्रिका ॥ ३ ॥

### न्यायामृतसौगन्ध्यम्

"भोक्तारं यज्ञ-तपसां सर्वलोकमहेश्वरम् ॥"

इत्यादिश्रुति-स्मृतिभिस्सगुणं ब्रह्म जिज्ञास्यम् ; तज्ज्ञानादेव मुक्तिः, तदेव मुक्तानां प्राप्यमित्युक्तम् ॥ ब्रह्मणस्सगुणत्वं तु विश्वस्य सत्यत्वव्यवस्थापनेन सिद्ध्यति, तत्सत्यत्वं तु विश्वमिथ्यात्वश्रुत्यादिनिरसनेन सिद्ध्यति, इति तन्निरासाय तन्मतमुत्थाप्यते ॥

### सौगन्ध्यविमर्शः

इत्यादिभिर्ब्रह्मणः सगुणत्वव्यवस्थापनार्थं ब्रह्मगुणानामेव सत्यत्वं वर्णनीयम्, नतु सर्वस्य विश्वस्य ; ब्रह्मणो दोषादीनामभावेन तत्सत्यत्वनिर्णयस्यानपेक्षितत्वात् । तथाच विश्वसत्यत्वनिर्णयाधीनं ब्रह्मसगुणत्वज्ञानमिति रिक्तमिदं वचः ।

### विट्ठलेशीयटिप्पणी

अयं तु—विष्णुः=जीवो वस्तुतः सत्य-ज्ञान-सुखात्मकोऽपि सन्, अज्ञातः सन् मायाकल्पितमातृता-सुखदुःखाद्वैतप्रपञ्चाश्रयो जातः=मुक्तोऽपि सन् अज्ञानेन बद्धत्वेन भ्रान्त इत्यर्थः । ततश्च वस्तुतो बद्धस्य तत्त्वेन भ्रान्तस्य वा मुमुक्षासम्भवात्, स मुमुक्षुः सन् गुरुमनुसृतः, ततस्तदुपदिष्टश्रुतिशिखोत्थाखण्डधीगोचरोऽभूत्, निष्कामकर्मोपासनानुष्ठानेन शुद्धैकाग्रचित्तः सन् आत्मानं सत्य-ज्ञान-सुखरूपब्रह्मत्वेन साक्षात्कृतवान्, ततश्च *मिथ्याबन्धविधूननेन विकल्पोज्झितः=मिथ्याबन्धापगमात् तत्प्रयुक्तविकल्पेन दुःखेन रहितः सन् *परमानन्दैकतानात्मकमोक्षं प्राप्त इव* । अवास्तवबन्धभ्रमस्यैव सत्त्वाद् मोक्षरूपस्य तत्सम्बन्धाभावाद्वेत्युक्तम् । ईदृशः सन् *विजयते=स्वप्रकाशरूपोत्कर्षवानित्यर्थः—इति योजयामः ॥

इष्टदेवतानमस्कृतिरूपं मङ्गलं विघ्नविघातायाचरन् शिष्यशिक्षायै निबध्नाति टीकायाम्—*नम इति* ॥ नवघनश्यामः, अत एव कामेनापि कामितो यो देहः, तद्वत इत्यर्थः । नचैवम्—"न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति व्युत्पत्तिविरोध इति—वाच्यम् ; प्रकृते मत्वर्थीयस्यावयवसौन्दर्यरूपप्राशस्त्यार्थकतया बहुव्रीहेस्तदर्थाप्रतिपादकत्वेन तद्विरोधविरहात् । न केवलमिष्टलाभार्थमेव तं नमस्कुर्मः, अपि तु तदीयसौन्दर्यादिगुणश्रवणजनितभक्त्याऽपीति भावः । कमलां धनादिसंपल्लक्षणां लक्ष्मीं कामयतेऽसौ, ( कर्मण्यण् ) स चासौ सुदामैव सौदामः तदीया ये कणाः पृथुककणाः । यद्वा कमला(३)कामुकस्य सुदाम्न इमे कमलाकामसौदामा इत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । तादृशानां कणानां कामुको यो गेही=गेहित्वोचितातिथिसत्कारपूर्वकतद्वाञ्छापूरणशीलः, तस्मै ; श्रीकृष्णायेत्यर्थः । पूर्वं स्वाभिलषितप्राप्तिहेत्वदृष्टविरहेऽपि तत्काल एवाल्पदानादिनापि तादृशादृष्टं संपाद्य याचकाभीष्टदत्वेन लोकविलक्षणो दाताऽस्माकमपीष्टमवश्यं दास्यतीति भावः ॥१॥ गुरुस्मृतिमपि शिक्षयति—*श्रीति ॥२॥ चिकीर्षितं प्रतिजानीते—अद्वैतसिद्धीति ॥३॥

---

(१) सुदाम्नः कणाः सुदामकणाः, त एव सौदामकणाः, तेषां कामुकः कमलाकामः, स चासौ गेही चेति विग्रहः । सुदामधर्मानिष्ठायाः कामनायाः कणेषूपचारेण कमलाकाम-सौदामकणयोरेव स्वारसिको विशेष्य-विशेषणभाव इति ॥

(२) संगृहीतगुरुचन्द्रिकार्थेन । (३) 'यश्च श्रीशः सुदाम्नः पृथुककणगणात्यादरास्वादयुक्तः' इति प्रथमपरिच्छेदान्ते ग्रन्थकारवचनैकवाक्यतया कमलाकामपदस्य गेहिविशेषणत्वस्यैव सिद्धत्वात् सुदामैव सौदाम इति विग्रहेऽनः प्रकृतिभावापत्त्या, सुदाम्नः कणास्त एव सौदामकणा इति विग्रहस्यैव युक्तत्वाच्चेदमापाततः इति प्रतिभाति ॥

### अद्वैतसिद्धिः

मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*विष्णुः=व्यापकं जीवस्वरूपम्, *मोक्षं प्राप्त इव स्वयं विजयते* । कीदृशो विष्णुर्मोक्षं प्राप्त इव ? तत्राह—*अखण्डधीगोचर इति* ॥ संसर्गाविषयकमनोवृत्तिविशेषविषयीभूत इत्यर्थः ॥

*ननु* तादृशधीविषयत्वे मोक्षप्राप्तिं प्रति नोद्देश्यतावच्छेदकत्वसंभवः ; उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेयगतत्वेन व्युत्पत्तिसिद्धस्य प्रकृते बाधात् । यदा हि तादृशधीविषयीभूत आत्मा, तदा तस्य न मोक्षः ; तस्याविद्यारूपबन्धशून्यात्मरूपत्वात्, तदुक्तं वार्तिके—"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।" इति, "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।" इति च । अविद्याया अस्तमयः संस्कारादिकार्यरूपेणाप्यनवस्थानम् । सा स्थूलरूपा, संस्कारादिरूपा च । तथाच विदेह(१)ताकालीनोऽस्तमय एव मुख्यो

### सौगन्ध्यविमर्शः

*एतेन*—विश्वमिथ्यात्ववादिनिरासोऽपि तेषामनवसर एवेति—सूचितम् । किञ्च "भोक्तारं यज्ञ-तपसामि"त्यादिवाक्यं भोगकर्तृत्वकालिकमेव तद्गुणत्वं प्रतिपादयति, न तु भोक्तृत्वमेव सर्वदा ब्रह्मणोऽपीति । तथाच श्रुत्यन्तरसिद्धाभोक्तृत्वादिकालिक-

### सिद्धिव्याख्या

परमानन्दैकतानात्मकं मोक्षं प्राप्त इव स्थितः । विकल्पोज्झितः, एवंभूतो विष्णुर्विजयते=सर्वोत्कर्षेण वर्तत इत्यर्थः ॥

### विट्ठलेशीयटिप्पणी

योगरूढ्या विष्णुपदार्थस्य श्रीनारायणस्येश्वरत्वेन नित्यमुक्ततया मोक्षप्राप्तसादृश्येऽप्यन्वयायोग्यत्वाद् व्याचष्टे—*विष्णुरिति* ॥ यद्यपि विष्णुपदस्य लक्षणयाऽपि जीवपरत्वं सुवचम् ; तथापि जीवाणुत्ववादिनिरासाय योगमाश्रित्याह—*व्यापकमिति* ॥ 'विष्लृ व्याप्ता'वि'त्यनुशासनादिति भावः । अन्तःकरणवृत्तिरूपाया धियो निरवयवत्व-नित्यत्वरूपस्याखण्डत्वस्यासम्भवादाह—*संसर्गाविषयकेति* ॥

अत्र विष्णुर्मोक्षं प्राप्त इव विजयते, अखण्डधीगोचरश्चेति विधेयद्वयावगाहिबोधस्वीकारे वाक्यभेदप्रसङ्गः, मोक्षप्राप्तत्वावच्छिन्नोद्देश्यताकोऽखण्डधीगोचरत्वविधेयको बोधोऽपि न सम्भवति ; इवपदार्थानन्वयप्रसङ्गात्, उद्देश्यतावच्छेदकस्य विधेयपूर्वसिद्धताया अपेक्षणीयत्वात्, तद्बोधकपदस्य तद्बोधकपदपूर्वत्वस्यापेक्षणाच्च, तस्य चेहाभावात् । अत एव मोक्षप्राप्तसदृशत्वमपि नोद्देश्यतावच्छेदकम्, इत्यखण्डधीगोचरत्वावच्छिन्नोद्देश्यताकमोक्षप्राप्तसदृशत्वविधेयकबोध एव स्वीकार्य इत्याशयेन—*कीदृशो विष्णुर्मोक्षं प्राप्त इव तत्राह—अखण्डधीगोचर इतीत्युक्तम्, तन्न सम्भवतीत्याशङ्क्य, 'मिथ्याबन्धे'ति विशेषणमवतारयति—*नन्विति* ॥ *विधेयगतत्वेन=भासमानतया । *व्युत्पत्तिसिद्धस्येति* ॥ नियमसिद्धस्येत्यर्थः ; अन्यथा गन्धप्रागभावविशिष्टो घटो गन्धवानिति वाक्यस्य प्रामाण्यापत्तेरिति भावः । *ननु* जीवन्मुक्त इति व्यवहारात् स्थूलाविद्यानिवृत्तिरेव मोक्षः, तस्य च तादृशवृत्तिकालावच्छिन्नत्वं सम्भवत्येव ; जीवन्मुक्त उभयोरेकदा सत्त्वादित्यत आह—*तस्येति* ॥ *बन्धशून्येति* ॥ बन्धसामान्याभाववदित्यर्थः । अत्र संमतिमाह—*तदुक्तमिति* ॥ मोक्षपदस्योक्तार्थे शक्तत्वसूचनायाह—*सा च बन्ध इति* ॥ प्रथमेन वार्तिकेनाविद्यारूपबन्धशून्यत्वस्य मोक्षपदार्थत्वमुक्तम्, द्वितीयेन तु मोक्षपदार्थभूतमोहनिवृत्तिपदार्थस्य तादृशशून्यत्वस्य ज्ञातात्मतारूपत्वोक्त्याऽऽत्मनो मोक्षपदार्थत्वं तादृशशून्यत्ववत्ता च बोध्यते ; अभावस्याधिकरणरूपत्वोपगमात् । एवं च वार्तिकद्वयेनाविद्यारूपबन्धशून्यस्यात्मनो मोक्षपदार्थत्वं सिद्धम् । ज्ञातत्वं च न मोक्षपदार्थघटकम् ; तस्याविद्यात्मत्वेन तत्त्वासंभवात्, अत एवोपलक्षित इत्युक्तम्, अविद्यासामान्यास्तमयस्य मोक्षघटकत्वायाविद्यासामान्यस्य बन्धत्वमाह—*सा स्थूलेति* ॥ *तथाच=बन्धसामान्याभावस्य मोक्षपदार्थघटकत्वे च । *मुख्य इति* ॥ जीवन्मुक्त इति व्यवहारस्तु गौणः । तथाच

(१) विदेहताकालीन एवाविद्यास्तमय इति सम्बन्धः ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मोक्षः। ज्ञातत्वोपलक्षित आत्माऽपि विदेहताकालीन एव। जीवन्मुक्तिकालीनस्य ज्ञातत्वोपहितत्वस्यापि कदाचित् संभवेन ज्ञातत्वेनोपलक्षितत्वस्य सर्वदाऽसंभवात् तदुपलक्षितस्यैव मोहनिवृत्तित्वम्। जीवन्मुक्तौ संस्कारादिरूपेण मोहसत्त्वात्, स्थूलाज्ञाननिवृत्तेस्तत्त्वज्ञानविशेषादिमनःपरिणामरूपतासंभवेन ज्ञातात्मरूपत्वासंभवाच्च। नचोक्तविषयत्वक्षण एव तादृशाविद्यास्तमयः संभवति; चरमधीरूपविद्यावतः क्षणस्याविद्यातत्प्रयुक्तदृश्यविशिष्टकालपूर्वत्वाभावनियमेन सिद्धस्याविद्यास्तमयस्य विदेहताकालीनस्य विद्यावति क्षणे संभवाभावात्, अत आह—*मिथ्याबन्धविधूननेन—विकल्पोज्झित इति* ॥ ब्रह्मात्मैक्याज्ञानरूपबन्धस्य तादृशास्तमयेन दृश्यशून्य इत्यर्थः ॥

अत्र बन्धस्य मिथ्यात्वोक्त्या तदुच्छेदस्य ज्ञानाधीनत्वज्ञापनेन न ज्ञानोत्पत्तिकालीनत्वमिति ज्ञापितम्। तथाच विधेय उद्देश्यतावच्छेदककालावच्छिन्नत्वबोधस्यौत्सर्गिकत्वात् सर्गाद्यकालीनद्व्यणुकपक्षकजन्यतासम्बन्धेन कर्तृसाध्यकानुमितौ निरवच्छिन्ने कर्तरि विधेये तादृशकालावच्छिन्नत्वबाधवत् प्रकृतेऽपि तस्य बाधितत्वाद् न तत्र तद्बोधः। अत्र बन्धविधूननमविद्या-तत्कार्यशून्यत्वम्, अनादिसाधारणं दृश्यशून्यत्वमिति तयोर्भेदः। विधूननेनेति तृतीया ज्ञापकहेतौ, नतु कारकहेतौ। न ह्यविद्याया अस्तमयो नाम व्यावहारिकध्वंसरूपो विद्याजन्योऽस्मत्सिद्धान्ते स्वीक्रियते, दृश्यान्तरध्वंसो वा तज्जन्यः; तथा सति तस्य निवर्तकाभावेन

विट्ठलेशीयटिप्पणी

जीवन्मुक्ते न तादृशो मोक्षः, इति तस्याखण्डवृत्तिकालावच्छिन्नत्वं दुर्घटमिति भावः। *विदेहताकालीन एवेति* ॥ कुतः—"निवृत्तिरात्मा" इति वार्तिकेन जीवन्मुक्तस्य मोहनिवृत्त्याख्यमोक्षत्वबोधनं यतः। *ननु* ज्ञातत्वमखण्डधीविषयत्वम्, तदुपलक्षितत्वं च स्वपूर्वकालीनप्रतियोगिसमानाधिकरणतदभाववत्त्वम्; तत्सम्बन्धोत्तरकालीनतत्समानाधिकरणतदभाववत्त्वं(१) वा। तच्च जीवन्मुक्तस्यास्त्येव; वृत्त्यन्तरकाले निर्विकल्पकसमाधिकाले च तस्य तथात्वादित्यत आह—*ज्ञातत्वेति* ॥ सर्वदेत्यादिः। *जीवन्मुक्तिकालीनस्येति* ॥ आत्मेति षष्ठ्या विपरिणतमनुषज्यते। *कदाचित्=अखण्डवृत्तिकाले। *ननु* कदाचित् तदुपलक्षितस्यैव मोहनिवृत्तित्वमस्त्वित्यत आह—*तदुपलक्षितस्यैवेति* ॥ सर्वदेत्यादिः। विदेहताकालीनात्मन इत्यर्थः। सर्वदा तदुपलक्षितत्वं च स्वोत्तरकालीनप्रतियोग्यसमानाधिकरणस्वपूर्वकालीनप्रतियोगिसमानाधिकरणो यस्तदभावः, तद्वत्त्वम्। *ननु* मोहनिवृत्तिपदेन जीवन्मुक्तिकालीना स्थूलाज्ञाननिवृत्तिरेव गृह्यत इत्यत आह—*स्थूलाज्ञाननिवृत्तेरिति* ॥ *ननु* एवं स्थूलाज्ञाननिवृत्तेरिव संस्काररूपाविद्यानिवृत्तेरपि तत्त्वज्ञानरूपत्वसम्भवात् तत्त्वज्ञान-मोक्षयोः समानकालीनत्वमक्षतमित्याशङ्कां परिहरति—*नचेति* ॥ यद्वा—जीवन्मुक्ते संस्काररूपेणाविद्यासत्त्वेऽपि चरमतत्त्वज्ञान विषयत्वक्षणेऽविद्यासामान्यास्तमयः संभवत्वित्याशङ्कां वारयति—*नचेति* ॥ नहीत्यर्थः। तत्क्षणे तादृशवृत्तिविषयत्वरूपस्यैवाविद्याकार्यस्य सत्त्वादिति भावः। तदेतदाह—*उक्तविषयत्वक्षण इति* ॥ *ननु* वृत्तिविलयोऽपि तदैव कुतो नेति? अत आह—*चरमधीरूपेति* ॥ विद्योत्तरक्षणे दृश्यस्वीकारे विद्यावत्क्षणस्य दृश्यविशिष्टकालपूर्वत्वापत्त्या तादृशनियमभङ्गप्रसङ्गः, इति तत्र तदत्यन्ताभावः स्वीक्रियते, विद्यापूर्वक्षणस्य तु विद्यावत्क्षणत्वाभावेन विद्याक्षणे दृश्यसत्त्वेन तत्पूर्वत्वेऽपि नियमाभङ्गः, इति न विद्याक्षणे दृश्यसामान्याभावसिद्धिरिति भावः। अत एव वार्तिके 'ज्ञातत्वेनोपलक्षितः' इत्युपलक्षित इत्युक्तम्। *मिथ्यात्वोक्त्येति* ॥ मिथ्यात्वस्य ज्ञाननिवर्त्यत्वघटितत्वादिति भावः। बन्धविधूननदृश्यशून्यत्वयोरभेदमाशङ्क्य निराकुरुते—*अत्रेति* ॥ *कार्यम्=वियदादि। *अनादिसाधारणमिति* ॥ अविद्याचित्सम्बन्ध-तूलाज्ञान-जीवब्रह्मभेदादीत्यर्थः। ज्ञापकहेतौ=ज्ञापकत्वबोधिका। कारकहेतौ=कारकत्वबोधिका। अविद्याया इति दृष्टान्तार्थम्। "दृश्यान्तरध्वंसः" इति प्रकृताभिप्रायम्। *तज्जन्यः=अविद्याध्वंसजन्यः। नहि स्वीक्रियत इत्यनुषङ्गः, येन जनकत्वे तृतीया स्यादिति शेषः। *तस्य=दृश्यान्तरध्वंसस्य। *निवर्तकाभावेनेति* ॥ नाशकाभावेनेत्यर्थः।

(१) स्वसम्बन्धात् प्राक् स्वोपलक्षितत्वव्यवहारानङ्गीकारे त्वाह—तत्सम्बन्धेत्यादि। (क)

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

"विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतिबोधितस्य विदुषि सर्वदृश्योच्छेदस्य बाधापत्तेः। तत्त्वज्ञानोत्पत्तिद्वितीयक्षणे हि तत्त्वज्ञानादिसर्वदृश्यनाशोत्पादाद् उक्तक्षणद्वितीयक्षण उक्तनाशस्य नाशोत्पत्त्यसम्भवः ; तत्त्वज्ञानजन्यस्य नाशस्यैव तत्त्वज्ञाननाशहेतुत्वे स्वीकृतेऽप्युक्तबाधापत्तेस्तादवस्थ्यात्, तत्त्वज्ञानजन्यस्य दृश्यान्तरनाशस्य तत्त्वज्ञानस्य च यौ नाशौ, तयोर्नाशकाभावात्, तयोः स्वनाशकत्वस्वीकारेऽप्युक्तापत्तितादवस्थ्यात्, अप्रामाणिकानन्तनाशकल्पने गौरवाच्च। तस्माच्चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावनियम एव स्वीक्रियते,

**सौगन्ध्यविमर्शः**

तत्तद्गुणप्रयोजकत्वमपीति कल्पनाया असंभवात्, ब्रह्मसगुणत्वस्य तत्तद्गुणाबाधकालीनरथ्याद्वैतिभिरपि स्वीकारात् सार्वदिकगुणवत्त्वं

**विट्ठलेशीयटिप्पणी**

*बाधापत्तेरिति* ॥ दृश्यान्तरध्वंसरूपदृश्यसत्त्वादिति भावः। *ननु* तत्त्वज्ञानमेव दृश्यान्तरध्वंसनाशकमस्त्वित्यत आह—*तत्त्वज्ञानोत्पत्तीति* ॥ तस्यापि दृश्यत्वाविशेषात्, कतकरजोन्यायेनेति भावः। *उक्तक्षणेति* ॥ तत्त्वज्ञानोत्पत्तिद्वितीयक्षण इत्यर्थः। *उक्तनाशस्य=दृश्यान्तरनाशस्य। *ननु* तत्त्वज्ञानं न स्वनाश्यम् ; क्षणिकत्वापत्तेः, किन्तु स्वजन्यदृश्यध्वंसनाश्यम्। एवं च द्वितीयक्षणे वर्तमानं तत्त्वज्ञानं दृश्यान्तरध्वंसं ध्वंसयेदित्याशङ्क्याह—*तत्त्वज्ञानजन्यस्येति* ॥ *उक्तबाधापत्तेः=श्रुतिबोधितविद्वन्निष्ठसर्वदृश्योच्छेदबाधापत्तेः। तत्त्वज्ञानध्वंस-दृश्यान्तरध्वंसयोर्दृश्ययोः सत्त्वादिति भावः। तयोः सत्त्वे हेतुमाह—*तत्त्वेति* ॥ *तयोः= तत्त्वज्ञानध्वंस-दृश्यान्तरध्वंसध्वंसयोः। स्वनाश(१)कत्वम्=स्वस्वध्वंसहेतुत्वम्। *उक्तापत्तीति*॥ तत्त्वज्ञानध्वंस-ध्वंसस्य दृश्यान्तरध्वंसध्वंसस्य च दृश्यस्य नाशकाभावेन सत्त्वादिति भावः। *ननु* उक्तश्रुतेर्भावरूपदृश्योच्छेदे तात्पर्याद् ध्वंससत्त्वे किं बाधकम्? अत आह—*अप्रामाणिकेति* ॥ सामान्यधर्मावच्छिन्नप्रतियोगिताकैक-ध्वंसस्यानङ्गीकारात् तत्तद्वस्तुप्रतियोगिताकानामनन्तानां ध्वंसानां कल्पन इत्यर्थः। नच—अभावानामधि-करणरूपत्वनये ध्वंसानां ब्रह्मस्वरूपत्वस्वीकाराद् न गौरवमिति—वाच्यम् ; ध्वंसानामनित्यतया नित्यब्रह्मरूपत्वा-सम्भवात्, ब्रह्मणि तत्तद्ध्वंसत्वानां कल्पनीयतया गौरवस्य दुर्वारत्वाच्च। श्रुतिजन्यशाब्दबोधात्मकप्रथमादितत्त्व-ज्ञानस्य दृश्याश्रयकालपूर्वत्वाद् व्यभिचार इत्यतः—"चरमे"ति ज्ञानस्य साक्षात्कारत्वलाभाय। अत्र यो यद्विषयक-साक्षात्कारः, स तद्विषयकाज्ञान-तत्कार्यपूर्वत्वाभाववान् ; यथा शुक्तिसाक्षात्कार इति सामान्यतो व्याप्तिः। एतेन—अन्यत्रादृष्टत्वादेतादृशनियमोऽप्रामाणिकः, नच—शुक्त्यादिज्ञानस्थले तथा नियमोऽस्तीति—वाच्यम् ; शुक्त्यादि-विषयकपरोक्षचरमज्ञानस्यापि शुक्त्यादिविषयकाज्ञानादिपूर्वत्वेन व्यभिचारात्। नच—ज्ञाने साक्षात्कारत्वं निवेश्यमिति—वाच्यम् ; तथा सति प्राथमिकस्यापि शुक्त्यादिविषयकसाक्षात्कारस्य तादृशपूर्वत्वाभाववत्त्वेन व्यभिचाराप्रसक्त्या चरमत्वविशेषणवैयर्थ्यापत्तेरिति—*अपास्तम्*। ब्रह्मसाक्षात्कारस्तु निदिध्यासनोत्तरं मुक्तिपूर्वकाल एवोपेयत इति ध्येयम्। *ननु*—अविद्यादेर्ध्वंसरूपस्यास्तमयस्यानङ्गीकारे विद्योत्तरं कथमविद्यादेरभाव आत्मनि संपद्येत? नहि तस्य ततोऽन्यत्र गमनं सम्भवति ; ब्रह्मण एव निखिलप्रपञ्चस्याधिष्ठानतयाऽऽधारत्वादिति—*चेत्*, स्वाप्नगज-शुक्ति-रजतादिनिवृत्तिप्रकारं विभाव्य मनः समाधीयताम्, अन्यथा कपाले घटस्य ध्वंसे जाते, घटः क्व गतः? इत्यनुयोगस्य भवतामपि दुःसमाधेयत्वात् ॥

*वस्तुतस्तु*—द्वैताभावोपलक्षितनिर्विकल्पकब्रह्मनिश्चयस्य द्वैतभ्रमप्रतिबन्धकतया तादृशनिश्चयोत्तरं द्वैत-भ्रमानुत्पादे प्रतिभासमात्रशरीरस्य द्वैतस्याप्यनुत्पादः, इति तत्त्वज्ञानोत्तरं सुलभ एव सर्वदृश्याभावः। *यद्वा*—तादृशनिश्चयोत्तरं द्वैतभ्रमानुत्पादे द्वैतभ्रमात्यन्ताभावः सिद्ध एव ; प्रागभावात्यन्ताभावयोरविरोधात्। तथाच द्वैत-तद्भ्रमयोः समनैयत्याद् व्यापकीभूतद्वैतभ्रमाभावेन व्याप्यीभूतद्वैतस्याप्यत्यन्ताभावः सिद्ध्यति। तत्र च 'व्यापका-भावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकत्वमि'ति न्यायेन तत्त्वनिश्चयस्य प्रयोजकतेति ध्येयम्। *ननु* पारमार्थि-

(१) स्वध्वंसहेतुत्वम् (क)।

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

ननु नाशहेतुत्वम्। यत्तु—बद्धपुरुषैः प्रातीतिकमस्तमयादिकं कल्प्यते, न तस्य नाशहेतुत्वम्। यद्यपि ज्ञापकहेतुत्वमपि दृश्यास्तमयं प्रत्यविद्यास्तमयत्वेन नास्ति ; जीवन्मुक्ते प्रातीतिकाविद्यास्तमये तद्व्यभिचारित्वात्, जीवन्मुक्ते प्रातीतिकस्य दृश्यास्तमयस्य कल्पने नियमाभावात् ; तथापि दृश्यास्तमयकालीनत्वरूपेणाविद्यास्तमयं प्रत्यस्त्येवेति ध्येयम्। अथवा माऽस्तु प्रातीतिकं तादृशाविद्यास्तमयादिकम्, अविद्योच्छेदोपलक्षितः पूर्णानन्दरूप आत्मा मोक्षः। अविद्योच्छेदश्च तदीयस्थूल-सूक्ष्मरूपाश्रयकालपूर्वत्वाभावः सर्वदृश्याश्रयकालपूर्वत्वाभावरूपेण दृश्योच्छेदेन व्याप्यः ; मोक्षस्य दृश्योच्छेदोपलक्षितात्मरूपकैवल्यरूपत्वात् ॥

**सौगन्ध्यविमर्शः**

ञेत नेति कालत्रयाबाध्यत्वादिकमादाय विचारस्यात्र प्रवर्तनात्, कालत्रयाबाध्यो न ब्रह्मगुण इत्येव मिथ्यावाद्यभिप्रेतत्वाद्

**विट्ठलेशीयटिप्पणी**

कस्य व्यावहारिकस्य वाऽविद्यादिध्वंसस्यानङ्गीकारेऽपि जीवन्मुक्ते प्रातिभासिकः सोऽस्त्येव ; 'मुक्तस्य तत्त्वज्ञानेनाविद्यादिसर्वदृश्यध्वंसो जातः' इति साधारणबद्धजनानां प्रतीतेः, तस्यैव स्वसमसत्ताकदृश्यास्तमयजनकतासत्त्वात् तामादाय कारकतृतीयाया अप्युपपत्तिसम्भव इति शङ्कां परिहरति—*यत्त्विति* ॥ *न तस्य नाशहेतुत्वमिति* ॥ नहि प्रातीतिकमेकं वस्तु तादृशवस्त्वन्तरे कारणम् ; दोषघटितसामग्र्या एव तत्र जनकत्वात्, जीवन्मुक्ते प्रातिभासिकाविद्यास्तमयसत्त्वेऽपि तादृशदृश्यास्तमयाभावेन व्यभिचाराच्चेति भावः। *ननु* एवं ज्ञाप्य-ज्ञापकभावोऽपि प्रातीतिकयोरेवाविद्या-दृश्यास्तमययोर्वाच्यः, सोऽपि न सम्भवतीत्याशङ्कते—*यद्यपीति* ॥ व्यभिचारमप्याह—*जीवन्मुक्त इति* ॥ *तद्व्यभिचारित्वात्=दृश्यास्तमयव्यभिचारित्वात्। *नियमाभावादिति* ॥ लोकवद् व्यवहरति जीवन्मुक्ते तदकल्पनात्, तद्वद्व्यवहरति च तत्कल्पनादिति भावः। यद्वा—*नियमाभावादिति* ॥ मानाभावादित्यर्थः। जीवन्मुक्ते स्थूलाविद्यास्तमयस्यैव लौकिकी प्रतीतिः, नतु संस्काररूपाविद्यास्तमयस्य ; तस्मिन् संस्काररूपाविद्याया एव ज्ञायमानत्वादिति भावः। *दृश्येति* ॥ प्रातीतिकेत्यादिः। एवमविद्येत्यस्यापि। *रूपेणेति* ॥ तादृशरूपावच्छिन्नस्य तस्य जीवन्मुक्ते दृश्यास्तमयकल्पनकाले विदेहताकाले वा सत्त्वात्, तदा तु दृश्यास्तमयस्यापि सत्त्वादिति भावः। नच—सर्वदृश्योच्छेदवति विदुषि प्रातीतिकयोस्तयोः कथं सत्त्वमिति—वाच्यम् ; तत्र बद्धजनप्रतीतयोस्तयोः सत्त्वेऽपि कैवल्यदशायां मुक्तज्ञानोच्छेद्यत्वस्याक्षतत्वात्। *अस्त्येवेति* ॥ ज्ञापकहेतुत्वमित्यनुषङ्गः। विदुषि सर्वदृश्योच्छेदग्रहेण हेतु-साध्याग्रहासम्भवेऽपि स्वरूपयोग्यताघटित एव ज्ञाप्य-ज्ञापकभावो निर्वहतीति भावः। प्रातीतिकाविद्यास्तमय-दृश्यास्तमययोरनभ्युपगमेऽपि ज्ञाप्य-ज्ञापकभावनिर्वाहकं व्याप्य-व्यापकभावं समर्थयते—*अथवेति* ॥ व्याप्तिनिर्वाहकानुकूलतर्कसंपत्तये मोक्षपदार्थमाह—*अविद्येति* ॥ दृश्यसामान्येत्यर्थः। दृश्योच्छेदेऽनुपदं वक्ष्यमाणत्वात्। तस्य पुरुषार्थत्वायाह—*पूर्णानन्दरूप इति*॥ *तदीयेति*। *अयम्=मिथ्याबन्धविधूननपदार्थः। स्थूलम्=अविद्यैव, सूक्ष्मम्=तत्संस्कारः, येन जीवन्मुक्तस्य व्यवहारः। इदं च जीवन्मुक्तीयविद्याक्षणान्तर्भावेण व्यभिचारवारणाय। *सर्वेति* सामान्याभावलाभाय। *दृश्याश्रयेति*॥ अनादिसाधारणमविद्या-तत्कार्यातिरिक्तं यद् दृश्यम्, तदाश्रयेत्यर्थः ; अतो न व्याप्य-व्यापकयोरैक्यम्। *दृश्योच्छेदेन=विकल्पोज्झितपदार्थभूतेन। *व्याप्य इति* ॥ तत्त्वज्ञानोत्पत्तिक्षणमन्तर्भाव्येत्यादिः। अनुकूलतर्कं सूचयति—*मोक्षस्येति* ॥ तथाच निरुक्ताविद्योच्छेदवान् तत्त्वज्ञानोत्पत्तिक्षणो यदि निरुक्तदृश्योच्छेदवान् न स्यात्, तर्हि "ज्ञात्वा देवं मुच्यते सर्वपाशैरि"त्यादिश्रुतिबोधितमुक्तिपूर्वत्ववान् न स्यादिति तर्केण तादृशक्षणे दृश्योच्छेदसिद्ध्या व्याप्तिसिद्धिरिति भावः। अत्र च मोक्षप्राप्तौ तत्त्वज्ञानविषयत्वरूपोद्देश्यतावच्छेदककालावच्छिन्नत्वं न भासते ; बाधात्, किन्तु तत्सामानाधिकरण्यं तत्प्रयोज्यत्वं वेत्येतावन्मात्रबोधनाय 'मिथ्याबन्धे'ति ग्रन्थावतारे विकल्पोज्झितपदवैयर्थ्यम्, विधूननपदोत्तरतृतीयाया वैशिष्ट्यार्थकतयाऽऽत्मनि मिथ्याबन्धराहित्यमात्रे बोधितेऽपि बन्धमिथ्यात्वबोधनसंभवेनोक्तरीत्योक्तार्थबोधनसंभवात्,'मृषाद्वैते'त्यनेनैव बन्धमिथ्यात्वलाभात्, दृश्यशून्यत्वे तज्ज्ञाप्यत्वादिबोधने फलाभावात्, 'मिथ्याबन्धे'त्यादेरपि वैयर्थ्याच्चेत्यालोच्य

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु* दृश्योच्छेदस्तत्त्वज्ञानोत्पत्तिक्षणे न सम्भवति ; अनादिदृश्यानां ज्ञानानुच्छेद्यत्वात्, अविद्या-तत्कार्ययोरेव तदुच्छेद्यत्वात्, तत्राह—*मिथ्याबन्धेति* ॥ मिथ्याबन्धविधूननेन विकल्पोज्झित इति योजना। तथाचाविद्योच्छेदेन दृश्योच्छेदवानित्यर्थलाभादविद्योच्छेदस्य दृश्योच्छेदव्याप्यतालाभेनाविद्यारूपबन्धस्य मिथ्यात्वोक्त्याऽविद्याप्रयुक्तदृश्यमात्रस्य मिथ्यात्वलाभेनानादिदृश्यानामपि ज्ञानोच्छेद्यतालाभादुक्तव्याप्यतायाः सम्भवः। तथाच सर्वदृश्योच्छेदोपलक्षितपरमानन्दरूपात्मरूपकैवल्यप्राप्तिस्तत्त्वज्ञानोत्तरमेव, न तत्क्षणे, इति नोद्देश्यतावच्छेदकधीविषयत्वकालीनत्वं विधेये मोक्षलाभे विवक्षितम् ; 'उज्झितः' इति निष्ठाप्रत्ययेनोच्छेदस्यातीत-

## सौगन्ध्यविमर्शः

विश्वमिथ्यात्ववादनिरासस्य ब्रह्मसगुणत्वज्ञानस्य च न प्रयोज्य-प्रयोजकभावोऽपि ; पारमार्थिकत्वेन द्वैताभावस्य स्वरूपतो

## विट्ठलेशीयटिप्पणी

प्रकारान्तरेण तं ग्रन्थमवतारयति—*नन्विति* ॥ क्वचित्तु *यद्वा ननु* इत्येवं पाठः। दृश्योच्छेदः=दृश्याश्रयकाल-पूर्वत्वाभावः। *ज्ञानानुच्छेद्यत्वादिति* ॥ ज्ञानोच्छेद्यत्वं स्वाश्रयपूर्वत्वाभाववज्ज्ञानकत्वम्, तच्छून्यत्वादित्यर्थः। 'अखण्डधीगोचरो विष्णुर्मोक्षं प्राप्त इवे'ति बोधेऽखण्डधीगोचरत्वस्य मोक्षं प्रत्युद्देश्यतावच्छेदकतया तत्प्रयोजकताऽपि तादृशबोधविषयः, धनी सुखीतिवत्। सा च तस्य दृश्यसामान्योपलक्षितपूर्णानन्दरूपात्मरूपमोक्षपदार्थघटकदृश्य-सामान्योच्छेदरूपोपलक्षणीभूतवस्तुनिर्वाहकत्वेन वाच्या, तादृशनिर्वाहकत्वं तु न तत्त्वज्ञानस्य सकलदृश्यध्वंसजनक-तया ; उक्तयुक्तेः, अपि तु तत्त्वज्ञानोत्पत्तिक्षणस्य दृश्यसामान्याश्रयकालपूर्वत्वाभाववत्त्वनियमादेव निर्वाह्यम्। तच्च न संभवति ; तादृशक्षणस्याविद्या-तत्कार्याश्रयकालपूर्वत्वाभाववत्त्वनियमस्यैवोपगमेनानादिदृश्याश्रयकालपूर्वत्वाभाव-नियमानुपगमात्, "मायामेतां तरन्ति ते" इत्यादौ मायाया एवोपादानात्, समानविषयकाविद्या-तत्कार्यान्यतरत्व-रूपस्य ज्ञाननिवर्त्यतावच्छेदकस्यानादिदृश्येऽभावेन तस्य ज्ञानोच्छेद्यत्वासंभवाच्चेत्याभासभावः। "विद्वान्नाम-रूपाद्विमुक्तः" इति श्रुतेस्तत्त्वज्ञानस्य दृश्यसामान्योच्छेदकत्वम्, उक्तस्मृत्यादौ तु मायापदं दृश्यसामान्यार्थकम्, तत्त्वज्ञाननिवर्त्यतावच्छेदकं तु दृश्यत्वमेवेत्याशयेनोक्ताभासनिरासं प्रकाशयति—*तथाचेति* ॥ *अविद्योच्छेदेनेति* ॥ ज्ञापकत्वं तृतीयार्थः। व्याप्यत्वं त्वर्थतो लभ्यम्। *व्याप्यतालाभेनेति* ज्ञानोच्छेद्यतालाभादित्यत्रान्वेति ; अविद्योच्छेदस्यानादिदृश्योच्छेदव्याप्यत्वं त्वनादिदृश्यानामविद्या-तत्कार्यान्यतरव्याप्यत्वात्, व्यापकाभावस्य व्याप्याभावं प्रति व्याप्यत्वनियमात्। तथाच तत्त्वज्ञानोत्पत्तिक्षणेऽविद्या-तत्कार्योच्छेदस्वीकारे तद्व्यापकीभूतानादिदृश्योच्छेदोऽपि स्वीकार्यः ; अन्यथा व्याप्य-व्यापकभावभङ्गापत्तेः। *एतेन*—'विकल्पोज्झितः' इत्यस्य वैयर्थ्यशङ्का—*निरस्ता* ; उक्तरीत्या दृश्योच्छेदेऽविद्योच्छेदव्यापकताबोधस्य तत्र चैतस्योपयोगात्। बन्धमिथ्यात्वोक्तिमनादिदृश्यानां ज्ञानोच्छेद्यत्वे युक्त्यन्तरसूचकतया सफलयति—*अविद्यारूपबन्धस्येति* ॥ प्रयुक्तेति* ॥ अनादेरपि दृश्यस्याविद्या-प्रयुक्तत्वम् ; तस्या एव जगदुपादानत्वश्रवणात्, नित्येष्वपि क्षेमसाधारणप्रयोज्यत्वस्य स्वरूपसम्बन्धरूपस्योपगमात्। अत एव दुःखप्रागभावादौ प्रायश्चित्तप्रयोज्यत्वम्। यद् यत्प्रयुक्तम्, तत् तन्निवर्तकेन निवर्त्यमिति व्याप्तिवशाल्लभ्यमाह—*मिथ्यात्वलाभेनेति* ॥ इदमपि ज्ञानोच्छेद्यतालाभान्वयि ; मिथ्यात्वस्य ज्ञाननिवर्त्यत्वघटितत्वात्, तद्व्याप्यत्वाच्चेति भावः। *उक्तव्याप्यताया इति* ॥ आभासोक्तस्य तत्त्वज्ञानोत्पत्तिक्षणस्य दृश्यसामान्याश्रयकालपूर्वत्वाभाव-नियमस्येत्यर्थः ; अन्यथा *लाभेन* इति तृतीयार्थानन्वयप्रसङ्गात्। एतत्कल्पे 'मिथ्याबन्धे'ति ग्रन्थस्य पूर्वकल्पीयार्थसूचकतामप्याह—*तथाचेति* ॥ तत्त्वज्ञानक्षणस्य सर्वदृश्याश्रयकालपूर्वत्वाभावरूपसर्वदृश्योच्छेद-विशिष्टत्वसिद्धौ चेत्यर्थः। *न तत्क्षण इति* ॥ तदा दृश्योच्छेदस्योपलक्षणत्वासम्भवादिति भावः। तादृशविवक्षाया ग्राहकमाह—*उज्झित इतीति* ॥ *लाभादिति* ॥ तत्त्वज्ञानक्षणे चोच्छेदस्य वर्तमानत्वादिति शेषः। तथाच मोक्षप्राप्ति-तत्त्वज्ञानविषयत्वयोरेककालीनत्वं बाधितमिति भावः। *ननु* अत्यन्ताभावरूपस्योच्छेदस्य नित्यत्वात्

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

काले मोक्षप्राप्तेर्लाभाद् अत्यन्ताभावत्वविशिष्टरूपस्योच्छेदस्यापि दृश्यत्वात् तादृशे मोक्षकाले तस्यातीतत्वादिति भावः । मोक्षं कीदृशम् ? तत्राह—*परमेत्यादि* ॥ निरतिशयापरिच्छिन्नसुखमात्रस्वरूपमित्यर्थः । *ननु* मुक्तस्य प्रकाशकाभावेन प्रकाशत इत्यर्थकं विजयत इत्ययुक्तम्, तत्राह—*स्वयमिति* ॥ प्रकाशकसम्बन्धं विनैवेत्यर्थः । *ननु* एवं विजयत इत्यनुपपन्नम्; तस्यापि प्रकाशसम्बन्धार्थकत्वात्, स्वयमित्यस्य प्रकाशान्तरं

विट्ठलेशीयटिप्पणी

कथमतीतत्वम् ? तत्राह—*अत्यन्ताभावत्वेति* ॥ *तादृशे=तत्त्वज्ञानोत्तरे । [ एतेन—(१) "मिथ्याबन्धे"त्यादि-विशेषणघटकव्याप्य-व्यापकभावमाक्षिप्य पुनस्तद्विशेषणस्यैवावतारणं न सन्दर्भशुद्धम्; तद्घटकबन्धमिथ्यात्वोक्ति-स्मृत्यैवोक्ताक्षेपपरिहारसम्भवात्, सम्पूर्णतद्विशेषणावतारणस्य तद्योजना-तदर्थलाभ-व्याप्यतालाभोक्तीनाञ्च वैयर्थ्यम्, 'लाभेने'ति चानन्वितम्, नहि तल्लाभ एव तत्सम्भवे हेतुः; अग्रे "तथाचे"त्यादिनोद्देश्यतावच्छेदक-विधेययोः समानकालीनत्वाविवक्षोक्तिश्चोक्तप्रायेति दूषणगणः—निरस्तः ॥ अत्र "नन्वि"त्यादि"तत्राहे"त्यन्तावतारणो-त्तरम्—*"मिथ्याबन्धे"ति । तथाचाविद्या-तत्कार्यवद् दृश्यमात्रस्यैव मिथ्यात्वेन तत्त्वज्ञानोच्छेद्यत्वादविद्या-तत्कार्योच्छेदो दृश्योच्छेदव्याप्य इति भावः । बन्धोच्छेदोपलक्षिततत्वं विकल्पोज्झिततत्वमेवेति प्राचीनः पाठः ।

तत्र 'नन्वि'त्यादिनाऽनुपदोक्तो व्याप्य-व्यापकभाव एवाक्षिप्तः, तं 'मिथ्याबन्धे'त्यंशस्याभिप्रायान्तरवर्णनेन समर्थयति—*तथाचेति* ॥ तत्कार्यवदिति* ॥ तथाच तत्कार्यस्य तत्त्वज्ञानासमानविषयकत्वेऽपि तन्निवर्त्यत्वादविद्याप्रयोज्यस्यापि तन्निवर्त्यत्वमुपेयम्, इति दृश्यत्वमेवाविद्या-तत्कार्यान्यतरत्वाद्यपेक्षया लाघवाद् ज्ञाननिवर्त्यतावच्छेदकमुपगन्तव्यमिति भावः । *ननु* उद्देश्यतावच्छेदक-विधेययोः समानकालीनत्वाविवक्षाज्ञापनाय "मिथ्याबन्धवानि"त्येवास्तु, 'विधूननेन विकल्पोज्झितः' इति व्यर्थम्, तदपि वा नोपादेयम्; "मृषाद्वैतप्रपञ्चाश्रयः" इत्यनेनैव तल्लाभादित्याशङ्कां परिहर्तु-माह—*बन्धेति* ॥ मोक्षघटकेत्यादिः । तथाच मोक्षघटकबन्धरूपदृश्यसामान्योच्छेदोपलक्षिततत्वमेव मौलविकल्पोज्झित-पदार्थः । तथाच बन्धोच्छेदोपलक्षितपूर्णानन्दरूप आत्मा मोक्षः; तद्घटकविशेष्यांशस्यैव 'परमानन्दैकतानात्मक-मि'त्यनेनोक्तेर्विशेषणांशलाभाय 'विकल्पोज्झितः' इति । तत्र च ज्ञापकाकाङ्क्षायाम्—'बन्धविधूननेनेति । तत्र बन्धे विधूननयोग्यताया विधूनने ज्ञापकत्वनिर्वाहकव्याप्तेश्च निर्वाहकस्य बन्धे मिथ्यात्वस्य लाभाय 'मृषाद्वैते'त्यस्यासन्निहित-त्वात् सन्निहितं 'मिथ्ये'ति पदं चावश्यकमिति भावः । अनेनाप्युद्देश्यतावच्छेदक-विधेययोः समानकालीनत्वाविवक्षा-मृषापदकृष्यद्वैतजिहासारूपमुमुक्षयोःसूचनसंभवेऽपि मृषात्वस्य मायाप्रयुक्तत्वसूचनाय 'मृषाद्वैते'त्यत्र मृषापदम् । एवञ्च 'बन्धे'त्यादिविशेषणस्य विधेयकोटावेव निवेशो युक्त इति विभावनीयम् ॥ ]

*निरतिशयापरिच्छिन्नसुखमात्रस्वरूपमिति* ॥ *निरतिशयापरिच्छिन्नेति* परमपदार्थः । अपकर्षाना-श्रयत्वं निरतिशयत्वम् । अपरिच्छिन्नत्वं कालादिपरिच्छेदाभाववत्त्वम् । मात्रेत्येकतानशब्दार्थः । *ननु* सूर्यादि-प्रकाशकसत्त्वात् कथं तदभाव इति ? अत आह—*मुक्तस्येति* ॥ तस्य सर्वदृश्योच्छेदेन सूर्यादिप्रकाशक-स्याप्युच्छेदादिति भावः । *प्रकाशते=प्रकाशाश्रयः । *अयुक्तमिति* ॥ सति प्रकाशके तत्तादात्म्यापन्नतया मुक्तस्य प्रकाशाश्रयत्वं युक्तम्, नान्यथेति भावः । *स्वयम्=आत्मनैव, नान्येन । अभेदस्तृतीयार्थः । अन्यतादात्म्या-नापन्न इत्यक्षरार्थः । अस्य विष्णावन्वयः । फलितार्थमाह—*प्रकाशकेति* ॥ *सम्बन्धः=तादात्म्यम् । *विनैवेत्यर्थ इति* ॥ प्रकाशकतादात्म्याभाववानपीत्यर्थः । तथाच मुक्तस्यैव प्रकाशकत्वात् स्वनिष्ठप्रकाशाश्रयत्वार्थपर्यवसायि-तया विजयत इति युक्तमेवेति भावः । *नन्वेवम्=नन्वेवमपि । *अनुपपन्नमिति* ॥ सर्वदृश्योच्छेदे प्रकाशस्य स्वनिष्ठधर्मस्याप्युच्छेदेन तत्सम्बन्धस्य दुर्घटत्वादिति भावः । तत्सम्बन्धः केनोक्तः ? तत्राह—*तस्येति* ॥ विजयतेपदस्येत्यर्थः । *प्रकाशसम्बन्धेति* ॥ आख्यातार्थतदाश्रयत्वस्य तत्सम्बन्धपर्यवसायित्वादिति भावः । *प्रकाशान्तरं विनेति* ॥ स्वभिन्नप्रकाशाभाववानपि । पूर्ववत् प्रकाशकसम्बन्धाभाववदर्थकत्वे स्वनिष्ठस्वभिन्न-

(१) चिह्नान्तर्गतं सर्वं (क) पुस्तकादुद्धृतम् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विनेत्यर्थकत्वेन विजयत इत्यस्य स्वात्मकप्रकाशसम्बन्धार्थकत्वेऽपि विष्णोर्दृश्यत्वेन मिथ्यात्वापत्तिः। अथ विजयत इत्यस्योत्कर्षान्तरमेवार्थः, नतु प्रकाशसम्बन्धः, तदा प्रकाशमानानन्दरूपत्वालाभेन मोक्षस्य प्रयोजनत्वालाभः, तत्राह—*सत्य-ज्ञान-सुखात्मक इति* ॥ यथाऽऽत्मन आनन्दत्वेनानन्दरूपं मोक्षं प्राप्त इवेत्युक्तम्, अत एवानन्दावाप्तिबोधकश्रुतेरनावृतानन्दैक्यमर्थो न त्वानन्दसम्बन्धः ; तथा प्रकाशरूपत्वेन विष्णोः प्रकाशत इत्यस्यानावृतप्रकाशबोधकत्वम्, नतु प्रकाशसम्बन्धार्थकत्वम् ; तथाच दृश्यत्वाभावाद् न मिथ्यात्वापत्तिः। नच—प्रकाशरूपतोक्तिर्व्यर्थेति—वाच्यम् ; अपरोक्षव्यवहारयोग्यसुखस्यैव पुरुषार्थत्वम्, उक्तयोग्यत्वं चानावृतचिद्रूपत्वेन, तादृशचित्तादात्म्येन वा ; तत्रोक्तरूपानन्दस्यान्त्याभावेऽप्याद्यमस्तीति ज्ञापनार्थत्वेन तस्याः

विट्ठलेशीयटिप्पणी

प्रकाशसम्बन्धवत्त्वस्यापि सम्भवेन स्वात्मकप्रकाशसम्बन्धपर्यवसानासम्भव इत्यतोऽर्थान्तरानुसरणम्। *स्वात्मकप्रकाशसम्बन्धेति* ॥ स्वस्य चैतन्यरूपतया तत्सम्बन्धस्य तत्तादात्म्यरूपतया चिद्रूपज्ञानविषयत्वार्थकत्वेऽपीत्यर्थः। *दृश्यत्वेन=दृश्यत्वापत्त्या। चिद्रूपज्ञानविषयत्वस्यैव दृश्यत्वरूपत्वादिति भावः। *उत्कर्षान्तरम्=परप्रकाश्यत्वाभावरूपम्। इदानीं स्वयमित्यस्य स्वभिन्नप्रकाशाभाववत्त्वमेवार्थः। तच्च परप्रकाश्यत्वाभावनिर्वाहकं विशेषणं बोध्यम्। स्वतः सर्वज्ञत्वं वोत्कर्षान्तरम्। 'स्वयमि'त्यस्य प्रकाशसम्बन्धाभाव इत्यर्थः। स च सामानाधिकरण्यसम्बन्धेन विधेयविशेषणम्। "विजयते" इत्यत्र धात्वर्थोऽनावृतप्रकाशः। आख्यातस्य लक्षणयाऽभेदोऽर्थः। स च निरुक्तमोक्षप्राप्तसदृशत्वविशिष्टोऽखण्डधीगोचरत्वविशिष्टविष्णौ विधीयते। विशिष्टस्य विधेयत्वेऽनावृतानन्दाभेदरूपमोक्षप्राप्तसादृश्य-प्रकाशसम्बन्धरूपदृश्यत्वाभावानावृतप्रकाशाभेदानां त्रयाणां विधेयत्वं पर्यवस्यति। तत्र चात्मन आनन्दाश्रयत्वमेव, नतु तत्स्वरूपत्वम्, इति भेदनिबन्धनस्यानन्दसम्बन्धरूपतत्प्राप्तत्वस्यैव सत्त्वात् तत्सादृश्यं न सम्भवति। एवं तस्य ज्ञानानात्मकत्वेन तत्सम्बन्धसम्भवेन चेतरयोरपि न सम्भव इति बाधशङ्कावारणाय—*सत्य-ज्ञान-सुखात्मक* इति विशेषणत्रयमुपात्तम्। सामान्यतो ज्ञानादिरूपत्वस्यानावृतत्वविशिष्टज्ञानादिरूपत्वव्याप्यत्वात् तच्छङ्कानिरासः। 'घटो नीलघटः' इतिवद् विधेयकोटावनावृतत्वस्याधिक्याद् नोद्देश्यतावच्छेदक-विधेययोरैक्यम्। विधेयतावच्छेदकघटकानावृतत्वस्य तत्त्वज्ञानविषयत्वरूपोद्देश्यतावच्छेदकप्रयोज्यत्वेन विशिष्टविधेयस्यापि तत्प्रयोज्यत्वात् तत्र तद्भानं न बाधपराहतमित्यभिप्रेत्य सत्य-ज्ञान-सुखात्मकत्वविशेषणाभिप्रायं तत्रैव दृष्टान्त-दार्ष्टान्तिकभावकल्पनया वर्णयति—*यथेति* ॥ यद्वा—विष्णोः प्रकाशरूपत्वबोधनं योग्यताबोधनविधया विजयत इत्यस्यानावृतप्रकाशाभेदबोधकत्वतात्पर्यग्रहार्थमित्यभिप्रेत्य तादृशविशेषणाभिप्रायमुक्तकल्पनयाऽऽह—*यथेति* ॥ *मोक्षं प्राप्त इवेति* ॥ मोक्षसम्बन्धवानिवेत्यर्थः। उभयोर्भेदे हि सम्बन्धः। प्रकृते तु मोक्ष-विष्णुपदार्थयोरैक्यात् प्रातीतिक एव तदुभयसम्बन्ध इति सूचनाय 'इवे'त्युक्तम्। *ननु* एवमानन्दावाप्तिबोधकश्रुतः का गतिः ? तत्राह—*अत एवेति*॥ आत्मन आनन्दरूपत्वादेवेत्यर्थः। आभासे 'विजयते' इत्यस्यैवानुपपत्तेरुद्भावनाद् मोक्षं प्राप्त इवेत्यस्य दृष्टान्तता। *प्रकाशत इत्यस्य=तद्विव्रियमाणस्य विजयतेपदस्य। *अनावृतप्रकाशेति* ॥ अनावृतचिदित्यर्थः। क्वचित् तथैव पाठः। ज्ञानात्मकत्वकथनस्यानावृतचिदभेदबाधशङ्कावारकताम्, तादृशचिदभेदतात्पर्यग्राहकतां वा स्पष्टयितुं शङ्कते—*नचेति* ॥ *प्रकाशेति* ॥ ज्ञानपदेनेत्यादिः। तत्फलभूताया अनावृतचिदभेदोक्तेरेव वैयर्थ्यादिति भावः। ज्ञानपदेन प्रकाशरूपतोक्तिसार्थक्याय तादृशचिदभेदोक्तिं सार्थकयितुमाह—*अपरोक्षेति* ॥ अनावृतचिद्रूपत्वेनेति* ॥ तेन ब्रह्मणोऽपरोक्षताविषयको "यत्साक्षादपरोक्षाद् ब्रह्म" इति श्रौतव्यवहारनिर्वाहः। तत्र *अपरोक्षादिति* अपरोक्षमित्यर्थः। संसारदशायां तद्व्यवहारवारणाय—*अनावृतेति* ॥ चक्षुरादिना गृहीते घटादौ तद्व्यवहारायाह—*तादृशेति* ॥ अनावृतेत्यर्थः। तेनानुमितघटादौ न तद्व्यवहारः। *तादात्म्यम्=विषयत्वम्। *अन्त्यम्=अनावृतचित्तादात्म्यम्। *अभावेऽपीति* ॥ तस्य विषयसंपर्कजन्यवृत्तिविशेषरूपे तदवच्छिन्नानन्द एव वा सत्त्वादिति भावः। *आद्यम्=अनावृतचिद्रूपत्वम्। मुक्तस्वरूपानन्दस्य पुरुषार्थत्वाय विजयतेपदेन बोध्यमानमिति

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सार्थक्यात् । *ननु*—ज्ञानस्याज्ञान-तत्कार्यविरोधितायाः शुक्त्यादिज्ञानस्थले दृष्टतया युक्तत्वेऽप्यनादि-साधारणदृश्यमात्रविरोधित्वमदृष्टत्वान्न युक्तम्, तत्राह—*मायेत्यादि* ॥ मायया कल्पितम्=प्रयुक्तम् । अत एव मृषाभूतं यन्मातृतामुखं प्रमातृत्वादिरूपं द्वैतम्=आत्मभिन्नम्, तदभिन्नप्रपञ्चाश्रय इत्यर्थः । तथाच शुक्त्याद्य-ज्ञानस्येव चिन्निष्ठतत्सम्बन्धादेरपि तत्प्रयुक्तत्वेन शुक्त्यादिज्ञानस्य तद्विरोधिताया दृष्टतया ब्रह्मज्ञानस्यापि ब्रह्माज्ञानप्रयुक्तदृश्यमात्रविरोधित्वं युक्तमिति भावः । मृषाद्वैताश्रयत्वोक्त्या मुमुक्षावानधिकारी सूचितः ।

### सौगन्ध्यविमर्शः

द्वैतवत्त्वस्य चाविरोधात् ; तथाच प्रथमं पारमार्थिकत्वेन प्रपञ्चाभावसाधन एव ग्रन्थकृतां तात्पर्यम् । पारमार्थिकत्वेन प्रपञ्चा-भावसाधनं च प्रपञ्चस्य ब्रह्मणि कल्पितत्वेनैव भवति, इति तस्मिन्ननुमिते स्वरूपेण तदनुमानमपि शुक्तिरूप्यदृष्टान्तेन संभवतीति

### विट्ठलेशीयटिप्पणी

शेषः । *अस्तीति* ॥ ननु तद्बाध इति शेषः । *तस्याः=ज्ञानपदेन प्रकाशरूपतोक्तेः । *यद्वा*—नच शङ्कायां प्रकाशरूपतोक्तिरित्यस्य विजयतेपदार्थभूतानावृतप्रकाशाभेदोक्तिरित्यर्थः । एवं च तस्या इत्यस्यापि स एवेति फलितम् । *सत्यस्वरूपत्वकथनं तु स्वयंपदार्थदृश्यत्वाभावयोग्यतासूचनाय । पूर्वं तत्त्वज्ञानस्यानादिदृश्योच्छेदकत्वे युक्तेरुक्त-त्वेऽपि सम्यग्बुद्ध्यारोहाय दृष्टान्तसमर्पकतया "माये"त्यादिविशेषणमवतारयति—*नन्विति* ॥ *ज्ञानस्य=ब्रह्मज्ञानस्य । *अज्ञानेति* ॥ ब्रह्माज्ञानेत्यर्थः । विरोधिताया युक्तत्वेऽन्वयः । तत्र हेतुः—*शुक्त्यादिज्ञानस्थले दृष्टतयेति* ॥ *शुक्तिज्ञानस्य शुक्त्यज्ञानविरोधित्वदर्शनेन=तज्ज्ञानस्य तदज्ञानविरोधित्वनियमावधारणेनेत्यर्थः । यद्वा—*ज्ञानस्य= तद्विषयकसाक्षात्कारस्य । *अज्ञानविरोधितायाः=तदज्ञानविरोधितानियमस्य । *शुक्त्यादिज्ञानस्थले दृष्टतया= शुक्तिसाक्षात्काररूपधर्मिणमन्तर्भाव्य निश्चितत्वेनेत्यर्थः । युक्तत्वेऽपीत्यस्य ब्रह्मसाक्षात्कारस्य ब्रह्माज्ञानविरोधिताया इत्यादिः । *मात्रविरोधित्वमिति* पूरितम् । ब्रह्मसाक्षात्कारस्येत्यनुषज्यते । *अदृष्टत्वात्=अन्यत्रानिश्चयेन । एतावता कथमुक्तशङ्कापरिहार इति ? अत आह—*तथाचेति* ॥ आत्मभिन्नस्य प्रमातृत्वादिनिखिलप्रपञ्चस्य मायाप्रयुक्तत्वे चेत्यर्थः । *तत्संबन्धादेः=मायासंबन्धादेः । आदिना जीव-ब्रह्मभेदादिरूपानादिदृश्यपरिग्रहः । शुक्त्यादिज्ञानस्य तद्विरोधिताया दृष्टतयेति पाठः । अनादि दृश्यं तत्पदार्थः । तथाचानादिदृश्यशुक्त्यज्ञानस्य मायाजन्यत्वविरहेऽपि मायाप्रयुक्तत्वेन तद्विरोधिता यथा शुक्तिज्ञानस्य, तथा चिन्निष्ठमायासंबन्धाद्यनादिदृश्यस्यापि मायाप्रयुक्तत्वाविशेषाद् ब्रह्मज्ञानस्य तद्विरोधित्वं युक्तमेवेति भावः । माया च ब्रह्माज्ञानम् । *वस्तुतस्तु* शुक्त्यादिज्ञानस्य विरोधिताया इति तत्पदाघटितः पाठः । 'तत्संबन्धादेरि'त्यत्र शुक्त्यज्ञानं तत्पदार्थः । तथाच यथा शुक्तिज्ञानस्य शुक्त्यज्ञानविरोधितेव शुक्त्यज्ञानप्रयुक्तचिन्निष्ठशुक्त्यज्ञानसंबन्धादिविरोधिताऽभ्युपगम्यते, तथा ब्रह्मज्ञानस्य ब्रह्माज्ञानविरोधितेव तत्प्रयुक्त-सर्वदृश्यविरोधित्वमभ्युपगन्तव्यमिति समुदितार्थः । यज्ज्ञानं यदज्ञानविरोधि, तत्तु तत्प्रयुक्तसर्वदृश्यविरोधीति व्याप्ते-रिति भावः । *यद्वा*—शुक्त्यादिज्ञानविरोधित्वमिति समस्तः पाठः । विरोधित्वं निवर्त्यत्वम् । तथाच शुक्त्य-ज्ञानस्येव चिन्निष्ठतत्संबन्धस्यापि तत्प्रयुक्तत्वात् शुक्तिज्ञाननिवर्त्यत्वं यथाऽभ्युपेयते, तथा ब्रह्माज्ञानस्येवानादिदृश्यस्यापि तत्प्रयुक्तत्वाद् ब्रह्मज्ञाननिवर्त्यत्वमभ्युपेयमित्यर्थः । यद् दृश्यं यदज्ञानप्रयोज्यम्, तत् तदज्ञाननिवर्तकज्ञाननिवर्त्यमिति व्याप्तेरिति भावः । *आद्यकल्पे 'माये'त्यादिविशेषणेनानादिदृश्ये मायाप्रयुक्तत्वबोधनेन ब्रह्माज्ञाननिवर्तकब्रह्मज्ञाने ब्रह्माज्ञानप्रयुक्तसर्वदृश्यविरोधित्वरूपसाध्यास्वीकारे ब्रह्माज्ञान-दृश्ययोः प्रयोज्य-प्रयोजकभावस्य, प्रयोजकविरोधिनः प्रयोज्यविरोधित्वनियमस्य वा भङ्गापत्तिरूपस्तर्कः सूच्यते । *द्वितीये तु* अनादिदृश्यं ब्रह्माज्ञानप्रयुक्तत्वरूपो ब्रह्मा-ज्ञाननिवर्तकब्रह्मज्ञाननिवर्त्यत्वरूपसाध्यसाधको हेतुः सूच्यत इति बोध्यम् । द्वैतस्य मृषात्वोक्तिं सफलयति— *मृषेति* ॥ *अधिकारी* ॥ प्रकृतग्रन्थश्रवण इत्यादिः । मृषात्वविशिष्टद्वैताश्रयत्वमात्मनि ज्ञायमानं तादृशद्वैतजिहा-सारूपमुमुक्षां जनयति ; यथा शुक्तिरजते मृषात्वज्ञानं तत्र जिहासाम् । एवं च तादृशद्वैताश्रयत्वं मुमुक्षाप्रयोजकत्वात् स्वसंबन्धिमुमुक्षास्मारकम्, अतो मुमुक्षालाभ इति भावः । कर्मकाण्डादिश्रुतीनां महावाक्योपकारकत्वम्, महावाक्येन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु* अखण्डब्रह्माकारज्ञानस्य दृश्योच्छेदकत्व आपातज्ञानरूपस्यापि तस्य तत् स्यात्, तत्राह—*श्रुतिशिखोत्थेति* ॥ श्रुतीनां कर्मोपासनाकाण्डरूपाणामुपकार्यत्वेन शिखेव मुख्यं तन्महावाक्यम्, तज्जनितेत्यर्थः। तथाच निष्कामकर्मोपासनानुष्ठापनद्वारकचित्तशुद्धि-चित्तैकाग्रताद्वारोक्तश्रुत्युपकृतवाक्यजन्यज्ञानस्यैव तदिति भावः॥

विट्ठलेशीयटिप्पणी

दृश्योच्छेदनक्षमतत्त्वज्ञाने जननीये यत् तत्सहकारि, तत्संपादकत्वम्। तत्र संपाद्यं सहकारि दर्शयति—*तथाचेति* ॥ *तत्=दृश्योच्छेदकत्वम्* ॥

"मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः सत्य-ज्ञान-सुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥

स्वयं विष्णुः=पूर्णावतारः श्रीकृष्णः; "कृष्णस्तु भगवान् स्वयमि"त्युक्तेः। *विजयते=भक्तवशतारूपेण सर्वोत्कर्षेण वर्तत इत्यन्वयः। कीदृशः? श्रीभगवता स्वीयया मायया=दयया कल्पितं संपादितं मातृतामुखं श्रीयशोदादीनां मातृत्व-पितृत्व-भ्रातृत्व-सखित्व-प्रियत्वादिरूपं यस्य, एवंभूतः सन् मृषाद्वैतः=मृषैवाऽद्वैतमभेदज्ञानं यत्र, मृषा=अविद्यमानम्, *द्वयोः=शोक-मोहयोरितम्=गतं वा यत्र, तादृशो यः प्रपञ्चो यशोदा-नन्द-राम-गोप-गोपी-रूपप्रकृष्टपञ्चभक्तयुक्तो व्रजः, तेनाश्रयः संसेव्यः, स आश्रयो निवासो यस्येति वा; मायाकल्पितमातृता यशोदा, तया दृश्यमानो मुखे यो मृषा=मायिकः, *द्वैतप्रपञ्चः=पृथक्त्वेन भासमानं विश्वम्, तदाश्रय इति वा। पुनः कीदृशः? सत्यः=राधिकाद्यः, अज्ञानाः=गावो गोपा बालाश्च, तेषां सततं सुखप्रापकः। आत्मेत्यत्र प्राप्त्यर्थकोऽन्तर्भावितण्यर्थोऽततिः। पुनः कीदृशः? *श्रुतिशिखे=कर्णसंलग्ने शिखे, काकपक्षौ, तयोर्यदुत्थमुत्थानम् ( घजर्थे कः ) वृद्धिः, अखण्डमविच्छेदश्च, तद्विषयिणी या धीस्तया तत्फलेच्छया। गाः=गोसम्बन्धीनि पयो-दधि-नवनीतादीनि; ( गोभिः श्रीणीतेतिवत् ) चरति भक्षयतीत्यर्थः। तादृशेच्छया गा धेनूश्चारयतीति वा॥ यद्वा—तत्त्वमस्यादिमहावाक्यजन्यमिव श्रीकृष्णब्रह्मात्मज्ञानं यासामीदृश्यो वा गावः; समासाश्रयविधेरनित्यत्वाश्च टच्, ताश्चारयतीत्यर्थः। चरतिरन्तर्भावितण्यर्थः। श्रुती कर्णौ च शिखेव शिखा शृङ्ग-रोम-पुच्छानि च, तदुत्थम्= हर्षेणोर्ध्वतया स्थितं यस्यां क्रियायां तादृशी अखण्डा धीर्ध्यानं यासाम्, तादृशीर्गाश्चारयतीति वा। श्रुतिशिखा= उपनिषत्, तत्साध्यो मोक्षः, तस्मादुत्थाय ततो विरज्य ततोऽधिकां भक्तिं प्राप्तुमुद्युक्ता ये शुकादयः, तेषामखण्डध्याने सगुणस्वरूपविषयके गा इन्द्रियाणि चारयति प्रेरयतीति वा। पुनः कीदृशः? मिथ्याभूतस्य बन्धकार्यवेदनाद्यसमर्थस्य बन्धस्य विधूननं नन्दकृतं मोचनम्, तेन निरतिशयानन्दैकस्वरूपं मोक्षं प्राप्त इव। यद्वा—मिथ्या=अनृतप्रचुरं दधिभाण्डभेदादि बालचापल्यम्, तत्प्रयुक्तो यो बन्धः=उलूखले दाम्नोदरबन्धनम्, तस्य विधूननम्=नन्दकृतं शिथिलीकरणम्, तेन परमा=प्रेमश्रीः, तया युक्तो यो नन्दः, तेन सह स्वस्य परस्परं तदेकतानम्=एकाग्रता, तदात्मकं सुखं यत्र, तथाविधं मोक्षं मोचनं प्राप्त इव स्थितः। यद्वा—बन्धशिथिलीकरणेन परप्रेमश्रीमता नन्देनैकेन तन्यमानो यो मोक्षः=सगुणस्वरूपविषयकं परमपुरुषार्थरूपं ध्यानं मोचनं च, तं प्राप्त इवेत्यर्थः। यद्वा—मिथ्याबन्ध एव विधुश्चन्द्रः, तस्य नन्द-स्वमुखशोभाभ्यां कृतेनोननेन क्षयेणेनादपि सूर्यादपि परमा या शोभा, ताम्, नन्दैकतन्यमानं मोक्षम्=परमपुरुषाधीयमानं मोचनं प्राप्तः। यद्वा—मिथ्याबन्धं विदधातीति मिथ्याबन्धविधुर्यशोदारूपश्चन्द्रः, तस्याप्युदीपकतया लोकानां मिथ्याबन्धविधायकत्वात्। तस्या ऊननेन तिरस्करणेन इनादपि परमशोभावता नन्देनैकेन तन्यमानं मोक्षं परमपुरुषार्थतुल्यं मोचनं प्राप्त इत्यर्थः। अत्र पक्षे—*इवस्वयमिति* ॥ इः=कामः, वसु=अर्थः, अयः=शुभादृष्टं धर्मः; तेषां समाहारद्वन्द्वः, अर्श आद्यजन्तः, प्राप्तिक्रियाविशेषणमिति व्याख्येयम्। तेन पुरुषार्थचतुष्टयप्राप्तिः फलिता। पुनः कीदृशः? वयः=पक्षिणः, कल्पाः=स्थातुं समर्थाः, यत्र तौ विकल्पौ=यमलार्जुनवृक्षौ, तावुज्झितौ भूमौ पातितौ येन, स विकल्पोज्झितः। विकल्पौ पक्षिवदाकाशसंचारिणौ, नलकूबर-मणिग्रीवौ प्रसादं कृत्वोज्झितौ स्वेष्टलोकं गन्तुं विसृष्टौ येनेति वा॥

## अद्वैतसिद्धिः

श्रीराम-विश्वेश्वर-माधवानामैक्येन साक्षात्कृतमाधवानाम् ।
स्पर्शेन निर्धूततमोर-जोभ्यः पादोत्थितेभ्योऽस्तु नमो रजोभ्यः ॥
बहुभिर्विहिता बुधैः परार्थं विजयन्तेऽमितविस्तृता निबन्धाः ।
मम तु श्रम एष नूनमात्मंभरितां भावयितुं भविष्यतीह ॥
श्रद्धाधनेन मुनिना मधुसूदनेन संगृह्य शास्त्रनिचयं रचिताऽतियत्नात् ।
बोधाय वादिविजयाय च सत्वराणामद्वैतसिद्धिरियमस्तु मुदे बुधानाम् ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

परममङ्गलरूपां परब्रह्मरूपविषय-प्रयोजनोक्तिं सम्पाद्य परमगुरु-गुरु-विद्यागुरून् प्रणमति—*श्रीरामेत्यादि* ॥ *ऐक्येन=आत्मैक्येन । *माधवानाम्=परब्रह्मणाम् ॥२॥ *ममात्मम्भरिताम्=मन्निष्ठां स्वार्थ-सम्पादकताम् । *भावयितुम्=जनयितुम् । *एष श्रमः=एतद्ग्रन्थसम्पादनम् ॥३॥ परोक्तदूषणोद्धारपूर्वक-स्वमतपरिच्छेदविशेषस्यैतद्ग्रन्थे क्रियमाणस्यातिलोकोत्तरत्वेनान्यैरेतद्ग्रन्थदर्शनात् पूर्वमज्ञातत्वेनाकामितत्वाद् मयैव पूर्वं कामितमुक्तपरिच्छेदरूपं फलं भावयत्ययं ग्रन्थः, नान्यैः कामितमिति भावः । *सिद्धिः=निश्चयः । *इयम्=एतद्ग्रन्थाधीना ॥

"सिद्धीनामिष्ट-नैष्कर्म्य-ब्रह्मगानामियं चिरात् । अद्वैतसिद्धिरधुना चतुर्थी समजायत ॥"

इत्येतद्ग्रन्थीयसमाप्तिस्थानीयपद्यस्थसिद्धिपदान्यपि तत्तद्ग्रन्थाधीननिश्चयपराण्येव । परिच्छेदसमाप्त्यादिस्थले सिद्धिपदं साधकग्रन्थपरम्, निश्चयपरमेव वा ; अद्वैतनिश्चयोपयोगी प्रथमपरिच्छेद इत्याद्यर्थकत्वसम्भवेन लक्षणायां मानाभावात् । अस्मदादिभिस्तु स्वकीयसङ्केतविशेषेणास्मिन् ग्रन्थेऽद्वैतसिद्धिपदं प्रयुज्यते ॥ इति मङ्गलश्लोकार्थविवरणम् ॥

## सौगन्ध्यविमर्शः

न दोषः । तथाचाद्वैतसिद्धेस्तत्तद्वाक्याधीनाया द्वैतमिथ्यात्वपूर्वकत्वमिव ब्रह्मसगुणत्वसिद्धेर्द्वैतसत्यत्वसाधनमिथ्यात्ववादनिरासपूर्व-

## सिद्धिव्याख्या

गुरून् मही कुर्वन्नमस्करोति—*श्रीरामेति* ॥२॥ स्वकीयग्रन्थस्य वैयर्थ्यमाशङ्क्य दर्शयति—*बहुभिरिति*॥३॥ इतरग्रन्थापेक्षयाधिक्यं दर्शयति—श्रद्धेति ॥ ४ ॥ इति मङ्गलश्लोकार्थविवरणम् ।

## विट्ठलेशीयटिप्पणी

*ननु* मूले प्रथमश्लोके विष्णुपदस्य जीवपरतया व्याख्यानादिष्टदेवतोत्कर्षाद्यप्रतिपादनाद् न तस्य मङ्गलरूपतेत्यतः—श्रीरामेत्यादिना गुरुनमस्काररूपं मङ्गलं प्रथमतो निबद्धव्यम् ; ग्रन्थादौ मङ्गलस्यैव तन्निबन्धनस्यापि शिष्टाचारसिद्धत्वात्, एवं प्रथमश्लोके मुमुक्षुरूपाधिकारिसूचनेऽपि विषयाद्यनुक्त्या न्यूनतेत्याशङ्कां परिहरति—*परमेत्यादिना* ॥ *उक्तिम्=प्रथमश्लोकरूपाम् । परब्रह्माभिन्नजीवचैतन्यस्यैव ग्रन्थप्रतिपाद्यत्वाद् विषयत्वम्, अनावृतप्रकाशाभिन्नानावृतानन्दरूपत्वाच्च प्रयोजनत्वम्, अस्य च सर्वप्रयोजनेषूत्कृष्टतया गुरुनमस्कारफलतया च परमप्रयोजनत्वाद् एतदुक्तेः परममङ्गलरूपतेति भावः । *परमगुर्विति* ॥ वन्दने तथा क्रमस्यैव शास्त्र-संप्रदायोभयसिद्धत्वादिति भावः ॥२॥ यद्यपि *आत्मम्भरिता=आत्मभरणम्, स्वजीविकापर्यवसितम्, तस्य च लोकसाधारणतया ग्रन्थरचनाश्रमसाध्यत्वोक्तिर्ग्रन्थकारस्य केवलं स्वस्य गर्वराहित्यप्रदर्शनफलिकेति यथाश्रुते प्रतीयते ; तथापि झटिति विजिगीषुश्रोतृप्रवृत्तय ईदृशग्रन्थनिर्माणस्यानन्यसाध्यताव्यञ्जकतयाऽऽत्मंभरितापदं व्याचष्टे—*आत्ममिति* ॥३॥ स्वार्थः=स्वकामितार्थः । *परः=माध्वः । 'अद्वैतसिद्धिरि'त्यत्र सिद्धिर्न निष्पत्तिः ; अद्वैतपदार्थस्य ब्रह्मण उत्पत्तेरसंभवादित्यतो व्याचष्टे—*सिद्धिरिति* ॥ प्रसङ्गादन्यान्यपि सिद्धिपदान्यत्रैव व्याचष्टे—*सिद्धीनामिति* ॥५॥ इति मङ्गलश्लोकार्थनिरूपणम् ॥

## न्यायामृतम्

*ननु*—मिथ्यैव विश्वम् ; तथाहि—तत्र (१)विप्रतिपत्तिः । ब्रह्मप्रमान्येन (२)वा सप्रकारेण

## तरङ्गिणी

आचार्योपदेशपरिगृहीतार्थस्य न्यायतोऽवधारणरूपमननस्यावधार्यमाणार्थविपरीतनिरासस‍ाध्यत्वात् परपक्षं प्रतिक्षेप्तुमुपक्षिपति—*नन्विति* ॥ अत्र विशेषणसङ्गतेनैवकारेण 'शङ्खः पाण्डुर एवे'तिवद्विशेष्यतावच्छेदकावच्छिन्ने सर्वस्मिन् विशेषणसम्बन्धबोधनात् 'सत्याशेषविश्वस्य कारणमि'त्यनेन सूचितस्य स्वपक्षस्य विपरीतस्य निर्देशः कृतः । प्रतिवाद्यवधानाय परो 'मिथ्यैव विश्वमि'ति स्वपक्षस्य प्रामाणिकत्वं जानीहीत्याह—*तथाहीति* ॥ *ननु* 'मिथ्यैव विश्वमि'ति परपक्षोपक्षेपो न सम्भवति ; ब्रह्मादिषु बाधाद्यापत्तेः, इत्याशङ्कामपनेतुं विवादाङ्गं विप्रतिपत्तिजन्मानं च संशयं वक्तुमाह—*तत्रेति* ॥ प्रवर्त्स्यन्त्यां मिथ्यात्वकथायां विप्रतिपत्तिः पूर्वं मध्यस्थपरिदर्शिताऽस्तीति शेषः । तथाच विप्रतिपत्तौ पक्षत्वेन निर्दिष्टस्यैव विश्वशब्देन ग्रहणाद् न ब्रह्मादौ बाधादीति भावः । विप्रतिपत्तिस्वरूपमाह—*ब्रह्मप्रमेत्यादिना* ॥ अत्र विश्वस्य धर्मित्वे ब्रह्मणि बाधासिद्धी

## न्यायामृतकण्टकोद्धारः

'सत्याशेषविश्वस्ये'त्युक्तं विश्वसत्यत्वं समाधातुं प्रतिक्षिपति—*नन्विति* ॥ नचात्रैवकारवैयर्थ्यम्, अत्र हि स्वपक्षसाधनं परपक्षदूषणं द्वयमपि कर्तव्यम् ; तत्र मिथ्या न सत्यमित्यर्थलाभाय तस्योपात्तत्वात् । अथवा मिथ्येत्युक्ते यादृशतादृशमिथ्यात्वस्य मयाऽङ्गीकारात् सिद्धसाधनमित्याशङ्कानिरासाय—'एवे'त्युक्तम्, तेनायोगव्यवच्छेदवाचिनैवकारेण भवदङ्गीकृतसत्यत्वविरोधिमिथ्यात्वम् ॥

## न्यायामृतसौगन्ध्यम्

*ननु* मिथ्यैव विश्वम् ; तथाहि—तत्र विप्रतिपत्तिः—ब्रह्मप्रमेतराबाध्यत्वे सत्यसद्विलक्षणत्वे सति ब्रह्मान्यद् मिथ्या ? न वा ? पारमार्थिकत्वाकारेण प्रतिपन्नोपाधौ निषेधप्रतियोगि ? न वेति ? पक्षतावच्छेदक-

---

(१) *ननु*—कस्येयं विप्रतिपत्तिः ? न तावद् वादिनः ; तस्य मिथ्यात्वनिश्चयवत्त्वात्, नापि प्रतिवादिनः ; तस्य सत्यत्वनिश्चयवत्त्वादिति—चेत्, *सत्यं न वादि-प्रतिवादिनोरियं विप्रतिपत्तिः*, किन्तु तदुभयव्यतिरिक्तानां सभापत्यादीनामेव ; तत्त्वनिर्णयेप्सुसभापत्याद्यर्थिताभ्यामपि वादि-प्रतिवादिभ्यां क्रियमाणायाः कथायास्तत्संशयनिरासद्वारा तत्त्वनिर्णयफलकत्वात्, ग्रन्थस्यापि वादप्रक्रियया प्रवर्तमानत्वात् । अतः कथातः पूर्वं वादि-प्रतिवादिव्यतिरिक्तानां सभापत्यादीनां वादि-प्रतिवादि-प्रवर्तनीयविचाराङ्गसंशयापरनाम्नी विप्रतिपत्तिरस्तीति व्याख्येयम् ॥

अन्ये तु—नेयं विप्रतिपत्तिर्वादिनः, नापि प्रतिवादिनः, किं नाम ? उभौ प्रति ; एकैकपक्षपरिग्रहाय विरुद्धार्थप्रतिपादकवाक्यद्वयरूपा विप्रतिपत्तिर्मध्यस्थप्रदर्शिताऽस्तीत्यर्थः—इत्याहुः । *ननु* विप्रतिपत्तिमादौ प्रदर्श्य पश्चात् पूर्वपक्ष उत्थापनीयः ; "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः" इति वचनात्, अतोऽत्र वैपरीत्यं कस्मादाचरितम् ? इति चेत्, *उच्यते* ; मिथ्यैवेत्यस्य न पूर्वपक्षप्रदर्शन एव तात्पर्यम्, किं नाम ? संशयस्य विरुद्धार्थप्रतिपादकपूर्वोत्तरपक्षप्रतिपादकवाक्यद्वयजन्यत्वेन विप्रतिपत्तिवाक्यद्वयाज्ञाने प्रदर्शयितुमशक्यत्वात्, "सत्याशेषे"ति सत्यत्वप्रतिपादकं "मिथ्यैव विश्वमि"ति मिथ्यात्वप्रतिपादकं वाक्यं चादौ प्रदर्श्यानन्तरं संशयापरनाम्नी विप्रतिपत्तिः प्रदर्शितेत्यदोष इति ॥ ( श्रीनि ) ।

(२) *विश्वं मिथ्येति सामान्येन प्रतिज्ञातम्, तथाच ब्रह्मादेरपि विश्वशब्देन ग्रहणे बाधाद्यापत्तेर्धर्मिणं निर्धारयंस्तामेव विप्रतिपत्तिं विवृणोति—*ब्रह्मप्रमान्येन वेत्यादिना* ॥

अत्र विद्वत्प्रमोदार्थं पदानां कृत्यं चिन्त्यते । तथाहि—ब्रह्मान्यन्मिथ्येत्युक्ते तुच्छे बाधः स्यात्, अतोऽसद्विलक्षणत्वे सतीत्युक्तम् । तावत्युक्ते शुक्तिरूप्ये सिद्धसाधनता स्यात्, अतोऽबाध्यत्वे सतीत्युक्तम् । *ननु* इदं विशेषणं व्यर्थम्, सिद्धसाधनताया वक्तुमशक्यत्वात्, असद्विलक्षणत्वे सति ब्रह्मान्यन्मिथ्येति वादिना प्रयुक्ते सति प्रतिवादिभिरस्माभिः सिद्धसाधनता वाच्या । नहि सा वक्तुं शक्या ; अस्मन्मते शुक्तिरूप्यस्यासत्त्वेन पक्षतावच्छेदकानाक्रान्तत्वादिति—चेत्, *न* ; परार्थानुमाने वक्तुमशक्यत्वेऽपि यदा तवैव स्वार्थानुमितिः, तदा त्वन्मते तस्यासद्विलक्षणत्वेन सिद्धसाधनताप्राप्त्याऽबाध्यत्वविशेषणसार्थक्यात् । नच—विशेषणप्रयोजनस्योभयवादिसिद्धत्वाभाव इति—वाच्यम् ; विशेषणस्य सार्थक्ये प्रयोजनवत्त्वमेव तन्त्रम्, नतूभयवादिसिद्ध-

**न्यायामृतकण्टकोद्धारः**

***ननु*—ब्रह्मप्रमापदेन ब्रह्मप्रमामात्रं विवक्षितम् ? उत निष्प्रकारकब्रह्मज्ञानम् ? नाद्यः ; शुक्त्यादिज्ञानानामपि ब्रह्मप्रमात्वेन तद्बाध्यशुक्तिरजतादेः पक्षतापत्त्यावंशतः सिद्धसाधनस्य दुष्परिहरत्वापत्तेः। न द्वितीयः ; तत्त्ववादिना निष्प्रकारकज्ञानानङ्गीकारेण तं प्रत्याश्रयासिद्धेः, नैयायिकैरपि ब्रह्मविषयकनिष्प्रकारकज्ञानानङ्गीकारेण तन्मतेऽप्याश्रयासिद्धेरिति—चेत्, न ; ब्रह्मविषयकभ्रमभिन्नज्ञानस्य 'ब्रह्मप्रमे'त्यनेन विवक्षणात्, वेदान्तजन्यचरमान्तःकरणवृत्तेस्ताद्दृशत्वेन दोषाभावात्। तस्माद् ब्रह्मविषयकभ्रमभिन्नज्ञानान्येनाबाध्यत्वे सत्यसद्विलक्षणत्वे सति ब्रह्मान्यत्वं पक्षतावच्छेदकमित्युक्तं भवति। 'शुद्धं ब्रह्म वृत्तिव्याप्यं ने'ति मतसाधारणपक्षलाभायाह—*सप्रकारेण वेति*॥ अस्मिंश्च पक्षे ब्रह्माकारैव वृत्तिः, नतु तद्विषयाऽपीत्युभयमतसाधारण्यमित्याहुः॥**

---

प्रयोजनवत्त्वम् ; गौरवात्। नचैतददृष्टचरमिति वाच्यम् ; निरीश्वरवादिनं मीमांसकं प्रतीश्वरसाधनाय तार्किकेण प्रयुज्यते "जन्यकृत्यजन्यानि जन्यानि, सकर्तृकाणी"त्यादि। तत्र जन्यानि सकर्तृकाणीत्युक्ते घटादीनां कुलालादिकर्तृकतायाः सिद्धत्वेन सिद्धसाधनता स्यात्, अतः कृत्यजन्यानीत्युक्तम्। तर्हि तार्किकमते सर्वस्यापीश्वरकृतिजन्यत्वेनाऽऽश्रयासिद्धौ प्राप्तायां जन्यत्वं विशेषणमुपात्तम्। न हीदं संभवति ; आद्यजन्यपदस्य तार्किकरीत्या कृत्यसद्भावेऽपि मीमांसकरीत्या तदभावात्, तस्य निरीश्वरवादित्वेनाश्रयासिद्धेस्तेनोद्भावयितुमशक्यतयोभयसिद्धप्रयोजनाभावेन तद्वैयर्थ्यशङ्कायाम्—'विशेषणस्य सार्थक्ये प्रयोजनवत्त्वमेव तन्त्रम्, नतु तस्योभयसिद्धत्वमपी'ति यथा तार्किकैः समाधीयते, तथेहापीति॥

अत्रेदं चिन्त्यम्—यदुक्तं स्वार्थानुमितिदशायां सिद्धसाधनतावारणाय विशेषणं सार्थकमिति, तदयुक्तम् ; पक्षतावच्छेदकावच्छिन्ने सर्वत्र साध्यसिद्धेरुद्देश्यत्वपक्षे सिद्धसाधनताऽभावः पृथिवीतरभिन्नेत्यत्र दृष्टः, यथाहि घटत्वावच्छेदेनेतरभेदसिद्धावपि पृथिवीत्वरूपपक्षतावच्छेदकावच्छिन्ने सर्वत्र साध्यसिद्धेरभावेन सिद्धसाधनताया अभावः, एवमिहापि शुक्तिरूप्यत्वावच्छेदेन मिथ्यात्वरूपसाध्यसिद्धावप्यसद्विलक्षणत्वे सति ब्रह्मान्यत्वावच्छेदेन सर्वत्र वियदादौ मिथ्यात्वरूपसाध्यसिद्ध्यभावेन सिद्धसाधनताया अभावादबाध्यत्वविशेषणं व्यर्थमिति॥

केचित्तु—पक्षतावच्छेदकावच्छिन्ने यत्र कुत्रचित् साध्यसिद्धेरुद्देश्यत्वपक्षेंऽशे सिद्धसाधनतायाः संभवाद्विशेषणं सार्थकमिति—आहुः, अत्र पृथिवी, इतरभिन्नेत्यस्यापि दुष्टत्वापत्तेस्तदयुक्तम्॥

अपरे तु—असद्विलक्षणत्वे सति ब्रह्मान्यत्सत्यमिति प्रतिवादिना साधनीयम्। तत्र मायिना शुक्तिरूप्ये बाध उद्भाव्येत, तदर्थमबाध्यत्वे सतीत्युक्तमित्याहुः। *ननु* नात्र बाधः संभवति ; तथाहि—यद्धर्मावच्छेदेन यस्मिन् धर्मिणि साध्यं साध्यते, तद्धर्मावच्छेदेन तत्र तदभावज्ञानं बाधः। यथाऽग्नित्वावच्छेदेनाग्नावनुष्णत्वं साध्यते, तद्धर्मावच्छेदेनैवाग्नावुष्णत्वज्ञानं चेत्, बाधः, न त्वग्नित्वावच्छेदेनानुष्णत्वे साध्ये द्रव्यत्वावच्छेदेन यत्र कुत्रचिदुष्णत्वज्ञानं बाधः ; समानप्रकारकविरुद्धज्ञानस्यैव बाधत्वात्। एवं च पक्षतावच्छेदकावच्छिन्ने सर्वत्र साध्यसिद्धेरुद्देश्यत्वेनासद्विलक्षणत्वे सति ब्रह्मान्यत्वावच्छेदेन सर्वत्र प्रपञ्चे सत्यत्वस्यास्माभिः साध्यमानत्वाच्छुक्तिरूप्यत्वावच्छेदेन सत्यत्वाभावस्य सिद्धत्वमादाय बाधोक्त्ययोग इति चेत्, *न* ; त्वदुक्तं हि संपूर्णबाधलक्षणम्। यदा हि पक्षतावच्छेदकावच्छिन्ने यत्र कुत्रचित्साध्यसिद्धेरुद्देश्यत्वम्, तदा पक्षतावच्छेदकावच्छिन्ने यत्र कुत्रचित् साध्याभावस्य सिद्धावंशे बाधः। तथाचासद्विलक्षणत्वे सति ब्रह्मान्यत्वावच्छेदेन यत्र कुत्रचित्सत्यत्वसिद्धेरुद्देश्यत्वं यदा, तदाऽसद्विलक्षणत्वे सति ब्रह्मान्यत्वावच्छिन्ने यत्र कुत्रचिच्छुक्तिरूप्ये सत्यत्वाभावसिद्धावंशे बाधो मायिनोद्भाव्येनापि, तदर्थमबाध्यत्वविशेषणमिति न कोऽपि दोषः। अबाध्यत्वे सतीत्याद्युक्तौ मायिमत आश्रयासिद्धिः ; तन्मते विश्वस्य बाध्यत्वेन पक्षालाभात्, अतो "ब्रह्मप्रमान्येने"त्युक्तम्। तथाच तन्मते जगतो ब्रह्मप्रमाबाध्यत्वेऽपि तदन्येनाबाध्यत्वसत्त्वान्नाश्रयासिद्धिरिति भावः॥

*ननु*—अत्र नञ्द्वयं कस्मादुपात्तम् ? ब्रह्मप्रमाबाध्यत्वे सतीत्येव कस्मान्नोक्तमिति—चेत्, *उच्यते* ; तथात्वे तत्त्ववादिमत आश्रयासिद्धिः ; तन्मते जगतः सत्यत्वेन ब्रह्मप्रमाबाध्यत्वाभावात्, अतो नञ्द्वयगर्भता। तथाचास्मन्मते सर्वथाऽबाध्यत्वेन विशेषणपर्यवसानम्, तन्मते तु ब्रह्मज्ञानबाध्यत्वेनेति न कोऽपि दोष इति द्रष्टव्यम्॥

*ननु*—अत्र प्रमापदं किमर्थम् ? ब्रह्मज्ञानान्यज्ञानाबाध्यत्वे सतीत्येव कस्माद् नोक्तमिति—चेत्, *उच्यते* ; ब्रह्मज्ञानान्यज्ञानाबाध्यत्वे सतीत्युक्तौ 'सर्वप्रत्ययवेद्ये चे'त्यादिवचनाद् 'नेदं रूप्यमि'ति बाधकज्ञानस्यापि शुक्त्यवच्छिन्नचैतन्यविषयकत्वेन ब्रह्मज्ञानत्वात् तद्बाध्ये, अत एव ब्रह्मज्ञानान्यज्ञानाबाध्ये शुक्तिरूप्ये मिथ्यात्वसिद्ध्या सिद्धसाधनता स्यात्, तदर्थम्—प्रमापदम्।

**न्यायामृतम्**

वाऽबाध्यत्वे सत्यसद्विलक्षणत्वे सति ब्रह्मान्यत्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि ? नवा ? पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगि ? नवा ? अखण्डार्थनिष्ठवेदान्तजन्यनिष्प्रकारक-

**तरङ्गिणी**

स्याताम्, अतो ब्रह्मान्यदित्युक्तम्। *ननु*—पक्षतावच्छेदकैक्ये तन्न दूषणम्; समानप्रकारकविरहज्ञानस्यैव प्रतिबन्धकतया ब्रह्मत्वावच्छेदेन साध्य-हेत्वभावनिश्चयेऽपि विश्वत्वावच्छेदेन तदनिश्चयादिति—चेत्, *न*; एवमपि तत्र तज्ज्ञानस्य भ्रमत्वेन तत्त्वनिर्णयाभावेन वादकथया निर्णयसिद्धये तदुपादानस्य सर्वसिद्धत्वात्। तुच्छे बाधासिद्धी मा भूताम्, इति—*असद्विलक्षणत्वे सतीति* ॥

---

वेदान्तजन्यनिष्प्रकारकब्रह्मज्ञानस्यैव वस्तुगत्या प्रमात्वेन 'नेदं रूप्यमि'ति ज्ञानस्य वस्तुगत्या तन्मतेऽप्रमात्वाद् ब्रह्मप्रमान्येनाबाध्यत्वस्य शुक्तिरूप्येऽभावेन धर्मिकोटावप्रवेशान्न सिद्धसाधनतेति ध्येयम् ॥

अत्र यद्यपि प्रमात्वं नाम न तद्वति तत्प्रकारकत्वं विवक्षितम्, निर्विकल्पकेऽव्याप्तेः, ब्रह्मप्रमाया निष्प्रकारकत्वेन ब्रह्मत्ववति ब्रह्मत्वप्रकारकत्वाभावात्; तथापि विशेष्यावृत्त्यप्रकारकत्वं विवक्षितम्। सविकल्पकप्रमायां विशेष्यवृत्तिप्रकारकत्वमादाय, निर्विकल्पिकायां तु सर्वथा निष्प्रकारकत्वेन लक्षणपर्यवसानम्, प्रकृते च वेदान्तजन्यप्रमाया निर्विकल्पकरूपतया सर्वथा निष्प्रकारकत्वेन ब्रह्मावृत्त्यप्रकारकत्वादुक्तं प्रमालक्षणमस्तीति न कोऽपि दोष इति ध्येयम् ॥

अथ ब्रह्मप्रमान्येनाबाध्यत्वे सतीत्याद्युक्तौ ब्रह्मण्यारोपितक्षणिकत्वे 'ब्रह्म स्थायी'ति प्रमाबाध्ये ब्रह्मप्रमान्येनेत्यादिविशेषणजातस्य सत्त्वेन धर्मित्वप्राप्तौ तत्र मिथ्यात्वसाधने सिद्धसाधनता स्यादित्यस्वरसादाह—*सप्रकारेण वेति* ॥ तथाच न ब्रह्मण्यारोपितक्षणिकत्वस्य विप्रतिपत्तिधर्मिता, तस्य 'स्थायि ब्रह्मे'ति सप्रकारकप्रमाबाध्यत्वेन सप्रकारकेणाबाध्यत्वाभावादित्याहुः, तच्चिन्त्यम्; नेदमस्वरसोद्भावनं युक्तम्। तथाहि—अत्र ब्रह्मप्रमाशब्देन निष्प्रकारकप्रमाया एव विवक्षितत्वेन 'ब्रह्म स्थायी'ति प्रमाया ब्रह्मप्रमात्वाभावेन ब्रह्मण्यारोपितक्षणिकत्वमादाय सिद्धसाधनताया वक्तुमशक्यत्वात्। किंच ब्रह्मप्रमेत्यत्र प्रमाशब्देनातत्त्वावेदकप्रमा विवक्षिता ? उत तत्त्वावेदकप्रमा ? नाद्यः; शुक्तिरूप्यस्यापि "नेदं रजतमि"त्यतत्त्वावेदकप्रमाबाध्यत्वेनातत्त्वावेदकब्रह्मप्रमान्येनाबाध्यत्वादेः सत्त्वेन तस्य मिथ्यात्वसाधने पुनः सिद्धसाधनताया दुर्वारत्वापातात्, न द्वितीयः; तथात्वे ब्रह्मण्यारोपितक्षणिकत्वमादाय सिद्धसाधनताया वक्तुमशक्यत्वात्, 'ब्रह्म स्थायी'ति प्रमायास्तत्त्वावेदकत्वाभावेन ब्रह्मण्यारोपितक्षणिकत्वे तत्त्वावेदकप्रमान्येनाबाध्यत्वस्याभावेन तदादाय सिद्धसाधनताया अयोगेन सप्रकारेण वेत्यस्य वैयर्थ्यापत्तेरिति। संप्रदायस्तु—ब्रह्मप्रमेत्यस्य हि ब्रह्मविषयिणी प्रमेत्यर्थः। ब्रह्म वेदान्तजन्यवृत्तिव्याप्यं नेति मते ब्रह्मप्रमाया एवाभावेन तद्घटितविप्रतिपत्त्ययोग इत्यस्वरसादाह—*सप्रकारेण वेति*। यद्वक्ष्यति-—विश्वमिथ्यात्वस्यानुमानबाधकथनावसरे—"ब्रह्म वृत्तिव्याप्यमपि नेति मतेन तु द्वितीय-तृतीये" इति ॥

*ननु* च ब्रह्मान्यदित्यस्य यदि ब्रह्मप्रतियोगिकान्योन्याभाववत्त्वमर्थः, तर्ह्यसतो निःस्वरूपत्वेन ब्रह्मप्रतियोगिकान्योन्याभावस्य धर्मिस्वरूपभूतस्यासत्यसंभवेन तदादाय बाधाप्रसक्तेरसद्विलक्षणत्वे सतीति विशेषणवैयर्थ्यम्। यदि चान्योन्याभावस्य प्रतियोगितावच्छेदकात्यन्ताभावव्याप्यतया ब्रह्मत्वात्यन्ताभाववत्त्वमर्थः, तर्हि निर्धर्मके ब्रह्मण्यपि तस्य सत्त्वेन तत्र मिथ्यात्वसाधने बाधापत्तिः। नच—ब्रह्मणो निर्धर्मकत्वेन ब्रह्मत्वात्यन्ताभावाधिकरणत्वमपि नास्तीति—वाच्यम्; अभावरूपा धर्मा नाद्वैतं निघ्नन्ती'ति मण्डनमिश्रोक्तेरिति—चेत्, *उच्यते*; द्वितीयपक्षाङ्गीकारे दोषाभावात्। नचोक्तरीत्या बाध इति वाच्यम्; मायिकब्रह्मत्वसद्भावेन तदत्यन्ताभावाधिकरणत्वाभावेन तस्य पक्षबहिर्भूतत्वेन तत्र बाधानापत्तेः। अथवाऽऽद्य एव पक्षोऽभिप्रेतः। नचोक्तदोषः; तस्यास्मन्मते धर्मिस्वरूपत्वेऽपि परमते तदभावेन तद्रीत्या बाधवारणाय विशेषणसार्थक्यादित्याहुः ॥

वस्तुतस्तु—ब्रह्मान्यत्वं नाम ब्रह्मविलक्षणत्वम्, वैलक्षण्यं च तद्विरुद्धधर्मयोगित्वम्, तच्चास्त्यसति; निषेधबुद्धिविषयत्वादिरूपब्रह्मविरुद्धधर्मसद्भावात्, अतस्तदादाय बाधपरिहारायासद्विलक्षणत्वे सतीत्युक्तमित्यवगन्तव्यम् ॥

अथवा—ब्रह्मान्यदित्यस्य ब्रह्म अन्यद् यस्मादित्यर्थकरणेनासतोऽपि प्राप्त्या तत्र बाधपरिहारायासद्विलक्षणत्वे सतीति विशेषणस्य सार्थक्यम्; प्रतियोगित्वादिधर्माणां रूपादिवद्धर्मिसत्तासापेक्षत्वाभावादित्यालोचनीयम् ॥ ( श्रीनि )।

### न्यायामृतम्

ब्रह्मप्रमाबाध्यमपि विश्वं ब्रह्मप्रमान्येन वा सप्रकारेण वा न बाध्यमिति नाश्रयासिद्धिः। एवमुत्तरत्रापि पूर्वोत्तरपक्षानुमानप्रतिज्ञे संकलय्य विप्रतिपत्तिरूह्या ॥

### तरङ्गिणी

(सि०) "पक्षतावच्छेदकसामानाधिकरण्येन(१) साध्यसिद्धेरुद्देश्यत्वे पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनमिति मते शुक्तिरूप्ये सिद्धसाधनवारणाय—'अबाध्यत्वे सती'ति विशेषणम्। यदि पुनः पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धिरुद्देश्या, तदैकदेशे साध्यसिद्धावपि सिद्धसाधनाभावात् तद्वारकविशेषणमनुपादेयम्"। परमते वियदादेरपि बाध्यत्वात्पक्षालाभो मा भूत्, इति 'ब्रह्मप्रमान्येनेत्यत्राध्यत्वविशेषणम्। *ननु*—ब्रह्मण्यारोपितस्य क्षणिकत्वादेरधिष्ठानब्रह्मप्रमामात्रनिवर्त्यत्वात्तत्र सिद्धसाधनम्, शुक्तिज्ञानादेरपि ब्रह्मज्ञानत्वात् तद्बाध्यरजतादौ च सिद्धसाधनम्, 'शुद्धं ब्रह्म वृत्तिव्याप्यमपि ने'ति मते वियदादेरपि ब्रह्मप्रमान्यबाध्यत्वात् पक्षालाभश्चेत्यनुशयेन 'सप्रकारेणे'त्यबाध्यत्वविशेषणम्(२) ॥

### न्यायामृतकण्टकोद्धारः

यत्तु ब्रह्मण्यारोपितस्य क्षणिकत्वस्याधिष्ठानब्रह्मप्रमामात्रनिवर्त्यत्वेन सिद्धसाधनम्, शुक्तिज्ञानादेरपि ब्रह्मज्ञानत्वात् तद्बाध्यरजतादौ च सिद्धसाधनम्, 'शुद्धं ब्रह्म वृत्तिव्याप्यं ने'ति मते वियदादेरपि ब्रह्मप्रमाबाध्यत्वाभावेन पक्षालाभश्चेत्यनुशयत्रयात् 'सप्रकारेण वे'त्युक्तमिति व्याख्यानम्, तत्र नाद्योऽनुशयः; तथाहि—'सप्रकारेण वे'त्युक्तावप्यधिष्ठानीभूतब्रह्मप्रमाबाध्यत्वात् क्षणिकत्वादेः सप्रकारेणाबाध्यत्वेन पूर्वोक्तसिद्धसाधनावकाशस्तदवस्थ एव। नापि द्वितीयः; ब्रह्मप्रमापदेन भ्रमभिन्नज्ञानस्य विवक्षितत्वेन मायिमते सप्रकारज्ञानमात्रस्य भ्रमत्वेन शुक्तिज्ञानस्यापि सप्रकारत्वेन भ्रमत्वाद् भ्रमभिन्नत्वाभावेन सिद्धसाधनानवकाशात्। नापि तृतीयः; यन्मते ब्रह्म वृत्तिव्याप्यम्, तन्मतेनैव विप्रतिपत्तेः प्रणीतत्वात्। अत एवानुमानबाधकथानावसरे मतभेदेन पक्षभेदं वक्ष्यति ॥

*ननु*—(श्रीनि) एवमपि विकल्पितप्रथमसत्यन्तविशेषणवैयर्थ्यम्, प्रयोजनाभावादिति—चेत्, *अत्राहुः*—वादिमते शुक्तिरूप्यांशे सिद्धसाधनवारणाय। तत्त्ववादिमते च शुक्तिरूप्यस्यासत्त्वेन—'असद्विलक्षणत्वे सती'त्यनेनैव सिद्धसाधनोद्धारसम्भवे तार्किकमते च तस्य घटादितुल्यत्वेन सिद्धसाधनानवकाशेऽप्युद्देश्यसिद्ध्यर्थं प्रथमसत्यन्तं सप्रयोजनम्। नच—उभयमत एकं विशेषणप्रयोजनं नास्तीति—वाच्यम्; विशेषणस्य सर्वसिद्धप्रयोजनवत्त्वस्यैव तन्त्रत्वेनोभयमत एकविशेषणप्रयोजनस्यातन्त्रत्वात्—इति, *तन्न*; तत्रैव ह्युद्देश्यसिद्ध्यर्थं विशेषणमुपादीयते, यद्विशेषणानुपादानेऽन्यतरमत आश्रयासिद्धिर्वाऽप्रयोजकत्वं वा सिद्धसाधनत्वादिकं वा समापतति, यथा—'जन्यकृतिजन्यभिन्नजन्यानि, सकर्तृकाणि, इत्यत्र न्यायमते जन्येतिविशेषणाभाव आश्रयासिद्धिर्भवतीति जन्येति विशेषणोपादानम्। यथा च तन्मत एव 'तद्वति तत्प्रकारकं ज्ञानं प्रमा' इत्यत्र 'तद्वती'ति विशेषणाभावे सिद्धसाधनता भवतीति 'तद्वती'ति

(१) अस्मिन्नंशे सिद्धिमतमेव तरङ्गिणीकाराणामपि मतम्, अतो न तन्निरसने तरङ्गिणीकाराः प्रवर्तन्ते, पक्षान्तरबीजं तरङ्गिण्यभिमतं तु कण्टकोद्धारेण निरस्यत इति तु विशेषः ॥

(२) अत्रेयं गुरुचन्द्रिका—तत्तु तुच्छम्; शुक्त्यादिज्ञानस्य शुक्त्याद्यवच्छिन्नचिद्विषयकत्वेऽपि शुद्धचिदविषयकत्वात्। अन्यथा हि ब्रह्मप्रमान्यबाध्यत्वाप्रसिद्धिरेव वाच्या स्यात्, न सिद्धसाधनम्। ब्रह्मप्रमापदेन ब्रह्मान्याविषयकोक्तौ सिद्धसाधनाभावाच्च। 'शुद्धं ब्रह्म न विषयः' इति मतेऽपि वृत्त्युपहितब्रह्मान्याविषयकत्वस्योक्तावदोषात्। किञ्च 'नायं सः' इति भेदादेः 'सोऽयमि'त्यादिनिष्प्रकारकेण बाध्यत्वात् तव कथं न सिद्धसाधनम्?

### अद्वैतसिद्धिः

तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वाद् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम् ।

### न्यायामृतकण्टकोद्धारः

विशेषणम्, तद्वत् प्रकृत एतद्विशेषणाभाव आश्रयासिद्ध्यादेरभावात्तदर्थं तद्विशेषणं व्यर्थम् । नच—अत्रापि वादिमतेंऽशतः सिद्धसाधनतोद्धारः प्रयोजनमित्युक्तमिति—वाच्यम् ; सिद्धसाधनतायाः प्रतिवादिनैवो-द्भाव्यत्वेन वादिना स्वं प्रति स्वेनैव तदुद्भावनस्य कर्तुमशक्यत्वात्, अन्यथा वादिमते सम्पूर्णसाध्यस्य सिद्धत्वेन तन्मते सम्पूर्णसिद्धसाधनतापत्तेः । किञ्च—अयम्, एतत्संयोगी, एतत्त्वादित्यत्रेव बाधितांश-मपहायाबाधितांशेऽप्यनुमित्यापत्तौ 'ब्रह्मान्यद्' इति विशेषणवैयर्थ्यं स्यात्, इति तत्सार्थक्याय पक्षतावच्छेद-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*पूर्वकत्वादिति* ॥ "एकमेवाद्वितीयं ब्रह्म"त्यादिश्रुत्या जायमानेऽद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पकनिश्चये ब्रह्मणि द्वैताभावविशिष्टबुद्धेर्द्वारत्वात्, तस्याश्च निषेधत्वेन प्राप्तिपूर्वकत्वेन द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन

### सौगन्ध्यविमर्शः

कत्वाभावाद् "भोक्तारं यज्ञ-तपसाम्" इत्येतद्वाक्यार्थनिर्णयार्थत्वेऽस्य प्रकरणस्य, न विश्वमिथ्यात्ववादनिरासस्यावसरोऽस्तीति गन्तव्यम् । *परमार्थतस्तु*—विश्वमिथ्यात्वप्रतिपादकानाम्—"नेह नानास्ती"त्यादिवाक्यानां शोधनार्थं खल्वस्य प्रकरणस्य प्रवृत्तिः । तत्र च विश्वसत्यत्वमनेन वाक्येन बोध्यत इति कथं द्वैतिनो वर्णयितुं शक्नुवन्ति ? सगुणवाक्यप्राबल्यादिति चेत्, कथं पूर्वोक्तविधयाऽविरोधे प्राबल्यचर्चा ? अधिकमन्यत्रानुसन्धेयम्, अद्वैतिनां तु द्वैतमिथ्यात्वपूर्वकत्वेनैवाद्वैतसिद्धिरिति तु तत्त्वम् ॥

### सिद्धिव्याख्या

*ननु* अद्वैतसिद्धावद्वैतस्यैव प्रतिपादनीयतया तद्विहायाग्रे द्वैतमिथ्यात्वोपपादनं क्रियमाणमसङ्गतमित्यत आह—*तत्रेति* ॥ तस्याद्वैतसिद्धौ द्वैतमिथ्यात्वमेव प्रथममुपपादनीयमित्यर्थः । तत्र हेतुः—*अद्वैतसिद्धेरित्यादि* ॥ तथाच द्वैतमिथ्यात्व उपपादितेऽद्वैतं सूपपादम्, इति द्वैतमिथ्यात्वोपपादनमद्वैतसिद्ध्यनुगुणत्वान्नासङ्गतमिति ध्येयम् । *वक्ष्यति च ग्रन्थकारः* चतुर्थपरिच्छेदान्ते—"अद्वैतसिद्धिरधुना चतुर्थी समजायत" इति । *ननु* तर्हि तदुपपादनं

### विट्ठलेशीयटिप्पणी

अद्वैतसिद्धौ द्वैतमिथ्यात्वसिद्धिपूर्वकत्वे हेतुं वक्तुं तमेवांशमुपादत्ते—*पूर्वकत्वादितीति* ॥ *अद्वैतत्वेति* ॥ द्वैताभावोपलक्षितं यद् ब्रह्मस्वरूपम्, तन्मात्रविषयकः, अत एव निर्विकल्पको यो निश्चयः, तस्मिन्नित्यर्थः । *द्वारत्वादिति* ॥ "एकमेवाद्वितीयम्" इत्यादिश्रुतेर्हि न चैतन्यमात्रप्रतिपत्तिमात्रे तात्पर्यम् ; तस्य स्वप्रकाशतया नित्यसिद्धत्वात्, तस्य द्वैतभ्रमरूपानर्थनिवृत्त्यहेतुत्वाच्च, किन्तु द्वैताभावविशिष्टब्रह्मप्रतिपत्तिपूर्वकचैतन्यमात्रप्रतिपत्तौ ; तादृशप्रतीतेः प्रागसिद्धत्वात्, अनर्थनिवृत्तिहेतुत्वाच्च । एवं च तादृशश्रुतेः सकाशात् प्रथमतो ब्रह्मणि द्वैताभाव-प्रकारकबोधो जायते, ततस्तादृशाभावोपलक्षितब्रह्मस्वरूपधर्मिमात्रबोधः ; उपलक्षितबुद्धौ चोपलक्षणीभूतधर्मविशिष्ट-बुद्धेर्हेतुत्वम् ; एवं च ब्रह्मणि द्वैताभावविशिष्टबुद्धेर्द्वारतानिर्वाह इति बोध्यम् । प्रथमबोधे द्वितीयाभावरूपद्वितीयस्याप्य-भावभानात् तादृशाभावस्योपलक्षणता । नच—तदुपलक्षितधर्मिबोधस्य तत्प्रकारकत्वनियमात् कथं धर्मिमात्रबोधः ? इति—वाच्यम् ; काकाद्युपलक्षितगृहादिबोधस्य काकाद्यप्रकारकतयोक्तनियमस्याप्रामाणिकत्वात् । नच—तत्रोपलक्ष्यता-वच्छेदकीभूतोत्तृणत्वादिवदत्रापि तादृशधर्मभानमावश्यकमिति—वाच्यम् ; जातेः स्वरूपतो भानवद् ब्रह्मणः स्वरूपत एवोपलक्ष्यतोपगमात्, किञ्चिद्रूपेणैवोपलक्ष्यत्वमिति नियमे मानाभावात् । *ननु* अद्वितीयश्रुत्या प्रथमतो ब्रह्मणि द्वैताभावविशिष्टबुद्धिजननेऽपि नाद्वैतत्वोपलक्षितब्रह्मनिश्चयस्य द्वैतमिथ्यात्वनिश्चयपूर्वकत्वनिर्वाहः, तादृशबुद्धेर्द्वैते स्वावच्छेदककालावच्छिन्नस्वविशिष्टवृत्तिमद्द्वैताभावकत्वरूपमिथ्यात्वाविषयकत्वादित्यत आह—*तस्याश्चेति* ॥ *निषेधत्वेन = अभावबुद्धित्वेन । *प्राप्तिपूर्वकत्वेन = प्रतियोगिविशिष्टज्ञानात्मकप्रसक्तिपूर्वकत्वेन ; "प्रसक्तं हि प्रति-षिध्यते" इत्यभियुक्तोक्तेः । अत एव सर्षपादौ सुमेरोरत्यन्ताभावबुद्धिविरहः, 'सर्षपे सुमेरुर्नास्ती'ति वाक्यप्रयोक्तृप-

न्यायामृतकण्टकोद्धारः

कावच्छेदेन साध्यसिद्धेरुद्देश्यतया अवश्यवक्तव्यत्वेनांशतः सिद्धसाधनत्वस्योद्भावयितुमशक्यत्वात् । नच—तत्त्ववादिना सत्यत्वे साध्यमाने मायिना स्वमतावलम्बनेन शुक्तिरजतादौ बाधः शङ्क्येत,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

द्वैताभाववत्त्वविषयकत्वात्, "सदेव सोम्येदमग्र आसीदि"ति पूर्ववाक्य इदंशब्दार्थद्वैतसामान्यतादात्म्यस्य लब्धत्वेन तस्य द्वैताभावांश उद्देश्यतावच्छेदकत्वेन तत्र तत्कालावच्छेद्यत्वभानस्य व्युत्पत्तिसिद्धत्वात्, इदमात्मकसतोऽग्रकालसत्त्वस्य द्वैताभाववत्त्वस्य च द्वयोर्विधाने वाक्यभेदस्येष्टत्वात्, द्वैतवति द्वैताभावबोधस्याहार्यत्वेन शाब्दत्वासम्भवेऽपीदंपदस्य दृश्यत्वरूपेण द्वितीयपदस्य चात्मभिन्नत्वरूपेण बोधकत्वेनाहार्यत्वाभावात्, कालान्तरावच्छेदेन द्वैताभाववत्त्वविषयकधियश्च "तरति शोकमात्मवित्" "विद्वान्नाम-रूपाद्विमुक्तः" "ज्ञात्वा देवं मुच्यते सर्वपाशैरि"त्यादिश्रुतिभिर्ज्ञाननाश्यत्वानुमापकदृश्यत्वलिङ्गादिरूपमानान्तरेण च सिद्धत्वेन तज्जनने वाक्यवैयर्थ्यापत्तेः, एककालावच्छिन्नप्रतियोग्यभावयोरेकाधिकरणवृत्तित्वधीरूपो मिथ्यात्वनिश्चयः ॥

विट्ठलेशीयटिप्पणी

ह्रासश्चोपपद्यते । एवं च द्वैताभावविशिष्टब्रह्मबोधात् पूर्वं विद्यमाना ब्रह्मोपस्थितिरेव द्वैतविशिष्टब्रह्मणि वाच्या । तथाच ब्रह्मभासकसामग्रीबलादेवोत्तरकालीनद्वैताभावबोधे धर्मितावच्छेदकतया द्वैताभानसम्भवेन द्वैताभावे द्वैतकालावच्छिन्नत्वभानसम्भवात् तादृशबुद्धेस्तुल्यवित्तिवेद्यतया द्वैते स्वावच्छेदककालावच्छिन्नस्वाश्रयवृत्तिकस्वाभावकत्वावगाहितया द्वैतमिथ्यात्वनिश्चयरूपतया तदुत्तराद्वैतसिद्धेस्तत्पूर्वकत्वनिर्वाह इति भावः । *ननु* किं तत्र द्वैतविशिष्टब्रह्मण उपस्थापकम् ? अत आह—*सदेवेति*॥ *ननु* तथापि द्वैतकालावच्छिन्नत्वं कथं भासेत ? तद्बोधकपदाभावादित्यत आह—*तस्येति* ॥ द्वैतसामान्यतादात्म्यस्येत्यर्थः । अंशे=विधेयतायाम् । उद्देश्यतान्वयिनिरूपितत्वं सप्तम्यर्थः । *तत्र=द्वैताभावे । *तत्कालः=द्वैतकालः । *व्युत्पत्तिसिद्धत्वादिति* ॥ अन्यथा गन्धप्रागभावविशिष्टो घटो गन्धवानिति वाक्यस्य प्रमाणत्वापत्तेरिति भावः । *तत्र* "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" इति वाक्याभ्यां तुल्यतया भासमानद्वितीयाभावेदंपदार्थ-द्वैततादात्म्योभयावच्छिन्नसदुद्देश्यकोऽग्रकालसत्त्वविधेयक एव बोधो वाच्यः । स च मोक्तरीत्या द्वैतमिथ्यात्वमवगाहुमलम्; द्वैतस्य द्वैताभावोद्देश्यतानवच्छेदकत्वात् । नच—पूर्ववाक्येन द्वैतविशिष्टसद्विशेष्यकोऽग्रकालसत्त्वविधेयकः, उत्तरवाक्येन च द्वैतविशिष्टसद्विशेष्यको द्वितीयाभावविधेयको बोधो जन्यत इति—वाच्यम्; वाक्यभेदप्रसङ्गात्, इत्याशङ्कापरिहारायोक्तरीत्या वाक्यभेद इष्टापत्तिमाह—*इदमात्मकेति* ॥ *ननु* इदंपदस्य द्वैतत्वावच्छिन्नबोधकत्वे तदवच्छिन्नोद्देश्यकद्वैतत्वावच्छिन्नप्रतियोगिताकाभावबोधस्याहार्यत्वान्न शाब्दत्वसम्भवः, इत्यत आह—*द्वैतवतीति* ॥ *आहार्यत्वाभावादिति* ॥ न तादृशबोधस्य शाब्दत्वासम्भव इति शेषः । *ननु* द्वैतस्य द्वैताभावोद्देश्यतावच्छेदकत्वेऽपि पूर्ववाक्यजबोधेऽग्रसत्त्वे द्वैतकालावच्छिन्नत्वाभावेन विधेय उद्देश्यतावच्छेदककालावच्छिन्नत्वभानस्यासार्वत्रिकतया प्रकृतवाक्यस्य तादृशकालावच्छिन्नत्वबोधतात्पर्ये मानाभावात् प्रकृतवाक्यादेककालावच्छिन्नप्रतियोग्यभावयोरेकाधिकरणवृत्तित्वावगाहिधीरूपो मिथ्यात्वनिश्चयो न सम्भवतीत्याशङ्क्य, अद्वितीयवाक्यस्य तादृशबोधे तात्पर्यानुपगमे तद्वैयर्थ्यापत्तिमाह—*कालान्तरेति* ॥ द्वैतानधिकरणीभूतविद्योत्तरकाल इत्यर्थः । आद्यश्रुतिद्वये ज्ञानस्योद्देश्यतावच्छेदकत्वेन 'धनी सुखी' इतिवत् प्रयोजकत्वलाभेन पूर्वसिद्धत्वलाभाद् द्वैताभावे तदुत्तरकालीनत्वलाभः । तृतीयश्रुतौ तु 'ज्ञात्वे'ति क्त्वाप्रत्ययेनैवेति विशेषः । ज्ञाननाश्यत्वम्=स्वाश्रयपूर्वकालीनत्वाभाववज्ज्ञानकत्वम् । *मानान्तरेणेति* ॥ तथाचानुमानेनापि ज्ञानोत्तरकाले द्वैताभावसिद्धिरिति भावः । *वैयर्थ्यापत्तेरिति* ॥ तत्सामर्थ्याद्द्वितीयश्रुतेर्द्वैताभावे द्वैतकालावच्छिन्नत्वबोधने तात्पर्यादिति शेषः । *एकेति* ॥ "एकमेवाद्वितीयम्" इति श्रुतिवाक्यादित्यादिः । वृत्तित्वान्तस्य द्वैतवद्ब्रह्मणि द्वैतकालावच्छेदेन द्वैताभाववत्त्वेत्यर्थः । वृत्तित्वधीरूप इतीतिपदाघटित एव पाठो ललितः; तादृशवाक्यजबोधस्य तादृशाकारत्वाभावात् । *मिथ्यात्वनिश्चय इति* ॥ सम्भवत्येवेति शेषः ॥

न्यायामृतकण्टकोद्धारः

तद्वारणार्थं तद्विशेषणस्यावश्यकत्वमिति—वाच्यम् ; तं प्रत्यसत्त्वसाधनेनापि बाधपरिहारसंभवादिति ॥ यच्च ग्रन्थस्य तत्त्वनिर्णिनीषुकथात्वेन गुरुशिष्यकथारूपे ग्रन्थे यदाऽनिर्वचनीयरजतादौ मिथ्यात्वं निश्चितवन्तं शिष्यं प्रति गुरुणा 'ब्रह्मप्रमान्येने'त्यादिपक्षविशेषणमदत्त्वा 'सद्विलक्षणं ब्रह्मान्यदि'त्येव पक्षं निर्दिश्य मिथ्यात्वं साध्यते, तदा तदंशे शिष्योद्भावनीयसिद्धसाधनवारकत्वेन तस्यावैयर्थ्योपपत्तेरिति, तदप्यसत् ; शिष्यो हि वादिमुखे स्थित्वा वा सिद्धसाधनतामुद्भावयति ? उत प्रतिवादिमुखे ? नाद्यः ; सिद्धसाधनस्य प्रतिवादिनैवोद्भाव्यत्वेन वादिमुखे स्थितशिष्येण तदुद्भावनस्य कर्तुमशक्यत्वात्, अन्यथा वादिमुखे स्थित्वा सम्पूर्णसिद्धसाधनस्याप्युद्भावयितुं शक्यत्वेन तद्वारणायापि प्रयासः

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अथवा मिथ्यात्वघटकस्याभावस्य सदा विद्यमानत्वेनानवच्छिन्नवृत्तिकान्यत्वेन मिथ्यात्वं नोक्तरूपम्, किन्तु तादृशान्यत्वविशिष्टेनाभावेन घटितम्। तथाच प्रत्यक्षादिप्रमाणस्याद्वैतश्रुतिबाध्यत्वेन ब्रह्मणि कालविशेषाद्यवच्छिन्नद्वैताभावबोधकत्वरूपे श्रुतिसङ्कोचे हेतोरभावेन तादृशाभावस्य त्रैकालिकत्वम् ॥

विट्ठलेशीयटिप्पणी

*ननु* 'सदेव' इति 'एकमेव' इति वाक्ययोरुक्तरीत्या पृथग्बोधकत्वस्वीकारे वाक्यभेदप्रसङ्गः, नचेष्टापत्तिः ; उक्तरीत्यैकवाक्यत्वसम्भवे तस्यान्याय्यत्वात्, एवं द्वैताभावे द्वैतकालावच्छिन्नत्वबोधने तात्पर्यसत्त्वे मानाभावः, नचाद्वितीयश्रुतिवैयर्थ्यापत्तिः ; परस्परसमानार्थस्य "तरति" इत्यादिश्रुतित्रयस्येव तत्समानार्थिकाया अस्याश्चतुर्थ्या अपि सार्थक्यसम्भवात्, एकप्रकरणे हि समानार्थकानेकश्रुतिवैयर्थ्यम्, इह तु प्रकरणभेदान्न कस्या अपि वैयर्थ्यमित्याशङ्क्य, प्रकारान्तरेणाद्वैतसिद्धेः पूर्वं द्वैतमिथ्यात्वनिश्चयमाह—*अथवेति* ॥ *सदा=सर्वकालावच्छेदेन। ब्रह्मणीति शेषः। तत्काल-देशान्यकाल-देशानवच्छिन्नवृत्तिकस्यैव तत्काल-देशावच्छिन्नवृत्तिकत्वम्। अत एव वृक्षे घटत्वाभावस्य न देश-कालावच्छिन्नवृत्तिकत्वमिति भावः। *उक्तरूपम्=स्वावच्छेदकदेश-कालावच्छिन्नस्वाश्रयनिष्ठस्वाभावप्रतियोगित्वरूपम्। *तादृशान्यत्वविशिष्टेनेति* ॥ स्वाश्रयनिष्ठावच्छिन्नवृत्तिकान्यत्वविशिष्टस्वाभावप्रतियोगित्वमित्यर्थः। *ननु* सत्पदार्थब्रह्मण्यद्वितीयपदेन द्वितीयाभाववत्त्वं कालान्तरावच्छेदेनैव बोधयितुं युक्तम् ; 'घटः सन्नि'त्यादिप्रत्यक्षेण ब्रह्मणि दृश्यतादात्म्यावगाहिना विरोधात्। तथाच कथं तादृशवाक्यजन्यबोधस्यावच्छिन्नवृत्तिकान्यत्वविशिष्टद्वैताभावघटितमिथ्यात्वावगाहित्वमिति ? अत आह—*तथाचेति* ॥ *प्रत्यक्षादिप्रमाणस्येति* ॥ चन्द्रप्रादेशिकत्वग्राहकप्रत्यक्षस्यागमविरोधेनाप्रामाण्यनिश्चयेन तत्साधर्म्येण 'घटः सन्नि'त्यादिप्रत्यक्षस्याप्रामाण्येन सन्दिग्धतया निश्चितप्रामाण्यश्रुतितस्तस्य दुर्बलत्वादिति भावः ॥ *ननु* प्रत्यक्षविरोधेनोक्तश्रुतेस्सङ्कोचेनोपपत्तौ कथं बाध इति ? अत आह—*ब्रह्मणीति* ॥ *कालविशेषेति* ॥ द्वैतानधिकरणकालेत्यर्थः। *तादृशाभावस्येति* ॥ तादृशश्रुत्येति शेषः। *त्रैकालिकत्वम्=अवच्छिन्नवृत्तिकान्यत्वम्। नच—एतद्भासकाभाव इति—वाच्यम् ; तद्धर्मे कालविशेषावच्छिन्नत्वबोधकसामग्र्यसमवहिततद्धर्मप्रकारकबोधसामग्र्या एव तद्धर्मेऽवच्छिन्नवृत्तिकान्यत्वभासकत्वोपगमादिति भावः। *अत्रेदमवधेयम्*—एतत्कल्पे(१)'सदेव' 'एकमेवे'त्यादिवाक्यात्सदद्वितीयमिदं सद् अग्रकालसम्बन्धीत्येक एव बोधः, अथवा—इदं सद् अग्रकालसम्बन्धीति पूर्ववाक्येन, इदं सद् अद्वितीयमिति द्वितीयवाक्येनेति बोधद्वयम् ; उभयथाऽपि तत्रेदंपदार्थद्वैतवति सद्रूपे ब्रह्मण्युक्तयुक्त्याऽवच्छिन्नवृत्तिकान्यत्वविशिष्टद्वैताभावभानाद् द्वैते स्वाश्रयनिष्ठावच्छिन्नवृत्तिकान्यस्वाभावप्रतियोगित्वरूपमिथ्यात्वस्य तुल्यवित्तिवेद्यतया भानसम्भवेन तादृशबोधस्य मिथ्यात्वनिश्चयरूपता। "एकमेवे"ति पदद्वयमद्वितीयपदस्य द्वितीयसामान्याभावबोधकत्वतात्पर्यग्रहार्थमिति ॥

(१) अत्र कल्पे (क)।

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सार्वज्ञ्य-सर्वकार्योपादानत्वबोधकश्रुतेरपि लक्षणवाक्यविधया निर्विकल्पकनिश्चयजनकत्वेऽपि तत्र तादृशनिश्चयस्य सर्वद्वैततादात्म्यविशिष्टधीपूर्वकत्वात्, सर्वतादात्म्यस्यैव ब्रह्मणि सर्वविषयकत्वरूपत्वात्, सर्वोपादानत्वस्य ब्रह्मणि स्वात्मकसर्वजनकत्वरूपत्वात्, "एकमेवाद्वितीयम्" "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः, तस्मादेतद् ब्रह्म नाम रूपमि"ति श्रुतिद्वयसामर्थ्याच्च द्वैतवद्ब्रह्मनिष्ठस्यावच्छिन्नवृत्तिकान्यत्वरूप-त्रैकालिकत्वविशिष्टात्यन्ताभावस्य प्रतियोगि द्वैतमिति धीरूपो मिथ्यात्वनिश्चयः, इति तत्पूर्वकत्वमुक्तनिर्विकल्पक-निश्चय आवश्यकम् ॥

## विट्ठलेशीयटिप्पणी

*ननु* "एकमेवाद्वितीयमि"ति श्रुतिवाक्यजन्याद्वैतब्रह्मनिश्चयस्योक्तरीत्या द्वैतमिथ्यात्वनिश्चयपूर्वकत्वनिर्वाहेऽपि "यः सर्वज्ञः" इत्यादिलक्षणवाक्यस्याप्यद्वैतनिर्विकल्पकनिश्चयजनकत्वात् तत्पूर्वकाले द्वैतमिथ्यात्वनिश्चयाभावादद्वैत-सिद्धिसामान्यस्य न द्वैतमिथ्यात्वनिश्चयपूर्वकत्वनिर्वाह इत्याशङ्कां परिहरति—*सार्वज्ञ्येति* ॥ जनकत्वेऽपीति* ॥ नाद्वैतसिद्धिसामान्यस्य द्वैतमिथ्यात्वसिद्धिपूर्वकत्वानिर्वाह इति शेषः । अत्र हेतुमाह—*तत्रेत्याद्यावश्यकमित्यन्तेन* ॥ *तत्र=तादृशनिश्चये । उत्पत्स्यमान इति शेषः । तादृशनिश्चयपूर्वमित्यादिः । *निश्चय इति* ॥ जायत इति शेषः । आवश्यकमित्युत्तरं यत इति शेषः । *ननु* ब्रह्मणि द्वैतवत्त्वस्य कथं लाभ इति ? अत आह—*तादृशनिश्चय-स्येति* ॥ *पूर्वकत्वादिति* ॥ इदं च तादृशनिश्चयात्पूर्वं द्वैतमिथ्यात्वनिश्चयोत्पत्तौ हेतुतयाऽन्वेति । उपलक्ष्यधर्मि-विषयकबुद्धावुपलक्षणीभूतधर्मविशिष्टबुद्धेर्हेतुतया द्वैतोपलक्षितनिर्विकल्पकनिश्चयात्पूर्वं द्वैततादात्म्यविशिष्टबुद्धिः स्वीकार्या । तथाच द्वैततादात्म्यलाभ इति भावः । *ननु* लक्षणवाक्येन सर्वज्ञत्वोपलक्षितब्रह्मबुद्धिरेव जन्यते ; तत्र च सर्वज्ञत्व-विशिष्टबुद्धिरेव हेतुतयाऽपेक्ष्यते, नतु द्वैततादात्म्यविशिष्टबुद्धिः, इति कथं तत्पूर्वकत्वमुक्तनिश्चयस्येति ? अत आह—*सर्वतादात्म्यस्येति* ॥ तथाचेदमेव सर्वज्ञत्वम्, इति नोक्तशङ्केति भावः । सर्वकर्तृत्वस्य "तस्मादेतद् ब्रह्मे"ति श्रुतिबोध्यस्य ब्रह्मनिष्ठद्वैततादात्म्यघटितत्वमाह—*सर्वोपादानेति* ॥ *स्वात्मकेति* ॥ स्वतादात्म्यापन्नेत्यर्थः । *ननु* "यः सर्वज्ञः" इति श्रुतौ द्वैताभावबोधकपदाभावात् कथं तज्जन्यबोधस्य मिथ्यात्वनिश्चयरूपतेति ? अत आह—*एकमेवाद्वितीयमिति* ॥ *श्रुतिद्वयसामर्थ्यादिति* ॥ श्रुतिद्वयजन्यबोधादित्यर्थः ॥

*ननु*—एतावता 'यः सर्वज्ञः' इति श्रुतिः—'एकमेवाद्वितीयम्' इति श्रुतिसहकारेणैव निर्विकल्पक-निश्चयं जनयति, तत्पूर्वं च द्वैतमिथ्यात्वनिश्चय इत्यायातम्, तच्च न युक्तम् ; सर्वज्ञश्रुत्या निर्विकल्पकनिश्चय-जननेऽद्वितीयश्रुत्यपेक्षणे प्रयोजनाभावादिति—चेत्, *मैवम्* ; यतः केवलसर्वज्ञश्रुत्या प्रथमं ब्रह्मणि द्वैततादात्म्य-विशिष्टबुद्धेरेव जनने तदुत्तरं निर्विकल्पकनिश्चयासम्भवः ; द्वैतबाधाग्रहेणोपस्थितद्वैतरूपप्रकारभानस्य तत्र दुर्वारत्वात् । अथ द्वितीयबोधे तद्भाने तात्पर्यानुपगमाद् न तद्भानम्, किंतूपलक्ष्यब्रह्मस्वरूपमात्रभानमिति चेत्, अस्त्वेवम् ; तथापि तादृशनिर्विकल्पकनिश्चयस्य नानर्थनिवृत्तिहेतुता ; यद्विशिष्टबुद्धिर्हि यत्र विरोधिनी, तद्विशिष्टबुद्धिपूर्वक एव तदुपलक्षित-धर्मिमात्रविषयकनिर्विकल्पकनिश्चयस्तद्विरोधी ; तथाच द्वैताभावविशिष्टबुद्धिप्रतिबध्यो द्वैतभ्रमस्तादृशबुद्धिपूर्वकतादृशब्रह्म-निश्चयप्रतिबध्यः, द्वैतविशिष्टबुद्धेस्तु द्वैतभ्रमरूपानर्थाप्रतिबन्धकतया कथं तत्पूर्वकतादृशब्रह्मनिश्चयस्यानर्थनिवृत्तिहेतुता ? तथाचानर्थनिवृत्तिहेतुनिर्विकल्पकब्रह्मनिश्चयहेतुसंपादनायाद्वितीयश्रुतिवाक्यजद्वैताभावबोधापेक्षा सर्वज्ञत्वश्रुतेः, अद्वि-तीयश्रुतेस्तु निषेधतया प्रतियोगिप्रसञ्जकसर्वज्ञत्वश्रुतिजन्यबोधापेक्षा, इति परस्परापेक्षयोक्तवाक्ययोरेकवाक्यतोपपत्तिः । यदि च "यः सर्वज्ञः" इति श्रुतिः—"तत्त्वमसि"इत्यादिमहावाक्यघटकतत्पदार्थशोधिका, इति न तज्जन्यबोधस्यानर्थ-निवर्तकत्वापेक्षा, अखण्डवाक्यार्थबोधादेवानर्थनिवृत्तौ तत्फलकमहावाक्यार्थधीवैयर्थ्यादिति विभाव्यते, तदाऽपि सर्वज्ञश्रुतेः शोधिततत्पदार्थविषयकनिर्विकल्पकबोधे तात्पर्यग्रहार्थमेवाद्वितीयवाक्यापेक्षा सुवचैव । तदधीनसर्वज्ञत्वबाधग्रहं विना सर्वज्ञत्वविशिष्टे तात्पर्यसंभवस्यानिराकरणेन शुद्धे तद्ग्रहासंभवात् । संभवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वेन तात्पर्य-ग्राहकेणापि तेन सह सर्वज्ञश्रुतेरेकवाक्यतयाऽवान्तरबोधजनकत्वमुपगन्तव्यमिति बोध्यम् । अद्वितीयवाक्ये 'तदि'त्य-

तरङ्गिणी

इदं च विप्रतिपत्तिस्वरूपं तार्किकादिरीत्यैवेत्यनुपदमेव वक्ष्यति। तेन स्वमते तुच्छस्यापि निषेधप्रतियोगित्वात् तत्र बाधाभावेन तद्वारणाय—'असद्विलक्षणत्वे सती'ति विशेषणमसङ्गतम्; शुक्तिरूप्यादेर-

न्यायामृतकण्टकोद्धारः

क्रियते; न द्वितीयः; प्रतिवादिमुखे स्थितस्यानिर्वचनीयरजतादौ मिथ्यात्वनिश्चयस्यैवायोगात्। नच—प्रमारूपस्य निश्चयस्यायोगेऽपि भ्रमरूपो निश्चयः स्यादिति—वाच्यम्; तथा सति भ्रमस्यैव परिहर्तव्यत्वेन विशेषणदानेन भ्रमदृढीकरणस्यात्यन्तायुक्तत्वादिति यत्किञ्चिदेतत्॥

अत्र ब्रूमः—'असद्विलक्षणत्वे सति ब्रह्मान्यदि'त्येव पक्षनिर्देशः, अन्यत्तु प्रतिकूलतर्कनिरासार्थम्। ब्रह्मान्यस्य सर्वस्य मिथ्यात्वे शुक्तिरजतादिवद् घटादिकमपि प्रातिभासिकत्वेन जलाहरणाद्यर्थक्रियाक्षमं न स्यादित्युक्ते, मिथ्यात्वाविशेषेऽपि 'ब्रह्मप्रमान्येन सप्रकारेण वाऽबाध्यत्वाद् घटादिकमर्थक्रियाकारि, शुक्तिरजतादिकं तद्बाध्यत्वान्नार्थक्रियाक्षममिति सर्वमवदातम्॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

महावाक्यजन्याद्वैतनिश्चयस्यापि "नेह नानाऽस्ति किञ्चन" "नात्र काचन भिदाऽस्ति" इत्यादितत्पदार्थशोधकवाक्याधीनधीपूर्वकत्वात्। उक्तवाक्येन च वर्तमानार्थलट्प्रत्यययुक्तत्वाद् द्वैतविशिष्टब्रह्मरूपोद्देश्यार्थकेहपदयुक्तत्वाच्च वर्तमानकालावच्छेदेनोद्देश्यतावच्छेदकद्वैतवत्त्वकालावच्छेदेन च द्वैतविशिष्टे ब्रह्मण्यस्तित्वविशिष्टस्य द्वैताभावस्य बोधनात्, अत्यन्ताभावस्यावच्छिन्नवृत्तिकान्यत्वस्वीकारे निरवच्छिन्नविशेषणतया

विट्ठलेशीयटिप्पणी

व्याहारेण यः सर्वद्वैततादात्म्यवान्, स तदवच्छिन्नवृत्तिकान्यत्वविशिष्टद्वितीयाभाववान् इत्याकारक एव श्रुतिद्वयात् शाब्दबोधः। 'द्वैतवद् ब्रह्मे'त्यादिना प्रदर्शितद्वैतमिथ्यात्वधीस्त्वार्थिकीति बोध्यम्। *श्रुतिद्वये लक्षणावृत्त्येति* पाठस्तु श्रुतिद्वयस्य द्वैतमिथ्यात्वेऽप्यवान्तरतात्पर्योपगमात्, तदनुपपत्त्या सर्वज्ञत्वश्रुतेर्द्वैतेऽद्वितीयश्रुतेर्निरुक्तमिथ्यात्वे लक्षणेति रीत्या वाक्यलक्षणापक्षे योज्यः; अन्यथोक्तवाक्याभ्यां तादृशाकारशाब्दधियः कथंचिदप्यसंभवेनाऽर्थतादृशबोधस्य च लक्षणानिरपेक्षतयाऽसङ्गतेः। नच—अवच्छिन्नवृत्तिकान्यत्वलाभार्थं तद्विशिष्टे द्वैताभावेऽद्वितीयपदलक्षणयेति तदर्थ इति—वाच्यम्; तथापि 'श्रुतिद्वये लक्षणावृत्त्ये'त्यस्यासङ्गतेर्दुर्वारत्वात्, अवच्छिन्नवृत्तिकान्यत्वलाभस्योपदर्शितरीत्याऽसंभवाच्च॥

*ननु* तथापि तत्त्वमस्यादिमहावाक्यजन्याद्वैतनिश्चयस्य द्वैतमिथ्यात्वसिद्धिपूर्वकत्वानुपपत्तिप्रसङ्ग इत्यत आह—*महावाक्येति*॥ *धीपूर्वकत्वादिति*॥ द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात्। नोक्तानुपपत्तिरिति शेषः। *ननु* महावाक्यजधियः 'नेह' इत्यादिवाक्याधीनधीपूर्वकत्वेऽपि कथं द्वैतमिथ्यात्वमिति? अत आह—*उक्तवाक्येनेति*॥ नानापदस्य ब्रह्मभिन्नम्, तदन्वितवस्तुसामान्यं च 'किञ्चने'ति निपातसंघस्यार्थः॥ तस्य नञर्थे प्रतियोगितयाऽन्वयः। तथाचास्तित्वविशिष्टो ब्रह्मभिन्नवस्तुसामान्याभावो द्वैतकालावच्छिन्नद्वैतवद्ब्रह्मनिरूपिताधेयताश्रय इति बोधः, स च द्वैतमिथ्यात्वावगाही, इति तत्पूर्वकत्वं महावाक्यजधियोऽक्षतमिति भावः। *वर्तमानार्थेति*॥ वर्तमानकालश्चात्र महावाक्योपदेशकालः, स च द्वैतकाल एवेति तदवच्छिन्नत्वलाभे मिथ्यात्वलाभः। यदि चात्र द्वैतानधिकरणकाल एव वर्तमानतया विवक्षित इति ब्रूयात्, तदाऽपि मिथ्यात्वघटकद्वैतकालावच्छिन्नत्वलाभायाह—*द्वैतविशिष्टब्रह्मरूपोद्देश्येति*॥ 'वर्तमानकालावच्छेदेने'त्यस्तित्वान्वयि॥ 'द्वैतवत्त्वकालावच्छेदेने'ति 'ब्रह्मणी'ति सप्तम्यर्थवृत्तित्वान्वयि, तच्चाभावेऽन्वेति। *अत्यन्ताभावस्य=मिथ्यात्वघटकस्य द्वैतात्यन्ताभावस्य॥ *स्वीकार इति*॥ तथाच तत्र द्वैतवर्तमानकालावच्छिन्नत्वस्य बाधात् तद्बोधासंभव इति भावः। *निरवच्छिन्नेति*॥ अत्र निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नवृत्तित्वस्य सप्तम्यर्थतया निरवच्छिन्नत्वस्य पदार्थविधया भानसंभवः। न ह्येवमव-

तरङ्गिणी

सत्त्वेन—'असद्विलक्षणत्वे सती'त्यनेनैव तद्वारणात् तत्र सिद्धसाधनवारणायाद्यं विकल्पितं विशेषणद्वयं च व्यर्थमित्यादिदूषणमनवकाशं वेदितव्यम् ॥

सिंह-माणवकयोरिव 'मम शरीरमि'ति देहात्मनोः स्पष्टतरभेदावभासेन देहात्मैक्यारोपासम्भव (१) इति

न्यायामृतकण्टकोद्धारः

**नच—'असद्विलक्षणत्वे सति ब्रह्मान्यदि'त्येव पक्षनिर्देशेऽबाध्यत्वस्य पक्षनिवेशाभावेनाश्रयासिद्धेरभावात् तन्निवृत्त्यर्थं 'ब्रह्मप्रमान्येने'त्याद्यग्रिमग्रन्थविरोध इति—वाच्यम् ; यथाश्रुताभिप्रायेण तथोक्तत्वात् । यद्वा—आश्रये पक्षे प्रतिकूलतर्कपराहत्या प्राप्ता साध्यस्याभावरूपसिद्धिर्नेति व्याख्यानाद् न विरोध इति ॥**

**साध्ये तु निषेधप्रतियोगीत्युक्ते घटादौ सिद्धसाधनता स्यात् ; सर्वेषामन्योन्याभावरूपनिषेधप्रतियोगित्वात् , तदर्थमुक्तम्—*त्रैकालिकेति* ॥ तथापि घटादीनां तत्त्वादिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वेन पुनः सिद्धसाधनतेत्यतः—*प्रतिपन्नोपाधाविति* ॥ तावत्युक्ते भ्रान्तिप्रतिपन्नाधिरण-**

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

तादृग्ब्रह्मवृत्तित्वबोधनात्, तत्सम्बन्धावच्छिन्नस्य प्रतियोगिसामानाधिकरण्यस्य निवेशादेवाव्याप्यवृत्तितामादाय मिथ्यात्वानुमानेऽर्थान्तरवारणात्, एकप्रसरताभङ्गापत्त्या 'ब्रह्मणी'त्येकपदस्य ब्रह्माधेयत्वयोरुद्देश्य-विधेययोरन्वया-

**विट्ठलेशीयटिप्पणी**

**वच्छिन्नवृत्तिकान्यत्वस्य, इतीहपदात् तद्भानं नोक्तमिति ध्येयम् । *ननु* एवं द्वैताभावे द्वैतकालावच्छिन्नत्वस्यावच्छिन्नवृत्तिकान्यत्वस्य वाऽभाने तद्घटितमिथ्यात्वभानानुपपत्तिः, तदघटितस्यैव मिथ्यात्वस्योपगमे तु मिथ्यात्वानुमाने द्वैतस्याव्याप्यवृत्तितामादायार्थान्तरमित्यत आह—*तत्संबन्धेति* ॥ निरवच्छिन्नविशेषणतेत्यर्थः । तथाच स्वाधिकरणनिरूपितनिरवच्छिन्नविशेषणतासंबन्धावच्छिन्नवृत्तिताश्रयीभूतस्वाभावकत्वरूपस्य द्वैतकालावच्छिन्नत्वादिविशेषणाघटितस्यापि मिथ्यात्वस्य निर्वचनेनार्थान्तरवारणसंभवात् प्रकृते तादृशमिथ्यात्वभानोपगमेऽपि क्षतिविरह इति भावः ॥**

***ननु* 'इहे'त्यत्र द्वैतवद्ब्रह्मस्वेदंपदार्थे सप्तम्यर्थाधेयताया विधेयतयाऽन्वयो न संभवति; विधेयत्वस्य प्रकारत्वानियतत्वेन विशेष्यत्वस्य विधेयत्वाविरोधेऽपि 'नीलघटः' इत्यादितो घटोद्देश्यक-नीलविधेयकबोधानुदयेनैकसुबन्तैकतिङन्तघटकप्रकृति-प्रत्ययार्थयोरुद्देश्य-विधेयभावेनान्वयबोधस्याप्युत्पन्नत्वात् । अत एवेदृशबोधतात्पर्येण तादृशपदानां प्रयोग एकप्रसरताभङ्गो दोष इति शाब्दिका वदन्ति । अत एव 'वषट् कर्तुः प्रथमभक्षः' इत्यत्र भक्षणोद्देशेन प्राथम्यस्य विधेयत्वं दूषयित्वा प्राथम्यविशिष्टभक्षणस्य विधेयत्वं मीमांसकैः सिद्धान्तितम् । अत एवेमं दोषमविमृष्टविधेयांशमिति व्यवहरन्तो 'द्वितीयमौर्वीमिव कार्मुकस्ये'त्यादौ 'मौर्वी द्वितीयामिव कार्मुकस्ये'ति रचनामालङ्कारिका अनुमन्यन्ते । अत एव स्वत्वपक्षकनिरूपितत्वसंसर्गकराजसाध्यकन्याये राज्ञ इति प्रतिज्ञा, अनुकूलतासंबन्धेन पाकसाध्यककृतिपक्षकन्याये च पचतीति प्रतिज्ञा च न संप्रदायसिद्धेति नैयायिका वर्णयन्ति । तथाच कथमाधेयतायां द्वैतकालावच्छिन्नत्वसंभवः ? इत्याशङ्क्य 'इहे'त्यत्र सप्तम्यर्थौ निरूपितत्वम् , असधात्वर्थश्चाधेयत्वम् । अत एवास्तिपदं सफलम् । एवं च सुबन्तार्थे तिङन्तार्थस्य विधेयताया व्युत्पन्नतया नानुपपत्तिरित्यभिप्रायेण समाधत्ते—*एकेत्यादिना* ॥ *यद्यपि* *एकप्रसरता=एकविशिष्टोपस्थापकता, तस्याश्चैकार्थीभाववादिमते समासादावेव सत्त्वात् तत्र पूर्वोत्तरपदार्थयोरुद्देश्यविधेयभावे पृथगर्थोपस्थितिनियमस्योपगमे तस्यास्तत्र भङ्गप्रसङ्गः, 'ब्रह्मणी'त्यत्र त्वेकार्थीभावविरहात् कथं तद्भङ्गापत्तिः ? *तथापि* सुप्तिङन्तपदानामपि प्रकृत्यर्थविशिष्टप्रत्ययार्थरूपैकविशिष्टार्थोपस्थापकत्वमेव, नतु प्रकृति-प्रत्यययोः पृथगर्थोप-**

(१) अद्वैतमते देहात्मैक्यमनारोपितमिति मतभेदो नास्ति । तथाच तस्यापि व्यावहारिकत्वेन पक्षत्वेऽपि घटादीनामिव मिथ्यात्वसंशयस्यैव विद्यमानत्वात् तत्राधिष्ठानसाक्षात्काराभावेन मिथ्यात्वानिर्धारणाद् न सिद्धसाधनशङ्कावकाशः ॥

### तरङ्गिणी

मताश्रयणाद् न देहात्मैक्ये सिद्धसाधनम्। नभोनैल्य-चन्द्रपरिमाणभ्रमयोः सप्रकारकबाधार्हत्वाद् न तत्रापि सिद्धसाधनम् ॥

*ननु*—इयं विप्रतिपत्तिस्तार्किकादेर्मायावादिना(१) वा ? तत्त्ववादिनो (२)मायावादिना वा ? तदुभयेषां(३) मायावादिना वा ? नाद्यः ; तार्किकादिमत आपणस्थरूप्यातिरिक्तस्य शुक्तिरूप्यस्याभावेन तत्र सिद्धसाधनवारणार्थोपात्तावाध्यत्वविशेषणानुपपत्तेः, नच—आपणस्थरूप्य एव तन्मते सिद्धसाधनवारणाय तद्विशेषणमिति—वाच्यम् ; 'प्रतिपन्नोपाधावि'त्यत्र साध्ये 'सर्वस्मिन्नि'त्यस्य विशेषणस्यावश्यकतया रूप्ये सिद्धसाधनानवकाशात्, अन्यथा वियदादेरपि क्वचिदधिकरणे भ्रमसम्भवेन भ्रमप्रतिपन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्य सत्त्वपक्षेऽपि सम्भवेन सर्वत्रैव सिद्धसाधनापातात्, तार्किकमते शुक्तिरूप्यज्ञानस्यैव भ्रमत्वख्यापन-

### न्यायामृतकण्टकोद्धारः

निष्ठत्रैकालिकनिषेधप्रतियोगित्वेन पुनस्सिद्धसाधनतेत्यतः—"सर्वस्मिन्नि"ति प्रतिपन्नोपाधिविशेषणं विवक्षणीयम्। घटादीनां च स्वोपादानरूपाधिकरणनिष्ठत्रैकालिकनिषेधप्रतियोगित्वाभावेन सर्वस्मिन्निषेधप्रतियोगित्वाभावाद् न सिद्धसाधनम् ॥

*ननु*—अन्यत्रासतः प्रतिपन्नोपाधावपि निषेधप्रतियोगित्वेऽत्यन्तासत्त्वापत्तिरित्यत आह—*पारमार्थिकत्वाकारेण वेति* ॥ यद्वा—*ननु* संयोगादौ साध्यस्य सिद्धत्वात् सिद्धसाधनं तदवस्थमेव, नच—तद्भिन्नस्य पक्षत्वाद् नांशतः सिद्धसाधनमिति—वाच्यम् ; ब्रह्मान्यस्य सर्वस्य मिथ्यात्वविप्रतिपत्तावेतादृशसाधनस्य प्रकृतानुपयुक्तत्वात्। नच—पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतयोद्देश्यासिद्ध्या नांशतः सिद्धसाधनमिति—वाच्यम् ; तथापि संयोगादेरिव प्रकृतेऽप्युक्तनिषेधप्रतियोगित्वेऽप्यमिथ्यात्वोपपत्त्याऽर्थान्तरानिरासात्। नच यदवच्छेदेन यत् प्रतीतम्, तदवच्छेदेन त्रैकालिकेत्यादि विवक्षितमिति—

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

बोधकत्वेऽपि 'ब्रह्मणी'त्यनेन ब्रह्मनिरूपितत्वरूपस्योद्देश्यस्यैवास्तीत्यनेनाधेयत्वाश्रयत्वरूपविधेयस्यैव च समर्पणेन ब्रह्मनिरूपिताधेयत्वे तत्तद्देशाद्यवच्छिन्नत्वलाभात्, "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति वाक्ये "प्राणस्य प्राणमुत चक्षुषश्चक्षुरि"त्यादिवाक्ये चाकाशशब्दिताव्याकृतप्राणादिसम्बन्धितया पूर्वं ब्रह्मण उक्तत्वात्

### विट्ठलेशीयटिप्पणी

स्थापकत्वम्, पदस्फोटाङ्गीकारादिति मताभिप्रायेणेदम्। *आधेयत्वाश्रयत्वेति* ॥ आधेयत्वविशिष्टाश्रयत्वेत्यर्थः। आधेयत्वमात्रस्य विधेयत्वेन प्रकृतनिर्वाहेऽपि सुप्तिङन्तान्यतरार्थस्यैवान्यतरार्थे विधेयतेत्यभिप्रायेणेदम्। *वस्तुतः* पदस्फोटाङ्गीकारे धातुमात्रस्यानुपस्थापकताभिप्रायेण स्वरूपसंबन्धरूपाश्रयत्वस्य स्वरूपविशेषरूपाधेयत्वाभिन्नतया ब्रह्मनिरूपितत्वस्य न तत्र बाधः। 'सविशेषणे ही'ति न्यायेन वा आधेयत्वे ब्रह्मनिरूपितत्वं पर्यवस्यति। वस्तुतस्तु कारकविभक्त्यर्थस्य धात्वर्थेनैवान्वयस्य व्युत्पन्नतयाऽऽधेयत्व एव ब्रह्मनिरूपितत्वान्वयः। तथाच तयोरेवोद्देश्य-विधेयभावः, इति न कोऽप्यायासः। उक्तनियमे पदस्फोटे च न मानम्, आधेयत्वाश्रयत्वरूपेत्यस्य तु तद्घटकाधेयत्वस्येत्यर्थः। विधेयत्वस्य वा विधेयघटितस्येत्यर्थः। *तत्तद्देशादीति* ॥ द्वैतं सदोऽर्थः। आदिना कालः। अत्र च विशेषणीभूतविभक्त्यर्थोद्देश्यक-विशेष्यीभूतधात्वर्थतिङन्तार्थविधेयकबोधस्यान्यत्राहष्टत्वात् तयोरुद्देश्य-विधेयभावस्यायुक्ततयाऽनाश्रयणे द्वैतकालावच्छिन्नत्वस्य द्वैताभावान्विताधेयतायां लाभसम्भवाद् द्वैताभावे निरवच्छिन्नविशेषणतया द्वैतवद्ब्रह्मवृत्तित्वभानपक्ष एव निर्भरो बोध्यः। *ननु* द्वैतवद्ब्रह्मणोऽप्रक्रान्ततया—'इह' इत्यत्रेदंपदेन कथं तत्परामर्श इति ? अत आह—*यस्मिन्निति* ॥ *प्रतिष्ठितः=तादात्म्येनारोपितः। प्राणम्=प्राणनशक्तिमत्। *चक्षुः=दर्शनशक्तिमत्। 'यस्मिन्नि'ति वाक्य आकाशशब्दिताव्याकृतसम्बन्धितया 'प्राणस्येति' वाक्ये प्राणादिसम्बन्धितयेत्यन्वयः। *अव्याकृतम्=माया। *ननु* एतावताऽपि सर्वतादात्म्यवत्त्वेन न ब्रह्मणः प्रक्रम इत्यत आह—

**तरङ्गिणी**

रूपबाधविषयतया रजतस्याबाध्यतया तद्विशेषणेन तदवारणाच्च, मायावादिमते शुक्तिरूप्ये सिद्धसाधनसम्भवेऽपि साध्यनिर्देष्टारं स्वं प्रति स्वस्य सिद्धसाधनोद्भावनस्यासम्भवदुक्तिकत्वात्, नापि द्वितीयः; 'असद्विलक्षणत्वे सती'त्यनेनैव शुक्तिरूप्यव्यवच्छेदे तद्व्यावृत्त्यर्थं विशेषणान्तरोपादानवैयर्थ्यात्, अत एव न तृतीयः; पक्षद्वयोक्तदोषात्, एकदाऽनेकैर्विवादायोगाच्चेति—चेत्, *अलोच्यते*; तृतीयपक्षे दोषाभावात्, 'शुक्तिरूप्यं तात्कालिकमुत्पन्नं तत्रैव सदि'ति भास्करादिमते(१) शुक्तिरूप्ये सिद्धसाधनवारणायाद्यं सत्यन्तं विशेषणम्।

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

पञ्चजनशब्दस्य गन्धर्वादिरूपस्य ब्राह्मणादिरूपस्य वा भाष्योक्तार्थस्य "यस्य ब्रह्म च क्षत्रं चे"ति वाक्ये ब्रह्म-क्षत्रपदयोरिव सर्वदृश्योपलक्षणत्वेन 'प्राणस्ये'त्यादेरपि सर्वदृश्योपलक्षणत्वेन सर्वदृश्यसम्बन्धित्वेनैव ब्रह्मणः पूर्वमुक्तत्वाच्च। अद्वैतसिद्धेर्द्वैतमिथ्यात्वपूर्वकत्वम्। नच—'नाने'त्यस्य नञ्पदनिष्पन्नत्वेन भेदार्थकतया स्वसमभिव्याहृतपदार्थब्रह्मभेदबोधकतया तादृशभेदविशिष्टस्य 'किञ्चने'तिपदार्थस्यात्यन्ताभावे द्वैतवत्त्वदेशावच्छिन्नत्वस्य भानं न व्युत्पत्तिसिद्धम्, उद्देश्यतावच्छेदकतत्तद्देश-कालावच्छिन्नत्वयोस्तत्तद्देश-कालविशिष्टोद्देश्य-

**विट्ठलेशीयटिप्पणी**

*पञ्चजनशब्दस्येति* ॥ यस्येत्यत इवेत्यन्तं दृष्टान्तः। *दृश्यसम्बन्धित्वम्=दृश्यतादात्म्यवत्त्वम्। *पूर्वमुक्तत्वाद्विति* ॥ इदंपदेन द्वैतवद्ब्रह्मपरामर्शसम्भव इति शेषः। उपसंहरति—*अद्वैतसिद्धेरिति* ॥ तस्मादित्यादिः। *अद्वैतसिद्धेः=तत्सामान्यस्य। *ननु* 'नेहे'ति वाक्ये द्वैतवद्ब्रह्मणि द्वैताभावो न विधेयः, किन्तु ब्रह्मनिरूपितत्व आधेयत्वमेव। तथाच द्वैताभावं प्रत्युद्देश्यतावच्छेदकीभूतद्वैतवत्त्वकालाद्यवच्छिन्नत्वं द्वैताभावे कथं लभ्येत? इत्याशङ्कते—*नचेति* ॥ *किञ्चनेतिपदार्थस्य=वस्तुसामान्यस्य। *देशेति* कालस्याप्युपलक्षणम्। *तत्तद्देश-कालविशिष्टोद्देश्यस्थल एवेति* ॥ तादृशोद्देश्यांशे विधेयविधया भासमान एवेत्यर्थः। तादृशं तु प्रकृते

---

यत्तु—वस्तुतस्तु विशिष्टाद्वैतिभिर्माध्वैस्तार्किकैर्वा नोक्तरीत्या सिद्धसाधनमुद्भावयितुं शक्यम्; तैः प्रातिभासिकवस्त्वनभ्युपगमात्। नच—स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वरूपमिथ्यात्वसाधने भ्रमस्थलेऽसत्ख्यातिवादिनामसद्रजतादिषु तादृशसाध्यस्य सिद्धत्वात् सिद्धसाधनोक्तिसंभव इति—वाच्यम्; सत्त्वेन प्रतीत्यर्हत्वरूपविशेषणेनैव तद्वारणात्। नच—विशिष्टाद्वैतिषु भ्रमस्थले तत्कालमात्रवृत्ति तत्तत्पुरुषमात्रगोचर-रजतादिजातीय-तत्कार्यसमर्थवस्तुविशेषान् ईश्वरः सृजतीति मतमप्यस्ति, यथार्थख्यातिसमर्थनान्ते "अथवे"त्यादिभाष्येण तत्पक्षस्याप्यभिधानात्, इति तद्रीत्या सिद्धसाधनोक्तिसंभव इति—वाच्यम्; तादृशरजतादेः स्वकालावच्छेदेन स्वाधिकरणेऽभावस्य तैरस्त्रीकृततया स्वसमानाधिकरणाभावप्रतियोगित्व-सदसद्विलक्षणत्वादिरूपस्य तत्रासिद्धत्वात्। अत एव "न तत्र रथा न रथयोगा न पन्थानः" इत्यादिश्रुतेः सकलेतरपुरुषानुभाव्यप्रसिद्धरथाद्यभावपरत्वमेव भाष्यादावुपवर्णितम्, नतु प्रतीतिदशायामेव प्रतीयमानरथाद्यभावपरत्वम्। नच—ईश्वरसृष्टस्वाप्नपदार्थशुक्तिरजतादेर्बाधज्ञानजन्यध्वंसप्रतियोगित्वाभ्युपगमेऽप्याहत्य भाष्यादिविरोधाभावाद् ज्ञानत्वेन ज्ञानजन्यध्वंसप्रतियोगित्वं मिथ्यात्वमिति कल्पे सिद्धसाधनोक्तिसम्भव इति—वाच्यम्; "घटो ध्वस्तः" इतिवत् "शुक्तिरजतं ध्वस्तमि"त्यनुभवाभावेन तादृशकार्य-कारणभावे मानाभावात्, ईश्वरसङ्कल्पमात्राधीनस्य तद्ध्वंसस्य सद्भावेऽपि तत्प्रत्यक्षानभ्युपगमात्, बाधोदयस्थले व्यभिचाराच्च। अतः पक्षकोटौ ब्रह्मज्ञानेतराबाध्यत्वविशेषणं व्यर्थमेव"—इति सहस्रकिरण्यामुक्तम्, तदिदम्—तरङ्गिणी-लघुचन्द्रिकादौ भट्टभास्करमतानुयायिनां प्रतिवादित्वाभिप्रायेणोक्तविशेषणमित्युपपादनाद्—अनवसरम्॥

यदपि—"जागरितप्रत्ययः, निरालम्बनः, प्रत्ययत्वात्, स्वाप्नप्रत्ययवदि"ति योगाचारोक्तानुमानदूषणपरम्—"वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रम्, जागरितप्रत्ययस्याबाधितविषयकत्वेन बाधितविषयस्वाप्नादिप्रत्ययापेक्षया वैधर्म्याद् न जागरितप्रत्ययस्य निरालम्बनत्वमिति तदर्थः; अनेन—चोक्तानुमाने बाधितविषयत्वमिव दृश्यत्वानुमाने बाधितत्वमुपाधिरिति—सूचितम्। स्वाप्नार्थ-शुक्तिरजतादिषु बाधितत्वस्य निश्चितत्वेन बाध्यत्वव्यापकत्वांशे विवादाभावात्, पक्षस्य चाबाधितत्वे साधनाव्यापकत्वस्यापि सत्त्वात्, परकीयभाष्य एव "किं पुनर्वैधर्म्यम्? बाधाबाधाविति ब्रूमः, बाध्यते हि स्वप्नोपलब्धं वस्तु प्रबुद्धस्य—'मिथ्या मयोपलब्धो महाजनसमागम इति' इति स्वाप्नार्थानां बाधितत्वमुपपाद्य "नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं

### न्यायामृतकण्टकोद्धारः

वाच्यम् ; तथापि समवायसम्बन्धेन प्रतीतस्य संयोगसम्बन्धेन तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वेनोक्तदोषतादवस्थ्यात् । नच—यत्सम्बन्धपुरस्कारेण यत् प्रतीतम् , तत्सम्बन्धपुरस्कारेण तन्निष्ठेत्यादि विवक्षितमिति—वाच्यम् ; तथापि व्यधिकरणधर्ममवच्छेदकमादाय तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वसम्भवेनोक्तदोषतादवस्थ्यात् । नच—स्वनिष्ठासाधारणधर्मपुरस्कारेणेति विवक्षितमिति—वाच्यम् ; एवं हि यत् स्वनिष्ठासाधारणधर्मपुरस्कारेण यत्सम्बन्धपुरस्कारेण यदवच्छेदेन यत्र सर्वत्र विद्यमानम्, तत्र तेन रूपेण तत्सम्बन्धपुरस्कारेण तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्युक्तं भवति ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्थल एव भानादिति—वाच्यम् ; तादृशाभावे तादृशावच्छिन्नब्रह्मवृत्तित्वबोधेऽप्युद्देश्यसिद्धेः । नहि तत्र तत् केनापि स्वीक्रियते ; प्रलयेऽपि तादृशाभावे तार्किकादिभिस्तदस्वीकारात्, मिथ्यात्ववादिनैव तत्स्वीकारात् ।

### विट्ठलेशीयटिप्पणी

आधेयत्वमेव, नतु द्वैताभाव इति भावः । अत्र 'तत्तद्देश-काले'त्यस्य तदवच्छिन्नत्वोपलक्षिततत्तत्पदार्थस्यर्थ इति बोध्यम् । द्वैतवद्ब्रह्मांशे द्वैताभावस्याविधेयतया तत्र द्वैतकालावच्छिन्नत्वाभावेऽपि न क्षतिः ; द्वैताभावान्विताधेयत्वस्य तादृशब्रह्मनिरूपितत्वांशे विधेयतया तदंशे द्वैतकालावच्छिन्नत्वभानादेव द्वैतमिथ्यात्वभाननिर्वाहादित्याशयेन समाधत्ते—*तादृशाभाव इति* ॥ ब्रह्मभिन्नवस्तुसामान्याभाव इत्यर्थः । *तादृशावच्छिन्नेति* ॥ द्वैतवत्स्वदेश-कालावच्छिन्नेत्यर्थः । *उद्देश्यसिद्धेः*=महावाक्यजन्याद्द्वैतसिद्धिपूर्वकाले द्वैतमिथ्यात्वसिद्धिसत्त्वनिर्वाहादित्यर्थः । स्वाश्रयनिष्ठत्वावच्छेदककालाद्यवच्छिन्नस्वाभावकत्वमिव स्वावच्छेदककालाद्यवच्छिन्नस्वाश्रयवृत्तिताकस्वाभावकत्वमपि मिथ्यात्वमेव, इति तज्ज्ञानोपगमेऽपि न क्षतिरिति भावः । *ननु* द्वैतपारमार्थिकत्ववादिना द्वैतवति द्वैतकालावच्छिन्नद्वैताभाववत्त्वं नोपेयते, इति तत्सिद्धिरेव पारमार्थिकत्वविरोधिमिथ्यात्वपर्यवसायिनी, द्वैताभावे द्वैतकालावच्छिन्नद्वैतवद्ब्रह्मवृत्तित्वसिद्धिस्तु न तथा ; तत्र तादृशवृत्तित्वस्य तेनोपगमादित्यर्थान्तरभ्रमं निराकरोति—*नहीति* ॥ *तत्र*=ब्रह्मभिन्नवस्तुसामान्याभावे । *तत्*=द्वैतकालावच्छिन्नद्वैतवद्ब्रह्मवृत्तित्वम् । *केनापीति* ॥ द्वैतपारमार्थिकत्ववादिनेति शेषः । *प्रलयेऽपि*=प्रलयावच्छेदेन द्वैतरूपप्रतियोगिमद्ब्रह्मवृत्तित्वेनाभ्युपगमेऽपि । तादृश-तत्पदार्थौ व्याख्यातौ । *तत्स्वीकारादिति* ॥ एवं च निरुक्तमिथ्यात्वस्यानुमितौ 'नेहे'तिवाक्यजबोधे च भानोपगमेऽपि नार्थान्तरमिति भावः । *यद्वा*—उद्देश्यतावच्छेदकस्यैवावच्छिन्नत्वं विधेये भासते, नतु तद्देश-कालावच्छिन्नत्वम् ; देश-कालविशेषस्योद्देश्यतावच्छेदकत्वस्थले तद्देश-कालावच्छिन्नत्वभानप्रसङ्गादित्याशयेन शङ्कते—

---

कस्याञ्चिदप्यवस्थायां वाध्यते" इति जागरितप्रत्ययावलम्बनस्य वस्तुनः कस्याञ्चिदप्यवस्थायां बाधो नास्तीति स्पष्टं प्रतिपादनात् । भामत्यामपि "बाधाबाधौ वैधर्म्यमि"त्यादिना स्पष्टं जाग्रत्प्रत्ययस्याबाधितत्वमुक्तम् । *ननु*—परभाष्ये "न ह्ययं लोकप्रमाणसिद्धो लोकव्यवहारोऽन्यत् तत्त्वमनधिगम्य शक्यतेऽपह्नोतुमि"ति तत्त्वाधिगमनानन्तरं बाधः प्रदर्शित इति—चेत् , *कामं प्रदर्श्यताम्*, न तावनोक्तानुमानं स्वमाभ्यस्य साधने प्रभवति ; अद्वितीयात्मज्ञानात् पूर्वं पक्षेऽबाधितत्वस्य निश्चिततयोक्तहेतौ सोपाधिकताज्ञानस्य दुर्वारतया व्यभिचार-सत्प्रतिपक्षोन्नयनयोरवर्जनीयत्वात्"—इति सहस्रकिरण्यामुक्तम् , तत्र मिथ्यात्वस्यैव बाध्यत्वरूपत्वात् तस्यैवोपाधित्वमित्यर्थविवक्षायां पक्षे साध्यसंशयमादाय साध्यमात्रस्योपाधित्वापत्त्याऽनुमानमात्रोच्छेदापत्तिः, यदि तु "वैधर्म्याच्चे"ति सूत्रेण "न कस्याञ्चिदप्यवस्थायां जागरिकं वस्तु बाध्यते" इति भाष्यानुसारेणावस्थाश्रयान्यतरबाधितत्वाबाधितत्वाभ्यामेव स्वाप्नवैषम्यस्य प्रतिपादनाद् जाग्रदाद्यवस्थाविशेषबाधितत्वमेव स्वाप्नस्य, जागरिकस्य तु न तादृशं बाधितत्वम् , इति तादृशं बाधितत्वमेवोपाधिरिति मन्यते, तर्हि उपाध्युन्नीतसत्प्रतिपक्षानुमाने जागराद्यवस्थाविशेषाबाधितत्वमेव हेतूकर्तव्यम् , इति तत्राप्रयोजकत्वशङ्काकलङ्काद् नोपाधित्वसंभवः । नहि जागराद्यवस्थाविशेषाबाधितत्वं मिथ्यात्वाविरोधि ; अन्यथा भ्रमकालाबाधितत्वात् स्वाप्नानामपि न बाधितत्वम्, इति वैधर्म्यमेव सौत्रमनुपपन्नं स्यात् ॥

### तरङ्गिणी

भास्करादिभिरपि भ्रम-प्रमाविभागाय रजतस्य घटादिवैलक्षण्यमङ्गीकृतमेव, इति तन्मतेऽपि तस्य पक्ष-बहिर्भावस्यावश्यं वाच्यत्वात्, तार्किकादिमते स्वमते च तदुपरक्ते साध्यसिद्धिः प्रयोजनम्, इति सर्वगतेऽपि सप्रयोजनं विशेषणम्। विशेषणत्वे प्रयोजनवत्त्वं तन्त्रम्, नतु विशेषणप्रयोजनस्य सर्वसिद्धत्वमपि। सत्यत्व-वाद्यनेकमतानुसारिणः कुशलस्यैकस्य मिथ्यात्वादिना कथासम्भवादिति सर्वमनवद्यम् ॥ *प्रतिपन्नेति* ॥ अत्र त्रैकालिकनिषेधे'त्यनेनात्यन्ताभाव एव विवक्षितः। तथाचान्योन्याभावमादाय सिद्धसाधनम्, तद्वारणाय निषेध-पदस्यात्यन्ताभावपरत्वे च 'त्रैकालिके'ति च व्यर्थमिति शङ्कानवकाशः। 'प्रतिपन्ने'ति च घटादावत्यन्ताभाव-प्रतियोगित्वमिति मते घटादावेव सिद्धसाधनवारणाय। प्रतिपन्नत्वं च प्रतीतत्वमात्रम्; अतः प्रमाप्रतिपन्नत्वं भ्रमप्रतिपन्नत्वं वाऽऽदाय न विरोध-सिद्धसाधने। यावत्त्वं च विवक्षितम्; अतो भ्रमप्रतिपन्नाधिकरणनिष्ठात्यन्ता-भावप्रतियोगित्वमादाय सत्त्वपक्षे न सिद्धसाधनम्। *ननु*—स्वाधिकरणाभिमतयावन्निष्ठात्यन्ताभाव-

### न्यायामृतकण्टकोद्धारः

एवमप्यपारमार्थिकत्वाकारेण घटादेरप्युक्तनिषेधप्रतियोगित्वाङ्गीकारेण सिद्धसाधनं तदवस्थमेवेत्यरुचे-राह—*पारमार्थिकत्वाकारेणेति* ॥ *ननु*—येन सम्बन्धेन यदवच्छेदेन यत्र यदस्ति, तत्र सर्वत्र तस्य पारमार्थिकत्वेनैव सत्त्वात् तेन रूपेण त्रैकालिकनिषेधप्रतियोगित्वं प्रतिवादिमतेऽप्रसिद्धमिति—चेत्, *न*, येन सम्बन्धेन यत्र यत् प्रतीतमित्यर्थस्य विवक्षितत्वात्, तस्य च शुक्तिरूप्यादौ प्रसिद्धत्वात्। नच—सर्वत्र यद् येन सम्बन्धेन प्रतीतम्, तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वं तेन रूपेणाप्रसिद्धमिति—वाच्यम्; एवमपि तत्त्ववादिनं प्रति प्रसिद्ध्युपपत्तेः, तेन शुक्तिरूप्यादेस्तथाभावाङ्गीकारात् ॥

*ननु*—तत्त्ववादिनं प्रत्यत्यन्ताभावप्रतियोगित्वमात्रं साध्यमस्तु, तेनासत एव तत्प्रतियोगि-त्वाङ्गीकारेण प्रपञ्चे तदनङ्गीकारात्। नच—उद्देश्यसिद्ध्यर्थमेतानि विशेषणानीति—वाच्यम्; एतादृशो-द्देश्यत्वस्य सर्वत्र वक्तुं शक्यत्वेनातिप्रसङ्गात्, साध्य उपरञ्जकविशेषणस्यासाम्प्रदायिकत्वाच्चेति—चेत्, यथा तार्किकमतेऽत्यन्ताभावप्रतियोगित्वं सत्त्वेऽप्युपपन्नम्, तथा मन्मतेऽपि भविष्यतीत्यर्थान्तर-निरासकत्वेन तत्त्ववादिमते सार्थकत्वात्। यद्वा—तार्किकस्यापि प्रतिवादित्वेन तन्मताभिप्रायेणैवैतादृश-साध्यकरणाद् न कश्चिद् दोष इति सर्वं समञ्जसम् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*वस्तुतस्तु*—ब्रह्मभेदो न प्रतियोगितावच्छेदकतया भाति, किन्तूपलक्षणतया किञ्चनपदार्थे प्रकारः। तथाच तत्पदस्य सर्वनामतया प्रसिद्धार्थतया प्रत्यक्षादिमानसिद्धद्रव्यत्वादिविशिष्टबोधकत्वेन प्रसिद्धार्थकत्वात् प्रक्रान्तार्थ-

### विट्ठलेशीयटिप्पणी

*नचेति* ॥ *अत्यन्ताभावे=तदन्विताधेयत्वे। माऽस्तु तत्र द्वैतकालावच्छिन्नत्वभानम्, द्वैतावच्छिन्नत्वभानं तु भवेदित्याशयेन समाधत्ते—*तादृशाभाव इति* ॥ *तादृशावच्छिन्नेति* ॥ द्वैतावच्छिन्नेत्यर्थः। *उद्देश्यम्=ब्रह्मणि द्वैतकालावच्छेदेन द्वैताभाववत्त्वम्, तस्य सिद्धेरित्यर्थः। समानदेश-कालीनयोरेवावच्छेद्यावच्छेदकभावोपगमादिति भावः। अत्र परेषां संवादमाह—*नहीति* ॥ *तत्र=द्वैताभावे ॥ तत्=द्वैतावच्छिन्नत्वमिति व्याख्येयम्। द्वैतस्य दृश्यत्वेनोद्देश्यतावच्छेदकतया ब्रह्मभिन्नत्वेन चाभावप्रतियोगितया भानस्वीकारेणाद्वितीयवाक्याधीनमिथ्यात्वनिश्चयस्यैव 'नेहे'ति वाक्याधीनत्वनिश्चयस्याप्याहार्यत्वस्य वारणसम्भवेऽपि प्रकारान्तरेण तस्य तद् वारयति—*वस्तुतस्त्विति* ॥ *ब्रह्मभेद इति* ॥ नानापदार्थभूतेत्यादिः। *किञ्चनपदार्थ इति* ॥ अनुपदं वक्ष्यमाण इति शेषः। *तत्पदस्य=किञ्चनपदान्तर्गतकिंपदस्य; किञ्चनेति समुदायस्यासर्वनामतया यथाश्रुतासङ्गतेः। चनेति तु तात्पर्यग्राहकमिति भावः। 'बोधकत्वेने'ति मिथ्यात्वलाभे हेतुतयाऽन्वेति। *प्रसिद्धेति* ॥ पञ्चम्यन्तद्वयमिदंपदस्य घटवद्ब्रह्मबोधकत्वे हेतुः,

### तरङ्गिणी

प्रतियोगित्वमिति पर्यवसितेऽर्थे केवलान्वय्यत्यन्ताभावप्रतियोगिगगनादिषु सिद्धसाधनम्, यदधिकरणे यत् सत्, तत् तन्निष्ठात्यन्ताभावप्रतियोगीति कृते विरोधः, कथञ्चिद्विरोधपरिहारेऽपि संयोगादिसम्बन्धेन घटाद्यधिकरणे समवायसम्बन्धेन घटाद्यत्यन्ताभावसत्त्वेन घटादौ सिद्धसाधनम्। येन सम्बन्धेन यद् यस्याधिकरणम्, तेन सम्बन्धेन तत् तन्निष्ठात्यन्ताभावप्रतियोगीति विवक्षायामव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति—चेत्,

### न्यायामृतकण्टकोद्धारः

***ननु*—बाध्यत्वरूपमिथ्यात्वमादायैव विप्रतिपत्तिप्रदर्शनमयुक्तम्; अग्रे पञ्चविधमिथ्यात्वस्य निरुच्यमानत्वेन तेन रूपेणापि प्रदर्शनस्य न्यायप्राप्तत्वात्, नच—बाध्यत्वरूपमिथ्यात्वमादाय विप्रतिपत्ति-प्रदर्शनमग्रे पञ्चधा निरुच्यमानमिथ्यात्वकोटिकविप्रतिपत्तिप्रदर्शनोपलक्षकमिति—वाच्यम्; सत्त्वा-सत्त्वाभ्यां निर्वक्तुमशक्यत्व-ज्ञानत्वेन ज्ञाननिवर्त्यत्वादीनां निरुच्यमानानां मिथ्यात्वानामप्रसिद्धत्वेन कोटि-प्रसिद्ध्यभावाद् विप्रतिपत्तिप्रदर्शनस्यैवायोगेनोपलक्षणपरत्वासम्भवात्, नच—ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्या-ज्ञाने प्रसिद्धिरस्तीति—वाच्यम्; अज्ञानं हि ज्ञानप्रागभावरूपं वा? नाद्यः; ज्ञानस्य स्वप्राग-भावनिवृत्तिरूपत्वेन निवर्त्तकत्वासम्भवात्, न द्वितीयः; ज्ञानत्वस्य परोक्षज्ञानेऽपि विद्यमानत्वेनाज्ञान-निवर्तकतावच्छेदकत्वासम्भवात्, परोक्षज्ञानस्य त्वयाऽज्ञाननिवर्तकत्वानङ्गीकारात्, तस्मात्कथम्?**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कत्वाद्वा 'इद'पदेन घटत्वादिविशिष्टवद्ब्रह्मावोधनाद् द्रव्यत्वादिविशेषरूपेणैव मिथ्यात्वलाभः। घटवद् द्रव्यवदित्येवमुद्देश्यतावच्छेदकभानेऽपि 'द्रव्यं नास्ती'त्यादिविधेयांशे घटत्वादिविशिष्टस्योद्देश्यतावच्छेदकत्वेन द्रव्यत्वादिविशिष्टाभावज्ञानस्य नाहार्यत्वापत्तिरिति भावः॥

### विट्ठलेशीयटिप्पणी

**ताद्दशबोधनं तु लाभे। *इहपदेन=इदंपदेन। अत्र ब्रह्मभेदोपलक्षितद्रव्यत्वविशिष्टाभावो घटत्वविशिष्टवद्ब्रह्मवृत्तिरिति बोधः। तथाच द्रव्यत्वेन गृह्यमाणानां घटादीनां स्वाश्रयनिष्ठद्रव्यतावच्छिन्नप्रतियोगिताकस्वाभावकत्वसिद्धौ तद्घटकतया स्वाश्रयनिष्ठस्वाभावकत्वरूपमिथ्यात्वमपि सिद्ध्यति। नच—एवं घटस्य घटत्वरूपेण ब्रह्मणि पार-मार्थिकत्वेऽपि निरुक्तसाध्यपर्यवसानसम्भवेनोद्देश्यासिद्धिरिति—वाच्यम्; द्रव्यत्वरूपव्यापकधर्मावच्छिन्नाभावसिद्धौ घटत्वरूपव्याप्यधर्मावच्छिन्नाभावस्यापि ततः सिद्धिसम्भवादिति भावः। अत एव घटत्वव्याप्यतत्तद्व्यक्तित्वादिकमुपेक्ष्य तद्व्यापकद्रव्यत्वानुधावनम्। *ननु* एवं द्रव्याभावो घटवद्ब्रह्मवृत्तिः, जातिमदभावश्च द्रव्यवद्ब्रह्मवृत्तिरित्यादिसमूहा-लम्बनात्मक एव बोधो वाच्यः; तथाचैकस्मिन् ब्रह्मरूपे धर्मिणि द्रव्यतावच्छिन्न-तदभावयोरुद्देश्यतावच्छेदक-विधेयभावेन तत्र भानात् तस्याहार्यत्वं दुर्वारमेवेति शङ्कां परिहरति—*घटवदिति*॥ घटवति ब्रह्मणि द्रव्यं नास्ति, द्रव्यवति ब्रह्मणि जातिमान् नास्तीत्यादिसमूहालम्बनेत्यादिः॥**

***घटवद् द्रव्यवदित्येवमिति*॥ घटत्वविशिष्टवत्त्व-द्रव्यत्वविशिष्टवत्त्वरूपेत्यर्थः। *द्रव्यं नास्तीति*॥ तत्प्रति-पाद्यद्रव्यत्वावच्छिन्नभावेत्यर्थः। तस्य विधेयेऽभेदान्वयः। *विधेयांशे=तन्निष्ठविधेयतानिरूपितेत्यर्थः॥ अस्यो-द्देश्यतायामन्वयः। घटत्वादिविशिष्टस्यैवेत्येवकारेण द्रव्यत्वविशिष्टस्य व्यवच्छेदः। तथाच ताद्दशबोधे घटत्वावच्छिन्नो-द्देश्यतावच्छेदकतानिरूपक-द्रव्यत्वावच्छिन्नाभावत्वावच्छिन्नविधेयताकत्वेऽपि द्रव्यत्वावच्छिन्नोद्देश्यतावच्छेदकताकद्रव्य-त्वावच्छिन्नाभावत्वावच्छिन्नविधेयताकत्वाभावाद् नाहार्यत्वमिति भावः। अत्र विभक्त्यर्थसंसर्गत्वमतमवलम्ब्य—'इह' इति सप्तम्यर्थभूतमाधेयत्वं संसर्गः, न प्रकार इति विवक्षितम्। अत एव 'द्रव्यं नास्तीत्यादिविधेयांशे' इति ग्रन्थेन द्रव्याभावस्यैव विधेयत्वं वर्णितम्॥ आधेयत्वस्य प्रकारताभिप्राये तूक्तरीत्या तस्यैव विधेयतया—'अस्ती'ति विधेयांश**

### अद्वैतसिद्धिः

उपपादनं च स्वपक्षसाधन-परपक्षनिराकरणाभ्यां भवति, इति तदुभयं वाद-जल्प-वितण्डानामन्यतमां कथामाश्रित्य संपादनीयम्। तत्र च विप्रतिपत्तिजन्यसंशयस्य विचाराङ्गत्वाद् मध्यस्थेनादौ विप्रतिपत्तिः प्रदर्शनीया ॥

### तरङ्गिणी

मैवम्; यत्सम्बन्धावच्छेदक-विशेषाभ्यां यत्र यस्य प्रतीतिर्भवितुमर्हति, तत्सम्बन्धावच्छेदक-विशेषाभ्यां तस्यैव तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति विवक्षितम्। आकाशादेरपि संयोगादिसम्बन्धेनास्त्येव वृत्तिरिति नोक्तदोषः ॥ यदि पुनर्घटादेर्नात्यन्ताभावाप्रतियोगित्वम्, न वा स्वात्यन्ताभावसामानाधिकरण्यम्; लाघवेन

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*वादः=तत्त्वबुभुत्सुना सह कथा, *जल्पः=विजिगीषुणा सह, *वितण्डा=स्वपक्षस्थापनहीना। *कथाम्=पञ्चावयवोपेतं वाक्यम्। *सिसाधयिषेत्यादि* ॥ सिसाधयिषाऽभावसामानाधिकरण्यविशिष्टस्य

### न्यायामृतसौगन्ध्यम्

सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यतायाम्—"ब्रह्मप्रमे"त्यादि। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतायां तु तद् नोपादेयमेव ॥ असति बाधासिद्धिवारणाय—"असद्भिन्ने"त्यादि। ब्रह्मणि बाधासिद्धिवारणाय—"ब्रह्मान्यदि"ति ॥

### सिद्धिव्याख्या

विहायाग्रे विप्रतिपत्तिप्रदर्शनमसङ्गतम्, इत्याशङ्क्य तस्यावकाशमाह—*उपपादनं चेत्यादिना—विप्रतिपत्तिः प्रदर्शनीयेत्यन्तेन* ॥ *उपपादनं च=द्वैतमिथ्यात्वोपपादनं चेत्यर्थः। स्वपक्षसाधनम्=स्थापनीयकोटिस्थापनम्। परपक्षनिराकरणम्=निराकरणीयकोटिनिराकरणम्। *ताभ्याम्=मिथ्यात्वस्थापन-सत्यत्वनिराकरणाभ्याम्। *भवतीति* ॥ *तदुभयम्=मिथ्यात्वसाधन-सत्यत्वनिराकरणरूपोभयम्। द्वैतमिथ्यात्वोपपादनं वाद-जल्प-वितण्डानामन्यतमां कथामाश्रित्य संपादनीयमित्यक्षरार्थः। तत्र तत्त्वबुभुत्सुकथा *वादः*, उभयविजिगीषुकथा *जल्पः*, स्वपक्षस्थापनहीना *वितण्डा* परपक्षदूषणमात्रपर्यवसाना। कथा नाम नानाकर्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यविस्तारः। ततः किमिति? अत आह—*तत्र चेति* ॥ तस्यां वादकथायामित्यर्थः। तत्रेत्यस्य विप्रतिपत्तिः प्रदर्शनीयेत्यनेनान्वयः। तत्र हेतुः—*विप्रतिपत्तिजन्यसंशयस्येति* ॥ *ननु* एवमपि 'विश्वं मिथ्ये'त्येतदनुमानपरकथाश्रयणेनैव स्वपक्षसाधन-परपक्षनिराकरणोपपत्तौ विप्रतिपत्तिप्रदर्शनं व्यर्थमेवेति—*चेत्,* न; तथात्वे ब्रह्मादिषु बाधाद्यापत्त्या तत्प्रदर्शनस्य सार्थकत्वात्। नच—विप्रतिपत्तिप्रदर्शनेऽपि स दोषस्तदवस्थ इति—वाच्यम्; तदा तत्र पक्षत्वेन निर्दिष्टस्यैव विश्वशब्देन ग्रहणे बाधाद्यनवकाशात्। नच—मूलग्रन्थेषु विप्रतिपत्तेः क्वाप्यदर्शनाद् न तस्या आवश्यकतेति—वाच्यम्; मूलग्रन्थेषु विप्रतिपत्त्यप्रदर्शनस्य शिष्यैरेव सोत्प्रेक्ष्यतामित्यभिप्रायेणोपपत्तावपीहानुमाने बाधादिनिराकरणरूपप्रयोजनवत्त्या विप्रतिपत्त्या अवश्यं प्रदर्शनीयत्वादिति भावः ॥

### विट्ठलेशीयटिप्पणी

इत्येवोच्येत। तथाच विशेष्यीभूतद्रव्यत्वावच्छिन्नाभावविधेयक-विशेषणीभूतघटत्वविशिष्टवद्ग्रह्यीद्देश्यकाधेयतासंसर्गकबोध एवात्रेत्यवधेयम्। क्वचित् पुस्तके तु ( ख-पुस्तके ) 'नाने'त्यत आहार्यत्वापत्तिरित्यन्तं कुण्डलितम् ॥

*विजिगीषुणा सहेति* ॥ कथेत्यनुषङ्गः। एवं 'हीने'त्यत्र। 'कथामि'ति मूलप्रतीकम्। पञ्चावयवोपेतं वाक्यमिति तद्विवरणम्। 'उपपादनं चे'त्यादिना न्यायरूपकथाया आवश्यकत्वं प्रदर्श्य न्यायामृतकारीयं विप्रतिपत्तेर्विचारानुपयोगिताव्यवस्थापनं खण्डयितुकामः पूर्वपक्षतया तदुपन्यासाय विप्रतिपत्तेः प्रदर्शनीयतामाह मूले—*तत्रेति* ॥

न्यायामृतम्

इदं च विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैव, नतु वस्तुतः ; तत्पक्षेऽपि विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहैकफलकत्वात्, तस्य च कथाबाह्येन निग्रहानर्हेण लौकिकरीत्यनुसारिणा संस्कृतरूपेण वा भाषारूपेण वा 'मया प्रपञ्चमिथ्यात्वं साध्यते' इति वादिवाक्येन वा 'त्वया प्रपञ्चमिथ्यात्वं साध्यमि'ति मध्यस्थपरिकल्पितविषयस्वीकारेण वा सिद्धौ प्रतिज्ञाव्यतिरिक्तस्योक्तकुसृष्टियुक्तस्य विप्रतिपत्तिवाक्यस्य

तरङ्गिणी

घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात्, सम्बन्धविशेषप्रवेशे च गौरवात्, घटसम्बन्धाभावमात्रविषयतया चाभावप्रतीत्युपपत्तेः, आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वशङ्कानुदयात्, एवं संयोगादेरपि नाव्याप्यवृत्तितेति पक्षः, तदाऽत्यन्ताभावप्रतियोगित्वमेव विवक्षितम् ॥

*ननु* मूलग्रन्थेषु विप्रतिपत्तेः क्वाप्यदर्शनाद् न तस्या आवश्यकत्वमित्यत आह—*इदं चेति* ॥ तार्किकैः स्वग्रन्थेषु विप्रतिपत्तिः प्रदर्शिताऽस्ति, इत्यत्रापि सा प्रदर्शिता, नतु तस्या अवश्यं प्रदर्शनीयतया प्रदर्शनमित्यर्थः ॥ *ननु* विप्रतिपत्तिरवश्यं प्रदर्शनीयैव ; प्रयोजनवत्त्वात्, मूलग्रन्थेषु तदप्रदर्शनं तु शिष्यैरेव सोत्प्रेक्ष्यतामित्यभिप्रायेण भविष्यतीत्यत आह—*तत्पक्षेऽपीति* ॥ यैरपि कथातः पूर्वं विप्रतिपत्तिर्मध्यस्थादिनाऽवश्यं प्रदर्शनीया प्रयोजनवत्त्वादित्यभिधीयते, तैरपि तस्याः पक्षपरिग्रहरूपसाधनीयकोटिपरिग्रह एक एव प्रयोजनं वाच्यमित्यर्थः । *ननु* स्थापनीयकोटिरूपपक्षपरिग्रहार्थमेव तार्किकादीनामिव भवतामपि साऽवश्यं प्रदर्शनीयेत्यत आह—*तस्य चेति* ॥ *तस्य=पक्षपरिग्रहस्य* ॥ वादिवाक्येन वा मध्यस्थकल्पितविषय-

न्यायामृतकण्टकोद्धारः

इति—चेत्, मैवम् ; विप्रतिपत्तेरनावश्यकत्वेन मिथ्यात्वनिर्वचनान्तरमादाय विप्रतिपत्तेरप्रदर्शनात् । नचैवम्—बाध्यत्वमादायापि विप्रतिपत्तिप्रदर्शनं न कर्तव्यमिति—वाच्यम् ; शिष्यबुद्धिव्युत्पादनार्थत्वात् । तस्य चैकप्रकारप्रदर्शनेनापि सम्भवात्, बाध्यत्वस्य सम्यक्कोटिप्रसिद्धिसत्त्वात् । एतदेवोपादाय विप्रतिपत्तिप्रदर्शनमिति । प्रथमविशेषणफलमाह—*अखण्डार्थनिष्ठेति* ॥ उक्तप्रकारमन्यत्रातिदिशति—*एवमिति*। *ननु*—मूलकोशे क्वापि विप्रतिपत्त्यप्रदर्शनात् तद्विरोध इत्यत आह—*इदमिति* ॥ तथाच तार्किकस्याप्यत्र प्रतिवादित्वात् तेन च विप्रतिपत्तेरावश्यकत्वाभ्युपगमात् तद्रीत्यैव विप्रतिपत्तिप्रदर्शनम्, नतु तस्यावश्यकत्वादिति भावः । तार्किकरीत्यैवैतद्विप्रतिपत्तिप्रदर्शनात् तेन चान्योन्याभावस्य धर्मिस्वरूपत्वानभ्युपगमाद् ब्रह्मान्यपदेन न तुच्छव्यावृत्तिरिति 'असद्विलक्षणत्वे सती'त्यावश्यकमेव । रजतस्याप्यत्यन्तासत्त्वानभ्युपगमात् शुक्तिरजतस्याप्यसद्विलक्षणतया तेन तद्व्यावृत्तेः—'बाध्यत्वे सती'त्येतदपि सार्थकमेवेत्यप्याहुः । विप्रतिपत्तिवाक्यं हि पक्षपरिग्रहार्थं वा ? साध्योपस्थित्यर्थं वा ? पक्षत्वप्रयोजकसंशयार्थं वा ? आद्यमनुवदति—*तत्पक्ष इति* ॥ अस्त्वेवम्, ततः को दोषः इति ? अत आह—*तस्य चेति* ॥ तस्य च सिद्धावित्यन्वयः । केन सिद्धिरित्यतो वादिवाक्येन मध्यस्थकल्पितविषयस्वीकारेण वेत्युक्तम् । वादिवाक्येन=वादि-प्रतिवादिवाक्येन ॥ तस्य स्वरूपम्—*मयेति* ॥ इतिशब्द आवर्तनीयः सत्त्वाद्यर्थः । 'प्रपञ्चसत्यत्वं' साधनीयमित्यादिवाक्येनेत्यर्थः । तथाच संस्कृतरूपेण भाषारूपेण वेति वाक्यविशेषणं युज्यते । एवमेव त्वयेत्यत्रापि योजनीयम् । वाद्यादिवाक्यस्य विप्रतिपत्तिवाक्यापेक्षया विशेषमाह—*संस्कृतेत्यादि* ॥ अत्र लौकिकरीत्यनुसारिणा संस्कृतरूपेण भाषारूपेणेति सुलभत्वशीघ्रोपस्थित्यर्थम् । कुसृष्टिराहित्यार्थमाह—*निग्रहानर्हेणेति* ॥ तदुपपादयति—*कथाबाह्येनेति* ॥ विप्रतिपत्तिवाक्यस्याप्येवं भावो भविष्यतीत्यत आह—*उक्तकुसृष्टीति* । *ननु*—विप्रतिपत्तिवाक्यस्य प्रतिज्ञारूपत्वाद् विप्रतिपत्तिवाक्यस्यानावश्यकत्वे प्रतिज्ञाया अप्रयोगः प्राप्नोतीत्यत आह—*प्रतिज्ञा-

### न्यायामृतम्

वैयर्थ्यात् । नच साध्योपस्थित्यर्थं तत् ; प्रतिज्ञयैव तत्सिद्धेः । नच पक्षत्वप्रयोजकसंशयार्थं तत् ; वादि-प्रतिवादिनोः प्राश्निकानां च निश्चयवत्त्वेन तदयोगात्, आहार्यसंशयस्य चातिप्रसङ्गेन पक्षत्वा-

### अद्वैतसिद्धिः

यद्यपि विप्रतिपत्तिजन्यसंशयस्य न पक्षतासंपादकतयोपयोगः ; सिसाधयिषाविरहसहकृतसाधक-

### तरङ्गिणी

स्वीकारेण वा सिद्धौ विप्रतिपत्तिवाक्यस्य वैयर्थ्यादित्यन्वयः। "कथायाह्येने"त्यादि वादिवाक्यविशेषणम्। तथाच पक्षपरिग्रहरूपप्रयोजनस्यान्यथासिद्धत्वात् तार्किकादिभिरपि विप्रतिपत्तिर्नावश्यं प्रदर्शनीयेति भावः। तार्किक-मते विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहैकफलकत्वं वक्तुं प्रयोजनान्तरं निरस्यति—*नचेति* ॥ विप्रतिपत्तिवाक्यस्य समयबन्धादिना व्यवहितत्वेन हेत्वभिधानप्रयोजकाकाङ्क्षाजनकसाध्योपस्थित्यहेतुत्वमित्यर्थः। *ननु* विप्रति-पत्तिवाक्यस्य साध्योपस्थित्यहेतुत्वे कथं साध्योपस्थितिः स्यात्? अत आह—*प्रतिज्ञयैवेति* ॥ विप्रतिपत्ति-वाक्यस्य समयबन्धादिना व्यवहितत्वेन तदुत्तरमवश्यं वक्तव्यया प्रतिज्ञयैव हेत्वभिधानप्रयोजकाकाङ्क्षाजनक-साध्योपस्थितिसम्भवादित्यर्थः। विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहैकफलकत्वं परिशेषयितुं तस्य संशयार्थत्वं निरस्यति—*नचेति* ॥ *तदिति* ॥ विप्रतिपत्तिवाक्यम् ॥ *वादि-प्रतिवादिनोरिति* ॥ तथाच विशेषा-दर्शनरूपहेत्वभावाद् विप्रतिपत्तिवाक्यस्य न वाद्यादिषु संशयाधायकत्वमित्यर्थः। *ननु* विशेषदर्शने सत्यपि विप्रतिपत्तिवाक्याद् वाद्यादीनामाहार्यसंशयो भविष्यति ; तस्य विशेषदर्शनाप्रतिबध्यत्वात्, इत्यत आह—*आहार्येति* ॥ अनुमित्युत्तरकालमप्याहार्यसंशयस्य सत्त्वेन सिसाधयिषाविरहदशायामपि पक्षतापत्त्याऽति-

### न्यायामृतकण्टकोद्धारः

व्यतिरिक्तस्येति* ॥ न द्वितीय इत्याह—*नचेति* ॥ तृतीयमाशङ्क्य निषेधति—*नचेति* ॥ सन्दिग्धसाध्यकत्वधर्मतयैव पक्षत्वमित्यभिमानवतः शङ्केयमिति ध्येयम् ॥ *ननु*—निश्चितेऽप्याहार्य-संशयदर्शनात् तादृशः संशयो भविष्यतीत्यत आह—*आहार्येति* ॥

### न्यायामृतसौगन्ध्यम्

इदं विप्रतिपत्तिप्रदर्शनं नावश्यकम् ; सिसाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायां संशयस्या-

### सिद्धिव्याख्या

*ननु*—विप्रतिपत्तिप्रदर्शनं न युक्तम् ; तस्या विचारानुपयोगात्। नच—विप्रतिपत्तिजन्यसंशयस्य विचारो-पयोगेन विचाराङ्गतया तद्द्वारा विप्रतिपत्तेरपि तदुपयोगेन तदङ्गत्वात् तत्प्रदर्शनमावश्यकमिति—वाच्यम् ; संशयस्यापि विचारानुपयोगित्वात्। नच—साक्षात् तदनुपयोगित्वेऽपि पक्षतासंपादकतया संशयस्योपयोगोऽस्तीति—वाच्यम् ; पक्षता-संपादकतयाऽप्युपयोगासंभवादित्याशङ्कते—*यद्यपीति* ॥ उपयोग इति* ॥ येन तद्द्वारा विप्रतिपत्तेरपि विचारोपयोगाद् विचाराङ्गता स्यादित्यर्थः। अनुपयोगमेव दर्शयति—*सिसाधयिषेति* ॥ साधारणधर्मासाधारणधर्माभ्यामिव विमतेश्च संशयोत्पत्त्यभ्युपगमेन संशयसंभवेऽप्युक्तपक्षतायास्तदघटिततया तदवधिकसंशयद्वारा विप्रतिपत्तेर्विचाराङ्गत्वस्य सुतराम-योगादित्यर्थः। अत्र साधकमानम्=भावव्युत्पत्त्या सिद्धिरेव, नतु करणव्युत्पत्त्या भावव्युत्पत्तिसहितया सिद्धि-तत्कारणान्यतरत् ; गौरवात्। नच—अनुमानातिरिक्तप्रमाणकालेऽनुमित्यदर्शनाद् गौरवं प्रामाणिकमिति—वाच्यम् ; तावताऽनुमित्साविरहसहकृतानुमानातिरिक्तप्रमाणाभावस्य कारणत्वप्राप्तेः। *ननु*—उभयोः कारणत्वाविशेषे सिद्ध्य-

### विट्ठलेशीयटिप्पणी

सहकृतत्वं न तज्जन्यजनकत्वम् ; सिसाधयिषाविरह-सिद्ध्योरनुमित्यहेतुत्वात्, एवं साधकमानं न सिद्धिसामग्री ; तस्याश्चक्षुःपरामर्शरूपायाः सार्वत्रिकतया सिसाधयिषां विनाऽनुमित्युच्छेदप्रसङ्गात्, अतो व्याच—सिसाधयि-

### न्यायामृतम्

प्रयोजकत्वात्, विप्रतिपत्तिवाक्यानपेक्षत्वाच्च, संशयं विनाऽपि सिसाधयिषाविरहसहकृतसाधकमानाभावरूपस्य पक्षत्वस्य संभवाच्च ॥

### अद्वैतसिद्धिः

मानाभावरूपायास्तस्याः संशयाघटितत्वात्; अन्यथा श्रुत्याऽऽत्मनिश्चयवतोऽनुमित्सया तदनुमानं न स्यात्, बाधादीनां निश्चयवत्त्वेन संशयासंभवात्, आहार्यसंशयस्यातिप्रसञ्जकत्वाच्च । नापि विप्रतिपत्तेः

### तरङ्गिणी

प्रसङ्गेनेत्यर्थः ॥ *विप्रतिपत्तीति* ॥ तथा च व्यभिचाराद् नाहार्यसंशयं प्रति विप्रतिपत्तिवाक्यस्य हेतुत्वमित्यर्थः । *ननु*—बाधादीनां विशेषदर्शनवत्त्वेन संशयासिद्धौ पक्षत्वासिद्ध्या कथं न्यायावतारः स्यादिति ? अत आह—*संशयं विनेति* ॥

### न्यायामृतकण्टकोद्धारः

अनुमित्यनन्तरमप्याहार्यसंशयसम्भवेन पक्षतापत्तावनुमितिः स्यादित्यतिप्रसङ्ग इत्यर्थः । विप्रतिपत्तिवाक्यस्य कोट्युपस्थापकतया संशयप्रयोजकत्वात् कोट्युपस्थितेस्साधारणधर्मादिनाऽपि सम्भवाद् न विप्रतिपत्तिवाक्यावश्यकतेत्याह—*विप्रतिपत्तीति* ॥ संशयस्य पक्षत्वप्रयोजकत्वमभिप्रेत्येदमुक्तम्, वस्तुतस्तदपि नास्तीत्याह—*संशयं विनाऽपीति* ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

साध्यनिश्चयस्याभावरूपाया इत्यर्थः । *संशयस्य=संशयहेतुत्वस्वीकारस्य । *अतिप्रसञ्जकत्वात्=आहार्य-

### सिद्धिव्याख्या

भावस्यैव पक्षतात्वे किं विनिगमकमिति—*चेत्, न* ; लाघवेन सिद्ध्यभावस्यैव पक्षपदनिमित्तत्वात्, नतु सिद्धिकारणाभावस्य ; गुरुशरीरातीन्द्रियप्रतियोगिकतया गुरुत्वात् । नच—सिसाधयिषापदेन सिसाधयिषोत्पत्त्यनन्तरसिद्ध्यननुगुणानन्तरितः कालो वाच्यः, अन्यथा निरन्तरमनुमितिद्वयं भवत्वित्याशौ मध्ये परामर्शादिना सिसाधयिषाया नाशात् पक्षताया अभावेनानुमित्यभावापत्तेः । तथाचातीन्द्रियघटितप्रतियोगितया सिद्ध्यभावेऽपि कथं लघुत्वमिति—वाच्यम् ; सिद्धिकारणांशयोरेव तद्विचारात्, सिसाधयिषांशे च तत्प्रवेशस्योभयपक्षेऽपि समानत्वादिति । *ननु*—संदिग्धसाध्यवत्त्वं पक्षत्वम्, ततश्च पक्षत्वप्रयोजकसंशयजनकतया विप्रतिपत्तेर्विचाराङ्गत्वमस्त्वित्याशङ्क्याह—*अन्यथेति* ॥ संदिग्धसाध्यवतः पक्षत्व इत्यर्थः । *न स्यादिति* ॥ संदेहघटिताया अभावादिति भावः । उक्तपक्षताङ्गीकारे तु श्रुत्याऽऽत्मनिश्चयकालेऽनुमित्सायां सत्यामनुमित्साविरहलक्षणविशेषणाभावे तद्विशिष्टात्मनिश्चयस्याभावेन सिसाधयिषाविरहसहकृतसिद्ध्यभावरूपायाः पक्षतायाः सत्त्वात् तत्राप्यनुमानं स्यादिति ध्येयम् । *वस्तुतो* विप्रतिपत्तिवाक्यस्य संशयजनकत्वमपि वक्तुमशक्यम् । *तथाहि*—किं तस्मात् संशयो वादि-प्रतिवादिनोर्वा ? पारिषद्यानां वा ? नाद्य इत्याह—*बाधादीनामिति* ॥ नच—बाधादीनां निश्चयवत्त्वेऽपि विप्रतिपत्तिवाक्यात् संशयः स्यादेव, विप्रतिपत्तिवाक्यस्य संशयकारणतया कारणे तस्मिन् वाक्ये तत्कार्यसंशयावश्यंभावादिति—वाच्यम् ; विशेषादर्शनस्यापि सहकारित्वेन तद्विरहे वाक्यात् संशयायोगादिति भावः । *ननु*—विशेष-

### विट्ठलेशीयटिप्पणी

येति* ॥ *ननु* साध्यसंशयरूपपक्षतैवोपगम्यतामित्यत आह मूले—*अन्यथेति* ॥ *ननु* निश्चितोऽप्यर्थो निश्चये प्रामाण्यसंदेहेन संदिह्यत इत्यत आह—*बाधादीनामिति* ॥ मध्यस्थ आदिपदार्थः । *निश्चयेति* ॥ अप्रामाण्यज्ञानानास्कन्दितत्वस्यादिः । *ननु* तादृशैककोटिकनिश्चयेऽपि विप्रतिपत्तिराहार्यसंशयमेव जनयिष्यति, स एव चानुमितौ पक्षताविधया हेतुरित्यत आह—*आहार्येति* ॥ आहार्यसंशयस्यातिप्रसञ्जकत्वासंभवात् सर्वैरुपगमाच्च यथाश्रुतासङ्गतिः, अतश्चन्द्रिकाकारो व्याचष्टे—*संशयस्येति* ॥ संशयहेतुत्वेति* ॥ संशयनिष्ठानुमितिहेतुत्वेत्यर्थः ।

### अद्वैतसिद्धिः

स्वरूपत एव पक्षप्रतिपक्षपरिग्रहफलकतयोपयोगः; 'त्वयेदं साधनीयम्' 'अनेनेदं दूषणीयमि'त्यादि-मध्यस्थवाक्यादेव तल्लाभेन विप्रतिपत्तिवैयर्थ्यात्, तथापि विप्रतिपत्तिजन्यसंशयस्यानुमित्यनङ्गत्वेऽपि

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

परामर्शादेर्हेतुत्वापादकत्वात्। *पक्षप्रतिपक्षपरिग्रहेति* ॥ पक्षे धर्मिणि प्रतिनियतपक्षपरिग्रहेत्यर्थः। वादिनोर्भावाभावान्यतरकोटेरेकधर्मिणि प्रयोगेति यावत्। *तथापि—अनुमित्यनङ्गत्वेऽपीति* ॥ अनुमितिं प्रति तथाविधमेव यदङ्गत्वम्, तदभावेऽपीत्यर्थः। प्रथमस्यापिशब्दस्यैवकारसमानार्थकत्वाद् यद्यपीत्यस्य पूर्वं सत्त्वात् तथापीत्यन्यदध्याहार्यम्। एकेनैव वा तथापीत्यनेनार्थद्वयबोधः। अथवा—अङ्गत्वपदस्य पूर्वे-

### न्यायामृतसौगन्ध्यम्

नुपयोगात्। यत्तु—विप्रतिपत्तिजन्यसंशयस्यानुमित्यनङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वमस्त्येवेति, तन्न; वादि-प्रतिवादिनोर्मध्यस्थानां च निश्चयवत्त्वेन व्युदसनीयसंशयस्यैवाभावात्। *ननु*—विप्रतिपत्तिवाक्यस्य वाद्यादिषु संशयाजनकत्वेऽपि मध्यस्थादिषु संशयजनकत्वमस्त्येव; तेषां विशेषादर्शनात्।

### सिद्धिव्याख्या

दर्शने सत्यपि वाद्यादीनामाहार्यसंशयो भविष्यति, तस्य विशेषदर्शनाप्रतिबध्यत्वादित्यत आह—*आहार्येति* ॥ अनुमित्युत्तरकालमपि तस्य सत्त्वेन सिसाधयिषाविरहदशायामपि पक्षतापत्त्याऽतिप्रसञ्जकत्वादित्यर्थः। नापि द्वितीयः; अन्यदीयसंशयस्य पक्षत्वाप्रयोजकत्वेनानुमानानङ्गत्वादित्याह—*पक्षप्रतिपक्षेति*॥ स्थापनीयकोटिपरिग्रहफलकतयाप्युपयोग इत्यर्थः। *ननु*—स्थापनीयकोटिरूपपक्षपरिग्रहार्थमेव तार्किकादीनामिवास्माकमपि साऽवश्यं प्रदर्शनीयेति कथमनुपयोग इति? अत आह—*त्वयेदमिति* ॥ तथाच पक्षपरिग्रहरूपप्रयोजनस्यान्यथासिद्धत्वात् तार्किकादिभिरपि विप्रतिपत्तिर्नावश्यं प्रदर्शनीया। नच—वाक्यत्वाविशेषे किं विनिगमकमिति—वाच्यम्; मध्यस्थादिवाक्यादुक्तादेव तल्लाभेऽनेकविशेषणवतो विप्रतिपत्तिवाक्यस्य गौरवात्। *ननु*—पक्षपरिग्रहैकफलकत्वे भवेदेवान्यथासिद्धिः; नैवम्, किंतु साध्योपस्थित्यर्थमिति न वैयर्थ्यमिति—चेत्, *न*; विप्रतिपत्तिवाक्यस्य समयबन्धादिना व्यवहितत्वेन हेत्वभिधानप्रयोजकाकाङ्क्षाजनकसाध्योपस्थित्यहेतुत्वात्। नच—विप्रतिपत्तिवाक्यस्य साध्योपस्थित्यहेतुत्वे साध्योपस्थितिरेव न स्यादिति—वाच्यम्; अनुत्तरमवश्यवक्तव्यतया प्रतिज्ञयैव तल्लाभात्। *तदुक्तं न्यायामृते—"इदं च विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैव, न वस्तुतः" इति। न विचाराङ्गत्वेनेति वचनार्थः। तथाच विप्रतिपत्तेर्विचाराङ्गत्वमयुक्तमिति भावः। विप्रतिपत्तिवाक्यस्य सार्थक्यं साधयति—*तथापीति* ॥ विप्रतिपत्तेर्वाद्यादिषु संशयाजनकत्वेऽपि पारिषद्यादिषु संशयजनकत्वमस्त्येव; तेषां विशेषदर्शनविरहात्। नच—अन्यदीयसंशयस्य स्वार्थानुमानस्थलेऽसत्त्वः पक्षत्वाप्रयोजकत्वेनानुमानाङ्गत्वं नेति—वाच्यम्; तस्य पक्षताप्रयोजकतयाऽनुमानाङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वसंभवादित्यभिप्रेत्याह—*विप्रतिपत्तिजन्येति* ॥

### विट्ठलेशीयटिप्पणी

मूले—*स्वरूपत इति* ॥ साक्षादित्यर्थः। संशयमद्वारीकृत्येति यावत्। 'पक्षे'त्यादेः पक्षो भावकोटिः, प्रतिपक्षोऽभावकोटिः, तयोरन्यतरस्य परिग्रह इति यथाश्रुतेऽर्थे परिग्रहद्वयस्यैकधर्मिकत्वालाभाद् न्यूनता, एकधर्मिसंबद्धस्य भावाभावद्वयस्य त्वप्रसिद्धत्वाद् न पक्षादिपदार्थता, एवं परिग्रहो न ज्ञानम्; तस्य विप्रतिपत्तिं विनैव संभवात्, अतो व्याचष्टे—*पक्षेति* ॥ *ननु* विचाराङ्गत्वे तद्द्वाराऽनुमित्यङ्गत्वस्य दुर्वारतयाऽनुमित्यनङ्गत्वेऽपीत्यसङ्गतम्, अत आह—*अनुमितिं प्रतीति*। *तथाविधम्*=पूर्वं शङ्कितम् ॥ *ननु* तथापीत्यस्योक्तार्थकत्वे यद्यपीत्यस्य क्वान्वय इति? अत आह—*यद्यपीति* ॥ अध्याहारे न्यूनतापत्तेराह—*एकेनैवेति*॥ *ननु* 'सकृदुच्चरितः' इति न्यायविरोधः, अत आह—*अथवेति* ॥ 'व्युदसनीयतये'त्यत्र व्युदासो न निवृत्तिः; तत्र विप्रतिपत्तेरनुपयोगात्, अतो व्याचष्टे—

अद्वैतसिद्धिः

व्युदसनीयतया विचाराङ्गत्वमस्त्येव ; तादृशसंशयं प्रति विप्रतिपत्तेः क्वचिद् निश्चयादिप्रतिबन्धाद-

तरङ्गिणी

*ननु*—विप्रतिपत्तिवाक्यस्य वाद्यादिषु संशयाजनकत्वेऽपि परिषदादिषु संशयजनकत्वमस्त्येव ; तेषां विशेषदर्शनविरहात्, नच—अन्यदीयसंशयस्य पक्षत्वाप्रयोजकत्वेनानुमानाङ्गत्वं नेति—वाच्यम् ; तस्यानुमानानङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वमस्त्येव, वाद्यादिषु संशयं प्रति विप्रतिपत्तेर्निश्चयादिना प्रतिबन्धाद-

न्यायामृतकण्टकोद्धारः

( सि० ) *अत्र कश्चित्*—"यद्यप्येवं विप्रतिपत्तिवाक्यजन्यसंशयस्यानुमित्यङ्गत्वं नास्ति ; तथापि व्युदसनीयतया विचाराङ्गत्वमस्त्येव ; तादृशसंशयं प्रति विप्रतिपत्तेः क्वचिद् निश्चयादिप्रतिबन्धादजनक-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शङ्किताङ्गत्वमर्थः । *व्युदसनीयतया = विचारसाध्याभावप्रतियोगितया । विचाराङ्गत्वं विचारप्रवृत्त्युपयुक्तस्य संशयाभावरूपफलज्ञानस्य विशेषणज्ञानविधया कारणे ज्ञाने विषयत्वम् । तथाच विप्रतिपत्तिवाक्यात् संशये जाते संदेह्मीत्याकारकेण संशयरूपविशेषणज्ञानेन संशयाभावरूपज्ञानाधीनेच्छया विचारे प्रवृत्तिरित्येवंरीत्या विचारे विप्रतिपत्तिवाक्योपयोग इति भावः । *ननु*—वादिनोः स्व-स्वकोटिनिश्चयकाले तत्संशयोत्पादानुपपत्तिः, अत आह—*तादृशेति* ॥ विचाराङ्गेत्यर्थः । *स्वरूपयोग्यत्वात्=कारणत्वात् । प्राचीनमते विप्रतिपत्ति-

न्यायामृतसौगन्ध्यम्

नच—अन्यदीयसंशयस्य पक्षत्वाप्रयोजकत्वेनानुमानाङ्गत्वं नेति—वाच्यम् ; अन्यदीयसंशयस्यानुमानानङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वमस्त्येव, वाद्यादिषु संशयं प्रति विप्रतिपत्तेर्निश्चयादिना प्रतिबन्धादजनकत्वेऽपि स्वरूपयोग्यत्वात्, समयबन्धादिवत् स्वकर्तव्यनिर्वाहाय मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीयैव ; वाद्यादीनां निश्चयवत्त्वनियमाभावाच्च, "निश्चितौ हि वादं कुरुतः" इत्याभिमानिकनिश्चयाभिप्रायम्, परपक्षमालम्ब्याहङ्कारिणो विपरीतनिश्चयवतो जल्पादौ प्रवृत्तिदर्शनादिति—चेत्, *न* ; वाद्यादीनां विशेषदर्शनवत्त्वध्रौव्येण क्वचिदपि वाद्यादिनिष्ठसंशयानुपहितत्वेन तादृशसंशयं प्रति तस्याः स्वरूपयोग्यत्वस्याप्यकल्पनात्, क्वचित् फलोपहितजातीयस्यैव स्वरूपयोग्यत्वात्, वाद्यादीनां निश्चयवत्त्वस्य कथातः पूर्वं समविद्यत्वज्ञापकपरीक्षादिना सिद्धत्वात्, अहङ्कारिणः परपक्षमालम्ब्य

सिद्धिव्याख्या

नच—व्युदसनीयतया विचाराङ्गस्यापि पारिषद्येषु संशयस्य विप्रतिपत्तिं विनापि वादि-प्रतिवादिसंघर्षादिना कोट्युपस्थितौ विशेषादर्शने सति संभवेन विप्रतिपत्तिवाक्यमनावश्यकमिति—वाच्यम् ; विप्रतिपत्तिवाक्यादेव तत्संभवे वादि-प्रतिवादिसंघर्षकोट्युपस्थिति-विशेषादर्शनानामनेकेषां हेतुत्वकल्पने गौरवादिति भावः । *यद्वा* संशयस्य पक्षतासंपादकतयोपयोगे सति तद्द्वारा तज्जनकविप्रतिपत्तेरप्युपयोगादनुमित्यङ्गत्वमस्त्येव । नच—अन्यदीयसंशयस्य पक्षताऽप्रयोजकत्वाद् वाद्यादेश्च संशयाभावात् कथं संदिग्धसाध्यवत्त्वं पक्षत्वमिति पक्षेऽपि विप्रतिपत्तेरुपयोग इति—वाच्यम् ; पक्षत्वप्रयोजकवाद्यादिसंशयं प्रति विप्रतिपत्तेः क्वचिद् निश्चयादिना प्रतिबन्धादजनकत्वेऽपि जनकतास्वरूपयोग्यतानपायादित्याह—*तादृशेति* ॥ पक्षत्वप्रयोजकवाद्यादिसंशयं प्रतीत्यर्थः । वाद्यादीनां विशेषदर्शनवत्त्वध्रौव्येण विप्रतिपत्तेः क्वचिदपि वाद्यादिनिष्ठसंशयानुपहितत्वेन तादृशसंशयं प्रति तस्याः स्वरूपयोग्यत्वं

विट्ठलेशीयटिप्पणी

*व्युदसनीयेति* ॥ *कारणत्वादिति* ॥ एवं चाजनकत्वेऽपीत्यस्यानुपधायकत्वेऽपीत्यर्थः । प्रत्यक्षरूपसंशये कथं विप्रतिपत्तिः कारणम् ? अत आह—*प्राचीनेति*॥ *ननु* क्वचिदपि फलानुपधाने कथं स्वरूपयोग्यतापीति ? अत आह

अद्वैतसिद्धिः

जनकत्वेऽपि स्वरूपयोग्यत्वात्, बाधादीनां च निश्चयवत्त्वे नियमाभावात्। "निश्चितौ हि वादं कुरुतः" इत्याभिमानिकनिश्चयाभिप्रायम्; परपक्षमालम्ब्याप्यहङ्कारिणो विपरीतनिश्चयवतो जल्पादौ

तरङ्गिणी

जनकत्वेऽपि स्वरूपयोग्यत्वात्, बाधादीनां निश्चयवत्त्वनियमाभावात्। "निश्चितौ हि वादं कुरुतः" इत्याभि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वाक्यस्य शाब्दधीरूपसंशयोत्पादकत्वस्वीकारात्। प्रत्यक्षस्यैव-संशयत्वमिति मते तु कारणीभूतकोटिद्वयोपस्थितिहेतुपदघटितत्वादित्यर्थः। तथाच वादिनोर्निश्चयकाले संशयानुत्पत्तावपि संशयकारणत्वादिरूपेण ज्ञाता विप्रतिपत्तिः संशयं स्मारयति; ययोः सम्बन्धः पूर्वं गृहीतः, तयोरेकज्ञानस्यापरस्मारकत्वात्। तथाच तत्रैव तथा तस्या उपयोग इति भावः। 'आभिमानिकनिश्चयाभिप्रायमि'ति निश्चयवानस्मीति ज्ञापयन्तौ विवदेते इत्यर्थकम्। तथाच वादिनोर्निश्चयकाले सभापत्यादीनां संशयाभावमुद्दिश्य विचारे प्रवृत्तिरिति भावः।

न्यायामृतकण्टकोद्धारः

त्वेऽपि स्वरूपयोग्यत्वात्, बाधादीनां निश्चयवत्त्वनियमाभावात्। "निश्चितौ हि वादं कुरुतः" इत्याभिमानिकनिश्चयाभिप्रायम्; परपक्षमालम्ब्याप्यहङ्कारिणो विपरीतनिश्चयवतो जल्पादौ प्रवृत्तिदर्शनात्। तस्मात्समयबन्धादिवत् स्वकर्तव्यनिर्वाहाय मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीयैव"—इति, *तन्न*; विप्रतिपत्तिजन्यसंशयस्य व्युदसनीयतया तज्जनकवाक्यस्य यथाऽऽवश्यकता, तथाऽज्ञान-विपर्यययोरपि व्युदसनीयतया तज्जनकवाक्यस्यापि विप्रतिपत्तिवाक्यवद् विचाराङ्गत्वापत्तेः; अन्यथैतस्यापि विचाराङ्गता न स्यात्। यच्चोक्तम्—विप्रतिपत्तेर्व्युदसनीयसंशयं प्रति प्रतिबन्धादिनाऽजनकत्वेऽपि स्वरूपयोग्यत्वादङ्गत्वमिति, तन्न; तादृशसंशयं प्रति साधारणधर्मादीनामपि स्वरूपयोग्यतया तत्प्रतिपादकवाक्यस्यापि विचाराङ्गता स्यात्॥

सिद्धिव्याख्या

कल्पयितुमप्यशक्यम्; क्वचित्फलोपहितजातीयस्यैव स्वरूपयोग्यत्वादित्याशङ्क्याह—*बाधादीनां चेति*॥ तथाच बाधादिष्वेव क्वचिद् विशेषादर्शनवत्सु संशये सिद्धे तेष्विवान्यत्र तद्रहितेष्वपि संशयजननस्वरूपयोग्यत्वमस्त्येव। क्वचित्फलोपहितजातीयस्यैव स्वरूपयोग्यत्वमिति स्वयैवोक्तत्वादिति ध्येयम्। *ननु*—बाधादीनां विशेषदर्शनवत्त्वनियमे "निश्चितौ हि वादं कुरुतः" इत्यस्यैव मानत्वाद् न तेषां संशय इत्याशङ्क्याह—*निश्चितौ हीति*॥ वादकरणोत्तरकालीनत्वात् तन्निश्चयवत्त्वस्येत्यर्थः। *ननु*—बाधादीनां निश्चयवत्त्वं विचारात् पूर्वं समर्थितत्वबोधकपरीक्षादिना सिद्धम्, इत्याशङ्क्याह—*परपक्षमालम्ब्येति*। तत्र च जल्पादौ प्रवृत्त्यन्यथानुपपत्त्या बाधादीनां कथातः पूर्वं निश्चयवत्त्वं नास्त्येव; अन्यथा जल्पादौ प्रवृत्त्यभावापत्तेः। नच—अहङ्कारिणः परपक्षमालम्ब्य ख्यात्याद्यर्थं जल्पादिप्रवृत्तिः संभवतीति—वाच्यम्; एवं जल्पकथायां प्रवृत्तिसंभवेऽपि कथातः पूर्वं तत्त्वनिश्चये

त्रिवुलेशीयटिप्पणी

मूले—*बाधादीनां चेति*॥ *ननु* एवं "निश्चितौ हि वादं कुरुतः" इति प्रवादविरोध इत्यत आह—*निश्चितौ हीति*॥ परपक्षमिति*॥ शब्दानित्यताभ्युपेतुर्नैयायिकस्यापि कदाचित् स्वोत्कटताख्यापनार्थं शब्दनित्यत्वव्यवस्थापने प्रवृत्तिसंभवादिति भावः। *ननु* आभिमानिकत्वं भ्रमत्वम्, तथाच तादृशनिश्चयेनापि निश्चयवत्त्वनियमोऽव्याहत एवेत्यतोऽन्यथा व्याचष्टे—*आभिमानिकेति*॥ निश्चयवानिति*॥ वस्तुतो निश्चयशून्यावपीत्यादिः। *ननु* यत्र यदा वादिनोस्तत्तत्कोटिनिश्चयः, तदा तयोः संशयाभावस्य सिद्धतया तदुद्देशेन विचारे प्रवृत्त्यसंभवादुक्तरीत्या विप्रतिपत्तिवाक्योपयोगः सर्वत्र न घटत इत्याशङ्क्य,'बाधादीनामि'त्यादिपदसूचितं भावमाह—*तथाचेति*॥ विशेषणज्ञानस्येति*॥ नच—एवमपि संशयाभावज्ञाने प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानमुद्रया संशयज्ञानोपयोगो दुर्वार इति—वाच्यम्; व्यधिकरणधर्मावच्छिन्नाभाववादिनां वेदान्तिनां तादृशकारणताया अनभ्युपगमात्संभवादिति

**अद्वैतसिद्धिः**

प्रवृत्तिदर्शनात् । तस्मात् समयबन्धादिवत् स्वकर्तव्यनिर्वाहाय मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीयैव ॥

**तरङ्गिणी**

मानिकनिश्चयाभिप्रायम् ; परपक्षमालम्ब्याप्यहङ्कारिणो विपरीतनिश्चयवतो जल्पादौ प्रवृत्तिदर्शनात् तस्मात् समयबन्धादिवत्स्वकर्तव्यनिर्वाहाय मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीयैव—इति, *उच्यते* ; वाद्यादीनां निश्चयवत्त्वध्रौव्येण विप्रतिपत्तेः क्वचिदपि वाद्यादिनिष्ठसंशयानुपधायकत्वेन तादृशसंशयं प्रति तस्याः स्वरूपयोग्यत्वस्याप्यकल्पनात्, क्वचित् फलोपहितजातीयस्यैव स्वरूपयोग्यत्वात्, वाद्यादीनां निश्चयवत्त्वस्य कथातः पूर्वं सम-

**न्यायामृतकण्टकोद्धारः**

यच्चोक्तं वाद्यादीनां निश्चयवत्त्वनियमो नास्ति ; परपक्षपरिग्रहणेनापि विपरीतनिश्चयवतो जल्पादौ प्रवृत्तिदर्शनादिति, तदपि न ; अत्र हि संशयविरोधिनिश्चयो विवक्षितः, स त्वन्वयनिश्चयो

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*ननु*—विशेषणज्ञानस्य विशिष्टबुद्ध्यहेतुत्वमते नोक्तरीत्या विप्रतिपत्तिरुपयुज्यत इति—चेत्, *सत्यम्*; तथापि स्वस्य परस्य वा संशयाभाववत्त्वे निश्चिते तत्र सिद्धत्वज्ञानाद् न तदुद्देशेन प्रवृत्तिः, अतः संशयाभाववत्त्वनिश्चयविरोधिनी संशयवत्त्वधीरपेक्ष्यत एव ॥

*ननु*—वादिनोरन्येषां च सभास्थानां निश्चये वादिभ्यां निश्चिते संशयाभावमुद्दिश्य न विचारे तयोः प्रवृत्तिः, किन्तु विजयादिकमुद्दिश्य ; तत्र च विप्रतिपत्तिर्नोपयुज्यते, अत आह—*तस्मादिति* ॥ स्वकर्तव्येति* ॥ उक्तस्थले तात्कालिके संशयाभावे निश्चितेऽपि निश्चयजन्यसंस्कारस्य कालान्तर

**न्यायामृतसौगन्ध्यम्**

ख्यात्याद्यर्थं जल्पादौ प्रवृत्तिसंभवाच्च । व्युदसनीयतया विचाराङ्गत्वेऽपि पारिषद्येषु संशयस्य विप्रतिपत्तिं विनाऽपि वादि-प्रतिवादिसंनाहादिना कोट्युपस्थितौ विशेषादर्शने सति संभवेन विप्रतिपत्तिवाक्यस्यानावश्यकत्वात् ॥

*यत्तु* स्वस्य परस्य वा संशयाभाववत्त्वे निश्चिते वादिनोस्तत्र सिद्धत्वज्ञानाद् न तदुद्देशेन प्रवृत्तिः ; अतः संशयाभाववत्त्वनिश्चयविरोधिनी संशयवत्त्वधीरपेक्ष्यत एवेति, *तन्न* ; वादिभ्यां स्वस्य सभास्थानां च संशयाभाववत्त्वे निश्चिते संशयाभावमुद्दिश्य नहि विचारे तयोः प्रवृत्तिः, किन्तु जयादिकमुद्दिश्य । तत्र च विप्रतिपत्तिर्नोपयुज्यत एव । *एतेन* उक्तस्थले तात्कालिकसंशयाभाववत्त्वे निश्चितेऽपि निश्चयजन्य-

**सिद्धिव्याख्या**

वादरूपकथायां प्रवृत्त्यभावापत्तेः । तत्त्वबुभुत्सोः कथाया एव वादत्वेन तत्प्रवृत्त्यनन्तरभावितत्त्वनिर्णयस्य प्रागेव जातत्वेन पुनस्तत्त्वबुभुत्साया एवायोगादिति भावः । साधितं विप्रतिपत्तेरवश्यप्रदर्शनीयत्वमुपसंहरति—*तस्मादिति ॥

**विट्ठलेशीयटिप्पणी**

भावः । *तथापि=फलघटकविशेषणज्ञानद्वारा तस्याः फलेच्छां प्रत्युपयोगित्वाभावेऽपि । *संशयवत्त्वधीरिति* ॥ विप्रतिपत्तेः संशयेनेव तद्वारा संशयवतापि संबन्धसत्त्वात् तत्स्मारकत्वमक्षतमिति भावः । *अपेक्ष्यत एवेति* ॥ फले सिद्धत्वज्ञानविघटनद्वारा फलेच्छाजनन इति शेषः । उक्तोपयोगस्य क्वचिदसंभवशङ्कावारकतयोपसंहारमवतारयति—*नन्विति* ॥ 'विजयादिकमि'त्यादिना सभ्यरञ्जनपरिग्रहः । 'समयबन्धादी'त्यादिपदार्थं विवृणोति—*यथा वेति* ॥ *ननु*उक्तव्यवस्थापनम्—'त्वयेदं साधनीयम्' 'अनेनेदं दूषणीयम्' इत्यादिमध्यस्थवाक्यादपि भवेत्, किं विप्रतिपत्त्या ? इत्याशङ्क्य, सार्वदिकसंशयाभावप्रयोजकसंस्कारदार्ढ्यस्य तद्वाक्यासाध्यतयोक्तफलद्वयस्य विप्रतिपत्तिसाध्यतैवेत्यभिप्रायेणोक्तोपयोगद्वयस्य मूलाक्षरार्थतां स्फुटयन् स्वयमप्युपसंहरति—*तस्मादिति* ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उच्छेदशङ्कया संशयोत्पत्तिसम्भवज्ञानेन तदापि संशयाभावोऽनुवर्ततामितीच्छायाः संभवाद् न विजयादिकमात्रमुद्दिश्य प्रवृत्तिः। किंच यथा समयबन्ध एतन्मतमवलम्ब्यैव युवाभ्यां विचारणीयमित्याकारको

### न्यायामृतसौगन्ध्यम्

**संस्कारस्य कालान्तर उच्छेदशङ्कया संशयोत्पत्तिसंभवज्ञानेन तदापि संशयाभावोऽनुवर्ततामितीच्छायास्संभवाद् न विजयादिकमात्रमुद्दिश्य प्रवृत्तिरिति—निरस्तम्; तादृशशङ्काया बीजाभावात्, निर्बीजशङ्कायास्सर्वत्र संभवात् ॥**

### सौगन्ध्यविमर्शः

(१) निश्चयो हि प्राथमिकः श्रवणमात्राधीनो दृढ एव भवतीति नायं नियमः, अन्यथा मननविधिवैयर्थ्यात्, अतः संस्कारदार्ढ्येन सर्वदा संशयाभावोऽनुवर्ततामितीच्छया संशयं विप्रतिपत्तिवाक्याधीनं गृहीत्वापि विचारे प्रवृत्तिसंभवाद्विप्रतिपत्तिवाक्यं नानुपयुक्तम् ॥

अयं भावः—प्रपञ्चमिथ्यात्वविचारो निर्णीतश्रुत्यर्थानाम्? उतानिर्णीतश्रुत्यर्थानाम्। आद्येऽपि स्वार्थमेव ? उत परार्थम् ? यदि स्वार्थम्, तर्हि विचारवैयर्थ्यम्, यदि परार्थम्, तर्हि यदि तेऽपि निर्णीतश्रुत्यर्थाः, तर्हि तद्दोषतादवस्थ्यम्, यद्यन्यथा, तर्हि तु सभापत्यादीनां संशयजननेन विप्रतिपत्तिसार्थक्यमपरिहरणीयम्। विप्रतिपत्तिप्रयोजनं हि न वक्तृसन्देहमात्रम्, किन्तु श्रोतृसन्देहोऽपि। तदुक्तं वार्तिके—"विप्रतिपत्तेरित्ययं वक्तृगतः संशयहेतुः। केऽत्र सम्यक् प्रतिपन्नाः ? के मिथ्येति श्रोतुः सन्देहो भवति, एतावता पृथगभिधानमि"ति। तथात्र प्रपञ्चमिथ्यात्वाभावो द्वैताभिमतो यदि सर्वनिर्णीतः, तर्हि सत्यं विप्रतिपत्तिवैयर्थ्यम्, परं तु नेयं वस्तुस्थितिः; तत्त्वबुभुत्सुवादि-प्रतिवादिनोरुभयोरपि द्वैताद्वैतवादिनोः स्वस्वपक्षाभिमानिनोस्तत्त्वबुभुत्सयैव मननविधिमूलकस्यास्य विचारस्य प्रवर्तनादुभयोरपि संशय एवास्तीति न प्रकृते विप्रतिपत्तेरनुपयोगः। तथाच वादात्मकत्वे विचारस्य विप्रतिपत्तेरुपयोगस्योभयसंमतत्वात्, जल्पात्मकत्वेऽपि केऽत्र सम्यक् प्रतिपन्नाः, के मिथ्येति संशयजनकत्वेन तदुपयोगात्, वितण्डात्मकत्वेऽपि सिद्धिव्याख्योक्तरीत्या कथाशरीरनिर्वर्तकत्वेन विप्रतिपत्तेरावश्यकत्वाद् विप्रतिपत्त्यनुपयोगवर्णनमिदं लघुचन्द्रिकाभावानवबोधनिबन्धनमिति बोध्यम्। परमार्थतस्तु—विप्रतिपत्तेरेव प्रकृतानुमाने पक्षतावच्छेदकत्वस्य वक्ष्यमाणत्वादनुमानापेक्षितपक्षतावच्छेदकसमर्पकतया तदुपयोग इति न दोषलेशोऽपि ॥

### सिद्धिव्याख्या

***केचित्तु* वस्तुत इत्याद्यनुपपन्नम्; विवादाङ्गसंशयबीजत्वेन विप्रतिपत्तेरावश्यकत्वात्, उक्तरीत्या वादिप्रतिवादिनोः प्राश्निकानां च स्वस्वपक्षनिर्णयरहितत्वेन स्वारसिकसंशयसंभवेन विप्रतिपत्तिवाक्यस्य तादृशसंशयबीजत्वसंभवात्। तादृशसंशयस्यैव कथायां प्रवृत्तिविवादजन्यनिर्णयनिवर्त्यत्वेन तदङ्गत्वस्य च वक्तव्यत्वेनात. दृशस्य तस्यास्तथात्वात्। किंच कथकसंप्रदायानुरोधेनापि विप्रतिपत्तिवाक्यप्रदर्शनमावश्यकम्; अन्यथा संप्रदायविरोधात्। नच—कथकसंप्रदायानुरोधित्वेऽपि विप्रतिपत्तिवाक्यप्रदर्शनस्य निर्मूलतयाऽन्धपरम्परात्व एव पर्यवसानमिति—वाच्यम्; शिष्टाचारवत् कथकसंप्रदायस्यापि यत्किंचिन्मूलानुमापकतयाऽन्धपरम्परात्वे पर्यवसानाभावात्, अन्यथा शिष्टाचारस्यापि मूलाननुमापकत्वापत्त्या शिष्टाचारपरिप्राप्तमङ्गलाचरणादेरप्यन्धपरम्परात्व एव पर्यवसानापत्तेः। किंच विप्रतिपत्तिर्नोपयुज्यत इत्यनेन किमभिप्रेतम्—किं विप्रतिपत्तेः संशयजनकत्वं नास्तीति ? किं वा तज्जन्यसंशयो नानुमानाङ्गमिति ? आहोस्वित् तथाङ्गं न भवतीति ? नाद्यः; साधारणधर्मासाधारणधर्माभ्यां विप्रतिपत्तेश्च तदुद्भवस्वीकारात्, न द्वितीयः; पर्वते वह्निरस्ति नास्तीति विरुद्धार्थप्रतिपादकवाक्यद्वयं श्रुतवतो वह्निसंदेहात् पर्वते वह्न्यनुमानदर्शनात्। नच—विप्रतिपत्तेर्विशेषदर्शनरहिते संशयजनकत्वेऽपि तद्वति तदननुभवेन कथमनुमानाङ्गत्वम्? अङ्गत्वस्य कारणविशेषत्वेन सति व्यभिचारे तत्त्वानुपपत्तेरिति—वाच्यम्; विशेषदर्शनवतामनुमानानुदयेन तद्रहितेष्वेव तदुदये सति तद्धेतुसंशयस्यावश्यकत्वेन व्यभिचारानवकाशेन तत्त्वोपपत्तेः। अत एवाभ्यां विप्रतिपत्तिरचनापूर्वकं वादः कर्तव्य इति समयबन्धेनापि कथाप्रवृत्तिसंभवेन तस्याः सार्वत्रिकत्वोपपत्तिः। नच—तां विना वादकरणे**

न्यायामृतकण्टकोद्धारः

**वा, व्यतिरेकनिश्चयो वा। तत्राभिमानिकप्रवृत्तिस्थले यद्यपि वाद्यादीनामन्वयनिश्चयो नास्ति; तथापि व्यतिरेकनिश्चयोऽस्त्येव, प्रवृत्तिस्त्वसद्दूषणासत्साधनावलम्बनेन कथाप्रवृत्तिवदुपपद्यते। एवं हि "निश्चितौ हि वादं कुरुतः" इति यथास्थिताभिप्रायम्। यच्चोक्तं समयबन्धादिवत् स्वकर्तव्यतया**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मध्यस्थेन क्रियते; अन्यथा वादिनोर्मतान्तरप्रवेशोऽव्यवस्थापत्तेः, यथा वा वादिनौ परीक्ष्येते, अन्यथा मूर्खस्य विचारे मध्यस्थस्यैव हास्यत्वापत्तेः; तथा विप्रतिपत्तिरपि मध्यस्थेन कार्यैव; अन्यथा प्रासङ्गिकविषयमादाय वादिनोरेकस्य जयस्वीकारापत्त्या प्रकृतविषये तयोर्जय-पराजयव्यवस्थापनरूपस्य मध्यस्थकर्तव्यस्यानिर्वाहात्।

न्यायामृतसौगन्ध्यम्

***यत्तु*—समयबन्ध एतन्मतमालम्ब्यैव युवाभ्यां विचारणीयमित्याकारो मध्यस्थेन क्रियते; अन्यथा वादिनोर्मतान्तरे प्रवेशोऽव्यवस्थापत्तेः, यथा वा वादिनौ परीक्ष्येते; अन्यथा मूर्खस्य विचारे मध्यस्थस्यैव हन्त हास्यतापत्तेः, तथा विप्रतिपत्तिरपि मध्यस्थेन कार्यैव; अन्यथाऽन्यप्रासङ्गिकविषयमादाय वादिनोरेव जयस्वीकारापत्त्या प्रकृतविषये तयोर्जय-पराजयव्यवस्थापनरूपस्य मध्यस्थकर्तव्यस्या-**

सिद्धिव्याख्या

प्रत्यवायाभावाद् न तन्नियम इति—वाच्यम्; तथात्वे स्वस्वाभिमतपक्षनिर्णयाभावेन पारिषद्यादीनां वाद्यादिष्व-विश्वासप्रसङ्गेन तत्परिहाराय तथैव वादकरणस्यावश्यकत्वेन तन्नियमात्, न तृतीयः; विप्रतिपत्तेर्वादि-प्रतिवादिनियम-हेतुत्वेन कथाङ्गत्वात्॥

*तथाहि*—विचारविषये नानाकर्तृकवाक्यविस्तारात्मककथाया निरूप्य-निरूपकनियमः, वादि-प्रतिवादि-नियमः, सभ्यानुविधेयसंवरणम्, निग्रहसामर्थ्यासामर्थ्यं चेत्याद्यङ्गानि तावत् कथकैः स्वीकृतानि। तत्र विप्रति-पत्तिर्नाम विवादः; विवदमानयोरेव वादि-प्रतिवादिभावो नान्ययोः, इति वादि-प्रतिवादिनियमस्य विप्रतिपत्ति-सापेक्षत्वात्। तथाच निरूप्य-निरूपकनियम-सभ्यानुविधेयसंवरणवद् निग्रहसामर्थ्यासामर्थ्योद्भावनवच्च वादि-प्रतिवादि-नियमस्यापि कथाङ्गत्वे विवादापरनामकविप्रतिपत्तिं विना वादि-प्रतिवादिनियमानिरूपणात् तत्प्रयोजकतया कथायां विप्रतिपत्तिप्रदर्शनमावश्यकमिति। नच—विप्रतिपत्तिवाक्यस्य मध्यस्थमात्रकर्तव्यत्वेन तदादाय वादि-प्रतिवादि-भावस्यैवाभाव इति—वाच्यम्; पारिषद्यानामविश्वासपरिहारायान्योन्यमवलम्ब्यमानपक्षनिर्णयस्यावश्यकतया तदर्थं वादि-प्रतिवादिभ्यामपि विप्रतिपत्तेः प्रदर्शयितुं शक्यत्वेन मध्यस्थमात्रकर्तव्यत्वायोगात्। नच—शब्दः, अनित्यः, कृतकत्वात्; घटवदिति, शब्दः, नित्यः, व्योमैकगुणत्वात्, तत्परिमाणवदिति तत्कृतपरस्परबोधानुकूलन्यायवाक्ययोः प्रविष्टस्य परस्परविरुद्धप्रतिज्ञावाक्यस्यैव विवादरूपत्वेन तदादाय वादि-प्रतिवादिभावोपपत्तिरिति—वाच्यम्; अनु-मानाङ्गसंशयजनकतया विप्रतिपत्तेरावश्यकतया तत एव वादि-प्रतिवादिभावोपपत्तौ तदधीनप्रतिज्ञावाक्यस्यापि विवाद-रूपतया तदादाय वादि प्रतिवादिभावोपपत्तिकल्पने गौरवात्। किंचोक्तरूपकथायां सभ्यानुविधेयवाक्यवद् विप्रतिपत्ति-वाक्यस्याप्यङ्गत्वानुरोधेन कथान्तर्भावात्, प्रोक्षणावघातादीनां यागशरीरनिर्वर्तकत्वेन यागाङ्गत्ववत् सभ्यानुविधेयवाक्य-विप्रतिपत्तिवाक्ययोरपि नानाकर्तृकवाक्यविस्ताररूपकथाशरीरनिर्वर्तकत्वेन कथाङ्गत्वमविरुद्धम्। नच—सभ्यानुविधेय-वाक्यस्यापि कथामात्रसत्त्वनियमाभावेन तद्दृष्टान्तेन विप्रतिपत्तिवाक्यस्यापि कथान्तर्भावेण तदङ्गत्वसाधनमनुपपन्नम्, नहि तत्त्वनिर्णिनीषुकथायां सभ्यानुविधेयवाक्यस्यावकाशोऽस्ति, तत्कथाया गुरु-शिष्यसप्रमाणकवाक्यमात्रात्मकत्वा-दिति—वाच्यम्; एवमपि जल्पकथायां सभ्यानुविधेयवाक्यस्यावकाशसंभवेन तद्दृष्टान्तेन विप्रतिपत्तिवाक्यस्य कथान्तर्भावेण तदङ्गत्वसाधनोपपत्तेः। नहि कथात्वावच्छिन्नकथाङ्गत्वेन विप्रतिपत्तिरस्माभिरभिधीयते, किंतु कथैक-देशाङ्गत्वेन। तदभिहितम्—*वाद-जल्प-वितण्डानामन्यतमां कथामाश्रित्येति*। नच—प्रोक्षणावघातादीनां यागशरीर-निर्वर्तकत्वेन यागाङ्गत्ववद् विप्रतिपत्तेः कथाशरीरनिर्वर्तकत्वेन तदङ्गत्वं न युक्तम्; तत्र प्रमाणेन यागशरीरस्य निर्णीतत्वे

### तरङ्गिणी

विद्वत्वज्ञापकपरीक्षादिना सिद्धत्वात्, अहङ्कारिणः परपक्षमालम्ब्य ख्यात्याद्यर्थं जल्पादिप्रवृत्तिसम्भवाच्च । न्युदसनीयतया विचाराङ्गस्यापि पारिषद्येषु संशयस्य विप्रतिपत्तिं विनाऽपि वादि-प्रतिवादिसन्नाहादिना कोट्युपस्थितौ विशेषादर्शने सति सम्भवेन विप्रतिपत्तिवाक्यस्यानावश्यकत्वादित्यभिप्रायः ॥

### न्यायामृतकण्टकोद्धारः

**विप्रतिपत्तिवचनमावश्यकमिति, तन्न ; समयबन्धादेः कथोपयुक्तत्ववदस्य तदुपयोगादर्शनात् स्वकर्तव्यत्वाभावात्, समयबन्धाभावे कथाव्यवस्था न भवति, विप्रतिपत्त्यभावेऽपि तु कथाव्यवस्था भवतीति । तस्माद् विप्रतिपत्तिर्नावश्यकीति साधूक्तम्—विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैवेति ॥**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विप्रतिपत्तौ कृतायां तु सभास्थैस्तच्छ्रवणात् तद्विषयकोटी अपलप्य प्रासङ्गिकविषयान्तरं न वादिभ्यामवलम्ब्य विजयः स्वीकर्तुं शक्यते । तस्मात् सार्वकालिकसंशयाभावप्रयोजकसंस्कारदार्ढ्यस्योक्तव्यवस्थापनस्य च स्वकर्तव्यस्य निर्वाहाय मध्यस्थेन विप्रतिपत्तिः कार्यैवेति भावः ॥

### न्यायामृतसौगन्ध्यम्

**निर्वाहात्, विप्रतिपत्तौ कृतायां तु सभास्थैस्तच्छ्रवणाद् विप्रतिपत्तिविषयकोटी अपलप्य प्रासङ्गिकविषयान्तरं न वादिभ्यामवलम्ब्य विजयः स्वीकर्तुं शक्यते । तस्मात् सार्वकालिकसंशयाभावप्रयोजकसंस्कारदार्ढ्यस्योक्तव्यवस्थापनस्य च कर्तव्यस्य निर्वाहाय मध्यस्थेन विप्रतिपत्तिः कार्यैवेति, *तन्न* ; समयबन्धस्य विजिगीषोः कथायामङ्गत्वेन प्रदर्शनीयत्वेऽपि संशयस्य तद्धेतुविप्रतिपत्तेश्च तदनङ्गत्वेन प्रदर्शनीयत्वाभावात्, प्रासङ्गिकविषयादानेन जयादिस्वीकारापत्तेर्मध्यस्थपरिकल्पितविषयस्वीकारेणैव निरस्तत्वात् ॥**

### सौगन्ध्यविमर्शः

किञ्च विप्रतिपत्तिप्रदर्शनानावश्यकत्वमिदं किमद्वैतमतनिरासार्थम् ? उत नैयायिकमतनिरासार्थम् ? आद्येऽद्वैतिनां विप्रतिपत्तिप्रदर्शनस्य तार्किकमताभिप्रायत्वस्य न्यायामृत एव वर्णनाद् नोपपत्तिः, अन्त्ये तु नैयायिकमतनिरसनमिदम्, नाद्वैतमतनिरसनम् । द्वैतिन इव नैयायिका अपि हि प्रतिवादिन एव । अत एव—मिथ्यात्वलक्षणे 'सर्वत्र'पदसार्थक्यमित्याद्यन्यत्र विस्तृतम् । तथाच द्वैतिनोऽपि यदि नैयायिकविरोधिनोऽत्र विषये, तर्हि तु सुहृद एव । यदि तु तदनुसारिणः, तर्हि तु विप्रतिपत्तिप्रदर्शनानावश्यकत्ववर्णनमसांप्रतम् । सिद्धिकाराणां चन्द्रिकाकाराणां च विप्रतिपत्त्युपयोगसमर्थनं तु नैयायिकमतेनैवेति न कोऽपि विरोधः । यथा हि न्यायामृतव्याख्यातारः सर्व एव तत्तन्मतनिरसनपूर्वकमद्वैत्यभिमतानि पक्षतावच्छेदकदलप्रयोजनानि व्याख्यान्तरनिरासपूर्वकं समर्थयन्ति, एवमेव सिद्धिकारादयोऽपि नैयायिकमतमेवात्र समर्थयन्ति, इति तु तत्त्वम् ॥

### सिद्धिव्याख्या

**प्रोक्षणादीनां तन्निर्वर्तकत्वेन तदङ्गत्वं श्रुत्यादिप्रमाणैस्तज्ज्ञानम्, इति तदङ्गत्वे विवादाभावेऽपि प्रकृतकथाशरीरैयत्तायामेव मानाभावेन विप्रतिपत्तेः "कथाबाह्येन निग्रहानर्हेण लौकिकरीत्यनुसारिणे"त्याद्युक्तप्रकारेण कृतकार्यतयाऽनावश्यकत्वेन तच्छरीरनिर्वर्तकत्वस्येहायोगेनाङ्गत्व एव विवादात् तदयुक्तमिति—वाच्यम् ; कथकसंप्रदायानुमितप्रमाणस्यैव कथाशरीरैयत्तायां मानत्वेन ततः कथाशरीरत्वे सिद्धे तस्याः शरीरभूताया विप्रतिपत्तेरावश्यकत्वेन तच्छरीरनिर्वर्तकत्वस्य संभवेनाङ्गत्वे विवादाभावात् । नच—अन्वारम्भणीयाया नियतसमयकर्तव्यत्वेऽपि दर्श-पूर्णमासाङ्गत्ववद् नियतसमयकर्तव्याया विप्रतिपत्तेरपि नाङ्गत्वमिति—वाच्यम् ; तस्यास्तदङ्गत्वबोधकप्रमाणाभावेनाङ्गत्वाभावेऽपि प्रकृतेऽङ्गत्वबोधकप्रमाणानुसारेणाङ्गत्वसंभवादित्याहुः ॥**

*अपरेतु*—पक्षतावच्छेदकपुरस्कारं विना परार्थानुमाने पक्षनिर्देशायोगात् तदावश्यकत्वे सिद्धे विप्रतिपत्तेश्चानुमानमात्रे पक्षतावच्छेदकत्वाद् न तदावश्यकत्वहानिरिति ; तन्न ; वर्णात्मकः शब्दो नित्यः, अन्धकारस्वं भाववृत्ती'-त्यादिप्रकारेणापि पक्षनिर्देशदर्शनेन सर्वत्र परार्थानुमाने विप्रतिपत्तेः पक्षतावच्छेदकत्वस्यासंभवात् ॥

### अद्वैतसिद्धिः

तत्र मिथ्यात्वे विप्रतिपत्तिः—ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

(१) *प्रतिपन्नेत्यादि* ॥ स्वसम्बन्धितया ज्ञाते सर्वत्र धर्मिणि *त्रैकालिकस्य=सर्वदा विद्यमानस्य *निषेधस्य=अत्यन्ताभावस्य प्रतियोगि ? न वा ? येन सम्बन्धेन यद्रूपविशिष्टसम्बन्धितया यद् ज्ञातम्, तत्सम्बन्धतद्रूपावच्छिन्नं तन्निष्ठोक्ताभावस्य प्रतियोगित्वं निवेश्यम् ; अन्यथा सम्बन्धान्तर-रूपान्तरावच्छिन्नमुक्त-प्रतियोगित्वमादाय सिद्धसाध्यतापत्तेः ॥

स्वपदं रजतत्वादिविशिष्टपरम् ; नव्यमते स्वत्वस्याननुगतत्वात् तत्तद्व्यक्तिपरत्वे व्यक्तिभेदेन मिथ्यात्वस्य भेदापत्तेः । तथाच रजततादात्म्येन ज्ञायमानं यच्छुक्त्यादिकम्, तन्निष्ठाभावीयं यद् रजतत्व-तादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वम्, तस्य प्रातीतिक इव व्यावहारिकेऽपि रजते सत्त्वात् तत्र सिद्धसाधन-वारणाय 'सर्वत्रे'त्युक्तम् । कालिकाव्याप्यवृत्तिमदत्यन्ताभावमादायार्थान्तरापत्तेः—'त्रैकालिके'त्युक्तम् । यद्यप्यत्यन्ताभावस्यैव प्रतियोगिता भेदसहिष्णुना तादात्म्येनावच्छिन्ना, नतु भेदस्य ; तादृशतादात्म्यस्य भेदा-विरोधित्वात्, भेदासहिष्णु च तादात्म्यं नास्त्येव ; अत्यन्ताभेदे तादात्म्यादिसंबन्धासम्भवात्, तथापि प्रकृता-नुमानात् तादात्म्यावच्छिन्नभेदप्रतियोगितासिद्धिमादायार्थान्तरं स्यात्, अतः—'अत्यन्ताभावे'त्युक्तम् । संसर्गा-

### सिद्धिव्याख्या

*तत्रेति* ॥ मिथ्यात्वकथायामित्यर्थः । विप्रतिपत्तिरित्यस्यान्तिमशब्देनान्वयः । विप्रतिपत्तिस्वरूपमाह—*ब्रह्मप्रमेति* ॥ अनुमानफलं पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरित्येकं मतम् । पक्षतावच्छेदकाव-

### विट्ठलेशीयटिप्पणी

मूले *तत्र=अवश्यप्रदर्शनीयविप्रतिपत्तिषु । निर्धारणे सप्तमी । *मिथ्यात्वे=तत्सिद्ध्यनुकूला, तत्कोटिका वा । प्रदर्शनीयविप्रतिपत्तिषु मध्ये 'ब्रह्मप्रमे'त्यादिवाक्यरूपा विप्रतिपत्तिर्मिथ्यात्वकोटिकेति, मिथ्यात्वकोटिका विप्रतिपत्तिः ब्रह्मप्रमेत्यादिवाक्यरूपेति वा संबन्धः । प्रतिपन्नपदस्य स्वसंबन्धितया ज्ञातम्, उपाधिपदस्य चाधिकरणमर्थ इत्याशयेन व्याचष्टे—*प्रतीत्यादि* ॥ सर्वत्रेति पूरणफलमाह—*तथाचेति* ॥ रूपनिवेशो चेत्यर्थः । अन्यथा व्यावहारिकरजतस्य स्वपदेनोपादाने तत्संबन्धितया ज्ञाते तदवयवे विद्यमानाभावप्रतियोगितायास्तत्रासिद्धतया सिद्धसाधनाभावेन सर्वत्र-पदवैयर्थ्यापत्तेरिति भावः । संबन्धनिवेशेऽत्यन्तपदवैयर्थ्यं शङ्कते—*यद्यपीति* ॥ भेदाविरोधित्वादिति* ॥ अभाव-विरोधिन एव प्रतियोगिसंबन्धस्य प्रतियोगितावच्छेदकत्वादिति भावः । *नास्त्येवेति* ॥ एतन्मते कपालादौ घटादेस्तादात्म्यं संबन्धः, नतु घटादौ । *अर्थान्तरमिति* ॥ तथाच कपालादौ घटाद्यत्यन्ताभावानुपगमेऽपि तन्निष्ठभेदप्रतियोगितायाः तादात्म्यावच्छिन्नत्वमात्रोपगमेन घटादौ तादृशभेदप्रतियोगितारूपसाध्यनिर्वाहसंभवेन न घटादेः पारमार्थिकत्वोच्छेदप्रसङ्ग इति भावः । अत्यन्ताभावत्वमखण्डोपाधिरिति मतेनेदम्, सखण्डो-पाधिरिति मते तु, अत्यन्ताभावत्वघटकनित्यत्वनिवेशे प्रयोजनाभावादाह—*संसर्गाभाव इति* ॥ भेदान्याभाव इत्यर्थः । नच—तादात्म्यावच्छिन्नध्वंस-प्रागभावप्रतियोगितामादायार्थान्तरं दुर्वारमिति—वाच्यम् ; त्रैकालिकत्व-विशेषणेन तद्वारणादिति भावः । अत्र—अग्रे 'विमतं मिथ्या दृश्यत्वात्' इति ग्रन्थेन विशेषपक्षकं सामान्यपक्षकं चानुमानं विवक्षितम् ; 'प्रत्येकं वा विप्रतिपत्तिरि'ति ग्रन्थेन विशेषपक्षिकायाः, 'ब्रह्मप्रमे'त्यादिना सामान्य-पक्षिकायाश्च विप्रतिपत्तेः प्रदर्शनात् । तत्र रजतत्वविशिष्टम्, तादात्म्यसंबन्धेन रजतत्वविशिष्टसंबन्धितया ज्ञायमानसर्वनिष्ठत्रैकालिकसंसर्गाभावीयतादात्म्यावच्छिन्नरजतत्वावच्छिन्नप्रतियोगिताविशिष्टम्, दृश्यत्वादिति विशेषा-नुमानम्, ब्रह्मप्रमातिरिक्ताबाध्यत्वविशिष्ट-सत्त्वप्रकारकप्रतीतिविषयताविशिष्ट-चिद्भिन्नत्वसमानाधिकरणरूपं तादृश-चिद्भिन्नत्वं वा, तत्संबन्धेन स्वविशिष्टवत्त्वेन ज्ञायमानसकलनिष्ठत्रैकालिकसंसर्गाभावीय-तत्संबन्धावच्छिन्न-स्वावच्छिन्न-

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

भावो वा निवेश्यः। तादृशाभावप्रतियोगितावच्छेदकरजतत्वादिमत्त्वे साध्ये कृते साध्याप्रसिद्धिः, अतस्तदपहाय तादृशप्रतियोगित्वमेव साध्यं कृतम्। तस्यापि शुक्तिरूप्यादावसिद्धिः ; रजतसम्बन्धितया प्रतीयमान-सर्वान्तर्गतव्यावहारिकरजतादिनिष्ठात्यन्ताभावप्रतियोगित्वस्य तादृशावच्छिन्नस्य तत्राभावात्, अतो व्यावहारिक-पक्षकविशेषानुमानेषु 'रजतत्वादिना घटो नास्ती'ति प्रतीतेर्घटादिरेव दृष्टान्तः॥

*ननु*—तादृशप्रतियोगिताया व्यधिकरणावच्छेदकरजतत्ववत्त्वस्य शुक्तिरूप्यादावपि प्रसिद्ध्या तदेव साध्यं कुतो न कृतम्? इति—चेत्, *न* ; तथा सति व्यावहारिकरजतादिरूपे पक्षे तत्प्रसिद्ध्या सिद्ध-साधनापत्तेः, समानाधिकरणावच्छेदकरजतत्वस्यैव साध्यीकार्यत्वे प्रसिद्ध्यावश्यकत्वात्; सामान्यानुमाने तु शुक्तिरूप्यादिकं मूलोक्तं दृष्टान्तः। स्वत्वस्यानुगतस्य प्राचां मते स्वीकारेण स्वविशिष्टसम्बन्धितया ज्ञायमाने सर्वत्र विद्यमानात्यन्ताभावप्रातीतिकरजतत्वतादात्म्यावच्छिन्नप्रतियोगित्वस्य प्रातीतिकरजतादौ सत्त्वात्।

**विट्ठलेशीयटिप्पणी**

प्रतियोगितासमानाधिकरणम्, दृश्यवृत्तित्वादिति सामान्यानुमानम्। तत्र विशेषानुमाने शुक्तिरूप्यं न दृष्टान्तः, किंतु घटादिः, सामान्यानुमाने तु शुक्तिरूप्यत्वम्, इति साध्याप्रसिद्धिप्रसङ्गाद् व्यवस्थाप्यम्। तत्र तादृशाभाव-प्रतियोगितावच्छेदकरजतत्वस्य साध्यत्वे विशेषानुमाने शुक्तिरूप्यस्यैव दृष्टान्तत्वं संभवति, तथा सति वक्ष्यमाणरीत्या साध्याप्रसिद्धिरित्यतस्तस्य साध्यतां निरस्यति—*तादृशाभावेति*॥ *साध्याप्रसिद्धिरिति*॥ रजतत्वेन ज्ञातसर्वा-न्तर्गतव्यावहारिकरजतावयवे रजतसामान्याभावासत्त्वेन रजतत्वे तादृशप्रतियोगितावच्छेदकत्वस्य दुर्घटत्वादिति भावः। *रजतादीति*॥ रजतावयवादीत्यर्थः। रजतावयवस्यापि रजतत्वाद् यथाश्रुतमेव वा साधु। *ननु* एवं घटेऽपि कथं साध्यप्रसिद्धिः? तत्राह—*रजतत्वादिनेति*॥ तथाच रजतत्वावच्छिन्नप्रतियोगिताकघटाभावस्य व्यावहारिकरजतावयवेऽपि सत्त्वेन घटादौ तादृशाभावीयरजतत्वावच्छिन्नप्रतियोगित्वस्य प्रसिद्धिरिति भावः। *नन्विति*॥ यदि व्यधिकरणधर्मावच्छिन्नाभावोपगमेन तादृशप्रतियोगित्वरूपसाध्यप्रसिद्धिः, तदेति शेषः। 'व्यधिकरणे'ति प्रसिद्ध्युप-पादनाय, नतु साध्यघटकम्; व्यर्थत्वात्। समानाधिकरणेति साध्यघटकम्। रजतत्वावच्छिन्नतादृशप्रतियोगित्वस्य साध्यत्वे घटे तत्प्रसिद्धावपि व्यावहारिकरजत एतदनुमानेनैव सिद्ध्या न सिद्धसाधनमिति भावः। *शुक्तिरूप्येति*॥ रूप्यत्वेत्यर्थः। *मूलोक्तमिति*॥ तादृशदृष्टान्तसङ्गमनायैव सामान्यानुमानाश्रयणमिति भावः। विशेषानुमानाश्रयणं तु स्वत्वाननुगमवादिनवीनमतेनेति बोध्यम्। स्वं साध्यत्वेनाभिमतं प्रातीतिकरजतत्वम्। *प्रातीतिकरजतत्वेति*॥ रजतत्वं त्रिविधम्—व्यवहारिकरजतमात्रवृत्ति व्यावहारिकं कटकाद्यर्थक्रियाकारितावच्छेदकम्; प्रातीतिकरजतमात्र-वृत्ति प्रातीतिकं शुक्त्याद्यज्ञानरजतसादृश्यज्ञानकार्यतावच्छेदकम्; तदुभयसाधारणं च रजतपदशक्यताव-च्छेदकं तृतीयं व्यावहारिकमेवेति। तत्र स्वत्वस्य व्यावहारिक-प्रातीतिकमात्रवृत्तिरजतत्वयोरनुगतत्वात् प्रातीति-करजतत्वरूपदृष्टान्ते प्रसिद्धमेव साध्यं व्यावहारिकरजतत्वरूपपक्षे साध्यत इति भावः॥

*ननु* स्वत्वं स्वपदार्थतावच्छेदकम्, तच्च व्यावहारिक-प्रातीतिकरजतत्वयोरेकं पक्ष-दृष्टान्तस्थसाध्ययोरनुगमार्थमुप-गतम्। तथाच तादृशानुगतरूपेण प्रातीतिकरजतत्व उपादीयमाने व्यावहारिकरजतत्वस्याप्यवर्जनीयतयोपादानावश्य-कतया व्यावहारिकरजतावयवस्यापि तादृशयावदन्तर्गततया, तत्र च तादृशानुगतधर्मवदवच्छिन्नाभावस्यानुमानात् प्रागसिद्धत्वेन दृष्टान्ते साध्याप्रसिद्धितादवस्थ्यम्। नच—स्वत्वात्मकानुगतधर्मोपलक्षितप्रातीतिकरजतत्वावच्छिन्ना-भावस्य व्यावहारिकरजतावयवेऽपि सत्त्वाद् नायं दोषः, स्वत्वविशिष्टावच्छिन्नाभावनिवेशे प्रयोजनाभावादिति—वाच्यम्; पूर्वक्षणवृत्तित्वविशिष्टरजतत्वावच्छिन्नाभावस्य त्रैकालिकत्वाभावेऽपि तत्तदवयववृत्तित्वविशिष्टरजतत्वावच्छिन्ना-भावस्य तादृशयावदवयववृत्तित्वेऽपि रजतत्व-घटत्वाभ्यां रजतसामान्याभावं निरुक्तमादाय सिद्धसाधनवारणाय स्वत्वविशिष्टावच्छिन्नाभावस्य निवेश्यत्वात्। नच—तदर्थं स्वस्वपर्याप्त्यधिकरणपर्याप्तप्रतियोगितावच्छेदकताकाभाव

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नचैवम्—सर्वदेश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वं पर्यवसितम्, तथाचालीकत्वापत्तिः प्रपञ्चस्येति—वाच्यम् ; कालसम्बन्धित्वसमानाधिकरणस्य तस्य निवेश्यत्वात् ॥

विट्ठलेशीयटिप्पणी

एव निवेश्य इति—वाच्यम् ; तावतापि स्वत्वपर्याप्त्यधिकरणीभूतप्रातीतिकरजतत्वेन व्यावहारिकरजताभावमादायोक्त-दोषावारणेन तदर्थमुक्ताभावस्यैवोपादेयत्वादिति चेत्, *न*; स्वावच्छिन्नवत्त्वेन प्रतीयमानयावन्निष्ठात्यन्ताभावीयस्व—स्वावच्छिन्नत्वोभयसंबन्धेन स्वविशिष्टप्रतियोगितासमानाधिकरणत्वस्य साध्यत्वेनानुपपत्त्यभावात्। स्वत्वस्याननुगत-त्वेऽपि तद्राश्रयैकैकव्यक्तेरेव संबन्धद्वयप्रतियोगिविधया निवेशात्, संबन्धे च स्वत्वं परिचायकम्। यथाहि 'स्वप्रतियोगि-वृत्तित्व—स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वम्=उभयावृत्तित्वम्' इति श्रीमद्गदाधरभट्टाचार्यैः सिद्धान्त-लक्षणे व्युत्पत्तिवादे चाभिहितम्, तथेहेति। नच—इदानीं स्वत्वमुपलक्षणम्, अन्यथा दृष्टान्ते साध्यप्रसिद्ध्यसंभवात्, तथाच प्रातीतिकरजतत्वं स्वपदेनोपादायोक्तोभयसंबन्धेन तद्विशिष्टतदवच्छिन्नव्यावहारिकरजताभावप्रतियोगिताघटित-साध्यस्य व्यावहारिकरजतत्वे सिद्ध्यापत्त्या सिद्धसाधनमिति—वाच्यम् ; उक्तोभयसंबन्धेन स्वविशिष्टप्रतियोगिता-समानाधिकरणत्वस्य स्वपदार्थे साध्यतया स्वपदस्य प्रक्रान्तधर्मिबोधकतया व्यावहारिकरजतत्वस्य स्वपदार्थत्वा-भावेनोक्तोभयसम्बन्धेन तद्विशिष्टोक्तप्रतियोगितायास्साध्यघटकत्वासंभवेन तत्सामानाधिकरण्यस्य व्यावहारिकरजतत्वे सिद्ध्यापत्तेरसंभवात्, स्वसामानाधिकरण्यस्य तृतीयसंबन्धत्व उक्तशङ्कोद्धाराच्च। नचैवमपि—उक्तानुगतसाध्यता-वच्छेदकाक्रान्तशुक्तिरूप्यत्वनिष्ठप्रतियोगितासामानाधिकरण्यस्य व्यावहारिकरजतत्वे सिद्ध्यापत्तिरिति—वाच्यम् ; वह्नित्वावच्छिन्नव्याप्तिज्ञानात् पर्वते महानसीयवह्निसिद्ध्यापत्तिवदस्यापीतरबाधेनैव वारणसंभवात्। वक्ष्यते चैतदुपरिष्टात्। *प्रतियोगित्वस्येति* ॥ यथाश्रुताभिप्रायेण। वस्तुतस्तादृशप्रतियोगित्वसमानाधिकरणत्वस्य तादृशप्रतियोगितावच्छेदकत्वस्य वेति बोध्यम्। एवमग्रेऽपि। *प्रातीतिकरजतादौ=तादृशरजतत्वादौ। *सत्त्वा-दिति* ॥ प्रातीतिकरजतत्वेन प्रतीयमानशुक्त्यादौ तादृशप्रतीतिकालेऽपि प्रातीतिकरजतात्यन्ताभावस्योपगमादिति भावः। *पर्यवसितमिति* ॥ यत्र यत् प्रतीयते, तत्र तन्निष्ठाभावप्रतियोगित्वस्य भवतोपगमात्, यत्र यद् न प्रतीयते, तत्र तन्निष्ठाभावप्रतियोगित्वस्य च सर्वमतसिद्धत्वादिति भावः। *तथाच=सर्वदेशकालवृत्त्यभावप्रति-योगित्वस्वीकारे च। *अलीकत्वापत्तिः=शशविषाणवदप्रतीयमानत्वापत्तिः। यथाश्रुते सर्वदेश-कालवृत्त्यभावप्रति-योगित्वस्यैवालीकत्वरूपतयाऽऽपाद्यापादकयोरैक्येनेष्टापत्तिप्रसङ्गेनासङ्गतेः। नच—अलीकत्वं तादृशप्रतियोगिताविशिष्टत्वे सत्यप्रतीयमानत्वमिति नायं दोष इति—वाच्यम् ; तावतापि विशेषणांशस्येष्टतया विशेष्यापत्तावेव पर्यवसानात्। तथाच प्रपञ्चो यदि सर्वदेश-कालवृत्त्यभावप्रतियोगी स्यात्, तदा शशविषाणवद् न प्रतीयेतेति तर्कः पर्यवसन्नः। अयं च निरुक्तमिथ्यात्वसिद्धिविरोधी ; स्वविशिष्टत्वेनाप्रतीयमानवृत्त्यभावप्रतियोगित्वेन सर्वसिद्धे प्रपञ्चे तादृशप्रतियोगित्वा-भावबाधात् स्वविशिष्टत्वेन प्रतीयमानवृत्त्यभावप्रतियोगित्वरूपमिथ्यात्वाभावमादाय विपर्ययपर्यवसानसंभवादिति शङ्कानिर्गलितार्थः। शशविषाणपदात्तु न ज्ञानम्, किन्तु विकल्परूपवृत्त्यन्तरमेवेत्यग्रे व्यक्तम्। सत्त्वेन प्रतीतिर्वा निवेश्या ॥ *निवेश्यत्वादिति* ॥ तथाच कालसंबन्धित्वविशिष्टस्य सर्वदेशकालवृत्त्यभावप्रतियोगित्वस्य प्रपञ्चे पर्यवसानेऽपि तस्याप्रतीयमानत्वरूपापाद्यविरुद्धतया न तेन तदापत्तिः संभवति। नच—निरुक्तविशिष्टान्तर्गतविशेष्य-भागस्य प्रपञ्चरूपपक्षातिरिक्ते तुच्छेऽप्रतीयमानत्वरूपापाद्यव्याप्यतानिश्चयात् पक्षे तस्य तदापादकता दुर्वारेति—वाच्यम् ; विशिष्टस्य शुद्धादतिरिक्तत्वोपगमात्, अनतिरिक्तत्वोपगमे तु प्रतियोगितानां प्रतियोगिभेदेन भिन्नतया पक्ष उपगतानां कालसंबन्धिनिष्ठानां तासामापाद्यविरुद्धत्वात् तद्व्याप्यानां च तुच्छवृत्तीनां पक्षेऽनुपगमात्। नचैवमपि—सर्वदेशकालवृत्त्यभावप्रतियोगित्वत्वावच्छिन्नस्यापादकता दुर्वारैवेति—वाच्यम् ; येन अनुगतरूपेणापि यस्या-

### अद्वैतसिद्धिः

त्रैकालिकनिषेधप्रतियोगि ? न वा ? पारमार्थिकत्वाकारेणोक्तनिषेधप्रतियोगि ? न वेति । अत्र च पक्ष-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—कालसम्बन्धित्वमास्तां प्रपञ्चे, विशेष्यभूतमुक्तप्रतियोगित्वं तु न तत्रास्ति, येन हि रूपेण सम्बन्धेन च यत्र यत् सम्बध्यते, तेन रूपेण सम्बन्धेन च तत्र न तदभावः ; विरोधात्—इति मन्वानं वादिनं प्रति *तुष्यतु दुर्जन इति* न्यायेन तन्मतमनुसृत्य साध्यान्तरमाह—*पारमार्थिकेत्यादि* ॥ पारमार्थिकत्वावच्छिन्नं यदुक्तप्रतियोगित्वम्, तद्वद् न वेत्यर्थः । तत्रोक्तप्रतियोगित्वे 'तद्रूपावच्छिन्नमि'ति पूर्वोक्तस्य विशेषणस्य स्थाने तद्रूपसमानाधिकरणमिति विशेषणं देयम् । नच—तत्र प्रयोजनाभाव इति—

### विट्ठलेशीयटिप्पणी

पादकस्यापाद्यव्याप्यत्वज्ञानम्, तेन रूपेण तद्वत्त्वोपगमस्यैवापादकत्वात् तुच्छवृत्तिप्रतियोगित्वस्यानुगतरूपेण व्याप्ति-ग्रहेण तस्य च पक्षेऽनुपगमेनोक्तापत्तेरसंभवादिति भावः ॥ *अयमभिसन्धिः*—द्रव्यं पक्षीकृत्य प्रमेयत्वेन द्रव्यभेदस्या-नुमितेरापत्तेश्च वारणाय तदनुमिति-तदापत्त्योर्येन रूपेण यत्र साध्याऽऽपाद्यव्याप्तिग्रहः, पक्षे तेन रूपेण तद्वत्त्वप्रमोपगमयो-र्हेतुतोपेया । नहि द्रव्यत्वविशिष्टत्वेन प्रमेयत्वस्य द्रव्यभेदविरुद्धत्वं पक्षे व्यभिचारग्रहश्च शुद्धप्रमेयत्वेन प्रमेयत्वे पक्षाति-रिक्तगुणादौ व्याप्तिग्रहं विरुणद्धि । तत्रानुकूलतर्काभावादेव समानधर्मितावच्छेदकव्यभिचारनिश्चयादेव वा न व्याप्तिग्रह इति चेत्, प्रकृतेऽपि समम् । कालसंबन्धित्वसमानाधिकरणत्वस्य निवेश्यत्वादिति ग्रन्थस्याप्यत्रैव तात्पर्यमिति ॥

*अत्रेदं चिन्त्यम्*—स्वविशिष्टत्वेनाप्रतीयमाननिष्ठाभावप्रतियोगित्वेन सर्वसिद्धे प्रपञ्चे स्वविशिष्टत्वेन प्रतीय-माननिष्ठाभावप्रतियोगित्वरूपमिथ्यात्वोपगमेऽपि न सर्वदेश-कालवृत्त्यभावप्रतियोगित्वं पर्यवस्यति ; तस्य देशांशे प्रतीयमानत्वाघटितत्वात्, मिथ्यात्वस्य च तद्घटितत्वात्, किन्तु तादृशप्रतियोगित्वद्वयम् । तच्च न शशविषाणादौ ; तुच्छे तद्वत्त्वेन प्रतीत्यसिद्धेः, इति नालीकत्वरूपापाद्यव्याप्यम्, इति न तेन तदापत्तिशङ्कापि, इति कालसंबन्धित्व-निवेशनं व्यर्थमिति । नच—'कालसम्बन्धित्वसमानाधिकरणस्य तस्य निवेश्यत्वात्' इति ग्रन्थेनेदमेव विवक्षितम्, न तु कालसम्बन्धित्वनिवेशनमिति—वाच्यम् ; 'ननु कालसंबन्धित्वमास्ताम्' इत्युत्तरग्रन्थविरोधापत्तेरिति ॥

*अत्रेदं तत्त्वम्*—'ब्रह्म सत्, सत् ब्रह्म' इतिवत् 'शशशृङ्गमसत्' 'असत् शशशृङ्गमि'ति विकल्परूपप्रत्ययसंभवेन शशशृङ्गादेः स्वस्य स्वमेव रूपभेदेन प्रतिपन्नोपाधिः ; उपाधिपदस्यात्रेदानीं धर्मिमात्रपरत्वात्, तन्निष्ठाभावप्रतियोगित्वं च तस्य, इत्युक्तप्रतियोगित्वद्वयस्य तुच्छेऽलीकत्वव्याप्यतासंभवेनोक्तापत्तिशङ्कासंभवात् कालसंबन्धित्वनिवेशनमर्थवत् । अत एवाग्रे मूलेऽलीके मिथ्यात्वलक्षणातिव्याप्तिमाशङ्क्योपाधिपदस्य सदर्थकतया तद्वारणं कृतम् । टीकायां च लघुना कालसंबन्धित्वनिवेशेन तद्वारणमाशङ्क्य, यथासन्निवेशे न वैयर्थ्यमिति समाहितमिति ; तथाप्यत्रालीकत्वापत्तिपदमलीक-त्वमादायार्थान्तरपरम् । तद्बीजं त्वग्रे वक्ष्यते । *केचित्तु* उक्तप्रतियोगित्वद्वयस्य ब्रह्मणि सर्वदेश-कालवृत्त्यभावप्रतियोगित्वं प्रति व्यतिरेकव्याप्तिज्ञानसंभवात् तद्द्वयेन तादृशप्रतियोगित्वसिद्धौ तेनालीकत्वव्याप्येन तदापत्तिशङ्कां सङ्गमयन्ति ॥ 'पारमार्थिकत्वाकारेणे'त्यत्राकारपदं रूपपदपर्यायतया रूपविधयाऽवच्छेदकत्वस्फोरकम् । तृतीयार्थोऽवच्छिन्नत्वं प्रतियोगिपदार्थैकदेशे प्रतियोगित्वेऽन्वेति । नच—अवच्छिन्नप्रतियोगिताकत्वरूपतृतीयार्थस्य निषेधेऽन्वयोऽस्त्विति—वाच्यम् ; समनियताभावानामैक्येन पटत्वादिना घटाद्यभावाभिन्नपारमार्थिकत्वावच्छिन्नप्रतियोगिताकशुक्तिरूप्याद्य-भावप्रतियोगितां पटत्वाद्यवच्छिन्नामादाय घटादौ पक्षे सिद्धसाधनापत्तेरित्याशयेन व्याचष्टे—*पारमार्थिकेत्यादीति* ॥ *पारमार्थिकत्वम्-ब्रह्मसमसत्ताकत्वम्* । *स्थान इति* ॥ कपालादौ घटादेः पारमार्थिकत्व-घटत्वैतदुभयावच्छिन्न-प्रतियोगिताकाभावसिद्धयोर्द्वेष्यसिद्धिसंभवेऽपि तदुपादाने फलाभावात्, ( टि-सामानाधिकरण्योपादानेनैवोक्तार्थान्तर-वारणात् ) साध्याप्रसिद्ध्यापत्तेश्च, ( घटत्व-पारमार्थिकत्वाभ्यां घटाभावत्वेनैतदनुमानात् प्रागसिद्धेः । ताभ्यां प्रातीतिक

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वाच्यम्; घटादेः पारमार्थिकत्वेऽपि पारमार्थिकत्वेन शुक्तिरूप्यादेर्योऽत्यन्ताभावस्तत्प्रतियोगित्वस्य घटाद सिद्धिमादाय यदर्थान्तरम्, तद्वारणादेः प्रयोजनस्य सत्त्वात् ॥

विट्ठलेशीयटिप्पणी

तदभावोऽप्यसिद्ध एव; गौरवेणोभयस्यानवच्छेदकत्वात्। टि०) सामानाधिकरण्योपादाने तु प्रातीतिकघटे तत्प्रसिद्धिरिति भावः। *अ इति* ॥ घटवत्त्वेन ज्ञातकपालादिनिष्ठ इति शेषः। *यदर्थान्तरमिति* ॥

नच—घटस्य तादृशाभावप्रतियोगित्वे सिद्धे पारमार्थिकत्वं न घटते, तथा सति पारमार्थिकत्वावच्छिन्नघटरूपप्रतियोगिमति कपालादौ पारमार्थिकत्वावच्छिन्नशुक्तिरूप्याभावानुपपत्तेरिति नार्थान्तरमिति—वाच्यम्; घटस्य घटत्ववत्त्वेऽपि कपालादौ घटत्वेन घट-पटोभयाभाववत् पारमार्थिकत्वेऽपि पारमार्थिकत्वेन घट-शुक्तिरूप्योभयाभावस्य व्यासज्यवृत्तिप्रतियोगिताकस्य केवलान्वयिनः सत्त्वोपपत्त्याऽर्थान्तरस्य दुर्वारत्वात्। नचैवम्—सामानाधिकरण्यनिवेशेऽपि तद्वारणासंभवः; सामानाधिकरण्यस्य पर्याप्तिद्वयगर्भत्वात्। नचैवम्—सिद्धसाधनमित्येव वक्तुं शक्यमिति—वाच्यम्; सिद्धसाधनस्याप्यजिज्ञासिताभिधानरूपतयाऽर्थान्तरव्यपदेशात्। एवमग्रेऽपि। *प्रयोजनस्य सत्वादिति* ॥

*ननु* पूर्वं प्रथमसाध्यस्य रजतत्वेन घटाभावमादाय घटे प्रसिद्धस्य रजतत्वविशिष्टे पक्षेऽनुमानात् सिद्धौ रजतत्वविशिष्टस्य सत्यताभङ्ग इत्युक्तप्रायम्, तच्च न युक्तम्; रजतस्य सत्यतया तदाश्रयत्वेन प्रतीयमाने तदवयवे तत्सामान्याभावानुपगमेऽप्युक्तानुमानबलेनैव रजतत्वावच्छिन्नघटनिष्ठप्रतियोगित्वस्य रजते सिद्ध्यापत्त्याऽर्थान्तरस्यात्रेव तत्रापि प्रसङ्गात्। नच—तत्रापि तद्रूपसामानाधिकरण्यं तद्रूपावच्छिन्नप्रतियोगितायां निवेश्यमिति—वाच्यम्; साध्याप्रसिद्धिप्रसङ्गात्, प्रातीतिकरजतस्यापि व्यावहारिकरजतत्वेनाभावस्य व्यावहारिकरजतावयवेऽभावात्, प्रातीतिकरजतेऽपि तत्सत्त्वात्, इह तु तद्रूपसामानाधिकरण्यनिवेशेऽपि व्यावहारिकघटत्वसमानाधिकरणायाः पारमार्थिकत्वावच्छिन्नप्रतियोगितायाः प्रातीतिकघटेऽपि सत्त्वेन साध्यप्रसिद्धेः। नच—पूर्वत्र रजतत्वेन रजत-घटान्यतराभावप्रतियोगितासिद्ध्या, रजतत्वेन रजत-घटोभयाभावप्रतियोगितासिद्ध्या वाऽर्थान्तरं वाच्यम्, तत्र नाद्यः; रजतावयवे रजतसामान्याभावस्येव तादृशान्यतराभावस्याप्यसत्त्वात्, तत्सिद्धौ च रजतस्य सत्यत्वभङ्गस्य दुर्वारत्वात्, नापि रजतत्वेन रजतघटान्यतराभावस्य रजतावयवेऽसत्त्वेन तदीयप्रतियोगितामादायार्थान्तरासंभवेऽपि रजतत्वेन रजतघटोभयाभावमादायार्थान्तरम्, निरुक्तप्रतियोगितारूपे साध्येऽव्यासज्यवृत्तित्वविशेषणेन पर्याप्तेः साध्यतावच्छेदकसंबन्धत्वोपगमाद्वा तादृशोभयाभावप्रतियोगितासिद्धिवारणसंभवादिति—वाच्यम्; तथा प्रकारद्वयस्य द्वितीयसाध्येऽपि संभवेनार्थान्तरवारणसंभवेन सामानाधिकरण्यनिवेशवैयर्थ्यात्। इह तादृशान्यतराभावोभयाभावविलक्षणस्यैव पारमार्थिकत्वेन शुक्तिरूप्यं नास्तीति प्रत्ययविषयाभावस्य प्रतियोगितासिद्धिमाश्रित्यार्थान्तरं क्रमत इति चेद्, पूर्वत्रापि रजतत्वेन घटो नास्तीति प्रत्ययविषयीभूतविलक्षणाभावप्रतियोगितासिद्धिमाश्रित्यार्थान्तरं दुर्वारम् ॥

*ननु* घटरजतादेरपि तादृशाभावप्रतियोगित्वे पारमार्थिकत्व-रजतत्वरूपप्रतियोगितावच्छेदकविशिष्टतद्रूपप्रतियोगिमति यावति तदभावसत्त्वस्यानुमानात् पूर्वमसिद्धिरिति—चेत्, *न*; यतः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनो नाभावविरोधित्वम्, किन्तु प्रतियोगितावच्छेदकविशिष्टस्य प्रतियोगिविशेषणतापन्नधर्मावच्छिन्नस्य; अन्यथा घटत्वेन घट-पटोभयं नास्तीति प्रतीतिविषयाभावस्य केवलान्वयित्वं न स्यात्, गुण-कर्मान्यत्वविशिष्टसत्तायाः प्रमेयत्वेनाभावस्य च गुणादिवृत्तित्वं च न स्यात्। तथाचोक्ताभावप्रतियोगित्वस्य घट-रजतयोरुपगमेऽपि पारमार्थिकत्व-रजतत्वरूप-प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिविशेषणशुक्तिरूप्यत्व-घटत्वावच्छिन्नस्याप्रसिद्ध्याऽनुमानात् पूर्वमपि साध्यघटकाभावस्योक्तयावन्निष्ठत्वप्रसिद्धिसंभवादर्थान्तरं दुर्वारमेवेति। व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वसिद्धौ सत्यां प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेनैव सार्धं केवलान्वयित्वानुपपत्त्याऽभावस्य विरोधित्वं वक्तव्यमिति श्रीमज्जगदीशतर्कालङ्कारभट्टाचार्यैश्चक्रवर्तिलक्षणेऽभिहितम् ॥ अथ पूर्वत्र 'रजतत्वेन घटो

अद्वैतसिद्धिः

तावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेति मते

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कपालादौ संयोगादिसम्बन्धेन घटादेर्योऽत्यन्ताभावः, तत्प्रतियोगित्वस्य घटादौ सिद्धिमादाय घटादेः पारमार्थिकत्वस्वीकारेऽप्यर्थान्तरं स्यात्, अतस्तत्सम्बन्धावच्छिन्नेत्यपि प्रतियोगित्वे विशेषणं देयम्। नच पारमार्थिकत्वस्य घटादौ स्वीकारे तेन रूपेण कथं कपालादौ संयोगेनापि घटादेरभावसिद्धिः ? व्यधिकरण-धर्मावच्छिन्नाभाववादिनापि विशेषरूपेण सामान्याभावस्वीकारेऽपि सामान्यरूपेण विशेषस्याभावास्वीकारा-दिति—वाच्यम्; प्रकृतानुमानबलेनैव तादृशाभावसिद्ध्यापरयोक्तस्यार्थान्तरस्यापत्तेः। *मत इति* ॥

विट्ठलेशीयटिप्पणी

नास्ती'ति प्रत्ययविषयाभावप्रतियोगिताशून्यत्वं पक्षविशेषणम्, अतो नार्थान्तरम्, तर्हीहापि 'पारमार्थिकत्वेन शुक्तिरूप्यं नास्ती'ति प्रत्ययविषयाभावीयप्रतियोगिताशून्यत्वं पक्षविशेषणमस्तु, किं सामानाधिकरण्यनिवेशेन ? किंच सामानाधिकरण्यनिवेशेऽपि पारमार्थिकत्वेन प्रातीतिकघटो नास्तीति प्रतीतिविषयाभावप्रतियोगितासिद्धिमादायार्थान्तरं दुष्परिहरमेवेति—चेत्,

*अत्रोच्यते*—पूर्वसाध्ये साध्याप्रसिद्धिभयेन सामानाधिकरण्यनिवेशासंभवादनायत्योक्तरीत्या पक्षविशेषणमु-पादायैवार्थान्तरं वारणीयम्, एतत्साध्ये तु सामानाधिकरण्यनिवेशेऽपि प्रातीतिकघटे साध्यप्रसिद्धिसंभवेन तन्निवेशसंभवाद् उक्तरीत्या गुरुतरपक्षविशेषणोपादाने गौरवाच्च लघुना सामानाधिकरण्यनिवेशेनैव पारमार्थिकत्वावच्छिन्न-शुक्तिरूप्यादिप्रतियोगितासिद्धिप्रयुक्तार्थान्तरं वारणीयम्, तन्निवेशेऽपि प्रसक्तं पारमार्थिकत्वावच्छिन्नप्रातीतिकघटादिनिष्ठ-प्रतियोगितासिद्धिप्रयुक्तार्थान्तरं त्वगत्या गुरुभूततादृशप्रतियोगित्वशून्यत्वरूपपक्षविशेषणोपादानेनैव वारणीयम्। उभयत्र पक्षविशेषणसिद्धिस्तु प्रत्यक्षादिना सुलभेति तु तत्र तत्र 'सिद्ध्यापत्तेरि'ति वदताऽर्थान्तरोद्भावकेनाप्युपगम्यत इति सर्वं समञ्जसम्। अत एव दीधितौ तर्कग्रन्थे—"धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहितजन्यः स्यात्, तदा नोत्पन्नः स्यात्' इति मौलतर्के विपर्यये वह्न्यसमवहितजन्यत्वे पर्यवसानवारणेन वह्निसमवहित-जन्यत्वमात्रपर्यवसायितानिर्वाहाय 'वन्ह्यसमवहिताजन्यत्वेन पक्षो विशेषणीयः' इत्युक्तम्। एवं सामान्यानुमाने प्रथमसाध्ये रजतत्वेन घटाभावप्रतियोगित्वसिद्ध्याऽर्थान्तरवारणाय स्वव्यधिकरणत्वावच्छिन्नप्रतियोगितावद्वृत्तित्वं पक्षीभूतनिरुक्तरूपे विशेषणं देयम्, द्वितीयसाध्ये तु घटत्वादिरूपे पक्षे पारमार्थिकत्वेन शुक्तिरूप्याभावप्रतियोगितयाऽ-र्थान्तरवारणाय साध्यघटकप्रतियोगितायां स्वसामानाधिकरण्यं देयम्, पारमार्थिकत्वेन प्रातीतिकघटाभावप्रतियोगितयाऽ-र्थान्तरवारणाय तु तादृशप्रतियोगितावद्वृत्तित्वं न देयम्; तस्य घटत्वेऽसत्त्वेन पक्षासिद्धिप्रसङ्गात्, किन्तु तादृशप्रतियोगित्वाभाववद्वृत्तित्वविशिष्टत्वम्। तदवच्छेदेन च तादृशानुगतरूपाक्रान्तप्रतियोगित्वसामानाधिकरण्यं सिध्यद् न तादृशप्रतियोगितासामानाधिकरण्यमादाय पर्यवस्यति; तदभाववद्वृत्तित्ववैशिष्ट्यावच्छेदेन तत्सामानाधि-करण्यासंभवात्; यथा द्रव्यत्वाभाववद्वृत्तित्वविशिष्टसत्तायां जातिसामानाधिकरण्यसिद्धिर्द्रव्यत्वान्यगुणत्वादिसामानाधि-करण्यपर्यवसायिनी तथेति ॥

*इदं तु बोध्यम्*—सामान्य-विशेषानुमानयोः पारमार्थिकत्वावच्छिन्नप्रातिभासिकनिष्ठप्रतियोगितावद्वृत्तित्वस्य, तादृशप्रतियोगित्वाभाववद्वृत्तित्वस्य तादृशप्रतियोगिताशून्यत्वस्य वानुगतस्य पक्षविशेषणस्य संभवात् साध्यघटक-प्रतियोगितायां तद्रूपसामानाधिकरण्यं किमर्थमिति ? व्यावहारिकतद्व्यक्तिपक्षकानुमाने तद्रूपसामानाधिकरण्यस्य सार्थक्यम्; तत्र तदुपादाने विशेषणान्तरोपादाने वा प्रयोजनाभावादिति तु परमार्थः। तद्रूपावच्छिन्नत्वत्यागेऽपि तत्संबन्धावच्छिन्नत्वं न त्याज्यमित्याह—*कपालाद्याविति* ॥ *अस्वीकारादिति* ॥ तथाच कपालादिनिष्ठाभावीय-संयोगावच्छिन्नपारमार्थिकत्वावच्छिन्नप्रतियोगिता घटादेः पारमार्थिकत्वं भङ्क्त्वैव सिद्ध्यति, इति तत्संबन्धाव-च्छिन्नत्वं न वक्तव्यमिति भावः। *आपत्तेरिति*॥ तथाच घटादीनां पारमार्थिकत्वभङ्गो न स्यादिति भावः। अत्रापि

## अद्वैतसिद्धिः

शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वं पक्षविशेषणम् । यदि पुनः पक्षतावच्छेदका-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यद्धर्मा साध्यं सिद्धम्, तत्र नानुमितिर्भवति, व्यक्त्यन्तरे तु भवत्येव । समानविशेष्यत्वसम्बन्धेन बाध-विशिष्टबुद्धयोरिव सिद्ध्यनुमित्योः प्रतिबन्धकत्वौचित्यादिति प्राचां मतम् ! नव्यमते तु यद्धर्मविशिष्टे क्वचित् साध्यं सिद्धम्, तद्धर्मविशिष्टे व्यक्त्यन्तरेऽपि नानुमितिरिति भावः । *पक्षविशेषणम्=पक्षतावच्छेदकता-पर्याप्त्यधिकरणम्, तन्मात्रं पक्षतावच्छेदकम्; ब्रह्मज्ञानान्याबाध्यत्वसामानाधिकरण्येनानुमितिं प्रति तत्सामा-नाधिकरण्येन ब्रह्म-तुच्छयोः साध्याभावज्ञानस्याविरोधित्वेनान्यविशेषणद्वयस्य पक्षतावच्छेदकप्रवेशे प्रयोजना-भावादिति भावः ॥

## सिद्धिव्याख्या

च्छेदेनेत्यपरं मतम् । तत्राद्यमतेन प्रथमविशेषणस्य प्रयोजनं दर्शयति—*अत्र चेति* ॥ पक्षविशेषणमिति* ॥ तथाच शुक्तिरूप्यादेर्ब्रह्मप्रमेतरबाध्यत्वाद् न तत्र सिद्धसाधनम् । नच—शुक्तिरूप्यस्य बाध्यत्वेनाबाध्यत्वविशेषणेनैव सिद्धसाधनवारणे 'ब्रह्मप्रमेतरे'ति व्यर्थमिति—वाच्यम्; तथात्वेऽस्मन्मते वियदादेरपि बाध्यत्वात् पक्षालाभप्रसङ्गात् । अतस्तन्मा भूदित्येतदर्थं 'ब्रह्मप्रमातिरिक्ते'त्यबाध्यत्वविशेषणस्यावश्यकत्वात् । नचैवम्—प्रमेति व्यर्थम्; प्रातिभासिक-रजतादे'र्नेदं रजतमि'त्यादिना ब्रह्मज्ञानान्येनैव बाध्यतया तस्य पक्षत्वाप्रसक्त्या तदंशे सिद्धसाधनत्वस्यैवाप्राप्तेरिति—वाच्यम्; "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति मते प्रत्ययमात्रस्य ब्रह्मज्ञानत्वाभ्युपगमेन 'नेदं रजतमि'ति बाधकज्ञानस्यापि ब्रह्मज्ञानत्वेन शुक्तिरूप्यादेरपि तदन्यदण्डाद्यनिवर्त्यत्वेन प्रसक्तपक्षत्वनिवृत्त्यर्थं प्रमेत्यस्यावश्यकत्वात् । *ननु*—तथापि ब्रह्मवृत्तिधर्मप्रकारं चेद् ज्ञानं ब्रह्मप्रमा, तदा बाधस्यापि क्वचित् तथात्वात् प्रातिभासिकविशेषांशे सिद्ध-साधनं तदवस्थमेव; ब्रह्ममात्रवृत्तिधर्मप्रकारकज्ञानं चेद् ब्रह्मप्रमापदेन विवक्षितम्, तदा ब्रह्ममात्रवृत्तित्वं हि ब्रह्मेतरा-वृत्तित्वे सति तद्वृत्तित्वमिति स्यात् । तथाच तद्वृत्तित्वमधिकम् । नच—तद्रहितमेव विवक्षितम्, तथापि ब्रह्मेतरावृत्तिधर्म-प्रकारकज्ञानान्यप्रमितिबाध्यत्वस्य पक्षेऽपि सत्त्वेन तदबाध्यत्वस्यासिद्धतयाऽऽश्रयासिद्धेः, निरुक्तपक्षतावच्छेदक-शरीरप्रविष्टसप्रकाराबाध्यत्वस्यैव तदवच्छेदसमर्थत्वेन पूर्वदलवैयर्थ्याच्च । किञ्चैवमतीतघटादेरपक्षत्वप्रसङ्ग इति चेत्, ब्रह्मेतरावृत्तिधर्मप्रकारकान्यनिष्ठा विरोधिविषयत्वावच्छिन्ना या कारणता तन्निरूपितकार्यताश्रयनिवृत्त्य-प्रतियोगित्वे सतीत्यस्य विवक्षितत्वात् । अत्र प्रपञ्चस्य विरोधिविषयकचरमवृत्तिबाध्यत्वेनाश्रयासिद्धिवारणाय 'ब्रह्मेतरावृत्तिधर्मप्रकारकान्यनिष्ठे'ति ॥ उत्तरज्ञाननिवर्त्यपूर्वज्ञानादीनामीश्वरज्ञाननिवर्त्यातीतघटादीनां च पक्षत्वसिद्धये 'विरोधिविषयत्वावच्छिन्ने'ति ॥ शुक्तिरूप्यादिव्यावृत्तये—'निवृत्त्यप्रतियोगित्वे सती'ति ॥ द्वितीयमते तु तद्विशेषण-मदेयमेवेत्याह—*यदीति* ॥

## विट्ठलेशीयटिप्पणी

व्यावहारिक-प्रातीतिकसाधारणघटत्वावच्छिन्नं सर्वम्, तत्संबन्धेन घटत्वावच्छिन्नवत्त्वेन ज्ञातसर्वनिष्ठाभावीयतत्सं-बन्धावच्छिन्नपारमार्थिकत्वावच्छिन्नघटत्वसमानाधिकरणप्रतियोगितावत्, दृश्यघटत्वात्, प्रातीतिकघटवत्; इति विशेषानुमानम् । व्यावहारिकघटमात्रवृत्तिघटत्वावच्छिन्नं तु न पक्षः; तादृशघटत्वसमानाधिकरणतादृशप्रतियोगितायाः प्रातीतिकघटेऽसत्त्वेनैतदनुमानात् प्रागसिद्ध्या साध्याप्रसिद्ध्यापत्तेः । 'ब्रह्मप्रमे'त्यादिविशेषणत्रयविशिष्टं रूपम्, तत्संबन्धेन स्वावच्छिन्नवत्त्वेन ज्ञायमान-सर्वनिष्ठाभावीय-तत्संबन्धावच्छिन्न-पारमार्थिकत्वावच्छिन्नप्रतियोगितासमानाधिकरणम्, दृश्यवृत्तित्वात्; शुक्तिरूप्यत्ववत्, इति सामान्यानुमानम् । स्वत्वमनुगतम्, इत्याद्युक्तरीतिरनुसन्धेया । 'मते' इत्यस्य नवीनमते इत्यर्थकत्वं व्यञ्जयति—*यद्धर्मेत्यादिना* ॥ *ननु* बाधो विप्रतिपत्तिजन्यसंशयविरोधितया विप्रति-

अद्वैतसिद्धिः

वच्छेदेनैव साध्यसिद्धिरुद्देश्या, तदैकदेशे साध्यसिद्धावपि सिद्धसाधनाभावात् तद्वारकं विशेषणमनुपादेयम्, इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च बाधवारणायादरणीयमेव ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*बाधवारणायेति* ॥ *ननु*—असिद्धिवारणायेत्यपि वक्तुमुचितम् । बाधो हि हेत्वाभासो विप्रतिपत्तिप्रयुक्तन्यायप्रयोगाधीनानुमितावेव विरोधी सन् दूषणम्, नतु विप्रतिपत्तिजन्यसंशयविरोधी सन्; बाधादीनां निश्चयवत्त्वे संशयानुत्पादस्योक्तत्वात्, तदा हि संशयस्याकर्तव्यत्वेन जयव्यवस्थामात्रसिद्धये विप्रतिपत्तेरिवानुमितिसामग्रीमात्रस्य हेत्वाभासादिदोषशून्यस्य प्रतिवादिनिष्ठस्य वादिना कर्तव्यतया संशयाविरोधित्वेन बाधस्योद्भावनं व्यर्थम्; अनुमिति-तत्करणपरामर्शान्यतरविरोधित्वरूपेण हेत्वाभासत्वेन बाधस्योद्भावने च

सिद्धिव्याख्या

*इतरेति*॥ त्रैकालिकनिषेधप्रतियोगित्वस्योभयत्राभावात् साध्यं बाधितम्, अतस्तद्वारणायेतरविशेषणमादरणीयमेवेत्यर्थः । *ननु*—सत्त्वेन प्रतीत्यर्हमिति विशेषणं किमर्थम् ? नच—असति बाधवारणायेति युक्तम्; असतः पक्षत्वस्यैवासंभवात्, अन्यथा तस्य सविशेषत्वापातेनासत्त्वव्याघातात्, सति च व्याघाते पक्षत्वशङ्काया एवानुदयात्, व्याघातावधित्वाच्छङ्कायाः । किञ्च 'चिद्भिन्नमि'त्यनेनासतः पक्षत्वव्यावृत्तेर्न तस्य प्रसक्तिः; चिद्भिन्नत्वस्य तत्प्रतियोगिकान्योन्याभावाधिकरणरूपत्वात्, असतश्च भावाभावाधिकरणरूपत्वानभ्युपगमादिति चेत्, *न*; असतो ब्रह्मप्रतियोगिकभेदानधिकरणत्वे ब्रह्माभेदप्रसङ्गात्, चिद्भिन्नत्वस्य चित्प्रतियोगिकभेदसंबन्धरूपत्वेन तदधिकरणत्वरूपत्वानभ्युपगमाच्च । 'असच्छशविषाणं ब्रह्मभिन्नमि'ति विशिष्टप्रतीतिबलेनासतस्तत्प्रतियोगिकभेदेन सिद्धे सम्बन्धे विशिष्टधीनियामकत्वरूपसंबन्धस्य भेद एव कल्पनाच्च, अन्यथा 'ध्वस्तो घटो ज्ञातः' इत्यबाधितविशिष्टप्रतीतिबलेन ध्वस्तघटस्य ध्वंस-ज्ञानाभ्यां ध्वंस-ज्ञानरूपयोः प्रतियोग्यनुयोगिभाव-विषयविषयिभावसंबन्धयोरस्वीकारप्रसङ्गः । नचेष्टापत्तिः; ध्वस्तघटस्य ध्वंसप्रतियोगित्व-विषयत्वयोरभावप्रसङ्गात्, अबाधितविशिष्टप्रतीत्या विशेषण-विशेष्यसंबन्धासिद्धौ भूतले घटीयया विषयप्रतीत्या प्रवृत्तस्य प्रवृत्तिसंवादाभावप्रसङ्गात्, 'ध्वस्तो घटो ज्ञातः' इति प्रतीतिविषयस्य ज्ञानस्य घटादिवद् विषयानुल्लेखित्वरूपनिर्विषयत्वापत्तेः । *एतेन*—असतः पक्षत्वे सविशेषत्वापातेनासत्त्वव्याघातात् पक्षत्वशङ्कैव न शङ्क्या; व्याघातावधित्वात्, इति—निरस्तम्; वन्ध्यासुतः, न वक्ता, अचेतनत्वात्; घटवदित्याद्यनुमानेऽसतोऽपि वन्ध्यासुतस्य पक्षत्वदर्शनात्, न्यायदीपावल्यामस्यैवानुमानस्य सदनुमानत्वस्वीकाराच्च । किञ्च पक्षत्वं सिसाधयिषितसाध्यसंदेहवत्त्वं वा ? सिसाधयिषाविरहविशिष्टसिद्ध्यभावो वा ? उभयथाऽप्यसतः पक्षत्वानपाय एव; उभयोरपि ध्वंसप्रतियोगित्व-प्रागभावप्रतियोगित्वादिवद् धर्मिसत्त्वनिरपेक्षधर्मत्वात्, धर्मिसत्त्वे ध्वंस-प्रागभावयो-

विट्ठलेशीयटिप्पणी

पत्तिदूषणत्वाद् विप्रतिपत्तिकाल उद्भाव्यते, स्वरूपासिद्धिस्तु न तादृशी, इति नोद्भाव्यत इत्यत आह—*बाधो हीति* ॥ *उक्तत्वादिति*॥ तथाच बाधो न विप्रतिपत्तिदूषणतयोद्भाव्यत इति भावः । यया च विधया बाध उद्भाव्यते, तया तु स्वरूपासिद्धिरप्युद्भावनार्हेत्याह—*अनुमिति-तत्करणेति* ॥ *ननु* विप्रतिपत्तिकालेऽनुमितेः तत्करणस्य वा वादिनाऽसंपाद्यतया तद्विरोधिदोषः कथं प्रतिवादिनोद्भाव्य इति ? अत आह—*अनुमितिसामग्रीमात्रस्येति*॥ मध्यस्थेन प्रतिवादिना वा ज्ञायमानस्य न्यायप्रयोगमात्रस्येत्यर्थः । अनुमितेः तत्करणस्य च मात्रपदेन व्यवच्छेदः । कथमेतावता विप्रतिपत्तिकाले हेत्वाभास उद्भाव्य इति ? अत उक्तम्—*हेत्वाभासादिदोषशून्यस्येति*॥ एवं च विप्रतिपत्तिसमनन्तरमेव हेतुदोषोद्भावने तदुत्तरं न्यायप्रयोग उक्तहेतुदोषशून्यत्वविशिष्टो न संभवतीति भावः । अनुमितेस्तत्करणस्य वाऽकर्तव्यत्वेऽपि हेत्वाभासशून्यतासंपादनमावश्यकमित्यत्र दृष्टान्तमाह—*तदा हीति* ॥ बाधादीनां निश्चयकाल इत्यर्थः । *विप्रतिपत्तेरिवेति* ॥ मध्यस्थेनेत्यादिः । तदुत्तरमिति शेषः । *उद्भावन इति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

हेत्वसिद्धेरपि तदुचितमिति—चेत्, *न* ;- विप्रतिपत्तिकाले हेतोरप्रयुक्तत्वेन हेतुमत्ताज्ञानविरोधिन्या असिद्धेर्ज्ञातुमशक्यत्वेन तस्या विप्रतिपत्तिदोषत्वाव्यवहारात्। नच—पक्षतावच्छेदकावच्छेदेन विप्रतिपत्तौ साध्यस्य विवक्षितत्वाद् हेतोः पक्षतावच्छेदकावच्छेदेन प्रयोक्तव्यतामनुमायासिद्ध्यादेर्दोषत्वं सम्भाव्यमिति—वाच्यम् ; अनुमानाकौशलेन सभाक्षोभादिना वाऽन्यथापि हेतोः प्रयोगसम्भवात्। *वस्तुतस्तु*, बाधपदमसिद्धेरप्युपलक्षकम् ; विप्रतिपत्तियोग्यन्यायवाक्योक्तियोग्यहेतोर्दोषस्य विप्रतिपत्तिदोषत्वसम्भवात्। अत एवाग्रे सन्दिग्धानैकान्तिके विप्रतिपत्तिदोषत्वमाशङ्कितम् ॥

सिद्धिव्याख्या

ऐवायोगात्, धर्म्यसत्त्वे धर्मासत्त्वमिति नियमस्य धर्मिसत्त्वसापेक्षधर्ममात्रविषयत्वात्। किञ्चासतः पक्षत्वे सविशेषत्वापत्तिरिति कोऽर्थः ? किं तस्य धर्मसंबन्धः स्यादिति ? किं वा घटादिवत् प्रामाणिकत्वं स्यादिति ? नाद्यः ; इष्टापादनात्। नहि सतोरेव संबन्ध इति नियमोऽस्ति ; अन्यथा ध्वंसादिना घटादेः संबन्धाभावप्रसङ्गात्, योगजधर्मस्य सामान्यज्ञानस्य चातीताद्यर्थप्रत्यासत्तित्वाभावापत्तेश्च। नच—अविशिष्टधीव्यावृत्तविशिष्टधीनियामकतद्विषयत्वरूपसंबन्धत्वाश्रयस्य द्विनिष्ठत्वनियमे मानमस्ति ; शतशो व्यभिचाराच्च। एकाभावाधिकरणकानेकाभावेषु घट-पटाद्यनेकाभावाधिकरण एकस्मिन् भूतलादौ सत्त्वाविशेषेऽप्यबाधितविशिष्टप्रतीत्यविशेषेऽपि च लाघवेन तादृशविशिष्टधीनियामकत्वरूपसंबन्धत्वस्यैकस्मिन्नभाव एकस्मिन्नधिकरणे वा कल्पनवत् तथाविधविशिष्टप्रतीतिगोचरयोर्भावाभावयोरेकत्वेऽपि लाघवेन भाव एव तस्य कल्पनाच्च, सदसतोस्तथाविधविशिष्टप्रतीत्यविशेषेऽपि सत्येव तादृशसंबन्धस्य कल्पनं युक्तमित्यङ्गीकर्तव्यत्वाच्च। न द्वितीयः ; असतोऽपि निषेध्यत्वेन ज्ञेयत्वादिना च प्रामाणिकत्वात्। नच सत्त्वेन प्रामाणिकत्वं तदर्थः ; मिथ्यात्वानुमानादौ पक्षत्वेन त्वदभिमतस्य वियदादिप्रपञ्चस्य

विट्ठलेशीयटिप्पणी

क्रियमाण इति शेषः। *तत्=उद्भावनम्। विप्रतिपत्तिदोषत्वव्यवहारविषयत्वप्रयुक्तमेव विप्रतिपत्तिकाल उद्भाव्यम्। बाधस्योक्तरीत्या विप्रतिपत्तिविरोधित्वाभावेऽपि तत्समानाधिकरणानुमितिविरोधितया तत्काल एव ज्ञानसंभवेन विप्रतिपत्तिदोषत्वव्यवहारात् तत्काले स उद्भाव्यः। स्वरूपासिद्धेस्त्वनुमित्यविरोधितया न विप्रतिपत्तिदोषत्वव्यवहारविषयतेत्यतो न सोद्भाव्येत्याशयेन समाधत्ते—*नेति* ॥ *ननु* स्वरूपासिद्धेरनुमित्यविरोधित्वेऽपि तज्जनकपक्षधर्मताज्ञानविरोधितया कुतो न विप्रतिपत्तिदोषत्वव्यवहार इति ? अत आह—*विप्रतिपत्तिकाल इति* ॥

*अनुमायेति* ॥ नच—तथाऽनुमानेऽपि हेतुविशेषस्याज्ञानाद् वृत्तिविषयत्वस्यावच्छेदकावच्छिन्नवृत्तिकस्यापि हेतोः संभवाच्च कथमिदानीं स्वरूपासिद्धिज्ञानमिति—वाच्यम् ; प्रयोक्ष्यमाणस्य हेतोर्ब्रह्म-तुच्छसाधारण्ये व्यभिचारात् तद्व्यावृत्त एव हेतुः प्रयोगार्ह इति सामान्यतो ज्ञानसंभवेन तत्र स्वरूपासिद्धिज्ञानसंभवादिति भावः। *अन्यथापि हेतोः प्रयोगसंभवादिति* ॥ तथाचावच्छेदकावच्छेदेन विप्रतिपत्तिप्रयोगस्यावच्छेदकावच्छेदेन हेतुप्रयोगाव्याप्यत्वेन न तेन तदनुमानमिति भावः। *ननु* मध्यस्थेन वादिनोः परीक्षापूर्वकमेव कथायां प्रवेश्यत्वादनुमानाकौशलानां सभाक्षोभशालिनां वा कथायां प्रवेशाभावादवच्छेदकावच्छेदेन विप्रतिपत्तिस्थले तादृशहेतुप्रयोगस्यावश्यकतया तद्विरोध्यसिद्धेर्विप्रतिपत्तिकाल एव ज्ञानसंभवेन तद्दोषत्वव्यवहारविषयत्वस्य बाधवद् दुर्वारतया तदुद्भावनमुचितमेवेत्याशङ्क्याह—*वस्तुतस्त्विति* ॥ *अत एव=हेतुदोषस्यापि विप्रतिपत्तिदोषत्वव्यवहारादेव। *अग्र इति* ॥ 'एवं वियदादेः प्रत्येकं पक्षत्वेऽपि न घटादौ संदिग्धानैकान्तिकता' इति ग्रन्थेनेति शेषः। *आशङ्कितमिति* ॥ नच—इदानीं हेतुविशेषस्याज्ञानाद्, घटादिव्यावृत्तस्यापि वियत्प्रातिभासिकान्यतरत्वादेर्हेतोः संभवाच्च कथं घटादौ संदिग्धानैकान्तिकत्वमिति—वाच्यम् ; घटादिपक्षके घटादिप्रातिभासिकान्यतरत्वादेर्हेतुत्वे गौरवेणाप्रयोजकत्वेन चाऽऽकाश-घटादिपक्षभेदेऽपि साध्य-दृष्टान्तयोरिव, आकाश-घट-प्रातिभासिकरजतादिसाधारणस्याप्रयोजकत्वशङ्कानर्हस्यैकस्यैव दृश्यत्वादेः प्रयोक्तव्यत्वमनुमाय संदिग्धानैकान्तिकत्वज्ञानसंभवादिति भावः ॥

सिद्धिव्याख्या

ब्रह्मवत् सत्त्वरहितत्वेनापक्षत्वप्रसङ्गात् । नच—वियदादेरपि व्यावहारिकसत्त्ववत्त्वेन नापक्षत्वप्रसङ्गः, लाघवेन पक्षत्वे व्यावहारिक-पारमार्थिकसत्त्वादिसाधारणसत्त्वमात्रस्यैव तन्त्रत्वादिति—वाच्यम् ; प्रपञ्चो ब्रह्मवत् सन् वा ? असन् वा ? इति विप्रतिपत्तिदशायां वियदादौ सत्त्वस्यैवासिद्धेः, सत्त्वेन प्रतीतिमात्रस्य विशेषादर्शनदशायां वियदादाविवासच्छशविषाणादावपि सत्त्वेन तस्येव तस्यापि प्रयोजकसत्त्वेन पक्षत्वानपायात्, 'वन्ध्यासुतो न वक्ते'त्यादिपरोदाहृतानुमाने पक्षत्वेनाभिमतस्य वन्ध्यासुतादेरपि सत्त्वेन प्रामाणिकत्वानभ्युपगमाच्च । अत एव न तस्यासत्त्वं व्याहतम् ; उक्तस्य सविशेषत्वस्यासत्त्वाविरोधित्वादिति ॥

*ननु* इयं विप्रतिपत्तिर्मायावादिनस्तार्किकैर्वा ? मायावादिनस्तत्त्ववादिना वा ? उत मायावादिन उभाभ्यां वा ? नाद्यः ; तार्किकादिमत आपणस्थरूप्यातिरिक्तस्य शुक्तिरूप्यस्याभावेन तत्र सिद्धसाधनायोपात्ताबाध्यत्वविशेषणानुपपत्तेः । नच—आपणस्थरूप्य एव तन्मते सिद्धसाधनवारणाय तद्विशेषणमिति—वाच्यम् ; 'प्रतिपन्नोपाधावि'त्यत्र साध्ये 'सर्वस्मिन्'इत्यस्य विशेषणस्यावश्यकतया रूप्ये सिद्धसाधनानवकाशात्, अन्यथा वियदादेरपि क्वचिदधिकरणे भ्रमसंभवेन भ्रमप्रतिपन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्य सत्त्वपक्षेऽपि संभवेन सर्वत्रैव सिद्धसाधनापातात्, तार्किकमते शुक्तिरूप्यज्ञानस्यैव भ्रमत्वज्ञापनरूपबाधविषयतया रजतस्याबाध्यतया तद्विशेषणेन तदवारणाच्च, मायावादिमते शुक्तिरूप्ये सिद्धसाधनसंभवेऽपि साध्यनिर्देष्टारं स्वं प्रति स्वस्य सिद्धसाधनोद्भावनस्यासंभवदुक्तिकत्वात्, न द्वितीयः ; 'सत्त्वेन प्रतीत्यर्हमि'ति विशेषणेनैव शुक्तिरूप्यव्यवच्छेदे तद्व्यावृत्त्यर्थं विशेषणान्तरोपादानवैयर्थ्यात्, अत एव न तृतीयः ; पक्षद्वयोक्तदोषादेवेति—चेत्, *न* ; तृतीयपक्षे दोषाभावात् । शुक्तिरूप्यं तात्कालिकमुत्पन्नं तत्रैव सदिति भास्करादिमते शुक्तिरूप्ये सिद्धसाधनवारणायाद्यं सत्यन्तं विशेषणम् । भास्करादिभिरपि भ्रमप्रमाविभागाय रजतस्य घटादिवैलक्षण्यमङ्गीकृतमेव, इति तन्मतेऽपि तस्य पक्षबहिर्भावस्यावश्यं वाच्यत्वात् । तार्किकादिमते स्वमते च तदुपरक्ते साध्यसिद्धिः प्रयोजनम्, इति सर्वमतेऽपि सप्रयोजनं विशेषणम् । विशेषणत्वे सप्रयोजनत्वं तन्त्रम्, नतु विशेषणप्रयोजनस्य सर्वसिद्धत्वमपि ॥

*ननु*—पक्षतावच्छेदक-साध्यसामानाधिकरण्यमनुमितौ विषयः ? तदवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं वा ? आद्ये नांशतः सिद्धसाधनम्, किन्तु सिद्धसाधनमेव ; अंशतः सिद्धेरेवासिद्धत्वात्, अंशतो बाधस्यादोषत्वापत्तिश्च, अबाधादेव साध्यसिद्धेरप्रत्यूहत्वात् । द्वितीयेंऽशतः सिद्धसाधनं दोष एव न ; सामान्यधर्मावच्छिन्ने सिद्धेरजातत्वात्, तद्धर्मावच्छिन्नसिद्धौ तद्धर्मावच्छिन्नसिद्धिविरहरूपपक्षताऽविरोधात् । एवमंशतो बाधोऽपि न दूषणम् ; सामान्यधर्मावच्छेदेन साध्याभावानवधारणात् । नच—सामान्यधर्मावच्छेदेन जातायामनुमितौ तदंशे भ्रमत्वं स्यादिति—वाच्यम् ; इष्टापादनात्, प्रपञ्चमिथ्यात्वप्रतीतेरुद्देश्यत्वात् । नच—एवमंशतः सिद्धसाधनांशतो बाधयोरदोषत्वप्रसङ्गः ; पक्षतावच्छेदकनानात्वस्थल एव तस्य दोषत्वसंभवात्, प्रकृते च तदैक्यादिति—चेत्, *उच्यते* ; द्वयी ह्यनुमितिः—एका पक्षतावच्छेदकसाध्यसामानाधिकरण्यगोचरा, अपरा तदवच्छिन्नसाध्यसामानाधिकरण्यगोचरा ; येन रूपेण पक्षे हेतुज्ञानम्, तेन रूपेण पक्षे हेतोः साध्यसिद्धेः । हेतुज्ञानं च क्वचित् पक्षतावच्छेदकसामानाधिकरण्येन, क्वचित् पक्षतावच्छेदकावच्छेदेनेति । तत्रोभयत्राप्यंशतः सिद्धसाधनं दोष एव ; अनुमितिविषयीभूतधर्मसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नसाध्यसिद्धिविरहरूपपक्षताविघटकत्वात्, सिद्धसाधनस्येवांशतः सिद्धसाधनस्याप्यन्वय-व्यतिरेकाभ्यामनुमितिप्रतिबन्धकतया तद्विरहस्यापि पक्षतारूपत्वात् । नच तादृक्सिद्धौ तादृक्सिद्धिविरहः पक्षता ; तादृक्त्वस्यानुगतस्याभावेनोभयसाधारणस्योक्तस्यैवादर्तव्यत्वात् । अत एव पक्षतावच्छेदकैक्येऽप्यंशतः सिद्धसाधनं दोष इति हृदि निधाय मणिकृता व्यतिरेकिण्युक्तम्—'यदि वा पृथिवीत्वेन रूपेण यावदेव विप्रतिपत्तिविषयस्तावत एव पक्षता' इति । अंशतो बाधस्तु द्वितीयायामेवानुमितौ दूषणम् ; साध्याभाववति गृह्यमाणे धर्मे साध्यसामानाधिकरण्यावच्छेदकत्वाग्रहात्, अनतिप्रसक्ततया ज्ञायमान एव तत्रावच्छेदकत्वपरिच्छेदादिति दिक् ।

### अद्वैतसिद्धिः

प्रत्येकं वा विप्रतिपत्तिः—वियद् मिथ्या ? न वा ? पृथिवी मिथ्या ? न वेति ? एवं वियदादेः प्रत्येकं पक्षत्वेऽपि न घटादौ संदिग्धानैकान्तिकता ; पक्षसमत्वाद् घटादेः ॥

तथाहि—पक्षे साध्याभावसंदेहस्यानुगुणत्वात् पक्षभिन्न एव तस्यादूषणत्वं वाच्यम् । अत एवोक्तम्—'साध्याभावनिश्चयवति हेतुसन्देह एव सन्दिग्धानैकान्तिकते'ति । पक्षत्वं तु साध्यसन्देहवत्त्वम्, साध्यगोचरसाधकमानाभाववत्त्वं वा ; एतच्च घटादिसाधारणम् । अत एव तत्रापि सन्दिग्धानैकान्ति-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत एवोक्तमिति* ॥ प्राचीनतार्किकैरिति शेषः । नवीनतार्किकैस्तु व्याप्तिग्राहकतर्काभावे सति साध्याभाववत्त्वेन सन्दिग्धे धर्मिणि हेतुनिश्चयोऽपि व्यभिचारसंशयहेतुतया दोष एव । अत एव 'वह्निरद्धिष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वादात्मवदि'त्यादिशक्त्यादिसाधकानुमानेषु मणावप्रयोजकत्वमुक्तम् । 'तत्र व्यभिचारसंशयस्यादूषणत्वे व्याप्ति-पक्षधर्मतानिश्चयसम्भवेनाप्रयोजकत्वोक्तेरसङ्गतेस्तस्य दूषणत्वमावश्यकमिति दीधितावुक्तं यद्यपि ; तथापि प्रकृते मिथ्यात्वानुमाने तर्काणां वक्ष्यमाणत्वेन न दोष इति भावना ॥

### सिद्धिव्याख्या

*प्रत्येकं वेति* ॥ विप्रतिपत्तिरित्यस्येतीत्यनेनान्वयः । *ननु*—वियन्मात्रस्य पक्षत्वे निश्चितसाध्याभाववति हेतुसंदेहे इव पक्षादन्यत्र निश्चितहेतुमति साध्यसंदेहेऽपि संदिग्धानैकान्त्यादेवंरूपे घटादौ संदिग्धानैकान्तिकता स्यात्, इत्याशङ्क्याह—*एवमिति* ॥ न संदिग्धानैकान्तिकतेत्यत्र हेतुमाह—*पक्षसमत्वादिति* ॥ तथाच निश्चितहेतुमति सर्वत्र साध्यसंदेहस्य दोषत्वेऽनुमानमात्रोच्छेदापत्त्या पक्षातिरिक्त एव तस्य दोषत्वेन पक्षसमे वादोषतया, एवंभूते घटादौ न संदिग्धानैकान्तिकतेति भावः । घटादेः पक्षत्वमेवोपपादयन् तत्र संदिग्धानैकान्तिकतां निराकर्तुं तस्य दूषकतास्थलं दर्शयति—*तथाहीति* ॥ *वाच्यमिति* ॥ अनेन दूषकतास्थलं दर्शितम् । *अत इति* ॥

### विट्ठलेशीयटिप्पणी

*मूले*—'पक्षभिन्ने' इत्यस्य हेतुमतीति शेषः । *टीकायाम्*—यद्यपि नवीनतार्किकैरिति योजना । *दोष एव*॥—व्याप्तिनिश्चयविरोधितयाऽनुमितिविरोध्येवोपगम्यत इति शेषः । *अत एव*=अनुकूलतर्काभावकालीनस्य साध्याभावांशे संशयरूपव्यभिचारज्ञानस्य नवीनैर्दोषत्वोपगमादेव । अस्य, मणावुक्तम्, दीधितावुक्तम्, इत्युभयत्रान्वयः । पक्षधर्मतापदं दृष्टान्तार्थम् । तथाच मिथ्यात्वानुमानेऽपि घटादौ संदिग्धानैकान्तिकतादोष एव ; अनुकूलतर्काभावादिति शङ्काभावः । *भावना*=संभावना । *ननु* वियतः पक्षत्वे घटस्य तद्भिन्नत्वात् तत्र संदिग्धानैकान्तिकता कथं न दूषणम् ? अत आह मूले—*पक्षत्वं त्विति* ॥ *ननु* साध्यसंदेहस्य पक्षतापदार्थत्वे पक्षभिन्ने हेतुमति साध्याभावसंदेहो दूषणमिति व्यवहारानुपपत्तिः । साध्यसंदेहस्य साध्याभावसंदेहतया साध्यसंदेहवद्भिन्नधर्मिकसाध्याभावसंदेहस्याप्रसिद्धेरित्यत आह—*साध्यगोचरेति*॥ नच—एवमपि साध्यनिश्चयाभावरूपपक्षतावद्भिन्नः साध्यनिश्चयवानेव, तद्धर्मिकसाध्याभावसन्देहोऽप्यप्रसिद्ध एव, तस्य तत्प्रतिबन्धकत्वादिति—वाच्यम् ; तथाप्याहार्यतादृशसन्देहस्य प्रसिद्धिसम्भवात् तस्यापि निश्चयसामग्रीविघटकतया व्याप्तिनिश्चयविरोधितया दोषत्वात् । यद्वा—'साध्यसन्देहवत्त्वं पक्षत्वमि'त्यत्र साध्याभावसन्देह इत्यत्र च सन्देहपदं ज्ञानसमानार्थकम् । तथाच साध्यज्ञानरूपपक्षतावति साध्याभावज्ञानस्य संशयरूपतया न दोषत्वम्, तद्भिन्ने तु तस्य निश्चयरूपतया दोषत्वम् । कल्पान्तरेऽपि साध्यनिश्चयस्यैकतरकोटिनिश्चयतया सन्देहप्रतिबन्धकतया तदभाववति साध्याभावज्ञानस्य सन्देहरूपस्यापि सम्भवात् तस्य न दोषता, तद्भिन्ने तु साध्यनिश्चयवति हेतुमति साध्याभावांश आहार्यनिश्चयरूपस्यैव साध्याभावज्ञानस्य सम्भवात् तस्य दोषत्वमित्यर्थः । अत्र व्याख्याने 'अत एवे'त्यादिप्राचीनसंवादेन समानार्थकत्वमप्युपपद्यत इत्यलम् । *साध्यगोचरसाधकमानम्*=साध्य-

अद्वैतसिद्धिः

कत्वं न दोषः, पक्षसमत्वोक्तिस्तु प्रतिज्ञाविषयत्वाभावमात्रेण। नच तर्हि प्रतिज्ञाविषयत्वमेव पक्षत्वम्; स्वार्थानुमाने तदभावात्॥

सिद्धिव्याख्या

यतो घटादेरपि पक्षत्वमत इत्यर्थः। *ननु*—उक्तरीत्या तस्यापि पक्षत्वे 'पक्षसमत्वादि'ति प्रागुक्तिविरोधः, इत्याशङ्क्याह—*पक्षसमेति*॥ तथाच तदुक्तेरन्यथासिद्धत्वाद् न तया पक्षत्वोक्तेर्विरोध इति ध्येयम्। *ननु*—तर्हि प्रतिज्ञाविषयत्वमेव पक्षत्वम्, तच्च घटे नास्ति, इति स पक्षातिरिक्त एव; ततश्च निश्चितहेतुमति सर्वत्र साध्यसंदेहस्य दोषत्वेऽनुमानमात्रोच्छेदापत्त्या पक्षातिरिक्त एव तस्य दोषत्वे सिद्धे घटादेरपि पक्षातिरिक्तत्वात् तत्र संदिग्धानैकान्तिकता स्यादेव, इत्याशङ्क्याह—*स्वार्थानुमान इति*॥ प्रतिज्ञाविषयत्वं न पक्षत्वम्; स्वार्थानुमाने शब्दप्रयोगरूपप्रतिज्ञाविरहेण पक्षत्वाभावापत्तेरित्यर्थः। साधक-बाधकप्रमाणाभाववत्त्वरूपपक्षत्वं तु स्वार्थ-परार्थानुमानसाधारणम्। तच्च घटेऽप्यस्ति, इति न स पक्षातिरिक्तः, इति न घटे संदिग्धानैकान्त्यं दोषः, इति वियदित्येव पक्षनिर्देशः। नच—वियन्मात्रस्य पक्षत्व उक्तविधया घटे संदिग्धानैकान्त्यपरिहारेऽपि घटादिसाधारण्यामेकस्यामनेकस्यां वा विप्रतिपत्तौ सत्यां घटादिबहिर्भावेण वियन्मात्रपक्षनिर्देशस्यानाकाङ्क्षिताभिधानत्वेनाप्राप्तकालत्वमिति—वाच्यम्; पूर्वविप्रतिपत्तौ ब्रह्मण्यध्यस्तक्षणिकत्वादेरधिष्ठानब्रह्मप्रमामात्रनिवर्त्यत्वात् तत्र सिद्धसाधनप्रसङ्गेन, शुक्तिज्ञानादेरपि ब्रह्मज्ञानत्वात् तद्बाध्ये रजतादावेव सिद्धसाधनप्रसङ्गेन, 'शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मते वियदादेरपि ब्रह्मप्रमान्यबाध्यत्वात् पक्षालाभप्रसङ्गेन चानुपपन्नायां सत्यां घटादिबहिर्भावेण वियन्मात्रपक्षनिर्देशस्याकाङ्क्षिताभिधानत्वेनाप्राप्तकालत्वायोगादिति भावः॥

*अत्रेदं तत्त्वम्*—वियदित्येव पक्षनिर्देशोऽस्तु। यत्तु—वियदिति पक्षं निर्दिश्य तत्र मिथ्यात्वसाधने घटादौ संदिग्धानैकान्त्यम्—इति, तन्न; निश्चितसाध्याभाववति हेतुसंदेह एव संदिग्धानैकान्त्यात्। नच—निश्चितसाध्याभाववति हेतुसंदेह इव निश्चितहेतुमति साध्यसंदेहेऽपि संदिग्धानैकान्त्यमेव, उभयथापि साध्याभाववदवृत्तित्वरूपव्याप्तिमत्त्वसंदेहस्य दूषकताबीजस्यानपायादिति—वाच्यम्; तथा सति प्रसिद्धधूमानुमानादावपि तथाविधसंदेहसत्त्वेन दुष्टत्वप्रसङ्गात्। किंचैवमनुमानमात्रोच्छेदप्रसङ्गः। नच—पक्षादन्यत्र तथाविधसंदेहो दोष इति—वाच्यम्; 'पक्षादन्यत्रे'ति कोऽर्थः? किं संदिग्धसाध्यवतोऽन्यत्र? किं प्रतिज्ञाविषयादन्यत्र? आहो स्वित् सिसाधयिषाविरहसहकृतसिद्ध्यभाववतोऽन्यत्रेति? नाद्यः; घटादेरपि सन्दिग्धसाध्यवत्त्वेन तदन्यत्वाभावात्, न द्वितीयः; स्वार्थानुमानोच्छेदप्रसङ्गात्, न तृतीयः; घटादौ तादृशसिद्ध्यभावरूपपक्षतायाः सत्त्वेन तदन्यत्वाभावादेव। नच तस्यापि वस्तुतः पक्षत्वेऽनुमित्यापत्तिः; तत्र हेतुज्ञानदशायामिष्टापादनात्, तदज्ञानदशायां च पक्षतासत्त्वेऽपि लिङ्गपरामर्शाभावादेव तदभावोपपत्तिः; तत्र पक्षसमत्वव्यवहारस्य प्रतिज्ञाविषयत्वाभावमात्रेणोपपत्तेः। नच—एवं पक्षनिर्देशे घटादिसाधारण-'ब्रह्मप्रमे'त्याद्युक्तविप्रतिपत्त्यनानुगुण्यदोषः, वियदिति पक्षनिर्देशयुक्तानुमानस्य तादृशविप्रतिपत्तिजन्यसंशयनिवर्तकनिश्चयाजनकत्वादिति—वाच्यम्; विप्रतिपत्तेः पक्षपरिग्रहैकफलकत्वनियमाभावेन कथाङ्गत्वेनापि स्वीकारसंभवादिति। यत्तु—(कण्टकोद्धारे ६१) व्यभिचारसंशयप्रतिबन्धकतावादेऽपि स पक्षीयः स्वारसिकश्चेत्, अप्रतिबन्धक इत्यविवादम्। तथाच

विट्ठलेशीयटिप्पणी

निश्चयः। *ननु* तर्हि पक्षभेदघटितपक्षसमत्वं घटादेः कथमुक्तम्? अत आह—*पक्षसमत्वोक्तिस्त्विति*॥ *प्रतिज्ञेति*॥ पक्षसम इति व्यवहारे पक्षपदेन प्रतिज्ञाविषय उच्यते। 'पक्षभिन्ने हेतुमति साध्याभावसन्देहो दूषणम्' इत्यत्र तु साध्यसन्देहवदिति भावः। *नच तर्हीति*॥ 'पक्षभिन्ने साध्याभावसन्देहो दूषणमि'त्यत्र पक्षपदं पक्ष-तत्समोभयपरम्। पक्षसमत्वं च प्रतिज्ञाविषयभिन्नत्वे सति साध्यसन्देहवत्त्वमिति भावः॥

व्यभिचारसंशयस्य प्रतिबन्धकत्वं पक्षताघटकान्यव्यभिचारज्ञानत्वेनैव; लाघवात्, नत्वन्यथा; गौरवात्। एवंच

न्यायामृतम्

प्रमाणं चात्रानुमानम्—'विमतम्, मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्; शुक्तिरूप्यवत्'

अद्वैतसिद्धिः

एवं विप्रतिपत्तौ प्राचां प्रयोगाः—विमतम्, मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्; शुक्तिरूप्यवदिति। नावयवेष्वाग्रहः॥

तरङ्गिणी

एवं विप्रतिपत्तिवाक्यस्य प्रयोजनाभावेनानावश्यकत्वमभिधाय परपक्षमुत्थापयति—*प्रमाणं चेति* ॥ *ननु* मिथ्यात्वेऽनुमानं प्रमाणमिति भवता कथमवगतमिति ? अत आह—*विमतमित्यादि* ॥ इत्यानन्द-

न्यायामृतकण्टकोद्धारः

विश्वमिथ्यात्वस्याप्रामाणिकत्वशङ्कापनोदाय प्रमाणमाह—*प्रमाणं चेति* ॥ किं तदिति ? अतस्तदाह—*विमतमिति* ॥ इदमनुमानं नोक्तविप्रतिपत्त्यनुसारि ; तथात्वे हि विमतत्वस्य पक्षताव-च्छेदकत्वोक्तेरग्रे मिथ्यात्वविकल्पोक्तेश्च विरुद्धत्वप्रसङ्गात्, विशिष्योक्तौ विकल्पासम्भवात्, किन्तु विमतं मिथ्या नवेति विप्रतिपत्तिमनुसृत्यैवेदम्, अत एव पूर्वोत्तरपक्षानुमानप्रतिज्ञे सङ्कलय्य विप्रतिपत्तिरूह्येति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*विमतम्=विप्रतिपत्तिविशेष्यम्। *नावयवेष्विति* ॥ 'तत्र पञ्चतयं केचिद् द्वयमन्ये वयं त्रयमि'ति मीमांसकोक्तरीत्या तार्किक-मीमांसक-बौद्धानां पञ्च-त्रि-द्व्यवयववादित्वात् तान् प्रति यथामतमवयवाः प्रयोक्तव्याः। 'उदाहरणपर्यन्तं यद्वोदाहरणादिकमि'ति मीमांसकाः। उदाहरणोपनयरूपद्व्यवयववादिनो बौद्धा इति भावः॥

न्यायामृतसौगन्ध्यम्

अत्र प्रयोगः—विमतम्, मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्; शुक्तिरूप्यवदिति चेत्, न ; मिथ्यात्वाद्यनिरुक्तेः। *ननु*—सदसद्भिन्नत्वं मिथ्यात्वमिति चेत्, न ; तद्धि सत्त्वविशिष्टासत्त्वा-

सिद्धिव्याख्या

पक्षसमे व्यभिचारसंशयस्य त्वदुक्तरीत्या पक्षताघटकान्यत्वेन प्रतिबन्धकत्वं स्यादेव इति, तन्न ; संदेहस्यासार्वत्रिकत्वेन तस्य सार्वत्रिकपक्षताघटकत्वासंभवेन सिसाधयिषाविरहसहकृतसिद्ध्यभावस्यैव सार्वत्रिकत्वेन पक्षपदप्रवृत्तिनिमित्ततयाऽऽश्रयणीयत्वात्। तस्य च पक्षतुल्यत्वेनाभिमते घटादावपि सत्त्वेन वियद्वत् पक्षत्वेन तत्र निश्चितहेतुमति विद्यमानोऽपि साध्यसंदेहो न दूषणम् ; अन्यथाऽनुमानमात्रोच्छेदात्। नच—एवमन्याहितोऽपि पक्षीयसाध्यसंदेहो दूषणं न स्यादिति—वाच्यम् ; अन्याहितस्यान्वय-व्यतिरेकाभ्यां दूषकत्वेऽपि स्वारसिकस्यातथात्वात्॥

यत्तु—वियदिति पक्षनिर्देशस्य 'ब्रह्मप्रमे'त्यादिनिरुक्तघटादिसाधारणविप्रतिपत्त्यननुगुणत्वेनानुपादेयत्वमेव, नच—प्रमाणोपन्यासः कुलधर्मः ; किंतु स विप्रतिपत्तिजन्यसंशयनिवर्तकनिश्चयार्थः। नच वियदिति पक्षनिर्देशयुक्तानुमानेन तादृशविप्रतिपत्तिजन्यसंशयनिरासक्षमो निश्चयः कर्त्तुं शक्यः, येन तदादरः स्याद्—इति, तन्न ; उक्तरीत्या विप्रतिपत्तिवाक्यस्यैवादर्तव्यत्वेन तज्जन्यसंशयवत्त्वांशेन तन्निरासनिश्चयप्रयोजकप्रमाणोपन्यासानावश्यकत्वात्। यत्रैव कथायां समयबन्धानुरोधेन 'ब्रह्मप्रमे'त्यादिविप्रतिपत्तिवाक्यस्य निष्पत्तिः, तत्स्थलीयप्रमाणोपन्यासस्य तदनुगुणस्य कर्तव्यत्वेनावश्यकत्वाच्च ; अन्यथा वादि-प्रतिवादिनोः समयबन्धानुरोधित्वाभावेनोच्छृङ्खलत्वप्रसङ्गादिति॥

उपपादितां विप्रतिपत्तिमुपसंहरन् मिथ्यात्वेऽनुमानं प्रमाणयति—*एवमिति* ॥ विप्रतिपत्तौ सिद्धायामिति शेषः। *विमतमिति* ॥ मिथ्यात्व-तदभावकोटिकसंशयविषय इत्यर्थः। यद्यप्यस्मन्मते तादृशसंशय एव न संभवति ; तथापि तार्किकादिरीत्या तादृशसंशयमभ्युपेत्य तथा पक्षनिर्देशः कृत इति द्रष्टव्यम्॥

न्यायामृतम्

इत्यानन्दबोधोक्तेः, "अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, पटत्वात्, अंशित्वात्; पटान्तरवत्," इति तत्त्वप्रदीपोक्तेः। यद्यपि विमतिरपि नियतविषयत्वायावच्छेदकसापेक्षा; तथापि सावयवत्वसाधितेन

तरङ्गिणी

बोधोक्तेर्हेतोरवगतमित्यर्थः। एवमग्रेऽपि। *ननु* विप्रतिपत्तौ धर्मितेवानुमितौ पक्षताऽपि 'ब्रह्मप्रमान्येने'त्यादिनैवावच्छिद्यताम्, अत एवाग्रे प्रपञ्चसत्यत्वानुमानेषु तस्यैव पक्षतावच्छेदकत्वमभिहितम्। नच—'ब्रह्मप्रमान्येने'त्यस्य नानापदार्थघटितत्वेन गुरुत्वाद् लघ्वी विमतिरेव पक्षतावच्छेदिकेति—वाच्यम्; तस्या लघुत्वेऽपि तुच्छ-ब्रह्मव्यावृत्त-वियदाद्यनुगतरूपनियतविषयत्वायोक्तावच्छेदकसापेक्षत्वेनोक्तस्यैव पक्षतावच्छेदकत्वमुचितम्, नतु विमतेस्तद्ग्रहाधीनग्रहाया इत्याशङ्क्य निराकरोति—*यद्यपीति* ॥ सत्यं विमतिरनुगतावच्छेदकसापेक्षेति; तथाप्यनुमाने लघ्व्या विमत्यैव पक्षतावच्छेद उचितः; प्रमाणोपन्यासेन लघुभूतस्यैवादरणीयत्वात्; सावयवत्वेन गुरुणा गृहीतस्य लघुनः कार्यत्वस्य हेतुत्ववदित्यर्थः। सत्यत्वानुमानेषु तस्य तत्त्वेनोपा-

न्यायामृतकण्टकोद्धारः

प्रागभिहितम्। नचैवमुक्तविप्रतिपत्तिप्रदर्शनानर्थक्यम्; विमतस्वरूपलाभायैव तदुत्कीर्तनादिति ध्येयम्॥ *अयं पट इति* ॥ अत्र पटमात्रस्य पक्षत्वे पटान्तरस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेनांशतः सिद्धसाधनवारणाय—*अयमिति* ॥ अयमित्येवोक्तौ इदंशब्दस्य पुरोवर्तिवाचकतया, एतत्तन्तुग्रहणे तेषां स्वनिष्ठात्यन्ताभावप्रतियोगित्वेन सिद्धसाधनवारणाय—*पट इति* ॥ साध्य एतत्तन्तुपदम् एतत्पटोपादानपरम्। तेनैतत्पटोपादाननिष्ठात्यन्ताभावप्रतियोगित्वस्य साध्यत्वे स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वं सिद्धं भवति। अन्यत् सर्वं विप्रतिपत्तिस्थल एवोक्तमिति नेह तन्यते॥

*ननु* अत्र पक्षतावच्छेदकेन भवितव्यम्। नच—विमतिरेव पक्षतावच्छेदिकेति—वाच्यम्; ब्रह्मादीतरविशेष्यकत्वज्ञानावच्छेदकसापेक्षत्वादित्यत आह—*यद्यपीति* ॥ तथाच विमतिरेवावच्छेदिकेति भावः। *ननु* विमतेः पक्षतावच्छेदकत्वं वदताऽपि तन्नियामकीभूत'ब्रह्मप्रमान्येने'त्युक्तस्य विमति-

न्यायामृतसौगन्ध्यम्

भावः? उत सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयम्? आहोस्वित् सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टं वा? नाद्यः; सत्त्वमात्राधारे जगत्यसत्त्वविशिष्टसत्त्वानभ्युपगमात्, विशिष्टा-

---

सिद्धिव्याख्या

*केचित्तु* (न्यायामृतकाराः)—ययोर्वादि-प्रतिवादिनोः पक्षे स्वस्विसाधयिषितसाध्यनिश्चयो नास्ति, कथायां कथायां कक्ष्याचालनमस्ति, तयोः स्वारसिकसंशयो न संभवति, इति तन्मात्रकर्तृककथाविशेषे तथा पक्षनिर्देशोऽत्राभिमतः। पक्षतावच्छेदकयोग्यधर्मान्तरसद्भावेऽपि विमतिविषयत्वेन पक्षनिर्देशो बाध-सिद्धसाधनादिप्रतिज्ञादोषाणामुद्भावनार्हत्वज्ञापनाय। तथाहि—न तावद् 'वियदादि' इत्येव पक्षनिर्देशो युक्तः; अवच्छेदकस्वीकारेऽस्मदुक्तपक्षप्रवेशापत्तेः, तदस्वीकारे चासंकुचितेनादिशब्देनात्मादेरपि ग्रहणापातेन बाधापत्तेः। नापि प्रपञ्च इत्येव पक्षनिर्देशः; प्रपञ्चशब्देन वियदाद्यन्यतमवस्तुसमुदायोक्तौ वियदादिमिथ्यात्वासिद्धिः; वियदादीनामेवोक्तावच्छेदकाभावेनोक्तदोषात्—*इत्याहुः* ॥

*ननु*—विप्रतिपत्तौ धर्मितेवानुमाने पक्षताऽपि 'ब्रह्मप्रमे'त्यादिनैवावच्छिद्यताम्, अत एवाग्रे प्रपञ्चमिथ्यात्वानुमानेषु तस्यैव पक्षतावच्छेदकत्वमभिमतम्। नच—'ब्रह्मप्रमातिरिक्ते'त्यस्य नानापदार्थघटितत्वेन गुरुत्वाद् लघ्वी विमतिरेव पक्षतावच्छेदिकेति—वाच्यम्; तस्या लघुत्वेऽपि तुच्छ-ब्रह्मव्यावृत्त-वियदाद्यनुगतरूप-विमतिविषयत्वा-

न्यायामृतम्

कार्यत्वेन पृथिव्याः सकर्तृकत्वसाधनमिव स्वनियामकनियतया लघ्व्या विप्रतिपत्त्या पक्षतावच्छेदो न विरुद्धः ॥

अद्वैतसिद्धिः

अत्र स्वनियामकनियतया विप्रतिपत्त्या लघुभूतया पक्षतावच्छेदो न विरुद्धः ; समयबन्धादिना व्यवधानात् तस्यानुमानकालासत्त्वेऽप्युपलक्षणतया पक्षतावच्छेदकत्वम् ॥

तरङ्गिणी

दानं तु शिष्यान् प्रति प्रयोगवैचित्र्योपपादनायेत्यदोष इत्याह—*स्वनियामकेति* ॥ विप्रतिपत्त्यन्तर्गतेन 'ब्रह्मप्रमे'त्यादिना नियामकेनेत्यर्थः ॥ *विप्रतिपत्त्येति* ॥ विमत्येत्यर्थः ॥

न्यायामृतकण्टकोद्धारः

विषयतावच्छेदकत्वं वक्तव्यमेव। तथाचावश्यकस्यावच्छेदकान्तरनिरपेक्षस्य तस्यैव पक्षतावच्छेदकत्वोपपत्तौ विमतेः पक्षतावच्छेदकत्वकथनमयुक्तमित्यत आह—*लघ्व्येति* ॥ अत्र लघुत्वं शब्दतो ज्ञातव्यम् । तत्रैव दृष्टान्तः—*सावयवत्वेति* ॥ सावयवत्वस्य समवायिकारणादिगर्भत्वेन गुरुत्वात् कार्यत्वस्य तदगर्भत्वेन लघुत्वादिति भावः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—विप्रतिपत्तिमात्रस्य निवेशे सिद्धसाधन-बाधादिकम्, घटादिमात्रविशेष्यकविप्रतिपत्तिनिवेशे प्रपञ्चमात्रस्य मिथ्यात्वासिद्धिः, तत्राह—*स्वनियामकनियतयेति* ॥ स्वस्याः=विप्रतिपत्तेः, नियामकम्= प्रकृतानुमानपक्षतावच्छेदकत्वयोग्यतासम्पादकं यद् ब्रह्मज्ञानान्याबाध्यत्वादिविशिष्टविशेष्यकत्वं पूर्वोक्तम्, तेन नियतया विशेषितया ; पूर्वोक्तयेति यावत् । *ननु*—पूर्वोक्तविप्रतिपत्तेर्ब्रह्मज्ञानान्याबाध्यत्वादिघटितरूपेण पक्षतावच्छेदके निवेशे लाघवाद् उक्ताबाध्यत्वादिरूपस्यैव पक्षतावच्छेदकत्वमुचितम्, तत्राह—*लघुभूतयेति* ॥ तद्व्यक्तित्वादिरूपलघुरूपविशिष्टयेत्यर्थः । तथाच 'ब्रह्मज्ञाने'त्याद्युक्तरूपेण परिचितपूर्वोक्तविप्रतिपत्तिव्यक्तेस्तद्व्यक्ति-

सिद्धिव्याख्या

योक्तावच्छेदकसापेक्षत्वेनोक्तस्यैव पक्षतावच्छेदकत्वमुचितम्, ननु विमतेस्तद्ग्रहाधीनग्रहाया इत्याशङ्क्याह—*अत्रेति*॥ सत्यं विमतिरनुगतावच्छेदकसापेक्षेति ; तथाऽप्यनुमाने लघ्व्या विमत्यैव पक्षतावच्छेदो युक्तः ; प्रमाणोपन्यासे लघुभूतस्यैवादरणीयत्वात्, सावयवत्वेन तत्साधितस्य लघुनः कार्यत्वस्य हेतुत्ववद् । मिथ्यात्वानुमानेषु तस्य तत्त्वेनोपादानं शिष्यान् प्रति प्रयोगवैचित्र्यज्ञापनायेत्यदोष इत्यभिप्रेत्याह—*स्वनियामकेति* ॥ धर्मितावच्छेदकतयोपस्थितो यो धर्मो 'ब्रह्मप्रमे'त्यादिरूपः स्वनियामकः, *तन्नियतया=तदनतिरिक्तविषयताकयेत्यर्थः । *विप्रतिपत्त्येति* ॥ विमत्येत्यर्थः ॥ *ननु*—पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरूपानुमित्यनुरोधेनानुमितिकाले सत एव धर्मस्य पक्षतावच्छेदकत्वमुचितम्, 'ब्रह्मप्रमे'त्याद्यनुगतधर्माश्रयविषयविमतिर्वा पृथिवीत्व-जलत्वाद्यनुगतधर्माश्रयविषयविमतिर्वा पक्षतावच्छेदिका नानुमानकालेऽस्ति; विमतेः समयबन्ध-सभ्यानुविधेयसंवरणादिना व्यवहितत्वात्, तथाच तस्याः कथं पक्षतावच्छेदकत्वम्? इत्याशङ्क्य, तावता तस्य विशेषणत्वाभावेऽप्युपलक्षणतया पक्षतावच्छेदकत्वमुपपन्नमित्यभिप्रेत्याह—*समयबन्धादिनेति*॥ यद्यप्यनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावे तस्या उपलक्षणत्वायोगः,

विट्ठलेशीयटिप्पणी

'विमतमि'त्यत्र विपदस्य विरुद्धोभयकोटिकत्वमर्थ इत्यभिप्रायेण व्याचष्टे—*विप्रतिपत्तीति* । तज्जन्यसंशयेत्यर्थः । *ननु* अबाध्यत्वान्तस्य पक्षतावच्छेदकप्रवेशो व्यर्थः, सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेऽपि शुक्तिरूप्ये न सिद्धसाधनम् ; भट्टभास्करादिभिः शुक्तौ सत्यस्य रूप्यस्य स्वीकारेण तत्र मिथ्यात्वस्यासिद्धत्वादित्यत

न्यायामृतम्

यद्वा—पृथिवी सत्यं मिथ्या वा, जलं सत्यं मिथ्या वेत्यननुगतधर्म्याश्रयाऽनुगता विप्रतिपत्तिः पक्षतावच्छेदिका। यद्यपि विमतिस्समयबन्धादिना व्यवहितत्वाद् नानुमानकालेऽस्ति; तथापि

तरङ्गिणी

*यद्वेति* ॥ आत्मत्वेतरपृथिवीत्वाद्यभावत्वान्तचतुर्दशधर्मावच्छिन्नविशेष्यताकचतुर्दशविप्रतिपत्तिप्रयुक्ता विमतिः पक्षतावच्छेदिकेत्यन्वयः। *ननु* अननुगतविप्रतिपत्तिप्रयुक्ताया विमतेरननुगतत्वात् कथं पक्षतावच्छेदकत्वम्? अत आह—*अनुगतेति* ॥ अनेकविशेष्यतावच्छेदकावच्छिन्नापि तावत्स्वेका समूहालम्बनरूपा विमतिरनुगता, तद्विषयत्वं वाऽनुगतं सम्भवति, इति सैव पक्षतावच्छेदिकेत्यर्थः। अस्मिन् पक्षे विप्रतिपत्तौ धर्मितावच्छेदकमेवानुमानेऽपि पक्षतावच्छेदकमस्त्विवति शङ्कैव नोदेति; विप्रतिपत्त्यवच्छेदकानामननुगतत्वात्, इत्यभिप्रेत्योक्तम्—*अननुगतधर्म्याश्रयेति* ॥ *विप्रतिपत्तिरिति* ॥ विमतिरित्यर्थः। पृथिव्यादौ पृथिवीत्वादिप्रत्येकधर्मावच्छेदेन जातायामपि विप्रतिपत्तौ विमतत्वं तावत्स्वनुगतमस्ति, इति लघुभूतं तदेव पक्षतावच्छेदकमिति भावः ॥ *यद्यपि विमतिरिति* ॥ पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धिरूपानुमित्यनुरोधेनानुमितिकाले सत एव धर्मस्य पक्षतावच्छेदकत्वमुचितम्, विमतेः समयबन्ध-सभ्यानुविधेयसंवरणादिना व्यवहितत्वात् तद्घटितं विमतिविषयत्वमपि नानुमानकालेऽस्तीत्यर्थः ॥

न्यायामृतकण्टकोद्धारः

*नन्वेवम्*—गौरवेण तस्य पक्षतावच्छेदकत्वाभावे विमतिविषयतावच्छेदकत्वमपि न स्यात्; अन्यथा पक्षतावच्छेदकत्वेनापि किमपराद्धम्? इत्यरुचेराह—*यद्वेति* ॥ तथाचास्मिन् पक्षे नोक्तं विमतिविषयतावच्छेदकम्, किन्तु पृथिवीत्वाद्यनेकान्येव विमतिविषयतावच्छेदकानि। नच—तर्हि तेषामेव पक्षतावच्छेदकत्वमस्त्विवति—वाच्यम्; तेषामनेकत्वेनानुगतपक्षतावच्छेदकत्वायोगात्, समूहालम्बनसंशयविषयत्वरूपविमतेरेवानुगतत्वेन पक्षतावच्छेदकत्वौचित्यात्। नच—एतादृशसंशयविषयत्वरूपविमतेरप्यतिप्रसक्तत्वेनावच्छेदकत्वमनुचितमिति—वाच्यम्; सत्यत्व-मिथ्यात्वकोटिकसंशयविषयत्वस्यानतिप्रसक्तत्वात्। नच—विशेषादर्शनवेलायां ब्रह्मण्यपि तादृशसंशयविषयत्वसम्भवादतिप्रसक्तिरिति—वाच्यम्; अत्र वादि-प्रतिवादिभूतयोर्मायावादि-तत्त्ववादिनोस्सतोरेतादृशसंशयविषयत्वस्य ब्रह्मण्ययोगात्, आहार्यसंशयस्य चातिप्रसक्तत्वादसम्भवात् ॥

यत्तु—ब्रह्मासत्प्रातिभासिकातिरिक्तसंशयविषयत्वमनतिप्रसक्तं विमतिविषयतावच्छेदकमिति, तन्तुच्छम्; तथा सति 'ब्रह्मप्रमाण्येने'त्युक्तापेक्षयाप्यस्यैव गुरुत्वेन तस्यैव विमतिविषयतावच्छेदकत्वौचित्यात्, त्वदुक्तस्यैव विमतिविषयतावच्छेदकत्वे विमतेस्तावज्ज्ञानसाध्यत्वेन गौरवात्, 'ब्रह्मप्रमाण्येने'त्याद्युक्तस्यैव विमतिविषयतावच्छेदकत्व एकज्ञानसाध्यत्वेन लाघवात् तस्यैवावच्छेदकत्वौचित्यात्। ब्रह्मेतरस्य सर्वस्यापि मिथ्यात्वे विप्रतिपत्तौ सत्याम्—पृथिवी सत्या, मिथ्या वेति पृथिवीत्वाद्यवच्छेदेन तदुपदर्शनस्यानौचित्याच्चेति पूर्वपक्ष एव साधीयानिति द्रष्टव्यम् ॥

नचैवमपि—विमतेरर्थतो गुरुत्वात् शब्दतो गुर्वपि तदेव पक्षतावच्छेदकमस्त्विवति—वाच्यम्; तथा सति पक्षनिर्देशस्य तथैव कर्तव्यत्वापत्तेराश्रयासिद्ध्याद्यनेकदोषपरिहारस्यावश्यकत्वेन तदर्थं "विमतमि"ति प्रयोगस्यावश्यकत्वेन विमतेरेव पक्षतावच्छेदकत्वमुक्तमिति ध्येयम्। अननुगतधर्म्याश्रयाऽननुगतविशेष्यकाऽनुगता समूहालम्बनरूपा विप्रतिपत्तिः विमतिः ॥

*यद्यपीति* ॥ तथाच पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यज्ञानरूपानुमितिर्न स्यादिति भावः। यद्यपि समयबन्धाद्युत्तरमपि विमतिसम्भवः; तथापि व्याप्तिज्ञानव्यवहितत्वं द्रष्टव्यम्।

न्यायामृतम्

सैवोपलक्षणतया तज्ज्ञानं वा विशेषणतयाऽवच्छेदकमस्तु । अत एव विमतमित्येव प्राचां प्रयोगः, नतु वियदादीत्येव पक्षनिर्देशः ; अवच्छेदकाभावेऽसंकुचितेनादिशब्देनात्मादेरपि ग्रहणप्रसङ्गात् ।

अद्वैतसिद्धिः

यद्वा ( अथवा )—विप्रतिपत्तिविषयतावच्छेदकमेव पक्षतावच्छेदकम् । प्राचां प्रयोगेष्वपि 'विमतमि'ति पदं विप्रतिपत्तिविषयतावच्छेदकावच्छिन्नाभिप्रायेणेत्यदोषः ॥

तरङ्गिणी

*सैवेति* ॥ विमतिविषयतेत्यर्थः । विमतेरनुमानकालेऽसत्त्वेऽपि 'पाकरक्तः श्यामः' इतिवद् विमतं मिथ्येत्यनुमितिरप्रत्यूहैव । *ननु*—पक्षतावच्छेदकाभावे पक्षतावच्छेदकविशिष्टे हेतुज्ञानरूपपक्षधर्मताज्ञानं न स्यादिति—चेत्, *न* ; स्वरूपसत्पक्षतावद्धर्मताज्ञानस्यैव पक्षधर्मताज्ञानत्वात् । नच—पक्षतावच्छेदकासत्त्वे पक्षतापि कथं वर्ततामिति—वाच्यम् ; "विषयजन्यं ज्ञानं प्रत्यक्षमि"ति लक्षणे विषयत्वेनाभिमते घटादौ स्वज्ञानात् पूर्वं ज्ञानविषयत्वाभावेऽपि विषयत्वेनावच्छेद्यायाः स्वज्ञानं प्रति जनकतायाः सत्त्वमिवोपपत्तेरिति भावः । *ननु* उत्सर्गतो विशेषणत्वावगाहित्वरूपप्रमाणस्वभावबाध एवात्र दोषः प्राप्नोति, अत एव 'रूपप्रागभावावच्छिन्नो घटो रूपवानि'त्यत्र बाध उक्तः, उपलक्षणत्वे तदसम्भवादित्यरुच्या पक्षतावच्छेदकस्य विशेषणत्वमेवाह—*तज्ज्ञानं वेति* ॥ विमतिविषयत्वज्ञानं वेत्यर्थः ॥ न्यायवाक्यप्रयोज्यपरामर्शपूर्वक्षणे विमतिज्ञानम्, तदुत्तरक्षणे च परामर्शः, तदुत्तरक्षणे त्वनुमितिरिति भावः ॥ विमतेः पक्षतावच्छेदकत्व उपष्टम्भकमाह—*अत एवेति* ॥ "प्राचामि"त्यत्र पूज्यत्वं न विवक्षितम् ; अतो "नाञ्चेः पूजायामि"ति नलोपनिषेधाभावः । विमतेः पक्षतावच्छेदकत्वसिद्ध्यर्थमवच्छेदकान्तराणि परिसंचष्टे—*नतु वियदादीत्येवेत्यादिना* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वेनैव निवेश इति भावः । *ननु*—उक्ताबाध्यत्वादिरूपस्य विप्रतिपत्तिपरिचायकघटकतया प्रथमोपस्थितत्वात् तदेव पक्षतावच्छेदकं युक्तम्, तत्राह—*यद्वेति* ॥ *अवच्छेदकमेवेति* ॥

सिद्धिव्याख्या

भावे वा तस्यैव पक्षतावच्छेदकत्वमस्तु ; आवश्यकत्वात्, नच—विमतेरभावेऽपि तज्ज्ञानसंभवात् तदेव विशेषणतया पक्षतावच्छेदकमिति—वाच्यम् ; तथा सति 'विमतत्वेन ज्ञातं मिथ्ये'त्येव प्रतिज्ञावाक्यप्रयोगापत्त्या 'विमतं मिथ्ये'ति तत्प्रयोगानुपपत्तेः ; तथापि न तस्या उपलक्षणत्वायोगः, तत्रैव ह्यनुगतोपलक्ष्यतावच्छेदकापेक्षा, यत्र प्रत्याय्यव्यावृत्तिन्यूनवृत्त्युपलक्षणम्, यथाऽऽकाशगतेषु काकेषु 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र । नचैवं प्रकृते ; उपलक्षणभूताया विमतेर्विषयतासंबन्धेन प्रत्याय्यव्यावृत्त्यन्यूनाधिकदेशवृत्तित्वात् । नच—अतीतत्वात् कथं तयेदानीं व्यावृत्तिधीरिति—वाच्यम् ; व्यावर्तकधर्मज्ञानस्यैव व्यावृत्तिधीहेतुत्वात्, 'कुरूणां क्षेत्रं कुरूणामेवे'त्यत्र स्वरूपसज्ज्ञानस्य व्यावृत्तिधीहेतुत्वदर्शनात् । नच—पक्षतावच्छेदकविशिष्टहेतुज्ञानरूपपक्षधर्मताज्ञानं न स्यादिति—वाच्यम् ; स्वरूपसत्पक्षधर्मताज्ञानस्यैव पक्षधर्मताज्ञानत्वात् । नच—उपलक्ष्यतावच्छेदकासत्त्वे पक्षताऽपि कथं वर्ततामिति—वाच्यम् ; 'विषयजन्यं ज्ञानं प्रत्यक्षमि'ति लक्षणे विषयत्वेनाभिमते घटादौ स्वज्ञानात् पूर्वं विषयत्वस्याभावेऽपि विषयत्वेनावच्छेद्यायाः ज्ञानं प्रति जनकतायाः सत्त्वस्येवोपपत्तेरिति भावः ॥ *ननु*—प्रमाणस्योद्देश्यतावच्छेदकविशेषणत्वावगाहित्वरूपनियमबाध एवात्र दोषः प्राप्नोति, अत एव 'रूपप्रागभावावच्छिन्नघटो रूपवानि'त्यत्र बाध उक्तः, उपलक्षणत्वे तु तस्यासंभवः, इत्यरुच्या पक्षतावच्छेदकस्य विशेषणत्वमित्यभिप्रेत्याह—*अथवेति* ॥ *ननु तर्हि*—प्राचां प्रयोगे विमतमिति पदप्रयोगः कथम् ? इत्याशङ्क्याह—*प्राचामिति* ॥ वस्तुतस्तु—विमतिविषयज्ञानमस्तु विशेषणतया

न्यायामृतम्

नापि प्रपञ्च इत्येव पक्षनिर्देशः ; प्रपञ्चशब्देन वियदाद्यन्यतमवत्समुदायोक्तौ वियदादिमिथ्यात्वासिद्धेः, वियदादीनामेवोक्तावनवच्छेदकाभावेनोक्तदोषात् । नापि—वियदित्येव पक्षनिर्देशः, घटादिस्तु पक्षतुल्य इति—वाच्यम् ; पक्षादन्यत्र निश्चितसाध्याभाववति हेतुसन्देह इव निश्चितहेतुमति साध्यसन्देहेऽपि सन्दिग्धानैकान्त्यात्, प्रतिज्ञां प्रत्यविषये घटे स्वार्थानुमानानुगतस्य साधक-बाधकप्रमाण-

तरङ्गिणी

*पक्षादन्यत्रेति* ॥ एतच्च दार्ष्टान्तिके विशेषणम्, नतु दृष्टान्तेऽपि ; निश्चितसाध्याभाववति हेतुसन्देहस्य सर्वत्रापि दोषत्वात् । यद्वा दृष्टान्तेऽपि तद्विशेषणं व्याप्यत्वासिद्धीतरदोषान्तरासङ्कीर्णस्यानैकान्त्यस्य लक्ष्यत्वमभिप्रेत्य ; पक्षे तु तस्य बाधसङ्करात् । *निश्चितहेतुमतीति* ॥ तथाच वियन्मात्रस्य पक्षत्वे घटादौ सन्दिग्धानैकान्त्यं स्यादेवेत्यर्थः । *ननु* निश्चितहेतुमति सर्वत्र साध्यसन्देहो न दोषः ; अनुमानमात्रोच्छेदापत्तेः, किन्तु पक्षातिरिक्ते ; घटादिस्तु न पक्षातिरिक्तः, इति न तत्र सन्दिग्धानैकान्त्यं दोषः । नच—प्रतिज्ञाविषयत्वरूपं पक्षत्वं घटे नास्तीति स पक्षातिरिक्त इति—वाच्यम् ; प्रतिज्ञाविषयत्वं न पक्षत्वम् ; स्वार्थेऽनुमाने शब्दप्रयोगरूपप्रतिज्ञाविरहेण पक्षत्वाभावापत्तेः, किन्तु साधक-बाधकप्रमाणाभाववत्त्वं पक्षत्वं स्वार्थानुमान-परार्थानुमानसाधारणम् । तच्च घटेऽप्यस्ति, इति न स पक्षातिरिक्तः, इति न घटे सन्दिग्धानैकान्त्यं दोषः, इति वियदित्येव पक्षनिर्देशोऽस्त्वित्यत आह—*प्रतिज्ञां प्रत्यविषय इति* ॥

न्यायामृतकण्टकोद्धारः

*तज्ज्ञानम्=विमतिविषयत्वेन ज्ञानम् । अत्र प्रपञ्चशब्देन वियदादिसमुदायोऽभिधीयते ? वियदादिकमेव वा ? आद्येऽपि समुदायः समुदायिभ्यो भिन्नोऽभिन्नो वा ? नाद्य इत्याह—*प्रपञ्चशब्देनेति* ॥ द्वितीय-तृतीयौ निराकरोति—*वियदादीनामेवेति* ॥ घटादौ सन्दिग्धानैकान्त्यपरिहारार्थमाह—घटादिस्त्विति* ॥ *पक्षादन्यत्रेति* ॥ प्रतिज्ञाविषयादन्यत्रेत्यर्थः । एतद् दार्ष्टान्तिकविशेषणम् । नचैवम्—स्वार्थानुमानोच्छेदः ; तत्र पक्षवचनरूपप्रतिज्ञाऽभावेन पक्षस्यैव प्रतिज्ञाविषयादन्यत्वेन सन्दिग्धानैकान्त्यादिति—वाच्यम् ; परार्थानुमान एव प्रतिज्ञाविषयादन्यत्र सन्दिग्धानैकान्त्यस्य दोषत्वेनोक्तत्वात् । दोषान्तरमाह—*प्रतिज्ञां प्रतीति* ॥ घटादिसाधारणविप्रतिपत्तौ सत्यां 'वियदि'ति पक्षनिर्देशेऽर्थान्तरता स्यात्, अनाकाङ्क्षितार्थाभिधानं त्वर्थान्तरम् । साधारणविप्रतिपत्तौ सत्यां विशेषसाधनं ह्यनाकाङ्क्षितं भवति । नच—घटादीनामपक्षत्वेन न तत्साधारणपक्षनिर्देश इति—वाच्यम् ; स्वार्थ-परार्थानुमानसाधारणस्य साधक-बाधकप्रमाणाभावरूपस्य पक्षत्वस्य घटादिसाधारणत्वेन तत्साधारणपक्षनिर्देशोपपत्तेः ॥ नच प्रतिज्ञाविषयत्वमेव पक्षत्वम् ; स्वार्थानुमानोच्छेदकत्वेन तस्यापक्षत्वात्, तथाचार्थान्तरतेति भावः ॥

यत्तु—*ननु*—निश्चितहेतुमति सर्वत्र साध्यसन्देहो न दोषः ; अनुमानमात्रोच्छेदापत्तेः, किन्तु पक्षातिरिक्ते ; घटादिस्तु न पक्षातिरिक्तः, इति न तत्र सन्दिग्धानैकान्त्यम्, नच—प्रतिज्ञाविषयत्वरूपं पक्षत्वं घटे नास्ति, इति स पक्षातिरिक्त एवेति—वाच्यम् ; प्रतिज्ञाविषयत्वरूपं न पक्षत्वम्, स्वार्थानुमाने शब्दप्रयोगरूपप्रतिज्ञाऽभावेन पक्षत्वाभावापत्तेः, किन्तु साधक-बाधकप्रमाणाभावरूपमेव पक्षत्वं स्वार्थ-परार्थानुमानसाधारणम्, तच्च घटेऽस्ति, इति न स पक्षातिरिक्तः, इति न तत्र सन्दिग्धानैकान्त्यम्, इति वियदित्येव पक्षनिर्देशोऽस्तु, इत्यरुचेराह—*प्रतिज्ञां प्रत्यविषय इति*, तन्न ; 'घटादिस्तु पक्षतुल्यः' इत्यनेन पूर्वपक्षिणा सन्दिग्धानैकान्त्ये परिहृते पुनः "पक्षादन्यत्रे"त्यादिना सन्दिग्धानैकान्त्यदातुर्न हि

न्यायामृतम्

विरहरूपपक्षत्वस्य सत्त्वेऽप्येवं पक्षनिर्देशस्य घटादिसाधारणविप्रतिपत्त्यनानुगुण्याच्च । विप्रतिपत्तौ तु न विमतिर्धर्मितावच्छेदिका ; आत्माश्रयात् ॥

तरङ्गिणी

*एवं पक्षनिर्देशस्येति* ॥ यद्यपि वियन्मात्रस्य पक्षत्वेऽप्युक्तविधया घटे सन्दिग्धानैकान्त्यम् ; तथापि घटादिसाधारण्यामेकस्यामनेकस्यां वा विप्रतिपत्तौ सत्यां घटादिबहिर्भावेन वियन्मात्रपक्षनिर्देशस्या-नाकाङ्क्षिताभिधानत्वेनाप्राप्तकालत्वमित्यर्थः । *ननु* अनुमाने पक्षतावच्छेदिका लघ्वी विमतिरेव विप्रतिपत्तावपि धर्मितावच्छेदिकाऽस्तु, किं 'ब्रह्मप्रमान्येने'त्याद्युक्तकुसृष्ट्युक्तधर्मितावच्छेदकाश्रयणेनेति ? अत आह—*विप्रतिपत्ताविति* ॥ *विमतिः=विप्रतिपन्नत्वम् । *विप्रतिपत्तौ=विमतेर्धर्मितावच्छेदकत्वे ।

न्यायामृतकण्टकोद्धारः

"पक्षादन्यत्रे"ति यथाश्रुतमभिप्रेतम्, तथा सति पक्षतुल्यत्वोक्त्या परोक्तसन्दिग्धानैकान्त्यपरिहारस्य निराकरणाभावेन तदर्थप्रवृत्तस्य प्रकृतग्रन्थस्यात्यन्तासङ्गतत्वापत्तेः । तस्मात् "पक्षादन्यत्रे"त्येतत् प्रतिज्ञा-विषयादन्यत्रेत्यवश्यं व्याकर्तव्यमेव । तथाच घटादौ सन्दिग्धानैकान्त्यं दुष्परिहरम्, इति कथमत्रा-रुच्युद्भावनमिति न जानीमः ॥ यच्च—पक्षसमस्य पक्षत्वाश्रयत्वात् पक्षत्वमेव । तथाच तत्र सन्दिग्धा-नैकान्त्योद्भावनमयुक्तमित्यस्वरसोद्भावनमिति, तन्न ; "पक्षादन्यत्रे"त्यस्य प्रतिज्ञाविषयादन्यत्रेति व्याख्यातत्वात्, घटस्य च तदन्यत्वेन सन्दिग्धानैकान्तिकत्वस्य दुष्परिहरत्वात्, अन्यथा क्षितिमात्रस्य पक्षत्वेऽङ्कुरादौ सन्दिग्धानैकान्त्यं नोद्भाव्येत ॥

*ननु*—वियदित्येव पक्षनिर्देशोऽस्तु, नच सन्दिग्धानैकान्त्यम् ; निश्चितसाध्याभाववति हेतुसन्देह एव सन्दिग्धानैकान्त्यात् । नच—निश्चितसाध्याभाववति हेतुसन्देह इव निश्चितहेतुमति साध्य-सन्देहेऽपि सन्दिग्धानैकान्त्यमेव, उभयथापि साध्याभाववद्गामित्वसन्देहस्य दूषकताबीजस्य तुल्यत्वा-दिति—वाच्यम् ; तथा सति धूमानुमानेऽपि तथाविधसन्देहसम्भवेनानुमानमात्रोच्छेदप्रसङ्गात् । नच—पक्षादन्यत्र तथाविधसन्देहो दोष इति—वाच्यम् ; "पक्षादन्यत्रे"ति कोऽर्थः ? न तावत्सन्दिग्धसाध्य-वतोऽन्यत्रेति ; तथा सति घटादेरपि सन्दिग्धसाध्यकत्वेन तदन्यत्वाभावात्, नापि प्रतिज्ञाविषयादन्यत्रेति ; स्वार्थानुमानोच्छेदापत्तेः, तत्र पक्षवचनरूपप्रतिज्ञाया अभावात्, नापि सिसाधयिषाविरहसहकृतसिद्ध्य-भाववतोऽन्यत्रेति ; घटादौ तादृशपक्षतायाः सत्त्वेन तदन्यत्वाभावात् । नच—एवं पक्षनिर्देशे घटादि-साधारणविप्रतिपत्त्यनानुगुण्यमिति—वाच्यम् ; विप्रतिपत्तेः कथाङ्गत्वेनापि स्वीकारसम्भवादिति—चेत्, *अत्राहुः* ; व्यभिचारसंशयः प्रतिबन्धक इति तावदविवादम् । सोऽपि पक्षीयः स्वारसिकश्चेदप्रति-बन्धक इत्यप्यविवादम् । तथाच व्यभिचारसंशयस्य पक्षताघटकान्यव्यभिचारज्ञानत्वेनैव दोषत्वं वाच्यम्, नतु निश्चितसाध्याभाववति हेतुसंशयज्ञानत्वेन ; गौरवात् । एवञ्च पक्षसमव्यभिचारसंशयस्य पक्षताघटकान्यत्वेन प्रतिबन्धकत्वं स्यादेवेति, तदयुक्तम् ; पक्षताघटकान्यव्यभिचारज्ञानत्वेन व्यभिचार-संशयस्य प्रतिबन्धकत्वमित्येतत् किं संशयघटितपक्षत्वमादाय वोच्यते ? सिद्ध्यभावरूपपक्षत्वमादाय वा ? नाद्यः ; संशयस्य विशेषणत्वोपलक्षणत्वाभ्यां संशयघटितपक्षताया निराकृतत्वेन तद्घटितपक्षत्व-मादाय व्यभिचारसंशयस्य प्रतिबन्धकत्वासम्भवात्, न द्वितीयः, पक्षीयव्यभिचारसंशयस्यापि पक्षता-घटकान्यव्यभिचारज्ञानत्वेन प्रतिबन्धकत्वापत्तावनुमानमात्रोच्छेदापत्तेरिति ॥

न्यायामृतम्

*नवीनास्तु*—एतत्पटात्यन्ताभावः, एतत्तन्तुनिष्ठः, एतत्पटानाद्यभावत्वात्; एतत्पटान्योन्याभाव-

तरङ्गिणी

'मिथ्या न वे'त्यादिविप्रतिपन्नत्वं मिथ्या नवेत्यादिविप्रतिपत्तिः स्यात्, तथाचात्माश्रयः स्यात्। तस्माद् 'ब्रह्मप्रमान्येने'त्याद्यनुगतं वा पृथिवीत्वादिकमननुगतं वा विप्रतिपत्तौ धर्मितावच्छेदकमुपादातव्यमित्यर्थः ॥

न्यायामृतकण्टकोद्धारः

*वस्तुतस्तु*—वियदिति पक्षनिर्देशे घटादौ सन्दिग्धानैकान्त्यं दुष्परिहरमेव। यदत्रोक्तम्—निश्चितहेतुमति साध्यसन्देहस्य दोषत्वेऽनुमानमात्रोच्छेदः स्यादिति, तत्तुच्छम्; पक्षादन्यत्रेति विशेषितत्वात्। नचोक्तविकल्पात्रकाशः; पक्षादन्यत्रेत्यस्य प्रतिज्ञाविषयादन्यत्रेति व्याख्यानात्। नच—एवं स्वार्थानुमानोच्छेदः स्यादित्युक्तमिति—वाच्यम्; प्रतिज्ञाविषयादन्यत्रेति विशेषितस्य परार्थानुमान एव दोषत्वात्। नच तन्नियामकशून्यमिति—वाच्यम्; साध्यवत्त्वप्रकारकसंशयधर्मिमात्रसाधारणपक्षता-निर्वचननिर्बन्धस्यैव नियामकत्वात्, अत एव गङ्गेशतरणीः—"सकर्तृकत्वसंशयधर्मिमात्रसाधारणमदृष्टाद्वारकमि"त्यादिना पक्षतावच्छेदकमुक्तम्, क्षितिमात्रस्य पक्षत्वेऽङ्कुरादावनैकान्तिकता चोद्भाविता ॥

*ननु* यथा विमतिर्लघुत्वादनुमाने पक्षतावच्छेदिका, तथा विमतावपि विमतिरेव धर्मितावच्छेदिकाऽस्त्वित्यत आह—*विप्रतिपत्तौ त्विति* ॥ विमतावित्यर्थः। विमतौ हि विमत्यन्तरं धर्मितावच्छेदकम्? स्वयमेव वा? नाद्यः; अनवस्थितेः, न द्वितीय इत्याह—*आत्माश्रयादिति* ॥ स्वस्य स्वावच्छेदकत्वे स्वज्ञानाधीनज्ञानत्वेनात्माश्रय इति भावः। *वस्तुतस्तु*—विमतौ विमतिरेवावच्छेदिका। नचोक्तविकल्पावकाशः; विमत्यन्तरस्यैवावच्छेदकत्वाङ्गीकारात्। नचानवस्थेति वाच्यम्; पूर्वपूर्वेषां विमतिविषयं ज्ञात्वोत्तरेषां विमतमिति प्रयोगोपपत्त्या पूर्वपूर्वेषां विमतेरेवोत्तरेषां विमतावचच्छेदकत्वोपपत्तेः, एवं परम्परयाऽनादित्वेन वा नानवस्थादोषः। अत एव मन्त्राधिकरणे—'पूर्वपूर्वेषां मन्त्र इत्यभियुक्तप्रयोगं ज्ञात्वोत्तरेषां मन्त्र इति प्रयोगोपपत्तेर्नानवस्थे'त्युक्तम् ॥

यत्तु—"नन्वनुमाने पक्षतावच्छेदिका लघ्वी विमतिरेव विप्रतिपत्तावपि धर्मितावच्छेदिकाऽस्तु, किं 'ब्रह्मप्रमान्येने'त्युक्तकुसृष्टियुक्तधर्मितावच्छेदकाश्रयणेनेति? अत आह—*विप्रतिपत्ताविति* (तरङ्गिण्याम्)॥ (श्रीनिवासतीर्थीये) समूहालम्बनसंशयविषयत्वरूपविमतेर्विप्रतिपत्तौ धर्मितावच्छेदकत्वं नेत्यर्थः। अनुगतावच्छेदकमन्तरेणैवाननुगता नियतविषया विमतिर्विप्रतिपत्तौ धर्मितावच्छेदिकोच्यते? आहोस्विद् अनुगतावच्छेदकेनानुगता नियतविषया सा तथोच्यते? आद्येऽसम्भवः; अनुगतावच्छेदकमन्तरेण तस्या नियतविषयत्वासंभवात्, द्वितीयेऽपि किमनुगतधर्मो 'ब्रह्मप्रमान्येने'त्याद्युक्तरूपं वा? विमतिरेव वा? नाद्यः; तदनादरात्, तदादरे वा स एव विप्रतिपत्तौ धर्मितावच्छेदकोऽस्तु, कृतं तद्ग्रहाधीनग्रहाया विमतेर्धर्मितावच्छेदकत्वकल्पनया, न द्वितीयः; आत्माश्रयादित्याह—आत्माश्रयादितीति—व्याख्यानम्, तदनादरणीयम्; विमतेरनुमानेऽपि पक्षतावच्छेदकत्वोक्तावप्युक्तदोषसाम्यात्। तथाहि—अनुमाने ह्यनुगतावच्छेदकमन्तरेणैवानुगता नियतविषया विमतिः पक्षतावच्छेदिकोच्यते? उतानुगतावच्छेदकेनानुगता नियतविषया सा तथोच्यते? आद्येऽसम्भवः; अनुगतावच्छेदकमन्तरेण तस्या नियतविषयत्वासम्भवात्, द्वितीयेऽपि किमनुगतधर्मो 'ब्रह्मप्रमान्येने'त्याद्युक्तरूपो वा? विमतिरेव वा? नाद्यः; उक्तरीत्याऽनवस्थाद्यभावेन विमतेरेव विमत्यवच्छेदकत्वोपपत्तौ 'ब्रह्मप्रमान्येने'त्यस्य विमत्यवच्छेदकत्वकल्पनायां गौरवात्। नच—विमतेरर्थ-

न्यायामृतम्

वत्। तन्तुनाशजन्यस्य पटनाशस्य तन्त्ववृत्तित्वादनादीति विशेषणम्। विमतं वा, 'ब्रह्मप्रमान्येने'त्यादि-विप्रतिपत्तिवाक्योक्तविशेषणत्रयवत्त्वे सत्यव्याप्यवृत्तित्वानधिकरणं वा, स्वसमानाधिकरणात्यन्ताभावप्रति-योगि, अनात्मत्वात्; संयोगवदिति। अत्र च पक्षधर्मताबलाद् मिथ्यात्वसिद्धिः। विमतं नित्यद्रव्यान्यत्, केवलान्वय्यत्यन्ताभावप्रतियोगि, पदार्थत्वात्; नित्यद्रव्यवत्। तार्किकमते

तरङ्गिणी

*तन्त्ववृत्तित्वादिति* ॥ तथाच तत्रैव व्यभिचारवारणायानादीति विशेषणमित्यर्थः ॥ *विमत-मिति* ॥ स्वसमानाधिकरणेत्यादिसाध्यवत्त्व-तदभावाभ्यां विमतमित्यर्थः, संयोगादौ तूक्तरूपविमतेरभावाद् न तत्र सिद्धसाधनम्। *ननु* विमतेर्धर्मितावच्छेदकमस्ति ? नवा ? अन्त्येऽपर्यवसानम्, आद्येऽपि संयोगादिव्यावृत्तम् ? नवा ? नाद्यः; तस्यानुक्तत्वात्, द्वितीये संयोगादेरपि पक्षत्वमवर्जनीयमेवेत्यनुशये-नाह—*ब्रह्मप्रमेति* ॥ संयोगादौ सिद्धसाधनवारणायाव्याप्यवृत्तित्वानधिकरणमिति पक्षविशेषणम् ॥ *पक्षधर्मताबलादिति* ॥ अव्याप्यवृत्तित्वानधिकरणमिति पक्षविशेषणबलादव्याप्यवृत्तित्वेन पक्षे साध्योप-

न्यायामृतकण्टकोद्धारः

गुरुत्वाच्छन्नतो गुर्वपि 'ब्रह्मप्रमान्येने'त्युक्तमेवावच्छेदकमस्त्विति—वाच्यम्; आश्रयासिद्ध्यादिपरिहारार्थं 'विमतमि'ति पक्षनिर्देशवत् प्रकृतेऽपि विमतेरेवाभावे कस्येदं धर्मितावच्छेदकं स्यात्, इति स्वरूपाश्रया-सिद्धिपरिहारार्थं विमतेरेव तद्धर्मितावच्छेदकत्वस्यावश्यकत्वात्, न द्वितीयः; आत्माश्रयात्। नचानुमाने लघुत्वाद् विमतेः पक्षतावच्छेदकत्वम्, नतूक्तस्येति—वाच्यम्; तर्हि तत एव विमतावपि धर्मितावच्छेदकत्व-मस्तु; युक्तितौल्ये क्वचिदेव पक्षतावच्छेदकीकरणम्, क्वचिद् नेत्यस्यान्याय्यत्वात्। किंच विप्रतिपत्ताविति विप्रतिपत्तिशब्दस्य विमतिपरत्वाङ्गीकारेणोक्तरीत्या सम्यग्व्याख्यानसंभवे विप्रतिपत्तिवाक्यपरत्वकल्पनया व्याख्यानस्यासङ्गतत्वात्। नच—अत्र सर्वत्र विप्रतिपत्तिशब्देन विमतिरेव गृह्यते, विमतौ विमतेर-वच्छेदकत्वशङ्कायामुक्तरीत्या विप्रतिपत्ताविति ग्रन्थेन परिहार इति—वाच्यम्; अनुमानेऽपि विमतेः पक्षतावच्छेदकत्वोक्तावप्युक्तदूषणस्योद्भावयितुं सुकरत्वेनाप्यसङ्गतत्वादिति ॥

यत्तु—विमतेरेवानुमाने लघुत्वेन पक्षतावच्छेदकतयाऽऽश्रयणीयत्वम्; आवश्यकत्वात्। विप्रति-पत्तावपि सैव धर्मितावच्छेदिकाऽस्तु, नतु 'ब्रह्मप्रमान्येने'त्यादिगुरुधर्मस्तदवच्छेदक इत्यत आह—*विप्रतिपत्तौ त्विति* ॥ विमतिशब्देन विप्रतिपत्तिवाक्यग्रहण आत्माश्रयः, तज्जन्यसंशयग्रहणे त्वन्योन्याश्रय इति व्याख्यानम्, तदप्यसत्; अनुमाने पक्षतावच्छेदकत्वेनोक्ताया विमतेर्विप्रतिपत्तावपि धर्मितावच्छेदकत्वमाशङ्क्य, विमतिशब्देन विप्रतिपत्तिवाक्यं वा तज्जन्यसंशयो वेति विकल्पस्यासङ्गत-त्वात्, विप्रतिपत्तिशब्दस्य विप्रतिपत्तिवाक्यपरत्वस्य प्रक्रमासङ्गतत्वाच्च ॥

*ननु* प्रागभावध्वंसोऽपि तन्तुवृत्तिरेवेत्यनादिपदं व्यर्थम्; तस्य तन्मात्रव्यावर्तकत्वादित्यत आह—*तन्तुनाशेति* ॥ *विमतं वेति* ॥ विमतत्वं चात्र स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व-तद्-प्रतियोगित्वाभ्याम्, नतु सत्यत्व-मिथ्यात्वाभ्याम्। तथाचात्र नाव्याप्यवृत्तित्वव्यवच्छेदकविशेषणान्तरा-पेक्षेति द्रष्टव्यम्। अव्याप्यवृत्तित्वानधिकरणे स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं सिद्ध्यद् मिथ्या-त्वमादायैव पर्यवस्यतीति भावः। *विमतं नित्यद्रव्यान्यदिति* ॥ वैमत्यं चात्र मिथ्यात्व-सत्यत्वाभ्या-मेव, तच्च नित्यद्रव्यसाधारणम्, इति तद्व्यावृत्त्यर्थं नित्यद्रव्यान्यदिति विशेषणम्। तुच्छव्यावृत्त्यर्थम्—*विमतमिति* ॥ संयोगस्यापि व्याप्यवृत्तितैवात्राभिमता ॥ यद्वक्ष्यति—"संयोग-तदभावयोरवच्छेदक-

### न्यायामृतम्

नित्यद्रव्याणामवृत्तित्वेन तदत्यन्ताभावः केवलान्वयी, इति न दृष्टान्तस्साध्यविकलः। अत एव नात्मनि व्यभिचारः, मिथ्यात्वसिद्धिस्तु पक्षधर्मताबलात्। आत्मत्वावच्छिन्नधर्मिताको भेदः, न परमार्थसत्प्रतियोगिकः, अनात्ममात्रप्रतियोगिकत्वात्; शुक्तिरूप्यप्रतियोगिकभेदवत्—इत्याहुः॥

### तरङ्गिणी

संहाराभावेन स्वसमानाधिकरणव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं पक्षे सिद्ध्यतीत्यर्थः। नित्यद्रव्यान्यदिति पक्षविशेषणम्; वृत्तिमदित्यर्थः। एतच्च नित्यद्रव्येषु सिद्धसाधनवारणाय। संयोगादिभिन्नत्वमपि पक्षविशेषणम्, तेन संयोगादिकमादाय न सिद्धसाधनम्॥

*ननु* आत्मनोऽमिथ्यात्वात् तत्र व्यभिचार इत्यत आह—*अत एवेति*॥ आत्मनि साध्यसत्त्वाद् न व्यभिचार इत्यर्थः। अत्यन्ताभावप्रतियोगित्वं मिथ्यात्वं पक्षताबलात् सिद्ध्यतीत्याह—*मिथ्यात्वसिद्धिस्त्विति*॥ वृत्तिमत्त्वार्थकनित्यद्रव्यान्यत्वविशेषणादवृत्तित्वमादाय पक्षे साध्योपसंहाराभावे सति मिथ्यात्वसिद्धिर्भवतीत्यर्थः। *आत्मत्वावच्छिन्नेति*॥ शुक्तिरूप्यप्रतियोगिक आत्मानात्मधर्मिके भेदे सिद्धसाधनवारणाय—*आत्मत्वावच्छिन्नेति*॥ *अनात्ममात्रेति*॥ आत्मानात्मप्रतियोगिके शुक्तिरूप्यधर्मिके भेदे व्यभिचारवारणाय—*मात्रेति*॥ अनात्ममात्रप्रतियोगिकसादृश्यादेः पक्षसमत्वाद् न तत्र व्यभिचारः॥

### न्यायामृतकण्टकोद्धारः

भेदेन भिन्नाश्रितत्वस्यैवानुभवेन सत्त्वपक्षे सामानाधिकरण्यायोगात्—" इति। अतो न तदन्यदिति विशेषणम्। *मिथ्यात्वसिद्धिस्त्विति*॥ नच—रूपान्तरेण सम्बन्धान्तरेण सत्त्वेऽपि रूपान्तरेण सम्बन्धान्तरेण केवलान्वय्यत्यन्ताभावप्रतियोगित्वस्य सत्त्वेऽप्युपपत्त्यार्थान्तरमिति—वाच्यम्; येन सम्बन्धेन येन रूपेण यत् प्रतीतम्, तत्सम्बन्ध-रूपावच्छिन्नाभावस्य विवक्षितत्वात्। नचैवमप्रसिद्धिरिति वाच्यम्; अवृत्तिगगनादौ प्रसिद्धत्वात्। नच—एवमपि मिथ्यात्वासिद्धिः, अवृत्तित्वेनैवोपपत्तेरिति—वाच्यम्; वृत्तिमत्त्वस्य पक्षतावच्छेदकत्वात्, 'नित्यद्रव्यान्यदि'त्यनेन तस्यैव विवक्षणादिति भावः। *आत्मत्वावच्छिन्नेति*॥ अत्र भेदमात्रस्य पक्षत्वे आत्मप्रतियोगिकस्य पक्षत्वापत्तावंशे बाधः; तदर्थम्—'आत्मधर्मिक इति'॥ तावत्युक्ते देवदत्तात्मा शुद्धचैतन्यं नेत्यस्याप्यात्मधर्मिकत्वेन पक्षत्वापत्तौ पुनरंशे बाधः, तदर्थम्—*आत्मत्वावच्छिन्नेति*॥ तस्य च देवदत्तात्मत्वावच्छिन्नत्वाद् न दोषः। नचैवम्—'आत्मा शुक्तिरूप्यं ने'त्यस्याप्यात्मत्वावच्छिन्नधर्मिताकत्वेन पक्षत्वापत्त्यांऽशतः सिद्धसाधनमिति—वाच्यम्; अर्थक्रियासमर्थप्रतियोगिक इति पक्षविशेषणात्, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्येति मते तस्यादोषत्वाच्च। अत्र हेतौ मात्रपदाभावे 'पटः शुद्धचैतन्यं ने'ति भेदस्यानात्मप्रतियोगिकत्वेन साध्याभावेन च व्यभिचारः स्यात्, तदर्थम्—*मात्रेति*॥

### सिद्धिव्याख्या

पक्षतावच्छेदकम्; विमतेः समयबन्धादिना व्यवधानेऽपि तद्घटितविषयतावच्छेदकस्य विमतिविषयत्वस्य अनुमानकालीनत्वेन विशेषणत्वायोगात्। नचैवं—'विमतत्वेन ज्ञातं मिथ्ये'ति पक्षनिर्देशप्रसङ्ग इति—वाच्यम्; इष्टापत्तेरिति ध्येयम्॥

*ननु*—इदमनुपपन्नम्; तथाहि—'विमतं मिथ्ये'त्यनुमाने विमतपदेन किं विप्रतिपत्तिवाक्यमभिप्रेतम्? किं तत्रान्यतरसंशयः? नाद्यः; विप्रतिपत्तिवाक्यस्य पक्षावृत्तितया पक्षतावच्छेदकत्वानुपपत्तेः। नच—व्यापाराद्यनुबन्धितया पक्षवृत्तित्वमिति—वाच्यम्; उक्तरीत्या वादि-प्रतिवादिनोः प्राश्निकानां च निर्णयवत्त्वेन ततः संशयासंभवस्योक्ततया

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भट्टभास्करमते शुक्तिरूप्यादेः सत्यस्य शुक्त्यादावुत्पत्तिस्वीकारात् तदनुयायिना(१) केनचिद् यदि तस्य मिथ्यात्वमुच्यते, तदा तेन सह विप्रतिपत्तौ तस्यामबाध्यत्वान्तमेव पक्षविशेषणम् ; तथाच न तं प्रति सिद्धसाधनम् । तादृशस्य कस्यचिदभावेऽपि दृष्टान्तसिद्धये शुक्तिरूप्यादौ मिथ्यात्वस्य प्रकृतानुमानात् पूर्वं प्रसाध्यत्वात् तत्र सिद्धसाधनवारणाय तद्विशेषणं देयमेव(२) । यदा त्ववच्छेदकावच्छेदेनानुमितिमुद्दिश्य विप्रति-

### विट्ठलेशीयटिप्पणी

आह—*भट्टेति* ॥ *स्वीकारादिति* ॥ तेन सह विवादेऽबाध्यत्वान्तस्यैवार्थ्येऽपीति शेषः । *तदनुयायिनेति* ॥ रजतोत्पत्तिस्वीकारमात्रेण तदनुयायिता बोध्या । *अबाध्यत्वान्तमेवेति* ॥ एवकारेणोत्तरविशेषणव्यवच्छेदः ॥ सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन बाधस्यादोषतया तद्वारकविशेषणानर्थक्यात् । *तथाच*= तद्विशेषणोपादाने च । *ननु* तादृशवादिनोऽप्रसिद्धत्वात् तद्विशेषणं व्यर्थम्, अत आह—*तादृशस्येति* ॥ *तादृशस्य*=शुक्तिरूप्यमिथ्यात्ववादिनो भट्टभास्करानुयायिनः । *देयमेवेति* ॥ ये जगदेव सत्यमिति वदन्ति, तान्

---

(१) मिथ्यात्वघटकासद्वैलक्षण्यरूपसत्यत्वानुमतौ सद्वैलक्षण्यानुमतेरपि संभवात् । यदि सद्रूपं स्यात्, तदा न शुक्तिज्ञानबाध्यं स्यादिति बाधकतर्कसचिवस्यैकदेशानुमतौ सर्वानुमतिरिति न्यायस्य जागरूकत्वात् । (२) अत्र केचित्—'चिद्भिन्नत्वस्य प्रातिभासिकसाधारणस्य पक्षतावच्छेदकत्वे ब्रह्मणि बाधतादवस्थ्याद् धर्म्यन्यूनसत्ताकत्वापेक्षया लघुभूतधर्मिसमसत्ताकचिद्भेदस्य विवक्षणीयतया तत एव शुक्तिरूप्यसिद्धसाधनवारणात् प्रथमविशेषणं निरर्थकम्, अधिकरणात्मनोऽपि भेदस्य तत्समसत्ताकत्वे तु 'इदं नारजतमि'ति प्रतीतिसिद्धव्यावहारिकरजताधिकरणकारजतभेदस्यापि व्यावहारिकत्वापत्त्याऽनिर्वचनीयवादविरोधापत्तिः ; अन्यथा ब्रह्माधिष्ठानकचिद्भेदस्यापि पारमार्थिकत्वापत्त्या धर्म्यन्यूनसत्ताकत्वविवक्षणेनापि बाधावारणात् । अस्तु वा कथंचित् सिद्धसाधनप्रसङ्गः, तावतापि प्रथमदलेन नोक्तदोषवारणम् ; ब्रह्मप्रमातिरिक्ताबाध्यत्वेन कल्पितमिथ्याभूतरजतमादाय पुनरपि सिद्धसाधनप्रसङ्गात्, किंच ब्रह्मप्रमापदेन ब्रह्ममात्रविषयकप्रमाविवक्षण आश्रयासिद्धिः, प्रपञ्चस्य—'अहं ब्रह्म घटो विनाशी'ति ज्ञाननिवर्त्यत्वात् । ब्रह्मविषयकप्रमाविवक्षणे च 'ब्रह्म न क्षणिकमि'त्यादिज्ञाननिवर्त्यक्षणिकत्व-ध्वंसप्रतियोगित्वादौ सिद्धसाधनम् । तत्र यथाकथंचित् परिहारेऽपि ब्रह्मप्रमाऽव्यवहितपूर्वप्रातिभासिके सिद्धसाधनम्, स्वजन्यध्वंसप्रतियोग्यज्ञानत्व-तादृशाज्ञानप्रयुक्तत्वान्यतरसंबन्धेन ध्वंसविशिष्टान्यत्वस्य विवक्षणे तु युष्मन्मतेऽविद्याध्वंसादेरनङ्गीकारेणाश्रयासिद्धिरिति'—वदन्ति ॥

परेतु—'इदं चिन्ने'त्याकारकप्रतीतिविषयो हि भेदो न शुद्धचिति, किंतूपहितचिति, इति तत्र साध्यसत्त्वाद् न बाधप्रसङ्गः । 'चित् चिन्ने'त्याकारकप्रतीतिस्तु 'घटो न घटः' इति प्रतीतिरिवाहार्यरूपा न प्रातिभासिकमपि भेदं साधयेत्, "नेह नानास्ति किंचने"ति श्रुतेस्तन्मूलकानुमानजन्यनिश्चयस्य चाहार्यरूपत्वेऽपि श्रुतिबोधितत्वात् प्राप्ताप्राप्तविवेकन्यायेन द्वितीयाभावबोधकत्वेऽपि न विरोधः । एतेन—ब्रह्म चिन्नेत्यादिप्रत्ययोऽपि—व्याख्यातः ; अस्तु वा प्रातिभासिकचिद्भेदस्यापि प्रमाणविषयत्वम्, तावतापि जडत्वनिरुक्तिप्रकरणे ब्रह्मानन्दसरस्वतीभिरुक्तरीत्या चिद्वृत्तित्वरूपानौपाधिकत्वविशिष्टचिद्भेदस्यात्र विवक्षणाद् बाधवारणम् । एतेनासति बाधवारणार्थं सत्तादात्म्यमप्यावश्यकमिति सूचितम् । एवं च शुक्तिरूप्ये सिद्धसाधनवारणार्थं 'ब्रह्मप्रमेति'विशेषणमावश्यकमेवेति सिद्धम् । *ननु*—उक्तविशेषणे दत्तेऽपि ब्रह्मप्रमातिरिक्ताबाध्यमिथ्याभूतरजतस्यापि केनचित् कल्पनसंभवात् सिद्धसाधनतादवस्थ्यमिति—चेत्, *अत्रेदं प्रष्टव्यम्*—किमधिष्ठानकः किमारोप्यकश्चात्र भ्रमो विवक्षित इति ? तत्र—न तावद् 'रजतं ब्रह्मप्रमातिरिक्ताबाध्यमि'ति रजताधिष्ठानको ब्रह्मप्रमातिरिक्ताबाध्यारोप्यकश्च भ्रमः संभवति ; किंचिद्रूपेणाज्ञातस्य किंचिद्रूपेण ज्ञातस्य चैवाधिष्ठानत्वनियमेन रूप्यस्यानिर्वचनीयस्यातथात्वेनानधिष्ठानत्वात् । नच—रजतावच्छेदेन तादात्म्योपहितेदमो रजततादात्म्यावच्छेदेनेदंतादात्म्यस्य चाध्यासाद् रूप्यावच्छिन्नस्य चैतन्यस्य ब्रह्मप्रमातिरिक्तबाध्यत्वांशेनाज्ञानविषयत्वं युक्तमित्यधिष्ठानत्वसंभव इति—वाच्यम् ; रजतावच्छेदेनेदमादितादात्म्यारोपं प्रत्यपीदमवच्छिन्नचैतन्याश्रितस्य तद्विषयस्य चैवाज्ञानस्य कारणत्वमिति गुरुचन्द्रिकायामुपपादितत्वात् स्वाप्नस्थले साक्षिण एवाधिष्ठानत्वाच्च न रजताधिष्ठानकोक्तभ्रमसंभवः । किंच—कदा वाऽयं भ्रमः—किं बाधतः पूर्वम् ? उत तदुत्तरमित्यपि विवेचनीयम्—आद्येऽपि किमपरोक्षः ? उत परोक्षः ? तत्र न तावत् प्रथमे प्रथमः ;—इदन्तावुल्लेखं विनाऽपरोक्षत्वासंभवात्, नापि द्वितीयः ; परोक्षेऽन्यथाख्यातिस्वीकारात् ; अनिर्वचनीयख्यातिपक्षेऽप्यधिष्ठानसत्त्वनियमेन तदसंभवात् । स्वाप्नभ्रमस्त्वपरोक्षरूप इति गजाद्यवच्छिन्नचैतन्याधिष्ठानकत्वेऽपि न दोषः, इति विस्तरभयादुपरम्यते ।

सिद्धिव्याख्या

संशयरूपव्यापारानुबन्धितया विप्रतिपत्तिवाक्यस्य पक्षवृत्तित्वायोगात्, विशेषदर्शनरहितेषु वाद्यादिषु केषुचिद् विप्रतिपत्तिवाक्यतः संशयसंभवेऽपि सार्वत्रिककथायामनावश्यकत्वात्। अत एव न द्वितीयः। किञ्च यथाकथंचित्संशयविषयत्वस्यातिप्रसक्ततयाऽनतिप्रसक्तस्यैव तस्य पक्षतावच्छेदकत्वे वाच्ये संशयादिप्रसक्तेश्च विषयानतिप्रसक्त्यैव संपाद्यतया तस्य चानतिप्रसक्तधर्मं विनाऽयोगेन तादृशधर्मस्यावश्यकत्वे तस्यैव सार्वत्रिकतया पक्षतावच्छेदकत्वाश्रयणं युक्तम्, नतु क्वाचित्कस्य संशयस्य। *एतेन*—विप्रतिपत्तिवाक्यस्य तज्जन्यसंशयस्य वाऽनतिप्रसक्तत्वाय विषयगतानतिप्रसक्तावच्छेदकीभूतधर्मान्तरसापेक्षत्वेऽपि यदा यदा तदुपस्थितिः, तदा तदा तद्धर्मोपस्थितिरिति नियमाभावाद् यदैव विप्रतिपत्तिवाक्यस्य तज्जन्यसंशयस्य वोक्तरीत्या वस्तुतोऽनतिप्रसक्तस्योपस्थितिः, तदा तेनापि पक्षतावच्छेदकस्याविरुद्धत्वात् तत्स्थलीयविप्रतिपत्तिविषयत्वं वा पक्षतावच्छेदकमभिप्रेत्य 'विमतं मिथ्ये'त्यादौ प्राचां पक्षनिर्देशः। अत एव वक्ष्यति—यद्यपि विमतिरपि नियतविषयत्वायावच्छेदकसापेक्षा; तथापि सावयवत्वसाधितेन कार्यत्वेन पृथिव्यादिसकर्तृकत्वसाधनमिव स्वनियामकनियतया लब्ध्या विमत्या पक्षतावच्छेदोऽपि न विरुद्ध इत्यादि—निरस्तम्; वादि-प्रतिवादिनोः प्राश्निकानां च स्वारसिकसंशयाभावस्योक्तत्वात्, विशेषादर्शिषु क्वचित् क्वचित् तस्य योगेऽप्यसार्वत्रिकतया सार्वत्रिकधर्मान्तरस्यैव संशयानतिप्रसक्तत्वसंपादकत्वेनावश्यकत्वे तस्यैव तदवच्छेदकताया न्याय्यत्वाच्च।

---

नापि द्वितीयः; वस्तुन एवाभावेन तदधिष्ठानकस्य भ्रमस्यासंभवात्। एतेन—'इदं ब्रह्मप्रमातिरिक्ताबाध्यमि'त्याकारोऽपि न संभवतीति—सूचितम्; 'इदं ब्रह्मप्रमातिरिक्ताबाध्यरजतमि'ति शुक्त्यवच्छिन्नचैतन्याधिष्ठानको भ्रमो यद्यपि संभवति; तथापि तत्राबाध्यत्वांशेऽन्यथाख्यातिस्वीकारस्यैव युक्तत्वेन न दोषः। 'अन्योन्यस्मिन्नन्योन्यात्मकतामि'ति भाष्यं तु धर्मयोर्धर्मिणोश्च परस्परावच्छेद्यभावप्रतिपादनपूर्वकं धर्मधर्म्यध्यासयोर्व्याप्य-व्यापकभावमेव बोधयति, नतु भासमानसंनिकृष्टासंनिकृष्टसकलधर्माध्यासावश्यकताम्। अत एव— 'इदं रजतमि'त्यादिभ्रमस्थल इदमि रजतम्, तत्तादात्म्यम्, रजतत्वसंसर्गः, रजते तादात्म्योपहितेदम्, इदंतादात्म्यम्, इदंत्वसंसर्गश्चेति पदार्थषट्कोत्पत्तिरेव चन्द्रिकाकारैरङ्गीकृता, न त्विदंत्वोत्पत्तिरपि। एवं च यत्राध्यासं विनाऽवच्छेद्यावच्छेदकभावानुपपत्तिस्तत्रैवाध्यासकल्पना नान्यत्र, इति जपाकुसुमस्थले लौहित्याध्यासास्वीकारेऽपि न क्षतिः, इत्यबाध्यत्वादिधर्माणामध्यासकल्पना न युक्तैव। *नन्वेवम्*—अन्यथाख्यातिस्वीकारमात्रेण कथमुक्तदोषवारणम्? यावता शुक्तिरूप्येऽपि व्यावहारिकं ब्रह्मप्रमातिरिक्ताबाध्यत्वमुक्तप्रमितिसिद्धं भवताऽभ्युपगम्यत इति—चेत्, *अनौपाधिकोक्ताबाध्यत्वस्य विवक्षणादिति गृहाण*। अनिर्वचनीयख्यातिपक्षेऽपि भ्रमज्ञानसामान्यस्य विशिष्टवैशिष्ट्यावगाहित्वनियमेन केवलरजतेऽबाध्यत्वावगाहनात्, विशिष्टरजतस्य च 'नेदं ब्रह्मप्रमातिरिक्ताबाध्यमि'ति ब्रह्मप्रमातिरिक्तबाध्यत्वाद् न सिद्धसाधनम्। उक्तनियमानादरणे तु विशेष्यतान्यप्रकारतासम्बन्धेन ब्रह्मप्रमातिरिक्ताबाध्यत्वविवक्षणाद् नात्र दोषः; विशेष्यतारूपप्रकारतासम्बन्धेनैवोक्ताबाध्यत्वस्य तत्र भासनात्। एवं ब्रह्मप्रमापदेन महावाक्यजन्यतावच्छेदकविषयिताकप्रमाविवक्षणाद् न—'अहं ब्रह्म घटो विनाशी'ति ज्ञानबाध्यत्वमादायाश्रयासिद्धिः। यदि तु—'अहं ब्रह्मे'ति समूहालम्बनज्ञानस्याहार्यरूपत्वाद् न बाधकत्वमिति विभाव्यते—तदा ब्रह्ममात्रविषयप्रमाविवक्षणेऽपि नाश्रयासिद्धिः। *एतेन*—'ब्रह्म न क्षणिकमि'त्यादिज्ञाननिवर्त्यक्षणिकत्वेऽपि न सिद्धसाधनमिति—सूचितम्। ब्रह्मप्रमातिरिक्ताबाध्यत्वं च तद्योग्यत्वरूपम्। तद्योग्यत्वं च तदवच्छेदकधर्मशून्यत्वम्। अवच्छेदकश्च धर्मः पञ्चवाज्ञान-तत्कार्यत्वान्यतरत्वमिति *गुरुचन्द्रिका*दृतपक्षादरणे तु ब्रह्मप्रमाऽव्यवहितपूर्वप्रातिभासिकादावपि न सिद्धसाधनम्, एकाज्ञानपक्षे स्वागन्तुकदोषकरणकज्ञानविषयत्वं बाध्यतावच्छेदकम्, इति तत्रापि न दोषः। एतेन—ब्रह्मान्यविशिष्टान्यत्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वम्, ब्रह्मान्यवैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन, स्वाधिकरणता चाप्रामाण्यज्ञानानास्कन्दितस्वविषयकनिश्चयत्वसंबन्धेन, प्रतियोगितावच्छेदकता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन, स्वनिष्ठावच्छेदकता च स्वपूर्वत्व-स्वप्रयोजकाज्ञानकालीनत्वान्यतरसंबन्धेन; उक्तरूपस्य ब्रह्मप्रमातिरिक्ताबाध्यत्वस्य ब्रह्मान्यशुक्त्यादिविशिष्टरजतादौ क्षणिकत्वाभावविशिष्टब्रह्मविशिष्टक्षणिकत्वादौ चाभावात् सिद्धसाधनवारणेऽपि ब्रह्मप्रमाऽव्यवहितपूर्वप्रातिभासिके न सिद्धसाधनवारणम्; स्वजन्यध्वंसप्रतियोग्यज्ञानत्व-तादृशाज्ञानप्रयुक्तत्वान्यतरसंबन्धेन ध्वंसविशिष्टान्यत्वविवक्षणे त्वद्वैतिमतेऽविद्याध्वंसानङ्गीकाराच्चाश्रयासिद्धिरिति शङ्कापि—पराहता; स्वप्रयुक्ताभावप्रतियोग्यज्ञानत्व-तादृशाज्ञानप्रयुक्तत्वान्यतरसंबन्धेनाभावविशिष्टान्यत्वविवक्षणेनाप्युक्तदोषवारणात्। एकाज्ञानपक्षे तु स्वप्रयोजकाज्ञानसमकालीनत्वस्थाने स्वसंस्कारकालीनत्वविवक्षणेन दोषवारणम्। अथवा—स्वपूर्वत्वसंबन्धनिवेशेनैवेष्टसिद्धौ स्वप्रयोजकाज्ञानकालीनत्वसंबन्धनिवेशे प्रयोजनाभावादुक्तदोषवारणमिति सर्वमनवद्यम्॥ इति।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पत्तिस्तार्किकादिना सह, तदेतरविशेषणे एव देये। तत्राप्यलीकवादिनं प्रत्येवार्हान्तविशेषणं देयम्। एकदा तु न द्वाभ्यां सह विप्रतिपत्तिः; तथैव कथकानां संप्रदायात्। तथाच यदेव यं प्रति विप्रतिपत्तौ पक्षविशेषणम्, तदेव तं प्रति न्यायप्रयोगेऽपीति भावः॥

*ननु*—सत्त्वेन प्रतीतियोग्यत्वं सद्रूपचित्तादात्म्यं घटादौ व्यावहारिकम्; घटादितुल्यकक्षत्वात्; शशविषाणादावलीके तु प्रातीतिकं सम्भवति; अनध्यस्तेऽप्यलीके सत्तादात्म्यस्यारोपसम्भवात्, *यदि पुनः

सिद्धिव्याख्या

नच—संशयस्य नियतविषयत्वप्रयोजकस्य 'ब्रह्मप्रमे'त्यादिनिरुक्तधर्मस्य तत्संशयापेक्षया गुरुशरीरत्वात्, तत्संशयस्याखण्डवृत्तित्वेन लघुशरीरत्वात् तस्यैव पक्षतावच्छेदकत्वाश्रयणं युक्तमिति—वाच्यम्; पक्षतावच्छेदकस्याधिकरणतावच्छेदकतया गुरुशरीरत्वस्यादोषत्वात्, अन्यथाऽऽकाशे पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यस्य शब्दाधिकरणत्वावच्छेदकत्वाभावप्रसङ्गादिति—चेत्,

*अत्र वदन्ति*—'यद्यपि स्वारसिकसंशयो न सार्वत्रिकः; तथाप्यहार्यानाहार्यासाधारणसंशयमात्रं सार्वत्रिकं सम्भवति, इति तदेव 'विमतमि'त्यादौ पक्षतावच्छेदकत्वेन विमतशब्देन विवक्षितम्। नच—तस्यातिप्रसक्ततावारकधर्मान्तरपरस्यावश्यकत्वे प्रथमोपस्थितत्वात् तस्यैव पक्षतावच्छेदकत्वाश्रयणं युक्तमिति—वाच्यम्; तथापि परार्थानुमाने वादि-प्रतिवाद्यङ्गकाहार्यानाहार्यसाधारणसंशयस्य सम्भवेन पक्षतावच्छेदकत्वसम्भवात् तस्यैव पक्षतावच्छेदकत्वज्ञापनाय 'विमतमि'त्येव पक्षस्य निर्देष्टव्यत्वात्। नच—तथा ज्ञापनस्यैव किं फलम्? फलाभावाविशेषे च 'विमतमि'त्येव पक्षनिर्देशे किं नियामकमिति—वाच्यम्; संशयपक्षतावच्छेदकत्वज्ञापनस्य बाध-सिद्धसाधनादिप्रतिज्ञादोषाणामुद्भावना-

विट्ठलेशोपाध्यायटिप्पणी

प्रति दृष्टान्तसिद्ध्यर्थं शुक्तिरूप्ये मिथ्यात्वं प्रसाध्य तद्भिन्ने क्वचिदपि मिथ्यात्वमेतदनुमानेन साधनीयम्; स्वोद्देश्यसिद्धेरभावेऽपि तावतैव तेषां पराजयात्। तत्र च सत्त्वेनप्रतीत्यर्हत्वविशिष्टचिद्भिन्नत्वसामानाधिकरण्येन केवलचिद्भिन्नत्वसामानाधिकरण्येन वा विप्रतिपत्तौ शुक्तिरूप्ये सिद्धसाधनं स्यात्, अतोऽत्राध्यस्तत्वान्तं देयमेवेति भावः। *तार्किकादिनेति*॥ येन शुक्तिरूप्यभिन्ना अपि केचन पदार्था मिथ्याभूताः, केचन सत्या इत्युच्यते, तेनेत्यर्थः। तेन विवादेऽवच्छेदकावच्छेदेन साध्यसिद्धावेव तस्य पराजयात् तथैव विप्रतिपत्तेराश्रयणीयत्वादिति भावः। *इतरविशेषणे*=सत्त्वेनप्रतीत्यर्हत्व-चिद्भिन्नत्वरूपे। एवकारेणाध्यस्तत्वान्तव्यवच्छेदः। तद्धारणीयस्य सामानाधिकरण्येन सिद्धसाधनस्यावच्छेदकावच्छेदेनानुमितावदोषत्वादिति भावः। *देये इति*॥ अन्यथा तुच्छे ब्रह्मणि वा बाधादिति भावः। *अलीकवादिनम्*=शशविषाणादितुच्छपदार्थमभ्युपगच्छन्तम्। यद्यपि सत्तादात्म्यरूपसत्त्ववदित्येव वक्तुमुचितम्; तथापि तत्र साधकोपन्यासाय 'सत्त्वेन प्रतीत्यर्हमि'त्युक्तं मूल इत्यग्रे व्यक्तीभविष्यति। अर्हान्तविशेषणस्य तुच्छसाधारण्येन तत्र बाधं शङ्कते—*नन्विति*॥ सत्त्वेन प्रतीतियोग्यत्वं सत्त्वप्रकारकप्रत्ययविषयताप्रयोजकरूपवत्त्वम्। तद्धर्मप्रकारकप्रमात्मकप्रतीतौ तद्धर्मस्य कारणतया सत्त्वप्रकारकप्रतीतौ सत्त्वं प्रयोजकम्। तच्च घटादौ न वास्तवम्, किन्तु सद्रूपे घटादीनां ब्रह्मणि तादात्म्येनाध्यस्ततया ब्रह्मधर्माणां घटादावध्यस्तत्वादारोपितम्। तथाच सत्तादात्म्यमेव सत्त्वं पर्यवसितम्। एवम् *प्रतीतिः*=वृत्त्यवच्छिन्ना चित्। तद्विषयत्वे चित्तादात्म्यं प्रयोजकम्; विषयतायास्तादात्म्यपर्यवसितत्वात्। एवं चैकस्मिन् सच्चितोस्तादात्म्यं सच्चितोरैक्यं विना नेति तयोरैक्यं लभ्यत इत्याशयेनाह—*सद्रूपचित्तादात्म्यमिति*॥ *अनध्यस्तेऽपीति*॥ अध्यस्तत्वस्य चित्तादात्म्याध्यासेऽप्रयोजकत्वादित्यभिमानः। *ननु* प्रातीतिकसत्तादात्म्यव्यावृत्तरूपेणैव सत्तादात्म्यस्य पक्षतावच्छेदकतया न तुच्छस्योक्तरीत्या पक्षान्तर्भाव इत्याशङ्कां मूलविरोधेन परिहरति—*यदि पुनरिति*॥ प्रातीतिकव्यावृत्तरूपेण पक्षतावच्छेदककोटौ सत्तादात्म्यस्य प्रवेशे प्रातीतिकसत्तादात्म्यवतः शुक्तिरूप्यस्य पक्षानन्तर्भावात् पक्षकदेशे तत्र साध्यसिद्धेरवच्छेदकावच्छेदेनानुमितौ दोषत्वाभावप्रतिपादनविरोधः स्यादिति भावः। अभिमानं निराकृत्य

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पक्षतावच्छेदकावच्छेदेने'त्यादिमूलानुरोधात् शुक्तिरूप्यादिदृष्टान्तसाधारण्याय प्रातीतिकसाधारणस्य सत्तादात्म्यत्वस्य निवेश्यत्वादिति—चेत्, न; तत्रैव हि सत्तादात्म्याध्यासः, यस्य तत्समानकालमध्यासः; शुक्तिरूप्यादिरूपेण परिणममानाविद्याया एव तन्निष्ठेन सत्तादात्म्यरूपेण परिणममानत्वात्। तथाचालीकरूपेणाविद्याया अपरिणममानत्वाद् नालीकनिष्ठतादात्म्यरूपेण परिणामः। नच—स्फटिकादिरूपेणापरिणममानाया अप्यविद्यायाः स्फटिकादिनिष्ठेन जपाकुसुमादिलौहित्यतादात्म्यादिरूपेण परिणामदर्शनाद् अलीकरूपेणापरिणताऽप्यविद्या तन्निष्ठेन सत्तादात्म्यरूपेण परिणमतामिति—वाच्यम्; तादात्म्यमात्ररूपेण परिणामस्य तथा दृष्टत्वेऽपि सत्तादात्म्यरूपेण परिणामस्य तदनुयोगिरूपेण परिणममानाविद्यानिष्ठत्वनियमाविघातात्। नच—सत्प्रतियोगिकतादात्म्यस्योक्तनियमस्वीकारेऽपि सदनुयोगिकस्यालीकप्रतियोगिकतादात्म्यस्याविद्यापरिणामत्वमास्तामिति—वाच्यम्; 'सदलीकमि'ति प्रतीत्यभावेनाविद्यायास्तादृशपरिणामे हेतुत्वाकल्पनात्। अत एव "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रे शब्दमात्रजन्यस्यालीकाकारधीरूपविकल्पस्य सद्रूपाविषयकत्वरूपं वस्तुशून्यत्वमुक्तम्। अत एव च "प्रमाण विपर्यय-विकल्प-निद्रा-स्मृतयः" इति वृत्तिविभाजके पातञ्जलसूत्रे विकल्पात् पृथग् विपर्ययस्योक्तिः; तस्य सद्रूपविषयकत्वेन वस्तुशून्यत्वाभावात्, पातञ्जलमतेऽन्यथाख्यातिस्वीकारेण सत्ये विशेष्ये देशान्तरस्थसत्यविशेषणस्य भ्रमे भानात्। किंच सत्प्रतियोगिकतादात्म्यस्यैव प्रकृते पक्षतावच्छेदके निवेशादलीकप्रतियोगिकतादात्म्यमादाय नोक्तदोषः(१) ॥

*ननु*—माध्वादिमते शुक्तिरूप्यादेरलीकतास्वीकारात् 'इदं रूप्यं सदि'त्याकारभ्रमेण तत्र सत्प्रतियोगिकतादात्म्यावगाहनाद् माध्वादीन् प्रति न्यायप्रयोगे बाधः; सदसद्विलक्षणत्वादिसाध्यस्य तत्राभावात्, नचाबाध्यत्वान्तविशेषणेन तस्य वारणम्; अलीकस्य ज्ञानोच्छेद्यतारूपज्ञानबाध्यत्वाभावात्, इति—चेत्,

विट्ठलेशीयटिप्पणी

समाधत्ते—*तत्रैव हीति* ॥ तद्रूपेण परिणताविद्याया एव तन्निष्ठतादात्म्यरूपेण परिणाम इति नियमे व्यभिचारमाशङ्कते—*नचेति* ॥ *स्फटिकरूपेणापरिणममानाया इति* ॥ *ननु* स्फटिकोऽप्यविद्यापरिणाम एवेति चेत्, *सत्यम्*; परन्तु स मूलाविद्यायास्तत्त्वज्ञानमात्रनिवर्त्यायाः परिणामः, तन्निष्ठजपालौहित्यतादात्म्यं तु तन्निष्ठशौक्ल्य-लौहित्यतादात्म्याभावादिविषयकतूलाविद्यायास्तत्त्वज्ञानान्येनापि निवर्त्यायाः परिणामः, इत्युभयोरेकाविद्यापरिणामत्वाभावादुक्तनियमे व्यभिचारो दुर्वार इति भावः। व्याप्यकोटौ तादात्म्ये सत्प्रतियोगिकत्वं निवेश्य व्यभिचारमुद्धरति—*तादात्म्यमात्ररूपेणेति* ॥ *तादृशेति* ॥ सदनुयोगिकालीकप्रतियोगिकेत्यर्थः। *अकल्पनादिति* ॥ मानाभावेन तादृशपरिणामस्यैवाप्रसिद्धेरिति भावः। *अत एव="सत् अलीकम्, अलीकं सत्" इति प्रतीत्योरभावादेव। *शब्दज्ञानानुपाती=शशविषाणादिशब्दज्ञानोत्तरभावी; तज्जन्य इति यावत्। *अत एव चेति* ॥ विकल्पस्य निरुक्तवस्तुशून्यत्वादेवेत्यर्थः। अस्योक्तिरित्यत्रान्वयः। *तस्य=विपर्ययस्य। "तुष्यतु दुर्जनः" इति न्यायेनालीकप्रतियोगिकसदनुयोगिकतादात्म्यमभ्युपेत्य समाधत्ते—*किंचेति* ॥ *उक्तदोषः=तुच्छस्य पक्षान्तर्भावेण बाधरूपो दोषः। *अलीकतास्वीकारात्=शशशृङ्गादिवदसद्रूपतास्वीकारात्। अयं तत्र साध्याभावे हेतुः। *नन्वेवम्* तत्र सत्तादात्म्यस्योक्तरीत्याऽभावात् तस्य न पक्षान्तर्भावः, इत्यत आह—*इदमिति* ॥ *अवगाहनादिति* ॥ तथाच शुक्तिरूप्यस्य पक्षतावच्छेदकाक्रान्तत्वमिति भावः। *सदसद्विलक्षणत्वम्=सद्भिन्नत्वे सत्यसद्भिन्नत्वम्। *तत्र= असद्रूपे शुक्तिरूप्ये। *अभावादिति* ॥ असद्भेदासत्त्वादिति भावः। *नचेति* ॥ वारणमित्यनेनान्वयः। *अलीकस्येति*॥ ज्ञानसमानविषयकाज्ञान-तत्प्रयुक्तद्वयान्यतरस्यैव ज्ञानोच्छेद्यत्वादित्यादिः। यद्यपि नेयं बाधशङ्का

(१) एतेन पक्षतावच्छेदकशरीरे सत्तादात्म्यनिवेशनेनैवासत्त्वमादायार्थान्तरवारणसंभवे प्रथममिथ्यात्वरूपसाध्यशरीरेऽपि सत्तादात्म्यनिवेशनं व्यर्थमिति शङ्का परागता; उक्तपक्षतावच्छेदकावच्छेदेन सद्विविक्तत्वादिरूपस्यैव साध्यस्य साधनात्।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*न*; तन्मते भ्रमस्यासत्ख्यातित्वस्वीकारेणानिर्वचनीयख्यात्यनभ्युपगमेन तादात्म्यादिसम्बन्धस्याप्यलीकस्यैव भ्रमे भानात्, अनलीकस्य भानस्वीकारे तस्य सद्रूपत्वेनात्यन्ताभावप्रतियोगित्वप्रत्ययानुपपत्तेः, अलीकस्यैव तन्मतेऽत्यन्ताभावप्रतियोगित्वाद् रूप्यादेरलीकत्वापत्त्याऽधिष्ठानान्यस्य भ्रमविषयस्यालीकत्वनियमाच्च सत्स्वरूपस्यैव तादात्म्यस्य तत्र भानेऽलीकरूप्यादौ तदनुयोगित्वाभावात्, अलीके रूप्यादिनिष्ठे तादात्म्ये सत्प्रतियोगिकत्वस्येव सद्रूपेऽलीकानुयोगिकत्वस्याभावात्, सदसतोरुपरागाभावात्, शुक्तिरूप्यादौ सत्प्रतियोगिकतादात्म्यानुयोगित्वरूपपक्षतावच्छेदकाभावेन तत्र बाधोक्त्यसम्भवात्, वक्ष्यमाणरीत्या सदसद्भिन्नत्वस्य माध्वं प्रत्यसाध्यत्वेन तं प्रति बाधाभावाच्च। नचैवमपि तन्मते शुक्तिरूप्यादौ साध्यवैकल्यम्; तं प्रति सद्विविक्तत्वादिवक्ष्यमाणमिथ्यात्वस्यैव साध्यत्वात्॥ *ननु*—सद्रूपं शुद्धचिदेव, तत्प्रतियोगिकत्वविशिष्टतादात्म्यत्वावच्छिन्नाधि-

सिद्धिव्याख्या

मर्हत्वज्ञापनेन सफलत्वात्। नहि 'विमतमि'ति पक्षनिर्देशे संशयस्य पक्षतावच्छेदकत्वं ज्ञापयितुं शक्यम्। नच—'ब्रह्मप्रमे'त्यादिनिरुक्तपक्षतावच्छेदकविशिष्टतया तन्निर्देशेऽपि बाधाद्युद्भावनाऽनवसरेण फलतो न विशेष इति—वाच्यम्; तथापि विमतशब्दतः संशयविषयत्वरूपपक्षतावच्छेदकस्य पक्षत्वेन पर्यवसिते प्रपञ्च एव बाधादिप्रतिज्ञादोषाणां वारकत्वेन विशेषात्, 'ब्रह्मप्रमातिरिक्ते'त्यादिनिरुक्तपक्षतावच्छेदकस्य तु पक्षोऽयमङ्गीकृतो

विट्ठलेशीयटिप्पणी

युक्ता; यत्र मतद्वये साध्यविरहः, तत्रैव हि बाधः; यथा सत्त्वेनप्रतीत्यर्हत्वचिद्भिन्नत्वयोरनुपादाने तुच्छे ब्रह्मणि च बाधः, शुक्तिरूप्ये तु माध्वमते साध्यविरहेऽपि स्वमते तस्यालीकत्वास्वीकारेण साध्याबाधात् स्वयमनुमानेन तं प्रति तत् साध्यं साधयितुं युक्तमेव। अत एव वियदादिप्रपञ्चे सत्यतासाधने परमते न बाधः; तथापि समाधानान्तरस्यापि सौकर्यादाह—*तन्मत इत्यादि*॥ *अलीकस्यैवेति*॥ तथाचालीकव्यावृत्तरूपेणैव सत्तादात्म्यस्य पक्षतावच्छेदकतया माध्वमते शुक्तिरूप्यस्य पक्षतावच्छेदकानाक्रान्ततया न बाध इति भावः। *ननु* तादृशभ्रमेऽनलीकस्यैव सत्तादात्म्यस्य भानस्वीकारे किं बाधकम्? अत आह—*अनलीकस्येति*॥ प्रातिभासिकस्येत्यर्थः। *तस्य=भ्रमविषयीभूतस्य सत्तादात्म्यस्य। विशेष्यत्वं प्रत्ययान्वयि षष्ठ्यर्थः। *अत्यन्ताभावप्रतियोगित्वेति*॥ अत्यन्ताभावप्रतियोगित्वप्रकारकेत्यर्थः। अनलीकत्वेऽप्यत्यन्ताभावप्रतियोगित्वे तस्य सदसद्रूपत्वापत्तिः; सदसद्भ्यां तृतीयप्रकारस्याभावादिति भावः। *ननु* तादृशतादात्म्यस्य सद्रूपत्वस्वीकारेऽप्यत्यन्ताभावप्रत्ययानुपपत्तिः कुत इति? अत आह—*अलीकस्यैवेति*॥ *तन्मत इति*॥ 'भूतले घटो नास्ती'त्यादौ भूतले आरोपितस्यालीकघटसंसर्गस्याभावो भासते, नतु घटाभावः। स एव घटविरोधीति हि तन्मतम्। एतादृशनियमे मानाभाव इत्याशङ्क्य, तादृशतादात्म्यस्यालीकत्वे युक्त्यन्तरमाह—*रूप्यादेरिति*॥ तादृशतादात्म्यस्यानलीकत्वस्वीकार इत्यादिः। *आपत्त्येति*॥ तद्वारणानुरोधेनेत्यर्थः। *नियमादिति*॥ नियमस्य तेनोपगन्तव्यत्वादित्यर्थः। *ननु* भ्रमप्रकारस्यालीकत्वनियमस्तेनोपगम्यते। एवं च विशेष्यस्येव सत्तादात्म्यरूपसंसर्गस्य सद्रूपत्वेऽपि न सङ्करः; अधिष्ठानान्यत्वानिवेशाद् लाघवं चेत्यत आह—*सद्रूपस्यैवेति*। अनुयोगिकत्वस्याभावादिति*॥ अयं च शुक्तिरूप्यादौ पक्षतावच्छेदकाभावे हेतुः। अत्र—'अलीके' इत्यादिः 'अभावादि'त्यन्तो हेतुः। तत्र च सदसतोरुपरागाभावादिति हेतुः। *तं प्रतीति*॥ तेन प्रपञ्चस्य सन्मात्ररूपस्यैवोपगमेन तं प्रति सद्विलक्षणत्वमात्रस्य साध्यत्वादिति भावः। अत्रैव समाधाने निर्भरं कर्तुं प्रथमसमाधाने बाधवारणेऽपि दृष्टान्तासिद्धिमाकुते—*नचेति*॥ वैकल्यमित्यत्रान्वयः। *एवमपि=तस्य पक्षतावच्छेदकशून्यतया बाधाशङ्कासंभवेऽपि। सत्यत्वार्थो यदि शुद्धचिद्भिन्नः स्यात्, तदा तत्प्रतियोगिकत्वविशिष्टतादात्म्यत्वावच्छिन्ननिरूपिताधिकरणता चिति संभवेत्, अत उक्तम्—*सद्रूपं शुद्धचिदेवेति*॥ नास्तीति*॥ स्वस्मिन् स्वविशिष्टबुद्धेरनुदयेन तद्विषयात्मिकायाः

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

करणत्वं च तस्यां नास्ति, इति चिद्भिन्नत्वविशेषणं व्यर्थमिति—चेत्, *सत्यम् उक्ताधिकरणत्वनिवेशे चिद्भिन्नत्वं न देयम्*; तत्प्रतियोगिकस्य तादात्म्यस्याधिकरणत्वमात्रनिवेशाभिप्रायेण दत्तम्(१)। *ननु*—तादृशतादात्म्यस्यापक्षत्वापत्तिः, तस्य स्वस्मिन्नभावात्, तादात्म्ये तादात्म्यान्तरस्यानवस्थापत्त्याऽनङ्गीकारादिति—चेत्, *न*; घटाद्यभावस्येव तस्य स्वस्मिन् स्वरूपसम्बन्धेन वृत्तिस्वीकारात्, 'घटाभावे घटो नास्ती'तिवत् सत्तादात्म्यं सदिति प्रतीतेः। अथ घटादिदृश्यमात्रस्य सत्तादात्म्यवत्त्वे किं मानमिति—चेत्, शुक्तिरूप्यादेरिदमादितादात्म्यवत्त्व इव परस्पराध्यासानुभवादिकम् ॥ तथाहि—'इदं रजतमि'त्यादिभ्रमस्थले 'इदं रजतं जानामि' 'रजतमिदं जानामी'त्याकारद्वयानुभवादिदमादिविषयतावच्छिन्नं रजततादात्म्यादिविषयत्वं रजतादिविषयतावच्छिन्नमिदमादितादात्म्यविषयत्वं च चिद्रूपानुभवनिष्ठं भातीति स्वीक्रियते। एवम्—'इदं रजतम्' 'रजतमिदमि'ति यत् ज्ञानम्, 'तद् मिथ्ये'ति बाधकप्रत्ययेन विषयविशिष्टभ्रमस्य मिथ्यात्वावगाहनाद्

### विट्ठलेशीयटिप्पणी

स्वस्मिन् स्वप्रतियोगिकस्वविशिष्टसंबन्धाधिकरणतारूपायाः स्वसंबन्धानुयोगिताया अनभ्युपगमादिति भावः। *मात्रेति*॥ एतेन विशिष्टाधिकरणतारूपानुयोगिताया व्यवच्छेदः। विशिष्टाधिकरणतानियतमनुयोगितारूपपदार्थान्तरं नास्त्येवेति भावः। *अपक्षत्वापत्तिरिति*॥ तथाच तत्र मिथ्यात्वासिद्ध्या द्वैतापत्तिरिति भावः। इदमि रजतस्येव ब्रह्मणि दृश्यमात्रस्य तादात्म्येनाध्यस्ततयाऽनिर्वचनीयख्यातिस्वीकारेणेदमि रजत-तत्तादात्म्ययोरिव ब्रह्मणि दृश्यमात्र-तत्तादात्म्ययोरुत्पत्तिरस्तु, परं तु घटादिदृश्ये सद्रूपब्रह्मणोऽनध्यासात् तत्र सत्तादात्म्ये किं मानमित्याशङ्कते—*अथेति*॥ *दृश्यमात्रस्य=दृश्यसामान्यस्य। *परस्पराध्यासानुभवादिकमिति*॥ 'इदं रजतम्' इत्येकस्मिन् ज्ञाने 'इदं रजतम्' इति 'रजतमिदमि'ति ज्ञानयोर्वेदंरजतयोः परस्पराध्यासः; इदमि रजतस्य, रजते चेदमस्तादात्म्येन विशेषणतया य आरोपः, तदनुभवादित्यर्थः। यद्यपि प्रातीतिकपदार्थस्य साधिका भ्रमात्मिका प्रतीतिरेव; तथापि 'इदं रजतमि'ति प्रतीतेरिदमि रजततादात्म्यावगाहित्व इव रजत इदंतादात्म्यावगाहित्वे सिद्ध इदमि रजततादात्म्यमिव रजत इदंतादात्म्यमपि सिद्ध्येत्, परं तु तत्रैव किं मानमित्याशङ्क्या तदनुभवपर्यन्तानुधावनम्। दृष्टान्तेऽपि विवादसंभवात् प्रथमं साधयति—*तथाहीति*॥ *भ्रमस्थले=भ्रमानुव्यवसाये। भातीत्यन्वयः। तत्रापि मानमाह—*इदमित्याद्यनुभवादित्यन्तेन*॥ तस्य तादृशभ्रमानुव्यवसायस्येत्यादिः। तादृशानुव्यवसायस्य यत् तादृशमाकारद्वयं तस्यानुभवसिद्धत्वादित्यर्थः। *चिद्रूपानुभवनिष्ठम्*='इदं रजतमि'त्याकारकभ्रमव्यपदेश्यो यः परस्परतादात्म्यापन्नरजताकाराविद्यावृत्तीदमाकारान्तःकरणवृत्त्युभयावच्छिन्नचिद्रूपोऽनुभवः, तन्निष्ठमित्यर्थः। *स्वीक्रियत इति*॥ अन्यथा तादृशभ्रमानुव्यवसायस्य तादृशाकारद्वयस्यानुभवसिद्धस्यानुपपत्तेरिति भावः। तथाचानुव्यवसायस्य—'इदं रजतं जानामी'-त्याकारत्वाद् इदंविषयतावच्छिन्नरजततादात्म्यविषयतावगाहित्वम्, तेन च व्यवसायस्येदंविषयतावच्छिन्नरजततादात्म्यविषयताशालित्वम्, तेन चेदमो रजततादात्म्यवत्त्वमिवानुव्यवसायस्य 'रजतमिदं जानामी'त्याकारकत्वाद् रजतविषयतावच्छिन्नेदंतादात्म्यविषयतावगाहित्वम्, तेन च व्यवसायस्य रजतविषयतावच्छिन्नेदंतादात्म्यविषयताशालित्वम्; तेन च रजतस्येदंतादात्म्यवत्त्वं सिद्ध्यतीति निर्गलितार्थः। आदिपदसंगृहीतं मानान्तरं समुत्पादयति—*एवमिति*॥ 'इदं रजतमि'ति 'रजतमिदमि'ति च यद् ज्ञानमिति योजना। निपातेनेतिपदेन तादात्म्येन रजतविशिष्टेदम्, इदंविशिष्टरजतं च परामृश्यते, इतिपदोपस्थाप्यतादृशविशिष्टद्वयस्य विषयितया ज्ञानेनान्वयः; तादात्म्यद्वयस्य मिथ्यात्वसिद्ध्यर्थमाकारद्वयोपादानम्। तदेतदुक्तम्—*विषयविशिष्टभ्रमस्येति*॥* मिथ्यात्वेति*॥ स्वाश्रयत्वेन प्रतीयमानसर्वनिष्ठ-

---

(१) संबन्धसामान्येन सत्तादात्म्यस्य विवक्षणात् प्रतियोगितासंबन्धेन वाऽनुयोगितासंबन्धेन वेत्यादिविकल्प-दूषणादीनां न्यायभास्करीयाणां नावकाश इति नरसिंहशास्त्रिप्रभृतयो न्यायेन्दुशेखरकारादयश्चेति मन्तव्यम्।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भ्रमस्येव तद्विषयाणामपि बाधकधीबाध्यत्वम्, तत्राप्युक्तबाधधीकालेऽपीदमर्थस्य तादृशधीमता पुरुषेणाङ्गुल्या प्रदर्श्यमानस्य स्वरूपतः सत्यत्वानुभवात् तस्य व्यावहारिकस्वरूपत्वनिश्चयेन स्वरूपतो मिथ्यात्वानिश्चयेन मिथ्यात्वेन निश्चीयमानतादात्म्योपहितरूपेण मिथ्यात्वनिश्चयः, रजतादि-तत्तादात्म्ययोस्तु स्वरूपतोऽपि सः, इतीदमाद्यवच्छेदेन रजतादिकं तत्तादात्म्यं रजतादेः संसर्गश्च, रजताद्यवच्छेदेनेदमादेस्तादात्म्यमिदन्त्वादेः संसर्गश्च चिति जायन्ते ; भ्रमस्थले भ्रमकाले बाध्यस्योत्पत्तिस्वीकारात्, तस्य प्रातीतिकत्वेन भ्रमपूर्वम-विद्यमानत्वात् ॥ *ननु*—एकेनैव तादात्म्येनेदंरजतयोराकारद्वये परस्परं प्रति विशेषणतया भानसम्भवात् तादात्म्यद्वयोत्पत्तौ मानाभाव इति—चेत्, *न* ; आकारभेदानुपपत्तेः ।

### विट्ठलेशीयटिप्पणी

त्रैकालिकात्यन्ताभावप्रतियोगिक इत्यर्थः । *तद्विषयाणामपीति* ॥ असति बाधके विशिष्टधर्मिकप्रतीतेर्विशेषणेऽपि प्रकारावगाहित्वनियमादिति भावः । *धीबाध्यत्वम्=धीग्राह्यस्वाश्रयनिष्ठाभावप्रतियोगित्वम् । अस्य, इतीदमाद्य-वच्छेदेनेत्यत्रान्वयः । *ननु* भ्रमविषयाणां सर्वेषामपि बाध्यत्वेऽधिष्ठानस्येदमोऽपि बाध्यत्वादधिष्ठानारोप्ययोः को विशेषः ? इत्याशङ्क्य, तयोर्बाध्यविशेषेऽपि विशेषं व्युत्पादयति—*तत्रापीति* ॥ बाध्येषु=भ्रमविषयेष्वपीत्यर्थः । *कालेऽपीति* ॥ अङ्गुल्या प्रदर्श्यमानस्येत्यन्वयः । *तादृशधीमता*=उक्तबाधकधीमता । *स्वरूपतः=मिथ्या-तादात्म्यानुपहितरूपेण । सत्यत्वं रजतापेक्षया, न ब्रह्मवदित्याह—*तस्य व्यावहारिकेति* ॥ *मिथ्यात्वानिश्चयेन= तन्निश्चयस्य दुर्घटतया । अपिरेवार्थः । *स्वरूपतोऽपीति* ॥ अन्यथाऽन्योन्याश्रयप्रसङ्गात् । *स इति* ॥ इत्य-धिष्ठानारोप्ययोर्विशेष इति शेषः । अत्र प्रथमं संसर्गश्चेत्यन्तं दृष्टान्तः, द्वितीयं दार्ष्टान्तिकमिति बोध्यम् । *इदमाद्यवच्छेदेनेति* ॥ इदमवच्छिन्नचित्येव रजत-तत्तादात्म्यादिकं जायते, नत्विदमि ; चित एव सर्वप्रपञ्चाधिष्ठान-त्वात्, इदमस्तु तदवच्छेदकतामात्रमिति भावः । *भ्रमविषयाणां बाधकधीबाध्यत्वमिति* ॥ इदमाद्यवच्छेदेन रजतादिकं जायत इत्यन्वयात् तादृशरजतादीनामुत्पत्तौ बाध्यत्वस्य हेतुता लभ्यते ; सा च कुतः ? इत्याकाङ्क्षाया-माह—*भ्रमस्थल इति* ॥ विषयतया भ्रमाधिकरण इत्यर्थः । बाध्यस्य भ्रमकाल उत्पत्तिस्वीकारादित्यन्वयः । *ननु*=किमर्थं तदुत्पत्तिः स्वीकार्या ? तत्पूर्वं विद्यमानानामेव भानं बाधधीश्चास्त्वित्यत आह—*तस्येति* ॥ *प्रातीतिकत्वेन=प्रतीतिप्रयोजकत्वेन प्रतीतिसमकालत्वेन । प्रतीतिनिर्वाहानुरोधादुपगम्यमानस्य प्रतीतिपूर्वं सत्त्वे मानाभावात् । नच—प्रतीतिपूर्वमसत्त्व इन्द्रियसंनिकर्षासम्भवात् प्रतीतेरपि कथं निर्वाह इति—वाच्यम् ; अविद्या-वृत्त्यैव प्रतीतेरपि निर्वाहादिति भावः ॥

*एकेनैवेति* ॥ एकस्मिन्नेवोभयानुयोगिकत्वोभयप्रतियोगिकत्वोपगमादिति भावः । यथा एकेनैव संयोगेन घटयोः परस्परं विशिष्टधीः परिवृत्य स्थापनस्थले, तथेति बोध्यम् । *आकारद्वये=*अनुव्यवसायनिष्ठे'दं रजतं जाना-मी'त्याकारकत्व-'रजतमिदं जानामी'त्याकारकत्वैतदुभयस्मिन् । "चर्मणि द्वीपिनं हन्ति" इतिवद् भानान्वयि-प्रयोजकत्वं सप्तम्यर्थः । *तादात्म्यद्वयम्=इदमवच्छिन्नचिदनुयोगिकरजतप्रतियोगिकतादात्म्य-रजतावच्छिन्नचिदनु-योगिकेदंप्रतियोगिकतादात्म्यैतदुभयम् । *आकारभेदानुपपत्तेरिति* ॥ 'इदं रजतमि'ति 'रजतमिदमि'ति ज्ञानयोर्यौ आकारौ विषयौ, तयोर्भेदानुपपत्तेरित्यर्थः । तादात्म्यस्यैकत्वे तादृशज्ञानद्वयविषयाणामविलक्षणत्वादिति भावः । सम्बन्धप्रतियोगित्वानुयोगित्वानां विशिष्टबुद्धिविषयता नेति हृदयम् ॥

[नचैवमपि(१)—तत्प्रतियोगित्वाद्युपहितरूपेण रजतादेर्भेदादेव विषयवैचित्र्यमिति—वाच्यम् ; सम्बन्धप्रतियोगि-त्वादीनां विशिष्टबुद्धिविषयतया भानस्याप्रामाणिकत्वात्, तत्प्रतियोगिकत्वं विनैव तत्संसर्गतया भानसम्भवादित्यग्रे व्यक्तीकरिष्यते । तादृशप्रतियोगित्वादीनां विशिष्टबुद्धिविषयत्वपक्षेऽपीदमादिस्वरूपसम्बन्धरूपाणां तेषां स्वरूपत एव

(१) एवं कुण्डलितो भागो मातृकान्तररीत्या योजित इति ध्येयम् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

आकारो हि ज्ञानानां मिथो वैलक्षण्यम् । तच्च विभिन्नविषयरूपम्, नतु विषयिताविशेषमात्रम् ; तथा सति बहिर्विषयमात्रलोपापत्त्या साकारवादापत्तेः । तदुक्तमुदयनाचार्यादिभिः—"अर्थेनैव विशेषो हि निराकारतया धियामि"ति । *अर्थेन=ज्ञानादत्यन्तभिन्नेन घटादिरूपेण विषयेणाभिन्नो धियां विशषः । निराकारतया=ज्ञानधर्मरूपाकारेण घटादिना विषयितास्थानीयेन हीनतया । तथाच घटादिकं विषयितास्थानीयो ज्ञानधर्मो ज्ञानाद् भिन्नाभिन्न इति बौद्धैर्यदुच्यते, तथा न, किन्तु ज्ञानादत्यन्तभिन्नम् ; तथैवानुभवादिति भावः । तथाचेदंप्रतियोगिक-रजतप्रतियोगिकतादात्म्ययोर्भिन्नयोराकारयोरुत्पत्तिरावश्यिका । किञ्च 'इदं रजतमि'त्यादिधीस्थले रजततादात्म्यविषयत्वमिदंविषयत्वेनावच्छिन्नम्, इदंतादात्म्यविषयत्वं च रजतविषयत्वेना-

सिद्धिव्याख्या

नातिप्रसक्तोऽन्य इति पर्यवसिते पक्षे तद्दोषवारकत्वेनातथात्वात्, निरुक्तपक्षतावच्छेदकशरीरे बाधादिवारकविशेषणस्यावश्यमुपादेयतया गौरवात्, विनापि तद्विशेषणदानं बाधादीनामुद्भावनप्रसक्तिरेव नेति वादि-प्रतिवादिनोरन्यतरेणान्यतरं प्रति ज्ञापनसम्भवे विशेषणप्रक्षेपणमुखेन तज्ज्ञापनवैयर्थ्यादिति ॥

विट्ठलेशीयटिप्पणी

संसर्गत्वोपगमेन न विषयवैलक्षण्यनिर्वाहः । नाप्येकस्यैव तादात्म्यस्य प्रतियोगित्वानुयोगित्वोपहितरजतयोर्भेदेन तन्निर्वाहः ; सर्वविषयवैचित्र्यायोक्तरजतद्वयसंसृष्टत्वेन तादात्म्यभेदस्यावश्यकत्वेनान्योन्याश्रयापत्त्या स्वरूपत एव तादात्म्यभेदस्योपगन्तव्यत्वात् । एकस्यैव तादात्म्यस्य तयोरेवेदं-रजतयोः कदाचिदनुयोगित्व-प्रतियोगित्वयोः, कदाचित् प्रतियोगित्वानुयोगित्वयोर्नियामकस्याभावाच्च । किंचैवमेकस्मिन् तादात्म्ये रजतादिप्रतियोगित्वानुयोगित्वयोरापत्त्या रजतादेः स्वस्मिन् स्वविशिष्टबुद्ध्यापत्तेर्वारणाय तत्तत्प्रतियोगिकत्वविशिष्टसम्बन्धानुयोगितयोस्तयोस्तद्विशिष्टबुद्धिनियामकत्वस्य च कल्पनापत्त्या गौरवात् तादात्म्यद्वयोपगम एव लाघवम् । नच—इदं-रजतान्यतरस्यैव स्वरूपतो भेदोऽस्त्विति—वाच्यम् ; अनुभवविरोधात्, तादात्म्ययोस्तु विशिष्टबुद्ध्यनुरोधेन कल्प्ययोः स्वरूपतो भिन्नयोरेव कल्पनेऽनुभवविरहादिति बोध्यम् ॥

*ननु*—विषयाणामविलक्षणत्वेऽपि प्रकारिता-विशेष्यितारूपविषयितावैलक्षण्यादेवोक्तज्ञानयोर्वैलक्षण्यसिद्धिरित्यत आह—*आकारो हीति* ॥ आकार एवेत्यर्थः । *मिथो वैलक्षण्यम्*=परस्परभेदसाधकः परस्परवृत्तिधर्मः । *विभिन्नेति* ॥ ज्ञानान्तरविषयभिन्नेत्यर्थः । *विषयरूपमिति* ॥ विषयस्य विषयितासम्बन्धेन ज्ञानसम्बन्धित्वादिति भावः । मात्रपदेन विषयव्यवच्छेदः । *बहिर्विषयमात्रलोपापत्त्येति* ॥ 'अयं घटः' 'अयं पटः' इत्यादिज्ञानानां मिथो वैलक्षण्याय हि तेषां विषयाः परस्परं भिन्ना घट-पटादिरूपा उपगम्यन्ते । विषयिताविशेषानुपगम्य तैरेव ज्ञानवैलक्षण्यसिद्धावलं विषयैरिति भावः । *साकारवादेति* ॥ ज्ञानस्य साकारत्ववादेत्यर्थः । नच स बौद्धातिरिक्तैरुपगम्यत इति भावः । *अभिन्न इति* ॥ अर्थेनेत्यभेदे तृतीयेति भावः । *विषयितास्थानीय इति* ॥ एतेन विषयितायास्तन्मतेऽनुपगम उक्तः । *ज्ञानधर्म इति* ॥ तादात्म्येनेति शेषः । *भिन्नाभिन्नत्वेति* ॥ अत्यन्तं भेदेऽभेदे वा तादात्म्येन धर्म-धर्मिभावानुपपत्तेरिति भावः । तत्र युक्तिमाह—*तथैवेति* ॥ ज्ञानादत्यन्तभिन्नत्वेनैवेत्यर्थः । प्रकृतमुपसंहरति—*तथाचेति* ॥ विषयस्य ज्ञानवैलक्षण्यरूपत्वे चेत्यर्थः । *ननु* विभिन्नविषय एव सर्वज्ञानानां मिथो वैलक्षण्यमिति स्वीकुर्वद्भिरपि ज्ञाने विषयस्य सम्बन्धो विषयितारूपो वाच्यः, स च सिद्धान्तिमते तादात्म्यमेवेत्यग्रे व्यक्तीभविष्यति । तादात्म्यं चात्यन्तभेदेऽभेदे वा न घटते । इदमप्यग्रे व्यक्तम् । तथाच विषयस्य ज्ञानाद् भिन्नाभिन्नरूपतेति बौद्धमत एव पर्यवसानम्, इति किं तादात्म्यद्वयेनेति ? अत आह—*किंचेति*॥ यद्वा—तादात्म्यद्वयानुपगमे ज्ञानद्वयवैलक्षण्यानुपपत्तिमुक्त्वा परस्पराध्यासरूपस्यैव ज्ञानस्याकारद्वयानुपपत्तिमाह—*किंचेति*॥ *रजततादात्म्यविषयत्वम्=निरूपितत्वसम्बन्धेन रजतविषयताविशिष्टतादात्म्यविषयत्वम् । *इदंतादात्म्य-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वच्छिन्नमित्याकारद्वयं प्रतीयत इत्युक्तम् । तच्च तादात्म्यस्यैकत्वे नोपपद्यते । रजततादात्म्यादिविषयताया इदंविषयतावच्छेद्यत्वे रजतादिविषयताया अपीदंविषयतावच्छेद्ये विशेषणत्वादिदंविषयतावच्छेद्यत्वेन नेदंतादात्म्यादिविषयतावच्छेदकत्वसम्भवः ; अवच्छेद्ये विशेषणीभूतायामिदंविषयतायामवच्छेदकत्वासम्भवात् । नच—'रजतमिदं जानामी'त्यादिप्रत्यये रजतादिविषयतावच्छिन्नत्वमिदंविषयताविशिष्टे तादात्म्यविषयत्वे न भाति, किन्तु केवल इति—वाच्यम् ; तथा सति विशेषणविषयत्वे विशेष्यविषयतावच्छिन्नत्वस्यासिद्ध्यापातात् । नहि तदनुभवः पृथगस्ति । नच तदसिद्धमेव ; सर्वानुभवसिद्धत्वात् ॥

*ननु*—आस्तामिदमादिविषयत्व-रजतादिविषयत्वयोः परस्परावच्छिन्नत्वमिति—चेत्, *न* ; प्रसिद्धावच्छेदकस्य मूलादेस्तदवच्छिन्नसंयोगाद्यवच्छिन्नत्वाननुभवेन विषयत्वयोरपि परस्परावच्छिन्नत्वाकल्पनात्, दृष्टान्तानुसारेणैव कल्पनात् । नच—मूलादिनिष्ठावच्छेदकत्वाद् विलक्षणं विषयत्वनिष्ठमवच्छेदकत्वमिति—वाच्यम् ; विलक्षणत्वासिद्धेः, मूलादिनिष्ठावच्छेदकताजातीयस्यैवावच्छेदकत्वस्य विषयत्वेऽनुभवात् । विषयता हि विषयेषु ज्ञानस्य तादात्म्यम्, नतु वृत्तेराकाराख्यस्सम्बन्धः ; वृत्तिं विनापि सुखादेश्चिद्रूपज्ञाने विषयत्वानुभवात् । अत एव ज्ञानं चिदेव, नतु वृत्तिः । तथाचैकवृक्षादिनिष्ठयोः संयोग-तदभावयोरग्र-मूलाद्यवच्छेदेनेवैकस्यां सर्वदृश्यतादात्म्यापन्नचिद्व्यक्तौ शुक्त्यादि-घटादितादात्म्यावच्छेदेन रजतादितादात्म्य-तद-भावयोरुपपादनार्थमवच्छेदकभेदस्वीकारेण तादात्म्यरूपविषयत्वे मूलादिनिष्ठसंयोगाद्यवच्छेदकत्वजातीयस्य

विट्ठलेशीयटिप्पणी

विषयत्वम्*=इदंविषयताविशिष्टतादात्म्यविषयत्वं निरूपितत्वसम्बन्धेन । एवमग्रेऽपि । *इत्याकारद्वयमिति* ॥ इति हेतोरनुव्यवसायस्याकारद्वयम् । *तच्च=आकारद्वयनिर्वाहकमुक्तविषयताद्वयं च । *नोपपद्यत इति* ॥ तादात्म्यस्यैकत्व इत्यादिः । *इदमित्यादि* ॥ *इदंविषयतावच्छेद्यं रजतविषयताविशिष्टतादात्म्यविषयत्वम्, तद्विशेषणत्वादित्यर्थः । *नेदंतादात्म्यविषयतावच्छेदकत्वसंभव इति* ॥ रजतविषयताया इत्यनुषङ्गः । तथाच—'इदं रजतं जानामी'त्याकार-निर्वाहेऽपि 'रजतमिदं जानामी'त्याकारानिर्वाह इति भावः । *अवच्छेद्ये विशेषणीभूतायामिति* ॥ *अवच्छेद्यम्= इदंविषताविशिष्टतादात्म्यविषयत्वम् । तत्र विशेषणीभूतायामित्यर्थः । *इदंविषयतायामिति* ॥ स्वावच्छेदकी-भूतयामिति शेषः । *अवच्छेदकत्वासंभवादिति* ॥ नच—प्रकारतारूपरजतविषयत्वं विशेष्यतारूपेदंविषयतावच्छिन्नं विशेष्यतारूपर जतविषयत्वं च प्रकारतारूपेदंविषयताया अवच्छेदकमिति संभवतीति—वाच्यम् ; प्रकारतात्व-विशेष्यतात्वरूपातिरिक्तोपाधीनां निराकर्तव्यत्वादिति भावः । रजतविषयताया इदंविषयतावच्छेदकत्वासंभवेऽपीदंता-दात्म्यविषयतावच्छेदकत्वं शङ्कते—*नचेति* । केवल इति* ॥ तादात्म्यविषयत्वे रजतविषयतावच्छिन्नत्वं भातीत्य-नुषङ्गः । अनुव्यवसाय इति शेषः । क्वचिद् धर्मितावच्छेदकोपलक्षितबुद्धेरप्युदयादिति भावः । *विशेषणविषयत्वे= इदंविषयत्वे । *विशेष्यविषयतावच्छिन्नत्वस्य=रजतविषयतावच्छिन्नत्वस्य । तादात्म्यद्वयोपगमे तु नेयमनुपपत्तिः ; तादात्म्ययोर्भेदेन तद्विषयतयोर्भेदात्, तन्निरूपितेदंविषयतयोर्भेदात्, तन्निरूपितेदंविषयतयो रजतविषयतयोश्च भेदात् । यद्वा तादात्म्यभेदेन तत्प्रतियोगित्वानुयोगित्वोपहितरूपेणेदमो रजतस्य च भेदे परस्परविभिन्नमेवावच्छेद्यावच्छेदक-भावापन्नविषयतात्रिकमाकारद्वयनिर्वाहकम्, इति नानुपपत्तिगन्धोऽपीत्यग्रे वक्ष्यते । *ननु* विषयता नाम वृत्तिरूप-ज्ञानस्य विषयेषु व्याप्यवृत्तिराकाराख्योऽतिरिक्तः संबन्धः, नतु संयोगजातीयः, इत्यत आह—*विषयता हीति* ॥ *अत एव=वृत्तिं विनापि सुखस्य ज्ञानविषयत्वानुभवादेव । *ननु* आस्तां चिद्रूपज्ञानतादात्म्यं विषयत्वम्, नैतावता संयोगजातीयत्वम् । किंच 'इदं रजतमि'ति विशिष्टज्ञानीयविषयतानामिदंरजतादिनिष्ठानां परस्परं व्यधिकरणानां समूहालम्बनतो वैलक्षण्यायावच्छेद्यावच्छेदकभाव उपेयते, संयोगाग्रयोस्तु समानाधिकरणयो-रेकस्मिन् वृक्षे संयोगाभावेन सह वृत्तौ विरोधभञ्जनाय स उपेयते । तथाच कथं संयोगावच्छेदकताजातीयत्वं विषयतावच्छेदकताया इत्याशङ्कां परिहरति—*तथाचेति* । गौरवादिति भावः । शुक्त्यादितादात्म्यावच्छेदेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयतावच्छेदकत्वस्य सम्भवेन गौरवापादकस्य विलक्षणावच्छेदकत्वस्य वक्तुमशक्यत्वाद् मूलादिनिष्ठावच्छेदकत्ववदेव विषयत्वनिष्ठावच्छेदकत्वेऽनुभवव्यवस्था। अथ—संयोगादेरवच्छेदकतासम्बन्धेनोत्पत्तौ तादात्म्यसम्बन्धेन मूलादेर्हेतुत्वात् संयोगादेरेव मूलाद्यवच्छिन्नत्वम्, न विपरीतम्; मानाभावात्, विषयत्वयोस्त्वेकमेवापरत्रावच्छेदकमित्यत्र नियामकाभाव इति—चेत्, *न*; व्यावहारिकस्येदमादेः स्वावच्छिन्नसंयोगादौ यत् कारणत्वं क्लृप्तम्, तद् अवच्छेदकतासम्बन्धेन स्वावच्छिन्नसामान्यस्योत्पत्तौ; तथाच रजतादि-तत्तादात्म्ययोरपि तत्तदिदमर्थव्यक्तिभिरवच्छिन्नत्वात् तयोरुक्तसम्बन्धेनोत्पत्तौ तत्तद्व्यक्तेस्तादात्म्येन हेतुत्वम्, अन्त्यावयविनामपि घटादीनां तन्मध्यस्थजलादिवायुसंयोगाद्यवच्छेदकत्वानुभवात् तेष्वपि तथैव भ्रमविषयावच्छेदकत्वसम्भवः, गुण-कर्मादीनां तु तादृशहेतुत्वस्याक्लृप्तत्वेऽपि तद्विशेष्यकभ्रमस्थले विशेषणसंसर्गयोर्विशेष्यनिष्ठावच्छेदकतासम्बन्धेनोत्पत्तौ विशेष्यनिष्ठेन तत्सम्बन्धेन दोषाणां हेतुत्वं कल्प्यते। एवमवच्छेदकतासम्बन्धेन तादात्म्यस्योत्पत्तौ स्वपरिणामाव्यवहितपूर्वत्वविशिष्टमज्ञानं तादात्म्यभिन्नस्वपरिणामनिष्ठविषयतासम्बन्धेन हेतुः। *स्वम्—कारणीभूतमज्ञानम्, तस्य परिणामः=रजतादिकम्, तदाकारा वृत्तिश्च; तदव्यवहितपूर्वत्वविशिष्टमज्ञानं रजताद्युत्पत्तेरव्यवहितपूर्वक्षण एवास्ति, इति रजताद्युत्पत्तिक्षण एवेदमादिविशेष्यतादात्म्यं रजताद्यवच्छेदेन, इदमाद्याकारमनोवृत्ति-

विट्ठलेशीयटिप्पणी

रजतादितादात्म्यस्य घटादितादात्म्यावच्छेदेन तदभावस्येति यथासंख्यान्वयलभ्यम्, इमानि विषयरूपाणि, तादात्म्यानि, विषयावच्छिन्नचैतन्यनिष्ठत्वात्, विषयतारूपाणि स्वेतत्सजातीयावच्छेदकतावन्ति वृत्त्यवच्छिन्नचैतन्यनिष्ठानि वक्ष्यन्ते। *अनुभवव्यवस्थेति*। अनुभवानुरोधात् स्वाश्रयावच्छेदकीभूतावच्छेद्यत्वानिरूपितत्वनियम इत्यर्थः। विषयत्व-संयोगयोर्वैषम्यं शङ्कते—*अथेति*॥ *तादात्म्येन मूलादेरिति*॥ न्यायमते। स्वमतेऽत्यन्ताभेदे तादात्म्यासंभवाद् मूलत्वादेरिति बोध्यम्। *हेतुत्वादिति*॥ अन्यथा मूलावच्छिन्नसंयोगस्याग्रावच्छेदेनोत्पत्तिप्रसङ्गादिति भावः। यद्यपि रजतादितादात्म्यस्य सर्वदृश्यतादात्म्यापन्नचिति घटावच्छेदेनोत्पत्तिवारणायावच्छेदकतासंबन्धेन रजतादितादात्म्यं प्रतीदमादेस्तादात्म्येन हेतुताकल्पनमावश्यकमेव, इति संयोगसाम्यम्; तथापि संयोगस्थलीयकारणतयैव यत्र निर्वाहः, तत्र तमादायैव समाधत्ते—*व्यावहारिकस्येति*॥ *स्वावच्छिन्नसामान्येति*॥ अन्यथा विभागादिकं प्रति पृथक् कारणताकल्पने गौरवादिति भावः। *रजतादि-तत्तादात्म्ययोरिति*॥ इदंतादात्म्यं रजतीयसंबन्धरूपम्, न तु विषयतारूपम्; तस्येदमाद्यवच्छिन्नस्य 'रजतादि-तत्संसर्गयोरि'त्यादिनाऽनुपदमेव वक्ष्यमाणत्वात्। *ननु* इदमर्थो यत्र कस्यचिदवयवः, तत्र तस्याऽऽरम्भावयवनिष्ठसंयोगादावुक्तहेतुत्वं क्लृप्तम्, यत्र तु घटादिरूपोऽन्त्यावयवी इदमर्थः, तत्र घटावच्छिन्नसंयोगाद्यप्रसिद्धा घटादीनामुक्तहेतुत्वं न क्लृप्तम्, अत आह—*अन्त्यावयविनामिति*॥ *तन्मध्यस्थजलादिवायुसंयोगेति*॥ तन्मध्यस्थजलादीनां वायुना संयोगेत्यर्थः। *अवच्छेदकत्वानुभवादिति*॥ घटे जले वायुसंयोगः, नान्यत्रेति प्रतीतेः। स्वसमवायिनामिव स्वसंयोगिनामपि स्वसंयोगाद्यवच्छेदकत्वमिति भावः॥

*तेष्वपि=अन्त्यावयविष्वपि। *तथैव=क्लृप्तकारणताबलेनैव। गुण-कर्मादीनामपि महाकालनिष्ठकालिकसम्बन्धावच्छिन्नगुणत्वाद्यधिकरणतावच्छेदकत्वात् तादृशहेतुत्वं क्लृप्तमेवेति सूचनयाक्लृप्तत्वेऽपीत्यपिशब्दः। *तद्विशेष्यकेति*॥ गुणादिविशेष्यकेत्यर्थः। *तत्सम्बन्धेनेति*॥ अवच्छेदकतासम्बन्धेनेत्यर्थः। आश्रयतासम्बन्धेनेति वा। विशेष्यनिष्ठत्वद्वयं विशेष्ये कार्य-कारणयोः सत्त्वसूचनाय। *दोषाणामिति*॥ यद्यपि विशेष्यस्यैव तादात्म्येन हेतुता वक्तुं शक्या; तथापि भ्रमे तद्विषये च दोषाणां हेतुत्वस्य क्लृप्तत्वाद् दोषपर्यन्तानुधावनम्। *ननु* एवमपि 'रजतमिदमि'त्याकारे रजतादिरूपविशेष्य इदमादिरूपविशेषणतादात्म्याद्यवच्छेदकत्वं न सिद्ध्यति; रजतादेर्भ्रमपूर्वमसिद्धतयोक्तरीत्या कार्य-कारणभावेनानिर्वाहादित्यत आह—*एवमिति*॥ अज्ञानस्यानादितया भ्रमपूर्वमेव रजतावच्छेदेनेदंतादात्म्योत्पत्तिः स्यात्, अतस्तादृशपूर्वत्ववैशिष्ट्यं कारणतावच्छेदकमुपात्तमिति ध्वनयन्नाह—*अव्यवहितपूर्वक्षण एवेति*॥ *इदमादिविशेष्येति*॥ विशेष्यत्वम्—'इदं रजतमि'त्याकारमाश्रित्य स्वरूपकीर्तनमात्रम्।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादात्म्यं रजताकाराविद्यावृत्त्यवच्छेदेनोत्पद्यते, तन्निष्ठा विषयतेश्वरज्ञानादेरस्तीति सम्बन्धः। स्वपरिणामे भाविनि तादात्म्यादिसम्बन्धेन पूर्वमज्ञानस्यासत्त्वात् स्वपरिणामनिष्ठविषयतेत्युक्तम्। विषयतासम्बन्धस्य च भावि-भूतविषये ज्ञानादेः सत्त्वाद् उक्तविषयतासम्बन्धेन भाविन्यप्यज्ञानसत्त्वम्। अत एव 'ज्ञायमानघटत्वादिरूपं सामान्यं घटवृत्त्यलौकिकमुख्यविशेष्यतासम्बन्धेन प्रत्यक्षं प्रति स्वसमवायिनिष्ठविषयतासम्बन्धेन भावि-भूतनिष्ठेन हेतुरि'ति तार्किका वदन्ति। रजतादि-तत्संसर्गयोरिदमाद्यवच्छिन्नत्वात् तदीयं चित्तादात्म्यरूपं विषयत्वमपि तथा, इदमादिविषयत्वावच्छिन्नं च सम्भवति, इदमादिविषयत्वस्य तु रजतादिप्रतियोगिकतादृशसंसर्गविषयत्वावच्छिन्नत्वे मानाभावाद् 'रजतमिदमि'ति द्वितीयाकारसिद्ध्यर्थं रजतादि तद्विषयत्वावच्छेदेन तादात्म्यस्योत्पत्तिः स्वीक्रियते। तस्य च तादात्म्यस्येदमादिप्रतियोगिकत्वसिद्धये प्रतियोगितासम्बन्धेन तादात्म्यस्योत्पत्तौ स्वाश्रयतावच्छेदकत्वसम्बन्धेनोक्ताज्ञानस्य हेतुतान्तरं कल्प्यते। तथाच भ्रमपूर्वसिद्धं यदिदमादिकं तद्विषयत्वं च, तदेव रजतादौ तत्तादात्म्ये तयोर्विषयत्वे च तावदुपहितरूपेणावच्छेदकम् ॥

विट्ठलेशीयटिप्पणी

*ईश्वरेति* ॥ विषयतायां स्वीयत्वानिवेशादिति भावः। अधिष्ठानमेवाज्ञानविषयः, नत्वध्यस्तमिति बोध्यम्। *ननु* तादात्म्यमेव जनकतावच्छेदकसम्बन्धोऽस्त्वित्यत आह—*स्वपरिणाम इति* ॥ भाविनीति हेतुगर्भम्। *उक्तमिति* ॥ तादात्म्यरूपाया ईश्वरज्ञानविषयताया अपि भाविन्यसंभवाद् विषयतायां तादात्म्यभिन्नत्वविशेषणोपादानमिति केचिदाहुः। एवं चाऽत्रेश्वरज्ञानं मायावृत्तिः, तदीयाकाराख्यसम्बन्धो विषयतेति बोध्यम्। परे तु रजतादितादात्म्य इदमादितादात्म्यावच्छेदकत्ववारणाय तादात्म्यभिन्नत्वं स्वपरिणामविशेषणमिति वदन्ति। *ननु* भाविन्यज्ञानमपि कथं तिष्ठति ? विषयतायास्तत्र दुर्घटत्वादित्यत आह—*विषयतासंबन्धस्य चेति* ॥ ज्ञानादेर्विषयतासंबन्धस्येति योजना। *उक्तेति* ॥ स्वपरिणामनिष्ठेत्यर्थः। *ननु* इदमवच्छिन्नचिद्रूपाधिष्ठाननिष्ठयो रजत-तादात्म्यरूपतत्संबन्धयोरिदमवच्छिन्नत्वस्य सिद्धावपि रजतादिविषयतायामिदंविषयतावच्छिन्नत्वमप्रसिद्धमत आह—*रजतादीति* ॥ *तदीयम्=रजत-तत्संसर्गीयम्। *चित्तादात्म्यरूपम्=वृत्त्यवच्छिन्नचिद्रूपज्ञानतादात्म्यरूपम्। *तथा=इदमवच्छिन्नम्। यस्य वस्तुनो यदवच्छिन्नत्वम्, तत्संबन्धस्यापि तदवच्छिन्नत्वनियमात्। अत एव कपिसंयोगादेरग्राद्यवच्छिन्नत्वात् तदीयसम्बन्धस्य समवायरूपस्य तादात्म्यरूपस्य वाऽग्राद्यवच्छिन्नत्वमिति वदन्ति। *सम्भवतीति* ॥ तस्येदमवच्छिन्नत्वात्; यस्य यदवच्छेदकत्वम्, तत्सम्बन्धस्यापि तदवच्छेदकत्वनियमादिति भावः। एवं च 'इदं रजतमि'त्याकारनिर्वाह इति बोध्यम्। *इदमादिविषयत्वस्येति* ॥ 'इदं रजतमि'त्याद्याकारनिर्वाहकस्येत्यादिः। *रजतादिप्रतियोगिकेति* ॥ अन्यानि तादृशाकारनिर्वाहकेत्यादिः। *मानाभावादिति* ॥ तन्निर्वाहककार्य-कारणभावविरहादिति भावः। *स्वीक्रियत इति* ॥ इदमवच्छिन्नचिदनुयोगिकरजतप्रतियोगिकतादात्म्यनिर्वाह्यतादृशविषयताभ्यां द्वितीयाकारसिद्ध्यसम्भवादिति शेषः। *तादात्म्यस्य*=तादात्म्यान्तरस्य। *ननु* उक्ताज्ञानरूपकारणबलाद् रजताद्यवच्छेदेन तादात्म्योत्पत्तिनिर्वाहेऽपि तादृशतादात्म्यस्येदंप्रतियोगिकत्वे किं नियामकम् ? अत आह—*तस्य चेति* ॥ स्वम्=अज्ञानम्, तदाश्रयता इदमवच्छिन्नचितः; तदवच्छेदकताया इदमि सत्त्वात् तत्र प्रतियोगितासम्बन्धेन तादात्म्यसिद्धिः। *तथाच=तादात्म्यद्वयोपगमे च। अत्र मूल-संयोगयोः परस्परानवच्छिन्नत्वनियमवद् मूलत्व-संयोगत्वादीनां परस्परावच्छिन्ननिरूपितावच्छेदकतानवच्छेदकत्वनियमोऽपि वर्तते। तथात्र भ्रमपूर्वेदमादेरिदन्त्वादिरूपेण रजताद्यवच्छेदकत्वे भ्रमकालोत्पन्नतादात्म्योपहितेदम इदन्त्वेनैव रूपेण रजताद्यवच्छिन्नत्वे चोपगम्यमाने रजताद्यवच्छेदेदमस्तादात्म्यरूपोपाधिभेदाद् भेदेन प्रथमनियमाभङ्गेऽपि रजताद्यवच्छेदकतावच्छेदकरूपैक्येनोक्तद्वितीयनियमभङ्गः स्यात, अत उक्तम्—*तावदुपहितरूपेणेति* ॥ रजतादिरूपतत्तदुपाध्युपहितरूपेणेत्यर्थः। रजतोपहितमिदमादिकं रजतावच्छेदकम्, तत्तादात्म्योपहितं च तत्तादात्म्यावच्छेदकमित्यादीति यावत्। इदंनिष्ठावच्छेदकताया .तोपहितं तादात्म्यसम्बन्धेनावच्छेदकम्; उपाधेः स्वविशेष्यान्वयिनाऽनन्वयेनावच्छेदककोटावनिवेशाद् न रजतादिरूपस्य स्वावच्छेदकतापत्तिः। नच

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यत्तु भ्रमकाल इदमर्थस्य तादात्म्यं तत्प्रतियोगित्वोपहितमिदमादिकं च जायते, यच्च तयोर्विषयत्वम्, तानि तदुपहिततादृशरजतादिनाऽवच्छिद्यन्ते। एवञ्च मूल-संयोगादीनामिव परस्परानवच्छिन्नत्वनियमो न व्याहतः, न वा परस्परं भिन्नसर्वविषयकत्वरूप आकारयोर्भेदनियमो व्याहतः; 'इदं रजतमि'त्याकारे तादृशावच्छेद्यावच्छेदकयोरेव भानेन जायमानस्य रजतप्रतियोगिकतादात्म्यस्य प्रतियोगित्वोपहितरजतस्य तदनुयोगित्वोपहितेदमर्थस्य च भानात्, 'रजतमिदमि'त्याकारे तु जायमानस्येदंप्रतियोगिकतादात्म्यस्य प्रतियोगित्वोपहितेदमर्थस्य तदनुयोगित्वोपहितरजतस्य चावच्छेद्यावच्छेदकतया भानेनाकारद्वयविषयाणां मिथो भिन्नत्वात्। नच—इदमाद्यवच्छेदेन जायमानतादात्म्यस्य रजतादौ प्रतियोगितासम्बन्धेनोत्पत्त्या तत्रोक्तसम्बन्धेनाज्ञानस्याभावाद् व्यभिचार इति—वाच्यम्; रजतादेरुक्ततादात्म्यस्य प्रतियोगिताऽभावेऽपि रजतादिसंसर्गतया भानसम्भवात्। नहि विशेषण-विशेष्ययोः संसर्गप्रतियोगित्वानुयोगित्वे विशिष्टबुद्धेर्विषयः, येनानुभवबलादेव तयोस्ते सिद्ध्यतः॥

अथवा रजताद्यवच्छेदेन जायमानतादात्म्यस्यापि नेदमादिप्रतियोगिकत्वम्, किन्तु तत्संसर्गतया

### विट्ठलेशीयटिप्पणी

—एकोपहितरूपेणैव सर्वान् प्रत्यवच्छेदकत्वमस्त्विति—वाच्यम्; एकस्यैकरूपेण नानेकावच्छेदकतेति नियमसत्त्वेन तत्त्वाप्यभङ्गाय विनिगमनाविरहेण सर्वेषामेकैकावच्छेदकतावच्छेदकतावारणाय च तत्तदुपहितरूपस्य तत्तदवच्छेदकत्वानुसरणादिति बोध्यम्। भ्रमपूर्वं सिद्धादिदमस्तत्कालीनस्येदमो भेदकमाह—*तत्प्रतियोगित्वोपहितमिति*॥ 'इदं रजतमि'त्याकारे भासमानरजताद् 'रजतमिदमि'त्याकारे भासमानरजतस्य भेदमाह—*तदुपहितेति*॥ तादृशतादात्म्यादिनोपहितेत्यर्थः। *एवं च*=आकारद्वये भासमानेदमाद्यर्थस्योपाधिभेदेन भेदाश्रयणे च। *ननु* इदमर्थभेदोपगमेनैव तादृशनियमनिर्वाहे रजतादेरप्युपाधिभेदेन भेदाश्रयणं व्यर्थम्, अत आह—*न वा परस्परमिति*॥ एवं चेदृशनियमनिर्वाहायैव रजतादेरपि भेद आवश्यक इति भावः। *आकारयोः*=ज्ञानाभिलापकविभिन्नानुपूर्वीकशब्दयोः। एवं च 'भिन्नसर्वविषयकत्वे'त्यत्र विषयता व्यापारानुबन्धिनी। यद्वा—*आकारयोः*=ज्ञानाभिलापकविभिन्नानुपूर्वीकशब्दाभिलाप्यप्रत्यययोः। तदभिलाप्यत्वं च तज्जन्यशाब्दबोधसमानविषयकत्वम्। *इदं रजतमित्याकारे*॥ भ्रमात्मकप्रत्यय इति शेषः। तादृशावच्छेद्यावच्छेदकयोः=रजतादिरूपावच्छेद्येदमादिरूपावच्छेदकयोः। *भानेन*=भानस्यावश्यकतया। भानादित्यत्रान्वयः। 'इदं रजतमि'ति शब्दजबोधे तथैव भानादिति भावः। *अवच्छेद्यावच्छेदकतया*॥ रजतान्वयी, भानान्वयी वा। आश्रयत्वं तृतीयार्थः। प्रतियोगितासम्बन्धेन तादात्म्यं प्रति स्वाश्रयतावच्छेदकत्वसम्बन्धेनाज्ञानस्य हेतुतायां व्यभिचारमाशङ्कते—*नचेति*॥ *उत्पत्त्येति*॥ अन्यथा तत्प्रतियोगिकसंसर्गविधया तद्भानासम्भवादिति भावः। *अज्ञानस्याभावादिति*॥ स्वोत्पाद्यं रजतादिकं नाज्ञानस्याश्रयतावच्छेदकम्; आत्माश्रयपर्यवसानप्रसङ्गात्। नच—अनादे रजतोपादानाज्ञानस्य जन्यमिदमादिकमपि कथमाश्रयतावच्छेदकम्? तथा सति तत्पूर्वं तदाश्रयताया निरवच्छिन्ननिष्ठत्वप्रसङ्गादिति—वाच्यम्; तत्पूर्वं तदुपादानमूलाविद्याया एव मूलाज्ञानाश्रयतावच्छेदकत्वसम्भवादिति भावः। *ननु* रजते तत्प्रतियोगित्वाभावे कथं तत्संसर्गतया तादात्म्यभानम्? रजतसंसर्गतया तादात्म्यभाने विशिष्टबुद्धौ संसर्गप्रतियोगित्वानुयोगित्वयोर्विषयतया रजते तत्प्रतियोगित्वभानेन तत्प्रतियोगित्वस्यावश्यकत्वादित्यत आह—*नहीति*॥

विशेषणे प्रतियोगित्वं विशेष्येऽनुयोगित्वम्। *ननु* एवं 'रजतमिदमि'त्याकारे भासमानतादात्म्यसंसर्गप्रतियोगितायाः अपीदमि भानाभावेनानुपगमसम्भवेन तत्र तन्निर्वाहकोक्तहेतुताकल्पनं व्यर्थमित्याशङ्कामिष्टापत्त्या परिहरति—*अथवेति*॥ *ननु* संसर्गप्रतियोगित्वानुयोगित्वयोर्विशिष्टबुद्धिविषयत्वस्यानुपदं व्यवस्थापनीयतया भ्रमविषयसंसर्गीभूततादात्म्यप्रतियोगित्वस्येदम्यावश्यकतया तन्निर्वाहकोक्तहेतुतायां रजत उक्तरीत्या व्यभिचारो दुर्वार

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भानमात्रम्, अतो न तादृशकार्य-कारणभावाभावेऽपि क्षतिः । वस्तुतस्तु दोषादिघटिता सामग्र्येव रजतादिप्रातीतिकप्रतियोगिकतादात्म्ये नियामिका, व्यावहारिकप्रतियोगिके तादात्म्ये चाज्ञानाश्रयतावच्छेदकत्वं नियामकम् ॥

*ननु* 'रजतमिदमि'त्याकारसिद्धय इदमादितादात्म्योत्पत्तिस्वीकारो व्यर्थः; इदंत्वसंसर्गोत्पत्त्यापि तादृशाकारसिद्धेरिति चेत्, *न*; तादृशाकारे तादृशस्य संसर्गस्य तादात्म्यस्य वा भानमित्यत्र विनिगमकाभावात्। तस्माद् धर्मयोः संसर्गाविव धर्मिणोस्तादात्म्ये अपि प्रातीतिके जायेते। तयोरिव तयोरपि सप्रतियोगिकतया प्रतीयमानत्वात्, बाध्यत्वानुभवाच्च। एतेन—'इह रजतं ने'ति बाधस्य बाध्यं रजतमेव, नतु तत्प्रतियोगिकं तादात्म्यम्; तथाच भ्रमपूर्वसिद्धं यदिदमादितादात्म्यम्, तस्यैव रजतादिविशेषणं प्रति संसर्गतया भानम्—इत्यपास्तम्; रजतादिप्रतियोगिकतादात्म्यत्वेन प्रतीतेर्बाध्यत्वानुभवस्य च रजताद्यप्रतियोगिकतादात्म्येनानिर्वाहात्। नहि विशेषण-विशेष्ययोः प्रतियोगित्वानुयोगित्वे न भासेते इति वक्तुं शक्यते; घट-भूतलादिनिष्ठयोर्वृत्तिज्ञानीयविशेषणता-विशेष्यतयोर्भासमानवैशिष्ट्यीयभास-

विट्ठलेशीयटिप्पणी

इत्याशङ्कां परिहरति—*वस्तुतस्त्विति* ॥ *दोषादिघटितेति* ॥ विशेष्यनिष्ठावच्छेदकतासम्बन्धेन रजतं तत्प्रतियोगित्वविशिष्टतादात्म्यं च प्रति तन्निष्ठावच्छेदकतासम्बन्धेन दोषाणां हेतुत्वस्योक्तत्वाद् रजते तत्सम्बन्धप्रतियोगित्वस्य कार्यतावच्छेदकघटकतयोत्पत्तिनिर्वाहादिति भावः। यद्वा प्रातीतिकनिष्ठप्रतियोगितासम्बन्धेन तादात्म्यं प्रति स्वजन्यप्रकारनिष्ठविषयतासम्बन्धेन दोषाणां हेतुत्वम्; कार्यतावच्छेदके निष्ठान्तनिवेशाद् व्यावहारिक इदमि न व्यभिचार इति भावः। *नियामिका*=प्रतियोगितासम्बन्धेन तदुत्पत्तिप्रयोजिका। एवं नियामकमित्यत्रापि। *व्यावहारिकप्रतियोगिक इति* ॥ व्यावहारिकप्रतियोगिनिष्ठप्रतियोगितासम्बन्धेन तादात्म्यं प्रति स्वाश्रयावच्छेदकतासम्बन्धेनाज्ञानस्य हेतुत्वम्; निष्ठान्तनिवेशाद् रजते नोक्तरीत्या व्यभिचार इति भावः। *इदंत्वसंसर्गोत्पत्त्येति* ॥ नच—'रजतमिदमि'ति शब्दस्य तादात्म्यसम्बन्धेनेदंप्रकारकबोधजनकस्येदंत्वप्रकारकबोधाजनकतयेदंत्वप्रकारकज्ञानस्य तादृशाकारत्वासम्भवादिदंत्वसंसर्गोत्पत्तिरकिञ्चित्करीति—वाच्यम्; तादृशशाब्दबोधस्य धर्मिपारतन्त्र्येणेदंत्वप्रकारकतयेदंत्वप्रकारकज्ञानस्यापि कथञ्चित् तादृशाकारकत्वसम्भवात्, अन्यथेदंत्वादिप्रकारकज्ञानाकारस्य सुविस्पष्टस्य दुर्लभत्वापत्तेः। अत एवेदंत्व-द्रव्यत्वादिसाध्यकप्रतिज्ञायाम्—'इदं द्रव्यमि'ति रीत्यैव साध्यनिर्देश इति भावः। *धर्मयोः*=इदंत्व-रजतत्वयोः। *संबन्धौ*=स्वरूप-समवायौ। *धर्मिणोः*=इदं-रजतयोः। *प्रातीतिके*=मिथ्याभूते। उत्पत्तौ प्रतीयमानत्वं हेतुः, मिथ्यात्वे तु बाध्यत्वानुभवः। *सप्रतियोगिकतयेति* विशेषणयोस्तादात्म्यप्रतियोगितासिद्धये। *तस्यैवेति* ॥ तथाच रजतप्रतियोगिकतादात्म्यं व्यर्थमिति भावः। *रजतादिप्रतियोगिकतादात्म्यत्वेनेति* ॥ संसर्गप्रतियोगित्वादेर्विशिष्टबुद्धिविषयत्वादिति भावः। *बाध्यत्वानुभवस्य चेति* ॥ विषयविशिष्टभ्रमस्य मिथ्यात्वानुभवेन रजतप्रतियोगिकतादात्म्यत्वावच्छिन्नादिरूपविषयस्यापि मिथ्यात्वावगाहनस्योक्तत्वादिति भावः। यद्वा—रजतस्येत्यादिः। व्यधिकरणसम्बन्धेन रजताप्रतियोगिकतादात्म्येन रजताभावस्य केवलान्वयित्वेन मिथ्यात्वाघटकत्वादिति भावः। *अनिर्वाहादिति* ॥ अनिर्वचनीयख्यातिवादिभिरस्माभिरन्यथाख्यातेरनुपगमादिति भावः। *ननु* संसर्गप्रतियोगित्वानुयोगित्वे विशिष्टबुद्धौ न भासेते इति वक्तुं शक्यते; तत्र तद्भाने युक्त्यभावादित्याशङ्कां परिहरति—*नहीति* ॥ तत्र तद्भाने युक्तिमाह—*घटेत्यादि* ॥ प्रतियोगित्वे भासमानत्वानुपादाने 'घट-भूतल-संयोगाः' इति समूहालम्बनेऽपि घट-भूतलयोः परस्परं विशेष्य-विशेषणभावापत्तिर्बोध्या। *ननु* अवच्छेदकीभूतं ज्ञान-विषययोस्तादात्म्यं विशेष्यता, अवच्छेद्यीभूतं तु तत्र प्रकारता, तयोश्च वृत्तिज्ञान उपनामे प्रतियोगित्वादिभानेन कोऽर्थः सिद्ध्यतीति ?

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मानप्रतियोगित्वानुयोगित्वस्वरूपत्वात्, अवच्छेदकावच्छेद्यभावापन्नचिच्चैत्यतादात्म्यरूपयोर्विशेषणता--विशेष्यतयो-श्चिद्रूपज्ञान एव स्वीकारात्, चिद्रूपज्ञानस्यैव ज्ञानत्वेन वृत्तौ स्वीकर्तुमशक्तत्वात् ॥ *ननु*--तथापि रजतादे-रुपनयसंनिकर्षेण प्रत्यक्षे विषयीभवतो विशेषणत्वमेव, नतु विशेष्यत्वम्; 'उपनीतं विशेषणतयैव भाती'ति नियमादिति—चेत्, *न*; उपनयस्य सिद्धान्ते प्रत्यक्षविषयत्वानियामकत्वादुक्तनियमस्याभावात्, परमते तद्भावेऽप्यलौकिकविशेषणतायामेव तस्य नियामकत्वात्, लौकिक्यां च विशेषणतायामिव विशेष्यतायामपि दोषाणामेव नियामकत्वात् ॥ *ननु*—रजतस्याध्यासे स्वीकृते तत्तादात्म्यस्याप्यध्यास आवश्यकः, स एव कुतः ? रजतत्वादिधर्मस्यैव संसर्ग आरोप्यते; तावतैव प्रतीति-बाधयोरुपपत्तेः किमिति रजत-तादात्म्ययोरध्यास उच्यते ? इति—चेत्, *न*; रजतस्योत्पत्तिं विना 'रजतत्वमत्र साक्षात्करोमी'ति प्रत्ययानिर्वाहात्, देशान्तरस्थ-रजते मनोऽवच्छिन्नचित्तादात्म्याभावेन तद्गतरजतत्वादावपि तदभावात्। नच—रजतत्वादेरेवोत्पत्तिरस्तु, नतु तद्वत इति—वाच्यम्; अनेकधर्माणामुत्पत्तिकल्पनामपेक्ष्यैकस्य धर्मिण एवोत्पत्तिकल्पनाया लघुत्वात्, अखण्ड-रजतत्वादेरुत्पत्तौ तस्य पूर्वमननुभूतत्वेन पूर्वानुभूतरजतत्वादिप्रकारकप्रवृत्त्यादिकार्यस्य भ्रमस्थलेऽनुपपत्तेः।

विट्ठलेशीयटिप्पणी

अत आह—*अवच्छेदकेति*॥ *ननु* वृत्तेरपि ज्ञानत्वेन 'चिद्रूपज्ञान एवे'ति कोऽयमाग्रह इति ? अत आह—*चिद्रूप-ज्ञानस्यैवेति*॥ वृत्तौ ज्ञानव्यवहारस्तु ज्ञानावच्छेदकतयौपचारिक इति भावः। *अशक्तत्वादिति* ॥ वृत्तिर्ह्यन्तःकरणस्य परिणामः, तया च सह घट-भूतलादीनामिवाधाराधेयभावादिः, नाप्यत्यन्ताभिन्नत्वभावः; अतो न तादात्म्यं सम्बन्धः। नापि संयोगादिकम्; गुणादिषु तदसम्भवात, अतो वृत्तिविशेष्यतादिकमुक्तरूपमेवेति भावः। भ्रमस्य 'रजतमिद-मि'त्याकारासिद्धिं शङ्कते—*नन्विति* ॥ *सिद्धान्ते=मीमांसकसिद्धान्ते। *परमते=नैयायिकमते। *तद्भावे= उपनयसन्निकर्षभावे। *लौकिक्यां चेति* ॥ रजते च लौकिक्येव सा; 'रजतं पश्यामी'त्यनुव्यवसायादिति भावः। *दोषाणाम्=चाकचक्यादीनाम्। कामलादिदोषाणां तु बाधाभावोऽपि न सहकारीति बोध्यम्। *स एव=रजताध्यास एव। *रजतत्वादिधर्मस्येति*॥ देशान्तरस्थरजतादिगतस्येति शेषः। *प्रतीतिः='इदं रजतमि'त्याकारा। *बाधः='नेदं रजतमि'त्याकारः। रजतीयतादात्म्यसम्बन्धावच्छिन्नाभावस्यापि तत्र प्रतीयमानस्य रजतत्वबाधरूपत्वात्, 'इदं रजतमि'ति नञ्रहितशब्दोल्लेखिप्रतीते रजतत्ववैशिष्ट्यावगाहित्वोपगमे 'नेदं रजतमि'ति प्रतीते रजतत्वाभावाव-गाहित्वस्य सत्त्वात्, प्रतियोगि-तदभावयोः समानयोगक्षेमत्वात्। शङ्कामुपसंहरति—*किमितीति* ॥ *देशान्तरस्थेति* ॥ 'रजतत्वमत्र साक्षात्करोमी'त्यत्र हि वृत्त्यवच्छिन्नचित् साक्षात्कारः, तदन्वयि तादात्म्यरूपं विषयत्वं द्वितीयार्थः, आख्यातार्थस्तादात्म्यावच्छिन्नमाश्रयत्वम्; तस्याश्चाह्रियमाणाहंपदार्थेऽन्तःकरणावच्छिन्न-चित्यन्वयः। एवं च रजतत्वीयतादात्म्याश्रयवृत्त्यवच्छिन्नचित्तादात्म्याश्रयीभूतमन्तःकरणावच्छिन्नचैतन्यं तत्र भासते। तथाच वृत्त्यवच्छिन्नचित्तादात्म्यद्वारकमन्तःकरणावच्छिन्नचित्तादात्म्यं रजतत्वीयं तादृशप्रतीतौ प्रयोजकम्। तच्च रजतस्य तादृशचित्तादात्म्यनियतम्। तत्र रजतस्योत्पत्त्यनङ्गीकारे देशान्तरस्थरजतस्य तादृशतादात्म्यमेव प्रकृते वाच्यम्, तच्च न सम्भवति; तदाकारवृत्तिप्रयोजकसन्निकर्षादिविरहेण तादृशवृत्त्यभावेन तदवच्छिन्नचित्तादात्म्या-भावेन तस्यामन्तःकरणावच्छिन्नचित्तात्म्याभावात्, इति देशान्तरस्थरजतगतरजतत्वस्यापि न तादृशचित्तादात्म्यम्, इति तादृशप्रत्ययानुपपत्तिरिति भावः। *मनः=अन्तःकरणम्। *तद्गतरजतत्वेति* ॥ प्रकृते तदीयसंसर्गारोपस्यैवोप-गन्तव्यत्वेन रजतत्वोत्पत्तेरपि त्वयाऽनुपगमादिति भावः। रजतोत्प...शेऽपि रजतत्वोत्पत्तिमभ्युपगम्य तादृशप्रत्ययो-पपत्तिं शङ्कते—*नचेति* ॥ *धर्मिण एवेति* ॥ तथाच तद्गतधर्माणां सहजतो मनोऽवच्छिन्नचित्तादात्म्यमिति भावः। *अखण्डेति* ॥ अतिरिक्तेत्यर्थः। देशान्तरस्थरजतवृत्ते रजतत्वस्यान्यत्रोत्पत्तेरसम्भवादिति भावः। *अनुपपत्तेरिति* ॥ तथाचाखण्डरजतत्वप्रकारकज्ञानत्वेन प्रवृत्तौ कारणत्वान्तरकल्पनापत्त्या गौरवान्तरमिति भावः।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तस्मादिदमादितादात्म्यस्य रजताद्यवच्छेदेनावश्यमुत्पत्तिः प्रातीतिकभ्रमस्थले वाच्या। तथाच तद्वदेव व्यावहारिकघटादिभ्रमस्थलेऽपि 'सन्तं घटं जानामि' 'घटं सन्तं जानामी'त्याकारद्वयानुभवात् तादृशभ्रमस्य विषयविशिष्टस्य बाधकप्रत्ययेन श्रुत्यनुमानादिना च मिथ्यात्वप्रत्ययाच, सत्तादात्म्यावच्छेदेन घटादिकं तत्तादात्म्यं घटत्वादिसंसर्गश्च, घटाद्यवच्छेदेन सत्तादात्म्यं सत्त्वादिधर्मसंसर्गश्च जायते ; केवलस्य सतोऽधिकरणत्वेऽपि तादात्म्यप्रतियोगित्वोपहितरूपेण तस्यैतत्संम्बद्धत्वेनावच्छेदकत्वम्। नच—एकस्यैवानादेः सत्तादात्म्यस्याविद्यायामिव घटादावपि सम्भवाद् घटाद्यवच्छेदेनानन्तसत्तादात्म्यानामुत्पत्तौ न मानमिति—वाच्यम्; सत्तादात्म्यं हि चिद्रूपज्ञानस्य विषयतारूपतादात्म्यम्; तथाच कपालादिनिष्ठविषयतारूपसत्तादात्म्येनावच्छिन्नस्य घटादिनिष्ठविषयतारूपस्य सत्तादात्म्यस्य तन्त्वादिनिष्ठविषयतारूपसत्तादात्म्यावच्छिन्नेन पटादिनिष्ठविषयतारूपेण सत्तादात्म्येनाभेदासम्भवाद् अवच्छेदकभेदेन सत्तादात्म्यानां भेदस्यावश्यकत्वेनानन्त्यं प्रामाणिकम्। नहि तार्किकादिभिरपि तत्तद्विषयतावच्छिन्नविषयतानामैक्यमुच्यते। तेषां च संयोगादिवदेवोक्तरीत्या जन्यत्वमपि। तस्मादाकारद्वयानुभवाद् भ्रमविषयत्वहेतुना मिथ्यात्वानुमितेः, 'सत्तादात्म्यमिदमादितादात्म्यं च यदि मिथ्या न स्यात्, तदा भ्रमविषयो न स्यात्; विषयविशिष्टभ्रमस्य मिथ्यात्वप्रत्ययात्' इति तर्काच्चेदमादितादात्म्यमिव सत्तादात्म्यमपि मिथ्या।

विट्ठलेशीयटिप्पणी

दृष्टान्तमुपसंहरति—*तस्मादिति* ॥ दार्ष्टान्तिकं व्युत्पादयति—*तथाच तद्वदेवेति* ॥ 'सन्तं घटं जानामी'त्यत्र सद्विषयतावच्छिन्नघटतादात्म्यविषयत्वम्, 'घटं सन्तं जानामी'त्यत्र च घटविषयतावच्छिन्नसत्तादात्म्यविषयत्वं भातीत्यादिदृष्टान्तरीत्या सर्वं योजनीयम्। *बाधकप्रत्ययेन='सन् घटः' 'घटः सन्नि'ति यद् ज्ञानं तन्मिथ्येत्याकारकेति शेषः। अयं च प्रत्ययस्तत्र तत्र श्रुत्यादौ द्वैतभ्रमो मृषेति वाक्यजन्यो बोध्यः। *श्रुत्यनुमानादिना चेति* ॥ घटादिप्रपञ्चस्येत्यादिः। श्रुतिः—"एकमेवाद्वितीयम्" "नेह नानास्ति किंचन" इत्यादिरूपा। अनुमानं प्रकृतमेव। *ननु* सद्रूपं ब्रह्म घटादेरधिष्ठानम्, तत कथं तदवच्छेदकम्? तस्य स्वासंबद्धतयाऽवच्छेद्याधिकरणासंबद्धत्वादित्याशङ्कां वारयति—*केवलस्य सत इति* ॥ *तत्संबद्धत्वेन=अवच्छेद्यघटाधिकरणीभूतब्रह्मसंबद्धत्वेन। *अनादेरिति* ॥ "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥" इत्युक्तेरिति भावः। *न मानमिति* ॥ तथाच तावतैव 'घटः सन्' इत्यादिप्रत्ययोपपत्तिरिति भावः। *हि=यतः। सत्तादात्म्यानामानन्त्यं प्रामाणिकमिति योजना। तत्र'वश्यकत्वेने'त्यन्तम्, तत्र च 'असम्भवादि'त्यन्तं हेतुः। एकस्यैव सत्तादात्म्यस्य कपालादि-घटादिनिष्ठविशेषणता-विशेष्यतारूपविषयतारूपत्वेऽवच्छेद्यावच्छेदकभावो न स्यादिति भावः। अत्र दार्शनिकसंवादमाह—*नहीति* ॥ *तत्तद्विषयतेति* ॥ कपालतन्त्वादिविषयतावच्छिन्नघट-पटादिविषयतानामित्यर्थः। सत्तादात्म्यानां नित्यत्वेऽवच्छेद्यावच्छेदकनियमानुपपत्तिर्वक्ष्यमाणरीत्या गौरवं चेत्यतस्तेषां जन्यत्वमाह—*तेषां चेति* ॥ दार्ष्टान्तिकमुपसंहरति—*तस्मादिति* ॥ 'भ्रमविषयो न स्यादि'त्यस्य, इति तर्काच्चेत्यत्रान्वयः। आपाद्यापादकयोर्व्यतिरेकव्याप्तिनिश्चयं दर्शयति—*विषयविशिष्टभ्रमस्येति* ॥ विषयितासंबन्धेनेदंसदादिविषयविशिष्टे भ्रमे मिथ्यात्वप्रत्ययो हीदमादौ भ्रमविषयत्वं मिथ्यात्वं चावगाहमानस्तदुभयसहचारप्रत्ययविधया व्यभिचाराग्रहसाहित्येन तदुभयव्याप्तिनिश्चयं जनयतीति भावः। यद्वा—इदमादेर्मिथ्यात्वग्राहकतर्कान्तरमाह—*विषयविशिष्टभ्रमस्येति* ॥ एतेन—एतस्य तर्काकारे प्रवेशासंभवेऽपि नासङ्गतिरिति—बोध्यम्। *इदमादितादात्म्यमिति* ॥ रजतावच्छेदेन रजततादात्म्यापन्नचितीति शेषः। *सत्तादात्म्यमिति* ॥ घटावच्छेदेन घटतादात्म्यापन्नचितीति शेषः। एवं च रजत इदंतादात्म्यमिव घटेऽपि सत्तादात्म्यं पर्यवस्यतीति भावः। *मिथ्येति* ॥ जायत इति शेषः। तेनाकारद्वयाद्रित्यस्य नानन्वयः, न वा घटादौ सत्तादात्म्ये किं मानमिति प्रश्नोत्तरे तन्मिथ्यात्वमात्रोपसंहारस्यार्थान्तरता, मिथ्यात्वकथनं तु सत्यत्वशङ्कानिरासाय, भ्रमकाले तदुत्पत्तौ बाध्यत्वरूपयुक्तिसूचनाय च; मिथ्यात्वस्य बाध्यत्वरूपत्वादिति ध्येयम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तदिदं सर्वं शारीरक-संक्षेपशारीरक-पञ्चपादिकादिमूलकम् ॥ उक्तं हि शारीरके—'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्याहमिदं ममेदमिति व्यवहार' इति । *अन्योन्यस्मिन्=परस्परावच्छेदेन ॥ उक्तञ्च संक्षेपशारीरके—

'इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमि ।
रजतभ्रमेऽस्य च परिस्फुरणाद्, न यदि स्फुरेद् न खलु शुक्तिरिव ॥
इतरेतराध्यसनमेव ततश्चितिचैत्ययोरपि भवेदुचितम् ।
रजतभ्रमादिषु तथावगमाद्, न हि कल्पना गुरुतरा घटते ॥
अनुभूति-युक्त्यनुमितित्रितयादितरेतराध्यसनमेव ततः ।
चिति-चैत्यवस्तुयुगलस्य, न चेत् त्रितयस्य बाधनमिहापतति ॥' इति ।

*अस्य=इदमर्थस्य । *न यदीत्यादि* ॥ यदीदमर्थो न कल्पितः, तदा भ्रमे न स्फुरेत् । *शुक्तिरिव=शुक्तित्वविशिष्टमिवेत्यर्थः । *इतरेतराध्यसनम्=परस्परावच्छेदेनाध्यासः । *गुरुतरेति* ॥ रजतादिभ्रमे यथा दृष्टम्, तद्विपरीता व्यावहारिकभ्रमस्थल एकस्यैवाध्यास उत्पत्तिश्चेति कल्पनाऽनुपस्थितविषयकत्वेन गुर्वी ; आवश्यकानामनन्तसत्तादात्म्यानां विषयत्वरूपाणामनध्यस्तत्वे सत्यत्वापत्तेः, अद्वैतश्रुतिसङ्कोचापत्तेश्च । तेषामध्यस्तत्वेऽपि न जन्यत्वमिति स्वीकारे कपालादिनिष्ठविषयत्वावच्छिन्नानां घटादिनिष्ठविषयत्वानां पूर्वोक्तरीत्या कपालादिनाऽव्यवच्छिन्नत्वात् तादृशनित्यसाधारणेन कपालाद्यवच्छिन्नत्वरूपेण संयोगादीनां कपालादिकार्यता न सम्भवति, इत्यतो जन्यत्वविशेषितेनोक्तरूपेण सा वाच्या । तथा चैतादृशगुरुतरकल्पनामूलकत्वेनैकस्यैवाध्यासोत्पादादिकल्पना

विट्ठलेशीयटिप्पणी

परस्पराध्यासे युक्तिसिद्धेऽप्याचार्याननुमतिशङ्कां परिहरति—*तदिदमिति* ॥ जडस्याध्यासाधिष्ठानत्वासंभवाद् व्याचष्टे—*अन्योन्यस्मिन्निति* ॥

एवं 'रजते' 'इदमी'त्युभयत्राप्यवच्छिन्नत्वमेव सप्तम्यर्थः । इदमि रजतवस्तुपरिकल्पनस्य सर्वसिद्धत्वाद् रजत इदमर्थकल्पन एव 'रजतभ्रमेऽस्य च परिस्फुरणादि'त्यनेन युक्तिरुक्ता । तत्र 'अस्ये'ति व्याचष्टे—*अस्येति* ॥ 'न यदी'त्यत्र इदमर्थ इति पक्षवाचकं 'कल्पितः' इति प्रतियोगिवाचकं च पूरयित्वा व्याचष्टे—*न यदीत्यादीति* ॥ शुक्तेरपीदंत्वेन भ्रमे भानात् शुक्तिरिवेति दृष्टान्तासङ्गतिः, अतो व्याचष्टे—*शुक्तिरिवेति* ॥

प्रथमश्लोके दृष्टान्तमुक्त्वा 'इतरेतराध्यासनमेवे'ति द्वितीयेन दार्ष्टान्तिकमुक्तम् , तद् व्याचष्टे—*इतरेतराध्यसनमिति* ॥ *चितिः=सद्रूपा चित् । *चैत्यम्=घटादि दृश्यम् । *ततः=तस्मात् । 'रजतभ्रमादिषु' इत्यस्यार्थं व्याचष्टे—*गुरुतरेतीति*॥ *अनुपस्थितविषयकत्वेन=अन्यत्र क्लृप्तसजातीयत्वाभावेन । उक्तकल्पनाया गुरुत्वे युक्तिमुक्त्वा गुरुतरत्वे तामाह—*आवश्यकानामित्यादिना* ॥ *अनध्यस्तत्वे=तत्स्वीकारे । *ननु* अस्तु तेषां सत्यत्वम्, नचाद्वैतश्रुतिविरोधः ; तस्यास्सत्तादात्म्यातिरिक्तद्वैताभावप्रतिपादनपरत्वेनोपपत्तिसंभवादिति शङ्कां निरस्यति—*अद्वैतश्रुतिसंकोचापत्तेश्चेति* ॥ संकोचो द्वैतसामान्यार्थकपदस्य द्वैतविशेषे लक्षणाकल्पना । तथाच एतत्कल्पनसापेक्षतयैकस्यैवाध्यास इति कल्पना गुरुतरेति भावः । *न जन्यत्वम्=नोत्पत्तिः, किन्त्वविद्यादिवदनादित्वमेवेति भावः । *तादृशनित्येति* ॥ घटादिनिष्ठविषयतारूपसत्तादात्म्यरूपनित्येत्यर्थः । *उक्तरूपेण=कपालाद्यवच्छिन्नत्वेन । *सा=संयोगादीनां कपालादिकार्यता । तथाचैतत्कल्पनासापेक्षतयैकस्यैवोत्पत्तिरिति कल्पना गुरुतरेति भावः । *इत्यर्थ इति* ॥ तथाच 'रजतभ्रमादिष्वि'त्यस्यैः चिच्चैत्ययोः परस्पराध्यासादौ स्वीकृते सति रजतभ्रमे परस्पराध्यासादेर्दृष्टत्वाद् गुरुतरा कल्पना न घटते=नापततीत्यर्थ इति भावः । 'अनुभूती'त्यादितृतीयश्लोकमुपसंहाररूपतया व्याचष्टे—*अनुभूतिरिति* ॥ *तृतीयेति* ॥ आद्यपद्यस्येत्यनुषङ्गः । एवं चतुर्थ इत्यत्रापि । तत्र *ततः=तस्मात् । 'अनुभूती'त्यादित्रितयात् चिच्चैत्ययुगलस्येतरेतराध्यसनमेव युक्तमिति योजना ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

गुरुतरेत्यर्थः । *अनुभूतिः = आकारद्वयानुभूतिराद्यपद्यस्याऽऽद्यार्धे उक्ता । अनुमितिः = भ्रमविषयत्वहेतुका मिथ्यात्वानुमितिस्तृतीयचरणे । युक्तिः = तर्कः, चतुर्थचरणे ॥

पञ्चपादिकायामप्युक्तम्—"यद्यनात्मन एवाध्यासः, तदा आत्मा न भ्रमे भासेत । तस्मादात्मानात्मनोर्द्वयोरप्यहमनुभवेऽध्यासः" इति ।

*ननु*—विप्रतिपत्तौ मिथ्यात्वविशेषस्यैव साध्यतयोक्तत्वाद् न्यायप्रयोगेऽपि तस्यैव तदुचितम्, नतु मिथ्यात्वसामान्यस्येति—चेत्, *न* ; विप्रतिपत्तावपि मिथ्यात्वस्य सामान्यरूपेणैव साध्यतायां तात्पर्यात् । तच्च सामान्यरूपं वक्ष्यमाणपञ्चविधमिथ्यात्वसाधारणं मिथ्याशब्दार्थत्वं मिथ्याशब्दप्रवृत्तिनिमित्तत्वरूपम्, नतु पञ्चविधमिथ्यात्वानामन्यतमत्वम् ; न्यायप्रयोग आधुनिकलक्षणया शब्दप्रयोगस्यासाम्प्रदायिकत्वात् । मिथ्याशब्दरूपार्थत्वरूपेण मिथ्याशब्देन मिथ्यात्वस्य बोधने तु निरूढलक्षणैव, नाधुनिकलक्षणा ; 'वृक्षो महीरुहः' इत्यादौ कोशवाक्ये व्याख्यानवाक्ये च महीरुहादिपदस्य तदर्थपरत्वेन भूरिप्रयोगदर्शनात् ॥

### विट्ठलेशीयटिप्पणी

विमतं मिथ्येति प्रतिज्ञाया असङ्गतिमाशङ्कते—*नन्विति* ॥ *मिथ्यात्वविशेषस्य=प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वत्वावच्छिन्नस्य । *साध्यतया=विप्रतिपत्तिकोटितया ॥ *न्यायप्रयोगे=तद्घटकप्रतिज्ञायाम् । *तस्यैव=तादृशप्रतियोगित्वत्वावच्छिन्नस्यैव । *तत्=तादात्म्येन पक्षविशेषणतापन्नधर्मिविशेषणतारूपसाध्यतया प्रतिपादनम् ॥ *उचितमिति* ॥ तस्यैव जिज्ञासितत्वादिति भावः । *नतु मिथ्यात्वसामान्यस्येति* ॥ पञ्चविधमिथ्यात्वानुगतरूपावच्छिन्नस्य न तदुचितमित्यर्थः । विप्रतिपत्तिकोटित्वाभावेनाजिज्ञासितत्वेनार्थान्तरापत्तेरिति भावः । नच—'विमतं मिथ्ये'त्यत्र मिथ्यापदस्य प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगीत्यर्थकतया नायं दोष इति—वाच्यम् ; तथा सति "*ननु* किमिदं मिथ्यात्वं साध्यते" इत्युत्तरग्रन्थानुत्थानापत्तेरिति बोध्यम् । *तात्पर्यादिति* ॥ अन्यथा अन्यविधमिथ्यात्वसाध्यकविप्रतिपत्तीनामप्रदर्शनाद् न्यूनतापत्तेरिति भावः । मिथ्यात्वसंबन्धस्य तद्धर्मिणश्च वारणायाह—*मिथ्याशब्दप्रवृत्तिनिमित्तत्वरूपमिति* ॥ मिथ्याशब्दार्थत्वरूपमिति रूपपदघटितपाठो न समञ्जसः, किन्तु मिथ्याशब्दार्थत्वमित्येव । *ननु* तावदन्यतमत्वमपि सामान्यरूपं कुतो नेष्टोच्यते इति ? अत आह—*नत्विति* ॥ स्वोक्तेरसांप्रदायिकत्वं परिहरति—*मिथ्याशब्दार्थत्वरूपेणेति* ॥ बोधन इत्यत्रान्वयः ॥

## इति सटिप्पण-तरङ्गिणीलघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योर्मिथ्यात्वानुमानपक्षतावच्छेदकविचारः ॥



# अथ सामान्यतो मिथ्यात्वानुमानसाध्य-हेतुस्वरूपविचारः

### न्यायामृतम्

मिथ्यात्वं च यद्यपि नात्यन्तासत्त्वम्; अपसिद्धान्तात्, नाप्यनिर्वाच्यत्वम्; अप्रसिद्धेः, नापि सद्विविक्तत्वम्; सतोऽपि सदन्तरविविक्तत्वात्, नापि सत्त्वानधिकरणत्वम्; निर्धर्मके ब्रह्मण्यपि सत्त्वात्। नच—निर्धर्मकत्वादेव तत्र सत्त्वानधिकरणत्वमपि नेति—वाच्यम्; निर्धर्मकत्वरूपहेतोः सत्त्वानधिकरणत्वाभावरूपसाध्यस्य च भावाभावाभ्यां व्याघातेनाभावरूपधर्मनिषेधायोगात्, अन्यथाऽसत्त्वानधिकरणत्वस्यापि तत्राभावेन तद्व्यावृत्त्यर्थमनिर्वाच्यलक्षणे सत्त्वानधिकरणत्वरूपविशेषणायोगात्। नच—प्रमित्यविषयत्वं मिथ्यात्वम्, ब्रह्म तु वेदान्तजन्यवृत्तिव्याप्यमिति—वाच्यम्;

### तरङ्गिणी

*मिथ्यात्वं चेति* ॥ यद्यपीत्यस्य व्यवहितेनाग्रेतनेन तथापीत्यनेन (पृष्ठ-८७) सम्बन्धः ॥ *अपसिद्धान्तादिति* ॥ मिथ्यात्ववादिभिरपि प्रपञ्चस्यासद्वैलक्षण्याङ्गीकारादित्यर्थः ॥ *अप्रसिद्धेरिति* ॥ सत्यत्ववादिना शुक्तिरूप्यादेरप्यनिर्वाच्यत्वानभ्युपगमात् तार्किकाभिमतान्यथाख्यातिपक्षे रूप्यस्यापि सत्यत्वात्, सिद्धान्त्यभिमतान्यथाख्यातिपक्षे शुक्तेरेवात्यन्तासद्रूप्यात्मना भानाङ्गीकारेण रूप्यस्य सदसद्वैलक्षण्यरूपानिर्वाच्यत्वस्याप्रसिद्धेरित्यर्थः ॥ *सतोऽपीति* ॥ सद्विशेषभेदस्य सत्यपि सम्भवादित्यर्थः ॥ *निर्धर्मक इति* ॥ तथाच सत्त्वानधिकरणत्वेऽपि ब्रह्मवत् सद्रूपत्वेनाप्यमिथ्यात्वोपपत्तिरित्यर्थः ॥ *नचेति* ॥ सत्त्ववत् सत्त्वानधिकरणत्वमपि धर्मो ब्रह्मणि नास्तीत्यर्थः ॥ *निर्धर्मकत्वहेतोरिति* ॥ निर्धर्मकत्वरूपहेतोः पक्षे सत्त्वे निर्धर्मकत्वरूपधर्मस्य ब्रह्मणि सत्त्वेन तत्र निर्धर्मकत्वस्य व्याघातः। अथ निर्धर्मकत्वं हेतुः पक्षे नास्ति, तथापि ब्रह्मणो न निर्धर्मकत्वम्; सधर्मकत्वस्यैव प्राप्तेः। एवं सत्त्वानधिकरणत्वाभावरूपसाध्यस्य पक्षे सत्त्वे तादृशसाध्यरूपधर्मलाभेन निर्धर्मकत्वरूपहेतुव्याघातः। अथ सत्त्वानधिकरणत्वाभावरूपसाध्यं पक्षे नास्ति; तथापि सत्त्वानधिकरणत्वरूपधर्मलाभेन निर्धर्मकत्वरूपहेतोस्तेन व्याघातः, सत्त्वानधिकरणत्वाभावरूपसाध्येन च व्याघात इत्यर्थः ॥ *अभावरूपेति* ॥ तथाच ब्रह्मणोऽपि सत्त्वानधिकरणत्वेनातिव्याप्त्यापत्त्या न तन्मिथ्यात्वलक्षणमित्यर्थः। ब्रह्मण्यभावरूपधर्मानङ्गीकारे बाधकमाह—*अन्यथेति* ॥ *अनिर्वाच्यलक्षण इति* ॥ सदसत्त्वानधिकरणत्वरूपानिर्वाच्यलक्षण इत्यर्थः। *ननु* अदृश्यत्वेन प्रमित्यविषये ब्रह्मण्यतिव्याप्तिरित्यत आह—*ब्रह्म त्विति* ॥ ब्रह्मणो वृत्तिव्याप्यत्वेऽपि चिदविषयत्वाददृश्यत्वोपपत्तिरिति

### न्यायामृतकण्टकोद्धारः

*अपसिद्धान्तादित्युपलक्षणम्—आश्रयासिद्धेश्चेत्यपि द्रष्टव्यम्। *अप्रसिद्धेरिति* ॥ निरुक्तिविरहस्य तन्निमित्तविरहस्य वा सदसद्विलक्षणत्वस्य वाऽनिर्वाच्यत्वस्योभयसिद्धभ्रान्तिविषयेऽप्यप्रसिद्धेरित्यर्थः। *सतोऽपीति* ॥ तथाच सिद्धसाधनमिति भावः ॥ *निर्धर्मक इति* ॥ तथाचार्थान्तरमिति भावः। *निर्धर्मकत्वरूपहेतोरिति* ॥ *ननु* भावपक्षे हेतु-साध्यरूपधर्मद्वयाङ्गीकारस्य निर्धर्मकत्वाङ्गीकारे व्याघातः सम्भवति, अभावपक्षे तु कथं व्याघातः? इति चेत्, *न*; असिद्धेन साधनस्य बाधितसाधनस्य च भावाभावयोरिव व्याहतत्वात् ॥

न्यायामृतम्

शुक्तिरूप्यादेरपि व्यवसायद्वाराऽनुव्यवसायं प्रति साक्षाच्च बाधकज्ञानं प्रति मिथ्यात्वनिषेध्यत्वेन विषयत्वात्, सत्त्वप्रकारकप्रमां प्रति साक्षादविषयत्वं चेत्, आवश्य(१)कत्वात् सत्त्वाभाव एव मिथ्यात्वं स्यात्। नापि भ्रान्तिविषयत्वम्; ब्रह्मणोऽप्यधिष्ठानत्वेन तद्विषयत्वात्, भ्रान्तिमात्रविषयत्वस्य चोक्तरीत्या शुक्तिरूप्यादावप्यभावात्। अध्यस्ततया भ्रान्तिविषयत्वं चेत्, विशेष्यवैयर्थ्यात्, विशेषणमात्रस्य च निरुच्यमानमिथ्यात्वानतिरेकात्। नापि बाध्यत्वम्; तद्धि न तावदन्यथा विज्ञातस्य सम्यग्विज्ञातत्वम्; मिथ्यात्व-क्षणिकत्वादिना विज्ञातस्य प्रपञ्चस्य सत्यत्व-स्थायित्वादिना विज्ञातत्वेन सिद्धसाधनात्। नापि बाधक(२)ज्ञानविषयत्वम्; ब्रह्मण्यतिव्याप्तेः। नापि "नास्ति नासीद् न भविष्य-

तरङ्गिणी

भावः॥ *शुक्तिरूप्यादेरिति*॥ प्रमित्यविषयत्वं वा साक्षात्प्रमित्यविषयत्वं वा मिथ्यात्वं शुक्तिरूप्यादौ नास्ति, इति दृष्टान्तः साध्यविकल इत्यर्थः॥ *आवश्यकत्वादिति*॥ उपलक्षणमेतत्—स्वाभावसत्त्वप्रकारकप्रमारूपबाधकज्ञानं प्रति साक्षाद् विषये रूप्यादौ साध्यवैकल्यं च द्रष्टव्यम्॥ *ब्रह्मणोऽपीति*॥ तस्य जगद्भ्रमाधिष्ठानत्वेन परैरङ्गीकारादित्यर्थः॥ *उक्तरीत्येति*॥ अनुव्यवसायादिरूपप्रमाविषयत्वेनेत्यर्थः॥ *विशेष्येति*॥ अध्यस्तत्वमेव तल्लक्षणमस्त्वित्यर्थः। *ननु* तावदेव तल्लक्षणमस्त्वित्यत आह— *विशेषणेति*॥ अध्यस्तत्वस्य लक्ष्यत्वेन लक्षणत्वायोगादित्यर्थः॥ *तद्धीति*॥ बाध्यत्वम्। *ब्रह्मणीति*॥ क्षणिकत्वबाधकस्थायित्वज्ञानविषयतया प्रपञ्चस्य सिद्धसाधनदोषोऽपि बोध्यः॥ *नापीति*॥ 'नास्ती'त्यादि-

न्यायामृतकण्टकोद्धारः

यद्वा—निर्धर्मकत्व-सत्त्वानधिकरणत्वयोरभावे सधर्मकत्व-सत्त्वाधिकरणत्वरूपधर्मद्वयापत्त्या निर्धर्मकत्वाङ्गीकारे व्याघात इत्यर्थः। *अन्यथेति*॥ अभावरूपधर्मानङ्गीकार इत्यर्थः। *शुक्तिरूप्यादेरिति*॥ तथाच दृष्टान्ते साध्यवैकल्यमित्यर्थः। *आवश्यकत्वात्सत्त्वाभाव एवेति*॥ यत्किञ्चित्पुरुषीयतादृशप्रमाविषयत्वस्य भावस्य सत्त्वेऽपि सम्भवात् स्व-परसाधारणसकलतादृशप्रमाविषयत्वाभावो वाच्यः। स च सत्त्वाभावादेव श्रेय इत्यावश्यकतेत्यर्थः। एतच्चोपलक्षणम्—लघुत्वादित्यपि द्रष्टव्यम्। लक्षणदोषस्तु सत्त्वप्रकारकज्ञानस्य प्रमात्वाभावेन तत्प्रत्ययविषयत्वस्य ब्रह्मण्यपि सम्भवादतिव्याप्तिः, अनुमानेऽर्थान्तरमिति बोध्यम्। *उक्तरीत्येति*॥ व्यवसायद्वाराऽनुव्यवसायं प्रति विषयत्वमित्याद्युक्तरीत्येत्यर्थः। *नापि बाधकज्ञानविषयत्वमिति*॥ नच—पूर्वाभेद इति—वाच्यम्; पूर्वं ह्यन्यथा विज्ञातस्य विद्यमानप्रकारादन्यप्रकारेण ज्ञातस्य सम्यग्ज्ञानं स्वासाधारणधर्मपुरस्कारेण वा? आरोप्याभाववत्तया वा ज्ञानमिति सामान्यं विवक्षितम्, अत्र तु आरोप्याभाववत्तयैवेति भेदः॥

(१) *आवश्यकत्वादिति*॥ घटादीनां सत्त्वप्रकारकप्रमां प्रति साक्षाद् विषयत्वमस्ति, रूप्यादौ नास्तीति तावत् सिद्धम्। तत्र किं नियामकम्? इति पृष्टे घटादौ सत्त्वस्य विद्यमानत्वात् सत्त्वप्रकारकप्रमां प्रति साक्षाद् विषयत्वमस्ति, शुक्तिरूप्यादौ तदभावाद् नास्तीत्युत्तरं वक्तव्यम्; तथाच सत्त्वप्रकारकप्रमां प्रति साक्षादविषयतावच्छेदकतया सत्त्वाभावावश्यकत्वात् सत्त्वाभाव एव मिथ्यात्वं स्यात्। तथाच निर्धर्मके ब्रह्मण्यतिव्याप्तिरित्यर्थं इति सांप्रदायिकोऽर्थः॥ (श्रीनि)

(२) *ननु* अन्यथा विज्ञातस्य सम्यग्विज्ञानविषयत्व-बाधकज्ञानविषयत्वयोः को भेदः? इति चेत्, *न*; 'सम्यग्विज्ञानविषयत्वमि'त्यस्य सम्यग्विज्ञाननिवर्त्यत्वमित्यत्र तात्पर्यम्। अत्र बाधकज्ञाननिवर्त्यत्वे तात्पर्यम्, तत्र तु ज्ञाननिवर्त्यत्वमात्रे; अत एवोत्तरज्ञाननिवर्त्यत्वं पूर्वज्ञानस्य वक्ष्यति। नहि तत्पूर्वज्ञानबाधकमिति व्यवह्रियते, अतो न दोष इत्याहुः। अन्ये तु ब्रह्मण्यतिव्याप्तिरूपं दूषणान्तरं वक्तुं पूर्वोक्तमेवाशङ्क्य निराकरोति—*नापीति*॥ तथाच ब्रह्मण्यतिव्याप्तेरपि बाधकज्ञानविषयत्वं न लक्षणमित्यपिशब्दाभ्ययो द्रष्टव्य इत्याहुः॥ (श्रीनि)

न्यायामृतम्

ती'ति बोध्यमानाभावप्रतियोगित्वेन तद्विषयत्वम् ; मन्मते ह्यापणस्थरूप्यस्यैव (१) तत्प्रतियोगित्वात् । नापि ज्ञाननिवर्त्यत्वम् ; उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्त्वेऽप्युपपत्तेः । नापि स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् ; अव्याप्यवृत्तिसंयोगादेरिव सत्त्वेऽप्युपपत्तेः । नापि—अव्याप्य-

तरङ्गिणी

प्रकारत्वेण बोध्यमानो यो निषेधः, कालत्रयसंसृष्ट इति यावत् ; तत्प्रतियोगित्वमित्यर्थः ॥ *मन्मत इति* ॥ मिथ्यात्वं निर्वक्तुर्मायावादिनो मम मत आपणस्थरूप्यस्यैव तादृशनिषेधप्रतियोगित्वम्, न शुक्तिरूप्यस्य ; तस्य धीकाले शुक्त्यादौ सत्त्वेन तत्र तस्य तादृशनिषेधानङ्गीकारात्, तथाच शुक्तिरूप्यादौ साध्यवैकल्यमित्यर्थः । उपलक्षणमेतत्—बाध्यत्वेनानङ्गीकृते तुच्छे तदापत्तिश्च बोध्या । *उत्तरेति* ॥ तथाच ज्ञानादौ पक्षैकदेशे सिद्धसाधनम्, घटादावर्थान्तरं चेति भावः ॥ *नापि स्वेति* ॥ बाध्यत्वस्यानुषङ्गाय पुनर्मिथ्यात्वोक्तिः ॥ *अव्याप्यवृत्तीति* ॥ तथाच पूर्ववत् सिद्धसाधनार्थान्तरते इति भावः ॥ *नाप्यव्याप्येति* ॥ संयोगात्यन्ताभावस्यापि गुण-कर्मावच्छेदेन व्याप्यवृत्तित्वाधिकरणतया तत्प्रतियोगिनि संयोगादौ सिद्धसाधनतावारणायाव्याप्यवृत्तित्वानाश्रयेति निषेधद्वयान्तर्भावः । *ननु* आरोपितसंयोगस्यात्यन्ताभावोऽपि संयोगात्यन्ताभावत्वादव्याप्यवृत्तित्वाश्रय एव, इति तदनाश्रयात्यन्ताभावप्रतियोगित्वं मिथ्याभूत आरोपिते संयोगेऽव्याप्तमित्यत

न्यायामृतकण्टकोद्धारः

यद्वा—पूर्वं प्रमारूपमेव बाधकं ज्ञानं विवक्षितम्, अत्र तु भ्रम-प्रमासाधारणं ज्ञानमात्रमिति भेदः । अत एव पूर्वं 'सम्यगि'ति पदम्, अत्र तु—'ज्ञानमात्रमि'ति ॥ यद्वा—पूर्वमधिष्ठानमात्रनिष्ठं तत्, इह त्वध्यस्तादिसाधारणमिति भेदः । 'बाध्यमाने'त्यभावस्य त्रैकालिकत्वसिद्ध्यर्थमुक्तम्, नतु लक्षणप्रवेशेनेति भावः ॥ *मन्मत इति* ॥ तथाच शुक्तिरूप्यस्य प्रातीतिकत्वेन त्रैकालिकनिषेधप्रतियोगित्वासम्भवात् तत्रातिव्याप्तिरिति भावः । *ननु* आरोपितसंयोगेऽव्याप्तिः ; तस्याव्याप्यवृत्तित्वाश्रयस्वसमाना-

सिद्धिव्याख्या

*ननु*—किमिदं मिथ्यात्वम् ? *ननु*—प्रतियोगित्वेन बाधकज्ञानविषयत्वं विवक्षितम्, इति न अप्रामाण्यातिव्याप्तिः । नच—तादृशाभावप्रतियोगित्वमेव मिथ्यात्वमस्त्विति—वाच्यम् ; अभावप्रतियोगित्वस्य प्रकारत्वलक्षणसंबन्धेन ज्ञानविशेषणतया प्रतियोग्यविशेषणत्वात्, ज्ञानस्यैव तद्विशेषणत्वाच्च, अभावप्रतियोगित्व-तत्प्रकारकज्ञानविषयत्वयोर्घटत्व-तत्प्रकारकप्रमाविशेष्यत्वयोरिव भेदेन यथोक्तविशेषण-विशेष्यभावे वैयर्थ्यशङ्कानवकाशादिति—चेत्, *न* ; शुक्तिरूप्येऽव्याप्तेः, मायावादिमत आपणस्थरूप्यस्यैव तादृशनिषेधप्रतियोगित्वेन धीकाले शुक्त्यादौ विद्यमानस्य शुक्तिरूप्यस्य तत्र तादृशनिषेधानङ्गीकारेणोक्तलक्षणाभावात्, नापि ज्ञाननिवर्त्यत्वम् ; उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्त्वेऽप्युपपत्त्या ज्ञानादौ पक्षैकदेशे सिद्धसाधनापत्तेः, घटादावर्थान्तरापत्तेश्च । *ननु*—स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्, नच—अव्याप्यवृत्तिसंयोगादेरिव सत्त्वेऽप्युपपत्त्या पूर्ववत् सिद्धसाधनार्थान्तरान्यतरापत्तिरिति—वाच्यम् ; अव्याप्यवृत्तित्वानाश्रयस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति निरुच्यमानत्वात् । नच—संयोगात्यन्ताभावस्यापि गुण-कर्मावच्छेदेन व्याप्यवृत्तित्वाधिकरणतया तत्प्रतियोगिनि संयोगे सिद्धसाधने प्राप्ते तद्वारणायाव्याप्यवृत्तित्वानाश्रय इति निषेधद्वयान्तर्भावे सति, आरोपितसंयोगस्यात्यन्ताभावोऽपि संयोगात्यन्ताभावत्वाद् अव्याप्यवृत्तित्वाश्रयसंयोगाभाव एव, इति तदनाश्रयात्यन्ताभावप्रतियोगित्वं मिथ्या-

(१) मिथ्यात्ववादिनो मम मत आपणस्थं रूप्यमेव 'नास्ती'त्यादिनिषेधप्रतियोगि, नतु पुरतः प्रतीयमानं रूप्यम् ; तत्र प्रातिभासिकसत्त्वाङ्गीकारेणैवंविधनिषेधायोगात् । एवंविधनिषेधप्रतियोगि चापणस्थं रूप्यमेव ; आभासस्य प्रसक्त्याऽनाभासस्य निषेध इत्यङ्गीकारात् । तथाच शुक्तिरूप्येऽसम्भव इति भावः ॥ ( श्रीनि )

न्यायामृतम्

वृत्तित्वानाश्रयस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्; आरोपितस्य संयोगस्यात्यन्ताभावस्त्वनारोपितस्य संयोगस्यात्यन्ताभावादन्य एव व्याप्यवृत्तिरिति—वाच्यम्; शुक्तिरूप्यादौ तदभावादित्युक्तत्वात्। नाप्यविद्या-तत्कार्ययोरन्यतरत्वम्; अनादौ जीव-ब्रह्मविभागादावव्याप्तेः, परमतेऽज्ञानस्य तत्कार्य-भ्रान्त्यादेश्च सत्त्वेनार्थान्तरत्वाच्च, शुक्तिरूप्यादावनिर्वाच्याविद्याकार्यत्वस्य प्रतिवाद्यसम्मतेश्च; तथापि 'मिथ्याशब्दोऽनिर्वाच्यवचनः' इति पञ्चपादिकारीत्या सदसत्त्वानधिकरणत्वरूपानिर्वाच्यत्वं मिथ्यात्वम्, तत्प्रसिद्धिश्च ख्यातिवादे वक्ष्यते ॥ १ ॥ यद्वा—बाध्यत्वमनिर्वाच्यत्वम्। तच्च 'शुक्तिरूप्यादिरेव पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगी'ति मते प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्। उक्तं हि विवरणे—'प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्ये'ति। उक्तं च वार्तिके—"तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति॥" इति। प्रतिपन्नत्वं च न प्रमितत्वम्, येन विरोधः, नापि भ्रान्तिप्रतिपन्नत्वम्, येन सिद्धसाधनम्, किन्तु प्रतीतत्वमात्रम्। सर्वस्मिंश्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं विवक्षितम्; सत्त्वपक्षे रजतत्वं प्रतिपन्नोपाधौ शुक्तौ निषिध्यमानमपि रजते न निषिध्यते, इति न सिद्धसाधनम् ॥ २ ॥

तरङ्गिणी

आह—*आरोपितस्येति* ॥ *शुक्तिरूप्यादाविति* ॥ 'नेदं रजतमि'ति निषेधं प्रत्यापणस्थरूप्यस्यैव प्रतियोगितया शुक्तिरूप्यादेः स्वसमानाधिकरणनिषेधायोगादित्यर्थः ॥ *नाप्यविद्येति* ॥ प्रत्येकाव्याप्तिवारणायान्यतरत्वान्तर्भावः ॥ *अनादाविति* ॥ तदुक्तं वार्तिके—"जीव ईशो विशुद्धा चिद् भेदस्तस्यास्तयोर्द्वयोः। अविद्या-तच्चितोर्योगः षडस्माकमनादयः॥" इति ॥ *परमत इति* ॥ सत्यत्ववादिमते। अज्ञानस्य भ्रमप्रागभावरूपस्य तत्कार्यभ्रान्त्यादेश्च प्रागभावरूपाविद्या-तत्कार्यान्यतरत्वेऽपि सत्यतया तद्वद् घटादेरपि सत्यत्वेनाप्युक्तसाध्योपपत्त्याऽर्थान्तरत्वमित्यर्थः। भ्रमप्रागभाव-भ्रमादौ सिद्धसाधनतापि द्रष्टव्या। *ननु* अनिर्वाच्याविद्या-तत्कार्यान्यतरत्वं लक्षणार्थः, अतो नोक्तदोष इत्यत आह—*शुक्तिरूप्यादाविति* ॥ तथाचाप्रसिद्धिरित्यर्थः ॥ *तथापीति* ॥ एतस्य यद्यपीत्यनेन पूर्वेण (पृष्ठ-८३) सम्बन्धः। पूर्वोक्ताप्रसिद्धिं निराकरोति—*तत्प्रसिद्धिश्चेति* ॥ सत्त्वम्, असत्त्वात्यन्ताभावसमानाधिकरणात्यन्ताभावप्रतियोगि, व्यतिरेकिधर्मत्वात्; गोत्ववत्, प्रमेयत्वादेरप्यत्यन्ताभावप्रतियोगित्वपक्षे धर्मत्वादित्येव हेतुः। नच घटावृत्तित्वमुपाधिः; घटत्वे साध्याव्याप्तेः। नच घटेतरवृत्तित्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकं घटमात्रावृत्तित्वमुपाधिः; पक्षेऽपि सत्त्वादित्यादि वक्ष्यत इत्यर्थः ॥१॥ *ननु* सत्त्वविशिष्टस्यासत्त्वस्याभावः सदसत्त्वानधिकरणत्वम्। तच्च विशेष्याभावात् सत्यत्वपक्षेऽपि सिद्धम्, अतः सिद्धसाधनम्, इत्यत आह—*यद्वेति*॥ *तच्चेति*॥ बाध्यत्वमित्यर्थः। तुच्छेऽतिव्याप्तिवारणाय प्रतिपन्नोपाधाविति विशेषणम्। तुच्छस्य प्रतीत्यभावेन न प्रतिपन्नोपाधिरित्यभिप्रायः। शुक्तिरूप्यादौ दृष्टान्ते साध्यवैकल्यपरिहाराय तस्यात्यन्ताभावप्रतियोगित्वमुपपादयितुम्—'शुक्तिरूप्यादिरेवे'त्यादि—'मते' इत्यन्तम् ॥ *तत्त्वमस्यादीति* ॥ मात्रशब्देन ज्ञानस्य ज्ञाननिवर्तकतायामितरनिरपेक्षत्वमुक्तम्। "नासीदि"त्यस्य नञो न निवृत्तिरर्थः, किंतु संसर्गाभावमात्रम्। तस्य च—'आसीदि'त्यादिना कालत्रयसम्बन्धबोधनेन त्रैकालिकत्वसिद्धिः, इति निरुक्तमिथ्यात्वे सम्मतत्वसिद्धिः ॥ २ ॥

न्यायामृतकण्टकोद्धारः

धिकरणात्यन्ताभावप्रतियोगित्वादित्यत आह—*आरोपितस्येति* ॥ तदत्यन्ताभावस्यानारोपितसंयोगात्यन्ताभावादन्यत्वेन व्याप्यवृत्तित्वान्न तत्राव्याप्तिरिति भावः ॥ *उक्तत्वादिति* ॥ आपणस्थरूप्यस्यैव त्रैकालिकनिषेधप्रतियोगित्वेन शुक्तिरूप्येऽव्याप्तिरित्यर्थः ॥ *तत्त्वमस्यादीति* ॥ 'नासीदि'ति* नञः नासीन्नु नास्ति न भविष्यतीति सम्बन्धः ॥

न्यायामृतम्

मतान्तरे तु बाध्यत्वं ज्ञानत्वेन ज्ञाननिवर्त्यत्वम्। उक्तं हि विवरणे—'अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः' इति। अनुमितिं प्रति मनसो मनस्त्वेन हेतुत्वेऽपीन्द्रियत्वेनाहेतुत्ववत् पूर्वज्ञानादिकं प्रत्युत्तरस्य ज्ञानेच्छादेरुत्तरात्म(१)विशेषगुणत्वेन निवर्तकत्वेऽपि ज्ञानत्वेनानिवर्तकत्वात्॥ ३॥

अथवा—चित्सुखरीत्या स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्; संयोगतदत्यन्ताभावयोरवच्छेदकभेदेन भिन्नाश्रितत्वस्यैवानुभवेन सत्त्वपक्षे सामानाधिकरण्यायोगात्, शुक्ति-

तरङ्गिणी

*ननु* प्रतिपन्नोपाधिस्थले निषेधस्य ब्रह्मभिन्नस्य तात्त्विकत्वेऽद्वैतहानिः, व्यावहारिकत्वे विरोधः, प्रातिभासिकत्वे सिद्धसाधनमित्यतः पक्षान्तरमाह—*मतान्तरे त्विति*॥ रूप्योपादानमज्ञानं स्वकार्येण वर्तमानेन विलीनेन वा सहाधिष्ठानसाक्षात्काराद् निवर्तते; तत्तद्भ्रमोपादानाज्ञानानां भेदाभ्युपगमात्, इति न दृष्टान्ते साध्यवैकल्यम्॥ 'मुद्गरपातानन्तरं घटो नास्ती'ति प्रतीतिवदधिष्ठानज्ञानानन्तरं 'शुक्त्यज्ञानं तद्गतञ्च रूप्यं नास्ती'ति प्रतीतेः सर्वसम्मतत्वादिति मत इदं लक्षणमुच्यत इत्यभिप्रेत्योक्तम्—*मतान्तरे त्विति*॥ *प्रविलीनेनेति*॥ मुद्गरपातानन्तरं घटस्य नात्यन्तिकी निवृत्तिः, किन्तु प्रविलयमात्रमित्यभ्युपगमादतीतघटादेरपि ज्ञानादेव निवृत्तिरित्यर्थः। उत्तरज्ञाननिवर्त्ये पूर्वज्ञानादौ सिद्धसाधनतां वारयति—*अनुमितिं प्रतीति*॥३॥ *ननु* ज्ञाननिवर्त्यत्वं ज्ञानजन्यनिवृत्तिप्रतियोगित्वम्, तच्च न रूप्येऽस्ति; शुक्तिज्ञानानन्तरं रूप्यं नास्तीति प्रतीतावपि रूप्यं निवृत्तमित्यप्रतीतेः, तथाच साध्यवैकल्यम्, इत्यतः पक्षान्तरमाह—*अथवेति*॥ *स्वसमानाधिकरणेति*॥ स्वाधिकरणाधिकरणकेत्यर्थः। संयोगादौ सिद्धसाधनतां वियदादौ चार्थान्तरतां वारयति—*संयोगेति*॥ बाधाद् नाव्याप्यवृत्तित्वसिद्धिरिति भावः। रूप्यादौ साध्यवैकल्यशङ्कां वारयति—*शुक्तिरूप्यादेरिति*॥ आविद्यकतया विद्यमानमपि रूप्यं पारमार्थिकत्वेन व्यधिकरणेन धर्मेण स्वसमानाधि-

न्यायामृतकण्टकोद्धारः

*अज्ञानस्येति*॥ अज्ञाननिवृत्तिर्बाध इत्युक्ते घटाद्यज्ञाननिवृत्तिरपि बाधः स्यात्, तस्या अपि ज्ञानेन जायमानत्वादित्यत उक्तम्—*स्वकार्येणेति*॥ किं वार्तमानिकस्वकार्यसहिताज्ञानस्य निवृत्तिर्वा बाधः? उत प्रविलीनकार्यसहिताज्ञानस्य? नाद्यः; विपर्ययोत्पत्त्यनन्तरकालं मनसो विषयान्तरसञ्चारे समयान्तरे च शुक्तिलोचनसंप्रयोगाधीनाधिष्ठानज्ञानेनाज्ञाननिवृत्तौ वार्तमानिककार्यध्वंसाभावेनाव्याप्तेः, न द्वितीयः; वर्तमानसहिताज्ञाननिवृत्तौ तदभावात्, इत्याशङ्क्य, कार्याकारेण परिणताज्ञाननिवृत्तिर्बाध इत्यनुगतं लक्षणमुभयत्राप्यस्तीत्याह—*वर्तमानेनेति*॥ नच—प्रविलीनस्य पुनः कथं निवृत्तिरिति—वाच्यम्; नह्येषां मते कार्यस्य सर्वथा नाशः; कार्याकारेण नष्टस्य कारणात्मना विद्यमानत्वात्, कार्यकारणयोरभेदात्। तथाच नष्टस्य पुनर्निवृत्तिः सम्भवतीति भावः। एकस्यैव रूपान्तरेण कारणत्वं रूपान्तरेण कार्यत्वं च क्वोपलब्धम्? अत्राह—*अनुमितिमिति*॥

(१) यदि ज्ञाननिवर्त्यत्वं बाध्यत्वमित्येवोच्येत, तर्ह्युत्तरज्ञाननिवर्त्यपूर्वज्ञानादावतिव्याप्तिः, अतो ज्ञानत्वावच्छिन्ननिवर्तकताकज्ञाननिवर्त्यत्वं विवक्षितमित्याशयेन ज्ञानत्वेनेत्युक्तम्। तथाच निवर्तकतावच्छेदकं ज्ञानत्वमभिप्रेतम्। एवं च पूर्वज्ञाननिवर्तकतावच्छेदकं चोत्तरज्ञान उत्तरात्मविशेषगुणत्वमेव, न ज्ञानत्वम्। कुत इति चेत्, जानातीच्छति प्रवर्तत इति क्रमसद्भावेन यदेच्छया पूर्वज्ञानं निवर्तते, तत्र पूर्वज्ञाननिवर्तकतावच्छेदकं न ज्ञानत्वम्; निवर्तकतान्यूनदेशवृत्तित्वात्, तथोत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽपि सत्त्वेनाधिकवृत्तित्वाच्च, किंतूत्तरात्मविशेषगुणत्वमेव। तच्चेच्छासाधारणम्, इतीदं प्रमेयं सूचयितुमिच्छादेरितीच्छाग्रहणं कृतमिति द्रष्टव्यम्। इच्छादेरित्यादिपदेन भावनासंस्कारग्रहणम्; पूर्वज्ञानेनात्मनि भावनासंस्कारोत्पत्त्यनन्तरं तन्निवर्तनादिति द्रष्टव्यम्। तथाच ज्ञानत्वावच्छिन्ननिवर्तकताकज्ञाननिवर्त्यत्वमित्यर्थः॥ (श्रीनि)

न्यायामृतम्

रूप्यादेरपि पारमार्थिकत्वाकारेण स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाच्च । (१)नच—अधिकरण-शब्देन तात्त्विकाधिकरणोक्तौ समवायिनि संयोगिनि वा तत्त्वतस्तदधिकरणे तदत्यन्ताभावायोगेनासम्भवः, अधिकरणत्वेन प्रतीतत्वमात्रोक्तौ चान्यथाख्यातिपक्षे रजतत्वादेः स्वाधिकरणत्वेन प्रतीतशुक्त्यादावत्यन्ताभावस्य सत्त्वात् सिद्धसाधनमिति—वाच्यम् ; स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वस्य विवक्षितत्वात्, तत्पक्षे च रजतत्वादिकं स्वात्यन्ताभावानधिकरणे रजतेऽपि भाति ॥ ४ ॥

यद्वा—आनन्दबोधोक्तरीत्या सद्विविक्तत्वं मिथ्यात्वम् । तच्च सद्रूपत्वाभावः । ब्रह्म च सत्तारहितमपि सामान्यमिव सद्रूपम् ॥ ५ ॥

दृश्यत्वं च न्यायदीपावलीरीत्या दृग्विषयत्वम् । *ननु*—यद् न मिथ्या, न तद् दृश्यमिति व्यतिरेकस्याग्रहे सन्दिग्धानैकान्त्यम्, तद्ग्रहश्च न तावदसति ; तत्र सद्विविक्तत्वरूपमिथ्यात्वस्य

तरङ्गिणी

करणनिषेधप्रतियोगि, इति न तत्र साध्यवैकल्यमित्यर्थः । *स्वात्यन्ताभावाधिकरण एवेति* ॥ एतेन—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्यनेन पूर्वोक्तेनास्य पुनरुक्तिरपि—परिहृता ॥ ४ ॥

*ननु* एवमत्यन्तासत्त्वापत्तिः । नच—अत्यन्तासतः प्रतीयमानत्वं नेति—वाच्यम् ; 'शशविषाणमि'त्यादिशब्दाभासादिना तस्यापि प्रतीतेरित्यतो लक्षणान्तरमाह—*यद्वेति* ॥ सतोऽपि सदन्तरविविक्तत्वात् सिद्धसाधनमित्यत आह—*तच्चेति*॥ निर्धर्मके ब्रह्मणि सद्रूपत्वरूपधर्माभावादतिव्याप्तिरित्यत आह—*ब्रह्म चेति* ॥ ५ ॥

साध्यं विविच्य हेतुं विविनक्ति—*दृश्यत्वञ्चेति* ॥ *दृग्विषयत्वमिति* ॥ ज्ञानविषयत्वमित्यर्थः । आत्मा च वृत्तिविषयोऽपि नेति भावः । अत एवात्र आत्मनो ज्ञानविषयत्वमभ्युपेत्य पक्षान्तरं वक्ष्यति—"तथाचात्मनो ज्ञानविषयत्वेऽपी"त्यादिना ॥ *नन्विति*॥ मिथ्यात्वस्य व्यतिरेकिधर्मत्वेन किञ्चिदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वे निश्चिते तदधिकरणे हेतुव्यतिरेकस्याग्रहे तत्र हेतुसंशयसम्भवात् सन्दिग्धानैकान्त्य-

न्यायामृतकण्टकोद्धारः

*ननु* ब्रह्मणः सत्तारहितत्वेन सद्रूपत्वाभावरूपमिथ्यात्वसत्त्वादतिव्याप्तिरित्यत आह—*ब्रह्म चेति* ॥

एवं साध्यं निरूप्य हेतुं निरूपयति—*दृश्यत्वं चेति* ॥ *व्यतिरेकस्याग्रह इति* ॥ व्यतिरेकव्याप्त्यनिश्चय इत्यर्थः । *सन्दिग्धेति* ॥ साध्याभाववति हेतुर्भविष्यतीति शङ्कया सन्दिग्धानैकान्त्य-

(१) 'प्रतियोग्यधिकरणकात्यन्ताभावे'त्यत्र तात्त्विकप्रतियोग्यधिकरणविवक्षायामित्यर्थः ॥ *समवायिनीत्यादि* ॥ घटादेः समवायेन तत्त्वतोऽधिकरणं मृत्पिण्डादि, संयोगेनाधिकरणं भूतलादि, समवायेन संयोगेन वा सम्बन्धेन तत्त्वतो घटादिरूपप्रतियोग्यधिकरणे मृदादौ च तदत्यन्ताभावायोगेन घटादौ लक्ष्ये लक्षणाभावादसम्भव इति भावः ॥ *अधिकरणत्वेन प्रतीतेति* ॥ प्रतियोग्यधिकरणत्वेन यत्प्रतीतम्, तदधिकरणकात्यन्ताभावविवक्षायामित्यर्थः । तथाच प्रतियोग्यधिकरणत्वं तात्त्विकं न विवक्षितमित्याशयः । मायिमते शुक्त्यादौ प्रातिभासिकरजतस्य सत्त्वाद् न तत्र तदत्यन्ताभावो वक्तुं युक्तः, अत उक्तम्—*अन्यथाख्यातिपक्ष इति* ॥ शुक्तिरेवात्यन्तासद्रजतात्मना प्रतीयत इत्यमिनवान्यथाख्यातिपक्षेऽन्यत्र विद्यमानमेवान्यत्र प्रतीयत इत्येवंरूपान्यथाख्यातिपक्षे चेत्यर्थः ॥ *स्वेति* ॥ प्रतियोगिभूतरजतत्वेत्यर्थः । संसर्गारोपाभिप्रायेणेदम् । *स्वेति* ॥ प्रतियोग्यधिकरणत्वेन प्रतीयमानाधिकरणकात्यन्ताभावेत्यस्य स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वमर्थतया विवक्षितमित्यर्थः । एतादृशमिथ्यात्वसाधने तत्त्ववादिना सिद्धसाधनता नाभिधातुं शक्येत्याह—*तत्पक्षे चेति* ॥ अन्यथाख्यातिवादिनां पक्ष इत्यर्थः ॥ *रजतेऽपीति* ॥ आपणस्थरजतेऽपीत्यर्थः । तथाचैवं विवक्षाकरणेन "प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्व"मिति लक्षणेन पुनरुक्तिरपि परिहृतेति द्रष्टव्यम् ॥ ( श्रीनि )

### न्यायामृतम्

व्यतिरेकाभावात्, मिथ्यात्वान्तरव्यतिरेकसद्भावेऽपि तत्र साध्यव्यतिरेकग्रहार्थं तस्यापि ज्ञातव्यत्वेन व्यभिचारात्, ब्रह्मणि मिथ्यात्वव्यतिरेकग्रहे च ब्रह्मापि दृश्यमिति—चेत्, *न*; आकाशस्य स्वरूपेणापरिच्छेदेऽपि घटावच्छिन्नस्य परिच्छेदवद् ब्रह्मणः स्वरूपेणादृश्यत्वेऽपि व्यतिरेकावच्छिन्नस्य दृश्यत्वात् ॥ १ ॥ यद्वा—प्रमाणमालारीत्या स्वव्यवहारे स्वातिरेकिसंविदपेक्षानियतिर्दृश्यत्वम् । तथाचात्मनो ज्ञानविषयत्वेऽपि नोक्तरूपं दृश्यत्वम् ॥ २ ॥ अस्वप्रकाशत्वं वा दृश्यत्वम् । स्वप्रकाशत्वं च फलाव्याप्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् । फलं च वृत्तिप्रतिफलितचैतन्यम् । स्वप्रकाशत्वाभावश्च

### तरङ्गिणी

मित्यर्थः ॥ *ब्रह्मापि दृश्यमिति* ॥ तथाच ब्रह्मणि व्यभिचार इति भावः ॥ *व्यतिरेकावच्छिन्नस्य दृश्यत्वादिति* ॥ शुद्धे ब्रह्मस्वरूपे साध्य-साधनयोर्व्यतिरेकोऽस्ति । मिथ्यात्व-दृश्यत्वव्यतिरेकावच्छिन्ने च दृश्यत्वमप्यस्ति, इति साध्य-साधनव्यतिरेकयोः सहचारग्रहो भवति । व्यतिरेकावच्छिन्नस्य दृश्यस्य मिथ्यात्वाद् व्यभिचारोऽपि नेति भावः । *ननु* अदृश्यस्य कथं दृश्यत्वम्? इत्यतः सदृष्टान्तमुपपादयितुमुक्तम्—*आकाशस्येति* ॥ आकाशस्यापरिच्छेद-परिच्छेदाविव ब्रह्मणोऽप्यदृश्यत्व-दृश्यत्वे उपपन्ने, स्वाभाविकत्वास्वाभाविकत्वाभ्यां च तद्वदेवाविरोध इति भावः ॥ १ ॥

*ननु* व्यतिरेकावच्छिन्नस्य विशिष्टस्य दृश्यत्वे विशिष्टानुगतविशेष्यस्य दृश्यत्वमवर्जनीयम्; विशिष्टज्ञानस्य विशेष्येऽपि संशयादिनिवर्तकत्वात्, अन्यथा 'दण्डी देवदत्तः' इति ज्ञानानन्तरं देवदत्ते कदाचित् संशयादिः स्यात्; तथाच व्यभिचार इत्यत आह—*स्वव्यवहार इति*॥ अद्वितीयत्वादिप्रकारक आत्मगोचरे व्यवहारे स्वातिरिक्तवृत्तिरूपसंविदपेक्षाऽस्ति, इत्यात्मनि दृश्यत्वं मा प्रसाङ्क्षीत्, इति नियतिग्रहणम् । अद्वितीयत्वादिरूप-आत्मव्यवहारे तदपेक्षायामपि स्फुरणरूपे नित्यसिद्ध आत्मव्यवहारे तदभावात् तत्र नियमो नास्तीत्यर्थः । आत्मनो वृत्तिविषयत्वमपि नास्ति, इति न्यायदीपावलीरीत्या दृश्यत्वं व्याख्यातम् । आनन्दबोधोक्तरीत्या तु शुद्धात्मनो वृत्तिविषयत्वेऽपि स्वव्यवहारेऽपि स्वातिरिक्तसंविदपेक्षानियतिरूपं दृश्यत्वं शुद्धात्मनि नास्तीत्याह—*तथाचेति* ॥ २ ॥

*ननु* आत्मनः स्फुरणव्यवहार उपनायकप्रमाणापेक्षाया विरहेऽप्यद्वितीयत्वादिविशिष्टव्यवहारे विशेषणोपनायकप्रमाणापेक्षानियमोऽस्त्येव, इति व्यभिचारस्तदवस्थ इत्यत आह—*अस्वप्रकाशत्वं वेति* ॥

### न्यायामृतकण्टकोद्धारः

मित्यर्थः । *ब्रह्माणीति* ॥ तथाच व्यभिचार इति भावः । *आकाशस्येति* ॥ शुद्धब्रह्मणो व्यतिरेकग्रहसम्भवः । नच व्यभिचारः; शुद्धस्य स्वरूपेण दृश्यत्वाद् हेत्वभावात् । नच—तर्हि व्यतिरेकावच्छिन्ने व्यभिचार इति—वाच्यम्; तदवच्छिन्नस्य दृश्यत्वेऽपि मिथ्यात्वरूपसाध्यस्यापि सत्वाद् न तदवकाशः । एकस्यैव रूपान्तरेण वैरूप्ये दृष्टान्तमाह—*आकाशस्येति* ॥ नच—विशिष्टस्य दृश्यत्वे विशेष्यस्यापि दृश्यत्वात् शुद्धेऽपि न व्यतिरेकग्रहः सम्भवतीति—वाच्यम्; अग्नीषोमयोर्देवतात्वेऽप्यग्नेरदेवतात्ववद् विशिष्टस्य दृश्यत्वेऽपि विशेष्यस्यादृश्यत्वात् ॥ १ ॥

*स्वव्यवहार इति* ॥ अत्र नियतिपदादान आत्मनोऽपि स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टात्मव्यवहारे विशेषणोपनायकप्रमाणापेक्षाया विद्यमानत्वेन तत्र दृश्यत्ववृत्तावनैकान्त्यं स्यात्, तदर्थम्—*नियतिरित्युक्तम्* ॥ विशिष्टात्मव्यवहारे स्वातिरेकिसंविदपेक्षाया विद्यमानत्वेऽप्यविशिष्टव्यवहारे तदनपेक्षणेन नियमाभावाद् न व्यभिचार इति भावः ॥ *ननु* एवं 'वह्निरनुष्णः' इत्यत्रापि प्रत्यक्षबाधो न

### न्यायामृतम्

घटादौ विशेषणाभावेन धर्मादौ विशेष्याभावेन, इति विशिष्टाभावोऽनुगतः ॥ ३ ॥ अस्मिंश्च पक्षे जडत्वमसंविद्रूपत्वमित्यसङ्करः ॥ ४ ॥ श्रुतिश्चात्र प्रमाणम्; "एकमेवाद्वितीयमि"त्यादावद्वितीय-मिथ्यादिशब्दैर्द्वितीयमात्रनिषेधात् । नच—प्रत्यक्षबाधादनुमानममानम्, श्रुतिश्चामुख्यार्थेति—युक्तम्; प्रत्यक्षेण व्यावहारिकसत्त्वग्रहात्, अनुमानादिभिश्च पारमार्थिकसत्त्वनिषेधात् । नहि वर्तमानमात्रग्राहि प्रत्यक्षं त्रिकालाबाध्यत्वग्राहि । 'वह्निरनुष्णः' इत्यत्र तूष्णत्वस्य प्रत्यक्षसिद्धव्यावहारिकसत्त्वप्रतिषेधाद् बाधः । दृश्यते च नभोनैल्य-चन्द्रप्रादेशत्वग्राहिप्रत्यक्षयोरनुमानागमाभ्यां बाधः—इति' ॥

### तरङ्गिणी

*घटादाविति* ॥ घटादेः फलव्याप्यतया फलाव्याप्यत्वरूपं विशेषणं घटादौ नास्तीत्यर्थः ॥ *धर्मादौ त्विति* ॥ अपरोक्षव्यवहारयोग्यत्वं विशेष्यं धर्मादौ नास्तीत्यर्थः । *ननु* जडत्वं नाज्ञानत्वम्; वृत्तिभागेऽसिद्ध्यापत्तेः, किन्त्वस्वप्रकाशत्वमेव वाच्यम्, तथाच दृश्यत्व-जडत्वयोः पूर्वोक्तयोर्हेत्वोरभेदापत्तिरित्यत आह—अस्मिंश्चेति ॥ *असंविद्रूपत्वम्=अचिद्रूपत्वम् । तच्च वृत्तिरूपे ज्ञानेऽस्तीति भावः ॥ *श्रुतिश्चेति* ॥ "एकमेवाद्वितीयमि"त्यादिकेत्यर्थः । *ननु* ब्रह्माद्वितीयं चेत् प्रथमं तृतीयं वा स्यात्, बहुव्रीहिपक्षेऽपि सप्रथमं सतृतीयं वा स्यात्, तथाच नेष्टसिद्धिरित्यतः श्रुतिं व्याख्याति—*एकमेवेति* ॥ अद्वितीयादिशब्दैः कण्ठतो द्वितीयनिषेधे द्वितीयनिरूपिततृतीयादेरपि निषेधोऽर्थतो भवति, इति द्वितीयस्यात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं श्रुत्या सिद्ध्यतीत्यर्थः ॥ *न चेति* ॥ 'सन् घटः' इत्यादिसत्त्वग्राहकप्रत्यक्षबाधादित्यर्थः । *अमानम्=अग्न्यनौष्ण्यानुमानवदिति शेषः । *अमुख्यार्था* ॥ "यजमानः प्रस्तरः" इत्यादिश्रुतिवदिति शेषः । नच—आगमानुमानाभ्यामेव प्रत्यक्षं बाध्यतामिति—वाच्यम्; प्रत्यक्षस्यागमाद्यगृहीतरेखोपरेखादिग्राहकत्वेन तदनिवर्तितदिङ्मोहादिभ्रमनिवर्तकत्वेन जात्या, शब्दे स्वरूपधर्म्यादिग्राहकत्वेनोपजीव्यतयाऽऽगमाद्यपेक्षया प्राबल्यादित्यर्थः । प्रत्यक्षस्य भिन्नविषयत्वाद् न तेनागमादीनां विरोध इत्याह—*प्रत्यक्षेणेति* ॥ *अनुमानादिभिरिति* ॥ प्रत्यक्षगृहीतव्यावहारिकसत्त्वानुपमर्देनैव प्रत्यक्षागृहीतपारमार्थिकसत्यत्वस्य निषेधादित्यर्थः । नच मिथ्यात्वश्रुतेरप्रसक्तप्रतिषेधतापातः; अर्थक्रियादिरूपानुमानाभासेन वा आरोपितपारमार्थिकसत्यत्वतात्पर्यकेण प्रत्यक्षगृहीतव्यावहारिकसत्यत्वानुवादकेन "विश्वं सत्यमि"त्याद्यागमेन वा पारमार्थिकसत्यत्वप्रसक्तेर्वियदादिषु सम्भवादिति भावः । *ननु* मिथ्यात्वश्रुत्या निषिध्यमानमेव पारमार्थिकसत्त्वं प्रत्यक्षेण गृह्यते, इति न प्रत्यक्षस्य भिन्नविषयतेत्यत आह—*नहीति* ॥ अतीतानागतादिभिः सन्निकर्षाभावात् प्रत्यक्षस्य नोक्तरूपसत्यत्वग्राहकतेति भावः । *ननु* एवं भिन्नविषयतया प्रत्यक्षाविरोधोपपादनेऽग्न्यनौष्ण्यानुमानेऽपि न प्रत्यक्षविरोधः स्यात्, तथाच कालात्ययापदिष्टदोषोच्छेदः स्यादित्यत आह—*वह्निरनुष्ण इत्यत्रेति* ॥ अतात्त्विकविश्वान्तर्गतजलादिस्वभावानौष्ण्येन समस्वभावमनौष्ण्यमग्नावनुमीयते यदा, तदैव प्रत्यक्षेण बाधः, अनीदृशं तु मिथ्यात्वस्यैव नामान्तरम्, इति नाग्न्यनौष्ण्यानुमानेऽपि प्रत्यक्षबाध इत्यर्थः । *ननु* श्रुत्या प्रत्यक्षगृहीतव्यावहारिकसत्यत्वानुवादेन तदगृहीतपारमार्थिकसत्यत्वोपमर्देन निषेधे प्रत्यक्षगृहीतसत्यत्वस्य न मिथ्यात्वसिद्धिः, नच—व्यावहारिकसत्यत्वेऽपि घटवत् पारमार्थिकसत्यत्वं निषिध्यते, इति तत्र तत्सिद्धिरिति—वाच्यम्; व्यावहारिकसत्यत्वे यद् व्यावहारिकसत्यत्वम्, तत्रैवमपि व्यावहारिकसत्त्वानुपमर्देन तन्मिथ्यात्वासिद्धेः, तत्राप्युक्तन्यायेनानवस्था, इति सत्यत्वग्राहिप्रत्यक्षप्राबल्येऽरुचिमभिसन्धायापौरुषेयत्वेनानाशङ्कितदोषतया श्रुतेः, तदनुगृहीतत्वाच्चानुमानस्य सम्भावितदोषप्रत्यक्षापेक्षया प्राबल्यात् प्रत्यक्षगृहीतमपि सत्यत्वमनुमानागमाभ्यां निषिद्ध्यत इति वक्तुं प्रत्यक्षस्यागमादिबाध्यत्वं दृष्टमस्तीत्याह—*दृश्यते चेति* ॥

### न्यायामृतकण्टकोद्धारः

स्यादित्यत आह—*वह्निरनुष्ण इत्यत्रेति* ॥ किञ्च नभोनैल्य-चन्द्रप्रादेशत्वप्रत्यक्षस्यानुमानागमाभ्यां बाधस्य दृष्टत्वाद् दुर्बलस्य प्रत्यक्षस्य नोक्तानुमानागमबाधकतेत्याह—*दृश्यते चेति* ॥

न्यायामृतम्

उच्यते ; मिथ्यात्वं हि त्वयैव पक्षान्तरनिषेधेन पञ्चधा निरुक्तम् । तत्राऽऽद्ये किं सत्त्वे सत्य-

अद्वैतसिद्धिः

*ननु*—किमिदं मिथ्यात्वं साध्यते ? न तावद् "मिथ्याशब्दोऽनिर्वचनीयतावचनः" इति

तरङ्गिणी

सिद्धान्ताभिधानं प्रतिजानीते—*उच्यत इति* ॥ *पञ्चधेति* ॥ सदसत्त्वानधिकरणत्वं वा ? सर्वस्मिन् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा ? ज्ञानत्वेन ज्ञाननिवर्त्यत्वं वा ? स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं वा ? सद्रूपत्वाभावो वा ? इति पञ्चप्रकारैर्मिथ्यात्वं लक्षितमित्यर्थः । *तत्राद्य इति* ॥ 'सदसत्त्वा-

न्यायामृतकण्टकोद्धारः

सिद्धान्तयति—*उच्यत इति* । *सत्त्व इति* ॥ असत्त्वरूपविशेष्याभावापन्नस्य विशिष्टाभावस्य

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु किमिदं मिथ्यात्वमित्यादि*॥ *मिथ्यात्वम् = मिथ्याशब्दार्थः । *साध्यते = तादात्म्यसम्बन्धेन पक्षविशेषणतया निर्दिश्यते । अथवा—*मिथ्यात्वम् = मिथ्याशब्दार्थतावच्छेदकम् । *साध्यते = साध्यविशेषणतया निर्दिश्यते । मिथ्याशब्दार्थतावच्छेदकविशिष्टत्वेन / मिथ्याशब्दार्थत्वरूपेण मिथ्याशब्दार्थतादात्म्येन

सिद्धिव्याख्या

भूत आरोपितसंयोगेऽध्यासमिति—वाच्यम् ; आरोपितस्य संयोगस्यात्यन्ताभावस्यैवमारोपितस्य संयोगस्यात्यन्ताभावादन्य एव व्याप्यवृत्तिः, इति तत्प्राप्त्यनवकाशादिति चेत्, *न* ; 'नेदं रजतमि'ति निषेधं प्रत्यापणस्थरजतस्यैव प्रतियोगितायां शुक्तिरूप्यादेः स्वसमानाधिकरणनिषेधायोगे तत्र साध्यवैकल्यात् । *ननु*—अविद्या-तत्कार्ययोरन्यतरत्वं मिथ्यात्वम्, न च—अन्यतरत्वान्तर्भावेण प्रत्येकमव्याप्तिवारणेऽप्यनादौ जीव-ब्रह्मविभागादावव्याप्तिरिति—शङ्कनीयम् ; अविद्यापदस्य ध्वंसप्रतियोग्यनादिपरत्वेन तस्या अव्याप्तेर्वारणात् । न च—सत्यत्ववादिमतेऽज्ञानस्य भ्रमप्रागभावरूपस्य तत्कार्यस्य भ्रान्त्यादेश्च प्रागभावभ्रमरूपाविद्या-तत्कार्यान्यतरत्वेऽपि सत्यतया, तद्वद् घटादेरपि सत्यत्वेनाप्युक्तसाध्योपपत्त्याऽर्थान्तरतेति—वाच्यम् ; तत्र निर्वाच्याविद्या-तत्कार्यान्यतरत्वस्य लक्षणार्थत्वेन मिथ्यापदेन विवक्षणीयतयोक्तदोषानवकाशादिति—चेत्, *न* ; शुक्तिरूप्यादौ परमतेऽनिर्वाच्याविद्या-तत्कार्यान्यतरत्वस्याप्रसिद्ध्या दृष्टान्तासिद्धेरित्याशयेन शङ्कते—*नन्विति* ॥ उक्तदोषाणामनभिमतपक्षैकविषयतयाऽभिमतपक्षेषु किमपि दूषणं नास्तीति शङ्कमानं सिद्धान्तिनं प्रत्यभिमतपक्षेष्वपि दूषणं वक्तुं पृच्छति—*किमिदमिति* ॥ वक्ष्यमाणा पञ्चधा निरुक्तिः किंशब्दार्थः । *न तावदिति* ॥ सदसत्त्वानधिकरणत्वमनिर्वाच्यत्वं मिथ्यात्वमिति न तावद् युक्तम् ;

विट्ठलेशीयटिप्पणी

*नन्वेवम्* न तावत् सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वं मिथ्याशब्देन साध्यतया तादात्म्येन पक्षविशेषणतया निर्देष्टुमर्हमित्यर्थो 'न तावदि'त्यादेर्वाच्यः ; तथाचासङ्गतिः ; तादृशानिर्वाच्यत्वस्य तादात्म्येन प्रपञ्चरूपपक्षे बाधेन तस्य तथा निर्देशस्याप्रसक्तेस्तत्खण्डनवैयर्थ्यात्, तादृशानिर्वाच्यत्वाश्रयस्यैव तथा निर्देशप्रसक्तेरित्यत आह—*अथवेति* ॥ निर्गलितं वाक्यार्थमाह—*मिथ्याशब्दार्थतावच्छेदकविशिष्टत्वेनेति* ॥ आश्रयतासम्बन्धेन मिथ्याशब्दार्थतावच्छेदकस्यैव साध्यत्वे तादृशार्थप्रतिपादकप्रतिज्ञाया दौर्लभ्येन तादात्म्येन तद्विशिष्टप्रतिपादकप्रतिज्ञैव प्रयोक्तव्या । तथाच 'विमतं मिथ्या दृश्यत्वात्' इत्यादौ हेत्वर्थस्यैकदेशान्वयप्रसङ्गः, इत्यतस्तादात्म्येन मिथ्यापदार्थतावच्छेदकविशिष्टमेव साध्यीकर्तव्यमिति भावः । निरुक्तानिर्वाच्यत्वस्य मिथ्यापदार्थतावच्छेदकत्व आप्तवाक्यरूपं प्रमाणमाह—मूले—*मिथ्याशब्दोऽनिर्वचनीयतावचन इति* ॥ 'असत्त्वविशिष्टसत्त्वाभावः' इत्यत्रासत्त्वविशिष्टसत्त्वाभावे न विशेषणम् ; स्वस्मिन् स्वविशिष्टत्वविशेषणवैयर्थ्यात्, नापि सत्त्वे ; असत्त्वोपलक्षितसत्त्वप्रामाण्यलोक-

### न्यायामृतम्

सत्त्वरूपविशिष्टस्याभावोऽभिप्रेतः ? किं वा सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयम् ? यद्वा सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभाववत्त्वरूपं विशिष्टम् ? नाद्यः ; मन्मते सदेकस्वभावे जगति तस्य सिद्धत्वात् ।

### अद्वैतसिद्धिः

पञ्चपादिकावचनात् सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वम् ; तद्धि किम्—असत्त्वविशिष्ट(१)सत्त्वाभावः ? उत सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयम् ? आहोस्वित् सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टम् ? नाद्यः ; सत्त्वमात्राधारे जगत्यसत्त्वविशिष्टसत्त्वानभ्युपगमात्, विशिष्टा-

### तरङ्गिणी

नधिकरणत्वमि'त्यत्र सच्छब्दः सत्त्वपरः । तत्र सत्त्वं किमसत्त्वविशेषणं वा ? सत्त्वासत्त्वे प्रत्येकमनधिकरणत्वस्य विशेषणं वा ? सच्छब्दात् परतोऽनधिकरणत्वशब्दरूपमध्यमपदलोपिसमासाश्रयणेन सत्त्वानधिकरणत्वस्य विशेषणं वाऽभिप्रेतमिति प्रश्नवाक्यार्थः । *मन्मत इति* ॥ विशेष्याभावायत्तो विशिष्टा-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावः ; तत्र विशेषणतयोच्यमानं किमिति वाक्यार्थः । *असत्त्वेत्यादिः* ॥ असत्त्वसमानाधिकरणस्य सत्त्वस्यात्यन्ताभाव इत्यर्थः । *सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपम् = सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयत्वावच्छिन्नम् । *सतीति* ॥ सतिसप्तम्याः सामानाधिकरण्यार्थकत्वात्, सत्त्वात्यन्ताभावसमानाधिकरणोऽसत्त्वात्यन्ताभावोऽर्थः । *नाद्य इति* ॥ माध्वमत इति शेषः । *सिद्धसाधनादिति* ॥ माध्वमतेऽलीकस्यैवात्यन्ता-

### सिद्धिव्याख्या

सदसत्त्वानधिकरणत्वस्यैव निर्वक्तुमशक्यत्वादित्यर्थः । *तद्धि किमिति* ॥ सदसत्त्वानधिकरणत्वमित्यर्थः । वक्ष्यमाणविकल्पत्रयं किंशब्दार्थः । *सत्त्वविशिष्टेति * ॥ 'सदसत्त्वानधिकरणत्वमि'त्यत्र सच्छब्दस्य सत्यपरत्वे तस्य चासत्त्वविशेषणत्वेऽनधिकरणत्वस्य चाधिकरणत्वाभाववत्त्वे च सत्त्वविशिष्टासत्त्वाभावे पर्यवसानादिति भावः । *सत्त्वात्यन्ताभावेति* ॥ सत्त्वासत्त्वयोः प्रत्येकमनधिकरणत्वविशेषणत्वेऽनधिकरणत्वस्याधिकरणत्वात्यन्ताभाववत्त्वरूपत्वेन पर्यवसानेन च सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयं लभ्यत इति ध्येयम् । *आहोस्विदिति* ॥ सच्छब्दात् परतोऽनधिकरणत्वशब्दरूपमध्यमपदलोपिसमासाश्रयणेन सत्त्वानधिकरणत्वस्यासत्त्वानधिकरणत्वविशेषणत्वे तथा पर्यवसानमिति ध्येयम् । आद्यपक्षं सिद्धसाधनेन दूषयति—*नाद्य इति । सिद्धसाधनादिति* ॥ विशेष्याभावप्रयुक्तविशिष्टाभावस्य सत्त्वादित्यर्थः । उपलक्षणमेतत्, सत्त्वे सत्यसत्त्वरूपविशिष्टस्य प्रतियोगिनोऽप्रसिद्ध्याऽ-

### विट्ठलेशीयटिप्पणी

तथा तदभावस्य प्रपञ्चे सौलभ्येन तद्वैशिष्ट्यस्य प्रतियोगितावच्छेदककोटिनिवेशवैयर्थ्यात्, किन्तु सत्त्व उपलक्षणम् । न च—तदपि व्यर्थमिति—वाच्यम् ; एकेनैवानुमानेन प्रपञ्चस्य सदसद्रूपतावादिनिरासाय तत्सार्थक्यात् । अप्रसिद्धप्रतियोगिकाभावाभ्युपगमेन चेयं कोटिरित्यभिप्रेत्य व्याचष्टे—*असत्त्वसमानाधिकरणस्य सत्त्वस्येति* ॥ सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावेति समाहारद्वन्द्वः, रूपशब्दो धर्मद्वयान्वय्यभेदार्थक इत्याशयेन व्याचष्टे—*सत्त्वात्यन्ताभावेत्यादि* ॥ सत्यन्तार्थस्य प्रतियोग्यन्वयभ्रमं निरस्यन् अभावे तस्योपलक्षणतां सूचयति—*सत्त्वात्यन्ताभावसमानाधिकरण इति* ॥ सिद्धसाधनवारणायेदम् । असद्रूपत्वेनार्थान्तरवारणाय विशेष्यम् । शेषपूरणफलं दर्शयन् मतान्तरे दोषं पूरयति—*माध्वमत इति* ॥ *मतान्तरे=नैयायिकादिमते । *तदप्रसिद्धि-

---

(१) सत्त्वविशिष्टासत्त्वाभाव इति सिद्धिव्याख्याभिमतः पाठः ।

न्यायामृतम्

न द्वितीयः ; (१) व्याहतेः,

अद्वैतसिद्धिः

भावसाधने सिद्धसाधनात्, न द्वितीयः ; सत्त्वासत्त्वयोरेकाभावेऽपरसत्त्वावश्यकत्वेन व्याघातात्, निर्धर्मकब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तराच्च, शुक्तिरूप्येऽबाध्यत्वरूप-

तरङ्गिणी

भावोऽस्तीत्यर्थः । *व्याहतेरिति* ॥ सत्त्वाभावसाधनेऽसत्त्वस्य प्राप्त्या पुनरसत्त्वाभावसाधने व्याहतिरित्यर्थः ॥

न्यायामृतकण्टकोद्धारः

सिद्धत्वेन सिद्धसाधनमिति भावः । *व्याहतेरिति* ॥ यत्त्वत्रोक्तम्—सत्त्वासत्त्वयोः परस्परप्रागभावादिरूपतया

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावस्वीकारेणोक्तविशिष्टप्रतियोगिकाभावप्रसिद्धावपि मतान्तरे तदप्रसिद्धिरित्यपि बोध्यम् । *सत्त्वासत्त्वयोरिति*॥ परस्पराभावरूपत्वेनेति शेषः । *एकाभावे=एकस्याभावे ; सति । *निर्धर्मकेत्यादि*॥ यथा केवलब्रह्मणो बाध्यत्वाभावरूपसत्त्वादिकं न धर्मः ; "केवलो निर्गुणः" इत्यादिश्रुतेः, ब्रह्मनिष्ठसत्त्वस्याबाध्यत्वेनाद्वैतश्रुतिविरोधाच्च,

न्यायामृतसौगन्ध्यम्

भावसाधने सिद्धसाधनात् । न द्वितीयः ; सत्त्वासत्त्वयोरेकाभावेऽपरसत्त्वावश्यकत्वेन व्याघातात्, निर्धर्मकब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तराच्च, शुक्तिरूप्येऽबाध्यत्वरूपसत्त्व-

सिद्धिव्याख्या

प्रसिद्धिरित्यपि बोध्यम् । द्वितीयं दूषयति—*न द्वितीय इति* ॥ अर्थान्तरमप्याह—*निर्धर्मकेति*॥ दृष्टान्ते

विट्ठलेशीयटिप्पणी

रिति* ॥ तथाच तत्र सिद्धसाधनासम्भवादिदमेव दूषणमिति भावः । आवश्यकत्वे हेतुं पूरयति—*परस्परेति* ॥ सत्त्वासत्त्वोभयप्रतियोगिक एकस्मिन्नभावेऽन्यतरत्वावच्छिन्नप्रतियोगिताके सत्यपि नापरसत्त्वावश्यकत्वम्, अतो व्याचष्टे—*एकस्याभाव इति* ॥ सतीति पूरितम् । *न धर्म इति* ॥ बाध्यत्वात्यन्ताभावस्याधिकरणीभूतब्रह्माभिन्नतया धर्म-धर्मिभावासम्भवात् । *ननु* बाध्यत्वात्यन्ताभावत्वविशिष्टरूपेण बाध्यत्वाभावस्य ब्रह्माभिन्नतया तेन रूपेण धर्म-धर्मिभावः सम्भवेदित्याशङ्कां परिहरति—*केवलो निर्गुण इति* ॥ *निर्गुणः=स्वसमसत्ताकधर्मशून्यः । तथाच बाध्यत्वाभावत्वविशिष्टस्य तद्धर्मत्वसम्भवेऽपि तस्य मिथ्यात्वात् तेन सधर्मकत्वं वक्तुं न शक्यमिति भावः । *ननु* 'निर्गुणः' इत्यत्र गुणमात्रोपादानाद् गुणानात्मकबाध्यत्वाभावरूपधर्मस्वीकारे किं बाधकम् ? अत आह—*ब्रह्मनिष्ठेति* ॥ *सत्त्वस्य=बाध्यत्वात्यन्ताभावस्य । *अबाध्यत्वेनेति* ॥ तस्य बाध्यत्वे तु न तेन सधर्मकत्वमिति भावः । *ननु* बाध्यत्वात्यन्ताभावस्य ब्रह्मण्यसत्त्वे तत्प्रतियोगिबाध्यत्वमेव धर्मः स्यात्, प्रतियोग्यभावयो-

---

(१) *व्याहतेरिति*॥ परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् सत्त्वात्यन्ताभावे साध्येऽसत्त्वस्यैव प्राप्त्या, पुनस्तदत्यन्ताभावे साध्ये व्याहतिः । एवमसत्त्वात्यन्ताभावे साध्ये सत्त्वस्यैव प्राप्त्या, पुनस्तदत्यन्ताभावसाधने व्याहतिरित्यर्थः । *ननु* कथं व्याहतिः ? सत्त्वासत्त्वयोः परस्परप्रागभावादिरूपतया परस्परविरहरूपत्वासम्भवेनात्यन्ताभावरूपतयैव परस्परविरहरूपता वाच्या ; तथाच सत्त्वात्यन्ताभावः कथमसत्त्वम् ? सिद्धान्तेऽत्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वस्वीकारेण सत्त्वस्य प्रामाणिकत्वात्, तथाऽसत्त्वस्यापि तुच्छे प्रामाणिकत्वेन तदत्यन्ताभावासम्भवेनासत्त्वात्यन्ताभाव एव सत्त्वमित्यस्याप्ययोगात् । नच—तार्किकादिमते प्रामाणिकस्याप्यत्यन्ताभावप्रतियोगित्वस्वीकारात् तन्मतेन तयोः परस्परविरहरूपत्वाभिधानमिति—वाच्यम् ; सिद्धान्तेऽप्यसत्त्वाभाव एव सत्त्वम्, सत्त्वाभाव एवासत्त्वमिति स्वीकारात् । यद्वक्ष्यति—"मया लाघवादावश्यकत्वादसत्त्वाभाव एव सत्त्वम्, तदभाव एवासत्त्वमिति स्वीकारादि"ति । तथाच प्रामाणिकस्यात्यन्ताभावासम्भवेनासति किञ्चिदारोपितं सत्त्वमस्ति,

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

अथ च तस्य बाध्यत्वादिधर्मोऽपि नास्ति ; श्रुतिप्रमितत्वात् , साक्षित्वादिना बाध्यत्वासम्भवाच्च, तेन तत्

**विट्ठलेशीयटिप्पणी**

रेकतरस्यावश्यकत्वादित्यत आह—*अथ चेति* ॥ *ननु* ब्रह्मणो बाध्यत्वेऽपि ब्रह्मप्रतिपादकश्रुतीनां तव स्वर्गादि-प्रतिपादकश्रुतिवद् व्यावहारिकप्रामाण्योपपत्तिः सम्भवतीत्यत आह—*साक्षित्वादिनेति* ॥ *साक्षित्वम्=भासकत्वम्। ब्रह्मैव हि स्वावच्छेदकाविद्यादीनां प्रकाशरूपतया भासकम् ; यथा चन्द्रबिम्बादि स्वावच्छेदकराहुभासकम्। *बाध्यत्वम्=त्रैकालिकपारमार्थिकनिषेधप्रतियोगित्वम्। एवं च ब्रह्मणो यदि कालत्रयेऽभाव एव पारमार्थिकः स्यात् , तदाऽविद्यादीनां भानं कथं स्यात् ? किञ्च ब्रह्मण उक्तबाध्यत्वावगाहिज्ञानप्रामाण्यनिश्चयं विना नार्थनिश्चयः, तादृशप्रामाण्यं च चिद्रूपब्रह्मणैव भास्यम्। एवं च ब्रह्मण एवोक्तनिषेधप्रतियोगित्व उक्तप्रामाण्यग्राहकत्वरूपा निषेध-साक्षितापि नोपपद्येत। न च—प्रपञ्चनिषेधसाक्षि ब्रह्म, तन्निषेधसाक्षी त्वन्य एवेति स्वीकुर्म इति—वाच्यम् ; अन्योऽपि स्वीक्रियमाणः किं ब्रह्मवद् बाध्यः ? आहोस्वित् पारमार्थिकः ? आद्ये तद्बाधसाक्षिणाऽन्येन भवितव्यम् , तस्यापि बाध्यत्वे तत्तद्बाधसाक्षिणाऽप्यन्येनेत्यनवस्था। अन्त्ये तदेव ब्रह्मेति स्वीकुर्मः। किञ्च—एवं सति प्रपञ्चनिषेध-साक्षिणमेव लाघवादबाध्यं स्वीकुर्मः, ब्रह्मणः साक्षित्वं तु "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतिसिद्धमिति भावः। स्वस्य स्वाभावज्ञानप्रामाण्यग्राहकत्वस्यासंभवादनङ्गीकारेणेदम् ; घटादिप्रपञ्चवत् स्वस्य व्यावहारिकत्वेन तत्संभवात् , तदङ्गीकारे त्वादिपदम्। आदिना प्रपञ्चाध्यासाधिष्ठानत्वादिकम्। तथाहि—ब्रह्म यदि बाध्यं स्यात् , तदा सर्वप्रपञ्चाधिष्ठानं न स्यात् , रजतमात्राधिष्ठानभूतव्यावहारिकशुक्तिपदार्थवत् ; ब्रह्मणो बाध्यत्वे हि तदध्यासस्या-न्यत्र वक्तव्यतया ब्रह्मणः सर्वान्तर्गतप्रपञ्चाधिष्ठानत्वानुपपत्तेः। किञ्च ब्रह्मणो बाध्यत्वे प्रतीयमानस्य तस्यान्यत्रा-ध्यासो वाच्यः, ब्रह्माधिष्ठानतया स्वीकृतस्यान्यस्य बाध्यत्वे तस्याप्यन्यत्राध्यास इति रीत्याऽनवस्था, अबाध्यत्वे ब्रह्मण एव तदुचितम्। एवं "नेह नानास्ति किञ्चन" इति निषेधवाक्येन ब्रह्मणोऽपि निषेधे, इहपदेन तस्य निषेधाधिकरणताप्रत्ययो विरुध्येत ; तत्र निषिध्यमानकिञ्चनपदार्थभिन्नस्यैव निषेधाधिकरणस्य स्वरसत इहपदात् प्रतीतेरानुभाविकत्वादिति दिक् ॥

*तेन*=बाध्यत्व-तदभावरूपसत्त्वयोरसम्भवेन। *सद्रूपमिति* ॥ स्वीकार्यमिति शेषः। अन्यथा "सदेव

---

तदत्यन्ताभाव एवासत्त्वम् , सति चारोपितं किञ्चिदसत्त्वमस्ति, तदत्यन्ताभाव एव सत्त्वमिति—वाच्यम् , आरोपितयोश्चासत्त्वेना-त्यन्ताभावप्रतियोगित्वसम्भवात्। एवञ्चारोपितसत्त्वाद्यभावस्यैवासत्त्वादित्व आरोपितसत्त्वासत्त्वयोरेव व्याहतिप्राप्त्या वास्तव-सत्त्वासत्त्वयोः कथं व्याघातः ? तस्मादेतत् कथमिति—चेत् , *अत्र वदन्ति—सत्त्वासत्त्वयोः परस्परविरहरूपत्वोक्तेः परस्पर-विरहव्यापकत्वे तात्पर्यम् ; तथाच यत्रारोपितसत्त्वात्यन्ताभावः, तत्रासत्त्वम् , यत्रारोपितासत्त्वात्यन्ताभावः, तत्र सत्त्वमिति व्याप्तेः। न च—घटे वास्तवसत्त्वसद्भावेनारोपितसत्त्वात्यन्ताभावस्य सत्त्वेऽप्यसत्त्वाभावात् , एवं तुच्छे वास्तवासत्त्वसत्त्वे-नारोपितासत्त्वात्यन्ताभावसद्भावेऽपि सत्त्वाभावाद् व्यभिचारः, तथाच कथं परस्परविरहव्यापकत्वमपीति—वाच्यम् , अत्यन्ता-भावस्य प्रतियोग्यारोपपूर्वकत्वाद् यथा प्रतियोगिना सह विरोधः, तथा प्रतियोग्यारोपे यत् प्रधानम् , तेनापि विरोधस्याङ्गीकार्यत्वात्। एवञ्चात्रात्यन्ताभावे प्रतियोगिभूतं यदारोपितं सत्त्वम् , तत्र यत् प्रधानं वास्तवं सत्त्वम् , तेन सममत्यन्ताभावस्य विरोधात् , घटे च प्रधानभूतवास्तवसत्त्वसद्भावेन तत्रारोपितसत्त्वात्यन्ताभावस्य वक्तुमशक्यत्वात् , एवं तुच्छेऽसत्त्वारोपे प्रधानभूतवास्तवा-सत्त्वसद्भावेनारोपितासत्त्वात्यन्ताभावस्य वक्तुमशक्यत्वाद् न व्यभिचारः। तथाच परस्परविरहव्यापकत्वेन विरोधो युक्त इति। *ननु*—अथापि प्रधानभूतं वास्तवं सत्त्वं घटेऽस्ति, तत्रारोपितसत्त्वात्यन्ताभावोऽप्यस्ति, तुच्छे प्रधानभूतवास्तवास-त्त्वमस्ति, आरोपितासत्त्वात्यन्ताभावोऽप्यस्ति, इति कथं प्रतियोग्यारोपे प्रधानेनापि विरोध इति—चेत् , *उच्यते* ; 'यत्र प्रधानं वास्तवं सत्त्वम् , तत्रारोपितसत्त्वात्यन्ताभावो नास्ती'त्यस्य प्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिविषयाभावो नास्तीत्यर्थकरणात्। यत्र घटे प्रधानभूतं वास्तवं सत्त्वमस्ति, तत्र सत्त्वमारोप्य न निषिध्यते, एवं यत्र तुच्छे प्रधानभूतं वास्तवासत्त्वमस्ति, तत्रासत्त्व-मारोप्य न निषिध्यत इति कृत्वाऽसत्त्वारोपपूर्वकप्रतीतिविषयाभावरूपारोपितासत्त्वात्यन्ताभावो नास्तीति युक्तः परस्परविरह-

न्यायामृतकण्टकोद्धारः

परस्परविरहरूपत्वासम्भवेनात्यन्ताभावरूपतयैव परस्परविरहरूपता वाच्या। तत्र च त्रिकाल-सर्वदेशीय-निषेधप्रतियोगित्वाद्रिरूपस्यासत्त्वस्य भावरूपतयाऽसत्त्वात्यन्ताभावः सत्त्वमिति वाच्यम्, तथा सति सिद्धान्तेऽत्यन्ताभावस्यासन्मात्रप्रतियोगिकत्वस्वीकारेणासत्त्वस्यात्यन्तासत्त्वापत्तिः। नच—तार्किकादिमतेन तयोः परस्परविरहरूपत्वाभिधानमिति—वाच्यम्; स्वमते व्याहत्युक्तेरसङ्गतत्वापत्तेः। सिद्धान्तेऽप्यसत्त्वाभाव एव सत्त्वमिति स्वीकाराच्च। यद्वक्ष्यति—यथा लाघवाद्वावश्यकत्वाद्सत्त्वाभाव एव सत्त्वमित्यादीति, तदयुक्तम्; सिद्धान्तेऽत्यन्ताभावस्यासन्मात्रप्रतियोगिकत्वस्वीकारेण सत्त्वस्यासत्त्वात्यन्ताभावरूपत्वेऽसत्त्वस्यात्यन्तासत्त्वं स्यादित्यापादयतः कोऽभिप्रायः? क्वचिदत्यन्ताभावप्रतियोगिनः सर्वत्रात्यन्तासत्त्वं स्यादिति वा? उत यत्रात्यन्ताभावस्तत्रैव वा? नान्त्यः; इष्टापत्तेः, तत्र ह्यसत्त्वात्यन्ताभावः; तदधिकरणसंसृष्टासत्त्वस्यात्यन्तासत्त्वाङ्गीकारात्, नाद्यः; आपादकाभावात्। न हि क्वचिदत्यन्ताभावप्रतियोगित्वे सर्वत्राऽत्यन्तासत्त्वं सम्भवति; तथा सति अश्वनिष्ठनिषेधप्रतियोगिनो गोत्वस्य गव्यप्यत्यन्तासत्त्वापत्तेः। नचैवम्—अत्यन्ताभावस्यासन्मात्रप्रतियोगिकत्वमिति सिद्धान्तो व्याकुप्यत इति—वाच्यम्; न हि क्वचिदत्यन्ताभावप्रतियोगिनः सर्वत्राऽसत्त्वमिति सिद्धान्तेऽभ्युपगमः, येन विरोधः? किन्तु सत्संसृष्टा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सद्रूपम्; तथा प्रकृतानुमानात् प्रपञ्चस्योक्तसत्त्वाभावसिद्धावपि न बाध्यत्वम्; स्वतःप्रमाणप्रत्यक्षादिप्रमाविषयत्वात्, तेन सोऽपि सद्रूपः, इति सद्रूपत्वविरोधिमिथ्यात्वासिद्धयाऽर्थान्तरमिति भावः। अतःशब्दार्थस्य

विट्ठलेशीयटिप्पणी

सोम्येदमग्र आसीत्" इति श्रुतौ सद्व्यवहारानुपपत्तेः। नच—सत्त्वाख्यधर्मानङ्गीकारे कथं तत्र सद्व्यवहारः? किञ्चिद्धर्मपुरस्कारेणैव पदानां धर्मिप्रत्यायकत्वनियमादिति—वाच्यम्; आकाशपदेनाकाशरूपधर्मिमात्रप्रतिपादनेन तादृशनियमस्यासत्त्वेनेहापि सत्पदेन ब्रह्मरूपधर्मिमात्रप्रत्यायनसम्भवादिति भावः। *उक्तेति*॥ अबाध्यत्वरूपेत्यर्थः। *न बाध्यत्वमिति*॥ नचैवम्—निरुक्तसत्त्वात्यन्ताभावे बाध्यत्वव्याप्यत्वस्य शुक्तिरजते गृहीतस्य भङ्गापत्तिरिति—वाच्यम्; ब्रह्मणि तद्भङ्गप्रदर्शनायैव 'निर्धर्मके'त्यादिदृष्टान्तोपादानादिति भावः। *ननु* प्रमाणप्रमितत्वाद्रिरूपं यद् बाध्यत्वबाधकं तदभावविशिष्टसत्त्वाभाववत्त्वं बाध्यत्वव्याप्यमिति नियमस्य न ब्रह्मणि भङ्गः; व्याप्यस्यैवासत्त्वात्, इत्याशङ्क्य, प्रपञ्चस्याबाध्यत्वेऽप्युक्तनियमाभङ्गाय प्रपञ्चे बाध्यत्वबाधकमाह—*स्वत इति*॥ *प्रत्यक्षेति*॥ 'अयं घटः' इत्याकारकेत्यादिः। *सद्रूप इति*॥ अत एव 'सन् घटः' इत्यादिप्रत्यक्षोपपत्तिरिति भावः। *ननु*उक्तरीत्याऽस्तु प्रपञ्चः सद्रूपः, तथापि तस्य निरुक्तमिथ्यात्वसिद्धिरप्रत्यूहैवेत्यत आह—*सद्रूपत्वविरोधीति*॥ *अर्थान्तरमिति*॥ पराभ्युपगतस्य प्रपञ्चे सद्रूपत्वस्य निरासाय सद्रूपत्वविरोधिमिथ्यात्वसिद्धेरेवोद्देश्यत्वादिति भावः। 'पूर्ववदि'त्यादेः 'अत एवे'त्यनेन पौनरुक्त्यं वारयति—*अत इति*॥ 'नापि व्याघातः' इत्यादि वक्ष्यमाणग्रन्थेनापौनरुक्त्याय व्याहतिपदार्थं व्याचष्टे—*प्रपञ्च उक्तव्याघात इति*॥ सत्त्वासत्त्वयोरेकस्याभावेऽपरस्य

व्यापकत्वे न विरोध इति। एवमेव—दोषात्यन्ताभावरूपभगवल्लक्षणं न संभवति; दोषाणां प्रामाणिकत्वेन तदत्यन्ताभावायोगात्–इति शङ्किते, आरोपितदोषात्यन्ताभावस्य लक्षणत्वं वाच्यम्। *ननु*—तर्हि जीवेऽतिव्याप्तिरिति—चेत्, न; तत्राप्यत्यन्ताभावस्य प्रतियोग्यारोपे प्रधानेन विरोधात् दोषाणामारोपे प्रधानभूतानां वास्तवदोषाणां जीवे सत्त्वेन तत्र दोषानारोप्य निषेधः कर्तुं न शक्यते। तथाच प्रतियोग्यधिकरणसंसर्गारोपपूर्वकप्रतीतिविषयाभावाख्यारोपितदोषात्यन्ताभावो जीवे नास्ति। अस्ति च भगवति। भगवति आरोपिता दोषा न सन्तीति निषेधस्य कर्तुं शक्यत्वात्, अत्यन्ताभावस्य प्रतियोग्यारोपे प्रधानेन विरोधात्। दोषारोपे प्रधानभूतवास्तवदोषाणां च भगवत्यभावेन निषेधसंभवेन दोषाभावादिति द्रष्टव्यम्॥

### अद्वैतसिद्धिः

सत्त्वव्यतिरेकस्य सत्त्वेन बाध्यत्वरूपासत्त्वस्य व्यतिरेकासिद्ध्या साध्यवैकल्याच्च, अत एव न तृतीयः; पूर्ववद् व्याघातात्, अर्थान्तरात्, साध्यवैकल्याच्चेति—चेत्, *मैवम्*; सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षायां दोषाभावात्। नच व्याहतिः; सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा? परस्परविरहव्यापकतया वा? परस्परविरहव्याप्यतया वा? तत्र नाद्यः; तदनङ्गीकारात्॥

### तरङ्गिणी

सि० *ननु* "न व्याहतिः। सा हि तयोः परस्परविरह(१)व्यापकतया वा? परस्परविरहव्याप्यतया वा? परस्परविरहरूपतया वा? नाद्यः; सत्त्वाभाववति शुक्तिरूप्ये बाध्यत्वस्य विद्यमानत्वेऽपि

### न्यायामृतकण्टकोद्धारः

सत्त्वस्यैव। अत एव शुक्तिसंसृष्टरजतत्वस्यात्यन्तासत्त्वेऽपि न तत्प्रधानीभूतरजतत्वस्यात्यन्तासत्त्वम्; तथाऽप्रतीतेः॥ यद्वा—स्यादेतदसत्त्वस्यात्यन्तासत्त्वापादनम्, यद्यसत्त्वस्य तत्प्रतियोगित्वमभ्युपगच्छामः; नचैवम्, किन्त्वसत्त्वसंसर्गस्यैव। तथाच तत्संसर्गस्यात्यन्तासत्त्वेऽप्यसत्त्वस्य नात्यन्तासत्त्वापत्तिः। नचैवम्—असत्त्वसंसर्गस्यात्यन्ताभावप्रतियोगित्वे सत्त्वस्यापि प्रतियोगिकोटौ निविष्टत्वेनात्यन्तासत्त्वं

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विवरणम्—*पूर्ववदित्यादि* ॥ *व्याहतिः=प्रश्न उक्तव्याघातः। *सा हीत्यादि* ॥ सत्त्वस्याभावोऽसत्त्वम्, असत्त्वस्याभावः सत्त्वमिति वा; सत्त्वाभावव्यापकमसत्त्वम्, असत्त्वाभावव्यापकं सत्त्वमिति वा; सत्त्वाभावव्याप्यमसत्त्वम्, असत्त्वाभावव्याप्यं सत्त्वमिति वा व्याघाते हेतुरित्यर्थः। *तदनङ्गीकारात्=प्रकृते निवेशनीययोः

### न्यायामृतसौगन्ध्यम्

व्यतिरेकस्य सत्त्वेऽपि बाध्यत्वरूपासत्त्वस्य व्यतिरेकासिद्ध्या साध्यवैकल्याच्च। अत एव न तृतीयः; पूर्ववद् व्याघातात्, अर्थान्तरात्, साध्यवैकल्याच्च॥

*ननु*—सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षायां दोषाभावः, न च व्याहतिः; सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया? परस्परविरहव्यापकतया वा? नाद्य; तदनङ्गीकारात्। तथाहि

### सिद्धिव्याख्या

साध्यवैकल्यमप्याह—*शुक्तिरूप्य इति* ॥ तृतीय उक्तदूषणान्यतिदिशति—*अत एवेति* ॥ अतद्शब्दार्थमाह—*पूर्ववदिति* ॥ मध्यमपक्षमादाय परिहारं प्रतिजानीते—*मैवमिति* ॥ व्याघातमाशङ्क्याह—*नचेति* ॥ व्याहतिर्न च युक्तेत्यर्थः। *ननु—सत्त्वासत्त्वयोरेकाभावेऽपरसत्त्वस्यावश्यकत्वात् कथं न व्याहतिः? इत्याशङ्क्य व्याहतिं विकल्पयति—*सा हीति* ॥ एवं त्रिधा विकल्प्य, आद्यपक्षमनङ्गीकारेण दूषयति—*तत्र नेति* ॥ विवक्षायां नाद्य

### विट्ठलेशीयटिप्पणी

सत्त्वाभावव्यापकत्वेन प्रपञ्चस्य निरुक्ताभावद्वयवत्तानुपपत्तिरूपः प्रतिकूलतर्क इत्यर्थः। *व्याघाते=तर्के। *हेतुरिति* ॥ आपाद्यव्यतिरेकनिर्णयविधयेति शेषः। असत्त्वं यदि सत्त्वाभावसमानाधिकरणत्वाभावकं स्यात्, तदा सत्त्वाभावरूपं न स्यादिति विशेषतो व्याप्तौ सत्त्वं दृष्टान्तः। यद् यदभावसमानाधिकरणत्वाभावकम्, तद् न तदभावरूपमिति सामान्यव्याप्तौ तु घटादिः, एवं सत्त्वं यद्यसत्त्वाभावसमानाधिकरणत्वाभावकं स्यात्, तदाऽसत्त्वाभावरूपं न स्यादिति प्रथमकल्पे तर्कौ। द्वितीयकल्पे तु प्रथमतर्केऽसत्त्वे सत्त्वाभावव्यापकत्वाभाव आपाद्यः, द्वितीये च सत्त्वेऽसत्त्वाभावव्यापकत्वाभाव आपाद्यः, इत्यनयोर्विशेषः कथंचिदुपपादनीयः। तृतीयकल्पेऽसत्त्वे सत्त्वाभावव्याप्यत्वाभावः, सत्त्वे चासत्त्वाभावव्याप्यत्वाभाव आपाद्यः। एतैश्च तर्कैः सत्त्वाभावासत्त्वाभावयोः सामानाधिकरण्याभावसिद्धिसमर्थविपर्ययप्रतियोग्यापादकैरेकधर्मिनिष्ठतदुभयसम्बन्धरूपसामानाधि-

(१) अद्वैतसिद्ध्यभिमतस्तृतीयपक्षः प्रथमपक्षतया प्रथमपक्षस्तृतीयपक्षतया तरङ्गिण्यां गृहीतः।

अद्वैतसिद्धिः

तथा ह्यत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम्, किंतु ? क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्; तद्व्यतिरेकश्च साध्यत्वेन विवक्षितः। तथाच त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम्। एवं च सति न शुक्तिरूप्ये साध्य-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्त्वासत्त्वयोः परस्परविरहत्वास्वीकारात्। *प्रतीयमानत्वरूपम्=प्रतीयमानत्वयोग्यत्वम्; तच्च सत्तादात्म्यवत्त्वमेव। *ननु*—सत्त्वेन प्रतीयमानत्वं न दृश्यमात्रेऽस्ति; 'घटो गुरु'रित्यादिप्रमामात्रसिद्धे गुरुत्वादौ सत्त्वेन प्रत्यये मानाभावात्, तथाच तद्योग्यत्वमपि नास्ति, अतः सत्त्वस्य विशेषणमुक्तम्—*क्वचिदप्युपाधाविति* ॥ किञ्चिद्धर्मिनिष्ठं यत् सत्त्वम्, तेन प्रतीयमानत्वेत्यन्वयः। तथाच गुरुत्वादेरपि घटाद्यवच्छिन्नचितिआरोपात् तद्गतस्य सत्त्वस्य तत्रारोपात्, 'पृथिव्यादिनिष्ठगुरुत्वादिकं सदि'ति प्रत्ययाच्च सर्वत्र दृश्ये सत्त्वेन प्रतीयमानत्वयोग्यताऽस्तीति भावः। *त्रिकालाबाध्यविलक्षणत्वे सतीति* ॥ त्रिकालाबाध्यत्वात्यन्ताभावे यत् सद् विद्यमानं त्रिकाला-

न्यायामृतसौगन्ध्यम्

अत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम्, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्, तद्व्यतिरेकश्च साध्यत्वेन विवक्षितः। तथाच त्रिकालाबाध्यविलक्षणत्वे सति सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम्। एवं च सति शुक्तिरूप्ये न साध्यवैकल्यमपि; बाध्यत्वरूपासत्त्वव्यतिरेकस्य

सिद्धिव्याख्या

इति। अनङ्गीकारमेवोपपादयति—*तथाहीति* ॥ *नासत्त्वमिति* ॥ येन परस्परविरहरूपतया व्याघातः स्यादित्यर्थः। तर्हि किमित्याशङ्कते—*किंत्विति* ॥ उत्तरमाह—*क्वचिदपीति* ॥ 'अनधिकरणत्वमि'त्यनन्तरमसत्त्वमित्यस्यानुषङ्गः कर्तव्यः। *तद्व्यतिरेकश्चेति* ॥ उक्तासत्त्वव्यतिरेकश्चेत्यर्थः। विवक्षया पर्यवसितं रूपं दर्शयति—*तथाचेति* ॥ यदुक्तं शुक्तिरूप्ये साध्यवैकल्यमिति, तद् निराकरोति—*एवं च सतीति* ॥

विट्ठलेशीयटिप्पणी

करण्यावगाहिन्याः प्रपञ्च उक्ताभावद्वयवत्त्वानुमितेः प्रतिबन्ध इति शङ्कितुरभिप्रायः। *परस्परविरहरूपत्वास्वीकारादिति* ॥ तथाच प्रथमकल्पोक्ततर्काविष्टापत्तिपराहताविति भावः। मूले—*प्रतीयमानत्वानधिकरणत्वम्=प्रतीयमानत्वाभाववत्त्वम्। तथाचैतादृशासत्त्वप्रतियोगिनस्तादृशप्रतीयमानत्वस्य त्रिकालाबाध्यत्वरूपसत्त्वाभावात्मकत्वाद् न सत्त्वासत्त्वयोः परस्परविरहरूपतेति भावः। अत्र प्रतीयमानत्वाभावाभावत्वेन प्रतीयमानत्वप्रवेशे गौरवादाह—*तथाचेति* ॥ 'प्रतीयमानत्वमि'त्यत्र लडर्थवर्तमानत्वविवक्षणे प्रतीतिशून्यकाले मिथ्यात्वानुपपत्तेस्तदविवक्षां स्फुटयति टीकायाम्—*प्रतीयमानत्वयोग्यत्वमिति* ॥ *सत्तादात्म्यवत्त्वमिति* ॥ सत्तादात्म्यापन्नसत्त्वप्रतीतेरेवावश्यकत्वादिति भावः। *ननु* गुरुत्वस्य सत्त्वेन प्रतीत्यभावे गुरुत्व एव किं मानम् ? अत आह—*घटो गुरुरिति* ॥ घटादीनां 'घटः सन्' इत्याकारकप्रत्यक्षं सर्वसिद्धं साधकम्, गुरुत्वादीनां त्वतीन्द्रियतया न 'गुरुत्वं सत्' इत्यादिप्रत्यक्षम्; नापि तादृशानुमितिः, पक्षस्यैवासिद्धेः, किन्तु पतनलिङ्गिका 'घटो गुरुः' ( गुरुत्ववान् ) इत्यनुमितिरेवेति भावः। *किञ्चिद्धर्मिनिष्ठमिति* ॥ असाधारणप्रतीतेर्निवेशादिति भावः। *घटाद्यवच्छिन्नचितीति* ॥ तादात्म्येनेति शेषः। *तद्गतेति* ॥ तादृशचिद्गतेत्यर्थः। यस्मिन् धर्मिणि यस्य तादात्म्येनाध्यासः, तत्र तद्धर्माध्यासनियमादिति भावः। *प्रत्ययाच्चेति* ॥ अयं प्रत्ययः, अलौकिकसामान्यलक्षणप्रत्यासत्तिजन्यपरोक्षवृत्तिविशेषरूपः, 'घटो गुरुरि'त्यनुमितिसिद्धगुरुत्वपक्षकानुमितिरूपो वा बोध्यः। पूर्वप्रक्रान्तोभयत्वावच्छिन्नरूपसाध्यपरिष्कारत्वं विशिष्टस्यानुचितमित्याशङ्काम् "अत एव सत्त्वात्यन्ताभाववत्त्वे सती"त्यादिवक्ष्यमाणग्रन्थेन पौनरुक्त्यं च परिहर्तुमाह—*त्रिकालेति* ॥ विलक्षणत्वं न भेदः, सत्प्रतियोगिकभेदघटितसाध्येन पौनरुक्त्यप्रसङ्गात्, अत्यन्ताभावस्यैवोपक्रमाच्चेत्याशयेनाह—*त्रिकालाबाध्यत्वात्यन्ताभावेति* ॥

अद्वैतसिद्धिः

वैकल्यमपि ; बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात् । नापि व्याघातः ; परस्परविरह-रूपत्वाभावात् । अत एव न द्वितीयोऽपि ; सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्य-

तरङ्गिणी

क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वरूपासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारितया सत्त्व-व्यतिरेकं प्रत्यसत्त्वस्य व्यापकत्वाभावात्, निर्धर्मके ब्रह्मण्युभयस्यापि व्यभिचाराच्च, न द्वितीयः ; तस्य व्याघाताप्रयोजकत्वात्, गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात्, न तृतीयः ; सत्त्वासत्त्वयोः परस्परविरहरूपत्वानङ्गीकारात् । तथाहि—अत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यति-रेको नासत्त्वम्, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्, तद्व्यतिरेकश्च साध्यत्वेन विवक्षितः । तथाच त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्य पर्यव-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

बाध्यत्वात्यन्ताभाव-सत्तादात्म्योभयत्वम्, तत्सम्बन्धीत्यर्थः । तस्य च प्रतीयमानत्वेत्यत्रान्वयः । तथाच काला-द्यनवच्छिन्नं यद्बाध्यत्वम्, तदत्यन्ताभावः सत्तादात्म्यं चेत्युभयवत्त्वं साध्यम्, यथाश्रुते तु त्रिकालाबाध्यत्वा-त्यन्ताभावसमानाधिकरणस्य सत्तादात्म्यस्य लाभात् तस्य च वक्ष्यमाणत्वात् पौनरुक्त्यम् । *व्याघातः= शुक्तिरूप्य उक्तो व्याघातः । प्रपञ्चे व्याहत्यभावस्य पूर्वमुक्त्यैव शुक्तिरूप्येऽप्यर्थात् तस्य लब्धत्वेऽपि 'अत एव न द्वितीयः' इत्याद्युक्तिवैचित्र्याय 'नापी'त्याद्युक्तम् ।

न्यायामृतसौगन्ध्यम्

साध्याप्रवेशात्, नापि व्याघातः ; परस्परविरहरूपत्वाभावात् । अत एव न द्वितीयोऽपि ; सत्त्वाभाव-वति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारात् । नापि तृतीयः ; तस्य व्याघाता-प्रयोजकत्वात्, गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरेकत्रोष्ट्रादावुपलम्भात् ॥

सिद्धिव्याख्या

*ननु*—बाध्यत्वरूपासत्त्वस्यैव तत्र सत्त्वेन तद्व्यतिरेकाभावात् साध्यवैकल्यं कथं न ? इत्याशङ्क्याह— *बाध्यत्वेति* ॥ विवक्षितासत्त्वव्यतिरेकस्य साध्यप्रविष्टस्य शुक्तिरूप्येऽपि सत्त्वाद् न तत्र साध्यवैकल्यमिति भावः । व्याघातं परिहरति—*नापीति* । तत्र हेतुमाह—*परस्परेति* ॥ तत्योक्तत्वादिति भावः । परस्परविरहव्यापकतया व्याघात इति पक्षं दूषयति—*अत एवेति* । *विवक्षितेति* । यद्यपि सत्त्वाभाववति शुक्तिरूप्ये बाध्यत्वरूपा-

विट्ठलेशीयटिप्पणी

*तत्सम्बन्धीति* ॥ आधेयतासम्बन्धावच्छिन्नतादृशोभयत्वनिष्ठसम्बन्धितानिरूप्यमित्यर्थः । एतेन—सम्बन्धे सत्यनु-गतसनविरहादिप्रसङ्गतमिति—अपास्तम् ; तादृशोभयत्वाश्रय इति यावत् । व्याप्यवृत्तेरवच्छेदकानुपगमेन कालत्रयाव-च्छिन्नत्वरूपं त्रैकालिकत्वं न सम्भवतीत्यत आह—*कालाद्यनवच्छिन्नमिति* ॥ देश आदिपदार्थः । *अबाध्यत्व-मिति* ॥ ब्रह्मणि प्रसिद्धमिति शेषः । "नच व्याहतिरि"ति ग्रन्थेनापौनरुक्त्याय व्याघातपदार्थं व्याचष्टे—*शुक्ति-रूप्य इति* ॥ दृष्टान्त इति शेषः । *उक्त इति* ॥ शुक्तिरूप्येत्यादिग्रन्थेनेति शेषः । *व्याघातः=साध्यवैक-ल्यम् । *प्रयोजकः=परस्परविरहरूपत्वप्रयोज्यः शुक्तिरूपेऽबाध्यरूपसत्त्वव्यतिरेकसत्त्वेन बाध्यत्वरूपासत्त्वव्यतिरेका-सिद्धिरूपः । *लब्धत्वेऽपीति*॥ तथाच "नापि व्याघातः ; परस्परविरहरूपत्वाभावात्" इत्यस्य पौनरुक्त्यं तदवस्थ-मेवेति भावः । *अत एवेति* ॥ 'अत एवे'त्यनेन परस्परविरहरूपत्वाभावस्य परामर्शेनैकया युक्त्यैव कल्पद्वयनिरासा-दुक्तैव विभ्रममिति भावः । *मूले परस्परेत्यस्य* सत्त्वासत्त्वयोरित्यादिः । *अत एव*=सत्त्वासत्त्वयोः परस्पर-

## अद्वैतसिद्धिः

मानत्वेन व्यभिचारात् । नापि तृतीयः ; तस्य व्याघाताप्रयोजकत्वात्, गोत्वाश्वत्वयोः परस्परविरह-व्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात् ॥

## तरङ्गिणी

सितम् ; तथाच न व्याहतिरि''ति--चेत्, *नैवम्* ; 'असच्चेद् न प्रतीयेते'ति वदता त्वयोक्ताप्रतीतिं प्रति प्रयोजकस्य प्रतीत्यनुपाधिकस्य सत्त्वविरोधिनोऽसत्त्वस्य वक्तव्यत्वाद् असत्त्वाभावः सत्त्वेन प्रतीयमानत्वे पर्यवसन्नः, इति तत्साधनस्य व्यर्थत्वात् । नच—असद्वैलक्षण्यसिद्ध्यर्थं तत्साधनमिति—वाच्यम् ; प्रतीयमानत्वस्यासत्साधारणत्वात्, "तद्धैक आहुरसदेवेदमग्र आसीदि"त्यसतः सत्त्वेन प्रतीतेः श्रुत्याऽनूदित-

## सिद्धिव्याख्या

सत्त्वस्य विद्यमानत्वाद् न व्यभिचारः ; तथापि विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन सत्त्वव्यतिरेकं प्रत्यसत्त्वस्य व्यापकत्वाभावाद् व्यभिचार इत्यर्थः । निर्धर्मके ब्रह्मण्युभयस्यापि व्यभिचार इत्यपि द्रष्टव्यम् । तृतीयं दूषयति—*नापीति । *तस्येति* ॥ परस्परविरहव्याप्यत्वस्येत्यर्थः । अप्रयोजकतामेव दर्शयति—*गोत्वेति* ॥ सतश्च सत्त्वासत्त्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरेकत्र प्रपञ्चे संभवाद् न व्याहतिरिति ध्येयम् ॥

*यत्तु*—सत्त्वासत्त्वयोः परस्परविरहरूपत्वमेव वक्तव्यम्, 'असच्चेद् न प्रतीयेत' इति वदता त्वयोक्ताप्रतीति-प्रयोजकतयाऽप्रतीतिघटितासत्त्वकथने 'क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानं चेद् अप्रतीयमानं स्यात्' इत्यापाद्यापादकयोरभेदापत्तेः । एवं च पूर्वदूषणं स्यादेव—इति, *तन्न* ; क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वस्य सत्त्वरूपत्वेऽपि 'असच्चेद् न प्रतीयेत' इत्यस्य 'क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानं चेत्, अपरोक्षत्वेन न प्रतीयेते'त्यापादन आपाद्यापादकभेदस्य स्फुटत्वात् ॥ यदपि–तन्मात्रस्य ब्रह्मण्यतिव्याप्तत्वेन तद्वारणार्थं 'त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमि'ति परिष्करणेऽप्यसत्त्वाभावस्य सत्त्वेन प्रतीयमानत्वे पर्यवसानमिति तत्साधनं व्यर्थमिति, तदपि न ; त्रिकालाबाध्यविलक्षणत्वस्यावश्यकत्वे तस्य चातिव्याप्तत्वेनासद्वैलक्षण्यसिद्ध्यर्थं तत्साधनस्यावश्यकत्वात् । नच—प्रतीयमानत्वमपि तत्साधारणम्, "तद्धैक आहुरसदेवेदमग्र आसीत्" इत्यसतः सत्त्वेन प्रतीतेश्श्रुत्यनूदितत्वादिति—वाच्यम् ; असत इव प्रतीतेरप्यनुवादस्य प्रतीतिसत्त्वापादनाक्षमत्वात् । नच—असतः सत्त्वेन प्रतीतिमत इति, एक इति,असत्प्रतीतेः सत्त्वमेवोच्यत इति—वाच्यम् ; "तद्धैक आहुरसदेवेदमग्र आसीत्" इति श्रुत्या "सदेवेदमग्र आसीत्" इति श्रुत्यर्थस्याभाव एव नञा निषेधेन प्रतिपाद्यत इत्यभ्युपगमात् । नच—"सदेव सौम्येदमग्र आसीत्" इति श्रुत्यर्थाभावस्यासत्त्वेन, असतः सत्त्वेन प्रतीत्यनिवारणमिति—वाच्यम् ; तादृशाभावस्यानिर्वचनीयाव्याकृत-कार्यस्वरूपत्वेन तस्यैव सत्त्वेन प्रतीतेरिति ॥

## विठ्ठलेशीयटिप्पणी

विरहरूपत्वाभावादेव । तयोः परस्परविरहरूपत्वे हि सत्त्वाभाववति शुक्तिरूप्येऽसत्त्वस्यावश्यकत्वेन परस्परविरह-व्यापकतायाः सम्भवेन तद्धेतुको द्वितीयव्याघातोऽपि भवेत्, तदेव नेति भावः । *व्यभिचारादिति* ॥ सत्त्वाभावेऽसत्त्वस्यासत्त्वाभावे सत्त्वस्य व्यभिचारादित्यर्थः । तथाच द्वितीयकल्पोक्ततर्कोऽपीष्टापत्तिपराहततावेवेति भावः । *तस्य*=परस्परविरहव्याप्यतोपगमस्य । *व्याघाताप्रयोजकत्वात्*=तादृशव्याप्यत्वाभावापत्तिरूपतर्केऽकारणत्वादित्यर्थः । असत्त्वादौ सत्त्वाद्यभावसमानाधिकरणत्वाभावकत्वरूपापादकोपगमेऽपि व्यापकस्याधिकदेशवृत्तितया व्याप्यत्वाभङ्गकतया तुच्छाद्यन्तर्भावेण सत्त्वाद्यभावव्याप्यत्वोपपत्तिसम्भवेन मूलशैथिल्यादिति भावः । *ननु* यो यद्-भावसमानाधिकरणत्वाभावकः, स न तदभावव्याप्यः, इति सामान्यव्याप्त्यैव तादृशापत्तिर्निर्वहेदिति शङ्कानिराकरणाय तादृशव्याप्तौ व्यभिचारमाह—*गोत्वाश्वत्वयोरिति* ॥ एवं च तृतीयकल्पोक्ततर्कौ मूलशैथिल्यपराहताविति भावः ।

### तरङ्गिणी

त्वात् । *नच*—असत इव प्रतीतेरनुवादो न प्रतीतिसत्तामापादयतीति—वाच्यम्; असतः सत्त्वेन प्रतीतिमत 'एक' इत्यसत्प्रतीतेः सत्त्वस्यैवोक्तेः । नच—"तद्धैक आहुरि"ति श्रुत्या "सदेव सौम्येदमग्र आसीदि"ति श्रुत्यर्थस्याभाव एव प्रतिपाद्यते निषेधायेति—वाच्यम्, "सदेव सौम्येदमि"ति श्रुत्यर्थाभावस्यासत्त्वेनासतः सत्त्वप्रतीत्यनिवारणात् ॥

अत्रेदमालोचनीयम्—सत्त्वासत्त्वयोः परस्परप्रागभावादिरूपतया परस्परविरहरूपत्वासम्भवेनात्यन्ता·

### सिद्धिव्याख्या

किंच सत्त्वासत्त्वयोः परस्परप्रागभावरूपतया परस्परविरहरूपत्वासंभवेनात्यन्ताभावरूपतयैव परस्परविरहरूपता वाच्या; तत्रापि त्रिकाल-सर्वदेशीयनिषेधप्रतियोगित्वादिरूपस्यासत्त्वस्याभावरूपतयाऽसत्त्वात्यन्ताभावः सत्त्वमिति वाच्यम्, तथाच भवन्मतेऽत्यन्ताभावस्यासत्प्रतियोगिकत्वस्वीकारेण सत्त्वस्यात्यन्तासत्त्वापत्तिः । नच—तार्किकादिमतेन तयोः परस्परविरहरूपत्वाभिधानमिति—वाच्यम्; भवन्मतं व्याहत्युक्तेरसंभवापत्तेः, भवन्मतेऽप्यसत्त्वाभावस्यैव सत्त्वेन स्वीकृतत्वाच्च, अन्यथा 'मया लाघवादशक्यत्वादि'त्यादिभवद्वचनविरोधापत्तिः । अत एव—सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी न भवतः, परस्परात्यन्ताभावरूपत्वात्, घटत्वाघटत्ववदिति—निरस्तम्; उक्तरीत्या हेतोरसिद्धेरिति ॥

*केचित्तु*—नित्यत्वानित्यत्वयोरिव सत्त्वासत्त्वयोः परस्परविरहरूपत्वमेव, इति नासिद्धिर्हेतोः । *यद्वा*—तयोः परस्परविरहव्यापकत्वम् । नच—सत्त्वासत्त्वयोर्गोत्वाश्वत्वयोरिव परस्परविरहव्याप्यत्वलक्षणपरस्परविरोधेऽपि घटादौ तदुभयाभावात् शुक्तिरूप्यादौ सत्त्वासत्त्वोभयाभावस्य संभवेन न व्याहतिरिति—वाच्यम्; गवाश्वोभयविलक्षणघट-पटादेरभ्युपगमेन विरुद्धयोर्गोत्वाश्वत्वयोः परस्परनिरूपिताभावयोर्घट-पटाद्यावव्याहतत्वेऽपि सदसद्विलक्षणस्यान्यस्यानभ्युपगमेन तत्र सत्त्वासत्त्वाभावयोरव्याहत्युक्तिरयुक्ता—इत्याहुः, तत्र यद्वेत्याद्युक्तम्; सत्त्वासत्त्वेत्यादिना दत्तोत्तरत्वात् । यत्तु—गवाश्वोभयविलक्षणेत्याद्युक्तमित्यन्तम्, तन्न; शीतोष्णस्पर्शविलक्षणानुष्णाशीतस्पर्शवत् प्रमाभ्रमोभयबहिर्भूतनिर्विकल्पकवच्च शुक्तिरूप्यादेः सदसद्बहिर्भूतत्वाङ्गीकारात् । नच—सत्त्वासत्त्वयोः परस्परविरहरूपत्वस्यैव प्राप्त्या नेदं समाधानं युक्तमिति—वाच्यम्; परस्परविरहरूपत्वाभावस्योक्तत्वात् । नच—शीतोष्णस्पर्शयोः परस्परविरहरूपत्वाभावेन तदुभयविलक्षणानुष्णाशीतस्पर्शस्य संभवेन तस्य प्रकृते दृष्टान्तत्वायोग इति—वाच्यम्; तद्वत् सत्त्वासत्त्वयोरपि परस्परविरहरूपत्वाभावस्योक्तत्वेन सदसदुभयविलक्षणस्यापि संभवेन तस्य दृष्टान्तत्वोपपत्तेः । नच—निर्विकल्पकेश्वरज्ञानयोरपि विशेष्यावृत्त्यप्रकारकत्वेन प्रमात्वेनादृष्टान्ततेति—वाच्यम्; "तद्वति तत्प्रकारकं ज्ञानं प्रमा" इति मतानुसारेण तस्य दृष्टान्ततोक्तेः, 'दोषजन्यं ज्ञानमप्रमा' 'गुणजन्यं प्रमा' इति मतेनेश्वरज्ञानस्य दृष्टान्ततोक्तेश्च । नच—निर्विकल्पकस्याप्रामाणिकत्वाद् दृष्टान्तत्वायोग इति—वाच्यम्; तस्य प्रामाणिकत्ववादिमतानुसारेण दृष्टान्तितत्वात्, ईश्वरज्ञानस्य विशेषणज्ञानजन्यत्वप्रयुक्तसप्रकारकत्वविरहमादाय प्रमा-भ्रमबहिर्भावसंभवाच्च । नच—इदं परिभाषामात्रम्, अन्यथेश्वरस्य प्रवृत्तिर्विसंवादिन्येव स्यादिति—वाच्यम्; तज्ज्ञानस्यावधारणात्मतया तज्जन्यप्रवृत्तेरविसंवादस्योपपत्तेः । नचैवं—नित्यानित्यविलक्षणमपि किंचित् स्यादिति—वाच्यम्; नित्यानित्यत्वयोः परस्परविरहरूपत्वेन घट-पटोभयविलक्षणवस्त्वन्तरवत् तस्यानापादनीयत्वात्, सत्त्वासत्त्वयोस्तु त्रिकालाबाध्यत्वक्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वरूपत्वेनापरस्परविरहरूपत्वात् । नचैवम्—ध्वंसानुपलक्षितसत्तायोगित्वं नित्यत्वम्, तदुपलक्षितसत्तायोगित्वमनित्यत्वमिति निरूपणसंभवेन तयोरपि न परस्परविरहरूपत्वमिति—वाच्यम्; न्यायामृते—'सामान्यादित्रिके सत्ताभावेन नित्यत्वाभावप्रसङ्गात्, प्रागभावानित्यत्वाभावप्रसङ्गाच्च; तथाच ध्वंसाप्रतियोगित्वं नित्यत्वम्, तदभावश्चानित्यत्वमि'ति तयोः परस्परविरहरूपत्वमेवेत्युक्तत्वात् ॥

*एतेनञ्च—परेणापि प्रातिभासिके ब्रह्मणि प्रपञ्चेऽपि प्रामाणिकत्वस्य स्वीकृतत्वेन तस्यैव सत्त्वरूपत्वेन तत्र तदभावसाधनायोग इति—*निरस्तम्*; सत्त्वस्य त्रिकालाबाध्यत्वरूपत्वेन तस्य प्रपञ्चेऽभावसाधनेनादोषात् ।

### तरङ्गिणी

भावरूपतयैव परस्परविरहरूपता वाच्या। तत्रापि त्रिकाल-सर्वदेशीयनिषेधप्रतियोगित्वादिरूपस्यासत्त्वस्याभावरूपतयाऽसत्त्वात्यन्ताभावः सत्त्वमिति वाच्यम्, तथा सति सिद्धान्तेऽत्यन्ताभावस्यासन्मात्रप्रतियोगिकत्वस्वीकारेणासत्त्वस्यात्यन्तासत्त्वापत्तिः। नच—तार्किकादिमतेन तयोः परस्परविरहरूपत्वाभिधानमिति—वाच्यम्; स्वमते व्याहत्युक्तेरसम्भवापत्तेः, सिद्धान्तेऽप्यसत्त्वाभाव एव सत्त्वमिति स्वीकाराच्च। यद्वक्ष्यति—"मया लाघवादावश्यकत्वादसत्त्वाभाव एव सत्त्वमिति स्वीकारात्, 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेनैकतरनिषेधस्यान्यतरविधिरूपत्वात्, 'माता वन्ध्ये'तिवद् व्याघातः" इति, "मया त्रिकाल-सर्वदेशीयनिषेधाप्रतियोगित्वप्रतियोगित्वे सत्त्वासत्त्वे इति स्वीकाराद्"ि ति च, "सत्त्वासत्त्वे, एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी न, परस्परा-

### सिद्धिव्याख्या

'प्रामाणिकत्वं सत्त्वमि'ति पक्षेऽपि तत्त्वावेदकप्रमाणवेद्यत्वस्यैव प्रामाणिकत्वेन विवक्षिततया प्रत्यक्षादेरतथात्वेन प्रपञ्चे सत्त्वाभावसाधनसंभवाच्च। नच—प्रत्यक्षादेरतत्त्वावेदकत्वस्य प्रपञ्चमिथ्यात्वसिद्ध्यधीनसिद्धिकत्वेनासिद्धिरिति—वाच्यम्; संप्रतिपन्नशुक्तिरजतप्रत्यक्षदृष्टान्तेन प्रत्यक्षादेरतत्त्वावेदकत्वस्य सिद्धत्वेनासिद्ध्यनवकाशात्॥

*एतेन*—तत्त्वावेदकप्रमाणं न तावत् श्रुतिमात्रम्; यागेष्टसाधनत्वादेरपि श्रुतिवेद्यत्वेन सत्त्वापातात्, नापि ब्रह्मपरस्तद्भागः; वियदादेरपि "आत्मन आकाशः संभूतः" इत्यादितथाविधवेदान्तवेद्यत्वेनोक्तदोषतादवस्थ्यादिति—*निरस्तम्; शुद्धब्रह्मपरवेदान्तभागस्य तत्त्वावेदकप्रमाणत्वोक्तौ दोषाभावात्॥

*यत्तु*—तथाविधप्रमाणगम्यत्वातिरिक्तमेव सत्त्वं वाच्यम्; अन्यथा तादृशप्रमाणविषयत्वरूपप्रामाणिकत्वस्यैव सत्त्वरूपत्वे तस्य ब्रह्मणि "सत्यं ज्ञानमनन्तम्" इत्यादिप्रमाणप्रवृत्त्यधीनत्वेनाऽऽत्माश्रयात्—इति, *तन्न*; अस्मादेव बाधकात् 'त्रिकालाबाध्यत्वं सत्त्वमि'त्यतिरिक्तसत्त्वस्याभ्युपगमात्। नच—'प्रामाणिकत्वं सत्त्वमिति पक्षेऽपी'त्यादिना तस्यैव सत्त्वरूपत्वाभ्युपगमात् तेनातिरिक्तसत्ताभ्युपगमो विरुद्ध इति—वाच्यम्; प्रामाणिकत्वस्यैव सत्त्वरूपत्वाभ्युपगमस्य प्रौढिवादाभिप्रायात्; अन्यथा 'परेणापी'त्यादिना त्वयाऽपि प्रामाणिकत्वस्यैव सत्त्वरूपत्वाभ्युपगमेनेदानीमात्माश्रयपरिहारायातिरिक्तसत्त्वं वदतस्तवापि पूर्वोत्तरविरोधापत्तेः, कथंचित् समाधानं तु प्रकृतेऽपि तुल्यम्॥

*वस्तुतस्तु* सत्त्वं न सत्यादिपदघटितवेदान्तविशेषगम्यत्वातिरिक्तम्, किंतु तदेव। नचैवमात्माश्रयः; शुद्धब्रह्मपरवेदान्तगम्यत्वरूपेण तन्निर्वचन आत्माश्रयानवकाशात्। अत एव—ब्रह्मणि नित्यत्व-ज्ञानत्व-प्रकाशत्वानन्दत्वानन्तत्वादिकमप्यतिरिक्तो धर्मः स्यात्, सत्त्ववद् नित्यत्वादेरपि नित्यादिपदघटिततत्तद्वेदान्तवाक्यविशेषगम्यत्वरूपेण निर्वचनसंभवादिति—प्रत्युक्तम्॥

*यत्तु*—प्रमाणविषयत्वं दुर्वारम्, प्रामाणिकत्वमिति वदता प्रमाणाप्रमाणव्यवस्थासिद्धये तद्विषयप्रयुक्त एव तयोर्विशेषो वाच्यः। तथाच सत्स्वरूपविषयकं प्रमाणम्, निःस्वरूपविषयकमप्रमाणमित्येव वाच्यम्; एवं च सत्स्वरूपत्वनिःस्वरूपत्वरूपसत्त्वासत्त्वयोर्नित्यत्वानित्यत्वयोरिव परस्परविरहरूपत्वमेव—इति, *तन्न*; तथा सति प्रातिभासिकरजतादेरप्यपरोक्षतया सत्स्वरूपत्वेन तद्विषयकस्यापि प्रत्यक्षादेः प्रमाणत्वापत्तेः। नच—आहार्यभ्रमविषयीभूतरूप्यादेरनाहार्यभ्रमविषयीभूतरूप्यादेरिवासत्त्वेऽप्यपरोक्षत्वमस्त्विति—वाच्यम्; 'असच्चेद् न प्रतीयेत' इति व्याप्त्यनुपपत्त्याऽनाहार्यभ्रमविषयीभूतरूप्यादेः सत्त्वेनैवापरोक्षत्वे स्थिते तद्दृष्टान्तेनाहार्यभ्रमविषयीभूतरूप्यादेरपि भ्रमकाले प्रातीतिकसत्त्वस्याभ्युपगन्तव्यतया तस्यापि सत्त्वेनैवापरोक्षत्वोपपत्तेः। नच—अनाहार्यापरोक्षभ्रमस्थले विषयसत्त्वमङ्गीकरणीयम्; नत्वाहार्यापरोक्षभ्रमस्थलेऽपीति नियमः कुलधर्मः; अन्याहत्यन्यथानुपपत्त्या विषयसत्त्वाभ्युपगमस्योभयत्र तुल्यत्वात्। नच—आहार्यापरोक्षभ्रमस्थले विरोध्यधिष्ठानतत्त्वसाक्षात्कारे सति, अज्ञानं न संभवति, तदभावे च कथं तत्र प्रातिभासिकरजताद्युत्पत्तिसंभवः? इति—वाच्यम्; अधिष्ठानतत्त्वसाक्षात्कारेणाधिष्ठानांशावरणशक्तिमदज्ञाननाशेऽपि प्रातिभासिकरजतोत्पादकविक्षेपशक्तिमदज्ञानसंभवेन प्रातिभासिकरजताद्युत्पत्तिसंभवात्, शशविषाणादेः सत्स्वरूपताङ्गीकारेऽसत्त्वव्याघातेन बाधकेन लाघवं त्यक्त्वाऽपरोक्षप्रतीतिविषयत्वस्यैव सन्त्वरूपत्वे स्थिते तदभावाच्च

### तरङ्गिणी

त्यन्ताभावरूपत्वात् ; घटत्वाघटत्ववदि''ति च । *ननु*—घटादिसत्त्वं न शशशृङ्गादिगतासत्त्वस्यात्यन्ताभावरूपम्, येन तस्य तुच्छत्वं स्यात्, किन्तु घटादौ भ्रान्तिप्रतिपन्नासत्त्वस्येति—चेत्, *न* ; सत्त्वस्य यदसत्त्वं प्रत्यत्यन्ताभावरूपत्वम्, तत्प्रत्यसत्त्वस्यात्यन्ताभावरूपत्वानुपपत्तेः, निःस्वरूपत्वात्, घटादिगतसत्त्वस्य शशशृङ्गादिगतासत्त्वस्य च विरहयोरेकत्वोक्तौ बाधकाभावाच्च तयोः परस्परविरहरूपत्वाभावस्य त्वयैवोक्तेः, *अत्र ब्रूमः* ; समानसत्ताकयोः परस्परविरहयोर्व्याप्यत्वे सति व्यापकत्वं परस्परविरहरूपत्वम् ; तादृशयोरभावौ नैकत्र सम्भवतः ; घटादौ सत्त्वे सत्यपि शशशृङ्गादिगतासत्त्वस्यात्यन्ताभावो नेति व्यभिचार·

### सिद्धिव्याख्या

शशविषाणादेर्निःस्वरूपत्वसंभवात् । तस्मात् शुक्तिरूप्यादिविषयकप्रत्यक्षादेः प्रमाणत्वापत्तिर्दुर्वारा ॥ *केचित्तु*—देश-कालसंबन्धित्वं सत्त्वम्, निःस्वरूपत्वमसत्त्वम्, इति न सत्त्वासत्त्वयोः परस्परविरहरूपतेति—*वदन्ति* । नच—एतन्मतेऽसङ्गत्वश्रुत्यनुरोधेन ब्रह्मणो देश-कालसंबन्ध शून्यत्वेनासत्त्वापत्तिरिति—वाच्यम् ; वस्तुतस्तच्छून्यत्वेऽपि कल्पितस्य संबन्धस्य तत्र सत्त्वात् । नच—वस्तुतस्तच्छून्यत्वेन नृशृङ्गादेरिव ब्रह्मणो वस्तुतोऽसत्त्वापत्तिरिति—वाच्यम् ; वस्तुतस्तच्छून्यत्वस्य कल्पितसंबन्धप्रतियोगिकतया कल्पिततत्संबन्धवति ब्रह्मणि तत्संभवेऽपि तद्रहिते नृशृङ्गादौ वस्तुतस्तच्छून्यत्वस्याप्यभावात् । नच—नृशृङ्गादावपि देश-कालसंबन्धः कल्प्यतामिति—वाच्यम् ; सत एव सर्वत्र भ्रमाधिष्ठानतया कल्पितत्वेनासतस्तस्याधिष्ठानत्वायोगात् ॥

*अत एव*—देश-कालासंबन्धित्वे ब्रह्मणो नृशृङ्गादेरिव निःस्वरूपत्वापात इति—*निरस्तम्* ; देश-कालसंबन्धित्वस्य कल्पितस्याप्यभावेन नृशृङ्गादेर्निःस्वरूपत्वेऽपि कल्पितस्य तस्य सत्त्वेन तेन ब्रह्मणः सत्स्वरूपत्वोपपत्तेः ॥

*एतेन*—सत्स्वरूपत्वे कालसंबन्धस्य देशसम्बन्धस्य वा तन्त्रत्वात् सत्त्वेन प्रतीतत्वमात्रस्य साधारणतया, ब्रह्मणस्तत्कृतनृशृङ्गादिवैलक्षण्यानुपपत्तिरिति—*परास्तम्* ; तथा सति ते सत्स्वरूपत्व-निःस्वरूपत्वव्यवस्थैवोच्छिद्येत, इत्यतो देश-कालसंबन्धित्वस्यैव तन्त्रत्वे स्थिते, ब्रह्मणस्तत्कृतनृशृङ्गादिवैलक्षण्योपपत्तेः । अत एव प्रातिभासिकस्यापि सत्त्वोपपत्तिः ; प्रातिभासिकरूप्यादेः शुक्त्याद्यधिष्ठानातिरिक्तदेशसंबन्धानङ्गीकारेऽप्यधिष्ठानसम्बन्धसंभवेन सत्त्वोपपत्तेः । नच—'कालत्रयेऽपि इदं रजतं न, नात्र रजतम्' इति बाधकज्ञानेन तत्संबन्धाभावस्यैव सिद्धिरिति—वाच्यम् ; बाधकज्ञानस्य वास्तवसंबन्धित्वविषयत्वेऽपि 'इदं रजतम्' इति प्रतीतिकालीनावास्तवाधिष्ठानदेशसंबन्धित्वाविषयकत्वात् । अत एव देश-कालसंबन्धित्वस्य सत्स्वरूपत्वेऽज्ञाने तत्कार्यभूतवियदादौ च सत्त्वसाधक "तम आसीत" इत्यादिश्रुत्या कालसंबन्धप्रतीतिरुपपद्यते ॥

*यत्तु*—शशविषाणाद्यसद्व्यावृत्तदेश-कालसंबन्धप्रयोजकत्वेन सत्स्वरूपत्वस्यावश्यकत्वे, तदेव सत्त्वम्, तदभाव एवासत्त्वमस्त्विति, *तन्न* ; तवापि मते वियदादिसद्व्यावृत्तदेश-कालासंबन्धित्वप्रयोजकत्वेन निःस्वरूपत्वस्यावश्यकत्वात्, लाघवात् तदेवासत्त्वम्, तदभावः सत्त्वमित्यापत्तेः । नचेष्टापत्तिः ; त्रिकाल-सर्वदेशीयनिषेधप्रतियोगित्वे सत्त्वासत्त्वे इति भवत्सिद्धान्तविरोधात् ॥

*यद्यपि*—देशकालसंबन्धित्वं सत्त्वम्, निःस्वरूपत्वमसत्त्वमिति वदता तदभाव एवासत्त्वव्यवहारप्रयोजको वाच्यः, आवश्यकत्वाविरोधितया तस्यैव तत्त्वौचित्याच्च, नान्यत् ; अतथात्वात्, तथाच कथमेवं सति सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वमिति न जानीम इति ? *तन्न* ; सत्त्वासत्त्वव्यवहारप्रयोजकयोः परस्परविरहरूपत्वेऽपि तत्प्रयोज्ययोर्व्यवहारयोर्विषयीभूतसत्त्वासत्त्वयोरपि परस्परविरहरूपत्वमित्यत्र नियामकाभावात्, नहि प्रयोजकस्य प्रयोज्यविषयस्य चैकरूपत्वनियमोऽस्तीति ॥

*वस्तुतस्तु* सत्त्वासत्त्वयोः परस्परविरहरूपत्वेऽपि प्रपञ्चे न तदुभयाभावसिद्धिविरोधः, यत्र घटादिसत्त्वम्, तत्र न तदत्यन्ताभावाधिकरणत्वम्, 'यत्र तदधिकरणत्वम्, तत्र न घटाधिकरणत्वमि'ति सहचारदर्शने सत्यपि घटात्यन्ताभावे तदुभयानधिकरणत्ववत्, 'यत्र सत्त्वाधिकरणत्वम्, तत्र न तदत्यन्ताभावाधिकरणत्वम्, यत्र तदत्यन्ताभावा·

### न्यायामृतम्

**निर्धर्मकब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तराच्च ।**

### अद्वैतसिद्धिः

*यत्तु(च्च)*—निर्धर्मकस्य ब्रह्मणः सत्त्वराहित्येऽपि सद्रूपत्ववत् प्रपञ्चस्य सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तरमुक्तम्, *तन्न* ; एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत् प्रपञ्चस्य प्रत्येकं सत्स्वभावताकल्पने मानाभावात् ।

### तरङ्गिणी

वारणाय समानसत्ताकेति विरहविशेषणम्, अभेदेऽपि व्याप्य-व्यापकभावोऽस्त्येव । एवञ्च न शशशृङ्गादिगतासत्त्वस्यासत्त्वापत्तिरिति ॥

*निर्धर्मकेति* ॥ उभयाभावसाधनेऽपि ब्रह्मवत् सद्रूपत्वानुपमर्दादित्यर्थः । *ननु*—"एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत् प्रत्येकं प्रपञ्चस्य सत्स्वभावताकल्पने मानाभावात्, अनुगतव्यवहाराभावप्रसङ्गाच्च ; सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम्, तथाचोभयात्मकत्वे, अन्यतरात्मकत्वे वा

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*सत्स्वभावता=सदाकारबुद्धौ विशेषणता । *ननु*—सा ब्रह्मण एवास्तु, तथापि प्रपञ्चस्योक्तरीत्या

### न्यायामृतसौगन्ध्यम्

'निर्धर्मक' इत्याद्ययुक्तम् ; एकेनैव सर्वानुगतेन सत्त्वेन सर्वत्र सत्प्रतिपत्त्युपपत्तौ ब्रह्मवत् प्रत्येकं प्रपञ्चस्य सत्स्वभावताकल्पने मानाभावात्, अनुगतव्यवहाराभावप्रसङ्गाच्च ॥

### सिद्धिव्याख्या

धिकरणत्वम्, तत्र न सत्त्वाधिकरणत्वमि'ति सदाचारदर्शने सत्यपि प्रपञ्चे तदुभयाभावाधिकरणत्वसंभवात् । नच—'घटात्यन्ताभावे घटो ने'त्यबाधितप्रतीत्या घटात्यन्ताभावस्यापि घटात्यन्ताभावाधिकरणत्वेन दृष्टान्तासम्मतिरिति—वाच्यम् ; अभावस्याभावाधिकरणत्वे भावाभावोभयानधिकरणत्वाभ्युपगमविरोधात् । नच—अभावप्रतियोगिकाभावाभ्युपगमवद् 'अभावेऽभावो ने'त्यभ्युपगमस्य सजातीयाधिकरणातिरिक्ताभावविषयकत्वमिति—वाच्यम् ; तर्हि घटात्यन्ताभावाधिकरणस्यैव घटात्यन्ताभावाधिकरणत्वोक्त्याऽऽत्माश्रयात् । नच—प्रमेयत्वे प्रमेयत्ववद् दृश्यत्वमिथ्यात्वयोर्दृश्यत्व-मिथ्यात्ववत् सिद्धविषयत्वेनात्माश्रयो न दोष इति—वाच्यम् ; उदाहृतस्थले स्वाभ्युपगमानुसारेण तत्पारोपत्त्वेऽप्यभावाधिकरणकत्वानभ्युपगमेन तत्रात्माश्रयस्य दोषत्वादित्यलम् ॥

*परमार्थतस्तु* सत्त्वमेव दृष्टान्तः ; तत्र सत्त्वासत्त्वोभयाभावसत्त्वात्, सत्त्वस्य सत्त्वाधिकरणकत्वाभ्युपगम आत्माश्रयात्, असत्त्वाधिकरणत्वाभ्युपगमेऽसत्त्वापत्तेरिति दिक् ॥

पूर्वोक्तार्थान्तरत्वं निराकर्तुमनुवदति—*यत्त्विति* । *अर्थान्तरमुक्तमिति* ॥ उभयाभावासाधनेऽपि ब्रह्मवत् सद्रूपत्वानुपमर्दादित्यर्थः । *ननु* ब्रह्मवत् प्रपञ्चस्य सद्रूपत्वं मानाभावाच्च सद्रूपत्वेनाप्युपपत्त्याऽर्थान्तरता । नच—'सन् घटः' इत्यादिबुद्धिरेव मानमिति—वाच्यम् ; एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ प्रपञ्चस्य प्रत्येकं सत्स्वभावतां विना तदनुपपत्त्यभावादित्यभिप्रेत्यार्थान्तरतां निराकरोति—*एकेनैवेति* ॥

नच—रजतं विना शुक्तौ रजतप्रतीतिव्यवहारादेर्दर्शनात् सत्पदार्थं विनाऽपि सत्प्रतीत्यादेरुपपत्तावतिलाघवम्, इति,

### विट्ठलेशीयटिप्पणी

अर्थान्तरं दूषयितुमनुवदति—*यच्चेति* ॥ *एकेनैवेति* ॥ सद्रूपेण ब्रह्मणेति शेषः । *सर्वत्रानुगतेन*=तादात्म्यसम्बन्धेन सर्वसंबद्धतया विशेषणतया भानार्हेण । *सर्वत्र *सत्प्रतीतिः='घटः सन्' इत्यादिप्रतीतिः । *प्रत्येकमिति* ॥ तथाचैवं कल्पने गौरवं न प्रामाणिकं स्यादिति भावः । टीकायाम्—*सदाकारबुद्धिः=घटः सन् इत्यादिबुद्धिः ।

तरङ्गिणी

तादृग्भेदाभावेन ताभ्यामर्थान्तरानवकाश इति—चेत्, *मैवम्*; रजतं विनाऽपि शुक्तौ रजतप्रतीतिव्यवहारादिदर्शनात् सत्पदार्थं विनापि सत्प्रतीत्यादेरुपपत्तावुक्तलाघवम्, इति ब्रह्मापि सद्रूपं न सिद्ध्येयत्। प्रमितत्वाद् ब्रह्म सद्रूपमिति तु जगत्यपि तुल्यम्। एतेन—अनेकसत्कल्पनरूपबाधकतर्कसहकृतसत्त्वाभावानुमानमेव सद्रूपत्वाभावेऽपि पर्यवस्यति, इति न सद्रूपत्वेनार्थान्तरमिति—निरस्तम्; तर्कस्य प्रमितसद्रूपत्वानपवादकत्वात्, अन्यथा सत्त्वाभावानुमानस्य लाघवेन प्रातीतिकसत्त्वाभावेऽपि पर्यवसाने जगत् शून्यमेव स्यादिति साधूक्तम्—"अर्था-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सद्रूपता किमिति न स्यात्? इति—चेत्, *न*; यतः प्रपञ्चे तस्याः स्वीकारे तार्किकादिमते 'घटः सन्नि'त्याकारप्रत्यये शुद्धसत्ताया विशेषणत्वादन्यैरपि तादृशप्रत्यये शुद्धसत एव तादात्म्येन विशेषणत्वं वाच्यम्, तथाच प्रपञ्चे बाध्यत्वाभाववैशिष्ट्यं नोक्तप्रत्ययेन सिद्ध्यति। नापि 'घटोऽबाध्यः' इत्यादिप्रत्ययेन; तस्याबाध्यब्रह्मतादात्म्यविषयकत्वेनाप्युपपत्तावबाध्यत्व-प्रपञ्चयोर्वैशिष्ट्यविषयकत्वे मानाभावात्। नच विनिगमकाभावः;

न्यायामृतकण्टकोद्धारः

स्यादिति—वाच्यम्; दण्डविशिष्टदेवदत्ताभावे दण्डस्य प्रतियोगितावच्छेदकत्वेनाप्रतियोगित्ववद्सत्त्वस्य प्रतियोगितावच्छेदकत्वाद् न प्रतियोगित्वमिति नात्यन्तासत्त्वापत्तिरिति॥ नचैवम्—स्याद्इत्युद्भावनं न

सिद्धिव्याख्या

ब्रह्मापि सद्रूपं न सिद्ध्येदिति—वाच्यम्; प्रमितत्वाद् ब्रह्मणः सद्रूपत्वेऽपि जगतस्तदभावे सद्रूपत्वायोगात्, जगति प्रत्यक्षयोग्यसत्त्वानिरुक्त्या सद्रूपत्वप्रतीतेर्भ्रमत्वस्य वक्ष्यमाणत्वात्॥

अत एवानेकसत्कल्पनरूपबाधकतर्कसहकृतसत्त्वाभावानुमानमेव सद्रूपत्वाभावेऽपि पर्यवस्यति, इति न सद्रूपत्वेनार्थान्तरमित्यपि साधु; (?) करणस्याप्रमितसद्रूपत्वापवादकत्वात्। नच—सत्त्वाभावानुमानस्य लाघवेन प्रातिभासिकसत्त्वाभावेऽपि पर्यवसाने जगत् शून्यमेव स्यादिति—वाच्यम्; अस्मादेव बाधकाद् लाघवं हित्वा पारमार्थिकसत्त्वाभाव

विट्ठलेशीयटिप्पणी

*सद्रूपता*=अबाध्यरूपता। *किमितीति*॥ कुतो बाधकादित्यर्थः। तथाच बाधकाभावः स्यादेवेति भावः। साधकाभाव एव प्रपञ्चस्य सद्रूपत्वे बाधक इत्याशयेन समाधत्ते—*नेति*॥ *ननु* 'घटः सन्' इत्यादिप्रत्यय एव घटादावबाध्यरूपं घटमेव विशेषणतयाऽवगाहमानो घटस्य सद्रूपत्वे साधक इत्याशङ्कां परिहरति—*यत इति*॥ *तस्याः*=सद्रूपतायाः। *स्वीकारे*=स्वीकारेऽपि। *अन्यैः*=घटादौ सत्त्वरूपधर्माभावमुपगच्छद्भिः। *शुद्धसत एवेति*॥ शुद्धसद्रूपब्रह्मण एवेत्यर्थः; 'शुद्धसदाकारेणे'त्युत्तरग्रन्थात्। एवकारेण सद्रूपतयाऽभ्युपगम्यमानस्य घटस्याबाध्यत्वाख्यसत्त्वरूपधर्मस्य च विशेषणत्वव्यवच्छेदः; प्रत्येकं घटादेर्विशेषणत्वे गौरवात्, अनुगतव्यवहाराभावप्रसङ्गाच्च, अबाध्यत्वरूपधर्मस्य चानुपगमात्। *वाच्यमिति*॥ 'सा ब्रह्मण एवास्तु' इत्यनेन स्वयोपगतं चेति शेषः। *ननु* 'घटः सन्' इति प्रत्ययेनैव बाध्यत्वाभावरूपसत्त्ववैशिष्ट्यं घटादेः सिद्ध्यति, तेन च सद्रूपत्वम्, इत्यत आह—*तथाचेति*॥ 'घटः सन्' इति प्रत्यये शुद्धसद्रूपब्रह्मण एव तादात्म्येन विशेषणत्वे चेत्यर्थः। *बाध्यत्वाभावेति*॥ कालाद्यवच्छिन्नेत्यादिः। *उक्तप्रत्ययेन*='घटः सन्' इत्यादिप्रत्ययेन। *प्रत्ययेनेति*॥ प्रपञ्चे बाध्यत्वाभाववैशिष्ट्यं सिद्ध्यतीत्यनुषङ्गः। *ननु* घटादिप्रपञ्चस्य बाध्यतापि नास्ति, नचाबाध्यत्वरूपसत्त्वाभावस्य बाध्यत्वव्याप्तिभङ्गप्रसङ्गः; ब्रह्मणि व्यभिचारवारणाय व्याप्यकोटौ बाध्यत्वे बाधकाभावस्य प्रवेशात्। ब्रह्मणि श्रुतिप्रमितत्व-साक्षित्वादेरिव प्रपञ्चेऽपि 'अयं घटः' इत्यादिप्रत्यक्षप्रमितत्वस्य बाध्यत्वबाधकस्य सत्त्वादित्युक्तम्। एवं च 'घटोऽबाध्यः' इति प्रत्ययस्य घटेऽबाध्यत्वरूपसत्त्वावगाहित्वमावश्यकम्; अन्यथा बाध्याबाध्याभ्यां घटादेस्तृतीयप्रकारतापत्तेः, नहि प्रतीयमानस्य सद्विन्नमित्याशङ्कां परिहरति—*नापीति*॥ *प्रामाण्यबलेन*=

न्यायामृतम्

पृथिवी, इतरभिन्ना, पृथिवीत्वात्, इत्यत्र त्रयोदशान्योन्याभावानामिवात्रापि सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावयोः प्रत्येकं प्रसिद्धत्वेन कथंचिदप्रसिद्धविशेषणत्वाभावेऽप्यसत्त्वात्यन्ताभावांशे सिद्ध-

अद्वैतसिद्धिः

अनुगतव्यवहाराभावप्रसङ्गाच्च ॥

तरङ्गिणी

न्तराच्चे"ति । सदसदुभयान्योन्याभावस्य साध्यतायां तु व्याहति-साध्यवैकल्यादिदोषोऽस्त्येव ॥ *त्रयोदशेति* ॥ अभावमनन्तर्भाव्य त्रयोदशत्वं बोध्यम् ॥ *कथञ्चिदिति* ॥ अनुमितिविषयस्योभयाभावरूपस्य साध्यस्यैकस्मिन्नधिकरणे प्रसिद्ध्यभावेऽपि प्रत्येकाधिकरण उभयाभावप्रसिद्धिरस्तीत्यर्थः ॥ *असत्त्वात्यन्ताभावांश

न्यायामृतकण्टकोद्धारः

स्यात्; असत्त्वाभावस्यासत्त्वसंसर्गप्रतियोगिकत्वेन सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावादिति—वाच्यम्; परस्परसंसर्गाभावव्याप्यतया 'सत्त्वसंसर्गाभावेऽसत्त्वसंसर्गापत्तिरसत्त्वसंसर्गाभावे सत्त्वसंसर्गापत्तिरि'ति व्याहत्युद्भावनस्य सम्भवात्। अत एव सिद्धान्ते 'घटो नास्ती'त्यत्र घटस्य प्रामाणिकत्वेनात्यन्ताभावप्रतियोगित्वासम्भवेऽपि घटसंसर्गस्य प्रतियोगित्वमास्थितम्। एवमेव मूलकोशोऽपि व्याख्यातव्य इति ॥

*कथञ्चिदप्रसिद्धेति* ॥ अभावद्वयस्यैकस्मिन्नधिकरणे प्रसिद्ध्यभावेऽपि भिन्नाशये प्रसिद्धत्वादित्याशयेन कथञ्चिदित्युक्तमिति भावः ॥ *असत्त्वात्यन्ताभावांश इति* ॥ *ननु*—यत्तावच्छेदकावच्छेदेनोद्देश्यसिद्धौ हि सिद्धसाधनता, एवं च प्रकृत उभयाभावगोचरसमूहालम्बनानुमितेरुद्देश्यत्वेन नांशतः सिद्धसाधनम्; उद्देश्यायाः समूहालम्बनानुमितेरजातत्वात्, अनुमितिद्वयोद्देश्यत्वे च सिद्धसाधनमेव, नांशतः

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शुद्धसदाकारपूर्वोक्तप्रत्ययसिद्धस्य ब्रह्म-प्रपञ्चतादात्म्यस्यैवैतत्प्रत्ययविषयत्वसंभवेनोक्तवैशिष्ट्यस्य तद्विषयताकल्पने गौरवस्यैव विनिगमकत्वात्, नापि प्रत्यक्षादीनां स्वतःप्रामाण्यबलेन तत्कल्पनम्; प्रत्यक्षादीनां व्यावहारिकमेव प्रामाण्यमित्यस्य वक्ष्यमाणत्वात्। *ननु*—सदाकारप्रत्ययो यदा द्रव्यादौ, तदा तत्र समवायेन सत्ताजातिर्विशेषणमस्तु; यदा द्रव्यत्वादौ, तदा सामानाधिकरण्यसम्बन्धेन सा तथाऽस्तु; तथाच कथं ब्रह्मण एव तथात्वम्? तत्राह—*अनुगतेति* ॥ सम्बन्धांशेऽप्यनुगताकारेत्यर्थः ॥

सिद्धिव्याख्या

एव पर्यवसानस्यावश्यकत्वादिति साधूक्तम्—नार्थान्तरतेति। बाधकसद्भावाच्च न प्रपञ्चस्य सद्रूपतेत्याह—*अनुगतव्यवहाराभावेति* ॥ नच—तस्यानुगतजातिविषयत्वेनोपपत्तिरिति—वाच्यम्; तस्या निरसिष्यमाणत्वादिति भावः ॥

विट्ठलेशीयटिप्पणी

प्रामाण्यभङ्गभयेन बाध्यत्वस्वीकारासम्भवेन। *तत्कल्पनम्*='घटोऽबाध्यः' इत्यादिप्रतीतेर्घटादावबाध्यत्वरूपसत्त्वावगाहित्वकल्पनम्। *वक्ष्यमाणत्वादिति* ॥ तथाच श्रुतिरूपपारमार्थिकप्रमाणप्रमितत्वस्यैव बाध्यत्वबाधकतया प्रपञ्चे तदभावेन प्रकृतमिथ्यात्वरूपसाध्यघटकाबाध्यत्वरूपं सत्त्वाभावमुपगम्य बाध्यत्वानङ्गीकारे उक्तव्याप्तिभङ्गप्रसङ्गः, इति प्रपञ्चस्य बाध्यत्वमावश्यकम्, इति नार्थान्तरं प्रकृतानुमान इति भावः। *ननु* मूले 'अनुगते'त्यादिना प्रत्येकं प्रपञ्चस्य सदाकारबुद्धौ विशेषणत्वे प्रकारांशेऽनुगतव्यवहारानुपपत्तिरुक्ता, सा च न युक्ता; सत्ताजातेरेव सदाकारबुद्धौ सम्भवत्सम्बन्धेन विशेषणत्वोपगमेनानुगतव्यवहारोपपादनसम्भवात्, इत्यतस्तादृशमूलं तादृशशङ्कानिराकरणपरतयापि व्याख्यातुं तादृशशङ्कयाऽवतारयति—*नन्विति* ॥ *सम्बन्धांशेऽपीति* ॥ अपिना प्रकारांशे। ब्रह्मणस्तादात्म्येन विशेषणत्वोपगमे तूभयांशेऽप्यनुगतव्यवहारोपपत्तेर्ब्रह्मण एव तथात्वमिति भावः ॥

न्यायामृतम्

साधनाच्च । नहि सिद्धमसिद्धेन सहोच्चरितमसिद्धं भवति ॥ 'पृथिवीं, इतरभिन्ने'त्यत्र तु जलाद्येकैका-

अद्वैतसिद्धिः

सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम् । तथाचोभयात्मकत्वेऽन्यतरात्मकत्वे

तरङ्गिणी

इति* ॥ यथा पक्षतावच्छेदकनानात्वे क्वचिदधिकरणे पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेर्जातत्वात् तत्पक्षांशे सिद्धसाधनम्, तथा साध्यतावच्छेदकनानात्वेऽपि सिद्धसाध्यांशे सिद्धसाधनमेव ; साध्यतावच्छेदकावच्छिन्नस्य पक्षतावच्छेदकावच्छेदेन सिद्धिरूपस्य सिद्धसाधनबीजस्योभयत्रापि तुल्यत्वादित्यर्थः ॥

न्यायामृतकण्टकोद्धारः

सिद्धसाधनम् ; तथाचांशतः सिद्धसाधनोद्भावनमयुक्तम्—इति, *मैवम्* ; साध्यतावच्छेदकनानात्वेन साध्यतावच्छेदकावच्छिन्नस्यैकस्य साध्यस्य पक्षतावच्छेदकावच्छेदेन सिद्धौ सिद्धसाधनं स्यादेव । नच—समूहालम्बनानुमितेरुद्देश्यत्वादुद्देश्यासिद्धौ कथं सिद्धसाधनमिति—वाच्यम् ; प्रत्येकानुमितेरुद्देश्यत्वेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उक्तमर्थान्तरं स्वीकृत्यापि तद्वारणायाह—*सत्प्रतियोगिकेत्यादि* ॥ *भेदेति* ॥ आत्यन्तिकभेदेत्यर्थः । *उभयात्मकत्व इति* ॥ 'भ्रमविषयीभूतालीकसंसर्गविशिष्टादिरूपेण प्रपञ्चोऽलीकः, रूपान्तरेण तु सत्यः' इति न्यायटीकाकारवाचस्पत्युक्तपक्ष इत्यर्थः । *अन्यतरात्मकत्व इति* ॥ भ्रमविषयोऽपि

न्यायामृतसौगन्ध्यम्

सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम् ; तथा चोभयात्मकत्वेऽन्यतरात्मकत्वे वा

सौगन्ध्यविमर्शः

प्रतीतिविषयत्वं न सत्त्वेन प्रतीतिप्रयोजकम्, किन्तु विकल्पान्यप्रतीतिविषयत्वमेव । तथाच नासतो विकल्पाख्यप्रतीतिगोचरस्यापि सत्त्वेन प्रतीत्यापत्तिः । वस्तुतस्तु—असत्त्वापादकाद्यज्ञाननिवर्तकत्वस्यैव ज्ञानत्वव्यवहारप्रयोजकत्वाद् विकल्पाख्यवृत्तेर्मनःपरिणामरूपाया अपि न प्रतीतित्वं धर्माधर्मादीनामिव, इति न प्रतीयमानत्वमप्यसतोऽङ्गीक्रियते मुख्यम् ; असतोऽज्ञानापरिणामत्वेन घटादीनामिवाज्ञानविषयतानवच्छेदकत्वात् । "असदेवेदमग्र आसीत्" इत्यादिवाक्यानां तु गतिर्बहुधा सिद्धिव्याख्यायां प्रदर्शितेति न पिष्टपेषणार्थं यतामहे ॥

सिद्धिव्याख्या

सदसदुभयान्योन्याभावस्य साध्यतायां तु न व्याहति-साध्यवैकल्यार्थान्तरत्वानीत्याह—*सत्प्रतियोगिकेति* ॥ एकैकप्रतियोगिकान्योन्याभावसाध्यतायामेकैकरूपत्वेनार्थान्तरता-सिद्धसाधने स्याताम्, अत उभयप्रतियोगिकभेदद्वयं साध्यमित्युक्तम्, एवं च फलितमाह—*तथाचेति* ॥ *तादृग्भेदासंभवेनेति* ॥ सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयासंभवेनेत्यर्थः । *उभयात्मकत्वे—सदात्मके सत्प्रतियोगिकभेदस्यासदात्मकेऽसत्प्रतियोगिकभेदस्य चासंभवादिति

विट्ठलेशीयटिप्पणी

*स्वीकृत्येति* ॥ उक्तव्याप्त्यप्रयोजकत्वशङ्कयेति भावः । *ननु* प्रपञ्चस्य सदसदुभयरूपतामते सद्भेदासद्भेदयोरप्यवच्छेदकभेदेन तत्र सत्त्वात् सिद्धसाधनम्, अत आह—*आत्यन्तिकेति* ॥ सदाद्यवृत्तीत्यर्थः । *भ्रमविषयीभूतालीकसंसर्गविशिष्टादिरूपेण प्रपञ्चोऽलीक इति* ॥ 'इदं रजतमि'त्यादिभ्रमेषु सत्ये धर्मिणि सत्यमेव हि दूरस्थं रजतादिकमलीकसम्बन्धेन भासते, तत्र स्वरूपतः सत्ययोरपीदं-रजतयोरलीकसंसर्गविशिष्टरूपेणासत्यत्वम्, संसर्गविशिष्टत्वं प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन ; संसर्गविशिष्टत्वमिव तादात्म्यसम्बन्धेन स्वरूपसम्बन्धेन संसर्गविशिष्टमपि रजतादे रूपम् । तन्मते ब्रह्मणि प्रपञ्चस्यालीकसम्बन्धेन भ्रम इति न भ्रमितव्यम् ; इदमि रजतत्वेन तत्र तत्तत्पदार्थानां भ्रमानादायैव सर्वस्यापि प्रपञ्चस्यालीकतोपपत्तेः । *रूपान्तरेणेति* ॥ इदंत्व-रजतत्वादिना प्रमाविषयीभूतसत्य-

अद्वैतसिद्धिः

वा तादृग्भेदासंभवेन ताभ्यामर्थान्तरतानवकाशः। नच—असत्त्वव्यतिरेकांशस्यासद्भेदस्य च प्रपञ्चे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

संसर्गो देशान्तरस्थत्वात् सत्यः, इति प्रपञ्चः सत्य एवेत्यन्यपक्षे, ज्ञानातिरिक्तरूपेणालीक एव प्रपञ्चो विकल्प इति पक्षे चेत्यर्थः। *अनवकाश इति*॥ सत्त्वाभावस्य केवलप्रपञ्चे सत्त्वस्य तदुपहितप्रपञ्चे च स्वीकारे सत्त्वोपहितप्रपञ्चस्य केवलप्रपञ्चे तादात्म्यसत्त्वाद् न तत्रैकान्तिकः सद्भेद इति भावः॥

न्यायामृतसौगन्ध्यम्

तद्भेदासंभवेन ताभ्यामर्थान्तरानवकाश इति—चेत्, *न*; असतः प्रतीत्यङ्गीकारे क्वचिदुपाधौ सत्त्वेनापि प्रतीतेस्संभवात्॥

*यत्तु* सत्त्वेन प्रतीयमानत्वं सत्तादात्म्यम्, आध्यासिकसम्बन्धेन तत्र-तद्वत्त्वान्यतरवत्त्वम्, अपरोक्षत्वं वा। अस्ति च सत्तादात्म्यं सत्तादात्म्यभिन्ने, तत्त्वं च स्वस्मिन्। नित्यातीन्द्रियमपीश्वरापरोक्षमेवेति, *तन्न*; भ्रमविषयापरोक्ष्यसत्त्वेऽपि परोक्षभ्रमविषये सत्तादात्म्यस्यापरोक्ष्यस्य चाभावात्, ईश्वरस्य तु सत्त्वेन तत्प्रतीतौ भ्रान्तत्वापत्तेः। तस्मात् सत्त्वासत्त्वयोः परस्परविरहरूपत्वमेव, इति तुल्या व्याहतिः॥

सौगन्ध्यविमर्शः

असत्त्वापादकाज्ञानविषयत्वयोग्यत्वमेव सत्तादात्म्यप्रयोजकम्, न त्वपरोक्षत्वम्। अत एव परोक्षस्थलेऽपि 'वह्निरस्ती'ति सत्तादात्म्यप्रतीतिरुपपद्यते। असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यं खलु परोक्षापरोक्षसाधारण-

सिद्धिव्याख्या

भावः। *ताभ्यामिति*॥ उभयात्मकत्वान्यतरात्मकत्वाभ्यामित्यर्थः। *अर्थान्तरतानवकाश इति*॥ सिद्धसाधन-साध्यवैकल्ययोरपि नावकाश इति द्रष्टव्यम्। *नचासत्त्वेति*॥ यथा पक्षतावच्छेदकनानात्वे क्वचिदधिकरणे पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेर्जातत्वात् तत्पक्षांशे सिद्धसाधनम्, तथा साध्यतावच्छेदकनानात्वेऽपि सिद्ध-

विट्ठलेशीयटिप्पणी

संसर्गविशिष्टरूपेणेत्यर्थः। *ज्ञानातिरिक्तरूपेणेति*॥ अभेदस्तृतीयार्थः। ज्ञानादत्यन्तभिन्नः प्रपञ्चोऽलीक एवेत्यर्थः। साकारवादिबौद्धमतमिदम्। तन्मते हि 'अयं घटः' इत्यादिविज्ञानेषु बाह्योऽर्थो घटादिर्न भासते, किन्तु विज्ञानमेव; स्वप्नविज्ञानवत्। तदुक्तं शास्त्रदीपिकायां तर्कचरणे—

"ज्ञानमेवैवमाकारमात्मना प्रथते कुतः। नाप्रत्यक्षस्य तस्यास्ति प्रमाणान्तरतो गतिः॥
संवेद्यत्वाच्च नीलादेर्ज्ञानाकारत्वनिश्चयः। अर्थान्तरस्य च ग्राह्यलक्षणं युज्यते न हि॥" इति।

ज्ञानाकारः=ज्ञानस्य तादात्म्यसम्बन्धेन धर्मो विषयितास्थानीयः, तादात्म्यं च भिन्नाभिन्नयोरेव, इति ज्ञानादत्यन्तभिन्नो विषयोऽलीक एव, इति तत्रैव विस्तरेण निरूपितम्॥ *ननु* ज्ञानातिरिक्तप्रपञ्चस्यालीकत्वे तदनुभवविरोध इत्याशङ्क्योक्तम्—*विकल्प इति*॥ प्रपञ्चस्य ज्ञानादत्यन्तभिन्नत्वावगाहिनी वृत्तिस्तु विकल्परूपेति भावः। *इत्यर्थ इति*॥ तथाच सद्भेदानिवेशे प्रथमे पक्षेऽसद्भेदानिवेशे द्वितीये पक्षेऽर्थान्तरम्, अतस्तदुभयं निवेश्यमिति भावः। अन्यतरात्मकत्वेऽर्थान्तरानवकाशस्य यथाश्रुतेऽपि संभवाद् वाचस्पत्युक्तोभयात्मकत्वपक्षे व निरवच्छिन्नविशेषणतासंबन्धस्य साध्यतावच्छेदकसंबन्धत्वोपगमेनापि संभवादात्यन्तिकत्वं साध्यविशेषणं व्यर्थमित्याशङ्कानिराकरणाय प्रकारान्तरेणोभयात्मकत्वपक्षं प्रदर्श्य, तत्र तादृशविशेषणबलेनार्थान्तरानवकाशमुपपादयति—*सत्त्वाभावस्येति*॥ सद्भेदस्येत्यपि बोध्यम्। *तदुपहितेति*॥ सत्त्वोपहितेत्यर्थः। *तादात्म्यसत्त्वादिति*॥ केवलप्रपञ्चनिष्ठसद्भेदस्य सद्वृत्तित्वादिति शेषः। *ऐकान्तिकः=सदवृत्तिः। *इति भाव इति*॥ एवं च सद्-

तरङ्गिणी

*ननु*—साध्यतावच्छेदकनानात्वेऽप्युभयाभावगोचरसमूहालम्बनरूपैकानुमित्युद्देशेन नांशतः सिद्धसाधनम्; असत्त्वात्यन्ताभावांशेऽप्युद्देश्यायाः समूहालम्बनरूपायाः सिद्धेरजातत्वात्, अनुमितिद्वयोद्देशे च सिद्धसाधनमेव, नांशतः सिद्धसाधनम्। नचैवम्—पक्षतावच्छेदकनानात्वेऽप्युक्तविधया नांशतः सिद्धसाधनमिति—वाच्यम्; इष्टापत्तेरिति—चेत्, *सत्यम्*; समूहालम्बनानुमित्युद्देश्यत्व एव तस्या असत्त्वाभावांशे पक्षतावच्छेदकावच्छेदेन सिद्धं यत् साध्यतावच्छेदकावच्छिन्न साध्यम्, तद्विषयकसिद्धिरूपत्वेन सिद्धसाधनत्वाभिधानमित्यदोषः॥

*ननु*—अपेक्षाबुद्धिविषयत्वादेर्व्यासज्यवृत्तिधर्मस्य साध्यतावच्छेदकतायां नांशतस्सिद्धसाधनम्, अत एवानुपदमेव वक्ष्यति—साध्यतावच्छेदकैक्याद् नांशे सिद्धसाधनमितीति—चेत्, *सत्यम्*; तत्र व्याहत्यादिरेव दोषो बोध्यः। *ननु*—साध्यकोटिनिविष्टस्यासत्त्वात्यन्ताभावस्य पक्षे सिद्ध्या यदि सिद्धसाधनम्, तदा 'पृथिवी, इतरभिन्ने'त्यत्र त्रयोदशान्योन्याभावानामपि 'घटो न जलादिरि'ति प्रतीत्या घटादौ सिद्धेः सुतरां

न्यायामृतकण्टकोद्धारः

समूहालम्बनानुमितेरुद्देश्यत्वाभावात्। नच—तथात्वे संपूर्णसिद्धसाधनस्यैव सम्भवेन कथमंशतः सिद्धसाधनाभिधानमिति—वाच्यम्; साध्यद्वय एकसाध्यस्य सिद्धत्वाभिप्रायेण तथाऽभिधानात्॥

अन्ये तु—समूहालम्बनानुमितेरुद्देश्यत्व एव तस्या असत्त्वात्यन्ताभावांशे पक्षतावच्छेदकावच्छेदेन सिद्धं यत् साध्यतावच्छेदकावच्छिन्नं साध्यम्, तद्विषयसिद्धिरूपत्वेन सिद्धसाधनत्वाभिधानमित्यदोषः—इत्याहुः, तन्न; समूहालम्बनानुमितेरसत्त्वात्यन्ताभावांशे पक्षतावच्छेदकावच्छेदेन सिद्धं यत् साध्यतावच्छेदकावच्छिन्नं साध्यम्, तद्विषयसिद्धिरूपत्वेऽप्युद्देश्यायाः समूहालम्बनरूपसाध्यसिद्धेरजातत्वेनांशतः सिद्धसाधनाभिधानासम्भवात्, अन्यथा पक्षतावच्छेदकनानात्वे समूहालम्बनरूपानुमितावुद्देश्यायामप्यंशतः सिद्धसाधनापत्तेः; तत्रापि समूहालम्बनरूपानुमितेः पक्षतावच्छेदकावच्छेदेन सिद्धं यत् साध्यतावच्छेदकावच्छिन्नं साध्यम्, तद्विषयसिद्धिरूपत्वात्। तस्माद् यत्किञ्चिदेतत्॥

न्यायामृतसौगन्ध्यम्

किञ्च सद्रूपप्रतियोगिकत्वविशिष्टतादात्म्यस्य सद्रूपेऽभावेन तस्यासत्त्वापत्तिः, इष्टापत्तौ तत्सत्त्वबोधक'सत्यमि'त्यादिश्रुतीनामप्रामाण्यापत्तेः। 'एकेनैवे'त्याद्ययुक्तम्; घटादितादात्म्यापन्नस्य सतः

सौगन्ध्यविमर्शः

जानातिपदार्थः। तथाच परोक्षस्यापि सत्तादात्म्यं वर्तत एव। "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि"ति सिद्धान्ताद् गुरुत्वादीनामपि नापरोक्षत्वं बाधितम्। ईश्वरस्यापि सत्त्वेन प्रतीत्यङ्गीकारे न किमपि बाधकम्। नचेश्वरस्य सत्त्वेन गुरुत्वादिप्रतीतौ भ्रान्तत्वापत्तिः; किं परमार्थतोऽसतः परमार्थतः सत्त्वेन प्रतीतिमादायेयमापत्तिः? उत व्यावहारिकासतो व्यावहारिकसत्त्वेन? उतात्यन्तासतः सत्त्वमात्रेण? नाद्यः; गुरुत्वादीनां पारमार्थिकसत्त्वेनेश्वरप्रतीत्य-

सिद्धिव्याख्या

साध्यांशे सिद्धसाधनमेव; साध्यतावच्छेदकावच्छिन्नस्य पक्षतावच्छेदकावच्छेदेन सिद्धिरूपस्य सिद्धसाधनताबीजस्योभयत्रापि तुल्यत्वादित्यर्थः। *ननु*—साध्यतावच्छेदकनानात्व उभयाभावगोचरसमूहालम्बनरूपैकानुमित्युद्देशेन नांशतः सिद्धसाधनम्; असत्त्वात्यन्ताभावांशेऽप्युद्देश्यायाः समूहालम्बनरूपायाः सिद्धेरजातत्वात्, अनुमितिद्वयोद्देशे च सिद्धसाधनमेव, नांशतः सिद्धसाधनम्, नचैवम्—पक्षतावच्छेदकनानात्वेऽप्युक्तविधया नांशतः सिद्धसाधनमिति—वाच्यम्; इष्टापत्तेरिति—चेत्, *सत्यं समूहालम्बनानुमित्युद्देश्यत्वमेव*; तथापि तस्या असत्त्वाभावांशे पक्षतावच्छेदकावच्छेदेन सिद्धं यत् साध्यतावच्छेदकावच्छिन्नं साध्यम्, तद्विषयसिद्धिरूपत्वेन सिद्धसाधनाभिधानमित्यदोषः।

*ननु*—साध्यनिविष्टत्वासत्त्वात्यन्ताभावस्य पक्षे सिद्धौ यदि सिद्धसाधनम्, तदा 'पृथिवी, इतरभिन्ने'त्यत्र

## न्यायामृतसौगन्ध्यम्

**पटादावभावात्, विशिष्टस्य त्वन्मतेऽतिरिक्तत्वात्, दृश्यत्वेन मिथ्यात्वाच्च, रजतं विनापि शुक्तौ रजतप्रतीतिव्यवहारादिदर्शनात् सत्पदार्थं विनाऽपि सत्प्रतीत्यादेरुपपत्तावतिलाघवम्, इति ब्रह्मापि सद्रूपं न सिध्येत्। प्रमितत्वाद् ब्रह्म सद्रूपमिति तु जगत्यपि तुल्यम्। एतेन—अनेकसत्त्वकल्पनरूपबाधक-सहकृतसत्त्वाभावानुमानमेव सद्रूपत्वाभावेऽपि पर्यवस्यति, अतो न सद्रूपत्वाभावेनार्थान्तरमिति—**

## सौगन्ध्यविमर्शः

नङ्गीकारात्, न द्वितीय-तृतीयौ; तेषां व्यावहारिकासत्त्वस्यात्यन्तासत्त्वस्य वाऽनङ्गीकारात्। तथाच न सत्त्वासत्त्वयोः परस्परविरहरूपत्वसम्भव इति ॥

मिथ्यात्वलक्षणघटकमेव सत्त्वं सत्तादात्म्यवत्त्वमत्र विवक्षितम्, नतु "सत्यं ज्ञानमि"त्यादिवाक्यगम्यसत्त्वसाधारणमपि, इति न ब्रह्मणोऽसत्त्वापत्तिः। घटादीनां सत्तादात्म्येन सत्त्वम्, ब्रह्मणस्त्वबाध्यत्वेन, शशशृङ्गादीनामुभयराहित्येन त्वसत्त्वम्, इति न ब्रह्मणोऽसत्त्वापत्तिः। घटादीनामपि ब्रह्मवदेव सत्यत्वमिति कल्पनायां तु न केवलं प्रमाणाभावः, किन्तु श्रुतिविरोधोऽपि। तदुक्तमद्वैतसिद्धौ—"एकेनैव सर्वत्रानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ प्रत्येकं सत्त्वभावताकल्पने प्रमाणाभावात्" इति। अत्रैकेनेत्यस्य सद्रूपेण ब्रह्मणेति विवरणं विठ्ठलेशीये दृश्यते। तथाच सर्वत्र तादात्म्यसम्बन्धेन प्रतीयमानेन ब्रह्मणैव 'सन् घटः' इति प्रतीतिनिर्वाह इति तदर्थः। तत्र च घटादितादात्म्यापन्नस्य सत एव ब्रह्मणः पटादावपि भानम्, नतु ब्रह्मान्तरस्य; ब्रह्म-भेदानङ्गीकारात्। सति चैवम्—"एकेनैत्याद्ययुक्तम्; घटादितादात्म्यापन्नस्यैव सतः पटादावभावादि"ति रिक्तमिदं वचनम्। नहि विशिष्टं ब्रह्म घटादौ विशेषणमिति वयं मन्यामहे, किन्तु शुद्धमेव; तस्यैवोपादानत्वात्, उपहितं वा। विशिष्टं शुद्धादति-रिच्यत इति नेदं मतमस्माकम्; तादात्म्यवादित्वादस्माकम्। दृश्यत्वेन मिथ्यात्वं तु न शुद्धस्य; अदृश्यत्वात्। वक्ष्यते चैतदुपरिष्टात्। उपहितस्य मिथ्यात्वेऽपि प्रकृते न काऽपि क्षतिः; उपादानत्वस्य सर्वानुगतिप्रयोजकस्यानपायात्। नहि विना रजतं शुक्तौ रजतव्यवहार इति वयं मन्यामहे, किन्तु विद्यमानमनिर्वचनीयं रजतमादायैव। सतोऽप्यनिर्वचनीयत्वापत्ति-रिति तु न सावसरेयं शङ्का; अधिष्ठानानिरूपणात्; प्रमितत्वाद् ब्रह्म सद्रूपमिति शङ्कानिरासोऽनुक्तोपालम्भनमेव। नहि ब्रह्म-प्रपञ्चयोरेकरूपं प्रमितत्वं वयं मन्यामहे; तत्त्वावेदकप्रमाणवेद्यत्वाद् ब्रह्मणः, प्रपञ्चस्य चातादृशत्वात्।

## सिद्धिव्याख्या

**त्रयोदशान्योन्याभावानां घटो न जलादिरिति प्रतीत्या घटादौ सिद्धेः इतरां सिद्धसाधनमिति—चेत्, *न* 'पृथिवी, इतरभिन्ने'त्यत्र त्रयोदशान्योन्याभावानां पृथिवीत्वसामानाधिकरण्यस्य घटादौ सिद्धया सिद्धसाधनेऽपि घटादिभिन्न-पृथिवीत्वोपहिते तदसिद्धया सिद्धसाधनानवकाशात्। 'अनित्ये वाङ्मनसे' इत्यत्र पक्षतावच्छेदकनानात्वेऽप्युक्तरीत्यांशतः सिद्धसाधनत्वाभावेऽपि मतान्तरेण सिद्धसाधनत्वेऽपि 'पृथिवी, इतरभिन्ने'त्यत्र पक्षतावच्छेदकैक्याद् यथा नांशतः सिद्ध-साधनम्, पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धौ सिद्धसाधनमेव, तादृशसिद्धेरेवानुमानफलत्वात्, तदसिद्धौ तच्छङ्कैव नास्ति, नहि पक्षे साध्यसिद्धिमात्रेण तत्, किंतु पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धया; अन्यथा धूमवत्त्वेन पर्वते वह्निनिश्चयेऽपि सिद्धसाधनप्रसङ्गात्, तथा साध्यतावच्छेदकस्य समूहालम्बनैकज्ञानोपारूढस्यैक्याद् नांशे सिद्धसाधनम्; साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धेरभावात्। अत एव न व्यर्थविशेष्यत्वमपि; 'सद्विलक्षणत्वे**

## विठ्ठलेशीयटिप्पणी

**वृत्तिसद्भेदासद्वृत्त्यसद्भेदोभयवत्तासिद्धिर्जायमानोभयात्मकत्वमुन्मूल्यैव जायत इति भावः। *ननु*—सद्वृत्तित्वे सत्यसद्वृत्तिर्यो भेदः, तद्वत्त्वमेव साध्यमस्तु; सदसदन्यतरत्वावच्छिन्नप्रतियोगिताकस्यैव तादृशभेदस्य प्रसिद्धेः, तथाच किं सदसत्प्रतियोगित्वद्वयनिवेशनेति—*चेत्, *न*; प्रपञ्चे सदादितादात्म्यसंशयोच्छेदाय सदादिप्रति-योगिकत्वविशिष्टभेदसिद्धेरेवोद्देश्यत्वात्। नच—सदाद्यवृत्तिधर्मवत्ताज्ञानस्य तादृशसंशयविरोधित्वात् सदाद्य-वृत्तित्वविशिष्टभेदसिद्धिरेवालमिति—वाच्यम्; सदादिभेदाभावत्वेन सदादितादात्म्यसंशयस्य सदाद्यवृत्तिधर्मवत्ता-ज्ञानाप्रतिबध्यस्योच्छेदाय सदादिप्रतियोगिकत्वविशिष्टभेदसिद्धेरावश्यकत्वात्, व्यापके व्यर्थविशेषणत्वं न दोषायेति तु सुप्रसिद्धमेवेति ध्येयम् ॥**

न्यायामृतम्

न्योन्याभावोऽपि न पृथिवीत्वोपहिते सिद्धः ; दृष्टान्तस्य साध्यवैकल्याच्च । पृथिवीत्वहेतुस्तु केवल-

अद्वैतसिद्धिः

सिद्धत्वेनांशतः सिद्धसाधनमिति—वाच्यम् ; 'गुणादिकं गुण्यादिना भिन्नाभिन्नं(१) समानाधिकृतत्वादिति

तरङ्गिणी

सिद्धसाधनं स्यादित्यत आह—*पृथिवीत्वोपहित इति* ॥ घटादिभिन्नपृथिवीत्वोपहित इत्यर्थः । यथाश्रुते त्रयोदशान्योन्याभावानां पृथिवीत्वसामानाधिकरण्यस्यापि घटादौ सिद्धयोक्तदोषतादवस्थ्यात् ॥ *दृष्टान्तस्येति* ॥ असत्त्वाभावस्य साध्यतावच्छेदकावच्छिन्नस्य शुक्तिरूप्यादावभावादित्यर्थः ॥ *ननु*—बाध्यत्वरूपासत्त्व-व्यतिरेकस्य तत्राभावेऽपि क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वरूपासत्त्वव्यतिरेको रूप्यादा-वप्यस्त्येव; तस्य तत्त्वेन प्रतीयमानत्वात्, *मैवम्* ; सत्त्वेन प्रतीयमानत्वरूपस्यासत्त्वव्यतिरेकस्य साधनं व्यर्थमित्युक्तत्वेन बाध्यत्वरूपासत्त्वव्यतिरेकस्यैव साधयितुमुचितत्वेन साध्यवैकल्यापरिहारात् । *ननु* अभावद्वयस्य साध्यतायां रूप्ये सत्त्वाभावस्य सत्त्वेऽप्यसत्त्वाभावाभावेन यदि साध्यवैकल्यम्, तर्हि 'पृथिवी, इतरभिन्ने'त्यत्र जले तेजःप्रभृतिद्वादशभेदानां सत्त्वेऽपि जलभेदस्याभावेन साध्यवैकल्यम्, एवं तेजःप्रभृतिष्वपि स्वस्वेतरप्रतियोगिकद्वादशभेदसत्त्वेऽपि स्वस्वभेदाभावात् साध्यवैकल्यमेव स्यादित्याशङ्क्याह—*पृथिवीत्व-हेतुस्तु केवलव्यतिरेकीति* ॥ तथाच न तत्र दृष्टान्तापेक्षा, इति न तत्प्रयुक्तसाध्यवैकल्यादिदोषावकाश

न्यायामृतकण्टकोद्धारः

*ननु* इतरभेदानुमानेऽप्यंशतः सिद्धसाधनं स्यात्, अत आह—*पृथिवीतरेति* ॥ *ननु* इतर-भेदानुमानेऽपि दृष्टान्ते साध्यवैकल्यं स्यादित्यत आह—*पृथिवीत्वहेतुरिति* ॥ साध्यतावच्छेदका-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*गुणादिकम्=गुणः, क्रिया, जातिः, विशिष्टरूपम्, अवयवी, अंशी ; *गुण्यादिना=गुणिना, क्रियावता, व्यक्त्या, केवलरूपेण, अवयवेन, अंशेन ; *भिन्नाभिन्नम्=भेदाभेदोभयवत् ; *समानाधि-

सिद्धिव्याख्या

सत्यसद्विलक्षणमि'ति प्रतीतेरुद्देश्यत्वादिति दोषे सत्येव दोषान्तरमाह—*गुणादिकमिति*॥ *समानाधिकृतत्वादिति* ॥

विट्ठलेशीयटिप्पणी

*गुणः=रूपादिः । *क्रिया=उत्क्षेपणादिः । *जातिः=घटत्वादिः । *विशिष्टरूपम्=गुण-कर्मान्यत्वविशिष्टसत्तादि । *अवयवी=घटादिः । *अंशी=धान्यराशिः, गवाश्वादिसमुदायश्च । *गुणिना=घटादिद्रव्येण । *क्रियावता=घटादिना । *व्यक्त्या=घटादिना । *केवलरूपेण=सत्तादिना । *अवयवेन=मृत्कपालादिरूपेण । *अंशेन=धान्येन, गवाश्वादिना च । 'भिन्नाभिन्नमि'ति कर्मधारय इत्यभिप्रायेण व्याचष्टे—*भेदाभेदोभयवदिति* ॥ तथाच गुणो गुणिप्रतियोगिक-भेदाभेदोभयवानिति रीत्या क्रमेणान्वयो बोध्यः । *अभेदसंसर्गकेति* ॥ गुण्यादिविशेषणकेत्यादिः । अत्र

---

(१) गुण्यादौ गुणादिभेदधीप्रतिबन्धकप्रमाविषयत्वात् । यो यद्विशिष्टप्रतियोगिताकभेदधीप्रतिबन्धकप्रमाविषयः, स तद्भेदाभेदोभयवानिति । व्याप्तिनिष्कर्षस्तु यो यद्धर्मावच्छिन्नप्रतियोगिताकभेदनिष्ठप्रकारतानिरूपितस्वावच्छिन्नविशेष्यताक-ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्संयोगाद्यसंसर्गकप्रमाविषयः, स तद्धर्मावच्छिन्नप्रतियोगिताकभेदाभेदानुयोगिता-वच्छेदकताद्वयवानिति सामान्यव्याप्तौ, घटत्वादिमदवच्छिन्नप्रतियोगिताकभेदप्रकारतानिरूपितस्वावच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावत्प्रमाविषयो द्रव्यत्वादि, यथा घटत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभेदोभयानुयोगितावच्छेदक इति दृष्टान्तः । आहार्यस्याप्रतिबन्धकत्वाद् 'घटोऽघटः' इति ज्ञानमादाय, 'भूतलं घटवदि'त्यादिज्ञानस्य संयोगादिसंसर्गकत्वात् तादृशज्ञानमादाय, 'घटः पटः' इति ज्ञानस्य भ्रमत्वात् तादृशज्ञानमादाय च घटयोः, घट-भूतलयोः, घट-पटयोश्च न तादात्म्या-

### न्यायामृतम्

व्यतिरेकी, त्रयोदशान्योन्याभावरूपसाध्यस्य व्यतिरेकनिरूपणं तु भिन्नाश्रितानामपि त्रयोदशान्योन्याभावानां समूहालम्बनैकज्ञानोपारूढत्वमात्रेण युक्तम् ॥ अत एव न तृतीयः ; व्याहतेः, अर्थान्तरात्, साध्यवैकल्याच्च ।

### तरङ्गिणी

इति भावः । *ननु* पृथिवीत्वहेतौ दृष्टान्तानपेक्षणे साध्यप्रसिद्ध्यभावेन साध्यव्यतिरेकनिरूपणं न स्यादित्यत आह—*त्रयोदशेति* ॥ साध्यतावच्छेदकावच्छिन्नानां त्रयोदशान्योन्याभावानां स्वस्वाधिकरणे विद्यमानानां ज्ञाने सति साध्यव्यतिरेकनिरूपणं स्यादित्यर्थः । *ननु* एवमेकैकान्योन्याभावाधिकरणस्यापि साध्यतावच्छेदकावच्छिन्नसाध्याधिकरणतया तद्व्यावृत्तस्य हेतोरसाधारण्यं स्यादित्याशङ्कापरिहारायोक्तम्—*समूहालम्बनैकज्ञानोपारूढत्वमात्रेणेति* ॥ एकैकान्योन्याभावस्य न साध्यतावच्छेदकावच्छिन्नत्वम् ; साध्यतावच्छेदकस्य समूहालम्बनैकज्ञानोपारूढत्वस्य व्यासज्यवृत्तेर्धर्मस्य प्रत्येकाभावेष्वपर्याप्तेः, तथाच प्रत्येकाभावाधिकरणस्य न सपक्षत्वम्, साध्यतावच्छेदकावच्छिन्नसाध्यरहितत्वात्, तदुक्तम्—"तावदभावयोगी ह्यत्र सपक्षो भवति, नतु तदेकदेशकतिपयाभाववान् ; साध्यतायास्तावति पर्याप्तेरि"ति । सत्त्वात्यन्ताभावादेस्तु प्रत्येकं साध्यतावच्छेदकावच्छिन्नत्वेऽपि नासाधारण्यम् ; दृष्टान्तस्य सत्त्वादिति भावः । *ननु*—'अत एवे'त्यतिदिष्टा व्याहतिरनुपपन्ना ; एकत्र विरुद्धोभयप्रतियोगिकात्यन्ताभावसाधने हि सा स्यात्, न चात्रोभयात्यन्ताभावौ साध्यावित्यत आह—*व्याहतेरिति* ॥ उभयात्यन्ताभावयोस्सामानाधिकरण्योक्तौ व्याहतिवद् उभयात्यन्ताभावयोः सामानाधिकरण्येन सम्बन्धेन विशेषण-विशेष्यभावोक्तावपि व्याहतिरित्यर्थः ॥

### न्यायामृतकण्टकोद्धारः

**वच्छिन्नस्य त्रयोदशान्योन्याभावरूपस्य साध्यस्याप्रसिद्धत्वेन व्यतिरेकनिरूपणाभावात् कथं व्यतिरेकित्वम् ? अत आह—*त्रयोदशेति* ॥**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कृतत्वात्=अभेदसंसर्गकधीविषयतायोग्यत्वात् । पराभ्युपगतसमवाय-तादात्म्यभिन्ना ये संयोगादयः, तेषामन्यतमसम्बन्धेन गुण्यादिविशेषणिका या धीः, तदन्या गुण्यादिविशेषणिका या धीः, तद्विशेष्यत्वादिति

### विट्ठलेशीयटिप्पणी

**धीः प्रमारूपा निवेश्या, अन्यथा 'घटोऽघटः' 'पटो घट' इति वा भ्रममादाय व्यभिचारात्, तथाच परमते गुण-गुणिनोरभेदसंसर्गकप्रमाया अप्रसिद्ध्या हेतोरसिद्धिः, समवायसंसर्गकतत्प्रमायाश्च स्वमतेऽप्रसिद्ध्या तद्घटितहेतुरपि तथैव, इति मतद्वयसाधारण्येन हेतुं परिष्करोति—*परेति* ॥ समवायत्वेन पराभ्युपगतभिन्नत्वे सति तादात्म्यभिन्ना इत्यर्थः । समवायस्य स्वमतेऽप्रसिद्धावपि तत्त्वेन पराभ्युपगतं प्रसिद्धमेव । यद्वा—भिन्नान्तं परिचायकमेव । अत एव तेषामन्यतमेत्युक्तम् । संयोगाद्यन्यतमसंबन्धानवच्छिन्नगुण्यादिनिष्ठविशेषणतानिरूपितप्रमीयविशेष्यत्वादित्यर्थः । 'नीलो घटः', 'चलो घटः', 'गुण-कर्मान्यत्वविशिष्टसत्ता सत्ता' 'मृद् घटः', 'इदं धन्यम्', 'अयं व्रीहिः' इत्यादिबुद्धिषु गुणादीनां विशेष्यतया हेतोः पक्षधर्मतानिर्वाहः । यद्यपि संयोगाद्यन्यतमसंबन्धानवच्छिन्नगुण्यादिविशेष्यकधीप्रकारत्वमपि हेतुः संभवति ; 'घटो नीलः' इति बुद्धौ नीलादेः प्रकारत्वात् ; तथापि तत्प्रतियोगिकभेदाभेदघत्तायास्तद्विशेषणकोक्तधीविशेष्यत्वं प्रत्येव प्रयोजकतया तस्यैव हेतुताश्रयणम् । व्याप्तिश्चात्र नान्वयतः ; दृष्टान्तासंभवात्,**

---

पत्याऽर्थान्तरम् । यदि तु संयोगादिसंसर्गकेति निवेशेऽननुगम इति शङ्क्यते, तर्हि आधारतावच्छेदकतानवच्छेदकरूपावच्छिन्नसम्बन्धसंसर्गकत्वं प्रमायां विवक्षणीयम् । 'कपालो घटः' 'घटो रूपमि'त्यादिप्रतीतिमादाय समन्वयः, घटे रूपमित्यादयस्तु प्रत्यया भ्रमरूपा एव । 'गुणे शुक्लादयः पुंसि' इति कोशस्य तु नामान्तराविशेषणस्य गुणपदस्य तद्विशेषणगुणपदस्य च पुंस्त्वनामान्तरसमलिङ्गत्वबोधने तात्पर्यम्, "आकाशं शब्दमात्रं तत् स्पर्शमात्रं समाविशेदि"त्यादिपुराणादिवचनादिति गुरुचन्द्रिका ।

**न्यायामृतम्**

किंच यथा—"अनित्ये वाङ्-मनसे"इत्यत्र पक्षतावच्छेदकनानात्वेनांशे सिद्धसाधनत्वेऽपि 'पृथिवी, इतरभिन्ने'त्यत्र पक्षतावच्छेदकैक्याद् नांशे सिद्धसाधनम्, तथेहापि यद्यपि कथंचित् साध्यतावच्छेदकैक्याद् नांशे सिद्धसाधनत्वम्, नापि व्यर्थविशेष्यत्वम्; 'विमतम्, उपादानापरोक्षज्ञप्ति-चिकीर्षा-कृतिमज्जन्यमि'त्यत्र कृतिग्रहणेनैवेश्वरसिद्धावपि चिकीर्षादेरिव 'गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादि'त्यत्र तार्किकाङ्गीकृतभिन्नत्वस्येव च व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वात्, इह तु

**तरङ्गिणी**

*किंचेति* ॥ यद्यपि नांशतः सिद्धसाधनम्; नापि व्यर्थविशेष्यत्वम्; तथाप्यप्रसिद्धविशेषणत्वमित्यन्वयः ॥ *पक्षतावच्छेदकनानात्वेनेति* ॥ यद्यपि पक्षतावच्छेदकनानात्वेऽप्युक्तविधया नांशतः सिद्धसाधनम्; तथापि मतान्तरेणेदं बोध्यम् ॥ *पक्षतावच्छेदकैक्यादिति* ॥ पक्षतावच्छेदकैक्येंऽशतः सिद्धसाधनं न भवत्येव । तथाहि—पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धौ हि सिद्धसाधनमेव, नांशतस्सिद्धसाधनम्; तादृशसिद्धेरेवानुमानसाध्यत्वात्, तदसिद्धौ च तच्छङ्कैव नास्ति । नहि पक्षे साध्यसिद्धिमात्रेण तत्, किन्तु पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धया; अन्यथा धूमवत्त्वेन पर्वते वह्निनिश्चयेऽपि सिद्धसाधनप्रसङ्गादित्यर्थः ॥ *साध्यतावच्छेदकैक्यादिति* ॥ साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धेरभावादित्यर्थः ॥ *नापि व्यर्थविशेष्यत्वमिति* ॥ यथेश्वरानुमाने कृतिमज्जन्यमिति साध्यकरणमात्रेणापीश्वरसिद्धावपि चिकीर्षादेर्विशेषणस्य न वैयर्थ्यम्; व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वात्, यथा भेदाभेदवादिना तार्किकं प्रति प्रयुक्ते 'भिन्नाभिन्नमि'ति साध्ये भिन्नत्वविशेषणस्य तार्किकेणाङ्गीकृतत्वेऽपि न वैयर्थ्यम्; तत्प्रतीतेरुद्देश्यत्वात्, तथेहापि 'सद्विलक्षणत्वे सत्यसद्विलक्षणत्वमि'ति प्रतीतेरुद्देश्यत्वाद् न व्यर्थविशेष्यत्वमित्यर्थः ॥ *समानाधिकृतत्वादिति* ॥ 'शुक्लः पटः' इति सामानाधिकरण्यवत्त्वादित्यर्थः ॥ *व्यापकविशेषणानामिति* ॥ नच—व्यतिरेकव्याप्तौ साध्याभावस्य व्याप्यतया तत्र विशेषणं व्यर्थमिति—वाच्यम्; विशिष्टाविशिष्टभेदेनैकस्मिन् व्याप्यतावच्छेदकद्वयप्रवेशाभावेन तद्बीजाभावादित्यर्थः । *ननु* ईश्वरानुमाने ज्ञानादिघटितं साध्यत्रयमेवाभिप्रेतम्, इति न तद् दृष्टान्तः; भेदाभेदानुमाने त्वप्रयोजकत्वपरिहाराय

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

यावत् । नचाप्रयोजकत्वम्; नीलगुण-घटयोस्तादात्म्यसम्बन्धस्वीकारे 'घटो न नीलः' इत्याकारकनीलगुणभेदबुद्धौ तादात्म्यसम्बन्धेन नीलगुणप्रकारकधीत्वेनैव प्रतिबन्धकत्वं वाच्यम्, नतु नीलगुणसमवायिभेदबुद्धौ नीलगुणसमवायितादात्म्यधीत्वेन; समवायस्यालीकत्वात् ॥

**विट्ठलेशीयटिप्पणी**

किंतु व्यतिरेकतः । यो घटत्वावच्छिन्नप्रतियोगिताकभेदाभेदोभयाभाववान्, स घटत्वावच्छिन्नोक्तविशेषणताकधीविशेष्यत्वाभाववान्, यथा घटत्वावच्छिन्नो घटः, पटत्वावच्छिन्नः पटश्चेति; 'घटोऽघटः' इति, 'पटो घटः' इति वा प्रमाया अभावात् । *नचाप्रयोजकत्वमिति* ॥ उक्तसाध्यास्वीकारे पक्षे हेतुभङ्गापत्तिर्वाच्या, सा च न संभवति; उक्तसाध्यघटकाभेदास्वीकारेण तन्नियततादात्म्यासंभवेन तत्संसर्गकधीघटितहेतोरसंभवेऽपि तद्घटकभेदमात्रस्वीकारेण तन्नियतसमवायसंबन्धमुपगम्य तत्संसर्गकधीघटितोक्तहेतोरुपपत्तिसंभवादिति भावः । अभेदघटितोक्तसाध्यनियततादात्म्यमुपगम्य हेतोरुपपादने लाघवम्, समवायोपगमे तु गौरवमित्याह—*नीलगुणेति* ॥ यद्वा—*नचाप्रयोजकत्वमिति* ॥ तत्प्रतियोगिकभेदाभेदोभयवत्त्वस्य निरुक्ततद्विशेषणताकधीविशेष्यत्वप्रयोजकत्वास्वीकारे मानाभावादिति भावः । उक्तस्वीकारे लाघवज्ञानसहकृतमनुमानमेव प्रमाणमित्याह—*नीलगुणेति* ॥ *तादात्म्येति* ॥ अभेदपदार्थत्वादिः । भेदस्तूभयसंमतः, इति न तत्र युक्त्युपन्यासः । *अलीकत्वादिति* ॥ तथाच प्रतिबध्य-प्रतिबन्धक-

### न्यायामृतम्

सद्विलक्षणत्वे सत्यसद्विलक्षणमिति प्रतीतेरुद्देश्यत्वात्। यदि चाभेदे सत्यपि 'घटः कलशः' इति सामानाधिकरण्यादर्शनादप्रयोजकत्वनिरासाय विशिष्टधीस्तत्रोद्देश्या, तर्हि तुच्छे सद्वैलक्षण्ये सत्यपि दृश्यत्वादर्शनादिहापि सोद्देश्येति समम्, तथाप्यप्रसिद्धविशेषणत्वम्। 'पृथिवी, इतरभिन्ने'त्यत्र

### तरङ्गिणी

भिन्नत्वविशेषणस्योद्देश्यतेत्याशङ्क्य, प्रकृतेऽपि तथेत्याह—*यदि चेति* ॥ 'गुणादिकम्, गुण्यादिनाऽभिन्नम्, समानाधिकृतत्वादित्येव कृतेऽभेदरूपसाध्यवत्यपि घट-कलशादावविद्यमानस्य समानाधिकृतत्वस्याभेदरूपसाध्यं प्रत्यप्रयोजकत्वं स्यात्। तदुक्तम्—"तस्मिन् सत्यभवतस्तेन विनाऽपि भवतस्तदप्रयोजकत्वादि"ति। अतोऽप्रयोजकत्वमित्यर्थः॥ *तर्हीति* ॥ सत्त्वाभावमात्रस्य साध्यत्वे सत्त्वाभाववति तुच्छेऽविद्यमानस्य दृश्यत्वस्याप्यप्रयोजकत्वं मा भूत्, इत्यसत्त्वाभावोऽपि साध्यकोटौ निवेशितः, इति न व्यर्थविशेष्यत्वमित्यर्थः॥ *सममिति* ॥ तुच्छे दृश्यत्वाभाववति विशिष्टं साध्यमपि नास्ति, इति नाप्रयोजकत्वमित्यर्थः॥ *तथाप्यप्रसिद्धविशेषणत्वमिति* ॥ विशिष्टसाध्यस्य सति, असति चाप्रसिद्धत्वादित्यर्थः। नच—शुक्तिरूप्य एवोभयाभावप्रसिद्धिरस्तीति—वाच्यम्; तत्र सत्त्वेन प्रतीयमानत्वानधिकरणत्वरूपासत्त्वस्याभावे विद्यमानेऽपि बाध्यत्वरूपस्यासत्त्वस्य व्यतिरेको नास्तीति प्रागवोचाम। *ननु* यदि सत्त्वाभावविशेषितासत्त्वाभावरूपविशिष्टसाध्याप्रसिद्ध्याऽप्रसिद्धविशेषणत्वम्, तदा जलादिद्वादशान्योन्याभावविशेषितसमवायान्योन्याभावरूपविशिष्टसाध्यस्याप्यप्रसिद्धत्वेन प्रत्येकान्योन्याभावानां प्रसिद्ध्या साध्यप्रसिद्ध्युपवर्णनं विरुद्ध्येतेत्यत आह—*पृथिवीति*॥ 'पृथिवी, इतरभिन्ने'त्यत्र जलादिद्वादशभेदविशेषितसमवायभेदरूपं विशिष्टं न साध्यम्, न वा त्रयोदशभेदानामैकाधिकरण्यं साध्यतावच्छेदकम्, येनाप्रसिद्धविशेषणत्वं स्यात्, किन्तु स्वस्वाधिकरणे विद्यमानानां त्रयोदशान्योन्याभावानामपेक्षाबुद्धिविषयत्व-समूहालम्बनैकज्ञानोपारूढत्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यताकानां साध्यत्वम्। तथाच नाप्रसिद्धिः, न वाऽसाधारण्यमित्युक्तमिति भावः। *ननु* सत्त्वाभावासत्त्वाभावयोः

### न्यायामृतकण्टकोद्धारः

*यदि चाभेदे सत्यपीति* ॥ नच हेतुसत्त्वेन साध्यासत्त्वापादनरूपत्वादप्रयोजकत्वस्याभेदे सत्यपि सामानाधिकरण्यादर्शनादित्यापादनमयुक्तमिति—वाच्यम्; न विद्यते प्रयोजकं यस्मिन्निति व्युत्पत्त्या हेतुसत्त्वे साध्यासत्त्वमित्येवंरूपस्यैवोक्तरूपाप्रयोजकत्वस्यापि सम्भवात्, अत एवोक्तम्—"तस्मिन् सत्यभवतस्तेन विनापि भवतः" इति॥ *ननु* इतरभेदानुमानेऽपि समुदितत्रयोदशाभावस्याप्रसिद्धत्वादप्रसिद्धिरित्यत आह—*पृथिवीति* ॥ यद्यप्यत्र परपक्षदूषणाय प्रवृत्तेन दूषणस्यैवोद्भाव्यत्वेन दूषणपरिहारप्रदर्शनमयुक्तम्; तथापि शिष्यबुद्धिशिक्षणाय तत्प्रदर्शनमिति भावः॥

### न्यायामृतसौगन्ध्यम्

निरस्तम्; तर्कस्य प्रमितसद्रूपानपवादकत्वात्, अन्यथा सत्त्वाभावानुमानस्य लाघवेन प्रातीतिकसत्त्वाभावेऽपि पर्यवसानेन जगत् शून्यमेव स्यात्। सदसदुभयान्योन्याभावस्य साध्यतायां तु व्याहतिः, अर्थान्तरादिदोषोऽस्त्येव॥

### सौगन्ध्यविमर्शः

सद्रूपतायामबाध्यत्वमेव त्रैकालिकं नियामकम्। तथाच व्यावहारिकाणां यावद्बाधः, तावदबाध्यब्रह्मतादात्म्येनैव निर्वाहे न सद्रूपतायां मानम्। शुक्तिरूप्यादीनामपि प्रातिभासिकानां यावद्बाधं सत्तादात्म्यमस्त्येव। सद्रूपं त्वेकमेव, इति नानेकसद्रूपताकल्पनं सम्भवदुक्तिकम्। अयं भावः—सद्रूपत्वमादाबाधान्तरवादिना सर्वेषां प्रपञ्चानां पृथगनेकसद्रूपत्वापत्तिरिष्यते? उतैकसद्रूपत्वापत्तिः? आद्ये गौरवम्, द्वितीये त्वसम्भवाद् एकसद्रूपब्रह्मतादात्म्येनैवोपपत्तिर्वर्णनीयेति। यस्य हि न

न्यायामृतकण्टकोद्धारः

*अत्र कश्चित्*—सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयं साध्यते। नच—व्याघात इति—वाच्यम्; स हि तदा स्यात्, यदि सत्त्वासत्त्वयोः परस्परविरहरूपत्वं(१) स्यात्, नचैवम्; असत्त्वस्य क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वस्य विवक्षितत्वात्। एवं च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वरूपं साध्यं पर्यवस्यति। एवं च न व्याघातः। नापि साध्यवैकल्यम्; बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात्। *यच्च* निर्धर्मकस्य ब्रह्मणः सत्त्वराहित्येऽपि सद्रूपत्ववत् प्रपञ्चस्य सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तरमुक्तम्, *तन्न*; एकेनैव सर्वानुगतेन सत्प्रतीत्युपपत्तौ प्रातिस्विकसत्स्वभावताकल्पने मानाभावात्, अनुगतव्यवहाराभावप्रसङ्गाच्च। सत्प्रतियोगिकासत्प्रतियोगिकं भेदद्वयं वा साध्यम्। नच—असत्त्वव्यतिरेकस्यासद्भेदस्य च प्रपञ्चे सिद्धत्वेनांशतः सिद्धसाधनमिति—वाच्यम्; गुणादिकम्, गुण्यादिना भिन्नाभिन्नम्, समानाधिकृतत्वात्, इत्यत्रेवोद्देश्यप्रतीत्यसिद्धेर्न सिद्धसाधनम्। यथा तत्रात्यन्तभेदेऽत्यन्ताभेदे च सामानाधिकरण्यादर्शनेन मिलितसिद्धिरुद्देश्या, तथा प्रकृतेऽपि सत्त्वाभाववति तुच्छे दृश्यत्वादर्शनेनेहापि सोद्देश्येति समम्। एवं सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभाववत्त्वमिति पक्षोऽपि साधुः। नच विशिष्टस्य साध्यत्वेऽप्रसिद्धत्वम्; उक्तरूपासत्त्वव्यतिरेकस्य शुक्तिरूप्यादौ सत्त्वेन प्रसिद्ध्युपपत्तेः। नच—निर्धर्मकत्वाद् ब्रह्मणः सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्रातिव्याप्तिः; सद्रूपत्वेन ब्रह्मणस्तदभावाधिकरणत्वात्, निर्धर्मकत्वादेवाभावरूपधर्मानधिकरणत्वाच्च—इत्याह, *तन्न*;

यदुक्तं क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वं विवक्षितम्, इति परस्परविरहरूपतया न व्याघात इति, तन्न; एतादृशेऽसत्त्वेऽङ्गीक्रियमाण एतादृशस्य बौद्धेन प्रपञ्चेऽनङ्गीकारेण बौद्धेन सह विवादो न स्यात्(२)॥

किञ्च यद्युक्तरूपमसत्त्वम्, तर्हि 'असच्चेत्, न प्रतीयेते'ति प्रयोज्य-प्रयोजकभावो न स्यात्; अभेदात्, अपिच ब्रह्मण्यङ्गीकृतसत्त्वविरोधिन एवासत्त्वस्य वक्तव्यत्वेनैतादृशासत्त्वस्यावक्तव्यत्वात्। 'क्वचिदप्युपाधावि'त्यत्रोपाधेः सत्त्वं विवक्षितम्? न वा? आद्ये ब्रह्मणोऽपि सद्रूपोपाधौ सत्त्वेनाप्रतीयमानत्वेनासत्त्वा-

सौगन्ध्यविमर्शः

त्रिकालाबाध्यत्वरूपं सत्त्वं श्रुत्यनुमानबोधितम्, तस्य सद्रूपत्वमपि तत्सद्रूपत्वबोधकप्रमाणाभावे बाधितमेव; अन्यथाऽसतोऽपि सद्रूपत्वापत्तेः, श्रुतिमूलं ह्यनुमानं मिथ्यात्वसाधकमिहोल्लिख्यते, न तु स्वतन्त्रम्। श्रुतौ तु सद्रूपत्वं प्रपञ्चस्य न बोधितम्, इति कथं सद्रूपत्वापत्तिः? न चैवं प्रपञ्चशून्यत्वापत्तिः; शून्यत्वस्य कालासम्बन्धित्वादिरूपस्यासकृदावेदितत्वेन व्यर्थवादत्वात्।

(१) इदमत्रालोचनीयम्—यद् अप्रामाणिकस्यैवात्यन्ताभावप्रतियोगित्वमिति द्वैतमते कथमारोपितसत्त्वसंसर्गाभावोऽपि संभवदुक्तिकः? सत्त्वस्येव सत्त्वसंसर्गस्यापि प्रामाणिकत्वात्, अन्यथा घटादीनां ब्रह्मणश्च सत्त्वसंसर्गाभावे कथं द्वैतमते घटादयः सन्तो भवन्ति? नहि घटादीनां सत्त्वं वास्तवमस्ति, सत्त्वसंसर्गस्तु नास्तीति वादो न व्याहतः। तथाच सत्त्वासत्त्वयोः परस्परविरहरूपत्वमिदं, तद्व्यापकत्वमप्यसंभवदुक्तिकमेव द्वैतमतरीत्या। अस्मन्मते तु सत्त्वासत्त्वयोस्तत्त्वावेदकप्रमाणावेद्यत्वाद् घटादौ सत्त्वासत्त्वोभयाभावोऽपि न विरुद्धः। अधिकमन्यत्र व्यक्तम्॥

(२) बौद्धेन सह विवादे तु सद्विविक्तत्वमेव साध्यम्, नतु सदसद्भिन्नत्वम्, तथाच प्रकृतमिथ्यात्वघटकासत्त्वस्य निरुक्तस्य विलक्षणेऽपि न विरोधः। एतेन—'असच्चेत्, न प्रतीयेते'ति वाक्यमपि—व्याख्यातम्; तस्यापि प्रकृतमिथ्यात्वघटकासत्त्वाविषयकत्वात्। सत्त्वासत्त्वयोः परस्परविरहरूपत्वाङ्गीकारे खलु ब्रह्मण्यङ्गीकृतसत्त्वविरोधिन एवासत्त्वस्य वक्तव्यतापत्तिः, न त्वन्यथा; प्रकृते च न तदङ्गीकारः। सत्त्वं तु लक्षणघटकमबाध्यत्वमेव, न त्वसत्त्वाभावः। अत एवोक्तम्—त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदुपाधौ सत्त्वेन प्रतीयमानत्वं मिथ्यात्वमिति। न चास्य लक्षणस्य शुक्तिरूप्येऽतिव्याप्तिः; व्यवहारदशाबाध्यत्वात्, न वा प्रपञ्चे बाधः; प्रपञ्चस्य सत्त्वेन प्रतीयमानस्यापि स्वतोऽबाध्यत्वाभावात्॥

न्यायामृतकण्टकोद्धारः

पातः, शुक्तिरूप्येऽतिव्याप्तिश्च। द्वितीये यत्किञ्चिदुपाधौ शशविषाणादेरपि 'शशविषाणमस्ती'ति वाक्याभासादिना "तद्धैक आहुरसदेवेदमग्र आसीदि"त्यादिश्रुत्या च सत्त्वेन प्रतीतिसद्भावाद् असम्भवः। किञ्च प्रतीत्युपाधिकेऽसत्त्वे वक्तव्ये प्रतीत्युपाधिकमेव सत्त्वेन प्रतीतिरेव सत्त्वमिति वक्तव्यत्वेन प्रपञ्चे सत्त्वाभावसाधने बाधश्च। तस्मात् त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेक एव बाध्यत्वमसत्त्वम्, इति कथं न व्याघातः? अस्तु वा तदभिमतमसत्त्वम्, तथापि तादृशासत्त्वस्य सत्त्वाभावव्याप्यतया गोत्वाश्वत्वयोरिव विरोधो भवेदिति वाचोयुक्तिविलापनमात्रमेतत्॥

*यच्च* ब्रह्मणीव प्रपञ्चेऽर्थान्तरत्वपरिहारार्थमुक्तम्—'एकेनैव सर्वत्र सत्प्रतीत्युपपत्तौ प्रातिस्विकसत्त्वभावकल्पने मानाभावः' इति, *तदपि मन्दम्*; तथात्वे नित्यो घटः, अनित्यः पटः, प्रध्वस्तो घटः, प्रध्वस्तः पट इत्यत्राप्येकेनैव (१)प्रध्वंसादिना व्यवहारोपपत्तौ प्रातिस्वकप्रध्वंसकल्पने मानाभावः, इति प्रत्येकप्रध्वंसादिसिद्धिर्न स्यात्। तत्र प्रतीत्यन्यथानुपपत्त्या तथा कल्पने, प्रकृतेऽपि तथाऽस्तु। अनुगतव्यवहारोऽपि तद्वदेव समाधेयः। किञ्चैवंविधकल्पनाया मिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयः॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

समवायस्वीकारे तु नीलगुणसमवायिभेदबुद्धावुक्ततादात्म्यधीत्वेनेव घटादौ नीलगुणभेदबुद्धौ नीलगुणतादात्म्यधीत्वेनापि प्रतिबन्धकत्वं वाच्यमिति गौरवम्। एवं नीलादिसमवायविषयके विशिष्टज्ञानमात्रेऽनुमित्यादौ च कारणत्वानि प्रतिबन्धकत्वानि च कल्प्यानि। समवायावच्छिन्नप्रतियोगिताधिकरणतयोस्तादृशप्रतियोगिताकात्यन्ताभावस्य, तादृशप्रतियोगितावच्छेदकतायाः, समवायेन नीलादिविशिष्टस्य, भेद-तत्प्रतियोगितातदवच्छेदकत्वानां च कल्पनं समवायत्वरूपाखण्डधर्मे तदभाव-तद्विषयतादिकल्पनं चेति महागौरवम्॥

विट्ठलेशीयटिप्पणी

भावग्रहाप्रसिद्धिरिति भावः। इति लाघवमिति शेषः। निरुक्तविशेषणताकधीविशेष्यता, किंचित्प्रयोज्या, व्यतिरेकित्वात्; इत्यनुमानं नीलगुणे घटभेदविशिष्टघटतादात्म्यस्योक्तधीविशेष्यताप्रयोजकत्वे लाघवम्, इति ज्ञानसहकृतं तादृशविशेष्यत्वे तादृशतादात्म्यप्रयोज्यतामनुमिनोति। तथाचोक्तप्रयोज्य-प्रयोजकभावभङ्गापत्तिरूपानुकूलतर्केण तादात्म्यघटितोक्तसाध्यसिद्धिः। घटतादात्म्यमात्रस्य तादृशधीविशेष्यत्वप्रयोजकता न संभवति; घटे घटतादात्म्यसत्त्वेऽपि तादृशधीविशेष्यत्वाभावेन व्यभिचारात्। अतो भेदस्यापि प्रयोजकशरीरान्तर्भावः। अत एव च साध्य उभयसिद्धस्यापि तस्यान्तर्भावः; प्रयोज्येन प्रयोजकतावच्छेदकावच्छिन्नस्यैवानुमानात्। *ननु* नीलगुण-घटयोः समवायस्वीकारे घटे नीलगुणभेदबुद्धौ नीलगुणतादात्म्यधीत्वेन प्रतिबन्धकत्वं न वाच्यम्; नीलगुण-घटयोस्तादात्म्यस्यालीकत्वादिति साम्यमित्याशङ्कां परिहरति—*समवायस्वीकारे त्विति*॥ *वाच्यमिति*॥ अन्यदीयतादात्म्यसंबन्धस्य प्रसिद्ध्या घटादौ तत्संसर्गकनीलगुणभ्रमरूपस्य प्रतिबन्धकग्रहस्य प्रसिद्धेरिति भावः। सर्वस्य सर्वत्र भ्रमे मानाभावेन तादृशभ्रमस्याप्रसिद्धिस्थले गुण-गुणिनोः समवायस्वीकार उक्तगौरवसंभवेन तत्र न तयोस्तादात्म्यसिद्धिप्रसङ्ग इत्याशङ्क्य, समवायस्वीकारे गौरवान्तराण्याह—*एवमिति*॥ समवायस्वीकार इत्यनुषज्यते। *नीलादिसमवायेति*॥ नीलादितादात्म्यस्थले त्वेतत् सर्वमुभयमते तुल्यम्; नीले नीलतादात्म्यस्य परैरङ्गीकारादिति भावः। मूले—*भिन्नत्वस्येति*॥ गुणादित्रयपक्षकगुण्यादिभिन्नाभिन्नत्वसाध्यकस्थल इत्यादिः। विशिष्टपक्षककेवलभिन्नाभिन्नत्वसाध्यके त्वभिन्नत्वस्येति बोध्यम्।

(१) एकेन ब्रह्मणैव तादात्म्येन 'सन् घटः' इति प्रतीतिनिर्वाहो हि श्रुतिसिद्धत्वाद् उपादानोपादेयभावप्रयुक्तं तादात्म्यमादाय संभवति, 'घटो ध्वस्तः', 'पटो ध्वस्तः' इत्यादौ तु ध्वंसेनैकेन घटादिभिः सम्बन्धः स्यात्, यदि ब्रह्म-प्रपञ्चयोरिव ध्वंस-प्रपञ्चयोरपि कार्यकारणभावेन, तर्हि तु बाधितम्, यदि तु ध्वंसस्य घटादिधर्मत्वाङ्गीकारेण, तर्हि तु धर्मिभेदेन जात्यतिरिक्तानां धर्माणां भेदस्या-

### न्यायामृतकण्टकोद्धारः

*यत्तु*—अंशे सिद्धसाधनपरिहारार्थमुक्तम्—'गुणादिकं गुण्यादिना भिन्नाभिन्नमि'त्यत्रैव विशिष्टप्रतीतेरुद्देश्यत्वाद् नांशे सिद्धसाधनमिति, *तन्न*; तत्राभेदे सामानाधिकरण्याभावेन विशिष्टप्रतीतेरुद्देश्यत्वसम्भवात्, प्रकृते च सत्त्वाभाववति तुच्छे दृश्यत्वस्य विद्यमानत्वेन तदुद्देश्यत्वाभावात्। नच—तुच्छे दृश्यत्वमेव नेति—वाच्यम्; ज्ञानविषयत्वरूपदृश्यत्वस्य तुच्छेऽसत्त्वे सद्वैलक्षण्यज्ञानाद्यनुपपत्तेर्मूल एवोक्तत्वेन तुच्छे दृश्यत्वस्यावश्यकत्वात्, दृश्यत्वान्तरस्य हेतूकरणासम्भवस्याग्रेऽभिधास्यमानत्वात्। तस्मादंशतः सिद्धसाधनं दुर्वारम्। एतेन—सदसत्प्रतियोगिक-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—विशिष्ट-केवलयोर्भेदस्वीकार एकस्यैव घटस्य तत्तत्क्षणविशिष्टरूपाण्यनन्तानि कल्पनीयानि, इति महागौरवमिति चेत्—*न*; तादृशरूपाणामनन्तानां केवलघटभिन्नानामकल्पने केवलघटविशिष्टबुद्धितस्तादृशरूपविशिष्टबुद्धीनां वैलक्षण्यानुपपत्तेः। नच—तासां तत्तत्क्षणवैशिष्ट्यविषयकत्वमेव वैलक्षण्यमिति—वाच्यम्; 'विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमि'त्येवमाकारेऽपि 'तत्क्षणविशिष्टघटवदि'ति ज्ञाने तादृशविषयकत्वसत्त्वेन विशिष्टवैशिष्ट्यविषयताशालितादृशज्ञानस्य ततो वैलक्षण्यानुपपत्तेः॥ *अथ*—विशिष्टवैशिष्ट्यविषयताकज्ञाने तत्तत्क्षणेषु घटनिष्ठविशेषणतावच्छेदकत्वरूपस्य विशेषणताविशेषस्य स्वीकाराद् 'विशेष्ये विशेषणमि'ति रीत्या ज्ञाने च तदभावात् तदेव वैलक्षण्यमिति—चेत्, *न*; ज्ञान-विषययोः संबन्धो हि विषयतात्वेन तादात्म्यत्वेनैव वा 'तत्क्षणविशिष्टवन्तं जानामी'त्याद्यनुभवेन गृह्यते, न त्ववच्छेदकतात्वेन विशेष्यतात्वेन प्रकारतात्वेन सांसर्गिकविषयतात्वेन वाऽखण्डधर्मेण। नचैवम्—विशेष्यतात्वादिविशिष्टविषयताशालितया ज्ञानग्राहकत्वं तादृशानुभवस्य सर्वसम्मतं न स्यादिति—वाच्यम्; परस्पराध्यासविवेचनोक्तरीत्या विशिष्टज्ञानमात्रस्यैकविषयतावच्छिन्नविषयतान्तरशालित्वेन तद्विशिष्टज्ञानग्राहकत्वाद् उक्तानुभवस्य विशेष्यतात्वप्रकारतात्वादिविशिष्टविषयताविशिष्टतया ज्ञानग्राहकत्वोपपत्तेः। तथाहि—'इदं रजतमि'त्यादिज्ञाने तादात्म्यादिसंसर्गनिष्ठाया विषयताया रजतादिविषयताविशिष्टाया इदंविषयतावच्छिन्नत्वमिदमवच्छिन्नत्वं चेति पूर्वमुक्तम्। तथाच विशिष्टविषयतावच्छेदकत्वविशिष्टविषयताग्राहकोऽनुभवो विशेष्यतात्वादेर्ग्राहकः।

### विट्ठलेशीयटिप्पणी

एवं च तत्र भेद एव विवादाद् अभिन्नत्वमात्रवादी भेदस्वीकारे गौरवमाशङ्कते—*नन्विति*॥ एतस्य गौरवस्य प्रामाणिकत्वाद् न बाधकतेत्याशयेन समाधत्ते—*नेत्यादि*॥ *केवलघटविशिष्टबुद्धितः='भूतलं घटवत्' इत्याकारकबुद्धितः। *बुद्धीनामिति*॥ 'भूतलं तत्क्षणविशिष्टघटवदि'त्याद्याकारकाणामिति शेषः। *इत्येवमाकारे=इति रीत्या जायमाने। *अखण्डधर्मेणेति*॥ अखण्डानां तादृशधर्माणां भाने सति हि विशिष्टवैशिष्ट्यविषयताकज्ञानस्यैव तत्क्षणनिष्ठविशेषणतावच्छेदकत्वरूपाखण्डधर्मवद्विषयतानिरूपकत्वम्, न तु 'विशेष्ये विशेषणमि'ति रीत्या ज्ञानस्येति वैलक्षण्यं सुवचम्; तादृशधर्माणां सखण्डत्वे तु निर्वक्ष्यमाणप्रकारतावच्छेदकतात्वस्य तादृशद्विविधज्ञानीयतत्क्षणविषयतयोः सत्त्वेन तादृशज्ञानयोर्वैलक्षण्यानुपपत्तिर्दुर्वारैवेति भावः। *नचैवमिति*॥ *एवम्=विशेष्यतात्वादीनामखण्डानामभाने। सखण्डानां तेषां निर्वचनासम्भवाद् इत्यभिमानः। *तादृशानुभवस्य='तत्क्षणविशिष्टवन्तं जानामी'त्यनुव्यवसायस्य। 'शालित्वेने'त्यन्तेनानुव्यवसाये तादृशविषयतावैशिष्ट्यभानस्य सन्निकर्षप्रयोज्यत्वेन तदुर्वारता, तस्य प्रमात्वं च सूचितम्। *उक्तानुभवस्य='तत्क्षणविशिष्टवन्तं जानामी'त्याकारानुव्यवसायस्य। एतावता कथं विशेष्यतात्वादिग्राहकत्वमित्याशङ्क्य, परस्पराध्यास एव तदुपपादयति—*तथाहीति*॥ *अनुभवः='इदं रजतं तादात्म्येन जानामी'त्याकारकः। *विशेष्यतात्वादेर्ग्राहक इति*॥ भवतीति शेषः॥

---

यकत्वाद् नैकध्वंसेन निर्वाहः। नहि जात्यादेरिव ध्वंसस्य घटादिभिः सर्वदा सम्बन्धः, इति रूपादेरिव नानुगतत्वेनैकत्वसंभवः।

न्यायामृतकण्टकोद्धारः

भेदद्वयं साध्यत इति—परास्तम् ; उक्तदूषणग्रस्तत्वात् । अत एव, सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभाववत्त्वसाधनमपि साध्वित्युक्तमसाधु ; तत्पक्षेऽपि मूलोक्तदूषणापरिहारात् । नच—शुक्तिरूप्यादौ साध्यप्रसिद्धेः कथमप्रसिद्धिरिति—वाच्यम् ; अबाध्यत्वाभावरूपबाध्यत्वस्यैवासत्त्वरूपतया तस्य च शुक्तिरूप्ये सत्त्वेन तदभावरूपसाध्यस्य प्रसिद्ध्यभावात् ॥

*यच्च* ब्रह्मण्यतिव्याप्तिपरिहारार्थमुक्तम्—सद्रूपत्वेन सत्त्वाभावाधिकरणत्वं नास्तीति, *तदपि प्रपञ्चे समानम्* ; प्रपञ्चस्यापि सद्रूपत्वेन सत्त्वाभावाधिकरणत्वादिति । नच—प्रपञ्चस्य सद्रूपत्वमसिद्धमेवेति—वाच्यम् ; तस्य प्रपञ्चमिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयता हि यया विषयतया विशिष्टायां यस्यां विषयतायामवच्छेदिका, सा विशेषणीभूता प्रकारता, विशेष्यीभूता सांसर्गिकविषयता, तदवच्छेदकविषयता तु विशेष्यता ; तथाच विषयतानिष्ठं विषयतावच्छेदकत्वं विशेष्यतात्वम् । तादृशावच्छेदकत्वं यां विषयतां प्रति, तत्त्वं तादृशावच्छेदकतानिरूपकविषयतात्वरूपं सांसर्गिकविषयतात्वम् । विषयतानिष्ठायां तादृशावच्छेदकत्वनिरूपकतायामवच्छेदकविषयतात्वं प्रकारतात्वम् ।

नच—तादात्म्यादिविषयतानिष्ठायामुक्तनिरूपकतायां रजतादिनिष्ठा विषयता यथाऽवच्छेदिका, तथा तादात्म्यत्वादिविषयताऽपि, इति तस्यामपि निरुक्तप्रकारतात्वं स्यादिति—वाच्यम् ; तादृशनिरूपकतायाः समानाधिकरणं यत् तदवच्छेदकत्वम्, तस्यैव प्रकारतात्वरूपत्वात्, तादात्म्यत्वादिनिष्ठविषयतायां तदभावात् । 'रजततादात्म्येनेदं जानामी'त्यनुभवो हि रजतविषयताविशिष्टस्य तादात्म्यविषयत्वस्योक्तनिरूपकतां गृह्णन् रजतविषयताया अपि तां गृह्णाति, ननु तदवच्छेदकत्वमात्रम् । नहि रजतविषयत्वस्येदंविषयतावच्छिन्नत्वे कस्यापि विप्रतिपत्तिः ; तस्य तादात्म्यादिसांसर्गिकविषयत्वाग्राहकेणापि 'इदं रजतं जानामि' 'इदं रजतत्वेन जानामी'त्याद्यनुभवेन ग्रहणात्, तादात्म्यत्वविषयत्वस्य तूक्तनिरूपकत्वाननुभवेन तदवच्छेदकत्वमात्रं गृह्णाति ।

विट्ठलेशीयटिप्पणी

*विषयता हीति* ॥ यथा—इदंविषयता रजतविषयतया विशिष्टायां तादात्म्यविषयतायामवच्छेदिका । *प्रकारतेति* ॥ इति व्यवह्रियत इति शेषः । एवं सांसर्गिकविषयता-विशेष्यतापदयोरुत्तरमपि ॥ एवं सति विशेष्यतात्वादेः किं लक्षणं फलितम् ? तदाह—*तथाचेति* ॥ इदंनिष्ठावच्छेदकतावारणाय—'विषयते'ति । *तादृशावच्छेदकत्वम्=विषयतानिष्ठमवच्छेदकत्वम् । *यां विषयतां प्रति=यद्विषयतानिरूपितम् । यत्त्व-तत्त्वयोरननुगतत्वादाह—*तादृशेति* ॥ विषयतानिष्ठेत्यर्थः । निष्ठान्तविषयतापदप्रयोजनं पूर्ववत् । 'तादात्म्यादी'ति स्वरूपकीर्तनम् ।

प्रकारतालक्षणातिव्याप्तिं शङ्कते—*नच तादात्म्येति* ॥ उक्तनिरूपकतायामिति* ॥ इदंविषयतानिष्ठावच्छेदकतानिरूपकतायामित्यर्थः । *रजततादात्म्येनेति* ॥ तृतीयार्थो विषयता ज्ञाने विशेषणम्, तन्निरूपितावच्छेदकता धर्मितावच्छेदकीभूतेदंविषयतायां तादृशानुभवे भासते, इति तुल्यवित्तिवेद्यतया विशिष्टविषयतायां निरूपकताभानमिति भावः ॥ *ननु* 'रजततादात्म्येने'त्यस्य रजतविषयताविशिष्टत्वे सति तादात्म्यत्वविषयताविशिष्टा तादात्म्यविषयतेत्यर्थः, एवं च रजतविषयतायामिव विशेषणीभूतायां तादात्म्यत्वविषयतायामपि तादृशनिरूपकत्वभानं स्यादित्याशङ्क्य, प्रमाणान्तरसंवादाद् रजतविषयतायां तादृशनिरूपकत्वभानम्, ननु तादात्म्यत्वविषयतायाम् ; प्रमाणान्तरसंवादाभावात्, इत्याह—*नहीति* ॥ *इदंविषयतावच्छिन्नत्वे=इदंविषयतानिष्ठावच्छेदकतानिरूपकत्वे । *अननुभवेन*=अनुभवान्तराभावेन । *तदवच्छेदकत्वमात्रमिति* ॥ 'रजततादात्म्येनेदं जानामी'त्यनुभव इत्यनुषङ्गः । मात्रपदेनोक्तनिरूपकत्वव्यवच्छेदः । उक्तानुभवे तादात्म्यत्वविषयत्वस्य तादात्म्यविषयतायामुपलक्षणतैव, ननु रजतविषयताया इव विशेषणतेत्युपगमसम्भवेन तादात्म्यत्वविषयतायां निरूपकत्वानवगाहनेऽपि तादृशानुभवोपपत्तिरिति भावः । निरूपकतावच्छेदकता तु निरूपकांश उपलक्षणतया भासमानेऽपि भासत एवेति ध्येयम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नचैवमपि—सांसर्गिकविषयतात्वस्योक्तनिरूपकतामात्ररूपत्वे रजतादिविषयतायामपि तत् स्यादिति—वाच्यम्; उक्तनिरूपकतानवच्छेदकविषयतानिष्ठस्यैवोक्तनिरूपकत्वस्य सांसर्गिकविषयतात्वरूपत्वात्, तादृशनिरूपकत्वाश्रयविषयतावच्छिन्नस्यैव तादृशनिरूपकत्वस्य तद्रूपत्वाद्वा। तादात्म्यविषयतानिष्ठैव हि तादृशनिरूपकता तादृशनिरूपकताश्रयेण रजतविषयत्वेनावच्छिन्ना, न रजतविषयतानिष्ठा, तादात्म्यत्वविषयता तूक्तनिरूपकतावच्छेदकत्वाद् न सांसर्गिकविषयता, किंतु तदवच्छेदिका। एवमिदंत्वादिविषयताऽपि तादात्म्यादिविषयतावच्छेदकतायामिदंविषयतानिष्ठायामवच्छेदिका, अतो विशेष्यतावच्छेदिका॥

*अथ*—तादात्म्यत्वादिविषयतायाः सांसर्गिकविषयतावच्छेदकताशब्देन कथं तान्त्रिकव्यवहारः? इति—चेत्, तादात्म्यत्वादेरपि सांसर्गिकविषयतावच्छेदकताश्रयतया तद्धर्मतयेति गृहाण। एवमिदंत्वादिविषयतायामपि विशेष्यतावच्छेदकताशब्देन व्यवहारः। तादात्म्यसम्बन्धेन रजतादिकं यत्रेदमादौ प्रकारः, तत्र रजतत्वादिकमप्याधारत्वसम्बन्धेन प्रकारः; यत्र तु संयोगादिसम्बन्धेन रजतादिकं प्रकारः, तत्र रजतत्वादेर्नोक्तसम्बन्धेन प्रकारत्वनियमः, प्रकारतावच्छेदकत्वं तूभयत्र। नचैवम्—रजतादिविषयतानिष्ठस्येदंविषयतानिष्ठावच्छेदकतानिरूपकत्वस्य प्रकारतात्वरूपस्य तादृशनिरूपकतावत्या रजतत्वादिविषयताऽवच्छिन्नत्वेन तादात्म्यसम्बन्धेन रजतादिप्रकारकभ्रमस्थले रजतादिप्रकारता सांसर्गिकविषयता स्यात्, पूर्वोक्तस्य द्वितीयलक्षणस्य तत्र सत्त्वादिति—वाच्यम्; रजतादिविषयतानिष्ठस्योक्तनिरूपकत्वस्य तादृशनिरूपकतावत्या रजतत्वादिविषयताऽनवच्छिन्नत्वात्॥

द्वयी हि तादृशस्थले रजतत्वादिप्रकारता, एका प्रातीतिकेनेदमनुयोगिकसंसर्गेण, अन्या व्यावहारिकेण रजतादिनिष्ठसंसर्गेण। आद्या इदंत्वाद्यवच्छिन्नविशेष्यतावच्छिन्ना, अन्त्या रजतादिनिष्ठयाऽनवच्छिन्न-

विट्ठलेशीयटिप्पणी

*ननु* यदि रजतविषयताया अप्युक्तनिरूपकत्वम्, तदा संसर्गतालक्षणातिव्याप्तिरित्याशङ्कते—*नचैवमपीति*॥ *एवमपि*=प्रकारतात्वस्यानतिप्रसङ्गेऽपि। नञर्थानिवेशेन लाघवादाह—*तादृशेति*॥ तद्रूपत्वात्=सांसर्गिकविषयतात्वरूपत्वात्। *न रजतविषयतानिष्ठेति*॥ अतो न तत्र संसर्गतात्वप्रसङ्ग इति भावः। *ननु* तादात्म्यत्वविषयतायाः संसर्गतात्वं न स्यात्; उक्तनिरूपकत्वस्य तत्राभावादित्याशङ्कामिष्टापत्त्या परिहरति—*तादात्म्यत्वविषयता त्विति*॥ तादात्म्यत्वविषयता तु न सांसर्गिकविषयता, किन्तु तदवच्छेदिका; उक्तनिरूपकतावच्छेदकत्वादिति योजना। नचैवम्—संसर्गविशेषणानां संसर्गतैवेति नियमभङ्ग इति—वाच्यम्; विशेष्यविशेषणानां विशेष्यत्वाभावेन तादृशनियमस्याप्रयोजकत्वात्, तद् ध्वनयन्नाह—*एवमिति*॥

*कथमिति*॥ तादात्म्यत्वविषयता हि सांसर्गिकविषयतानिष्ठनिरूपकतावच्छेदकताश्रया, न तु सांसर्गिकविषयतावच्छेदकतारूपेति भावः। *तद्धर्मतयेति*॥ तादृशविषयतावच्छेदकीभूततादात्म्यत्वधर्मतयेत्यर्थः। 'अथ-कथं' हीनं 'व्यवहारः' (१) इत्यन्तमनुवर्तते। सांसर्गिकविषयतावच्छेदकताशब्देन भावप्रत्ययान्तेन तादृशविषयतावच्छेदकस्य धर्मस्तादृशविषयतावच्छेदकतानात्मकोऽपि परिभाषया प्रतिपाद्यत इति भावः। *एवम्*=विशेष्यतावच्छेदकीभूतेदंत्वधर्मतया। इदंत्वविषयतायां विशेष्यतावच्छेदकताव्यवहारमुपपाद्य रजतत्वविषयतायां प्रकारतावच्छेदकताव्यवहारोपपादनायाह—*तादात्म्यसम्बन्धेनेति*॥ रजतत्वादिकमपीति*॥ अत एव 'रजतत्वेनेदं जानामी'त्यप्यनुभव इति भावः। *एवम्*='इदं रजतमि'ति भ्रम इदमंशे रजतत्वस्यापि प्रकारत्वे। *रजतत्वविषयतयेति*॥ इदमंशे रजतांशे चैकैव रजतत्वस्य प्रकारतेत्यभिमानः॥

अभिमानं निराकरोति—*द्वयी हीति*॥ नचैवम् 'इदं रजतं रजतत्ववच्चे'ति समूहालम्बनाद् 'इदं रजतमि'ति भ्रमस्य वैलक्षण्यानुपपत्तिः; तादृशभ्रमे रजतत्व-प्रकारत्वयोरवच्छेद्यावच्छेदकभावोपगमेन तदुपपत्तेः। *अन्त्येति*॥

(१) 'अथशब्दं कथंशब्दं च त्यक्त्वाऽखिलमपि शङ्कावाक्यमावर्त्यावच्छेदकताश्रयतयेत्यस्योत्तरं योजनीयमिति भावः (क टिप्पणी)।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विशेष्यतयाऽवच्छिन्ना, तदवच्छिन्नत्वं च तन्निष्ठावच्छेदकतानिरूपकत्वम् । तथाचान्या नेदंविशेष्यतानिष्ठाऽवच्छेदकतानिरूपिका ; तदवच्छेदकस्य व्यावहारिकस्य रजतत्वादिसंसर्गस्येदंविशेष्यतावच्छेदेनानध्यासेनोक्तावच्छेदकतानिरूपकत्वाभावात् । नहि यत्संसर्गानवच्छेदिका या विशेष्यता, सा तत्संसर्गावच्छिन्नप्रकारतावच्छेदिका ; आद्या तु तादृशावच्छेदकतानिरूपिका, नतु रजतादिप्रकारतानिष्ठायास्तादृशनिरूपकताया अवच्छेदिका ; रजतत्वादिप्रातीतिकसंसर्गोपहितरूपेण रजतादेरुक्तनिरूपकत्वाननुभवात् । नच यत्संसर्गो नोक्तनिरूपकतावच्छेदकः, तत्संसर्गावच्छिन्नप्रकारतोक्तनिरूपकतावच्छेदिका । तस्माद् रजतादिप्रकारतायां न सांसर्गिकविषयतात्वापत्तिः । अत एव तादृशप्रमास्थलेऽपि नोक्तापत्तिः । [*'इदं रजतमि'त्यादिप्रमायां हि रजतत्वप्रकारता द्वयी– एका इदंत्वावच्छिन्नविशेष्यतयाऽवच्छिन्ना ; अन्या रजतनिष्ठयाऽनवच्छिन्नविशेष्यतयाऽवच्छिन्ना ; आद्या इदंत्वावच्छिन्नविशेष्यतानिष्ठावच्छेदकतानिरूपिकाऽपि नोक्तनिरूपकतावच्छेदिका ; रजतप्रकारतानिष्ठामुक्त-

विट्ठलेशीयटिप्पणी

रजतप्रकारतानिष्ठाया उक्तनिरूपकताया अवच्छेदिकाऽपीति शेषः । *ननु* रजतत्वीयव्यावहारिकसंसर्गस्योक्तनिरूपकत्वाभावेऽपि तत्संसर्गावच्छिन्नरजतत्वप्रकारताया उक्तनिरूपकत्वं कुतो नेति ? अत आह—*नहीति* ॥ तत्संसर्गावच्छेदकत्वस्य तत्संसर्गावच्छिन्नप्रकारतावच्छेदकताव्यापकत्वोपगमादिति भावः ॥

(१) [*आद्या=प्रातीतिकसंसर्गावच्छिन्ना रजतत्वप्रकारता । *नचेति*॥ न हीत्यर्थः । तदवच्छेदकतानिरूपकतावच्छेदकसम्बन्धत्वस्य तादृशनिरूपकतावच्छेदकप्रकारतावच्छेदकसम्बन्धत्वव्यापकत्वोपगमादिति भावः । *तत्संसर्गेति*॥ यथा रजतत्वीयप्रातीतिकसंसर्गावच्छेदकस्यैवेदंविशेष्यत्वस्य प्रातीतिकसंसर्गावच्छिन्नरजतत्वप्रकारतावच्छेदकत्वम् ; नतु व्यावहारिकसंसर्गावच्छिन्नरजतत्वप्रकारतावच्छेदकत्वम्, (प्रकृत इदंविशेष्यत्वे रजतत्वीयव्यावहारिकसंसर्गावच्छेदकत्वस्यैव व्यापकस्याभावाद् व्यावहारिकसंसर्गावच्छिन्नप्रकारतावच्छेदकत्वस्य व्याप्यस्याभावः, (क टिप्पणी) किन्तु रजतत्वीयव्यावहारिकसंसर्गावच्छेदकस्यैव रजतविशेष्यत्वस्य व्यावहारिकसंसर्गावच्छिन्नरजतत्वप्रकारतावच्छेदकत्वमिति भावः । *तन्निष्ठावच्छेदकतेति* ॥ यथेदंविशेष्यतानिष्ठावच्छेदकतानिरूपकताया रजतत्वनिष्ठाया अवच्छेदकस्यैव रजतत्वीयप्रातीतिकसंसर्गस्य रजतत्वनिष्ठोक्तनिरूपकतावच्छेदकप्रकारतावच्छेदकत्वम्, प्रकृते प्रातीतिकसंसर्गे रजतनिष्ठेदंविशेष्यतानिरूपकत्वावच्छेदकत्वस्य व्यापकस्याभावाद् रजतप्रकारतानिष्ठोक्तनिरूपकतावच्छेदकीभूता या रजतत्वप्रकारता, तदवच्छेदकत्वस्य व्याप्यस्याभावः ; रजतत्वीयव्यावहारिकसंसर्गस्य रजतनिष्ठोक्तनिरूपकतावच्छेदकस्यैवावच्छेदकीभूता या रजतत्वप्रकारता, तदवच्छेदकसम्बन्धत्वमिति भावः । अथवा—*न हीति* ॥ या यत्संसर्गावच्छिन्नप्रकारतावच्छेदिका, सा तत्संसर्गावच्छेदिका ; यथेदंविशेष्यता रजतत्वीयप्रातीतिकसंसर्गावच्छिन्नप्रकारतावच्छेदिका तदीयतत्संसर्गावच्छेदिका । एवं चेदंविशेष्यत्वे रजतत्वीयव्यावहारिकसंसर्गानवच्छेदकत्वाद् न तदीयतत्संसर्गावच्छिन्नप्रकारतावच्छेदकत्वम्, किन्तु रजतविशेष्यत्व एवोक्तसंसर्गघटितावच्छेदकत्वद्वयमिति भावः । *नचेति* ॥ यः संसर्गो यन्निष्ठावच्छेदकतानिरूपकतावच्छेदकप्रकारतावच्छेदकः, स संसर्गस्तन्निष्ठावच्छेदकतानिरूपकतावच्छेदकः ; यथा रजतत्वीयप्रातीतिकसंसर्ग इदंविशेष्यतानिष्ठावच्छेदकतानिरूपकताया रजतत्वनिष्ठाया अवच्छेदकीभूताया रजतत्वप्रकारताया अवच्छेदकः, स इदंविशेष्यतानिष्ठावच्छेदकतानिरूपकताया रजतत्वनिष्ठाया अवच्छेदकः । एवं च प्रातीतिकसंसर्ग इदंविशेष्यत्वनिष्ठावच्छेदकतानिरूपकताया अवच्छेदकत्वाद् रजतत्वनिष्ठाया उक्तनिरूपकतावच्छेदकप्रकारताया व्यावहारिकसंसर्गावच्छिन्नाया नावच्छेदकत्वम्, किन्तु व्यावहारिकसंसर्ग एवोक्तनिरूपकताघटितमवच्छेदकत्वमिति भावः । ]

उपसंहरति—*तस्मादिति* ॥ *अत एव=रजतत्वस्य प्रकारताद्वयोपपादनादेव । *तादृशप्रमास्थलेऽपि= 'इदं रजतमि'ति प्रमीयप्रकारतायामपि । *नोक्तापत्तिः=न संसर्गतात्वापत्तिः । इत उत्तरम्—'इदं'

(१) [ ] चिह्नान्तर्गतं सर्वं (क) पुस्तकानुसारेण योजितम् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निरूपकतां प्रति तस्या अव्यापकत्वेनानवच्छेदकत्वात्। नहि रजतत्वविशिष्टवैशिष्ट्यबुद्धिषु सर्वासु तादृशप्रकारतासत्त्वे मानमस्ति। नच—विशेषण-तत्त्वावच्छेदकयोरेकधर्मिण्येकसम्बन्धावच्छिन्नप्रकारताशालिबुद्धित्वमेव विशिष्टवैशिष्ट्यबुद्धित्वम्, तथाचैकसम्बन्धावच्छिन्नप्रकारतैकैव तादृशविशेष्यताद्वयावच्छिन्ना, नतु द्वयी, तथाच तादृशनिरूपकतावच्छेदिकाऽपि सेति—वाच्यम्; संयोगादिसम्बन्धेन रजतत्वादिविशिष्टस्य प्रकारतास्थले रजतत्वादेः संयोगादिना प्रकारत्वे भ्रमत्वापत्त्या प्रकारतयोरेकसम्बन्धावच्छिन्नत्वनिवेशासम्भवेन विशेषणतावच्छेदकस्य स्वाश्रयप्रतियोगिकेन विशेषणतावच्छेदकसम्बन्धेन प्रकारताया विशिष्टवैशिष्ट्यबुद्धिशरीरे निवेश्यत्वात्। वस्तुतस्तु—नोक्तरूपं विशिष्टवैशिष्ट्यबुद्धित्वम्, 'विशेष्ये विशेषणमि'ति ज्ञानापेक्षया विषयकृतस्य विशेषस्य वाच्यत्वात्, किन्तु विशिष्टस्य केवलादन्यत्वेन तत्प्रकारकत्वमेव; सिद्धान्ते तथैव स्वीकारात्, (१) ] तस्माद् विषयतानिष्ठं तद्विषयतावच्छेदकत्वं तद्विशेष्यतात्वम्, तदवच्छेदकविषयतात्वं विशेष्यतावच्छेदकतात्वम्, विषयतानिष्ठस्यावच्छेदकत्वस्य निरूपकत्वविशेषौ सांसर्गिकविषयतात्व-प्रकारतात्वे, तदवच्छेदकविषयतात्वे सांसर्गिकविषयता-प्रकारतावच्छेदकते ॥

*ननु*—तादृशविशेष्यतात्वादीनामखण्डविशेष्यतात्वादिभ्यः को विशेषः ? येन तादृशेष्वेव पक्षपातः, इति—चेत्*, अवश्यं सर्वैः कल्पनीयत्वमेव विशेषः, अन्योऽप्ययं विशेषः—मूलादौ तत्सम्बन्धे च यदवच्छेदकत्वम्, यच्च तन्निरूपकत्वं संयोगादौ तत्सम्बन्धे च, तज्जातीययोरेवावच्छेदकत्व-तन्निरूपकत्वयोर्विषयतासु कल्पनाद् विषय-विषयतयोर्द्वयोरेव ते वर्तेते, नैकत्रैव; तथाच विषय-विषयतयोरेकमपि नापलपितुं शक्यते, तज्जातीयावच्छेदकता-तन्निरूपकत्वयोः सम्बन्ध-सम्बन्ध्युभयसापेक्षत्वात्, अखण्डविशेष्यतात्वादेर्विषयतायां स्वीकारे तु तस्य ज्ञानवैलक्ष-

विट्ठलेशीयटिप्पणी

रजतमि'त्यादिप्रमायां हीत्यादिपाठः क्वचित्। *अव्यापकत्वेन=न्यूनवृत्तित्वेन; अन्यूनवृत्तेरेवावच्छेदकत्वादिति भावः। *नहीति*॥ मुख्यधर्मिणि रजतत्वबाधग्रहकालीनरजतत्वविशिष्टप्रकारबुद्धौ मुख्यधर्मिणि रजतत्वभानासंभवात्, तावतापि वक्ष्यमाणरीत्या विशिष्टवैशिष्ट्यावगाहित्वोपपत्तेरिति गूढभावः। ( *नच विशेषण-तत्त्वावच्छेदकयोरिति*॥ तथाच रजतत्वरूपविशेषणतावच्छेदकस्य रजत इदमि च तादात्म्येनैकसम्बन्धेन प्रकारत्वमिति भावः। (क) *सेति*॥ तथाच रजतविशिष्टवैशिष्ट्यावगाहिप्रमीयप्रकारतायां संसर्गतात्वापत्तिर्दुर्वारेति भावः। *प्रकारतयोरिति*॥ विशिष्टवैशिष्ट्यबुद्धित्वशरीर इत्यादिः। *विशेषणतावच्छेदकस्येति*॥ विशेषणतावच्छेदकधर्मनिष्ठस्वाश्रयप्रतियोगिकत्वविशिष्टविशेषणतावच्छेदकसम्बन्धावच्छिन्नप्रकारताया इत्यर्थः। *नोक्तरूपम्=नैकसम्बन्धावच्छिन्नप्रकारतागर्भम्, उक्तविशिष्टसम्बन्धावच्छिन्नप्रकारतागर्भं वा। *विषयकृतस्येति*॥ प्रकारकृतस्येत्यर्थः। *तेन=द्वितीयरीतौ स्वावच्छिन्नत्वविशिष्टप्रतियोगिताकत्वविशिष्टस्य विशेषणसम्बन्धस्य भानोपगमेन संसर्गकृतवैलक्षण्यसंभवेऽपि न क्षतिः। विशेष्यतावच्छेदकतात्वादिकं निर्वक्तुं विशेष्यतात्वादिकं निगमयति—*तस्मादिति*॥ प्रकारतावच्छेदकते इति*॥ इदं च प्रकारतात्वं द्विविधं 'तत्क्षणविशिष्टघटवान्' इति ज्ञानीयतत्क्षणनिष्ठविषयतासाधारणम्, इति नैतेनोक्तज्ञानयोर्वैलक्षण्यनिर्वाहः, इत्यतो विषयकृतवैलक्षण्यमेव वाच्यम्, इति विशिष्टस्य केवलभिन्नत्वं स्वीकार्यमिति भावः। *अयम्=( एकस्यैव विषय-विषयतोभयनिष्ठत्वरूपः (क)।) तथाचेत्यनेन वक्ष्यमाणविषयाद्यपलापाप्रसञ्जकत्वरूपः। *विषय-विषयतयोः=सम्बन्धि-सम्बन्धरूपयोः। ( *ते=अवच्छेदकत्व-तन्निरूपकत्वे (क)।) *तथाच=क्लृप्तजातीयावच्छेदकत्वादिकल्पने च। (एवं चान्यत्र क्लृप्तस्यैव धर्मस्य विषयतानिष्ठत्वोपहितस्य विशेष्यतात्वरूपता, अखण्डविशेष्यतात्वं तु न सर्वैः कल्प्यते, विषयतामात्रनिष्ठत्वेनान्यत्राक्लृप्तं चेति भावः (क)।) 'विषय-विषयतयोरि'ति निर्धारणविभक्तिः। *उभयसापेक्षत्वादिति*॥ ( उभयाश्रितत्वादित्यर्थः (क)।) असम्बद्धस्य वस्तुनः सम्बन्धिनं विना सम्बन्धमात्रस्यावच्छेद्यावच्छेदकत्वाद्यसम्भवात, अवच्छेद्याधिकरणसम्बन्धस्यैवावच्छेदकत्वनियमादिति भावः। अखण्डविशेष्यतात्वादिस्वीकारे तु विषयापलापप्रसङ्गमाह—*अखण्डेति*॥

(१) कुण्डलितो भागः (क) पुस्तके नास्ति।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ण्यानुभवान्यथानुपपत्तिरेव कल्पिका। सा च ज्ञानगतमेव वैलक्षण्यं कल्पयेत्, न विषयतानिष्ठम्। तथाच घटत्वादिकमपि ज्ञानस्यैव धर्मः; घट-पटादिज्ञानानां मिथो वैलक्षण्यानुभवस्यान्यथाऽनुपपत्तेः। तथाच ज्ञानस्य घटादिविषयैरत्यन्ताभेदापत्त्या साकारवादापत्तिः। *अथ*—वेदान्तिनां मतमालम्ब्य तार्किकैरेवं वाच्यम्—घटादीनामुत्पत्ति-विनाशवत्त्वानुभवाद् ज्ञानस्य च विषयाविशेषितरूपेण तथाऽननुभवेन लाघवेन चैकव्यक्तिरूपत्वाद् न ज्ञानस्य ज्ञातघटादिभिरभेदः। नचैवम्—तेषां व्यवहारो न स्यात्, व्यवहारविषयतायां तादात्म्येन ज्ञानव्यक्तेः प्रयोजकतया क्लृप्तत्वेऽपि ज्ञान एव तत्तादात्म्यसत्त्वाद् ज्ञानभिन्नेऽपि विषये ज्ञानसम्बन्धं स्वीकृत्य तस्य तत्र व्यवहारविषयताप्रयोजकत्वकल्पने गौरवादिति—वाच्यम्; ज्ञानतादात्म्यापन्नतया विषयाणां कल्पितत्वेन ज्ञान इव विषयेष्वपि कल्पितस्य ज्ञानतादात्म्यस्य सत्त्वात्। तथाच न ज्ञानस्य घटत्वादिकं धर्मः। नहि नैल्यादिकं गगनादावारोपितमपि तस्य धर्मः; धर्मिसमसत्ताकस्यैव धर्मपदमुख्यार्थत्वात्। नच—ज्ञानानां मिथो वैलक्षण्यानुभवानुपपत्तिरिति—वाच्यम्; ज्ञानानां मिथो विलक्षणविषयतादात्म्यमनुभूयते, नतु मिथो वैलक्षण्यम्। तथाच ज्ञानगतस्य वैलक्षण्यस्य साकारवादिबौद्धस्वीकृतस्य कः प्रसङ्ग इति—चेत्, *तर्हि* वेदान्तिभिरेव जितम्। तार्किकस्वीकृतस्य सम्बन्धरूपविषयतागतस्यापि वैलक्षण्यस्य विशेष्यतात्वादेः कः प्रसङ्गः? *अथैवम्*—इदमादि-तद्विषयत्वयोरुक्तावच्छेदकत्वमपि न स्यादिति—चेत्, *न*; नहि तद् ज्ञानानां मिथो वैलक्षण्यानुभवान्यथानुपपत्त्या कल्प्यते, येनोक्तरीत्या न स्यात्, किन्तु मूलादितत्सम्बन्धयोः संयोगाद्यवच्छेदकत्ववत् सार्वलौकिकेन पूर्वोक्तानुभवेनेत्यलं पल्लवेन। तस्माद् विषयवैलक्षण्येनैव ज्ञानानां वैलक्षण्यस्य वाच्यत्वाद् विशिष्टवैशिष्ट्यज्ञाने विशिष्टस्य विषयत्वात्, 'विशेष्ये विशेषणं तत्रापि विशेषणान्तरमि'ति ज्ञाने च तस्याविषयत्वाद् उक्तज्ञानयोः—'तत्क्षणविशिष्टघटवानि'त्याकारसाम्येऽपि मिथो विशेषः॥

विट्ठलेशीयटिप्पणी

तथाचेति*॥ ज्ञानवैलक्षण्यानुभवान्यथानुपपत्तेर्ज्ञानगतवैलक्षण्यमात्रकल्पकत्वे चेत्यर्थः। *अन्यथा=घटत्वादीनां ज्ञानधर्मत्वं विना: विषयतारूपवैलक्षण्यान्तरकल्पनापेक्षया क्लृप्तघटत्वादीनामेव तद्धर्मत्वकल्पने लाघवादिति भावः। तथा सति किमनिष्टम्? तत्राह—*तथाचेति*॥ अभेदापत्त्येति*॥ घटत्वादीनां घटाद्यत्यन्ताभेदव्याप्यत्वादिति भावः। *उत्पत्ति-विनाशवत्त्वानुभवादिति*॥ नानात्वादिति शेषः। *तथा=उत्पत्ति-विनाशवत्त्वेन। *लाघवेन चेति*॥ घटाद्यभिन्नरूपत्वेन नानात्वकल्पनापेक्षयेत्यादिः। *तेषाम्=घटादीनाम्। *व्यवहारः='अयं घटः' इत्यादिबोधकशब्दप्रयोगः, उपादानं वा। *ननु* व्यवहारे तादात्म्येन ज्ञानस्येव तदीयविषयतारूपसम्बन्धस्याप्याश्रयतासम्बन्धेन प्रयोजकतोपेयते, तथाच घटादेर्ज्ञानतादात्म्याभावेऽपि ज्ञानविषयत्वाश्रयतया व्यवहारोपपत्तिरित्यत आह—*तादात्म्येनेति*॥ क्लृप्तत्वेऽपीति*॥ अत एव ज्ञानरूपात्मविषयकव्यवहारोपपत्तिरिति भावः। 'क्लृप्तत्वेऽपी'त्यस्य कल्पनेऽन्वयः। *तत्तादात्म्येति*॥ ज्ञानतादात्म्येत्यर्थः*॥ 'सत्त्वादि'त्यन्तं स्वीकृत्येत्यत्र हेतुः। *तथाच=ज्ञानतादात्म्यापन्नतया घटादेः कल्पितत्वे च। *ननु* घटाभेदो घटत्वं वा ज्ञानरूपे ब्रह्मण्यारोपितमस्त्येवेत्यत आह—*नहीति*॥ *नचेति*॥ एवमिति शेषः। घटत्वादीनां ज्ञानधर्मत्वाभावे। ज्ञानवैलक्षण्यानुभवमप्यपलप्य समाधत्ते—*ज्ञानानामिति*॥ *विशेष्यतात्वादेः कः प्रसङ्ग इति*॥ ज्ञानवैलक्षण्यमिव तत्संबन्धरूपविषयतावैलक्षण्यमपि नानुभूयते, किंतु विषयवैलक्षण्यमेवानुभूयते, तच्च विषयतागतविशेषं विनैव सर्वसिद्धमिति भावः। *एतेन*—विशिष्टोपलक्षितज्ञानयोर्वैलक्षण्यसिद्ध्यर्थं विशिष्टस्य केवलातिरिक्तत्वं विशेष्यतात्वादिकमखण्डं वा स्वीकार्यमिति विनिगमनाविरह—*इत्यपास्तम्; विशेष्यतात्वादेरतिरेके विषयापलापप्रसङ्गात्, विषयवैलक्षण्यस्यैवानुभवाच्चेत्यनुसन्धेयम्। *तस्मात्=अखण्डस्य विशेष्यत्वादेरसिद्धेः, सखण्डस्य च प्रकारतावच्छेदकतात्वादेरुक्तरीत्योक्तज्ञानवैलक्षण्यासाधकत्वात्। घटांशे 'एकत्र द्वयमिति' रीत्या तत्क्षण-घटत्वोभयावगाहिधर्मितावच्छेदकविशेषणाभावेऽ तदुभयावगाहिविशिष्टघटप्रकारकज्ञानयोर्विशेषं प्रदर्श्य 'विशेष्ये विशेषणमि'ति रीत्या ज्ञाने ताभ्यां विशेषं स्मारयति—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

एवम्—'एकत्र द्वयमि'ति रीत्या तादृशाकारज्ञाने तत्क्षण-घटत्वाभ्यां विशिष्टे विशेषणम्, तदतिरिक्तश्च तत्क्षण-विशिष्टो घटः; घटत्वविशिष्टानुयोगिकस्य तत्क्षणवैशिष्ट्यस्य तत्र घटकत्वात्, तादृशघटस्य तत्क्षणविशिष्टघटत्वेन विशिष्टस्य वा विशिष्टवैशिष्ट्यज्ञाने विषयत्वात्, 'विशेष्ये विशेषणम्, तत्र च विशेषणान्तरमि'ति ज्ञाने च भूतलादौ केवलघटस्यैव विशेषणत्वात् तेषां मिथो विशेषः। नच—तत्क्षणविशिष्टघटस्य तद्व्यक्तित्वरूपेण यद् ज्ञानम्, तस्य तादृशघटत्वरूपेण ज्ञानापेक्षया वैलक्षण्यं न स्यादिति—वाच्यम्; तद्व्यक्तित्वविशिष्टविषय-कत्वस्यैवोक्तवैलक्षण्यरूपत्वात्। *अथ*—तत्क्षणविशिष्टस्य यत्र विषयत्वादिकं व्यवह्रियते, तत्र तत्क्षणो-पहितस्य तत्क्षणोपलक्षितस्य वा तद्व्यवहारः स्यादिति—*चेत्, *न*; उपहितोपलक्षितशब्दयोर्हि न विशिष्ट-मर्थः, किन्तु येन धर्मेणोपहितमुच्यते, विद्यमानेन तेन तच्छून्याद् व्यावर्तितमुपहितशब्दार्थः। तथाच 'तत्क्षणो-पहितघटो विषयः' इत्यत्र विषयताकाले घटे विद्यमानेन तत्क्षणेन तत्क्षणानवच्छिन्नघटादिभ्यो व्यावर्तितो घटो विषय इत्येव बुद्ध्यते, नतु विशिष्टो घटो विषय इति। 'तत्क्षणोपलक्षितो घटो विषयः' इत्यादावप्येवम्। विद्यमानपदस्थानेऽविद्यमानपदमिति तु विशेषः। तथाच तदुभयस्थले विशिष्टस्य विषयत्वाप्रत्ययाद् विशिष्टस्य विषयत्वप्रत्ययस्थले विशेषणस्यापि विषयताप्रत्ययादुक्तव्यवहाराणां मिथो विशेषः॥

अथ—तत्क्षणविशिष्टं यत्र न विषयः, तत्र केवलघटादावसंबद्धतत्क्षणस्य तदनवच्छिन्नघटादिभ्यो

विट्ठलेशीयटिप्पणी

*एवमित्यादिना*॥ तत्क्षणविशिष्टो घटश्च तदतिरिक्त इत्यन्वयः। अत्र हेतुमाह—*घटत्वेति*॥ *तादृश-घटस्येति*॥ 'विशिष्टवैशिष्ट्यज्ञाने विषयत्वादि'त्यत्रान्वयः। विशेषरूपेण संसर्गतानुपगमे त्वाह—*तत्क्षणविशिष्ट-घटत्वेनेति*॥ सामानाधिकरण्यसम्बन्धेनेत्यादिः। तत्क्षणेन चेति शेषः। *केवलघटस्यैवेति*॥ उक्तविशिष्ट-द्वयातिरिक्तस्येति शेषः। एवकारेण विशिष्टद्वयव्यवच्छेदः। *विशेषणत्वादिति*॥ तत्र च तत्क्षणस्य विशेषण-त्वादिति शेषः। अत एव 'घटवानि'ति ज्ञानात् तस्य विशेषः, त्रयाणामाकारसाम्येन विशेषोपपादनावसरश्च। अत्राद्यस्य तुल्यतया तत्क्षण-घटत्वोभयप्रकारकं ज्ञानं कारणम्, द्वितीयस्य घटत्वं धर्मितावच्छेदकीकृत्य तत्क्षणवैशिष्ट्य-ज्ञानम्, तृतीयस्य तु 'तत्क्षणो घटश्चे'ति विशृङ्खलमेव ज्ञानमिति बोध्यम्। *तादृशेति*॥ तत्क्षणविशिष्टेत्यर्थः। उपहितोपलक्षितशब्दयोर्विशिष्टार्थकत्वभ्रमेण शङ्कते—*अथेति*॥ *यत्र=यज्ज्ञाने। निरूपितत्वं सप्तम्यर्थो विषयत्वान्वयी। *व्यवह्रियत इति*॥ व्यवहारश्च 'तत्क्षणविशिष्टो घट एतज्ज्ञानविषयः, इत्याद्याकारकः। उक्तभ्रमं निराकरोति—*उपलक्षितोपहितशब्दयोरिति*॥ *विद्यमानेनेति*॥ व्यावर्त्यस्य समभिव्याहृतपदार्थान्वयकाल इत्यादिः। *तच्छून्याद् व्यावर्तितः=प्रकारीभूय तच्छून्याविषयकबुद्धिविषयीकारितः, लिङ्गीभूय तच्छून्यभिन्नत्वेन ज्ञापितो वा। *विषयः=तज्ज्ञानविषयः। (*विशिष्टस्य विषयत्वाप्रत्ययादिति*॥ उपाध्युपलक्षणयोर्विषयत्वाप्रत्ययादिति भावः(क)।) *विशेषणस्यापीति*॥ येन धर्मेण विशिष्टमुच्यते, विशेष्यान्वयिसमभिव्याहृतपदार्थान्वयिना विद्यमानेन तेन तच्छून्याद् व्यावर्तितं विशिष्टशब्दार्थः। तथाच 'तत्क्षणविशिष्टो घटो विषयः' इत्यत्र विषयताकाले विद्यमानेन विषयताश्रयेण तत्क्षणेन तत्क्षणानवच्छिन्नघटादिभ्यो व्यावर्तितो घटो विषय इति बुध्यत इति भावः। *एतेन*—उपहितोपलक्षितपदस्थल उपाध्युपलक्षणयोर्विषयताप्रत्ययो नास्तीति—*सूचितम्*॥

विशिष्ट-केवलयोर्भेदमननुसंदधानः—'तत्क्षणोपलक्षितघटो घट इति ज्ञानव्यक्तिविषयः' इति व्यवहारानुपपत्तिं शङ्कते—*अथेति*॥ *यत्र=तत्क्षणोपलक्षितघटविषयकेऽयं घट इति ज्ञाने। *तत्र=तादृशज्ञानविषय इत्यर्थः। *केवलघटादावसंबद्धतत्क्षणस्येति*॥ तत्क्षणविशिष्ट एव घटे तत्क्षणसंबन्धः, नतु केवले; अखण्डघटरूपधर्मि-मात्रस्यैव केवलघटपदार्थत्वात्, विशिष्टं च केवलाद् भिन्नम्; तथाच तत्क्षणस्य केवलघटरूपपक्षासंबद्धतया व्यावर्तकत्वानुपपत्तिरित्यर्थः। तथाचोपलक्षितपदार्थघटकव्यावर्तितत्वबाधात् 'तत्क्षणोपलक्षितघटस्तज्ज्ञानविषयः' इति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यावर्तकत्वानुपपत्तिः, घटादौ हि तल्लक्षणादियुक्ते तल्लक्षणाद्ययुक्ताद् व्यावृत्तिधीर्न तु केवल इति—चेत्, *न* ; तल्लक्षणादियुक्त-केवलघटयोस्तल्लक्षणादियुक्तत्व-घटत्वरूपाभ्याममभेदस्येव भेदस्यापि स्वीकारात्, 'घटस्तल्लक्षणयुक्तः' इत्यनुभवात्। अत एव 'घटो न तल्लक्षणविशिष्टः' इति धीर्न प्रमा ; अभेदविरोधिभेदस्य नञादिनोल्लेखात्। तद्विरोधित्वं चैकावच्छेदेनैकाधिकरणकत्वस्याभावः, तेन कृष्णसंयोगिन्यपि वृक्षे 'मूले न कृष्णसंयोगी'ति धीः प्रमैव ॥

*ननु*—कथं भेदाभेदयोरेकधर्मिप्रतियोगिगतत्वमवच्छेदकभेदमस्वीकृत्योच्यते ? नच—अवच्छेदकभेदं स्वीकृत्यैव तौ वाच्याविति—वाच्यम् ; मणिकाराद्युक्तिविरोधात्। मणिकारेण हि 'वृक्षे कपिसंयोग-तद्वद्भेदौ स्वीकृत्य 'नचैवं भेदाभेदः' इत्यनेन भेदाभेदमतमापाद्यावच्छेदकभेदाभ्युपगमादि'त्यनेनोक्तमतापत्तिः परिहृता। तथाच भेदाभेदमतमवच्छेदकभेदनिरपेक्षमिति तदभिप्रेतम्। नच—"कार्यात्मना तु नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा" ॥ इति वाचस्पत्युक्तया भेदाभेदवादिकारिकयाऽवच्छेदकभेदेनैव भेदाभेदयोरुक्तत्वाद् मणिकारोक्तवाक्यस्थस्य 'भेदाभेदः' इति पदस्य दोष इति शेषतया पूरणीयम्। तथाचावच्छेदकभेदस्वीकारे भेदाभेदस्वीकारो न दोष इति मणिकारवाक्यार्थ इति—वाच्यम् ; अवच्छेदकभेदेन गुण-गुण्यादिषु भेदाभेदानुमाने तार्किकादीन् प्रति क्रियमाणे सिद्धसाधनतापत्तेः। नहि तार्किकादिभिः कुण्डलादौ हेमत्वाद्यवच्छिन्नाभेदो न स्वीक्रियते। किञ्च हेमत्वादिना कुण्डलादावभेदस्वीकारे भेदोऽपि तेनैव रूपेण स्वीकार्यः ; अन्यथा 'हेम कुण्डलमि'ति सामानाधिकरण्यप्रत्ययानुपपत्तेः। नहि द्रव्यत्व-घटत्वाभ्यां भेदसत्त्वेऽपि 'घटः कलशः' इति सामानाधिकरण्यधीर्भवति। तस्मात् *कार्यात्मना=कार्यमात्रगतकटकत्व-कुण्डलत्वादिरूपैः कटक-कुण्डलादीनां मिथो भेद एव, 'कारणात्मने'त्यत्र कार्यात्मनेत्यनुषज्यते। तथाच कारणगतेन

विठ्ठलेशीयटिप्पणी

व्यवहारानुपपत्तिरित्यर्थः। *युक्ते=संबद्धे। विशिष्ट-केवलयोरभेदमनुसन्धाय समाधत्ते—*नेत्यादि* ॥ *अभेदस्येव भेदस्यापीति* ॥ भेदस्येवाभेदस्यापीत्यर्थः। यथाश्रुते भेदव्यवस्थापनस्योक्तशङ्कापरिहारानौपयिकतयाऽर्थान्तरापत्तेः, 'अत एवे'त्युपष्टम्भासङ्गतेश्च। तथाच तल्लक्षणस्य केवलघटरूपपक्षसंबद्धतया व्यावर्तकत्वोपपत्त्योक्तव्यवहारोपपत्तिरिति भावः। *अत एव=केवल-विशिष्टयोरभेदादेव। *ननु* अभेदे सत्यपि नञर्थभेदोऽबाधित एवेत्यत आह—*अभेद-विरोधीति* ॥ *अत्र* 'अथे'ति शङ्का-तत्समाधानव्याजेन विशिष्ट-केवलयोरभेदे युक्त्यन्तरं व्यञ्जितमिति बोध्यम् ॥

*भेदाभेदयोरिति* ॥ परस्पराभावरूपयोरिति शेषः। *मणिकारेण हीति* ॥ व्याप्तिपूर्वपक्षग्रन्थ इति शेषः। *तदभिप्रेतमिति* ॥ अवच्छेदकभेदाभ्युपगमाद् न भेदाभेदमतप्रवेशापत्तिरिति तद्वाक्यार्थादिति भावः। *उक्तत्वादिति* ॥ पूरणीयमित्यत्र हेतुः। *वाक्यार्थ इति* ॥ तथाच भेदाभेदमतस्यावच्छेदकभेदनिरपेक्षता न तद्वाक्यार्थ इति भावः। *कुण्डलादौ=कुण्डलत्वाद्यवच्छिन्ने। *हेमत्वाद्यवच्छिन्नाभेद इति* ॥ कटकत्वाद्यवच्छिन्नभेदश्चेति शेषः। समानाधिकृतत्वरूपहेतोरुपपत्तये गुणादौ गुण्यादिभेदाभेदौ स्वीकार्यौ, तत्रावच्छेदकभेदेन तत्स्वीकारे तदनुपपत्तिस्तदवस्थैवेत्याह—*किंचेति* ॥ *हेमत्वादिनेति* ॥ कुण्डलत्वावच्छिन्ने कटकस्य हेमत्वेनाभेदस्वीकारे भेदोऽपि हेमत्वेनैव स्वीकार्य इत्यर्थः। *तेनैव रूपेणेति* ॥ तद्रूपावच्छिन्ने तद्रूपावच्छिन्नस्य सामानाधिकरण्यधियं प्रति तद्रूपावच्छिन्ने तद्रूपावच्छिन्नप्रतियोगिकभेदाभेदयोः प्रयोजकत्वोपगमादिति भावः। *नहीति* ॥ तादृशधियं प्रति किञ्चिद्रूपावच्छिन्ने तत्र किञ्चिद्रूपावच्छिन्नप्रतियोगिताकभेदाभेदयोः प्रयोजकत्वोपगमे 'घटः कलशः' इति बुद्ध्यापत्तिरिति भावः। *तस्मात्=सिद्धसाधनादिवारणानुरोधात्। एकेनैव रूपेणेत्यत्रान्वयः। *ननु* तर्हि 'कार्यात्मना'त्वि'त्यादिकारिकाविरोध इत्याशङ्क्य तां व्याचष्टे—*कार्यात्मनेति* ॥ भेद एवेत्येवकारेणाभेदव्यवच्छेदः। अत एव 'कटकं कुण्डलमि'ति प्रत्ययो नेति भावः। *अनुषज्यत इति* ॥ तथाच 'कारणात्मने'त्यस्य हेमत्व-कुण्डलत्वाभ्यां

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रूपेण कार्यमात्रगतेन रूपेण च हेमत्व-कुण्डलत्वादिभ्यामभेदः । नानात्वमित्यनुषज्यते, *अभेदः=अभेदोऽपि, *भिदा=भिदैवेत्युक्तकारिकाव्याख्यानस्य वाच्यत्वेनैकरूपेणैव भेदाभेदौ वाच्यौ । अत एव भामत्यामुक्तम्— 'हाटकत्वेनैव रूपेण कटकादेः कुण्डलत्वादिमत्यभेदः, नतु कटकत्वादिरूपेण, तेन रूपेण तु तत्र तस्य भेद एव । एवं भेदोऽपि हाटकत्वादिना कटकादेः कुण्डलत्वादिमत्यस्ति ; हाटकत्वादिरूपेण ज्ञातेऽपि कुण्डलत्वादिरूपेण जिज्ञासोदयादि'ति ॥

*ननु*—हाटकत्व-कुण्डलत्वाभ्यामपि कटक-कुण्डलयोः कथमभेद उक्तः ? भिन्नदेशस्थत्वेन युगपदनुभूयमानयोरभेदाप्रत्ययादिति—चेत्, *न* ; यद्धि पूर्वं कटकादिरूपेण स्थितं पश्चात् कुण्डल-भावमापन्नम्, तस्यैव कटकादेस्तत्र कुण्डलादौ हाटकत्व-कुण्डलत्वादिरूपाभ्यामभेदः ; 'तद्धाटकमिदं कुण्डलमि'त्यादिप्रत्ययात्, नतु कटकत्व-कुण्डलत्वादिरूपाभ्याम् ; 'इदं कुण्डलं तत् कटकमि'त्यप्रत्ययात् । तथाच युगपत् क्रमेण वा यानि कार्याण्येकोपादानव्यक्त्या जनितानि, तेषामुपादेयमात्रगतरूपैर्मिथो भेद एव, तद्रूपोपादानगतरूपाभ्यां मिथो भेदाभेदौ । अत एवैकघटोपादानकानां रूप-रसादीनामपि तथा व्यवस्था ।

*ननु*—'इदं कुण्डलं कटकं स्थितमि'ति प्रत्ययात् कथमुक्तनियमः ? इति—चेत्, *न* ; उक्तप्रत्ययेन कटकत्वोपलक्षितस्याभेदावगाहनात्, तदुपहितस्य कुण्डलत्वाद्युपहिते भेद एवेति नियमस्यानपायात् । अत एवोक्तकारिकायां 'हेमात्मने'त्यादेर्हेमत्व-कुण्डलत्वादिरूपाभ्यां मिथोऽभेदेऽपि कुण्डल-कटकत्वादिरूपाभ्यां भिदैवेति व्याख्या । तस्मादुक्तकारिकायामेकोपादानकनानाकार्यदृष्टान्तेन कारण-कार्यरूपाभ्यामेव भेदाभेदावित्यस्यासदुक्तस्यैवोक्तत्वाद् न कोऽपि दोषः । तथाच भावाभावयोरवच्छेदकभेदं विना विरोधादसंगतिरिति—चेत्, *न* ; अवच्छेदकाभेदेन संयोग-तदभावयोर्विरोधः, घटत्व-तदभावयोस्त्ववच्छेदकनिरपेक्ष एव विरोधः, इत्यप्यनुभवबलादेव स्वीक्रियते ; तथाचावच्छेदकभेदं विनाऽपि गुण-गुण्यादिस्थले भेदाभेदावपि सामानाधिकरण्यप्रत्ययादेव स्वीक्रियेते, अत्यन्ताभेदेऽत्यन्तभेदे वोक्तप्रत्ययाभावात् । तदुक्तं वाचस्पत्ये— "विरुद्धमिति नः क्व प्रत्ययः ? यद् न प्रमाणगोचरः, प्रकृते च प्रमाणसत्त्वाद् न विरोधप्रत्ययः, सामानाधिकरण्यप्रत्यये हि भेदाभेदौ भासेते" इति ॥

*ननु*—कथमुक्तप्रत्यये भेदाभेदयोर्भानम् ? तयोरेकवत्ताज्ञानस्यापरवत्ताधीविरोधित्वेनैकनिश्चय-

विट्ठलेशीयटिप्पणी

कटक-कुण्डलयोर्भेदाभेदावित्यर्थः । कुण्डले कुण्डलत्वावच्छेदेन हेमत्वावच्छिन्नकटकस्य भेदाभेदाविति यावत् । एवं च 'हेम कुण्डलमि'ति प्रत्ययोपपत्तिरिति भावः । 'हेमात्मना यथाऽभेदः' इत्यभेदपदं व्याचष्टे—*अभेद इति* ॥ 'अभेदोऽपि' इत्यपीशब्देन भेदः । 'हेमात्मने'त्यस्य कुण्डले कटकस्य कटके वा कुण्डलस्येत्यादिः । 'कुण्डलाद्यात्मने'त्यादिपदेन कटकात्मना कुण्डले कटकत्वावच्छिन्नस्य, कटके वा कुण्डलत्वावच्छिन्नस्येत्यर्थः । 'भिदे'त्यत्र अप्यन्तर्भावभ्रमं निरस्यति —*भिदैवेति* ॥ उक्तरीत्या कारिकाव्याख्यानेऽध्याहारक्लेश इत्याशङ्क्योक्तव्याख्याने वाचस्पतिसंमतिमाह—*अत एवेति* ॥ अभेदः कथमुक्त इति योजना । उक्तरीतिमन्यत्र संचारयति—*तथाचेति* ॥ *तथा व्यवस्थेति* ॥ रूपत्व-रसत्वाभ्यां रूप-रसयोर्भेद एव, घटत्व-रूपत्वाभ्यां तु भेदाभेदावित्यर्थः । पूर्वपक्षमुपसंहर्तुमुक्तमनुवदति— *अत एवेत्यादि* ॥ *दोषः=विरोधः । पूर्वपक्षमुपसंहरति—*तथाचेति* ॥ *अवच्छेदकाभेदेन=एकदेश-कालावच्छेदेन । *विरोधः=एकधर्म्यवृत्तित्वम् । *अवच्छेदकनिरपेक्षः=एकदेश-कालावच्छिन्नत्वाघटितः । *यद् न प्रमाणगोचर इति* ॥ तत्रेति शेषः । *प्रकृते=गुणादिषु । अवच्छेदकभेदनिरपेक्षगुण्यादिभेदाभेदयोः किं प्रमाणम् ? तत्राह—*सामानाधिकरण्यप्रत्यये हीति* ॥

*एकवत्ताज्ञानस्येति* ॥ तादृशनिश्चयस्येत्यर्थः । कार्यसहभावेनेति शेषः । 'एकवत्ताज्ञानसामग्र्याः' इति

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयत्वासम्भवात्, नच—गुण्यादिस्थले नोक्तविरोधित्वं कल्प्यते, सामानाधिकरण्यप्रत्ययस्यान्यथानुपपत्तेरिति—वाच्यम्; 'घटो न नीलः' इति वाक्यजन्यधीकाले 'घटो नीलः' इति ज्ञानापत्तेः। नच—तयोरेकप्रकारकज्ञानस्यैव सामग्रया उक्तविरोधित्वम्, नत्वेकसंसर्गकज्ञानसामग्र्याः, उक्तप्रत्यये च तयोः संसर्गतयैव भानाद् नोक्तदोष इति—वाच्यम्; एकसंसर्गकधीसामग्र्या अप्युक्तविरोधित्वस्यानुभवसिद्धत्वात्। नहि 'घटोऽभेदसम्बन्धेन नीलविशिष्टः' इति धीकाले 'घटो भेदसम्बन्धेन नीलविशिष्टः' इति धीः, 'घटो न नीलः' इति धीर्वाऽनुभूयते। किञ्च सामानाधिकरण्यप्रत्यये संसर्गत्वेनाभेदस्य भानेऽपि भेदस्य भाने मानाभावः; तथाच द्वयोस्तत्र भानं वाचस्पत्युक्तमसङ्गतमिति—चेत्, *न*; एकधर्मावच्छिन्ने धर्मिणि भेदाभेदविषयकस्य निश्चयस्यासम्भवेऽपि तादृशप्रत्यये भेदसमानाधिकरणाभेदविषयतायां बाधकाभावात्। नहि 'नीलभेदविशिष्टं द्रव्यं नीलो घटः' इत्याकारकधीर्नोत्पद्यते॥

नच—'घटो नीलः' इत्यादिज्ञाने तादृशविषयताऽपि न सम्भवति; घटत्वविशिष्टे हि तादृशाभेदस्य विषयत्वे भेदस्यापि घटत्वविशिष्टे विषयताया आवश्यकत्वेन पूर्वं घटत्वविशिष्टे भेदनिश्चयस्यावश्यकत्वम्; घटे नीलभेदसंशयोत्तरं घटो नीलभेदसमानाधिकरणाभेदवानिति निश्चयस्यानुत्पत्तेः, तत्र नीलभेद-

### विट्ठलेशीयटिप्पणी

पाठेऽपि ज्ञानपदं निश्चयपरम्। *एकनिश्चयेति*॥ तयोरित्यनुषङ्गः। *ज्ञानापत्तेरिति*॥ गुण्यादिस्थलेऽप्युक्तविरोधित्वकल्पनाया आवश्यकत्वादिति शेषः। *एकसंसर्गकेति*॥ तयोरित्यादिः। *उक्तविरोधित्वस्य=अपरसंसर्गकधीविरोधित्वस्य। *घटो न नील इति*॥ एवंश्चाभेदसंसर्गकधियो भेदप्रकारकबुद्धावपि विरोधित्वमिति भावः। तादृशानुभवे विप्रतिपन्नं प्रत्याह—*किंचेति*॥ यद्वा—तयोरेकत्र भाने बाधकमुक्त्वा साधकाभावमाह—*किंचेति*॥ *अभेदस्य भानेऽपीति*॥ अत एव 'पटो घटः' इति धीर्न प्रमेति भावः। *मानाभाव इति*॥ नच—'घटो घटः' इति प्रमानुत्पादान्यथानुपपत्तिरेव तत्र मानमिति—वाच्यम्; अभेदसंसर्गावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन प्रमां प्रति घटत्वभेदस्य हेतुत्वकल्पनेनापि तादृशप्रमानुत्पादोपपत्तेरिति भावः॥

*केचित्तु*—'घटो घटः' इति ज्ञानस्योत्पत्तावपि न तत् प्रमा, घटत्वावच्छिन्नानुयोगिताकप्रतियोगिताकतादात्म्यस्य घटत्वरूपत्वमत इव तदतिरिक्तत्वमतेऽपि घटत्वसमशीलस्य घटत्वावच्छिन्नेन तुल्यवित्तिवेद्यस्योपगमेनाज्ञातविषयकत्वघटितप्रमात्वस्य तत्र दुरुपपादत्वात्, प्रमा-भ्रमानात्मकं तु तादृशज्ञानं निर्विकल्पकवदिष्यत एवेति—*वदन्ति*॥ *विषयकस्येति*। संसर्गप्रकारसाधारण्यमाह। *तादृशप्रत्यय इति*॥ 'घटो नीलः' इति प्रत्यये। *बाधकाभावादिति*॥ सामानाधिकरण्यघटकाधिकरणांशे भेदस्य निर्धर्मितावच्छेदकस्य भानादिति भावः। समानविशेष्यकत्वमात्रस्य विरोधितानियामकत्वे निर्धर्मितावच्छेदकस्यापि भेदभानस्यासंभवात् तत्र बाधकमाह—*नहीति*॥

'भेदसमानाधिकरणाभेदविषयते'त्यस्य 'भेदसामानाधिकरण्यविशिष्टाभेदविषयते'त्यर्थं इत्याशयेन शङ्कते—*नचेति*॥ *तादृशविषयता=भेदसामानाधिकरण्यविशिष्टाभेदविषयता। *तादृशाभेदस्य=भेदसामानाधिकरण्यविशिष्टाभेदस्य—*आवश्यकत्वेनेति*॥ विशिष्टविशेषणकबोधे विशेषणतावच्छेदकस्य धर्मिपारतन्त्र्येण धर्मिण्युपलक्षितविशेषणकज्ञानवैलक्षण्यानुरोधेन विशेषणत्वस्येव विशिष्टसंसर्गकबोधेऽपि तस्य तथा तत्र संसर्गतयोपलक्षितसंसर्गकज्ञानवैलक्षण्यानुरोधेनावश्यकत्वादिति भावः। *आवश्यकत्वमिति*॥ तथाच पूर्वं घटत्वावच्छिन्ने भेदनिश्चये सत्युत्तरकाले तत्राभेदनिश्चयो दुर्घट इति भावः। *ननु*—फलीभूतज्ञानस्य घटत्वावच्छिन्ने भेदाभेदोभयावगाहित्वेन तयोरेकज्ञानसामग्र्याऽपरज्ञानविरोधितयैव तादृशज्ञानस्य दुर्घटत्वनिर्वाहे किं पूर्वकालिकोक्तप्रतिबन्धकानुधावनेनेति—चेत्, *सत्यम्*; तयोः स्वातन्त्र्येणैकज्ञानसामग्र्या एव स्वातन्त्र्येणापरज्ञानं प्रत्येव प्रतिबन्धकत्वमित्यभ्युपगमेऽपि पारतन्त्र्येण भेदं स्वातन्त्र्येण चाभेदमवगाहमानस्योक्तज्ञानस्य दुर्घटत्वार्थमुक्तप्रतिबन्धकानु-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निश्चयस्य हेतुत्वात्, तदुक्तमनुमानदीधितौ—'साध्यसामानाधिकरण्यविशिष्टहेतोः पक्षे निश्चयस्तु पक्षे साध्यनिश्चयं विनाऽनुपपन्नः' इति। [ एतावांस्तु भेदः—यद् 'वह्निसामानाधिकरण्यविशिष्टधूमवान् पर्वतः', इति पर्वतांशे विशिष्टधूमस्य प्रकारत्वाद् वह्निरपि तत्र प्रकारः, 'घटो नीलः' इत्यादौ तु घटे विशिष्टाभेदस्य संसर्गत्वाद् भेदस्यापि संसर्गता ; अत एव घटे भेदसंसर्गकज्ञाने भेदसंसर्गेण नीलप्रकारकज्ञानमेव हेतुः ; औचित्यात्, नतु भेदप्रकारकमिति ] वाच्यम् ; भेदसामानाधिकरण्योपलक्षिताभेदविषयतायामुक्तदोषाभावात् ॥

अथ—भेदस्य तथा भानेऽपि किं मानमिति—चेत्, अत्र ब्रूमः—तद्घटे तद्घटस्य संयोगादिसम्बन्धेन धीर्न प्रमा, किन्तु तद्घटभिन्न इति व्यवस्थासिद्धये विशिष्टधीमात्रे विशेष्ये विशेषणस्य भेदसमानाधिकरणः सम्बन्धो विषय इति कल्प्यते ; तथा सति हि तद्घटे तस्य संयोगादिसत्त्वेऽपि तद्भेदसमानाधिकरणसंयोगादिसम्बन्धस्यासत्त्वाद् नोक्तधीः प्रमा। नच—उक्तसामानाधिकरण्यं तद्घटसंयोगेऽप्यस्त्येव, तस्य तद्घट इव तदन्यस्मिन् पटादावपि सत्त्वात्, तथाच तदुपलक्षितसंयोगस्य तद्घटेऽपि सत्त्वात् कथं न प्रमेति—वाच्यम् ; उक्तोपलक्षितत्वं हि प्रकृते तद्भेदोपलक्षिताधिकरणवृत्तित्वविशिष्टत्वम्। तथाचाधिकरणांशे भेदस्य विशेषणत्वेन न भानम्, किन्तूपलक्षणतया ; तदुपलक्षिताधिकरणवृत्तित्वस्य तु संयोगादिसम्बन्धांशे विशेषणतयैव सर्वत्र भानम्, तादृशवृत्तित्वविशिष्टसंयोगादेश्च न तद्घटादौ सत्त्वमिति नोक्तधीः प्रमा ॥

*ननु*—'तद्घटस्तत्कम्बुग्रीवादिमान्' इत्यादौ घटत्व-कम्बुग्रीवादिमत्त्वरूपाभ्यां भेदसम्भवात् तादात्म्येन प्रमा यथा स्वीक्रियते, तथा 'तद्घटस्तत्कम्बुग्रीवादिमत्वानि'ति संयोगेनापि प्रमा स्यादिति—चेत्, *न* ; व्याप्य-व्यापकभावापन्नधर्मद्वयं यत्र विशेष्यतायां विशेषणतायां वाऽवच्छेदकम्, तत्र व्याप्यधर्म एव भेदे प्रतियोगितावच्छेदकतयाऽनुयोगितावच्छेदकतया वा भासते, व्यापकधर्मस्तु प्रतियोग्यंशे विशेषणमात्रतया भासते, नतूक्तावच्छेदकप्रविष्टतया ; 'द्रव्यं घटो नास्ती'त्यादिप्रतीतेर्द्रव्यवत्युत्पत्तेः, व्यापकविशिष्टव्याप्यस्य गौरवेणानवच्छेदकत्वात्, 'प्रमेयघटो नास्ती'त्यादौ प्रमेयत्वादेरवच्छेदकत्वासम्भवात्, अत एवात्र प्रमेयत्वोप-

विट्ठलेशीयटिप्पणी

भावनात्। *हेतुत्वादिति* ॥ यत्संशय-व्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ, तन्निश्चयस्तद्धेतुरिति व्याप्तेरिति भावः। उक्तव्याप्तेरप्रयोजकत्वमाशङ्क्याह—*तदुक्तमिति* ॥ तथाचोक्तव्याप्तेरभ्युपगमेऽपि तद्धर्मिणि तत्संशये तत्सामानाधिकरण्यविशिष्टवैशिष्ट्यसन्देह औचित्यावर्जितः, इति व्यावर्तकधर्मदर्शनविधया तन्निश्चयस्तत्संशयनिरासायापेक्षणीय इति तु दीधितिकारानुमतं वक्तव्यमिति भावः। *ननु*—उक्तभेदोऽस्तु, किं तावतेति ? अत आह—*अत एवेति* ॥ तावन्नेदसत्त्वादेवेत्यर्थः। *ननु*—व्यावर्तकधर्मदर्शनरूपता भेदसंसर्ग-प्रकारकज्ञानयोस्तुल्येत्यत आह—*औचित्यादिति* ॥ लाजात्यादिति भावः। यद्यपि भेदसामानाधिकरण्यविशिष्टाभेदविषयतायामपि न बाधकम्, विशिष्टस्योपलक्षितादन्यत्वेनैव विशिष्टविषयकज्ञानस्योपलक्षितविषयकज्ञानाद् वैलक्षण्यनिर्वाहे विशेषणतावच्छेदकस्य पारतन्त्र्येण धर्मिणि भानस्याप्रामाणिकत्वेनोक्तज्ञाने भेदस्य घटत्वावच्छिन्नेऽभानात् ; तथापि भेदसामानाधिकरण्योपलक्षिताभेदविषयतास्वीकारेण निर्वाह उक्तविशिष्टविषयतास्वीकारे प्रयोजनाभाव इत्याशयेन समाधत्ते—*भेदेति* ॥

'किंचे'त्यादिनोक्तं परिहर्तुमनुवदति—*अथेति* ॥ *सम्बन्ध इति* ॥ नच—संयोग इत्येव वाच्यमिति—वाच्यम् ; असति बाधके प्रमाणानां सामान्ये पक्षपातात्। एवं चाभेदस्यापि भेदसमानाधिकरणस्यैव भानेन 'घटो घटः' इति प्रमानुत्पादनिर्वाहे तद्वारकोक्तकार्य-कारणभावाकल्पनेन लाघवमिति भावः ॥

*ननु* व्यापकधर्मे प्रतियोगितावच्छेदकताभानं कुतो न ? इत्याशङ्कायाम्—किं तन्मात्रे तत्पर्याप्तिभानम् ? किं वा व्याप्य-व्यापकीभूतधर्मद्वये ? इति विकल्प्य, आद्ये दूषणमाह—*द्रव्यमिति* ॥ द्वितीये—*व्यापकेति* ॥ अत्र पक्षधरसंमतिमाह—*अत एवेति* ॥ 'प्रमेयत्वादेरि'त्याविना—प्रमेयत्वविशिष्टघटत्व-

[ ] कुण्डलितो भागः क-पुस्तके नास्ति।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

लक्षितघटत्वादेरवच्छेदकमुक्तं पक्षधरमिश्रादिभिः। तत्र घटत्वमेवावच्छेदकम्, प्रमेयत्वं तु प्रतियोगिनि विशेषणमित्यर्थः। तथाच 'तद्घटः' इत्याद्युक्तस्थले व्याप्यीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितानुयोगिताक-भेदस्यैव भानं व्युत्पत्तिसिद्धं वाच्यम्, स च बाधितः, इति न प्रमा। अत एव तादात्म्येनोक्तधीरपि न प्रमा 'तद्व्यक्तिस्तद्व्यक्तिमती'ति धीवत्। नच—तथापि 'कम्बुग्रीवादिमान् समवायेन घटवानि'त्यपि प्रमा स्यात्, घटीयसमवायस्य घटे सत्त्वादिति—वाच्यम्; 'घटो भूतलसंयोगी'ति प्रमावद् 'घटः कपालसमवायी'ति बुद्ध्यभावेन घटस्य स्वप्रतियोगिकसमवायानुयोगित्वाभावात्॥

*ननु*—यस्माद् विशेषणाद् वस्तुगत्या भिन्नं यद् विशेष्यं विशेषणसम्बन्धि च, तस्य तत्र विशिष्टधीत्वं प्रमात्वं वाच्यम्, न संसर्गघटकतया भासमानविशेषणभेदघटितम्; तथाच विशेषण-भेदस्य विशिष्टधीविषयत्वानियमेऽप्युक्तधियोऽप्रमात्वोपपत्तिरिति—चेत्, *न*; प्रमात्वस्य तादृशत्वे पारि-भाषिकत्वापत्तेः। प्रकृष्टज्ञानं हि प्रमापदमुख्यार्थः, प्रकर्षश्चाज्ञाताबाधितविषयकत्वम्, तच्चोक्तज्ञानेऽप्यस्ति, इति तस्योक्तमुख्यार्थत्वं दुर्वारम्। अत एव तस्य भ्रमपदमुख्यार्थत्वमपि न स्यात्; प्रमापदविपरीतार्थकत्वेन भ्रमपदस्य बाधितविषयकज्ञानार्थकत्वेन विषयाबाधेन च तस्योक्तमुख्यार्थत्वाभावात्॥

*ननु*—विशिष्टधीमात्रे नोक्तभेदो विषयः; 'घटाभावो घटाभाववानि'त्यादौ विशेष्य-विशेषणयोरैक्येन

विट्ठलेशीयटिप्पणी

परिग्रहः। *ननु* प्रमेयत्वोपलक्षितघटत्वस्यावच्छेदकत्वे प्रमेयत्वस्याप्युपलक्षणतयाऽवच्छेदकत्वमागतमित्यत आह—*तत्रेति*॥ *तद्घट इत्यादीति*॥ 'तद्घटः संयोगेन तत्कम्बुग्रीवादिमत्वानि'त्यादिबुद्धावित्यर्थः। *न प्रमेति*॥ तादृशी बुद्धिरित्यादिः। *नन्वेवम्* तादात्म्यसंसर्गकतादृशज्ञानमपि न प्रमा स्यादित्या-शङ्कामिष्टापत्त्या परिहरति—*अत एवेति*॥ घटत्व-कम्बुग्रीवयोरवच्छेदककोट्यप्रवेशादेवेत्यर्थः। *घटीयसमवायस्य*॥ घटत्वविशिष्टभेदसमानाधिकरणस्येति शेषः। घटे तर्हि स्वभेदसामानाधिकरण्योपलक्षितसमवायसत्त्वेऽपि विशिष्ट-समवायाभावाद् न प्रमात्वापत्तिरित्यत आह—*कम्बुग्रीवेति*॥ घटे कम्बुग्रीवादिविशिष्ट इति शेषः। *सत्त्वादिति*॥ संबन्धस्योभयाश्रितत्वादिति भावः। नच—घटीयसमवायानुयोगिता तादृशप्रमाप्रयोजिका, सा च घटभिन्न एव स्वीक्रियत इति—वाच्यम्; तथा सति तद्घटीयसंयोगानुयोगितायाः संयोगेन तद्घटप्रमाप्रयोजकत्वमुपगम्य तस्यास्तद्घटेऽ-सत्त्वेन तद्घटे तादृशप्रमावारणे विशेषणभेदसामानाधिकरण्यस्य संसर्गतावच्छेदकतया भाने मानाभावप्रसङ्गादिति शङ्काभावः। *प्रमावदिति*॥ तथाच तत्प्रमानुरोधाद् घटे घटीयसंयोगानुयोगिताया आवश्यकत्वेन तद्घटे संयोगेन तद्घटप्रमापत्तेर्दुर्वारतया निरुक्तसामानाधिकरण्यस्य संसर्गतावच्छेदकताया आवश्यकत्वम्। नच—'घटो भूतल-संयोगी'ति प्रमायां संयोगाधिकरणतैव विषयः, नानुयोगितेति—वाच्यम्; तदधिकरणतातिरिक्ततदनुयोगिताया अप्रा-माणिकत्वादिति भावः। *अनुयोगित्वाभावादिति*॥ अधिकरणत्वरूपस्याप्यनुयोगित्वस्याभावादित्यर्थः। तथाच तादृशानुयोगितायाः समवायेन कम्बुग्रीवाद्यवच्छिन्ने घटत्वावच्छिन्नप्रमाप्रयोजकत्वानुपगमाद् न तादृशप्रमापत्तिरिति भावः॥

*वस्तुगत्येति* भेदविशेषणं प्रतीयमानत्वव्यावर्तकम्। *उक्तधियः='तद्घटः संयोगेन तद्घटवानि'ति धियः। *तादृशत्वे=वास्तवभेदघटितनिरुक्तरूपत्वे। *उक्तज्ञाने='संयोगेन तद्घटवानि'ति ज्ञाने। प्रमात्वस्य भासमानभेद-घटितनिरुक्तरूपत्वे तु तादृशभेदस्य बाधितत्वेन बाधितभेदविषयतया न प्रमापदमुख्यार्थत्वापत्तिः, न वा भ्रमपद-मुख्यार्थत्वानुपपत्तिरिति भावः॥

*विशिष्टधीमात्रे नेति*॥ किंतु संयोगसंसर्गकविशिष्टबुद्धावेवेति शेषः। एवं च 'नीलो घटः' इति सामाना-धिकरण्यप्रत्यये भेदभाने मानाभाव इति भावः। *ननु* असति बाधके 'प्रमाणानां सामान्ये पक्षपातः' इति न्याय-विरोध इत्याशङ्क्याह—*घटाभाव इति*॥—*भ्रमत्वापत्तेरिति*॥ तथाचेदृशबाधकसत्त्वाद् न तन्न्यायावतार

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भेदभाने भ्रमत्वापत्तेः, 'तद्घटस्तद्घटवानि'त्यादिज्ञानस्यापि न प्रमात्वापत्तिः ; तस्य हि प्रमात्वं संयोगादिसम्बन्धीया तद्घटनिष्ठा या प्रतियोगिता, तन्निरूपितानुयोगितावति संयोगादिसम्बन्धेन तद्घटप्रकारकधीत्वम्, तादृशी चानुयोगिता तद्घटभिन्न एव स्वीक्रियते ; 'तद्घटे तस्य संयोगः' इति प्रत्ययाभावात्, घटाभावे तु विशेषणतासम्बन्धीयप्रतियोगितया घटाभावनिष्ठया निरूपिताऽनुयोगिता स्वीक्रियते, 'घटाभावे तस्य सम्बन्धः' इत्यनुभवादिति—चेत्, *न* ; घटप्रतियोगिकाभावत्वमात्रेण विशेष्यत्वे तेनैव रूपेण न विशेषणत्वम्, किन्तु घटविरोध्यभावत्वादिरूपेण, यथाहि 'मामहं जानामी'त्यादौ रूपभेदेनैव कर्म-कर्तृता ; अन्यथाऽत्यन्ताभेदे परसमवेतक्रियाजन्यफलवत्त्वरूपस्य कर्मत्वस्यात्मन्यसम्भवात्, तथा रूपभेदेनैव विशेषणत्वमुक्तज्ञाने स्वीक्रियते ; उक्तकल्पनानुरोधात् । 'घटाभावस्तद्वानि'त्यादावेकरूपविशिष्टस्यैव घटाभावपद-तत्पदाभ्यामुल्लेखेऽपि सुबर्थैकत्वादिविशेषितरूपेणैव शाब्दधीविशेष्यता । तथाच भिन्नरूपाभ्यां घटाभावादौ तद्भेदसम्भवेन भेदविशिष्टविशेषणतासम्बन्धस्य भानाद् विशिष्टधीमात्रे भेदविशिष्टसम्बन्धस्य भाननियमो न व्याहतः ॥

*यत्तु*—अनुयोगिताविशेषघटितं प्रमात्वम् अतः—'तद्घटस्तद्वानि'त्यादिधीरप्रमा— इत्युक्तम्, *तन्न* ; प्रमाऽप्रमात्वस्य पारिभाषिकत्वापत्तेरित्याद्युक्तदोषात् । नह्युक्तरूपविशिष्टानुयोगिता नियमेन विशिष्टधीविषय इत्यत्र

विट्ठलेशीयटिप्पणी

इति भावः । एवं चैकरूप्यार्थं संयोगसंसर्गकबुद्धावपि नोक्तभेदो विषय इति पर्यवसितम् । यद्वा—*विशिष्टबुद्धिमात्रे नेति* ॥ विशिष्टबुद्धौ क्वचिदपि नेत्यर्थः । *भ्रमत्वापत्तेरिति* ॥ क्वचिदुक्तभेदस्य विषयत्व ऐकरूप्यार्थं प्रमाणानां सामान्यपक्षपातार्थं चाभेदसंसर्गकबुद्धाविव सर्वत्रैव तत्स्वीकारस्यावश्यकत्वादिति भावः । *नन्वेवम्* 'तद्घटस्तद्घटवानि'ति ज्ञानस्य प्रमात्वापत्तिरित्यत आह—*तद्घट इति* ॥ *ननु* अनुयोगिताऽधिकरणतारूपा तद्घटेऽप्यस्त्येवेत्यत आह—*तादृशी चेति* ॥ *अनुयोगितेति* ॥ अधिकरणत्वान्यः स्वरूपसंबन्धविशेषः पदार्थान्तरं वेति शेषः । *स्वीक्रियत इति* ॥ उक्तज्ञानस्य प्रमात्ववारणानुरोधेनैवेति भावः । *प्रत्ययाभावादिति* ॥ 'घटो भूतलसंयोगी'त्यत्र त्वधिकरणतामात्रं विषयः, नत्वनुयोगितेति भावः । *ननु* तत्प्रतियोगिकसंबन्धानुयोगिता तद्भिन्न एवेति यदि नियमः, तर्हि 'घटाभावो घटाभववानि'ति ज्ञानस्य प्रमात्वानुपपत्तिरित्याशङ्क्य, नायं नियमः सर्वसंबन्धविषयः, किंतु प्रतीत्यनुरोधात् तत्तत्संबन्धेषु भिन्नैव व्यवस्थेत्यभिप्रायेण परिहरति—*घटाभावे त्विति* ॥ एवमभेदसंबन्धस्यानुयोगिता नाऽत्यन्तं प्रतियोगिना भिन्नेऽभिन्ने वा स्वीक्रियते, किंतु भिन्नाभिन्ने, इति तत्रैव तत्संसर्गकज्ञानस्य प्रमात्वमिति बोध्यम् । विभिन्नरूपाभ्यामेव विशेष्य-विशेषणभाव इति नियममभ्युपगम्य समाधत्ते—*न घटेति* ॥ *उक्तकल्पना=भेदस्य विशिष्टबुद्धिविषयत्वकल्पना । *एकरूपविशिष्टस्यैवेति* ॥ तदः प्रक्रान्तार्थकत्वादिति भावः । प्रक्रान्तत्वं च समभिव्याहृतपदोपस्थाप्यत्वम् । तेन वाक्योपस्थाप्यैकत्वविशिष्टघटाभावस्य न तदा परामर्श इति बोध्यम् । *तद्भेदसंभवेनेति* ॥ तथाच तादृशज्ञानस्य भेदावगाहिनोऽपि न भ्रमत्वापत्तिरिति भावः ॥

*ननु* 'इदं सर्वमुक्तकल्पनानुरोधादि'त्युक्तम्, परंतूक्तकल्पनायामेव न मानम् ; तद्घटे संयोगेन तद्घटवत्ताज्ञानप्रमात्वस्यानुयोगिताविशेषाविषयकत्वेनैव वारितत्वादिति शङ्कां परिहरति—*यत्त्विति* ॥ ननु* तादृशानुयोगितावति तादृशानुयोगिताविषयकधीत्वं प्रमात्वम् ; तथाच न पारिभाषिकत्वम् ; प्रमापदार्थस्योक्तज्ञानस्य तादृशानुयोगितारूपाबाधितविषयकत्वात्, संबन्धप्रतियोगितानुयोगितयोर्विशिष्टधीविषयत्वादित्याशङ्कां परिहरति—*नहीति* ॥ संबन्धप्रतियोगित्वानुयोगित्वयोर्विशिष्टबुद्धिविषयत्वे मानं यद्यपि पूर्वमुक्तम् ; तथापि तत्तद्विशेषणनिष्ठप्रतियोगितानिरूपितत्वविशिष्टानुयोगिताभाननियमे मानाभाव इत्यर्थः । *ननु*—उक्तरूपविशिष्टानुयोगिता मा भासताम्, तथापि तादृशरूपोपलक्षितानुयोगिताया अपि तद्घटे बाधेन तन्मात्रभानेनाप्युक्तज्ञानस्याप्रमात्वनिर्वाहादिति—*चेत्, *न* ; गदाधरोक्तायाः तद्घटसंयुक्ततत्पटस्य परिवृत्य स्थापनस्थले तद्घटनिष्ठप्रतियोगितानिरूपितत्वोपलक्षितसंयोगानुयोगितायाः तद्घटेऽबाधेन 'तद्घटः संयोगेन तद्घटवानि'ति ज्ञानस्य प्रमात्वापत्तिः, इति तद्वारणानुरोधेन निरुक्तरूपविशिष्टानुयोगित्व-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मानमस्ति, येन विषयत्वाद्येन प्रमात्वाभाव उक्तज्ञाने वाच्यः, न वा तादृशानुयोगिता प्रामाणिकी । नच— 'कम्बुग्रीवादिमान् घटः' 'कम्बुग्रीवादिमान् तद्धटवान्' 'तद्धटो घटवानि'त्यादीनां प्रमात्वं तव मते दुर्वारम् ; विशेष्य-विशेषणयोर्भिन्नरूपावच्छिन्नतया भेदसत्त्वात्, तत्सम्बन्धीयघटादिनिष्ठप्रतियोगितानिरूपितानुयोगितानिवेशे तु तस्याः कम्बुग्रीवादिमत्त्वावच्छिन्नादौ घटत्वाद्यवच्छिन्नस्यास्वीकाराद् नोक्तधियां प्रमात्वापत्तिरिति—वाच्यम् ; उक्तविधया प्रमात्वस्येष्टत्वात्, आद्यबुद्धौ विशेष्य-विशेषणतादात्म्यस्याज्ञातत्वसंभवेनाज्ञातविषयकत्वसम्भवात्, 'तद्व्यक्तिस्तद्व्यक्तिरि'त्यादौ तु तस्य तदसम्भवेन न तथा, द्वितीय-तृतीययोरपि तथा ; एकघटे घटान्तरसंयोगमादाय त्वयाऽपि तस्येष्टत्वात् । नच—समवायेन तयोः प्रमात्वापत्तिस्तव मत इति—वाच्यम् ; तव मतेऽपि तादृशापत्तेः । *अथ*—तद्धटीयसमवायानुयोगित्वस्य तद्धटे स्वीकारे 'तद्धटः स्वाश्रयकपालसमवायी'ति प्रत्ययापत्तेः, तत्सम्बन्धेन प्रमात्वस्य तत्सम्बन्धानुयोगिविशेष्यकत्वघटितत्वाच्च नोक्तापत्तिरिति ब्रूषे, तदाऽहमपि तथा ब्रवीमि, इति न कोऽपि दोषः । यथाहि विषयतया विषयमात्रे ज्ञानस्य प्रमा, नतु ज्ञाने विषयस्य ; तस्या ज्ञानानुयोगिकत्वाभावात्, तथा घटसमवायेन कपाल एव घटस्य प्रमा, नतु घटे कपालस्यापीति दिक् ॥

विट्ठलेशीयटिप्पणी

**विषयतायाः एव प्रमात्वघटकत्वावश्यकतयोक्तरूपविशिष्टानुयोगिताभानस्यावश्यकत्वादिति भावः । क्वचिज्ज्ञानेऽनुव्यवसायस्यैव मानत्वाद् 'नियमेने'त्युक्तम् । *नचेति* ॥ नचोक्तप्रमात्वव्यवस्थाऽन्यथानुपपत्तिरेव मानम् ; उक्तरूपविशिष्टानुयोगितारूपपदार्थान्तर-तज्ज्ञाननियमयोः कल्पनापेक्षया क्लृप्तभेदभाननियमकल्पनेन तदुपपादने लाघवादिति भावः ॥**

**स्वमते तादृशबुद्धीनां प्रमात्वं वारयति—*तत्सम्बन्धीयेति* ॥ *ननु* आद्यबुद्धौ कम्बुग्रीवाद्यवच्छिन्ने तद्धटे घटत्वावच्छिन्नतद्धटस्य तादात्म्यं संसर्गतया भासते, तच्च तद्धटे न तुल्यवित्तिवेद्यम्, इति विशेष्य-विशेषणयोरिव तत्तादात्म्यस्यापि पूर्वं ज्ञातत्वादज्ञातविषयकत्वघटितं प्रमात्वं कथं तस्याः ? अत एव 'तद्व्यक्तिस्तद्व्यक्तिरि'ति ज्ञानस्य न प्रमात्वमित्यत आह— *आद्येति* ॥ *विशेष्येति* ॥ कम्बुग्रीवाद्यवच्छिन्नानुयोगिकघटत्वावच्छिन्नप्रतियोगिकतादात्म्यत्वाद्यवच्छिन्नस्येत्यर्थः । एकधर्मावच्छिन्नानुयोगिकप्रतियोगिकतादात्म्यस्यैव पूर्वं नियमेन ज्ञातत्वमिति भावः । *तस्य=विशेष्य-विशेषणतादात्म्यस्य । *तदसम्भवेन=अज्ञातत्वासम्भवेन । इदमुपलक्षणम्—स्वमते तत्र संसर्गघटकतया भासमानभेदस्याबाधितत्वासम्भवेनेत्यपि बोध्यम् । *न तथा=न प्रमात्वम् । *तथा=प्रमात्वमिष्टम् । *नच समवायेनेति* ॥ घटे घटान्तरसमवायाभावेन प्रमात्वस्यानिष्टत्वादिति भावः । *तव मतेऽपीति* ॥ समवायस्यैकत्वेन तद्धटे घटान्तरसमवायसत्त्वात्, तन्नानात्वे तद्धटे घटान्तरसमवायाभावेऽपि तद्धटीयसमवायस्यैव द्विष्ठत्वेन सत्त्वादिति भावः । *अथेति* ॥ समवायभेदमुपगम्येति शेषः । 'तद्धटीये'त्यस्य तद्धटप्रतियोगिकत्वविशिष्टेति वाऽर्थः । तेन समवायैक्यपक्षसत्त्वेऽपि न क्षतिः । *तथेति* ॥ 'तद्धटीयसमवाये'त्यादि 'नोक्तापत्तिरि'त्यन्तमित्यर्थः । भेदस्य विशिष्टबुद्धिविषयतावादिनाऽप्येकस्यैव सम्बन्धस्य क्वचिदेवानुयोगिता, सा च विशिष्टप्रमानियामिकेत्यवश्यं स्वीकार्यमित्याह—*यथाहीति* ॥ ज्ञान-विषययोः परस्परं भेदेऽपीति शेषः । *विषयस्येति* ॥ प्रमेत्यनुषङ्गः । *तस्याः= विषयतायाः । *तथेति* ॥ घट-कपालयोरन्योन्यं भेदेऽपीति शेषः । *कपालस्येति* ॥ समवायस्य घटानुयोगिकत्वाभावादिति शेषः । इदं च पररीत्या । स्वमते विषयता-समवाययोः स्थाने तादात्म्यस्य, तेन च नील-घटयोरिव प्रकृतेऽपि परस्परं विशिष्टबुद्धेः स्वीकारादिति बोध्यम् । *ननु*—'तदाऽहमपि तथा ब्रवीमी'ति न सुसङ्गतम् ; भेदस्य विशिष्टबुद्धिविषयतावादिनाऽपि समवायसंसर्गकोक्तद्वितीय-तृतीयज्ञानयोः प्रमात्ववारणायोक्तरूपविशिष्टानुयोगितायाः, प्रमात्वपारिभाषिकत्ववारणानुरोधेन तयोर्बाधितविषयकत्वनिर्वाहाय च तस्या विशिष्टबुद्धिविषयतायाश्चावश्यं स्वीकारे भेदस्य विशिष्टबुद्धिविषयताविलोपप्रसङ्गात्, तादृशानुयोगितयैव संयोगसंसर्गकस्य 'तद्धटस्तद्धटवानि'ति ज्ञानस्यापि प्रमात्वापत्तेर्वारणसम्भवादिति—चेत्, *सत्यम्* ; एतस्य वितण्डामात्रत्वात् । *वस्तुतस्तु**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अथ*–'घटस्तद्घटवानि'ति बुद्धेः प्रमात्वे विप्रतिपद्यसे, तदा तादात्म्यसम्बन्धेन प्रमात्वस्य लक्षणे भेदमात्रस्य निवेशोऽपि तादात्म्यान्यसम्बन्धेन प्रमात्वस्य लक्षण औपाधिकभेदान्यभेदो निवेश्यताम्। घटत्व-तद्घटत्वविशिष्टयोर्भेदस्यौपाधिकत्वाद् नोक्तबुद्धेः प्रमात्वापत्तिः। सर्वेषां प्रमात्वानां लक्षणेषु शब्दैक्यं नोपयुज्यते। नच—औपाधिकत्वं दुर्वचमिति—वाच्यम्; तद्धर्मयोर्यो भेदस्तदन्यो यस्तद्धर्मोपहितयोर्भेदः, तद्घटितं तद्धर्मावच्छिन्नयोरेकस्मिन्नपरस्य प्रमात्वमित्यस्य सुवचत्वात्। नच–घटादौ द्रव्यत्व-घटत्वरूपाभ्यां भेदोऽपि न मानसिद्धः, उक्तव्यवस्थाऽन्यथानुपपत्त्या कल्पनं तु तादृशानुयोगित्वस्यापि सम्भवतीति—वाच्यम्; तादृशभेदो हि न तया कल्प्यते, किन्त्वनुभवसिद्धः। य एव हि द्रव्यत्व-घटत्वयोर्भेदः, स एव तदुपहितयोरपि। अत एव द्रव्यत्वस्य तत्रैव तदुपहितेऽपि भेदासत्त्वाद् न विशिष्टधीः। नचैवम्—द्रव्यत्वस्य स्वोपहिते व्यावर्तकत्वानुपपत्तिः; भेदाभावे स्वोपहिते

### विट्ठलेशीयटिप्पणी

तादात्म्यान्यसंसर्गकप्रमात्वलक्षणेऽनौपाधिकभेदनिवेशस्य वक्ष्यमाणतया समवायसंसर्गप्रमात्वे तस्यैव निवेशनीयतया समवायसंसर्गकोक्तद्वितीय-तृतीयज्ञानीयप्रकारता-विशेष्यतावच्छेदकविशिष्टयोर्भेदस्यौपाधिकतया तयोः प्रमात्वापत्तिवारणसम्भवेन समवायसंसर्गकोक्तरूपविशिष्टानुयोगितायाः प्रमात्वनियामकताया भेदविशिष्टबुद्धिविषयतावादिनाऽनभ्युपगमादुक्तयुक्त्या भेदस्य विशिष्टबुद्धिविषयत्वसिद्धिरिति बोध्यम्। पूर्वं 'द्वितीय-तृतीययोरपि तथा, एकघटे घटान्तरसंयोगमादाय त्वयाऽपि तस्येष्टत्वात्'—इत्युक्तम्; तत्र शङ्कते—*अथेति* ॥ *तद्घटवानिति* ॥ यद्घटस्य घटत्वरूपेण विशेष्यतया भासमानस्य क्वचिदपि घटे न संयोगः(१) तद्घटवानित्यर्थः। एवं च तादृशज्ञानस्य प्रमात्वस्य परेण कथमप्यनङ्गीकारात् तत्र परस्य विप्रतिपत्तिः सम्भवति। एवं चैतन्मत इष्टापत्तेरच्छकरतयोक्तानुयोगितायाः प्रमात्वानियामकत्वेन तन्नियामकतयाऽभ्युपेतस्य विशेष्ये विशेषणभेदस्य चौपाधिकस्य सत्त्वाद् उक्तबुद्धेः प्रमात्वापत्तिर्दुर्वारेति शङ्काभावः। समाधत्ते—*तदेति* ॥ *भेदमात्रेति* ॥ औपाधिकानौपाधिकसाधारणरूपावच्छिन्नभेदेत्यर्थः। *तद्घटितमिति* ॥ तद्धर्मानुयोगिकतद्धर्मप्रतियोगिकभेदभिन्नो यस्तद्धर्मोपहितानुयोगिकतद्धर्मोपहितप्रतियोगिकभेदः, तदुपलक्षितधर्मवृत्तित्वविशिष्टसंयोगादिसंसर्गेण तद्धर्मावच्छिन्नविशेषणसम्बन्धि-तद्धर्मावच्छिन्नविशेष्यक-तादृशसंसर्गक-तद्धर्मावच्छिन्नप्रकारकज्ञानत्वमित्यर्थः। *अपरस्येति* ॥ संयोगादिसम्बन्धेनेति शेषः। *न मानसिद्ध इति* ॥ 'द्रव्यं न घटः' इति प्रत्ययाभावात्। तथाचौपाधिकभेदस्यैवासिद्ध्या तद्घटितं तादात्म्यसम्बन्धेन प्रमात्वं दुर्वचमिति भावः। *उक्तव्यवस्था='घटो घटः' इति ज्ञानं न प्रमा, 'द्रव्यं घटः' इति तु प्रमेति व्यवस्थेत्यर्थः। *तादृशानुयोगित्वस्येति* ॥ घटत्वान्यधर्मावच्छिन्नानुयोगिकघटत्वावच्छिन्नप्रतियोगिकाभेदादिसम्बन्धानुयोगित्वस्येत्यर्थः। *तया=उक्तव्यवस्थाऽन्यथाऽनुपपत्त्या। *ननु* 'द्रव्यं न घटः' इति प्रत्ययाभावात् कथमनुभवसिद्धतेति? अत आह—*य एव हीति* ॥ *भेद इति* ॥ 'द्रव्यत्वं न घटत्वमि'त्यनुभवसिद्धः। *स एवेति* ॥ उपाध्युपहितयोरभेदोपगमात्। एवं चोपहितयोरपि भेदोऽनुभवसिद्ध इति भावः। [ 'कम्बुग्रीवादिमान् घटवानि'त्यादितादात्म्यसंसर्गकज्ञाने प्रमात्वोपपत्तावपि संयोगादिसंसर्गकज्ञानप्रमात्वापत्तिवारणाय तद्धर्मोपहितानुयोगिक-तद्धर्मोपहितप्रतियोगिकभेदपर्यन्तानुधावनम्।(२)] *अत एवेति* ॥ उपाध्युपहितयोरुपाधिभेदोपहितभेदयोश्चाभेदादेवेत्यर्थः। *तत्रैव=द्रव्यत्व इव ॥ *तदुपहिते=द्रव्यत्वोपहिते। द्रव्यत्वस्य भेदासत्त्वादित्यन्वयः। *न विशिष्टधीरिति* ॥ तत्रैव तदुपहितेऽपि द्रव्यत्वस्येत्यनुवर्तते। 'द्रव्यं द्रव्यमि'त्याकार इति शेषः। उपाध्युपहितयोर्भेदे तु द्रव्यत्वोपहिते द्रव्यत्वस्य भेदसत्त्वाद् विशिष्टबुद्धिप्रसङ्गः। एवम्=उपाधिभेदादुपहितभेदस्यातिरेके। द्रव्यत्वोपहिते द्रव्यत्वोपहित-

---

(१) सति च तस्मिन्नौपाधिकभेदसमानाधिकरणस्य तस्य विशेष्ये सत्त्वेन सिद्धान्तिना तादृशज्ञानप्रमात्वस्येष्टत्वात् प्रतिवादिनोऽपि घटत्वावच्छिन्ने तद्घटसंयोगसत्त्वेन तदवच्छिन्नविशेष्यताकतत्संसर्गकतत्प्रकारकज्ञानप्रमात्वे विवादाभावप्रसङ्गादिति भावः ( क-टिप्पणी )। (२) [ ] कुण्डलितो भागः 'क' 'ख' पुस्तकयोर्नास्ति।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्वस्य विशिष्टबुद्ध्यसम्भवादिति—वाच्यम् ; द्रव्यत्वत्वविशिष्टस्यैव शुद्धद्रव्यत्वोपहिते तत्सम्भवात् । अत एव 'गुणानां गुणत्वाभिसम्बन्धः' इत्यादिकं गुणभाष्यादावुक्तम् ॥

*अथवा*—'द्रव्यं घटः' इत्यत्र द्रव्ये यस्य विशेषणस्य भेदो भाति, तस्य द्रव्यविशेषणे शुद्धद्रव्यत्वेऽपि भानम् ; विशेष्य-विशेषणयोरेकभेदभाननियमात् । तथाच द्रव्ये शुद्धद्रव्यत्वस्य न विशिष्टधीः ; भेद-प्रतियोगिताऽपि द्रव्यत्व-तदुपहितयोरेकैव ; लाघवात्, एवं भेदानुयोगिताऽपि । तथाच द्रव्यत्व-घटत्वयोः शुद्धयो-

### विट्ठलेशीयटिप्पणी

भेदासत्त्वेऽपि द्रव्यभेदसम्भवात् तत्र तद्विशिष्टबुद्धिप्रसङ्ग इत्युपष्टम्भसङ्गतिः । *तत्सम्भवात्=भेद-विशिष्टबुद्धि-व्यावर्तकतासम्भवात् । तथाच शुद्धद्रव्यत्वस्य भेद-विशिष्टबुद्धिव्यावर्तकत्वासम्भवेऽपि न कापि हानिरिति भावः ॥

*ननु* शुद्धद्रव्यत्वोपहिते द्रव्यत्वत्वविशिष्टद्रव्यत्वस्यापि न तत्संभवः ; विशिष्ट-शुद्धयोरभेदात्, इत्याशङ्क्य तत्र गुणभाष्यसंमतिमाह—*अत एवेति* ॥ *गुणानाम्=स्वरूपतो गुणत्वोपहितानाम् । *गुणत्वाभिसंबन्धः= गुणत्वत्वविशिष्टस्याभिसंबन्धः, विशिष्टबुद्धिविषयत्वयोग्यता । तथाच विशिष्ट-शुद्धयोर्भेदाभेदावुपगन्तव्याविति भावः ।

*ननु* उपाध्युपहितयोरत्यन्ताभेदो वा ? भेदाभेदो वा ? *आद्ये* उपाध्युपहितभावो न स्यात् ; तस्य भेदनियतत्वात्, *अन्त्ये* उपाधिभेदादुपहितभेदोऽनतिरिक्तो न स्यात् ; तयोरत्यन्ताभेदस्यैव तत्र बीजत्वसंभवात् । किंचैवं द्रव्यत्वोपहिते द्रव्यत्वभेदस्यापि सत्त्वाद् विशिष्टबुद्धिप्रसङ्गो दुर्वारः, एवमुपाध्युपहितभेदयोरनतिरेके 'घटत्वं न घटः' इति प्रत्ययो न स्यात् ; घटत्वभेदानतिरिक्तघटभेदस्य घटत्वेऽसंभवात् । नच घटनिष्ठप्रतियोगिताकभेदत्वेन तस्य तत्र संभवः ; एवं सति सर्वेषामभावानामैक्यप्रसङ्गात्, इत्याशङ्क्याह—*अथवेति* ॥ *इत्यत्र=इत्याद्याकारके घटत्वादिप्रकारकज्ञाने । *विशेष्य-विशेषणयोः=विशेष्य-विशेष्यतावच्छेदकयोः । *न विशिष्टधीरिति* ॥ शुद्ध-द्रव्यत्वरूपधर्मितावच्छेदके शुद्धद्रव्यत्वभेदस्य बाधादिति भावः । *ननु* एवमप्यौपाधिकभेदो न सिद्ध इत्यत आह—*भेदप्रतियोगिताऽपीति* ॥ द्रव्यत्वस्येत्यनुषज्यते । *ननु* अत्र कल्प उपहितमात्रप्रतियोगिको भेद उपाध्युपहितोभय-वृत्त्येकप्रतियोगिताकाद् अस्मादुपाधिभेदादतिरिक्त उपेयते ? न वा ? *अन्त्ये* पूर्वकल्पोक्तरीत्यैव द्रव्यत्वोपहिते द्रव्यत्वविशिष्टबुद्धिवारणे धर्मितावच्छेदके विशेषणभेदभानकल्परूपस्यैतत्कल्पस्याकिंचित्करत्वापत्तिः, *आद्ये* लाघवादित्यस्यासङ्गतिः ; भेदद्वयस्य प्रतियोगिताद्वयस्य चावश्यकत्वे लाघवासंभवादिति—चेत्, *न* ; औपाधिक-भेदसिद्ध्यनुरोधेनोपाधिभेदस्योपहितमात्रप्रतियोगिकभेदातिरिक्तस्योपहिते प्रतियोगिताया आवश्यकत्वे तत्र प्रतियोगि-तान्तरकल्पनापेक्षयोपाधिवृत्तिप्रतियोगिताया एव कल्पने लाघवसंभवेनाऽऽद्ये 'लाघवादि'त्यस्य सङ्गतेराद्यस्योपगमात् । अत एव=उपाध्युपहितोभयवृत्त्येकप्रतियोगिताकभेदाद् उपहितमात्रप्रतियोगिकभेदस्य पृथक्त्वस्वीकारादेव 'द्रव्यत्वं न द्रव्यमि'त्यादिप्रत्ययोपपत्तिः ; उपहितमात्रप्रतियोगिकभेदस्य तत्र भानसंभवात् । नन्वेवम्—द्रव्यत्वोपहिते द्रव्यत्वो-पहितमात्रप्रतियोगिकभेदवद् द्रव्यत्व-तदुपहितोभयप्रतियोगिकभेदोऽपि न संभवति ; भेदस्य प्रतियोग्यवृत्तित्वात्, नह्ययं व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकः ; तथा सति द्रव्यत्वेऽप्यस्याबाधेन द्रव्यत्वोपहिते द्रव्यत्वविशिष्ट-बुद्धिप्रसङ्गतादवस्थ्यापत्तेः, तथाच पूर्वोक्तरीत्यैव द्रव्यत्वोपहिते द्रव्यत्वविशिष्टबुद्धिवारणे *'अथवेति'* कल्पवैयर्थ्य-मिति—वाच्यम् ; भेदस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यावृत्ततया द्रव्यत्व-तदुपहितोभयप्रतियोगिकभेदस्यापि द्रव्यत्वत्व एव प्रतियोगितावच्छेदकताया उपगमेन द्रव्यत्वत्वरूपप्रतियोगितावच्छेदकशून्ये द्रव्यत्वोपहिते द्रव्यत्व-भेदस्य सत्त्वेन पूर्वरीत्या द्रव्यत्वविशिष्टबुद्धेर्दुर्वारतया *'अथवे'ति कल्पसार्थक्यात् । अत एव=प्रतियोगितावच्छेदक-द्रव्यत्वत्वस्य द्रव्यत्वोपहिते भानादेव 'द्रव्यं न द्रव्यत्वम्' इत्यादिप्रत्ययोपपत्तिरिति दिक् ॥

*भेदानुयोगिताऽपि* घटत्वादिभेदानुयोगिताऽपि । द्रव्यत्वेत्यतो लाघवादित्यन्तस्यानुषङ्गः । यद्वा—*भेदानुयोगि-ताऽपीति* ॥ द्रव्यत्वस्येत्यनुवर्तते । घटत्व-तदुपहितयोरिति शेषः । एकैव लाघवादित्यप्यनुवर्तते । *तथाच=

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भेदानुभवे भासते यो भेदः, तस्यैव 'द्रव्यं घटः' इत्यनुभवे द्रव्यत्व-तदुपहितानुयोगिकतया घटत्व-तदुपहित-प्रतियोगिकतया च भानम्; औपाधिकभेदधीस्थले तथैवानुभवात्, द्रव्यत्वोपहितानुयोगिकतया तद्भाने घटत्वोपहितस्याभेदो नोक्तानुयोगिकतया भातुमर्हति, इति सामानाधिकरण्यघटकतयैव द्रव्यांशे भेदभानमिति पूर्वमुक्तम्। नच—उक्तानुभवे द्रव्यत्व-घटत्वयोर्भेदानुयोगि-प्रतियोगिताभाने तदवच्छेदकतया द्रव्यत्वत्वादेरपि भानापत्तिः, भेदप्रत्यक्षे प्रतियोग्यनुयोगिनोरुक्तावच्छेदकभानस्यावश्यकत्वादिति—वाच्यम्; इतरविशेषणीभूते प्रतियोग्यादौ तद्भानस्यानावश्यकत्वात्। नच—उक्तानुभवे द्रव्यत्व घटत्वयोरेव भेदो भाति, नतु तदुपहितयोः; तथाच विशिष्टधीमात्रे विशेष्य-विशेषणतावच्छेदकयोरेव भेदभानेनैकधर्मविशिष्टयोर्विशिष्टज्ञाने प्रमात्ववारण-सम्भवाद् विशेष्य-विशेषणयोरपि भेदो भातीत्यत्र न मानमिति—वाच्यम्; विनिगमकाभावात्, 'द्रव्यं घटः' इत्यनुभवस्योपाध्योरिवोपहितयोरपि भेदे मानत्वात्, अनुभवान्तरस्य शुद्धद्रव्यत्व-घटत्वयोर्भेदावगाहिनोऽभावात्,

*एतेन*—विशिष्टयोस्तादात्म्यधीस्थले विशेषणयोरपि तादात्म्यभानाद् विशेषणयोर्भेदभानं युक्तम्, तादृशतादात्म्यभानं च 'प्रमेयवान् वाच्यवानि'त्यादौ, 'घटो द्रव्यम्' इत्यादौ तूपहितयोरेव तादात्म्यभानाद्

## विट्ठलेशीयटिप्पणी

उपाधिभेदस्योपहितप्रतियोगिकत्वे स्वानुयोग्युपाध्युपहितानुयोगिकत्वे च। *अनुभवे='द्रव्यत्वं न घटत्वम्' इत्याकारकानुभवे। *तस्यैवेति* ॥ तथाचास्यानुभवसिद्धत्वे द्रव्यत्वोपहितानुयोगिको घटत्वोपहितप्रतियोगिक औपाधिकभेदोऽप्यनुभवसिद्ध एवेति भावः। *घटत्व-तदुपहितप्रतियोगिकतयेति* ॥ *ननु* घटत्वोपहित-मात्रप्रतियोगिकभेदभानेनैव 'घटो घटः' इति प्रमावारणे किं 'द्रव्यं घटः' इति बुद्धावुभयप्रतियोगिकैकभेदभानेन ? इति—चेत्, *शृणु*; तादृशबुद्धौ हि द्रव्यत्वोपहिते धर्मिणि घटत्वोपहितस्य स्वातन्त्र्येण, घटत्वस्य च पारतन्त्र्येण भानम्। तथाच तयोऽर्भेदभानमावश्यकम्। तत्र चैकैकमात्रप्रतियोगिकभेदद्वयस्य भाने गौरवाद् उभयप्रतियोगिकतया एक एव भेदो भासते। अत एव 'द्रव्यं घटो घटत्ववच्चे'ति स्वातन्त्र्येण घटत्वावगाहिज्ञानस्य विषयवैलक्षण्यं निर्वहति; उक्तभेदद्वयस्य तत्र भानोपगमात्। एवं तादृशोभयप्रतियोगिकैकभेदस्य द्रव्यत्वोपहिते भासमानस्य द्रव्यत्वेऽपि भानावश्यकत्वेनोभयवृत्त्येकानुयोगिकत्वस्यैव भानमिति। ग्रन्थकारेण तूपहितमात्रप्रतियोगिको भेद उपाधिभेदातिरिक्तो न कण्ठोक्तः; अतस्तस्योपाधिभेदस्यैवोपहितप्रतियोगिकतया भानं 'घटो घटः' इत्यस्य प्रमात्ववारणाय 'द्रव्यं घटः' इत्यस्य प्रमात्वाय चावश्यकम्। परंतु 'द्रव्यत्वं द्रव्ये ने'ति प्रत्ययोपपत्तिश्चिन्त्येति ध्येयम्। *ननु* इदमेव भेदस्यौ-पाधिकत्वम्, यदुपाध्युपहितोभयनिष्ठोपाधिवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वम्, तत्तु न युक्तम्; न्यूनवृत्तेरुपाधिमात्रवृत्ति-धर्मस्योभयवृत्तिप्रतियोगितावच्छेदकत्वासंभवात, इत्यत आह—*औपाधिकेति ॥* *ननु* यदि 'द्रव्यं घटः' इत्यभेद-संसर्गकबुद्धौ घटत्वभेद एव भासते, तर्हि तस्य घटाभेदाविरोधितया द्रव्यत्वोपहित एव भानसंभवे किमिति सामानाधि-करण्यघटकतया भेदभानं पूर्वमुक्तमिति ? अत आह—*द्रव्यत्वोपहितानुयोगिकतयेति* ॥ *तद्भाने=घटत्वोपहितप्रति-योगिकतया घटत्वभेदभाने। [ *उक्तानुभवे='द्रव्यं घटः' इत्यनुभवे। *द्रव्यत्वत्वादेरपि भानापत्तिरिति* ॥ तथाच स्वरूपतो द्रव्यत्वाद्यवगाहितानुभवविरोध इति भावः। (क) ] *विशिष्टेति* ॥ अभेदसंबन्धेनेत्यादिः। *विशेष्य-विशेषणेति*॥ 'अभेदसंसर्गके विशिष्टज्ञाने' इत्यनुवर्तते, तेन 'घटस्तद्घटवानि'ति संयोगसंसर्गकबुद्धौ प्रमात्ववारणानुरोधेन विशेष्य-विशेषणयोर्भेदभानस्यावश्यकत्वेऽपि न क्षतिः। *विनिगमकाभावादिति* ॥ उपहितभेदभानोपगमेनाप्येक-धर्मविशिष्टयोस्तादात्म्येन विशिष्टज्ञाने प्रमात्ववारणसंभवादिति भावः। *उक्तानुभवस्य='द्रव्यं घटः' इत्यस्य। *उपाध्योः=द्रव्यत्व-घटत्वयोः। *ननु* 'उपाध्योरिवे'ति दृष्टान्तताऽसङ्गतिः, तद्भेदे 'द्रव्यत्वं घटत्वं ने'त्यनुभवस्यैव मानत्वादित्यत आह—*अनुभवान्तरस्येति* ॥ *शुद्धेति* ॥ उक्तानुभवान्तरं तु द्रव्यत्वत्वोपहिते घटत्वत्वोपहित-भेदमेवावगाहत इति भावः। *ननु* तर्हि केवलघटे द्रव्यत्वविशिष्टत्वे किं मानम् ? नहि तत्र द्रव्यत्वविशिष्टप्रकारकः

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उपाध्योस्तादात्म्याभानेन तयोर्भेदभानेऽपि मानाभावाद् 'उपाध्युपहितोभयप्रतियोगिकतयैवौपाधिकभेदस्य भानमि'ति नियमासंभव इति—*अपास्तम्* ; 'यदीयतादात्म्यं यत्र भाति, तदीयतयैव भेदस्तत्र भाती'ति नियमाभावेनोपहितप्रतियोगिकतया यत्र भेदो भाति, तत्रोपाधिप्रतियोगिकतयाऽपि भातीति नियमस्वीकारे बाधकाभावात्, 'पटो घटो न' इति प्रत्यये विशेष्य-विशेषणप्रतियोगिकभेदद्वयस्यानौपाधिकस्येव 'द्रव्यं घटः' इत्यादौ तादृशप्रतियोगिकैकभेदस्यौपाधिकस्य भानात् तादृशभेदस्योपहितमात्रप्रतियोगिकतयाऽपि भानकल्पने गौरवात्, तदन्यस्योपहितप्रतियोगिकभेदस्य कल्पने गौरवाच्च। यद्यपि स्फटिकलौहित्यादेरौपाधिकस्य स्वाश्रयजपादिनिष्ठतया न सर्वत्र भानम् ; तथापि तत्राऽऽवरकभित्त्यादिप्रतिबन्धात् तथा, प्रकृते तु प्रतिबन्धकाभावात् तथा भाने बाधकाभावः। लौहित्यादेरिव घटत्वादिभेदस्य घटादौ संसृष्टतयोत्पत्तिस्वीकारात् संसृष्टरूपाणां प्रातीतिकत्वनिर्वाहे संसर्ग इव प्रतियोगितैव। अत एव घटत्वादेस्तत्रोपाधित्वं स्वधर्मसंक्रामकमव्याहतम्। (क) ]

केवले घटे नीलत्वादिविशिष्टादिव द्रव्यत्वादिविशिष्टादपि भेदस्य पूर्वोक्तयुक्तिभिर्व्यवस्थापितत्वात्, 'तद्घटवान्' इत्याकारकस्य तद्घटविशेष्यकस्य निर्धर्मितावच्छेदकत्वे विशेष्य-विशेषणयोर्भेदाभाने प्रमात्वापत्तेश्च। तस्माद् द्रव्यत्व-घटत्वोपहितयोर्भेदस्योक्तानुभवसिद्धत्वात् पूर्वोक्तानुयोगिताविशेषस्याप्रामाणिकत्वाद् विशिष्टज्ञानमात्रस्य विशेष्य-विशेषणभेदविषयकत्वमव्याहतम्। नचैवम्—'घटो द्रव्यं ने'त्यादिधीरपि प्रमा स्यादिति—वाच्यम् ; नञ्भेदादिपदाभिलप्यज्ञाने तादात्म्यविरोधित्वविशिष्टभेदस्य विषयत्वात्। अत एव 'वृक्षे कृष्णसंयोगो ने'त्यादि-

विट्ठलेशीयटिप्पणी

तादात्म्यसंसर्गकोऽनुभवोऽस्तीत्यत आह—*केवल इति* ॥ *पूर्वोक्तयुक्तिभिः=*'घटत्वोपलक्षितं द्रव्यत्वविशिष्टम्' इत्यनुभवानुमानज्ञानवैलक्षण्यान्यथाऽनुपपत्त्यादिभिः ॥

*ननु* 'द्रव्यं घटः' इत्यादौ भासमान उपहितभेद उपाधिभेदरूप एव ; तथाच कथं विनिगमकाभावः ? द्वयोर्हि स इति चेत्, *न* ; भासमानभेदस्योपाधिप्रतियोगिकत्वम्, उपहितप्रतियोगिकत्वं वेति तत्संभवात्। विशेष्य-विशेषणयोर्भेदभाने युक्त्यन्तरमाह—*तद्घटवानिति* ॥ *तद्घटविशेष्यकस्येति* ॥ तादात्म्यसंसर्गकज्ञानस्येति शेषः ; शङ्कायास्तन्मात्रविषयत्वात्। संयोगादिसंसर्गकज्ञानस्याभिप्रेतत्वे 'घटस्तद्घटवानि'ति सधर्मितावच्छेदकज्ञानोपेक्षाया निर्बीजत्वापाताच्च। तादात्म्यसंसर्गकं तु 'घटस्तद्घटः' इति सधर्मितावच्छेदककमिष्यत एव, निर्धर्मितावच्छेदककं परं 'तद्घटवानि'ति नेष्यत इति बोध्यम्। *ननु*—इदं ज्ञानं केवले तद्घटे तद्व्यक्तित्वविशिष्टतद्घटप्रकारकम्; तथाच केवले विशिष्टभेदस्य व्यवस्थापनाद् विशेष्य-विशेषणभेदभानोपगमेनापि नैतस्य प्रमात्वापत्तिवारणमिति—चेत्, *न* ; 'विशेष्ये विशेषणमि'ति रीत्या तद्व्यक्तित्वोपलक्षितघटस्यैवात्र प्रकारत्वात्। उपसंहरति—*तस्मादिति* ॥ संयोगादिसंसर्गकस्य 'घटस्तद्घटवानि'ति ज्ञानस्य प्रमात्वापत्तिवारणानुरोधादित्यर्थः। अन्यथासिद्धिनिरासं स्मारयति—*पूर्वोक्तेति*॥ बाधकनिरासं स्मारयति—*द्रव्यत्वेति* ॥ *एवम्=*घटत्वोपहित औपाधिकद्रव्यत्वोपहितभेदोपगमे। *तादात्म्यविरोधित्वविशिष्टभेदस्येति* ॥ तादृशश्चानौपाधिक एव भेदः, इति न तादृशज्ञानस्य प्रमात्वमिति भावः ॥

*ननु* भेदेऽत्यन्ताभावे चाभावत्वेन नञः शक्तिरेकैव ; लाघवात्, तथाचात्यन्ताभावेऽपि प्रतियोगिविरोधभानं वाच्यम्, तच्च न सम्भवति ; अव्याप्यवृत्त्यत्यन्ताभावे प्रतियोगिविरोधस्य बाधेन भानासम्भवात्, इत्याशङ्क्यैकावच्छेदकघटितं विरोधं निर्वक्ष्यन् तत्रापि प्रतियोगिविरोधभानं व्यवस्थापयति—*अत एवेति* ॥ *अत एव=*प्रतियोगिविरोधित्वविशिष्टाभावस्यैव नञ्पदाभिलप्यज्ञानविषयत्वादेव। *कृष्णेति* "साङ्केत्यं पारिहास्यं वा" इति स्मार्तन्यायमनुसन्धाय। *ननु* नञः प्रतियोगिविरोध्यभावज्ञानस्यै-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानेऽपि कृष्णसंयोगविरोध्यत्यन्ताभावस्यैव विषयत्वम् ; नञादिपदस्य विरोध्यभावबोधकत्वेन तेनैतादृशाभावज्ञानस्यैवाभिलापात्, विरोधस्य पदानुपस्थाप्यत्वेऽपि संसर्गविधया भानसम्भवात्। अत एव विरोधित्वमेकावच्छेदेनैकाधिकरणावृत्तित्वरूपम्। अत एवोक्तज्ञानोत्तरं 'घटो द्रव्यमि'त्यादिज्ञानस्य नोत्पत्तिः, प्रतियोगिसामानाधिकरण्यरूपाऽव्याप्यवृत्तित्वविशिष्टसंयोगाद्यभावज्ञानस्य तु नञ्पदानभिलप्यतया न संयोगादिविशिष्टधीविरोधित्वम्। अत एव च 'मूले वृक्षे न कृष्णसंयोगः' इत्यादिधीरपि 'मूले वृक्षे कृष्णसंयोगः' इति ज्ञाने नियमेन

विट्ठलेशीयटिप्पणी

वाभिलापकत्वं कथम्? विरोधस्य नञर्थत्वानवच्छेदकत्वात्, इत्यत आह—*नञादीति* ॥ *बोधकत्वेन=शाब्दबोधौपयिकाकाङ्क्षाशालित्वेन। *तेन=नञा। *ननु* पदानुपस्थाप्यस्य विरोधस्याकाङ्क्षामात्रात् कथं शाब्दविषयत्वम्? अत आह—*विरोधस्येति* ॥ *संसर्गविधयेति* ॥ प्रतियोगिविरोधविशिष्टस्वरूपत्वेन स्वरूपस्याभावबुद्धौ संसर्गतेति भावः। *यद्वा*—'द्रव्यं न' इत्यादौ नञर्थे प्रतियोग्यनुयोगिभावेन सम्बन्धेन प्रतियोगिनो भानं सर्वमतसिद्धम्; स च सम्बन्धः केषांचिन्मते विरोधरूपः। स्वरूपविशेष एवेति मतेऽपि विरोधविशिष्टस्वरूपविशेषस्यैवाभावे प्रतियोगिसंसर्गत्वसम्भवः। एवं चोभयथा प्रकारकोटावपि विरोधस्य संसर्गत्वं सम्भवतीति बोध्यम्। *ननु* तर्हि 'वृक्षे न कृष्णसंयोगः' इति धियः प्रमात्वं न स्यात्; कृष्णसंयोगवति तद्विरोधितदभावस्य बाधात्, इत्याशङ्कां निरस्यति—*अत एवेति* ॥ उक्तधियः प्रमात्वादेवेत्यर्थः। *ननु* वस्तुगत्या द्रव्यतादात्म्यविरोधवान् यो द्रव्यभेदः, तद्विषयता 'घटो न द्रव्यम्' इति प्रत्ययस्योपगन्तव्या; तावताऽपि तस्य प्रमात्ववारणात्, इति किमुक्तविरोधस्य तद्विषयत्वोपगमेनेति? अत आह—*अत एवेति* ॥ 'घटो न द्रव्यमि'ति ज्ञानस्य द्रव्यतादात्म्यविरोधित्वविशिष्टद्रव्यभेदविषयकत्वादेवेत्यर्थः। विरोधस्य तद्विषयतानुपगमे द्रव्यभेदत्वेन घटत्वाद्यवगाहिनो ज्ञानस्य 'घटो द्रव्यमि'ति ज्ञानप्रतिबन्धकत्वानुपपत्तिः, रूपान्तरेणानौपाधिकद्रव्यभेदावगाहिनो ज्ञानस्योक्तप्रतिबन्धकत्वापत्तिश्च, इत्यतो द्रव्यभेदत्वावच्छिन्नविषयकनिश्चयत्वेन तत्प्रतिबन्धकता वाच्या, सा च न युक्ता; द्रव्यभेदस्यौपाधिकद्रव्यभेदसाधारणतया द्रव्यतादात्म्यविरोधितानवच्छेदकत्वात्, विरोधितावच्छेदकरूपावच्छिन्नविषयकत्वस्यैव प्रतिबन्धकतायां तन्त्रत्वात्, विरोधस्य तद्विषयतोपगमे तु द्रव्यतादात्म्यविरोधित्वविशिष्टद्रव्यभेदत्वस्य द्रव्यतादात्म्यविरोधितावच्छेदकतया तदवच्छिन्नविषयकत्वेन तत्प्रतिबन्धकता युज्यत इत्युपष्टम्भसङ्गतिः। नचैवम्—द्रव्यभेदत्वविषयतायाः प्रतिबन्धकतावच्छेदककोटिनिवेशो व्यर्थ इति—वाच्यम्; निश्चयत्वादिनिर्वचनायासभयेन तद्घटितरूपेणापि स्वतन्त्रप्रतिबन्धकत्वस्योपगन्तव्यत्वात्। *एतेन*—ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतया गतार्थत्वमपि—*अपास्तम्* ;

वस्तुतस्तु*—द्रव्यतादात्म्यविरोधित्वविशिष्टस्वरूपत्वावच्छिन्नसंसर्गताक-द्रव्यभेदत्वावच्छिन्नप्रकारकनिश्चयत्वेनैव प्रतिबन्धकता, इति न किंचिच्छङ्कावसर इति—*ध्येयम्* ॥ *ननु* एवं 'कृष्णसंयोगसमानाधिकरणकृष्णसंयोगाभाववान् वृक्षः' इति ज्ञानस्य 'वृक्षः कृष्णसंयोगी'ति ज्ञानप्रतिबन्धकत्वं न स्यात्, कृष्णसंयोगविरोधभानस्य तद्बीजस्य तत्रासम्भवादित्याशङ्कामिष्टापत्त्या परिहरति—*प्रतियोगीति* ॥ *नञ्पदानभिलप्यतयेति* ॥ नञ्पदस्य प्रतियोगिविरोध्यभावबोधकत्वेनेत्यादिः। तदभिलप्यज्ञानस्यैव प्रतियोगिज्ञानविरोधित्वादिति भावः। यद्वा—नञ्पदस्य प्रतियोगिविरोध्यभावबोधकत्वे युक्त्यन्तरमाह—*प्रतियोगीति* ॥ तस्य तदबोधकत्वे प्रतियोगिसामानाधिकरण्यविशिष्टाभावज्ञानस्यापि नञ्पदाभिलप्यतापत्त्या तस्य प्रतियोगिविशिष्टबुद्धिविरोधित्वं दुर्वारं स्यात्, नञ्पदाभिलप्यज्ञानस्य प्रतियोगिज्ञानविरोधिताया आनुभाविकत्वादिति भावः। *केचित्तु—अत एव चेति* ॥ नञ्पदाभिलप्यज्ञानस्य प्रतियोगिज्ञानविरोधित्वादेव चेत्यर्थः। नञ्पदानभिलप्य-तदभिलप्ययोः को विशेषः?

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विरोधिनी ; प्रतियोगिविरोधित्वविशिष्टाभावनिश्चयत्वेनैव विरोधित्वस्वीकारात् तादृशस्यैव तथात्वेन सर्वानुभाविकत्वात् । अत एव च 'भूतले घटोऽस्ति, न वे'ति संशयनिवृत्तये 'भूतले घटाभावः' इत्यादि न प्रयुञ्जते, किन्तु 'भूतले घटो नास्ती'ति । एतेन—विशिष्ट-केवलयोर्भेदे 'विशिष्टसत्ता सत्ता न' इति प्रमा स्यादिति शिरोमण्युक्ताऽऽपत्तिः—अपास्ता ; तस्मात् 'सामानाधिकरण्यप्रत्यये भेदाभेदौ भासेते' इति वाचस्पत्युक्तिर्युक्तैव ॥

तत्र भेदो भेदत्वरूपाखण्डधर्मविशिष्टो भावोऽभावो वा यथासम्भवं बोध्यः । 'अयं घटान्यः' इत्यादौ घटान्यस्य भेदो घटान्यत्वभेद एव ; उपहितभेदस्योपाधिभेदात्मकत्वमित्युक्तत्वात् । तथाच तस्याभावप्रतियोगिकाभावत्वेनाधिकरणात्मकत्वाद् इदंनिष्ठत्वेनेदन्त्वरूपत्वाद् भावरूप एव सः । 'अयं घटः' इत्यादौ घटादिभेदोऽभावरूपः, अभेदस्तु तादात्म्यम्, तादात्म्यं चाखण्डधर्मविशेषः । *ननु*—तथापि तादात्म्यं न विशेषणस्वरूपम्, 'द्रव्यं घटः' इत्यादौ द्रव्यत्वोपहितस्य विशेष्यस्यापि विनिगमकाभावेन तादात्म्यत्वापत्तेः । *अथ*—तस्य पटादिद्रव्येऽपि सत्त्वेन तत्रापि घटत्वोपहितप्रकारकज्ञानस्य भ्रमत्वानापत्त्या तत्तादात्म्यत्वापत्तिरिति—चेत्, *सत्यम्*; तथाऽपि विशेषणस्वरूपघटाद्यसम्बद्धपटादेरपि तत्तादात्म्यता स्यात् ; विशेषणस्वरूपस्यापि तदसम्बद्धत्वेन विनिगमकाभावात्। नह्यत्यन्ताभेदे सम्बद्धता सम्भवति ; 'घटो घटः' इत्यादिप्रत्ययाभावात् । किञ्च 'स्वं न स्वीयमि'त्यनुभवेन स्वप्रतियोगिकत्वस्य स्वस्मिन्नसम्भवेन विशेषणस्य न स्वप्रतियोगिकतादात्म्यत्वसम्भवः ॥ *अथ*—आस्तां विशेषणतावच्छेदकघटत्वादेर्घटादितादात्म्यतेति—चेत्, *न*; शुद्धघटत्वादिविशेषणस्थले तदसम्भवात्, घटत्वादिकमविषयीकृत्यैव—'अयं घटः' इत्यादिबुद्ध्युदयात्

विट्ठलेशीयटिप्पणी

यत् तस्यैव प्रतियोगिज्ञानविरोधित्वम् ? अत आह—*प्रतियोगीति* ॥ प्रतियोगिविरोधविशिष्टेति* विरोधपदघटितः पाठः । तादृशनिश्चयत्वं नञ्पदानभिलप्ये कुतो नेति ? अत आह—*तादृशस्यैवेति* ॥ नञ्पदाभिलप्यस्यैवेत्यर्थः । *तथात्वेन=तादृशनिश्चयत्वेन । *अथवा*—विरोधाविषयकस्यापि कुतो न विरोधितेति ? अत आह—*तादृशस्यैवेति*॥ प्रतियोगिविरोधविशिष्टाभावविषयकस्यैवेत्यर्थः । *तथात्वेन=प्रतियोगिज्ञानविरोधित्वेन । अत्र प्रतिबध्य-प्रतिबन्धकग्रहयो'र्मूले' इत्येकावच्छेदकोल्लेखः प्रतियोग्यभावयोर्विरोधलाभाय । *ननु*—'वृक्षः प्रतियोगिसमानाधिकरणकृष्णसंयोगाभाववानि'ति ज्ञानमप्यभावपदघटकनञ्पदाभिलप्यमेव, इति कुतो न तस्य विरोधिता ? इति चेत्, *न* ; असमस्तनञ्पदाभिलप्यस्यैव विरोधित्वमित्यभिप्रायात् । *अत एव चेति* ॥ असमस्तनञ्पदाभिलप्यस्यैव प्रतियोगिविरोध्यभावनिश्चयत्वेन प्रतियोगिज्ञानविरोधित्वादेव चेत्यर्थः । *नास्तीति* ॥ प्रयुञ्जत इत्यनुषङ्गः । *एतेन=नञः प्रतियोगितादात्म्यविरोधविशिष्टभेदबोधकत्वनियमेन । उपसंहरति—*तस्मादिति* ॥ भेदाभेदपदार्थौ विवेचयति—*तत्रेति* ॥ *अधिकरणात्मकत्वादिति* ॥ अधिकरणस्य आत्मा=स्वरूपम्, अधिकरणतावच्छेदकीभूतो धर्मः, तद्रूपत्वादित्यर्थः । तदाह—*इदंनिष्ठत्वेनेति* ॥ वाकाराभावेन यथाश्रुतासङ्गतेः । *एतेन*—अभेद आधाराधेयभावः कथमिति शङ्का—*परास्ता* ; अभेदो यद्यपि भेदाभावः, भावाभावयोरवच्छेदकभेदं विना विरोधादिति पूर्वमुक्तेः ; तथापि भेदाभावरूपोऽपि स न भावभिन्नसप्तमपदार्थरूपः, किन्तु भावरूप इत्याह—*अभेदस्तु तादात्म्यमिति* ॥ भेदाभावस्य प्रतियोगितादात्म्यरूपता तार्किकाणामप्यनुमतैव । इयांस्तु विशेषः—यत् तेषां प्रतियोगितादात्म्यं केषांचित् प्रतियोगिरूपम्, केषांचित् प्रतियोगितावच्छेदकरूपम् ; एतेषां तु तदतिरिक्तमित्याह—*तादात्म्यं चेति* ॥ *तस्य=द्रव्यत्वोपहितरूपविशेषस्य । *तत्रापि=घटादिद्रव्येऽपि । *नेति* ॥ तस्येत्यादिः । *ननु* अत्यन्ताभेदेऽपि सम्बद्धतोपेयते, 'घटो घटः' इति प्रत्ययस्तु न ; धर्मितावच्छेदकतासम्बन्धेन घटत्वोपहितप्रकारकबुद्धौ घटत्वभेदस्य हेतुत्वोपगमादित्यत आह—*किंचेति* ॥ *ननु* विशेषणतावच्छेदकविधया घटत्वत्वस्य 'अयं घटः' इति बुद्धावविषयत्वेऽपि संसर्गविधया तद्विषयत्वं तस्याऽऽस्तामित्याशङ्क्य, घटत्वविशेषणतावच्छेदकतास्थल एव घटत्वत्वस्य तादात्म्यरूपत्वं दुर्घटमित्याह—*तद्व्यक्तित्वस्येति* ॥ 'अयं तद्व्यक्ति'रित्यादावित्यादिः ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तद्व्यक्तित्वस्य विशेषणतावच्छेदकत्वस्थले रूप-रसाद्यनेकधर्मरूपस्य तद्व्यक्तित्वस्य तद्व्यक्तितादात्म्यत्ववत् कल्पने गौरवात् तद्व्यक्त्युत्पत्तिकालावच्छेदेन रूपादेस्तद्व्यक्तावभावाच्च तदन्यस्यैव तत्कालावस्थायिनस्तत्कल्पनाया आवश्यकत्वेन घटत्वादेर्विशेषणतावच्छेदकत्वस्थलेऽपि तादृशतादात्म्यभानसम्भवेन घटत्वादेस्तादात्म्यत्वा-श्रयत्वकल्पने गौरवात्, मानाभावाच्च ॥

*अथ*—घटादेस्तादात्म्यं तत्स्वरूपमेव; अभावादेः स्वरूपस्यैवाधिकरणे सम्बन्धत्वदर्शनात् स्वरूपस्यापि सम्बन्धत्वोपपत्तेः, *उक्तञ्च बौद्धाधिकारे शिरोमणिना*—'ज्ञानस्य स्वरूपमपि विषयतानामकस्तत्सम्बन्धः, अभावाधिकरणयोः स्वरूपवत्' इति—चेत्, *न*; 'स्वं न स्वीयमि'त्याद्युक्तानुपपत्तेः, अभावाधि-करणयोरपि स्वरूपान्यस्यैव सम्बन्धत्वात्। अत एव विषयताऽपि न ज्ञानस्वरूपेति तत्रैव तेनैव पश्चादुक्तम्।

*अथ*—घटादिविशेषणस्वरूपस्यापि तादात्म्यत्वरूपेण घटादितो भेदसम्भवेन घटादिप्रतियोगिकत्वसम्भ-वात् तदीयतादात्म्यत्वमुपपद्यत इति—चेत्, *न*; घटादौ तादात्म्यत्वकल्पनायाः पूर्वं तस्य तत्सम्बद्धत्वा-सिद्ध्या तस्या असिद्धेः। नहि घटत्वविशिष्टप्रतियोगिकतादात्म्यसिद्धेः पूर्वं तादात्म्येन तत्सम्बद्धं किञ्चित् सिद्ध-मस्ति, येन तत्सम्बन्धस्य तादात्म्यत्वमात्रं कल्प्येत। तथाच भेदे सिद्धे तादात्म्यत्वम्,तादात्म्यत्वे सिद्धे तदुप-हितरूपेण भेदसिद्धिरित्यन्योन्याश्रयः। तस्मात् तादात्म्यत्वमिव तदाश्रयस्तत्र घटादिसम्बन्ध इति त्वयमपि कलस-घटादिभ्योऽतिरिक्तं कल्प्यते। तत्र तादात्म्ये तादात्म्यस्य घटादिसम्बन्धस्य कल्पनेऽनवस्थानाद् वरं तत्स्वरूप-सम्बन्धेन घटादिसम्बद्धत्वं तस्य स्वीक्रियते; अनवस्थापेक्षयाऽऽत्माश्रयस्य युक्तत्वात्। अनवस्थायां हि तादात्म्ये घटस्यैकः सम्बन्धो वाच्यः; असम्बद्धस्य तादात्म्यस्य सम्बन्धत्वासम्भवात्, एवं तत्रापि

विठ्ठलेशीयटिप्पणी

*रूप-रसेति* ॥ विनिगमनाविरहेणेत्यादिः। 'गौरवाद् अभावाच्चे'ति द्वयमावश्यकत्वेनेत्यत्रान्वेति। प्रामाणिकं गौरवं न दोषायेत्यत आह—*तद्व्यक्त्युत्पत्तिकालावच्छेदेनेति* ॥ अभावाच्चेति* ॥ तत्काले इदानीमियं तद्व्यक्तिरिति प्रत्ययानुपपत्तेरिति शेषः। *अन्यस्य=अस्मदभिमततादात्म्यस्य। *तत्कल्पनायाः*=तादात्म्यत्व-कल्पनायाः। *ननु* मानसिद्धं गौरवं न दोषायेत्यत आह—*मानाभावाच्चेति* ॥ अन्यथोपपत्तेरिति भावः।

*ननु* 'स्वं न स्वीयमि'त्यनुभवेन स्वस्य स्वप्रतियोगिकसंबन्धता कथमिति? अत आह—*अभावादेरिति* ॥ तथाच सोऽनुभवोऽलीक एवेत्यभिमानः। तादृशानुभवापलापापेक्षयाऽभावस्थलेऽपि स्वरूपान्यस्यैव संबन्धत्वकल्पना युक्तेति मनसिकृत्य समाधत्ते—*न स्वं नेति ॥* तर्हि ज्ञानस्य स्वरूपं तत्संबन्ध इति कथं शिरोमणिनोक्तम्? अत आह—*अत एवेति ॥* स्वरूपस्य संबन्धत्वासंभवादेवेत्यर्थः। *पश्चादुक्तमिति ॥* पूर्वं तदुक्तिस्तु शङ्कारूपा मतान्तरोपन्यासरूपा वा, इति न पूर्वोत्तरविरोध इति भावः। *घटादिप्रतियोगिकत्वेति ॥* भेदनिबन्धनेत्यादिः। *तत्सम्बद्धत्वासिद्धेयेति* ॥ तद्भेदासिद्धेरित्यादिः। असम्बद्धे तु न तत्कल्पनेति भावः। *तस्याः=तादात्म्यत्वकल्पनायाः। *ननु*—घटादौ तादात्म्यत्व-कल्पनायाः पूर्वं तत्संबद्धत्वं कुतो न सिद्धमित्याशङ्क्य, घटप्रतियोगिकतादात्म्यासिद्धेरित्याशयेन समाधत्ते—*नहीति* ॥ किंचित्*=घटादिकम्। *ननु*—तादात्म्यत्वकल्पना स्वोत्तरभाविसिद्धिकभेदसिद्ध्युत्तरभाविसिद्धि-कतादात्म्येन घटसंबद्धे घटेऽस्तु, को दोष इति? अत आह—*तथाचेति* ॥ *अन्योन्याश्रय इति ॥* दोष इति शेषः। उपसंहरति—*तस्मादिति ॥* तादात्म्यत्वस्य सर्वमतेऽतिरिक्ततया दृष्टान्तता। *तत्र=तादात्म्ये। *घटादि-संबन्ध इति* ॥ तदनङ्गीकारे घटादितुल्यतापत्त्या घटीयसंबन्धतानुपपत्तेः। *ननु* तादात्म्ये घटस्य संबन्धस्ता-दात्म्यान्यश्चेत्, तत्राप्यन्य इति रीत्याऽनवस्था, तत्तादात्म्यमेव चेत्, आत्माश्रयः, तत्र किं स्वीक्रियते? तत्राह—*तत्रेति* ॥ अतिरिक्तत्वेनाभ्युपगत इत्यर्थः। *ननु* तादात्म्यद्वयमुपगम्यताम्, अनवस्थाऽऽत्माश्रययोरभावात्,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

घटस्य सम्बन्धान्तरम्, एवं तत्रापीत्यादि महागौरवम्। यदि तु तादात्म्यद्वयं घटस्य स्वीक्रियते, तयोः परस्पर-सम्बद्धता च स्वीक्रियते, तदाऽन्योन्याश्रयः, गौरवं च। यदि तु तादात्म्यत्रयं स्वीकृत्य प्रथमस्य द्वितीयं सम्बन्धः, तस्य तु तृतीयम्, तस्य च प्रथममित्युच्यते, तदाऽपि चक्रकं गौरवं च। तादात्म्यमेकं स्वसम्बन्धिभ्यामतिरिक्तं तथैव प्रतीयमानत्वात् कल्प्यते। अतः स्वस्यैव स्वं प्रति सम्बन्धत्वादात्माश्रयोऽपि स्वीक्रियते। अत एव बौद्धाधिकारशिरोमणौ घटाभावस्य स्ववृत्तित्वस्वीकार आत्माश्रयेऽपि लाघवमुक्तम् ॥

तच्च तादात्म्यं घटादौ रूप-रसादेर्जायते; रूपादीनां नित्यत्वात्, उत्पत्ति-नाशप्रत्ययस्य तादात्म्योत्पत्ति-नाशविषयकत्वात्, पाकादिना घटादेर्नाशोत्पत्तिः; रूपादीनाम्? तादात्म्यस्य वा? इत्यत्र विनिगमकाभावादिति भट्टादिमतम्,. मन्मते त्वविद्यादेः श्रुति-युक्तिसिद्धानादिताकाद् भिन्नं द्वयमात्र-मुत्पत्ति-नाशवदिति स्वीक्रियते; "यावद्विकारं तु विभागो लोकवदि"ति न्यायात्। *विभागः=तादृशा-विद्यादिभेदः। *यावद्विकारम्=उत्पत्तिमनतिक्रम्य वर्तते, उत्पत्तिव्याप्य इति यावत्। "यतो वा इमानि भूतानि जायन्ते" इति श्रुतौ 'इमानि' 'भूतानी'ति पदाभ्यामात्माविद्यादिभिन्नस्योत्पन्नमात्रस्योक्तेश्च। 'भूतानी-'

विट्ठलेशीयटिप्पणी

इत्यत आह—*यदि त्विति* ॥ *परस्परसंबद्धतेति ॥* एकं तादात्म्यमिदमादौ घटस्य संबन्ध उपेयः। तस्यास्य तत्र सिद्धये तत्र घटीयसम्बन्धस्तादात्म्यान्तरम्, तत्र घटीयसंबन्धत्वसिद्धिस्तु प्रथमतादात्म्येन घटसंबद्धत्वोपगमादिति भावः। तर्हि तत्त्रयमस्तु, उक्तदोषाणामभावादित्यत आह—*यदि त्विति ॥* उपसंहरति—*तादात्म्यमेकमिति*॥ तस्मादित्यादिः। *ननु* एवं विशेषणस्वरूपमेव तादात्म्यमस्तु, नचासंबद्धतया पटादितुल्यता; तथातिरिक्तादात्म्य-स्येव विशेषणस्यापि स्वात्मकसंबन्धेन विशेषणसंबद्धत्वोपगमसंभवादित्याशङ्कां परिहरति—*तथैवेति* ॥ स्वस्यैव स्वं प्रति संबन्धत्वादात्माश्रयोऽपि स्वीक्रियत इति। क्लृप्तानां विशेषणादीनां संबन्धतानुपपत्त्याऽतिरिक्ततादात्म्यमुप-गम्यते। तच्चासम्बद्धस्य सम्बन्धतानुपपत्त्या सम्बन्धान्तरोपगमेऽन्योन्याश्रयादिभयाद् गौरवाच्च स्वत एव घटादि-संबद्धमुपगम्यते; स्वतो व्यावृत्तविशेषवत्। तत्र चात्माश्रयो दोषो गत्यन्तराभावाद् लाघवात् सह्यत इति भावः।

घटादौ पाकात् पूर्वं श्यामताप्रत्ययः, न तूत्तरमिति नियमो यः, स किं श्यामरूपस्य नाशात्? उत तत्सम्बन्धभूत-तादात्म्यस्य? इति संशये भट्टादिसिद्धान्तमाह—*तच्चेति* ॥ *रूप-रसादेरिति* ॥ एवं च सर्वसिद्धोत्पत्ति-नाशानां घटादीनां कपालादौ नित्यसंबद्धघटत्वादीनां घटादौ च तादात्म्यं नित्यमेवेति भावः। *ननु* पाकादिना घटस्यैव नाशः, न रूपस्य वा, रूपतादात्म्यस्य वेत्यत आह—*पाकादिनेति* ॥ स्वसिद्धान्तमाह—*मन्मते त्विति* ॥ *श्रुतिः="अजामेकां लोहित-शुक्ल-कृष्णाम्" इत्यादिः। *युक्तिः=सर्वभूतोपादानभूतमायाया जन्यत्वे तदुपादान-मन्यद् वाच्यम्, तथाचान्योन्याश्रयादिदोषत्रयप्रसङ्ग इति। *द्वयमात्रमिति* ॥ *मात्रम्=कार्त्स्न्यं। तथाच रूपादि, घट-घटत्वादि, तत्तादात्म्यं चानित्यमेवेति भावः। *ननु* अविद्यादिभिन्नद्रव्यत्वसामानाधिकरण्येनोत्पत्ति-नाशावभ्युपगम्येताम्; तावता घटादावुत्पत्ति-नाशप्रत्ययोपपत्तेः, तथाच तदवच्छेदेन तदभ्युपगमे किं मानम्? अत आह—*यावद्विकारमिति* ॥ सूत्रं व्याचष्टे—*विभाग इति* ॥ *उत्पत्तिमिति* ॥ नाशस्योपलक्षणमिदम्। *अनतिक्रम्य वर्तते=अतिक्रम्य तद्भिन्ना न वर्तते। उत्पत्त्यभाववदवृत्तिरिति यावत्। तदाह—*उत्पत्तिव्याप्य इति* ॥ *यावदिति* ॥ 'अविद्यादिभेदः' इत्यादिपदेन ब्रह्मभेदोऽपि ग्राह्यः। तेन ब्रह्मणि न व्यभिचारः। व्याप्तिग्राहकसहचारग्राहकस्थलं दर्शयति—*लोकवदिति* ॥ लोके दर्शने। चाक्षुषप्रत्यक्षसिद्धघटादिवदित्यर्थः। *ननु* —विभागपदस्याविद्यादिभेदार्थकत्वे किं मानमिति शङ्कां परिहरन् अविद्यादिभिन्नसामान्यस्योत्पत्त्यादिमत्त्वे मानान्तर-माह—*यतो वेति* ॥ *उत्पन्नमात्रस्येति* ॥ *भूतानीति* ॥ भवतिरुत्पत्तिकर्मा। एवं चाविद्यादेरनुत्पत्त्या तद्भिन्न-स्येत्यर्थलभ्यमिति भावः। मात्रार्थलाभकं विभज्य दर्शयति—*भूतानीत्युक्तेरिति* ॥ *भूतानि सत्तादात्म्यवन्तीति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्युक्तेरुत्पन्नत्वसामानाधिकरण्यमात्रेण ब्रह्मजन्यत्वं लभ्यते, इत्यतस्तदवच्छेदेन जन्यतालाभाय—'इमानी'त्युक्तम्। सर्वाणीति तदर्थः। *अथवा*—भूतानि = सत्तादात्म्यवन्ति, ब्रह्माभिन्नानीति यावत्। अविद्याद्यनादिवारणाय 'इमानी'ति। अविद्याद्यनादिभिन्नानीत्यर्थः। विशेष्यतावच्छेदकीभूततादृशविशिष्टधर्मावच्छिन्नत्वस्योत्पत्तिमत्त्वे लाभस्त्वौत्सर्गिकव्युत्पत्त्या भवत्येव। तथाच कपालाद्यवच्छेदेन घटादेः, घटाद्यवच्छेदेन च कपालादेस्तादात्म्यं जायते, इति परस्पराध्यासोक्तरीत्या जन्यमात्रस्य तादात्म्यं जायते। *यत्तु*—कपाल-घटाभ्यामुपहिता सत्तैव तयोस्तादात्म्यमिति—मतम्, तत्राध्यासिकतादात्म्येनैव चिद्रूपसत्ताया घटाद्युपहितत्वं वाच्यम्; तथाच कपाल-घटयोर्यत् तादात्म्यं सत्तायां सम्बन्धः, तदेव तयोरन्योन्यस्मिन्नपि सम्बन्धोऽस्तु; कपालादितादात्म्यापन्नसत्तानुयोगिकस्य घटादितादात्म्यस्य कपालाद्यनुयोगिकत्वसम्भवात्, सत्तायामेकानुयोगिकत्वापरप्रतियोगिकत्वयोः, तादात्म्यत्वस्य च कल्पनापेक्षयैकप्रतियोगिकतया क्लृप्ते तादात्म्येऽपरानुयोगिकत्वमात्रस्य कल्पने लाघवात्। तस्मादयमाशयस्तत्रोन्नीयते ॥

उक्तरीत्या कपाल-घटयोस्तादात्म्यसंबन्धस्वीकार एकघटनिष्ठानां रूप-रसादीनामपि मिथस्तादात्म्यापत्तिः; तेषामपि परस्परोपहिताया एकसत्तायाः सत्त्वात्, अतो यद्विशिष्टे सत्तारूपाधिष्ठानचैतन्य आधारीभूते यस्यारोप्यस्य तादात्म्यमारोप्यते, तत्रैव तस्यारोप्यस्य तत्तादात्म्यं स्वीक्रियते; विशिष्टस्य तदनुयोगित्वेन विशेषणस्यापि तदनुयोगित्वात्, रूपादिविशिष्टे तु चैतन्ये रसादीनां न तादात्म्यमारोप्यते; घटादिविशिष्टचैतन्ये रूप-रसादीनां युगपदारोपात्।

विट्ठलेशीयटिप्पणी

भू सत्तायाम्। सत्ता च सद्रूपब्रह्मतादात्म्यमिति भावः। *ननु* 'इमानी'ति पदस्य सर्वार्थकत्वानुपगमे विधेयोत्पत्तिमत्त्व उद्देश्यतावच्छेदकावच्छिन्नत्वस्य कथं लाभ इति? अत आह—*विशेष्यतावच्छेदकेति* ॥ एवं च पूर्वकल्पे 'इमानी'तिपदवैयर्थ्यशङ्कैवास्वरसबीजमिति भावः। स्वमताविरोधाय परिष्कर्तुमुपन्यस्यति—*यत्त्विति* ॥ *सत्तैव= ब्रह्मसत्तैव। एवकारेणातिरिक्ततादात्म्यव्यवच्छेदः। *मतम्=अन्येषां मतम्; यथाश्रुते स्वमतविरुद्धम्। तत्रादौ यथाश्रुतैतन्मतापेक्षया स्वमतस्य लाघवेन युक्तत्वमाह—*तत्रेत्यादिना—लाघवादित्यन्तेन* ॥ तदनुरोधेन 'कपालोपहितसत्ते'त्यत्रोपहितपदस्य विशिष्टपरत्वमिति भावः। अत्रोपाधित्वेन प्रतीयमानं कपालं विशेषणमेव। अत एव 'यद्विशिष्टे' इति वक्ष्यति। नन्न तस्याध्यासाधिष्ठानत्वाश्रयत्वापत्तिः; तदवच्छेदकत्वमात्रेणापि विशेष्यान्वय्यधिष्ठानत्वान्वयोपपत्तेरिति। आध्यासिकतादात्म्यसंभवार्थम्—*चिद्रूपेति* ॥ *यत्तादात्म्यमिति* ॥ अतिरिक्तमिति शेषः। *ननु* घट-कपालादिप्रतियोगिकसत्तानुयोगिकतादात्म्यस्य कथं कपाल-घटाद्यनुयोगिकत्वम्? अत आह—*कपालादीति* ॥ *ननु* विशेषण एव विशेष्यान्वय्यन्वयित्वम्, न तूपाधौ; अन्यथा तयोरविशेषापत्तेः, नच कपालादि विशेषणम्; सत्ताया इव तस्याऽपि घटाध्यासाधिष्ठानतापत्तेः, जडस्य तदनुपगमेनेष्टापत्तेरयोगादित्यत आह—*सत्तायामिति* ॥ *लाघवादिति* ॥ एवं च सत्तातिरिक्तमेव कपालादौ घटादेस्तादात्म्यं पर्यवसितम्, नतूक्तसत्तारूपम्; गौरवात्, इति न यथाश्रुतं तन्मतं युक्तमिति भावः। कथं तर्हि भवतां तन्मताविरोधः? इत्याशङ्क्य तत् परिष्कुरुते—*तस्मादित्यादिना* ॥ यथाश्रुतार्थस्य ह्रासाय तत्रातिप्रसङ्गमाह—*उक्तरीत्येति* ॥ उक्तमतानुसारेणेत्यर्थः। तथाच कपाल-घटोभयोपहितैकसत्तारूपतादात्म्यसंबन्धस्वीकार इति सप्तम्यन्तार्थः पर्यवसन्नः। *एकघटनिष्ठानाम्=घटात्मकैकोपाध्युपहितचिद्रूपसत्तानिष्ठानाम्। *एतेन*—तादात्म्येन रूप-रसोपहितसत्ताया एकत्वम्—लभ्यते। *तादात्म्यापत्तिरिति* ॥ तथाच 'रूपं रसः' इति प्रतीत्यापत्तिरिति भावः। *तत्रैव=तद्विशिष्टानुयोगिकमेव, तद्विशेषणानुयोगिकमेवेत्यर्थो वा। *ननु* कपालादिविशिष्टे चैतन्ये घटादेस्तादात्म्यस्यारोपात् चैतन्यस्य घटादितादात्म्यानुयोगित्वमस्तु, कपालादेस्तत् कुतः? इति शङ्कां निरस्यति—*विशिष्टस्येति* ॥ रूप-रसादीनां मिथस्तादात्म्यापत्तिं निरस्यति—*रूपादीति*। *आरोप्यत इति*॥ अतो रूपादौ न रसादितादात्म्यमिति शेषः। घटादौ रूपादितादात्म्ये युक्तिमाह—*घटादीति*॥ *ननु* एवं कपालोपाधिकसत्तानिष्ठं घटीयतादात्म्यमेव कपाले घटस्य संबन्ध इति पर्यवसितम्; तथाच कपाल-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

एवं च कपालोपहितसत्तायां वस्तुगत्या विद्यमानं घटस्य यत् तादात्म्यम्, तस्य तादात्म्यत्वरूपेणैवोक्तसत्तायामिव कपालेऽपि संबद्धत्वेऽप्युक्तसत्तोपहिततादात्म्यस्वरूपपरिचयार्थमुभयोपहितसत्तासंबन्ध इत्युच्यते ; उक्तसत्ताया अपि तादृशतादात्म्यरूपसंबन्धपरिचायकत्वात् । यथाश्रुतं त्वसङ्गतम् ; उक्तयुक्तेः, 'सन् घटः' इति प्रत्ययस्येव 'कपालं घटः' इति प्रत्ययस्यापि तादात्म्यत्वविशिष्टसंसर्गविषयकत्वस्य सर्वानुभाविकत्वात्, उक्तसंसर्गेणैव घटाद्युत्पत्तौ कपालादेर्लाघवेनोपादानकारणत्वादिकल्पनात्, तादात्म्योपहितसत्तात्वादिविशिष्टसंसर्गेण तदुत्पत्तौ तत्कल्पने गौरवात्, मानाभावाच्चेत्यास्तां विस्तरः । तस्मादुक्तरीत्या भेदाभेदयोरविरोधादिकमुपपादनीयम् ॥

वेदान्तदर्शने त्वेकाधिकरणकस्वाभावाभावदृष्टान्तेन मूले वक्ष्यमाणो व्यावहारिकयोः प्रपञ्च-तदभावयोरविरोध इव भेदाभेदयोरविरोधः । *अथवा* व्यवहारदशायामेवावयवावयवि-गुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्चयात् तादृशभेदः प्रातीतिकः, अभेदस्तु व्यावहारिकः, अतो भिन्नसत्ताकत्वेन तयोरविरोधः ।

[ उक्तं हि सद्रूपस्य ब्रह्मणोऽभावाप्रतियोगित्वोक्तिप्रस्तावे सिद्धान्तबिन्दौ—"द्वैतस्य सत्तादात्म्यापन्नतयैव सिद्धत्वात्" इति । 'घटः सन्' इत्यादिप्रमया सत्तादात्म्यविशिष्टतयैव द्वैतस्य प्रमितत्वादित्यर्थः । प्रमितत्वोक्त्या तादात्म्यस्य व्यावहारिकत्वं सूचितम् । एवकारेण प्रमया दृग्दृश्ययोर्व्यावहारिकभेदग्रहणं नास्तीत्यपि सूचितम् । तथाच व्यावहारिकतादात्म्यान्यथानुपपत्त्या कल्प्योऽपि भेदः प्रातीतिक एव ; कार्य-कारणभावादिज्ञानकाल एव तदन्यथानुपपत्त्या भेदप्रत्ययात् । नच—प्रातीतिकेन भेदेनोपपाद्यं कार्य-कारणभाव-तादात्म्यादिकमपि प्रातीतिकं स्यात्, बाष्पकल्पितधूमान्यथानुपपत्त्या कल्पितवह्नेः प्रातीतिकत्वदर्शना-

### विट्ठलेशीयटिप्पणी

घटाभ्यामुपहिता सत्तैव तयोस्तादात्म्यमित्युक्तिरसङ्गतैवेत्याशङ्क्य कथंचित् तां सङ्गमयति—*एवं चेत्यादिना* ॥ *वस्तुगत्येति* कपालोपहितसत्तानिष्ठत्वस्य संबन्धतावच्छेदककोट्यप्रवेशलाभाय । तदाह—*तादात्म्यत्वरूपेणेति* ॥ एवकारेणोभयोपहितसत्ताव्यवच्छेदः । *उक्तसत्तायाम्*=कपालोपहितसत्तायाम् । *उक्तसत्तोपहिततादात्म्येति* ॥ कपालोपहितसत्तानिष्ठत्वोपहिततादात्म्येत्यर्थः । *ननु* अनयोस्तया कथं तादृशतादात्म्यस्वरूपपरिचयः ? उक्तसत्तास्वरूपपरिचायकस्य तादृशतादात्म्येऽसत्त्वात्, अत आह—*उक्तसत्ताया अपीति* ॥ घटीयतादात्म्यरूपसंबन्धस्याप्याध्यासिकपदार्थभूतस्य वस्तुगत्या कपाल-घटोभयोपहितसत्तारूपाधिष्ठानचैतन्ये तादात्म्येनाध्यस्ततया कपाल-घटोभयोपहितसत्ताया घटीयतादात्म्यरूपसंबन्धेन तादृशसंबन्धस्योक्तसत्तास्वरूपपरिचायकरूपाश्रयत्वमिति भावः । एवं च तन्मतेऽपि कपाले घटीयमतिरिक्तमेव तादात्म्यमिति पर्यवसितम्, इति न तद्विरोधोऽस्माकमिति भावः । तथापि यथाश्रुतविरोधो दुर्वार एवेत्यत आह—*यथाश्रुतं त्विति* ॥ *उक्तयुक्तेः*=रूप-रसयोर्मिथस्तादात्म्यापत्तेः । *ननु* कपालाद्युपहितसत्तात्वविशिष्टसत्तासंबन्धेन घटं प्रति कपालस्य हेतुताकल्पनात् कार्यतावच्छेदकसम्बन्धविधया तादृशसत्तायाः सम्बन्धत्वसिद्धिः । नच—तादात्म्येन घटं प्रति कपालस्यैव हेतुता लाघवादुचितेति—वाच्यम् ; 'कपालं घटः' इति प्रत्ययस्य कपालोपहितसत्तात्वविशिष्टसंसर्गकत्वोपगमेन कपाले घटीयतादात्म्यस्याप्रामाणिकत्वादिति शङ्कां परिहरति—*सन् घट इतीति* । 'सन् घटः' इति प्रत्यये यथा तादात्म्यत्वविशिष्टसंसर्गकत्वं सर्वैरेवोपगम्यते, तथा तद्विशेषात् 'कपालं घटः' इत्यत्रापीति भावः । *उक्तसंसर्गेण*=तादात्म्यत्वविशिष्टसंसर्गेण । प्रकृतमनुसन्धत्ते—*तस्मादिति* ॥ स्वसिद्धान्ते भेदाभेदयोरुभयोरविरोधं प्रकारान्तरेणाप्युपपादयति—*वेदान्तदर्शने त्विति* ॥ यदि प्रपञ्च-तदभावयोर्विभिन्नसत्ताकत्वादविरोधः, तदा प्रकृतेऽपि तथैवेत्याह—*अथवेति* ॥ *विचारेण*='घटादिकम्, कपालादिभ्यो न भिद्यते, तेभ्यः पृथक्त्वेनानुपलम्भात् ; अन्वयेन कपालादिवत् ; व्यतिरेकेण घटादिवत्' इत्यनुमानेन । *प्रातीतिक इति ॥* प्रतीतिश्च 'कपालं घटः' इति सामानाधिकरण्यप्रतीतिरूपैव ; तत्र भेदभानस्योपपादितत्वात् ।

---

[ ] 'क' पुस्तकेऽधिकतया इत आरभ्य १४०-पृष्ठसमाप्तिपर्यन्तं पाठ उपलभ्यते ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

दिति—वाच्यम् ; पर्वते धूमादर्शनेऽपि धूलीपटलादिकल्पितधूमान्यथानुपपत्त्या कल्पितवह्नेर्व्यावहारिकत्व-दर्शनेन तथा नियमाभावात्, भेदोपपाद्यतादात्म्यादेः प्रातीतिकत्वे समसत्तयोस्तयोर्विरोधेन व्यावहारिक-त्वावश्यकत्वात्। यद्यपि तादात्म्यप्रत्ययमात्रे भेदसमानाधिकरणतादात्म्यत्वेन तादात्म्यस्य संसर्गतया भानात् कार्य-कारणभावादिज्ञानकाल एव भेदधीरित्ययुक्तमिव भाति ; तथापि कार्य-कारणभावाद्यज्ञानदशायां तादात्म्याप्रत्ययेनात्यन्तभेदज्ञानाद् न भेदभानम्। तदा हि 'कपालद्वयं घटः' इत्यादिप्रत्यये विषयो घटत्वादिकं न जातिः, किन्तु कपालद्वयत्वादिकमिति ज्ञायते। तथाचात्यन्ताभेदे सति संसर्गाभावादत्यन्ताभेदोऽपि न संसर्गः, किन्तु प्रकारः, घटादिपदवाच्यत्वादिकं वा घटत्वादिकम्। तथाच तादात्म्यं संसर्गः। *नच* एवं 'घटो न घटः' 'तद्घटस्तद्घटवानि'त्यादाविव 'घटो नीलः' इत्यादावपि भ्रमत्वव्यवहारः स्यादिति—वाच्यम् ; साम्याभावात्। 'घटो नीलः' इत्यादौ हि औपाधिको भेदो भाति ; घटत्वे नीलत्वस्य यो भेदः, तस्यैव घटानुयोगिकत्व-नीलप्रतियोगिकत्वाभ्यां प्रातीतिकाभ्यां ज्ञानात्। तथाच व्यावहारिकोऽपि स्वभेदस्ताभ्यां विशिष्टेन रूपेण प्रातीतिक इति विवेकाद् उक्तभेदविषयके 'घटो नीलः' इत्यादौ भ्रमत्वव्यवहारः, उक्तविवेका-भावे तूक्तभेदस्य व्यावहारिकत्वग्रहाद् नोक्तज्ञाने भ्रमत्वव्यवहारः। 'तद्घटस्तद्घटः' इत्यादौ तु भेदस्या-प्रातीतिकत्वग्रहे नोक्तविवेकापेक्षा ; औपाधिकत्वाभावात्, इति तत्र सदैव भ्रमत्वग्रहः। तथाच 'घटो नीलः' इत्यादौ भ्रमत्वव्यवहार इष्ट एव। स तु 'तद्घटस्तद्वान्' इत्यादिस्थलीयभ्रमत्वव्यवहारेण न तुल्यः। 'विशिष्टसत्ता सत्ता' इत्यादावपि विशिष्टसत्तात्वस्य यो भेदः, तस्मिन् शुद्धसत्तानुयोगिकत्वेन व्यावहारिकेण विशिष्टे विशिष्टसत्ताप्रतियोगिकत्वं प्रातीतिकं कल्पितम्। धर्म-धर्मिणोर्हि व्यावहारिकतादात्म्य-सत्त्वाद् न व्यावहारिको भेदः। विशिष्टसत्तात्वं तु न शुद्धायाः सत्ताया धर्मः, किन्तु विशिष्टायाः। अतः शुद्धायां तद्भेदो व्यावहारिक एव, घटाकाश-मठाकाशयोस्त्वौपाधिकोऽपि भेदो व्यावहारिक एव ; तयो-स्तादात्म्याभावेन व्यावहारिकयोस्तादात्म्य-भेदयोर्विरोधस्य दूषणस्याभावात्, मिलितोपाध्योर्व्यावहारिक-भेदाप्रयोजकत्वेऽपि तदन्योपाध्योस्तत्प्रयोजकत्वम्। अत एव कपालादि-तत्समवेतघटाद्योर्मिलितत्वेन तदुभय-सत्तयोर्न व्यावहारिको भेदः ; 'कपालादिसत्ता घटादिसत्ता' इत्यादिप्रत्यये तयोर्व्यावहारिकस्य तादात्म्यस्य भानात्, किन्तु तद्विशेषणतया भासमानोऽपि प्रातीतिकः। अत एव च जीवानां मिथो व्यावहारिक एव भेदः ; तत्राप्यौपाधिकत्वम् ; उपाध्योरेकप्रतियोगिकभेदस्योपाध्यान्तर-तदुपहितनिष्ठस्य स्वोपहितप्रतियोगिकतया ज्ञायमानत्वम्। नच—तादात्म्यं भेदो वा व्यावहारिक इति विनिगमकशून्यम् ; व्यवहारदशायां विचारेण भेदस्येव तादात्म्यस्यापि मिथ्यात्वनिश्चयात्, अत्यन्ताभेदे तादात्म्यस्यासम्भवादिति—वाच्यम् ; तादात्म्या-द्यन्यथाऽनुपपत्त्या भेदस्य कल्पनीयतया तादात्म्यादेरुपजीव्यत्वेन प्राबल्यस्यैव व्यावहारिकत्वे प्रयोजकत्वात्, व्यवहारकाले मिथ्यात्वनिश्चयेऽप्यधिष्ठानीभूतब्रह्मज्ञानं विना तादात्म्यादेरबाधेन ब्रह्मज्ञानात् पूर्वमबाध्यत्व-रूपस्य व्यावहारिकत्वस्यानपायात्। एवं च 'घटः सन्' इत्यादिप्रतीतेस्तादात्म्यांशे प्रमात्वेऽपि भेदांशे भ्रमत्वम्। तद्व्यवहारश्च वस्तुतो विशेषणाभिन्नतया ज्ञायमाने विशेष्ये विशेषणप्रकारकज्ञानत्वम्, विशेषणांशे प्रमात्वं तु विशेषणभेदसमानाधिकरणतादात्म्यसंसर्गकत्वघटितम्। तथाच विशेषणांशेऽप्यनयोर्भेदग्रहकाले न तादात्म्येन प्रमा, तस्या भेदविषयकत्वानियमेन भ्रमत्वानियमश्च ; ज्ञानान्तरेण भेदग्रहेऽपि तादात्म्यप्रमा-सम्भवादिति ध्येयम्। प्रातीतिकभेदप्रतियोगित्वं च न परिच्छिन्नत्वम् ; प्रातीतिकसप्रतियोगित्वस्य तथात्वापत्तेरिति भावः। (क) ] इत्यादियुक्तिरपि बोध्या।

### विट्ठलेशीयटिप्पणी

'तुल्यावी'त्यादिपदेन भेदत्व-भेदाभावत्वाभ्यामेव तयोर्विरोधः, न भेदत्व-तादात्म्यत्वाभ्यामिति युक्तेरुपसंग्रहः॥

अद्वैतसिद्धिः

भेदाभेदवादिप्रयोगे तार्किकाद्यङ्गीकृतस्य भिन्नत्वस्य सिद्धावप्युद्देश्यप्रतीत्यसिद्धेर्यथा न सिद्धसाधनम्, तथा प्रकृतेऽपि मिलितप्रतीतेरुद्देश्यत्वाद् न सिद्धसाधनम्। यथा च तत्त्वाभेदे 'घटः कुम्भ' इति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*भेदाभेदवादीति*। भाट्ट-सांख्य-पातञ्जलादिभिः तार्किकादीन् प्रति क्रियमाणे न्यायप्रयोगे। *भिन्नत्वस्य = गुण-गुण्याद्योर्भिन्नत्वस्य। *सिद्धौ = निश्चितत्वे। *उद्देश्यप्रतीतेः=उक्तप्रयोगतात्पर्यविषयीभूताया गुणादौ गुण्यादेर्भेदाभेदोभयवत्ताप्रतीतेरित्यर्थः। *प्रकृते=उक्तमिथ्यात्वसाधकन्यायप्रयोगे। *मिलितप्रतीतेः=सदसद्भेदादिरूपोभयवत्ताप्रतीतेः। तथाचोभयत्वरूपेणानुमितौ प्रत्येकरूपेण सिद्धेरप्रतिबन्धकत्वाद् नोक्तदोष इति भावः। *ननु*—दृश्यत्वस्य सदन्यसकलनिष्ठत्वेन सदन्यत्वमात्रस्य दृश्यत्वोपपादकत्वेन तदेव साध्यतामित्यत आह—*यथाचेत्यादि*॥ *अभेदे=अत्यन्ताभेदे। सामानाधिकरण्येति*॥

सिद्धिव्याख्या

'शुक्लः पटः' इति सामानाधिकरण्यवत्त्वादित्यर्थः। *सिद्धावपीति*॥ व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वेन भेदाभेदवादिना तार्किकं प्रति प्रयुक्ते 'भिन्नाभिन्नमिति' साध्ये भिन्नत्वस्य विशेषणस्य तार्किकाङ्गीकृतत्वेन सिद्धत्वेऽपि। *उद्देश्यप्रतीत्यसिद्धेरिति*॥ यथा न सिद्धसाधनमित्यर्थः। दार्ष्टान्तिकेऽप्याह—*तथेति*। *प्रकृते=सति। 'सद्विलक्षणत्वे सत्यसद्विलक्षणत्वमि'ति प्रतीतेरुद्देश्यत्वाद् न सिद्धसाधनमित्यर्थः। अन्यथा भेदाभेदवादिना तार्किकं प्रति प्रयुक्ते 'भिन्नाभिन्नमि'ति साध्ये भिन्नत्वस्य तार्किकैरङ्गीकृतत्वेन तत्रापि सिद्धसाधनप्रसक्तं स्यादिति ध्येयम्॥ *ननु*—भेदाभेदानुमानेऽप्रयोजकत्वनिरासाय भिन्नत्वविशेषणस्योद्देश्यता, तथाहि—'गुणादिकं गुण्यादिनाऽभिन्नं समानाधिकृतत्वात्' इत्येव कृतेऽभेदरूपसाध्यवत्यपि घट-कलशादावविद्यमानस्य 'समानाधिकृतत्वादि'त्यस्याभेदरूपसाध्यव्यभिचरितत्वेनाप्रयोजकता स्यादित्येतदर्थं मिलितसिद्धिरुद्देश्येत्याशङ्क्य, प्रकृते सत्त्वाभावमात्रस्य साध्यत्वे सत्त्वाभाववति तुच्छेऽविद्यमानस्य दृश्यत्वस्याप्रयोजकत्वं स्यात्, इत्यतस्तन्मा भूत्, इत्यसत्त्वाभावोऽपि निवेशनीयः, इति मिलितसिद्धिरुद्देश्येति समानमित्याह—*यथाचेति*॥

विट्ठलेशीयटिप्पणी

भेदाभेदवादिनः क इति? अत आह—*भेदेति*॥ *गुण-गुण्याद्योरिति*॥ गुणाद्यनुयोगिकगुण्यादिप्रतियोगिकस्येत्यर्थः। भूताया इत्यन्तमुद्देश्यपदार्थः। प्रतीतेर्विषयं पूरयति—*गुणादाविति*॥ *प्रयोग इति*॥ सप्तम्यर्थो मिलितप्रतीत्यन्वयि तात्पर्यविषयत्वम्। *ननु* सद्भेदत्वादिप्रत्येकरूपेणोभयवत्ताऽनुमितावपि प्रत्येकरूपेण सिद्धेः प्रतिबन्धकत्वात् सिद्धसाधनं दुर्वारमित्यत आह—*तथाचेति*॥ *सदन्यसकलनिष्ठत्वेनेति*॥ सदन्यमात्रनिष्ठत्वेनेत्यर्थः। सद्रूपशुक्लब्रह्मण्यसत्त्वेनेति यावत्। एवं च दृश्यत्वे सदन्यत्वव्याप्यतालाभात् सदन्यत्वस्य दृश्यत्वोपपादकत्वोक्तिः सङ्गच्छते; व्यापकस्य व्याप्योपपादकत्वात्। एवं च यथाश्रुते दृश्यत्वस्य सदन्यसकलान्तःपातितुच्छेऽसत्त्वेन बाधात्, तावता सदन्यत्वे दृश्यत्वव्याप्यताया लाभेऽपि व्याप्यस्य व्यापकोपपादकताया असत्त्वाद्यासङ्गतेः। यद्वा—'निष्ठत्वेने'त्यस्य सद्वृत्तित्वेन चेति शेषः। तेन सदन्यत्व-दृश्यत्वयोः समनैयत्यलाभः, तुच्छेऽपि दृश्यत्वमस्तीत्यभिमानेन चेमामवतारिकामवतार्य मूले 'सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेने'त्युक्त्या च तन्निरासः। सदन्यत्वस्य दृश्यत्वोपपादकत्वं तत्प्रयोजकत्वेन वाच्यम्, तच्च न सदन्यत्वमात्रस्य संभवति, तथा सति सदन्यस्मिन् तुच्छे दृश्यत्वापत्तेरिति तद्भावः। *मूले*—'घटः कुम्भः' इत्यत्र 'घटो घटः' इति वक्तव्ये कुम्भपदं 'सर्वं शब्दानुविद्धं भासते' इत्युपगम्य घट-कुम्भादिपर्यायपदानामपि स्वात्मकविभिन्नप्रकारकबोधजनकत्वमिति शाब्दिकमतानादरसूचनाय। 'घटो नीलः' इत्यादिप्रतीतेः कथं सामानाधिकरण्यविषयकत्वम्? अतो व्याचष्टे—*भेदसमानाधिकरणेति*॥ *उभयत्वेति*॥ सद्भेदासद्भेदोभयत्वेत्यर्थः। *ननु*—दृश्यत्वस्य सद्भेदासद्भेदोभयत्वावच्छिन्नव्याप्यत्वे सत्येव

### अद्वैतसिद्धिः

सामानाधिकरण्यप्रतीतेरदर्शनेन मिलितसिद्धिरुद्देश्या, तथा प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य तत्प्रयोजकतया मिलितसिद्धिरुद्देश्येति समानम् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भेदसमानाधिकरणभेदसंसर्गविषयकेत्यर्थः । *मिलितस्य तत्प्रयोजकतयेति* ॥ उभयत्वविशिष्टस्य दृश्यत्वोपपादकतयेत्यर्थः । यथा 'सामानाधिकरण्यप्रतीतिविशेष्यत्वं यद्युभयं विनाऽपि स्यात्, तदा घट-कुम्भयोरपि घट-पटयोरपि वा स्यादि'ति तर्केण व्याप्तिग्रहादुभयं हेतूपपादकम्, तथा 'दृश्यत्वं यद्युभयं विनाऽपि स्यात्, तदा तुच्छेऽपि ब्रह्मण्यपि वा स्यादि'ति तर्केण व्याप्तिग्रहादुभयं तथेति भावः ॥

*ननु*—उभयस्योपपादकत्वेऽपि प्रत्येकरूपेणैव साध्यताऽस्तु, 'यदि भिन्नं न स्यात्, तदा समानाधिकृतं न स्यादि'त्यादेर्दृष्टान्ते, 'यदि सत् स्यात्, तदा दृश्यं न स्यादि'त्यादेर्दार्ष्टान्तिके च प्रत्येकरूपेण व्याप्तिग्राहकस्य तर्कस्य सम्भवात् । नच—उभयत्वेन रूपेणैकस्यामनुमितौ लाघवाद् न्यायप्रयोगोऽप्युभयत्वेनैवेति—वाच्यम् ; न्यायप्रयोगोत्तरं प्रत्येकांशाप्रयोजकत्वे वादिना शङ्किते प्रत्येकांशतर्कोपन्यासक्रमेण प्रत्येकानुमित्योरुत्पादेन लाघवानवकाशादिति—चेत्, *न* ; प्रत्येकानुमित्योरुत्पादेऽपि तयोर्न्यायवाक्यतात्पर्याविषयत्वेनोभयत्वावच्छिन्नविधेयकानुमितेरेवोक्तवाक्यतात्पर्यविषयत्वरूपोद्देश्यत्वेन लाघवानपायात् । नच—'भेदाभेदवत्' 'सदसद्भिन्नमि'त्येव प्रयोगोऽस्तु, भेदाभेदोभयवत्' 'सद्भेदासद्भेदोभयवदि'ति प्रयोगे गौरवादिति—वाच्यम् ; सिद्धसाधनदोषस्योक्तत्वेनोक्तलाघवस्यासम्भवात् । अत एव 'वाङ्मनसे अनित्ये' इति समूहालम्बनानुमिति-

### विट्ठलेशीयटिप्पणी

व्यापकीभूतोभयत्वावच्छिन्नस्य दृश्यत्वोपपादकता तत्प्रयोजकतारूपा संभवति, परं तु तादृशव्याप्यत्वमेव दुर्ग्रहम्, व्यभिचारशङ्कया तुच्छेदृत्वादित्यत आह—*यथेति* ॥ *सामानाधिकरण्येति* ॥ घटप्रतियोगिकभेदसमानाधिकरणाभेदसंसर्गकेत्यर्थः । *उभयं विनापि स्यात्=घटीयभेदाभेदोभयाभाववद्वृत्ति स्यात् । *घट-कुम्भयोरपि स्यात्=कुम्भवृत्ति स्यात् । *घट-पटयोरपि स्यात्=पटवृत्ति स्यात् । कुम्भपदघटितसाध्यहेतुकस्थले घटवृत्तित्वस्याऽऽपाद्यतालाभाय घटपदम् । *वेति* ॥ एवं चापाद्यभेदेन तर्कद्वयमिति भावः । एवमग्रेऽपि । *उभयम्=सद्सद्भेदोभयम् । *तुच्छ इति* ॥ तुच्छवृत्ति स्यात्, ब्रह्मवृत्ति वा स्यादित्यर्थः । *तथा=दृश्यत्वरूपहेतूपपादकम्—*भिन्नं न स्यादिति*॥ घटादीत्यादिः । नीलादिकं पक्षो बोध्यः । 'अभिन्नं न स्यादि'त्याद्यभेदाभावापादकतर्कान्तरलाभायादिपदम् । *सत् स्यादिति* ॥ 'असत् स्यादि'त्यादेरसदापादकतर्कस्य लाभायादिपदम् । इदमुपलक्षणम्—घटादिसामानाधिकरण्यप्रतीतिविशेष्यत्वं यदि घटादिभेदं विनाऽपि स्यात्, तदा कुम्भवृत्ति स्यात् ; यदि वा तदभेदं विनाऽपि स्यात्, तदा पटवृत्ति स्यादिति तर्कौ दृष्टान्ते, दृश्यत्वं यदि सद्भेदं विनाऽपि स्यात्, तदा ब्रह्मवृत्ति स्यात्, यदि वाऽसद्भेदं विनाऽपि स्यात्, तदा तुच्छवृत्ति स्यात्, इति च तर्कौ दार्ष्टान्तिके बोध्यौ । एवं चैकेनानुमानेन भेद-सद्भेदयोः सिद्धावपरेणानुमानेनाभेदासद्भेदयोः सिद्धावर्थादेव भेदाभेदोभयस्य सद्भेदासद्भेदोभयस्य च दृष्टान्त-दार्ष्टान्तिकयोः सिद्धिः, इति व्यर्थमुभयत्वावच्छिन्नसाध्यकानुमानमिति शङ्काभिप्रायः । तत्र शङ्कते—*नचेति* ॥ *न्यायप्रयोगोत्तरमिति* ॥ उभयत्वेन न्यायप्रयोगोत्तरमपीत्यर्थः । *क्रमेणेति* ॥ एवं चानुमितिद्वयं दुर्वारमेवेति भावः । *न्यायवाक्येति* ॥ उभयत्वावच्छिन्नसाध्यकेत्यादिः । 'उत्पादेऽपी'त्यपिनोभयत्वावच्छिन्नसाध्यकन्यायप्रयोगे प्रत्येकांशाप्रयोजकत्वादिशङ्कादेरसांप्रदायिकतया प्रत्येकानुमित्योरुत्पादो नास्तीति सूचितम् । *उद्देश्यत्वेनेति* ॥ अनुद्देश्यानुमित्याऽर्थसिद्धिस्तु न वादिविजयायेति भावः । *लाघवानपायादिति* ॥ प्रत्येकरूपेण न्यायप्रयोगं विना प्रत्येकानुमित्योरुद्देश्यत्वासंभवादिति भावः । *नच भेदाभेदवदिति* ॥ तथाचात्र प्रत्येकरूपेणोभयविधेयकैकसमूहालम्बनानुमितेरुद्देश्यत्वेन सिसाधयिषितार्थविषयकत्वेन च तथैव वादिविजयसिद्धौ, उभयत्वावच्छिन्नसाध्यकन्यायप्रयोगे पदगौरवमिति भावः । एकैकसिद्धिन्यूनविषयिणी कथं समूहालम्बनानुमितिं विघटयत्विति ? अत आह—*अत एवेति*॥ इद-

न्यायामृतम्

स्त्वनेकधर्मसाधनपक्ष एव प्रत्येकप्रसिद्ध्या साध्यप्रसिद्धिरुक्ता ; अन्यथा शशादीनां प्रत्येकं प्रसिद्ध्या शशशृङ्गोल्लिखितत्वस्यापि सा स्यात् ॥

अद्वैतसिद्धिः

अत एव सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टं साध्यमित्यपि साधु । नच—मिलितस्य विशिष्टस्य वा साध्यत्वे तस्य कुत्राप्यप्रसिद्ध्याऽप्रसिद्धविशेषणत्वम्, प्रत्येकं सिद्ध्या मिलितस्य विशिष्टस्य वा साधने शश-शृङ्गयोः प्रत्येकं प्रसिद्ध्या शशीयशृङ्गसाधनमपि स्यादिति—वाच्यम् ; तथाविधप्रसिद्धेः शुक्तिरूप्य एवोक्तत्वात् ॥

तरङ्गिणी

विशेषण-विशेष्ययोः प्रसिद्ध्या तद् विशिष्टमपि सिद्धमेव ; विशिष्टस्य विशेषण-विशेष्याभ्यामनतिरेकात्, अन्यथा क्षणिकत्वापत्तेरित्यत आह—*अन्यथेति* ॥ प्रत्येकप्रसिद्ध्या यदि विशिष्टप्रसिद्धिः, तदेत्यर्थः । विशिष्टं तु त्वन्मतेऽप्यतिरिक्तमेवेति भावः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वाक्यात्ते सिद्धिसत्त्वेऽपि न जायत एवेति नव्यतार्किकाः । *अप्रसिद्धविशेषणत्वम्* = विशिष्टस्य साध्यत्वे साध्यविशेषणाप्रसिद्धिः । उभयस्य साध्यत्वे तु साध्यरूपविशेषणस्य क्वाप्यप्रमितत्वम्, अन्वयदृष्टान्ताभावेन व्याप्त्यग्रहपर्यवसितदोषः । *शशीयशृङ्गेति* ॥ *ननु*—विशिष्टस्य साधने दूषणमिदम्, मिलितस्य साधने तु दूषणं नोक्तमिति न्यूनतेति—चेत्, *न* ; शशीयशृङ्गसाधनमित्यस्यैव हि द्वावर्थौ ; शशीयत्वविशिष्टशृङ्गस्य संयोगादिसम्बन्धेन साधनमित्येकः, 'शशीयं शृङ्गं चे'ति द्वयोस्तादात्म्यसम्बन्धेन साधनमित्यन्यः । तथाच तादात्म्यसम्बन्धेन तदुभयस्य क्वाप्यज्ञातत्वेन साध्याप्रसिद्ध्योभयसाधनेऽपि दूषणमेतदेवेति भावः ।

सिद्धिव्याख्या

*अत एवेति* ॥ उक्तदूषणं निरस्तमिति भावः । *नचेति* ॥ अस्य वाच्यमित्यनेनान्वयः ।

*मिलितस्येति* ॥ अनुमितिविषयस्योभयाभावरूपस्य साध्यस्य विशिष्टस्य वा सत्यसति वैकस्मिन्नधिकरणेऽप्रसिद्ध्याऽप्रसिद्धविशेषणत्वमित्यर्थः । *ननु*—एकस्मिन्नधिकरणे प्रसिद्ध्यभावेऽपि 'पृथिवी, इतरभिन्ना, पृथिवीत्वात्' इत्यत्र त्रयोदशान्योन्याभावानामिवात्रापि सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावयोः प्रत्येकं प्रसिद्धत्वेन नाप्रसिद्धविशेषणतेत्याशङ्क्याह—*प्रत्येकं प्रसिद्ध्येति* । नच—यदि सत्त्वाभावविशेषितासत्त्वाभावरूपविशिष्टसाध्येऽप्रसिद्धविशेषणत्वम्, तदा जलादिद्वादशान्योन्याभावविशेषितसमवायान्योन्याभावरूपविशिष्टसाध्यस्याप्रसिद्धत्वेन प्रत्येकान्योन्याभावानां प्रसिद्ध्या साध्यप्रसिद्ध्युपपादनं विरुध्येतेति—वाच्यम्, नहि 'पृथिवी, इतरभिन्ने'त्यत्र जलादिद्वादशभेदविशेषितसमवायभेदरूपं विशिष्टं साध्यम्, न वा त्रयोदशान्योन्यभेदानामैकाधिकरण्यं साध्यतावच्छेदकम्, येनाप्रसिद्धविशेषणं स्यात्, किंतु स्वाधिकरणे विद्यमानानां त्रयोदशान्योन्याभावानामपेक्षाबुद्धिविषयत्व-समूहालम्बनैकज्ञानोपास्यत्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यताकानां साध्यत्वम् ; तथाच नाप्रसिद्धिरिति भावः । इदमप्रसिद्धविशेषणत्वमुद्धरति—*तथाविधेति* । शुक्तिरूप्य एवोभयाभावप्रसिद्धेरुक्तत्वादित्यर्थः । नच—सत्त्वेन प्रतीयमानत्वान-

विट्ठलेशीयटिप्पणी

तद्धर्मावच्छिन्नोद्देश्यक-शुद्धतद्धर्मावच्छिन्नविधेयक-शुद्धतत्संसर्गकानुमितिस्वरूपस्य तद्धर्मावच्छिन्नविशेष्यक-तद्धर्मावच्छिन्नप्रकारक-तत्संसर्गकसिद्धिप्रतिबध्यतावच्छेदकस्य समूहालम्बनानुमितिसाधारण्यादिति भावः । अप्रसिद्धविशेषणत्वं विशिष्टसाध्यकोभयसाध्यकस्थलद्वयसाधारणेन व्याचष्टे—*विशिष्टस्य साध्यत्व इति* ॥ *ननु* कोऽयं दोष इति ? अत आह—*अन्यथेति* ॥ 'शशीयशृङ्गसाधनमि'ति मूलं द्वेधा व्याख्यातुं शङ्कते—*नन्विति* ॥ *ननु*

अद्वैतसिद्धिः

नच—निर्धर्मकत्वाद् ब्रह्मणः सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्रातिव्याप्तिः ; सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावानधिकरणत्वात् ।

न्यायामृतकण्टकोद्धारः

*यच्च*—निर्धर्मकत्वादेवाभावरूपधर्माधिकरणत्वं नेत्युक्तम् , *तदपि न* ; निर्धर्मकत्वरूपहेत्वभावरूपधर्मानधिकरणत्वरूपसाध्यभावाभावाभ्यां व्याघातस्य मूल एवोक्तत्वेनास्य विडम्बनमात्रत्वात् । तस्मात् सदसत्त्वानधिकरणत्वरूपमिथ्यात्वपक्षे यद् दूषणमुक्तं मूले, तत् साधूक्तम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*निर्धर्मकत्वादित्यादि* ॥ सत्त्वादिधर्माणां तदुपहिते एव ब्रह्मणि सम्बन्धः, नतु शुद्धे ; धर्मधर्मिणोस्तादात्म्यस्वीकारेण तत्त्वज्ञानेन धर्माणां नाशे धर्मिणोऽपि नाशापत्तेः । अथ—धर्मिसमानसत्ताकधर्मनाशे सत्येव धर्मिणो नाशः, आरोपितस्य वास्तवधर्मत्वाभावेन तन्नाशेऽपि न धर्मिनाशः, तर्हि शुद्धसत्त्वेऽपि कैवल्ये तत्र धर्माप्रत्ययाच्छुद्धे धर्मो न स्वीक्रियते । तदुक्तमाचार्यैः—'रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते । सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नात्मनः' ॥ इति । तस्माद्यथा शुद्धस्य स्वप्रकाशत्वेन न वृत्तिज्ञानविषयत्वादिकम्, किन्तु तदुपहित एव ब्रह्मणीति वाचस्पतिसम्मतम्, तथोक्तयुक्तेः सत्त्वादिधर्मसम्बन्धस्तदुपहित एव ब्रह्मणि, इति सत्त्वादिधर्माभावघटितमिथ्यात्वलक्षणं शुद्धब्रह्मण्यतिव्याप्तमिति भावः । सद्रूपत्वेन बाध्यत्वा-

न्यायामृतसौगन्ध्यम्

किञ्च निर्धर्मकत्वाद् ब्रह्मणस्सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्रातिव्याप्तिः । सत्त्वादिधर्माणामुपहित एव ब्रह्मणि सम्बन्धः, न तु शुद्धे ; धर्म-धर्मिणोस्तादात्म्यात्, तत्त्वज्ञानेन धर्मनाशे धर्मिणोऽपि नाशः स्यात्, इति सत्त्वादिधर्मघटितलक्षणं शुद्धब्रह्मण्यतिव्याप्तमिति भावः ॥

सौगन्ध्यविमर्शः

यदि तु सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं साध्यम्, तदा तु नोक्तायाः शङ्काया अवसरलेशोऽपि । अत्र 'सद्भिन्नत्वं मिथ्यात्वमि'ति प्रपञ्चसत्त्ववादिनं प्रति साध्यम्, 'असद्भिन्नत्वं मिथ्यात्वमि'ति तदसत्त्ववादिनं प्रति साध्यम्, 'सदसद्भिन्नत्वमि'त्युभयात्मकत्ववादिनं प्रति साध्यमिति ब्रह्मानन्दसरस्वतीभिः सूचनाद् न व्याहतिरर्थान्तरं वा न्यायामृतसौगन्ध्योक्तमापतति ॥

निर्धर्मकत्वादेव सत्त्वासत्त्वयोरिव सत्त्वाभावासत्त्वाभावरूपधर्मद्वयस्याप्यभावाद् न ब्रह्मण्यतिव्याप्तिरिति सिद्धानेव विवे-

सिद्धिव्याख्या

धिकरणत्वरूपासत्त्वस्याभावे विद्यमानेऽपि बाध्यत्वरूपस्यासत्त्वस्य व्यतिरेको नास्तीति प्रागुक्तमिति—वाच्यम्, कश्चिद्व्युपाधौ सत्त्वेनाप्रतीयमानत्वरूपासत्त्वव्यतिरेकस्तत्राप्यस्तीति प्रागेवोक्तत्वादिति भावः ॥

विट्ठलेशीयटिप्पणी

निर्धर्मकत्वं कथं ब्रह्मणः ? "सत्यं ज्ञानमि"ति श्रुत्युक्तसत्त्वादिधर्माणां तत्र सत्त्वादित्यत आह—*सत्त्वादिधर्माणामिति* ॥ *तदुपहिते=सत्त्वाद्युपहिते । *अथ धर्मीत्यादि* ॥ तादात्म्येन धर्म-धर्मिभाव एवेदम् । यथा नीलत्वावच्छिन्ननाशे घटत्वावच्छिन्ननाशः । नच—घटनाशेऽपि मृदोऽनाशाद् व्यभिचार इति—वाच्यम् ; घटोपहिताया एव मृदस्तद्धर्मित्वात्, तस्याश्च तदा नाशादिति भावः । *शुद्धसत्त्वेऽपीत्यादि* ॥ कैवल्यदशायां शुद्धस्य ब्रह्मणः सत्त्वेऽपि । *तत्र=शुद्धे । धर्माप्रत्ययादित्यर्थः । *आचार्यैः=मूलकारैः श्रीमधुसूदनसरस्वतीभिः । दुःखादीति कर्तृपदम् । *सुषुप्तौ* तन्नाशे=बुद्धेर्विलये, तत्=रागादि, नास्ति । अत्र सुषुप्ताविति दृष्टान्तः, कैवल्य इति दार्ष्टान्तिकं बोध्यम् । *बुद्धेस्त्विति* ॥ बुद्ध्युपहितस्यैवेत्यर्थः । *आत्मनः=शुद्धस्यात्मनः । तदित्यनुषज्यते । *ननु* इदमनाकरम्, अत आह—*तस्माद्यथेति । *उक्तयुक्तेः=तत्र धर्माप्रत्ययात् । *तदुपहित एवेति* ॥ एतावतैव "सत्यं ज्ञानमि"त्यादिश्रुत्युपपत्तिरिति भावः । *ननु* सद्रूपमपि शुद्धं ब्रह्म सत्त्वादिधर्मशून्यमेव, इति कथं तत्र नातिव्याप्तिरिति ? अतो व्याचष्टे—*बाध्यत्वाभावत्वेनेति* ॥ इदमेव सत्त्वम्, नतु कश्चिद् भावरूपो धर्म इति भावः । *ननु* तदपि कथं

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भाववत्त्वेन । तथाच भावरूपधर्मानाश्रयत्वेऽपि ब्रह्मणो बाध्यत्वादिशून्यत्वरूपाभावरूपधर्माश्रयत्वाद् नातिव्याप्तिः । नच—उक्ताभावस्य ब्रह्मरूपाधिकरणस्वरूपत्वेन तदभावो ब्रह्मण्यस्त्येवेति—वाच्यम् ; उक्ताभावत्वविशिष्टरूपेण ब्रह्मणि तादात्म्यस्येव भेदस्यापि सत्त्वेन तत्रोक्ताभाववैशिष्ट्यस्यैव सम्भवेन तदभावासम्भवात् । तादात्म्यमेव अभावस्याधिकरणवैशिष्ट्यं भट्टादिमते स्वीक्रियते । उक्तं हि न्यायकुसुमाञ्जलौ—'तादात्म्यमेव परस्य मतेऽभावाधिकरणयोः सम्बन्धः' इति । परस्य=भट्टस्येति तत्र वर्धमानटीका । नच—एवमभावाधिकरणयोराधाराधेयभावानुपपत्तिरिति—वाच्यम् ; संयोगस्येव तादात्म्यस्यापि कस्यचिदाधारतानियामकत्वस्वीकारात्, 'घटाभावे घटो नास्ती'त्यादौ सर्वैरपि तथा वाच्यत्वात् । अत एव 'घटे रूपमि'त्यादौ

सिद्धिव्याख्या

*केचित्तु*—सत्त्वासत्त्वे, समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वात् ; रूप-रसवदित्यनुमानेन सामान्यतस्तत्प्रसिद्धेर्नाप्रसिद्धविशेषणत्वम्, नच—तत्र परस्परविरहानात्मकत्वरूपाविरुद्धत्वमुपाधिरिति—वाच्यम् ; पक्षे साधनव्यापकत्वात् । नच—पक्षत्वाभिमतसत्त्वासत्त्वयोः प्रामाणिकत्वाप्रामाणिकत्वादिरूपत्व एतदनुमानसाध्यभूतसमानाधिकरणात्यन्ताभावप्रतियोगित्वशरीरप्रविष्टाधिकरणशब्दार्थस्याप्येतदनुमानप्रमाणविषयतया प्रामाणिकत्वावश्यंभावेन बाधः स्यात्, नहीदमनुमानमप्रमाणम्, तथा सति साध्यप्रसिद्ध्यर्थमस्यानुमानस्य परं प्रत्यनुपन्यासप्रसङ्गादिति—वाच्यम् ; पक्षत्वाभिमतसत्त्वासत्त्वयोस्त्रिकालाबाध्यत्वस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वादिरूपत्वेनाबाधात् । नचैवमेव—ज्ञेयत्व-पदप्रतिपाद्यत्वे, समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वादिति साधनसौलभ्येन सदसद्विलक्षणस्येव ज्ञेयपदार्थविलक्षणस्यापि सिद्धिप्रसङ्ग इति—वाच्यम् ; अप्रयोजकत्वात्, प्रमाणविरुद्धत्वाच्च,

विट्ठलेशीयटिप्पणी

निर्धर्मकमिति ? अत आह—*तथाचेति* ॥ *आश्रयत्वात्=तदुपगमात् । तादृशसत्त्वाभावस्य तत्राभावादिति शेषः । *नातिव्याप्तिरिति* ॥ तादृशसत्त्वाभावघटितत्वाद् मिथ्यात्वलक्षणस्येति भावः । *अधिकरणस्वरूपत्वेनेति* ॥ तथात्वाभेद आधाराधेयभावविरहाद् उक्ताभावरूपप्रतियोग्यधिकरणतारूपविरोधिनो ब्रह्मण्यसत्त्वात् तदभावसत्त्वे न बाधकमिति भावः । *विशिष्टरूपेणेति* ॥ तादृशविशिष्टमेव तादृशाभावे तादात्म्येन वर्तमानं रूपमिति स्वेषां परिभाषा, अन्येषां तु तादृशविशिष्टत्वमेव रूपमित्युक्तं न विस्मर्तव्यम् । *तादात्म्यस्येवेति* ॥ अन्यथा 'ब्रह्माबाध्यमि'ति प्रत्ययस्य "सत्यं ज्ञानमि"ति श्रुतेश्चानुपपत्तेरिति भावः । *भेदस्यापीति* ॥ अन्यथा विशिष्टबुद्धौ भेदभानस्य व्यवस्थापितत्वयोक्तानुपपत्तितादवस्थ्यादिति भावः । *उक्ताभाववैशिष्ट्यस्येति* ॥ बाध्यत्वाभावत्वरूपप्रतियोगितावच्छेदकविशिष्टनिरूपिताधिकरणताया इत्यर्थः । एवं चोक्ताभावरूपकेवलप्रतियोग्यधिकरणताया ब्रह्मण्यसत्त्वेऽपि न क्षतिः । प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यधिकरणताया एवाभावविरोधित्वादिति भावः । *ननु* उक्ताभावत्वस्य विशिष्टस्य ब्रह्मणि कथं तादात्म्यसम्बन्धः ? स्वरूपस्यैवाभावसम्बन्धतायाः सर्वैरुपगमादित्यत आह—*तादात्म्यमेवेति* ॥ भट्टमतत्वेऽनाश्वासं निराकरोति—*उक्तं हीति* ॥ अत्र परो भट्ट एव कुतः ? तत्राह—*वर्धमानटीकेति* ॥ एवम्=तादात्म्यस्याभावसम्बन्धत्वे । *अनुपपत्तिरिति* ॥ तत्सामान्यस्य वृत्त्यनियामकत्वादिति भावः । *संयोगस्येवेति* ॥ यथा संयोगसामान्यं न वृत्तिनियामकम् ; अङ्गुलीद्वयादिसंयोगस्यातथात्वात्, नापि वृत्त्यनियामकम् ; घट-भूतलसंयोगादेरतथात्वात्, तथा तादात्म्यसामान्यं न वृत्तिनियामकम्, न वा तदनियामकम् ; घटे घटतादात्म्ये रूपादितादात्म्ये च क्रमेण व्यभिचारादिति भावः । *सर्वैरपीति* ॥ तत्र तादात्म्यातिरिक्तस्वरूपसम्बन्धस्य दुर्वचत्वादिति भावः । अत्र विशिष्टधीनिर्वाहकभेदस्तु स्वरूपसम्बन्धवादिभिरपि कथंचिद् वाच्य एव । स च पूर्वमेवोक्त इति ध्येयम् । *तथा=तादात्म्यस्याधारतानियामकत्वस्य । *ननु* तादात्म्यं विशेष्य-विशेषणादेरतिरिक्तम्, स्वरूपसम्बन्धस्तु कालविशेषावच्छिन्नं विशेष्यमेवेति लाघवम्, अत आह—*अत एवेति* ॥ तादात्म्यस्याधारतानियामकत्वादेवेत्यर्थः ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रूपत्वादिरूपेण तादात्म्येनैवाधारता, सम्बन्धान्तरास्वीकारात्, एतदभिप्रायेणैव द्वितीयमिथ्यात्वप्रस्तावान्त आचार्यैर्वक्ष्यते—'ब्रह्मणो भावरूपधर्मानाश्रयत्वेऽप्यभावरूपधर्माश्रयत्वेन सत्यत्वादिधर्मवत्त्वमिति—इति ध्येयम्। नच—मिथ्यात्वमेव बाध्यत्वम्, तथाचात्माश्रय इति—वाच्यम्; ज्ञाननिवर्त्यत्वरूपबाध्यत्वस्य प्रकृते निविष्टत्वेन सदसद्विलक्षणत्वरूपबाध्यत्वस्याभावानिवेशात्। *ननु*—ज्ञानानिवर्त्यत्वरूपसत्त्वाभावस्य निवेशेऽसत्त्वाभावस्य वैयर्थ्यम्, असत्त्वाभावस्यैव विशेष्यतया लक्षणे निवेशेन धूमप्रागभाववद्-

### सिद्धिव्याख्या

न्यायमते बाधाच्च। *अत एव*—आत्मत्वानात्मत्वे, समानाधिकरणात्यन्ताभावप्रतियोगिनी, धर्मत्वादिति साधनसौलभ्येन, आत्मत्वमात्मान्यनिष्ठात्यन्ताभावप्रतियोगि, धर्मत्वादिति, अनात्मत्वम्, अनात्मान्यनिष्ठात्यन्ताभावप्रतियोगि, धर्मत्वादिति साधनसौलभ्येन च सदसद्विलक्षणवदात्मानात्मविलक्षणस्यापि सिद्धिप्रसङ्ग इति—*निरस्तम्*; अप्रयोजकत्वात्, प्रमाणविरोधाच्च। नच—इदमुभयत्र तुल्यमिति—वाच्यम्; अस्मदनुमाने प्रमाणविरोधाभावात्, अप्रयोजकत्वाभावाच्च। *अत एव*—सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात्, रूपवदित्यनुमानेन सामान्यतस्तत्प्रसिद्धेर्नाप्रसिद्धविशेषणत्वमित्यपि—*साधु*; साध्यतावच्छेदकप्रकारेण साध्यप्रसिद्धेरनुमानाङ्गत्वेऽप्युक्तानुमानप्रवृत्त्यनन्तरं सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभाववत् किञ्चित् सिद्धमिति मानसज्ञानसम्भवेन तथा तत्प्रसिद्ध्युपपत्तेः। *यद्वा*—सत्त्व एव तत्प्रसिद्धिः; आत्माश्रयदोषेण स्वस्मिन् स्वस्याभावात्, असत्त्वस्याभावाच्च। *अथवा*—निर्धर्मकब्रह्मण्येव तत्प्रसिद्धिः। नचैवं तद्वदेव सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तरम्; सधर्मकत्वेन पक्षविशेषणात्। एवञ्च सधर्मके प्रपञ्चे सत्त्वात्यन्ताभावविशिष्टासत्त्वात्यन्ताभावः सिद्ध्यन् पक्षधर्मताबलाद् मिथ्यात्वमादायैव पर्यवस्यति, नतु सद्रूपत्वमादाय; ब्रह्मवत् सद्रूपत्वे सधर्मकत्वव्याघातात्। न हि ब्रह्मण इव प्रपञ्चस्य सदेव रूपम्; सङ्ख्या-परिमाणादिरूपान्तराङ्गीकारादिति॥

*यत्तु*—सत्यशब्देन प्रामाणिकत्वविवक्षायां सत्त्वे ब्रह्मणि च तस्य परेणाप्यङ्गीकृततया साध्याप्रसिद्धिरिति, *तन्न*; ब्रह्मणो वस्तुतो निर्धर्मकत्वात् साध्यप्रसिद्धेस्तत्राविकलत्वात्। नच--तथा सति ब्रह्मणो नृशृङ्गादिवद् वस्तुतोऽ-

### विट्ठलेशीयटिप्पणी

उक्ताभिप्रायं मूलसंमत्या द्रढयति—*एतदभिप्रायेणेति*॥ मिथ्यात्वघटकस्य बाध्यत्वाभावरूपत्वमुक्तम्, तत्र शङ्कते—*नचेति*॥ *प्रकृते=प्रकृतमिथ्यात्वशरीरे; सत्त्वप्रतियोगिविधयेति शेषः। *वैयर्थ्यमिति*॥ ज्ञानानिवर्त्यत्वरूपसत्त्वस्य तुच्छसाधारणतया तदभावेनैव तुच्छव्यावृत्तिरिति भावः। *ननु*—सदसद्विलक्षणत्वरूपबाध्यत्वाभावरूपसत्त्वस्यापि तुच्छसाधारणतया तदभावरूपस्य सत्त्वाभावस्यापि तुच्छव्यावृत्ततया तन्निवेशेऽप्यसत्त्वाभाववैयर्थ्यम्, इति ज्ञानानिवर्त्यत्वरूपसत्त्वाभावनिवेश इत्यस्यासङ्गतिः। नच—असद्विलक्षणत्वमपहाय सद्विलक्षणत्वरूपबाध्यत्वाभावरूपसत्त्वस्याभावो निवेश्यते। तस्य च तुच्छसाधारणतयाऽसत्त्वाभावनिवेशसार्थक्यमिति—वाच्यम्; तथा सति सदसद्विलक्षणत्वरूपमिथ्यात्वशरीरे तादृशमिथ्यात्वरूपबाध्यत्वाप्रवेशेनात्माश्रयोक्तेरसङ्गतिप्रसङ्गात्, सद्विलक्षणत्वरूपबाध्यत्वाभावाभावस्य सद्विलक्षणत्वरूपतया तदितरांशवैयर्थ्यस्य तावतापि दुर्वारत्वाच्चेति—चेत्, *न*; सदसद्विलक्षणत्वरूपप्रकृतमिथ्यात्वे सद्विलक्षणत्वरूपबाध्यत्वस्य प्रतियोगिविधया सत्त्वघटकतया निवेशे तद्घटकसत्त्वस्यापि सद्विलक्षणत्वरूपबाध्यत्वाभावरूपस्यैव निवेश्यतया सद्विलक्षणत्वे सद्विलक्षणत्वप्रवेशप्रयुक्तात्माश्रयसत्त्वेनात्माश्रयोक्तिसङ्गतेः, अभावाभावस्यातिरिक्तत्वमते धर्मिभेदेन सद्विलक्षणत्वेतरांशसार्थक्यसम्भवाच्च। इत्थं च सद्विलक्षणत्वमात्ररूपबाध्यत्वाभावरूपसत्त्वाभावस्य तुच्छसाधारणतयाऽसत्त्वाभावसार्थक्याद् 'ज्ञानानिवर्त्यत्वरूपसत्त्वाभावनिवेशे' इत्यस्य सङ्गतिरित्यवधेयम्। *ननु* सामानाधिकरण्यसम्बन्धेन ज्ञानानिवर्त्यत्वरूपसत्त्वाभावविशिष्टासत्त्वाभाव एव मिथ्यात्वम्। तत्र च विशेषणांशस्य मिथ्यात्वरूपत्वसम्भवेऽपि न विशेष्यस्यासत्त्वाभावस्य वैयर्थ्यम्; धर्मिभेदात्, धूमप्रागभावघटकधूमस्य हेतुतासम्भवेऽपि प्रागभाववत्, इत्यत आह—*असत्त्वाभावस्यैवेति*।

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वैयर्थ्येऽपि सत्त्वाभावविशिष्टत्वरूपेणैव लक्षणत्वमुचितम्, नतु सत्त्वाभावविशिष्टासत्त्वाभावत्वेन, अभावद्वयत्वेन

## सिद्धिव्याख्या

सत्त्वापात इति—वाच्यम् ; तथात्वे जगदान्ध्यापत्तेः, 'किञ्चिद्वस्तु स्वत एव विलक्षणमि'ति न्यायेन सदसद्रूपत्वोपपत्तेः। नच—ब्रह्मणः सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावस्वीकारे निर्धर्मकत्वव्याघातः, तस्याभावस्वरूपत्वेऽपि धर्मवत्त्वाक्षतेरिति—वाच्यम् ; निर्धर्मकत्वेनैवाभावरूपधर्मस्याप्यनधिकरणत्वात्। नच—तर्हि सत्त्वानधिकरणत्वापत्तिरिति—वाच्यम् ; इष्टापत्तेः, कल्पितसत्त्वस्याङ्गीकारात्। नच—ब्रह्मणि प्रसिद्धमुक्तसाध्यं ब्रह्मातिरिक्तं पारमार्थिकञ्चेत्, अद्वैतश्रुतिविरोधः, अपसिद्धान्तश्च ; अपारमार्थिकञ्चेत्, न जगत्सत्यत्वहानिः, नहि वह्नावौष्ण्याभाव आरोपितः स्वाभाविकौष्ण्यविरोधी, तदुचितार्थक्रियाविरोधादिति—वाच्यम् ; सत्त्वाभावविशिष्टासत्त्वाभावस्य साध्यत्वेनाभिमतस्य ब्रह्मस्वरूपत्वाङ्गीकारेणाद्वैतश्रुतिविरोधाभावात्। नच—ब्रह्मण उक्तविशिष्टाभावस्वरूपत्वे सविशेषत्वापत्तिरिति—शङ्क्यम् ; स्वरूपत्वोक्त्यैव तन्निषेधात्। नच—सत्त्ववद् ब्रह्मणोऽप्यभावरूपत्वेन भावरूपत्वाभावप्रसङ्ग इति—वाच्यम् ; घटस्य स्वात्यन्ताभावाभावरूपत्वेऽपि भावत्ववद् ब्रह्मणोऽपि सत्त्वात्यन्ताभावरूपत्वेऽपि भावत्वाविरोधात्। नचैवम्—घटात्यन्ताभावस्येव सत्त्वस्यापि ब्रह्मात्यन्ताभावत्वापत्त्या भावत्वानुपपत्तिरिति—वाच्यम् ; परस्परविरहैकस्वभावस्य घटात्यन्ताभावस्य तथात्वेऽप्यनेवंविधस्य सत्त्वस्य भावत्वोपपत्तेः। नच—उभयोरपि भावरूपत्वे ब्रह्मणः सत्त्वात्यन्ताभाववत्त्वं पारिभाषिकमेव स्यादिति—वाच्यम् ; इष्टापत्तेः, सत्त्वात्यन्ताभावस्वरूपत्वेन वस्तुतस्तद्वत्त्वाभावात्॥

*यत्तु*—सधर्मकत्वेन पक्षविशेषणेऽपि ब्रह्मवत् सद्रूपत्वमादायार्थान्तरावारणमिति, *तन्न* ; सद्रूपत्वेन सधर्मकत्वव्याहतेः। नच—सद्रूपत्वेऽपि ब्रह्मण इव प्रपञ्चस्य कल्पितधर्ममादाय सधर्मकत्वाविरोध इति—वाच्यम् ; ब्रह्मणि धर्माभावस्य श्रुत्यादिप्रमितत्वेन वस्तुतो निर्धर्मकतया तत्र धर्माणां कल्पितत्वसम्भवेऽपि प्रपञ्चे तस्याप्रमितत्वेन तत्र कल्पितधर्मैः सधर्मकत्वाविरोधस्य वक्तुमशक्यत्वात्। *अत एव*—कल्पितसंख्या-परिमाणादिरूपान्तरसत्त्वेऽपि प्रपञ्चस्य ब्रह्मण इव सदेव वा स्वमेव वा रूपं यस्येत्यर्थाश्रयणेनाविरोध इत्यपि—*निरस्तम्* ; उक्तरीत्या प्रपञ्चस्य कल्पितधर्माश्रयणायोगात्॥

*एतेन*—ब्रह्मणः सदेव रूपमिति कोऽर्थः ? किं प्रामाणिकमेव रूपं धर्म इति ? किं वा सत्ताजातिमानेव धर्म इति ? यद्वाऽबाध्यमेव स्वरूपमिति ? *नाद्यः* ; ब्रह्मणो वस्तुतः सविशेषत्वापत्तेः, कल्पितधर्मस्य परेणापि प्रामाणिकत्वास्वीकारात, *न द्वितीयः* ; घटादाविव ब्रह्मण्यपि सत्ताजातिमत्संख्या-परिमाणादिरूपान्तरावारणात्, *न तृतीयः* ; सति ब्रह्मण्यबाध्यत्वरूपधर्मस्य भङ्ग्यन्तरेणाङ्गीकारापत्त्या तस्य निर्धर्मकत्वाभावापत्तेः, ब्रह्माबाधितत्वरूपधर्मं विना ब्रह्मस्वरूपमबाधितमिति स्वीकारो युज्येतेति—*निरस्तम्* ; प्रथम-तृतीयपक्षयोर्दोषाभावात्। *यदुक्तम्*—ब्रह्मणो वस्तुतः सविशेषत्वापत्तिः, कल्पितधर्मस्य परेणापि प्रामाणिकत्वास्वीकारादिति, *तदयुक्तम्* ; 'इदं रजतमि'त्यादिप्रमाण(१)गम्यत्वलक्षणप्रामाणिकत्वस्य शुक्तिरजतेऽप्यस्माभिरप्यङ्गीकारात्। *यदपि*—तृतीयपक्षे 'सति ब्रह्मणी'त्यादि 'निरस्तमि'त्यन्तम्, *तन्न* ; अबाधितत्वरूपधर्मस्याप्यबाधितत्वधर्मान्तरस्वीकारेऽनवस्थाभात तादृशधर्मान्तररहितस्याबाधितत्वस्याङ्गीकारे प्रथममेवाबाधितत्वरूपधर्मरहितमबाधितं ब्रह्मस्वरूपमङ्गीक्रियताम्, किं

## विट्ठलेशीयटिप्पणी

सदसत्त्वानधिकरणत्वमनिर्वाच्यत्वमित्युक्तेरिति भावः। *ननु* उक्तविशिष्टत्वरूपेणासत्त्वाभावनिवेशमात्रेणैवासत्त्वाभावनिवेशोक्तिसङ्गतिः ; असत्त्वाभावत्वेन निवेशे तात्पर्याभावादित्याशङ्क्य, अभावद्वयत्वेन निवेशपक्षे वैयर्थ्यं दुष्परिहरमेवेत्याह—*अभावद्वयत्वेनेति* ॥ निरुक्ताभावद्वयत्वरूपलक्षणतावच्छेदकस्य सत्त्वाभावत्वरूपलक्षणतावच्छेद-

---

(१) स्वतोग्राह्यं तद्वति तत्प्रकारकत्वरूपम्, बाध्यत्वेनानिश्चीयमानार्थविषयकत्वरूपं वा प्रामाण्यं भ्रमेऽप्यनिर्वचनीयरजतभानपक्षे स्वीक्रियते। अधिकं बिन्दुटीकायां व्यक्तम्॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

लक्षणत्वपक्षे सत्त्वाभावेतरांशवैयर्थ्यमिति—चेत्, *न* ; ज्ञानानिवर्त्यत्वरूपसत्त्वाभावत्वेन निवेशे हि तदितरांशस्य ज्ञाननिवर्त्यत्वेतरांशस्यैव वा वैयर्थ्यं भवत्येव, परन्तु तथा न निवेशः ; दूषणान्तरसत्त्वात्,

सिद्धिव्याख्या

तावद्दूरगमनेनेति ? नच—ब्रह्मस्वरूपगताबाध्यत्वरूपधर्मेऽबाध्यत्वरूपधर्मान्तरविरहेऽपि प्रमेयत्वे प्रमेयत्ववत् स्वरूप-भूताबाध्यत्वसत्त्वेन नानवस्थेति—वाच्यम् ; तत्रात्माश्रयदोषापत्तेः। नच—तस्य सिद्धविषयत्वेन न दोष इति—वाच्यम्, विवादास्पदत्वेन सिद्धविषयत्वाभावात्। नचैवम्—प्रमेयत्वादावपि प्रमेयत्वाद्यभावप्रसङ्ग इति—वाच्यम् ; इष्टापत्तेः, अन्यथा तत्राप्युक्तदोषतादवस्थ्यापातात्। नापि दृष्टान्ते साध्यवैकल्यम् ; शुक्तिरूप्यादेः सत्त्वाभाववत्त्वे सत्यसत्त्वाभाववत्त्वस्यावश्यमङ्गीकर्तव्यत्वात्, अन्यथा सत्त्वे बाधो न स्याद् ब्रह्मवत् ; असत्त्वेऽपरोक्षत्वं न स्यात् शशविषाणवत्। तस्मात् ख्याति-बाधान्यथानुपपत्त्या दृष्टान्तस्य शुक्तिरूप्यादेः सत्त्वाभाववत्त्वे सत्यसत्त्वाभाववत्त्वं दुर्वारम्, इति न साध्यवैकल्यम्। नच—तथापि सदसदात्मकत्वमादायार्थान्तरमिति—वाच्यम् ; सदसदात्मकस्य घटादेः सत्त्वासत्त्वाधिकरणत्वेनैव दृष्टतया तदभाववत्त्वाधिकरणत्वादर्शनात्। नहि नील-पीतात्मकचित्रकम्बलादेर्नीलत्व-पीतत्वाधिकरणत्वव्यतिरेकेण नीलाभाववत्त्वे सति पीताभाववत्त्वं दृष्टम्, न वा नित्य-काम्याग्निहोत्रादेर्नित्यत्व-काम्यत्वव्यतिरेकेण नित्यत्वाभाववत्त्वे सति काम्यत्वाभाववत्त्वम्। नचैवं सति—सत्त्वात्यन्ताभाववतोऽसत्त्व-नियमेन, असत्त्वात्यन्ताभाववतः सत्त्वनियमेनोक्तसाध्यद्वयं सदसद्विलक्षणवत्त्वादाय न पर्यवस्यतीति दुर्वचमिति—वाच्यम् ; अत्रोभयसंमतदृष्टान्तासंगत्या वैषम्यात् ॥

*अत एव*—सत्त्वासत्त्वरूपधर्मरहितस्यापि ब्रह्मणः सद्रूपत्ववत् तद्रहितस्यापि प्रपञ्चस्य सद्रूपत्वस्य सदसद्रूप-त्वस्य चोपपत्तिरिति—*निरस्तम्* ; प्रपञ्चस्य ब्रह्मवत् सद्रूपत्वे मानाभावात्, सत्त्वासत्त्वरूपधर्मरहितस्यापि तस्य सद्रूपत्वमादायार्थान्तरत्वशङ्कानवकाशात्। नच—ब्रह्मणोऽपि सद्रूपत्वे मानाभाव इति दुर्वचमिति—वाच्यम् ; सत्य-ज्ञानादिवाक्यस्यैव तत्र मानत्वात्। नच—तस्य सत्त्वविशिष्टब्रह्मण्येव मानत्वेन तत्स्वरूपपरत्वेऽमानतेति—वाच्यम् ; अस्मन्मते सत्त्वादेः कल्पितत्वेन तदुल्लङ्घ्य स्वरूपपरत्व एव मानत्वात्, भवन्मतेऽपि धर्म-धर्मिणोर-भेदेन विशिष्टपरत्वे स्वरूपपरत्वस्याप्यावश्यकत्वात्। नच—"सदेव सोम्येदमग्र आसीत्" इत्यादिनेदंशब्द-परामृष्टस्य व्याकृतनाम-रूपात्मकप्रपञ्चस्य तदत्यन्ताभेदावेदनेन तस्य सद्रूपत्वे मानाभावासिद्धिरिति—वाच्यम् ; तदत्यन्ताभेदे प्रपञ्चस्य सत्कार्यत्वानुपपत्त्या तत्र श्रुतेस्तात्पर्याभावेनामानत्वात्, सामानाधिकरण्यस्य च शुक्ति-कायामि'दं रजतमि'त्यादिवद् बाधायामप्युपपत्तेः ॥

*यत्तु*—"मृत्तिकेत्येव सत्यम्" इत्यवधारणेन मृत्तिकाशब्दितप्रकृतेः सद्रूपत्वावेदनेन तदुपादानकप्रपञ्चस्य सद्रूपप्रकृत्यतिरिक्तरूपान्तरासंभवेन तद्रूपकत्वेन सद्रूपताया दुर्निवारत्वम्, "तम आसीत्" इति श्रुत्यन्तराच्च प्रकृतेः सद्रूपत्वं दुर्वारमिति, *तन्न* ; "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति पूर्ववाक्येन विकारशब्दि-तस्य कार्यजातस्य वागालम्बनमात्रत्वावेदनाद् "मृत्तिकेत्येव सत्यम्" इत्यवधारणेन कार्यसत्त्वव्यवच्छेदाच्च "मृत्ति-केत्येव सत्यम्" इति वाक्यस्य प्रपञ्चसत्यत्वेऽमानत्वात्, प्रत्युत तन्मिथ्यात्व एव मानत्वाच्च, मृत्तिकाशब्दस्य प्रकृतिपरत्वे मानाभावाच्च ॥

*यदपि*—"स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद् दशाङ्गुलम्" इत्यादौ भूमिशब्दस्य "आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाये"त्युपसंहारे तमःशब्दितप्रकृतिरूपत्वप्रतिपाद-

विट्ठलेशीयटिप्पणी

काम्यत्वसमानाधिकरणत्वात् तद्घटितत्वाच्चेति भावः। *तदितरांशस्य=असत्त्वाभावस्य* ॥ *ज्ञाननिवर्त्यत्वेतरांश-स्यैवेति* ॥ ज्ञानानिवर्त्यत्वरूपसत्त्वाभावस्य ज्ञाननिवर्त्यत्वरूपत्वेन धर्मभेदादिति भावः। तादृशाभावस्यापि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानोच्छेद्यत्वरूपज्ञाननिवर्त्यत्वस्य वक्ष्यमाणस्य वादि-प्रतिवाद्याद्यविसंमतस्यैकस्याभावेन तदभावस्यैकरूपत्वा-

सिद्धिव्याख्या

नानुसारेण प्रकृतिपरत्वावसायाद् मृत्तिकाशब्दस्य परेणाप्युपादानपरताया अवश्याश्रयणीयत्वेन लक्षणावश्यकत्वाद् जगदुपादानभूतमायापरनामकत्रिगुणात्मकप्रकृतिपरताया एव न्याय्यत्वाच्च मृत्तिकाशब्दः प्रकारवाची ; तथाच मृत्तिका-प्रकार एव सत्यः, न तु तत्प्रकाररहित आरोपितः, इत्यवधारणेनारोपितसत्यत्वव्यवच्छेदाद् न तेन प्रपञ्चसत्यत्वव्यवच्छेदः क्रियते, प्रत्युत तद् विधीयत इति पर्यवस्यति। मृत्तिकाविकार एव कः ? इत्यपेक्षायाम्—"वाचारम्भणं विकारः" इति वाक्यं प्रवृत्तम्। *तस्यायमर्थः*—वाचाया आरम्भणम् आलम्बनं प्रवृत्तिनिमित्तं यस्मिन्निति तत्, तथोक्तमिति विकार-विशेषणम्। लिङ्गव्यत्ययश्छान्दसः। स विकारो नाप्रसिद्ध इत्याह—*नामेति*॥ पुनः कथंभूत इति ? अत आह—*धेयमिति*॥ यत्नतो धारणयोग्य इत्यर्थः। 'इत्येवे'ति शब्दो हेतौ। वाचारम्भणं विकारो नाम धेयम्=मृत्तिकाहेतोः, तज्जन्यत्वादेव सत्यमबाध्यमित्यर्थः ; कार्यस्य कारणानुरूपत्वनियमात्। परेणाप्युपादानसत्यत्व एव श्रुतिः प्रमाणीक्रियत इत्यविवादम्। उपादानं च न ब्रह्म भवितुमर्हति ; जगतो जडत्वेन ब्रह्मणस्तदनुरूपत्वाभावात्, प्रकृतिस्तूपादानं भवितुमर्हति ; उपादानत्वेनोभयवादिनां प्रतिपन्नत्वात्, "मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्" "अजामेकां लोहित-शुक्ल-कृष्णाम्" इत्यादिश्रुतिसिद्धत्वात्, कार्यानुरूपत्वाच्च, 'मृत्तिके'ति स्त्रीलिङ्गेन निर्देशाच्च, मूलकारणत्वाच्च, ब्रह्मणोऽकर्तृत्वेनाहष्टस्योपादानत्वस्य कल्प्यत्वाच्च, "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रस्येश्वरातिरिक्तस्वतन्त्र-कारणत्वनिराकरणपरत्वेन तदविरोधोपपत्तेश्च—इति, *तदपि न* ; वाचारम्भणश्रुतेर्जगन्मिथ्यात्वार्थकत्वात्। तथाहि—विकारः=घट-शरावादिरूपः, *वाचाऽऽरम्भणम्=आरभ्यत इत्यारम्भणम्, *वाचा*=व्यवहारमात्रम्, *नामधेयम्=नाममात्रम् ; शब्दव्यतिरेकेण वस्तुतो विकारः कोऽपि नास्ति, मिथ्येति यावत्। किं तर्हि सत्यम् ? *मृत्तिकैव=उपादानभूतं ब्रह्मैवेति तदर्थप्रतीतेः॥

*ननु*—वाचारम्भणमित्येकं पदम् ? अनेकं वा ? नाद्यः ; वाचारम्भणशब्दस्य मिथ्यात्वे रूढेरभावात्, द्वितीयेऽप्यारम्भणपदं रूढम् ? यौगिकं वा ? नाद्यः ; तत्र प्रमाणाभावात्, न द्वितीयः ; 'आरभ्यते' इत्यारम्भणमिति योगेऽपि कृद्योगे "कर्तृ-कर्मणोः कृति" इति षष्ठ्या एवानुशासनेन तृतीयानुपपत्तिप्रसङ्गात्, ल्युडन्तस्यारम्भणशब्दस्य ल्युटः कर्मण्यननुशासनेन कर्मार्थत्वासंभवाच्च, वाचारब्धकाव्यवाक्यादेरिव मिथ्यात्वा-भावाच्च, घट-शरावादिरूपमृत्तिकाविकारस्य वागिन्द्रियानारब्धत्वाच्चेति—चेत्, *न* ; 'वाचारम्भणमि'त्येकं पदम्। तत्र वाचापदं शब्दपरम्। तथाच वाचाया आरम्भणम्=आलम्बनमात्रमिति मिथ्यात्वसिद्धेरविकलत्वात्। न च—'वागालम्बनमि'ति व्याख्यानेऽश्रुतकल्पना, अक्षरसाम्येन निर्वचनेऽपि मात्रशब्दाश्रवणादिति—वाच्यम् ; गत्यन्तरा-भावेऽश्रुतकल्पनाया अपीष्यमाणत्वात्, मात्रपदस्थाने वाक्यशेषे श्रूयमाणैवकारस्यानुषङ्गेण वागालम्बनमेवेत्यर्थकल्पनयाऽ-

विट्ठलेशीयटिप्पणी

रिक्ततामते धर्मिभेदाद् न वैयर्थ्यम्, अत उक्तम्—*चेति*॥ किं तद् दूषणान्तरं वक्तव्यम् ? अत आह—*ज्ञानो-च्छेद्यत्वरूपेति*॥ *वक्ष्यमाणस्येति*॥ "ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम्। अव-स्थितिश्च द्वेधा—स्वरूपेण कारणात्मना च ; सत्कार्यवादाभ्युपगमात्, तथाच ब्रह्मज्ञानं विनाऽप्यतीतघटस्य स्वरूपे-णावस्थितिविरहेऽपि कारणात्मनाऽवस्थितिविरहाभावाद् ब्रह्मज्ञानप्रयुक्त एव सः, इति नातीतघटादावव्याप्तिरि"त्यादि-मूल ग्रन्थेन वक्ष्यमाणस्येत्यर्थः। *वादी=वेदान्ती। *प्रतिवादी=नैयायिकादिः। *एकस्येति*॥ सत्कार्य-वादस्य मतद्वयेऽसत्त्वादिति भावः॥ *एकस्वरूपत्वाभावादिति*॥ तथाच तथा निवेशे मतद्वये साध्या-प्रसिद्धिरेव दूषणमिति भावः। न च—ज्ञाननिवर्त्यत्वरूपमिथ्यात्वानुमानघटकत्रापि सत्कार्यवादव्यवस्थापनपूर्वकत्वेन प्रसाध्याङ्गकानुमानत्वमस्त्विति—वाच्यम् ; तत्रागत्या तथोपगमेऽप्यत्र वक्ष्यमाणगतिसत्त्वेन तथाऽनुपगमात्।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावात्, ज्ञानानिवर्त्यरूपसद्भेदस्य निवेशपक्षेऽस्मन्मते ब्रह्ममात्रविषयकतत्त्वधीविषयत्वरूपस्यैव लाघवेनोक्त-

सिद्धिव्याख्या

श्रुतकल्पनाया अभावाच्च। नच—त्वया नामधेयमित्यस्यापि 'नाममात्रं ह्येतदि'ति व्याख्यातत्वेन पौनरुक्त्यमिति—वाच्यम्; व्याख्यान-व्याख्येयभावेनापौनरुक्त्यात्। नच—इदमनन्यगतिकमिति—वाच्यम्; इष्टापत्तेः, गत्यन्तरा-भावाच्च॥

नच—वागिन्द्रियजन्यं नामधेयम्, प्राकृतादिशब्दो विकारोऽनित्यः, 'मृत्तिके'त्यादिसंस्कृतनामधेयं सत्य-मित्यक्षरार्थः संभवतीति—वाच्यम्; भवन्मते प्राकृतशब्दस्यापि सत्यत्वेन ततो वैषम्यायोगात्। नच—'सत्य-मि'त्यस्य नित्यमित्यर्थकथनेन वैषम्यमस्तीति—वाच्यम्; त्वदुक्तार्थपरत्व उपक्रमे श्रुतस्य मृद्विज्ञानात् तद्विकारस्वरूप-परिज्ञानस्यानुपपादनेन "यथा सौम्यैकेन मृत्पिण्डेन" इत्यादिनैकवाक्यत्वविरोधापत्तेः। नच—उपक्रमेऽपि भाषावि-शब्दपरिज्ञाने यत्फलं तदाधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद् भवतीत्युच्यत इति नोक्तदोष इति—वाच्यम्; 'एकेन मृत्पिण्डेन मृन्मयम्' इत्यादिश्रुतिविरोधात्, संस्कृत-तज्ज्ञान-तत्फलवाचकशब्दानामश्रुतानां कल्पनीयत्वापत्तेश्च, संस्कृतशब्दाद् लौकिकैर्व्यवहारासंभवेन फलभूतत्वायोगाच्च, भाषाऽपरिज्ञाने सर्वेण व्यवहारासंभवाच्च, संस्कृतपरिज्ञाने सार्वत्रिकव्यवहारा भवन्तीत्यस्यापूर्वत्वाभावेन श्रुत्यर्थत्वायोगात्, 'मृत्तिके'त्यस्य शब्दपरत्वे मानाभावाच्च। नच—मृज्ज्ञानेऽपि घटादिसंशयदर्शनाद् न त्वदभिमतवाक्यार्थोऽपि संभवतीति—वाच्यम्; स्वरूपपरिज्ञानेऽपि कल्पितभेदप्र-द्विकारसंशयस्योपपत्तेः। नच—नामधेयपदस्य 'मृत्तिके'ति पदेनाप्यन्वयात् तस्य शब्दपरत्वमिति—वाच्यम्; अनुषङ्ग-कल्पने गौरवात्। नच—तथाप्येवकारानुषङ्गस्तुल्य इति—वाच्यम्; वाचैवारम्भणमिति त्वयापि वक्तव्यत्वात्, इतरथा संस्कृतपदानामपि वाचाऽऽरम्भणत्वाद् विनाशित्वप्रसङ्गात्, इतिशब्दस्य शब्दानुकरणरूपत्वे मृदादिशब्दा-नामनित्यत्वप्रसङ्गाच्च। नच—मृत्तिकादिशब्दानां विवक्षितत्वाददोष इति—वाच्यम्; आदिपदाश्रवणात्। नच—निपातानामनेकार्थत्वाद् 'इति'पदेन वाचाऽऽरम्भणेतरपदानि गृह्यन्त इति—वाच्यम्; प्राकृतभाषाप्रबन्धादेरपि सद्व्याकरणादिसापेक्षत्वेन वाङ्मात्रेणानारब्धत्वात् तस्यापि संग्रहापत्तेः। किंच सत्यपदेन नित्यत्वाभिधाने लक्षणा-प्रसङ्गाद् मुख्यार्थ एव ग्राह्यः, स च तथानिष्टः; परमार्थत्वस्यैव सत्यशब्दमुख्यार्थत्वेन संस्कृतस्यैव परमार्थत्वविधौ भाषादेः श्रुत्यभिमतमिथ्यात्वापत्तेः। 'येनाश्रुतं श्रुतम्' इत्यादिनैकविज्ञानात् सर्वविज्ञानं प्रतिज्ञाय प्रपञ्च-ब्रह्मणोर्भेदेन 'कथं नु भगवः' इत्यादिनाऽऽक्षिप्य, प्रश्नसमाधानार्थं 'यथा सौम्यैकेन मृत्पिण्डेन' इत्यादिवचनं प्रवृत्तम्, तेन च त्वदुक्तार्थेन तत्समाधानायोगात् सर्वमेवासङ्गतं स्यादिति। तस्माद् ब्रह्मण इव प्रपञ्चस्यापि सद्रूपत्वे मानाभावात् सत्त्वासत्त्वराहित्ये सति सद्रूपत्वमादाय नार्थान्तरम्॥

विट्ठलेशीयटिप्पणी

ज्ञानानिवर्त्यत्वरूपसत्त्वावच्छिन्नप्रतियोगिताकभेदत्वेन निवेशे प्रकारान्तरेणापि साध्याप्रसिद्धिमाह—*ज्ञानानिवर्त्यरू-पेति* ॥ *ब्रह्ममात्रविषयकतत्त्वधीविषयत्वरूपस्येति* ॥ *ननु* इदं ब्रह्ममात्रवृत्ति, ज्ञानानिवर्त्यत्वं तु तुच्छ-साधारणम्, इति न तस्य लघुसमनियतगुरुधर्मत्वम्, येन तदवच्छिन्नभेदाप्रसिद्धिः स्यात्। नच—'ब्रह्ममात्रविषयके'त्यस्य सदसदितराविषयकेत्यर्थ इति—वाच्यम्; तुच्छस्य धीविषयत्वानुपगमात्। नच—असत्त्वभेदेन ब्रह्मवृत्तित्वेन वा विशिष्टं ज्ञानानिवर्त्यत्वम्, तथाच सदवच्छिन्नभेदाप्रसिद्धिरेव चात्र विवक्षितेति—वाच्यम्; उक्तभेदनिवेशे तस्य तुच्छ-साधारणतया तद्वारकासत्त्वाभाववैयर्थ्येन तन्निराकरणस्य प्रकृतानुपयोगात्। यथा निवेशे असत्त्वाभाववैयर्थ्यम्, तथा निवेशस्यैव दूषणान्तरेण निराकर्तव्यतायाः प्रकृतत्वादिति चेत्, *न*; सम्भवत्सकलप्रकारान्तरनिरासं विना 'किंचि'त्यादिवक्ष्यमाणरीत्यैव निवेश इत्यस्यासिद्धेरुक्तभेदनिवेशपक्षेऽसत्त्वाभाववैयर्थ्याभावेऽपि तस्य निरसनीयत्वात्।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भेदप्रतियोगितावच्छेदकत्वेन ज्ञानानिवर्त्यत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेः, उक्तधीविषयत्वावच्छिन्न-प्रतियोगिताकभेदनिवेशे सिद्धसाधनतापत्तेश्च, किन्तु 'सत्यं सर्वं वाच्यमि'त्याकारकस्य पराभ्युपगतस्य कस्यचिद् ज्ञानस्य यद् विषयत्वं तद्व्यक्त्यवच्छिन्नप्रतियोगिताकभेदत्वेन सद्भेदस्य तद्व्यक्त्यत्यन्ताभावत्वेन सत्त्वाभावस्य वा

### सिद्धिव्याख्या

*एतेन*—सदसदात्मकत्वमादायार्थान्तरं तस्य दुर्वारमिति—*निरस्तम्*; सद्रूपत्वे ब्रह्मवद् बाधाभावा-पत्तेः प्रपञ्चस्य। नच—'एतावन्तं कालं शुक्त्यज्ञानमासीत्' 'भ्रम आसीदि'ति सद्रूपत्वेनाबाधितप्रतीतिसिद्ध एवाज्ञानादौ ज्ञाननिवर्त्यत्वरूपबाधो न दृश्यत इति—वाच्यम्; सद्रूपत्वाविशेषे नियामकाभावे च ब्रह्मणो ज्ञानाद् बाधापत्तेः। नच—मिथ्यात्वाविशेषेऽपि प्रागभावादिसंबन्धो वियदादावेव, नत्वज्ञानाद्याविति वत्, सद्रूपत्वा-विशेषेऽपि ब्रह्मणोऽन्यत्रैव ज्ञानाद् बाधसंबन्धः, नतु ब्रह्मणीति व्यवस्थोपपत्तिरिति—वाच्यम्; वैधर्म्यात्। मिथ्या-त्वस्योभयत्र सिद्धत्वेऽपि सद्रूपत्वाविशेषस्य कल्पनीयतया तस्य व्यवस्थायाश्च कल्पने धर्म-धर्म्युभयकल्पनागौरव-प्रसङ्गात्, प्रागभावानङ्गीकारमते वियदादौ प्रागभावसंबन्धायोगाच्च, अज्ञानानङ्गीकारवादिमते व्यवस्थाया दुर्नि-रूपत्वाच्च ॥

### विट्ठलेशीयटिप्पणी

अत एव तादृशधीविषयत्वावच्छिन्नप्रतियोगिताकभेदनिवेशमपि निरस्यति—*उक्तधीति* ॥ ब्रह्ममात्रविषयकधीत्यर्थः। *ननु* तर्हि तुच्छसाधारणज्ञानानिवर्त्यत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे किं दूषणान्तरमिति—*चेत्,* तादृशज्ञाना-निवर्त्यत्वस्यापि ब्रह्ममात्रविषयकतद्धीविषयत्व-तुच्छविषयकविकल्पाख्यवृत्तिविशेषविषयत्वान्यतररूपलघुधर्मसमनियत-गुरुधर्मत्वात् तदवच्छिन्नभेदाप्रसिद्धिरेवेत्यवेहि। *वस्तुतस्तु*—तादृशभेदस्य ज्ञाननिवर्त्यत्वरूपस्य तादृशभेदत्वापेक्षया लाघवाद् ज्ञाननिवर्त्यत्वेनैव साध्यत्वं वक्तव्यम्। तच्च वक्ष्यते। नच तर्ह्येतदनुक्त्या न्यूनता; ग्रन्थस्य दिक्प्रदर्शकत्वात्। कथं तर्हि निवेशः? तत्राह—*किंत्विति* ॥ सत्यत्वावच्छेदेन वाच्यत्वस्य प्रकारविधया भानसूचनाय 'सर्वमि'ति। *पराभ्युपगतस्येति* ॥ स्वाभ्युपगतस्य चेति शेषः। तेन न स्वस्य साध्याप्रसिद्धिः। अस्यां हि प्रतीतौ परमते ब्रह्म-प्रपञ्चयोर्विशेष्यत्वम्, स्वमते ब्रह्ममात्रस्येति विवादबीज-मनुपदं स्फुटम्। *विषयत्वम्*=विशेष्यत्वम्। *सद्भेदस्य*=सद्भेदपदार्थस्य। *सत्त्वाभावस्य*=तत्पदार्थस्य। यथाश्रुते ज्ञानानिवर्त्यरूपसद्भेद-ज्ञानानिवर्त्यत्वरूपसत्त्वाभावयोस्तुच्छव्यावृत्तयोस्तत्साधारणोक्तज्ञानीयविषयताव्यक्त्य-वच्छिन्नभेद-तादृशव्यक्त्यत्यन्ताभावरूपत्वासंभवेनासङ्गतेः। नच—'सद्भेदस्ये'त्यस्य सद्विलक्षणत्वरूपवाच्यत्वाभाव-वद्भेदस्येति, सत्त्वाभावस्येत्यस्य च तादृशवाच्यत्वाभावरूपसत्त्वाभावस्येत्यर्थः; तादृशभेदत्व-तादृशाभावत्वाभ्यां तयोर्निवेश आत्माश्रयोक्तेस्तत्समनियततद्भिन्नाभावनिष्ठरूपान्तरेणात्र निवेश उच्यत इति—वाच्यम्; तथापि सद्भेदस्य सत्त्वाभावस्येत्युक्तेः प्रयोजनाभावेन निस्सारतापत्तेः। नच—प्रतिज्ञासंन्यासवारणाय तदुक्तिरिति—शङ्क्यम्; ज्ञानानिवर्त्यत्वरूपसत्त्वनिवेशस्यैव प्रतिज्ञातत्वेन तादृशसत्त्वाभावादिनिवेशस्याप्रतिज्ञातत्वेन तद्दोषा-नवकाशात्, प्रस्तुत तदनिवेशस्यैव प्रतिज्ञातत्वेनेदानीं तन्निवेशोपगमे विपरीतप्रतिज्ञासंन्यासप्रसङ्गाच्च। नच रूपभेदेन निवेशानिवेशाभ्यां नायं दोषः; तावताऽप्यायसमाधानस्यानपवादात्। नच—सद्भेदादिपदस्य तत्पदार्थार्थकत्वेऽपि ज्ञानानिवर्त्यरूपसद्भेदादेर्निवेशस्य प्रतिज्ञातस्यात्र परित्यागात् प्रतिज्ञासंन्यासो दुर्वार इति—वाच्यम्; सद्भेदादि-पदार्थनिवेशमात्रेण कथंचित् तद्दोषहानेः। एतदर्थमेव सद्भेदस्येत्याद्युक्तम्; *एतेन*—ज्ञानानिवर्त्यत्वरूपसत्त्वा-भावनिवेशेऽसत्त्वाभाववैयर्थ्यमाशङ्कितम्, विषयताविशेषरूपसत्त्वाभावनिवेशेन च तत् समाहितमिति "कर्णे पृष्ठे" इति न्यायेन सन्दर्भाशुद्धिरिति—*परास्तम्*; सत्त्वाभावपदार्थनिवेशे तच्छङ्का-समाधानयोः सत्त्वेन कथंचित् तच्छुद्धेः। 'किंचेति चेन्न' इत्यादिना ज्ञानानिवर्त्यत्वाभावनिवेशस्त्यक्त एव। नच—*"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं

सिद्धिव्याख्या

*अत एव*—पदार्थत्वाविशेषाद् नृश्रृङ्गादेरपि प्रतिपन्नोपाधिप्रसङ्गः, तथोत्पत्ति-विनाशप्रसङ्गश्चेति—*निरस्तम्* ; धर्मिणस्तस्यैवाभावात्। अत एवासद्रूपत्वेऽपरोक्षताप्रतीतिर्न स्यादित्यपि साधु। नच—सद्वैलक्षण्यरूप-धर्मस्याप्यनङ्गीकारेऽपि नृश्रृङ्गाविषयदपरोक्षताप्रतीतिर्न स्यादिति सुवचमिति—वाच्यम्; निःस्वरूपे नृश्रृङ्गे

विट्ठलेशोपाध्यायीटिप्पणी

च्छम्" इति न्यायेन* एवं तदुपगम एव वृथेति—वाच्यम्; तस्य शिष्यबुद्धिवैशद्यार्थकत्वात्। तथा सति क्व प्रतिज्ञासंन्यासः? क्व च सन्दर्भाशुद्धिरित्यलम् ॥

[ *ननु*—उक्तज्ञानविषयत्वावच्छिन्नभेदस्य तदत्यन्ताभावस्य वा साधन उक्तज्ञानशून्यकालावच्छेदेन तस्य घटादौ ब्रह्मणि च स्व-परैरभ्युपगमात् सिद्धसाधनमतिव्याप्तिश्चेति—चेत्, *न* ; निरवच्छिन्नविशेषणतासम्बन्धेन तयोः साधनीयत्वात्—(क) ]।

*इदं त्ववधेयम्*—'सत्यं सर्वं वाच्यमि'त्याकारकज्ञानविषयताव्यक्तेर्भावरूपत्वाद् ब्रह्मणश्च भावरूपधर्मानाश्रयत्वात् तद्भेद-तदत्यन्ताभावघटितलक्षणयोर्ब्रह्मण्यतिव्याप्तिः। नच—'दृश्यं सर्वं मिथ्ये'ति स्वाभ्युपगतप्रतीतिविषयत्वाभावः स्वमते ब्रह्मण्येव, परमते तु प्रपञ्चेऽप्यस्ति, तद्भेद-तदत्यन्ताभावघटितलक्षणे प्रकृतग्रन्थतात्पर्यम्, तत्र च न ब्रह्मण्यतिव्याप्तिः, न वा सिद्धसाधनमिति—वाच्यम्; तादृशप्रतीतिविषयत्वाभावस्य तुच्छसाधारणतया तद्भेदादिघटितलक्षणस्य तुच्छेऽनतिप्रसङ्गेनासत्त्वाभाववैयर्थ्यापातात्, तादृशाभावेऽसद्भिन्नत्ववैशिष्ट्यं निवेश्य तत्सार्थक्यस्य "प्रक्षालनाद्धि" इति न्यायेनायुक्तत्वात्। नच—'आत्मभिन्नं सर्वं सद्भिन्नम्' इत्याकारकवृत्तिविशेषविषयत्वस्य तुच्छसाधारणस्याभावः स्वमते ब्रह्मण्येव, परमते प्रपञ्चेऽपि, इति तद्भेदादिघटितलक्षणे न कोऽपि दोष इति—वाच्यम्; तादृशवृत्तेर्विकल्परूपत्वे प्रपञ्चभानस्य स्वमतेऽपि तत्रासम्भवेन तद्विषयत्वाभावस्य प्रपञ्चसाधारणतया बाधप्रसङ्गात्, तस्या ज्ञानरूपत्वे तद्विषयत्वाभावस्य तुच्छेऽपि सत्त्वेनासत्त्वाभाववैयर्थ्यात्। नच—तादृशी तृतीयैव काचनान्तःकरणवृत्तिरुपेयते, यत्र प्रपञ्च-तुच्छयोरुभयोरपि विषयतेति—वाच्यम्; तादृशवृत्तेरयथार्थायाः परेणाङ्गीकारात् तद्विषयत्वाभावस्य परमतेऽपि ब्रह्ममात्रवृत्तितया तद्भेदादिसाधने सिद्धसाधनप्रसङ्गात्। नच वृत्तेर्यथार्थवृत्तित्वेन निवेशे नायं दोषः; परमते यथार्थतादृशवृत्तेरसिद्धेः। नच—सर्वपदत्यागेन शुक्तिरजत-तुच्छविषयिणी सा प्रसिद्धेति—वाच्यम्; तादृशप्रतीतौ कतिपयानामेवात्मभिन्नानां भानेन तादृशप्रतीतिविषयत्वाभावस्य स्वमतेऽपि प्रपञ्चसाधारणतया तत्र तद्भेदादिसाधने बाधात्। *एतेन*—'आत्मभिन्नं सर्वं दृश्य-तुच्छान्यतरत्' इति वृत्तिविषयत्वाभावो दृश्य-तुच्छान्यतरत्वाभावो वा निवेश्यः—*इत्यपास्तम्* ; तस्य परेषां ब्रह्ममात्रवृत्तितया सिद्धसाधनप्रसङ्गादिति ॥

*अत्रेदमालोचनीयम्*—एतदनुशयेनैव मूले 'निर्धर्मकत्वेनैवे'त्यादिना प्रकारान्तरेणातिव्याप्तिः परिहृता। नच—टीकायां तदवतारिकायां ब्रह्मणि बाध्यत्वाभावासंभव एवोपात्तः न तूक्तज्ञानविषयत्वासंभव इति—वाच्यम्; आदिपदादपि भाववदिति दृष्टान्तैः सुतरां तदसंभवस्योक्तत्वात्—*इति* ॥

*परेतु*—'असत्यं सर्वं वाच्यम्' इत्याकारकज्ञानविषयताभावरूपाऽपि वृत्तिः शुद्धे ब्रह्मणि शुद्धविषयकमूलाज्ञाननिवृत्त्यनुरोधात् स्वीकार्येति विवरणकारमते नायमतिव्याप्तिपरिहारग्रन्थः। *ननु*—अज्ञानाज्ञाने स्वोपहितविषयके, न तु शुद्धविषयके इति वाचस्पतिमते सत्त्वादयो धर्माः स्वोपहित एव ब्रह्मणि, न शुद्ध इत्यभ्युपगमेनातिव्याप्तिरुद्भाविता; तन्मतमवलम्ब्यैव ब्रह्मणः सद्रूपत्वेन तदभावानधिकरणत्वादिति मौलं समाधानं प्रवृत्तम्। तत्र सद्रूपत्वेन बाध्यत्वाभाववत्त्वेन। तथाच शुद्धे भावरूपधर्मानाश्रयत्वेऽप्यभावरूपधर्माश्रयत्वाद् नातिव्याप्तिरिति व्याख्यानम्। तत्र चात्माश्रय-विशेष्यांशवैयर्थ्याशङ्कायां तत्तात्पर्यविषयीभूतनिष्कर्षोऽयमुच्यमानो वाचस्पतिमत एव वक्तव्यः। उक्तविवरणमताश्रयणे तु सन्दर्भविरोध इति—चेत्, *सत्यम्* ; अगत्या मतान्तरावलम्बनेन समाधानतात्पर्यवर्णनस्य सर्वग्रन्थकारसौलीसिद्धत्वात्। एवंच ब्रह्मणः 'सद्रूपत्वेने'ति पङ्क्तेः, शुद्धस्य ब्रह्मणः

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निवेशः । तादृशज्ञाने चास्मदभ्युपगतबाध्यत्वविरोध्यलीकव्यावृत्तसत्त्वप्रकारकत्वं परैः स्वीक्रियते । तदीयोक्तविशेष्यतादिव्यक्तेरत्यन्ताभावादिसाधने सिद्धसाधनं तैर्वक्तुमशक्यम् । मुख्यविशेष्यतात्वं च प्रकारता-सांसर्गिकविषयतान्यविषयतात्वम् । तच्च विशेष्यताविशेष इव निर्विकल्पकज्ञानीयतुरीयविषयतायामप्यस्ति, इति परमत आद्यस्य मन्मते द्वितीयस्य नासंग्रहः । मन्मते हि 'सत्यं सर्वं वाच्यमि'ति वाक्ये सत्यादिसमानाधिकरणनामभिः सत्यत्वाद्युपलक्षितशुद्धब्रह्मणो निर्विकल्पकधीरेव जायते, इति तदीयविषयतालाभः । सर्वपदमहिम्ना सत्यत्वव्यापकविषयतालाभः । तेन किञ्चित्सत्यनिष्ठविषयतायाः कुत्रचित् सत्येऽभावमादाय परेषां न सिद्धसाधनम् ।

## विट्ठलेशीयटिप्पणी

'सत्यं सर्वं वाच्यम्' इति ज्ञानविषयत्वोपगमेन तदभावानुपगमाद् नातिव्याप्तिरित्यर्थः । अत एवानुपदं ग्रन्थकृता "मन्मते हि 'सत्यं सर्वं वाच्यम्' इति वाक्ये सत्यादिसमानाधिकरणनामभिः सत्यत्वाद्युपलक्षितशुद्धब्रह्मणो निर्विकल्पकधीरेव जायते" इत्युक्तम् । 'वाच्यत्वस्थाने ज्ञेयत्वं वा निवेश्यम्' इति चोक्तमिति—*आहुः* ॥

*प्रकृतमनुसरामः*—*ननु* 'सत्यं सर्वं वाच्यम्' इत्याकारकज्ञानीयविषयताव्यक्त्यवच्छिन्नभेद-तदत्यन्ताभावयोः साध्यत्वे सिद्धसाधनं कुतो नेति ? अत आह—*तादृशज्ञाने चेति*॥ ब्रह्म-प्रपञ्चोभयरूपविशेष्यांश इति शेषः । *बाध्यत्वाविरोधिसत्त्वम्*=सत्तादात्म्यरूपम्, तत्प्रकारकतादृशज्ञानस्य प्रपञ्चविशेष्यकस्य स्वेनाप्युपगमसंभवात् तद्विषयत्वाभावसाधने बाधः, परेषां ब्रह्मवत् प्रपञ्चस्य बाध्यत्वासिद्धिश्च, इत्यतः—तद्विरोधिसत्त्वमुक्तम् । तच्च बाध्यत्वाभावप्रकारकप्रमाविषयत्वम्, प्रमाविषयत्वमेव वा ; शुक्तिरजतादिबाध्यविषयकज्ञानस्याप्रमात्वात, नतु बाध्यत्वाभावरूपम् ; तस्यालीकसाधारण्यात्, तज्ज्ञानस्य तत्प्रकारकत्वोपगमे जगतोऽसत्तुल्यतापत्तिः, इति सत्त्वस्यासद्व्यावृत्तताया आवश्यकत्वात् । *सत्त्वप्रकारकत्वमिति* ॥ वाच्यत्वधर्मितावच्छेदकविषयेत्यादिः । *स्वीक्रियत इति* ॥ इतीति शेषः । अत्र तज्ज्ञानीयविषयतात्वावच्छिन्नवद्भेदस्य तदभावस्य वा साध्यता न संभवति ; स्वमते ब्रह्मनिष्ठतज्ज्ञानविषयतानिष्ठतद्व्यक्तित्वापेक्षया तज्ज्ञानविषयतात्वस्य गुरुतया प्रतियोगित्व-तदवच्छेदकतावच्छेदकतानवच्छेदकत्वेन तयोरप्रसिद्धत्वात् । अतस्तादृशज्ञानीयविषयताव्यक्त्यवच्छिन्नभेदस्तदभावो वा साध्यः । तत्र परमते तत्साधने धर्मितावच्छेदकता-संसर्गता-प्रकारता-विशेष्यतारूपबहुविधा विषयताः । तत्र तज्ज्ञानीयधर्मितावच्छेदकतादिव्यक्तेः स्वमतेऽभावेन तदवच्छिन्नभेदादेरप्रसिद्ध्या साधनं न संभवति, तत्साधने घटादिप्रपञ्चे सिद्धसाधनं वेत्यत उक्तम्—*तदीयोक्तविशेष्यतादिव्यक्तेरिति* ॥ आदिना तद्भेदः । *ननु* तदीयमुख्यविशेष्यताव्यक्तेस्तद्व्यक्तित्वेन न निवेशः ; स्व-परमतयोस्तादृशाकारज्ञानीयविशेष्यताव्यक्तेर्भेदेनैकव्यक्तेरपरमतासिद्धत्वेन तद्व्यक्तित्वेन मतद्वय उपादानासंभवात्, किन्तूभयसाधारणेन तादृशज्ञानीयत्वविशिष्टेन मुख्यविशेष्यतात्वेन । तच्च यदि प्रकारतान्यविशेष्यतात्वम्, तदा स्वमतसिद्धब्रह्मविषयकनिर्विकल्पकज्ञानीयविषयतात्वासंग्रहः, यदि प्रकारतादित्रयान्यविषयतात्वम्, तदा परमते सप्रकारकतादृशज्ञानीयविशेष्यतात्वासंग्रहः, इत्यत उभयसाधारणं तद् निर्वक्ति—*मुख्यविशेष्यतात्वं चेति* । *निरुक्तमुख्यविशेष्यतात्वस्य* 'प्रपञ्चो मिथ्या' इत्याकारकस्वमतसिद्धज्ञानीयविषयतासाधारणत्वात् तदव्यवच्छिन्नाभावसाधने बाधः, इत्यतस्तादृशज्ञानीयत्ववैशिष्ट्यं निवेशितम् । स्वमतं व्युत्पादयति—*मन्मते हीति* ॥ 'सत्यत्वादी'त्यादिपदेन वाच्यत्वम् । परमते निरुक्तमुख्यविशेष्यतात्वरूपाक्रान्तानां विषयतानां घटादिनिष्ठानां बहूनां सत्त्वात् तासां सर्वासामेवानुगतरूपेण निवेशं वदन् तत्प्रयोजनमाह—*सर्वपदेत्यादि* ॥ *किंचित्*=घटादि । *कुत्रचित्*=पटादौ । *न सिद्धसाधनमिति* ॥ तादृशज्ञानीयमुख्यविशेष्यतावृत्तिसत्यत्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावत्वादिना निवेशादिति भावः(१) । तच्च रूपं निरुक्तविशेष्यतात्वमेव । *ननु* वाच्यत्वस्य विशिष्टब्रह्मवृत्तितया तदुपलक्षितं

( १ ) *एतेन*—विशेष्यभेदेन विशेष्यताभेदात् तद्व्यक्तित्वेनैव तदवच्छिन्नप्रतियोगिताकभेदस्य विवक्षणीयतया घटीयविशेष्यतावच्छिन्नप्रतियोगिताकभेदस्य घटेऽभावाद् बाधः, भेदकूटनिवेशे च स्वगतेऽप्रसिद्धिरित्यादिन्यायभास्करोक्तम्—*परास्तम्*

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वाच्यत्वेनोपलक्षितं शुद्धं ब्रह्मापि भवति ; विशिष्टब्रह्मनिष्ठस्य तस्य विशेष्यीभूतशुद्धेऽपि सत्त्वात् । वाच्यत्वस्थले ज्ञेयत्वं वा निवेदयम् । तज्ज्ञानीयमुख्यविशेष्यतानिष्ठानवच्छिन्नावच्छेदकताकप्रतियोगितानिरूपकभेदत्वेन मुख्यविशेष्यतासम्बन्धावच्छिन्नतज्ज्ञानव्यक्तित्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वेन वा

### विट्ठलेशीयटिप्पणी

विशिष्टमेव, सत्यत्वोपलक्षितं तु शुद्धम् । तथाच कथं सत्यपद-वाच्यपदयोरेकार्थबोधकत्वरूपं सामानाधिकरण्यम् ? सत्यपदस्यापि विशिष्टार्थबोधकत्व एतद्वाक्यस्य निर्विकल्पकब्रह्मधीजनकत्वसिद्धान्तभङ्गः ; विशिष्टधीविशेष्यत्वस्य विशिष्टवृत्तेः शुद्धेऽभावमादाय मिथ्यात्वलक्षणातिप्रसङ्गश्चेत्यत आह—*वाच्यत्वेनेति* ॥ *तस्य=वाच्यत्वस्य । *शुद्धेऽपीति* ॥ विशिष्ट-शुद्धयोर्भेदाभेदोपगमादिति भावः(१) । तथाच नोक्तदोषद्वयमिति हृदयम् । यदि विशिष्टं शुद्धादतिरिक्तमेवेति ब्रूयात्, तदाऽप्याह—*वाच्यत्वस्थान इति* ॥ *ज्ञेयत्वमिति* ॥ इदं शुद्धेऽपि ; तत्त्वज्ञानविषयतायाः शुद्ध एवोपगमात् । अत एव तेन शुद्धविषयकाज्ञाननिवृत्तिः ; समानविषयकयोरेव हि ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभाव इति भावः ॥

*ननु* सत्यत्वव्यापकतावच्छेदकीभूततादृशज्ञानीयविशेष्यतावृत्तिरूपावच्छिन्नाभावादिनिवेशे गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे तज्ज्ञानीयमुख्यविशेष्यतात्वरूपस्य व्यापकतावच्छेदकत्वाद्यविशेषितस्यैव प्रतियोगितावच्छेदकतया तद्विशेषिततदवच्छिन्नाभावाप्रसिद्धिः । किञ्च तज्ज्ञानीयमुख्यविशेष्यतात्वस्यापि स्वमते ब्रह्ममात्रवृत्तिविशेष्यतावृत्तितद्व्यक्तित्वापेक्षया गुरुतया न प्रतियोगितावच्छेदकत्वसंभवः । नच—व्यापकतावच्छेदकत्वादिकमुपलक्षणम् ; उक्तरूपावच्छिन्नप्रतियोगितायाः प्रकारतया निवेशनीयतया प्रतियोगिताप्रकारकाभावज्ञाने प्रतियोगिकोटावुपलक्षणतया भानस्य नैयायिकसंमतत्वात्, एवं स्वमते तादृशं रूपं तादृशतद्व्यक्तित्वम्, परमते तज्ज्ञानीयमुख्यविशेष्यतात्वम्, इत्थं च तादृशरूपावच्छिन्नाभावः प्रसिद्ध एवेति—वाच्यम् ; एवमपि व्यापकतावच्छेदकत्वनिवेशेन गौरवमित्यत आह—*तज्ज्ञानीयेति* ॥ *भेदत्वेनेति* ॥ अनवच्छिन्नप्रतियोगिताया अप्रसिद्धतया तन्निरूपकात्यन्ताभावत्वेन वेति नोक्तम् । *ननु* तज्ज्ञानीयमुख्यविशेष्यतायाः स्वरूपेण भेदप्रतियोगितायामप्यवच्छेदकत्वासंभवादनवच्छिन्नत्वं कथं तस्याः ? न च—स्वमते ब्रह्मनिष्ठायास्तादृशविशेष्यतायास्तद्व्यक्तित्ववद् अखण्डोपाधित्वोपगमात् स्वरूपत एव तस्या भेदप्रतियोगितावच्छेदकत्वसंभव इति—वाच्यम् ; एवं सति परेणापि तादृग्ज्ञानीयविशेष्यतानां प्रपञ्चे तादृशीनामेवोपगमादुक्तरीत्या सिद्धसाधनतादवस्थ्यप्रसङ्गात् । नच —तादृशज्ञानीयतत्तद्विशेष्यत्वा[व]च्छिन्नभेदकूटस्यैव साध्यता, तत्र सिद्धसाधनाभावादिति—वाच्यम् ; स्वमते तज्ज्ञानविशेष्यत्वस्यैकत्वेन तादृशभेदकूटस्याप्रसिद्धेरिति—चेत्, *न* ; तज्ज्ञानीयमुख्यविशेष्यतात्वसमानाधिकरणानवच्छिन्नप्रतियोगितावच्छेदकताकभेदत्वव्यापकाधेयतानिरूपिताधिकरणताया एव साध्यत्वात्, तत्र च न सिद्धसाधनम् ; नापि स्वमतेऽप्रसिद्धिः ; तादृशाधिकरणतायाः प्रपञ्च एकैकविशेष्यतामभ्युपगच्छता वादिनाऽनुपगमात्, तुच्छे चोभयमतेऽपि प्रसिद्धेः । नच व्यापकत्वनिवेशकृतगौरवम् ; प्रतियोगितावच्छेदकताविघटकस्य तस्य प्रतियोगितावच्छेदककोटावेव निवेशस्य दुष्टतया तन्निवेशगौरवस्यादूषकत्वात् । एकैकतज्ज्ञानीयविशेष्यत्वोपगन्त्रा कथं तादृशाधिकरणताऽभ्युपगम्यतामिति *चेत्*, दृश्यत्वादिहेतुभङ्गभियैकैकविशेष्यत्वमप्यपहायेति गृहाण । लाघवार्थमत्यन्ताभावघटितमिथ्यात्वरूपसाध्यनिर्वाहार्थं चाह—*मुख्यविशेष्यतासंबन्धेति* ॥ स्वमते ज्ञानव्यक्तेर्ब्रह्मनिष्ठतद्व्यक्तित्वाद्यपेक्षया गुरुत्वात् तदवच्छिन्नभेदाप्रसिद्धया तदुपेक्षा ।

---

( १ ) एवं च सत्यत्वप्रकारकज्ञानविशेष्यतायाः शुद्धचित्साधारणतया तन्निष्ठानवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्योपहितचित्यपि सत्त्वाद् न बाधः । यथाच विशिष्टबुद्धौ शुद्धस्यापि विषयत्वम्, तथा न्यायरत्नावल्यां ब्रह्मानन्दसरस्वतीभिरुपपादितम् । *एतेन*—तद्धर्मप्रकारकज्ञानविषयतायाः शुद्धासाधारणत्वाद् उपहितसाधारणत्वेऽपि तस्य पक्षकोटिनिक्षिप्तत्वेन बाध इत्यादिन्यायभास्करोक्तम्—*परास्तम्* ॥ इति ॥

अद्वैतसिद्धिः

निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वाच्चेति दिक् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निवेशाद् न व्यापकत्वादिनिवेशकृतगौरवादिकम् । एतेन—'घटादिकं ब्रह्मवृत्तित्वविशिष्टतादृशविशेष्यतावद् ने'ति प्रतीतेः, घटादौ तादृशविशेष्यतावद्भेदसत्त्वात् सिद्धसाधनमिति—परास्तम् ; तादृशप्रतीतिविषयीभूताया भेदप्रतियोगितावच्छेदकताया ब्रह्मवृत्तित्वावच्छिन्नत्वेनानवच्छिन्नत्वविशेषणेन तस्या वारणात् ॥

*ननु*—बाध्यत्वाभावादिरूपोऽपि धर्मो न शुद्धे ब्रह्मणि, किन्तु स्वोपहिते; भाववदभावेऽपि युक्तेस्तुल्यत्वात्,

न्यायामृतसौगन्ध्यम्

*ननु*—सद्रूपत्वेन ब्रह्मणस्तदत्यन्ताभावानधिकरणत्वे निर्धर्मकत्वेनैव सत्त्वाभावरूपधर्मानधिकरणत्वम्, असत्त्वाभावरूपधर्मानधिकरणत्वं चेति—चेत्, *न* ; सद्रूपत्वस्य ब्रह्मातिरिक्तत्वे 'घट इष्टः' 'पट इष्टः' इत्याद्यनुगतव्यवहारस्याननुगमापत्त्या ब्रह्मानतिरिक्तत्वे च तत्र तदभावस्य सत्त्वेनातिव्याप्तेस्तादवस्थ्यात्, निर्धर्मकत्वरूपहेतोर्भावाभावाभ्यां व्याघातात् ॥

सौगन्ध्यविमर्शः

चितम् । निर्धर्मकत्वं हि ब्रह्मव्यतिरेकेण धर्माभाव एव ; धर्मस्यापि कल्पितत्वात् । तथाच सत्त्वाभावादीनामपि ब्रह्मरूपत्वात् तद्व्यतिरेकेण घटव्यतिरेकेण रूपादेरिव स्वरूपाभावाद् ब्रह्मदृष्ट्या धर्मत्वमेव न सम्भवति, इति नातिव्याप्तिः । एतदभिप्रायेणैव 'सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयमि'ति लक्षणे धर्मपदम् । सति चैवं ब्रह्मानतिरिक्तत्वे ब्रह्मण्यभावादातिव्याप्तिरिति शून्यं वचः। प्रपञ्चमिथ्यात्वबोधनं हि ब्रह्मव्यतिरेकेण भावाभावसाधारणपदार्थाभावज्ञापनमेव, नतु भावनिषेधेनाभावस्य

विट्ठलेशीयटिप्पणी

'व्यापकत्वादी'त्यादिना तदवच्छेदकत्वपरिग्रहः । 'गौरवादिकमि'त्यादिनाऽभावप्रतियोगिककोटावुपलक्षणतयाभानोपगमपरिग्रहः । अवच्छेदकतायामनवच्छिन्नत्वविशेषणप्रयोजनमाह—*एतेनेति* ॥ अनवच्छिन्नत्वघटितसाध्यादरेणेत्यर्थः । तेन वारणं स्फुटयति—*तादृशेति* ॥ एवं चोक्तभेदोक्तज्ञानव्यक्त्यत्यन्ताभावयोः सन्नेदसत्त्वाभावपदार्थयोस्तुच्छसाधारणतया तत्रातिप्रसङ्गवारणाय मिथ्यात्वलक्षणेऽसत्त्वाभावसा(१)र्थक्यमिति भावः । *भाववदिति* ॥ सप्तम्यन्ताद् वतिः । *अभाव इति* ॥ उपगम्यमान इति शेषः । *युक्तेः=निर्धर्मकत्वव्याघातस्य । 'निर्गुणः' इत्यत्र गुणपदस्य भावमात्रार्थकत्वे न मानम् ; लक्षणाया दुर्वारत्वादिति भावः । *तुल्यत्वादिति* ॥ तथाच बाध्यत्वाभावरूपसत्त्वस्य ब्रह्मण्यभावसत्त्वादतिव्याप्तिर्दुर्वारैवेति भावः । 'निर्धर्मकत्वेनैवे'त्यादिमूलं यथाश्रुते भावाभावयोर्युक्तितौल्योपगमेऽप्यतिव्याप्तिनिराकरणपरम्, तच्च न युक्तम् ; अधिकरणीभूतब्रह्मस्वरूपाभाव-तदतिरिक्ताभावयोर्युक्तितौल्याभावस्य वक्ष्यमाणत्वात्, इत्यतः तन्मूलं भावाभावयोर्युक्तितौल्योपगमापादकतापत्तिपरतया

---

( १ ) इदं तु लक्षणत्वपक्षानुरोधेन । साध्यत्वपक्षे तु यद्यपि न्यायभास्करोक्तरीत्याऽवृत्तित्वमादायार्थान्तरवारणार्थं स्वाधिकरणताव्यापकाभावप्रतियोगित्वविवक्षणेनैवासत्त्वमादायाप्यर्थान्तरवारणस्य सम्भवेन, स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वरूपसत्त्वाभावस्यैव विवक्षणेऽपि पक्षतावच्छेदकदले सत्तादात्म्यनिवेशेनैवोक्तार्थान्तरवारणसम्भवेन चासत्त्वाभावनिवेशो व्यर्थ इति शङ्का, यद्यपि च वृत्तिमत्त्वस्य प्रत्यक्षसिद्धत्वात् तत एवार्थान्तरवारणेन विशेषानुमानेषु सत्तादात्म्यस्य पक्षतानवच्छेदकत्वेन च यथाश्रुतसत्त्वाभावनिवेशस्यैव विवक्षणेऽदोषेण तथा निवेशे प्रसक्तस्याप्यसत्त्वमादायार्थान्तरस्य वृत्तिमत्त्वस्येव सत्त्वेन प्रतीयमानत्वरूपासत्त्वाभावस्यापि प्रत्यक्षसिद्धत्वेन तत एव वारणसम्भवेनासत्त्वाभावनिवेशो व्यर्थ एवेति शङ्का च प्रसरतः ; तथापि असत्त्वप्रसञ्जका 'सदेवेदमि'ति श्रुत्यनुगृहीतोक्तासत्त्वस्य प्रत्यक्षबाधासम्भवेन प्रसक्तार्थान्तरवारणार्थमुक्तश्रुतेरसत्त्वाप्रसञ्जकत्वप्रतिपादनपूर्वकं प्रपञ्चासत्त्वार्थान्तरवारणार्थमुक्तसाध्यकोटावेवासत्त्वाभावनिवेशोऽप्यावश्यक एव, प्रपञ्चस्यावृत्तित्वप्रसञ्जिका तु श्रुतिः काऽपि नोपलभ्यते, इत्यवृत्तित्वमादायार्थान्तरवारणार्थं न यत्नान्तरमाश्रितम् । यदि त्वसत्त्वाभावप्रत्यक्षप्राबल्य एवाग्रहः, तदाऽसत्त्वाभावनिवेशोऽप्यनावश्यक एव । स्पष्टं चैतन्न्यायरत्नावल्यामिति ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्राह—*निर्धर्मकत्वेनैवेति*॥ *अभावरूपधर्मानधिकरणत्वात्*=सत्त्वाभावरूपधर्माधिकरणत्वस्याभावापातात् । तथाच सत्त्वाभावं ब्रह्मणि स्वीकृत्यातिव्याप्तिदानं तवासङ्गतम् । तस्मादभावरूपधर्मस्य न भावरूपधर्मतुल्ययुक्तिकत्वम् ; प्रपञ्चे कल्पितस्य व्यावहारिकबाध्यत्वादेरभावस्याधिष्ठानब्रह्मस्वरूपत्वात् ; अन्यथा तस्यापि व्यावहारिकत्व उक्तबाध्यत्वप्रतिक्षेपकत्वासम्भवात्, तत्सम्भवस्वीकारपक्षेऽपि सत्यब्रह्मस्वरूपादतिरिक्तस्य तादृशाभावस्वरूपस्य(१) कल्पने गौरवात्, अतिरिक्ततादृशस्वरूपस्वीकारपक्षेऽपि तस्य ब्रह्मणि त्वया सम्बन्धस्वीकारेऽसत्त्वाभावस्याप्यतिरिक्तस्य शुद्धब्रह्मसम्बन्धाभावापाताद् न कोऽपि दोष इति भावः ॥

### न्यायामृतसौगन्ध्यम्

*यत्तु*—सद्रूपत्वेन बाधाभाववत्त्वेन बाध्यत्वाभावरूपधर्माश्रयत्वाद् नातिव्याप्तिरिति, *तन्न* ; उक्ताभावस्य ब्रह्मस्वरूपत्वे तदभावोऽपि तत्रास्त्येव, इत्यतिव्याप्तेः, तद्भिन्नत्वे तेनैवाद्वैतहानेः । *एतेन*—

### सौगन्ध्यविमर्शः

ब्रह्मणि साधनम् । अत एव मिथ्यात्वमिथ्यात्वेन प्रपञ्चसत्यत्वापत्तिशङ्का-परिहारादिकमुपपद्यते । तथाच ब्रह्मणि निर्धर्मकत्वस्य सत्त्वासत्त्वाभ्यां व्याघातापत्तिरपि निरस्ता ; निर्धर्मकत्वस्यापि धर्मत्वनिषेधाभिप्रायत्वाद् निर्धर्मकपदस्य । प्रपञ्चाभावस्याभावत्वोपलक्षितत्वेनैव ब्रह्मरूपत्वम्, ननु विशिष्टेन रूपेणेति लघुचन्द्रिकायां बहुश उक्तम्, इति नहि एतमेवानुक्रमः । नहि मिथ्यात्वमिथ्यात्ववादिनाऽभावत्वविशिष्टत्वेनाभाववत्त्वं वक्तुं शक्यम् ॥

### विट्ठलेशीयटिप्पणी

व्याचष्टे—*अभावरूपेत्यादि* ॥ इष्टापत्तिशङ्कां वारयति—*तथाचेति* ॥ *असङ्गतमिति* ॥ स्यादिति शेषः । *तस्मात्=अतिव्याप्तिसङ्गमनानुरोधात् । *अभावस्येति* ॥ पारमार्थिकत्वानुरोधादिति शेषः । *ब्रह्मस्वरूपत्वादिति*॥ तथाच न तेन निर्धर्मकत्वव्याघातः । धर्म-धर्मिभावस्य भेदनिबन्धनत्वेन स्वातिरिक्तधर्मवत्त्वस्यैव सधर्मकत्वरूपत्वादिति भावः । *अन्यथा=बाध्यत्वाभावस्य पारमार्थिकब्रह्मरूपत्वानङ्गीकारे । *व्यावहारिकत्वे=ब्रह्मज्ञानान्याबाध्यतया प्रातिभासिकत्वासंभवेन व्यावहारिकरूपत्वावश्यंभावेन । *उक्तेति* ॥ व्यावहारिकेत्यर्थः । *असंभवादिति* ॥ प्रतियोग्यसमसत्ताकस्यैवाभावस्य प्रतियोगिविरोधित्वादिति भावः । स्वाप्निकभावाभाववत् तदन्ययोरपि भावाभावयोस्समसत्ताकयोर्विरोध इति पक्षाभिप्रायेणाह—*तत्संभवेति* ॥ *गौरवादिति* ॥ ब्रह्मस्वरूपत्वावश्यकत्वादिति शेषः । बाध्यत्वाभावस्य ब्रह्मस्वरूपत्वे तादृशाभावत्वं ब्रह्मणि कल्प्यम्, अन्यथा तु तादृशाभावः, तत्र च तत्त्वमिति गौरवम् । यदि वैयात्याद् उक्तगौरवाङ्कुरः, तदा यथाश्रुतार्थ एव पर्यवसानमाह—*अतिरिक्तेति* ॥ *त्वया=भावाभावयोरपि निर्धर्मकत्वव्याघातकत्वरूपयुक्तितौल्यं वदता । *कोऽपि दोषः=कथमप्यतिव्याप्तिः । यदि च बाध्यत्वरूप एव बाध्यत्वाभावरूपसत्त्वस्याभावः, तदा तस्य ब्रह्मणि संबन्धगन्धस्याप्यभावाद् नातिव्याप्तिरिति बोध्यम् । *असत्त्वाभावः=सत्त्वेन प्रतीयमानत्वम् । तच्च सत्त्वप्रकारकवृत्तिविषयत्वम्, तत्तु विकल्पाख्यां वृत्तिमादायालीकेऽपि संभवतीत्यभिमानिनामुक्तमिथ्यात्वलक्षणस्यालीकेऽतिव्याप्तया दुष्टतेति दूषणं परिहर्तुमुपन्यस्यति—*यत्त्विति* ॥ सत्त्वेन प्रतीयमानत्वं नोक्तरूपम्, किन्त्वन्यदेव, इति नातिव्याप्तिरित्याह—*सत्त्वेनेति*॥ नचैवमपि—अलीके प्रातीतिकसत्तातादात्म्यमादायातिव्याप्तिर्दुर्वारेति—शङ्क्यम् ; तस्याः पूर्वं

---

( १ ) *एतेन*—बाध्यत्वाभावस्य ब्रह्मरूपत्वे तदभावो ब्रह्मण्यस्त्येव, इत्यतिव्याप्तिः ; अभावस्य स्वात्मकेऽप्यधिकरण आधाराधेयभावाभ्युपगमात्, 'घटाभावो घटाभाववान्' 'भूतलं घटाभाववदि'त्यादौ, अभाववत्पदवाच्यत्वापत्तिश्च, अभावेन तदाश्रयत्वादिना ब्रह्मणः सविशेषत्वापत्तिश्च, ब्रह्मभिन्नत्वे तेनैवाद्वैतहानिरित्यादि—*परास्तम्* ; तादात्म्यस्य वृत्त्यनियामकत्वात्, 'घटे रूपमि'त्यादिप्रत्ययानां भ्रमरूपत्वमेव, इति गुरुचन्द्रिकायामुपपादितत्वात्, लघुचन्द्रिकापक्षेण क्वचिद् वृत्तिनियामकत्वाङ्गीकारेऽपि निर्गुणश्रुतिविरोधेन ब्रह्मणि बाध्यत्वाभावादिधर्मकल्पनाऽसम्भवेन तदनभ्युपगमात् । एवं च ब्रह्माभिन्नत्वपक्षावरणे न कोऽपि दोष इति ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*यत्तु*—सत्त्वेन प्रतीयमानत्वरूपोऽसत्त्वाभावोऽलीकेऽप्यस्ति, इति तद्धटितं लक्षणमयुक्तमिति, *तन्न* ; सत्त्वेन प्रतीयमानत्वस्य सत्तादात्म्य-तद्वदन्यतरत्वपर्यवसितस्य निवेशसम्भवात् । नचैवम्—सत्प्रतियोगिकत्वविशिष्टतादात्म्यस्य ब्रह्मण्यसम्भवाद् ब्रह्मवारणस्य तेनैव सम्भवेन सत्त्वाभावोपादानं व्यर्थमिति—वाच्यम् ; परमते घटाद्यात्मकसत्प्रतियोगिकत्वविशिष्टतादात्म्यस्य सद्रूपघटत्वादौ सम्भवेन प्रपञ्चस्य सद्रूपाद् व्यावृत्त्यसम्भवेनानुमाने सिद्धसाधनात्, विजातीयव्यावृत्त्यसम्भवेन लक्षणालाभाच्च ॥

---

## विट्ठलेशीयटिप्पणी

निरासात् । सत्त्वेन प्रतीयमानत्वस्य सत्तादात्म्यवत्त्वरूपत्वे सत्तादात्म्येऽव्याप्तिः ; अनवस्थाभयेन तत्र सत्तादात्म्यान्तरानुपगमात्, इत्यतः सत्तादात्म्यघटितान्यतरत्वनिवेशः । यदि तु घटाभावे घटाभावस्येव सत्तादात्म्ये स्वस्यैव सत्तादात्म्यस्य स्वरूपसंबन्धेन वृत्तिः स्वीक्रियत इत्युक्तं स्मर्यते, तत्रोक्तान्यतरत्वानिवेशोऽपि न क्षतिरिति बोध्यम् । *एवम्=उक्तान्यतरत्वरूपस्यासत्त्वाभावस्य निवेशे । सत्प्रतियोगिकत्वोपलक्षिततादात्म्यस्य संबन्धतया संयोगस्येव द्विष्ठस्य ब्रह्मण्यपि संभवाद् 'विशिष्टे'त्युक्तम् । यद्यप्युक्तोपलक्षिततादात्म्यघटितलक्षणे न सत्त्वाभाववैयर्थ्यम् ; तथाप्युक्तविशिष्टघटितलक्षणेऽपि तत्सार्थक्यं संभवतीत्यभिप्रायेण समाधत्ते—*परमत इति* ॥ *घटात्मकेति* ॥ इदमुपलक्षणम्—घटत्वादिरूपसत्प्रतियोगिकत्वविशिष्टतादात्म्यस्य । सद्रूपघटादावित्यपि बोध्यम् । *सद्रूपाद् व्यावृत्तिः= सद्रूपत्वविरोधिमिथ्यात्वसिद्धिः । *नन्वेवमपि* लक्षणे तद्वैयर्थ्यं दुरुद्धरम्, इत्यत आह—*विजातीयेति* ॥ अयं भावः—व्यावर्तकमेव हि लक्षणम् । व्यावर्तकत्वं च लक्ष्यीभूतपक्षधर्मिकेतरभेदानुमितिस्वरूपयोग्यत्वम् । तच्च लक्ष्यवृत्तित्वे सतीतरभेदव्याप्यत्वम् । मिथ्यात्वलक्षणस्य चोभयमते लक्ष्यं व्यवस्थाप्यानिर्वचनीयताकं शुक्तिरजतादिकम् । तत्र च प्रकृतलक्षणेन हेतुभूयेतरभेदोऽनुमेयः । एवं च यदि सत्प्रतियोगिकत्वविशिष्टतादात्म्याधिकरणत्वघटितं सत्त्वाभावाघटितं लक्षणम्, तदा तस्य परमते घटत्वादिसद्रूपसाधारणतया घटत्वादावितरभेदव्यभिचारित्वाद् न तादृशानुमितिस्वरूपयोग्यत्वम् । इतरपदार्थश्चात्र सदसती, तदुभयभिन्नस्यैवात्र शुक्तिरजतादेर्लक्ष्यभूतपक्षरूपत्वात्, घटत्वादेः सद्रूपत्वे विवादेऽपि व्यभिचारसंशयस्य दुर्वारत्वात् । सत्त्वाभावघटितलक्षणादरे तु तादृशलक्षणवति दृष्टान्ते परेणापि सदसद्रूपेतरभेदस्यैवाङ्गीकार्यत्वेन घटत्वादौ च तादृशलक्षणरूपहेतावपि विवादेन तद्व्याप्यत्वघटितं स्वरूपयोग्यत्वमक्षतमिति ॥

*अत्र* परमतेऽपि शुक्तिरूप्यमेकं प्रातिभासिकं पक्षीकृत्यापरेण तेन रज्जुसर्पादिदृष्टान्तेनोक्तलक्षणरूपहेतुना सदसद्रूपेतरभेदः साधनीयः, न त्वितरसामान्यभेदः ; रज्जुसर्पादौ व्यभिचारात्, नापि प्रातिभासिकसामान्यं पक्षीकृत्य तदितरसामान्यभेदः साध्यः ; अन्वयदृष्टान्ताभावेनान्वयव्याप्तेरग्रहात्, घटत्वादेः सत्त्वे विवादेन दृष्टान्तत्वासंभवात्, व्यतिरेकव्याप्तेश्चानुमानाङ्गत्वानुपगमादिति बोध्यम् । एतत्सूचनायैव—'इतरे'त्यनुक्त्वा 'विजातीये'त्युक्तमिति दिक् ॥

---



न्यायामृतसौगन्ध्यम्

ब्रह्मणो भावरूपधर्मानाश्रयत्वेऽप्यभावरूपधर्माश्रयत्वेन सत्यत्वादिधर्मवत्त्वमिति—*निरस्तम्*; अभावेन तदाश्रयत्वादिना च ब्रह्मणस्सविशेषत्वापत्तेः, 'अभावरूपप्रवृत्तिनिमित्तस्य सत्त्वात्, अभाववत्पदवाच्यत्वापत्तेश्च ॥

---

सौगन्ध्यविमर्शः

भावाद्वैतवादिमते तु ब्रह्मणोऽभावेन सविशेषत्वमिष्टमेव, अभाववत्पदवाच्यत्वं तु भावरूपत्वाद् ब्रह्मणि न सम्भवति; अथवा कल्पितं तदपि स्वीक्रियत इति न दोषः। सर्वथा तु सदसद्विलक्षणत्वरूपमिथ्यात्वं न दुष्टमिति—सुस्थम् ॥

---

सिद्धिव्याख्या

सद्वैलक्षण्यरूपधर्मस्याप्यनङ्गीकारात्, सदसद्रूपत्वं बाधितम्, इति तदादायार्थान्तरानवकाशाच्च। नच—देश-काल-भेदेन घटादावेव सदसद्रूपत्वं इष्टमिति—वाच्यम्; तथापि यत्र यदा यस्य सद्रूपत्वम्, तस्य तत्रैव तदैवासत्त्व-रूपस्यादृष्टेरिति दिक् ॥

---

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः
न्यायामृताद्वैतसिद्ध्योः प्रथममिथ्यात्वविचारः ॥



# अथ द्वितीयमिथ्यात्वविचारः

### अद्वैतसिद्धिः

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

"नेह नानाऽस्ती'त्यादिश्रुत्यर्थे विवदमानं प्रति साध्यान्तरमाह—*प्रतिपन्नेत्यादि*॥ *प्रतिपन्नम्=स्वप्रकारकधीविशेष्यो यः *उपाधिः=अधिकरणम्, तन्निष्ठो यस्त्रैकालिकनिषेधः=अत्यन्ताभावः, तत्प्रतियोगित्वमित्यर्थः ।

### सिद्धिव्याख्या

*प्रतिपन्नोपाधाविति* ॥ असत्त्वव्यावर्तनायेदं विशेषणम् । प्रागभावादिप्रतियोगित्वमादायांशतः सिद्धसाधनवारणाय—*त्रैकालिकेति* ॥ *ननु*—विवरणे आपणादिनिष्ठस्यैव पारमार्थिकरजतस्य स्वरूपेण शुक्त्यादिरूपप्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रतियोगित्वस्योक्तत्वात् तद्वदेव प्रपञ्चस्य प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वसाधनस्य सत्यत्वेऽप्युपपत्त्याऽर्थान्तरम्, सम्बन्धान्तरेण स्वसमवायदेशनिष्ठत्रैकालिकनिषेधप्रतियोगित्वाच्च सिद्धसाधनम्—इति चेत्, *न* ; सर्वत्र प्रतिपन्नोपाधौ प्रतिपत्तिविषयीभूतसकलसम्बन्धेन स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य केवलान्वय्यत्यन्ताभावप्रतियोगित्वस्य वा विवक्षितत्वात् । नचैवं विवरणे सिद्धसाधनमर्थान्तरं वा सत्यत्ववादिनोद्भावयितुं शक्यते ; तेन केवलान्वय्यत्यन्ताभावप्रतियोगिनस्तदप्रतियोगिनश्च प्रतिपत्तिविषयीभूतसकलसम्बन्धेन स्वरूपेणासत्त्वस्यैवाङ्गीकारात् । नचैवम्—'प्रतिपन्नोपाधावि'ति व्यर्थविशेषणम्, 'सर्वत्रे'त्यनेनैव तल्लाभादिति—वाच्यम् ; 'प्रतिपन्नोपाधावि'त्यनेनैव तस्य विवक्षितत्वादिति ध्येयम् । *ननु*—त्रैकालिकनिषेधः किं तात्त्विकः ? उत प्रातीतिकः ?

### विट्ठलेशीयटिप्पणी

*प्रतीति* । *निराकर्तुमित्यर्थः(१) । शशविषाणाद्यसद्व्यावृत्त्यर्थं प्रतिपन्नत्वमुपाधिविशेषणम् । तदुभयं व्याचष्टे—*प्रतिपन्नमित्यादि* ॥ *प्रतिपत्तिः=ज्ञानम् । तद्विषयतायाः केवलान्वयितया स्वशून्यतद्विषयत्ववन्निष्ठाभावप्रतियोगित्वमादाय घटादौ सिद्धसाधनम्, अतः पूरयति—*स्वप्रकारकेति* ॥ स्वम्=मिथ्यात्वेनाभिमतम् । नच—तन्तोरपि स्वप्रकारकभ्रमविषयतासंभवादुक्तदोषतादवस्थ्यम्, तादृशप्रमाविवक्षणे सिद्धान्ते कपालादेरपि घटादिभ्रमं प्रत्येव विषयतयाऽसंभवापत्तिरिति—वाच्यम् ; स्वप्रकारकप्रमाविषयत्वेन पराभिमतत्वस्य विवक्षितत्वादिति भावः । *वस्तुतस्तु*—स्वप्रकारकत्वोपादानं तुच्छातिव्याप्तिवारणाय । नच—'असद् नृशृङ्गम्' इति विकल्परूपप्रतीतिमादाय सा दुर्वारेति—वाच्यम् ; प्रकारतायां सत्त्वावच्छिन्नत्वस्यासद्वृत्तित्वस्य वा निवेशात् । धीविषयत्वं तु यथाश्रुतमेव । तेन 'सर्वत्रे'ति पूरणपरपूर्वग्रन्थेन न विरोधः । उप-समीप आधीयतेऽस्मिन्नित्युपाधिरिति व्युत्पत्त्यभिप्रायेण व्याचष्टे—*उपाधिरधिकरणमिति* ॥ प्रतिपन्नपदे निष्ठार्थविषयताया विशेष्यतारूपत्वलाभायेदम्, अधिकरणत्वं

---

( १ ) सप्तम्यन्तपदसमभिव्याहृतनञोऽत्यन्ताभावबोधकत्वस्यैव व्युत्पत्तिसिद्धत्वाद् "नेह नाने"ति श्रुतेरत्यन्ताभावघटितमिथ्यात्वसमर्पण एव सामर्थ्याद् द्वितीयमिथ्यात्वमत्यन्ताभावघटितमेव निर्वचनीयमित्यपि "नेहे"ति श्रुतिनिर्देशेन सूचितम्, इति 'अत्यन्ताभावघटितमेव मिथ्यात्वं वक्तव्यमि'ति 'निर्बन्धाभावाच्चे'ति न्यायभास्करोक्तमपि परास्तम्, इति ॥

विट्ठलेशीयटिप्पणी

तु न घटकम् ; अव्यावर्तकत्वात् ॥ *ननु* त्रैकालिकनिषेधो भेदोऽपीत्यतो व्याचष्टे—*त्रैकालिकनिषेधोऽत्यन्ताभाव इति ॥

*ननु*—त्रैकालिकनिषेधपदेनात्यन्ताभावविवक्षणे प्रपञ्चाभावस्य कालिकाव्याप्यवृत्तितामादायार्थान्तरवारकस्य त्रैकालिकत्वरूपविशेषणस्य त्रैकालिकपदेन पूर्वं लब्धस्याप्यलाभप्रसङ्गः, निषेधपदोपस्थाप्याभावे त्रैकालिकपदेन भेदव्यावर्तकविशेषणालाभेन त्रैकालिकनिषेधपदेनात्यन्ताभावविवक्षाया असंभवश्च। नच—त्रैकालिकपदस्य सदातनः, निषेधपदस्य चान्योन्याभावभिन्नभावरूपः संसर्गाभावोऽर्थः, इति मत्वा नित्यसंसर्गाभावार्थकात्यन्ताभावपदेन त्रैकालिकनिषेधपदस्य विवरणं युज्यते, उक्तशङ्काद्वयाप्रसरादिति—वाच्यम् ; कपालादिनिष्ठभेद-ध्वंसादिप्रतियोगित्वमादाय सिद्धसाधनं स्यात्, अतः—'त्रैकालिके'त्युत्तरपङ्क्तिपर्यालोचनेन निषेधपदार्थेऽभावत्वावच्छिन्ने त्रैकालिकपदेनैव भेद-ध्वंसादिवारकविशेषणलाभ इति प्रतीतेः, तस्य चासंभव इत्युक्तत्वादिति—चेत्, *न* ; मिथ्यात्वघटकाभावस्य व्याप्यवृत्तितया कालानवच्छिन्नत्वपक्षे(१) त्रैकालिकपदस्यावच्छिन्नवृत्तिकान्यत्वावच्छिन्ने लक्षणाया आवश्यकत्वेन तस्यैवान्योन्याभावभिन्नत्वमन्तर्भाव्य तद्घटितधर्मावच्छिन्ने लक्षणोचिता। निषेधपदस्यान्योन्याभावभिन्नार्थस्य पदद्वये लक्षणापत्त्या तस्याभावत्वावच्छिन्नमात्रार्थकतया युक्तत्वादित्यभिप्रायात्। प्रकृते विवरणभूतात्यन्ताभावपदार्थघटकं नित्यत्वमप्यवच्छिन्नवृत्तिकान्यत्वमेव। ध्वंसादेरपि कालावच्छिन्नवृत्तिकत्वाद् व्युदासः(२)। विप्रतिपत्तिव्याख्यावसरे तु व्याप्यवृत्तेः सर्वकालानवच्छिन्नत्वमुपगम्य त्रैकालिकपदं सदातनरूपयथाश्रुतार्थपरतया व्याख्यायैकस्य निषेधपदस्यैव लक्षणया संसर्गाभावार्थकतया व्याख्यानं कृतम्, इति न कश्चित् पूर्वापरविरोधोऽपीत्यलम् ॥

*नन्वेवम्*—त्रैकालिकत्वस्य निवेशे 'नन्वि'त्यादिमूलशङ्काया असङ्गतिः ; प्रातिभासिकस्य व्यावहारिकस्य च ज्ञानबाध्यत्वेन ज्ञानोत्तरकालेऽसत्त्वेन त्रैकालिकत्वासंभवात्, त्रैकालिकनिषेधपदेनात्यन्ताभावमात्रविवक्षणे तु तत्सङ्गतिः स्फुटैवेति—चेत्, *न*; त्रैकालिकत्वं हि भूतादित्रिविधसंसारकालिकत्वमेव(३) ; तत्त्वज्ञानोत्तरं कालस्यैवासत्त्वात्। तथाच ब्रह्मज्ञानमात्रबाध्यस्यापि प्रातिभासिकस्य वक्ष्यमाणत्वात् प्रपञ्चाभावस्य प्रातिभासिकत्वेऽपि ब्रह्मज्ञानमात्रबाध्यत्वोपगमेन व्यवहारकालाबाध्यत्वेन त्रैकालिकत्वनिर्वाहः। एवं च व्यावहारिकत्वशङ्काऽपि न। अत्र प्रातिभासिकत्वव्यावहारिकत्वरूपद्वैविध्यं तूल-मूलाज्ञानकल्पितत्वाभ्यामिति ध्येयम् ॥

---

(१) एतत्पक्षे कालिकाव्याप्यवृत्तिमदत्यन्ताभावप्रतियोगितामादाय सिद्धसाधनप्रसक्तिरेव नास्ति, एवमपि निरवच्छिन्नविशेषणतासम्बन्धावच्छिन्नकालवृत्तित्वरूपस्योक्तविधत्रैकालिकत्वस्य, भावस्य निरवच्छिन्नविशेषणतासम्बन्धावच्छिन्नवृत्तेरप्रसिद्धया घटरूपघटाभावाभावे त्रैकालिकत्वस्याभावेन तत्प्रतियोगित्वमादाय घटाभावे लक्षणसमन्वयासम्भवादव्याप्तिः, अभावाभावस्यातिरिक्ततामताश्रयणं तु न सम्भवति ; स्वाप्नगजात्मकात्यन्ताभावप्रतियोगितामादायैव मिथ्यात्वस्य समर्थनात्। एवं स्वप्नगजाभावेऽप्यव्याप्तिरिति सूचितमित्यादिशङ्काः प्रसरन्ति। तासां तु समाधानमभावाभावात्मकभावस्वरूपस्य निरवच्छिन्नविशेषणतासम्बन्धावच्छिन्नत्वाङ्गीकाराद् न दोष इति ॥

(२) तादात्म्यसम्बन्धस्य भेदप्रतियोगितावच्छेदकत्वं यथा मतान्तरे प्रसिद्धम्, इति परेषां सिद्धसाधनमात्मनश्चार्थान्तरम्, न तथा त्रैकालिकत्वस्य परमतेऽपि ध्वंसे प्रसिद्धिः, इति न त्रैकालिकत्वविशिष्टध्वंसप्रतियोगितामादायार्थान्तरम्, इत्युक्तार्थान्तरापादकन्यायभास्करवचनमपि न संगतमिति सूचितम् ॥ इति ॥

(३) कालिकाव्याप्यवृत्तेः पूर्वकालिकत्वविशिष्टघटाभावादेस्तु पूर्वकालावच्छेदेन घटवत्यभावाद् न सदातनत्वम्, इति तादृशाभावप्रतियोगितामादायार्थान्तरप्रसक्तिर्न भवति। *एतेन*—कालत्वव्यापकत्वरूपत्रैकालिकत्वविवक्षणेऽपि न निस्तार इति न्यायभास्करोक्तम्— *परास्तम्* ; सर्वकालावच्छेदेन घटवति सर्वकालावच्छेदेन तदभावसाधनपक्षाभिप्रायेणैव तादृशस्य व्याख्यानस्य कृतत्वादिति ॥

### न्यायामृतम्

न द्वितीयः ; त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानेः, प्रातिभासिकत्वे सिद्धसाधनात्, व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वेनार्थान्तरात्,

### अद्वैतसिद्धिः

*ननु*—प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानिः, प्रातिभासिकत्वे सिद्धसाधनम् ।

### तरङ्गिणी

'सर्वस्मिन् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमि'ति द्वितीयपक्षं दूषयति—*न द्वितीय इति* ॥ *अद्वैतहानेरिति* ॥ उपलक्षणमेतत्—तव मते रूप्यमिथ्यात्वस्य व्यावहारिकत्वपक्षे तात्त्विकात्यन्ताभावप्रतियोगित्वस्य रूप्येऽभावात् साध्यवैकल्यं च । रूप्यमिथ्यात्वस्य तात्त्विकत्वे तद्बोधकस्य प्रत्यक्षादेस्तत्त्वावेदकत्वापत्तिरिति च बोध्यम् ।

(सि०) *ननु* प्रपञ्चनिषेधाधिकरणीभूतब्रह्ममात्रत्वात्, प्रपञ्चनिषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वमिति—चेत्, *मैवम्* ; प्रपञ्चभ्रमार्थमधिष्ठानब्रह्मस्फुरणस्यावश्यकतया ब्रह्माभिन्नप्रपञ्चनिषेधस्यापि प्रकाशे प्रपञ्चभ्रमासम्भवात् । नच—इदंत्वाधिष्ठानप्रकाशेऽपि प्रपञ्चनिषेधत्वादिना न प्रकाश इति—वाच्यम् ; तव मते प्रपञ्चनिषेधत्वादेरपि ब्रह्ममात्रत्वात्, अन्यथा निर्विशेषत्वहानिप्रसङ्गादिति ॥ *सिद्धसाधनादिति* ॥ अत्र साध्यवैकल्यमपि बोध्यम् ॥ *व्यावहारिकत्वेऽपीति* ॥ घटादितुल्यतया प्रपञ्चनिषेधस्यापि बाध्यत्वम् ; अन्यथा दृश्यत्वादेस्तत्रैव व्यभिचारः स्यादित्यर्थः ॥

### न्यायामृतकण्टकोद्धारः

*न द्वितीय इति* ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमिति पक्षो नेत्यर्थः । *त्रैकालिकनिषेधस्येति* ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कपालादिनिष्ठभेद-ध्वंसादिप्रतियोगित्वमादाय सिद्धसाधनं स्यात्, अतः-'त्रैकालिकेति' । अद्वैतहानिः='नेह नाने'-त्यादिश्रुतिबोधितस्य ब्रह्मणि दृश्यसामान्याभावस्य विरोधः । *सिद्धसाधनमिति* । 'कपालादौ घटो नास्ती'त्यादिभ्रमे

### न्यायामृतसौगन्ध्यम्

नापि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम् ; त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानेः 'कपालादौ घटो नास्ति', इत्यादिभ्रमे प्रातीतिकस्यात्यन्ताभावस्य विषयत्वेन प्रातिभासिकत्वे सिद्धसाधनात्, व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वेनार्थान्तरात्, अद्वैतश्रुतेरतत्त्वावेदकत्वापाताच्च तत्प्रतियोगिनोऽप्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वं स्यात् ॥

### सिद्धिव्याख्या

आहोस्विद् व्यावहारिकः ? इति त्रिधा विकल्पनं मनसि निधायाह—*नन्विति* ॥ *अद्वैतहानिरिति* ॥ तथाच ततो भीतेन त्वया त्रैकालिकनिषेधस्य तात्त्विकत्वं नाङ्गीकर्तव्यमिति ध्येयम् । द्वितीये त्वाह—*प्रातिभासिकत्व इति* ॥ आगन्तुकदोषप्रयुक्तभानस्य इत्यर्थः । तथाच घटवति घटप्रतियोगिकनिषेध इव प्रपञ्चवति ब्रह्मण्यन्यत्र वा तत्प्रतियोगिकनिषेध आगन्तुकदोषप्रयुक्तभानरूपाध्यास एव त्वन्मते पर्यवसितः, इति प्रपञ्चे तादृशनिषेधप्रतियोगित्वं साधयतस्तव न तत्र स्वाभिमतमिथ्यात्वसिद्धिः । अत एव प्रपञ्चसत्त्ववादिना मिथ्यात्वं

### विट्ठलेशीयटिप्पणी

अद्वैतहानाविष्टापत्तिशङ्कां निरस्यति—*नेहेति* ॥ विरोधः = अनुपपत्तिः । *कपालादाविति* ॥

न्यायामृतम्

अद्वैतश्रुतेरतत्त्वावेदकत्वापाताच्च, तत्प्रतियोगिनोऽप्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वापत्तेश्च ।

अद्वैतसिद्धिः

व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधितयाऽर्थान्तरम्, अद्वैतश्रुतेरतत्त्वावेदकत्वं च, तत्प्रतियोगिनः प्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वं च स्यादिति—चेत्, *न* ;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रातीतिकस्यात्यन्ताभावस्य विषयत्वेन सिद्धसाधनमित्यर्थः । *व्यावहारिकत्वे=ब्रह्मज्ञानबाध्यत्वे । *तात्त्विकसत्त्वाविरोधितया=प्रतियोगिनः प्रपञ्चस्याबाध्यत्वेऽपि तदधिकरणे सम्भाविततया । *अर्थान्तरम्=प्रपञ्चे सत्यत्वविरोधिमिथ्यात्वसिद्धिरूपात् प्रकृतानुमानप्रयोजनादन्यस्य साध्यसिद्धिमात्ररूपप्रयोजनस्य सिद्धिः । *अद्वैतश्रुतेः="नेह नाने"त्यादिश्रुतेः । *अतत्त्वावेदकत्वम्=बाध्यविषयकत्वम् । *तत्प्रतियोगिनः=व्यावहारिकात्यन्ताभावप्रतियोगिनः । *पारमार्थिकत्वमिति* ॥ समानसत्ताकयोर्भावाभावयोर्विरोधादभावस्य व्यावहारिकत्वे, प्रतियोगिनः प्रातिभासिकत्वासम्भवे पारमार्थिकत्वमेव बलात् स्यादिति भावः ॥

सिद्धिव्याख्या

बाधकस्तं प्रति सिद्धसाधनमर्थान्तरोद्घाटनं वा दुष्करमिति भावः । तृतीयं दूषयति—*व्यावहारिकत्वेऽपीति* ॥ *तस्य बाध्यत्वेनेति* ॥ घटादितुल्यतया प्रपञ्चनिषेधस्यापि निषेधबाध्यत्वम् ; अन्यथा दृश्यत्वादेस्तत्रैव व्यभिचारः स्यादित्यर्थः । *तात्त्विकसत्त्वाविरोधितयेति* ॥ त्वया समसत्ताकयोरेव विरोधस्वीकारादिति भावः । *अर्थान्तरमिति* ॥ व्यावहारिकप्रतियोगिमति व्यावहारिकतदत्यन्ताभावसाधने बाधोऽपि बोध्यः ; तृतीयपक्षे दूषणान्तरमाह—*अद्वैतश्रुतेरिति* ॥ तत्रैव दूषणान्तरमाह—*तत्प्रतियोगिन इति* ॥ निषेधप्रतियोगिन इत्यर्थः । *ननु*—किं पारमार्थिकत्वेऽप्रातिभासिकत्वे सति व्यावहारिकनिषेधप्रतियोगित्वं प्रयोजकमभिप्रेतम् ? किं वा विमतः प्रपञ्चः, पारमार्थिकः, अप्रातिभासिकत्वे सति व्यावहारिकनिषेधप्रतियोगित्वादिति साधनमभिप्रेतम् ? नाद्यः ; त्वदुक्तप्रयोजकं विनाऽपि ब्रह्मणः पारमार्थिकत्वेन व्यभिचारात्, न द्वितीयः ; व्याप्तिग्रहस्थलाभावात् । न च—अन्वयव्याप्तिग्रहस्थलाभावेऽपि निर्धर्मकब्रह्मणो व्यतिरेकव्याप्तिग्रहस्थलत्वं सम्भवतीति—वाच्यम् ; पारमार्थिकत्वरूपसाध्याभावस्यासम्भवेन तस्य व्याप्तिग्रहस्थलत्वायोगात्, निर्धर्मकत्वेनैव हेत्वभावानधिकरणत्वाच्चेति—चेत्, *न* ; रूप्यादेरेव व्यतिरेकदृष्टान्तत्वसम्भवात् । रूप्यादौ पारमार्थिकत्वाभाववति व्यावहारिकात्यन्ताभावप्रतियोगित्वस्य सत्त्वेन व्यतिरेकव्याप्तौ व्यभिचारवारणाय—'अप्रातिभासिकत्वे' इति विशेषणम् । शुक्तिरूप्यादौ चोक्ताप्रातिभासिकत्वरूपविशेषणविरहप्रयुक्तविशिष्टाभावोऽस्त्येव, इति न व्यभिचारः । न च—साध्यवति ब्रह्मणि हेतोर-

विट्ठलेशीयटिप्पणी

प्रातीतिकपदार्थाभ्युपगन्तृपरमत इत्यादिः । *ब्रह्मज्ञानबाध्यत्व इति* ॥ एवं च तात्त्विकत्वमबाध्यत्वम्, प्रातिभासिकत्वं ब्रह्मज्ञानान्यबाध्यत्वं बोध्यम् । ब्रह्मणि व्यावहारिकप्रपञ्चाभावस्यापि परेणानभ्युपगमात् तत्र विप्रतिपत्त्या संशयकोटितया जिज्ञासितत्वसंभवाद् अजिज्ञासिताभिधानरूपार्थान्तरासंभवाद् व्याचष्टे—*अर्थान्तरमिति* ॥ *प्रयोजनादिति* ॥ अर्थशब्दः प्रयोजनवाचीति भावः । *अतत्त्वम्=तद्धर्मिकतदभाववत्त्वम्, तदावेदकत्वं चोक्तश्रुतेरापद्यत इत्यत आह—*अतत्त्वावेदकत्वमिति* ॥ *बाध्यविषयकत्वम्=तद्विषयज्ञानजनकत्वम् । *भ्रमत्वम्= तत्करणत्वम्, व्यापारानुबन्धिनी वा विषयता । इदं च दूषणं प्रातिभासिकत्वपक्षेऽपि बोध्यम् । *प्रातिभासिकत्वासंभव इति* ॥ ब्रह्मज्ञानान्याबाध्यत्वादिति भावः । प्रपञ्चनिषेधस्य ब्रह्माभिन्नत्वं यदि भेदसहितम्, तदा प्रपञ्चेऽपि तादृशस्य ब्रह्माभेदस्य सत्त्वात् प्रपञ्चतुल्यतया तस्य व्यावहारिकत्वापत्तिः, अत

अद्वैतसिद्धिः

प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वाद् निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम् ॥

न्यायामृतकण्टकोद्धारः

अत्र कश्चित्—त्रैकालिकनिषेधस्य ब्रह्मरूपत्वात् तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ब्रह्माभिन्नत्वात्=ब्रह्मस्वरूपात्यन्ताभिन्नत्वात् । *निषेधस्य=प्रपञ्चात्यन्ताभावत्वविशिष्टतादात्म्यापन्नस्वरूपस्य । तथाचोक्तविशिष्टरूपेण निषेधस्य बाध्यत्वात् केवलरूपेण ब्रह्मात्यन्ताभेदाद् नाद्वैतहानिरिति भावः ॥

न्यायामृतसौगन्ध्यम्

*ननु*—प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वाद् निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम् ।

सिद्धिव्याख्या

भावादसाधारण्यमिति—वाच्यम्; वास्तवासाधारण्यस्य ततोऽप्यप्रतिबन्धकत्वात्। नहि साध्यवद्व्यावृत्तत्वमात्रेणासाधारणत्वम्, किन्तु सर्वनिश्चितसाध्यवद्व्यावृत्तत्वेन हेतोर्ज्ञानात्, ब्रह्मणस्त्वन्मतेऽज्ञेयत्वेन साध्यवत्तयाऽनिश्चयादिति भावः । प्रथमपक्षमादाय समाधत्ते—*प्रपञ्चेति* ॥ प्रपञ्चनिषेधाधिकरणीभूतं यद् ब्रह्म, तदभिन्नत्वाद् निषेधस्येत्यर्थः । *नाद्वैतेति* ॥ तथाच ततो निर्भीकेन मया त्रैकालिकनिषेधस्य तात्त्विकत्वमङ्गीकार्यमेव ॥

*ननु*—प्रपञ्चभ्रमार्थमधिष्ठानब्रह्मणः स्फुरणस्यावश्यकतया ब्रह्माभिन्नप्रपञ्चनिषेधस्यापि प्रकाशे प्रपञ्चभ्रमासम्भव इति—चेत्, *न* ; सत्त्वादिनाऽधिष्ठानाभिन्ननिषेधप्रकाशेऽपि प्रपञ्चनिषेधत्वादिनाऽप्रकाशनात् तत्सम्भवात् । नच—त्वन्मते प्रपञ्चनिषेधत्वादेर्ब्रह्मातिरिक्तत्वे निर्विशेषत्वहानिप्रसङ्गेन ब्रह्ममात्रत्वमेवेति—वाच्यम्; ब्रह्ममात्रत्वेऽप्यध्यासाधिष्ठानत्वादिना प्रकाशमानत्वेऽपि प्रपञ्चनिषेधत्वादिनाऽप्रकाशेन तस्मिन् प्रपञ्चभ्रमोपपत्तेः ॥

नच—ब्रह्मणो वियदादिभावरूपप्रपञ्चप्रतियोगिकत्रैकालिकनिषेधानतिरिक्तत्वे घटादिप्रतियोगिकत्रैकालिकनिषेधवदनुपलब्धिप्रमाणकत्वापातेन भावरूपत्वाभावप्रसङ्गः, भावप्रतियोगिकत्रैकालिकनिषेधस्यानुपलब्धिप्रमाणकत्वादिनियमादिति—वाच्यम्; निषेधसमसत्ताकप्रतियोगिकत्रैकालिकनिषेधत्वस्योपाधित्वेन तादृशघटप्रतियोगिकनिषेधस्यानुपलब्धिप्रमाणकत्वादिनियमेऽपि प्रपञ्चस्य निषेधभिन्नसत्ताकत्वेन तादृशप्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य तदभावेन तद्रूपब्रह्मणोऽप्यनुपलब्धिप्रमाणकत्वाभावेन भावरूपत्वोपपत्तेः ॥

नच—वियदादिप्रपञ्चकारणस्य ब्रह्मणो वियदाद्यभावत्वाङ्गीकारे तत्कारणीभूताभावस्य तत्प्रागभावत्वापत्त्या तदत्यन्ताभावत्वं न स्यात्; प्रागभावत्वरूपत्वे च प्रतियोगिनाश्यत्वापत्तिश्चेति—वाच्यम्; तार्किकमते दाहकारणीभूतप्रतिबन्धकाभावस्य दाहप्रागभावरूपत्वाभावेनोक्तनियमासिद्ध्याऽत्यन्ताभावत्वोपपत्तेः, प्रतियोगिनाश्यत्वायोगाच्च । नच—तत्कारणीभूततत्प्रतियोगिकाभावस्य तत्प्रागभावत्वमिति नोक्तदोष इति—वाच्यम्; अस्मन्मते ब्रह्मण्युक्तनियमासिद्ध्या व्यभिचारतादवस्थ्यात्, नाशप्रतियोगित्वस्योपाधित्वमपि । नच—निषेधस्य ब्रह्मानतिरिक्तत्वे त्रैकालिकत्वं विरुद्धम्, त्रिकालसङ्गरूपस्यासङ्गश्रुतिविरोधेन ब्रह्मण्यसम्भवादिति—वाच्यम्; कल्पितेन

विट्ठलेशीयटिप्पणी

आह—*ब्रह्मस्वरूपात्यन्ताभिन्नत्वादिति*॥ *यद्वा*—ब्रह्माभिन्नत्वं यदि भेदसहिष्णु, तदा ब्रह्मभिन्नस्य तात्त्विकवस्तुनः प्रपञ्चाभावस्य सत्त्वे कथं नाद्वैतहानिरिति ? अत आह—*ब्रह्मेति*॥ *ननु* एवं ब्रह्मणि प्रपञ्चाभावविशिष्टबुद्धेः—'नेह'-इत्यादिश्रुतिजन्याया अनुपपत्तिः, भेदस्यापि तत्र प्रयोजकत्वादित्यतो व्याचष्टे—*निषेधस्येति* ॥ *ननु* विशिष्टरूपस्य निषेधस्य निर्धर्मकब्रह्मस्वरूपात्यन्ताभेदस्यासंभवाद् उक्तविशिष्टबुद्ध्युपपत्तावपि कथं नाद्वैतहानिरिति ? अत आह—*तथाचेति* ॥ *बाध्यत्वादिति* ॥ उक्तरूपस्य प्रपञ्चरूपबाध्यवस्तुघटितत्वादिति भावः । *केवलरूपेण=निर्धर्मकब्रह्मरूपेण ॥ *ननु* तात्त्विकाभावप्रतियोगित्वे तात्त्विकत्वव्याहतिसिद्धावेव तेन तदापत्तिः दुष्करा, सैव तु नैव सिद्धा, अप्रयोजकत्वा-

### अद्वैतसिद्धिः

*नच* तात्त्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्त्विकत्वापत्तिः ;

### न्यायामृतकण्टकोद्धारः

नच—तात्त्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्त्विकत्वापत्तिरिति—वाच्यम् ; तात्त्विकाभावप्रतियोगिनि शुक्तिरूप्यादौ तात्त्विकत्वादर्शनात् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*तात्त्विकत्वापत्तिरिति* ॥ अन्यथा मिथ्याप्रतियोगिकत्वेनाभावस्यापि मिथ्यात्वापत्तिः, निरूपकस्य मिथ्यात्वे निरूप्यस्य सत्यत्वासम्भवात् । नहि शुक्तिरूप्यादेः साहश्याविकमप्रातीतिकम्, किन्तु

### सिद्धिव्याख्या

त्रिकालसङ्गरूपेण तेन सह वास्तवसङ्गाभावबोधकश्रुतेर्विरोधाभावात्, निषेधस्य त्रैकालिकत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्, नतु त्रिकालसङ्गित्वम्, इत्युक्त उक्तदोषाभावाच्च । नच—प्रागभावाप्रतियोगित्वादेर्नृश्रृङ्गा-द्यावतिव्याप्तिरिति—वाच्यम् ; नृश्रृङ्गादेर्धर्मिणोऽसत्त्वे तत्रोक्तत्रैकालिकत्वधर्मस्याप्यसत्त्वेनातिव्याप्त्यनवकाशात्, सत्सत्त्वे सत्यासत्त्वव्याहतेश्च ॥ *अत एव*—ध्वंसाप्रतियोगित्वरूपनित्यत्वस्य नृश्रृङ्गादिसाधारणस्य ब्रह्मादि-साधारणत्वायोगेनासल्लक्षणत्वप्रसङ्ग इति—*निरस्तम्* ; उक्तरीत्या तत्साधारण्याभावेन "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्युक्तसत्यत्वादिवत् सल्लक्ष्यत्वसम्भवात् । *अत एव*—प्रागभावप्रतियोगित्वरहितत्वादेर्वृत्तिमत्त्वेन वृत्तेश्च सङ्गत्वेनासङ्गत्वश्रुतिविरोधतादवस्थ्यमिति—*अपास्तम्* ; कल्पितसङ्गेन सह वास्तवसङ्गनिषेधकश्रुतेरविरोध-स्योक्तत्वात्, प्रमेयत्वस्य वृत्तिमत्त्वाङ्गीकारेण तेषामप्यात्माश्रयापत्तेः । *अत एव*—ब्रह्मणो ध्वंसाप्रतियोगित्व-सम्बन्धित्वेन ध्वंसविरहमात्ररूपत्वे नित्यत्वाभावप्रसङ्गः, प्रत्युत ध्वंसविरहात्मकत्वेन नित्यत्वपर्यवसितब्रह्मसम्बन्धवत्त्वेन प्रपञ्चस्यैव रूपसम्बन्धतया घटादे रूपित्ववद् नित्यत्वप्रसङ्ग इति—*निरस्तम्* ; उक्तरीत्या ध्वंसाप्रतियोगित्व-सम्बन्धित्वेन ध्वंसविरहमात्रत्वाभावेन नित्यत्वोपपत्तेः । न्यायमते नित्यघटत्वादिजातिसम्बन्धित्वेऽपि घटादेर्नित्यत्वा-भाववद् नित्यब्रह्मसम्बन्धित्वेऽपि प्रपञ्चस्यास्मन्मते नित्यत्वाभावोपपत्तेश्च ॥

*अत एव च*—ब्रह्मणः प्रपञ्चनिषेधरूपत्वे प्रपञ्चस्य वियत्त्वाद्यनन्तधर्मावच्छिन्नतया तन्निषेधात्मनो ब्रह्मणोऽप्य-नन्तत्वापत्तिः, प्रतियोगितावच्छेदकभेदेनात्यन्ताभावव्यक्तिभेदावश्यंभावादिति—*निरस्तम्* ; प्रतियोगिता-वच्छेदकभेदस्याभावचतुष्टयभेदकत्वेऽप्यत्यन्ताभावावान्तरभेदकत्वाभावात्, ब्रह्मणश्चात्यन्ताभावरूपत्वाङ्गीकारात् । न च—प्रागभावादावेकतापत्तिरूपबाधकेन प्रतियोगितावच्छेदकभेदस्याभावचतुष्टयभेदप्रयोजकत्वकल्पनसमये सामान्यतोऽ-त्यन्ताभावावान्तरभेदं प्रत्यपि प्रयोजकत्वं कल्प्यते, अतिप्रसङ्गादिबाधकाभावादिति—वाच्यम् ; 'प्रमेयघटो नास्ति' 'पृथुबुध्नोदराकारो नास्ती'त्यादिप्रतीत्या प्रमेयघटत्व-पृथुबुध्नोदराकारत्वादेरपि प्रतियोगितावच्छेदकत्वापत्त्या तद्भेदादेकस्यैव घटात्यन्ताभावस्य नानात्वापत्तेः । यदि च तत्र घटत्वरूपप्रतियोगितावच्छेदकैक्याद् न नानात्वमत्यन्ता-भावस्य, तदा प्रपञ्चत्वरूपप्रतियोगितावच्छेदकैक्याद् न नानात्वं तदभावरूपब्रह्मणोऽपि । *अत एव*—प्रागभावप्रति-योगित्वरहितत्वे सति ध्वंसप्रतियोगित्वरहितत्वस्य त्रैकालिकपदार्थस्य ब्रह्मानतिरिक्तत्वे प्रतियोगितावच्छेदकभेद-प्रयुक्तस्तद्भेदो दुर्वार—*इत्यपास्तम्* ; दत्तोत्तरत्वात् । तस्माद् वियदादिप्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य ब्रह्मानतिरिक्तत्वे बाधकाभावात् पारमार्थिकत्वेऽपि नाद्वैतहानिरिति भावः ॥

### विट्ठलेशीयटिप्पणी

शङ्काया दुर्वारत्वात्, इत्यत आह—*अन्यथेति* ॥ प्रपञ्चस्य तात्त्विकत्वाभाव इत्यर्थः । तस्य मिथ्यात्वेनेति शेषः । *अभावस्य=प्रपञ्चाभावस्य । *सत्यत्वासंभवादिति* ॥ यद् यन्निरूप्यम्, तत् तत्समानसत्ताकमिति व्याप्तेरिति भावः । इमां व्याप्तिमेव भ्रामयति—*नहीति* ॥ एवं चैतद्व्याप्त्याऽप्रयोजकत्वशङ्कानिरासेन प्रपञ्चाभावस्य तात्त्विकत्वोपगमे

न्यायामृतकण्टकोद्धारः

ननु—प्रपञ्चभ्रमार्थमधिष्ठानब्रह्मस्फुरणस्यावश्यकतया ब्रह्माभिन्नप्रपञ्चनिषेधस्यापि प्रकाशे प्रपञ्चभ्रमासम्भवः। नच—इदन्त्वादिना ब्रह्मप्रकाशेऽपि प्रपञ्चनिषेधत्वादिना न प्रकाश इति—वाच्यम्, तव मते प्रपञ्चनिषेधत्वादेरपि ब्रह्ममात्रत्वात्, अन्यथा निर्विशेषत्वभङ्गप्रसङ्गादिति—वाच्यम्; मन्मते ब्रह्मस्फुरणस्य साक्षिरूपत्वेन साक्षिरूपप्रकाशस्य भ्रमविरोधित्वाभावेन सत्यपि ब्रह्मस्फुरणे प्रपञ्चभ्रमसम्भवात्, अविद्यादेरिव प्रपञ्चमात्रस्यापि वेदान्तजन्यचरमान्तःकरणवृत्तिमात्रनिवर्त्यत्वादित्याह, *तन्न*; प्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य ब्रह्मरूपत्वे "नेह नाने"ति ब्रह्म-निषेधयोराधाराधेयभावप्रतीतिर्न स्यात्; आधाराधेयभावस्य भेदसापेक्षत्वात्। नच—'घटाभावे घटाभावः' इतिवदभेदेऽप्याधाराधेयभावोपपत्तिरिति—वाच्यम्; अभावस्य स्वरूपविशेषाभ्युपगमेन तत्र तथाभावेऽपि ब्रह्मणो निर्विशेषत्वाङ्गीकारेण तदनुपपत्तेः। किञ्च निषेधस्य प्रतियोगिघटितत्वेन सोपाधिकत्वाद् ब्रह्मणो निरुपाधिकत्वाद् विरुद्धधर्माधिकरणत्वेन निषेध-ब्रह्मणोरैक्यासम्भवः॥

ननु—प्रतियोगिनो निषेधोपलक्षणतया निषेधस्य ब्रह्मरूपत्वं भविष्यतीति—वाच्यम्, एवं हि सार्वज्ञ्य-सर्वकर्तृत्वादीनामपि सोपाधिकत्वेऽप्युक्तन्यायेन ब्रह्मस्वरूपत्वापत्तौ "यः सर्वज्ञः" इत्यादिवाक्यानामपि सत्य-ज्ञानादिवाक्यवत् तत्त्वावेदकत्वापत्तेः, (१)अखण्डार्थत्वहानेश्च॥

*यच्चोक्तम्*—साक्षिरूपप्रकाशस्य भ्रमाविरोधित्वेन सत्यपि ब्रह्मस्फुरणे प्रपञ्चभ्रमः स्यात्—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रातीतिकेन शुक्तिरूप्यादिना निरूपितत्वात् प्रातीतिकमेवेति भावः। उक्तविशिष्टरूपस्यैव मिथ्याप्रतियोगिनिरूपितत्वाद् मिथ्यात्वम्, केवलरूपस्य तु ब्रह्मण उक्तनिरूपितत्वाभावाद् न मिथ्यात्वम्। अत एव शुक्ति-

विट्ठलेशीयटिप्पणी

प्रपञ्चस्य तात्त्विकत्वापत्तेः संभाविततया तदभावस्य तात्त्विकत्वोपगमासंभव इति मूलशङ्काशय इति भावः। *नन्वेवम्* शुक्तिरजते व्यभिचारेणोक्तशङ्कासमाधानमसङ्गतम्; उक्तरीत्या प्रपञ्चे तात्त्विकत्वापत्तेर्दृष्टतयोक्तव्यभिचारेस्याकिञ्चित्करत्वात्, निरूप्यस्य निरूपकसमसत्ताकत्वनियमे शुक्तिरूप्यस्यातात्त्विकत्वेन तदभावस्याप्यतात्त्विकत्वेन तत्र तात्त्विकाभावप्रतियोगित्वरूपव्याप्यस्यैवाभावेन व्यभिचारासंभवाच्च, इत्याशङ्क्य समाधानभावमाह—*उक्तविशिष्टरूपस्यैवेति* ॥ प्रपञ्चाभावत्वविशिष्टरूपस्येत्यर्थः। *मिथ्यात्वमिति* ॥ इष्यत इति शेषः। *केवलरूपस्य=तादृशाभावत्वोपलक्षिताभावरूपस्य। *न मिथ्यात्वमिति* ॥ आपद्यत इति शेषः॥

*अयं भावः*—यद् येन रूपेण यन्निरूप्यम्, तत् तेन रूपेण तत्समानसत्ताकम्—इत्येव व्याप्तिः, न तु रूपाघटिता; अनया च व्याप्त्या न प्रपञ्चतात्त्विकत्वापत्तिप्रयोजकव्याप्त्यप्रयोजकत्वशङ्काभ्युदासासंभवः; प्रपञ्चस्य तात्त्विकत्वमनुपगम्य मिथ्यात्वोपगमेऽपि तन्निरूप्यतानवच्छेदककेवलरूपेण तदभावस्य मिथ्यात्वापत्तिविरहेण तात्त्विकत्वोपगमसंभवात् तत्प्रतियोगितया प्रपञ्चस्य तात्त्विकत्वापत्त्यसंभवात्। एवं शुक्तिरजते व्यभिचारोऽपि संभवत्येव; तस्य मिथ्यात्वेऽपि तन्निरूप्यतानवच्छेदकेन केवलचिद्रूपेण तदभावस्य तात्त्विकत्वोपगमसंभवेन तत्र तात्त्विकाभावप्रतियोगित्वरूपव्याप्यस्य सत्त्वात्, तात्त्विकत्वरूपव्यापकस्य चासत्त्वादिति। उक्तव्याप्तौ रूपनिवेशे युक्तिमाह—*अत एवेति* ॥ उक्तव्याप्तेः रूपघटितत्वादेवेत्यर्थः। तस्या रूपाघटितत्वे तु शुक्तिरूप्याभावस्य तस्येव प्रातीतिकशुक्तिरूप्यनिरूप्यत्वेन प्रातीतिकत्वे रूपान्तरेणापि तथात्वाद् व्यावहारिक-तात्त्विकत्वे न स्याताम्;

(१) लक्षणवाक्यानामपि वस्तुगत्याऽखण्डार्थत्वम्, वाच्यार्थविवक्षयैव सखण्डार्थत्वम्, सर्वज्ञत्वादिकं त्वौपाधिकमेवेति लघुचन्द्रिकायाम्—"अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादि'त्यत्र विवेचितमेवेतीष्टापत्तिरेवेयम्।

अद्वैतसिद्धिः

तात्त्विकाभावप्रतियोगिनि शुक्तिरजतादौ कल्पिते व्यभिचारात् ।

न्यायामृतकण्टकोद्धारः

इति, *तदपि न* ; साक्षिणः स्वसमानविषयकाज्ञानभ्रमविरोधित्वाभावे ज्ञानत्वमेव न स्यात्, तद्विरोधिन एव ज्ञानत्वात्, साक्षिविषये सुख-दुःखाद्यावज्ञान(१)भ्रमापत्तेश्च, अन्यथाऽन्धकाराविरोधिप्रकाशान्तरस्यापि कल्पनापत्तेः ; तस्माद् निषेधस्य न ब्रह्मरूपत्वम्, इति तात्त्विकत्वेऽद्वैतहानिः सुस्थैव । *व्यावहारिकत्व इति* ॥ अस्मिन् पक्षेऽर्थान्तरत्व-श्रुतेरतत्त्वावेदकत्व-प्रतियोगिपारमार्थिकत्वरूपाणि त्रीणि दूषणानि दृष्टानि ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रूप्याद्यभावोऽप्यधिष्ठानचिद्रूपोऽपि प्रातीतिकप्रतियोगिनिरूपितत्वविशिष्टरूपेणैव प्रातीतिकः, अधिष्ठानतावच्छेदकशुक्त्यवच्छिन्नरूपेण प्रातीतिकप्रतियोगिकत्वोपलक्षिताभावत्वविशिष्टेन व्यावहारिकः, तात्त्विकस्तु केवलचिद्रूपेणेत्याशयेन (२) समाधत्ते—*तात्त्विकेत्यादि* ॥ *व्यभिचारात्=यो यस्तात्त्विकस्वरूपाभावप्रतियोगी, स

न्यायामृतसौगन्ध्यम्

यद्वा—अतात्त्विक एवायं निषेधः ; अतात्त्विकत्वेऽपि न प्रातिभासिकः, किन्तु व्यावहारिकः । नच—

सिद्धिव्याख्या

*ननु*—प्रपञ्चस्तात्त्विकः स्यात्, तात्त्विकाभावप्रतियोगित्वात्, *इत्याशङ्कते—नचेति* ॥ शुक्तिरजतादौ

विट्ठलेशीयटिप्पणी

ब्रह्मज्ञानान्यबाध्यत्वरूपप्रातीतिकत्वस्य तद्बाध्यत्वविशिष्टबाध्यत्वरूपव्यावहारिकत्वेन, अबाध्यत्वरूपतात्त्विकत्वेन च विरोधात्, इति शुक्तिरूप्याभावत्वेनापि प्रातीतिकत्वानुपगम उक्तव्याप्तौ व्यभिचार इति भावः । *चिद्रूपोऽपीति* ॥ अनेन तात्त्विकत्वयोग्यतोक्ता । *निरूपितत्वेति* ॥ निरूपितत्वावच्छेदकेत्यर्थः । *विशिष्टरूपेणेति* ॥ प्रतियोगितासंबन्धेन शुक्तिरूप्यविशिष्टाभावत्वविशिष्टरूपेणेत्यर्थः । रूपघटितायां 'तथाचे'ति वक्ष्यमाणव्याप्तौ व्यभिचारासंभवाद्

---

( १ ) प्रपञ्चाधिष्ठानं शुद्धं चैतन्यम्, न तु प्रमातृचैतन्यात्मकं साक्षिचैतन्यम् । ततश्च शुद्धचैतन्यस्यैवाज्ञानाविरोधित्वाद् न प्रपञ्चभ्रमानुपपत्तिः, न वा सुखादीनां साक्षिभास्यानामज्ञानविषयत्वापत्तिः । तथाहि—

तत्रेदं प्रष्टव्यम्—सुखाभिव्यञ्जकं चैतन्यं साक्षिचैतन्यं वा ? उत चैतन्यमात्रं वा ? इति । आद्येऽनावृतचैतन्यस्यैव साक्षिपदार्थत्वात् तस्य चाज्ञानाविरोधित्वस्याद्वैतिभिरनङ्गीकारात् चिन्मात्रस्याज्ञानाविरोधित्वेऽपि तद्वेद्ये साक्षिचैतन्यमात्रवेद्ये च सुखादावज्ञानप्रसञ्जनं हि न क्षोदक्षमम् । तदुक्तमद्वैतसिद्धौ—"न ह्यज्ञानावच्छेदेन चित् प्रकाशते, येनाज्ञानावच्छिन्नचित्प्रकाश्यत्वेन 'सुखं न प्रकाशते' इति व्यवहार आपद्येत"—इति । तथाचानावृतचैतन्यस्यैव साक्षित्वात् तद्वेद्यत्वं सुखादीनां यदङ्गीक्रियते, न तर्हि 'सुखं न प्रकाशते' इति व्यवहारापत्तिरिति फलितम् ॥

चितोऽज्ञानाविरोधित्वं ह्यद्वैतिनां यदभिमतम्, तदिदं न साक्षिचैतन्यत्वेन, किन्तु स्वरूपेणैव । न ह्यावृतचैतन्यभास्यं सुखादिकमिति कस्यापि मतम् । *एतेन*—द्वितीयविकल्पोऽपि—परास्तः । न हि स्वरूपचैतन्यमात्रं साक्षीति केऽपि मन्यन्ते । तदुक्तमद्वैतसिद्धौ—"शुद्धब्रह्मातिरिक्तस्य बुद्ध्युपाधिकजीवातिरिक्तस्य च साक्षिणोऽभ्युपगमेन तत्पक्षोक्तदोषाभावात् । तथा चाविद्यावृत्तिप्रतिफलितचैतन्यं साक्षी"—इति । तथाच वृत्त्यवच्छिन्नचैतन्याभिन्नविषयावच्छिन्नचैतन्याध्यस्तघटादौ यथा नाज्ञानं वृत्तिकाले, एवं सुखादीनामपि वृत्त्यवच्छिन्नचैतन्याभिन्नसाक्षिचैतन्याध्यस्तानां नाज्ञानप्रसङ्गः ॥

इयमत्र सुखादीनां घटादिभ्यो वैलक्षण्यम्, यद् घटादिकमावृतचैतन्याध्यस्तं ततोऽज्ञानविषयः, सुखादिकं त्वनावृतचैतन्याध्यस्तं ततो नाज्ञानविषय इति । इदमावृतचैतन्याध्यस्तमिदमनावृतचैतन्याध्यस्तमिति तु फलबलकल्प्यम् । फलं च 'न जानामी'त्यनुभवः, तदभावश्च । तथाच घटादौ 'न जानामी'त्यनुभवान्यथानुपपत्त्याऽऽवृतचैतन्याध्यस्तत्वम्, सुखादौ च सुखवर्तमानतादशायां 'सुखं जानामी'त्येव प्रत्ययाद् अनावृतचैतन्याध्यस्तत्वं च कल्प्यते, इति न किञ्चिदनुपपन्नम् ॥

( २ ) एवं चाभावपारमार्थिकत्वपक्षेऽभावत्वविशिष्टतादात्म्यापन्नकेवलचिद्रूपस्यैवाभावस्य मिथ्यात्वघटकत्वात् स्वाश्रयगजादाव्याप्तिः, इति तत्र पक्षे तत्राव्याप्तिनिरूपणपरन्यायभास्करवचनं न संगतमिति सूचितम्—इति ।

अद्वैतसिद्धिः

अतात्त्विक एव वा निषेधोऽयम् । अतात्त्विकत्वेऽपि न प्रातिभासिकः, किंतु ? व्यावहारिकः । *नच*—तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वादर्थान्तरमिति—वाच्यम् ;

तरङ्गिणी

अत्र वदन्ति—(सि०) "अतात्त्विक एव निषेधोऽयम् । अतात्त्विकत्वेऽपि न प्रातिभासिकः, किन्तु

न्यायामृतकण्टकोद्धारः

*अत्र कश्चित्*—निषेधस्य बाध्यत्वेऽपि यत् प्रतियोगिपारमार्थिकसत्त्वोपपत्त्याऽर्थान्तरत्वमुक्तम्,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तात्त्विक इति व्याप्तौ व्यभिचारात् । तथाच 'निरूपकं निरूप्यतावच्छेदकविशिष्टसमसत्ताकमेवे'ति व्याप्तौ न क्षतिरिति भावः । *ननु*—तर्ह्येकाधिकरणे भावाभावयोरसमसत्ताकत्वाद् व्यावहारिकस्य घटादेः प्रकृतानुमानात् प्रातीतिकाभावो वाच्यः, तथाच सिद्धसाधनं तदवस्थम्, तस्मात् तात्त्विक एवाभावो वाच्यः, तत्राह—*अतात्त्विकत्वेऽपीति* ॥ अत्यन्ताभावत्वरूपेणाभावस्य प्रतियोगिनिरूप्यत्वात् तेनैव रूपेण प्रतियोगिविरोधित्वेन विरोधभङ्गार्थं प्रतियोगिभिन्नसत्ताकत्वमभावस्याकाङ्क्षितम्, तदस्वीकृत्य केवलब्रह्मरूपेण भिन्नसत्तास्वीकारस्य व्यर्थत्वेनाभावस्य ब्रह्मस्वरूपत्वस्वीकारो व्यर्थः ; भावाभावयोरेकाधिकरणे समसत्ताकत्वे तु न दोषः, इति स्वाप्नगज-तदभावदृष्टान्तेन वक्ष्यत इति भावः । *तात्त्विकसत्त्वाविरोधित्वात्=निषेधसत्तापेक्षया प्रतियोगिनोऽ-

सिद्धिव्याख्या

व्यभिचारेण दूषयति—*तात्त्विकेति* ॥ *अतात्त्विक एवेति* ॥ तथाच हेतोरसिद्धिः, न चाद्वैतहानिः ; तस्य ब्रह्मभिन्नत्वेऽपि मिथ्यात्वादिति भावः । *ननु*—अतात्त्विकत्वेऽपि तस्य प्रातिभासिकत्वे तत्पक्षोक्तदोषतादवस्थ्यम्, *इत्याशङ्क्याह—*अतात्त्विकत्वेऽपीति* ॥ तथाच न तत्पक्षोक्तदोषावकाश इति भावः । तर्हि कीदृक् ? इति पृच्छति—*किंत्विति* ॥ उत्तरमाह—*व्यावहारिक इति* ॥

*नच तर्हीति* ॥ निषेधस्य व्यावहारिकत्व इत्यर्थः । *निषेधस्य बाध्यत्वेनेति* ॥ मध्यस्थत्वे सत्यागन्तु-

विट्ठलेशीयटिप्पणी

व्याचष्टे—*व्यभिचारादिति* ॥ *व्याप्ताविति* ॥ प्रपञ्चतात्त्विकत्वापादिकायामिति शेषः । तथाच प्रपञ्चस्य तात्त्विकाभावप्रतियोगित्वेऽपि न तात्त्विकत्वापत्तिरिति भावः । *ननु* तथापि यद् यद्धर्मविशिष्टनिरूपकम्, तत् तद्धर्मविशिष्टसमानसत्ताकम् ; यथा शुक्तिरूप्याभावत्वविशिष्टनिरूपकं शुक्तिरूप्यं प्रातीतिकमिति व्याप्तौ न व्यभिचार इत्यत आह—*तथाचेति* ॥ प्रपञ्चतात्त्विकत्वापादकोक्तव्याप्तौ व्यभिचारे चेत्यर्थः । *न क्षतिरिति* ॥ प्रपञ्चाभावस्य केवलब्रह्मरूपेणैव तात्त्विकत्वोपगमात् तद्रूपस्य च निरूप्यतानवच्छेदकतया प्रपञ्चे केवलब्रह्मरूपविशिष्टनिरूपकत्वरूपस्य केवलब्रह्मस्वरूपाभावनिरूपकत्वरूपस्य वाऽऽपादकस्याभावेन तात्त्विकत्वपर्यवसिततत्समसत्ताकत्वापत्तेरसंभवादिति भावः । *तर्हि=प्रपञ्चाभावस्यातात्त्विकत्वोपगमे । अवतारिकोक्तातात्त्विकत्वपक्षं दूषयति—*अत्यन्ताभावत्वरूपेणेति* ॥ प्रपञ्चविशिष्टात्यन्ताभावत्वरूपेणेत्यर्थः । *प्रतियोगी=प्रपञ्चः । *विरोधभङ्गार्थम्=ब्रह्मरूपैकाधिकरणवृत्तित्वोपपत्त्यर्थम् । *प्रतियोगिभिन्नेति* ॥ प्रतियोगिसत्ताविलक्षणेत्यर्थः । तेनैव रूपेणेत्यनुषङ्गः । तथाच व्यावहारिकसत्ताकप्रपञ्चके ब्रह्मणि प्रपञ्चाभावत्वविशिष्टस्य व्यावहारिकसत्ताया असंभवात् पारमार्थिकसत्त्वं स्वीकार्यमित्यर्थः । *केवलब्रह्मरूपेण* ॥ प्रतियोगिविरोधितानवच्छेदकेनेति शेषः । *भिन्नसत्ता=पारमार्थिकसत्ता* ॥ *व्यर्थत्वेनेति* ॥ तावतापि प्रपञ्चाभावत्वविशिष्टस्य प्रपञ्चवद्ब्रह्मवृत्तित्वानुपपत्तेरिति भावः । पारमार्थिकत्ववैयर्थ्ये तन्निर्वाहकब्रह्मरूपत्वोपगमोऽपि नावश्यक इत्याह—*अभावस्येति* ॥ कथं तर्हि व्यावहारिकप्रपञ्च-तदभावत्वावच्छिन्नयोर्ब्रह्मरूपैकाधिकरणे सत्त्वम् ? अत आह—*भावाभावयोरिति* ॥ *न दोष इति* ॥ तयोर्विरोधस्यैवानुपगमादिति भावः ॥ *तात्त्विकसत्त्वाविरोधित्वम्=तात्त्विकवृत्तित्वम् । तत्र च न बाध्यत्वं हेतुः,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

धिकसत्तायामविघातकत्वात् । निषेधस्य पारमार्थिकत्वे सत्येव प्रतियोगिनोऽपारमार्थिकत्वमायाति ; भावाभावयोरेकाधिकरणे पारमार्थिकत्वासम्भवात्, अत एव स्वसमानाधिकरणस्वाधिकसत्ताकात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्, नतु स्वाधिकसत्ताद्यघटितमेव ; प्रातीतिकतादृशात्यन्ताभावप्रतियोगित्वेन ज्ञातेऽपि शुक्तित्वादौ मिथ्यात्वाव्यवहारादिति भावः ॥

न्यायामृतसौगन्ध्यम्

तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वादर्थान्तरमिति—वाच्यम् ; स्वाप्नार्थस्य स्वाप्न-

सिद्धिव्याख्या

कदोषाजन्यत्वस्य भवता व्यावहारिकशब्दार्थत्वेन स्वीकृतस्य ब्रह्मज्ञानबाध्यत्वस्वीकारादित्यर्थः । यथा जीव ईशप्रतियोगिकस्य व्यावहारिकभेदस्य स्वप्रतियोगिभूततद्भेदपारमार्थिकत्वाविरोधित्वम्, तथा प्रपञ्चप्रतियोगिकस्य व्यावहारिकनिषेधस्य बाध्यत्वावच्छेदेन स्वप्रतियोगिभूतप्रपञ्चपारमार्थिकत्वाविरोधित्वं सम्भवति । तथाच स्वसिसाधयिषितमिथ्यात्वशरीरप्रविष्टनिषेधस्य व्यावहारिकत्वमङ्गीकुर्वतस्तव स्वानभिमतार्थसिद्ध्याऽर्थान्तरमिति भावः । यदि निषेधस्य बाध्यत्वं स्वप्रतियोगिपारमार्थिकसत्त्वाविरोधि स्यात्, तदा स्वाप्नार्थस्य स्वाप्ननिषेधेन सह बाधो न स्यात् ; बाध्यमाननिषेधगतबाध्यत्वस्य तत्रापि स्वप्रतियोगिगतपारमार्थिकत्वाविरोधित्वस्य वक्तुं शक्यत्वात्, अतो

विट्ठलेशीयटिप्पणी

न वा तस्यार्थान्तरहेतुतेत्यतो व्याचष्टे—*तात्त्विकेत्यादि । *निषेधसत्तापेक्षया=प्रपञ्चनिषेधीयव्यावहारिकसत्त्वापेक्षया । *प्रतियोगिनः=प्रपञ्चस्य । *अधिकेति* ॥ व्यावहारिकसत्ताधिका च पारमार्थिक्येवेति भावः । *अविघातकत्वात्=तद्विरहाप्रयोजकत्वात् ; एकाधिकरणे प्रतियोगिनिष्ठं पारमार्थिकत्वाभावं प्रत्यभावनिष्ठपारमार्थिकत्वस्यैव प्रयोजकत्वादिति भावः । तदाह—*निषेधस्येति* ॥ *पारमार्थिकत्वम्=ब्रह्मवदबाध्यत्वम् । मौलमर्थान्तरं पूर्वं व्याख्यातमेवात्र बोध्यम् । *नन्वेवम्* ब्रह्मणस्तात्त्विकाभावासत्त्वेन तात्त्विकत्वात् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य प्रातीतिकाभावमादाय तात्त्विकब्रह्मसाधारणत्वात् तस्य मिथ्यापदार्थतावच्छेदकत्वानुपपत्तिः ; अतात्त्विक एव मिथ्यापदप्रयोगेण तात्त्विकावृत्तेर्धर्मस्यैव तदर्थतावच्छेदकत्वात्, इत्यत आह—*अत एवेति* ॥ प्रतियोग्यपारमार्थिकत्वेऽभावपारमार्थिकत्वस्यैव प्रयोजकत्वादेवेत्यर्थः ; अन्यथा ब्रह्मणोऽप्यपारमार्थिकत्वापत्तिः ; तत्साधारणस्य स्वाधिकसत्त्वाघटितस्यैव मिथ्यापदार्थतावच्छेदकत्वं च स्यादिति भावः । *स्वसमानेति* ॥ इदं च न पारमार्थिके संभवति ; तदधिकसत्ताया अप्रसिद्ध्या तदधिकसत्ताकस्य तदभावस्याप्रसिद्धेः, अतो नास्य मिथ्यापदार्थतावच्छेदकत्वानुपपत्तिरिति भावः । *ननु* स्वसमानाधिकरणाभावे पारमार्थिकाप्रतियोगिकत्वनिवेशेनापि मिथ्यात्वस्य तात्त्विकव्यावृत्तत्वसंभवात् स्वाधिकसत्ताकत्वनिवेशोऽनावश्यकः । नचैवम्—स्वसमानाधिकरणत्ववैयर्थ्यम् ; पारमार्थिकाप्रतियोगिकाभावप्रतियोगित्वस्य सिद्धावपि प्रपञ्चस्य पारमार्थिकत्वोन्मूलनसंभवेनार्थान्तरनिरासादिति—वाच्यम् ; स्वाधिकरणकपालाद्यवच्छेदेन पारमार्थिकत्वेऽपि घटादेः पारमार्थिकत्वाव्याप्यवृत्तितामुपगम्य स्वानधिकरणतन्त्वादौ तस्य प्रातीतिकतया तदवच्छेदेन तदभावस्य पारमार्थिकाप्रतियोगिकत्वोपगमसंभवेनार्थान्तरावारणात्, स्वसामानाधिकरण्यनिवेशे तु तस्य पारमार्थिकाप्रतियोगिकत्वे स्वाधिकरणावच्छिन्नत्वपर्यवसायितया घटादेः स्वाधिकरणावच्छेदेन पारमार्थिकत्वे तादृशतदभावतत्त्वाभावप्रतियोगित्वस्यासंभवेन तादृशप्रतियोगित्वसिद्धेः स्वाधिकरणावच्छेदेनापि पारमार्थिकत्वविरोधितयाऽर्थान्तरवारणादित्याशङ्कां निरस्यति—*नविवति—तादृशेति* ॥ स्वसमानाधिकरणपारमार्थिकाप्रतियोगिकेत्यर्थः । शुक्तित्वस्य व्यावहारिकत्वादिति भावः । सिद्धान्ते व्यावहारिकादितादृशाभावप्रतियोगित्वज्ञानदशायां शुक्तित्वेऽपि मिथ्यात्वव्यवहारस्येष्टतया 'प्रातीतिके'त्युक्तम् । *मिथ्यात्वाव्यवहारादिति*॥ तथाच तत्र तद्व्यवहारापत्तिः । स्वाधिकसत्ताकत्वनिवेशे तु प्रातीतिकाभावस्य व्यावहारिकत्वन्यूनसत्ताकतया तथा तत्र तद्व्यवहारापत्तिर्नेति भावः । एवं च प्रपञ्चनिषेधस्य व्यावहारिकत्वोपगमे यथाश्रुतमिथ्यात्वसाधने मूल

### अद्वैतसिद्धिः

स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात्। निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, किं तु ? निषेध्यापेक्षया न्यूनसत्ताकत्वम्; प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वम् ?

### तरङ्गिणी

व्यावहारिकः। नच—तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वादर्थान्तरमिति—वाच्यम्; स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनाद् निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वम्, प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वम् ?

### न्यायामृतकण्टकोद्धारः

तत्र तदा स्यात्, यदि निषेधबाध्यत्वं प्रतियोगिपारमार्थिकसत्त्वाविरोधित्वे तन्त्रं स्यात्, नैवम्। स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात्, किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वम्, प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधः ?

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*स्वाप्नार्थस्य=स्वप्न आरोपितस्य गजादेः। *स्वाप्ननिषेधेन=स्वप्न आरोपितमभावमादाय। *बाधदर्शनात् = मिथ्यात्वव्यवहारदर्शनात्। *न तन्त्रम् = न व्याप्यम्। *न्यूनेति* ॥ 'निषेधस्ये'त्यनुषज्यते। *प्रकृते = प्रपञ्च-तत्समानाधिकरणनिषेधयोः। *तुल्यसत्ताकत्वात् = व्यावहारिकत्वात्। *विरोधित्वम्=प्रपञ्चनिषेधस्य प्रपञ्चपारमार्थिकत्वव्याघातकत्वम् ॥

### न्यायामृतसौगन्ध्यम्

निषेधेन बाधदर्शनात्। निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वम्, प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वम् ?

### सिद्धिव्याख्या

निषेधस्य बाध्यत्वं प्रतियोगिपारमार्थिकसत्त्वाविरोधित्वे न तन्त्रमित्याह—*स्वाप्नार्थस्येति* ॥ तर्हि किं तन्त्रम् ? इति पृच्छति—*किं त्विति* ॥ उत्तरमाह—*निषेध्येति* ॥ तदर्थस्तु—*असमसत्ताकत्वम्=समसत्ताकनिषेधप्रतियोगित्वाभावः। एवञ्च फलितमाह—*प्रकृते चेति* ॥ चशब्दः समुच्चयार्थः। त्रैकालिकनिषेध-तत्प्रतियोगिनोः स्वाप्नार्थ-तन्निषेधयोश्च तुल्यसत्ताकत्वात् त्रैकालिकप्रपञ्चनिषेध-स्वाप्नार्थाभावयोर्गजस्य निषेध्यसमसत्ताकत्वस्य

### विट्ठलेशीयटिप्पणी

इयमर्थान्तराशङ्का, स्वाधिकसत्ताकत्वघटितमिथ्यात्वसाधने तु बाध एव दूषणमित्यवधेयम्। 'स्वाप्ने'त्यत्र चार्वाकवत् शैषिकोऽण्, इत्याशयेनाह—*स्वप्न आरोपितस्येति* ॥ निषेध-बाधपदयोरैकार्थ्यकल्पना 'निषेधेन बाधदर्शनादि'त्यभिहितम्, अतो व्याचष्टे—*स्वाप्ननिषेधेनेत्यादि* ॥ *आदाय=तत्प्रतियोगिनां स्वाप्नगजादीन् गृहीत्वा। *व्यवहारदर्शनादिति* ॥ तथाच निषेधबाध्यत्वस्य प्रतियोगिपारमार्थिकसत्त्वाविरोधित्वे तन्त्रत्वे तादृशव्यवहारानुपपत्तिः। स्वाप्नगजाभावस्य बाध्यत्वेन तत्प्रतियोगिनः स्वाप्नगजस्य पारमार्थिकत्वासंभवेन तदधिकसत्ताकत्वघटितमिथ्यात्वज्ञानासंभवादिति भावः। 'तन्त्रमि'त्यस्य व्यापकमिति नार्थः; व्यापकस्य व्याप्यानापादकतया निषेधबाध्यत्वेन प्रतियोगिपारमार्थिकसत्त्वाविरोधित्वापत्तेरसंभवेन शङ्कितुरनभिप्रेतत्वेनादूषणीयत्वात्, अतो व्याचष्टे—*न तन्त्रम्, न व्याप्यमिति* ॥ कस्येत्याकाङ्क्षायामाह—*निषेधस्येति* ॥ पारमार्थिकसत्त्वाविरोधित्वे तन्त्रमिति शेषः। *अन्वेषणमपि* स्वाप्नगज-तदभावयोः प्रातीतिकतया स्वाप्नगजे स्वाधिकसत्ताकत्वघटितमिथ्यात्वव्यवहारानुपपत्तिः, प्रकृतानुमानेन तत्र व्यभिचारश्च, एवं प्रपञ्च-तदभावयोर्व्यावहारिकतया प्रपञ्चेऽपि बाधश्च-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाच स्वान्यूनसत्ताकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं वाच्यम्, नतु स्वाधिकसत्ताघटितम् ; स्वाप्नार्थस्य स्वाप्न-तदभावघटितमिथ्यात्वव्यवहारानुपपत्तेः। नच—स्वप्ने प्रतीयमानेन व्यावहारिकात्यन्ताभावेनैव घटितं स्वाप्नार्थस्य मिथ्यात्वं प्रतीयते, तथाच।धिकसत्ताकात्यन्ताभावघटितमेव मिथ्यात्वं वाच्यमिति—वाच्यम् ; स्वप्ने व्यावहारिकस्य प्रत्यक्षज्ञानासम्भवाद् इन्द्रियाणामुपरतत्वाद् अभावस्यानुभूयमानप्रत्यक्षत्वस्याऽलापे स्वाप्नभावानामपि स्मरणादेर्वक्तुं शक्यत्वात्। तस्मात् तादृशाभावे प्रातीतिकत्वस्यावश्यं वाच्यत्वात् स्वान्यूनसत्ताकात्यन्ताभावघटितमेव मिथ्यात्वम् ॥

विट्ठलेशीयटिप्पणी

मिथ्यात्वाभावाद् बाधश्चेत्यत आह—*तथाचेति* ॥ *नतु स्वाधिकसत्ताघटितमिति* ॥ पारमार्थिके तदन्यूनसत्त्वाप्रसिद्धैयव तद्घटितोक्तप्रतियोगित्वस्य पारमार्थिकव्यावृत्तत्वसंभवेन मिथ्यापदार्थतावच्छेदकत्वसंभवाद् व्यावहारिकशुक्तित्वाभावस्य प्रातीतिकतया प्रतियोगिन्यूनसत्ताकत्वेनैव व्यावहारिकशुक्तित्वे स्वान्यूनसत्ताकत्वघटितमिथ्यात्वासंभवेन तद्व्यवहारापत्तिवारणसंभवाच्चेति भावः। *तथाच—अधिकेति* ॥ स्वान्यूनसत्ताकत्वापेक्षया स्वाधिकसत्ताकत्वस्य लघुत्वादिति भावः। तथाच प्रपञ्चाभावस्य व्यावहारिकत्व उक्तानुमाने बाधप्रसङ्गः, इत्यतः पारमार्थिकत्वमेव तस्य युक्तमिति शङ्काभिप्रायः। *ननु* स्वप्ने गजाद्यभावज्ञानं न प्रत्यक्षम्, किन्तु स्मरणं तत्, इत्यत आह—*अभावस्येति—शक्यत्वादिति* ॥ तथाच "अथ रथान्" इत्यादिस्वाप्नपदार्थसृष्टिप्रतिपादकश्रुतिविरोध इति भावः। *तस्मात्=स्वाप्नगजादिवत् प्रत्यक्षज्ञानविषयत्वानुरोधात्। *तादृशाभावे=स्वाप्नगजाद्यभावे। *वाच्यत्वादिति* ॥ स्वाप्नगजादेः स्वाधिकसत्ताकत्वघटितस्य मिथ्यात्वस्यासंभवेन तत्संभवायेति शेषः। *स्वान्यूनेति* ॥ तथाच स्वाप्नगजाद्यभाव-व्यावहारिकप्रपञ्चाभावयोः प्रतियोगिसमसत्ताकत्वेनान्यूनसत्ताकत्वात् तद्घटितमिथ्यात्वस्य स्वाप्नगज-व्यावहारिकप्रपञ्चयोः सत्त्वाद् न कोऽपि दोष इति भावः ॥

*ननु* स्वान्यूनसत्ताकत्वं नाम स्वसत्तान्यूनसत्ताकत्वस्याभावः। तच्च न्यूनत्वस्य दुर्वचत्वाद् दुर्वचम्। न च—पारमार्थिकत्वम्=अबाध्यत्वम्, व्यावहारिकत्वं ब्रह्मज्ञानान्यज्ञानाबाध्यत्वे सति बाध्यत्वम्, प्रातिभासिकत्वं ब्रह्मज्ञानान्यबाध्यत्वम्, एतेषां च परस्परं प्रतियोग्यनाघटितत्वेन यद्यपि परस्परज्ञानयोः प्रतिबध्य-प्रतिबन्धकभावः; तथापि प्रतियोगिज्ञानमुद्रयोत्तरज्ञानस्यैव पूर्वज्ञानं प्रति सः। इत्थं च स्वन्यूनत्वं स्वनिष्ठसत्ताज्ञानं प्रति या प्रतिबन्धकता प्रतिबध्यता वा, प्रतियोगिविषयया तदवच्छेदकप्रकारताश्रयत्वम्; 'प्रतियोगिविषये'त्यस्य स्वनिष्ठसत्ताप्रतियोगिभूतभाववृत्तिधर्मावच्छिन्नत्वं प्रकारतान्वयि अर्थः। अभावज्ञानत्वापेक्षया प्रतियोगिज्ञानत्वस्य न्यूनपदार्थघटितत्वेन तदवच्छिन्नप्रतिबन्धकतादिघटितस्य न्यूनपदार्थत्वौचित्यात्। तादृशप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकीभूतभाववृत्तिधर्मत्वं वा तत्; तादृशप्रकारताशून्यत्वं तादृशधर्मशून्यत्वं वा स्वान्यूनत्वम्, तद्वत्सत्ताकत्वं च स्वान्यूनसत्ताकत्वमिति—वाच्यम्, व्यावहारिकस्य स्वपदेनोपादाने तादृशन्यूनत्वस्य प्रातिभासिकसत्तायां प्रसिद्धस्य व्यावहारिकाद्यभावसत्तायामप्रसिद्धत्वेऽपि प्रातिभासिकस्य स्वपदेनोपादाने तन्निष्ठसत्ताज्ञानं प्रति तदितरसत्ताज्ञानस्याभावज्ञानमुद्रयैव प्रतिबन्धकतया, प्रतियोगिविषयया तदवच्छेदकविषयत्वाप्रसिद्ध्या तन्न्यूनत्वस्याप्रसिद्ध्या तदन्यूनसत्ताकत्वस्याप्रसिद्धिप्रसङ्गात्। नापि तादृशप्रकारतावच्छेदकीभूतधर्मवत्त्व-भावत्वोभयाभाववत्सत्ताकत्वं समुदायार्थः; पारमार्थिकस्य व्यावहारिकस्य वा स्वपदेनोपादाने व्यावहारिक-प्रातिभासिकसत्तयोर्निरुक्तोभयवत्त्वात्, प्रातिभासिकस्योपादाने सर्वास्वपि सत्तासु निरुक्तोभयाभाववत्त्वाद् न कोऽपि दोष इति—वाच्यम्; गौरवात्। उक्तप्रतिबन्धकत्वाद्यग्रहदशायां मिथ्यात्वग्रहासंभवेन मिथ्यात्वव्यवहारानुपपत्तेश्चेत्याशयेन पृच्छति—*ननु किमिति* ॥ व्यावहारिकप्रतियोगिकव्यावहारिकाभावस्य न्यूनसत्ताकत्ववारणाय

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—किमिदमभावस्य स्वप्रतियोगिन्यूनसत्ताकत्वम् ? उच्यते ; प्रातिभासिकनिष्ठं (१) व्यावहारिक-पारमार्थिकान्यतरप्रतियोगिकत्वम्, व्यावहारिकनिष्ठं पारमार्थिकप्रतियोगिकत्वं चेत्यन्यतरवत्त्वम् ; तथाच व्यावहारिक-पारमार्थिकान्यतरनिष्ठं यत् प्रातिभासिकाभावप्रतियोगित्वम्, यच्च पारमार्थिकनिष्ठं व्यावहारिकाभावप्रतियोगित्वम्, तदन्यद् यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, तदेव मिथ्यात्वम् । 'व्यावहारिकः पारमार्थिको वाऽयं घटः स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगी'ति ज्ञानकाल एतद्घटे मिथ्यात्वव्यवहाराभावात् 'पारमार्थिकमिदं पारमार्थिकान्यस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगी'ति ज्ञानकाल 'इदं मिथ्ये'ति व्यवहाराभावाच्च तदन्यदित्यन्तं प्रतियोगित्वविशेषणम् ॥

### विट्ठलेशीयटिप्पणी

प्रातिभासिकनिष्ठत्वनिवेशः । **नच**—व्यावहारिकनिष्ठत्वं व्यर्थम् ; प्रातिभासिकनिष्ठस्य पूर्वदलोपात्तत्वात्, पारमार्थिकप्रतियोगिकपारमार्थिकाभावानभ्युपगमाच्च व्यावर्त्याभावादिति—वाच्यम् ; पारमार्थिकप्रतियोगिकप्रातिभासिकाभावे प्रसिद्धपारमार्थिकत्वभ्रमसंभवेन वैज्ञानिकस्य तस्य प्रसिद्धत्वात्, अन्यथा पारमार्थिकब्रह्मप्रतियोगिकस्य व्यावहारिकस्याप्यभावस्य वास्तवस्याभावेनोत्तरदलस्यैव वैयर्थ्यापत्तेः । अत्र च निरुक्तान्यतरवद्भिन्नत्वमन्यूनसत्ताकत्वं पर्यवसितम् । तथाचोक्तप्रतियोगित्वान्यतरत्व-तद्घर्मिणोर्निवेशाद् गौरवम् ; अतो निरुक्तान्यतरत्वघटकप्रतियोगितयोर्भेदावेव मिथ्यात्वघटकप्रतियोगित्वे निवेश्य परिष्करोति—*तथाचेति* ॥ अत्र प्रथमप्रतियोगित्वान्यत्वानिवेशे पारमार्थिके ब्रह्मणि प्रातिभासिकाभावप्रतियोगित्वमादाय मिथ्यात्वप्रसङ्गः, अतस्तन्निवेशः । तन्निष्ठान्तानिवेशे स्वाप्नगजादौ स्वाप्नतदभावमादाय मिथ्यात्वानुपपत्तिः, अतस्तन्निवेशः, परन्तु व्यावहारिकनिष्ठत्वनिवेशो व्यर्थः ; व्यावहारिकघटादेर्मिथ्यात्वस्येष्टत्वात् प्रातिभासिकाभावप्रतियोगित्वज्ञानकालेऽपि तत्र प्रातिभासिकत्वाग्रहदशायामिष्टत्वादित्याशङ्क्य तत्प्रयोजनमाह—*व्यावहारिक इति* ॥ एवं चोक्तज्ञानकाल उक्ताग्रहदशायां घटादौ मिथ्यात्वव्यवहारोपपादनाय व्यावहारिकनिष्ठत्वं वैज्ञानिकम्, न तु वास्तवमिति बोध्यम् । एवं पारमार्थिकनिष्ठत्वानिवेशे ब्रह्मण्येव प्रातिभासिकाभावप्रतियोगित्वमादायातिव्याप्तिर्यद्यपि ; तथापि पारमार्थिकनिष्ठत्वमपि वैज्ञानिकमिति सूचनाय पारमार्थिकत्वग्रहदशायां घटादावेव तत्प्रयोजनमाह—*पारमार्थिको वाऽयं घट इति* ॥ पारमार्थिकस्य ब्रह्मणो व्यावहारिकाभावानभ्युपगमे द्वितीयप्रतियोगित्वान्यत्वप्रयोजनासंभवाद् ज्ञानातिव्याप्तिवारकतयैव तत् (२)सार्थकयति—*पारमार्थिकमिति* ॥ *इदम्*—घटादि । पारमार्थिकान्यस्य व्यावहारिकस्य प्रातिभासिकस्य च पूर्वदलेनैव वारणात् । अत्रापि पार-

---

( १ ) *ननु*—पारमार्थिके ब्रह्मणि प्रातिभासिकाभावप्रतियोगित्वमादाय मिथ्यात्वप्रसङ्गवारणार्थं प्रातिभासिकाभावप्रतियोगित्वान्यत्वनिवेशावश्यकत्वेऽपि निष्ठान्तविशेषणं व्यर्थम् ; स्वाप्नगजादावपि स्वसमानाधिकरणाभावप्रतियोगित्वं प्रातिभासिकाभावप्रतियोगित्वप्रतियोगिकप्रातिभासिकभेदवदेव विद्यते, इति नाव्याप्तिरिति—*चेत्*, पारमार्थिकब्रह्मनिष्ठप्रातिभासिकाभावप्रतियोगित्वेऽप्युक्तरीत्या प्रातिभासिकतादृशप्रतियोगित्वभेदसंपादनसम्भवेन मिथ्यात्वप्रसङ्गेन व्यावहारिकस्यैव तद्भेदस्य विवक्षणीयतया निष्ठान्तविशेषणावश्यकत्वात् । *नच*—व्यावहारिकभेदघटितमिथ्यात्वस्य स्वाप्नप्रत्यक्षानापत्तिरिति—*वाच्यम्* ; भेदस्योपलक्षणतयैव तत्र निवेशेन स्वाप्नप्रत्यक्षनिर्वाहात् । यदि तु ब्रह्मनिष्ठप्रातिभासिकाभावप्रतियोगित्वे तादृशप्रतियोगित्वान्यत्वभानं न सम्भवति, 'घटो न घटः' इतिवत् प्रातिभासिकाभावप्रतियोगित्वं न तादृशमिति ज्ञानस्याहार्यत्वादिति विभाव्यते, तदा स्वाप्नगजादावव्याप्तिवारणार्थं निष्ठान्तविशेषणमावश्यकमेवेति ॥

( २ ) प्रातिभासिकनिष्ठत्वं विनाशिनिष्ठत्वं चेति विशेषणं लक्षणत्वपक्षानुसारेण, साध्यनिर्वचनरूपत्वे तु स्वसमानाधिकरणाभावप्रतियोगित्वम्, अप्रातिभासिकस्वसमानाधिकरणाभाववत्त्वं चेति बोध्यम् । प्रातिभासिकपक्षकानुमाने प्रथमसाध्यम्, विनाशिपक्षकानुमाने तु द्वितीयमिति विवेकः । उक्तार्थसूचनायैव साध्यनिर्वचनप्रकरणेऽप्युक्तविशेषणविवक्षा । *एतेन* घटादीनां विनाशित्वेऽपि पारमार्थिकत्वानपायात् सिद्धसाधनमित्याद्याशङ्का अपि न्यायभास्करोक्ताः समाहिता इति मन्तव्यम् । शुक्तिरूप्ये साध्याभावः स्वसमानाधिकरणाभावोऽप्रातिभासिक एव, इति विनाशिपक्षकानुमाने दृष्टान्तत्वमप्युपपन्नमेव ; अत एव स्वाप्नदृष्टान्तपरित्याग इति सर्वमनवद्यमिति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—पारमार्थिकत्वममिथ्यात्वम् , तथाच मिथ्यात्वघटितं मिथ्यात्वमित्यात्माश्रयः ; ज्ञाननिवर्त्यत्वाभावरूपं पारमार्थिकत्वमेव घटकमित्युक्तावपि तद्घटितस्य प्रकृतमिथ्यात्वस्य मिथ्यालक्षणत्वानुपपत्तिः, ज्ञाननिवर्त्यत्वान्यवैयर्थ्यादिति—चेत् , *न* ; धूमप्रागभावादौ धूमादेरिव ज्ञाननिवर्त्यत्वस्योक्तप्रतियोगित्वे विशेषणत्वात् , अविनाशित्वरूपस्य पारमार्थिकत्वस्य प्रकृते निवेशसम्भवाच्च । प्रातिभासिकनिष्ठं(१) यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् , विनाशिनिष्ठं यद् अप्रातिभासिकस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वम् , तयोरन्यतरत्वं मिथ्यात्वमिति तु निष्कर्षः । शुक्तिरूप्यादेर्व्यावहारिकेऽत्यन्ताभावे मिथ्यात्वं नानुपपन्नम् ; तदधिकरणे व्यावहारिकस्य तदत्यन्ताभावस्य स्वीकारात् । नच—अन्यूनसत्ताकात्यन्ताभावघटितमिथ्यात्वस्वीकारे द्वयोरपि स्वाप्नयोर्भावाभावयोर्मिथ्यात्वनिश्चयापत्तिरिति—वाच्यम् ; स्वप्ने द्वयोरन्यूनसत्ताकाभावघटितोक्तप्रतियोगित्वनिश्चये तस्या इष्टत्वात् । अत एव जागरे तयोः परस्परात्मकताद्दशाभावघटितमेव मिथ्यात्वं प्रतीयते ; तयोरभावान्तरस्य व्यावहारिकस्य कल्पने गौरवात् ॥

विट्ठलेशीयटिप्पणी

र्थिकनिष्ठत्वं वैज्ञानिकम् , तेन नाप्रसिद्धिः, न चैतद्दोषताद्वस्थ्यमिति बोध्यम् । *विशेषणत्वादिति* ॥ स्वाभाववन्निष्ठप्रातिभासिकाभावीयप्रतियोगितान्यत्वसम्बन्धेनेत्यादिः । तथाच धर्मिभेदान्न वैयर्थ्यमिति भावः । *ननु* ज्ञाननिवर्त्यत्वम्=ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वम् , तद्घटकविरहस्य च प्रकृतमिथ्यात्वघटकविरहेणैक्यात् प्रतियोगितायाः प्रतियोगिस्वरूपतामते तदुभयघटकप्रतियोगितयोर्भेदस्य दुरूपत्वाच्च ज्ञाननिवर्त्यत्वरूपमिथ्यात्व-प्रकृतमिथ्यात्वरूपधर्मिणोः कथं भेद इति ? अत आह—*अविनाशित्वरूपस्येति* ॥ किं चोक्तप्रतियोगिताद्वयान्यतरत्वं एकं प्रातिभासिकनिष्ठं प्रतियोगित्वम् , अपरं च पारमार्थिकान्यनिष्ठं व्यावहारिक पारमार्थिकाभावप्रतियोगित्वमवशिष्यते । तथाच लाघवात् तदुभयान्यतरत्वमेवोचितम् ; पारमार्थिकान्यस्य पारमार्थिकत्वाघटितस्वेन विनाशित्वादिना रूपेण व्यावहारिक पारमार्थिकयोश्चाप्रातिभासिकत्वेन निवेशेऽन्योन्याश्रय-वैयर्थ्ययोः शङ्कैव नेत्याशयेन निष्कर्षमाह—*प्रातिभासिकनिष्ठमिति* ॥ *विनाशिनिष्ठमिति* ॥ व्यावहारिक-प्रातिभासिकान्यतरनिष्ठत्वनिवेशेनाप्युक्तशङ्कावारणसंभवेऽपि लाघवादिदमेवोक्तम् । अन्यत्र प्रपञ्चवृत्तित्वमुक्तम् ॥

*ननु* शुक्तिरूप्याभावस्य व्यावहारिकत्वेन प्रथमप्रतियोगित्वस्याभावात् तदभावस्य शुक्तिरूप्यत्वरूपतया प्रातिभासिकत्वेन द्वितीयप्रतियोगित्वस्याभावाच्च तत्रोक्तमिथ्यात्वमनुपपन्नम् , तत्राह—*शुक्तिरूप्यादेरिति* ॥ *तदत्यन्ताभावस्येति* ॥ शुक्तिरूप्यातिरिक्तस्येति भावः । अधिकसत्ताकाभावघटितमिथ्यात्ववादी शङ्कते—*नचेति* ॥ *भावाभावयोरिति* ॥ भावस्येवाभावस्यापि भावात्मकताद्दशाभावप्रतियोगित्वादिति भावः । *निश्चयापत्तिरिति* ॥ अन्यूनसत्ताकत्वनिवेशवादिनाऽपि स्वाप्नगजादेरेव मिथ्यात्वनिश्चय इष्यते, न तु तादृशतदभावस्येत्यभिमानः । यस्य यदा बाधग्रहः, तदैव तस्य मिथ्यात्वग्रह इति सर्वैरपि स्वीकार्यम् । स्वप्ने च यदि गजो नास्तीतिवद् गजाभावो नास्तीति बाधग्रहो नास्ति, तर्हि गजाभावस्य वस्तुतो गजात्मकताद्दशाभावप्रतियोगित्वेऽपि तदग्रहान्न तद्रूपमिथ्यात्वनिश्चयापत्तिः । *अथ* यदि तदा तादृशबाधग्रहोऽस्ति, तर्हि इष्ट एव तदा गजस्येव तदभावस्यापि मिथ्यात्वनिश्चयः, इत्याशयेन समाधत्ते—*स्वप्ने इति* । *ननु* स्वाप्नयोर्भावाभावयोः स्वप्ने बाधग्रहेऽपि न मिथ्यात्वनिश्चयः, अपि तु जागरे तयोर्व्यावहारिकाभावान्तरग्रहात्मकबाधग्रहे सत्येव, इत्यधिकसत्ताकत्वमेव निवेशयितुमुचितमित्याशङ्कां परिहरति—*अत एवेति* ॥ अन्यूनसत्ताकत्वस्यैव मिथ्यात्वे निवेशादेवेत्यर्थः । *तादृशाभावेति* ॥ अन्यूनसत्ताकाभावेत्यर्थः । *प्रतीयत इति* ॥ अधिकसत्ताकत्वनिवेशेन तत्प्रतीत्यनुपपत्तिरिति भावः । *गौरवादिति* ॥ जागरकालीने 'स्वाप्नो गजस्तदभावो वा नास्ती'ति प्रत्यये स्वाप्नौ गज-तदभावावेवभासेते, न व्यावहारिकावतिरिक्तौ

( १ ) *स्वेन* भासमानेऽपि पारमार्थिकत्वेऽस्य व्यावहारिकाभावप्रतियोगित्वाप्रसिद्ध्या साध्याप्रसिद्धिरिति न्यायभास्करोक्तं पराहतम् ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नच—स्वप्ने घटादेः प्रतीयमानस्य व्यावहारिकोऽभावः क्लृप्त एव, इति न गौरवमिति—वाच्यम्; यस्य चैत्रत्वादिजातिविशेषस्य जाग्रत्काले न ज्ञानं प्रत्यक्षम्, किन्तु स्वप्न एव नानाव्यक्तिषु तादृशव्यक्तीनां तादृशजात्यवच्छिन्नाभावस्य चैकाधिकरणे स्वाप्नपदार्थ एव स्वप्ने जागरे वा ज्ञानं जातम्, तदवच्छिन्नाभावस्य व्यावहारिकत्वेनाक्लृप्तत्वाद् व्यावहारिकत्वकल्पने गौरवेण तादृशजातिविशिष्ट-तदभावयोः परस्परात्मकाभाव-घटितस्यैव मिथ्यात्वस्योचितत्वात् ॥

## विट्ठलेशीयटिप्पणी

तदभावाविति स्वीकारेणोपपत्तेरिति भावः । पुनरधिकसत्ताकत्वनिवेशस्यावश्यकतानुपपत्तिपरिहारं शङ्कते—*नचेति* ॥ *क्लृप्त एवेति* ॥ घटस्य हि व्यावहारिक-प्रातिभासिक-स्वाप्निकघटसाधारणं वक्ष्यते । तथाच जागरे 'इदानीं घटो नास्ती'त्यादिप्रत्यये तादृशघटत्वावच्छिन्नप्रतियोगिताकः सकलघटाभावो व्यावहारिकः प्रतीयत इत्यस्य निर्विवादत्वात् । (१)किञ्च जागरे 'न इदानीं स्वाप्नो घटो नास्ती'ति चाक्षुषादिप्रत्ययो जायते, तत्र न स्वाप्नो घटाभावो भासते; तस्यानिन्द्रियकत्वेनैन्द्रियकज्ञाने भानानर्हत्वात्, तस्य जागरकाले बाधप्रसङ्गेन तद्बुद्धेर्भ्रमत्वापत्तेश्च, किन्तु स्वाप्नप्रतियोगिको व्यावहारिकोऽभाव एव भासते । 'स्वाप्नघटाभावो नास्ती'त्याकारे जागरिकचाक्षुषादिप्रत्यये न स्वाप्नघटरूपस्तदभावो भानयोग्यः; अनैन्द्रियकत्वात्, बाधापत्तेश्च, किन्त्वतिरिक्त एव तदभावो व्यावहारिकस्तत्र भासते । तथाच जागरे स्वाप्नपदार्थे मिथ्यात्वग्रहो व्यावहारिकाभावमादायैव संभवति, इति नान्यूनसत्ताकत्व-मावश्यकमिति शङ्काभावः । तथापि विषयविशेषेऽन्यूनसत्ताकत्वनिवेशं विनाऽगतिरेवेति भावेन समाधत्ते—*यस्येति* ॥ जातिविशेषस्येति* ॥ तुल्यसंस्थानरूपव्यञ्जकव्यक्त्यन्तरव्यापकजात्यन्तरराहित्येन जागरिकप्रातिभासिकावृत्तित्वेन च स्वाप्निक-जागरिकोभयविधप्रातिभासिकघटसाधारणघटत्वादिविलक्षणजातेरित्यर्थः । तादृशजातिविशेषस्य कचिदपि जागरे प्रत्ययः, तदवच्छिन्नसामान्याभावो व्यावहारिकः क्लृप्त एवेत्यत उक्तम्—*जाग्रत्काले न ज्ञानमिति*॥ इदमुपलक्षणम्—तादृशजात्यवच्छिन्ने द्रव्यत्वादिसामान्यधर्मवत्ताज्ञानमपि नेत्यस्य; अन्यथा सामान्यधर्मावच्छिन्नतदभावो व्यावहारिकः क्लृप्त एव स्यात् । सामान्यधर्मेणाज्ञाते तु तस्मिन् तत्सत्त्वे मानाभावात् सामान्याभावस्य न तत्प्रतियोगिकत्वमिति बोध्यम् । यद्व्यक्तेर्जागरे न प्रत्ययः, तद्व्यक्तेरपि केनचिद् व्यावहारिकेण सजातीयतया तथाविधसामान्य-धर्मावच्छिन्नतदभावः क्लृप्त एव, इत्यतो (२)जातिविशेषावच्छिन्नाभावानुधावनम् । जातित्वनिर्वाहाय—*नानेति* ॥ मिथ्यात्वनिर्वाहाय—*एकाधिकरण इति* ॥ जागरिकपदार्थस्य न स्वप्ने भानं संभवति, जागरे तत्सम्भवेऽप्यभावस्याधि-करणरूपतामते प्रकृताभावस्य व्यावहारिकत्वं स्यात्, अत उक्तम्—*स्वाप्नपदार्थ एवेति* ॥ स्वप्ने ज्ञान-मनुभवः, जागरे तु स्मरणमेव । तेन—जागरिकचाक्षुषादानुपपत्त्या स्वाप्निकभानासंभवेनोक्ताभावस्य व्यावहारिक-त्वेन क्लृप्तत्वापत्तिरिति—*परास्तम्* । ननु* (३) स्वप्न एव प्रतीयमानस्यापि तादृशाधिकसत्ताकाभावघटितमिथ्यात्व-निर्वाहानुरोधेन तस्य व्यावहारिकत्वं कल्प्यत इत्यत आह—*व्यावहारिकत्वकल्पन इति* ॥ *उचितत्वादिति* ॥ तथाचैतदर्थमन्यूनसत्ताकाभावघटितमेव मिथ्यात्वमावश्यकमिति भावः । मिथ्यात्वानुमाने प्रतिकूलतर्कं शङ्कते—

( १ ) किं चेत्यादिना वर्णितशङ्काभाव एव न्यायभास्करेऽपि दोषत्वेनोक्तः, इत्युक्तशङ्कासमाधानेनैव तस्यापि समाधानं वर्णितप्रायमेवेति मन्तव्यम् ।

( २ ) *एतेन* द्रव्यत्वादिसामान्यधर्मावच्छिन्नाभावः क्लृप्त एव, इति स्वाप्निकाभावस्य व्यावहारिकत्वमेवेति न्यायभास्करोक्तिः *पराहता* ॥

( ३ ) *ननु* उक्तजातिविशेषावच्छिन्ने तादृशाभावघटितमिथ्यात्वनिर्वचनानुरोधेन तदवच्छिन्नाभावान्तरं व्यावहारिकं कल्प्यत इति (क)पुस्तक-पाठः ।

अद्वैतसिद्धिः

*नच*—निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिरिति—वाच्यम् ; तत्र हि निषेधस्य

तरङ्गिणी

नच—निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिरिति—वाच्यम् ; तत्र हि निषेधनिषेधे प्रतियोगिसत्त्व-

न्यायामृतकण्टकोद्धारः

*यच्च*—निषेधस्य निषेधे प्रतियोगिनस्सत्त्वापत्तिरिति, *तदपि न* ; तत्र हि निषेधनिषेधे प्रतियोगि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*निषेधस्य=प्रपञ्चाभावस्य । *निषेधे=प्रकृतानुमानेनात्यन्ताभावबोधने । *प्रतियोगिसत्त्वापत्तिरिति* ॥ निषेधापेक्षयाऽधिकसत्त्वस्य प्रतियोगिन्यापत्तिः । रजतादौ रजतत्वादिनिषेधस्य निषेधेन रजतत्वादेर्व्यावहारिकत्व-

न्यायामृतसौगन्ध्यम्

नच—निषेधस्य निषेधे प्रतियोगिनस्सत्त्वापत्तिरिति—वाच्यम् ; तत्र हि निषेधस्य निषेधे प्रतियोगि-

सिद्धिव्याख्या

स्वप्रतियोगिगतपारमार्थिकत्वविरोधित्वमस्त्येव, इति नार्थान्तरतेति भावः । अत एव जीव ईशप्रतियोगिकस्य व्यावहारिकभेदस्य स्वप्रतियोगिभूततद्भेदगतपारमार्थिकत्वाविरोधित्वमप्युपपद्यते ; निषेध्यापेक्षया न्यूनसत्ताकत्वस्य भेदे सत्त्वेन तत्प्रतियोगिकभेदे तदपेक्षया न्यूनसत्ताकत्वस्याविरोधित्वप्रयोजकस्य सत्त्वादिति द्रष्टव्यम् ॥

नच—स्वप्नदृष्टार्थस्य(१) जाग्रत्यबाधानुभवाद्व न तस्य बाध्यत्वम्, येन तत्साधारणं बाध्यताप्रयोजकं कल्पनीयं स्यात् ; न हि स्वप्नदृष्टत्वमात्रेण बाध्यत्वम्, आत्मादेरपि बाधापत्तेरिति—वाच्यम् ; बाध्यताप्रयोजकतुल्यसत्ताकत्वे(२) विद्यमाने सति तस्यापि बाधावश्यंभावेन 'स्वाप्नार्थ-तत्प्रतियोगिकाभावौ बाधिताबि'त्यनुभवबलेन बाधानुभवस्य भ्रमत्वकल्पनावश्यंभावादिति ॥ *ननु*—प्रतियोगि-तन्निषेधयोरुभयोरपि व्यावहारिकत्वाङ्गीकारे तुल्यसत्ताकत्वप्रयुक्तविरोधादिदानीमन्यतरमात्रसत्त्वप्रसङ्ग इति शङ्कते—*नचेति* ॥ अन्यतरनिषेधेऽन्यतरसत्त्वस्यर्थं प्रदर्शयन् प्रकृते नान्यतरसत्त्वमिति परिहरति—*तत्र हीत्यादिना* ॥

विठ्ठलेशीयटिप्पणी

*मूले—*नचेति* ॥ निषेधपदस्याभावबोधकवाक्य-वाक्यसाधनकाभावबोधान्यतरपरत्वे प्रकृतासङ्गतिः ; मिथ्यात्वानुमाने तादृशनिषेधाभावात्, अतो व्याचष्टे—*निषेधस्येत्यादि* ॥ मिथ्यात्वानुमानेनाद्वैतसिद्धये प्रपञ्चमिव तदभावमपि पक्षीकृत्य मिथ्यात्वसाधनादिति भावः । 'प्रतियोगिसत्त्वापत्तिरि'त्यत्र प्रतियोगिसत्त्वपदं न प्रतियोगिसत्त्वपरम् ; अभावाभावस्य प्रतियोग्यतिरिक्ततामते ध्वंस-प्रागभावयोरत्यन्ताभावविरोधितामते च प्रतियोगिसत्त्वाद्व्याप्यतया तद्बोधकमानेन तदापत्तेरसंभवात्, एतच्छङ्कासमाधानग्रन्थेन प्रपञ्चस्य तात्त्विकत्वमित्युपसंहारविरोधाच्चेत्यतो व्याचष्टे—*प्रतियोगीति* ॥ *प्रतियोगिनीति* ॥ तथाचात्र प्रतियोगिनि प्रपञ्चरूपे पक्षे ब्रह्मधर्मिकत्वाभावाभावबोधकप्रमाणकत्वमापादकीकृत्य ब्रह्मधर्मिकत्वाभावसत्ताऽधिकसत्ताकत्वमापादनीयम् । यद्व यद्धर्मिकत्वाभावाभावबोधकप्रमाणकम्, तत् तद्धर्मिकत्वाभावसत्ताऽधिकसत्ताकमिति व्याप्तेरिति भावः । तथाच प्रपञ्चस्यान्यूनसत्ताकाभावघटितमिथ्यात्वशून्यत्वापत्त्या तात्त्विकत्वापत्तिरिति पर्यवसितम् । उक्तव्याप्तिं दृष्टान्ते ग्राहयति—*रजतादाविति* ॥ व्यावहारिकेत्यादिः । द्वितीयनिषेधान्वयिधर्मिकत्वं सप्तम्यर्थः । *रजतत्वादिनिषेधस्य='नेदं रजतमि'ति भ्रमविषयस्य रजतभेदरूपरजतत्वाभावस्य ॥ *निषेधेन*=अभावबोधकेन 'नारजतमि'ति प्रमाणेन । रजतत्वान्वयिवैशिष्ट्यं तृतीयार्थः । *व्यावहारिकत्वसिद्धेः=सर्वसिद्धव्यावहारिकसत्ताकत्वस्य । *इत्यर्थ इति* ॥ 'प्रतियोगिन्यापत्तिरि'त्यनेनान्वेति । *उक्तापत्तिदूषणाय तन्मूलभूतोक्तव्याप्तौ व्यभिचारप्रदर्शनाय दृष्टान्तव्यभिचारनिरूपकाधिकरणघटकतापादकत्वतोरप्युक्तासत्ताकत्व-तदसत्त्वयोर्बीजभूतं विशेषं प्रपञ्चयति मूले—*तत्र हीति*॥ तत्रैव हीत्यर्थः । *निषेधस्य निषेधे=स्वाभाव-

(१) इयं हि शङ्का मनमाकिमिश्रीये सिद्धान्तयुक्तितया योजिता । (२) एतेनात्मनोऽपि मिथ्यात्वापत्तिः परिहृता ।

### अद्वैतसिद्धिः

निषेधे प्रतियोगिसत्त्वमायाति, यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते, निषेधमात्रं निषिद्ध्यते ; यथा रजते 'नेदं रजतमि'ति ज्ञानानन्तरम्—'इदं नारजतमि'ति ज्ञानेन रजतं

### तरङ्गिणी

मायाति, यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते, न निषेधमात्रं निषिद्ध्यते ; यथा रजते 'नेदं रजतमि'ति ज्ञानानन्तरम्—'इदं नारजतमि'ति ज्ञानेन रजतं व्यवस्थाप्यते, यत्र तु प्रतियोगि-निषेधयो-

### न्यायामृतकण्टकोद्धारः

सत्त्वमायाति, यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते, निषेधमात्रं निषिध्यते, यथा रजते 'नेदं रजतमि'ति ज्ञानानन्तरम्—'इदं नारजतमि'ति ज्ञानेन रजतं व्यवस्थाप्यते। यत्र तु प्रतियोगि-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सिद्धेरित्यर्थः। *प्रतियोगिसत्त्वम्=प्रतियोग्यमिथ्यात्वम्। *व्यवस्थाप्यते=प्रमीयते। *निषिध्यते=मिथ्यात्वेन निश्चीयते। *रजतम्=रजतत्वम्। *व्यवस्थाप्यते=अमिथ्यात्वेन निश्चीयते। स्वसमानाधिकरणस्य रजतभेदात्मकस्य रजतत्वात्यन्ताभावस्य प्रातीतिकत्वेनैव निश्चयाद् अन्यूनसत्ताकात्यन्ताभावघटितमिथ्यात्वाभाववत्त्वेन रजतत्वं निश्चीयत इति भावः॥

### न्यायामृतसौगन्ध्यम्

सत्त्वमायाति—यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते, निषेधमात्रं न निषिध्यते ; यथा—रजते 'नेदं रजतमि'ति ज्ञानानन्तरम्—'इदं नारजतमि'ति ज्ञानेन रजतं व्यवस्थाप्यते। यत्र प्रतियोगि-

### सिद्धिव्याख्या

तुल्यत्वादिति*॥ *नन्वेवमपि* त्रैकालिकनिषेधस्य बाध्यत्वे प्रतियोगिसत्त्वापत्तिर्दुर्वारा, नेदं रजतमिति रजतादौ ; यत्र हि प्रतियोगिसत्त्वं विना निषेधस्य निषेधोऽनुपपन्नः, तत्र निषेधस्य निषेधे प्रतियोगिसत्त्वमित्यपि सम्भवादिति—*चेत्, नैवम्* ; तथात्वे प्रागभावप्रतियोगिसत्त्वं विना प्रागभावस्य निषेधोऽनुपपन्नः ; इति ध्वंससमये प्रागभाव-प्रतियोगिनोरुभयोर्निषेधेऽपि प्रागभावप्रतियोगिनः सत्त्वापत्तेः॥

### विट्ठलेशीयटिप्पणी

आत्मबोधकप्रमाणावतारे। *प्रतियोगिसत्त्वम्=प्रतियोगिनः स्वाभावसत्ताधिकसत्ताकत्वम्। *आयाति=सर्वसिद्धं भवति। द्वितीयप्रतियोगिसत्त्वपदस्योक्तार्थकत्वे तद्घटितार्थपर्यायैक्येन पौनरुक्त्यं स्यात् ; 'यत्र निषेधमात्रं निषिध्यते' इत्यस्यैव समन्वितत्वात्, अतो व्याचष्टे—*प्रतियोगिसत्त्वमिति*॥ तृतीयप्रतियोगिसत्त्वपदस्य तु नेदं व्याख्यानम्। निषेधमात्रान्वयि 'निषिध्यते' इति पदस्य 'मिथ्यात्वेन निश्चीयत' इति व्याख्यानात्, मात्रपदेन प्रतियोगिन्यमिथ्यात्वस्यैव लाभेन तत्स्फुटीकरणाय मात्रपदघटितवाक्यस्थप्रतियोगिसत्त्वपदस्यैव प्रतियोग्यमिथ्यात्वपरतया युक्तत्वात्। *अन्ये तु*—'यथेति'शङ्का-तत्समाधानयोः प्रतियोगिताश्रितकत्वापत्ति तद्वारणपर्यवसायितया द्वितीयस्य प्रतियोगिसत्त्वपदस्य प्रतियोगिताश्रितकत्वमर्थः, तृतीयस्य स्वनिषेधापेक्षयाऽधिकसत्ताकत्वम्, 'निषिध्यते' इत्यस्य च प्रतियोग्यपेक्षया न्यूनसत्ताकत्वेन निश्चीयत इति—*वदन्ति*। व्यवस्थापनम्*=व्यवस्थितिजनकत्वम्प्रयोगः। तत्र निषेधबुद्धेः कर्तृत्वाऽन्वयो न सम्भवतीत्यतो व्याचष्टे—*व्यवस्थाप्यत इति*॥ 'निषिध्यते' इत्यस्याभावप्रतियोगित्वेन विषयीक्रियत इत्यर्थकत्वे नाऽसङ्गतिः ; 'नारजतमिदमि'ति बुद्ध्या प्रतियोगिनोऽपि तत्त्वेन विषयीकरणात्, अतो व्याचष्टे—*निषिद्ध्यत इति*॥ मूले *ज्ञानानन्तरम्=ज्ञानानन्तरम्। *रजतं* प्रतियोगिसत्ताकत्वम्।

अद्वैतसिद्धिः

व्यवस्थाप्यते । यत्र तु प्रतियोगि-निषेधयोरुभयोरपि निषेधः, तत्र न प्रतियोगिसत्त्वम् ; यथा ध्वंस-समये प्रागभाव-प्रतियोगिनोरुभयोर्निषेधे ॥

तरङ्गिणी

उभयोरपि निषेधः, तत्र न प्रतियोगिसत्त्वम् ; यथा ध्वंससमये प्रागभाव-प्रतियोगिनोरुभयोरपि निषेधे । एवं

न्यायामृतकण्टकोद्धारः

निषेधयोरुभयोरपि निषेधः, तत्र न प्रतियोगिसत्त्वम् । यथा ध्वंससमये प्रागभाव-प्रतियोगिनोरुभयो-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*प्रागभाव-प्रतियोगिनोरिति* ॥ *प्राक् = अज्ञातयोः, अभाव-प्रतियोगिनोरित्यर्थः । निषेधधीपूर्व-मारोपितयोरत्यन्ताभाव-प्रतियोगिनोरिति यावत् । तथाच घटध्वंसकाले कपालादौ प्राचीनतार्किकादिमते तत्र घटात्यन्ताभावस्य व्यावहारिकत्वास्वीकारेणारोपासम्भवात्—'इदं कपालं घटवद् न वे'ति संशयरूपस्यारोप-

न्यायामृतसौगन्ध्यम्

निषेधयोरुभयोरपि निषेधः, तत्र न प्रतियोगिसत्त्वम् ; यथा—ध्वंससमये प्रागभाव-प्रतियोगिनोरुभयोर्निषेधे ।

सिद्धिव्याख्या

ननु—तृतीयप्रकाराभावे कथं नियमोऽभ्युपगम्यते ? प्रागभावादौ तु दैवम्, इति न प्रागभावप्रतियोगिनः सत्त्वम् ; तृतीयप्रकारस्य ध्वंसस्यापि सम्भवादिति—वाच्यम् ; तर्हि प्रकृतेऽपि "प्रपञ्चोपशमम्"(१) इति तृतीयप्रकारस्य सम्भवात् । तस्य चारोपितप्रतियोगिकस्याधिष्ठाने प्रतीयमान-श्रुतिबोधितध्वंसस्यापि तृतीयप्रकारस्य सम्भवात् । तस्य चारोपितप्रतियोगिकस्याधिष्ठाने प्रतीयमान-स्याधिष्ठानमात्रत्वात्, तन्मते न प्रतियोगिनः पारमार्थिकसत्त्वमिति समानं तुल्यम् । उक्तं च—"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति ॥

विट्ठलेशीयटिप्पणी

'इदं नारजतमि'ति ज्ञाने रजतभिन्नभेदो भासते, स च रजतत्वरूप एव, इति 'रजतमि'त्यसङ्गतम्, अतो व्याचष्टे—*रजतमिति* ॥ *ननु* 'नारजतमि'ति बुद्ध्या रजतभेदस्य बाधेऽपि रजतत्वं कथममिथ्यात्वेन निश्चीयत इति ? अत आह—*त्वेति* ॥ *त्वम्=रजतत्वम्* ।

मूले—*निषेधयोः=अभावयोः* । *निषेधः=मिथ्यात्वनिश्चयः* । *न प्रतियोगिसत्त्वम्=न प्रतियोगि-तात्त्विकत्वम्* । प्रागभावपदस्य यथाश्रुतार्थकत्वे दूषणस्य वक्ष्यमाणत्वात्, ध्वंससमयेऽभाव-प्रतियोगिनोरप्रसक्तौ निषेधानुपपत्तेः, विवक्षितस्याभावप्रतियोगिप्रातिभासिकत्वस्यालाभाच्च व्याचष्टे—*प्रागभावेति* ॥ यद्यपि 'प्राक्= अज्ञातयोरि'त्यस्य स्वपूर्वज्ञानाविषययोः, स्वसमानकालिकज्ञानमात्रविषययोरित्यर्थे प्रातिभासिकत्वं लभ्यते ; तथापि तयोः प्रसक्तेरपि स्पष्टं लाभाय पूर्वकालिकज्ञानविषययोरिति तदर्थं मनसिकृत्य पूर्वत्वादभिप्राह— *निषेधधीति* ॥ यद्यप्यारोप्यस्य नाज्ञानविषयत्वम् ; तथापि तत्परिणामभूतारोपात्मकवृत्तिविषयत्वे तात्पर्य-माह—*आरोपितयोरिति* ॥ एवं चोभयलाभ इति भावः । (२)*केचित्तु*—प्राग् ज्ञातयोरिति (३)सुगमं पाठं स्वीचक्रुः । अभावपदस्याभावान्तरपरत्वे वक्ष्यमाणदूषणस्य दुर्वारत्वम्, अत आह—*अत्यन्तेति* ॥ *ननु* घटध्वंस-काले कपालेऽसतो घटस्यारोपासम्भवेऽपि तत्तत्कालीनात्यन्ताभावस्य कथमारोपसम्भव इति ? अत आह— *तथाचेति*— *प्राचीनेति* ॥ ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वाङ्गीकर्तृप्राचीनेत्यर्थः । तदेतदभिदम् । 'उभयोर्निषेधे' इति सप्तम्यन्तमात्रेण वाक्यार्थापर्यवसानात् 'न प्रतियोगिसत्त्व'मित्यनुषज्य पर्यवसितार्थमाह—*इदमिति* ॥ युगपत् प्रतियोग्यभावयोर्निषेधात् पूर्वं युगपदेव तदुभयप्रसक्तिरपेक्षणीया । सा च न तदुभयनिश्चयरूपा सम्भवति, इत्यतः संशय-

---

(१) इयं शङ्का वनमालिमिश्रीये सिद्धान्तयुक्तितया योजिता इति । (२) कश्चित्तु (क) । (३) पाठः सुगम एव (क) ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

इयोत्तरम् 'अत्र घटस्तदत्यन्ताभावश्च द्वौ न स्तः' इति निषेधेऽपि यथा घटस्य नामिथ्यात्वं निश्चीयते, किन्तु तयोर्घटतदत्यन्ताभावयोः परस्परात्मकान्यूनसत्ताकात्यन्ताभावघटितमिथ्यात्वमेव निश्चीयत इति दृष्टान्तार्थः ॥

विट्ठलेशीयटिप्पणी

रूपतदनुसरणम् । *द्वौ न स्त इति* ॥ अत्र नोभयत्वावच्छिन्नाभावे तात्पर्यम्; तादृशाभावस्य मिथ्यात्वाघटकत्वात्, किन्तु घटत्वावच्छिन्नाभाव-घटाभावत्वावच्छिन्नाभावद्वये, घट-तदभावान्यतरत्वावच्छिन्नाभावे वा; निरुक्तान्यतरत्वरूपव्यापकरूपेण मिथ्यात्वनिश्चये घटत्वादिव्याप्यरूपेणापि तन्निश्चयस्यौचित्यावर्जितत्वात् । क्वचित् 'घटः तदत्यन्ताभावश्च नास्तीति पाठः । *नामिथ्यात्वं निश्चीयत इति* ॥ निषेधमात्रस्य निषेधाभावात् । *ननु* घटस्य तदत्यन्ताभावस्य वा न मिथ्यात्वनिश्चयः; ध्वंसावच्छिन्ने कपाले घटात्यन्ताभावस्य व्यावहारिकस्य प्राचीनमते, घटात्यन्ताभावात्यन्ताभावस्य च व्यावहारिकस्य घटरूपस्य सर्वमतेऽप्यसत्त्वादित्यत आह—*परस्परात्मकेति* ॥ प्रातीतिकघटात्यन्ताभाव-प्रातीतिकघटात्मकेत्यर्थः । मिथ्यात्वस्यान्यूनसत्ताकत्वघटितस्यैव व्यवस्थापितत्वेन प्रतियोगिसमसत्ताकाभावघटितमिथ्यात्वस्योक्तसंशयरूपारोपविषयप्रातीतिकघट-तदत्यन्ताभावयोः स्वाप्निकगज-तदत्यन्ताभावयोरिव निश्चयसम्भवादिति भावः । अत्र स्वाप्निकगज-तदभावयोः क्रमिकनिश्चयात्मकज्ञानविषयतया परस्परात्मकाभावघटितमिथ्यात्वनिश्चयो युक्तः, प्रकृते तु 'अत्र घट-तदत्यन्ताभावौ न स्तः' इति प्रत्ययस्यैकधर्मिकविरुद्धोभयावगाहिज्ञानरूपत्वेन संशयरूपतया तद्विषयपरस्परात्मकाभावमादाय कथं मिथ्यात्वनिश्चयः ? तादृशप्रत्ययस्य घट-तदत्यन्ताभावान्यतरत्वावच्छिन्नाभावविषयकत्वे तु 'परस्परात्मके'त्यसङ्गतं यद्यपि; तथाप्युक्तप्रत्ययस्योक्ताभावाभावयोर्विरोधानवगाहितया न संशयत्वम्; विरोधावगाहिताहशज्ञानस्यैव संशयत्वादिति बोध्यम् ॥

*अन्ये तु— घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावो घटध्वंसरूपो व्यावहारिक एव भासते । तथाच तन्मतमवलम्ब्य शङ्कितं दीधितिकृता "नचैव रक्तिमध्वंसाद्यवगाही"ति । एवं घटात्यन्ताभावात्यन्ताभावोऽपि तद्रूप एव; तन्मते घटध्वंसात्यन्ताभावयोः समनैयत्येनैक्यात्, तद्ध्वंसस्यापि तदत्यन्ताभावप्रतियोगित्वात् । एवं च तयोरतिरिक्तोऽभावो व्यावहारिको भासते, बव्यराणदाद्यनिकवद्‌ निषेध्यतावच्छेदकैक्यानुरोधात् । एवं च नोक्तज्ञानस्य संशयरूपत्वशङ्काऽपि । मिथ्यात्वं स्वभिन्नसत्ताकपरस्परात्मकाभावघटितमपि निर्वहतीति— *वदन्ति* ॥ केचित्तु पूर्वोक्तपाठान्तरमाश्रित्य 'घटो नास्ति' 'घटाभावो नास्ति' इति क्रमिकनिश्चयद्वयं विवक्षितमित्याहुः ॥

*दृष्टान्तार्थः*=यथेत्यादिवाक्यार्थः । एवं च प्रमाणपदस्य मानसामान्यपरत्वे घटध्वंसावच्छिन्नकपाले घट-तदत्यन्ताभावयोरत्यन्ताभावौ प्रातिभासिकघट-तदत्यन्ताभावात्मकप्रतियोगिरूपाविति पक्षे, प्रमाणपदस्य व्यावहारिकप्रमाणपरत्वे तौ व्यावहारिकघटध्वंसरूपाविति पक्षे च घटध्वंसावच्छिन्नकपालनिष्ठे प्रातिभासिकघटे तद्धर्मिकस्वा(१)-भावाभावबोधकप्रमाणकत्वेऽपि तद्धर्मिकस्वाभावसत्ताधिकसत्ताकत्वस्यासत्त्वादुक्तव्याप्तौ व्यभिचारः(२) । यदि चोक्तव्यभिचारवारणाय स्वाभावाबोधकत्वे सति स्वाभा(३)वाभावबोधकत्वरूपं स्वाभावाभावमात्रबोधकत्वं हेतौ निवेश्यम्, न च क्रमिकनिश्चयद्वयपक्षेऽयं (४)व्यभिचारो दुर्वार इति—वाच्यम्; तद्धर्मिक(५)स्वाभावप्रमाणकत्वशून्यत्वे सति तद्धर्मिकस्वाभावाभावप्रमाणकत्वनिवेशेन तद्वारणसंभवात् । अत्र प्रमाणपदं व्यावहारिकप्रमाणपरम् । मानसामान्यपरत्वे दृष्टान्ते व्यावहारिकरजतत्वे सत्यन्तार्थघटितहेत्वभावेन व्याप्तेर्ग्रह(६)त्वापत्तेरित्युच्यते, तदा ब्रह्मणि प्रपञ्चाभावाभावबोधकमिथ्यात्वानुमान-"नेह नाने"त्यादिश्रुतिरूपप्रमाणस्य प्रपञ्चाभावबोधकत्वाद् मात्रपदार्थ-

(१) यो यद्धर्मकस्वाभावाभावबोधकप्रमाणकः, स तद्धर्मिकस्वाभावाधिकसत्ताक इति व्याप्तिशरीरम्, इदमेव न्यायभास्करेऽपि प्रथम'नच'शङ्कायां निदिष्टम् ॥ (२) अयमेव दोषो न्यायभास्करे प्रथम'नच'शङ्कासमाधानत्वेन वर्णित इति ॥ (३) द्वितीय'नच'शङ्कायां परिष्कृतं व्याप्तिशरीरमपि न्यायभास्करीयमिदमेव नापूर्वमिति मन्तव्यम् ॥ (४) अयमेव दोषो द्वितीय'नच'शङ्कासमाधानतयाऽनन्तरनिर्दिष्ट इति ॥ (५) न्यायभास्करे तृतीय'नच'शङ्कोपयिकतया परिष्कृत व्याप्तिशरीरमपीदमेवेत्यप्येतद्दर्शनमात्रेणैव स्फुटं भवति ॥ (६) अयमेव दोषस्तृतीय'नच'शङ्कासमाधानपरतया वर्णितः, स च न संगतः,

अद्वैतसिद्धिः

एवंच प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य निषेधस्य च बाधनाद् न निषेधस्य बाध्यत्वेऽपि

तरङ्गिणी

च प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य च बाधनाद् निषेधस्य बाध्यत्वेऽपि न

न्यायामृतकण्टकोद्धारः

निषेधे। तथाच प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य च बाधनाद् न निषेधस्य

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यथाश्रुतं तु 'प्रागभावे'त्यसङ्गतम् ; अत्यन्ताभावात्मकनिषेधस्य निषेधे प्रतियोगिसत्त्वापत्तेः पूर्वमुक्तत्वेन प्रागभावात्मकनिषेधस्य निषेधे प्रतियोग्यसत्त्वदृष्टान्तेन तस्याः खण्डनस्यासङ्गतेरिति ध्येयम् । *प्रकृते = प्रतिपन्नेत्याद्यनुमाने । *बाधकेन = मिथ्यात्वानुमापकदृश्यत्वादिहेतुना । *बाधनात् = मिथ्यात्वनिश्चयात् । *बाध्यत्वे = निषेधे । *निषेध्यतावच्छेदकस्य = उक्तमिथ्यात्वानुमानपक्षतावच्छेदकघटकस्य ।

न्यायामृतसौगन्ध्यम्

एवं च प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य च बाधनाद् न तन्निषेधस्य बाध्यत्वेऽपि

विट्ठलेशीयटिप्पणी

घटितनिरुक्तापादकस्यैव प्रपञ्चेऽसत्त्वाद् न स्वाभावसत्ताधिकसत्ताकत्वापत्त्या तात्त्विकत्वापत्तिरिति भावः । तदेतद् वदयति मूले—*एवं चेति* ॥ यथाश्रुतप्रागभावपदार्थत्यागबीजमाह—*यथाश्रुतं त्विति* ॥ *निषेधे=तद्घटितमापादकीकृत्य । *पूर्वम्='नचेति'शङ्काग्रन्थे । *निषधे=तद्घटितापादके । *प्रतियोग्यसत्त्वदृष्टान्तेन=घटात्यन्ताभावेन प्रतियोगिसत्त्वरूपापाद्यव्यभिचारप्रदर्शनेन । *असङ्गतेरिति* ॥ स्वाभावाभावबोधकप्रमाणकत्वरूपापादकेऽत्यन्ताभावनिवेशस्य मात्रार्थनिवेशवदापादकस्य पक्षधर्मताविघटकतया तेनोक्तव्यभिचारवारणसंभवादिति भावः । *अनुमाने=न्यायप्रयोगे । बाधकपदार्थघटकहेत्वन्वयि विषयित्वं सप्तम्यर्थः । *मूले*—'निषेधबाधकेने'त्यस्य प्रपञ्चाभावाभावग्राहकेणेत्यर्थः । तच्च न प्रकृते प्रमाणान्तरमस्ति, इत्यतो व्याचष्टे—*बाधकेनेति* ॥ *मिथ्यात्वेति* ॥ निरुक्ताभावप्रतियोगिताकपेत्यर्थः । अनुमापकपदार्थघटकानुमित्यन्वयि प्रपञ्चाभावपक्षकत्वं 'निषेधबाधकेने'त्यत्र निषेधेहस्यार्थः । *मिथ्यात्वनिश्चयात्=निरुक्ताभावप्रतियोगितारूपमिथ्यात्वानुमितिरूपनिश्चयजननादित्यर्थः । एवं च प्रपञ्चरूपपक्षे आपाद्याव्यभिचारिणो मात्रार्थघटितापादकस्याभाव इति भावः । मात्रार्थाघटितापादकं तु पक्षे सदप्युक्तरीत्याऽऽपाद्यव्यभिचारित्वात्किञ्चित्करमित्याह *मूले*—*निषेधस्येति* ॥ प्रपञ्चाभावस्येत्यर्थः । 'बाध्यत्वेऽपी'त्यत्र बाध्यत्वं व्याचष्टे—*बाध्यत्व इति* ॥ *निषेधे=अभावग्राहकोक्तमिथ्यात्वानुमानरूपप्रमाणावतार इत्यर्थः । *मूले*—तात्त्विकत्वं नेत्यन्वयः । आपादयितुं शक्यमिति शेषः । तत्प्रयोजिकायाः स्वाभावसत्ताधिकसत्ताकत्वापत्तेरेवोक्तरीत्याऽऽपादकाभावेनासत्त्वादिति भावः । *ननु* प्रपञ्चाभावनिषेधकस्य तत्पक्षकमिथ्यात्वानुमानस्य कथं प्रपञ्चनिषेधकत्वम् ? तत्राह—*उभयोरपीति* ॥ प्रपञ्च-तदभावयोरित्यर्थः । *निषेध्यतावच्छेदकत्वम्='इदं नास्ती'ति प्रत्ययीयप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकत्वम्, तादृशप्रतियोगितावच्छेदकतया भासमानत्वं वा । तदाश्रयस्य इदन्त्वादेरुभयसाधारण्यकरोभयतुल्यता न प्रपञ्चाभावपक्षकमिथ्यात्वानुमानस्य प्रपञ्चनिषेधकत्वे प्रयोजिका ; तदनुमानपक्षतावच्छेदकस्योभयसाधारण्यस्यैव तत्प्रयोजकत्वादित्यतो व्याचष्टे—*निषेध्यतावच्छेदकस्येति* ॥ *पक्षतावच्छेदकेति* ॥ पक्षतावच्छेदकीभूतदृश्यत्वावच्छेदेन निरुक्ताभावप्रतियोगिताकमिथ्यात्वावगाह्यनुमितौ पक्षतावच्छेदकस्याभावप्रतियोगितावच्छेदकतया भासमानत्वेन निषेध्यतावच्छेदकपदार्थतेति भावः । उक्तानुमानपक्षतावच्छेदकं सत्त्वेन प्रतीत्यर्हत्वे सति चिद्भिन्नत्वं मूले पूर्वमुक्तम्, न तु इदन्त्वम्, अत उक्तम्—*उक्तस्येति* ॥ उक्तं तन्मिथ्यात्वानुमानपक्षतावच्छेदकम्, तद्घटकस्येत्यर्थः ॥

---

इति प्रमाणत्वं व्यावहारिकप्रमाणपरमिति ग्रन्थेनैव वर्णितप्रायम्, तत्तुच्छत्वात्तिशरीराशीकारे बाधकाभावः । एवमेव चैवं

अद्वैतसिद्धिः

प्रपञ्चस्य तात्त्विकत्वम् ; उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात् । नचातात्त्विक-

तरङ्गिणी

प्रपञ्चस्य तात्त्विकत्वम् ; उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात्—इति" ॥ *अत्र ब्रूमः—स्वप्नदृष्टार्थाभावस्य जाग्रत्यबाधानुभवाद् न तस्य बाध्यत्वम् । नहि स्वप्ने दृष्टत्वमात्रेण बाध्यत्वम् ; आत्मादेरपि बाधापत्तेः । *यच्चोक्तम्*—प्रकृते प्रतियोगि निषेधयोस्तुल्यसत्ताकत्वमिति, *तदपि न* ; निषेधस्य बाध्यत्वे प्रतियोगि-तदभावयोस्तुल्यसत्ताया एवासिद्धेः । *यच्चोक्तम्* निषेधस्य निषेधेऽपि न प्रतियोगिनः सत्त्वापत्तिरिति, *तदपि न* ; त्रैकालिकनिषेधस्य बाध्यत्वे प्रतियोगिसत्त्वापत्तेर्दुर्वारत्वात्,

न्यायामृतकण्टकोद्धारः

प्रपञ्चस्य तात्त्विकत्वम् ; उभयोर्निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात्—इति । *यच्च*—अतत्त्वावेदकत्वमुक्तं श्रुतेः, *तन्न* ; ब्रह्माभिन्नप्रपञ्चनिषेधादिकमतात्त्विकत्वेन बोधयन्त्याः श्रुतेरप्रामाण्या-सम्भवात्—इत्याह, *तन्न* । यदुक्तम्—निषेधस्य बाध्यत्वं प्रतियोगिपारमार्थिकसत्त्वाविरोधित्वे न तन्त्रमिति, *तन्न* ; लाघवेन निषेधबाध्यत्वस्यैव तन्त्रत्वात् । नच—स्वाप्नार्थनिषेधेऽपि स्वाप्नार्थस्य सत्त्वापत्तिरिति—वाच्यम् ; यत्र स्वाप्नार्थो निषिध्यते, तत्र निषेधस्य बाध्यत्वासम्मतेः, स्वाप्नार्थानां

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*दृश्यत्वादेः = चिद्भिन्नत्वे सति सत्त्वेन प्रतीत्यर्हत्वरूपं यद् दृश्यत्वम्, तदादेः ॥

न्यायामृतसौगन्ध्यम्

प्रपञ्चस्य तात्त्विकत्वम् ; उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात् । नचातात्त्विकनिषेध-

विट्ठलेशोयटिप्पणी

*ननु* तद्घटकतयाऽपि न दृश्यत्वस्येत्याशङ्क्य, तद्घटकं यत् सत्त्वेन प्रतीत्यर्हत्वम्, तदेवात्र दृश्यत्व-पदेनोच्यते । नच—तत् पक्षतावच्छेदकतावच्छेदकमेव, न पक्षतावच्छेदकम्, इति तदवच्छेदेन प्रतियोगिताक-मिथ्यात्वाभावेन तस्य निषेध्यतावच्छेदकपदार्थत्वानुपपत्तिरिति—शङ्क्यम् ; विनिगमनाविरहेण चिद्भिन्नत्वविशेषितस्य तस्यापि पक्षतावच्छेदकत्वसंभवात्, दृश्यत्वपदार्थत्वसंभवाच्चेत्यभिप्रायेण व्याचष्टे—*दृश्यत्वादेरिति* ॥ *चिद्भिन्नत्वे सतीति* ॥ यद्यपि चिद्भिन्नत्वविशिष्टं सत्त्वेन प्रतीत्यर्हत्वं न तद्विशिष्टचिद्भिन्नत्वरूप उक्तपक्षतावच्छेदके घटकम् ; तथापि विशेष्यांशस्य तथात्वे विशिष्टस्यापि तदनतिरेकात् तथात्वमक्षतमिति हृदयम् । *एतेन*—उक्तं वन्मिथ्यात्वं तदनुमानं वा, तत्पक्षतावच्छेदकघटकत्वेनैतयोर्योक्तौ चिद्भिन्नत्वविशिष्टसत्त्वेनप्रतीत्यर्हत्वमात्रस्यैव पक्षतावच्छेदकत्वेन घटकपदासङ्गतिः ; सामानाधिकरण्येनानुमानपक्षतावच्छेदकस्य ब्रह्मप्रमातिरिक्ताबाध्यत्वस्यावच्छेदकावच्छेदेनानुमान-पक्षतावच्छेदके प्रवेशाभावस्य पूर्वमुक्तत्वादिति—*अपास्तम्* ; संभवत्पक्षतावच्छेदकताकस्याप्युक्तविशिष्टस्य पूर्वोक्तेऽनुमानपक्षतावच्छेदके विशेष्यांशद्वारा घटकस्य तादृशपक्षतावच्छेदकरूपत्वाभावेन घटकपदसङ्गतेः ॥

*यद्द दृश्यत्वमिति* ॥ यद्यपि दृग्विषयत्वमात्रं दृश्यत्वपदशक्यार्थः ; तथापि तुच्छे "यसद्द्रेश्य'मिति श्रुतिप्रति-पादब्रह्मणि च दृश्यत्वव्यवहारवारणाय सत्त्वप्रकारकत्वं दृशि चिद्भिन्नत्वसामानाधिकरण्यं च विषयत्वे निवेश्य विशिष्टे तत्पदस्य निरूढलक्षणा परिभाषा वा स्वीकार्या । सत्त्वेन प्रतीत्यर्हत्वविशिष्टचिद्भिन्नत्वे तु न सा स्वीकर्तुं युक्ता ; स्वार्थो-

रजतमि'ति भ्रमोत्तरम्, 'इदं नारजतमि'ति प्रमितिस्थले रजतत्वाभावबोधकप्रमाणकत्वशून्यत्वस्यैव सत्त्वात् समन्वयः । यत्तु न्याय-भास्करे तत्र सम्बन्धान्तरावच्छिन्नरजतत्वाभावप्रमितिकत्वस्यैव विद्यमानत्वाद् नेदं व्याप्तिशरीरमित्युक्तम्, तद् न संगतम् ; स्वाभाव-बोधकप्रमाणपदेन हि स्वबाधकप्रमाणस्यैव विवक्षणेनोक्तोद्भावादीनामप्रसक्तेः । अयमत्र चैतद्विट्ठलेशीय एव व्यक्तीभविष्यति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

आदिपदेन विशेषानुमानीयपक्षतावच्छेदकस्याकाशत्वाकाशाभावत्वादेः संग्रहः । *उभयोस्तुल्यत्वात्=मिथ्यात्वानुमितिविशेष्यतावच्छेदकत्वेनोभयत्र प्रतीयमानत्वात् ।

विट्ठलेशीयटिप्पणी

त्यागेन कुङ्कुमादिसंभवे सर्वथा तस्यागत्यान्याय्यत्वादिति भावः । नच—अत्र मूले निषेध्यतावच्छेदकतयोक्तदृश्यत्वमेवोपात्तम्, न तु सत्त्वेन प्रतीत्यर्हत्वविशिष्टभिन्नत्वम्, तत् केन विशेषणेनेति—वाच्यम् ; आदिपदेन तस्याप्युपादानात् । नच तत्र घटकपदार्थानन्वयः ; स्वघटकतायाः स्वसाधारण्या अपि निर्वचनसंभवात् । *वस्तुतस्तु* "नेह नाने"ति श्रुतौ किंचनपदस्य दृश्यार्थकतया तस्येहपदार्थप्रपञ्चवद्ब्रह्मणि दृश्यसामान्याभावबोधकताया वक्ष्यमाणत्वेन प्रकृतमिथ्यात्वानुमानस्य तादृशश्रुत्यनुग्रहाय दृश्यत्वावच्छिन्नपक्षकतैव युक्तेत्यवधेयम् ॥

अत्र दृश्यत्वरूपपक्षतावच्छेदकावच्छेदेन निरुक्तप्रतियोगितारूपमिथ्यात्वावगाहिन्यामनुमितौ साध्यांशे भासमानं दृश्यत्वावच्छिन्नत्वं न व्यापकत्वरूपम् ; तथा सति दृश्यवृत्तियावत्त्वाद्यवच्छिन्नप्रतियोगितामादाय सिद्धसाधनात्, किन्तु स्वरूपसंबन्धविशेषः । न हि देश-कालादिरूपपक्षतावच्छेदकस्यैव स्वरूपसंबन्धरूपमवच्छेदकत्वं भासत इति नियमे मानमस्ति । अत एव विशिष्टप्रामाण्यत्वावच्छेदेन स्वाश्रयग्राहकयावत्सामग्रीग्राह्यत्वसाधनमुक्तं प्रामाण्यवादे । तथाच दृश्यत्वावच्छिन्नतादात्म्यापन्ने ब्रह्मणि दृश्यत्वावच्छिन्नप्रतियोगिताकाभाववत्तापर्यवसानाद् दृश्यत्वावच्छिन्नस्य सत्यताभङ्गः । नचैवमाकाशत्वादिरूपेणाकाशादीनां सत्यत्वापत्तिः ; दृश्यत्वस्याकाशत्वादिव्यापकतया व्यापकधर्मावच्छिन्नाभावस्य व्याप्यधर्मावच्छिन्नाभावव्याप्यतया दृश्यत्वावच्छिन्नाकाशाद्यभाववत्त्याकाशत्वाद्यवच्छिन्नतदभावस्याप्यावश्यकतया तेनापि रूपेण तेषां सत्यताभङ्गस्य निष्प्रत्यूहत्वात् । अत्राऽऽस्थार्थत्वपरिहारस्तु वक्ष्यत इति विभावनीयम् ॥

*ननु* मिथ्यात्वानुमानेन साक्षादेवाकाशत्वावच्छिन्नाकाशादीनां मिथ्यात्वसिद्धय आकाशत्वादिविशेषरूपेणैव तेषां पक्षता युक्ता, उक्ता च पूर्वं ग्रन्थकृता ; तथाच तत्तद्धर्मावच्छिन्नपक्षकानुमानसमूहेनैव क्रमेण जगतो मिथ्यात्वसिद्धयुपगमाद् आकाशाभावत्वावच्छिन्नपक्षकमिथ्यात्वानुमानस्याकाशत्वावच्छिन्नमिथ्यात्वाननुमापकतया मात्रार्थघटितोक्तापादकवत्ताया आकाशत्वावच्छिन्ने पक्षेऽक्षततया स्वाभावसत्ताधिकसत्ताकत्वापत्त्या तस्य तात्त्विकत्वापत्तिर्दुर्वारेत्याशङ्कां परिहर्तुं मूलकृतोक्तमादिपदं विवृणोति—*आदिपदेनेति*। *ननु* आकाशत्व-तदवच्छिन्नाभावत्वयोः प्रत्येकमाकाश-तदभावरूपोभयसाधारण्यरूपोभयतुल्यत्वं न संभवतीत्यतो व्याचष्टे—*उभयोस्तुल्यत्वादिति* ॥ *उभयोः=आकाशत्व-तदवच्छिन्नाभावत्वयोः । *तुल्यत्वात्=परस्परं सदृशत्वादित्यक्षरार्थः । तत्र सादृश्यघटकधर्मं निषेध्यतावच्छेदकपदलभ्यं दर्शयन् पर्यवसितार्थमाह—*मिथ्यात्वानुमितीति* ॥ *उभयत्र=आकाश-तदभावान्यतरत्र ॥

*अयं भावः*(१)—आकाशादीनां विशेषरूपेण पक्षतापक्षे जगत्पक्षकसमूहालम्बनस्यासंभवेऽपि संभवत्कतिपयपदार्थपक्षकसमूहालम्बनपरामर्शेभ्यः समूहालम्बनानुमितिभिरेव जगन्मिथ्यात्वसिद्धिर्वाच्या ; प्रत्येकं जगत्त्वव्याप्ययावद्रूपावच्छिन्नपक्षकतावदनुमितीनां दुर्घटत्वात् । तथाचाकाशाभावे मिथ्यात्वग्राहकप्रमाणस्य परामर्शरूपस्याकाशेऽपि मिथ्यात्वानुमापकपरामर्शरूपतानियमेनाकाशे पक्षे मात्रार्थघटितनिरुक्तापादकस्य दुर्लभत्वाद् नोक्तरीत्या तात्त्विकत्वापत्तिः संभवति । नच—तादृशनियमे मानाभाव इति—वाच्यम् ; आकाशाभावे मिथ्यात्वव्याप्यदृश्यत्वादिहेतुमत्तापरामर्शपूर्वमाकाशाभावोपस्थितेरावश्यकतया तस्यां च नियमेनाकाशोपस्थितिरूपतयाऽऽकाश-तदभावोभयपक्षकसमूहालम्बनपरामर्शनियमसंभवात्, प्रतियोगितासंबन्धेनाकाशविशिष्टेऽभावे मिथ्यात्वानुमिति-तद्व्याप्यवत्तापरामर्शयोर्विशिष्ट-वैशिष्ट्यबोधमर्यादयाऽऽकाशेऽपि मिथ्यात्व-तद्व्याप्यवत्तावगाहननियमेनाकाशमिथ्यात्वग्राहकतदभावमिथ्यात्वग्राहकप्रमाणासंभवाच्च । व्याप्तिज्ञानस्य तद्विषयलिङ्गस्य वाऽनुमानप्रमाणत्वपक्षे त्वाकाश-तदभावपक्षकानुमिति-परामर्शयोः पार्थक्येऽप्यसमनियतकालत्वेऽपि च मिथ्यात्वघटकसत्त्वस्य दृष्टान्तसिद्धयनुरोधेनानुगतस्यैव वाच्य-

(१) 'अयं भावः' इत्यादिना ब्रह्मधर्मिकाकाशाभावाभावबोधकप्रमाणकाकाशाभावाधिकसत्ताकत्वस्याकाशे प्रसक्तस्य प्रत्याख्यानं वर्णितम्, इति न्यायभास्करीयोक्तापादनमपि पराहतमेव ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाच निषेधस्य निषेधमात्रं न प्रतियोगिनोऽधिकसत्तासाधकम्, किन्तु निषेधस्य न्यूनसत्ताग्राहकं प्रमाणम्; प्रकृते च तदभावाद् न तत्सिद्धिरिति भावः ॥

### विट्ठलेशीयटिप्पणी

तथा साध्य-हेत्वोरैक्येन व्याप्तिज्ञानस्यैकजातीयतयैकरूपेण कलुषकरणत्वाङ्गिकतया सुतरां तादृशप्रमाणासंभवः । *अथवा* भवतु लिङ्गपरामर्शं एवानुमानम्, मा भूद्वोक्तसमूहालम्बननियमः, विशिष्ट-वैशिष्ट्यबोधमर्यादानियमो वा, तथाप्या-काश-तदभावपक्षकमिथ्यात्वानुमानद्वयं तु निर्विवादम् । तथाचागृहीताप्रामाण्यकप्रतियोगि-तदभावोभयमिथ्यात्व-ग्राहकप्रमाणद्वयस्य तादृशैकप्रमाणसनशीलतया, ध्वंसावच्छिन्नकपालादौ क्रमेण घटादि-तदभावयोरभावप्रत्ययद्वयस्थलेऽपि प्रतियोगिनो घटादेस्तात्त्विकत्वाभावेन तन्नोक्तव्यभिचारवारणायोक्तापादककोटौ स्वाभावाबोधकत्वं स्वाभावाभाव-बोधकप्रमाणविशेषणं परित्यज्य 'स्वाभावबोधकप्रमाणकत्वशून्यत्वे सती'ति स्वाभावाभावबोधकप्रमाणकत्वे विशेषणं मात्रार्थतया निवेश्यम्, इत्याकाशादिपक्षे निरुक्तमात्रार्थघटितापादकाभावाद् न तात्त्विकत्वापत्तिरिति ॥

*यत्तु* –आकाशाभावपक्षकमिथ्यात्वानुमानस्याकाशमिथ्यात्वाग्राहकत्वेऽपि "नेह नाना" इति श्रुतिरूप-प्रमाणस्य ब्रह्मण्याकाशत्व-तदभावत्वादिसकलविशेषधर्मावच्छिन्नाभावबोधकत्वाद् न यथाश्रुतमात्रार्थघटितापादकस्यापि पक्षे निर्वाह इति भावः—इति, *तत्तुच्छम्* ; स्वाभावाभावग्राहकप्रमाणत्वावच्छेदेन मात्रार्थनिवेशे प्रयोजना-भावेन तादृशप्रमाणत्वसामानाधिकरण्येनैव स्वाभावाग्राहकत्वरूपमात्रार्थनिवेशेन तादृशश्रुतिरूपप्रमाणस्य प्रतियोग्य-भावोभयाभावग्राहकत्वेऽप्यभावपक्षकमिथ्यात्वानुमानघटितापादकस्य प्रतियोगिनि पक्षेऽक्षतत्वात् ॥

*केचित्तु*—आकाशाभावपक्षकमिथ्यात्वानुमितिराकाशाभावत्वावच्छिन्ने स्वसमानाधिकरणत्वान्न्यूनसत्ता-कात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वमवगाहते । तत्र सामानाधिकरण्यघटकं चाधिकरणं ब्रह्मैव ; तस्यैव कृत्स्न-जगदुपादानत्वात्, उपादानादन्यत्र च वस्तुनोऽसत्त्वात्, तथाचोक्तमिथ्यात्वानुमितेः सामानाधिकरण्यघटक-तयाऽऽकाशाभावाश्रयत्वेन ब्रह्मावगाहित्वात् तादृशब्रह्मवृत्तितया चाकाशाभावात्यन्ताभावावगाहित्वाच्च ब्रह्मरूपैक-धर्मिण्याकाशाभाव-तदभावोभयावगाहितयाऽऽकाशाभावपक्षकमिथ्यात्वानुमानस्यैकधर्मिण्याकाशाभावाभावग्राहकत्ववदा-काशाभावग्राहकत्वस्यापि सत्त्वाद् न तदभावरूपमात्रार्थघटितापादकस्याकाशरूपपक्षे निर्वाहः, इति न तस्य तात्त्विकत्वापत्तिरित्यभिप्रायम्—*वर्णयन्ति, तदसत्;* तथा सति आकाशत्वाकाशाभावत्वयोरुभयोर्मिथ्यात्वानु-मितिविशेष्यतावच्छेदकत्वेन तुल्यत्वाभिधानस्य निष्प्रयोजनकत्वापत्तेः । प्रपञ्चतात्त्विकत्वापत्तिशङ्का-समाधान-ग्रन्थनिर्गलितभावार्थमाह—*तथाचेति* ॥ निषेध्यतावच्छेदकतुल्यत्वे चेत्यर्थः ; 'प्रकृते तदभावादि'त्यत्र हेतुतयाऽन्वेति । *निषेधस्य निषेधमात्रम्=स्वाभावाभावग्राहकप्रमाणकत्वमात्रम् । मात्रपदेन स्वाभावग्राहक-प्रमाणकत्वाभावविशिष्टत्वरूपमात्रार्थभूतविशेषणव्यवच्छेदः । *न प्रतियोगिनोऽधिकसत्तासाधकम्=न स्वाभाव-सत्ताधिकसत्ताकत्वव्याप्यम् । प्रतियोग्यभावोभयनिषेधस्थले व्यभिचारोक्तेरिति भावः । *निषेधस्य न्यूनसत्ता-ग्राहकं प्रमाणम्=स्वाभावस्य न्यूनसत्ताग्राहकं प्रमाणम् ; तच्च स्वाभावग्राहकप्रमाणाभावविशिष्टं स्वाभावाभाव-ग्राहकं प्रमाणमेव । तादृशप्रमाणस्थल एव हि स्वाभावस्य न्यूनसत्ताकत्वग्रहो जायते । यथा रजते 'नेदं रजतमि'ति भ्रमानन्तरं 'नारजतमि'ति बाधकप्रमाणावतारे सति रजतभेदरूपो रजतत्वाभावः, स्वप्रतियोगिरजत-त्वापेक्षया न्यूनसत्ताकः, तादृशरजतत्वबाधकप्रमाणकत्वाभावविशिष्टस्वबाधकप्रमाणकत्वात्, इत्यनुमानेन रजतत्वा-भावस्य प्रतियोगिन्यूनसत्ताकत्वसिद्धिः । तस्यां च सत्यामर्थत एव तादृशाभावप्रतियोगिनोऽधिकसत्ताकत्वं सिद्ध्यति । एवं च तादृशप्रमाणकत्वाभावविशिष्टतादृशप्रमाणकत्वमेव स्वाभावसत्ताधिकसत्ताकत्वव्याप्यमिति पर्यवसितोऽर्थः । *प्रकृते=वियदादिप्रपञ्चरूपे पक्षे । *तदभावात्=निरुक्तविशिष्टतादृशप्रमाणत्वाभावात् । *न तत्सिद्धिः=न स्वाभावसत्ताधिकसत्त्वापत्तिः । एवं च न तात्त्विकत्वापत्तिरिति भावः ॥

### अद्वैतसिद्धिः

निषेधबोधकत्वे श्रुतेरप्रामाण्यापत्तिः ; 'ब्रह्मभिन्नं प्रपञ्चनिषेधादिकमतात्त्विकमि'त्यतात्त्विकत्वेन बोधयन्त्याः श्रुतेरप्रामाण्यासम्भवात् ॥

### न्यायामृतकण्टकोद्धारः

जाग्रदर्थतुल्यसत्ता(१)कत्वाभ्युपगमात्। नचैवम्—शुक्तिरूप्यादेरपि सत्त्वापत्तिरिति—वाच्यम्, तत्रापि

### गौडब्रह्मानन्दो ( लघुचन्द्रिका )

*श्रुतेः = 'नेह नाने'त्यादिश्रुतेः। *अतात्त्विकम् = मिथ्या। *अतात्त्विकत्वेन = मिथ्यात्वेन। *असम्भवादिति* ॥ तथाच 'यजेते'त्यादिश्रुतेरिव व्यावहारिकप्रामाण्यमुक्तश्रुतेरक्षतम्, तात्त्विकप्रामाण्यं तु 'तत्त्वमसी'त्यादिश्रुतेरेवेति भावः ॥

### न्यायामृतसौगन्ध्यम्

बोधकत्वे श्रुतेरप्रामाण्यापत्तिः। ब्रह्मभिन्नं प्रपञ्चनिषेधादिकमतात्त्विकमतात्त्विकेन बोधयन्त्याः श्रुतेरप्रामाण्यासंभवादिति—चेत्, न; भ्रमकालाप्रतीतस्य सापेक्षस्य भ्रमकालप्रतीतनिरपेक्षनिषेधप्रत्यात्मकत्वासंभवात् ॥

### सौगन्ध्यविमर्शः

प्रपञ्चाभावो हि शुद्धब्रह्मरूप एवाद्वैतिभिरङ्गीक्रियते, न तु किञ्चिद्रूपेण ज्ञातमज्ञातं च किञ्चिद्रूपेण यद् ब्रह्म, तद्रूपः। शुद्धं तु ब्रह्म न भ्रमकाले भासते, इति ब्रह्मणोऽपि भ्रमकालाप्रतीतत्वादभावस्य ब्रह्मत्वे भवदीयनियमोऽपि न विरुद्धः। अभावत्वोपलक्षितस्यैव ब्रह्मरूपत्वम्, न तु विशिष्टस्येति लघुचन्द्रिकायां विवरणाद् न वयमपि सापेक्षस्याभावस्य ब्रह्मरूपत्वं वदामः, इति "भ्रमकालाप्रतीतस्य सापेक्षस्ये"त्याद्यनुक्तोपालम्भनम्। अभावत्वोपलक्षितस्य तु बाधानन्तरमेव

### सिद्धिव्याख्या

*यथातात्त्विकेति*॥ यद्यप्यद्वैतश्रुतेरद्वैतमतेऽखण्डचिन्मात्रपरत्व उच्यमानेऽतात्त्विकनिषेधबोधकत्वाभावेनाप्रामाण्याशोनाद् ग्रन्थ एवानुपपन्नः; तथापि तच्छ्रुतित एव प्रपञ्चमिथ्यात्वसिद्धिं प्रार्थयताऽद्वैतिना तच्छ्रुतेरखण्डचिन्मात्रपरत्वं

### विट्ठलेशीयटिप्पणी

"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतीनामप्रामाण्याप्रसङ्गेन श्रुतिपदस्य तत्सामान्यपरत्वासम्भवात् तद्विशेषपरतामाह—*श्रुतेरिति* ॥ आदिपदेन-"सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" इत्यादिश्रुतयो ग्राह्याः। प्रथमस्यातात्त्विकपदस्य तात्त्विकभिन्नार्थकत्वे द्वितीयस्य मिथ्यापरत्वेन तात्त्विकभिन्नं मिथ्यात्वेन बोधयन्त्या इत्यर्थपर्यवसानेऽपि मिथ्यात्वबलि मिथ्यात्वबोधकत्वरूपं प्रामाण्यं स्फुटं नेत्यतो व्याचष्टे—*अतात्त्विकमिति* ॥ द्वितीयस्य यथाश्रुतत्वे "नेह"त्यादिश्रुतीनां तात्त्विकभिन्नत्वेन प्रपञ्चनिषेधाबोधकतया मूलासङ्गतिः, अतो व्याचष्टे—*अतात्त्विकत्वेनेति* ॥ तद्बोधकत्वं न प्रामाण्यम्, किन्तु तत्त्वावेदकत्वम्। तत्त्वं च पारमार्थिकं कालत्रयाबाध्यं वस्तु, तदावेदकत्वमित्यर्थः। तच्च न "नेह नाने"त्यादिश्रुतेरपारमार्थिकप्रपञ्चनिषेधबोधकत्वादिति शङ्कितुर्गूढाभिप्रायमभ्युपेत्यैव समाधातुर्भावमाह—*तथाचेति* ॥ *व्यावहारिकप्रामाण्यम्=व्यवहारकालाबाध्यार्थावेदकत्वम्। *उक्तश्रुतेः= "नेह"त्यादिश्रुतेः। कस्यास्तर्हि तत्त्वावेदकत्वलक्षणं प्रामाण्यम्? अत आह—*तात्त्विकप्रामाण्यं त्विति* ॥ आदिना "सत्यं ज्ञानमि"त्यादयोऽखण्डार्थाः ॥

---

(१) 'स्वाप्नार्थानां जाग्रदर्थतुल्यसत्ताकत्वादि'ति तु "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति सूत्रविरुद्धम्। मायापदं तु मायिपदेनाद्वैतिनानेव व्यवहरतां द्वैतिनां पक्षेऽद्वैताभिमतं मायास्वरूपमेव प्रतिपादयतीत्यकामेनाप्यभ्युपेयम्; अन्यथा द्वैतिन एवासत्ख्यातिवादिनो मायिनो भविष्यन्ति, इति मायावादमसच्छास्त्रमि'त्यादिकं द्वैतमतमेव, यत्र भ्रमस्थलेऽसत्ख्यातिरेव मन्यते, गोचरयेत्। किंच निषेधावधरत्वे पारमार्थिकसत्त्वाविरोधित्वे तन्मते नेदं द्वैतिनो वक्तुं शक्नुयन्ति,

न्यायामृतकण्टकोद्धारः

निषेधबाध्यत्वस्यासम्मतेः। अस्तु वा प्रातिभासिकप्रतियोगिकनिषेधबाध्यत्वं प्रतियोगिपारमार्थिकसत्त्वाविरोधित्वे तन्त्रम्, एवं सति न कोऽपि दोषः(१); स्वाप्नार्थनिषेधस्य प्रातिभासिकप्रतियोगिकत्वाभावात् ॥

न्यायामृतसौगन्ध्यम्

यच—अभावस्य सापेक्षत्वं मायिकम्, ब्रह्मणि निरपेक्षत्वं तात्त्विकम्, इति न विरोध इति—तन्न; मिथ्यात्वसिद्धेः प्राग् मायिकत्वस्यासंभवात्, स्वाप्नार्थबाधकस्य निषेधस्य हि ततोऽधिकसत्ताकत्वं स्यादेव, न हि वल्मीके प्रतीतस्य स्थाणुत्वस्य तत्रैव प्रतीतपुरुषत्वेन बाधः, किन्तु वल्मीकत्व-

सौगन्ध्यविमर्शः

प्रतीतस्य सापेक्षत्वं मायिकमेव, वस्तुतस्तु निरपेक्षत्वमेव। इदं च मायिकत्वं मिथ्यात्वनिश्चयानन्तरमेवास्माभिरपि निर्णीयते, इति "यच्चाभावस्य सापेक्षत्वं मायिकमि"त्यादिकमपि शङ्कापरिहारादिकमनवसरमेव। नहि निषेधबाध्यत्वं प्रतियोगिसत्त्वव्यवस्थापकम्; स्वप्ने गज-तदभावयोरुभयोरपि मिथ्यात्वात्। नहि स्वप्ने यद्देशे गजो ज्ञातः, तद्देशे गजाभावज्ञानं जागरणे भवति, किन्तु तद्देशगज-तदभावाः सर्वे एव जागरणे बाध्यन्ते; सर्वेषां स्वप्ने कल्पितत्वात्। तत्र हि निषेधस्य निषेध्यापेक्षयाऽधिकसत्ताकत्वम्, यत्र यदवच्छेदेन यस्य निषेधः, तदवच्छेदकाबाधेन तदभावप्रतीतिः। तथाच स्वाप्निकप्रपञ्चस्येव व्यावहारिकप्रपञ्चस्याप्यवच्छेदकेन साकमेव बाधात् नोभयत्रापि निषेध्यापेक्षया निषेधस्याधिकसत्ताकत्वम्। इदमेवाभिप्रेत्योक्तम्—"मायामायं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्" इति। अयं भावः—भ्रान्तिज्ञानाधिष्ठानतायामवच्छेदकस्य बाधज्ञानाबाध्यत्वात् निषेध्यापेक्षया निषेधस्याधिकसत्ताकत्वम्। स्वाप्नव्यावहारिकयोस्तु शुद्धचैतन्याधिष्ठानकत्वात् तदवच्छेदकेन साकमेव बाधज्ञानेन बाधात्—'स्वाप्नार्थबाधकस्य निषेधस्य ततोऽधिकसत्ताकत्वं स्यादे'ति सौगन्ध्योक्तम्—परास्तम्। "स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनादि"ति वाक्येन हि स्वप्ने गजज्ञानम्, तदनन्तरं तत्रैव गजाभावज्ञानम्, पुनरपि भ्रमेणायं स्वप्न इति गजाभावबाधज्ञानं च यत्र दृश्यते, तत्र तृतीयेन बाधज्ञानेन गजाभावे बाध्यमाने सति पूर्वप्रतीतः स्वाप्न एव गजः सत्य इति केनापि न स्वीक्रियते; जागरे तदननुभावात्, तत्त्ववादिभिरन्यैरप्यसत्ख्यातिवादिभिस्तदनङ्गीकारात्। तथाच तत्र निषेध्यापेक्षया निषेधस्य गजाभावाभावस्यानधिकसत्ताकत्वात् नायं नियमः सम्भवदुक्तिक इत्येव विवक्षितम्, नतु यत्र स्वप्ने प्रतियोगिप्रतीतिः, तदभावप्रतीतिश्च, जागरणे तु तदभावप्रतीतिरेव वर्तते, तत्र निषेध्यापेक्षया निषेधस्याधिकसत्ताकत्वम्; अत एव "स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात्" इति स्वाप्नपदद्वयम्। भ्रान्तिप्रतिपन्नयोर्विरुद्धयोर्धर्मयोरेका-

सिद्धिव्याख्या

ङ्गीकरणीयत्वम्; अन्यथा मिथ्यात्वशरीरप्रविष्टत्रैकालिकनिषेधासिद्ध्या तद्घटितमूर्तिमिथ्यात्वासिद्धिप्रसङ्गात्। अतस्तन्निषेधेऽपि तात्पर्यविषयकत्वे सत्यतात्त्विकत्वेनाप्रामाण्यं स्यादेवेति तद्ग्रन्थः सूपपन्न एव। नच—तात्पर्याविषयस्यापि त्रैकालिकनिषेधस्य श्रुतितः प्रतीतत्वमात्रेण श्रुत्यर्थतया सिद्धिर्भविष्यतीति—वाच्यम्; तर्हि 'जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा वा जुहुयात्' इत्यादिश्रुतिप्रतिपन्नजर्तिलयवागू-गवीधुकयवागूद्रव्यकहोमविध्योरपि

तन्मतेऽप्रामाणिकस्यैवात्यन्ताभावप्रतियोगित्वेन प्रतियोगिनः प्रातिभासिकत्वं पारमार्थिकत्वं चेति परस्परविरुद्धमिदम्। तथाच निषेधबाध्यत्वमेव प्रतियोगिपारमार्थिकसत्त्वे तन्त्रमिति यद्यद्वैतमतेन मन्यते, तर्हि तन्मते स्वाप्नानां पदार्थानां आत्मसदृशतुल्यसत्ताकत्वमित्यसदनुवाद एवायम् ॥

(१) प्रातिभासिकप्रतियोगिकनिषेधबाध्यत्वं प्रतियोगिपारमार्थिकसत्त्वाविरोधीति हि 'मम माता वन्ध्ये'तिवद् व्याहतार्थमेव; बाध्यनिषेधप्रतियोगिनः प्रातिभासिकत्वस्य पारमार्थिकत्वस्य च विरुद्धत्वात्। न हि प्रातिभासिकरजतस्येव तन्निषेधस्यापि बाध्यत्वं व्यवहारदशायां कुत्राप्यनुभवामः, येन प्रातिभासिकत्वं प्रतियोगिविशेषणमुपपन्नं स्यात्। किञ्च व्यावहारिकप्रतियोगिकनिषेधबाध्यत्वे प्रतियोगिनः पारमार्थिकसत्त्वं तु निषेधबाध्यत्वे यदि भवन्मतरीत्या न नियतम्, तर्हि तु प्रपञ्चाभावस्य व्यावहारिकत्वेन निषेध्यत्वेऽपि न प्रपञ्चस्य पारमार्थिकत्वापत्तिः, इति कथं वा मिथ्यात्वव्यावहारिकपक्षे प्रपञ्चसत्यत्वापादनं संभवद्युक्तिकम्?

## तरङ्गिणी

यथोदाहृते रजतादौ। यत्र हि प्रतियोगिसत्त्वं विना निषेधस्य निषेधोऽनुपपन्नः, तत्र निषेधस्य निषेधे प्रतियोगिनः सत्त्वम्; तृतीयप्रकाराभावात्। प्रागभावादौ तु नैवम्, इति न प्रागभावाभावे प्रतियोगिनः सत्त्वम्; तृतीयप्रकारस्य ध्वंसस्यापि सम्भवात्। तस्माद् युक्तमत्यन्ताभावस्य बाध्यत्वे प्रतियोगिनः पारमार्थिकत्वापत्तिरिति ॥

## न्यायामृतकण्टकोद्धारः

*यच्चोक्तम्*—प्रतियोग्यपेक्षया न्यूनसत्ताकत्वं तन्त्रमिति, तदपि न; प्रपञ्चसत्यत्ववादिनं प्रति तस्यापि सत्यत्वेनार्थान्तरस्य (१)दुर्वारत्वात्। तस्मादर्थान्तरं दुर्वारम् ॥

*यच्च*—श्रुतेरतत्त्वावेदकत्वपरिहारायातात्त्विकमतात्त्विकत्वेन बोधयन्त्याः श्रुतेर्नाप्रामाण्यमित्युक्तम्, तदपि मन्दम्; श्रुत्या निषेधमात्रस्यैव बोधनेनातात्त्विकत्वांश औदासीन्यात्, अन्यथा कर्मादिस्वरूपप्रतिपादकस्य सगुणत्वप्रतिपादकस्य च वेदस्यातत्त्वावेदकत्वापत्तेः, तत्रापि तात्त्विकत्वाद्यनुल्लेखात्(२)। यदि कर्मादिकं सत्त्वेन प्रतिपादयतीति ब्रूषे, तर्हि निषेधमपि तथेति तुल्यम्। अध्याहारेण तथा प्रतिपादकत्वं च श्रुतधर्मानध्याहारेण कुर्वन्तो निराकरिष्यामः। तस्मात्तु निषेधस्य व्यावहारिकत्वेऽतत्त्वावेदकत्वेन श्रुतेरप्रामाण्यं दुर्वारम् ॥

## न्यायामृतसौगन्ध्यम्

प्रकारकज्ञानेन बाधः। तथाच स्वाप्नार्थस्य तन्निषेधे निवृत्तिरेव, न तु बाधः। वस्तुतस्तु—स्वाप्ननिषेधस्य आप्रत्यबाध्यत्वनिश्चयेन न तस्य बाध्यत्वम्। नच—स्वप्ने दृष्टत्वमात्रेण निषेधस्य बाध्यत्वमिति वाच्यम्, स्वप्नदृष्टात्मादेरपि बाध्यत्वापत्तेः ॥

## सौगन्ध्यविमर्शः

पेक्षयाऽपरस्याधिकसत्ताकत्वमेव वयं निषेधामः। अत एव—वल्मीके स्थाणुत्वस्य पुरुषत्वस्य चोभयोरपि प्रातिभासिकत्वम्, न हि वल्मीके पुरुषत्वं स्थाणुत्वस्य विरुद्धम्, इति वल्मीके स्थाणुत्व-पुरुषत्वयोरुभयोरपि प्रातिभासिकत्वे न किमपि विरुद्धम्।

*एतेन*—वस्तुतस्तु स्वाप्ननिषेधस्य आप्रत्यबाध्यत्वनिश्चयेन तस्याबाध्यत्वम्, न हि दृष्टत्वमात्रेण बाध्यत्वम्; स्वप्नदृष्टात्मत्वादेरपि बाध्यत्वापत्तेरिति—परास्तम्; दत्तोत्तरत्वात्, भावानवबोधाच्च। तथाच प्रपञ्चाभावव्यावहारिकत्वे न कोऽपि दोषः। न हि प्रपञ्च तदभावयोर्बाध्य-बाधकभावः, किन्तु प्रपञ्च-ब्रह्मज्ञानयोरेव। तथाच तुल्यसत्ताकत्वेऽपि प्रतियोगितदभावयोर्बाध्य बाधकत्वानुपपत्तिशङ्कानवकाशः। सति चैवं निषेधस्य निषेधेऽपि न प्रतियोगिनः पारमार्थिकं सत्त्वम्; उभयोरप्येकबाधज्ञानबाध्यत्वात्, यथा ध्वंस-प्रागभावाधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत इति मते प्रतियोग्यभावयोरुभयोरपि निषेधे न प्रतियोगिनः सत्त्वमापतति। यदि ध्वंस एव तत्र प्रतियोगिप्रत्ययविरोधी, तर्हि प्रकृतेऽप्यखण्डाधिष्ठानब्रह्मस्वरूपसाक्षात्कार एव प्रपञ्चप्रतीतिविरोधीति समानम्। सर्वथा तु ध्वंसेन वा निर्वाहतामन्यथा वा, प्रतियोग्यभावयोस्तुल्यसत्ताकत्वं तु स्वीकृतमेव, इति व्यवस्थितलक्षणे भवदीयस्य नियमस्य भङ्ग एव, इति कथं निषेधनिषेधेऽपि प्रपञ्चपारमार्थिकत्वम्?

---

(१) इदमत्रालोचनीयम्—कस्मिन् प्रपञ्चसत्यत्ववादिमते निषेधस्यापि सत्यत्वेनार्थान्तरमापद्यते? यदि द्वैतिमते, तर्हि तु तन्मते निषेधस्यासद्रूपत्वात् प्रतियोगि-निषेधयोरुभयोरपि न सत्यत्ववादो विकल्पमहः; अन्यस्तु प्रतियोग्यभावयोरुभयोरप्येकत्राधिकरणेऽद्वैतं विहाय व्यावहारिकसत्यत्वाभिप्रायं मतमेव कीदृशमिति चिन्तनीयमेव। सत्यत्वपदेन पारमार्थिकसत्यत्वविवक्षायां तु न किमपि मतं तादृशमस्तीति व्यर्थवाद एवायमिति पश्यामः। सति चैवं कथमर्थान्तरं दुर्वारम्?

(२) सत्यं स्वरूपसत्तात्त्विकार्थबोधकत्वेन तथाऽतात्त्विकार्थबोधकत्वेन च प्रामाण्याप्रामाण्ये, तथापीदमेवात्रालोचनीयम्—अथ कस्याः श्रुतेरतत्त्वावेदकत्वेनाप्रामाण्यापत्तिर्मन्यते? यदि 'नेह नानास्ती'त्यादिश्रुतेः, तर्हि तु तस्या व्यावहारिकप्रामाण्यस्यैवाभिमतत्वेन तत्त्वावेदकत्वलक्षणं प्रामाण्यमनभिमतमेव, यदि तु तत्त्वमस्यादिवाक्यानाम्, तर्हि तु न तेषामतात्त्विकार्थबोधकत्वम्; तद्बोध्यस्य ब्रह्मणोऽद्वैतिभिस्तात्त्विकत्वास्वीकारात् ॥

न्यायामृतकण्टकोद्धारः

*यच्च*—निषेधस्य निषेधे प्रतियोगिनः सत्त्वापत्तिपरिहारार्थमुक्तम्,—प्रकृत उभयोरपि निषेधादिति, *तदपि न*; उभयनिषेधस्य व्याहतत्वेन कर्तुमशक्यत्वात्। नच—ध्वंससमये प्रतियोगि-प्रागभाव-निषेधवदुपपत्तिरिति—वाच्यम्; एकविरोधिविशेषसमयेऽपरविरोधिविशेषद्वयनिषेधेऽपि सामान्यत एकसमये प्रतियोग्यत्यन्ताभावनिषेधा(१)दर्शनात्॥

न्यायामृतसौगन्ध्यम्

नच—"अद्रष्टो द्रष्टे"त्यादि श्रुत्या द्रष्टृत्वमेवात्मनो नास्तीति न बाध्यत्वापत्तिरिति—वाच्यम्। "अदृष्टः" इति वृत्तिभिन्नानुभवस्याविषय इति त्वयैव व्याख्यातत्वात्, अन्यथा वृत्तेरप्यविषयत्वे "यथा हि जाग्रद्वा स्वप्नगतो वा—'अयमहमस्मि इमानि भूतानि चे'ति विजानाति, नैवं सुप्तः किञ्चिदपि वेदयते" इति भामत्युक्तं विरुध्येत। 'निषेधस्ये'त्याद्ययुक्तम्; निषेधस्य निषेधे प्रतियोगितुल्यसत्ताकत्वासंभवात्, निषेध-प्रतियोगिनोरसमसत्ताकत्वे बाध्य-बाधकतायां विनिगमनाविरहाच्च। अतो निषेधस्य निषेधे प्रपञ्चस्य पारमार्थिकसत्त्वं स्यादेव॥

'तत्र ही'त्याद्ययुक्तम्; प्रकृतेऽपि हि प्रतियोगिसत्त्वं विना निषेधस्य निषेधोऽनुपपन्न एव। ध्वंस एव ध्वंससमये प्रागभाव-प्रतियोगिनोरुभयोर्निषेधस्य निर्वाहकोऽस्त्येव, यत्र तु तृतीयप्रकारासंभवः, तत्र निषेध-प्रतियोगिनोरेकतरनिषेधेऽन्यतरस्य पारमार्थिकसत्त्वं स्यादेव। 'एवं चे'त्याद्ययुक्तम्; अत्यन्ताभाव-प्रतियोगिनोर्वर्तमानस्य धर्मस्य निषेध्यतावच्छेदकत्वासंभवात्, न हि घटवृत्तिधर्मस्य तदभाववृत्तेस् तन्निषेधप्रतियोगितावच्छेदकत्वम्; घटत्वाघटत्वोभयधर्मावच्छिन्नाभावस्यैकत्रासंभवात्। 'ब्रह्माभिन्नमि'त्याद्ययुक्तम्; भावाभावयोर्युगपदेकस्मिन्नधिकरणे बोधकवाक्यवदुभयोरभावस्य तद्तात्त्विकत्वस्य च बोधकवाक्यस्याप्रामाण्यं स्यादेव॥

सिद्धिव्याख्या

स्वीकारापत्तेः(२)। नच—श्रुतेरखण्डचिन्मात्रपरत्वेन तत्त्वावेदकत्वेऽपि केवलानुमानात् प्रपञ्चमिथ्यात्वसिद्धिरभ्युपगमार्हेति—वाच्यम्; प्रबलप्रमाणावष्टम्भं विना केवलानुमानस्यासांप्रदायिकत्वेन विवक्षितार्थासाधकत्वात्, अद्वैतिनाऽपि तथाऽभ्युपगमाच्च। नच—अद्वैतश्रुतेरखण्डचिन्मात्रपरत्वेऽपि तत्र पूर्वं विनाऽपि तात्पर्यं मानान्तराविरोधे द्वितीयाभावः सेत्स्यति, तत्र तात्पर्याभावाच्च तच्छ्रुतेर्नातत्त्वावेदकत्वमिति—वाच्यम्; तर्हि मानान्तराविरोधेनैव श्रुतितोऽखण्डचिन्मात्रसिद्ध्युपपत्तौ द्वितीयाभाव इव चिन्मात्रेऽपि श्रुतेस्तात्पर्यानभ्युपगमप्रसङ्गात्। उपक्रमादिलिङ्गत्वेन तत्र श्रुतितात्पर्याभ्युपगमे च द्वितीयाभावेऽपि लिङ्गसत्त्वेन तात्पर्याङ्गीकारस्य दुष्परिहरत्वात्, प्रत्युत 'अहमस्मी'ति वा, 'अहं ब्रह्मास्मी'ति वाऽनुस्यूताखण्डचैतन्यस्य जीवचैतन्यस्य तद्रूपब्रह्माभेदस्य च भाततयाऽपूर्वत्वाभावेनाखण्डचैतन्ये जीवब्रह्माभेदे वा तात्पर्यानभ्युपगम एव न्याय्यः। न चाहमित्यादिप्रत्यये चैतन्यातिरिक्तांशस्य भानमस्तीत्येतावताऽनुस्यूतचैतन्यं तदभेदो वाऽहमर्थभूतचैतन्ये न भातीत्यस्ति॥

*मन्येवम्*—प्राधान्यादिमात्रपरार्थवादादितो(३) देवताविग्रहाद्यसिद्धिप्रसङ्गः, मानान्तराविरोधसहकृतार्थवादत एव तत्सिद्ध्यभ्युपगमे तन्न्यायेनैवाखण्डचिन्मात्रपराद्वैतश्रुतित एव मानान्तराविरोधसहकारेण द्वितीयाभाव-

(१) ध्वंससमये प्रागभाव-प्रतियोगिनोरुभयोरपि निषेध इति सिद्धिवाक्यं यथा लघुचन्द्रिकायां व्याख्यातम्, तथार्थविवक्षणे तु कण्टकोद्धारेणापि न्यायामृतं स्थूणानिखनन्यायेन दृढं कण्टकितं भवति। (२) "अजक्षीरेण जुहोती"ति विधिशेषत्वेन अतिलवाक्यस्यार्थवादत्वमेवेति सिद्धान्तभङ्गापत्तिरिति भावः॥ (३) तथाच देवताधिकरणविरोध इति भावः॥

न्यायामृतकण्टकोद्धारः

नच—निषेध्यतावच्छेदकस्य दृश्यत्वस्योभयत्र सत्त्वेनोभयनिषेधोपपत्तिरिति—वाच्यम् ; दृश्यत्वस्य ब्रह्मासतोरपि सत्त्वेन निषेध्यतानवच्छेदकत्वात् । नच—ब्रह्मासतोर्दृश्यत्वमेव नेति—वाच्यम् ; दृश्यत्वभङ्गे तस्योपपादयिष्यमाणत्वात् । एवं च यथा 'घटात्यन्ताभावो नास्ती'त्यत्यन्ताभावनिषेधे घटात्यन्ताभाव-विरोधिघटसत्त्वसिद्धिः, एवं 'प्रपञ्चात्यन्ताभावो ने'त्यत्यन्ताभावनिषेधे प्रतियोगिसत्त्वापत्तिर्दुर्वारैव, इति निषेद्धव्य

न्यायामृतसौगन्ध्यम्

*ननु*—प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, विनाशिनिष्ठं यद् प्रातिभासिकस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वम्, तयोरन्यतरत्वस्वं मिथ्यात्वम्—इति, *तन्न* ; मिथ्यात्वसिद्धेः प्राक् सत्त्वाभेदस्यासिद्धत्वात् ॥

ननु—"नेह नाने"त्यनेन—'इहे'ति पदेन विनाशिद्रव्यविशिष्टं बोध्यते, वाक्येन तु विनाशिद्रव्यविशिष्टे ऽपि विनाशिद्रव्यं नास्तीति बोध्यते । तथाच जगति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति, तन्न ; विनाशिद्रव्यविशिष्टस्य मिथ्यात्वेनोक्तनिषेधाधिकरणत्वासंभवात् । दृश्या-धिष्ठाने हि दृश्यस्य निषेधस्त्वया वाच्यः । अधिष्ठानं त्वध्यस्ताधिकसत्ताकमेव स्यात् । नच— स्वप्ने आरोपितरजताधिष्ठानस्य शुक्त्यादेरध्यस्ताधिकसत्ताकत्वं नास्ति ; स्वप्ने प्रतीतस्य सर्वस्य प्रातिभासिकत्वादिति—वाच्यम् ; प्रातीतिकस्याज्ञानाविषयस्याधिष्ठानत्वासंभवात् , सामान्यतो ज्ञातं विशेषतोऽज्ञातं ह्यधिष्ठानं भवति । अत एव 'नेदं रजतमि'ति स्वाप्नज्ञानस्य बाधकत्वमप्यसंभवि ; भ्रमकालेऽ-ज्ञातस्याधिष्ठानतत्त्वस्य ज्ञानमेव हि बाधकं दृष्टम् । किञ्च यथा 'इदं भूतलं घटवदि'तीदन्त्वे गृहादिविषयक-ज्ञानस्य 'नेदं भूतलं घटवत्' इत्यङ्गणादिविषयकज्ञानस्य च बाध्य-बाधकभावो नास्ति ; भिन्नविशेष्यक-त्वात्, तथा स्वाप्निके'दं रजतं' 'नेदं रजतमि'ति ज्ञानयोर्न बाध्य-बाधकभावः ; प्रातीतिकेदमर्थरूप-विशेष्ययोर्ज्ञानभेदेन भिन्नत्वात् ॥

सिद्धिव्याख्या

सिद्धिरविकला । नच प्राशस्त्यद्वारतयाऽऽयाते विग्रहादिविशिष्टदेवतादावपि तात्पर्यं स्वीकार्यम् ; तथा सति गौरवप्रसङ्गात् । अर्थवादादेः पृथक्त्वेन चानेकार्थत्वाद् वाक्यभेदोऽविशिष्टः ; तथापि तादृशदेवतादेस्तात्पर्यं विनाऽर्थवादतः सिद्धौ तत्र तत्स्वीकारोऽयुक्त इति—*चेन्न* ; उक्तोत्तरत्वात् । मानान्तराविरोधमङ्गीकृत्यादेव अर्थप्रतिपादकत्वात् तदर्थनिष्ठपरत्वो कल्पितान्यार्थे तात्पर्यस्यानभ्युपेयत्वाद् वाक्यार्थतात्पर्यानभ्युपगमेऽतीव लाघवात् । अन्यथा 'अर्धजरती'(१) न्यायापत्तेः, लघुत्वेन तत्तात्पर्यस्य दुर्वारत्वाच्च, गौरवस्य प्रामाणिकत्वात् । अवान्तर-वाक्यार्थभेदस्ये(२)वावान्तरवाक्यार्थतात्पर्यस्याप्यवाक्यभेदकत्वात् , महावाक्यार्थभेदतात्पर्यस्यैव वाक्यभेदापादक-त्वाच्च, प्रयाजादिवाक्यानां दर्श-पूर्णमासादिवाक्येनैकवाक्यतावदर्थवादवाक्यानामपि विधिवाक्येनैकवाक्यतास्वीकारेण वाक्यभेदस्याशङ्का एवानुदयाच्च । प्रकृतवाक्यं(३) भवतामिव पदैकवाक्यता । तथा चैवंविधदेवताकं कर्म प्रशस्तमिति, विशिष्टवाक्यार्थतात्पर्याभ्युपगमे वाक्यभेदलक्षणदोषावकाश इति दिक् ॥

---

( १ ) नहि कुक्कुट्या अर्धांशभक्षणमर्धांशपरित्याग इति युक्तमिति वाचस्पतिमिश्राः । अन्ये तु वृद्धाया अर्धांश उपभोगाय, अर्धांशः परित्यागायेति न युक्तमिति । अपरे तु जरती अलाबुः, तस्याः अर्धांशभक्षणम्, अर्धांशपरित्याग इति न युक्तम् ; तावताऽपि निषेधशास्त्रोल्लङ्घनस्य जातत्वादिति—वर्णयन्ति ॥ (२) भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यस्यैवैक-वाक्यत्वेन तस्यावान्तरवाक्यार्थभेदेऽप्यनपायादिति भावः । (३) *ननु* विध्यर्थवादयोः पदैकवाक्यताया एव मीमांसक-संमतत्वात् प्रयाज-दर्शपूर्णमासवाक्ययोश्च वाक्यैकवाक्यताया एव तत्संमतत्वाच्च कथं तद्दृष्टान्ततेति ? अत आहेत्यवतरणिकाऽत्र बोध्या ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—कथमुक्तश्रुत्या मिथ्यात्वेन प्रपञ्च-तदभावयोर्बोधः ? ब्रह्मणि प्रपञ्चस्याभावबोधनेऽप्यभावे प्रपञ्चसामानाधिकरण्यस्य प्रपञ्चान्यूनसत्ताकत्वस्य चाबोधनादिति—चेत्, *न* ; [उक्तश्रुतिपूर्वे विद्यमाने "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्यादिवाक्ये पञ्चपञ्चजनशब्दस्य ब्राह्मण-क्षत्रियादिपञ्चक-परतयोपनिषद्भाष्ये व्याख्यातत्वात् तस्यापि दृश्यमात्रोपलक्षणत्वात् शारीरकोक्तप्राणादिपञ्चकरूपार्थस्यापि दृश्य-मात्रोपलक्षणत्वाच्च, क] 'इह'त्यस्य प्रपञ्चविशिष्टब्रह्मणीत्यर्थकत्वात्, किञ्चनेत्यस्य च "अतोऽन्यदार्तमि"त्यादि-श्रुत्यादिमानेन विनाशितया प्रमितं दृश्यमात्रमित्यर्थकत्वात्, 'विनाशिदृश्यविशिष्टे ब्रह्मणि विनाशिदृश्यं नास्ती'ति बोधस्योक्तश्रुत्या सम्भवात्, विनाशिदृश्यवति विनाशिदृश्याभावस्य चोक्तश्रुतिप्रमितत्वेनैवाप्राति-भासिकत्वानुमितिसम्भवात्, विनाशिदृश्यत्वावच्छेदेनाप्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व-निश्चयस्यानुमितिद्वारोक्तश्रुतितात्पर्यविषयत्वसम्भवात् । नच—'विनाशिदृश्यविशिष्टे विनाशिदृश्यं नास्ती'ति बोधस्य 'घटविशिष्टे घटो नास्ती'ति बोधस्यैवाहार्यत्वाद् न शाब्दत्वम्, प्रत्यक्षस्यैवाहार्यत्वादिति—वाच्यम् ; 'नाने'तिपदस्य नाञ्प्रत्ययान्तनञ्पदसिद्धस्य भेदार्थकत्वाद् ब्रह्मार्थकेहपदयोगेन ब्रह्मभेदबोधकत्वात् उक्तानुप-पत्तेर्विनाशिदृश्यस्वस्य तादृशबोधेऽभावप्रतियोगितावच्छेदकतया भानासम्भवेऽपि प्रतियोग्यंशे विशेषणत्वमात्रता-

सिद्धिव्याख्या

एवमेव द्वितीयाभावादिविशिष्टचैतन्ये तात्पर्ये दुर्वारे तत्प्रयुक्तमतत्त्वावेदकत्वं दुर्वारमिति । एतेन—द्वितीयाभाव-विशिष्टचैतन्येऽद्वैतश्रुतेस्तात्पर्याङ्गीकारे विशेषणीभूतद्वितीयाभावस्य मिथ्याविशेषात्मकव्यावहारिकत्वेन बाध्येऽपि तात्पर्य-मावश्यकम्, इति तत्परत्वेन श्रुतेरतत्त्वावेदकत्वदोषापातेऽपि, द्वितीयाभावोपहितचैतन्ये तात्पर्यमित्यङ्गीकारे तद्दोषापत्ति-

विट्ठलेशोपटिप्पणी

*अबोधनादिति* ॥ तदर्थकपदाभावादिति भावः । *चेन्नेति* ॥ अत्र चरमपञ्चम्यन्तो हेतुः । तत्र 'सम्भवादि'त्यन्तं द्वयम्, तत्र च 'इत्यर्थकत्वादि'त्यन्तं द्वयम् । *विनाशितया प्रमितमिति* ॥ इदं च प्रातिभासिकनिष्ठ-वत्—स्वसमानाधिकरणाभावप्रतियोगित्वम्, यच्च विनाशिनिष्ठमप्रातिभासिकस्वसमानाधिकरणाभावप्रतियोगित्वं तदन्यतरवत्त्वं मिथ्यात्वमिति पूर्वनिष्कर्षघटकद्वितीयदलघटकस्य विनाशिनिष्ठत्वस्य लाभाय । *श्रुत्या सम्भवादिति* ॥ एवं च प्रपञ्चाभावे प्रपञ्चसामानाधिकरण्यस्य शब्दादेव लाभ इति भावः । तदन्यूनसत्ताकत्वलाभस्त्वनुमानादित्याह—*विनाशिदृश्यवतीति* ॥ दृश्यवति दृश्याभावः, अप्रातिभासिकः, श्रुतिप्रमितत्वात्, यागादिधर्मवत्, ब्रह्मवद्वेत्यनुमानं बोध्यम् । नच—स्वाप्निकपदार्थानामपि—"अथ रथानि"त्यादिश्रुतिप्रमितत्वाद् व्यभिचार इति—वाच्यम् ; "न तत्र रथा न रथयोगा न पन्थानो भवन्ति" इति सन्निहितवाक्येन तेषां व्यवहारकालाबाध्यत्वबोधनात्, श्रुतिजन्यव्यवहार-कालाबाध्यविषयकज्ञानविषयत्वस्य हेतोरेव (१)तत्रासत्त्वादिति भावः । *प्रतियोगित्वनिश्चयस्य*=उक्तप्रतियोगित्वान्यतर-वत्त्वरूपमिथ्यात्वघटकद्वितीयदलनिश्चयस्य । तात्पर्यविषयत्वसम्भवादिति योजना । तादृशनिश्चये वलद्वयघटितोक्तमिथ्या-त्वनिश्चयो मनसैव सुलभः ; उक्त एकदलनिश्चयोऽपि मानस एवेति बोध्यम् । 'नच वाच्यम्' इत्यत्र 'विनाशिदृश्या-नामि'ति पञ्चम्यन्तो हेतुः । तत्र च 'तादृशबोधे ही'ति वाक्यं हेतुः । तत्राऽऽद्यस्य भिन्नत्वलाभकमाह—*नानेति* ॥ एवं च 'बोधकत्वादि'त्यस्य तद्धेत्वन्वयः । *ननु* एवं विनाशित्वस्य प्रतियोग्यंशे उपलक्षणतयैव भानं वाच्यम्, तच्च न सम्भवति ; अभावप्रतियोगिकोटावुपलक्षणतया भानस्य परैरनुपगमात्, तथाचोक्तमिथ्यात्वघटकस्य प्रतियोगितायां विनाशिनिष्ठत्वस्य कथं लाभः ? इत्याशङ्क्य परिहरति—*उक्तानुपपत्तेरिति* ॥ उक्तबोधस्याहार्यत्वापत्त्या शाब्दत्वानुप-पत्तेरित्यर्थः । असम्भवेऽन्वयः । *विशेषणत्वेति* ॥ प्रकारत्वेत्यर्थः । मात्रपदेन प्रतियोगितावच्छेदकत्वभान-

(१) *एतेन*—"अजामेकामे"त्यत्र प्रातिभासिकाजारूपाजात्वकल्पनस्य "असौ वाऽऽदित्यो मधु" इत्यत्र "*कल्पनोप-देशाच्चे"ति* सूत्रे मधुत्वकल्पनस्य च कृतत्वेन स्वाप्निकपदार्थानामपि—"अथ रथानि"ति श्रुतिप्रमितत्वेन न्यायभास्करीयव्यभि-चाराभावमत्—*परास्तम्* ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्वीकारेण, विनाशिदृश्यानामात्मभिन्नत्वमात्ररूपेणाभावबोधस्याहार्यत्वासम्भवात्, तादृशबोधे हि विनाशिदृश्यत्वेनाभावो न विषयः, किं त्वात्मभिन्नत्वेनैव ॥

किञ्च "अत्यन्तबाधितेऽप्यर्थे ज्ञानं शब्दः करोति ही"ति खण्डनकारोक्तेः शाब्दबोधस्याहार्यत्वं स्वीक्रियते। नच—तथाप्युक्ताभावे प्रतियोग्यवच्छेदकदेश-कालावच्छिन्नत्वस्यावच्छिन्नवृत्तिकान्यत्वस्य

## सिद्धिव्याख्या

नीत्स्येव ; विशेषणोपाध्योः सत्त्वेन व्यावर्तकत्वाविशेषेऽपि क्रियान्वयित्वाभावादुपाधेः। नचैवमुपाधेरुपलक्षणाविशेषः ; विद्यमानत्वेनैव ततो विशेषसत्त्वादिति—निरस्तम् ; तथा सति द्वितीयाभावासिद्धिप्रसङ्गेन तदुपाधित्वस्य सुतरामयोगात्, श्रुतितात्पर्याविषयस्य श्रुत्यर्थत्वप्रसङ्गात्, 'यत्परः शब्दः, स शब्दार्थः' इति घण्टाघोषेण प्रमाणान्तरायोग्ये तात्पर्यं विना शब्दप्रमाणस्याप्रवृत्तेः, शब्दस्य स्वतात्पर्यगोचरार्थप्रमाणत्वमिति नियमात्। अन्यथा अर्तिलादिवाक्यादेरपि प्रतीव-

## बिट्ठलेशीयटिप्पणी

व्यवच्छेदः। *स्वीकारेणेति* ॥ प्रतियोगितायां विनाशिनिष्ठत्वस्यापि लाभसम्भवादिति शेषः। यादृशाभावप्रत्यये यस्य धर्मस्य प्रतियोगिन्युपलक्षणतया भानेऽतिप्रसङ्गादि बाधकम्, तत्रैव तदभ्युपगमः ; यथा 'घटो नास्ति' 'नीलघटो नास्ति' इत्यादौ घटत्वस्य, यत्र तु न बाधकम्, तत्र तदभ्युपगम्यत एव परैरपि ; यथा जात्यवच्छिन्नाभाव इति प्रतियोगिताप्रकाराभावज्ञाने जातित्वस्य, यथा वा—'द्रव्यत्वेन धूमो नास्ती'त्यादौ द्रव्यत्वस्य। प्रकृते च ब्रह्मत्वस्य प्रतियोगितावच्छेदकतया भाने विनाशिदृश्यत्वस्योपलक्षणतया भाने न किञ्चिद् बाधकमिति भावः। उक्तबोधस्याहार्यत्वशङ्काया अनयैव रीत्या पूर्वं परिहृतत्वेऽपि प्रकृत उक्तरीत्या विनाशित्वभानानुपपत्तिपरिहाराय 'किञ्चे'त्यादि समाधानान्तरं वक्तुं च पुनरुद्भावनमिति ध्येयम्। *विनाशिदृश्यानामिति* ॥ विनाशिदृश्यत्वविशिष्टानामित्यर्थः। *आहार्यत्वासंभवादिति* ॥ एकधर्मिणि येन रूपेण प्रतियोगिभानम्, तद्रूपावच्छिन्नप्रतियोगिताकाभावावगाहिन एव ज्ञानस्याहार्यत्वात् प्रकृते च रूपभेदाद् न तद्रूपस्या शाब्दत्वानुपपत्तिरुक्तबोधस्येति भावः ॥

*अत्रेदमवधेयम्*(१)। स्वविरोधिधर्म-धर्मितावच्छेदककं स्वप्रकारकज्ञानमाहार्यम्। तथाच द्वैत-तदभावयोः सिद्धान्ते विरोधानुपगमात् कथमाहार्यत्वशङ्केति न शङ्कनीयम् ; अविरुद्धयोरपि संयोगतदभावयोरिव दृश्य-तदभावयोरप्यविरुद्धत्वाज्ञानदशायां परस्परज्ञानयोः प्रतिबध्य-प्रतिबन्धकभावोपगमात्, निरुक्ताहार्यत्वघटकस्य विरोधित्वस्य स्वज्ञानप्रतिबन्धकतावच्छेदकविषयताश्रयत्वरूपस्य निवेशादाहार्यत्वशङ्कासामञ्जस्यादिति ॥

*ननु* विनाशिदृश्यत्वेन विनाशिदृश्यवत्त्वेन प्रतीयमाने ब्रह्मणि ब्रह्मभिन्नत्वेन तदभावलाभेऽपि विनाशिदृश्यत्वेन तदभावलाभं विना न मिथ्यात्वलाभः, येन रूपेण यद्वत्त्वेन प्रतीयमाननिष्ठाभावीयतद्रूपावच्छिन्नतन्निष्ठप्रतियोगिताया एव मिथ्यात्वरूपत्वादित्यत आह—*किंचेति* ॥ *आहार्यत्वं स्वीक्रियत इति* ॥ एवं च विनाशिदृश्यत्वस्यैव प्रतियोगितावच्छेदकतयापि भानाद् मिथ्यात्वलाभः। नच—'विनाशिदृश्यवद्ब्रह्मणि विनाशिदृश्यं नास्ती'त्याहार्यस्य भ्रमत्वात् कथं ब्रह्मणि विनाशिदृश्यत्वावच्छिन्नाभावसाधकत्वम्? तत्त्वे वा विनाशिदृश्यत्वावच्छिन्नमपि तत्र साधयेत्? इति—वाच्यम् ; श्रुतेर्हि स्वतात्पर्यविषयीभूतानधिगतार्थे प्रमाणतया तत्साधकत्वम्। विनाशिदृश्यत्वावच्छिन्नं विनाशि ब्रह्मणि मानधिगतम्, न वा श्रुतितात्पर्यविषयः ; लोकसिद्धत्वात्, किंतु तदभाव एव, लोकासिद्धत्वात्। तथाचोक्ताहार्यमभावस्यैव साधकम्, न प्रतियोगिन इत्यस्य युक्तत्वात्। नच—उक्तश्रुतेर्बाधितार्थग्राहितयाऽप्रामाण्यं दुर्वारमेव, *तथाचोक्तं दीधितौ*—"बाधेन हि न शाब्दज्ञानं प्रतिबध्यते, किंतु उत्पन्ने तत्राप्रामाण्यं गृह्यते" इति, इति—वाच्यम् ; लौकिकबाधकमानापेक्षया श्रुतेः प्राबल्यस्य सिद्धान्तसिद्धत्वात्, स्वापेक्षया प्रबलप्रमाणबाधि-

---

( १ ) 'अत्रेदमवधेयमि'त्यादिनोपपादिताशङ्कासमाधानान्यनूद्य *नन्वित्यादिना* वर्णितास्वारस्यं न्यायभास्करे दोषत्वेन परिगणितम् ; तन्न न संगतम्। तदर्थमेव *किंचेति* पक्षान्तरानुसरणात् ॥

तरङ्गिणी

*अर्थान्तरादिति*॥ (पृष्ठे १६१) व्यावहारिकप्रतियोगिमिति व्यावहारिकतदत्यन्ताभावसाधने बाधोऽपि बोध्यः। तव मते जलादिसाधारणाग्न्यनौष्ण्यानुमान एव बाधः; अन्यथा त्वग्न्यनौष्ण्यानुमानमप्यद्वैतस्यैव नामान्तरमित्युक्तत्वादिति भावः॥ *अद्वैतश्रुतेरिति* (पृष्ठे १६२)॥

नच—ब्रह्मभिन्नं प्रपञ्च-तन्निषेधादिकमतात्त्विकत्वेन बोधयन्त्याः श्रुतेर्नाप्रामाण्यमिति—वाच्यम्; प्रतियोगि-तदभावयोरतात्त्विकत्वबोधनस्य विरुद्धत्वात्, वस्तुतो मानस्य स्वार्थसत्तानिश्चायकत्वेन जगदभावग्राहकमानस्यापि तथात्वात् तदभावस्य बाध्यत्वाङ्गीकारे श्रुतेरतत्त्वावेदकत्वं दुर्वारम्। *तत्प्रतियोगिन इति*॥ व्यावहारिकात्यन्ताभावप्रतियोगिन इत्यर्थः। अत्र चान्वयदृष्टान्ताभावेऽपि शुक्तिरूप्यादिरेव व्यतिरेकदृष्टान्तः। रूप्यादौ पारमार्थिकत्वात्यन्ताभाववति व्यावहारिकात्यन्ताभावप्रतियोगित्वस्य सत्त्वेन व्यतिरेकव्यासौ व्यभिचारवारणाय—'अप्रातिभासिकस्ये'ति विशेषणम्। तदर्थश्चोभयसिद्धमिथ्यात्वकभिन्नत्वम्। मिथ्यात्वं च सद्विविक्तम्। अतस्तुच्छेऽपि न व्यभिचारः। नापि पक्षे हेत्वसिद्धिः; रूप्यादौ तूक्तप्रातिभासिकत्वरूपविशेषणविरहप्रयुक्तो विशिष्टव्यतिरेकोऽस्त्येव, इति न व्यभिचार इत्यर्थः। नच—बाध्यवति ब्रह्मणि हेतोरभावाद्-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

बाऽसिद्धया मिथ्यात्वबोधनमसिद्धमिति—वाच्यम्; निषेधस्य प्रसक्तिपूर्वकत्वेन निषेधवाक्यस्वाभाव्येन प्रतियोगिप्रसक्त्यवच्छेदकदेशाद्यवच्छेदेनैवोक्तवाक्येनोक्ताभावस्य बोधनीयत्वात् तदवच्छेदकविशिष्टस्य ह्रदयवद्ब्रह्मण एवाधिकरणत्वेन 'इहे'ति सर्वनामपदेनोक्तिसम्भवेन तात्पर्यवशात् तत्तदभावानां स्व-स्वप्रतियोग्यवच्छेदकावच्छिन्नतया 'इहे'ति सप्तम्याऽनवच्छिन्नविशेषणतासम्बन्धावच्छिन्नाधेयतया वोक्तश्रुत्या बोधनसम्भवात् (१)॥

सिद्धिव्याख्या

मानार्थे प्रमाणत्वप्रसङ्ग इत्युक्तम्। नच तत्र मानान्तरविरोधोऽस्ति, येन तत एव तत्र प्रमाणं नेत्युच्येत। *किंच* श्रुतेर्द्वितीयाभावोपहितचैतन्ये तात्पर्याङ्गीकारे भवदभिमतानुपहितास्खण्डचिन्मात्रासिद्धिप्रसङ्गः; उपहितस्यानुपहितादन्यत्वेन तत्प्रमाणस्य सन्मात्रसाधकत्वात्। अतः स्वस्मिन् तत्प्रमाणत्वेऽतिप्रसङ्गात्। उपहितस्यानुपहितादनन्यत्वेन, अनुपहितस्योपहितादन्यत्वेऽपि तत्प्रमाणमेव तत्प्रमाणमिति चेत्, *न*; अनुपहितस्योपहिताद् भेदे उपहितस्यानुपहिताद् भेदावश्यंभावात्। यतो यद् भिद्यते, ततस्तस्य भिन्नत्वमिति नियमात्। अपिचाद्वैतश्रुतेर्द्वितीयाभावोपहिते तात्पर्याङ्गीकार उपहितस्य कल्पितत्वेन बाध्यतयाऽतत्त्वावेदकत्वतादवस्थ्यम्, तस्माद् द्वितीयाभावसिद्धयर्थं तस्य श्रुतेस्तात्पर्यविषयत्वमकामेनापि स्वीकार्यम्। एवं च व्यावहारिकबाध्यद्वितीयाभावपरतायां श्रुतेरतत्त्वावेदकत्वं सर्वथा दुर्वारम्। *अत एव*—अद्वैतश्रुतेर्विचाररूपश्रवणादिविरहदशायामतत्त्वावेदकत्वापादनमिष्टमेव; मननिदिध्यासन-

विट्ठलेशीयटिप्पणी

तार्थग्राहिताया एवाप्रामाणिकत्वप्रयोजकत्वादिति भावः। *असिद्धयेति*॥ तद्बोधने प्रयोजनाभावेन तात्पर्याविषयत्वात्, तद्बोधकपदाभावाच्चेति भावः। *असिद्धमिति*॥ मिथ्यात्वस्य तदन्यतरघटितत्वादिति भावः। *बोधनीयत्वादिति*॥ एतेन तात्पर्यनिर्वाहकप्रयोजनमुक्तम्। तल्लाभकमाह—*तदवच्छेदकविशिष्टेति*॥ ह्रदयत्प्रतियोग्यवच्छेदकीभूतदेश-कालविशिष्टेत्यर्थः। *प्रतियोग्यवच्छेदकेति*॥ तादृशदेश-कालादेरप्युद्देश्यतावच्छेदकत्वादिति भावः। यद्यपि ह्रदयस्य धर्मितावच्छेदकतया तत्कालाद्यवच्छिन्नत्वभानेनैव समीहितनिर्वाहे तादृशकालादेर्धर्मितावच्छेदकत्वानुसरणं व्यर्थम्; तथापि विधेय उद्देश्यतावच्छेदकीयदेश-कालावच्छिन्नत्वभानोपगमे देश-कालयोरुद्देश्यतावच्छेदकत्वे तदवच्छेदकदेश-कालावच्छिन्नत्वभानप्रसङ्गः, इत्युद्देश्यतावच्छेदकीभूतं यद् देश-कालादि, तदवच्छिन्नत्वभानमेवोपगन्तव्यमित्यभिप्रायेणेदम्। *अवच्छिन्नतयेति*॥ 'बोधनसंभवादि'त्यत्रान्वयः। *अनवच्छिन्नेति*॥ देश-कालरूपावच्छेदक-

(१) अनुधातुसमभिव्याहृतसप्तम्या निरूपितत्वमात्रार्थकतया द्वैतवद्ब्रह्मनिरूपितवृत्तित्वाभाववद् द्वैतमिति बोधे जाते पुनर्विशिष्टैवतया द्वितीयाभावे ब्रह्मवृत्तित्वबोधोऽप्यर्थसिद्ध इति भावः। *एतेन* 'प्रतियोग्यभावौ तुल्ययोग-क्षेमावि'ति

न्यायामृतम्

किंच निषेधप्रतियोगित्वं किं स्वरूपेण ? किंवाऽसद्विलक्षणस्वरूपानुपमर्देन पारमार्थिकत्वाकारेण ? नाद्यः;

अद्वैतसिद्धिः

*ननु*—एतन्निषेधप्रतियोगित्वं किं स्वरूपेण ? उतासद्विलक्षणस्वरूपानुपमर्देन पारमार्थिकत्वा-

तरङ्गिणी

साधारण्यमिति—वाच्यम्; वास्तवासाधारण्यस्याप्रतिबन्धकत्वात्। न च साध्यवद्व्यावृत्तत्वमात्रेणा-साधारणत्वम्, किन्तु सर्वनिश्चितसाध्यवद्व्यावृत्तत्वेन हेतोर्दर्शनात्, ब्रह्मणस्त्वन्मतेऽज्ञेयत्वेन साध्यवत्तयाऽनिश्चया-दिति ॥ *किञ्चेति* ॥ वायौ रूपात्यन्ताभाववत् स्वरूपेणैव ब्रह्मणि प्रपञ्चस्य, पुरोवर्तिनि च रजतस्यात्यन्ता-

न्यायामृतकण्टकोद्धारः

व्यावहारिकत्वे मूलोक्तदूषणत्रयं दुस्थम्, इति न काऽप्यनुपपत्तिरिति। *नाद्यः*। श्रुत्यादिसिद्धोत्पत्त्या-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*एतन्निषेधेत्यादि* ॥ उक्तानुमान उक्तश्रुतौ च बुध्यमानं निषेधप्रतियोगित्वमित्यर्थः। *स्वरूपेणेति* ॥

न्यायामृतसौगन्ध्यम्

किञ्चैतन्निषेधप्रतियोगित्वं किं स्वरूपेण ? उतासद्विलक्षणस्वरूपानुपमर्देन पारमार्थिकत्वाकारेण ?

सिद्धिव्याख्या

द्वैतोत्पत्त्येवापातप्रतीतिरूपे श्रुतिजन्यज्ञानमात्रेऽपि यथार्थत्वं केनापि वक्तुमशक्यम्, विचारजन्यज्ञानादिदं वचित्ताद्वैत-स्वबाधितमिथ्यात्वबोधकत्वेनातत्त्वावेदकत्वापादनमयुक्तम्, आपादकाभावादिति—*निरस्तम्*; तथा सति द्वितीया-भावाभावेन तद्वदितमूर्तिप्रपञ्चमिथ्यात्वस्य इतरकाऽऽकुञ्चितत्वप्रसङ्गात्। तथाच विचारयुक्त्यैव द्वितीयाभावोऽपि ब्रह्म-चैतन्यवत् बोध्यते, इति प्रपञ्चमिथ्यात्वमिच्छताऽवश्यं स्वीकार्यम्। एवं च सति तस्य द्वितीयाभावस्य व्यावहारिकत्वं दुर्वारम्। एवमद्वैतश्रुतेरतत्त्वावेदकत्वमिति भावः। उक्तातात्त्विकत्वमेवाङ्गीकृत्योक्ताप्रामाण्यं परिहरति—*ब्रह्म-भिन्नमिति* ॥ ब्रह्मभिन्ननिषधातात्त्विकत्वस्य वास्तवत्वेन तद्बोधकप्रतीतिजनकश्रुतेरप्रामाण्यायोगादित्यर्थः। यद्यपि प्रतियोगि-तदभावयोरतात्त्विकत्वबोधनस्य विरुद्धत्वात् वस्तुतो मानस्य स्वार्थसत्ताभिनायकत्वेन जगदभावतत्त्वग्राहक-मानस्यापि तथात्वात् जगदभावे तदभावस्यापि बाध्यत्वाङ्गीकारे श्रुतेरतत्त्वावेदकत्वं दुर्वारमिति वाच्यम्; तथापि भिन्नसत्ताकयोस्तयोरतात्त्विकत्वबोधनस्य विरुद्धत्वेऽपि समसत्ताकयोस्तयोरतात्त्विकत्वबोधनस्याविरुद्धतया वस्तुतो मानस्य स्वार्थतत्त्वनिर्णायकत्वेन जगदभावातात्त्विकत्वबोधकमानस्यापि तथात्वात् तदभावस्यातात्त्विकत्वाङ्गीकारेऽपि श्रुतेस्तत्त्वावेदकत्वायोग इति भावः। *एतेन*—तत्प्रतियोगिनोऽप्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वं स्यादित्यपि —*निरस्तम्*; ब्रह्मणोऽस्मिन् मते ज्ञेयत्वेन साध्यवत्तया निश्चिते सत्त्वसाधारण्यज्ञानस्यानुमितिप्रतिबन्धकत्वाऽनु-भावाप्रवृत्तेरिति। *नन्वेतदिति* ॥ वायौ रूपात्यन्ताभाववत् स्वरूपेणैव ब्रह्मणि प्रपञ्चस्य पुरोवर्तिनि रजतस्येवात्य-न्ताभावो वा ? अथवा घटे वाच्यत्वस्य सत्त्वेऽपि समवेतत्वेन वाच्यत्वात्यन्ताभाववत् पारमार्थिकत्वेन अधिकरणेन धर्मेण तत्र तस्यात्यन्ताभावो वेति विकल्पार्थः। *ननु*—प्रपञ्चस्य रूप्यादेश्च स्वरूपानुपमर्देन निषेध इत्यनुपपन्नम्; मिथ्यावस्तुनः स्वरूपस्यैवाभावात्, अत उक्तम्—*असद्विलक्षणेति* ॥ असतो निःस्वरूपकस्य परं स्वरूपं नास्ति,

विट्ठलेशीयटिप्पणी

बोधकवाक्यानामिथ्याद्वैतसत्त्वस्यात्तत्तदर्थबोधकताया व्युत्पन्नत्वादिति भावः। एवमवच्छिन्नश्रुतिकाल्पनिकाभावोऽपि पूर्वोक्तयुक्त्यसिद्ध इत्यवसेयम् ॥ *मूलस्थ'नन्वि'त्याद्याशङ्कायाः प्रकृतार्थविघटकताऽभावेनैतत्पदं व्याचष्टे—

---

न्यायेन द्वैते ब्रह्मनिरूपितवृत्तित्वाभावबोधेऽपि द्वैताभावे ब्रह्मवृत्तित्वबोधासम्भवात् श्रुतिप्रमितत्वाभावेनाप्रातिभासिकत्वानुमित्य-सम्भवः, द्वैतकालावच्छिन्नत्वबोधासम्भवाच्चेति शङ्का—*परास्ता*; आधेयोद्देश्य-विधेयभावेनापि तन्निर्वाहादिति ॥

तरङ्गिणी

भावो वा, घटे वाच्यत्वस्य सत्त्वेऽपि समवेतत्वेन वाच्यत्वात्यन्ताभाववत् पारमार्थिकत्वेन व्यधिकरणेन धर्मेण तत्र तस्यात्यन्ताभावो वा प्रपञ्चस्य रजतस्य वा मिथ्यात्वमिति विकल्पार्थः। *ननु* प्रपञ्चस्य रजतादेश्च स्वरूपानुपमर्देन निषेध इत्यनुपपन्नम्; मिथ्यावस्तुनः स्वरूपस्यैवाभावात्, अत उक्तम्—*असद्विलक्षणेति* ॥ *असतो निरुपाख्यस्य परं स्वरूपं नास्ति, प्रपञ्चो रूप्यं चासद्विलक्षणम्, अतस्तस्य किञ्चित् स्वरूपमस्त्येवेति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्वम् = निषेधप्रतियोगि। तस्य यद्रूपमसाधारणः = सामान्यधर्मो दृश्यत्वादिः, विशेषधर्मो वाऽऽकाशत्वादिः, तेनेत्यर्थः। *पारमार्थिकत्वाकारेण = पारमार्थिकत्वरूपेण ॥

*ननु*—दृश्यत्वादिरूपेणैव प्रतियोगित्वस्य सर्वदृश्येषु सम्भवे दृश्यावृत्तिना पारमार्थिकत्वरूपेण प्रतियोगित्वं कुतो वाच्यम्? तत्राह—*असद्विलक्षणस्वरूपानुपमर्देनेति* ॥ दृश्यत्वादिविशिष्टस्याधिकरणे दृश्यत्वादिरूपेणाभावो न सम्भवति; तद्रूपावच्छिन्नप्रतियोगिताकाभावस्य तद्रूपविशिष्टनिरूपिताधिकरणत्वेन सह विरोधात् ॥ *अथ*—उक्ताधिकरणत्वं कुत्रापि न स्वीक्रियते, किन्तु शशविषाणादेरिव दृश्यमात्रस्य देश-काल-सम्बन्धित्वमेवोच्यते, अत एव दृश्यसम्बन्धस्य दृश्याभावविरोधित्वेऽपि न क्षतिरिति—चेत्, *न*;

विट्ठलेशीयटिप्पणी

*एतन्निषेधेत्यादीति* ॥ *बुध्यमानमिति* ॥ तथा चोक्तनिषेधप्रतियोगितायाः स्वरूपेण पारमार्थिकत्वेन वाऽसंभवे तद्बोधकानुमानश्रुत्योर्वाऽप्रसङ्ग इति भावः। 'स्वरूपेणे'त्यत्र स्वरूपपदस्य प्रतियोगित्व-तदाश्रयान्यतरस्वरूपपरत्वे तृतीयार्थतदवच्छिन्नत्वस्य प्रतियोगित्वेऽयोग्यत्वादसङ्गतिः, अतो व्याचष्टे—*स्वरूपेणेतीति* ॥ व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमेन 'पारमार्थिकत्वेने'ति कल्पान्तरानुसरणबीजप्रकाशकतया—'असद्विलक्षणस्वरूपानुपमर्देने'ति तृतीयान्तं सार्थकयितुमवतारयति—*नन्विति* ॥ *सम्भव इति* ॥ दृश्यत्वावच्छिन्नस्यावृत्तितास्वीकारेणैव प्रतियोग्यभावयोर्विरोधनियमाभङ्गादित्यभिमानः। *तद्रूपविशिष्टनिरूपिताधिकरणत्वेन सह विरोधादिति* ॥ अधिकरणतासम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावव्याप्यत्वनियमादित्यर्थः। कथाश्रुते गगनाभावे गगनाधिकरणत्वस्याप्रसिद्ध्या तद्विरोधत्वस्याप्रसिद्ध्याऽसत्त्वेन व्यभिचारात्। अत एव 'अथे'त्यादिना दृश्यत्वावच्छिन्नाधिकरणत्वानुपगमेन तद्विरोधनियमाभङ्गशङ्कासङ्गतिः। उक्ताभिमानं निरसितुमाशङ्कते—*अथेति* ॥ *ननु*—तत्सम्बन्धावच्छिन्न-तद्रूपावच्छिन्न-प्रतियोगिताकाभावस्य तत्सम्बन्धावच्छिन्नाधिकरणतासम्बन्धावच्छिन्न-तद्रूपावच्छिन्न-प्रतियोगिताकाभावव्याप्यत्वनियमो वाच्यः। तथा च 'तत्सम्बन्धावच्छिन्नाधिकरणतायास्तत्सम्बन्धस्वरूपत्वे संयोगादिसम्बन्धस्थले तत्सम्बन्धावच्छिन्नाधिकरणताया एव संसर्गत्वम्' इति सिद्धान्तलक्षणस्यश्रीगदाधरभट्टाचार्योक्तमते व्याप्यव्यापकयोरैक्येनोक्तनियमोपगमवैयर्थ्यम्, इति तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावस्य तत्सम्बन्धावच्छिन्नतद्रूपविशिष्टनिरूपिताधिकरणत्वाभावव्याप्यत्वमिति, तादृशाधिकरणतावद्वृत्तित्वमिति वा नियमो वाच्यः, इति गगनाभावे व्यभिचारतादवस्थ्यम्, अतस्तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्ननिरूपिताधिकरणतायास्तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावविरोधित्वनियमो वाच्यः। तत्र च गगनत्वावच्छिन्नाधिकरणताया व्याप्यत्वस्यैवाप्रसिद्ध्या व्यभिचारवारणम्, दृश्यत्वावच्छिन्नाधिकरणत्वानुपगमेन दृश्यत्वावच्छिन्नाभावस्थले व्यभिचारोद्धारसम्भवश्चास्ति, परन्तु वाद्यास्कन्दनाभ्युपगमनियामकसम्बन्धावच्छिन्नाभावस्थलानुरोधेन तद्रूपावच्छिन्नप्रतियोगिकत्वविशिष्टतत्सम्बन्धस्य तदनुयोगितायाः वा तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावविरोधित्वनियमस्यैव वाच्यतया प्रकृते दृश्यत्वावच्छिन्नाधिकरणतायाः कुत्रचिदनभ्युपगमेऽपि दृश्यत्वावच्छिन्नस्य देश-कालज्ञानैर्वृत्त्यनियामकसम्बन्धस्योपगन्तव्यतया दृश्यसम्बन्धवति दृश्याभावोपगमे दृश्यसम्बन्धादौ दृश्याभावविरोधित्वस्यासत्त्वेनोक्तनियमे व्यभिचारो दुर्वार इत्याशङ्कां परिहर्तुं दृश्यस्य देशादिसम्बन्धमपलपति—*किन्त्विति* ॥ *अत एव=दृश्यस्य देशाद्यसम्बन्धित्वादेव। *दृश्यसम्बन्धस्येति* ॥ तदनुयोगिताया वेति शेषः। *विरोधित्वेऽपि=विरोधित्वनियमस्योक्तरीत्याऽऽवश्यकत्वेऽपि।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सर्वदेश-कालसम्बन्धितया प्रतीयमानस्य दृश्यस्योक्तसम्बन्धित्वाभावासम्भवात्, अन्यथा दृश्यस्यालीकत्वापत्तेः ।

विट्ठलेशीयटिप्पणी

*न क्षतिरिति* ॥ दृश्यत्वावच्छिन्नीयाधिकरणत्वानुपगमेऽपि दृश्यसम्बन्धे दृश्याभावविरोधित्वस्यासत्त्वेन व्यभिचार-तादवस्थ्यं नेत्यर्थः । *एतेन*-'किन्त्विति' पङ्क्तौ 'देश-कालासम्बन्धित्वमि'त्यत्र देशकालावृत्तित्वमिति युक्तम्; पूर्वमधिकरणतानुपगमोक्तेः, 'दृश्यसम्बन्धस्ये'त्यादिनियमोपगमस्य प्रयोजनाभावश्च ; तदुपगमेऽपि चोक्ताधिकरण-त्वानुपगमे सति का कथं वा क्षतिः प्रसक्तेति शङ्काकलङ्को—*निरस्तः* ; उक्तरीत्या सर्वसामञ्जस्यात् । शङ्काभिमानं निरस्यति—*न सर्वेति* ॥ *अन्यथा = उक्तसम्बन्धित्वानङ्गीकारे । *अलीकत्वापत्तेः=शशविषाणवद् देशकाल-सम्बन्धितयाऽप्रतीयमानतापत्तेः । नचैतदभ्युपगम्यते माध्यमिकभिन्नैर्भवद्भिः सप्रपञ्चात्मसत्यवादिभिरिति भावः ॥

*ननु* यस्य-तस्ययोरननुगमाद् घटत्वादिरूपसमवायादिसम्बन्धघटितोऽननुगत एव प्रतियोग्यभावयोर्विरोध-नियमः । तथाच दृश्यत्वावच्छिन्नस्य तादात्म्यादिसम्बन्धे तदभावविरोधित्वानुपगमात् तदधिकरणे देश-कालादौ तदभावस्वीकारे न कोऽपि नियमो भज्यते, न वा दृश्यस्यालीकत्वापत्तिरित्याशङ्कायां स्वसमानाधिकरणत्वावच्छिन्न-तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वावच्छिन्नप्रतियोगिताकतत्सम्बन्धानुयोगिताकत्ववृत्तिधर्मसामान्यकत्व-व्याप्यमसद्विलक्षणत्वमिति नियमः, कालादिसम्बन्धित्वं स्वनिष्ठव्याप्यतानिरूपितव्यापकतासम्बन्धेन स्वविशिष्टप्रति-योगिताकत्वव्याप्यमित्यर्थः । स्वत्वस्य व्याप्यता, आधेयतासम्बन्धेन, प्रतियोगिताया व्यापकत्वं तु स्वावच्छेदकत्व-स्वसमानाधिकरणत्व-स्वनिरूपकाभावीयसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाववदनुयोगितानिरूपकत्वाव-च्छेदकसम्बन्धप्रतियोगितावच्छेदकत्वैतत्त्रितयसम्बन्धेन । निरुक्तोभयसम्बन्धघटितसामानाधिकरण्यनिवेशे स्ववृत्ति-द्रव्यत्वावच्छिन्न-तदभावयोर्विरोधमुपगम्य स्ववृत्तिघटत्वावच्छिन्नतदभावविरोधानुपगमेऽप्युक्तनियमाभङ्गात् तयोर्विरोधो न स्यात्, अतो व्यापकतानिवेशः । तथाचोक्तविरोधानुपगमे, आधेयतया घटवति घटस्य उक्तत्रितयसम्बन्धेन प्रति-योगिताया दुर्घटत्वेन व्यापकत्वानुपपत्तिः, अतस्तदुपगम आवश्यकः । घटत्वावच्छिन्नस्य द्रव्यत्वावच्छिन्नाभाव-घटत्वा-वच्छिन्नपटाभावविरोधमुपगम्य घटत्वावच्छिन्नाभावविरोधानुपगमेऽप्युक्तव्यापकत्वोपपत्तिसम्भवादुक्तदोषात् प्रथम-सम्बन्धद्वयनिवेशः । तस्य कल्याप्यभावस्य विरोधानुपगमेऽप्युक्तोपपत्तेरुक्तदोष द्रव्यस्तृतीयसम्बन्धनिवेशः । एक-सम्बन्धेन घट-तदभावयोर्विरोधोपगमे सम्बन्धान्तरेण तदनुपगमेऽप्युक्तनियमाविघातात् सम्बन्धान्तरेणापि तयोर्विरोध-सिद्धये स्वसमानाधिकरणत्वावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वावच्छिन्ननिरूपिताधिकरणताकत्वप्रति-योगिकसम्बन्धसामान्यकत्वव्याप्यमसद्विलक्षणत्वमित्यपरोऽपि नियमः स्वीकार्यः । व्यापकतासम्बन्धेन स्वविशिष्टप्रति-योगिताकत्वं सामान्यकत्वार्थः । तत्र व्याप्यता, स्वप्रतियोगिकत्वसम्बन्धेन, व्यापकता च स्वावच्छेदकत्व-स्वाश्रय-प्रतियोगिकत्व-स्वनिरूपकाभाववद्वृत्तित्वावच्छेदकधर्मावच्छिन्नीयाधिकरणतावच्छेदकत्वैतत्त्रितयसम्बन्धेन । प्रथम-सम्बन्धानिवेशे समवायेन घटवत्त्वस्य संयोगसम्बन्धावच्छिन्नतदभावविरोधमुपगम्योक्तनियमाभङ्गात समवायावच्छिन्नतद-भावेन सह तदुपगमो न स्यात्, अतस्तन्निवेशः । समवायेन घटवत्त्वस्य घटत्वेन समवायेन गगनाभावविरोधोपगमेन नियमाभङ्गसम्भवादुक्तविरोधो न स्यात्, अतो द्वितीयतन्निवेशः । नचैवमपि—तस्य घटत्वेन समवायेन पटाभावविरो-धोपगमेन निर्वाहसंभवाद् उक्तदोषतादवस्थ्यमिति—वाच्यम् ; घटाधिकरणतावच्छेदकस्य घटीयसमवायस्य पटाप्रति-योगिकतया द्वितीयसंबन्धेन पटनिष्ठप्रतियोगितावत्त्वस्यासंभवात् । एवं च दृश्यत्वावच्छिन्नसंबन्धिनि ब्रह्मादिदेशे काले वा तदभावस्वीकारे दृश्यत्वे तदवच्छिन्नसंबन्धे च निरुक्तत्रितयसंबन्धेन प्रतियोगितावत्त्वस्य दुर्घटत्वाद् देश-कालसंबन्धित्व रूपासद्विलक्षणत्वरूपव्याप्यवति दृश्यत्वावच्छिन्ने निरुक्तसंबन्धेन स्वविशिष्टप्रतियोगिताकत्वरूपव्यापकस्याभावापत्त्योक्ता-नुगतविरोधनियमद्वयभङ्गः स्यात्, इति तदनुरोधेन तत्रोक्तव्यापकाभाववति देश-कालसंबन्धित्वरूपव्याप्यस्यैवाभावापत्ति-रूपालीकत्वापत्तिर्दुर्वारेति परिहारं मनसिकृत्य 'पारमार्थिकत्वेने'ति कल्पान्तरानुसरणबीजम् 'सद्विलक्षणत्वरूपानुप-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तस्मादसद्विलक्षणदृश्यस्य दृश्यत्वादिरूपावच्छिन्नाभावविरोधरूपोपमर्दपरिहारेण पारमार्थिकत्वेन ब्रह्ममात्रनिष्ठेन रूपेणाभावस्य निवेश इति भावः ॥ *असद्विलक्षणस्वरूपेणेति* ॥ असद्विलक्षणस्य दृश्यस्य यत् स्वरूपं धर्मः, तेनेत्यर्थः। *त्रैकालिकेति* ॥

### सिद्धिव्याख्या

प्रपञ्चरूपं त्वसद्विलक्षणम्; अतस्तस्य किंचित् स्वरूपमस्त्येवेति भावः। 'श्रुत्यादिसिद्धोत्पत्तिकस्ये'त्याद्यं विशेषणद्वयं वियदादेः, तृतीय-चतुर्थे वियदादे रूप्यादेश्च। *असद्विलक्षणस्वरूपेणेति* "इत्थंभूतलक्षणे" इति तृतीया।

### विठ्ठलेशीयटिप्पणी

मर्दने'ति मूलाक्षरैर्व्यक्तीकुर्वन् निगमयति—*तस्मादिति* ॥ प्रतियोग्यभावयोर्विरोधनियमाभ्युपगमादित्यर्थः। *असद्विलक्षणस्य=असद्विलक्षणत्वरूपव्याप्यवतः। *विरोधरूपेति* ॥ विरोधनिर्वाह्योक्तव्यापकरूपेत्यर्थः। *उपमर्दपरिहारेण= अभावापत्तिपरिहारार्थम्। अध्ययनेन वसतीतिवत् फले हेतौ तृतीया। *पारमार्थिकत्वेनेति* ॥ पारमार्थिकत्वेन दृश्याभावस्य दृश्याविरोधेऽपि नोक्तनियमभङ्गप्रसङ्गः; पारमार्थिकत्वस्य दृश्यावृत्तितया तत्र व्याप्यस्यैवासत्त्वादिति भावः ॥

*केचित्तु*—स्वावच्छेदकत्व-स्वसमानाधिकरणत्व-स्वावच्छेदकसंबन्धावच्छिन्नस्वनिरूपकाभाववद्वृत्तिताऽवच्छेदकत्वैतत्त्रितयसंबन्धावच्छिन्नप्रतियोगिताकप्रतियोगित्वाभाववत्स्ववृत्तिधर्मसामान्यकत्वव्याप्यमसद्विलक्षणत्वमिति, स्वावच्छेदकत्व-स्वसमानाधिकरणत्व-स्वावच्छेदकसंबन्धावच्छिन्नस्वनिरूपकाभाववद्वृत्तितानवच्छेदकत्वैतत्त्रितयसंबन्धेन प्रतियोगितावत्स्ववृत्तिधर्मसामान्यकत्वव्याप्यमसद्विलक्षणत्वमिति वा नियमः। नच—उक्तसामान्यकत्वरूपव्यापकस्य तुच्छसाधारणतया केवलान्वयित्वेन तदभावाप्रसिद्ध्या तेनासद्विलक्षणत्वरूपव्याप्यहानिर्नाऽऽपादयितुं शक्येति—वाच्यम्; निर्धर्मके ब्रह्मणि सधर्मकत्वघटितनिरुक्तव्यापकस्याभावप्रसिद्धेः। नचैवं—असद्विलक्षणे ब्रह्मणि व्यभिचार इति—वाच्यम्; कालसंबन्धित्वपर्यवसितस्य तस्यासङ्गे शुद्धे ब्रह्मण्यभावात्। *एतेन*—निरुक्तधर्मसामान्यकत्वस्यासद्विलक्षणत्वं प्रतीवासत्त्वं प्रत्यपि व्यापकतयोक्तव्यापकाभावेनासत्त्वाभावस्यापत्तिसंभवात् कथमलीकत्वापत्तिरिति—*परास्तम्;* असत्पक्षस्येह कालासंबन्धित्वरूपतया ब्रह्मसाधारण्येनोक्तव्याप्यत्वात्। नच—निरुपाख्यत्वादिरूपासत्पक्षस्य ब्रह्मव्यावृत्ततया तदभावस्यापादनसंभव इति—वाच्यम्; तावताऽपि कालसंबन्धित्वाभावाभावापत्तेरभावेन कालसंबन्धित्वाभावापत्तेर्दुर्वारत्वात्। *यद्वा*—द्वितीयकल्पे तृतीयसंबन्धे संबन्धिताऽवच्छेदकत्वं विशेषणं देयम्। नच—संबन्धितावच्छेदकीभूतस्ववृत्तिधर्मसामान्यकत्वस्यैवासद्विलक्षणत्वव्यापकतासंभवेन तदितरांशवैयर्थ्यम्, तथाच व्याप्य-व्यापकयोरभेदे पर्यवसानमिति—वाच्यम्; व्यापके व्यर्थविशेषणत्वस्यादोषत्वात्, व्यतिरेकेऽखण्डाभावघटकतया सार्थक्याच्च। तथाच दृश्यत्वावच्छिन्नवति तदभावस्वीकार उक्तनियमद्वयान्यतरनियमभङ्गप्रसङ्गः, दृश्यत्वावच्छिन्नस्य देश-कालासंबन्धित्वरूपालीकत्वापत्तिर्वेत्यभिप्रायेणोक्तशङ्कां परिहरन्नाह—*तस्मादिति—इत्याहुः ॥

'असद्विलक्षणस्वरूपानुपमर्दने'त्यनेन पूर्वकल्पे सूचितदूषणेनैव तं कल्पं मूलकारो दूषयन्नाह—*नाद्यः; श्रुतीत्यादिना* ॥ तत्र वियदादेः स्वावृत्तिना पारमार्थिकत्वेन तुच्छत्वेन वा निषेधसंभवाद् 'असद्विलक्षणस्वरूपेणे'त्युक्तम्। तस्य असद्विलक्षणस्य स्वरूपम्=*स्वाभावविरोधित्वम्, तेनेति नार्थः; तस्य गुरुतया प्रतियोगितावच्छेदकत्वाप्रसक्तेः, वियदादेर्वियत्त्वादिरूपेण निषेधानिराकरणेन न्यूनतापत्तेश्चेत्यतो व्याचष्टे—*असद्विलक्षणेति* ॥ धर्मः=वियत्त्वादिः। *तृतीयार्थोऽवच्छिन्नप्रतियोगिताकत्वं त्रैकालिकनिषेधान्वयि ॥

*ननु* त्रैकालिकनिषेधोऽत्यन्ताभावः; स च दृश्यवत्यपि ब्रह्मणि दृश्यानवच्छेदककालावच्छेदेन दृश्यप्रतियोगिकः संभवत्येव, अव्याप्यवृत्तिप्रतियोग्यभावयोर्विरोधस्यैकदेश-कालावच्छिन्नाधिकरणताघटितत्वेन

न्यायामृतम्

श्रुत्यादिसिद्धोत्पत्त्यादिकस्यार्थक्रियासमर्थस्याविद्योपादानकस्य तत्त्वज्ञाननाश्यस्य च वियदादे रूप्यादेश्च

अद्वैतसिद्धिः

कारेण वा ? नाद्यः ; श्रुत्यादिसिद्धोत्पत्तिकस्यार्थक्रियासमर्थस्याविद्योपादानकस्य तत्त्वज्ञाननाश्यस्य च

तरङ्गिणी

भावः* ॥ *श्रुत्यादिसिद्धोत्पत्त्यादिकस्येति* ॥ आद्यं विशेषणद्वयं वियदादेः, तृतीय-चतुर्थे वियदादे रूप्यादेश्च । "असद्विलक्षणस्वरूपेणे"तीत्थंभूतलक्षणे तृतीया । श्रुत्यादिसिद्धोत्पत्तिकस्य धीकाले विद्यमानस्या-

न्यायामृतकण्टकोद्धारः

दिकस्येति* ॥ अत्र प्राचीनं विशेषणद्वयं 'वियदादेरि'त्यस्यैव, उत्तरद्वयं परमतानुसारेण वियदादेः शुक्तिरूप्यादेश्चेत्युभयोरपि । अत्र स्वरूपेण त्रैकालिकनिषेधे श्रुत्यादिसिद्धोत्पत्त्यादिकत्वमर्थक्रिया-कारित्वमविद्योपादानकत्वं तत्त्वज्ञाननाश्यत्वं च न स्यात् ; स्वरूपेण निषिद्धस्य शशशृङ्गादेस्तद-दर्शनादित्यभिप्रेतम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वक्ष्यमाणरीत्या प्रतियोगिप्रसक्त्यवच्छेदकावच्छिन्नस्यावच्छिन्नवृत्तिकान्यस्य वाऽत्यन्ताभावस्योक्तानुमान-श्रुति-बोध्यतायां वाच्यायां प्रतियोगिमत्कालत्रयसम्बन्ध्यभाव एव प्रतियोग्यधिकरणे वाच्यः, स च न सम्भवति ; उक्तविरोधादिति भावः ॥

न्यायामृतसौगन्ध्यम्

नाद्यः ; श्रुत्यादिसिद्धोत्पत्तिकस्यार्थक्रियासमर्थस्याविद्योपादानकस्य ज्ञाननाश्यस्य च वियदादेरविद्यादेश्च

विट्ठलेशीयटिप्पणी

तद्भङ्गाप्रसक्तेः, तथाच कथं त्रैकालिकनिषेधायोगादित्युच्यत इति ? अत आह—*वक्ष्यमाणेति* ॥ मूले—'ने'त्यादिग्रन्थेनेत्यादिः । *उक्तानुमानेति* ॥ सिद्धसाधनवारणायेत्यादिः । *प्रतियोगिमत्कालत्रयसंबन्ध्यभाव इति* ॥ प्रतियोगिमत्कालघटितकालत्रयसंबन्ध्यभाव इत्यर्थः । तादृशाभाव इति पाठे प्रतियोगिप्रसक्त्यवच्छेदकावच्छिन्न-वृत्तिकः, अवच्छिन्नवृत्तिकान्यो वाऽभाव इत्यर्थः । *वाच्य इति । 'किं स्वरूपेणे'ति प्रश्नोत्तरेणेति शेषः । *उक्त-विरोधादिति* ॥ नच—प्रतियोगिप्रसक्त्यवच्छेदकावच्छिन्नस्याभावस्योपगम एककालावच्छिन्नाधिकरणताघटितोक्त-विरोधभङ्गप्रसक्तावप्यवच्छिन्नवृत्तिकान्याभावोपगमे कथं तद्भङ्गः ? स्वावच्छेदकदेश-कालावच्छिन्नस्वाश्रयवृत्तित्वसंबन्धा-वच्छिन्नप्रतियोगिताकस्याभावाधिकरणत्वीयाभावस्यैव व्याप्यवृत्त्यभावसाधारण्यानुरोधेन विरोधपदार्थत्वादिति—*वाच्यम् ; एवं सत्यग्राद्यवच्छिन्नकपिसंयोगादिमति वृक्षादौ तदभावस्य निरवच्छिन्नवृत्तेरुपगमेऽपि प्रतियोग्यभावयो-र्विरोधनियमाभङ्गनिर्वाहे तस्य मूलाद्यवच्छिन्नवृत्त्युपगमस्य परेषां वैयर्थ्यप्रसङ्गात् । तस्माद् व्याप्याव्याप्यवृत्त्य-भावस्थलयोर्नियमस्यैकत्वापेक्षायामभावीयनिरवच्छिन्नाधिकरणताग्रदवृत्तित्वनियमः प्रतियोगिन इति, यन्निष्ठाभावाधि-करणतायां यादृशावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभावः, तादृशावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववती या तन्निष्ठाधिकरणता तन्निरूपकत्वाभावनियमः प्रतियोगिन इति वा वाच्यम् । तथाच किञ्चित्कालावच्छेदेन दण्डवति निरवच्छिन्नतदभाववस्योपगमेऽप्युक्तनियमभङ्गप्रसङ्ग इति भावः ॥

श्रीपाण्डुरङ्गो हृदये संविद्रूपः प्रकाशताम् । येन मे संप्रसीदेत ब्रह्मानन्दसरस्वती ॥

*ननु* असद्विलक्षणस्वरूपस्य धीकाले विद्यमानत्वविशेषणं व्यर्थम् , नच—धीपदमभावधीपरम् , तथाच दण्ड-वत्पुरुषवत्यपि दण्डानधिकरणकालावच्छेदेन विशिष्टाभावः संभवेत् , अतस्तत्सार्थक्यमिति—वाच्यम् ; स्वरूपपदस्यैव तावत्स्वाश्रयस्थितिकासाधारणधर्मपरत्वेन त्रैकालिकपदार्थभूतप्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रसक्त्यवच्छेदका-

न्यायामृतम्

**धीकाले विद्यमानेनासद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात्,**

तरङ्गिणी

सद्विलक्षणस्वरूपस्य त्रैकालिकनिषेधो न भवति ; उत्पत्त्याद्यसम्भवापातादित्यर्थः ॥ *त्रैकालिकेति* ॥ तथाचापसिद्धान्त इत्यर्थः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—दृश्यस्य देश-कालासम्बन्धित्वमेवास्तु, तथाच नासद्वैलक्षण्यम् ; तथाऽपि स्वसमानाधिकरणात्यन्ताभावघटितं मिथ्यात्वलक्षणं माऽस्तु, वक्ष्यमाणसन्मात्रवृत्त्यत्यन्ताभावप्रतियोगित्वं तु स्यात्, तत्राह—*धीकाले विद्यमानेनेति* ॥ दृश्यधीकालसम्बन्धिनेत्यर्थः। कालसंसृष्टतया प्रतीयमानदृश्ये विशेषणतया प्रतीयमानेनेति यावत्। तथाचोक्तासम्बन्धित्वस्वीकारे दृश्यस्य प्रतीतिविरोध इति भावः। उत्पत्ति-विनाशवत्त्वात्, अर्थक्रियासामर्थ्यात्, परिणामत्वाच्च न दृश्यमसदित्याशयेनाह—*श्रुत्यादीत्यादि* ॥ "इदं सर्वमसृजत" "सत्यं चानृतं च सत्यमभवदि"त्यादिश्रुत्या सावयवत्वादिलिङ्गकानुमानादिना च ब्रह्माधीनोत्पत्तिकत्वेन रूपेण वियदादेः शुक्तिरूप्यादेश्च बोधनाद् नालीकतेति भावः। षष्ठ्यन्तचतुष्टयं वियदादेः शुक्तिरूप्यादेश्च विशेषणम्। *अर्थक्रिया=कार्यम्, तत्र समर्थस्य=प्रयोजकस्य। शुक्तिरूप्यादेरपि प्रवृत्त्यादिजनकधीविषयत्वात्

न्यायामृतसौगन्ध्यम्

**धीकाले विद्यमानेनासद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात्, नापि द्वितीयः ; अबाध्यत्वरूपपार-**

विट्ठलेशीयटिप्पणी

**वच्छिन्नत्वावच्छिन्नवृत्तिकान्यत्वान्यतरविशेषणाक्रान्ताभावासंभवस्यैव मूल उक्तत्वेन तादृशविशेषणानाक्रान्तोक्तविशिष्टाभावासंभवस्याकिञ्चित्करत्वेनोक्तशङ्कानवतारादित्यतो वर्णितासद्विलक्षणस्वरूपानुपमर्देनेति विशेषणाभिप्रायस्फोरकतया तत् सार्थकयितुमवतारयति—*नन्विति* ॥ *ननु* दृश्यस्य देश-कालासंबन्धित्वेऽसद्वैलक्षण्यं न स्यात्, तथाच स्वाधिकरणताघटितमिथ्यात्वलक्षणासंभव इत्यत आह—*तथाचेति* ॥ तथा सतीत्यर्थः। यद्यपीति शेषः। *माऽस्तु=मा संभवतु। *स्यात्=संभवेत्। तात्पर्यार्थमाह—*कालसंसृष्टतयेति* ॥ उक्तासंबन्धित्वेति* ॥ कालादिसंबन्धित्वेत्यर्थः। *दृश्यस्य=वियदादेः। दृश्यत्व-वियत्त्वादिरूपेणेत्यादिः। *प्रतीतीति* ॥ दृश्यस्य दृश्यत्वादिरूपेण कालादिसंबन्धितया प्रतीतेर्विरोधः, प्रमात्वानुपपत्तिरित्यर्थः। अत्रेष्टापत्तिं श्रुत्यादीत्यादिविशेषणवैयर्थ्यं चाशङ्क्य, 'श्रुत्यादी'त्यादिविशेषणचतुष्टयं दृश्यस्यासत्त्वशङ्कावारकतया सफलयति—*उत्पत्तीति* ॥ *नाशः='तत्त्वज्ञाननाश्यस्ये'-त्यनेन बोधितः। *ननु*—"एतस्मादात्मन आकाशः संभूतः" इत्यादिसृष्टिवाक्येभ्यो वियदादेर्ब्रह्मोपादानकत्वलाभेऽपि शुक्तिरूप्यादेर्ब्रह्मोपादानकत्वालाभ इत्यत आह—*इदं सर्वमिति* ॥ ब्रह्म कर्तृ, पूर्वप्रकृतमिदं परिदृश्यमानं व्यावहारिक-प्रातिभासिकलक्षणं सर्वं जगद् असृजतेत्यर्थः। अत्र स्फुटतात्पर्यकं श्रुत्यन्तरमाह—*सत्यं चेति*। *सत्यम्=ब्रह्म। *सत्यम्=व्यावहारिकं वियदादि। *अनृतम्=प्रातीतिकं शुक्तिरजतादि। *अभवत्=तद्रूपेण व्यवर्ततेत्यर्थः। रज्जुस्सर्पोऽभवदितिवत् सामानाधिकरण्यम्। आदिपदार्थमाह—*सावयवत्वादीति* ॥ उपचयापचयादिक आदिपदार्थः। सावयवत्वहेतुकार्थापत्तिरनुमानादीत्यादिपदार्थः। *ब्रह्माधीनेति* ॥ सावयवत्वादिलिङ्गकानुमानादिनोत्पत्तिसिद्धौ परिशेषानुमानेन ब्रह्माधीनोत्पत्तिकत्वसिद्धिः। यद्वा—सावयवत्वादिलिङ्गकानुमानेनैवैकस्य ब्रह्मणः सर्वकारणत्वे लाघवमिति श्रुत्यधीनलाघवज्ञानसहकृतेन ब्रह्माधीनोत्पत्तिकत्वसिद्धिरिति भावः। *ननु* वियदादिविशेषणेन षष्ठ्यन्तेन शुक्तिरूप्यादेः कथं तत्त्वेन बोधनम्? अत आह—*षष्ठ्यन्तेति* ॥ *अर्थस्य=पदार्थस्य क्रिया व्यापार इति नार्थः ; अर्थासंग्रहापत्तेः, किंतु अर्थरूपा क्रिया कार्यमितीत्याह—*अर्थेति* ॥ समर्थपदं न जनकपरम्; शुक्तिरूप्यादेः कार्याजनकत्वात्, अत आह—*समर्थस्येति* ॥ तस्याजनकत्वे जनकजनकत्वादिरूपा प्रयोजकताऽपि कथम्? तत्राह—*शुक्तिरूप्यादेरपीति* ॥ अवच्छेदकत्वं विषयितया बोध्यम्। *ननु***

## अद्वैतसिद्धिः

वियदादे रूप्यादेश्च धीकाले विद्यमानेनासद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात्, नापि द्वितीयः ; अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात्, पारमार्थिकत्वस्यापि स्वरूपेण निषेधे प्रथमपक्षोक्तदोषापत्तिः, अतस्तस्यापि पारमार्थिकत्वाकारेण निषेधेऽनवस्था स्यादिति—

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादृशजनकतावच्छेदकत्वेनोक्तप्रयोजकता । *अविद्योपादानकस्य = अविद्यापरिणामत्वेन "अजामेका"मित्यादि-श्रुत्यादिबोधितस्य । तत्त्वम् = अधिष्ठानम् । *निरूप्यत्वेन = घटितत्वेन । *अन्योन्याश्रयादिति* ॥ मिथ्यात्वज्ञानं विना न मिथ्यात्वघटितस्य पारमार्थिकत्वस्य ज्ञानम्, पारमार्थिकत्वज्ञानं विना पारमार्थिकत्व-घटितमिथ्यात्वस्य न ज्ञानम्, इत्यन्योन्याश्रयादित्यर्थः ।

*ननु*—पारमार्थिकत्वं प्रकृते न बाध्यत्वाभावः, किन्तु ज्ञानानिवर्त्यमात्रविशेष्यकधीः ; तथाच विशेष्यता-सम्बन्धेन तदवच्छिन्नस्य प्रतियोगित्वस्य निवेशेऽन्योन्याश्रयानवकाशः, पारमार्थिकत्वस्य तद्घटितमिथ्यात्वाघटित-

## न्यायामृतसौगन्ध्यम्

र्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात्, पारमार्थिकत्वस्यापि स्वरूपेण निषेधे प्रथमपक्षोक्तदोषापत्तिः । अतस्तस्यापि पारमार्थिकत्वाकारेण निषेधेऽनवस्था स्यात् ॥

## सिद्धिव्याख्या

श्रुत्यादिसिद्धोत्पत्तिकस्य धीकाले विद्यमानस्यासद्विलक्षणस्वरूपस्य त्रैकालिकनिषेधो न संभवति ; उत्पत्त्याद्य-संभवापातादित्यर्थः । *त्रैकालिकेति* ॥ तथाचापसिद्धान्त इत्यर्थः । *द्वितीयपक्षं दूषयति—अबाध्यत्वेति* ॥ अबाध्यत्वरूपपारमार्थिकत्वज्ञाने सति तद्घटितमिथ्यात्वज्ञानम्, बाध्यत्वज्ञाने सति पारमार्थिकत्वज्ञानमित्यन्योन्या-श्रयात् पारमार्थिकत्वासिद्धिः ; अतोऽबाध्यत्वरूपासिद्धिनिषेधाय बुद्धिपूर्वकारोपरूपा प्रसिद्धिर्वाच्या, आरोपश्चा-

## विट्ठलेशीयटिप्पणी

ब्रह्मोपादानकस्य कथमविद्योपादानकत्वम् ? अतो व्याचष्टे—*अविद्योपादानकस्येति* । *परिणामत्वेनेति* ॥ ब्रह्मणस्तु शुक्त्यादेरिव विवर्तोपादानत्वमिति भावः । परमाण्वाद्युपादानकत्ववादिनिरासाय—*श्रुत्यादिबोधि-तस्येति* ॥ श्रुतिश्च "अजामेकाम्" इत्यादिः । तत्र "सरूपाम्" इत्युक्तेः, परिणाम-परिणामिनोरेव सारूप्यात् । आदिना स्मृत्यनुमानादिः । तत्त्वपदस्य ब्रह्मात्मस्वरूपपरत्वे 'रूप्यादेरि'त्यत्रानन्वयापत्तिः, अत आह—*तत्त्वमधिष्ठानमिति* ॥ अत्रार्थवादादिश्रुतीनां स्वार्थेऽप्रामाण्यस्यापि दर्शनात् श्रुत्यादिसिद्धोत्पत्तिकमपि दृश्यमर्थक्रियाकारित्वरूपसल्लक्षणस्याभावे कथमसद् न ? इत्यादिशङ्कामुद्धरन् तल्लक्षणरूपमेव हेत्वन्तरमसद्वैलक्षण्य-साधकमाह—*अर्थक्रियासमर्थस्येति* ॥ *नन्वेवम्* ब्रह्मवत् परमार्थसदेव तदस्तु, कुतस्तन्मिथ्या ? इत्याशङ्का-मुद्धरन् हेत्वन्तरमाह—*अविद्योपादानकस्येति* ॥ तत्त्वे कथन्तामुद्धरन् हेत्वन्तरमाह—*तत्त्वज्ञाननाश्यस्येति* ॥ तत्त्वेन "विद्वान्नामरूपाद्विमुक्तः" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इत्यादि-श्रुतिप्रमितस्येत्यर्थ इत्युत्प्रेक्षन्ते । बाध्यत्वाभावस्य न बाध्यत्वरूपप्रतियोगिनिरूप्यत्वम्, अभावत्वरूपानुयोगिताया एव तथात्वात्, अतो व्याचष्टे—*निरूप्यत्वेनेति*॥ बाध्यत्वाभावरूपपारमार्थिकत्वस्य नित्यत्वेनोत्पत्तौ तस्य ब्रह्मस्वरूपतया सत्यत्वेन, मिथ्यात्वस्य च बाध्यत्वेन स्थितावप्यन्योन्याश्रयस्यासम्भवाद् ज्ञप्तौ तं व्युत्पादयति—*मिथ्यात्वज्ञानं विनेति* ॥ द्वितीयं दूषणं सङ्गमयितुमन्योन्याश्रयं शङ्कते—*नन्विति* ॥ *धीरिति* ॥ ज्ञानानिवर्त्यत्वस्य तुच्छेऽपि सत्त्वेन तत्र पारमार्थिकत्वव्यवहारापत्तिः, इति तादृशधीपर्यन्तानुधावनम् । सा च 'सत्यं सर्वं वाच्यमि'त्या-कारिका सिद्धान्तिमते ब्रह्ममात्रविषया, परेषां प्रातिभासिकातिरिक्तमात्रविषयिणी, इति तदवच्छिन्नप्रतियोगितासाधने न

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वात् । नच—उक्तधियस्तद्व्यक्तित्वेन निवेशासम्भवः, परार्थानुमाने तदादिसर्वनामशब्देन साध्यनिर्देशस्यासाम्प्रदायिकत्वात्, तद्व्यक्तित्वविशिष्टज्ञानापेक्षया लघोर्घटत्वादेरेव विशेष्यतासम्बन्धेन प्रपञ्चनिष्ठप्रतियोगितायामवच्छेदकत्वात्, नापि तादृशधीत्वेन ; तस्य तद्व्यक्तित्वाद्यपेक्षया गुरुशरीरत्वेन तेन रूपेण धियः प्रतियोगितावच्छेदकत्वस्य निवेशयितुमशक्यत्वादिति—वाच्यम् ; तादृशधीत्वोपलक्षितज्ञाननिष्ठावच्छेदकताया एव निवेशेन तादृशधीत्वस्य गुरुत्वेऽपि क्षतिविरहात् । नचैवम्—प्रपञ्चस्य तादृशपारमार्थिकत्ववत्त्वेऽपि पूर्वक्षणवृत्तित्वविशिष्टतादृशपारमार्थिकत्वरूपतत्तद्धीव्यक्तिरूपेण तत्तद्घटादेस्तदधिकरणेऽभावसत्त्वेन सिद्धसाधनम्, 'एतत्क्षणे पूर्वक्षणवृत्तित्वविशिष्टतज्ज्ञानवान् नास्ती'ति प्रत्ययादिति—वाच्यम् ; अनवच्छिन्नोक्तावच्छेदकताया निवेशात्, स्वरूपतस्तत्तद्धीव्यक्तेरवच्छेदकत्वसम्भवात् ।

[ नच—तथापि सिद्धसाधनं तदवस्थम् ; घटादेर्ज्ञानवतो घटादेरेतत्क्षणावच्छेदेन स्वाधिकरणेऽभावादिति—वाच्यम् ; उपलक्षणविधयाऽवच्छेदकत्वेऽस्य निवेशात् । तथाच पृथिवीवृत्तित्वोपलक्षितगुणत्वावच्छिन्नाभावस्य पृथिवीसंयुक्तद्रव्य इव नष्टज्ञानविषयत्वोपलक्षितघटादेरभावस्य स्वाधिकरणे सत्त्वाद् न दोषः । क ] नच—प्रपञ्चस्य मिथ्यात्वसंशयकाले प्रकृतानुमानस्यावतारः, तथाच तत्काले तादृशधियः प्रपञ्चविशेष्यकत्वस्य सन्दिग्धतया प्रपञ्चवति तादृशधीरूपेण प्रपञ्चस्याभावो ज्ञातुमशक्य इति—वाच्यम् ; उक्तधीरूपेण प्रपञ्चवत्त्वं यत्र निर्णीतम्, तत्रैव तद्रूपेण प्रपञ्चाभावस्य ज्ञातुमशक्यत्वेन प्रपञ्चे तादृशधीसंशयप्रयुक्ते तादृशधीरूपेण प्रपञ्चस्य ब्रह्मणि संशये सत्यपि तद्रूपेण तस्य तत्राभावज्ञाने बाधका-

विट्ठलेशीयटिप्पणी

सिद्धसाधनमिति पूर्वोक्तमनुसन्धेयम् । स्वार्थानुमाने साध्यनिर्देशस्यैवासत्त्वात् तद्विशेषस्यासाम्प्रदायिकत्वोक्तिरसङ्गतेति—*परार्थेति*॥ 'घटोऽन्यः' 'इतरः' इत्यादिप्रतिज्ञायामन्यादिसर्वनाम्ना साध्यनिर्देशस्य साम्प्रदायिकत्वात्—*तदादीति* ॥ 'तनोतीति तत्' इति व्युत्पत्तिसिद्धविस्तारकर्त्रर्थकासर्वनाम्ना साध्यनिर्देशसम्भवात्—*सर्वनामेति* ॥ निगमनादौ हेतुनिर्देशस्य तथात्वात्—*साध्येति* ॥ *अवच्छेदकत्वादिति* ॥ तद्व्यक्तित्वविशिष्टज्ञानावच्छिन्नप्रतियोगिताया अप्रसिद्धत्वादिति शेषः । *तादृशधीत्वेन*—ज्ञानानिवर्त्यमात्रविशेष्यकधीत्वेन । *अशक्यत्वादिति* ॥ अप्रसिद्धेरिति भावः । *उपलक्षितेति* ॥ आश्रयेत्यर्थः । तादृशधीत्वसमानाधिकरणेति निष्ठान्तार्थः । तत्र तादृशधीत्ववत्ता च समवायेन तादात्म्येन वेति सूचनाय ज्ञानपदम् । *स्वरूपत इति* ॥ प्रतियोगितावच्छेदकाननुगम एव प्रतियोगितावच्छेदकतावच्छेदकस्यानुगतस्यापेक्षा । नह्येकव्यक्तेः प्रतियोगितावच्छेदकत्वे साऽस्ति ; जात्यतिरिक्तस्य पदार्थस्य किञ्चिद्धर्मप्रकारेणैव भानमिति नियमे जातिपदेनैकव्यक्तिकं विवक्षितम् ; अन्यथा तद्व्यक्तित्वादेरपि स्वरूपतोऽवच्छेदकत्वस्य दुरुपपादत्वादिति भावः । *अशक्य इति* ॥ प्रपञ्चे विशेष्यतासम्बन्धेन तादृशधियः संशयेऽपि तादृशधीरूपेण प्रपञ्चस्य ब्रह्मणि निर्णयात् सामानाधिकरण्यसम्बन्धेन किञ्चिद्विशेषणविशिष्टे संशये विशेषणसंशयस्य विशिष्टतदभावसहचरितत्वेन गृहीतविशेषण-तदभाववद्धर्मिज्ञानमुद्रया कारणत्वेऽप्याश्रयतासम्बन्धेन रक्तत्वादिविशिष्टदण्डादिकोटिकभूतलादिधर्मिकसंशये दण्डादिधर्मिकस्य विशिष्टदण्डव्यधिकरणरक्तत्वादिसंशयस्य कारणत्वे मानाभावादिति भावः । *निर्णीतमिति* ॥ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयस्याभावज्ञानप्रतिबन्धकत्वादिति भावः । *ननु*—प्रकृते तादृशनिर्णयः कुतो नेति ? अत आह—*प्रपञ्चे तादृशधीसंशयप्रयुक्त इति* ॥ रक्तत्वादिविशिष्टदण्डादिसंशये विभिन्नधर्मिकस्यापि दण्डादौ रक्तत्वादिसंशयस्यान्वय-व्यतिरेकाभ्यां कारणतया, दण्डादौ रक्तत्वादिसंशये रक्तत्वादौ दण्डादिनिष्ठभूतलादिधर्मिवृत्तितावच्छेदकत्वसंशयवद् भूतलादौ दण्डादिनिष्ठस्ववृत्तितावच्छेदकीभूतरक्तत्वादिकस्य रक्तत्वादिविशिष्टदण्डाद्यभावव्यावर्तकधर्मस्यापि संशयेन तादृशव्यावर्तकधर्मनिर्णयविघटकतया वा प्रयोजकतया प्रपञ्चे उक्तपारमार्थिकत्वसंशयस्यापि ब्रह्मणि तद्विशिष्टप्रपञ्चसंशयप्रयोजकत्वादिति भावः । *ननु*

अद्वैतसिद्धिः

चेत्, *मैवम्* ; स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपञ्चे शुक्तिरूप्ये चाङ्गीकारात्।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावात्, ग्राह्यसंशयस्य प्रतिबन्धकत्वपक्षेऽपि प्रत्यक्षं प्रत्येव तत्स्वीकारात्, अनुमित्यात्मकोक्ताभावज्ञाने तद-स्वीकारात्, अत आह—*पारमार्थिकत्वस्यापीत्यादि* ॥ *स्वरूपेण = स्वनिष्ठधर्मेण । *अनवस्थेति* ॥ 'ज्ञानं सर्वं स्वविषयकमि'ति वादिनो मते ज्ञानानिवर्त्यमात्रविशेष्यकधीरप्रसिद्धा, ज्ञानत्वविशिष्टतया स्वग्राहकत्वेन ज्ञानमात्रस्य स्वविशेष्यकत्वात् ; तथाच तादृशवादिनं प्रति स्वभिन्नं यद् ज्ञाननिवर्त्यम्, तदविशेष्यकधीरूपपारमार्थिकत्वं निवेश्यम्, तस्य च विशेष्यतासम्बन्धेन स्वनिष्ठत्वात् तादृशधीरूपेण स्व-स्वेतरसकलदृश्यनिषेधासम्भवात् तादृशधीतरसकलदृश्यानामेव तादृशधीरूपेण निषेधप्रतियोगित्वम्, तादृशधियां तु 'एकस्या अन्यया तस्या अप्यन्यया तस्या अप्यन्यये'त्येवंरीत्या निषेधप्रतियोगित्वमित्यनवस्था । नच—तादृशधीरूपावच्छिन्नं यत् तादृशधीभिन्ननिष्ठप्रतियोगित्वम्, यच तादृशधियां स्वेतरतादृशधीरूपावच्छिन्नं

सिद्धिव्याख्या

निर्वचनीयपारमार्थिकत्वविषयः, इति पारमार्थिकत्वस्यापि न स्वरूपेण निषेधः, किन्तु पारमार्थिकत्वान्तरेण, तस्या-प्युक्तविधया पारमार्थिकत्वान्तरेणेत्यनवस्थानादित्यर्थः । आद्यकल्पमादाय समाधत्ते—*मैवम् ; स्वरूपेणेति* ॥ तद-

विट्ठलेशीयटिप्पणी

प्रतियोगिसंशयस्य प्रतिबन्धकत्वे तदुत्तरमभावप्रत्यक्षनिर्णयापत्तिरत आह—*ग्राह्यसंशयस्येति* ॥ *तदस्वीकारादिति* ॥ अनुमितौ ग्राह्यसंशयस्य पक्षताघटकतयाऽनुकूलतया प्रतिबन्धकत्वास्वीकारादित्यर्थः । अनुमितिग्रहणं शाब्दबोधस्याप्युप-लक्षणम् ; तत्रापि तस्य योग्यतासंपादकतयाऽनुकूलत्वेनाविरोधात् । *एतेन* "नेह"त्यादिश्रुतिजन्यबोधोऽपि निष्प्रत्यूहः । ननु*—पारमार्थिकत्वं ज्ञानानिवर्त्यमात्रविशेष्यकधीः । सा च विशेष्यतासंबन्धेन ब्रह्ममात्रवृत्तिर्न ज्ञान-निवर्त्ये तादृशधीरूपे पारमार्थिकत्वेऽस्ति, इति तेनैव रूपेण पारमार्थिकत्वस्यापि निषेधे कथमनवस्था ? पारमार्थिक-त्वस्य स्वेन रूपेण निषेधसंभवे हि स्वभिन्नेन पारमार्थिकत्वेन निषेधः, तस्यापि स्वभिन्नेन, इत्येवमनवस्था स्यादित्यत आह—*ज्ञानं सर्वं स्वविषयकमिति* ॥ एतन्नियमनिर्वाहकं कार्य-कारणभावमाह—*ज्ञानत्वविशिष्टतयेति* ॥ विषयतासंबन्धेन ज्ञानं प्रति तादात्म्यसंबन्धेन ज्ञानत्वविशिष्टत्वेन कार्यसहभावेन कारणत्वेनेत्यर्थः । *स्वविशेष्य-कत्वात्=ज्ञाननिवर्त्यरूपस्वविशेष्यकत्वात् । ज्ञाननिवर्त्याविषयकत्वस्य मात्रार्थत्वादिति भावः । *तथाच= ज्ञानानिवर्त्यमात्रविशेष्यकधीरूपपारमार्थिकत्वस्याप्रसिद्धौ च । *स्वभिन्नमिति* ॥ स्वम्=स्वविशेष्यकत्वानु-योगिनी धीः । एवं चेदृशपारमार्थिकत्वस्यानुगमेनैकैकतत्तद्घटितानुगतानन्तसाध्यानुमितीनामनवस्थया जगतो मिथ्यात्वनिश्चयश्चिरेणापि दुर्घटः । स्वभिन्नज्ञाननिवर्त्यविशेष्यका या बुद्धिः शुक्त्यादौ रजतादिविषयिणी, ब्रह्मणि प्रपञ्चविषयिणी च, तद्भिन्नत्वविशिष्टधीत्वेन, स्वविशेष्यत्व-स्वभिन्नज्ञाननिवर्त्यत्वोभयसंबन्धावच्छिन्न-प्रतियोगिताकज्ञाननिवर्त्याभावविशिष्टधीत्वेन वा 'सत्यं सर्वं बाध्यमि'त्याकाराः पारमार्थिकत्वपदार्थभूता धियोऽनुगमय्य तादृशधीत्वोपलक्षितावच्छिन्नप्रतिपन्नोपाधिनिष्ठाभावप्रतियोगित्वेनानुपदं 'वस्तुतस्त्वि'त्यादि-वक्ष्यमाणरीत्या साध्यानुगमे तु तदनुमित्यनवस्थाविरहेऽपि तदनुमितौ तादृशप्रतियोगित्वरूपसाध्यांशेऽवच्छेदकविधया भासमानानां तादृशधीरूपपारमार्थिकत्वानां विषयिताऽनवस्थैव गुरुमते स्वप्रकाशघटादिज्ञाने प्रामाण्यविषयिताऽन-वस्थावद् दोषः, विशिष्टबुद्धौ विशेषणज्ञानहेतुतामते तु तादृशधीरूपपारमार्थिकत्वानां ज्ञानापेक्षणात् तेषां चानवस्थित-परम्पराकतया सामान्यलक्षणानुपगमे चिरेणापि प्रातिस्विकरूपेण दुर्विज्ञेयतया जगन्मिथ्यात्वानुमितिरूपो निश्चयो दुर्घट इत्यपि दूषणं सुवचम् । *स्वनिष्ठत्वादिति* ॥ तेन रूपेण स्वनिषेधासंभवेनेति शेषः । स्व-स्वेतरेति

अद्वैतसिद्धिः

तथाहि—शुक्तौ रजतभ्रमानन्तरमधिष्ठानतत्त्वसाक्षात्कारे 'रूप्यं नास्ति नासीद् न भविष्यती'ति स्वरूपेणेव 'नेह नाने'ति श्रुत्या प्रपञ्चस्यापि स्वरूपेणैव निषेधप्रतीतेः। नच—तत्र लौकिकपरमार्थरजतमेव

तरङ्गिणी

*अत्र वदन्ति*—(सि०) "स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वं प्रपञ्चे रूप्ये चाङ्गीकुर्मः। तथाहि—शुक्तौ रजतभ्रमानन्तरमधिष्ठानतत्त्वसाक्षात्कारेण 'रूप्यं नास्ति नासीद् न भविष्यती'ति स्वरूपेणेव "नेह नाने"ति श्रुत्या प्रपञ्चस्य स्वरूपेणैव निषेधः प्रतीयते।

न्यायामृतकण्टकोद्धारः

*ननु* प्रतिपन्नोपाधौ त्रैकालिकनिषेधे कथमत्यन्तासत्त्वम्? सार्वत्रिक-त्रैकालिकनिषेधप्रतियोगित्वस्य तत्त्वादित्यत आह—*प्रतिपन्नोपाधाविति*॥ तथाच स्वरूपेण निषेधपक्ष उत्पत्त्यादिवचनविरोधादत्यन्तासत्त्वमिति दूषणत्रयं दत्तम्॥

*अत्र कश्चित्*—स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्; "नेह नाने"ति श्रुत्या

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रतियोगित्वम्, तदुभयस्य प्रत्येकरूपेण साध्यत्वे दृश्यत्वादिहेतोर्व्यभिचारित्वमप्यस्ति, इति तदनुक्त्या न्यूनतेति—वाच्यम्; उक्तप्रतियोगित्वयोरन्यतरवत्त्वे साध्ये व्यभिचाराभावात्। *वस्तुतस्तु—तादृशधियां स्वेतरतादृशधीरूपावच्छिन्नप्रतियोगित्वमादाय साध्यवत्त्वपर्यवसानसम्भवेन तादृशधीत्वोपलक्षितावच्छिन्नप्रतियोगित्व-

सिद्धिव्याख्या

ङ्गीकारेऽनुभव एव प्रमाणमित्याह—*तथाहीति*॥ *प्रतीतेरिति*॥ अन्यथा 'पारमार्थिकत्वेन रूपेण रूप्यं नास्ति' 'पारमार्थिकत्वेन नाना नास्ती'ति तन्निषेधोल्लेखापत्तेरित्यर्थः। *नच तत्रेति*॥ शुक्तावित्यर्थः। लौकिक-

विट्ठलेशीयटिप्पणी

द्वन्द्वः। *तदुभयस्य=तादृशसंशयद्वयघटकस्य। *प्रत्येकरूपेण=तादृशैकैकधीघटिताननुगतरूपेण। *व्यभिचारित्वमप्यस्तीति*॥ दृश्यत्वरूपहेतुमत्यां तद्धीरूपावच्छिन्नप्रतियोगित्वरूपसाध्यस्य तद्धियाम्, तदन्यधीरूपावच्छिन्नप्रतियोगित्वरूपसाध्यस्य च तदन्यधियामसंभवादिति भावः। *उक्तप्रतियोगित्वयोरिति*॥ बहुत्वेऽपि राशिद्वैविध्याद् द्विवचनम्॥ *अन्यतरवत्त्वे=अन्यतमवत्त्वे। *ननु*—प्रातिस्विकरूपेण तत्तद्धीघटितान्यतरवत्त्वं दुर्ज्ञेयमित्याशङ्क्योक्तरीत्या तादृशधियामनुगममभिप्रेत्याह—*वस्तुतस्त्विति*॥ *तादृशधियामिति*॥ तादृशधीभिन्नानाम्। *तादृशधीरूपावच्छिन्नप्रतियोगित्वमादायेत्यादि*॥ *प्रतियोगित्वमादाय=प्रतियोगित्वीयसंसर्गविधया विषयीभूय। साध्यसंबन्धकर्तृकपर्यवसानक्रियासमानकर्तृकत्वात् क्त्वाप्रत्ययः। *पर्यवसानम्=अनुमितिविषयीभवनम्। 'नेत्रे निमील्य हसती'तिवत् समानकालीनत्वे क्त्वाप्रत्ययः। 'तादृशधियामि'त्येतदर्थतादृशधीपक्षकत्वस्यानुमितावन्वयः। *यद्वा—प्रतियोगित्वमादाय*=प्रतियोगित्वीयसंसर्गानुयोगिविधया विषयीभूय। धियामिति कर्तृषष्ठी॥ *साध्यवत्त्वपर्यवसानम्*=मिथ्यात्वानुमितौ साध्यसंबन्धविषयतानिरूपितविषयताश्रयत्वम्। अस्य 'तादृशधियामि'त्यनेनान्वयः। *प्रतियोगित्वरूपैकसाध्यस्य=प्रतियोगित्वत्वरूपैकधर्मावच्छिन्नसाध्यस्य॥

*मूले*—प्रतियोग्यभावयोर्विरोधात् कथमिदमित्याशङ्क्य, अनुभवानुरोधादित्याह—*तथाहीति*॥ शुक्तौ रजतभ्रमानन्तरमिति*॥ ब्रह्मणि प्रपञ्चभ्रमानन्तरं चेति शेषः। प्रतियोगिप्रसक्त्यर्थमिदमधिष्ठानत्वम्। तत्त्वं शुक्तेर्नीलपृष्ठत्वादिकम्, ब्रह्मणश्चाद्वितीयत्व-सत्यत्वादिकम्, तत्साक्षात्कारश्च भ्रम-संशयोत्तरं प्रत्यक्षनिश्चये विशेषदर्शनस्य हेतुत्वादपेक्षणीयः। एवं च श्रौतप्रपञ्चाभावबोधे नैतदपेक्षेत्यवधेयम्। अत्र *रूप्यं नास्तीति* स्वरूपेणैव

अद्वैतसिद्धिः

स्वरूपेण निषेधप्रतियोगीति—वाच्यम् ; भ्रम-बाधयोर्वैयधिकरण्यापत्तेः, अप्रसक्तप्रतिषेधापत्तेश्च ।

तरङ्गिणी

नच तत्र लौकिकपरमार्थरजतमेव स्वरूपेण निषेधप्रतियोगीति—वाच्यम् ; भ्रम-बाधयोर्वैयधि-

न्यायामृतकण्टकोद्धारः

'रूप्यं ने'ति प्रतीत्या च स्वरूपेणैव निषेधात् । नच—तत्र लौकिकपारमार्थिकमेव रजतं स्वरूपेण निषिद्धयत

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रूपैकसाध्यस्यैव दृश्यमात्रेऽनुमानसम्भवाद् न व्यभिचारप्रसक्तिरिति भावः । (१) [ इति स्वरूपेण=इत्या-कारानुभवेन, प्रतीतेः=विषयीकरणात् । ख]

*लौकिकपरमार्थेति* ॥ परमार्थतया लोकसिद्धेत्यर्थः । व्यावहारिकेति यावत् । *वैयधिकरण्यम्*= भिन्नविषयकत्वम् । *अप्रसक्तेति* ॥ शुक्तौ व्यावहारिकरूप्यस्य तादात्म्येन ज्ञातत्वरूपप्रसक्तेरभावेन तत्र तन्निषेधेऽप्रसक्तनिषेधः ; तथाचानुभवविरोधः, 'भ्रमानन्तरमि'त्यादिनोक्तनिषेधस्य प्रसक्तनिषेधत्वानुभवात् ।

सिद्धिव्याख्या

परमार्थरजतमेवेति* ॥ नतु लौकिकानिर्वचनीयरजतमित्यर्थः । *भ्रमेति* ॥ 'इदं रजतमि'ति सामानाधिकरण्यानु-भवविषयभूतानिर्वचनीयरजतं विना लौकिकपारमार्थिकरजतस्य बाधविषयत्व उभयोर्भिन्नविषयतया वैयधिकरण्यं

विट्ठलेशीयटिप्पणी

निषेधप्रतीतेरिति योजनायां 'शुक्तिरूप्यस्ये'ति शेषेण शुक्तिरूप्यस्वरूपेण 'रूप्यं नास्ती'त्याकारकनिषेधप्रतीतेरित्यर्थो वाच्यः । तथाचात्र 'प्रपञ्चस्यापि स्वरूपेणैवे'त्यत्र च स्वरूपेणैवेत्यस्य वैयर्थ्यम् ; एकस्यैवोभयान्वयात्, प्रतीत्यन्वितार्थक-तृतीयान्तान्तरं विना 'श्रुत्या चे'ति चकारासङ्गतिश्चेत्यतो व्याचष्टे—*स्वरूपेणेति* ॥ *ननु* एवमनुभवेन प्रतीतेरित्य-सङ्गतम्, अतो व्याचष्टे—*प्रतीतेरिति* ॥ "नेह नाना" इति श्रुतेरपि स्वरूपेणैव वियदादिप्रपञ्चनिषेधकत्वं प्रागुक्तम् । लौकिकरजतस्य पारमार्थिकत्वाभावाद् व्याचष्टे—*लौकिकपरमार्थेतीति* ॥ *परमार्थतया=सत्यतया । *ननु* सत्यतया लोकप्रतीतिगोचरत्वं प्रातीतिकस्यापि संभवतीत्यत आह—*व्यावहारिकमिति* ॥ मूले—'रूप्यं नास्ति नासीद् न भविष्यती'ति निषेधस्य त्रैकालिकत्वप्रदर्शनाय । नचेति शङ्कायां 'रजतमेवे'त्येवकारेण शुक्तिरूप्यव्यवच्छेदः । एवं च शुक्तिरूप्यवति तदभावस्योक्तानुभवेनानवगाहनाद् न तस्य मिथ्यात्वसिद्धिरिति शङ्काभिप्रायः । वैयधिकरण्य-पदस्य सामान्यतो विषयतान्यसंबन्धविशेषेण वा तदधिकरणभिन्नाधिकरणकत्वार्थकत्वे बाधः ; अन्तःकरणवृत्त्यात्म-कयोर्भ्रम-बाधयोरन्तःकरणे कालादौ वा सामानाधिकरण्यात्, अतो विषयतासंबन्धेन तदधिकरणभिन्नाधिकरण-सत्त्वार्थकतया व्याचष्टे—*वैयधिकरण्यमिति* ॥ भिन्नविषयकत्वमिति* ॥ तच्च नेष्टम् ; तयोः समानविषयकत्व-नियमादिति भावः । एतन्नियमे मानं सूचयन् "प्रसक्तं हि प्रतिषिध्यते" इति न्यायमूलकानुभवविरोधरूपदूषणान्तर-माह *मूले—*अप्रसक्तप्रतिषेधापत्तेश्चेति* ॥ *ननु*—प्रसक्तिरापत्तिः, सा च शुक्तौ व्यावहारिकरूप्यस्य संभवत्येव, शुक्तिर्यदि रजतसामग्रीजन्या स्यात्, तर्हि रजतं स्यात्, इत्याशङ्क्य व्याचष्टे—*अप्रसक्तेतीति* ॥ ज्ञातत्वेति* ॥ अनाहार्यज्ञानविषयत्वेत्यर्थः । उक्तापत्तिस्तु आपाद्यव्यतिरेकनिर्णयजन्यतयाऽऽहार्येति भावः । *अनुभव-विरोध इति* ॥ "*प्रसक्तं हि प्रतिषिध्यते*" इति न्यायाद् लोकानुभवविरोध इत्यर्थः । *प्रसक्तनिषेधत्वानुभवा-दिति*॥ तादृशानुभवप्रदर्शनादित्यर्थः । *यथाश्रुते*—मूलकृतां स्वानुभवविरोधोद्भावकता स्यात् । न हि 'भ्रमानन्तर-मि'त्यादिनिषेधात्मकानुभवाकारघटकम् ; अननुभवात् । तस्मात् 'शुक्तौ रूप्यं नास्ती'त्याद्यनुभवे शुक्तिरूप्यस्यैव

(१) [ ] चिह्नान्तर्गतः पाठः 'एषियाटिक् सोसाइटी'स्थादर्शान्तरानुसारेण, यो व्याख्यायां धृतः ।

### अद्वैतसिद्धिः

नच तर्ह्युत्पत्त्याद्यसम्भवः, नह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे तन्त्रम्;

### तरङ्गिणी

करण्यापत्तेः, अप्रसक्तप्रतिषेधापत्तेश्च। नच तर्ह्युत्पत्त्याद्यसम्भवः; नह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे

### न्यायामृतकण्टकोद्धारः

इति—*वाच्यम्*; भ्रम-बाधयोर्वैयधिकरण्यापत्तेः, अप्रसक्तप्रतिषेधापत्तेश्च। नच—तर्हि उत्पत्त्याद्य-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*तर्हि = प्रपञ्चे शुक्तिरूप्यादौ च स्वरूपेण निषेधप्रतियोगित्व उक्तप्रमाणसिद्धे। *तन्त्रम् = समव्यापकम्। 'उत्पत्त्याद्यसम्भवः' इत्यत्रानिषिद्धस्वरूपत्व उत्पत्त्यादिव्यापकत्वलाभात्, व्यापकाभावेन

### न्यायामृतसौगन्ध्यम्

किञ्च व्यधिकरणधर्मावच्छिन्नस्य प्रतियोगिनोऽसत्त्वेनासत्ख्यात्यापत्तिः, इष्टापत्तावपसिद्धान्तापत्तिश्च; प्रपञ्चमात्रस्यैव प्रतियोगित्वात्। तत्र च पारमार्थिकत्वरूपव्यधिकरणधर्मोऽवच्छेदक इति चेत्; तद्वैशिष्ट्य-ज्ञानस्यान्यथाख्यातिरूपत्वात् तदङ्गीकारापत्त्याऽप्यपसिद्धान्तापत्तिरिति॥

*यत्तु*—ननु* एवं रूप्यमुत्पन्नं नष्टं चेति धीप्रसङ्गः, त्रैकालिकनिषेधप्रतीतिश्च न स्यादिति—चेत्, *न*; उत्पाद-विनाशप्रतीतिरियं भ्रान्तिसमय आपाद्यते? बाधसमये वा? नाद्यः; पूर्वोत्पन्नाविनष्टशुक्त्य-भिन्नतया ग्रहस्यैव प्रतिबन्धकत्वात्, विरोधिज्ञानानुदये रूप्यस्याविनाशात्, नापरः; अत्यन्ताभावग्रहस्यैव प्रतियोगिग्रह इव तदुत्पादविनाशग्रहेऽपि प्रतिबन्धकत्वात्। न हि कुत्रापि कदाऽप्यत्यन्ताभावाधिकरणत्वेन प्रतीत उत्पाद-विनाशप्रतीतिरस्ति—इति। *अत्रेदं प्रतिभाति*; 'घट उत्पन्नो घटो नष्टः' इति सर्वजनप्रतीते-रप्यपलापापत्तिः। तथाहि—इयं प्रतीतिर्भ्रान्तिसमय आपाद्यते? बाधसमये वा? नाद्यः; *अनुत्पन्ना-विनष्टसद्रूपब्रह्माभिन्नतया ग्रहस्यैव प्रतिबन्धकत्वात्, विरोधिब्रह्मज्ञानानुदयपर्यन्तं घटावस्थितिप्रसङ्गाच्च। नापरः; अत्यन्ताभावग्रहस्यैव प्रतिबन्धकत्वात्॥ *यत्तु* ननु—आरोप्यधर्मोत्पादादिकमधिष्ठाने

### सौगन्ध्यविमर्शः

*इयमापत्तिः शुक्तिरूप्यादीनामिव घटादीनामपि प्रातिभासिकत्व एव समापतेत्, न तु घटादयः प्रतिभासमात्रशरीराः। नह्यनावृतचैतन्यतादात्म्येनैव शुक्तिरूप्यादिकमिव घटादिकमपि तादृशचैतन्यतादात्म्येनैवोत्पद्यते, किन्त्वावृतचैतन्यतादात्म्येन। अत एव घटादीनां परोक्षत्वमपि। तथाच सद्रूपब्रह्मतादात्म्येनैव भानानियमाद् अभानापादकाज्ञानविषयेषु घटादिषु नोत्पत्त्यादिव्यवहारप्रतिबन्धसंभवः प्रतिकर्मव्यवस्थापक्षे, दृष्टिसृष्टिपक्षे तु शुक्तिरूप्यादितुल्यत्वाद् घटादीनामिष्टापत्तिरियम्॥

### सिद्धिव्याख्या

स्यादित्यर्थः। *अप्रसक्तेति*॥ भ्रमप्रसक्तस्य चाप्रतिषेधाद् निषिद्धस्याप्रसक्तेश्चेति भावः। *नच तर्हीति*॥ निषेधस्वरूपत्वादिति भावः। *नहीति*॥ येन निषेध्यस्वरूपत्वादुत्पत्त्याद्यसंभवः स्यादिति भावः। *परैरिति*॥

### विट्ठलेशीयटिप्पणी

स्वरूपेणैव निषेधो विषय इति पर्यवसितम्, तदनुरोधेन तर्हिपदं व्याचष्टे—*तर्हीति*॥ *निषेधेति*॥ त्रैकालिक-निषेधेत्यर्थः। *उक्तप्रमाणम्='रूप्यं नास्ती'त्याद्यनुभवः। तन्त्रपदस्य प्रयोजकार्थकत्वे व्यापकार्थकत्वे वा 'परै-रि'त्यदूषणम्, स्वप्रयोज्यव्याप्यान्यतरार्थकत्वे 'नच तर्हि' इति शङ्काया असङ्गतिः, अतो व्याचष्टे—*तन्त्रमिति*॥ समव्यापकार्थपरतामुपपादयन् 'नच तर्हि' इति शङ्का-'परैरि'त्यादिदूषणयोरभिप्रायं ध्वनयति—*उत्पत्त्याद्यसम्भव इत्यत्रेति*। *अनिषिद्धस्वरूपत्वे=तेन रूपेण तदधिकरणकनिषेधाप्रतियोगित्वे। *उत्पत्त्यादीति*॥ तेन रूपेण

### अद्वैतसिद्धिः

परैरनिषेध्यरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात्, किं तु ? वस्तुस्वभावादिकमन्यदेव

### तरङ्गिणी

तन्न; परैरनिषिद्धस्वरूपत्वेनाङ्गीकृतस्यापि वियदादेरुत्पत्त्याद्यनङ्गीकारात्, किन्तु वस्तुस्वभावादिकमन्यदेव

### न्यायामृतकण्टकोद्धारः

सम्भव इति—*वाच्यम्*; न ह्यनिषिध्यमानत्वमुत्पत्त्यादिमत्त्वे प्रयोजकम्, अतिप्रसङ्गात्, किन्तु वस्तु-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्याप्याभावस्य तत्रापादितत्वात्, अग्रे व्यभिचारोक्त्योत्पत्त्यादौ व्यापकतालाभात्। *अनङ्गीकारादिति* ॥ नच—उत्पत्त्यादौ व्याप्यताया अदूषणे न्यूनतेति—वाच्यम्; *'किन्तु वस्तुस्वभावादिकमि'त्यादिग्रन्थेन तस्या दूषितत्वेन व्यापकतामात्रस्यात्र दूषणात्। *अन्यद्वस्तुस्वभावादिकम्* ॥ *वस्तुस्वभावः = "जीव ईशो विशुद्धा चिद् विभागश्च तयोर्द्वयोः। अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥" इति रीत्याऽविद्याद्यनादिषट्क-

### न्यायामृतसौगन्ध्यम्

प्रत्येतुमुचितमिति—चेत्, न; यद्रूपविशिष्टस्यारोप्यता, तद्रूपस्यैवाधिष्ठाने धीः, उत्पाद्यादिकं तु मिथ्यात्वादिकमिवावृतत्वाद् न तथा*; अन्यथा त्वदभ्युपगतमसत्त्वमपि रूप्यादिनिष्ठं तथा स्यादिति, *तन्न*; ब्रह्मभिन्नस्य कल्पितत्वेनावृतत्वासंभवात्, तद्रूपत्वेन मिथ्यात्वस्याधृतत्वेऽप्युत्पत्त्यादेः तदसंभवादिति दिक् ॥

*यत्तु* पारमार्थिकत्वं प्रकृते न बाध्यत्वाभावः, किन्तु ज्ञानानिवर्त्यमात्रविशेष्यकधीः। तथाच विशेष्यतासम्बन्धेन तदवच्छिन्नस्य प्रतियोगित्वस्य निवेशेऽन्योन्याश्रयानवकाश इति, *तन्न*; सेत्वादि-

### सौगन्ध्यविमर्शः

अधिष्ठान आरोप्यस्य स्वरूपतोऽध्यासः, अधिष्ठानस्य त्वारोप्ये संसर्गमात्राध्यासः, धर्मयोरपि परस्परं संसर्गाध्यास एव। अत एव व्यावहारिक-प्रातीतिकसाधारणं रजतत्वमिति सिद्धान्तः। तथाच यस्य यत्राध्यासो भ्रमे, तस्यैव तत्र भानमिति नियमाद् उत्पत्त्यादे रूप्यादिनिष्ठस्याधिष्ठान आरोपाभावाद् नोत्पत्त्यादिप्रतीत्यापत्तिः; तदारोपस्यापादनं तु *नैमित्तिके सति निमित्तानुसरणम्, न तु निमित्तमस्तीति नैमित्तिकारोपः* इति न्यायविरुद्धम्। अतो रूप्यधर्मोत्पादादिप्रतीत्यौचित्यं बाधितमेव। विशेषदर्शनं हि भ्रमसामान्यं प्रति प्रतिबन्धकम्। अत एव शुक्तित्वज्ञानदशायां न भ्रमोत्पादः। प्रकृते च सद्रूपत्वेनेदंपदार्थज्ञानाद् नोत्पत्त्यादिसमारोपः संभवति। तथाच न रूप्यधर्मस्य मिथ्यात्वादेः समारोपः। एतादृश-

### विठ्ठलेशीयटिप्पणी

तदधिकरणकोत्पत्त्यादीत्यर्थः। नाश आदिपदार्थः। *आपादितत्वादिति* ॥ सिद्धान्तिना शुक्त्यादौ प्रातिभासिकरजतादेरुत्पत्त्याद्यङ्गीकाराद् नेष्टापत्तिसम्भव इति भावः। *अनङ्गीकारादितीति। तथाचानिषिद्धस्वरूपस्य उत्पत्त्यादिव्याप्यताभङ्गाद् न समनैयत्यं परैर्वक्तुं शक्यमिति भावः। *ननु*—एवमपि तत्र तद्व्यापकतायां बाधकाभावाद् 'अथ तर्हि' इति शङ्कानपगम इत्याशङ्कते—*नचेति* ॥ *व्यापकतामात्रस्येति* ॥ तद्गर्भसमनैयत्यस्येत्यर्थः; तस्यैव शङ्काबीजत्वेन दूषणीयत्वात्। 'अन्यदेवे'त्यत्र अन्यदा, एव इति पदच्छेदभ्रमं निराकुर्वन् विधेयप्रयोजकपदार्थं प्रत्युद्देश्यतावच्छेदकार्थकपदमुद्देश्यपदात् पूर्वं योजयति—*अन्यद्वस्तुस्वभावेति* ॥ 'अन्यदि'त्यस्यानुक्तौ वस्तुस्वभावपदेन पदार्थधर्मसामान्यार्थकेन नानिषिद्धस्वरूपत्वान्यधर्मलाभः, तुरी-वेमादिकं न घटकारणम्, किन्तु किञ्चिद् द्रव्यमित्याद्यप्रयोगेण किन्तुपदस्य स्वपूर्ववाक्यस्थनञर्थान्वयिपदार्थान्यत्वालाभकत्वात्, अतस्तल्लाभायानिषिद्धस्वरूपत्वान्यार्थकमन्यदित्युक्तम्। अन्यत्-किञ्चित्पदयोः समभिव्याहारवशाद् वस्तुस्वभावपदात् प्रतीयमानो यो धर्मविशेषः, तं दर्शयति—*जीव इत्यादि* ॥ *तयोः=जीवेशयोः। *विभागः=भेदः। एकजीवानुयोगिकस्य जीवेश्वरप्रतियोगिकभेदस्य लाभाय—*तयोरिति* ॥ *तच्चितोः = अविद्या-चितोः। *योगः = तादात्म्यरूपः

### अद्वैतसिद्धिः

किंचित् प्रयोजकं वक्तव्यम् ; तस्य मयाऽपि कल्पितस्य स्वीकारात् । नच—'त्रैकालिकनिषेधं प्रति

### तरङ्गिणी

किञ्चित् प्रयोजकं वक्तव्यम् , तस्य मयाऽपि कल्पितस्य स्वीकारात् । नच—'त्रैकालिकनिषेधं प्रति

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भिन्नदृश्यत्वम् । आदिपदात् "यतो वे"तिश्रुत्यादिरूपस्योत्पत्त्यादिग्राहकप्रमाणस्य लाभः । *प्रयोजकम्=सम-व्यापकम् । 'अन्यदेवे'त्येवकारेणोत्पत्त्यादिव्यापकत्वमप्यनिषिद्धस्वरूपत्वे नास्तीति ज्ञापितम् । उत्पत्त्यादिमतोऽप्य-

### न्यायामृतसौगन्ध्यम्

दर्शननिवर्त्यदुरितादौ तादृशधियोऽभावेऽपि पारमार्थिकत्ववद् जगत्यपि तदभावेऽपि पारमार्थिकत्वो-पपत्तावर्थान्तरत्वात् ॥

ननु—स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वं प्रपञ्चे शुक्तिरूप्ये चाङ्गीक्रियते । तथाहि—शुक्तौ रजतभ्रमानन्तरमधिष्ठानतत्त्वसाक्षात्कारे 'रूप्यं नास्ति नासीद् न भविष्यती'ति स्वरूपेणैव "नेह नाने"त्यादि-श्रुत्या प्रपञ्चस्य स्वरूपेणैव निषेधः प्रतीयते । नच—तत्र लौकिकपरमार्थरजतमेव स्वरूपेण निषेध-प्रतियोगीति—शाठ्यम् ; भ्रम-बाधयोर्वैयधिकरण्यापत्तेः, अप्रसक्तनिषेधापत्तेश्च ॥

### सौगन्ध्यविमर्शः

मप्रतीयमानत्वमेवावृतत्वपदेन विवक्षितम् , न स्वज्ञानविषयत्वम् , इति ब्रह्मभिन्नस्य कल्पितत्वेनावृतत्वासंभवादिवर्णनमनवसर-मेव । यथाच रूप्योत्पादाप्रतीतिः, तथाऽनुपदमेव वर्णितेति दिक् । सेतुदर्शनस्य क्रियात्वेनैव विधेयत्वाद् दुरितनिवर्तकत्वम् , न तु साक्षात्कारत्वादिना, इति वर्णयिष्यमाणत्वात् तादृशदुरितस्यापि निर्वक्ष्यमाणज्ञाननिवर्त्यत्वं पारमार्थिकत्वविरोध्येव स्वीक्रियते, इति वक्ष्यमाणज्ञाननिवर्त्येतरमात्रविशेष्यकधियोऽभावेन नार्थान्तरावकाशः । तथाच वक्ष्यमाणज्ञाननिवर्त्यमात्रविशेष्यकधिय एव व्यधिकरणायाः प्रतियोगितावच्छेदकत्वाद् न दोषः ॥

### सिद्धिव्याख्या

तथाच परमतेऽनिषिद्धस्वरूपत्वं यथोत्पत्त्यादिमत्त्वे न तन्त्रम् , तथाऽस्मन्मते निषेध्यस्वरूपमपि नोत्पत्त्याद्यसंभवे तन्त्रमिति ध्येयम् । *वक्तव्यमिति* ॥ उत्पत्त्यनुत्पत्त्योरिति शेषः । तद् ममापि समानमित्याह—*तस्येति* ॥ आद्यज्ञानभिन्नस्य बोधमनुवदति—*नचेति* ॥ 'स्वरूपेणे'त्यस्यापणस्थं रूप्यमित्यनेनान्वयः । 'पारमार्थिकत्वा-

### बिन्दुलेशीयटिप्पणी

सम्बन्धः । शशविषाणादव्यलीकवारणाय—*दृश्यत्वमिति* ॥ जीवादिवारणाय—*अनादिषट्कभिन्नत्वम्* । यद्यपि विशुद्धचिद्वारणं दृश्यत्वेनैव सम्भवति, इति तदन्यानादिपञ्चभिन्नत्वमेव सम्यक् ; तथाप्युक्तषट्साधारणप्राग-भावाप्रतियोगिभावस्वरूपानादित्वावच्छिन्नप्रतियोगिताकैकभेदस्योक्तश्लोकप्रतिपादितस्वरूपतादृशधर्मावच्छिन्नभेदस्य वा निवेशे तात्पर्याद् न 'षट्के'त्यस्यासङ्गतिः ; ध्वंसवत् प्रागभावस्याङ्गीकारे तत्प्रागभावोत्पत्त्योरप्यङ्गीकाराद् न तत्र व्यभिचारः । नच—अनादिषट्कभिन्नदृश्यस्यस्योत्पत्त्यादिप्रयोजकत्वे किं मानमिति—वाच्यम् ; "यतो वे"त्यादि-श्रुत्याऽनादिभिन्नदृश्यानामेवोत्पत्त्यादिबोधनात् । तत्र भूतपदस्य दृश्यार्थकत्वात्, 'इमानी'त्यस्य चाविद्याद्यनादिभिन्नार्थ-कत्वात् । तद् ध्वनयन् आदिपदार्थभूतं प्रयोजकान्तरमाह—*आदिपदादिति* ॥ श्रुत्यादिरूपस्येति* ॥ ब्रह्मजन्य-त्वेन स्वप्रतिपाद्यत्वसम्बन्धेन वियदादौ वर्तमानस्येति शेषः । *प्रयोजकमिति* ॥ उत्पत्त्यादिमत्त्व इत्यनुषज्यते । यद्यपि तन्त्रमित्यस्याप्यनुषङ्गः सम्भवति ; तथापि तन्नियमाभावात् क्लेशविशेषरूपत्वाच्च प्रयोजकपदमेवोपात्तम् । *समव्यापकमिति* ॥ *समम्* तुल्यसंख्यदेशवृत्तिकं सदेव, नत्वधिकसंख्यदेशवृत्तिकं सद् व्याप्यम्—समव्यापक-मिति पर्यवसितार्थः । व्याप्यत्वाद् गगनादेरुत्पत्तिः, व्यापकत्वाच्च ब्रह्म-तुच्छयोर्नोत्पत्तिः । 'किञ्चि'त्यादिग्रन्थेन तस्य तुच्छत्वादिति प्रतिज्ञातं स्फुटयति—*अन्यदेवेत्यादि*॥ ज्ञापिते युक्तिमाह—*उत्पत्त्यादिमत इति*॥ *अनुभवः='शुक्तौ

### न्यायामृतम्

'त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थरूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकरूप्यं वा प्रतियोगी'ति त्वन्मतहानेश्च ॥

### अद्वैतसिद्धिः

स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगी'ति मतहानिः स्यादिति—

### तरङ्गिणी

स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगी'ति मतहानिः स्यादिति—

### न्यायामृतकण्टकोद्धारः

स्वभावविशेषः, स च कल्पितः प्रपञ्चेऽस्ति, इति न काऽप्यनुपपत्तिः। नच—आचार्यवचनविरोध

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नुभवश्रुत्योर्निषेधविषयकत्वस्योक्तत्वात् तत्र तद्व्यापकत्वमपि नेति भावः। *मतहानिः = पूर्वाचार्योक्तिविरोधः। "प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वम्, तच्च बाधकज्ञाने 'रजतं प्रतिपन्नोपाधावभावप्रतियोगितयाऽव-

### न्यायामृतसौगन्ध्यम्

न च तद्वृत्पत्त्याद्यसंभवः, न ह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे तन्त्रम्; परैर्निषेध्यस्वरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात्, किन्तु वस्तुस्वभावादिकमन्यदेव—अविद्याद्यनादिषट्कभिन्नदृश्यत्वं किञ्चित् प्रयोजकं वाच्यम्। तस्य त्वयाऽपि कल्पितस्य स्वीकारात् ॥

### विट्ठलेशीयटिप्पणी

रूप्यं नास्ती'त्याकारः। *श्रुतिः="नेह नानाऽस्ति किञ्चन"। तयोरुत्पत्त्यादिमतोरपि यः स्वरूपेण निषेधः, तद्विषयकत्वस्योक्तत्वात्*=भ्रम-बाधयोर्वैयधिकरण्यापत्त्यादिना व्यवस्थापितत्वादित्यर्थः। तथाचोत्पत्त्यादिमत्त्वेन स्वाप्न-सृष्टि-जाग्रत्सृष्ट्यादिप्रतिपादकश्रुत्यादिसिद्धे प्रातिभासिके शुक्तिरूप्यादौ व्यावहारिके च वियदादावनिषिद्धस्वरूपत्वस्याभावादिति भावः। *तत्र=अनिषिद्धस्वरूपत्वे। *तद्व्यापकत्वम्=उत्पत्त्यादिव्यापकत्वम्। *अपि नेति* ॥ तथाच शुक्तिरूप्यादावनिषिद्धस्वरूपत्वाभावे सत्यपि नोत्पत्त्याद्यभावापत्तिरिति भावः। अपिना परमते दूषितस्य व्याप्यत्वस्य समुच्चयः। स्वमते वियदादेरप्युत्पत्त्यादिसत्त्वेनानिषिद्धस्वरूपत्व उत्पत्त्यादिव्याप्यत्वसम्भवेऽपि न क्षतिः; तदभावेन शुक्तिरूप्यादेरुत्पत्त्याद्यभावस्यापादयितुमशक्यत्वात्, व्याप्याभावस्य व्यापकाभावानापादकत्वात्। यत्र त्वयमुत्पत्त्यादिसमनियतत्वेनाभ्युपगतमनादिषट्कभिन्नदृश्यत्वादिकम्, तस्य शुक्तिरूप्यादौ सत्त्वात् तदभावरूपापादकाभावेन नोत्पत्त्याद्यभावापत्तिरित्याह *मूले*—*तस्य मयाऽपि कल्पितस्याङ्गीकारादिति* ॥ *तस्य=वस्तुस्वभावादिरूपप्रयोजकान्तरस्य। *कल्पितस्य*=कल्पिते शुक्तिरूप्यादौ। वस्तुस्वभावादेः कल्पितत्वकथनस्यात्यन्तानुपयोगाद् अधिकरणाध्याहारापत्तेश्च। *नचेति* ॥ 'शुक्तौ रूप्यं नास्ती'त्यादिनिषेधप्रतीतौ स्वरूपेण शुक्तिरूप्यस्यैव प्रतियोगितया भानाङ्गीकार इत्यर्थकैवमिति शेषः। *त्रैकालिकेति* ॥ शुक्तिवृत्तित्वेन प्रतीयमानेत्यादिः। आपणस्थं रूप्यं प्रतियोगीति सम्बन्धः। आपणस्थपदं व्यावहारिके योगरूढम्। तेन प्रातिभासिकेन सह विकल्पसङ्गतिः। प्रातिभासिकरूप्यं वा त्रैकालिकनिषेधप्रतियोगीत्यनुषङ्गेणान्वयः। मतहानिशब्दस्य मतिविषयत्यागार्थकत्वे 'इत्यन्ता'र्थस्य मतावेकदेशेऽन्वयप्रसङ्गः, तादृशमतिविषयस्यापणस्थरूप्यादेस्तत्प्रतियोगित्वादेर्वा विभागानुकूलव्यापाररूपत्यागस्याप्रसङ्गेन 'स्यादि'त्यस्यासङ्गतिश्चेत्यतो व्याचष्टे टीकायाम्—*मतहानिरिति* ॥ *विरोधः=विरुद्धार्थकत्वम्। तद्वाक्यस्येति शेषः। त्रैकालिकनिषेधं प्रत्यापणस्थं रूप्यं प्रातिभासिकं स्वरूपेण पारमार्थिकत्वाकारेण वेति योजनयाऽऽचार्योक्तिविरोधं परिहरति *मूले*—*तस्येति* ॥ प्रातिभासिक आपणस्थरूप्यतादात्म्यबाधात् तत्पदं तत्तादात्म्येन प्रतीतपरतया व्याचष्टे—*पारमार्थिकलौकिकेति* ॥ पारमार्थिकत्वेन लोकसिद्धेत्यर्थः। *ननु* एवं क्लेशेन पूर्वाचार्योक्तिः किमनुसारेण व्याख्येयेति ? अत आह *टीकायाम्*—*प्रतिपन्नोपाधाविति* ॥ तच्च प्रत्यक्षमित्यन्वयः। तत्र 'इत्यन्तं' हेतुः। *बाधकज्ञाने='शुक्तौ रूप्यं नास्ती'त्यादिज्ञाने। उक्तेः

### अद्वैतसिद्धिः

वाच्यम् ; अस्याचार्यवचसः पारमार्थिकलौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यर्थः । तच्च स्वरूपेण, पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः ॥

### तरङ्गिणी

वाच्यम् ; अस्य वचसो लौकिकपारमार्थिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यर्थः । तच्च स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः ॥

### न्यायामृतकण्टकोद्धारः

इति—*वाच्यम् ; आचार्यवचनस्य लौकिकपारमार्थिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यर्थः । तच्च स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भासते' इति प्रत्यक्षमि''ति विवरणकारोक्तेः प्रातीतिकमेव रजतं पुरोवर्तिनिष्ठात्यन्ताभावप्रतियोगित्वेन प्रतीयते ; प्रतिपन्नपदेन स्वप्रकारकधीविशेष्यलाभात्, तदनुसारेणोक्तपूर्वाचार्योक्तिर्व्याख्येयेत्याशयेनाह—*अस्याचार्येत्यादि* ॥ *तच्च = प्रतियोगि च । *स्वरूपेणेत्यादि* ॥ तृतीयार्थस्यावच्छिन्नत्वस्य प्रतियोगिपदार्थैकदेशे प्रतियोगित्वेऽन्वयः । *अनास्थायामिति*॥ एकयैव पारमार्थिकत्वरूपोक्तधिया स्वेतरसर्वदृश्यानां तस्याश्चान्यया तादृशधिया निषेधप्रतियोगित्वसम्भवाद् नोक्तानवस्था । *वस्तुतस्तु*—ज्ञानानिवर्त्यत्वरूपेण स्व-स्वेतरसर्वदृश्यानां निषेधप्रतियोगित्वं सम्भवति ; तस्याभावीयविशेषणतासम्बन्धेन स्वस्मिन्नसत्त्वात्, स्वस्यापि ज्ञान-

### न्यायामृतसौगन्ध्यम्

नच—त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थरजतं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति मतहानिः स्यादिति—वाच्यम् ; अस्याचार्यवचसः पारमार्थिकलौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यर्थः । तच्च स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः ।

### सिद्धिव्याख्या

कारेणे'त्यस्य प्रातिभासिकं वेत्यनेनान्वयः । तथाच स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वाभ्युपगम एवंभूतमतहानिः स्यादित्यर्थः । आशयमाविष्कुर्वन् परिहरति—*अस्येति* ॥ 'आपणस्थं रूप्यमि'त्यस्य 'प्रातिभासिकमि'त्यनेनान्वयः । *'सर्वं वाक्यं सावधारणम्'* इति न्यायेन प्रातिभासिकमित्यत्रैवकारलाभः । एवं सति पर्यवसितमर्थमाह—*पारमार्थिकलौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतमिति* ॥ एवं सति वाशब्दानुप-

### विट्ठलेशीयटिप्पणी

प्रतीयत इत्यनेनान्वयः । *ननु* विवरणकारोक्तौ रजतपदेन प्रातीतिकरजतस्यैव ग्रहणं कुतः ? तत्राह—*प्रतिपन्नपदेनेति* ॥ प्रातीतिकस्यैव पुरोवर्तिनि प्रकारतया भ्रमे भानात् तदेव स्वपदेन ग्राह्यमिति भावः । *मूले*—'तच्चे'त्यस्य प्रक्रान्तप्रधानरजतपरामर्शित्वे तदेकदेशेऽपि 'स्वरूपेणे'त्यादितृतीयार्थान्वयासम्भवाद् व्याचष्टे—*तच्चेति* ॥ *ननु* कल्पद्वयस्य निर्दुष्टत्वेऽन्यतरत्रानाग्रहरूपानास्था स्यात्, तदेव न ; चरमेऽनवस्थाया उक्तत्वात्, अत आह—*एकयैवेति* ॥ *ननु* एवमप्यन्योन्याश्रयो दुर्वार इत्यत आह—*वस्तुतस्त्विति* ॥ *ज्ञानानिवर्त्यत्वरूपेणेति* ॥ यद्यपि नेदं पारमार्थिकत्वम् ; तुच्छवृत्तित्वात्, किन्तु तद्व्याप्यवृत्ता तादृशधीरेव ; तथापि पारमार्थिकत्वपदस्य तद्घटकपरतया सङ्गतिः । *ननु* ज्ञानानिवर्त्यत्वमपि तादात्म्येन स्वमते तस्यापि जन्यतया कालिकसम्बन्धेन च स्वसम्बद्धमेव, इति तेन रूपेण तस्य कथमुक्तप्रतियोगित्वम् ? इति रूपान्तरान्वेषणेऽन्योन्याश्रयस्तदवस्थ इत्यत आह—*तस्येति* ॥ *अभावीयेति* कालिकविशेषणताव्यावृत्तये । *ननु* तादृशधियः स्वरूपतोऽवच्छेदकत्वसम्भवेन तन्निवेशे लाघवम्,

### अद्वैतसिद्धिः

एतावदुक्तिश्च पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थम्, लौकिकपरमार्थरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं च । तदुक्तं तत्त्वप्रदीपिकायाम्—"तस्माद् लौकिकपरमार्थरजतमेव

### तरङ्गिणी

एतावदुक्तिश्च—पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थम्, लौकिकपारमार्थिकरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं च। तदुक्तं तत्त्वप्रदीपिकायाम्—"तस्माद् लौकिकपरमार्थरजतमेव 'नेदं रजतमि'ति निषेधप्रतियोगी"ति पूर्वाचार्याणां वाचोयुक्तिरपि पुरोवर्तिनि

### न्यायामृतकण्टकोद्धारः

एतावदुक्तिश्च पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थम्, लौकिकपारमार्थिकरजततादात्म्येनापि प्रतीयत इति प्रतिपादनार्थं च । एवं च नाचार्यवचनविरोधः ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निवर्त्यत्वात्, इति स्वरूपतस्तस्यावच्छेदकत्वसम्भवेन लाघवात् तदेव निवेश्यत इति भावः । *ननु*—आपणस्थरूप्यशब्दस्य प्रातीतिकरजते व्यावहारिकरजततादात्म्येन प्रतीतत्वबोधकस्याचार्यवचसि किमर्थमुक्तिः ? तत्राह—*एतावदुक्तिरित्यादि* ॥ *तस्मात्* = बाधस्य भ्रमवैयधिकरण्यापत्त्यादिना प्रातीतिकस्यैव रजतस्य पुरोवर्तिनिष्ठात्यन्ताभावप्रतियोगितया बाधकधीविषयत्वात् । *लौकिकेत्यादि* ॥ पूर्वाचार्याणां

### न्यायामृतसौगन्ध्यम्

एतावदुक्तिश्च—पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थम्, लौकिकपरमार्थरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं च ॥ तदुक्तं तत्त्वप्रदीपिकायाम्—"तस्माद् लौकिकपरमार्थ-

### सिद्धिव्याख्या

पतिमाशङ्क्याह—*तन्नेति* ॥ एतावदुक्तेः फलं दर्शयति—*एतावदिति* ॥ तथा च तदुभयं फलमिति ध्येयम् । उक्तार्थेऽभियुक्तवचनं प्रमाणयति—*तदुक्तमिति* ॥

### विट्ठलेशीयटिप्पणी

अत आह—*स्वरूपत इति* ॥ *तस्य*=ज्ञानानिवर्त्यत्वस्य । एकव्यक्तिकत्वाविशेषादिति भावः । *लाघवादिति* ॥ ज्ञानानिवर्त्यत्वस्य तादृशधीपरिचायकरूपघटकत्वादिति भावः । *केचित्तु*—'अभावविरहात्मत्वं वे'तिवत् 'पारमार्थिकत्वेन वे'त्यत्रापि वाशब्दोऽनास्थायामिति मूलस्य द्वितीयकल्पेऽनवस्थादिप्रयुक्तास्वरससूचकार्थं वदन्ति । *किमर्थमुक्तिरिति* ॥ तां विनाऽप्युदाहृतविवरणकारोक्तविरोधस्योक्ताचार्यवचसि सम्भवादिति भावः । शुक्तौ 'रूप्यं नास्ती'त्यादिनिषेधे प्रातिभासिकस्यैव प्रतियोगित्वे लौकिकपरमार्थरजततादात्म्येन प्रतीतत्वे च सम्मतिमाह *मूले*—*तदुक्तं तत्त्वप्रदीपिकायामिति* ॥ *तस्मादिति* ॥ *पूर्वाचार्याणां वाचोयुक्तिरपीति* तत्त्वप्रदीपिकापदानां योजना । एतत्सूचनायैवानुपदं वक्ष्यति—"लौकिकेत्यादि—वाचोयोगः" इति ॥ तादृशवाचोयोगे सङ्गतिसूचकतया 'तस्मादि'ति व्याचष्टे—*भ्रमेति* ॥ व्यावहारिकरजतस्य पुरोवर्तिनि भ्रमाभावेन तद्वैयधिकरण्यापत्त्यादिना 'लौकिकपरमार्थरजतमेव 'नेदं रजतमि'ति निषेधप्रतियोगि' इति वचनमसङ्गतमिति भावः । अत्र 'नेदं रजतमि'ति प्रतीतौ शुक्तिरूप्ये पुरोवर्तिनि व्यावहारिकरजतात्यन्ताभावो व्यावहारिकरजतभेदो वा विषयः, प्रत्यक्षज्ञाने शब्दानुरोधेनार्थकथनस्यायुक्तत्वात्, प्रतियोगिप्रसक्तेश्चानुपयोगित्वात्, इत्यभिमानमूलकत्वमुक्तवाचोयोगस्योक्तासङ्गतिशङ्काबीजम् । तादृशाभिमानमेव 'अयमभिप्रायः' इत्यादिना मूलकृत् निराकरिष्यति । निषेधे प्रतियोगिप्रसक्त्यपेक्षा

### अद्वैतसिद्धिः

'नेदं रजतमि'ति निषेधप्रतियोगी'' ति पूर्वाचार्याणां वाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाद् लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि 'लौकिकपरमार्थरजतमिदं न भवती'ति निषेधप्रतियोगितामङ्गीकृत्य नेतव्ये'ति ॥

### तरङ्गिणी

रजतार्थिनः प्रवृत्तिदर्शनाद् लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि 'लौकिकपरमार्थरजतमिदं न भवती'ति निषेधप्रतियोगितामङ्गीकृत्य नेतव्ये'' ति ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'लौकिके'त्यादिवाचोयुक्तिः 'इदं प्रातीतिकरजतं परमार्थरजतं न भवती'ति भेदात्मकनिषेधप्रतियोगित्वमङ्गीकृत्य नेयेत्यर्थः । *ननु*—प्रातीतिकरूप्ये व्यावहारिकरूप्यस्य तादात्म्येन प्रसक्त्यभावाद् भ्रमवैयधिकरण्यापत्त्यादिना निषेधो न युक्तः, तत्राह—*पुर इत्यादि* । *रजतार्थिनः = 'सद्रजतप्राप्तिर्मम भवत्वि'तीच्छा-

### न्यायामृततरङ्गिण्यम्

रजतमेव 'नेदं रजतमि'ति निषेधं प्रति प्रतियोगी'' ति पूर्वाचार्याणां वाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाद् लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि 'लौकिकपरमार्थरजतमिदं न भवती'ति निषेधप्रतियोगितामङ्गीकृत्य नेतव्येति ॥

### विट्ठलेशोपाध्यायटिप्पणी

तृत्त्यैवेति योज्यम् । *मूले*—*पुरोवर्तिनि=प्रातीतिकरजते ॥ अस्य प्रवृत्तौ प्रतीतस्ये चान्वयः । 'लौकिकपरमार्थरजतमिदं ने'त्यत्रेदंपदमनुयोग्यर्थकं पूर्वं योजयन् रजत-नेदंपदयोर्व्यावहारिकरजतात्यन्ताभावपुरोवर्त्यर्थकत्वेऽसङ्गतितादवस्थ्यपरिहाराय व्याचष्टे—*इदमिति* ॥ नञो भेदार्थकत्वेऽपीदं-पदस्य पुरोवर्त्यर्थकत्वं न संभवति ; व्यावहारिकरजतस्य तत्राप्रसक्तेरेव, इत्यत आह—*प्रातीतिकरजतमिति* ॥ तत्र तद्भेदबाधादाह—*परमार्थरजतमिति* ॥ सद्रजतमित्यर्थः । लौकिकत्वस्याभानात् त्यागः । एवमग्रेऽपि । नञोऽत्यन्ताभावपरत्वं न संभवति ; 'अत्र रजतमि'त्यप्रसक्तेः, अत आह—*न भवतीति*॥ *भेदात्मकनिषेधेति* ॥ प्रतियोगिपदसमानविभक्तिकानुयोगिवाचकपदसमभिव्याहारस्यैव प्रायो भवतिपदसमभिव्याहारस्य नञ्पदेन भेदबोधे, सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारस्यैव चास्तिपदसमभिव्याहारस्य नञ्पदेनात्यन्ताभावबोधे प्रयोजकत्वम् ; 'घटः पटो नास्ती'त्यस्य—'अत्र घटो न भवती'त्यस्य च प्रयोगस्य दर्शनात्, इत्यभिप्रेत्य मूले 'भवती'त्यध्याहृतमिति मनसिकृत्यात्र निषेधपदं भेदपरतया व्याख्यातम् । *इति भेदेत्यस्य* इतिप्रत्ययविषयभेदेत्यर्थः । *नेयेति* । संगमनीयेत्यर्थः । वाचोयुक्तिरपीति पूर्वेणान्वयः । एवं च 'शुक्तौ रूप्यं नास्ती'त्यत्यन्ताभावप्रत्यये प्रातिभासिकरजतस्यैव प्रतियोगितया भानमिति तत्त्वप्रदीपिकासंमतमित्याशयम्; अन्यथा 'लौकिके'त्यादिवाचोयुक्ते'र्नेदं रजतमि'ति प्रतीतेः शुक्तौ व्यावहारिकरजतात्यन्ताभावविषयकत्वेऽपि सङ्गतिसंभवेन तस्याः प्रातिभासिकरजते व्यावहारिकरजतभेदविषयकत्वेन तत्सङ्गमनवैयर्थ्यप्रसङ्गात् । इदानीं प्रातिभासिकरजतस्य लौकिकपरमार्थरजततादात्म्येन प्रतीतत्वे तत्संमतिमक्षरलभ्यामवतारयति—*नन्विति* ॥ *पुर इत्यादीति* ॥ 'प्रतीतस्ये'त्यन्तेनेति शेषः । 'पुरोवर्तिनि' इत्यस्य शुक्तिरजतरूपे पुरोवर्तिनीत्यर्थः । इत्याद्युक्तमनुसन्धेयम् । तत्र 'दर्शनादि'त्यन्तेन तादृशप्रतीतत्वे युक्तिरुक्ता । *'रजतार्थिनः'* इत्यस्य रजतरूपार्थवत इत्यर्थकत्वे सिद्धविषयकस्य पुंसः प्रवृत्त्यसंभवादसङ्गतिः, कर्मधारयाद् मत्वर्थीयानुपपत्तिश्चेत्यतो रजतमर्थयतेऽसौ रजतार्थीति कृद्वृत्तिमाश्रित्य व्याचष्टे—*रजतार्थिन इति* ॥ रजतप्राप्तिरिति* ॥ सद्रजतप्राप्तिरित्यर्थः, व्यावहारिकरूप्यलिप्सोरित्युक्तेः । *ननु* 'लौकिकपरमार्थरजतमिदमित्याकारा प्रतीतिर्न संभवति ; परमार्थरजतत्वेन लोके सिद्धत्वपर्यन्तभानस्यानुभवात्, 'इदं रजतमि'त्येवमाकारे रजतत्वेन तत्प्रतीतिसंभवेऽपि प्रातिभासिके तत्तादात्म्यप्रतीतिर्न लभ्येत्यतस्तद् व्याचष्टे—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

षतः । *लौकिकपरमार्थरजतत्वेन = 'सद्रजतमिदमि'त्येवंरूपेण । तथाच प्रातीतिकरूप्ये व्यावहारिकरूप्यस्य सद्रजतत्वस्वरूपेण तादात्म्यं प्रसक्तमेव ; अन्यथा प्रातीतिकरूप्ये व्यावहारिकरूप्यलिप्सोः प्रवृत्त्यनुपपत्तेः । नच—व्यावहारिकरूप्यनिष्ठत्वोपलक्षितस्य रजतत्वस्य प्रातीतिकरूप्येऽपि स्वीकारात् शुक्तिगतस्येदन्त्वादेरिव सत्त्वस्यापि तत्र प्रत्ययाच्च 'सद्रजतमिद'मिति प्रत्ययोपपत्तेर्व्यावहारिकरूप्यस्य प्रातीतिके तादात्म्यारोपस्वीकारो व्यर्थः, तं विनाऽप्युक्तप्रवृत्त्युपपत्तेरिति—वाच्यम् ; व्यावहारिकनिष्ठं रजतत्वादिकं

विट्ठलेशीयटिप्पणी

*लौकिकेति* ॥ 'सद्रजतमिदमि'त्येवंरूपेणेति* ॥ *इदम्=प्रातिभासिकरूप्यम् । *पुरोवर्ति=सद्रजतम् । *इत्येवंरूपा=इत्याकारेत्यर्थः । सामान्ये नपुंसकम् । तृतीयार्थोऽभेदः । तथाच—'इदं सद्रजतमि'त्याकारा या सद्रजतत्वावच्छिन्नप्रकारिका इदंत्वावच्छिन्नविशेष्यिकाऽपरोक्षा प्रतीतिः, तद्विषयस्येति मूलार्थः । लौकिकपरमार्थरजतस्येति शेषः । 'प्रतियोगितामि'त्यत्रान्वयः । *अत्रेदंपदार्थो न शुक्तिरूप्यम् ; पुरोवर्तिरजतशब्दस्य शुक्तिरजतार्थकत्वे तत्र सत्त्वस्यासत्त्वेन तद्भानानुपपत्तेः, व्यावहारिकरजतार्थकत्वे प्रातिभासिकरजत इव शुक्तौ तस्यात्यन्तसादृश्याभावेन तत्र तद्भानासंभवात्, 'अत्र रजतं पश्यामी'त्यनुभवानुरोधेन सन्निकृष्टरजतभानार्थं प्रातिभासिकरजतोत्पत्तिस्वीकारे शुक्तिगतेदंत्वेनापि तस्यैव भासमानतयेदंत्वेन शुक्तिभानासंभवाच्च, किंतु प्रातिभासिकरजतमेवेदंपदार्थः । तत्र च सद्रजतशब्दोल्लिखितं सत्त्वविशिष्टं व्यावहारिकरजतं तादात्म्येन भासते ; अन्यथा 'इदं सद्रजतमि'त्याकारानुपपत्तेरित्यभिप्रेत्य 'लौकिकपरमार्थरजतत्वेने'ति तृतीयान्तार्थलब्धप्रातिभासिक-व्यावहारिकतादात्म्यप्रसक्तिहेतुं स्पष्टयति—*तथाचेति* ॥ 'इदं रजतमि'त्याकारकप्रतीतिसत्त्वे चेत्यर्थः । प्रतीतेरि'दं सद्रजतमि'त्याकारकत्व इति यावत् । अत्र च 'इदं रजतमि'त्याकारैव प्रतीतिः, नत्वि'दं सद्रजतमि'त्याकारेत्यसिद्धिमाशङ्क्य तत्सिद्धये प्रवृत्तिदर्शनादिति हेतुं योजयति—*अन्यथेति*॥ 'इदं सद्रजतमि'त्याकारकप्रतीतेरसत्त्व इत्यर्थः । *परेतु*—अस्तु 'इदं सद्रजतमि'त्याकारकप्रतीतिः ; तथापि तद्विषयता शुक्तिरूपपुरोवर्त्यंशे प्रातिभासिकरजतस्यैवास्तु, नतु प्रातिभासिके व्यावहारिकरजतस्येत्यप्रयोजकत्वशङ्कानिरासाय 'प्रवृत्तिदर्शनादि'ति मूलोक्तहेतुभङ्गं प्रसञ्जयति—*अन्यथेति* ॥ तादृशतादात्म्यप्रसक्त्यभाव इत्यर्थः—*इति ●ाहुः* । *व्यावहारिकरूप्यलिप्सोरिति* ॥ तादृशप्रतीतेः सद्रजतेच्छां प्रति कारणतया तदसत्त्वे तादृशेच्छाया असंभवेन तादृशेच्छाधीनप्रवृत्तेरनुभवसिद्धाया अनुपपत्तिः । नच—अनुभूयमाना प्रवृत्तिः प्रातिभासिकलिप्सोः शुक्तिरूपपुरोवर्तिविषयैवेति—वाच्यम् ; प्रातिभासिकेच्छायाः प्रवृत्तिकारणत्वकल्पनापत्त्या गौरवापत्तेः, व्यावहारिकेच्छायां तु तत्कारणत्वस्य क्लृप्तत्वादिति भावः । तथाच प्रातिभासिकरजतं सद्रजतत्वविशिष्टविषयकेच्छाधीनप्रवृत्तिविषयत्वात् 'सद्रजतमिदमि'त्याकारकप्रतीतिविशेष्यम् । तस्मात् तत्त्वाचोक्तविशिष्टप्रकारकतादात्म्यसंसर्गकप्रतीतिविशेष्यमिति पर्यवसितम् । इदमेव प्रातिभासिकस्य व्यावहारिकतादात्म्येन प्रतीतत्वं पूर्वं मूल उक्तम् । एतावता च व्यावहारिकरजतस्य प्रातिभासिकरजतविषयकप्रवृत्तिप्रयोजकेच्छीयसद्रजतत्वावच्छिन्नविषयतावत्त्वात् 'सद्रजतमिदमि'त्याकारकप्रतीतिप्रकारत्वम्, तस्मात् तत्त्वाच्च प्रातिभासिकविशेष्यकतादात्म्यसंसर्गकज्ञानीयसद्रजतत्वावच्छिन्नप्रकारतारूपं यत् प्रातिभासिके तादात्म्येन प्रसक्तत्वं प्रातिभासिकनिष्ठभेदात्मकनिषेधप्रतियोगिताप्रयोजकम्, तद्वत्त्वं पर्यवस्यति । *स्वीकारादिति* । अत एव क्लृप्तशक्त्या तत्र रजतपदप्रयोगनिर्वाह इति भावः । *प्रत्ययाच्चेति* ॥ एवं च सत्त्वस्यापि तत्र स्वीकार आवश्यक इति भावः । *व्यर्थ इति* ॥ तथाच कथं व्यावहारिकस्य प्रातिभासिकनिष्ठभेदप्रतियोगिताभानमुक्तमिति भावः । *तं विनाऽपीति*॥ तादृशारोपस्वीकारं विनाऽपीत्यर्थः । अस्य 'प्रत्ययोपपत्तेरि'त्यत्राप्यपकर्षेणान्वयः । *प्रवृत्त्युपपत्तेरिति* ॥ प्रवृत्तौ हि वस्तुगत्या यत् सद्रजतं व्यावहारिकम्, तद्विषयकेच्छा न कारणम्, किंतु व्यावहारिकरजतनिष्ठं सद्रजतत्वम्, यच्च सत्त्वम्, तदुभयविशिष्टविषयकेच्छैव, सा चात्राक्षतैवेति भावः । *सत्त्वम्=सद्रूपब्रह्मतादात्म्यम्, तादात्म्येन संबद्धं ब्रह्मैव वेति तस्य सकलव्यावहारिकानुगतत्वाद् व्यावहारिकरजतत्वघटितप्रवृत्तिकारणतावच्छेदककोटौ शुक्तिगतसत्त्वस्यापि-

### न्यायामृतकण्टकोद्धारः

नाप्यत्यन्तासत्त्वम् ; मया स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं यद्यप्यसत्प्रपञ्चसाधारणमङ्गीकृतम्, तथापि क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वमित्यङ्गीकृतत्वेन प्रपञ्चे तदभावेनात्यन्तासत्त्वाभावात्— इति—*तच्च* ;

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रातीतिके रजतादौ न स्वीक्रियते ; प्रातीतिकादपि व्यावहारिकरजतादिकार्यापत्तेः । *प्रथमपरिच्छेदान्ते मूले*—'प्रातीतिक-व्यावहारिकसाधारणमेकं रजतत्वादिकम्, व्यावहारिकमात्रेऽन्यत्, प्रातीतिकमात्रेऽन्यत्'— इत्युक्तिस्तु व्यावहारिकरजततादात्म्यस्य प्रातीतिकस्य प्रातीतिकेऽनङ्गीकारपक्षे प्रौढिवादमात्रेण । एकस्यैव रजतत्वस्य व्यावहारिकमात्रनिष्ठस्य स्वीकारेऽपि तदाश्रयतादात्म्यविशिष्टस्योत्पत्तौ तादृशतादात्म्यस्याप्युत्पत्त्या 'इदं रजत'मित्यादिव्यवहारोपपत्तेः । तथाच व्यावहारिकेऽनुभूतं यद् रजतत्वादि तद्विशिष्टविषयकेच्छावतां प्रातीतिके प्रवृत्तेरुक्तविशिष्टस्य प्रातीतिके तादात्म्यारोपं विनाऽनुपपत्तेस्तादृशारोपावश्यकत्वम् । यदि तु— व्यावहारिकनिष्ठरजतत्वादेः प्रातीतिके स्वीकारेऽपि ततो व्यावहारिकरजतादिकार्यस्य नापत्तिः ; व्यावहारिकत्वविशिष्टस्यैव कारणस्य कार्यप्रयोजकत्वदर्शनेन तदन्तर्भावेणैव कारणकूटस्य फलोत्पत्तिव्याप्यतास्वीकारात्,

### विट्ठलेशीयटिप्पणी

नियेशात् कथं क्लृप्तकारणतया निर्वाह इति न शङ्कनीयम् ; सत्त्वस्याप्युभयसाधारणस्य स्वीकारादिति । *न स्वीक्रियत इति*॥ नचैवमपि—तत्र सज्ञानं स्वीक्रियते, एवं च रजतत्वविशिष्टविषयकत्वस्य प्रवृत्तिकारणतावच्छेदकस्य रजतत्ववत्ताघटितस्य रजतत्वावच्छिन्नविषयकत्वरूपस्योपगमाद्व न प्रवृत्त्यनुपपत्तिरिति—वाच्यम् ; तत्र तज्ज्ञानस्वीकारे तत्स्वीकारस्यानिर्वचनीयख्यातिवादिनां दुर्वारत्वादिति भावः ॥ *कार्यापत्तेरिति* ॥ प्रातीतिके व्यावहारिकतादात्म्य-स्वीकारे तु नेयमापत्तिः ; व्यावहारिकरजतत्वविशिष्टस्य तत्कार्यं प्रति करणत्वादिति भावः ।

मूलविरोधमाशङ्क्य परिहरति—*प्रथमेति* ॥ *पक्ष इति* ॥ 'इदं रजतमि'त्यादिव्यवहारानुपपादकमात्रेति शेषः । तथाच तद्ग्रन्थै तद्ग्रन्थयोर्विभिन्नपक्षाभिप्रायकत्वाद् न विरोध इति भावः । *प्रौढिवादमात्रेणेति* ॥ तृतीयार्थ उक्तस्यान्वयी अभेदः । मात्रपदेन युक्तिवादव्यवच्छेदः । *ननु*—तदङ्गीकारपक्षेऽपि प्रातिभासिके व्यावहारिकरजतत्वानुपगमे तत्र—'इदं रजतमि'ति व्यवहारः कथमुपपद्यत इति ? अत आह—*एकस्यैवेति* ॥ *ननु*—'इदं रजतमि'ति व्यवहारो द्विविधः—शुक्तिरूप्यपुरोवर्तिविषयकः, शुक्तिरूप्यात्मकपुरोवर्तिविषयकश्च । तत्र द्वितीयस्य शुक्तिरूप्य उक्तयुक्त्या व्यावहारिकरजतत्वोपगमासंभवेऽपि व्यावहारिकरूप्यतादात्म्यतदारोपस्वीकारेणो-पपत्तावपि शुक्तौ तादात्म्येन भासमाने प्रातिभासिके व्यावहारिकरजतत्वमुपगच्छतां तत्र रजत इवोपपद्यमानस्य प्रथमस्य तदनुपगच्छतां भवतां कथमुपपत्तिः ? अत आह—*तदाश्रयेति* ॥ 'शुक्तिरूप्यपुरोवर्तिनी'त्यादिः । *विशिष्टस्येति* ॥ प्रातिभासिकस्येति शेषः । *तादृशतादात्म्यस्य=व्यावहारिकरजतत्वाश्रयतादात्म्यस्य । प्रातिभासिक इति शेषः । उपसंहरति—*तथाचेति* ॥ प्रातिभासिके व्यावहारिकरजतत्वस्य ततो व्यावहारिकरजतकार्यापत्तिभयादनुपगमासंभवे चेत्यर्थः । *प्रवृत्तेरिति* ॥ 'अनुपपत्तेरि'त्यत्रान्वयः । प्रथमपरिच्छेदान्तोक्तमूलग्रन्थं युक्तिवादतया समर्थ्य प्रातीतिके व्यावहारिकतादात्म्यारोपोपगमवैयर्थ्यं शङ्कते—*यदि त्विति* ॥ 'आलक्ष्यते' इत्यनेनान्वयः (पृष्ठे २११) । *कार्यस्य= कटकादेः । *ननु*—कारणतावच्छेदकरजतत्वविशिष्टप्रातिभासिकघटितसामग्रीसत्त्वे कार्यं कुतो न जायत इति ? अत आह—*व्यावहारिकत्वविशिष्टस्यैवेति* ॥ *कार्यप्रयोजकत्वम्=कार्योपधायकत्वम् । *तदन्तर्भावेणैवेति* ॥ तत्कार्य-कारणतावच्छेदका यावन्तो धर्माः, प्रत्येकं तद्विशिष्टव्यावहारिकपदार्थकूटं यदा, तदव्यवहितोत्तरक्षणे तत्कार्योत्पत्ति-रिति व्याप्तिरिति भावः । *नन्वेवम्*—प्रातीतिकसर्पादेर्भय-कम्पादिकार्योत्पत्तिर्न स्यादित्येतेति शङ्कामिदापत्त्या परि-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अत एव प्रातीतिकं न कुत्रापि कारणम्, किन्तु तस्य ज्ञानं चिद्रूपम्; अत एव च यत्र व्यावहारिकविषयकात् प्रातीतिकविषयकाच्च ज्ञानादेकजातीयं कार्यम्, तत्रैकेनैव रूपेण तयोर्हेतुत्वम्। नचैवम्—व्याप्त्यादेर्व्यभिचारिहेत्वादौ सत्त्वापत्तिः; वह्निसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्यात्यन्ताभावस्याप्रतियोगिप्रातीतिकधूमसामानाधिकरण्यस्य वह्नौ सत्त्वादिति—वाच्यम्; व्यावहारिकमात्रवृत्तेरपि संयोगत्वादेः स्वीकारेण तदाश्रयस्यैव संयोगादेः सामानाधिकरण्यघटकाधिकरणादौ साध्यादिसंसर्गतया निवेशेन व्यावहारिकस्य प्रातीतिकसाध्यसंसर्गत्वाभावेन च प्रातीतिकधूममादाय व्याप्तिघटनाया असम्भवात्। एवं च व्यावहारिकप्रातीतिकोभयवृत्तिसंयोगत्वादिकं व्यावहारिकमात्रवृत्ति च तत् स्वीक्रियते, नतु प्रातीतिकमात्रवृत्ति; अत एव बाष्पे धूमत्वभ्रमेण प्रातीतिकधूमत्वस्याश्रये बाष्पे वह्निव्यापकतां गृहीत्वा वह्निव्यापकधूमसामानाधिकरण्यं यत्र गृह्यते वह्नौ, तत्र न धूमव्याप्यतापत्तिः, बाष्पत्वविशिष्टप्रतियोगिकस्य व्यावहारिकमात्रवृत्तिसंयोगत्वाश्रयस्य

### विट्ठलेशीयटिप्पणी

इति—*अत एवेति* ॥ व्यावहारिकस्यैव कार्योत्पत्तिप्रयोजकत्वादेवेत्यर्थः। यदि कारणं न, कथं तर्हि प्रातीतिकसर्पादिस्थले भयादिकमनुभूयते? तत्राह—*किन्त्विति* ॥ प्रातिभासिकस्य यद् ज्ञानं तूलाविद्यावृत्तिरूपम्, तदपि प्रातिभासिकं कार्यानुपयोग्येवेत्यत उक्तम्—*चिद्रूपमिति* ॥ तच्च तादृशवृत्त्युपहितमपि तत्तादात्म्यापन्नेदमाकारवृत्त्यवच्छिन्नत्वेन व्यावहारिककार्योपयोग्येव; अन्यथा प्रातीतिके व्यावहारिकतादात्म्योपगमेऽप्यगतेरिति भावः। *नन्वेवम्*—सामग्रीव्याप्यतावच्छेदके व्यावहारिकत्वनिवेशे गौरवम्, ततो व्यावहारिकरजतत्वं प्रातिभासिकेऽस्त्येव लघु, इत्यत आह—*अत एव चेति* ॥ व्यावहारिकरजतत्वादेः प्रातीतिकवृत्तित्वादेव चेत्यर्थः। अन्यथा तज्ज्ञानयोरेकरूपेण हेतुत्वासंभवात्, कार्य-कारणभावद्वयं विना ताभ्यामेकजातीयकार्यानुपपत्तेरिति भावः। व्यावहारिकनिष्ठरजतत्वादिरूपस्य प्रातीतिकवृत्तित्वे बाधकं शङ्कते—*नचेति* ॥ अयोगोलकादौ व्यावहारिकधूमत्वावच्छिन्नस्य प्रातीतिकधूमस्य सत्त्वेऽपि तदभावस्यापि बाधकाले सत्त्वात—*प्रतियोगिव्यधिकरणस्येति* ॥ *अप्रतियोगीति* ॥ प्रतियोगितानवच्छेदकीभूतव्यावहारिकधूमत्वाश्रयेत्यर्थः। वह्निपदेनात्र यदधिकरणे व्यावहारिकसाध्यव्यभिचारनिरूपके नियमेन कदाचित् प्रातीतिकधूमप्रसिद्धिः, स ग्राह्यः, तेन सकलवह्निमति प्रातीतिकधूमानियमेऽपि नासङ्गतिः। 'व्यावहारिकमात्रवृत्तेरपी'त्यपिना प्रातीतिकसाधारणस्य समुच्चयः। तत्प्रयोजनं प्रातीतिकसंयोगज्ञानात् कार्यनिर्वाहः। तं स्फुटयति—*एवं चेति* ॥ *तत्=संयोगत्वादिकम्*। *नत्विति* ॥ निष्प्रयोजनत्वादिति भावः। *प्रातीतिकमात्रवृत्तीति* ॥ तत् स्वीक्रियत इत्यनुषङ्गः। ईदृशतत्स्वीकारे बाधकमप्याह—*अत एवेति* ॥ प्रातीतिकमात्रवृत्तिसंयोगत्वादिस्वीकाराभावादेवेत्यर्थः। तत्स्वीकारे तदाश्रयस्य प्रातीतिकधूमत्वविशिष्टप्रतियोगिकत्वाद् भवेदयमतिप्रसङ्ग इत्युपष्टम्भसङ्गतिः। *भ्रमेणेति* ॥ तृतीयार्थो जन्यत्वं प्रातीतिकधूमत्वान्वयि। *वह्निव्यापकतामिति* ॥ तेन रूपेणेत्यादिः। *गृहीत्वा=विषयीकृत्य*। *वह्नौ वह्निव्यापकधूमसामानाधिकरण्यं यत्र गृह्यते=वह्निः स्वव्यापकधूमसमानाधिकरण इति भ्रमो यदा जायत इत्यर्थः। *धूमव्याप्यतापत्तिरिति* ॥ नच—प्रातीतिकं धूमत्वं कथं वह्निव्यापकतावच्छेदकम्? यत्किञ्चिद्वह्निमति प्रातीतिकधूमनियमेऽपि तादृशधूमे व्यावहारिकधूमत्वस्य सत्त्वेऽपि च बाष्पवृत्तेः प्रातीतिकस्य धूमत्वस्यासत्त्वादिति—वाच्यम्; व्यावहारिक-प्रातीतिकधूमत्वयोः सखण्डस्याखण्डस्य वा धूमत्वस्यैवोपगमेन तेन रूपेण बाष्पनिष्ठप्रातीतिकधूमत्वस्य प्रातीतिकधूमसमनियतवह्निव्यापकतावच्छेदकत्वसंभवात्, अत्रापि वह्निपदस्य तादृशवह्निपरत्वात्। *यद्वा—यत्र गृह्यते वह्नौ तत्रेत्यस्य यद्वह्निव्यक्तौ गृह्यते, तद्व्यक्तावित्यर्थः। सा च व्यक्तिर्यदधिकरणवृत्तिबाष्पादौ नियमेन कदाचिद् धूमत्वभ्रमः, तादृशी ग्राह्या; तादृशव्यक्तिव्यापकतावच्छेदकत्वस्य च प्रातीतिके धूमत्वे सुलभत्वात्। धूमपदं च प्रातीतिकधूमत्वावच्छिन्नेऽपि लाक्षणिकम्; तादृशेऽपि 'अयं धूमः' इति व्यवहारात्। 'प्रातीतिकमात्रे बाष्पादि'ति वक्ष्यमाणमूलात् प्रातीतिक-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रातीतिकधूमत्वोपलक्षितप्रतियोगिकत्वेऽप्युक्तधूमत्वविशिष्टप्रतियोगिकत्वाभावात् । किञ्च विशिष्टसामानाधिकरण्यस्य व्यावहारिकमात्रवृत्तिविशेषणतात्वाश्रयसम्बन्धेनाश्रयत्वमेव व्याप्तिरिति स्वीकारात् प्रातीतिकधूमत्वादिघटितस्य न व्याप्तित्वम् ; प्रातीतिकघटितधर्मावच्छिन्नस्य प्रातीतिकत्वेन व्यावहारिकस्य तत्प्रतियोगिकत्वाभावेनासम्बन्धत्वादिति—नव्यमतमालम्ब्यते, तदा प्रातीतिके नियमतो व्यावहारिकतादात्म्यारोपः, तन्निषेधश्चोपेक्षणीय एव, कादाचित्कौ तावालम्ब्य प्राचीनोक्तिर्नेया । नहि 'कदाचिदपि तौ न स्तः' इति वक्तुं शक्यम् । *यत्तु*—प्रातीतिके तदधिष्ठानस्यैव तादात्म्यारोपाद् व्यावहारिकरजतादेः प्रातीतिके तादात्म्यारोपोक्तिर्न युक्तेति, *तन्न* ; प्रातीतिके तदुत्पत्तिकालोत्तरमुत्पन्नेन दूरत्वादिदोषेणासन्निहितस्यानधिष्ठानस्यापि व्यावहारिकस्य तादात्म्यारोपदर्शनात्; व्यावहारिकरजतस्येन्द्रियासंनिकृष्टत्वेऽपि तदंशे स्मृतिरूपस्य भ्रमस्य सम्भवात् । *ननु*—" 'नेदं रजतमि'ति बाधोऽपि रजतस्य मायामयत्वं सूचयती"ति पञ्चपादीयवाक्ये विवरणे 'प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वम्, तच्च बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितयाऽवभासत इति प्रत्यक्षमि'ति वाक्यं व्याख्यानम् ; तथाच तादृशबाधकज्ञानस्यात्यन्ताभावविषयकत्वेनैव विवरणे व्याख्यानात् कथं प्रातीतिके व्यावहारिकभेदविषयकत्वं भवद्भिरुच्यते ? नच—समानविभक्तिकनामद्वययुक्तनञा भेदस्यैव बोधनाद् उक्तबाधज्ञानस्य भेदविषयकत्वमेव युक्तमिति—वाच्यम् ; प्रत्यक्षज्ञाने शब्दस्वारस्येनार्थकथनस्यायुक्तत्वात् ॥

### विट्ठलेशीयटिप्पणी

भाक्तवृत्तिसंयोगत्वादिस्वीकारेऽपि नेयमापत्तिरित्याह—*किञ्चेति* ॥ *विशिष्टेति* ॥ हेतुव्यापकतावच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्ननिरूपितस्वविशिष्टेत्यर्थः । 'धूमत्वादी'त्यादिना प्रातीतिकसंयोगपरिग्रहः । *असंबन्धत्वादिति* ॥ एवं च व्याप्तौ संयोगादिरूपसाध्यसंसर्गस्य प्रातीतिकसाधारणरूपेण निवेशेऽपि प्रातीतिकधूममादाय व्याप्तिघटनाया असंभव इति ज्ञेयम् । *आलम्ब्यत इति* ॥ एवं च व्यावहारिकवृत्तिरजतत्वेनैव 'इदं रजतमि'ति प्रत्ययप्रवृत्तिनिर्वाहात् प्रातीतिके व्यावहारिकतादात्म्यारोपो व्यर्थ इति भावः । *प्राचीनोक्तिः= "लौकिकरजतमेव 'नेदं रजतमि'ति निषेधप्रतियोगी"त्येवंरूपा । *वक्तुं शक्यमिति* ॥ विनिगमनाविरहादिति भावः । 'पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थमिति मूलोक्तनिरासे युक्तिं सिंहावलोकनन्यायेन वक्तुं तन्मतमनुवदति—*यत्त्विति* ॥ *तदुत्पत्तीति* ॥ प्रातीतिकोत्पत्तीत्यर्थः । *ननु*—प्रातीतिकरजतस्थाने सर्वत्र व्यावहारिकरजतसन्निधानासंभवाद् दर्शितप्राचीनोक्तिः सामान्यविषयाऽसंगतैवेत्यत आह—*व्यावहारिकरजतस्येति* ॥ *तदंशे स्मृतिरूपस्येति* ॥ प्रातीतिकरजतांशे प्रत्यक्षरूपस्येति शेषः । परोक्षत्वापरोक्षत्वयोः समावेशोपगमादिति भावः । व्यक्तं चेदं वेदान्तपरिभाषायाम् । *'न वा ग्रन्थविरोधः' इति* वक्ष्यमाणमूलेन अभिप्रायनिर्णयपरिहार्यतया सूचितं ग्रन्थविरोधं विशदयन्—*अयमभिप्राय इति* मूलमवतारयति—*नन्वित्यादिना* ॥ उपन्यस्यमानविवरणवाक्यस्थबाधकज्ञानपदस्य 'नेदं रजतमि'ति ज्ञानपरत्वं स्फुटीकर्तुं तद्विवियमाणमूलवाक्यमाह—*नेदमिति* ॥ *'नेदं रजतमि'ति बाधोऽपि=तादृशप्रत्यक्षबाधप्रहोऽपि, *रजतस्य=प्रातीतिकरजतस्य, *मायामयत्वम्=मिथ्यात्वम्, *सूचयति=विषयीकरोति, इति पञ्चपादिकावाक्यार्थः । तत्र च तादृशबाधग्रहस्य रजतमिथ्यात्वानवगाहित्वाद् बाध इत्याशङ्क्याह—*विवरणे—प्रतिपन्नोपाधाविति* ॥ तच्च प्रत्यक्षमित्यन्वयः । *अवभासत इति* ॥ प्रतिपन्नत्वं स्वप्रकारकधीविशेष्यत्वम्, तदपि भासते ; इदंपदस्य रजतत्वेनावभासमानपुरोवर्तिपरत्वात् । प्रतिपन्नपदस्य स्वाश्रयपरत्वेऽपि तज्ज्ञानमग्र उपपादयिष्यते । *बाधज्ञानस्य=पञ्चपादिकोक्त'नेदं रजतमि'त्याकारकबाधज्ञानस्य । *अत्यन्ताभावविषयकत्वेनैवेति* ॥ उक्तमिथ्यात्वशरीरेऽत्यन्ताभावस्यैव भेदमादाय सिद्धसाधनवारणाय निवेशितत्वादिति भावः । *व्याख्यानात्=वर्णनात् । *अयुक्तत्वादिति*॥ अभिलप्यमानप्रतीतेरभिलापजन्यप्रतीतिमुख्यत्व-

### न्यायामृतकण्टकोद्धारः

यदुक्तम्—स्वरूपेण त्रैकालिकनिषेधेऽप्युत्पत्त्यादिसम्भव इति, तन्न ; सर्वथा स्वरूपेण निषेध्यस्योत्पत्त्यादिविरुद्धत्वात् । उत्पत्तिमत्त्वे हि सस्वरूपताऽङ्गीकरणीया, अथ च स्वरूपेण निषेध इति व्याहतिः । नच—अनिषिध्यमानत्वमुत्पत्तिमत्त्वे न तन्त्रमिति—*वाच्यम्* ; न वयमत्र निषिद्ध्यमानत्वमुत्पत्तिमत्त्वे तन्त्रमिति ब्रूमः, किन्तु स्वरूपेण निषेध उत्पत्तिविरोधम् । नच—काल्पनिकं स्वरूपमस्ति, पारमार्थिकमेव नास्तीति ब्रूम इति—*वाच्यम्* ; तथा निषेधे स्वरूपेण निषेध इति पक्षभङ्गप्रसङ्गात्, स्वरूपेण निषेधेऽपि चेदुत्पत्त्यादिमत्त्वम्, तर्ह्यसतोऽप्युत्पत्तिप्रसङ्गः । नच—असतः कल्पितस्वरूपविशेषो नास्ति, अस्य तु सोऽस्तीति—*वाच्यम्* ; तथात्वे सर्वथा स्वरूपेण निषेध इति पक्षहानिः । सर्वथा स्वरूपनिषेधेऽपि प्रपञ्चे स्वरूपकल्पनाङ्गीकारेऽसत्यपि तत्कल्पनाऽङ्गीकरणीया ; अपरोक्षप्रतीत्यनुपपत्तिवत् परोक्षप्रतीत्यनुपपत्तेरपि वक्तुं शक्यत्वात् । एतेनैव—स्वरूपविशेष उत्पत्त्यादिमत्त्वे तन्त्रम्, स च कल्पितः प्रपञ्चेऽस्तीति—निरस्तम् ; कल्पितस्वरूपविशेषाङ्गीकारे तेन निषेधायोगादित्युक्तत्वात् । तस्मात् स्वरूपेण त्रैकालिकनिषेधविरोधः, उत्पत्त्याद्ययोग (१)इति साधूक्तम् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अथ यदि—विवरणकारैरेव पश्चादुक्तबाधज्ञानस्य भेदविषयकत्वमुक्तम्, तथाहि—'प्रतिपन्नोपाधौ स्वरूपेण रजतस्यात्यन्ताभावस्वीकारेऽपि कालभेदेनैव रजत-तदभावयोर्व्यवस्था स्यात् ; अन्यथा रजतस्य शून्यतारूपमलीकत्वं स्यात्, इत्याशङ्क्य, लौकिकपरमार्थरजतस्य कालविशेषमनन्तर्भाव्यैव निषेधात् तादृशनिषेधसामर्थ्याच्च 'प्रतिपन्नं प्रातीतिकरजतं मिथ्ये'ति तैरुक्तम् । तथाच बाधकज्ञानस्योक्तभेदविषयकत्वं तेषां संमतम्, इत्युच्यते, तथापि पूर्वापरविवरणवाक्ययोर्विरोधः, इत्याशङ्क्य

### विट्ठलेशीयटिप्पणी

नियमस्तु न ; 'पर्वतो वह्निमानि'तिवाक्याभिलप्यवह्निविधेयकानुमितौ व्यभिचारादित्यभिमानः । *अथ यदीति* ॥ 'उच्यते' इत्यन्वयः । *पश्चात्=उत्तरग्रन्थे* । तत्र तस्य स्पष्टमनुक्तेस्तत्र तस्य तात्पर्यं द्योतयितुं तद्ग्रन्थमुपन्यस्यति—*तथाहीत्यादि* ॥ *रजतस्य=प्रातीतिकरजतस्य* । *शून्यता=सर्वदेश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वम्* । *तथाच=एवं तदुक्तौ च* । *उक्तभेद इति* ॥ प्रातीतिकनिष्ठव्यावहारिकभेदेत्यर्थः । *संमतमिति* ॥ लौकिकपरमार्थरजतस्य कालविशेषमनन्तर्भाव्यैव निषेधादिति हि तदुक्तिः, सा च नात्यन्ताभावविषयकत्वे सङ्गच्छते ; 'अत्र रजतमि'त्यप्रसक्तेः, शुक्तौ प्रातीतिकरजते वा व्यावहारिकरजतात्यन्ताभावसत्त्वेऽपि शुक्तौ प्रतीतस्य रजतस्य सत्यत्वे बाधकाभावात्, व्यावहारिकरजतात्यन्ताभावविषयकप्रतीतेः प्रातीतिकरजतमिथ्यात्वाप्रयोजकतया 'तादृशनिषेधसामर्थ्याच्च' इत्युत्तरवाक्यासङ्गतेश्च । एवं शुक्तिरूप्ये पुरोवर्तिनि व्यावहारिकरजतभेदविषयकत्वेऽपि तत्र तादृशभेदस्य प्रातीतिकरजतमिथ्यात्वाप्रयोजकत्वात्, तादृशोक्तेः प्रातीतिके व्यावहारिकभेदविषयत्वे तु तदुक्तिः सङ्गच्छते ; पूर्वोक्तयुक्त्या प्रातीतिके व्यावहारिकस्य तादात्म्येन प्रसक्तिसत्त्वात् परमार्थसत्यभिन्नस्य लौकिकपरमार्थभिन्नस्य प्रतीयमानस्य मिथ्यात्वनियमेन तादृशभेदप्रतीतेः प्रातीतिकरजतमिथ्यात्वप्रयोजकतया तादृशोत्तरवाक्यं च सङ्गच्छत इति भावः । *तथापि=भवदुक्तेऽत्तरविवरणग्रन्थानुरोधित्वेऽपि* । *विरोध इति* ॥ एवं च मूलशैथिल्यादि

---

( १ ) असतो न परोक्षतयाऽपरोक्षतया वा प्रतीतिः, स्वरूपेण निषेध इति पक्षो ह्येकसत्तावाद एव, न सत्तात्रैविध्यवादे, तत्र च तस्यैवोत्पत्त्यादिमत्त्वम्, यस्य सत्त्वेन प्रतीत्यर्हत्वं सत्तादात्म्यं तत्त्वान्यतरत्त्वम्, शशशृङ्गादिकं तु न तादृशम्, इति नासतोऽप्युत्पत्त्यापातसम्भवः । तथाच स्वरूपेण निषेधस्य नोत्पत्त्यादिविरोधित्वम् । स्वरूपेण निषेधो नाम बाधकज्ञानबोधितत्वाभावकत्वमेव, नत्वभावप्रतियोगित्वमात्रम्, न चासतो बाधज्ञानबाध्यत्वमिति ॥

अद्वैतसिद्धिः

अयमाशयः—एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वनियमस्य व्युत्पत्तिबलसिद्धत्वाद् 'घटः पटो न भवती'ति वाक्यवद् 'इदं रजतं न भवती'ति वाक्यस्यान्योन्याभावबोधकत्वे स्थिते, अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः—'नेदं रजतमि'ति वाक्याभिलप्यप्रतीतेरन्योन्याभावविषयत्वमेव ।

तरङ्गिणी

*अयमभिप्रायः—एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वनियमस्य व्युत्पत्तिबलसिद्धत्वाद् 'घटः पटो न भवति' इति वाक्यवद् 'इदं रजतं न भवती'ति वाक्यस्यान्योन्याभावबोधकत्वे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उक्तविरोधं परिजिहीर्षुराह—*अयमाशय इत्यादि* ॥ *पदेति* ॥ प्रातिपदिकेत्यर्थः ; 'चैत्रो न पचती'त्यादावेकविभक्त्यन्तोपस्थाप्यस्थाप्यन्योन्याभावाबोधकत्वात् । *अभिलापेति* ॥ नञ्युक्तवाक्यरूपाभिलापेत्यर्थः ; पर्वतादौ वह्न्यादिप्रकारकानुमितेः 'पर्वतो वह्निमानि'त्यनेन तादात्म्येन वह्निमदादिप्रकारकधीजनकवाक्येनाभिलप्यमानत्वात्, उक्तवाक्यस्यापि संयोगेन वह्न्यादिप्रकारकधीजनकत्वमिति

न्यायामृतसौगन्ध्यम्

अयमभिप्रायः—एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वनियमस्य व्युत्पत्तिसिद्धत्वाद् 'घटः पटो न भवती'तिवद् 'इदं रजतं न भवती'ति वाक्यस्यान्योन्याभावबोधकत्वे स्थितेऽभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः 'नेदं रजतमि'ति वाक्याभिलप्यमान-

विट्ठलेशीयटिप्पणी

भयवुक्तिरप्यसंगतैवेति भावः । *मूले*—*एकेति* ॥ सजातीयेत्यर्थः । *उपस्थापिते*उपस्थापितस्य * नञ इति शेषेणान्वयः । तथाच धर्म्युपस्थापकपदसमानविभक्तिकपदोपस्थापितप्रतियोग्युपस्थापनसमानकालीनोपस्थितिविषयस्य तादृशपदसमभिव्याहृतस्य नञ इत्यर्थः । *व्युत्पत्तिः=कार्य-कारणभावः । अत्र च समानविभक्तिकत्वं 'नीलघटो' 'नीलो घट' इत्यादिसमास-व्याससाधारण्यानुरोधेन विरुद्धविभक्तिराहित्यरूपम् । तच्च विशेष्यवाचकपदोत्तरावृत्ति-विभक्तिविभाजकधर्मवद्विभक्तिराहित्यम् । विभक्तिविभाजकधर्मश्च प्रथमात्वादिः । तथाच 'चैत्रो न पचती'त्यादौ 'चैत्रः' 'पचती'त्यनयोः समानविभक्तिकत्वात् तत्समभिव्याहृतनञश्चात्यन्ताभावबोधकस्यान्योन्याभावाबोधकत्वेनोक्तनियमे व्यभिचार इत्याशङ्क्य व्याचष्टे—*पदेतीति* ॥ यद्यपि निरुक्तविरुद्धविभक्तिराहित्यं नाकाङ्क्षाघटकतया तज्ज्ञानकारणतावच्छेदकम् ; विभक्तित्वादिकमजानतः शाब्दबोधानुपपत्तेः ; तथाप्युक्तनियमशरीरे तन्निवेशेऽपि न क्षतिः ; नियमज्ञानस्य शाब्दबोधाकारणत्वादिति भावः । यदि च निरुक्तविरुद्धविभक्तिराहित्ये विभक्तिविभाजकधर्मपदेन प्रथमपुरुषत्वादिकमपि गृह्यते, *अथवा* विरुद्धविभक्तिराहित्यं विशेष्यवाचकपदोत्तरवृत्तिविभक्तिविभाजकधर्मवद्भिन्नविभक्तिराहित्यरूपं निवेश्यते, राहित्यप्रतियोगिनी विभक्तिश्च सुप्तिङन्यतररूपा, तदा 'चैत्रः' 'पचति' इत्यनयोर्विरुद्धविभक्तिराहित्याभावेनोक्तनियमे 'चैत्रो न पचती'त्यादौ व्यभिचाराभावेऽपि 'पदोपस्थापिते'त्यत्र पदशब्दस्य 'प्रातिपदिके'ति व्याख्यानमावश्यकम् । सुप्तिङन्यतरान्तरूपपदपदार्थस्यैकविभक्तिप्रकृतित्वरूपैकविभक्त्यन्तत्वस्य बाधेन यथाश्रुतासङ्गतेः । नच—विभक्त्यन्तत्वं विभक्तिचरमावयवकत्वमिति—वाच्यम् ; तद्वतो धर्मिप्रतियोग्यनुपस्थापकत्वेन 'उपस्थापिते धर्मिणी'त्यादेरसंगत्यापत्तेः ॥

*मूले*—'तुल्यत्वादि'त्यस्य समानविषयकत्वनियमादित्यर्थः । अत्र 'पर्वतो वह्निमान्' इति वह्न्यनुमितौ व्यभिचारोद्धाराय व्याचष्टे—*अभिलापेतीति* ॥ *नञ्युक्तेति* ॥ *ननु*—एवमपि 'पर्वतो न वह्निमानि'त्याकारकवह्न्यवच्छिन्नभेदविधेयकानुमितौ व्यभिचारो दुर्वार एवेत्यत आह—*उक्तवाक्यस्यापीति* ॥ *प्राचीनमत इति* ॥ अभेदसंसर्गमते तद्बोधौपयिकाकाङ्क्षानिर्वाहकप्रथमादिवद् मतुप् निरर्थक एव सन् भेदान्वयबोधौपयिका-

अद्वैतसिद्धिः

तथाचेदंशब्दनिर्दिष्टे पुरोवर्तिप्रातीतिकरजते रजतशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभाव-प्रतीतेरार्थिकं मिथ्यात्वम्, 'नात्र रजतमि'ति वाक्याभिलप्या तु प्रतीतिरत्यन्ताभावविषया ; भिन्न-

तरङ्गिणी

स्थिते, अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः—'नेदं रजतमि'ति वाक्याभिलप्यप्रतीतेरन्योन्याभाव-विषयत्वमेव ; तथाचेदंशब्दनिर्दिष्टे पुरोवर्तिप्रातीतिकरजते रजतशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभावप्रतीते-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्राचीनमते तु यथाश्रुतमेव साधु । *आर्थिकमिति* ॥ तथाचोक्तपञ्चपादीयवाक्येन तादृशभेदप्रतीति-रूपमेव बाधकप्रत्यक्षमभिलपितम् । तदभिप्रायेणैव पश्चाद् विवरणेऽपि तथोक्तम् । अत एव पञ्चपाद्यां *सूचयतीत्युक्तम्* ॥ तेन हि 'तस्य निरुपाख्यताबोधनपूर्वकं मिथ्यात्वं ज्ञापयति' 'नेदं रजतम्, मिथ्यैवा-भासिष्टे'ति च हेतुवाक्यं पश्चादुक्तम् । परमार्थान्यत्वरूपनिरुपाख्यताबोधनद्वाराऽर्थाद् मिथ्यात्वं ज्ञापयतीति हेत्वर्थः । अर्थापत्तिप्रकारो 'नेदमि'त्यादिनोक्तः । यतो नेदं परमार्थरजतम्, अतो मिथ्यात्वेन प्रतिपन्नो-

न्यायामृतसौगन्ध्यम्

प्रतीतेरन्योन्याभावविषयकत्वमेव ॥ तथाचेदंशब्दनिर्दिष्टपुरोवर्तिप्रातिभासिकरजते रजतशब्दनिर्दिष्ट-व्यावहारिकरजतान्योन्याभावप्रतीतेरार्थिकं मिथ्यात्वम्, "नात्र रजतमि"ति वाक्याभिलप्या प्रतीति-

विट्ठलेशीयटिप्पणी

काङ्क्षानिर्वाहक इति मत इत्यर्थः । *ननु*—'नेदं रजतमि'ति वाक्याभिलप्यप्रतीतेरन्योन्याभावविषयकत्वेऽपि पुरोवर्तिशुक्तिकायां व्यावहारिकरजतान्योन्याभावविषयकत्वेऽप्रसक्तप्रतिषेधापत्तिः, इति प्रातीतिकरजतान्योन्याभाव-रूपनिषेधविषयकत्वं स्वीकार्यम्, तथा सति मिथ्यात्वस्य बाधकधीविषयत्वरूपकण्ठोक्तत्वसंभवे 'मायामयत्वं सूचयती'ति पञ्चपादिकावाक्येन 'उक्तनिषेधसामर्थ्यात् प्रतिपन्नं प्रातीतिकं रजतं मिथ्ये'ति विवरणवाक्येन च मिथ्या-त्वस्य बाधकधीमूलकार्थापत्तिविषयत्वरूपार्थिकत्वोक्तिविरोधो दुर्वारः । *वस्तुतस्तु*—अन्योन्याभावरूपनिषेधस्य मिथ्यात्वाघटकतया मिथ्यात्वस्य नोक्तकण्ठोक्तत्वसम्भवः, नचोक्तबाधधीमूलकत्वं पञ्चपाद्युक्तमिथ्यात्वकार्थापत्तिप्रकारस्य इत्युक्तवाक्याभ्यां मिथ्यात्वस्याऽऽर्थिकत्वोक्तिविरोधो दुर्वार इत्यत आह मूले—*तथाचेति* ॥ 'अयमाशयः' इति ग्रन्थावतारिकोक्तपञ्चपादिकादिग्रन्थविरोधपरिहारम्—'अयमाशयः'इत्यार्था'र्थिकं मिथ्यात्वमि'त्यन्तग्रन्थलभ्यं स्फुटयति टीकायाम्—*तथाचेति* ॥ मिथ्यात्वस्यार्थिकत्वे चेत्यर्थः । *उक्तेति* ॥ 'नेदं रजतमि'ति बाधोऽपि 'रजतस्य मायामयत्वं सूचयति' इत्याकारकेत्यर्थः । *तादृशभेदेति* ॥ प्रातीतिकरजतानुयोगिकव्यावहारिकरजतप्रतियोगिक-भेदेत्यर्थः । मिथ्यात्वस्य कण्ठोक्तत्वं तु 'नेदं रजतमि'ति प्रतीतेः पुरोवर्तिशुक्त्यनुयोगिकरजतात्यन्ताभावविषयकत्वा-वश्यकत्वात् "तथाचे"त्याद्युपष्टम्भसङ्गतिः । *तदभिप्रायेण=*'नेदं रजतमि'ति प्रतीतेरुक्तभेदविषयकत्वाभिप्रायेण । *पश्चात्=*'तथाही'त्यादिनोपन्यस्तोत्तरग्रन्थे । *तथोक्तम्=*तादृशनिषेधसामर्थ्यात् प्रतिपन्नं प्रातीतिकरजतं मिथ्येत्युक्तम् ; 'अन्यथा हि सामर्थ्यपदासङ्गतेरि'त्युपष्टम्भसङ्गतिः । *अत एव=*तादृशप्रतीतेर्भेदविषयकत्वादेव । अन्यथा गृह्णातीत्येव वदेत् । सूचयतिपदस्य स एवार्थः किं न स्यात् ? तत्राह—*तेन हीति* ॥ पञ्चपादीकृता हीत्यर्थः । 'उक्तमि'त्यने-नान्वयः । *तस्य=*प्रातीतिकरजतस्य । ज्ञापयते'नेदं रजतमि'ति बाधः कर्ता । 'ज्ञापयती'त्यन्तं हेतुवाक्यं व्याचष्टे—*परमार्थान्यत्वेति* ॥ लौकिकपरमार्थरजतान्यत्वेत्यर्थः । *अर्थात्=*अनुपपत्तिज्ञानरूपसहकारिवशात् । *ज्ञापयति=* अर्थापयति । तथाच 'नेदं रजतमि'ति बाधः, प्रातीतिकरजतस्य मायामयत्वसूचकः, तदर्थापत्तिप्रयोजकेन तेन विनाऽनुप-पद्यमानत्वेन ज्ञायमानप्रातीतिकरजतधर्मिकपरमार्थरजतान्यत्वविषयकज्ञानत्वात्, इति प्रतिज्ञा-हेतू पर्यवसितौ । *यत इत्यादि* ॥ यदिदं रजतमभासिष्ट प्रतीतम्, तद् मिथ्यात्वं विनाऽनुपपद्यमानपरमार्थरजतभेदवत्त्वात्, मिथ्यात्वेन

अद्वैतसिद्धिः

विभक्त्यन्तपदोपस्थापितयोरेव धर्मि-प्रतियोगिनोर्नञः संसर्गाभावबोधकत्वनियमात् । सा च पुरोवर्तिप्रतीत-

तरङ्गिणी

तार्थिकं मिथ्यात्वम्, 'नात्र रजतमि'ति वाक्याभिलप्यमाना च प्रतीतिरत्यन्ताभावविषया ; भिन्नविभक्त्यन्तपदो-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पाधिनिष्ठात्यन्ताभावप्रतियोगित्वरूपेणेदमभासिष्टेति तदर्थः । एवं चार्थिकमुक्तमिथ्यात्वं बाधकोक्तमेदधीलभ्यम्, इत्याशयेन 'तत्र बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितयाऽवभासते' इति व्याख्यानरूपं पूर्वविवरणवाक्यमविरुद्धम् । अत एवोक्तनिषेधसामर्थ्यात् 'प्रतिपन्नं रजतं मिथ्ये'ति तत्रोक्तमिति भावः । *प्रतीतिः = भ्रमबाधकाले सर्वानुभवसिद्धधीः । *प्रतीतरजतस्य = प्रतीतरजतसाधारणरजतमात्रस्य । रज-

व्याख्यामृतसौगन्ध्यम्

त्यन्ताभावविषया ; भिन्नविभक्त्यन्तपदोपस्थापितयोरेव धर्मि-प्रतियोगिनोर्नञस्संसर्गाभावबोधकत्व-

बिठ्ठलेशीयटिप्पणी

प्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रतियोगित्वरूपेण तादृशप्रतियोगित्वरूपमिथ्यात्वविशिष्टमित्यर्थः । वैशिष्ट्ये तृतीया । प्रातीतिकरजतम्, मिथ्या, व्यावहारिकरजतभिन्नत्वेन प्रतीयमानत्वात्, इति निर्गलितार्थः । अद्यापि व्यभिचारवारणाय प्रतीयमानत्वनिवेशः । तत्र प्रतीतिश्च इत्यवच्छिन्नविषया, इति न तद्दोषतादवस्थ्यम् । *एतेन*—प्रतियोगित्वरूपेणेद-मभासिष्टेत्यस्य तत्प्रकारकातीतभानविषय इत्यर्थकत्वात् प्रकृतार्थापत्तिपूर्वं तादृशभानस्यासत्त्वात् तादृशार्थापत्ति-बाधपराहता—*इत्यपास्तम्* ; तादृशभानघटितस्य निरुक्तमिथ्यात्वस्यैवार्थापत्तिग्राह्यत्वात् । *नन्वेवम्*—'नेदं रजत-मि'ति ज्ञानस्यात्यन्ताभावघटितमिथ्यात्वविषयकत्ववर्णनपर'तत्रे'त्यादिपूर्वविवरणग्रन्थविरोधो दुरुद्धर एवेत्यत आह—*एवं चेति* ॥ *आर्थिकम्=अर्थापत्तिग्राह्यम् । बाधकज्ञानाविषयीभूतमिथ्यात्वार्थापत्तेर्बाधकधीमूलकत्वाभावे "बाधक-ज्ञाने तादृशप्रतियोगितयाऽवभासते" इति विवरणासङ्गतिः, अत उक्तम्—*बाधकोक्तभेदधीलभ्यमिति* ॥ *लभ्यम्=अन्यार्थापत्तिविषयः । तथाच 'बाधकज्ञाने' इति सतिसप्तमी, तस्याश्च "निमित्तात्कर्मयोगे" इति सूत्रे निमित्तत्वपर्यवसायितायाः वैयाकरणैः स्वीकृतत्वात्, उक्तविवरणवाक्ये तादृशप्रतियोगितया भानस्य बाधज्ञानाधीनत्वलाभात् तत्सङ्गतिरिति भावः । उक्तविवरणवाक्यस्येदृशार्थपरत्वद्योतनाय विवरणकारीयवाक्यान्तरसंवादमाह—*अत एवेति* ॥ मिथ्या-त्वस्य बाधकधीमूलकार्थापत्तिविषयत्वादेवेत्यर्थः । *तत्र=विवरणे । *ननु*—मिथ्यात्वस्यार्थिकत्वे 'तत्र बाधक-ज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितया भासत इति प्रत्यक्षमि'ति विवरणवाक्ये तत्=मिथ्यात्वं प्रत्यक्षमिति व्याख्यासङ्गतिरिति—चेन्, *न* ; तच्छिदस्य भासत इत्यत्रैवान्वयात्, *इति प्रत्यक्षमित्यस्य=इत्यनुभवसिद्धमित्यर्थ-कत्वात् ॥ *ननु*—प्रातीतिकरजतमिथ्यात्वं किमार्थिकमेव ? इत्याशङ्क्य नेत्याह *मूले*—*नात्र रजतमिति* ॥ *ननु*—'इदं रजतमि'ति भ्रमोत्तरं 'नेदं रजतमि'त्येव प्रतीतिः, नतु 'नात्र रजतमि'त्याकारा, इत्याशङ्कां परिहर्तुं व्याचष्टे—*प्रतीतिरिति* । *भ्रमेति* ॥ 'अत्र रजतमि'तीत्यादिः । *बाधकाले=उत्तरकाले ॥ *सर्वानुभवसिद्धधीरिति* ॥ 'इदं रजतमि'ति भ्रमोत्तरं 'नेदं रजतमि'ति बाधप्रतीतिः, 'अत्र रजतमि'ति भ्रमोत्तरं 'नात्र रजतमि'ति बाधप्रतीतिः सर्वानुभवसिद्धेति भावः । 'घटो न घटः' इति वाक्यस्य प्रामाण्यवारणाय *मूले*—*भिन्नविभक्त्यन्तेति* ॥ 'इदं न चैत्रस्य' 'चैत्रो न पचति' इत्यादिसंग्रहाय सप्तमी-प्रथमेति, 'भूतले न घटः' इत्यादिसंग्रहाय प्रथमा-षष्ठी-तिङन्तेतरेति च नोक्तम् । 'नात्र रजतमि'ति प्रतीतिर्न पुरोवर्तिप्रातीतिकरजते व्यावहारिकरजतमात्रस्यात्यन्ताभावं विषयीकरोति ; तत्रे'दं रजतमि'ति सामानाधिकरण्येन तदारोपस्यैवानुभवेन 'अत्र रजतमि'ति प्रतीतिकवतत्प्रसक्त्यभावात्, नापि पुरोवर्तिशुक्तिशकले ; अन्यथाख्यात्यापत्तिभयेन तत्र तस्य कथमपि प्रसक्तेरनुपगमात्, नापि पुरोवर्तिशुक्तिशकले पुरो-वर्तिप्रातीतिकरजतमात्रस्य ; प्रातीतिकरजतत्वस्यानुपदं निराकर्तव्यत्वेन रजतपदोल्लेख्यस्य तन्मात्रवृत्तिप्रतियोगिताव-च्छेदकस्य दुर्वचत्वात्, किन्तु व्यावहारिक-प्रातीतिकरजतसाधारणरजतत्वेन रूपेण प्रतियोगिविधया भासमानरजत-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्वेन पारमार्थिकत्वेन वेति शेषः। *ननु*—रजतत्वं प्रातीतिकं निषेध्यतावच्छेदकम्? व्यावहारिकं वा? आद्ये तादृशबाधोत्तरं व्यावहारिकरजतमिति विशिष्टबुद्ध्यापत्तिः, द्वितीये प्रातीतिकं तदादायोक्तापत्तिः, भ्रमबाधयोर्वैयधिकरण्यापत्तिश्च, नच द्वाभ्यां रजतत्वाभ्यां द्वे बाधबुद्धी जायेते; अनुभवविरोधादिति—चेत्, *न*; 'इह रजतमि'ति व्यावहारिकरजतत्वरूपेणैव रजतस्य शुक्तौ भ्रमे भानात् तेन रूपेण निषेधे वैयधिकरण्याद्यभावात्, भ्रमे हि व्यावहारिकरजतत्वस्य व्यावहारिकः संसर्गः प्रातीतिकरजते भासते, बाधकज्ञाने व्यावहारिकस्य मिथ्यात्वस्य व्यावहारिकसम्बन्धभानवत्। न च—प्रातीतिकं रजतत्वं प्रातीतिकमात्रवृत्तितादात्म्यत्वविशिष्टं सम्बन्धं चादाय विशिष्टबुद्ध्यापत्तिरुक्तबाधसत्त्वेऽपीति—वाच्यम्; तादृशरजतत्वादौ तादृशतादात्म्यत्वे वा मानाभावात्, व्यावहारिकवृत्तेर्व्यावहारिकस्यैव रजतत्वस्य प्रातीतिके रजते भानाभ्युपगमाद् व्यावहारिकतादात्म्यसाधारणतादात्म्यत्वस्य तत्संसर्गतावच्छेदकतया भानाच्च। *अथ*—भ्रमस्थले दोषजन्यतावच्छेदकतया प्रातीतिकं रजतत्वादिकं प्रातीतिकमात्रवृत्ति तादात्म्यत्वं च सिद्ध्यति; अत एव प्रातीतिकमात्रवृत्तिरजतत्वादिकं स्वीक्रियते, व्यावहारिकसाधारणं रजतत्वादिकं च न दोषजन्यतावच्छेदकम्, दोषं विनाऽपि तदवच्छिन्नस्य व्यावहारिकस्योत्पत्त्या व्यभिचारादिति—चेत्, *न*; व्यावहारिकसाधारणस्य दोषजन्यतावच्छेदकत्वेऽपि प्रातीतिकतादात्म्यस्यैवोक्तजन्यतावच्छेदकसम्बन्धत्वेनोक्तव्यभिचारानवकाशात्, व्यावहारिकसम्बन्धेनैव व्यावहारिकस्योत्पत्तेः। नच—उक्तकार्यतावच्छेदकसम्बन्धे प्रातीतिकत्वं यत् प्रवेशितम्, तस्य व्यवहारकालबाध्यत्वरूपत्वे गौरवात् प्रातीतिकमात्रवृत्त्यखण्डधर्मरूपत्वं वाच्यमिति—वाच्यम्; तथा सति दोषजन्यज्ञानाद् व्यावहारिकसाधारणतादात्म्यत्वविशिष्टसम्बन्धविषयकप्रवृत्त्यादिकार्योत्पत्त्यसम्भवात्। अत एव चोक्त-

विट्ठलेशीयटिप्पणी

सामान्यस्येत्यभिप्रायेण व्याचष्टे—*प्रतीतरजतस्येति* ॥ *प्रतीतसाधारणेति* ॥ प्रातीतिकव्यावहारिकरजतोभयवृत्तिरजतत्वविशिष्टेत्यर्थः। *मात्रस्य=सामान्यस्य। स्वीकृतपक्षानुसारेण प्रतियोगितावच्छेदकं पूरयति—*रजतत्वेनेति* ॥ तुष्यतु दुर्जनन्यायेन पूर्वपक्षोक्तदोषान् अभ्युपगम्याह—*पारमार्थिकत्वेनेति* ॥

यद्यपि पारमार्थिकत्वेन रजतात्यन्ताभावबुद्धिरि'ह रजतमि'त्याकारककेवलरजतत्वावच्छिन्नविशिष्टबुद्धिं न विरुणद्धि; तथापि 'इह सद्रजतमि'त्याकारकसत्त्वावच्छिन्नरजतप्रकारकबुद्धिं विरुणद्ध्येव। सत्त्वं सत्यत्वं पारमार्थिकत्वमिति हि अनर्थान्तरमिति बोध्यम्। *इह रजतमितीति* ॥ पारमार्थिकत्वेनेति द्वितीयकल्पेऽपीदृशविकल्पे 'इह सद्रजतमि'ति बुद्ध्यापत्तिर्बोध्या। *वैयधिकरण्येति* ॥ भ्रमे प्रातीतिकरजतत्वरूपेणैव रजतं प्रतीयत इत्यभिमानः। *नचेति* ॥ जायेते इत्यन्वयः। अभिमानं निराकृत्य समाधत्ते—*नेति* ॥ *भानवदिति* ॥ मिथ्यात्वादेः प्रातीतिकत्वे रजतस्य पारमार्थिकत्वं स्यादिति भावः। *संबन्धम्- रजतप्रतियोगिकम्। एवं चात्र 'रजतत्वस्ये'त्यधिकः पाठः। *तत्संसर्गेति* ॥ रजतसंसर्गेत्यर्थः। *रूपत्वं वाच्यमिति* ॥ तथाच प्रातीतिकमात्रवृत्तितादात्म्यत्वसिद्धिः, इति तेनैव रूपेण प्रातीतिकतादात्म्यस्य भ्रमे संसर्गतया भानसम्भवेन व्यावहारिकतादात्म्यत्वस्य प्रातीतिकतादात्म्यसाधारण्ये मानाभावः, बाधसत्त्वेऽप्युक्तविशिष्टबुद्ध्यापत्तिश्चेति भावः। *तथा सति=प्रातीतिकमात्रवृत्तितादात्म्यत्वस्वीकारावश्यकत्वेन व्यावहारिकतादात्म्यत्वस्य प्रातीतिकतादात्म्यावृत्तित्वे सति। *प्रवृत्त्यादिकार्येति* ॥ तादृशप्रवृत्तिं प्रति तादृशसम्बन्धज्ञानस्यैव हेतुतया क्लृप्तत्वेन दोषजन्यज्ञानोत्तरं तादृशप्रवृत्तेरनुभवसिद्धत्वेन तज्ज्ञानस्य तादृशसम्बन्धविषयकत्वमावश्यकम्, अन्यथा तादृशप्रवृत्तौ प्रातीतिकतादात्म्यत्वविशिष्टसम्बन्धविषयकज्ञानत्वेनापि कारणत्वान्तरस्यावश्यकल्प्यतया गौरवं स्यात्; एतदपेक्षयाऽऽवश्यकदोषजन्यतावच्छेदककोटावेव व्यवहारकालबाध्यत्वरूपप्रातीतिकत्वप्रवेशो लाघवम्। इत्थं चाखण्डप्रातीतिकतादात्म्यत्वस्वीकारे मानाभाव इति भावः। *अत एवेति* ॥ प्रातीतिकत्वस्याखण्डधर्मरूपत्वस्वीकारे उक्तप्रवृत्तिरूपकार्योत्पत्तिनिर्वाहाय कारणतान्तरकल्पनारूपगौरवापत्तेरित्यर्थः; यदि चोक्तप्रवृत्तिरूपकार्यनिर्वाहाय व्यावहारिकतादात्म्यत्वस्य प्रातीतिकतादात्म्यसाधारण-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

गौरवं प्रामाणिकम् । अत एव *च* रजतत्वादिकमपि न प्रातीतिकमात्रवृत्ति, प्राचीनोक्तिस्तु रजतत्वादिकं स्वरूपेण व्यावहारिक-प्रातीतिकरजतसाधारणमपि प्रातीतिकरजतादिसंसृष्टरूपेण प्रातीतिकमेव, न व्यावहारिक-साधारणमित्यभिप्रायिका । अत एव व्यावहारिकसम्बन्धेन कपालादेर्घटादिहेतुत्वेन न प्रातीतिककपालाद् घटाद्युत्पत्त्यापत्तिः ॥

*किंच* 'कपालादिरूपकारणकूटविशिष्टं यद् यत्क्षणे भवति, तत् तदुत्तरक्षणावच्छेदेन घटवत्, इति व्याप्तिबलादुक्तापत्तिः कार्या, उक्तव्याप्तिरेव न सम्भवति ; कपालादिकारणकूटनिष्ठव्याप्तौ कपालादेर्व्यावहारिकसम्बन्धस्य प्रवेशात् , स्वव्यापकघटसमानाधिकरणवृत्तिकपालादिकारणकूटत्वस्य व्यावहारिकसम्बन्धावच्छिन्नस्य व्याप्तिस्वरूपत्वाद्वा, प्रातीतिककपालाविघटितस्य तादृशकूटस्य प्रातीतिकत्वेन व्यावहारिकसम्बन्धेन तद्वत्त्वस्यालीकत्वात् । नच—तथापि बाधकज्ञानोत्तरं व्यावहारिकरजतत्वस्य प्रातीतिकसंसर्गमादाय 'इह रजतमि'ति विशिष्टबुद्ध्यापत्तिरिति—वाच्यम् ; रजतत्वीयप्रातीतिकसंसर्गस्यापि व्यावहारिक-प्रातीतिकसाधारणेन तादात्म्यत्वरूपेणैव शुक्तित्वोपरि भ्रमे बाधे च भानेन तादृशबाधे सति

विट्ठलेशीयटिप्पणी

अङ्गीकृत्य दोषजन्यतावच्छेदके व्यवहारकालबाध्यत्वनिवेशापेक्षया लाघवानुरोधादेव प्रातीतिकत्वमखण्डधर्मरूपं स्वीक्रियते, तदाऽप्यतिरिक्तप्रातीतिकतादात्म्यत्वरूपधर्मकल्पनामनन्तप्रातीतिकतादात्म्येष्वनन्ततत्सम्बन्धकल्पनां चापेक्ष्य दोषजन्यतावच्छेदके व्यवहारकालबाध्यत्वनिवेश एव लाघवम्, इति नातिरिक्ततादृशधर्मसिद्धिरिति बोध्यम् । उक्तव्यभिचारवारणानुरोधाद् दोषजन्यतावच्छेदके प्रातीतिकत्वं प्रवेश्यम् , तच्च तदवच्छेदकसम्बन्धकोटौ धर्मकोटौ वेत्यत्र विनिगमनाविरहात् तादृशधर्मकोटावपि तन्निवेशे कर्तव्ये तस्य व्यवहारकालबाध्यत्वरूपत्वे गौरवादखण्डप्रातीतिकरजतत्वस्यापि सिद्धिरिति मतमुक्तयुक्त्या दूषयति—*अत एवेति* ॥ दोषजन्यज्ञानाद् व्यावहारिकसाधारणरजतत्वविशिष्टविषयकप्रवृत्त्यादिकार्यनिर्वाहानुरोधादेवेत्यर्थः । अनुपदोक्तातिरिक्ततादात्म्यत्वनिरासरीतिरिहाप्यनुसन्धेया । *नन्वेवम्*—मूलस्थप्रथमपरिच्छेदान्ते "प्रातीतिकमात्रे चान्यद् रजतत्वमि"त्यादिप्राचीनोक्तिः किमभिप्रायिकेति ? अत आह—*प्राचीनोक्तिस्त्विति* ॥ *साधारणमिति* ॥ व्यावहारिकमिति शेषः । *प्रातीतिकमिति* ॥ प्रातीतिकमात्रवृत्ति चेति शेषः । *नन्वेवम्*—व्यावहारिककपालत्वस्य तादृशतादात्म्यत्वस्य च प्रातीतिककपालतादात्म्यसाधारणतया प्रातीतिककपालाद् घटोत्पत्तिप्रसङ्ग इत्यत आह—*अत एवेति* ॥ व्यावहारिकधर्मस्य प्रातीतिकसाधारणत्वादेवेत्यर्थः । व्यावहारिकत्वस्य कारणतावच्छेदकसम्बन्धे प्रवेश इत्युपष्टम्भकं बोध्यम् । *सम्बन्धेन*=तादात्म्येन । व्यावहारिकत्वस्य तत्राप्रवेशेनाप्युक्तापत्तिं परिहरति—*किञ्चेति* ॥ *यत्=अधिकरणम् ॥ *क्षणे=क्षणावच्छेदेन । *तत्*=अधिकरणम् । *व्याप्तौ=तद्घटकव्यापकतायाम् । हेत्वधिकरणाभावादिघटकपदार्थानां प्रातीतिकानां व्याप्तिघटकतावारणाय बहुषु हेत्वादिसम्बन्धेषु व्यावहारिकत्वनिवेशे गौरवाद् व्याप्तिघटकचरमपदार्थस्यैव हेतौ व्यावहारिकसम्बन्धो निवेश्यः । प्रातीतिकहेत्वादिघटितविशिष्टस्य प्रातीतिकत्वाद् व्यावहारिकसम्बन्धस्य प्रातीतिकप्रतियोगिकत्वानुपगमेन प्रातीतिकहेत्वादिघटितसकलविशिष्टानां व्याप्यत्वव्यवहारविषयतावारणमित्याशयेनाह—*स्वव्यापकेति* ॥ प्रातीतिकं प्रकारसम्बन्धमादाय बाधोत्तरं विशिष्टबुद्धिरेतावता वारिता, इदानीं प्रातीतिकं प्रकारतावच्छेदकसम्बन्धमादाय विशिष्टबुद्ध्यापत्तिं वारयितुं शङ्कते—*नचेति* ॥ 'इह रजतमि'ति पाठः । 'एवं रजतोपरि' इति पाठः । *असम्भवादिति* ॥ समानविषयकत्वं प्रतिबन्धकतायां तन्त्रम्, अपितु समानप्रकारकत्वमिति यथा, एवं समानसंसर्गकत्वं न तन्त्रम्, किन्तु समानसंसर्गतावच्छेदकत्वमेवेति भावः । *बाधा*—एतावता बाधोत्तरं शुक्तौ रजतविशिष्टबुद्धिर्वारिता, इदानीं शुक्तौ रजतत्वविशिष्टबुद्धिं वारयितुं शङ्कते—*नचेति* ॥ तत्प्रकारक—'इह रजतत्वमि'ति पाठः । समाधाने च 'शुक्त्युपरि'

## अद्वैतसिद्धिः

वर्तिप्रतीतरजतस्यैव व्यावहारिकमत्यन्ताभावं विषयीकरोति, इति, कण्ठोक्तमेव मिथ्यात्वम् ।

## तरङ्गिणी

पस्थापितयोरेव धर्मि-प्रतियोगिनोर्नञः संसर्गाभावबोधकत्वनियमात् । सा च पुरोवर्तिप्रतीतस्यैव व्यावहारिक-

## न्यायामृतकण्टकोद्धारः

यथाचार्यवचनपरिहारार्थमाचार्यवचनाभिप्रायकल्पनम्, तदप्यसत्; अस्पष्टस्य ह्यभिप्रायो वर्णनीयः । स्पष्टं हि भवदाचार्या बहुषु स्थलेषु वदन्ति—'आभासप्रतिक्षेपतयाऽनाभासनं निषिध्यते' इति, 'लौकिकपारमार्थिकत्वरूपेण निषिध्यते' इति च । तथाचाभिप्रायवर्णनस्य (१)शिष्यवञ्चनामात्रत्वादु-पेक्षणीयतैव युक्तेति ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादृशतादात्म्यत्वरूपेण प्रातीतिकतादात्म्यावगाहिन्या अप्युक्तविशिष्टबुद्धेरसम्भवात् । *व्यावहारिकमिति* ॥ तदन्यूनसत्ताकमित्यर्थः ; स्वाप्नभ्रमस्य स्वाप्नबाधे प्रातीतिकात्यन्ताभावविषयकत्वस्य पूर्वमुक्तत्वात् । *अथवा* मिथ्यात्वं व्यावहारिकात्यन्ताभावघटितमेव, स्वाप्नबाधस्तु प्रातीतिकमेवाभावं व्यावहारिकत्वेन भासमानमव-गाहते ; तथाच 'व्यावहारिकमि'त्यस्य व्यावहारिकत्वेन भासमानमित्यर्थः, व्यावहारिकत्वं च व्यवहारकाला-बाध्यत्वम्, तच्च प्रातीतिकत्वेनोक्तबाध्यत्वरूपेणागृह्यमाणे प्रातीतिकेऽपि बाधकज्ञानेन ग्रहीतुं शक्यत एवेति भावः । *कण्ठोक्तम्*=बाधकधीविषयः ।

*ननु*—स्वसमानाधिकरणान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वं बाधकज्ञानेन नियमतो गृह्यत इति वक्तुमशक्यम् ; स्वाधिकरणत्वस्य भ्रमरूपोपस्थितेर्बाधात् पूर्वं सत्त्वेऽप्यन्यूनसत्ताकत्वस्य पूर्वमनुपस्थितत्वात्, चक्षुरादिमानायोग्यत्वादनुमानाद्यनवतारेऽपि बाधबुद्ध्युदयाच्चेति—*चेत्, अत्रोच्यते*—न्यूनसत्ताकत्वेन रूपेण व्यवहारकाले यदज्ञातं तादृशाभावस्यैव मिथ्यात्वघटकतास्वीकारेण 'अज्ञातत्वेन

## विट्ठलेशोपाध्यायटिप्पणी

इत्येव पाठः । व्यावहारिकत्वस्य मिथ्यात्वघटकत्वाद् व्याचष्टे—*व्यावहारिकमितीति* ॥ व्यावहारिक-त्वस्य तद्घटकत्वे बाधकं स्मारयति—*स्वाप्नेति* ॥ व्यावहारिकपदस्य सन्निकृष्टकाक्षणिकत्वादाह—*अथवेति* ॥ *व्यावहारिकात्यन्ताभावेति* ॥ वस्तुतो व्यावहारिकत्वेन भासमानात्यन्ताभावेत्यर्थः । तेन स्वाप्नगजादीनां स्वाप्नाभावानां च प्रातीतिकत्वेऽपि न तद्घटितमिथ्यात्वानुपपत्तिः । व्यावहारिकत्वेन भासमानत्वं वस्तुसदेव मिथ्यात्वघटकम्, न तु मिथ्यात्वज्ञाने तद्विषयकत्वमावश्यकमिति सूचयितुं वस्तुत इत्युक्तम् । तेन बाधज्ञाने व्याव-हारिकत्वेन प्रतीयमानाभावांशे तादृशप्रतीयमानत्वाभानेऽपि न क्षतिः । *ननु*—व्यावहारिकत्व प्रातीतिकत्वयो-र्विरोधात् कथं स्वाप्नबाधस्य तदुभयरूपेणाभावविषयकत्वम् ? अत आह—*व्यावहारिकत्वञ्चेति*॥ *अगृह्यमाणेति* ॥ तथाच तत्र विशेषणज्ञानबाधाभावघटितसामग्रीबलाद् व्यावहारिकत्वेनैवाभावभानमिति भावः । *कण्ठोक्तत्वम्*= कण्ठाधीनशब्दजन्यज्ञानविषयत्वम्, तस्य प्रात्यक्षिकबाधस्थलेऽसम्भवादाह—*कण्ठोक्तमिति* ॥

विशेषणज्ञाने सति बाधाभावबलाद् बाधकज्ञानेन मिथ्यात्वग्रहेऽपि विशेषणज्ञानविरहस्थले तदनुपपत्तिं शङ्कते—*नन्विति*॥ 'अन्यूनसत्ताकत्वस्ये'त्युपलक्षणम्—व्यावहारिकत्वस्यापि । अनुपस्थितत्वे हेतुः—*चक्षुरादीति*॥ *ननु* —विनाशित्वव्यवहति विनाशित्वाभावस्य श्रुतिप्रतीतस्येवैवाप्रातिभासिकत्वानुमितिरूपैव तदुपस्थितिर्भविष्यति, इत्यत आह—*अनुमानाद्यनवतारेऽपीति* ॥ आदिशब्देन तद्घटकपदार्थोपस्थितिमूलकविशिष्टतदुपस्थितिपरिग्रहः । *न्यूनेति* ॥ न्यूनसत्ताकत्वप्रकारकव्यवहारकालिकाज्ञानविषय इत्यर्थः । *अज्ञातत्वेनेति* ॥ अनुपस्थितेनापीति

(१) आचार्याभिप्रायवर्णनं हि सत्यं स्पष्टविषये नापेक्षितम्, विस्पष्टश्चाचार्यवचनार्थोऽस्माभिरुक्त एव । तथाच परेषां

अद्वैतसिद्धिः

अतो नापसिद्धान्तः, नान्यथाख्यात्यापत्तिः, न वा ग्रन्थविरोध इत्यनवद्यम् ॥

तरङ्गिणी

मत्यन्ताभावं विषयीकरोति, इति कण्ठोक्तमेव मिथ्यात्वम्; अतो नापसिद्धान्तः, नान्यथाख्यात्यापत्तिः, न वा ग्रन्थविरोध इति" ॥

*अत्रोच्यते*—प्रातिभासिकरजतस्य लौकिकपरमार्थरजततादात्म्येन त्वन्मते प्रतीतिर्न युक्ता; प्रातिभासिकरूप्यस्य लौकिकपारमार्थिकरजताज्ञानाकार्यत्वात्, प्रातिभासिकस्य स्वोपादानाज्ञाननिवर्तकज्ञानविषयेणैव तादात्म्यप्रतीतेश्च। नहि पुरोवर्तितत्त्वाज्ञानेऽपि लौकिकपरमार्थरजतत्वज्ञानमात्रात् प्रातिभासिकरजतनिवृत्तिरस्ति; 'शुक्लः पटः' इति शुक्ल-पटयोरेकाज्ञानकार्यत्वाद् एकत्राध्यासाच्च। नन्वेवं घट-पटयोरपि तादात्म्यप्रतीत्यापत्तिः; तादृशप्रतीतौ सत्यामेतस्य निमित्तत्वं कल्प्यते, '*आरोपे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सर्वं साक्षिभास्यमि'ति विवरणाद्युक्तेः, स्वसामानाधिकरण्यादेश्च बाधकवृत्तिज्ञानविषयत्वादुक्तमिथ्यात्वस्य बाधकवृत्तिज्ञानावच्छिन्नसाक्षिणा नियमेन ग्रहणम्। एवं व्यावहारिकाभावघटितमिथ्यात्वपक्षेऽपि व्यवहारकालीनज्ञाननिवर्त्यत्वेनाज्ञाताभावस्य मिथ्यात्वघटकत्वं स्वीकृत्य निर्वहणीयमिति। *नापसिद्धान्त इत्यादि* ॥ 'स्वरूपेण प्रातीतिकरूप्यस्य न निषेधः' इति सिद्धान्तहानिर्न दोषः, तादृशसिद्धान्तस्यैवास्मदाचार्यानभिमतत्वात्। अत एव व्यावहारिकरजतस्यैव स्वरूपेण निषेधस्वीकारे भ्रमबाधवैयधिकरण्यादिवारणाय तस्यैव भ्रमे भानस्य वाच्यत्वेऽन्यथाख्यात्यापत्तिरिति दोषोऽपि न। एवमुक्तपद्मपादीविवरणादिग्रन्थविरोधोऽपि नेत्यर्थः।

न्यायामृतसौगन्ध्यम्

नियमात्। सा च पुरोवर्तिप्रतीतरजतस्यैव व्यावहारिकमत्यन्ताभावं विषयीकरोति, इति कण्ठोक्तमेव मिथ्यात्वम्। अतो नापसिद्धान्तः, नान्यथाख्यात्यापत्तिः, न वा ग्रन्थविरोध इति—चेत्, न; स्वरूपेणैव निषेधे श्रुत्याद्युक्तोत्पत्त्याद्यसंभवात् ॥

सिद्धिव्याख्या

तस्याभिप्रायं विवृणोति—*अयमभिप्राय इत्यादिना* ॥ एवं स्वपसिद्धान्तादिदोषं परिहरति—*अत इति* ॥

*अत्र वदन्ति*—प्रातिभासिकस्य रजतस्य लौकिकपरमार्थरजततादात्म्येन त्वन्मते प्रतीतिर्न युक्ता; प्रातिभासिकस्य रूप्यस्य लौकिकपारमार्थिकरजताज्ञानाकार्यत्वात्, प्रातिभासिकस्य स्वोपादानाज्ञाननिवर्तकज्ञानविषयेणैव तादात्म्यप्रतीतेश्च, नहि पुरोवर्तिशुक्तित्वाज्ञानेऽपि लौकिकपरमार्थरजतत्वज्ञानमात्रात् प्रातिभासिकरजतनिवृत्तिरस्ति; 'शुक्लः पटः' इति शुक्ल-पटयोरेकाज्ञानकार्यत्वात्, एकत्राध्यासाच्च। नन्वेवं घट-पटयोरपि तादात्म्यप्रतीत्यापत्तिः; तादृशप्रतीतौ सत्यामेतस्य निमित्तत्वं कल्प्यते; *'आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्या-

विट्ठलेशोपाध्यायीटिप्पणी

शेषः। *साक्षि=अन्तःकरणोपहितं चैतन्यम्। ज्ञानधर्माणामिवाज्ञानधर्माणामपि तत्प्रकारकत्वादीनां तद्ग्राहकसाक्षिग्राह्यत्वम्। *स्वसामानाधिकरण्यादेश्चेति* ॥ पूर्वमुपस्थितेरिति भावः। *वृत्तिज्ञानेति* ॥ वृत्तिरूपज्ञानेत्यर्थः। *निवर्त्यत्वेनाज्ञातेति* ॥ निवर्त्यत्वप्रकारकाज्ञानविषयेत्यर्थः। *निर्वहणीयमिति। व्यावहारिकाभावघटितमिथ्यात्वस्येति शेषः। बाधकवृत्तिज्ञानावच्छिन्नसाक्षिणा नियमेन ग्रहणमित्यनुषङ्गः। *स्वरूपेणेति* ॥ प्रातीतिकरूप्यवति धर्मिणीत्यादिः। *अत एव=ईदृशसिद्धान्तस्यास्मदाचार्यानभिप्रेतत्वादेव। तथाच प्रातीतिकरूप्यस्यैव स्वरूपेण निषेधसम्भवेन भ्रमे तस्यैव भानसम्भवादिति भावः। *विरोधोऽपि नेति* ॥ उक्तरीत्या परिहारादिति भावः ॥

---

खण्डनानुगुणव्याख्यान्तरं क्रियमाणं तत्त्वबुभुत्सून् न व्यामोहयेत्, इति विरपक्षस्याप्यभिप्रायस्य परकृताद् व्यामोहाद् रक्षणार्थं शिष्येषु बोधनं न दुष्टमिति पश्यामः ॥

## तरङ्गिणी

सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोपः*' इति न्यायात्, लौकिकपरमार्थरजतसन्निकर्षादिरूप-सामग्रीविरहाच्च। अत एव त्वयाऽन्यथाख्यातिः प्रत्याख्याता। तस्माद् लौकिकपरमार्थरजतमेवेदंपदास्पदे स्वरूपेण निषिद्ध्यत इत्येव त्वत्प्राचामाचार्याणां वाचामर्थः। तत्र भ्रम-बाध-वैयधिकरण्यादिदोषस्तु दण्डापूपन्यायेन ममानुकूल एव। तस्माद् दुष्परिहरोऽपसिद्धान्तादिदोष इति ॥

## न्यायामृतसौगन्ध्यम्

(१) 'नही'त्याद्यशुद्धम्, न ह्यनिषिद्धत्वमुत्पत्त्याद्व्याप्यमिति वदामः, ब्रह्मणि व्यभिचारात्, किन्तु उत्पत्तिमत्त्वमनिषिद्धत्वव्याप्यम्; तुच्छे व्यतिरेकसहचारदर्शनात्। 'किञ्चे'त्ययुक्तम्, एतदतिरिक्तवस्तुस्वभाव(२)स्यानिरूपणात् ॥

## सौगन्ध्यविमर्शः

(१) इदं किं परमतरीत्या? उत स्वमतरीत्या? आद्येऽनुक्तोपालम्भनम्; परैरद्वैतिभिः स्वरूपेण निषेध्यानामपि श्रुत्यनुभवबाधनुसारेणोत्पत्तिस्वीकाराद् नोत्पत्तेरनिषिद्धस्वरूपत्वव्याप्यत्वमपि तन्मते संभवति, स्वदृष्ट्या तु संमता व्याप्तिः श्रुत्यनुभवाभ्यां बहुषु व्यभिचाराद् न संभवति। व्यक्तं चैतत्सिद्धिव्याख्या-चन्द्रिकादिषु।

(२) वस्तुस्वभाव एतदतिरिक्तोऽविद्यायनादिषट्कभिन्नत्वमिति चन्द्रिकादावेव निरूपितम्। यथाच नह्यनिषिद्ध-स्वरूपत्वमुत्पत्त्यादिमत्त्वे तन्त्रमिति सिद्धौ तन्त्रपदं समव्यापकपरम्, तथा चन्द्रिकायामेव वर्णितम्, इति तदपरामर्शेनैवाद्वैतमत-निरसनमिदम् ॥

## सिद्धिव्याख्या

रोपः'* इति न्यायात्, लौकिकपरमार्थसंनिकर्षादिरूपसामग्रीविरहाच्च। अत एव त्वयाऽन्यथाख्यातिः प्रत्याख्याता। तस्माद् लौकिकपरमार्थरजतमेवेदंपदास्पदे स्वरूपेण निषिध्यत इत्येव त्वत्प्राचामाचार्याणां वाचामर्थः। तत्र भ्रम-बाधवैयधिकरण्यादिदोषस्तु *दण्डापूपन्यायेन* ममानुकूल एवेति। तस्माद् दुष्परिहरोऽपसिद्धान्तादिदोषः—*इति* ॥

*अत्रोच्यते*—न प्रातिभासिकस्य रजतस्य लौकिकपरमार्थरजततादात्म्येन प्रतीतिर्न युक्ता; शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे लौकिकपरमार्थरजताज्ञानाकार्यत्वेऽपि, मूलाविद्याकार्यत्वपक्ष उभयो-रेकाज्ञानकार्यत्वात्; नापि प्रातिभासिकस्य स्वोपादानाज्ञाननिवर्तकज्ञानविषयेणैव तादात्म्यम्। न हि भ्रमतस्त्वा-ज्ञानेऽपि शुक्तित्वज्ञानमात्रात् प्रातिभासिकरजतोपादानब्रह्माज्ञाननिवृत्तिरस्ति, तथात्वे तेनैव मोक्षापातात्। *अत एव*—'शुक्लः पटः' इति तादात्म्यप्रतीतिरुपपन्ना; शुक्ल-पटयोरेकाज्ञानकार्यत्वादेकत्राध्यासाद्वेत्यपि—*साधु*। न चैवं घटपटयोरपि तादात्म्यापत्तिः; तादृशप्रतीतौ सत्यामेतस्य निमित्तत्वं कल्प्यते, *'आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोपः'* इति न्यायात् ॥

*यदुक्तम्*—लौकिकपरमार्थरजतसन्निकर्षादिसामग्रीविरहात् तत्तादात्म्येन प्रतीतिरनुपपन्ना—इति, *तन्न*; भूतलादावभावस्येव रजतादेरपीन्द्रियसंयुक्तेदमंशविशेषणताया एव सन्निकर्षत्वसंभवात्। नच—भूतलेऽभाववत् शुक्तौ लौकिकपरमार्थरजतस्याभावात् कथं तेन संयुक्तविशेषणताप्रत्यासत्तिः? इति—वाच्यम्; पञ्चीकरणप्रक्रियया लौकिक-परमार्थरजतस्यापि तत्र सत्त्वात्। नच तर्हि तस्यैव प्रतीत्यापत्तिः; इष्टत्वात्। तत्तादात्म्यापन्नप्रातिभासिक-रजतप्रतीतेरेव तत्प्रतीतित्वात्। नचैवं तयैव प्रक्रियया घटादावपि रजतसत्त्वेन तदुपलम्भप्रसङ्गः; रजतत्वविरुद्ध-घटत्वरूपधर्मप्रकारकनिश्चयस्य रजतोपलब्धिप्रतिबन्धकत्वात्। नच—शुक्तौ रजतसत्त्वे सर्वोपलम्भप्रसङ्ग इति—वाच्यम्; सर्वस्य दोषाभावात्। नच—सत्यज्ञानस्य दोषानपेक्षेति—वाच्यम्; तादात्म्यापन्नप्रातिभासिकरजत-ज्ञानत्वाच्च तदपेक्षयाऽऽवश्यकत्वात्। अत एवान्यथाख्यातिरपि प्रत्याख्याता; लौकिकपरमार्थरजततादात्म्यापन्न-प्रातिभासिकरजतस्य शुक्तावुत्पत्त्यभ्युपगमात्। तस्माद् लौकिकपरमार्थरजततादात्म्यापन्नप्रातिभासिकरजतमेवेदंपदास्पदे

### न्यायामृतसौगन्ध्यम्

'अस्ये'त्याद्ययुक्तम्, (१)विषमसत्ताकयोस्तादात्म्येन भान एकस्यापराज्ञानकार्यत्वनियमात्, स्वोपादानाज्ञाननिवर्तकज्ञानविषय एव तादात्म्यारोपाच्च। अतो लौकिकव्यावहारिकरजते प्रातिभासिकरजतस्य तादात्म्यारोपः; अन्यथा पुरोवर्तितत्त्वाज्ञाने व्यावहारिकरजतत्वज्ञाने च प्रातिभासिकरजतस्य निवृत्तिः स्यात्। अतस्तदधिष्ठानस्यैव पुरोवर्तिनस्तादात्म्यारोपाद् व्यावहारिकरजतादौ प्रातीतिकतादात्म्यारोपोक्तिर्मुधैव॥ किञ्च व्यावहारिकस्योपनायकाभावात् कथं प्रातिभासिके तादात्म्यारोपः? तत्प्रतीत्यङ्गीकारेऽन्यथाख्यात्यापत्तिरेव॥

*यत्तु* प्रातीतिके तदुत्पत्तिकालोत्तरं दूरत्वादिदोषेणाऽनिहितस्याप्यनधिष्ठानस्यापि व्यावहारिकस्य तादात्म्यारोपो दृष्टः; व्यावहारिकरजतस्येन्द्रियासंनिकृष्टत्वेऽपि तदंशे स्मृतिरूपभ्रमसंभव इति, *तन्न*; एकत्र तादात्म्येनारोपासंभवात्, किन्त्वन्यदेव प्रातिभासिकं तत्र तादात्म्येनारोपितम्॥ 'अयमभिप्रायः' इत्याद्यशुद्धम्। प्रत्यक्षानुभवे शब्दस्वभाववर्णनस्यानुपयोगात्॥

### सौगन्ध्यविमर्शः

(१) व्यक्तं चैतत् सर्वं सिद्धिव्याख्यायामनूद्य खण्डितं प्रकारान्तरेण। वयं तु प्रतीमः— यथेदमि रजताध्यास एव रजत इदंसंसर्गाध्यासेऽपीदमज्ञानमेव कारणम्, न तु रजताज्ञानम्; प्रातिभासिकरजताज्ञानस्य तत्र बाधितत्वात्। एवं रजतार्थिनामिदङ्काराभिमुखप्रवृत्तिनिर्वाहार्थं रजतबाध्यत्वनिर्वाहार्थं च लौकिकरजततादात्म्यापन्नमेव रजतमिदमज्ञानेनैव भासत इत्येव स्वीक्रियते, रजतत्वविशिष्टस्य रजततादात्म्यापन्नस्यैवेदमज्ञानकार्यत्वात्, विषमसत्ताकयोस्तादात्म्येन भान एकस्यापराज्ञानकार्यत्वमिति नियमस्तु—ययोस्तादात्म्यम्, तयोर्विशेष्य-विशेषणभावस्थल एव, नचात्र व्यावहारिक-प्रातिभासिकरजतयोर्विशेष्यविशेषणभावः, 'रजतं रजतमि'ति प्रतीत्यभावात्। इदन्त्व-रजतत्वयो रजतस्यप्रातिभासिकत्वपक्षे विषमसत्ताकयोरेकस्यापराज्ञानकार्यत्वाभावात्, इदन्त्वस्य स्वोपादानाज्ञाननिवर्तकज्ञानविषयत्वाभावाच्च। न हि बाधज्ञानेऽपीदन्तया शुक्तिर्भासते, किन्तु शुक्तित्वेन, इति न कोऽपि दोषः। अधिष्ठानतत्त्वज्ञानमेव खलु प्रातीतिकबाधकम्, न तु व्यावहारिकं रजतं प्रातीतिकाधिष्ठानम्। "स्मृतिरूपः पूर्वदृष्टावभास" इति भाष्ये पूर्वदृष्टपदं पूर्वदृष्टतादात्म्यापन्नपरत्वादत्रैव पक्षेऽनुकूलम्। इदंज्ञानमात्रस्य सादृश्यादिसध्रीचीनस्य व्यावहारिकरजततादात्म्यापन्नरजतकारणत्वाद् व्यावहारिकरजतसन्निकर्षाद्यपेक्षा समस्ति। अयं भावः—प्रातीतिकरजतत्वस्य रजते तादात्म्यम्। प्रातीतिकरजतत्वं च न प्रातीतिकरजताज्ञानकार्यमिति वक्तुं शक्यते; बाधात्, किन्त्विदमज्ञानकार्यमेव भ्रमस्थले भासमानं सर्वं प्रवृत्त्युपयोगपर्यन्तमिति स्वीकर्तव्यमिति। तथाच नात्रान्यथाख्यात्यादिशङ्काऽपि। अस्तु वेदमि प्रातिभासिकरजतमात्राध्यासः, तस्य व्यावहारिकतादात्म्यन्तु नानिर्वचनीयख्यात्या, किन्तु सदृशस्य व्यावहारिकस्य रजतस्य संसर्गमात्रं कल्प्यते; तदंशेऽन्यथाख्यातिस्वीकारेऽपि बाधकाभावात्, सर्वथा तु पूर्वाचार्याणां वाचोयुक्तिरुपपन्नैव। अधिकं सिद्धिव्याख्यातोऽधिगन्तव्यम्। वस्तुतस्तु—प्रातिभासिकरजत एव व्यावहारिकरजततादात्म्यमपि भासत इत्येवात्र मतम्, न तु प्रातिभासिकतादात्म्ये व्यावहारिक आरोपः, येनान्यत्रारोपितस्यान्यत्र तादात्म्यारोपासंभवदूषणमवसरेत्। तत्र च रजतोत्पत्तिसमकालमेवेदन्तातादात्म्यमिव व्यावहारिकरजततादात्म्यमपि कल्प्यते; भ्रमकाले भासमानानामधिष्ठानातिरिक्तानां सर्वेषामधिष्ठानाज्ञानकार्यत्वस्य स्वीकरणीयत्वात्। तथाच 'नेदं रजतमि'ति बाधज्ञानन्तु इदंपदेन शुक्तेर्ग्रहणे तत्रेदन्तातादात्म्यनिषेधमिव प्रातिभासिकरजतग्रहणे व्यावहारिकरजततादात्म्यनिषेधमपि गोचरयति। प्रत्यक्षानुमानादावपि विशेष्य-विशेषणभावादिना विषयविवेकस्तु अभिलापप्रतीतिमात्रायैव निर्वहणीयो यदि स्वानुभवोऽपि परीक्ष्यते, इति प्रत्यक्षानुभवेऽपि शब्दस्वभावानुवर्णनमप्युपपद्यते॥

### सिद्धिव्याख्या

स्वरूपेण निषिध्यत इत्येवास्मत्प्राचामाचार्याणां वचसामर्थः॥ तत्र भ्रम-बाधयोर्वैयधिकरण्यादिदोषस्तु शुक्तिरूपस्याधिष्ठानस्याबाधितविषयत्वनियतत्वात् तत्र प्रतिकूलः। अत एवातिव्याप्तिपरिहारोऽपसिद्धान्तादिदोष इत्यलम्॥

### न्यायामृतम्

अत्यन्तासत्त्वापाताच्च, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमपि ह्यन्यत्रासत्त्वेन संमतस्य

### अद्वैतसिद्धिः

*ननु*---एवमत्यन्तासत्त्वापातः ; प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं ह्यन्यत्रासत्त्वेन

### तरङ्गिणी

रूप्यस्य वियदादेश्च स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वे दूषणान्तरमाह---*अत्यन्तासत्त्वापाताच्चेति* ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत्यन्तासत्त्वापात इति* ॥ अवच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावस्य प्रतियोगित्वमत्यन्तासत्त्वम्, तदादाय प्रपञ्चेऽर्थान्तरापत्तिरुक्तानुमाने स्यादित्यर्थः । *ननु*---प्रतिपन्नोपाधिमात्रनिष्ठात्यन्ताभावप्रतियोगित्वमुक्तानुमानात् सिद्धम्, नतूक्तात्यन्तासत्त्वम् ; अतः कथमर्थान्तरम् ? तत्राह---*प्रतीत्यादि* ॥ *त्रैकालिकनिषेधेति* ॥ अवच्छिन्नवृत्तिकान्यात्यन्ताभावेत्यर्थः । *अन्यत्रा-

### न्यायामृतसौगन्ध्यम्

किञ्च स्वरूपेणैव निषेधेऽत्यन्तासत्त्वापत्तिः ; प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं ह्यन्यत्रासत्त्वेन संप्रतिपन्नस्य घटादेस्सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वपर्यन्तमिति त्वन्मतम् ; अन्यथा तेषामन्यत्र सत्त्वापातात्, 'न हि तेषामन्यत्र सत्ता सम्भवती'ति त्वदुक्तेश्च । तथाच कथमसद्वैलक्षण्यम् ?

### सिद्धिव्याख्या

*नन्वेवमिति* ॥ रूप्यस्य वियदादेश्च स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारपक्ष इत्यर्थः । अत्यन्तासत्त्वोपपादनोपोद्घातत्वेनाह---*प्रतिपन्नेति* ॥ *अन्यथेति* ॥ मिथ्यात्वानुमानकाले घटादेस्तत्तदन्यत्रासत्त्वा-

### विट्ठलेशीयटिप्पणी

*मूले*---"अत्यन्तासत्त्वापातः" इत्यस्यात्यन्तासत्त्वापत्तिरित्यर्थपरत्वं प्रतीयते, तच्च न घटते ; प्रतिपन्नोपाधिः स्वप्रकारकधीविशेष्यो यो धर्मी, तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वे सति तद्भिन्ननिष्ठत्रैकालिकनिषेधप्रतियोगित्वस्य दृष्टान्तासम्भवेन सर्वदेशीय-त्रैकालिकनिषेधप्रतियोगित्वरूपात्यन्तासत्त्वं प्रति व्याप्यत्वेन ग्रहासम्भवेनानापादकत्वात्, 'घटः कम्बुग्रीवादिमान्' 'सद् ब्रह्म' इतिवत्, 'असत् शशशृङ्ग'मि'ति प्रत्ययस्य विकल्परूपस्य सम्भवेनासतः स्वात्मकप्रतिपन्नोपाधिघटितमिथ्यात्वसम्भवेन दृष्टान्तत्वसम्भवेऽपि सदसतोरुपरागाभावात्, तत्रोक्तापाद्यापादकयोर्ग्रहासम्भवात् । न च---असतो विकल्परूपमापाद्यापादकयोस्त्वन्यादृशं ज्ञानमिति ज्ञानद्वयमुक्तधर्म-धर्मिणोरसंसर्गाग्रहसहितं विशिष्टबुद्धिरूपसद्व्यवहारकार्यकारीति गुरुमतमाश्रित्य---शङ्कनीयम्, असतीच्छा-प्रवृत्त्योरदर्शनेऽपि विकल्परूपतत्प्रत्ययस्याहार्यस्यैव प्रायः क्वचिदपि कारणत्वानुपगमात्, शुक्तिरूप्य-तुच्छयोः प्रसिद्धयोरापाद्यापादकयोर्ग्रहदृष्टान्ते व्यतिरेकव्याप्तिग्रहसम्भवेऽपि व्यतिरेकव्याप्तेरनुमितावुपयोगासम्भवेनानङ्गत्वात्, प्रपञ्चरूपपक्षे निरुक्तापाद्यव्यतिरेकनिश्चयरूपकारणाभावाच्चेत्यन्यथा व्याचष्टे---*अत्यन्तासत्त्वापात इतीति* ॥ संयोगाद्यव्याप्यवृत्तावतिव्याप्तिवारणाय---*अवच्छिन्नवृत्तिकान्यत्वम्* । घटत्वादौ व्यभिचारवारणाय---*सर्वेति* ॥ तुच्छे तुच्छभेदस्यासत्त्वेनासार्वत्रिकत्वेन तमादाय लक्षणसमन्वयायोगात् तदत्यन्ताभावमादायैव लक्षणं सङ्गमनीयमिति सूचयितुम्---*अत्यन्तपदम्* ॥ प्रतियोगित्वं व्यासज्यवृत्तिधर्मानवच्छिन्नं ग्राह्यम्, तेनोभयाभावमादाय नातिप्रसङ्गः । *तदादायेति* ॥ तद्रूपाजिज्ञासितार्थविधेयकप्रपञ्चपक्षकसिद्धिरूपैव प्रकृतानुमितिः स्यादित्यर्थः । *प्रतीत्यादीति* ॥ पर्यन्तमित्यन्तेनेति शेषः । अन्यत्रासत्त्वस्याव्याप्यवृत्तित्वाभावरूपत्वे तन्निश्चयस्य मिथ्यात्वनिश्चय इव सहकारित्वमत्यन्तासत्त्वनिश्चयं प्रति न सम्भवति ; यावद्विशेषनिष्ठाभावप्रतियोगित्वनिश्चयरूपस्यैव सामान्यनिष्ठाभावप्रतियोगित्वनिश्चायकत्वात्, अतो व्याचष्टे---*अन्यत्रासत्त्वेनेति* ॥

न्यायामृतम्

पटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वपर्यन्तमिति त्वन्मतम्; अन्यथाऽन्यत्र तत्सत्त्वापातात्,

अद्वैतसिद्धिः

संप्रतिपन्नस्य घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यन्तम्; अन्यथा तेषामन्यत्र सत्त्वापातात्,

तरङ्गिणी

*अन्यथेति* ॥ मिथ्यात्वानुमानकाले पटादेस्तन्त्वन्यत्रासत्त्वासंमतौ पटादेस्तन्तुभिन्नदेशे सत्त्वापत्त्याऽर्थान्तरता

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्त्वेन=प्रतिपन्नोपाधिभिन्ननिष्ठावच्छिन्नवृत्तिकान्यात्यन्ताभावप्रतियोगित्वेन । *प्रतिपन्नस्य = प्रमितस्य । *पर्यन्तम्=निश्चयप्रयोजकनिश्चायकम् । तथाचोक्तानुमानेनान्यत्रासत्त्वनिश्चयसहकृतेनोक्तात्यन्तासत्त्वनिश्चय-सम्भव इति भावः । *ननु*—तथापि 'सर्वत्रे'त्ययुक्तम्, यत्किञ्चित्प्रतिपन्नोपाधेरेवोक्तमिथ्यात्वे

सिद्धिव्याख्या

सम्मतौ पटादेस्तन्तुभिन्नदेशे सत्त्वापत्त्याऽर्थान्तरता स्यादित्यर्थः । पटादेरन्यत्र सत्ता त्वयाऽपि नाङ्गीकृतेत्याह—

विट्ठलेशीयटिप्पणी

संप्रतिपत्तिर्नाह्यार्थपराऽभ्युपगमरूपा; आपत्तिजनिकायास्तस्या अर्थान्तरानुपयोगित्वात्, अतो व्याचष्टे—*संप्रतिपन्न-स्येति* ॥ *मूले*—पर्यन्तमिति पाठापेक्षया पर्यवसितमिति पाठो युक्तः; पर्यवस्यतेर्निश्चयसामान्यार्थकस्य निश्चय-विशेषे लक्षणासम्भवात्, पर्यन्तपदस्य तु तादृशार्थकत्वमदृष्टचरमिति बोध्यम् । *निश्चायकम्=निश्चयविषयः* ॥ *ननु*—एतावता मिथ्यात्वानुमितेरत्यन्तासत्त्वनिश्चयरूपत्वं नायातम्, तथाच कथमर्थान्तरम्? अनभिमतार्थसिद्धि-रूपप्रकृतानुमितेरेवार्थान्तरपदार्थत्वात्, अत आह—*तथाचेति* ॥ अन्यत्रासत्त्वेन निश्चयधर्मिकमिथ्यात्वनिश्चयस्या-त्यन्तासत्त्वनिश्चयप्रयोजकत्वे चेत्यर्थः । *उक्तानुमानेनेति* ॥ निरुक्तमिथ्यात्वानुमितिरूपनिश्चयेनेत्यर्थः, ननु तादृशानु-मितिजनकव्याप्तिज्ञानादिनेति । अन्यत्रासत्त्वनिश्चयसहकृतस्य तस्य विशेषान्तरनिष्ठाभावप्रतियोगित्वनिश्चयसहकृतैक-विशेषनिष्ठाभावप्रतियोगित्वनिश्चयात्मकत्वेन सामान्यनिष्ठाभावप्रतियोगित्वरूपात्यन्तासत्त्वनिश्चयं प्रत्यहेतुत्वात् । नच—एकविशेषनिष्ठाभावप्रतियोगित्वनिश्चयसहकृतस्यापरविशेषनिष्ठाभावप्रतियोगित्वव्याप्यवत्तापरामर्शस्य सामान्य-निष्ठाभावप्रतियोगित्वानुमितिहेतुता स्वीक्रियत इति—वाच्यम्; तथा सति घटधर्मिकमिथ्यात्वनिश्चयस्य तद्धर्मि-कात्यन्तासत्त्वनिश्चयप्रयोजकत्वोक्तेरसामञ्जस्येनासङ्गतेः । उक्तानुमितेस्तु तादृशनिश्चयात्मकत्वेन भवति तादृश-निश्चयं प्रति हेतुता । यद्वा—अन्यत्रासत्त्वनिश्चयसहकृतमिथ्यात्वानुमितिरूपनिश्चयात् प्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रति-योगित्वविशिष्टतद्भिन्ननिष्ठात्यन्ताभावप्रतियोगित्वनिश्चयः, तादृशविशिष्टप्रतियोगित्वस्य निरुक्तात्यन्तासत्त्वं प्रति ब्रह्मणि व्यतिरेकव्याप्तिग्रहसहकृतात् तादृशनिश्चयादुक्तात्यन्तासत्त्वनिश्चयः । अत एव निश्चयप्रयोजकं निश्चायकमित्यत्र प्रयोजकपदं सङ्गच्छते, उक्तात्यन्तासत्त्वनिश्चयस्यार्थापत्तिरूपस्यैव वाच्यतया क्लृप्तकार्य-कारणभावेन निर्वाहश्च भवति । एतावताऽ-र्थान्तरं कथमिति चेत्, अनभिमतार्थसिद्धिरूपप्रकृतानुमितेरिवानभिमतार्थसिद्धिप्रयोजकप्रकृतानुमितेरप्यर्थान्तर-पदार्थत्वादिति भावः । 'अन्यथे'त्यस्य प्रतिपन्नोपाधिभिन्ननिष्ठत्रैकालिकनिषेधप्रतियोगित्वेनासंप्रतिपत्तावित्यर्थकत्वे 'न हि तेषामि'ति पङ्क्तेरनुपयोगप्रसङ्गः; तस्या'स्त्वदुक्तेरि'ति पदघटितत्वेन 'अन्यत्र सत्त्वापत्तेरि'ष्टापत्तिशङ्कावारकत-योपयोगे तु तावतैवान्यत्रासत्त्वेनासङ्गतिप्रतीतेर्निराकरणेन—'अन्यथे'ति पङ्क्तिरनुपयोगिनी स्यात् । मिथ्यात्वशरीरे प्रतिपन्नोपाधेः सर्वत्वेन निवेशस्यात्यन्तासत्त्वापत्तिप्रयोजकस्य प्रयोजनानुक्त्या न्यूनतापत्तिश्चेत्यतो'ऽन्यथे'ति पङ्क्तिं मिथ्यात्वे प्रतिपन्नोपाधौ सर्वत्वानिवेशशङ्कयाऽवतारयति—*ननु तथापीति* ॥ पूर्वोक्तवैपरीत्यार्थकान्यथापदस्य मिथ्यात्वे सर्वप्रतिपन्नोपाधिनिवेशाभावार्थकत्वाय तादृशनिवेशस्य कण्ठतः पूर्वपङ्क्तावनुक्तत्वेऽपि तत्तात्पर्यविषयतां स्फुटयितुं तादृशनिवेशमुपष्टभ्य सर्वत्वघटितात्यन्तासत्त्वापत्तिं पूर्वपक्ष्युक्तामाक्षिपति—*सर्वत्रेत्ययुक्तमिति* ॥

न्यायामृतम्

'नहि तेषामन्यत्र सत्ता सम्भवती'ति त्वदुक्तेश्च। तथाच कथं नात्यन्तासत्त्वापत्तिः? न हि

अद्वैतसिद्धिः

'नहि तेषामन्यत्र सत्ता सम्भवती'ति त्वदुक्तेश्च; तथाच कथमसद्वैलक्षण्यम्? नहि शशशृङ्गादेरितोऽन्यद-

तरङ्गिणी

स्यादित्यर्थः। पटादेस्तन्त्वन्यत्र सत्ता त्वयाऽपि नाङ्गीक्रियत इत्याह—*नहीति* ॥ रूप्यादेरसद्वैलक्षण्य-निरासायासत्त्वं विविनक्ति—*नच तेषामिति* ॥ निरुपाख्यत्वं शब्दशक्त्यविषयत्वम्? प्रमित्य-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निवेशात्—तत्राह—*अन्यथेति* ॥ उक्तमिथ्यात्वे सर्वस्य प्रतिपन्नोपाधेरनिवेश इत्यर्थः। *अन्य-त्रेति* ॥ स्वानधिकरणे प्रतिपन्नोपाध्यन्तर इत्यर्थः। *सत्त्वापातात्=सत्त्वमादायार्थान्तरतापातात्, किञ्चित्प्रतिपन्नोपाधिमात्रनिष्ठव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वमादाय सिद्धसाधनतापाताच्च। *ननु*—प्रतिपन्नोपाधिभिन्नदेशे सत्त्वस्य सन्दिग्धत्वेन न प्रपञ्चस्यात्यन्तासत्त्वापत्तिः, तत्राह—*न हीत्यादि* ॥

सिद्धिव्याख्या

*नहीति* ॥ उपोद्घातेन यच्छुक्तिरूप्ये वियति च प्राप्तम्, तद् दर्शयति—*तथाचेति* ॥ *कथमिति* ॥ न कथञ्चिदित्यर्थः। एतावता शशशृङ्गादीनामिवासत्त्वं नेत्याशङ्क्याह—*नहीति* ॥ किंस्विद्रूपमेव, सतश्च

विट्ठलेशीयटिप्पणी

मिथ्यात्वे सर्वप्रतिपन्नोपाधिनिवेशे सति प्रतिपन्नोपाधिभिन्ननिष्ठत्रैकालिकनिषेधप्रतियोगित्वनिश्चयसहितस्य सर्व-प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वनिश्चयस्य यावद्विशेषनिश्चयविधया सर्वत्र त्रैकालिकनिषेध-प्रतियोगित्वरूपसामान्यात्मकात्यन्तासत्त्वनिश्चयं प्रति प्रयोजकत्वाद् भवति तादृशनिश्चयापत्त्याऽर्थान्तरतापत्तिः, नतु मिथ्यात्वे यत्किंचित्प्रतिपन्नोपाधिनिवेशे अन्यत्र सत्त्वनिश्चयसहितस्यापि यत्किंचित्प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेध-प्रतियोगित्वनिश्चयस्य यावद्विशेषनिश्चयात्मकत्वेनोक्तात्यन्तासत्त्वनिश्चयाप्रयोजकत्वादिति भावः। एवं च सर्वस्व-घटितात्यन्तासत्त्वापत्तिपरपूर्वग्रन्थे मिथ्यात्वे सर्वप्रतिपन्नोपाधिनिवेशाभिप्रायस्य स्फुटत्वात् तदभावार्थकतयाऽन्यथापदं व्याचष्टे—*उक्तमिथ्यात्व इति* ॥ *मूले*—'तेषामि'त्यस्य मिथ्यात्वानुमाने पक्षीकृतानां व्यावहारिकघट-रजतादीनामित्यर्थः। अत्रत्यान्यत्रपदस्य प्रथमान्यत्रपदवत् प्रतिपन्नोपाधिसामान्यभिन्न इत्यर्थकत्वं न संभवति; तत्रासत्त्वेन संप्रतिपत्तिसद्भावे तत्र सत्त्वमादाय सिद्धसाधनापत्तेरसंभवात्, अतोऽन्यथा तद् व्याचष्टे—*अन्यत्रेतीति* ॥ *प्रतिपन्नोपाध्यन्तर इति*। मिथ्यात्वघटकशुक्त्यादिरूपयत्किंचित्प्रतिपन्नोपाधिभिन्ने व्यावहारिक-रजतावयवादिरूपे प्रतिपन्नोपाधावित्यर्थः। 'सत्त्वापातादि'त्यस्य सत्त्वापत्तेरित्यर्थकत्वं न संभवति; समान-धर्मिकाया अपि सत्त्वापत्तेर्मिथ्यात्वानुमितावविरोधित्वात्, विभिन्नधर्मिकायास्तु सुतराम्; व्याप्यापादक-व्याप्ताज्ञानविरोधिन्या व्यापकापाद्याहार्यज्ञानविशेषरूपाया आपत्तेरापाद्यविरोधिधर्मज्ञानाविरोधित्वात्, अतो व्याचष्टे—*सत्त्वापातादिति*। *सत्त्वम्=सत्यत्वम्*। *आदाय=स्वीकृत्य*। तदविरोधेनेति शेषः। *सिद्धेति* ॥ सिद्धस्य व्यावहारिकरजतरूपे धर्मिणि प्रतिपन्नोपाध्यन्तरे सत्त्वाविरोधिनः शुक्तिरूपयत्किंचित्प्रतिपन्नोपाधिनिष्ठाभावप्रतियोगि-त्वस्य साधनसंभवे व्यावहारिकरजते तदवयवरूपधर्मिणि मिथ्यात्वसिद्धेरुद्देश्याया असिद्धिप्रसङ्गादित्यर्थः। यथाश्रुते 'स्वानधिकरणे' इत्यपूरणेऽपि सिद्धसाधनस्य दुर्वारतयाऽनुपदं वक्ष्यमाणपूरणप्रयोजनस्य दुर्वचतया तद्वैयर्थ्यापत्तेः। उक्तरीत्या व्याख्याने तु मिथ्यात्वानुमापकस्य सिद्धान्तिनोऽपि व्यावहारिकरजतस्य तदवयवरूपप्रतिपन्नोपाधौ सत्यत्व-मिष्टमेव, नतु मिथ्यात्वम्, इति सत्त्वसिद्धिर्नोद्देश्येत्याशङ्कावारणाय 'स्वानधिकरणे' इति प्रतिपन्नोपाध्यन्तरविशेषणं पूरित-मावश्यकम्। *स्वम्=व्यावहारिकरजतम्*। सिद्धान्ते वस्तुतस्तदनधिकरण इत्यर्थः। तदारोपाधिष्ठान इति यावत्। *नन्वेवम्*—सद्युक्तिरस्ति चेत्, उक्तापत्तिभिया सा त्यज्यते, इत्यत आह—*स्वदाचार्योक्तेरिति*। "नेह नाने"-

### न्यायामृतम्

शशशृङ्गादीनामपीतोऽन्यदसत्त्वमस्ति। नच निरुपाख्यत्वमेव तेषामसत्त्वम्; निरुपाख्यपदेनैव

### अद्वैतसिद्धिः

सत्त्वम्। *नच* निरुपाख्यत्वमेव तदसत्त्वम्; निरुपाख्यपदेनैव ख्यायमानत्वात्, नाप्यप्रतीयमानत्वम-

### तरङ्गिणी

विषयत्वं वा? आद्य आह—*निरुपाख्येति*॥ तथाचासत्त्वेन संप्रतिपन्नस्याप्यसत्त्वं न स्यादित्यर्थः।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*त्वदुक्तेः=त्वदाचार्योक्तेः। तथाच निश्चितमेव तदिति भावः। *इतः=सर्वदेशनिष्ठव्याप्यवृत्त्यत्यन्ताभाव-

### न्यायामृतसौगन्ध्यम्

न हि शशशृङ्गादेरितोऽन्यदसत्त्वम्। नच—निरुपाख्यत्वमेव तदसत्त्वम्। निरुपाख्यपदेनैव ख्याय-

### सिद्धिव्याख्या

शशशृङ्गादीनामिवासत्त्वमिति भावः। ख्यादेरसद्वैलक्षण्यनिरासाय शशशृङ्गादीनामसत्त्वं शङ्कते—*नचेति*॥ *निरुपाख्यत्वम्=पदशक्यविषयत्वम्? किं वा प्रतीतिमात्राविषयत्वम्? इति विकल्प्य, आद्यं दूषयति—*निरुपाख्यपदेनैवेति*॥ तथाचासत्त्वेन संप्रतिपन्नस्याप्यसत्त्वं न स्यादित्यर्थः। यद्यपि निरुपाख्येति

### विट्ठलेशीयटिप्पणी

त्यादिश्रुत्या जगतो मिथ्यात्वं वा, "यतो वे"त्यादिश्रुत्या सत्यत्वं वेति शङ्कायां "यतो वे"त्यादिश्रुतेर्न सृष्टौ तात्पर्यम्, किन्तु "नेहे"त्यादिश्रुतिभिर्ब्रह्मणि प्रपञ्चाभावे बोधितेऽपि प्रपञ्चस्य ब्रह्मभिन्ने सत्त्वशङ्का स्यात्, तद्वारणाय ब्रह्मणः प्रपञ्चोपादानत्वे तात्पर्यम्; तथाचोपादानादन्यत्र कार्यस्यासत्त्वनियमेन ब्रह्मरूपोपादानादन्यत्रासत्त्वेन निश्चितस्य प्रपञ्चस्योपादाने ब्रह्मण्यभावे बोधिते मिथ्यात्वं पर्यवस्यतीति सर्वैः प्राचीनैरुक्तं कथं त्यज्यत इति भावः। *ननु*—प्रपञ्चस्यास्तां सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वनिश्चयः, न हि तेन शशविषाणादिवदसद्रूपत्वनिश्चयापत्तिः संभवति; दृश्यत्वादिना तद्भिन्नत्वनिश्चयादित्याशङ्क्याह *मूले*—*तथाचेति*॥ प्रपञ्चस्य तादृशप्रतियोगितावत्त्वे चेत्यर्थः। *कथमसद्वैलक्षण्यमिति*॥ असद्वैलक्षण्यं नाम—न तद्वृत्तिधर्मशून्यत्वम्; तत्साधारणान्यतरत्वादेः प्रपञ्चेऽभ्युपगमेन तद्धर्मशून्यत्वे कथन्तानुदयात्, नापि तदवृत्तिधर्मवत्त्वम्; तादृशदृश्यत्वादेस्तत्राक्षततत्त्वेन तत्रापि कथन्ताया अभावात्। एतेन—प्रातिस्विकरूपेण तद्भिन्नत्वम्—परास्तम्; 'तस्यासर्वज्ञदुर्विज्ञेयतया कथन्ताया अनिवृत्तेश्च, किन्तु असन्मात्रानुगतासत्त्वरूपधर्माभाववत्त्वम्, तदवच्छिन्नभिन्नत्वं वा। तत्र च कथन्ता सम्भवति; सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वस्यैवासत्त्वरूपतया तद्वत्तायाश्च प्रपञ्चे निश्चयेन तदभावस्य तदवच्छिन्नभेदस्य चासम्भवात्, वक्ष्यमाणरीत्या तादृशकथन्तानिवृत्तेरपि सम्भवादिति भावः। *ननु*—सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं नासत्त्वम्, किन्तु निरुपाख्यत्वादिकं ततोऽन्यदेवेत्याशङ्कां परिहरति—*नहीति*॥ 'इतः' इत्यत्र इदंशब्दस्य न सन्निकृष्टप्रधानभूतासद्वैलक्षण्यार्थकत्वम्, तस्यासत्त्वपदार्थत्वाभावेनायोग्यत्वात्, इत्यतो योग्यत्वबलाद् व्यवहितप्रधानपरामर्शितां दर्शयति टीकायाम्—*इत इति*॥ असत्त्वपदस्य तादृशप्रतियोगित्वार्थकत्वे शशशृङ्गादिनिष्ठतादृशप्रतियोगित्वादन्यत् तादृशप्रतियोगित्वं नेत्यर्थः स्यात्, स च 'घटो घट' इतिवत् 'घटादन्यद् न घट' इतिवच्चायुक्तः, उद्देश्यतावच्छेदक-विधेययोरैक्यात्, निरुपाख्यत्वाद्यर्थकत्वे तादृशप्रतियोगित्वादन्यद् निरुपाख्यत्वं नेत्यर्थः स्यात्, सोऽपि बाधाद् न युक्तः; तादृशप्रतियोगित्वान्यत्वसामानाधिकरण्येन विकल्पविषयत्वादौ निरुपाख्यत्वभेदस्याबाधेऽपि तद्बोधस्यानुपयोगः, तादृशप्रतियोगितामात्रस्यासत्त्वपदार्थताया असद्वैलक्षण्यासम्भवहेतुभूताया अप्रतिपादनात्, अतो व्याचष्टे—*असत्त्वमिति*॥ *असत्त्वशब्दार्थ इति*॥ तथाच तादृशशशशृङ्गादिनिष्ठतादृशप्रतियोगित्वादन्यदसत्त्वपदार्थो नेत्यर्थः। स च घटो घटपदार्थो घटान्यो न घटपदार्थ इतिवद् युक्त एव; उद्देश्यतावच्छेदक-विधेययोर्भेदात्, अबाधात्, तादृशप्रतियोगित्वमेवासत्त्वपदार्थ इति पर्यवसानेनोपयोगाच्चेति भावः। तत्र बाधमाशङ्क्य निराचष्टे—*मूले*—*नचेति*॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रतियोगित्वात् । *असत्त्वम्* असत्त्वशब्दार्थः । *निरुपाख्यत्वं शब्दवृत्त्यविषयत्वम् । *ख्यायमानत्वात्=वृत्तिसम्बन्धेन सम्बध्यमानत्वात् । निरुपाख्यादिपदानामलीकेऽनुभावकत्वरूपशक्तिविरहेऽप्यननुभवरूपमलीकविषयकं विकल्पं प्रति योगेन लक्षणया संकेतविशेषेण वा अलीकोपस्थितिद्वारा जनकत्वमावश्यकम्; तादृशविकल्पस्य साक्षिसिद्धत्वात्, 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति पातञ्जलसूत्रेण तादृशविकल्पस्य सद्रूपवस्त्वविषयकस्य शब्दज्ञानजन्यत्वस्य उक्तत्वात् । अत एव 'वृत्तयः पञ्चतय्यः प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः' इति वृत्तिज्ञानानां पञ्चधा विभागेन विपर्ययरूपात् सद्रूपाधिष्ठानविषयकाद् भ्रमात् पार्थक्येन विकल्पः पातञ्जलसूत्र एवोक्तः । *निद्रा=सौषुप्तवृत्तिः । नच—निर्धर्मकत्वादलीके निरुपाख्यादिपदानां योगादिवृत्त्यसम्भव इति—वाच्यम्; तस्येतरधर्मशून्यत्वेऽभावस्य विकल्पविषयत्वादेश्च धर्मस्य तत्र स्वीकारेण योगेन वाचकशब्दरूपोपाख्याविरहोपस्थित्योक्तविरहाश्रया-

विट्ठलेशीयटिप्पणी

*असत्त्वम्=असत्त्वपदार्थः । एवमग्रेऽपि । संकेतितः शब्दः=आख्या, लक्षणादिसाधारणवृत्तिमान् सः=उपाख्या, सा निर्गता यस्मात्, यन्निष्ठाभावप्रतियोगिनीति विग्रहः; उपाख्याविरहवान् समासार्थः । तत्र चाभावप्रतियोगितावच्छेदकप्रकारकत्वं वृत्तेरेव वाच्यम्, तच्च न सम्भवति; वृत्त्यनियामकत्वात्, अत उपाख्यापदं शब्दवृत्तिविषयतार्थकतया व्याचष्टे—*शब्दवृत्त्यविषयत्वमिति* ॥ शाब्दानुभवाविषयत्वं तु नार्थः, असतस्तद्विषयत्वानुपगमेन 'निरुपाख्यपदेने'तिमूलासङ्गतेः । *मूले—*तदसत्त्वम्=तस्य शशशृङ्गादेरसत्त्वपदार्थः । ख्यायमानत्वपदस्य शाब्दानुभवाविषयत्वार्थकत्वं न सम्भवति, असतामनुभवविषयत्वोक्तौ शब्दे वृत्तिविषयताया आवश्यकत्वलाभेऽप्यसत्त्वोच्छेदभयेनासदादिपदानामनुभावकत्वशक्तेरनुपगमात्, अतो व्याचष्टे—*ख्यायमानत्वादिति* ॥ *वृत्तीति* ॥ निरुपाख्यपदनिरूपितवृत्तिरूपसम्बन्धविषयत्वादिति समुदायार्थः । *ननु*—निरुपाख्यादिपदानामसतामसत्त्वभङ्गभियाऽनुभवाविषयत्वेनानुभावकत्वशक्तेरनुपगमे स्मारकशक्त्यादिवृत्तिरपि किमर्थं स्वीकर्तव्या ? स्मृतिबीज-फलयोरभावादित्यत आह—*निरुपाख्यादीति* ॥ *अनुभावकशक्तिः=शाब्दानुभवकारणता । *स्मारकशक्तिः=स्मृतिप्रयोजकः सम्बन्धविशेषः । *योगेनेति* ॥ अनुभवसिद्ध एव पदस्य रूढिरिति भावः । *आवश्यकमिति* ॥ विकल्पात्मकज्ञानरूपस्य स्मृतिजनकस्य संस्कारं प्रति सौषुप्तवृत्ति-स्मृतिवृत्तिसाधारणज्ञानत्वेनैव हेतुताया वक्तव्यतया विकल्पवृत्तेरपि संस्कारहेतुतया तस्याश्चात्रजन्मे पूर्वभवे वा सम्भवेन तदधीनसंस्कारस्य स्मृतिबीजभूतस्य च सम्भवादिति भावः । विकल्पे प्रमाणमाह—*तादृशेति*॥ *ननु*—साक्षि न प्रमाणम्, किञ्च निरुपाख्यादिपदानां विकल्पजनकत्वं कुत इति ? अत आह—*शब्दज्ञानेति* ॥ *शब्दज्ञानानुपाती=शब्दज्ञानजन्यः, *वस्तुशून्यः=सदविषयकः, वृत्तिविशेषो *विकल्पः* इति सूत्रार्थमाह—*तादृशेति* ॥ अननुभवरूपालीकविषयकेत्यर्थः । *ननु*—भ्रमस्यापि सदविषयकत्वाद् विकल्पो भ्रमरूपं ज्ञानम्, नत्वलीकविषयकमित्यत उक्तसूत्रे 'वस्तुशून्यः' इति लक्षणोक्तिः, 'शब्दज्ञानानुपाती'ति सामग्रीकथनम् । विकल्पस्य भ्रमत्वे भ्रमसामग्र्याः शब्दाघटिताया अपि सत्त्वेन तादृशकथनस्यासङ्गतिः स्यादिति तु न शङ्क्यम्; शब्दज्ञानजन्यो भ्रमो विकल्प इति भ्रमविशेषलक्षणसम्भवादित्यत आह—*अत एवेति* ॥ विकल्पस्य भ्रमान्यवृत्तित्वादेवेत्यर्थः । *पञ्चधा विभागेनेति* ॥ विकल्पस्य भ्रमविशेषत्वे 'पञ्चधे'ति विभागो न स्यात्, मिथो व्यावर्तकधर्मस्यैव विभाजकत्वादिति भावः । *ननु*—अत्र विपर्ययादेव पृथगुक्तिः, न भ्रमात्, यत आह—*विपर्ययरूपादिति* ॥ *ननु* भ्रमस्यापि सदविषयकत्वाविशेषे कथं विकल्पः पृथगिति ? अत आह—*सद्रूपेति* ॥ 'इदं रजतमि'ति भ्रमेऽपि शुक्त्यवच्छिन्नचैतन्यरूपं सदेवेदन्त्वेन भासत इति भावः । *पार्थक्येन=व्यावृत्तरूपेण । ननु सुषुप्तौ मनःसंयोगरूपा मनसो विलीनावस्था वा निद्रा कथं वृत्तिज्ञानरूपा ? तत्राह—*निद्रेति* ॥ सुषुप्तिर्मनोविलयावस्था, संस्कारगोभूताज्ञानरूपा, तत्कालीना सुखाद्याकारवृत्तिरित्यर्थः । विपर्यय-विकल्पौ व्याकृतावेतौ । प्रमाणस्मृती प्रसिद्धे । *निर्धर्मकत्वादिति* ॥ पदवृत्तेः किञ्चिद्धर्मविशिष्टविषयकत्वनियमादिति भावः । *स्वीकारे-

न्यायामृतम्

क्ष्यायमानत्वात्, असतोऽप्रतीतावसद्वैलक्षण्यज्ञानस्य, असत्प्रतीतिनिरासस्य, असत्पदप्रयोगस्य चायोगाच्च, नाप्यपरोक्षतोऽप्रतीयमानत्वमसत्त्वम्; नित्यातीन्द्रियेऽपि सत्त्वात्। नापि क्वचिद-

अद्वैतसिद्धिः

सत्त्वम्; असतोऽप्रतीतावसद्वैलक्षण्यज्ञानस्य, असत्प्रतीतिनिरासस्य, असत्पदप्रयोगस्य चायोगात्। नाप्यपरोक्षतयाऽप्रतीयमानत्वं तत्; नित्यातीन्द्रियेष्वतिव्याप्तेरिति—चेत्, *मैवम्*; सर्वत्र

तरङ्गिणी

द्वितीये दोषमाह—*असत इति* ॥ असद्वैलक्षण्यज्ञानार्थमसतः प्रतियोगिनोऽवश्यं ज्ञेयत्वाद् असत्प्रतीति-निरासार्थमसत्प्रतीतेः प्रसक्त्यपेक्षा। सा चासदवच्छिन्नप्रतीतिविषयैव; प्रेक्षावत्कृतस्य शब्दप्रयोगस्य

न्यायामृतकण्टकोद्धारः

*यच्च*—अत्यन्तासत्त्वपरिहारार्थमुक्तम्—"क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमत्यन्तासत्त्व-मिति, *तदयुक्तम्*; अत्रोपाधेः सत्त्वं विवक्षितम्? नवा। नाद्यः; ब्रह्मणि शुक्तिरूप्य आरोपित-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

लीकोपस्थितिसम्भवेन लक्षणासम्भवात्, 'अनेन पदेनालीकं बोध्यमि'ति सङ्केतसम्भवाच्च। तथाच वृत्तिविषय एवालीकमिति भावः। *अपरोक्षतयाऽप्रतीयमानत्वम्=प्रमाणजन्यप्रत्यक्षाविषयत्वम्।

न्यायामृतसौगन्ध्यम्

मानत्वात्; नाप्यप्रतीयमानत्वमसत्त्वम्; असतोऽप्रतीतावसद्वैलक्षण्यज्ञानस्यासत्प्रतीतिनिरासस्यासत्पद-प्रयोगस्य चायोगात्॥ न चापरोक्षतया प्रतीयमानत्वं तत्; नित्यातीन्द्रियेष्वतिव्याप्तेः॥ *ननु*

सिद्धिव्याख्या

'शशशृङ्गं पदमि'ति मते न पदम्, किन्तु वाक्यमेव; तथाच निरुपाख्यत्वं पदाशक्यत्वमित्युक्ते न कोऽपि दोषः; तथाप्यत्यन्तासच्छशशृङ्गादेरपि शृङ्गादिपदवाच्यत्वमस्त्येव; अन्यथा कस्य विशेषणमसदित्या विकल्पवधेयम्। *द्वितीयमनूद्य* दूषयति—*नापीति* ॥ असद्वैलक्षण्यज्ञानार्थमसतः प्रतियोगिनोऽवश्यं ज्ञेयत्वात्, असत्प्रतीतिनिरासार्थमसत्प्रतीतेः प्रसक्त्यपेक्षाया आवश्यकत्वात्, शब्दप्रयोगस्य शब्दार्थज्ञानपूर्वकत्वात्, असत्पद-प्रयोगार्थमसतो ज्ञानस्यावश्यकत्वादित्यर्थः। *नाप्यपरोक्षेति* ॥ तथाच न पूर्वोक्तदोष इति भावः। शशशृङ्गादौ

बिट्ठलेशीयटिप्पणी

नेति* ॥ बहुव्रीहिरूपनिरुपाख्यपदस्य विकल्पविषयादिपदानां च योगसम्भवादिति शेषः। धर्मविशेषस्वीकारे योगस्य दुर्वारत्वात्। *योगेनेति* ॥ उपाख्याया विरहो निरुपाख्यमित्यव्ययीभावसमासरूपपदस्येत्यादिः। बहुव्रीहिरुपाख्याविरहाश्रये शक्तिसमकक्षनिरूढलक्षणासम्भवेन लक्षणासम्भवकथनासङ्गतेः। *यद्वा*—निरूढलक्षणा-सम्भवकथनपरतयैवायं ग्रन्थ उक्तदोषादिपूरणं विनैव व्याख्येयः। अस्मिन् पक्षे विकल्पविषयत्वादिति दृष्टान्तार्थम्। यद्यप्येतावताऽसतः पदजन्यपदार्थस्मृति-विकल्परूपप्रतीतिविषयताया व्यवस्थापितत्वात् तावतैवाप्रतीयमानत्वमसत्त्वमिति शङ्कानिरासतम्भवः; तथापि पातञ्जलस्वीकृताया अप्युक्तप्रतीतेः स्वमतेऽस्वीकारे बाधकमुक्ताशङ्कासमाधानव्याजे-नाह—*मूले असतोऽप्रतीताविति* ॥ तत्प्रतीतौ स्वसदंशे विकल्परूपवैलक्षण्यांशे प्रमाणरूपं सम्भवतीति भावः। *असत्प्रतीतिः=असत्यतिव्याप्तिः। तत्प्रसक्तौ हि तन्निरास इति भावः। *असत्पदेति* ॥ निरुपाख्य-पदस्यापलापशङ्कायास्त्यागः। *अपरोक्षतयाऽप्रतीयमानत्वमिति* ॥ *अपरोक्षतया=परोक्षभिन्नतया। तृतीयार्थो वैशिष्ट्यं प्रतीत्यन्वयि। पर्युदासबलात् परोक्षसादृश्यं प्रमाणजन्यत्वमपि लभ्यते। तथाच परोक्षान्यप्रमाणजन्यप्रतीति-विषयत्वाभावः समुदितार्थः। अत्र प्रतीतेः प्रत्यक्षत्वेन निवेशे परोक्षान्यज्ञानत्वनिवेशापेक्षया लाघवमित्यभिप्रेत्याह टीकायाम्—*प्रमाणजन्यप्रत्यक्षाविषयत्वमिति* ॥ अत्र प्रमाणपदं सुखादिविषयाऽन्तःकरणान्यतरत्वेन वृत्तिज्ञानो-

न्यायामृतम्

प्युपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वम् ; जगति शुक्तिरूप्यादौ चैवंविधासद्वैलक्षण्यस्य शून्यवादेऽपि सत्त्वात्, त्वयाऽपि—'असच्चेद् न प्रतीयेते'ति वदतोक्ताप्रतीतिं प्रति प्रयोजकस्यान्यस्यैवासत्त्वस्य वक्तव्यत्वाच्च । ब्रह्मण्यङ्गीकृतं यत् प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वात्मकाबाध्यत्वरूपं

अद्वैतसिद्धिः

त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोः साधारणम् ; तथापि क्वचिदप्युपाधौ सत्त्वेन

तरङ्गिणी

शब्दार्थज्ञानपूर्वकत्वात्, असत्पदप्रयोगार्थमसतो ज्ञानस्यावश्यकत्वादित्यर्थः । *जगतीति* ॥ शून्यवाद्यनङ्गीकृतस्यासद्वैलक्षण्यस्य रूप्यादौ त्वया स्वीकार्यत्वात्, अन्यथा रूप्यादौ जगति चासद्वैलक्षण्यप्रतिपादनफलं न स्यादित्यर्थः । *त्वयाऽपीति* ॥ अन्यथाऽऽपाद्यापादकयोरवैशिष्ट्यं स्यादित्यर्थः । *ब्रह्मणीति* ॥

न्यायामृतकण्टकोद्धारः

पारमार्थिकत्वे (१)चातिव्याप्तेः, न द्वितीयः ; असत्यव्याप्तेः, तस्यापि क्वचिदप्युपाधौ शब्दाभासादिना सत्त्वेन प्रतीयमानत्वात् । अत्र बहूनि दूषणानि मूल एवोक्तानीति दिक् । तस्मात् स्वरूपेण निषेध उत्पत्त्याद्यसम्भवादिति दूषणत्रयस्य मूलोक्तता साध्वीति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*यथाश्रुते* नित्यातीन्द्रियस्यापीशं प्रति अपरोक्षत्वाद् नित्येत्याद्यसङ्गतेः ॥

न्यायामृतसौगन्ध्यम्

सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोस्साधारणम् ; तथापि क्वचिदप्युपाधौ

सिद्धिव्याख्या

सत्त्वेऽपि नित्यातीन्द्रियेष्वतिव्याप्तत्वाद् नेदमसत्त्वमित्याह—*तथापीति* ॥ सत्योभयसाधारणत्वेऽपीत्यर्थः ।

विट्ठलेशीयटिप्पणी

पाद्मजयोरन्तःकरणतूलाज्ञानयोर्बोधकम्, न तु चक्षुरादेः, दुःखादौ प्रातिभासिकरजतादौ चातिव्याप्तेः । *यथाश्रुत इति* ॥ प्रमाणजन्यत्वानन्तर्भाव इत्यर्थः । यद्यपि नित्यातीन्द्रियस्येश्वरीयनित्यप्रत्यक्षविषयत्वेऽपि जन्यप्रत्यक्षाविषयत्वेनातिव्याप्तिसङ्गतिः ; तथापि "ईक्षतेर्नाशब्दम्" इत्यधिकरणे ईशस्य 'स ऐक्षते'ति श्रुत्युक्तेक्षणकर्तृत्वोपपादनाय जगद्विषयकतदीयेक्षणस्य तदुपाधिभूतमूलाविद्यापरिणामरूपस्य जन्यस्योपगमाद् जन्यप्रत्यक्षाविषयत्वं न नित्यातीन्द्रियस्येत्यतः प्रमाणपदमुक्तार्थकमुपात्तम् । *ननु* 'नित्ये'त्यादिदूषणपरिहारायैव प्रमाणजन्यत्वमपहाय प्रत्यक्षाविषयत्वमसत्त्वमित्युच्यत इति—चेत्, *सत्यम्* ; प्रत्यक्षं नाम वृत्तिविशेषाभिव्यक्तं चैतन्यम्, चैतन्यमेव वा, तद्विषयत्वम्=तत्तादात्म्यरूपम् ; सत्त्वेन प्रतीत्यर्हत्वं च सद्रूपचित्तादात्म्यमिति पूर्वमुक्तम् । तथाच प्रत्यक्षाविषयत्वम्=असत्त्वपदार्थत्वेन सिद्धान्तयिष्यमाणसत्त्वेन प्रतीत्यनर्हत्वमेव, इति तदन्यस्यासत्त्वपदार्थत्वशङ्काया असम्भवात् । चित्तादात्म्यं त्वलीके प्रातीतिकमपि नास्ति, ब्रह्मणि तु चित्प्रतियोगिकत्वोपलक्षिततादात्म्यमस्ति ; अत एव सत्त्वेन प्रतीत्यर्हत्वनिवेशेऽपि चिद्भिन्नत्वस्य पक्षतावच्छेदके प्रवेशः । एवं चित्तादात्म्यं घटाभावे घटाभाववत् स्वस्मिन्नप्यस्ति, इति ग्रन्थकृतैवोक्तं स्मर्तव्यम्, इति नासम्भवातिव्याप्ती शङ्कनीये ॥

*मूले साधारणमिति* ॥ तथाचास्यासत्त्वपदार्थत्वेऽनिर्वाच्येऽसत्त्वव्यवहारप्रसङ्ग आशङ्क्येतेति भावः । *तथापीति* ॥ तत्रासत्त्वपदार्थ इति शेषः । उक्तव्यवहारप्रसङ्गात्, गौरवाच्चेति भावः । *क्वचिदिति* ॥

( १ ) 'क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यत्यन्तासत्त्वमि'ति वाक्येन हि सिद्धिकाराः पक्षतावच्छेदककोटौ 'सत्त्वेन प्रतीत्यर्हमि'ति विशेषणात्, तादृशे च प्रपञ्चेऽसत्त्वस्य बाधितत्वाद् न प्रकृतानुमानेऽर्थान्तरमिति प्रतिपादयन्ति । इदं चासत्त्वं

न्यायामृतम्

सत्त्वम्, तद्विरुद्धस्यैवासत्त्वरूपत्वाच्च, अन्यथा प्रतीत्यनुपाधिकासत्त्वाभावे ब्रह्मण्यपि सत्त्वेन प्रतीतिरेव

अद्वैतसिद्धिः

प्रतीत्यनर्हत्वमत्यन्तासत्त्वम्, तच्च शुक्तिरूप्ये प्रपञ्चे च बाधात् पूर्वं नास्त्येव, इति न तुच्छत्वापत्तिः।

न्यायामृतकण्टकोद्धारः

निरुपाख्यत्वं किं पदजन्यज्ञानाविषयत्वम्? सर्वथाऽप्रतीयमानत्वं वा? आद्य आह—*निरुपाख्यपदेनेति* ॥ द्वितीय आह—*असतोऽपि प्रतीताविति* ॥ निरुपाख्यत्वपक्षदूषणसमुच्चये चशब्दः। *जगतीति* ॥ न हि बौद्धो जगतः सत्त्वेन प्रतीतिं नाङ्गीकरोति; तथात्वे प्रतीत्यपलापिनः कथाधिकाराभावप्रसङ्गात्। नच—उपाधेः सत्त्वं विवक्षितम्, बौद्धेन सदधिष्ठानकभ्रमानङ्गीकारादिति—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*नास्त्येवेति* ॥ प्रकृतानुमानीयपक्षे ज्ञायमानमित्यादिः। तथाच सामान्यानुमाने 'सत्त्वेन प्रतीत्यर्हमि'त्यस्य पक्षविशेषणस्योक्तत्वेन तादृशविशेषणविशिष्टप्रपञ्चे 'प्रतिपन्ने'त्यादिमिथ्यात्वसिद्धावपि नालीकत्वमादायार्थान्तरमिति भावः ॥

न्यायामृतसौगन्ध्यम्

सत्त्वेन प्रतीत्यनर्हत्वमत्यन्तासत्त्वम्, तच्च शुक्तिरूप्ये प्रपञ्चे च बाधात् पूर्वं नास्त्येव, इति न तुच्छत्वापत्तिः।

सिद्धिव्याख्या

*क्वचिदिति* ॥ 'असद् ने'ति निषेधप्रतियोगितया प्रतीयमानेऽसत्यप्रसिद्धिवारणाय—*सत्त्वेनेति* विशेषणम्। *तच्चेति* ॥ निरुक्तासत्त्वमित्यर्थः। बाधोत्तरकालमस्त्येव, इति सामान्यमेवेत्यभिप्रायेण—*बाधात् पूर्वमित्युक्तम्* ॥

विट्ठलेशीयटिप्पणी

किन्स्वित्यादिः; व्यावहारिक-प्रातिभासिकयोः परस्पराधिष्ठानयोः सत्त्वेनाप्रतीतेरतिप्रसङ्गस्य वारणाय। *क्वचिदप्युपाधाविति* सत्त्वेन प्रतीत्यर्हत्वसामान्याभावलाभकम्, पूर्वं ग्रन्थकारोक्तं च प्रयोजनमनुसन्धेयम्। तथाचान्यत्रासत्त्वनिश्चयसहकृतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वनिश्चयस्य नेदृशासत्त्वपदार्थनिश्चायकत्वम्; तादृशप्रतियोगित्वानां सत्त्वेन प्रतीत्यर्हत्वाभावत्वानाक्रान्तत्वेनासत्त्वपदार्थविशेषत्वाभावेन तदीयविशेषनिश्चयात्मकत्वादिति भावः। *नन्वेवमपि*—सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वेन निश्चिते प्रपञ्चरूपे पक्षे निरुक्तासत्त्वपदार्थसंशयेऽपि तादृशप्रतियोगित्वस्य पक्षीभूतप्रपञ्चादन्यत्रालीके सत्त्वेन प्रतीत्यर्हत्वाभावरूपासत्त्वपदार्थव्याप्तिनिश्चयः सम्भवति; प्रपञ्चस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वे सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं भज्येत; अनुकूलतर्कसत्त्वात्। तथाच सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वस्यासत्त्वपदार्थत्वाभावेऽपि निरुक्तमिथ्यात्वनिश्चयाद् उक्तरीत्या प्रपञ्चे जातेन तन्निश्चयेन निरुक्तासत्त्वनिश्चयापत्त्याऽर्थान्तरं दुर्वारम्, इत्यत आह—*तच्चेति* ॥ सत्त्वेन प्रतीत्यनर्हत्वं चेत्यर्थः। शुक्तिरूप्यादेर्बाधोत्तरं सत्त्वेन प्रतीतेरभावाद् नास्त्येवेत्यसङ्गतम्, अत उक्तम्—*बाधात्पूर्वमिति* ॥

*ननु*—तन्नास्त्येवेति चेत्, सत्यम्, तथाप्युक्तरीत्या तन्निश्चयापत्त्याऽर्थान्तरं दुर्वारम्, इत्यतः पूरयति टीकायाम्—*प्रकृतानुमानपक्षे ज्ञायमानमित्यादिरिति* ॥ तथाच पक्षे *तज्ज्ञानम्=तन्निश्चयः, *नास्ति=न सम्भवतीत्यर्थः। *ननु*—उक्तकारणसत्त्वे कुतः स न सम्भवति? इत्याशङ्क्य, मिथ्यात्वानुमितिरूपबाधनिश्चयेन प्रतिबन्धादित्याह—*तथाचेति* ॥ *अलीकत्वम्=तन्निश्चयापत्तिम्। *आदाय=तत्प्रयुक्तम्। नचैवं—प्रपञ्चस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्व उक्तरीत्या निश्चितं सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं भज्येतेति तर्कपराहतमिदमिति—

यदि ब्रह्मादिसाधारणमपीति मन्यते, तर्हि तावता प्रकृतानुमाने का वा क्षतिः। यथाहि त्रैकालिकनिषेधप्रतियोगित्वेऽपि सत्तादात्म्यवत्त्वात् प्रपञ्चो नालीकः, एवं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हमपि ब्रह्मादिकं सद्रूपतया श्रुत्यादिबोधितत्वाद् नालीकं

अद्वैतसिद्धिः

नच बाधात् पूर्वं शुक्तिरूप्यं प्रपञ्चो वा सत्त्वेन न प्रतीयते । एतदेव सदर्थकेनोपाधिपदेन सूचितम् ।

तरङ्गिणी

सत्त्वासत्त्वयोः परस्परविरहरूपत्वेनैव प्रतीतेरित्यर्थः । *अन्ययेति* ॥ सत्त्वासत्त्वयोः परस्परविरहरूपत्वे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—शून्यवादिनो माध्यमिकस्य मते सर्वं मिथ्येति स्वीकारेऽपि 'घटः स'न्नित्यादिधीः स्वीक्रियते, सर्वानुभवसिद्धायास्तस्या अपलापासंभवात् ; तत्र चाबाध्यरूपसत्तादात्म्यं न भाति, किन्त्वर्थक्रियाकारित्वमिति तैः स्वीक्रियते ; तथाचान्यैरपि तथैवोच्यताम्, तत्राह—*नच बाधादित्यादि* ॥ *सत्त्वेन=अबाध्यरूपसत्तादात्म्येन । माध्यमिकान्यैः सर्वैरपि वादिभिरिति शेषः । तथाच माध्यमिकभिन्नानामनुभवस्तादृश इति भावः । *ननु*—तथापि विशेषानुमानेपूक्तविशेषणस्य पक्षेऽनुक्तत्वादर्थान्तरम्, उक्तमिथ्यात्वस्य मिथ्यालक्षणत्वासम्भवश्च ; अलीकेऽतिव्याप्तेः, तत्राह—*एतदिति* ॥ प्रपञ्चस्य सत्तादात्म्येन प्रतीय-

न्यायामृतसौगन्ध्यम्

न च बाधात् पूर्वं शुक्तिरूप्यं प्रपञ्चो वा सत्त्वेन न प्रतीयते । एतदेव ( प्रपञ्चस्य सत्तातादात्म्येन प्रतीयमानत्वमेव ) सदर्थकेनो ( अबाध्यार्थकेन प्रतिपन्नपदयुक्तेन ) पाधिपदेन सूचितम् ।

सिद्धिव्याख्या

एतदेव दर्शयति—*नचेति* ॥ *ननु*—जगति रूप्यादौ चैवंविधासद्वैलक्षण्यस्य शून्यवादेऽपि सत्त्वात् तैः सह साम्यापत्तिः, *इत्याशङ्क्याह*—*एतदेवेति* ॥ 'क्वचिदप्युपाधाबि'त्येतदेव । प्रतिपन्नोपाधाविति मिथ्यात्वलक्षण-

विट्ठलेशीयटिप्पणी

वाक्यम् ; यदुपाधौ यस्य सत्त्वेन प्रतीतिः, तदुपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वस्यापि सिद्धान्ते तादृशप्रतीतेर्भ्रमत्वा स्वरूपावच्छिन्नस्य पारमार्थिकत्वावच्छिन्नस्य चोपगमेनोक्ततर्काप्रसरादित्यभिप्रायः । *ननु*—शुक्तिरूप्यादेः सत्त्वेन प्रतीतेः सर्वैरुपगमात् तदनुपगमशङ्कावारकस्य 'नचे'तिग्रन्थस्य निरर्थकत्वमित्यतस्तदवतारयति—*ननु शून्येति* ॥ *तथैव=अर्थक्रियाकारित्वरूपसत्त्वभानमेव । यद्यप्येवं प्रकृते न क्षतिः ; तादृशसत्त्वेन प्रत्यक्षयाह्यस्य पक्षविशेषणतया तदभावरूपासत्त्वस्य प्रपञ्चे सिद्ध्यसम्भवात्, तथापि वस्तुगतिमनुरुध्य तन्निराकरणमिति बोध्यम् । 'सत्त्वेने'त्यस्य अर्थक्रियाकारित्वेनेति नार्थः, तत्प्रतीत्याभासोक्ततत्प्रतीतिनिराकरणानुपपत्तेरित्यत आह—*सत्त्वेनेति* ॥ *सत्त्वम्=अबाध्यत्वरूपो ब्रह्मधर्मः, तेन प्रपञ्चस्य प्रतीतेः स्वरूपसंसर्गकत्वे भ्रमत्वं स्यात्, अतः स्वाश्रयतादात्म्यसंसर्गकत्वं वक्तव्यम् । तथाच गौरवम्, अत आह—*अबाध्यत्वरूपसत्तादात्म्येनेति* ॥ तादात्म्यस्यापि प्रतियोगितासम्बन्धेन ब्रह्मधर्मत्वेन न प्रकारत्वं तृतीयार्थः, किन्तु प्रतीत्यन्वयि संसर्गत्वम् ; तथाच प्रपञ्चे तादात्म्येन ब्रह्मैव सद्रूपं प्रकार इति भावः । माध्यमिकैस्तथाऽनुपगमात् 'सर्वैरपि' इत्यसङ्गतम्, अतः पूरयति—*माध्यमिकान्यैरिति* ॥ तेषामपि तथा स्वीकारे किं प्रमाणम्? अत आह—*तथाचेति* ॥ *ननु* 'एतदेवे'त्यादिनोपाधिपदस्य सदर्थकत्वकथनं व्यर्थम् ; उक्तरीत्योक्तपक्षविशेषणेनैव निर्वाहात्, अतस्तत् सार्थकयितुमवतारयति—*ननु तथापीति* ॥ *ननु*—विशेषानुमानेऽप्युक्तपक्षविशेषणं पूर्यते, अतो नार्थान्तरम्, अत आह—*उक्तमिथ्यात्वस्येति* ॥ *प्रतिपन्नम्=स्वप्रकारकधीविशेष्यम्, उपाधिरधिकरणम्, तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्येत्यर्थः । *अलीक इति* ॥ 'शून्यं घटः' इतिवत् 'असन् नृशृङ्गमि'ति विकल्परूपबुद्ध्युपगमेन स्वत्वमेवालीकस्य रूपान्तरेण प्रतिपन्नोपाधिः ; तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य तत्र सत्त्वादिति भावः । पूर्ववाक्ये प्रपञ्चः सत्त्वेन न प्रतीयत इति न, किन्तु प्रतीयत एवेत्यर्थात् सत्त्वेन प्रतीयमानत्वविशिष्टप्रपञ्चस्य प्रपञ्चविषयकप्रतीतेर्वा प्राधान्येन प्रक्रान्तत्वेऽपि तात्पर्यवशादत्र सत्त्वेन प्रतीयमानत्वरूपविशेषणपरामर्शक एवैतच्छब्दः ; नपुंसकलिङ्गत्वात्,

---

भविष्यति, इति न कोऽपि दोषः । तथाच क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वविशिष्टत्रैकालिकनिषेधप्रतियोगित्वमत्यन्तासत्त्वम् । प्रपञ्चे विशेषणाभावेन, ब्रह्मणि तु विशेष्याभावेन च नासत्त्वमिति तु तात्पर्यम्, इति कथं ब्रह्मण्यतिव्याप्तिः ?

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मानत्वमेव । *सदर्थकेन=अबाध्यार्थकेन । प्रतिपन्नपदयुक्तेनेति शेषः । उपाधिपदस्य स्वसमीपवर्तिनि स्वधर्मसंक्रामकार्थकत्वात्, स्वसमीपवर्तिदृश्यत्वावच्छेदेन स्वगतसत्त्वादिधर्मभ्रमजनकत्वस्य प्रकृते तात्पर्यविषयत्वात्, सर्वाधिष्ठानमेव प्रकृत उपाधिपदार्थ इति भावः । लक्षणत्वपक्षे तूपाधिपदस्य सदर्थकत्वं विशेषानुमानपक्ष इवेति वक्ष्यते । *सूचितमिति* ॥ प्रतिपन्नपदस्य स्वतादात्म्यधीविशेष्यार्थकतयोपाधिपदार्थे सति प्रपञ्चरूपस्वतादात्म्यधीविशेष्यत्वस्य शब्दतो लाभेन प्रपञ्चे सत्तादात्म्येन प्रतीयमानत्वस्यार्थतो लाभ इति भावः । नच—अबाध्यत्वापेक्षया कालसम्बन्धित्वमेव लघु, तस्य कालिकविशेषणतारूपविलक्षणसम्बन्धप्रति-

## विट्ठलेशीयटिप्पणी

इत्याह—*प्रपञ्चस्येति* ॥ "सत् साधौ वीर-शस्तयोः" इति कोशात् सत्पदस्य नानार्थकत्वात् सर्वाधिष्ठानत्वलाभकोपाधिपदस्य सदर्थकत्वसम्भवाच्च व्याचष्टे—*सदर्थकेनेति* ॥ अस्त्यर्थकासधातोः सदिति शत्रन्तम्, तत्र शत्रर्थवर्तमानत्वाविवक्षया यत् सर्वदा वर्तमानमित्यक्षरार्थः, कालत्रयेऽप्यबाध्यत्वमिति यावत्, इत्याशयेनाह—*अबाध्यत्वार्थकेनेति* ॥ सत्पदं हि अबाध्यत्वेनैव ब्रह्मणो बोधकम् । "असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुरिति" इति श्रुतेः । तावन्मात्रेणोक्तार्थालाभादाह—*प्रतिपन्नेति* ॥ उपाधिपदस्य कथं सदर्थकत्वम् ? अत आह—*उपाधिपदस्येति* ॥ उप=समीपवर्तिनि स्वधर्मम् आदधाति=संक्रामयतीति व्युत्पत्तेरिति भावः । संक्रमो न गमनम्, किन्तु ज्ञानम्; गत्यर्थानां ज्ञानार्थत्वात्, तच्चान्यस्मिन् स्वधर्मावगाहित्वाद् भ्रमरूपम्, इत्याशयेनोपाधिसामान्यार्थकोपाधिपदेन कथं ब्रह्मण एव लाभः ? इति शङ्कानिरासाय फलितार्थमाह—*स्वसमीपवर्तिदृश्यत्वावच्छेदेनेति* ॥ जपाद्युपाधीनां स्फटिकादिर्यत्किञ्चिद्वस्तुनि स्वधर्मसंक्रामकाणां व्यावृत्तये—*अवच्छेदेनेति*॥ ईदृशभ्रमजनकं यत्र सर्वस्य दृश्यरूपधर्मिणोऽध्यासः, तदेवेत्याह—*सर्वाधिष्ठानमिति* ॥ तच्च सत्पदार्थकालत्रयाबाध्यत्वरूपं ब्रह्मैव; बाध्यस्य स्वात्मकदृश्याधिष्ठानत्वेन सर्वाधिष्ठानत्वाभावादिति भावः । एतदभिप्रायेणैव 'सदर्थके'ति मूल उक्तम्, न तु ब्रह्मार्थकेति; टीकायां चाबाध्यार्थकेति विवृतम् । सत्तादात्म्येन प्रतीयमानत्वस्य प्रतिपन्नोपाधिपदशब्दाप्रतीतेः सूचितमित्युक्तम् । अर्थतो लभ्यमिति तदर्थः । तदुपपादयति—*प्रतिपन्नपदस्येति* ॥ *सति=अबाध्ये* ॥ *सत्तादात्म्येन=अबाध्यतादात्म्येन । तथाच स्वतादात्म्यधीविशेष्यीभूतसन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वलक्षणस्य शब्दलभ्यस्य नालीकेऽतिव्याप्तिः; सति असत्तादात्म्यधीविशेष्यत्वानुपगमेन स्वपदेनासतो दुर्ग्रहत्वात् । एवं विषयत्वाद्यवच्छिन्ने पक्ष उक्तमिथ्यात्वसिद्धौ सत्तादात्म्येन प्रतीयमानत्वस्यार्थतः सिद्धेर्दुर्वारतया तथा प्रतिबन्धाद् न सद्भावरूपासत्त्वस्य सिद्ध्यापत्तिरूपार्थान्तरम् । *यद्वा*—स्वत्वनिवेशेऽननुगमात् सत्तादात्म्येन प्रतीयमानत्वे सति, यावत्सदधिकरणकात्यन्ताभावप्रतियोगित्वमेव लक्षणं साध्यं च, इति तत्सिद्धयैव नोक्तार्थान्तरातिव्याप्ती इति भावः । अत्र प्रथमकल्प उक्तदोषयोर्वारणाय मिथ्यात्वशरीरे प्रतिपन्नपदार्थेऽबाध्यत्वरूपं सत्त्वं प्रविष्टम्, तच्च निषेधप्रतियोगित्वेन प्रतीयमानत्वरूपबाध्यत्वाभावरूपम्, तत्र च गौरवमित्याशङ्कते—*नचाबाध्यत्वापेक्षयेति* ॥ यथाश्रुतमेव सम्यक् । द्वितीयकल्पे तु प्रतीयमानत्वस्यानतिप्रयोजनत्वाद् अनुयोगितया सत्प्रतियोगिकतादात्म्यवत्त्वमेव सत्यन्तार्थः, सद्भाव एवासत्त्वम्, तत्रापि गौरवमित्याशङ्कते—*नचेति । अबाध्यत्वेति* ॥ अबाध्यतादात्म्येत्यर्थः; *सत्त्वेन अबाध्यरूपसत्तादात्म्येनेति यावत् । *ननु*—कालानुयोगिकसंबन्धप्रतियोगित्वरूपं कालसंबन्धित्वम् । अलीकेऽपि स्वरूपसंबन्धरूपविशेषणताप्रतियोगित्वसंभवात् कालानुयोगिकत्वनिवेशः । तच्च सत्प्रतियोगिकतादात्म्यानुयोगित्वापेक्षया न लघु, अत आह—*तस्येति* ॥ कालिकत्वं न कालानुयोगिकत्वम्, किन्त्वखण्डमेव धर्मान्तरम्, अतो न तौल्यतादवस्थ्यमित्याह—*विलक्षणेति* ॥ तथाचोक्तवैलक्षण्यनिवेशादेव नालीकेऽतिप्रसङ्गः, अबाधकसत्यस्वार्थतादात्म्यानुयोगित्वस्यासत्त्वा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

योगित्वरूपत्वात् ; तथाचोक्तप्रतियोगित्वे सति कालसम्बन्धित्वमेव साध्यतामिति—वाच्यम् ; एतस्यैव तस्यापि साध्यत्वसम्भवात् । लक्षणत्वपक्षेऽपि यथासन्निवेशे वैयर्थ्याभावात्, 'प्रतिपन्ने'त्यादिविवरणाद्युक्तावुपाधिपद-सार्थक्याय तस्याबाध्यार्थकत्वस्योक्तत्वाच्च । *ननु*—सदर्थकोपाधिपदेनापि प्रपञ्चस्यालीकत्वमादायार्थान्तरं दुर्वारम् ; उक्तालीकत्ववादिना माध्यमिकेन प्रपञ्चे क्षणिकत्वादिभावनानिवर्त्यस्थिरत्वादेरिवाबाध्यत्वस्यापि शून्यत्वभावनानिवर्त्यस्य व्यावहारिकस्य स्वीकारेणाबाध्यत्वोपहितप्रपञ्चे प्रपञ्चतादात्म्यधीविशेष्यत्वस्वीकारात्,

विट्ठलेशीयटिप्पणी

त्वात्म्यानुयोगित्वमादायालीकेऽतिव्याप्तेर्वारणाय सत्प्रतियोगिकत्वनिवेशस्यावश्यकत्वाद्‌ न तौल्यमिति हृदयम् । यदि तु असत्तादात्म्यव्यावृत्तं सत्तादात्म्येऽपि वैलक्षण्यं स्वीक्रियते, तदा तु तुल्यत्वाद्‌ नेयं द्वितीयकल्पे शङ्केति बोध्यम् ॥ *ननु*—कालसंबन्धित्वे सति सत्तादात्म्यधीविशेष्ययावद्धर्मिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वस्य यावत्सदधिकरण-कोकनिषेधप्रतियोगित्वस्य वा मिथ्यात्वलक्षणत्वेऽसत्यतिव्याप्तिपरिहारेऽपि तस्य साध्यत्वे विशेषानुमान उक्त-रीत्याऽर्थान्तरं दुर्वारम् ; उक्तविशिष्टरूपमिथ्यात्वनिश्चयस्य सत्तादात्म्याद्यभावरूपासत्त्वनिश्चयं प्रति विरोध्य-विषयकत्वेनाप्रतिबन्धकत्वात्, सत्तादात्म्याद्यभावापेक्षया कालसंबन्धित्वाभावस्यैवासत्त्वरूपत्वेऽप्युक्तमिथ्यात्वनिश्चये कालसंबन्धित्वस्य सामानाधिकरण्यसंबन्धेनोक्तप्रतियोगित्वे भासमानतया मिथ्यात्वनिश्चयस्य विरवत्वाद्यवच्छिन्ने पक्षे सदनवगाहित्वेनोक्तासत्त्वनिश्चयेऽप्यविरोधित्वादित्याशङ्क्य, तस्य तद्विरोधित्वाय साध्यीभूतमिथ्यात्वे काल-संबन्धित्वं विशेष्यविधया निवेशयति—*तथाचेति* ॥ यद्यपि कालसंबन्धित्वविशिष्टोक्तप्रतियोगित्वस्य साध्यत्वेऽपि तन्निश्चयादर्थाद्‌ उक्तप्रतियोगित्वविशिष्टकालसंबन्धित्वनिश्चयसंभवेन कालसंबन्धित्वाभावरूपासत्त्वनिश्चयवारणसंभवः ; तथाप्यविलम्बेन मिथ्यात्वानुमित्यैवोक्तनिश्चयापत्तिरूपार्थान्तरवारणाय विशेषण-विशेष्यभावव्यत्यास आहृतः । *एतस्यैव=कालसंबन्धित्वघटितस्यैव* । *तस्यापि=अबाध्यत्वेनाधिकरणघटितस्य, स्वातन्त्र्येणाबाध्यतादात्म्यवत्त्व-घटितस्य वाऽपि । *साध्यत्वसंभवादिति* ॥ व्यापके व्यर्थविशेषणतया अदूषणतया लघुसाध्यघटितस्यापि गुरोः साध्यता संभवति, प्रकृते तु गुरौ लघोरघटकत्वेन तस्य इतरां तत्संभवः । कालिकविशेषणतायामिवाबाध्य-तादात्म्ये वैलक्षण्योपगमे द्वितीये तयोः समशरीरत्वाच्चेति भावः । अत्र लाघवेन कालासंबन्धित्वस्यासत्त्वपदार्थत्वे तदविरोधिसत्तादात्म्यघटितस्य कथं साध्यता ? विलक्षणतादात्म्योपगमे तदभावस्यापि समत्वेनासत्त्वपदार्थत्वेन तदविरोधिकालसंबन्धित्वघटितस्य कथं साध्यता ? अर्थान्तरानिराकरणादिति न शङ्कनीयम् ; कालसंबन्धित्व-सत्ता-दात्म्ययोः समनियतत्वेनैकतरस्य मिथ्यात्वघटकतया सिद्धावपरस्यापि सिद्धिसंभवेनोभयविधासत्त्वनिश्चयरूपार्थान्त-रापत्तिवारणसंभवादित्यवधेयम् । *लक्षणत्वपक्षेऽपीति* ॥ व्यवहारस्य लक्षणप्रयोजनत्वे लघोः संभवे गुरो-र्मिथ्यापदार्थतावच्छेदकत्वासंभवेऽपि व्यावृत्तेर्लक्षणप्रयोजनत्वे लघ्वघटितगुरोर्व्यावर्तकत्वसंभवादिति भावः । *ननु* तथापि लघुसंभवे गुर्वेव मूले कस्मै प्रयोजनायोक्तम् ? अत आह—*प्रतिपन्नेत्यादीति* ॥ प्राचीनोक्तीनामेव तद्दूषण-निरासेनात्र समर्थनीयत्वादिति भावः । *ननु*—उपाधिपदेन प्रपञ्चस्य सत्त्वेन प्रतीयमानत्वसूचने हेतुतया शून्यवादिनां सत्त्वेन प्रतीत्यर्हत्वास्वीकारकथनं मूलकृतोऽसङ्गतम् ; तेषां तत्स्वीकारस्य तदविघटकत्वात्, इत्याशङ्क्य, तत्कथार्थान्तरनिरासहेतुतया तत्सङ्गमयितुमवतारयति—*ननु सदर्थकेति* ॥ उक्तालीकत्ववादिनेति* ॥ सत्यत्व-प्रपञ्चालीकत्ववादिनेत्यर्थः । *माध्यमिकेनेति* ॥ स्वीकारद्वयान्वयि । *ननु* एतन्मते प्रपञ्चस्यालीकतया बाध्यत्वात् कथं सत्याबाध्यत्वोपहितत्वम् ? तत्राह—*प्रपञ्च इति* ॥ *क्षणिकत्वम्=स्वाधिकरणक्षणध्वंसाधिकरण-क्षणावृत्तित्वम् । *भावना=निदिध्यासनाधीनो दृढतरसंस्कारः । *निवृत्तिः=कारणीभूतज्ञानेन सह नाशः । *स्थिरत्वम्=तादृशक्षणवृत्तित्वम् । *अबाधितत्वस्य=बाधकज्ञानाविषयत्वस्य । *शून्यत्वम्=बाधधीविषयत्वम् । *स्वीकारेणेति* ॥ अन्यथा क्षणिकत्वभावनाया इव शून्यत्वभावनायास्तदीयशास्त्रविहिताया वैयर्थ्यं स्यादिति भावः । *स्वीकारादिति* ॥ तथाचाबाध्यतादात्म्येन प्रतीयमानत्वस्यापि तन्मतेऽलीक-प्रपञ्चसाधारणतया तदभावो

### न्यायामृतसौगन्ध्यम्

**शून्यवादिभिस्सदधिष्ठानकभ्रमानङ्गीकारेण क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासद्वैलक्षण्यस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपस्य शुक्तिरूप्ये प्रपञ्चे चानङ्गीकारादिति—चेत्, *न*; असतः प्रतीत्यङ्गीकारे क्वचिदुपाधौ सत्त्वेनापि प्रतीतिसम्भवात्(१)। नच—सत्त्वेन प्रतीत्यर्हत्वं नाम सत्तादात्म्येन प्रतीयमानत्वम्, तच्चासति नास्तीति वाच्यम्; अवच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वं ह्यसत्त्वम्, तच्च शुक्तिरूप्य-शशशृङ्गादिसाधारणम्, इत्येकस्य सत्तादात्म्येन प्रतीतिः, अपरस्य नेत्यत्र मानाभावात्, शून्यवादिनाऽपि तादृशासद्वैलक्षण्यस्य प्रपञ्चे स्वीकाराच्च॥**

### सौगन्ध्यविमर्शः

(१) नहि प्रतीयमानत्वं क्वचिदुपाधौ सत्त्वेन प्रतीतिं विना नोपपद्यत इति द्वैतिनां मतं संभवति; तन्मतेऽपि प्रतीयमानस्यैव शुक्तिरूप्यादेरसतः सत्त्वस्यापि स्वीकारापत्त्याऽसत्ख्यातित्वव्याहतेः, नाप्यद्वैतमतदृष्ट्या; तन्मतेऽपि ब्रह्मणः प्रतीयमानस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यनङ्गीकारात्। तथाच विकल्पाख्यप्रतीत्यैवासतः प्रतीतिनिर्वाहात् क्वचिदुपाधौ सत्त्वेन प्रतीतिरसतोऽप्रसक्तैव। किञ्च कीदृशमसत्त्वपदार्थमभिप्रेत्य प्रपञ्चस्यापि मिथ्यात्वेऽसत्त्वमापाद्यते? यत् तुच्छ-शुक्ति-रूप्यसाधारणं स्यादिति वक्तव्यम्। यदि सर्वदेशीय-त्रैकालिकनिषेधप्रतियोगित्वमात्रम्, तर्हि तु नानिष्टम्। सूचितं चैतत् सिद्धावेव—"सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वमसत्त्वं यद्यपि तुच्छानिर्वाच्यसाधारणमि"ति वाक्ये यद्यपिपदप्रयोगेण, परन्तु नेदं मुख्यमसत्त्वम्, 'सद् रजतमि'ति सत्तादात्म्येन रजतस्येव तुच्छस्यापि सत्त्वेन प्रतीत्यापत्तेः, किन्तु शुक्तिरूप्य-व्यावृत्तमन्यदेवासत्त्वं तुच्छस्य वर्णनीयम्। तच्च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वसहितमेव त्रैकालिकनिषेधप्रतियोगित्वम्, इति कथं क्वचिदुपाधौ सत्त्वेन प्रतीयमानस्य शुक्तिरूप्यस्य, तद्दृष्टान्तेन प्रपञ्चस्य वाऽत्यन्तासत्त्वम्? न हि वयं शुक्तिरूप्य-तुच्छ-साधारणमसत्त्वमेव निर्वक्तुमशक्यमिति वदामः, किन्तु नात्यन्तासत्त्वं शुक्तिरूप्यसाधारणमित्येव। तथाच शुक्तिरूप्यस्याप्यत्यन्ता-सत्त्वस्यास्माभिरनङ्गीकारात् शुक्तिरूप्य-तुच्छसाधारणमसत्त्वमादाय कथमत्यन्तासत्त्वापादनमिति भवन्त एव विदाङ्कुर्वन्तु। एतेन—अवच्छिन्नवृत्तिकान्यसर्वदेश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वं शुक्तिरूप्य-तुच्छसाधारणमसत्त्वम्, इति शुक्तिरूप्यस्य यदि सत्त्वेन प्रतीतिः, तर्हि कथं तुच्छस्यापि न सत्त्वेन प्रतीतिरिति सौगन्ध्योक्तमपि—*परास्तम्*; शुक्तिरूप्यव्यावृत्तासत्त्वान्तरस्यात्यन्ता-सत्त्वरूपस्यैव सत्त्वेन प्रतीतिविरोधित्वस्वीकारेणोक्तापत्त्यसम्भवात्। न हि शून्यवादिनोऽप्यतोऽन्यदसत्त्वं मन्यन्ते। सत्त्वेन प्रतीत्यर्हत्वं हि सत्तादात्म्यरूपं सदधिष्ठानकतायामेव सम्भवति, न च शून्यवादिमते सदधिष्ठानकता मन्यते॥

एतेन—शून्यवादिनोऽप्युक्तविधासद्वैलक्षण्यं स्वीकुर्वन्तीत्यादि सौगन्ध्योक्तम्—*परास्तम्*॥ इदं च शून्यवादिभिरपि सदधिष्ठानकभ्रमानङ्गीकारेणेति सिद्धिवाक्येनैव सूचितम्। सांवृतसत्त्वं हि शून्यवाद्यभिमतं न सत्तादात्म्यरूपमित्यन्यत्र विस्तृतम्।

*एतेन*—शून्यवादिभिरित्याद्ययुक्तम्; सांवृतसत्त्वस्य जगति तेनाप्यङ्गीकारात्, परमार्थसत्त्वस्य तवाप्यभावाच्च। न हि सदधिष्ठानकता भवतामप्यपेक्षिता; अधिष्ठानज्ञानमात्रस्यारोपहेतुत्वात् तत्सत्त्वस्यानपेक्षणादिति—*परास्तम्*; तदेव ह्यधिष्ठानम्, यत्तत्त्वज्ञानेनाज्ञानमारोप्यं च निवर्तते, न चारोप्यज्ञानेन तद्विषयाज्ञानादिकं निवर्तते। तथाच स्वरूपतः सत्यस्यैवाधिष्ठानत्वाद् न सदधिष्ठानकताऽस्मन्मतेऽप्यनपेक्षिता। सत्यम्—न हि वयमपि सत्त्वेनाधिष्ठानज्ञानं कारणं मन्यामहे, किन्त्वधिष्ठानज्ञानमेव। अधिष्ठानस्वरूपन्तु नासद् भवितुमर्हति; किञ्चिद्रूपेण ज्ञातत्वस्याज्ञातत्वस्य च तत्रासम्भवात्, असतोऽनुभवायोग्यत्वात्, असज्ज्ञानस्यानिवर्तकत्वाच्च। सत्यं निर्विशेषे ब्रह्मणि रूपं कल्पितमेव नाज्ञानविषयतामर्हति। न हि वयं धर्माणामज्ञानेनाधिष्ठानत्वं वदामः, किन्तु धर्मोपहितस्य। तथाच—"त्वदभिमताधिष्ठानस्यावरणाभावेने"ति रिक्तं वचनम्। वस्तुतस्तु—किञ्चिद्रूपेण ज्ञातत्वं किञ्चिद्रूपेणाज्ञातत्वं चाधिष्ठानत्वप्रयोजकमिति पुरोऽवस्थिताधिष्ठानविषयकम्। न चाय-मस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति; स्वप्रकाशचैतन्यमात्राधिष्ठानतया स्वप्रकाशस्यापि चैतन्यस्य वृत्त्यनभिव्यक्तिदशायामावृतत्वसम्भवादधिष्ठानत्वं निरपोढमेव; प्रकाशमानत्वे सत्यावृतत्वस्यैवाधिष्ठानत्वप्रयोजकत्वात्, इति कथमसदधिष्ठानकताऽस्मन्मतेऽपि सौगन्ध्योक्तरीत्या? स्वप्ने तु—चैतन्य एव—'एकत्र द्वयमि'ति रीत्या शुक्ति-रजतयोरुभयोरपि विज्ञानम्, अथवा पल्लवाज्ञानस्यावच्छिन्नचैतन्यविषयकस्य प्रातिभासिकविषयत्वस्यापि सिद्धिव्याख्योक्तरीत्या सम्भवाद् मूला-ज्ञानविषयस्याधिष्ठानसत्त्वनियमो न कथमपि विरुद्धः। तथाच महान् विशेषः शून्यवादिभ्योऽद्वैतवादे। न हि भ्रमविषयः सर्वोऽप्यसद्रूप इति वयमसत्त्वख्यातिमवलम्बामहे, येनासत्ख्यात्यवलम्बनेन शून्यवादित्वमापद्यते। अत एव विपर्ययात् पृथग्वि-

## अद्वैतसिद्धिः

शून्यवादिभिः सदधिष्ठानकभ्रमानङ्गीकारेण क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासत्त्वे-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्राह—*शून्यवादिभिः* ॥ माध्यमिकमतानुयायिभिः। अबाध्यत्वोपहितस्वीकारादिति शेषः। *सदधिष्ठान-केति* ॥ अबाध्यत्वोपहितविशेष्यकेत्यर्थः। अवश्यक्लृप्तेनार्थक्रियाकारित्वेनालीकव्यावृत्तेन 'सन् घटः' इत्यादिप्रत्ययोपपत्तेरुक्ताबाध्यत्वं माध्यमिकेन न स्वीक्रियते। नच—बाधात् पूर्वमबाध्यत्वं प्रपञ्चेऽस्त्येव तन्मतेऽपीति—वाच्यम्; त्रिकालाबाध्यत्वस्यैवास्माभिर्निवेशात्। तच्च कालानवच्छिन्नं बाधकज्ञाना-विषयत्वरूपम्। तच्च ब्रह्मणि मन्मतेऽस्ति, तन्मते तु न कुत्रापीति भावात्। नन्वेवम्—तन्मते शून्यत्व-भावना व्यर्थेति—वाच्यम्; तस्याः परमकाष्ठापन्नवैराग्यहेतुत्वेन प्रपञ्चस्वरूपबाधकत्वेन चात्मदानरूपमोक्ष-

### न्यायामृतसौगन्ध्यम्

'शून्यवादिभिरि'त्याद्ययुक्तम्; सांवृतसत्त्वस्य जगति तेनापि स्वीकारात्, वास्तवसत्त्वस्य तत्राप्यभावाच्च ॥

### सिद्धिव्याख्या

घटकेनैतदर्थकेनोपाधिपदेन सूचितमित्यर्थः। ततश्च न शून्यवादिभिः साम्यमिति भावः। तत्र हेतुमाह—*शून्यवादिभिरित्यादिना* ॥ इदमुपलक्षणम्—वस्तुनो ब्रह्मभिन्नं शून्यवादिभिरस्माकं साम्यमिष्ट(१)मित्यपि ध्येयम्।

### विट्ठलेशीयटिप्पणी

नासत्त्वपदार्थः, किन्तु शशशृङ्गाद्यनुगतोऽन्य एव कश्चित् सखण्डोऽखण्डो वा धर्मोऽसत्त्वपदार्थः। एवं चान्यत्रासत्त्वेन संप्रतिपन्ने प्रपञ्चे प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वनिश्चयाहित-सर्वत्र-त्रैकालिकनिषेधप्रतियोगित्वरूपतद्-व्याप्यधर्मनिश्चयेन तन्निश्चयापत्तिरूपार्थान्तरम्; उपाधिपदार्थीनसत्तादात्म्येन प्रतीयमानत्वनिश्चयस्य विरोध्यविषयक-त्वेन तदप्रतिबन्धकत्वादिति भावः। *ननु* 'शून्यमिति शब्दं वदन्ति' इति व्युत्पत्त्या सर्वेऽपि शून्यवादिन एवेत्यत आह—*शून्यवादिभिरिति* ॥ *ननु* तैः प्रपञ्चेऽबाध्यत्वस्वीकारेऽबाध्यत्वोपहितप्रपञ्चरूपसत्पदार्थप्रसिद्धेः, तत्र च 'सन् घटः' इति तादात्म्यप्रत्ययाच्च कथमुक्तभ्रमानङ्गीकार इति? अतः पूरयति—*अबाध्यत्वेति* ॥ अर्थक्रियाकारित्वरूप-सत्त्वोपहिताधिष्ठानकभ्रमस्य तैरप्युपगमात्, भ्रमोपादानाज्ञानविषयरूपाधिष्ठानपदार्थविवक्षणेऽनन्वयात्, प्रयोजनाभावाच्च व्याचष्टे—*सदधिष्ठानकेतीति* ॥ *ननु*—तादृशभ्रमानङ्गीकारे 'सन् घटः' इति प्रत्ययोऽलीकव्यावृत्तधर्मावच्छिन्न-विशेष्यकोऽनुपपन्नः, इत्यबाध्यत्वं तेन स्वीकर्तव्यमेवेत्यत आह—*अवश्यक्लृप्तेनेति* ॥ कार्यजनकत्वरूपार्थक्रियाकारित्वं प्रसिद्धं शशशृङ्गाद्यलीकव्यावृत्तं घटादिप्रपञ्चे सर्वैरभ्युपगम्यते, प्रपञ्चस्यालीकत्ववादिना माध्यमिकेन तु तदेव व्यावहारिकं तत्र स्वीक्रियते, न तु वास्तवम्; प्रपञ्चान्तर्गतकार्यविशेष-तज्जनकयोरप्यलीकत्वात्, अत एव 'सन् घटः' इति प्रत्ययस्यापि भ्रमत्वमप्युपपद्यते, इति घटादेर्व्यावहारिकाबाध्यत्वोपगमे फलाभाव इति भावः ॥ *ननु*—फलाभावेऽपि तदवर्जनीय-मित्याशङ्क्य—*नचेति* ॥ *निवेशादिति* ॥ मिथ्यात्वघटकतयोपाधिपदार्थस्येति शेषः ॥ तन्मते=माध्यमिकमते। *कुत्रापीति* ॥ ब्रह्मणोऽपि तन्मते बाध्यत्वादिति भावः। *एतेन*—प्रपञ्चेऽबाध्यत्वानुपगमे ब्रह्मणि तदुप-गमात् ब्रह्मरूपसदधिष्ठानभ्रमप्रसिद्धिरित्यपि—*परास्तम्*। *भावात्=अभिप्रायात्। *एवम्=प्रपञ्च उक्ताबाध्यत्वा-नुपगमे। *शून्यत्वभावना=बाध्यत्वभावना। *व्यर्थेति* ॥ निवर्त्याभावादिति भावः। शून्यत्वं न बाधकज्ञान-विषयत्वम्, किन्तु सर्वत्र-त्रैकालिकनिषेधप्रतियोगित्वम्, तद्भावना प्रपञ्चे न कस्यचिन्निवृत्तये, किन्तु वैलक्षण्यायैवेत्या-

---

( १ ) शून्यवादिभिरपि शून्यत्वभावनानिवर्त्यानामपि वियदादीनां यावत्सत्यवासनं सत्यत्वाङ्गीकारेण व्यावहारिक-व्यवस्थाया उपपादनात्। विज्ञानरूपात्ममिथ्यात्वमतमेव शून्यमतम्। नहि शून्यं नाम किंचित्तत्त्वं तेनोच्यते। अत एव तत्त्वस्य कस्यचिदपि त्वयाऽनङ्गीकारात् तत्त्वज्ञानं विना सर्वबाधासम्भवेन सर्वमिथ्यात्वासिद्धिरिति तन्मतं दूषितं भामती-न्यायरत्ना-

अद्वैतसिद्धिः

लक्षण्यस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपस्य शुक्तिरूप्ये प्रपञ्चे चानङ्गीकारात् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सम्पादकत्वेन तन्मते स्वीकारात् । *अनङ्गीकारादिति* ॥ अबाध्यविशेष्यकप्रपञ्चभ्रमस्य स्वीकारे प्रपञ्चेऽप्यबाध्यतादात्म्यभ्रमोऽवश्यं स्वीकार्यः ; परस्पराध्यासानुरोधात्, अन्यथा तु तत्र मानाभाव इति भावः ।

न्यायामृतसौगन्ध्यम्

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना । लोके सांवृतसत्यं च सत्यं च परमार्थतः ॥"

इत्यादितदुक्तेश्च ॥ अधिष्ठानस्य ज्ञानमेव ह्यारोपे हेतुः, न तु तत्सत्त्वम् । न च अधिष्ठानस्य ज्ञाततया सत्त्वासिद्धावपि अज्ञाततया तत्सिद्धिः । न हि स्वकल्पितमज्ञानं विषयीकरोतीति—वाच्यम् ; सामान्यतो ज्ञातं विशेषतोऽप्यज्ञातं ह्यधिष्ठानम्, त्वदभिमते विश्वाधिष्ठाने निर्विशेषे स्वप्रकाशे धर्मस्य मिथ्याभूतस्याज्ञानकल्पितत्वेनाज्ञानविषयत्वासंभवात् । अतस्त्वदभिमताधिष्ठानस्याज्ञानावरणाभावेन कथमज्ञाततया सत्त्वसिद्धिः ? अतस्तवाप्यसदधिष्ठानक एव भ्रमः । किञ्च स्वाप्नशुक्त्यादौ रजतारोपाङ्गीकर्तुस्तेऽज्ञाततयाऽपि नाधिष्ठानसत्त्वसिद्धिः । न हि प्रातीतिकं स्वाप्नमज्ञानावृतं भवति ॥

यत्तु—( गौड २२६ ) "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रेण तादृशविकल्पस्य सद्रूपवस्त्वविषयकस्य शब्दज्ञानजन्यत्वस्योक्तत्वात्, अत एव "वृत्तयः पञ्चतय्यः प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः" इति वृत्तिज्ञानानां पञ्चधा विभागेन विपर्ययरूपात् सद्रूपाधिष्ठानविषयकाद् भ्रमात् पार्थक्येन विकल्प इति पातञ्जल एवोक्तम्, इति निद्रा सौषुप्तिकी वृत्तिः—इति, तन्न ; यत्र सदेव शुक्त्याद्यसद्रजतात्मना भाति तत्र विपर्ययः, यत्र तु असत् शशशृङ्गादि सदात्मना भाति, स विकल्प इति तयोर्भेदात् ॥

विट्ठलेशीयटिप्पणी

शयेन समाधत्ते—*तस्या इति* ॥ उक्तप्रतियोगित्वरूपशून्यत्वभावनायाः ॥ *परमकाष्ठापन्नं वैराग्यम्*=सात्मप्रपञ्चस्वसमानाधिकरणरागप्रागभावासमानकालीनरागध्वंसः । *हेतुत्वेनेति* ॥ राग इच्छा, सा च क्वचित् सत्त्वेन गृहीत एव जायते ; नृशृङ्गादौ तदनुदयात्, प्रपञ्च उक्तप्रतियोगित्वभावनायां नु क्वचिन् सत्त्वग्रहानुदयाद् नेच्छोत्पादः, इति विशेषणांशद्वारा विशिष्टवैराग्यप्रयोजकत्वं तस्या इति भावः । तथाच 'हेतुत्वेने'त्यस्य प्रपञ्चे स्वरूपेण प्रपञ्चाभावविषयकत्वेन तत्सम्पादकत्वेनेत्यर्थः । तस्यास्तत्सम्पादकत्वं तु ब्रह्मभावनाया ब्रह्मभावसम्पादकत्ववद् बोध्यम् ॥ *नन्वेवम्* प्रपञ्चान्तर्गतस्य घटादेरिवात्मनोऽपि शून्यत्वभावनया हानिप्रसङ्गः, इत्याशङ्कामिष्टापत्त्या परिहरन् तस्या मुख्यं फलमाह—*आत्महानरूपमोक्षेति* ॥ *मूलेऽनर्हत्वरूपेति* ॥ अनर्हत्वं रूपं यस्येति बहुव्रीहिरसतो विशेषणम् । अनङ्गीकारादिति मूलोक्तं प्रयोज्य-प्रयोजकभावं स्पष्टयति—*अबाध्यविशेष्यकेति* ॥ माध्यमिकेनेत्यादिः । *अन्यथा*=प्रथमभ्रमास्वीकारे । *तत्र*=द्वितीयभ्रमे । *मानाभाव इति* ॥ एवञ्चाबाध्यत्वस्य क्वचिदप्यस्वीकारेणाबाध्यतादात्म्येन प्रतीयमानत्वरूपस्य सत्त्वेन प्रतीत्यर्हत्वस्य माध्यमतेऽलीकप्रपञ्चसाधारण्याभावात् तदभावस्यासत्त्वपदार्थत्वम्, प्रपञ्चे तन्निश्चयापत्तिश्च ; उक्तरीत्या तन्मते प्रतियोगिनिश्चयरूपप्रतिबन्धकाभावात् । न च—तन्मते प्रतियोगिनोऽप्रसिद्ध्या तदभावस्याप्रसिद्धौ कथमसत्त्वपदार्थत्वमिति—वाच्यम् ; अलीकप्रतियोगिकात्यन्ताभावस्यालीकस्यैव तेनोपगमात्, सिद्धान्तिना तु निस्साक्षिकबाधानुपपत्त्या "असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः" "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्यादिश्रुतिभिश्चात्मनोऽबाध्यत्वरूपं सत्त्वं माध्यमिकं प्रति प्रसाध्य

---

बन्ध्यादौ विस्तरेण ॥ तथाच निरधिष्ठाननिषेधवादिनामपि शून्यवादिनामभिमतं सार्वदेशिकसार्वदिकनिषेधप्रतियोगित्वाद्यसमसत्त्वं सत्तादात्म्याविशेषेणं तुच्छानिर्वाच्यसाधारणमद्वैतिनामपि सम्मतमेवेति भावः ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सदधिष्ठानकभ्रमानङ्गीकारमात्रं विशेषानुमानोपयुक्तम् । 'अनङ्गीकारादि'त्यन्तं सामान्यानुमानोपयुक्तम् ।

### सिद्धिव्याख्या

*यत्तु*—त्वयाऽपि—'असत्त्वे तु, न प्रतीयेते'ति वदतोक्ताप्रतीतिं प्रति प्रयोजकत्वेनान्यदेवासत्त्वं वक्तव्यम्, अन्यथा क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानं चेदप्रतीयमानं स्यात्, इत्यापाद्यापादकयोरभेदः स्यादिति, *तन्न* ; क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हं चेत्, न प्रतीयेतेत्यापाद्यापादकभेदस्य स्फुटत्वात् । क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वमिति लक्षणेऽपि सत्त्वेनाप्रतीतेरपरोक्षत्वेनाप्रतीतौ प्रयोजकत्वेनापाद्यापादकभेदस्य स्फुटत्वेनाभेदायोगाच्च ॥

*यच्च*—ब्रह्मण्यङ्गीकृतं यत् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वाभावात्मकं सत्त्वम्, तद्विरुद्धस्यैवासद्रूपत्वं वाच्यम्, अन्यथा ब्रह्मण्यपि सत्त्वेन प्रतीत्यर्हत्वं तथा प्रतीयमानत्वं वा सत्त्वं स्यात्—इति, *तदपि न* ; ब्रह्मनिष्ठसत्ताविरुद्धसत्त्वस्य निर्वक्तुमशक्यत्वात् । *तथाहि*—तद् ब्रह्मनिष्ठसत्ताविरोधित्वं वा ? किं वा तद्विरहरूपत्वम् ? *नाद्यः* ; तस्यासत्यसत्त्वात्, व्याप्यत्वस्य सामानाधिकरण्यगर्भत्वात् । *न द्वितीयः* ; अस्य प्रपञ्चसाधारणत्वेनासत्पदप्रवृत्तिनिमित्तत्वायोगात्, असतः प्रतिपन्नोपाध्यभावेन तथोक्तलक्षणासम्भवाच्च ॥

### विठ्ठलेशीयटिप्पणी

सद्रूपसत्तादात्म्येन प्रतीयमानत्वमभ्युपगमय्य तस्य पक्षविशेषणत्वे प्रपञ्चे मिथ्यात्वानुमितिरूपतन्निश्चयेनान्यथासदुत्थसन्निश्चयप्रतिबन्धात् तदभावरूपासत्त्वनिश्चयापत्तिरूपार्थान्तरं वारणीयमिति भावः ॥

*ननु* पक्षतावच्छेदके सत्त्वेन प्रतीत्यर्हत्वनिवेशेनासत्त्वविरोधिमिथ्यात्वसिद्ध्याऽर्थान्तरवारणसम्भवात्, तत्र चा'नङ्गीकारादि'त्यस्यैवोपयोगात् किं सदधिष्ठानकभ्रमानङ्गीकारेणेत्यनेनेति ? अत आह—*सदधिष्ठानकभ्रमानङ्गीकारमात्रमिति* ॥ *विशेषानुमानोपयुक्तमिति* ॥ वियत्त्वादिविशेषधर्मावच्छिन्न[सत्त्वेन प्रतीत्यर्हत्वाघटितपक्षतावच्छेदकमिति भावः । *एतेन* ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपसामान्यधर्मावच्छिन्नपक्षकानुमानेऽपि तदुपयोगसम्भवाद्विशेषानुमाने इत्यसङ्गतमिति—*अपास्तम्* ; ] पक्षकं यत् स्वतादात्म्यधीविशेष्ययावद्बाध्यरूपसन्निष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वानुमानम्, तत्र साध्यीभूततादृशप्रतियोगित्वस्य सदधिष्ठानकप्रपञ्चभ्रमघटितस्यापि प्रपञ्चालीकत्ववादिना प्रपञ्चस्य शून्यत्वभावनानिर्वर्त्यव्यावहारिकाबाध्यत्वोपगमेन सदधिष्ठानकभ्रमाङ्गीकारेऽसत्त्वविरोधित्वाभावेन तादृशमिथ्यात्वसिद्धावर्थान्तरम् ; असत्त्वविरोधिमिथ्यात्वसिद्धेरेवोद्देश्यत्वात्, अबाध्यत्वानुपगमेनोक्तभ्रमानङ्गीकारस्तु—उक्तमिथ्यात्वस्यासत्त्वविरोधित्वेन तत्सिद्धेरर्थान्तरनिरासकोद्देश्यसिद्धिरूपतासम्पादनद्वारोपयोगीत्यर्थः । अत्र परस्पराध्यासाननुसन्धाने प्रपञ्चे तद्विशेष्यकभ्रमघटितस्याबाध्यरूपसत्तादात्म्येन प्रतीयमानत्वस्याङ्गीकारेऽपि सद्विशेष्यकभ्रमानङ्गीकारेणैव तद्धटितोक्तमिथ्यात्वस्यासत्त्वविरोधित्वनिर्वाहाद् मात्रपदसङ्गतिः । पूर्वोपदर्शितरीत्याऽर्थान्तर-तद्वारणवर्णने तु मात्रपदासङ्गतिः स्यात् । अतोऽत्र मार्गान्तरमनुसृत्य तद् वर्णितम् । एवं सद्विशेष्यकभ्रमानङ्गीकारेऽपि प्रपञ्चविशेष्यकस्वतादात्म्यभ्रमस्वीकार उक्तरीत्या विशेषानुमान उक्तरीत्याऽर्थान्तरनिरासेऽपि सामान्यानुमानेऽर्थान्तरम्, सत्त्वेन प्रतीत्यर्हत्वरूपपक्षतावच्छेदकस्य स्वतादात्म्यविषयकधीविशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यस्य चाऽलीक-प्रपञ्चसाधारणतयाऽसत्त्वविरोधित्वाभावेन सत्त्वाभावविरोधिमिथ्यात्वसिद्धिरूपोद्देश्यासिद्धेः, इत्यतस्तद्वारकतया द्वितीयभ्रमास्वीकारं सार्थकयति—*अनङ्गीकारादित्यन्तमिति* ॥ 'क्वचिदप्युपाधावित्यादौ' इत्यादिः । *सामान्यानुमानोपयुक्तमिति* ॥ पक्षतावच्छेदकावच्छेदेन साध्यसिद्ध्यौपयिके चिद्भिन्नत्वविशिष्टसत्तादात्म्यप्रतीतिविषयत्वरूपसामान्यधर्मावच्छिन्नपक्षकानुमान उक्तरीत्योपयुक्तमित्यर्थः । *यत्तु*—पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्यौपयिकब्रह्मप्रमातिरिक्ताबाध्यत्वरूपसामान्यधर्मावच्छिन्नपक्षकानुमानमिति, *तन्न* ; तत्र हि विशेषानुमानवदसत्त्वाविरोधिमिथ्यात्वसिद्धेरर्थान्तरनिरासाय साध्यीभूतमिथ्यात्वे सदधिष्ठानकभ्रम एवोपाधिपदेन विवक्षणीयः, तादृशभ्रमानङ्गीकार एव च तत्रोपयुक्त इत्यवधेयम् ।

न्यायामृतम्

सत्त्वं स्यात्, येन पुंसा शशशृङ्गाभावो न निश्चितः, तस्य 'गोशृङ्गमस्ती'तिवाक्यादिव 'शशशृङ्गमस्ती'ति-

तरङ्गिणी

स्थिते सत्त्वेनाप्रतीयमानत्वमसत्त्वं चेत्, तदभावः सत्त्वेन प्रतीयमानत्वं सत्त्वं ब्रह्मणि स्यादित्यर्थः । *येन पुंसेति* ॥ न ह्यत्र "ज-ब-ग-ड-दशि"त्यादिनिरर्थकेष्विव पदार्थधीरेव वा, 'कुण्डमजाजिनमि'त्याद्यपार्थकेष्विवान्वयधीर्वा नास्ति ; विपरीतबोधकेषु योग्यताभावेऽपि योग्यताभ्रमेणाकाङ्क्षाज्ञानेन च वाक्यार्थज्ञानोत्पत्तेरनुभवात्, अन्यथा प्रवृत्त्यादेरयोगात् । तथाच सत्त्वेनाप्रतीयमानत्वं शशशृङ्गादावसिद्धमित्यर्थः । *ननु*

न्यायामृतकण्टकोद्धारः

वाच्यम्, तथात्वे ब्रह्मणोऽपि सद्रूपोपाधौ सत्त्वेनाप्रतीयमानत्वेनातिव्याप्तेः । *त्वयेति*(२२८) ॥ प्रयोज्यप्रयोजकभावस्य भेदघटितत्वादिति भावः । अन्यथेत्यस्यैव विवरणम्—*प्रतीत्यनुपाधिकेति*(२२९) ॥ उक्तासत्त्वलक्षणस्याव्याप्तिमप्याह—*येनेति* ॥ *ननु* सत्त्वेन प्रतीयमानस्य शशशृङ्गस्य प्रातिभा-

सिद्धिव्याख्या

*अत एव*—तद्विरहरूपत्वमेव ब्रह्मनिष्ठसत्ताविरोधित्वेन विवक्षितम् । नच प्रपञ्चसाधारणत्वेनासत्पदप्रवृत्तिनिमित्तत्वायोगः ; प्रपञ्चः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगी न वेति विप्रतिपत्तिदशायां ब्रह्मनिष्ठसत्ताविरहस्य तत्रासिद्धत्वेन प्रपञ्चसाधारण्यासिद्धेरिति—*निरस्तम्* ; उक्ताबाध्यत्वरूपसत्त्वविरहात्मकत्वानङ्गीकारादसत्त्वस्य ॥

*अत एव च*—प्रतिपन्नोपाधौ संसृष्टत्वेन प्रतीतत्वमात्रं तन्त्रम् ; लाघवात्, न तु तत्प्रमाणप्रतिपन्नत्वम् ; गौरवात्, एवं चासन्नृशृङ्गादेरपि विशेषादर्शनदशायां 'मृगकर्णं प्रविश्य गजो गर्जति' इत्यादिशब्दाभासेन गजस्य मृगकर्णसंसृष्टत्वेनेव 'हिमालये नृशृङ्गादिकमस्ति' इत्यादिशब्दाभासेन नृशृङ्गादेर्हिमालयादिसंसृष्टत्वेन प्रतीतिसद्भावात् प्रतिपन्नोपाधिकत्वमङ्गीकर्तव्यमिति—*निरस्तम्* ; तथा प्रतीतस्य नृशृङ्गादेरनिर्वचनीयत्वं नासत्त्वरूपत्वम् । नच—शब्दाभासेनाभासरूपानिर्वचनीयनृशृङ्गाद्यन्यासन्नृशृङ्गादेः प्रतीत्यभावे ब्रह्म-जगतोस्तद्वैलक्षण्यासिद्धिप्रसङ्गः, वैलक्षण्यसिद्धेः प्रतियोगिज्ञानहेतुकत्वादिति—*वाच्यम्* ; भवदभिमताभासासन्नृशृङ्गादेरेवास्माभिरनाभासानिर्वचनीयनृशृङ्गादिरूपत्वेनाङ्गीकारेण तदतिरिक्तस्यानाभासनृशृङ्गादेरभावेनानिर्वचनीयविशेषरूपस्यैव शब्देन प्रतीतौ प्रतियोगिज्ञानस्यापि वृत्तत्वेन ब्रह्म-जगतोस्तद्वैलक्षण्यसिद्धेः । नच—आभासासन्नृशृङ्गादेः प्रतीत्यभावे शब्दाभासेनाभासानिर्वचनीयमेव प्रतीयते, नत्वनाभासासन्नृशृङ्गादिकम्, इति भवदीयव्यवहार एवानुपपन्न इति—वाच्यम् ; 'अनाभासासन्नृशृङ्गादिकमि'ति भवदभिलापमात्रेण तस्य प्रतीतावस्मदीयस्य तथाव्यवहारस्योपपत्तेः । नच—परोक्षस्थले भवताऽनिर्वचनीयार्थोत्पत्त्यस्वीकाराद् अपसिद्धान्त इति—वाच्यम् ; तस्य पुरुषदोषत्वेन वस्तुदोषत्वाभावात् । नच—नवीनैस्तत्रान्यथाख्यातिरेव स्वीकृतेति—वाच्यम् ; परोक्षस्थल एवान्यथाख्यातिस्वीकारेण परोक्षस्थलमात्रे तैरपि तदनङ्गीकारात्, तथाऽनङ्गीकारे जगतोऽत्यन्तासत्त्वापत्तिरूपबाधकस्यैव मूलत्वात् । तथाचासत्युक्तलक्षणस्यासम्भवाद् न जगतोऽत्यन्तासत्त्वापत्तिः ॥ *यदपि*—ब्रह्मण्यपि सत्त्वेन प्रतीत्यर्हत्वं तथा प्रतीयमानत्वं वा सत्त्वं स्यादिति, *तदपि न* ; तयोः परस्परविरहरूपत्वाभावात् ॥

*एतेन*—येन पुंसा शशशृङ्गाभावो न निश्चितः, तस्य 'गोशृङ्गमस्ती'ति वाक्यादिव 'शशशृङ्गमस्ती'ति वाक्यादपि ज्ञानोत्पत्तेरनुभवसिद्धत्वेन शशशृङ्गादावप्यसत्त्वं न स्यात्, न च—'घ-ट-ध-ष' इत्यादिनिरर्थकेष्विव पदार्थधीरेव वा, 'कुण्डमजाजिनमि'त्याद्यपार्थकेष्विवान्वयधीर्वा नास्तीति—वाच्यम् ; विपरीतबोधकेषु योग्यताया अभावेऽपि अयोग्यताज्ञानाभावस्य योग्यताभ्रमस्य वाऽऽकाङ्क्षादिसामग्रीसध्रीचीनस्य सत्त्वात्, अन्यथा प्रवृत्त्याद्यभावप्रसङ्गादिति—*निरस्तम्* ; योग्यताया अपि शब्दज्ञानसहकारित्वेन तदभावेऽस्माद् वाक्यात् शाब्दबोधानुपपत्तेः ।

### न्यायामृतम्

वाक्यादपि ज्ञानोत्पत्तेश्च । त्वन्मतेऽपि हि तत्राध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽप्यधिष्ठानमसदेव । वक्ष्यते चैतदनिर्वाच्यत्वभङ्गे । "तद्धैक आहुरसदेवेदमग्र आसीदि"ति श्रुत्याऽप्यसतस्सत्त्वेन प्रतीतेश्च । नापि सदनिर्वाच्याभ्यामन्यत्वमसत्त्वम् ; अनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेनान्योन्या-

### तरङ्गिणी

'शशशृङ्गमस्ती'ति वाक्याभासात् शशेऽनिर्वचनीयशृङ्गविषयको भ्रम उत्पद्यते, नत्वसद्विषयकः स इत्यत आह—*त्वन्मतेऽपीति* ॥ अनिर्वाच्यवादिनस्तव मतेऽपि तत्राध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽपि 'शशशृङ्गमसदि'ति वाक्य इव 'शशशृङ्गमस्ती'ति वाक्येऽपि शशशृङ्गशब्देनासत एव प्रतीतेरित्यर्थः । *ननु* शशशृङ्गादिशब्दाद् विकल्पमात्रं जायते । तदुक्तम्—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति । एवं च शशशृङ्गादिशब्दाद् न सतः प्रतीतिरित्यत आह—*वक्ष्यते चैतदिति* ॥ "विकल्पस्येच्छादिवद् ज्ञानान्यवृत्त्यन्तरत्वेऽनुभवविरोधः, प्रवृत्त्याद्ययोगश्च ; नहि शशशृङ्गस्यासत्त्वाज्ञानदशायां तदस्तित्वज्ञानस्य गोशृङ्गास्तित्वज्ञानाद् मात्रयाऽपि विशेषोऽनुभूयते ; असति वृत्त्यन्तरत्वद् ज्ञानस्यैवोपपत्तेश्च, अन्यथा शुक्तिरूप्यादेरपि विकल्पमात्रम्, नतु प्रतीतिरिति स्यात् । विकल्पस्य ज्ञानविशेषत्वे त्विष्टापत्तिः । वस्तुशून्य इति च कोऽर्थः ? किमप्यनुल्लिखन्निति वा ? असदेवोल्लिखन्निति वा ? आद्येऽनुभवविरोधः,

### न्यायामृतकण्टकोद्धारः

सिकत्वेनासतः सत्त्वेन प्रतीतिर्नास्तीत्यत आह—*त्वन्मतेऽपि हीति* ॥ श्रुत्याऽप्यसतः सत्त्वेन प्रतीतिरस्तीत्याह—*तद्धैक इति* ॥ *अन्योन्याश्रयादिति* ॥ असद्वैलक्षण्यस्यानिर्वाच्यलक्षणे प्रवेशादिति भावः । *ननु* प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपप्रकृतानिर्वाच्यलक्षणेऽसत्त्वप्रवेशा-

### सिद्धिव्याख्या

नच—अयोग्यताज्ञानाभावस्य योग्यताभ्रमस्य वाऽऽकाङ्क्षादिसामग्रीसध्रीचीनस्य सत्त्वात् शाब्दज्ञानोत्पत्तिः, अन्यथा प्रवृत्त्याद्यभावप्रसङ्ग इति—वाच्यम् ; तर्हि 'इदं रजतमि'त्यादिप्रात्यक्षिकभ्रमवदस्याप्यनिर्वाच्यविषयत्वोपपत्तेः । नच—अस्याप्यनिर्वचनीयत्वे शुक्तिरूप्याद्भेदो न स्यादिति—वाच्यम् ; को ह्यनिर्वाच्यादनिर्वाच्यं भेत्तुमध्यवसितः ? यत्सत्त्वमेवमाक्षिपसि, किन्तु निःस्वरूपात् । यथाच सत्त्वेन न निःस्वरूपविषयत्वम्, तथोक्तं प्राक् । 'शशशृङ्गमस्ती'ति वाक्याच्चानिर्वचनीयशशशृङ्गविषयको भ्रम उत्पद्यत इत्यत्र परोक्तबाधकानामुद्धृतत्वाच्च ॥

*अत एव—"तद्धैक आहुरसदेवेदमग्र आसीत्" इति श्रुत्याऽप्यसतः सत्त्वप्रतीतेस्तत्राव्याप्तिः । तत्रैतच्छ्रुतिगतासत्पदस्याप्याभासभूतानिर्वचनीयासत्परत्वं परेणाभ्युपगन्तुं शक्यम् ; तच्छ्रुतेर्बौद्धमतनिराकरणार्थं प्रवृत्ततया तत्रत्यासत्पदस्य बाह्याभिमतासत्परताया एव स्वीकार्यत्वात्, अन्यथा "कथमसतः सज्जायेत" इत्युत्तरवाक्ये तन्निराकरणानुपपत्तेरिति—*परास्तम्* ; "सदेवेदमग्र आसीत्" इत्यस्यार्थस्याभाव एव नञा प्रतिपाद्यते, नत्वसतः सत्त्वम् ; विरोधात्, इति तत्राव्याप्त्यनवकाशात् । तस्मात् क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वमित्युक्तेऽपि न कोऽपि दोषः । ततश्चासच्छशशृङ्गादाविव प्रपञ्चे नात्यन्तासत्त्वमिति ॥

*यद्वा—सदनिर्वाच्याभ्यामन्यत्वं शशशृङ्गादीनामसत्त्वम् । नच—अनिर्वाच्यत्वस्य सद्विलक्षणत्वे सत्यसद्विलक्षणत्वरूपस्यासत्पदघटितमूर्तिकरूपतयाऽसत्त्वनिरूप्यतयाऽन्योन्याश्रय इति—वाच्यम् ; अस्मिन् पक्षे बाध्यत्वस्यैवानिर्वाच्यत्वेन सदसद्वैलक्षण्यमात्रस्य वा सदसत्त्वानधिकरणगर्भस्य वा तत्त्वानङ्गीकारेणानिर्वाच्यत्वस्यासत्त्वाघटितमूर्तितयाऽन्योन्याश्रयानवकाशात् । नच—अनिर्वाच्यत्वे बाधान्यथानुपपत्तिं प्रमाणत्वेन वदताऽऽचार्येण ततोऽन्यस्यैवानिर्वाच्यत्वं वक्तव्यमिति—वाच्यम् ; बाध्यत्वस्यानिर्वाच्यत्वेऽपि 'यदि बाध्योऽयं न स्यात्, तर्हि बाधो न स्यादि'ति बाधान्यथानुपपत्तेरनिर्वाच्यत्वे प्रमाणत्वेन वक्तुं शक्यत्वात् ॥

न्यायामृतम्

श्रयात्, लाघवेन सार्वत्रिक-त्रैकालिकनिषेधाप्रतियोगिरूपसदन्यत्वस्यैव तत्त्वाच्च, अनिर्वाच्यस्यापि स्वरूपेण त्रैकालिकनिषेधेऽसतोऽनिर्वाच्यादन्यत्वासिद्धेश्च। अर्थक्रियासामर्थ्याभावादिकमसत्त्वमित्य-

तरङ्गिणी

व्यवहाराद्यनुपपत्तिश्च। नह्ययं घटादिवत् किमप्यनुल्लिखन्ननुभूयते। द्वितीये सिद्धं नः समीहितम्" इत्यादि वक्ष्यत इत्यर्थः—*लाघवेनेति* ॥ सदन्यत्वमेवासत्त्वम्, नत्वनिर्वाच्यभिन्नत्वमपि तत्र प्रवेश्यम्। नचा-निर्वाच्यस्यासत्त्वाभावार्थं तद्विशेषणम्; स्वरूपेण निषेधे तस्यासत्त्वापरिहारादित्यर्थः। *अनिर्वाच्यस्या-

न्यायामृतकण्टकोद्धारः

भावाद् नान्योन्याश्रय इत्यत आह—*लाघवेनेति* ॥ असंभवमप्याह—*अनिर्वाच्येति* ॥ अर्थक्रिया-सामर्थ्याभावेति* ॥ अत्र सामान्यतोऽर्थक्रियासामर्थ्याभावो वाऽभिप्रेतः ? तत्तदुचितविशेषार्थक्रिया-

सिद्धिव्याख्या

*एतेन*—सार्वत्रिक-त्रैकालिकनिषेधाप्रतियोगिरूपसदन्यत्वस्यैवासत्त्वरूपत्वे लाघवादनिर्वाच्यभिन्नत्वं न निवेश-नीयम्; गौरवात्। *ननु*—व्यवहारानुरोधेन तदालम्बनतयाऽनतिप्रसक्तप्रवृत्तिनिमित्तकल्पनम्, न तु सत्त्वेन स्वाङ्गीकृतलघुशरीरकधर्मानुरोधेन व्यवहारनियमनं युज्यते; अन्यथा गौरवेण कारणव्यवहारालम्बनत्वेनानन्यथासिद्ध-नियतपूर्ववृत्तित्वं न स्वीक्रियेत, किन्तु पूर्ववृत्तित्वमेव तथा स्वीक्रियेतेति—चेत्, *न*; लोक-वेदयोरनन्यथासिद्ध-नियतपूर्ववृत्तित्वादिकमादाय कारणादिव्यवहारस्याविगानसिद्धत्ववत् सदनिर्वाच्याभ्यामन्यत्वमादाय नृश्रृङ्गादाव-सद्व्यवहारस्याविगीतत्वासिद्धवैषम्यात्। तथाच लाघवेन सार्वत्रिक-त्रैकालिकनिषेधाप्रतियोगिरूपसदन्यत्वमेवा-सद्व्यवहारालम्बनतया स्वीकर्तुमुचितम्, न तूक्तरूपसदनिर्वाच्याभ्यामन्यत्वम्, गौरवादिति साधूक्तम्—इति *निरस्तम्*: सार्वत्रिक-त्रैकालिकनिषेधाप्रतियोगिरूपसदन्यत्वस्य तुच्छानिर्वाच्यसाधारणत्वेनेष्टापत्तेः। नच—अनिर्वाच्यस्यापि स्वरूपेण त्रैकालिकनिषेधेऽसतोऽनिर्वाच्याद् अन्यत्वासिद्धिरिति—वाच्यम्; सर्वत्र स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य तुच्छानिर्वाच्यसाधारण्येऽपि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हस्वरूपात्यन्तासत्त्वस्य प्रपञ्चे शुक्तिरूप्ये च बाधात् पूर्वमसत्त्वेनासतोऽनिर्वाच्याद् अन्यत्वसिद्धेः, अनिर्वाच्यत्वस्य सर्वत्र प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वरूपत्वेऽप्यसतः प्रतिपन्नोपाध्यभावेन प्रतिपन्नोपाधिस्थतादृशनिषेधप्रतियोगित्वस्यानिर्वाच्य-शुक्तिरूप्यादौ सत्त्वेन नृश्रृङ्गादावनिर्वाच्यादन्यत्वसिद्धेश्च। नच—'तद्गेहे गोश्रृङ्गमस्ती'ति वाक्याद् गोश्रृङ्गस्येव विशेषादर्शनदशायां 'हिमालये देवदत्तगृहे नृश्रृङ्गादिकमस्ती'ति वाक्याद् नृश्रृङ्गादेरपि प्रतिपन्नोपाधिसत्त्वस्य दुर्वारत्वेन तस्याप्यसदनिर्वाच्योभयसाधारण्येनासतो व्यावृत्तत्वाभावेन प्रतियोगितावच्छेदकत्वानुपपत्तिरिति—वाच्यम्; दत्तोत्तरत्वादिति ॥

*यद्वा*—अर्थक्रियासामर्थ्याभावादिकं वा शशश्रृङ्गादीनामसत्त्वम्। नच—शुक्तिरूप्यादौ शुद्धे ब्रह्मणि चाति-व्याप्तिः, शुक्तिरूप्य-शुद्धब्रह्मणोरत्यन्तासत्त्वस्य त्वयाऽनङ्गीकारादिति—वाच्यम्; बाधानन्तरं प्रतियोगित्वेनान्ततः स्वनिवृत्तिं प्रत्येव जनकत्वेन शुक्तिरूप्यादावर्थक्रियाऽभावस्यासिद्धत्वात्, कटक-कुण्डलाद्यर्थक्रियाभावस्तूत्पन्न-विनष्ट-रूप्यादौ विनश्यदवस्थागतकर्मकरादौ चास्ति, इति तत्साधारणं नासत्त्वापादकम्। नच—बाधानन्तरम्—'मम शुक्तिज्ञानं नष्टम्' 'मम रूप्यभ्रमो नष्टः' इतिवत् 'शुक्तिरूप्यमुत्पन्नं नष्टमि'ति कदाऽप्यननुभवेन तदुत्पत्ति-विनाशयोरेव प्रमाणाभाव इति—वाच्यम्; भ्रान्तिसमये पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव प्रतिबन्धकस्य सत्त्वेन विरोधि-ज्ञानानुदयेन रूप्यस्याविनाशेन च 'शुक्तिरूप्यमुत्पन्नं नष्टमि'त्यनुभवाभावेऽप्यविद्योपादानकत्वेनोत्पत्तेस्तत्त्वज्ञाननाश्यत्वेन च स्वनिवृत्तिजनकत्वस्य चापलपितुमशक्यत्वात्। नच—बाधसमयेऽपि तथाऽनुभवाभावात् शुक्तिरूप्योत्पत्ति-विना-शावप्रामाणिकाविति—वाच्यम्; तदत्यन्ताभावग्रहस्यैव प्रतियोगिग्रह इव तदुत्पाद-विनाशग्रहेऽपि प्रतिबन्धकत्वात्।

न्यायामृतम्

शक्यशङ्कम् ; शुक्तिरूप्यादौ शुद्धब्रह्मणि च सत्त्वात् । नच—निःस्वरूपत्वमसत्त्वम्, मिथ्याभूतं तु सस्वरूपमिति—वाच्यम् ; 'मिथ्याभूतस्यापि स्वरूपेणैव त्रैकालिकनिषेधः' इति पक्षे निःस्वरूपत्वस्य दुर्वारत्वात् । नच—मिथ्याभूतं स्वरूपं मिथ्यात्वादेव स्वरूपेण त्रैकालिकनिषेधसामानाधिकरण्याविरोधीति—वाच्यम् ; स्वदेश-कालयोस्तत्स्वरूपसहिष्णोस्तत्स्वरूपप्रतिषेधत्वस्य पारिभाषिकत्वापातात्,

तरङ्गिणी

पीति* ॥ तथाचासम्भव इत्यर्थः—*निस्स्वरूपत्वस्येति* ॥ मिथ्याभूतस्य सस्वरूपत्वे तस्य स्वात्यन्ताभावसामानाधिकरण्यायोगादित्यर्थः । *नच मिथ्याभूतमिति* ॥ तथाच मिथ्याभूतस्य स्वरूपेणैव स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं न विरुद्धमित्यर्थः । *स्वदेश-कालयोरिति* ॥ प्रतियोगिस्वरूपसमानाधिकरणस्यात्यन्ताभावत्वं पारिभाषिकं स्यात् । तथाच तादृशाभावप्रतियोगित्वेऽपि स्वरूपेणाभावप्रतियोगित्वं

न्यायामृतकण्टकोद्धारः

सामर्थ्याभावो वा ? नाद्य इत्याह—*शुक्तिरूप्यादाविति* ॥ नान्त्य इत्याह—*शुद्धब्रह्मणीति* ॥

सिद्धिव्याख्या

तस्माद् अननुभवस्यान्यप्रयुक्तत्वाद् न ततः शुक्तिरूप्योत्पत्ति-विनाशापलापः, इत्युक्तार्थक्रियाजनके तत्र नातिव्याप्तिः । नापि ब्रह्मणि शुद्धेऽतिव्याप्तिः ; तत्र दृढदण्डत्ववत् शुद्धदशायां जनकतावच्छेदकविरहात् सहकारिविरहाद्वाऽर्थक्रियाऽजनकत्वेऽपि तद्दशायां तदविरोधात् । नच—असङ्गैकस्वभावतया श्रुत्यवधारितस्य विशुद्धचैतन्यस्यावच्छेदकीभूतधर्मवत्त्वसहकारिसङ्गे स्वभावव्याकोपापत्तिरिति—वाच्यम् ; औपाधिकतत्सङ्गस्वीकारेऽपि तस्य स्वाभाविकासङ्गैकरूपत्वेन सहाविरोधात् । नच—असङ्गैकस्वभावतया श्रुतस्यानाद्यविद्यासङ्गस्यौपाधिकत्वं न संभवति, लोक-वेदयोरागन्तुकोपाधिप्रागभावप्रयुक्तप्रागभावप्रतियोगिन्यौपाधिकत्वदर्शनात्, अन्यत्र तददर्शनाच्चेति—वाच्यम् ; उपाध्यधीनस्थितिकत्वस्यौपाधिकत्वेन तस्य प्रकृतेऽपि संभवात्, तन्निवृत्तिप्रयुक्तनिवृत्तिप्रतियोगित्वेनौपाधिकत्वसंभवाच्च । नच—द्वितीयनिर्वचनं पारिभाषिकमिति—वाच्यम् ; सर्वौपाधिकसंग्राहकत्वेनास्य सर्वसिद्धत्वात्, प्रत्युताविद्यासंबन्धासंग्राहकत्वेन भवदुक्तस्यैव पारिभाषिकत्वात् । अत एवापेक्षाबुद्धिनिवृत्तिप्रयुक्तनिवृत्तिप्रतियोगित्वाद् द्वित्वादावपि तदुपाधिकत्वव्यवहारोऽङ्गीकर्तव्य एवेत्यलम् ॥

*अथवा*—निःस्वरूपत्वमसत्त्वम्, मिथ्याभूतं तु न निःस्वरूपम्, इति न तस्यासत्त्वापत्तिः, नच—मिथ्याभूतस्यापि स्वरूपेणैव त्रैकालिकनिषेध इति पक्षे निःस्वरूपत्वं दुर्वारम् ; तस्य सस्वरूपत्वे स्वात्यन्ताभावसामानाधिकरण्यायोगादिति—वाच्यम् ; मिथ्याभूतत्वरूपस्य सस्वरूपत्वेऽपि मिथ्यात्वादेव स्वरूपेण त्रैकालिकनिषेधसामानाधिकरण्ययोगित्वम्, निःस्वरूपस्य तु निःस्वरूपत्वादेव तदयोगितेति विशेषात् ॥

*ननु*—प्रतिषेधस्य सदा प्रतियोगिस्वरूपप्रतिक्षेपकस्वभावत्वमस्ति ? उत न ? *आद्ये* प्रतियोगिस्वरूपेण सह सामानाधिकरण्यविरोधः, *अन्त्ये* स्वदेशे स्वकाले च प्रतियोगिस्वरूपसहिष्णोस्तत्प्रतिषेधस्य पारिभाषिकत्वापत्तौ तादृशाभावप्रतियोगित्वेऽपि स्वरूपेणाभावप्रतियोगित्वं न सिद्ध्येत्, इत्यसत्त्वासिद्ध्यर्थं तत्र रजतादिस्वरूपं न सिद्ध्यतीति वाच्यम् ; एवं चासत्त्वापत्तिर्दुर्वारा—इति *चेत्, न* ; *स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्योभयसाधारणत्वेऽपि शुक्तिरजतादेरत्यासत्त्वस्य परिहृतत्वात् । नच—निषेधाधिकरणे प्रतियोगिनोऽसत्त्वे सामानाधिकरण्यविरोधः, सत्त्वे वा तन्तुष्विवातन्तुष्वप्यभावस्य पटस्वरूपसहिष्णुत्वेन पटसत्त्वापत्तिरिति—वाच्यम् ; किं तत्र पटस्वरूपमात्रमापाद्यते ? किंवाऽर्थक्रियासमर्थव्यावहारिकपटसत्त्वापातः ? *आद्य इष्टापत्तिः ; तत्र प्रातिभासिकपटसत्त्वात्, *द्वितीयेऽभावस्य व्यावहारिकपटस्वरूपसहिष्णुता न तत्स्वरूपसत्तापादिका; किंतु तत्सामग्री, सा च तन्तुष्वेवास्ति, नातन्तुष्वपि ; कार्यव्यवस्थादर्शनेन तत्सामग्र्यास्तत्रैव कल्पनात्

न्यायामृतम्

अन्यथा तन्तुष्विवातन्तुष्वपि व्यावहारिकपटस्वरूपापातात्, प्रागभावादिसमानकालीनत्वेनाप्यविरोधापाताच्च, तुच्छेऽपि परोक्षप्रतीत्याद्यन्यथानुपपत्त्यैतादृशस्वरूपस्यापि सुवचत्वाच्च। तस्मात् सर्वत्र

तरङ्गिणी

न सिद्ध्येत्, इत्यतस्तत्सिद्ध्यर्थं तत्र रजतादिस्वरूपं नास्तीति वाच्यम्; एवं चासत्त्वापत्तिर्दुर्वारेत्यर्थः। *अन्यथेति* (२३०)॥ निषेधाधिकरणेऽपि प्रतियोगिनः सत्त्व इत्यर्थः। *अतन्तुष्वपीति*॥ अत्यन्ताभावस्य प्रतियोगिना दैशिको विरोधः सर्वसिद्धो न स्यादित्यर्थः। *प्रागभावादीति*॥ *प्रागभावादेः प्रतियोगिना कालिको विरोधो न स्यादित्यर्थः। *तुच्छेऽपीति*॥ स्वात्यन्ताभावाधिकरणेऽपि स्वस्य प्रतीतिमात्रेण

न्यायामृतकण्टकोद्धारः

आद्येऽपि ब्रह्मण्यतिव्याप्तिर्द्रष्टव्या। *अन्यथेति*॥ यद्यत्यन्ताभावः स्वाधिकरणे प्रतियोगिसत्त्वाविरोधीत्यर्थः। नच—अतन्तुषु पटस्वरूपाप्रतीत्या व्यावहारिकपटास्वीकार इति—वाच्यम्; अतन्तुष्वारोपितपटेषु व्यावहारिकपटस्वरूपापादनात्। किञ्चात्यन्ताभावस्य स्वप्रतियोगिसमानदेशत्वस्य विरुद्धस्य यदि स्वीकारः, तर्हि प्रागभावसमानकालीनत्वस्यापि विरुद्धस्य स्वीकारप्रसङ्गः स्यात्, अत आह—*प्रागभावादिसमानकालीनत्वेनेति*॥ असम्भवमाह—*तुच्छ इति*॥ उपसंहरति—*तस्मादिति*॥

सिद्धिव्याख्या

नच—तन्तुषु व्यावहारिकपटसत्त्वकाले तत्र विद्यमानोऽपि तत्पटात्यन्ताभावो यथा तत्र पटसत्त्वाविरोधी, तथा तत्रैव तन्तुषु पटसामग्रीशरीरप्रविष्टस्तत्प्रागभावः स्वयमेव स्वनाशरूपं तमेव पटं न विरुन्ध्यात्; उत्पन्नो वा पटस्तत्रैव तन्तुषु विद्यमानं स्वकाले स्वाभावरूपं प्रागभावं न विरुन्ध्यात्, एवं स एव पटस्तत्रैव तन्तुषु स्वकालेऽपि स्वनाशसहिष्णुश्च, नाशो वा स्वकाले तत्र प्रतियोगिभूतपटसहिष्णुश्च स्यात्, क्लृप्तविरोधत्यागस्य दोषत्वेन त्वयाऽनङ्गीकारादिति—वाच्यम्, भिन्नसत्ताकयोः पटात्यन्ताभाव-पटयोस्तन्तुष्वविरोधेन तस्य पटसहिष्णुत्वेऽपि प्रतियोगिसमसत्ताकयोः प्रागभाव-ध्वंसयोः प्रतियोगिना सह विरोधावश्यंभावेन पटासहिष्णुत्वेन विरोधावश्यकत्वात्, ध्वंस-प्रागभावयोर्निराकरिष्यमाणत्वाच्च॥

*यत्तु*—यथाऽपरोक्षप्रतीत्यन्यथाऽनुपपत्त्या प्रातिभासिकस्य घटादिवत् सत्स्वरूपत्वम्, तथा परोक्षप्रतीत्यन्यथाऽनुपपत्त्या धर्माधर्मादिवदसतोऽपि सत्स्वरूपत्वं स्यात्—इति, *तन्न*; शब्दादिना धर्मादेः परोक्षतया प्रतीयमानत्वेन तदन्यथाऽनुपपत्त्यभावात्। नच—असमादेव वाक्यात् तत्प्रतीतिः, अन्यथाऽसद्वैलक्षण्यज्ञानं न स्यात्, तज्ज्ञानस्य प्रतियोगिज्ञानाधीनत्वात्, असत्प्रतीतिश्च न स्यात्; विषयनिरूप्यप्रतीतिनिरासस्य विषयप्रतीतिं विनाऽयोगात्, असतः प्रतीतिमात्राविषयत्वेऽसत्पदस्याबोधकत्वापत्त्या तत्समभिव्याहृतवाक्यस्याप्यबोधकत्वं च स्यात्; असतोऽसत्त्वेनाप्रतीतावसत्त्वव्यवहारो न स्यात्; असत्त्वप्रकारकप्रतीतेरेव व्यवहारहेतुत्वात्। *तदुक्तम्*—"असद्विलक्षणत्वाद्यैर्ज्ञातव्यमसदेव हि। तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते॥" इति, इति—वाच्यम्; प्रतीत्यभावेऽप्यसतो'ऽसद् नृशृङ्गमि'ति विकल्पमात्रेणैव सर्वोपपत्तेः। *तदुक्तम्*—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति। शब्दज्ञानानुपातित्वं च शब्दश्रवणोत्पत्तिकत्वम्॥

*ननु*—विकल्प इच्छादिवद् ज्ञानान्यवृत्तिर्वा? ज्ञानविशेषो वा? *आद्ये* 'जानामी'त्यनुभवविरोधः, प्रवृत्त्याद्ययोगश्च, *द्वितीये* त्वसतः प्रतीतिरागतैवेति—चेत्, *न*; आद्यपक्षे बाधकाभावात्। नचानुभवविरोधः; 'शशविषाणं जानामी'ति वा 'अनुभवामी'ति वाऽनुभवाभावात्, विकल्पमात्रादेव प्रवृत्त्याद्युपपत्तेश्च। नच—शशशृङ्गस्यासत्त्वाज्ञानदशायां तदस्तित्वज्ञानस्य गोशृङ्गास्तित्वज्ञानवद् मानसाऽपि विशेषो नानुभूयते, इति तस्यापि ज्ञानत्वं न स्यादिति—वाच्यम्; वाक्याभासजन्यत्वाजन्यत्वाभ्यां विशेषस्य स्फुटत्वेन तस्य ज्ञानत्वसंभवात्। नचैवम्—शुक्तिरूप्यादेरपि विकल्पमात्रत्वम्, न तु प्रतीतिरिति स्यादिति—वाच्यम्; 'शब्दज्ञानानुपाती'ति विशेषणेन

न्यायामृतम्

त्रैकालिकनिषेधप्रतियोगित्वमेवात्यन्तासत्त्वम् । 'तत्र तदानीमसदि'त्यनेन तत्र तदा निषेधप्रतियोगित्व-स्येव—'अत्यन्तासदि'त्यनेनापि सर्वत्र सदा निषेधप्रतियोगित्वस्यैव प्रतीतेः । नच—मिथ्याभूतस्यापि स्वरूपेणैव निषेध इति पक्षे तदभावः सप्रतियोगिकः, तुच्छाभावस्तु निष्प्रतियोगिक इति वा, मिथ्याभूतस्य सदा सर्वत्र सद्वैलक्षण्यमात्रम्, तुच्छस्य तु स्वरूपेणैव प्रतिषेध इति वा वैषम्यं वक्तुम्—शक्यम् । अथ मतम्—असतोऽसत्त्वादेवाऽऽत्यन्तिकनिषेधप्रतियोगिताऽपि न—इति, *तन्न* ;

तरङ्गिणी

सस्वरूपत्वं चेत्, तर्हि तुच्छेऽपि स्वात्यन्ताभावसामानाधिकरण्यसहिष्णु स्वरूपं स्यादित्यर्थः । 'सर्वस्मिन्नपि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमि'त्यस्यात्यन्तासच्छब्देन तुल्यार्थत्वमपीत्याह—*तत्र तदानीमिति* ॥ *नचेति* ॥ मिथ्याभूतस्य स्वरूपेण निषेध इति पक्षे तदभावोऽपि निष्प्रतियोगिक एव, नतु सप्रति-योगिकः ; प्रतियोगिस्वरूपस्यैवाभावात्, नापि सदा सर्वत्र सद्वैलक्षण्यमात्रम् ; स्वरूपेणैव प्रति-षेधादित्यर्थः । *असत इति* ॥ असत आत्यन्तिकनिषेधप्रतियोगित्वं नास्ति, मिथ्याभूतस्य तु तदस्ति ;

न्यायामृतकण्टकोद्धारः

अत्यन्तासच्छब्दार्थे विचार्यमाणे तादृशमेवासत्त्वं लभ्यत इत्याह—*तत्र तदानीमिति* ॥ जगद्-सतोर्वैलक्षण्यान्तरमाशङ्क्य निषेधति—*नच मिथ्याभूतस्येति* ॥ *स्वरूपेणैव निषेध इति पक्ष इति* ॥ इति वैषम्यं न वक्तुं शक्यमित्यन्वयः ॥

सिद्धिव्याख्या

शाब्दस्थल एव तदङ्गीकारेण शुक्तिरूप्यादेः शाब्दत्वाभावेन वैषम्यात्, विकल्पस्य ज्ञानत्वे तु तदन्यज्ञानाविषयत्वम-सत्त्वम्, शुक्तिरूप्यादेरसत्त्वे तु प्रतीतिविषयत्वं विकल्पान्यप्रतीतिविषयत्वं चानुपपन्नम्, इति ततो वैलक्षण्यात् सस्वरूपत्वम् ; नृशृङ्गादेश्चोक्तरीत्या निःस्वरूपत्वम् । *एतेन* ( तरङ्गिणी २३८ )—'वस्तुशून्यः' इत्यत्रापि किमपि मोल्लिखतीति वा ? असदेवोल्लिखतीति वा ? *आद्येऽनुभवविरोधः, व्यवहाराद्यनुपपत्तिश्च । न ह्ययं घटादिवत् किमप्यनुल्लिखन्ननुभूयते, *द्वितीये त्विष्टापत्तिरिति—*निरस्तम्* ; सोपाख्यधर्मानुल्लेखित्वस्य वस्तुशून्यरूपत्वादिति । *वस्तुतस्तु*—शशशृङ्गशब्दो निश्चितानन्वयित्वाद् अपार्थको वा, सङ्गतिग्रहणाभावाद् अबोधको वा ॥

*ननु*—अपार्थकशब्देनाप्रत्यायकोक्तावनन्वयानिश्चयदशायां प्रवृत्तिपर्यन्तप्रतीत्यनुभवविरोधः, असत्प्रत्यायकोक्तौ चेष्टापत्तिरिति—चेत्, *न* ; 'शशविषाणं जानामी'त्यनुभवाभावात्, प्रवृत्त्युपपत्तेरुक्तत्वाच्च । नच—यौगिक-शब्दानामवयवसङ्गतिव्यतिरेकेण पृथक्सङ्गत्यनपेक्षतया सतो वाऽसतो वाऽर्थस्य बोधनं संभवतीति—शङ्क्यम् ; तावता सतोऽसतो वाऽवयवार्थस्यैव बोधनसंभवेऽपि समुदायार्थस्य बोधनासंभवात्. समुदायस्य शशे शृङ्गाभावार्थकत्वात् । नच—तत्र तस्याः शक्तिरिति—वाच्यम् ; 'नास्ती'तिपदसहितस्य तस्य तत्र शक्तेः संभवादिति द्रष्टव्यम् ॥

*यत्तु*—'सर्वस्मिन् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमि'त्यस्यात्यन्तासच्छब्देन तुल्यार्थकत्वाद् अत्यन्तासत्त्वं दुर्वारम्, तुल्यार्थकत्वं च 'तत्र तदानीमसदि'त्यनेन तदा निषेधप्रतियोगित्वस्येवा'त्यन्तासदि'त्यनेनापि सर्वत्र निषेधप्रतियोगित्वस्यैव प्रतीतेर्द्रष्टव्यम् । नच मिथ्याभूतस्यापि स्वरूपेणैव प्रतिषेध इति पक्षे तदभावः सप्रतियोगिकः, तुच्छाभावो निष्प्रतियोगिक इति वा, मिथ्याभूतस्य सदा सर्वत्र सद्वैलक्षण्यमात्रम्, तुच्छस्य स्वरूपेणैव प्रतिषेध इति वा वैषम्यं वक्तुं शक्यम् ; मिथ्याभूतस्य स्वरूपेणैव निषेध इति पक्षे स्वरूपस्यैवाभावेन तदभावस्यापि निष्प्रतियोगिकतया सप्रतियोगिकत्वाभावात्, स्वरूपेणैव प्रतिषेधे सदा सर्वत्र सद्वैलक्षण्यायोगाच्च—इति, *तन्न* ; शब्दार्थसाम्येऽपि 'क्वचिदप्युपाधावि'त्यादिनाऽत्यन्तासत्त्वाभावस्य प्रपञ्च उक्तत्वात्, असतोऽसत्त्वादेवात्यन्तिकनिषेधा-योगेन मिथ्याभूतस्य तद्योगेन तत्कृतस्य मिथ्याभूतेऽसद्वैलक्षण्यस्य सिद्धेश्च । नच—असत्, नात्यन्ताभावप्रतियोगि,

न्यायामृतम्

असत्त्वस्योक्तनिषेधप्रतियोगित्वरूपत्वेन हेतोर्विरुद्धत्वात्, असतोऽसत्त्ववत् सद्वैलक्षण्यवत् त्वयोच्यमान-प्रतियोगित्वाभाववत् परोक्षज्ञान-व्यवहारौ प्रति विषयत्ववद् असद्वैलक्षण्यं प्रति प्रतियोगित्ववच्च निषेधप्रति-योगित्वस्याप्युपपत्तेश्च, प्रागभावादिदशायामसत एव घटादेस्तत्प्रतियोगित्वदर्शनेन प्रतियोगित्वस्य

तरङ्गिणी

तथाच तत्कृतमेव मिथ्याभूतस्यासद्वैलक्षण्यमित्यर्थः। *असत्त्वस्येति* ॥ असत्, नात्यन्ताभावप्रतियोगि, असत्त्वादित्यत्र हेतूकृतमसत्त्वमत्यन्ताभावप्रतियोगित्वरूपमुक्तसाध्येन विरुद्धमित्यर्थः। *ननु* हेतू-कृतमसत्त्वं नात्यन्ताभावप्रतियोगित्वम्, किन्तु सदनिर्वाच्यभिन्नत्वम्, अतो न विरोध इत्यत आह—*असतोऽ-सत्त्ववदिति* ॥ असत्त्वादीनां धर्मिसत्तानिरपेक्षाणां यथाऽसति विद्यमानता, तथोक्तनिषेधप्रतियोगित्वस्या-पीत्यर्थः। *ननु* धर्मिसत्तानपेक्षाणां धर्माणां धर्मिणं विनाऽप्यवस्थानमस्तु, अत्यन्ताभावप्रतियोगित्वं तु न तथेत्याशङ्क्याह—*प्रागभावादीति* ॥ तत्प्रतियोगित्वेति* ॥ विद्यमानप्रागभावादिप्रतियोगित्वेत्यर्थः ॥ *प्रतियोगित्वस्येति* ॥ अभावप्रतियोगित्वस्येत्यर्थः ॥ तथाचाभावप्रतियोगित्वाविशेषाद् यथा विद्यमानप्राग-

न्यायामृतकण्टकोद्धारः

विरुद्धत्वादिति* ॥ त्रैकालिकनिषेधप्रतियोगित्वरूपासत्त्वेन तदभावसाधनं विरुद्धमित्यर्थः ॥ नच—अन्यदेवासत्त्वमिति—वाच्यम्; इतोऽतिरिक्तस्यासत्त्वनिर्वचनस्य निराकृतत्वादिति भावः ॥ किञ्चासति कस्यापि धर्मस्याभावात् त्रैकालिकनिषेधप्रतियोगित्वरूपधर्मासम्भव इति भावः? अथवा धर्म्यसत्त्वे धर्मस्याप्यसत्त्वमित्याशयः? आद्य आह—*असतोऽसत्त्ववदिति* ॥ अन्यथा हेतु-साध्ययोरभावे बाधासिद्ध्यापातादिति भावः। द्वितीय आह—*प्रागभावादिदशायामिति* ॥ *ननु* घटादेः कालान्तरे

सिद्धिव्याख्या

असत्त्वात्, इत्यत्र हेतूकृतमसत्त्वमत्यन्ताभावप्रतियोगित्वरूपम्, इत्युक्तसाध्यविरोधीति—वाच्यम्; हेतूकृतासत्त्वस्य सदनिर्वाच्यभिन्नत्वादिरूपत्वे विरोधाभावात् ॥

*एतेन*—असत्त्वं प्रमाणसंबन्धाविषयत्वं विवक्षितम्, तथाच तेन तादृशनिषेधाप्रतियोगित्वाभावसाधने विरोधशङ्कैव नेति कैश्चिदुक्तम्—*निरस्तम्*; असत्, स्वरूपेण न सार्वत्रिक-त्रैकालिकनिषेधप्रतियोगि, प्रमाणसंबन्धा-विषयत्वात्, इति साधने तस्यैवानुमानप्रमाणत्वेन तत्संबन्धावश्यंभावेनासति प्रमाणसंबन्धाविषयत्वरूपहेतोः स्वरूपा-सिद्ध्यापत्त्या तस्य हेतूकर्तुमशक्यत्वात्। *एतेन*—हेत्वन्तरानुपलब्ध्या पारिशेष्यादसत्त्वस्यैव हेतूकर्तव्यतया विरोधतादवस्थ्यमिति—*निरस्तम्*; असत्तुच्छादिपदजन्यप्रतीतिविशेष्यत्वादिरूपहेत्वन्तरोपलब्धेश्च ॥ नच—तस्य प्रपञ्चेऽपि सत्त्वेन व्यभिचारः, न ह्यसत्पदाविना प्रपञ्चो लक्षणयाऽपि न प्रतिपाद्यत इत्यस्तीति—वाच्यम्; शक्त्या तुच्छादिपदजन्यप्रतीतिविशेष्यत्वेन हेतुत्वे व्यभिचाराभावात्। नच—येनापराधेनासति प्रतियोगित्वं नेत्यभ्युपगम्यते, तेनैवापराधेनासतस्तुच्छादिपदाशक्यत्वमभ्युपगम्यतामिति—वाच्यम्; तुच्छादिपदानामसति शक्तिग्राहककोशादि-विरोधप्रसङ्गेन तदशक्यत्वस्याभ्युपगन्तुमशक्यत्वात्। नच—संज्ञारूपेण तुच्छादिपदस्य शक्त्या देवदत्तादिप्रतिपादकत्व-संभवेन तत्पदजन्यप्रतीतिविशेष्यत्वस्य तत्र व्यभिचार इति—वाच्यम्; संज्ञारूपेण तुच्छादिपदजन्यप्रतीतिविशेष्य-भिन्नत्वस्यापि विशेषणेन तत्राव्यभिचारात्। तस्मादसत्त्वस्य सदनिर्वाच्यभिन्नत्वादिरूपत्वे न विरोध इति तत्त्वम् ॥

*यदपि*—असति निरुच्यमान-प्रतियोगित्वाभावपरोक्षज्ञान-व्यवहारप्रतीतिविषयत्वादिवदसद्वैलक्षण्यवच्च निषेध-प्रतियोगित्वमप्युपपद्यत—इति। नच—धर्मिसत्तानपेक्षाणां धर्माणां धर्मिणं विनाप्यवस्थानसंभवेऽप्यत्यन्ताभाव-प्रतियोगित्वं न तथा तिष्ठतीति—वाच्यम्; प्रागभावादिदशायामसत एव घटादेर्विद्यमानप्रागभावप्रतियोगित्वस्य धर्मिसत्त्वनिरपेक्षस्य दर्शनेनाभावप्रतियोगित्वाविशेषाद् विद्यमानप्रागभावप्रतियोगित्वस्य धर्मिसत्तानपेक्षत्व-

### न्यायामृतम्

रूपादिवद् धर्मिसत्तानपेक्षत्वाच्च, कालान्तरे सत्त्वस्येदानीमनुपयोगात् । शिष्टमनिर्वाच्यत्वभङ्गे वक्ष्यते ।

### तरङ्गिणी

भावादिप्रतियोगित्वं धर्मिसत्तानपेक्षम्, तथाऽत्यन्ताभावप्रतियोगित्वमपीत्यर्थः । 'रूपादिवदि'ति व्यतिरेक-दृष्टान्तः । *ननु* विद्यमानप्रागभावादिप्रतियोगित्वं न धर्मिसत्तानपेक्षम् ; तद्धर्मिणो घटादेः प्रागभावादूर्ध्वं प्रध्वंसात् प्राक् सत्त्वादित्यत आह—*कालान्तर इति* ॥ यस्मिन् काले विद्यमानप्रागभावादिप्रतियोगित्वं धर्मो वर्तते, तस्मिन् काले तद्धर्मी नास्ति, अन्यदा तु सत्यपि धर्मिणि विद्यमानप्रागभावादिप्रतियोगित्वरूपधर्म एव नास्ति; अतस्तादृशधर्मस्य धर्मिणं विनैवावस्थानमित्यर्थः । *ननु* असतो नाभावप्रतियोगित्वम् ; तत्प्रति-योगित्वेऽसद्वैलक्षण्यस्य प्रयोजकत्वात्, घटादेरप्यविद्यमानतादशायां न विद्यमानप्रागभावप्रतियोगित्वरूपधर्म प्रत्याश्रयत्वम्, किन्तु प्रागभावादेरेव विद्यमानस्य घटप्रतियोगिकत्वरूपधर्मं प्रत्याश्रयत्वम् ; एवं सद्वैल-क्षण्यमपि नासति, किन्तु सत्येवासद्वैलक्षण्यम् ; प्रतियोगित्वाभावोऽपि नासति, किन्तु प्रतियोगित्वाभावेऽ-सदाश्रयकत्वम्, एवं ज्ञान-व्यवहारयोरेवासद्विषयकत्वम्, नत्वसति तद्विषयत्वम् ; एवमसद्वैलक्षण्य एवासत्प्रतियोगिकत्वम्, नत्वसद्वैलक्षण्यं प्रत्यसतः प्रतियोगित्वमित्याशङ्क्याह—*शिष्टमिति* ॥ "यदुक्तम्—

### न्यायामृतकण्टकोद्धारः

सत्त्वात् प्रागभावप्रतियोगित्वरूपधर्माधिकरणत्वं भविष्यतीत्यत आह—*कालान्तर इति* ॥ *ननु केषाञ्चिद् धर्माणां धर्मिसत्त्वापेक्षत्वं केषाञ्चिद् नेत्यत्र किं नियामकम् ? अत आह—*शिष्टमिति* ॥

### सिद्धिव्याख्या

घटत्यन्ताभावप्रतियोगित्वस्यापि धर्मिसत्तानपेक्षत्वसंभवात् । विद्यमानप्रागभावप्रतियोगित्वं न धर्मिसत्तानपेक्षम्, धर्मिणो घटादेः प्रागभावादूर्ध्वं प्रध्वंसात् प्राक् सत्त्वादित्यपि—नच वाच्यम् ; यस्मिन् काले विद्यमानप्रागभावादि-प्रतियोगित्वं धर्मो वर्तते, तस्मिन् काले धर्मी नास्ति ; अन्यदा तु सत्यपि धर्मिणि विद्यमानप्रागभावप्रतियोगित्वादि-रूपधर्म एव नास्ति ; अतस्तादृशधर्मस्य धर्मिणं विनैवावस्थानम्—इति, *तन्न* ; असतो नाभावप्रतियोगित्वम् ; तत्प्रतियोगित्वेऽसद्वैलक्षण्यस्य प्रयोजकत्वात् । नच—तथा सति लाघवायासत्त्वस्यैव तत्प्रयोजकत्वापत्त्याऽनिर्वचनीयस्य सद्विलक्षणस्याभावप्रतियोगित्वं न स्यादिति—वाच्यम् ; अस्मन्मतेऽसतोऽपि भावरूपत्वे लाघवानवतारेण तद्वैलक्षण्य-स्यैव प्रयोजकत्वावश्यंभावात् ॥

*यदुक्तम्*—घटादेरविद्यमानतादशायां विद्यमानप्रागभावप्रतियोगित्वरूपधर्मं प्रत्यायतनत्वम्—इति, *तदपि न* ; प्रागभावादौ घटादिप्रतियोगिकत्वमेव, नतु घटे प्रागभावप्रतियोगित्वम् । नच—घटादेः प्राग-भावप्रतियोगित्वाभावे प्रागभावादिष्वपि तत्प्रतियोगिकत्वं न स्यादिति—वाच्यम् ; धर्मिणो घटस्याभावेन धर्मस्याभावेऽपि घटप्रतियोगिकत्वस्य धर्मिणः सत्त्वेन तद्धर्मस्य तत्प्रतियोगिकत्वस्य संभवात् । नच—प्रागभावादे-र्घटप्रतियोगिकत्वे घटादेः प्रागभावप्रतियोगित्वमवर्जनीयमेवेति—शङ्क्यम् ; इष्टापत्तेः । धर्मिसत्त्वासत्त्वयोरेव विरोधात् । एवं सद्वैलक्षण्यमपि नासति, किंतु सत्येवासद्वैलक्षण्यम् । प्रतियोगित्वाभावोऽपि नासति, किन्तु प्रतियोगित्वाभावेऽसदाश्रयत्वम् । एवं ज्ञान-व्यवहारयोरेवासद्विषयकत्वम्, नत्वसतो ज्ञान-व्यवहारविषयत्वम् । एवमसद्वैलक्षण्य एवासत्प्रतियोगिकत्वम्, नत्वसद्वैलक्षण्यं प्रत्यसतः प्रतियोगित्वम्, इति न कोऽपि दोषः ॥

केचित्तु—असत्त्वं सत्त्वाभावः; स एव सद्वैलक्षण्यरूपः, स च वस्तुगत्या निरधिकरणोऽप्यधिकरणवत्त्वेन प्रतीतिमात्रेण निरूप्यते, नतु तस्य वास्तवसत्ताऽधिकरणवत्ता वाऽस्ति ; एवमतीताभावाधिकरणस्यैव मयोच्यमानप्रति-योगित्वाभावेऽप्यधिकरणसत्त्वनिरपेक्षता, इति तस्याप्यसज्ज्ञानमात्रनिरूप्यत्वम् । एवं ज्ञान-व्यवहारौ प्रति विषयत्व-मपि । नह्यतीतानागतवस्तुनो ज्ञान-व्यवहारविषयत्वं स्वकाले तद्वस्तुस्वरूपसत्त्वनिबन्धनमिति शक्यमभ्युपगन्तुम् । एव-

न्यायामृतम्

एतेन—यदुक्तं मकरन्दे—असतोऽप्रसक्तेर्निषेधाप्रतियोगित्वमिति, तच्च निरस्तम् ; असतोऽप्रसक्तौ

तरङ्गिणी

अभावप्रतियोगित्वं प्रत्यसद्वैलक्षण्यं प्रयोजकमिति, तन्न ; तथा सति लाघवाय सत्त्वस्यैव तत्प्रयोजकत्वापत्त्याऽनिर्वचनीयस्य सद्विलक्षणस्याभावप्रतियोगित्वं न स्यात् । तस्मात् प्रतीतत्वमात्रेण सत इवासतोऽप्यभावप्रतियोगित्वमुपपद्यते । यच्चोक्तम्—प्रागभावादेरेव घटादिप्रतियोगिकत्वमित्यादि, तदपि न ; घटादेः प्रागभावप्रतियोगित्वाभावे प्रागभावादिष्वपि तत्प्रतियोगिकत्वं न स्यात्, एवं प्रागभावादेर्घटादिप्रतियोगिकत्वे घटादेः प्रागभावप्रतियोगित्वादिकमवर्जनीयमेवेत्यादिकं वक्ष्यत इत्यर्थः । *असतोऽप्रसक्तेरिति* ॥ प्रतियोग्यधिकरणसंसर्गज्ञानं प्रसक्तिः । तथाच निषेधप्रतियोगित्व-तदभावकृतमेव मिथ्याऽसतोर्वैषम्यमिति भावः ।

न्यायामृतकण्टकोद्धारः

उक्तदूषणं मकरन्दकारमतेऽप्यतिदिशति—*एतेनेति* ॥ अत्राप्रसक्तिर्ज्ञानसामान्याभावो वाऽभिप्रेतः ?

सिद्धिव्याख्या

मसद्वैलक्षण्यमप्यसन्निष्ठात्यन्ताभावप्रतियोगिधर्मत्वस्वरूपमसज्ज्ञानमात्रनिरूप्यम् । एवं चोक्तोदाहरणेषु न क्वाप्यसत्त्वादीनामधिकरणस्वरूपसत्त्वापेक्षत्वम्, प्रतियोगित्वं त्वधिकरणस्वरूपसापेक्षम्, इत्यसत्त्वादितो वैषम्यान्न तद्दृष्टान्तेन निषेधप्रतियोगित्वस्योपपत्तिः—इत्याहुः ; तन्न ; प्रतियोगित्वस्याप्यभावज्ञानजनकज्ञानविषयत्वरूपस्यासत्त्वादिवदेव धर्मिस्वरूपनिरपेक्षत्वोपगमात् । शशविषाणत्वादिप्रकारेण शशविषाणज्ञाने 'शशविषाणं नास्ति' इत्यसद्वैलक्षण्यादेस्तत्प्रतीत्यधीनसिद्धिकत्वात् । असतोऽप्रसक्तत्वापराधेन यदि निषेधप्रतियोगित्वं न स्यात्, तदा ब्रह्म-जगतोस्तत्प्रतियोगिकभेदवत्स्वरूपासद्वैलक्षण्यं न सिद्ध्येत् । निषेधप्रतियोगित्वसिद्धौ प्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसक्तेरिव भेदप्रतियोगित्वसिद्धौ प्रतियोगितावच्छेदकाधिकरणसंसर्गज्ञानरूपप्रसक्तेः कारणत्वेन तदभावे निषेधप्रतियोगित्वस्येव, तदभावेऽपि भेदप्रतियोगित्वस्य कारणाभावेन सिद्ध्यसंभवात् । किंचासतः प्रसक्तिरवश्यं स्वीकार्या ; अन्यथा "नासदासीन्नो सदासीत् तदानीम् । तम आसीत्" इति श्रुत्या निषेधबोधनाभावप्रसङ्गात्, प्रत्यक्षेण प्रतियोगिप्रसक्तिं विना निषेधबोधसंभवेऽपि शब्देन प्रसक्तिं विना निषेधबोधनासंभवः ; तदभावज्ञानस्यानुभवसिद्धत्वात् । एवं 'शशविषाण-गोविषाणे' इति समूहालम्बनादिकमादाय 'शशविषाणं नास्ती'ति निषेधज्ञानविशेष्यत्वस्य सति गोविषाणे सत्त्वेन तत्र नातिव्याप्तिः ; 'शशविषाणं नास्ती'ति ज्ञाने शशविषाणत्ववैशिष्ट्यविषयकत्वेनैवोक्तसमूहालम्बनस्य जनकत्वात् । किंच प्रपञ्चे ब्रह्मणि चासद्वैलक्षण्यमसन्निष्ठात्यन्ताभावप्रतियोगिधर्मत्वस्वरूपं न परेणापि शङ्क्यम् ; असन्निष्ठत्वस्य तदधिकरणत्वरूपत्वेनाधिकरणस्वरूपत्वप्रसङ्गात् । तस्मादसद्वैलक्षण्यधर्मविशेषवत् प्रतियोगित्वादिधर्मविशेषोऽपि धर्मिस्वरूपसत्त्वनिरपेक्ष एवेति परेणापि स्वीकर्तव्यम्, इति नायं पन्थाः । अत एव—"तदेव निषेधप्रतियोगि भवति, यत्प्रसक्तिमद्भवति, असच्च न प्रसक्तिमत्, अतो न निषेधप्रतियोगि, नच ज्ञानमात्रं प्रसक्तिः ; तथा सत्यप्रसक्तप्रतिषेधत्वस्य क्वापि दोषत्वाभावप्रसङ्गात्, किंतु प्रतियोग्यधिकरणसंसर्गज्ञानम्, नह्यसतः क्वचिदप्यधिकरणे संसर्गज्ञानं संभवति ; सामग्रीविरहात्, ततोऽसति निषेधप्रतियोगित्वं नाङ्गीकारार्हम्" इति मकरन्दोक्तमपि—साधु ;

*यत्तु दूषणम्*—असतोऽप्रसक्तौ ब्रह्म-जगतोरसद्वैलक्षण्यस्य "नासदासीत्" इति श्रौतनिषेधस्य चासिद्ध्यापातेन, तथाऽसति सद्वैलक्षण्यस्य चासिद्ध्यापातेन चासतो ज्ञानमवश्यं स्वीकार्यम् ; असद्वैलक्षण्यादेस्तत्प्रतीत्यधीनसिद्धिकत्वात्, असतोऽप्रसक्त्याऽपराधेन यदि निषेधप्रतियोगित्वं न स्यात्, तदा ब्रह्म-जगतोरसत्प्रतियोगिकभेदवत्स्वरूपमसद्वैलक्षण्यं न सिद्ध्येत् । निषेधप्रतियोगित्वे सिद्धे प्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसक्तेरिव, भेदप्रतियोगित्वसिद्धौ प्रतियोगितावच्छेदकाधिकरणसंसर्गज्ञानरूपप्रसक्तेः कारणत्वेन तदभावे निषेधप्रतियोगित्वस्येव, तदभावेऽपि भेदप्रतियोगित्वस्य कारणाभावेन सिद्ध्यसंभवात् । किंचासतोऽपि प्रसक्तिरवश्यं स्वीकार्या ; अन्यथा "नासदासीन्नो सदासीत्, तदानीं तम आसीत्" इत्यादिश्रुत्या निषेधबोधनासंभवात्, प्रत्यक्षेण प्रतियोगिप्रसक्तिं विना निषेधबोधसंभवेऽपि शब्देन

### न्यायामृतम्

ब्रह्म-जगतोरसद्वैलक्षण्यस्य, "नासदासीदि"ति श्रौतनिषेधस्य, असति च सद्वैलक्षण्यस्य प्रतियोगित्वाभावस्य चासिद्ध्यापातात्, तस्यापि प्रतियोगिप्रतीत्यधीनसिद्धिकत्वात् ॥

*ननु*—तत्र शब्दाभासादिना बुद्धिपूर्वारोपेण वा प्रसक्तिर्वा, परार्थेन शब्देनाप्रसक्तस्यानिषेधेऽपि शब्दाभासादिमूलके प्रतियोगिस्मृत्यादिके सति प्रत्यक्षेणाप्रसक्तस्यैव वा निषेधो युक्तः; अन्यथाऽङ्गुल्यग्रे हस्तिशताभावो न सिद्ध्येदिति—चेत्, *समं प्रकृतेऽपि*; 'शशशृङ्गं नास्ती'त्यबाधितप्रतीतेः ।

### तरङ्गिणी

*ब्रह्म-जगतोरिति* ॥ ब्रह्म-जगतोरसद्वैलक्षण्यस्यासत्तादात्म्यप्रसक्तिपूर्वकत्वादित्यर्थः । *नासदासीदिति* ॥ "नासदासीद् नो सदासीत् तदानीमि"तिश्रुत्या तदानींशब्दानिर्दिष्टेऽसतो ज्ञानाभावे न तत्र तन्निषेधो बोध्येतेत्यर्थः । *असति चेति* ॥ निषेधाधिकरणे प्रतियोगिज्ञानाभावस्यात्रापि सत्त्वादित्यर्थः । *तस्यापीति* ॥ निषेध-प्रतियोगित्वाभावस्येत्यर्थः । यद्यप्यसद्वैलक्षण्यादेरपि प्रतियोगिप्रतीत्यधीनसिद्धिकत्वम्; तथापि परोक्त-त्वात् प्रतियोगित्वाभावस्यैव ग्रहणम् । निषेधाधिकरणे प्रतियोगिप्रसक्तिः, तत्र प्रसक्त्यभावेऽपि वा निषेध इति शङ्कते—*ननु* तत्रेति* ॥ *परार्थेनेति* ॥ परप्रवृत्तिनिवृत्तिपरेणेत्यर्थः । *प्रत्यक्षेणेति* ॥ एतेन—"नासदासीदि"ति श्रौतनिषेधो—व्यावर्तितः; स्वयंप्रकाशे ब्रह्मण्यसद्वैलक्षण्यस्य प्रत्यक्षेणा'स्ति स्फुरणमि'त्यादिना प्रतीतेः । जगति तु स्पष्टमेवासद्वैलक्षण्यं प्रत्यक्षसिद्धम्, अप्रत्यक्षेऽप्यसति सद्वैलक्षण्यस्य प्रतियोगित्वाभावस्य च वायौ रूपाभाववत् प्रत्यक्षत्वसम्भवादित्यर्थः ॥ *अन्यथेति* ॥ शब्दाभासादिना प्रसक्तिर्वाऽप्रसक्तस्यैव वा प्रत्यक्षेण निषेध इत्यनङ्गीकार इत्यर्थः ॥ *सममिति* ॥ शब्दाभासादिना प्रसक्तौ सत्यामप्रसक्तस्यैव च शशशृङ्गादेरपि निषेधप्रतियोगित्वं भविष्यति । तथाच निषेधप्रतियोगित्व-तदभावकृतोऽपि नानिर्वचनीया-सतोर्भेद इत्यर्थः ॥ *शशशृङ्गमिति* ॥

### न्यायामृतकण्टकोद्धारः

आरोपरूपज्ञानाभावो वा ? नाद्य इत्याह—*असत इति* ॥ *तस्येति* ॥ असद्वैलक्षण्यादेरित्यर्थः । आद्य-द्वितीययोः प्रतियोगिज्ञानत्वेन तृतीय-चतुर्थयोरधिकरणत्वेन चासद्ज्ञानस्यापेक्षितत्वादिति भावः ॥ द्वितीयेऽप्येतदेवोत्तरम् । असद्वैलक्षण्यज्ञानस्य श्रौतनिषेधस्यारोपमूलकत्वादिति भावः ॥

'असद्वैलक्षण्यादिसिद्धिर्न स्यादि'त्यत्र समाधिं शङ्कते—*नन्विति* ॥ प्रसक्तौ शब्दाभासादि बुद्धिपूर्वकारोपेण वेति हेतुद्वयम् । तथाच प्रसक्तस्यैव निषेध इति शेषः । अथवा—प्रसक्तस्यैव प्रत्यक्षेण निषेध इत्यन्वयः । नच—प्रतियोगिज्ञानाभावात् कथमप्रसक्तस्य प्रत्यक्षेण बाधः? इति—वाच्यम्; शब्दाभासजन्यानुभवजन्यसंस्कारमूलकप्रतियोगिस्मृत्यादिसम्भवात् । तर्हि शब्देनाप्यप्रसक्तनिषेधः स्यादिति—चेत्, न; शब्दस्य परार्थत्वेन परप्रसक्तस्यैव निषेद्धव्यत्वेनाप्रसक्तनिषेधायोगादित्यर्थः ॥ साम्यमेवोपपादयति—*शशशृङ्गमिति* ॥

### सिद्धिव्याख्या

प्रसक्तिं विना निषेधबोधनासंभवात्, शब्दस्य परार्थत्वेन प्रसक्तिं विना प्रवृत्त्यवायोगात् । नच—असतो ज्ञानमात्रमपि दुर्लभम्, प्रसक्तिरूपज्ञानविशेषस्तु सुतरामिति—वाच्यम्; तथा सत्यसति सद्वैलक्षण्यस्य त्वयोच्यमाननिषेध-प्रतियोगित्वासिद्ध्यापत्तेः, तस्यासत्प्रतीत्यधीनसिद्धिकत्वात्, अधिकरणज्ञानं विना तत्राभावज्ञानायोगात्—इत्याह *तत्र*; ब्रह्म-जगतोरसति च शब्दाभासादिना बुद्धिपूर्वकारोपेण वा प्रसक्तिः, परप्रवृत्तिनिवृत्तिपरेण शब्देनाप्रसक्ता-निषेधेऽपि शब्दाभासादिमूलके प्रतियोगिस्मृत्यादिके सति प्रत्यक्षेणाप्रसक्तस्यैव वा निषेधोपपत्तिः । शब्दाभासादिना

### न्यायामृतम्

नच तत्रापि बुद्धिपूर्वकमारोपितस्यानिर्वाच्यस्यैव शृङ्गस्य निषेधः ; अनाभासस्यैवारोप्यनिषेध इति तार्किकमते, आभासस्यानिर्वाच्यस्य प्रसक्त्याऽनाभासस्य निषेध इति त्वन्मते चानिर्वाच्यान्यस्यैव शृङ्गस्य निषेद्धव्यत्वात्, जगदादावनिर्वाच्यभूताभासासद्वैलक्षण्यमेव, नत्वनाभासासद्वैलक्षण्यमित्यापाताच्च ॥

### तरङ्गिणी

यथाऽनुभवसिद्धाया 'अङ्गुल्यग्रे हस्तिशतं नास्ती'ति प्रतीतेर्दुरपह्नवत्वात् तदुपपादकमसतः प्रसक्त्यादिकं कल्प्यते, तथा 'शशशृङ्गं नास्ती'ति प्रतीतेर्दुरपह्नवत्वात् तदुपपादकमपि कल्पनीयमेवेत्यर्थः ॥ *अबाधितेति* ॥ निर्बाधसाक्षिसिद्धेत्यर्थः ॥ *नच तत्रापीति* ॥ 'शशशृङ्गं नास्ती'त्यत्र न शशशृङ्गस्यासतो निषेधः, येन तदुपपादकमसतः प्रसक्त्यादिकं कल्प्यते, किंतु शुक्तौ रूप्यनिषेध इव शशे शृङ्गस्यैव निषेध इत्यर्थः ॥ *शृङ्गस्येति* ॥ शशशृङ्गस्येत्यर्थः । यथाऽऽपणस्थरूप्यसदृशस्यैवानिर्वचनीयरूप्यस्य शुक्तावारोपो निषेधश्च, तथाऽसदन्यस्यैवानिर्वचनीयस्यासदाभासस्य शशशृङ्गस्य प्रतिषेध इत्यर्थः ॥ *अनाभासस्यैवेति* ॥ आपणस्थरूप्यस्थानीयस्यानिर्वाच्यस्य शशशृङ्गभिन्नस्यानाभासशशशृङ्गस्यैव निषेद्ध-

### न्यायामृतकण्टकोद्धारः

*अनिर्वाच्यान्यस्येति* ॥ आभासान्यस्येत्यर्थः । तथाचानाभासव्यावहारिकशशशृङ्गाभावाद् अनाभासत एव शशशृङ्गस्य निषेध इति भावः । यद्याभासप्रतीत्याऽनाभासनिषेधो न स्यात्, तदा दोषमाह—*जगदादाविति* ॥

### सिद्धिव्याख्या

प्रसक्तिर्वा, अप्रसक्तस्यैव वा प्रत्यक्षेण निषेध इत्यनङ्गीकारेऽङ्गुल्यग्रे हस्तिशताभावो न सिद्ध्येत् । नच—यथाऽनुभवसिद्धाया 'अङ्गुल्यग्रे हस्तिशतं नास्ती'ति प्रतीतेर्दुरपह्नवत्वात् तदुपपादकं शब्दाभासादिप्रसक्त्यादिकं कल्प्यते, तथा 'शशशृङ्गं नास्ती'ति प्रतीतेर्दुरपह्नवत्वात् तदुपपादकमपि कल्पनीयम् ; तथाच शब्दाभासादिना प्रसक्तौ सत्यामप्रसक्तस्यैव वा शशशृङ्गादेर्निषेधप्रतियोगित्वं भविष्यति, इति निषेधप्रतियोगित्व-तदभाववतोरपि नानिर्वचनीयसतोर्भेदसिद्धिरिति—वाच्यम् ; तर्हि ज्ञानमात्रं न प्रसक्तिः, तन्मात्रस्य सर्वत्र सुलभत्वेनाप्रसक्तप्रतिषेधस्य क्वाप्यदोषत्वापत्तेः, किन्तु कलञ्जभक्षणादेरिव रागरूपा वाऽधिकरणप्रतियोगिताऽवच्छेदकारोपरूपा वा वाच्या । तत्रासतः कलञ्जभक्षणादेरिवेष्टसाधनत्वाभावेन रागरूपप्रसक्तिरसंभाविनी, इति द्वितीयैव वाच्या ; सा च शब्दाभासकृता वा बुद्धिपूर्वकारोपरूपा वा स्यात् । तथाचासत्त्वेनाभिमतस्य तादृशारोपविषयत्वेनास्मदभिमतमनिर्वाच्यत्वमेव स्यात्, नतु त्वदभिमतमत्यन्तासत्त्वम् ; अङ्गुल्यग्रे हस्तिशताभावे बुद्धिपूर्वकारोपरूपप्रसक्तिसंभवादविरोधः । न ह्येवमत्यन्तासति नृशृङ्गादौ बुद्धिपूर्वकारोपः संभवति ; संभवे वाऽसंभवे वा तस्यानिर्वाच्यत्वमेव स्यात्, न त्वत्यन्तासत्त्वमित्युक्तम् । एवमाभासस्य प्रसक्त्याऽनाभासस्य निषेध इति पक्षे प्रसक्तस्यैवाभासस्य निषेध इति पक्षेऽपि चासदन्यस्यैव नृशृङ्गस्य निषेधप्रतियोगित्वं सिद्ध्यति ; तस्यैव प्रतियोगितावच्छेदकनृशृङ्गत्वावच्छिन्नत्वात्, असच्छृङ्गस्यातथात्वात् । किञ्च 'शशशृङ्गं नास्ती'ति प्रतीतेः शशाधिकरणकशृङ्गाभावविषयकत्वेनान्यथासिद्धतया नासच्छृङ्गनिषेधप्रतियोगित्वसाधकत्वमिति ॥

*यत्त्वत्र दूषणम्*—विशेषादर्शनदशायां गोविषाणशब्दाद् विशिष्टं गोविषाणं बुध्वा'ऽश्वे गोविषाणं नास्ती'ति प्रतीत्या गोविषाणस्येव शशविषाणशब्दाद् विशिष्टं शशविषाणं बुध्वा 'गवि शशविषाणं नास्ती'ति प्रतीत्या शशविषाणस्य तादृशस्यैव निषेधप्रतियोगित्वमनुभूयत इत्यविवादम्, अन्यथाऽनुभवकलहे प्रवृत्तस्योन्मत्तवदुपेक्षणीयत्वापत्तेः—इति, *तन्न* ; तस्याप्रसक्तत्वेन निषेधानुपपत्तेः । नच—गोविषाणशब्दाद् विषाणस्येव शशविषाणशब्दाद् वाक्यार्थविधयोपस्थितस्य पुनः शशविषाणशब्दप्रतिपाद्यं किञ्चिदिति शब्देन रूपान्तरेणोपस्थितस्यानात्मन्यात्मन इव संसृष्टतया कुसूलादौ शशविषाणस्य बुद्धिपूर्वकमारोपरूपप्रसक्तिः संभवतीति—वाच्यम् ; एवं तस्य तत्र बुद्धिपूर्वकारोपविषयत्वेऽनिर्वचनीयत्वमेव स्यात्, नत्वसत्त्वमित्युक्तत्वात् । *नन्वेवम्*—अनात्मन्यारोपितस्यात्मनोऽ

न्यायामृतम्

*ननु*—सदा सर्वत्राविद्यमानत्वमसत्त्वं चेत्, अनाश्रितात्मादिविभुद्रव्यात्यन्ताभावोऽपि केवलान्वयी, इत्यात्मादिरप्यसन् स्यादिति—चेत्, *तर्हि* त्वन्मतेऽप्यात्मा मिथ्या स्यात्;

तरङ्गिणी

व्यत्वादित्यर्थः। तथाचानाभासस्यासतः प्रतिषेधार्थं तत्प्रसक्तिस्त्वयाऽपि वाच्येत्यभिसन्धिः ॥ *आभासस्येति* ॥ यद्यपि स्वरूपेण रूप्यादेः प्रतिषेध इति प्रस्तुते पक्षेऽनाभासस्य न निषेधः, किन्त्वाभासस्यैव; तथापि मतान्तरस्यापि त्वयाऽनुरोद्धव्यत्वादिति भावः ॥ *जगदादाविति* ॥ यदि 'शशशृङ्गं नास्ती'त्यत्रा-निर्वचनीयमसदाभासरूपं शशशृङ्गं निषिध्यते, तर्हि तादृशादेवासतो वैलक्षण्यं जगद्ब्रह्मणोः सिद्ध्येत्; तस्यैव वैलक्षण्यज्ञानोपयोगिप्रतीतिविषयत्वात्, न त्वनाभासरूपादसतः; तस्य सर्वथाऽनुपस्थितत्वेन तद्वैलक्षण्यस्य दुर्बोधत्वादित्यर्थः। *ननु* स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वेऽपि रूप्य जगतोर्नात्यन्तासत्त्वम्; तार्किकादिमते तादृशनिषेधप्रतियोगिनो रूप्यात्मादेरसत्त्वाभावादिति शङ्कते—*नन्विति* ॥ तथाच त्रैकालिकनिषेधप्रतियोगित्वं नासत्त्वम्, किं त्वन्यदेव। तच्च न रूप्य-जगतोरित्यर्थः ॥ *तर्हीति* ॥ तादृश-निषेधप्रतियोगित्वरूपस्य मिथ्यात्वस्यात्मन्यपि सत्त्वादित्यर्थः। *ननु* आत्मनस्तादृशनिषेधप्रतियोगित्वे

न्यायामृतकण्टकोद्धारः

**नैयायिकमतेन शङ्कते—*नन्विति* प्रतिबन्द्या समाधत्ते—*तर्हीति*॥ *ननु* आत्मनः प्रतिपन्नोपाध्य-भावात् कथं मिथ्यात्वापादनमिति? अत आह—*तत्रापीति* ॥ वैषम्यं शङ्कते—*अथेति* ॥**

सिद्धिव्याख्या

निर्वाच्यतापत्तिः; तत्संसर्गस्यैवानिर्वचनीयत्वम्, नत्वात्मन इत्यङ्गीकारे चात्रापि न शशविषाणस्येति सुवचत्वात्, अन्यथा प्रपञ्चेऽनाभासासद्वैलक्षण्यासिद्धिप्रसङ्गात्, तत्र तस्यानपेक्षितत्व आभासासद्वैलक्षण्यस्यापि तत्रानपेक्षितत्व-प्रसङ्गात्, आत्म-शशविषाणयोर्बुद्धिपूर्वकारोपविषयत्वस्याविशेषेऽप्यात्मनो नानिर्वचनीयत्वम्, किन्तु तत्संसर्ग-स्यैवेत्यङ्गीकारे शशविषाणस्य नानिर्वचनीयत्वम्, किन्तु तत्संसर्गस्यैवेत्यपि सुवचत्वाच्च, आत्मसत्त्वावेदकश्रुतेरपि 'शशविषाणं नास्ती'त्यबाधितप्रतीतेरनिर्वचनीयशृङ्गाभावविषयकत्ववदारोपितमिथ्यात्मसत्त्वविषयकत्वस्यापि संभवात् तद्वास्तवसत्त्वत्यागेऽबाधकाभाव इति—चेत्, *न*; श्रुतेरारोपितमिथ्यात्मसत्त्वविषयकत्वे जगन्मिथ्यात्वापत्त्याऽऽत्मसत्त्वा-वेदकश्रुतेरनारोपितात्मसत्त्वविषयकत्वस्य वक्तव्यत्वेन तस्यास्तद्वास्तवसत्त्वत्यागे बाधकत्वसंभवात् ॥

*यत्तु*—बुद्धिपूर्वकारोपरूपप्रसक्त्यङ्गीकारे तत्प्रसक्तिविषयस्य शृङ्गस्यानिर्वचनीयत्वमेव स्यात्, नात्यन्ता-सत्त्वमित्यत्र परेण बुद्धिपूर्वकारोपस्थलेऽधिष्ठानयाथात्म्यदर्शनस्यावश्यकत्वेन तेन तत्र तदज्ञाननिवृत्त्यवश्यंभावेन तत्रानिर्वचनीयार्थोत्पत्तेरयोग इति दूषणम्—उक्तम्, *तन्न*; तत्राधिष्ठानतत्त्वसाक्षात्कारेणाज्ञानगतावरणशक्तिमात्र-निवृत्तावप्यज्ञानस्यानिवृत्तत्वेन विक्षेपशक्तिमदज्ञानेन विषयाणामनिर्वचनीयार्थोत्पत्तिसंभवात्। नच—चरमवृत्तेनाधिष्ठान-तत्त्वज्ञानेनापि सर्वथाऽज्ञाननिवृत्तिरवश्यं स्वीकार्या; अन्यथा चरमवृत्त्याऽप्यावरणशक्तिमात्रं निवर्तेत, न मूलाज्ञान-मित्यापत्तिरिति—वाच्यम्; चरमवृत्त्युत्तरकाले विक्षेपादर्शनेन विक्षेपशक्तिमदज्ञानकल्पकाभावेनाज्ञाननिवृत्तेस्तत्रावश्यक-त्वादिति ॥ *अत एव*—एवमङ्गीकारेऽज्ञाननिवृत्त्यनुभवविरोध इति—*निरस्तम्*; विक्षेपानुसारेण तस्य भ्रान्तित्वात्। नच—यत्र बुद्धिपूर्वकमारोपितम्; तत्कालमेवानिर्वचनीयं तत्रोत्पन्नम् इत्यङ्गीकारे तत्र व्यावहारिकघटादिप्रतियोगि-काभावः क्वापि न सिद्ध्येत्, 'इह भूतले घटो न' 'इह चत्वरे घटो न' इति तत्राप्यनुभवस्य प्रातिभासिकबुद्धि-पूर्वकारोपप्रसक्तघटाद्यभावविषयकत्वावश्यंभावेनाव्यावहारिकघटादेरप्रसक्ततया तदभावविषयत्वानुपपत्तेरिति—वाच्यम्; तस्यापि घटत्वादिरूपप्रतियोगितावच्छेदकाक्रान्ततया तेन रूपेण तदभावोऽवश्यं भासते इत्यभ्युपगमात्। नच—प्रातिभासिक-व्यावहारिकघटादिसाधारणतयैकघटत्वादिरङ्गीकारानर्हः; अन्यथोत्पन्नविनष्टरजतादिवदर्थक्रियाभावस्योप-

### न्यायामृतम्

तस्यापि "स एवाधस्तादि"त्यादिश्रुतिप्रतिपन्नोपाधौ कालत्रयेऽप्यभावात्, अथ विभुत्वेनोर्ध्वाधरीभावहीनोऽप्यात्मा सामान्यादिवत् स्वदेश-कालयोरप्यस्ति; 'सदा सर्वत्रात्मे'त्यबाधितप्रतीतेः, इति न तस्य मिथ्यात्वम्, तर्हि तत एव नासत्त्वम्। देश-कालावपि 'सदा सर्वत्र देश-कालावि'त्यबाधितप्रतीत्या प्रमेयत्वाभिधेयत्ववत् तार्किकाभिमतदिक्कालात्यन्ताभाववच्च स्ववृत्ती अन्योन्यवृत्ती च; अन्यथा त्वन्मतेऽपि तयोः प्रातिभासिकसत्त्वं स्यात्, इति न कश्चिद् दोषः। तस्मात् स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वेऽत्यन्तासत्त्वं दुर्वारम्। तदुक्तम्—

"'नासीदस्ति भविष्यच्च तदि'ति ज्ञानमेयता। यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः॥" इति॥

### तरङ्गिणी

प्रतिपन्नोपाधेरभावाद् विशिष्टमुक्तनिषेधप्रतियोगित्वं तत्र नास्तीत्यत आह—*तस्यापीति*॥ "स एवाधस्तात् स एवोपरिष्टादि"ति भूमरूपस्यात्मनोऽप्यधआदिः प्रतिपन्नोपाधिरस्तीत्यर्थः॥ *अथेति*॥ तथाच न तादृशनिषेधप्रतियोगित्वमात्मनः, अतो न तस्य मिथ्यात्वमित्यर्थः। *तत एवेति*॥ तादृशनिषेधप्रतियोगित्वाभावादेवेत्यर्थः। *ननु* उक्तनिषेधप्रतियोगित्वरूपस्य सत्त्वस्यात्मनि प्रसङ्गाभावेऽपि देश-कालयोरस्ति प्रसङ्गः; नहि देश-कालौ देश-कालयोर्वर्तेते; आत्माश्रयापातादित्यत आह—देश-कालावपीति*॥ *सदेति*॥ 'सदा देश-कालौ' 'सर्वत्र देश-कालावि'ति प्रतीत्येत्यर्थः॥ *प्रमेयत्वेति*॥ नच—आश्रिताश्रययोः प्रमेयत्वयोर्भेदाद् न प्रमेयत्वस्य स्ववृत्तित्वमिति—वाच्यम्; नित्यस्वप्रकाशेश्वरप्रमारूपस्य प्रमेयस्यानुगतस्य संभवे तद्भेदे मानाभावात्, गगनात्यन्ताभावस्यैकस्यैव स्ववृत्तेश्च॥ *अन्योन्यवृत्ती इति*॥ उत्पत्त्याद्यप्रतिबन्धकत्वाद् नात्माश्रयोऽन्योन्याश्रयो वा दोष इति भावः॥ *अन्यथेति*॥ स्वस्मिन्नन्योन्यस्मिंश्चावृत्तित्व इत्यर्थः॥ *तदुक्तमिति*॥ अनुव्याख्याने द्वितीयाध्याये तृतीयपाद इति शेषः॥ *तेनैवेति*॥ इति वदता परेणैवेत्यर्थः।

"(सि०)* *ननु* सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोः साधारणम्; तथापि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमत्यन्तासत्त्वम्, तच्च शुक्तिरूप्ये प्रपञ्चे च बाधात् पूर्वं नास्त्येव, इति न तुच्छत्वापत्तिः। नच बाधात् पूर्वं शुक्तिरूप्यं प्रपञ्चो वा सत्त्वेन न प्रतीयते। एतदेव सदर्थकेनोपाधिपदेन सूचितम्। शून्यवादिभिः सदधिष्ठानकभ्रमानङ्गीकारेण क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासद्विलक्षणस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपस्य शुक्तिरूप्ये प्रपञ्चे वाऽनङ्गीकारात्॥ (२२७—२३५)

### न्यायामृतकण्टकोद्धारः

वैषम्यं परिहरति—*अन्यथेति*॥ यदि देश-कालयोरपि देश-कालवृत्तित्वं न स्यादित्यर्थः। *प्रातिभासिकत्वमिति*॥ शुक्तिरजततुल्यत्वादिति भावः। अत्यन्तासत्त्वदूषणमुपपाद्योपसंहरति—*तस्मादिति*॥ उक्तरूपमेवात्यन्तासत्त्वमित्यत्राचार्यसम्मतिमाह—*तदुक्तमिति*॥ 'तद् नासीद् नास्ति न भविष्यदि'ति ज्ञानमेयता यदि बाध इत्यन्वयः॥

### सिद्धिव्याख्या

पादयितुं शक्यत्वेन प्रातिभासिकस्यापि व्यावहारिकत्वप्रसङ्ग इति—वाच्यम्; अथापि प्रतीतिमात्रनियतसत्ताकत्वलक्षणप्रातिभासिकत्वस्यानपायादिति *दिक्*॥

### विट्ठलेशीयटिप्पणी

मूले 'एवं सती'त्यस्य व्यवहितप्रक्रान्तापरामर्शकतया शून्यवादिनां प्रपञ्चे सत्त्वेन प्रतीत्यर्हत्वानङ्गीकारे सतीत्यर्थ-

### अद्वैतसिद्धिः

*ननु*—एवं सति यावत्सदधिकरणकात्यन्ताभावप्रतियोगित्वं पर्यवसितम्। तथाच केवलान्वय्यत्यन्ताभावप्रतियोगिष्ववृत्तिषु गगनादिषु तार्किकाणां सिद्धसाधनम्।

### तरङ्गिणी

*ननु*—एवं सति यावत्सदधिकरणकात्यन्ताभावप्रतियोगित्वं पर्यवसितम्; तथाच केवलान्वय्यत्यन्ताभावप्रतियोगिष्ववृत्तिगगनादिषु तार्किकाणां सिद्धसाधनम्।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*एवं सति=मिथ्यात्वस्य सर्वप्रतिपन्नोपाधिघटितत्वे सति। *पर्यवसितमिति* ॥ मिथ्यात्वमिति शेषः। 'प्रतिपन्ने'त्यस्य तु प्रयोजनाभावादनिवेश इति भावः ॥

[अलीकेऽतिव्याप्तिवारणाय न तन्निवेशः; अलीकादिज्ञानस्य विकल्पत्वेन सदविषयकत्वेन 'यावत्सदधिकरणके'त्यादिलक्षणातिव्याप्तिविषयकत्वासम्भवात्, 'सदसद्विलक्षणमि'ति ज्ञाने कालसम्बन्धितादात्म्यविषयकत्वात्, 'अलीकं सद्विलक्षणमि'ति ज्ञानेऽप्यलीकस्य कालासम्बन्धित्वविषयकत्वात्, 'प्रतिपन्ने'त्यस्य प्रयोजनाभावात्, तन्निवेशे सिद्धसाधनवारणाय यावदित्यवश्यं वाच्यम्। तच्चोपाधित्वावच्छेदेन वर्तमानत्वस्य 'ब्राह्मणे विद्या वर्तते' इत्यादौ ब्राह्मणत्वावच्छेदेन वर्तमानत्वस्येव तात्पर्यतो लाभाद् लभ्यत इति भावः। क ]

### सिद्धिव्याख्या

*नन्वेवं सतीति* ॥ उपाधिपदस्य सदर्थकत्वे सतीत्यर्थः। *सिद्धसाधनमिति* ॥ तेष्वतिव्याप्तेश्चेति ध्येयम्। अवृत्तिनिवारणेऽपीत्यत्र अतिव्याप्तिनिवारणेऽपि तदादाय सिद्धसाधनवारणाय चेत्यर्थः। संयोगसंबन्धेन

### विट्ठलेशीयटिप्पणी

कत्वेऽसङ्गतिः; उक्तानङ्गीकारस्य 'यावदि'त्याद्यर्थपर्यवसानाकारणत्वात्, इत्यतो व्याचष्टे—*एवं सतीति* ॥ पूर्वं तु तस्य मिथ्यात्वस्य व्यवधानात् पूरयति—*मिथ्यात्वमिति शेष इति* ॥ *ननु*—'प्रतिपन्नयावत्सदि'ति वक्तव्यम्, तत्राह—*प्रतिपन्नेत्यस्येति* ॥ *अनिवेश इति* ॥

एतदुत्तरम् [ अलीकेऽतिव्याप्तिवारणाय तु न तन्निवेशः, अलीकादिज्ञानस्य विकल्पत्वेन सदविषयकत्वस्यावश्यं वाच्यतया 'यावत्सदधिकरणके'त्यादिलक्षणाविषयकत्वात्, 'असद्विलक्षणं सदि'त्यादिज्ञाने सति कालसम्बन्धितादात्म्यस्यैव भानेन नालीकं सतो ज्ञाने विषयः, एवम्—'अलीकं सद्विलक्षणमि'त्यत्रापि कालासम्बन्धितादात्म्यमलीके भातीति भावः। ] इति पाठः। *अवश्यं वाच्यतयेति* ॥ 'वस्तुशून्यो विकल्पः' इत्युक्तेरिति भावः। *लक्षणाविषयकत्वादिति* ॥ तथाचालीके लक्षणस्य दुर्ग्रहत्वाद् नातिव्याप्तिरिति भावः। एवं ज्ञानातिव्याप्तिदोषः। वस्त्वतिव्याप्तिस्तु न दोष इति हृदयम्, समाधाने तु साऽपि निरसिष्यत इति बोध्यम्। *ननु*—अलीकज्ञानस्य सदविषयकत्वनियमोऽसिद्धः; 'असद्विलक्षणं सत्' 'अलीकं सद्विलक्षणमि'ति सदसदुभयविषयकप्रतीत्योर्दर्शनादित्याशङ्कामपाकरोति—*असद्विलक्षणं सदिति* ॥ सद् असद्विलक्षणमिति योजना, तत्राह—*सतीति* ॥ *कालसम्बन्धीति* ॥ असत्पदार्थः कालासम्बन्धी, तद्विलक्षणम्—तत्सम्बन्धीति भावः। *सद्विलक्षणमिति* ॥ सत्=कालसम्बन्धि, तद्विलक्षणम्; तदसम्बन्धीति भावः। *सिद्धसाधनेति* ॥ घटादेः 'स्वाधिकरणं नित्यरूपादिः, तन्निष्ठाभावप्रतियोगित्वमादायेति भावः। *निवेश्यमिति* ॥ तथाच स्वाधिकरणीभूतकपालादिनिष्ठोऽपि यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वस्य घटादावसिद्धत्वाद् न तदिति भावः।

'यावदधिकरणके'त्युक्तावपेक्षाबुद्धिविशेषविषयत्वरूपयावत्त्वस्यैकबुद्ध्यविषयीभूतसदसदुभयसाधारणस्याभावात्, असन्मात्रवृत्तियावत्त्वनिवेशे यावन्निष्ठाभावप्रतियोगित्वसाधने स दोष इति। सन्मात्रनिष्ठयावत्त्वनिवेशलाभाय—*सदिति* ॥ संयोगसामान्यावच्छिन्नगगनाभावस्य व्यावर्तनाय मूले—*'केवलान्वयी'त्युक्तम्* ॥ सन्मात्रनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकेति तदर्थः। *सिद्धसाधनमिति* ॥ विशेषानुमाने पक्षतावच्छेदकसामानाधिकरण्येन सामान्यानुमाने चेत्यर्थः। 'यावदधिकरणमि'त्यस्य कर्मधारयत्वे 'यदि'त्यस्य पृथक्पदत्वे च 'यत्सदि'ति

अद्वैतसिद्धिः

यदधिकरणं यत् सत्, तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षायाम्, अधिकरणपदेनावृत्तिनिवारणेऽपि संयोगसम्बन्धेन समवायसम्बन्धेन वा यद् घटाधिकरणम्, समवायसम्बन्धेन संयोगसम्बन्धेन वा घटस्य तन्निष्ठात्यन्ताभावप्रतियोगितया सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनम्; येन सम्बन्धेन यद् यस्याधिकरणम्, तेन सम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति विवक्षायाम्, अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति—चेत्, *न* ; येन रूपेण यदधिकरणतया यत् प्रतिपन्नम्, तेन रूपेण तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात् ॥

तरङ्गिणी

यदधिकरणं यत् सत्, तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षायामधिकरणपदेनावृत्तिवारणेऽपि संयोगसम्बन्धेन समवायसम्बन्धेन वा यद् घटाधिकरणम्, समवायसम्बन्धेन संयोगसम्बन्धेन वा घटस्य तन्निष्ठात्यन्ताभावप्रतियोगितया सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनम्; येन सम्बन्धेन यद् यस्याधिकरणम्, तेन सम्बन्धेन तस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति विवक्षायाम्, अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनम्, इति—चेत्, *न* ; येन रूपेण यदधिकरणतया यत् प्रतिपन्नम्, तेन रूपेण तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात् । तच्च रूपं सम्बन्धविशेषोऽवच्छेदक-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*यदधिकरणम्=यस्याधिकरणम् । *संयोगेत्यादि* ॥ संयोगेन घटस्य यदधिकरणम्, तन्निष्ठात्यन्ताभावस्य समवायेन प्रतियोगितया, समवायेन यद् घटस्याधिकरणम्, तन्निष्ठात्यन्ताभावस्य संयोगेन प्रतियोगितया च सिद्धसाधनमित्यर्थः । *सूचितत्वादिति* ॥ तथाच प्रतिपन्नपदमुक्तार्थलाभायैवेति भावः ।

सिद्धिव्याख्या

घटाधिकरणं भूतलादि, समवायसंबन्धेन घटाधिकरणं कपालादि, ततश्च संयोगसंबन्धेन कपालादिनिष्ठात्यन्ताभावप्रतियोगित्वात् समवायसंबन्धेन भूतलनिष्ठात्यन्ताभावप्रतियोगित्वाद् घटादेः सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनमित्यर्थः । *येन संबन्धेनेति* ॥ ततश्च समवायसंबन्धेन घटाधिकरणे कपालादौ तेनैव संबन्धेन तत्प्रतियोगिकात्यन्ताभावस्याभावाद् न घटादिकमादाय सिद्धसाधनमित्यर्थः । *अव्याप्यवृत्तिष्विति* ॥ स्वात्यन्ताभावसमानाधिकरणेष्वित्यर्थः ; *सिद्धसाधनमिति* ॥ समवायसंबन्धेन वृक्षवृत्तिसंयोगस्य गुणस्य तेनैव संबन्धेन तन्निष्ठात्यन्ताभावप्रतियोगित्वात् तस्मिन् सिद्धसाधनमित्यर्थः । *सिद्धसाधनमिति* ॥ सर्वेषु वृत्तिमत्सु अव्याप्यवृत्तिषु

विट्ठलेशीयटिप्पणी

यत्पदवैयर्थ्यम्, अधिकरणनिरूपकविशेषस्यालाभे च न्यूनता, अव्यावर्तकाधिकरणत्ववैयर्थ्यं च, इत्यतः षष्ठीतत्पुरुषं व्याचष्टे—*यदधिकरणमिति* ॥ मूले—*अधिकरणपदेनेति* ॥ तल्लभ्याधिकरणतानिवेशेनेत्यर्थः ॥ येन केनापि रूपेण यत्सम्बन्धित्वेन वाऽधिकरणप्रवेशे तु संयोगेन तादात्म्यादिना वा गगनसम्बन्धिनि सर्वत्रैव समवायादिना तदभावमादायावृत्तिपदार्थं सिद्धसाधनं दुर्वारं स्यादिति भावः । *अवृत्तिनिवारणे=अवृत्तौ सिद्धसाधननिवारणे । यद्वा—'अवृत्तिनी'ति सप्तमी । वारणे सिद्धसाधनस्येत्यादिः ; तेन सम्बन्धेन तदधिकरणे तेन सम्बन्धेन तदभावस्य परेणानुपगमात् 'संयोगसम्बन्धेने'त्यादिमूलोक्तं यथासंख्यं योजयति—*संयोगेनेति* ॥ यावदधिकरणसन्निवेशे संयोग-समवायसम्बन्धावच्छिन्नाभावव्यक्तीनां भेदेन स्वीयैकात्यन्ताभावव्यक्तेः स्वाधिकरणयावत्सन्निष्ठस्वाभावेऽपि यत्किञ्चित्सम्बन्धेन यावदधिकरणनिवेशाभिप्रायेणेदम्, सम्बन्धसामान्येन यावदधिकरणप्रवेशे तु स्वधिकरण-स्वरूपादिसम्बन्धावच्छिन्नाभावमादाय घटादौ सिद्धसाधनं बोध्यम् । मूले—*येन सम्बन्धेनेति* ॥ तदुद्धारायेत्यादिः ॥ *ननु* इदानीमेव प्रतिपन्नपदं स्वक्तम्, कथमेतत्सूचकम् ? अत आह, टीकायाम्—*तथाचेति* ॥ रूपपदं न धर्मपरम्; 'यदधिकरणतये'त्यत्र सत्यन्तस्यैव तद्धर्मविशिष्टबोधकत्वात्, किन्त्ववच्छेदकपरत्वे

अद्वैतसिद्धिः

तच्च रूपं सम्बन्धविशेषोऽवच्छेदकविशेषश्च । न हि सम्बन्धविशेषमन्तरेण भूतले घटाधिकरणता प्रतीयते, अवच्छेदकविशेषमन्तरेण वा वृक्षे कपिसंयोगाधिकरणता । तथाच येन सम्बन्धविशेषेण येन

तरङ्गिणी

विशेषश्च । नहि सम्बन्धविशेषमन्तरेण भूतले घटाधिकरणता प्रतीयते, अवच्छेदकविशेषमन्तरेण वा वृक्षे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अन्तरेण=विनैव । सम्बन्धावच्छेदकौ निवेश्याधिकरणता न प्रतीयत इति नेत्यर्थः ; एवकारान्तर्भावेण तादृशार्थलाभात् । तादृशप्रत्ययाभावस्य 'नही'त्यनेन निषेधः । *यथाश्रुतं त्वसङ्गतम्*—सम्बन्धावच्छेदकौ विनाऽप्यधिकरणताधीसत्त्वात् । *ननु*—गगनाधिकरणत्वाप्रसिद्धया तस्य मिथ्यात्वानुपपत्तिः, अत आह—*तथाचेति* ॥ *अर्हतीति* ॥ प्रतीतिनिवेशे यावत्त्वमधिकरणे देयम् ; अन्यथोक्ताधिकरणतायास्तच्छून्येऽपि प्रतीतिसम्भवेन सिद्धसाधनतापत्तेः । तथाच, लाघवाद् येन सम्बन्धेन यदवच्छेदेन यस्य संबन्धि यत्, तन्निष्ठत्याद्येव निवेश्यम् ; प्रतिपन्नपदेन तादृशसम्बन्धित्वेन प्रमायोग्यत्वस्य तादृशसम्बन्धित्वरूपस्य लाभात् ।

विट्ठलेशीयटिप्पणी

सम्बन्धस्य सम्बन्धपरत्वेऽवच्छेदकस्यालाभापत्त्या तदुभयपरमित्याह—मूले—*तच्चेति* ॥ *ननु* सम्बन्धविशेषावच्छिन्नत्वेनाधिकरणताप्रत्ययस्यासिद्धत्वात् तद्घटितमिथ्यात्वं दुर्ज्ञेयम्, अत आह—*नहीति* ॥ यथाश्रुतासङ्गतेर्वक्ष्यमाणत्वाद् व्याचष्टे—*अन्तरेण—विनैवेति* ॥ 'नही'त्यनेन निषेध्यम्—अध्याहृतैवकारसहितसम्बन्धमन्तरेणाधिकरणता प्रतीयत इति वाक्यार्थमाह—*सम्बन्धावच्छेदकाविति* ॥ *निवेश्य=विषयीकृत्य । नञर्थलाभकमाह—*एवकारेति* ॥ *अन्तर्भावेण=अध्याहारेण । *तादृशार्थलाभादिति* ॥ सम्बन्धमवच्छेदकञ्च विनैवाधिकरणत्वं प्रतीयते, नतु तेन सहेति विवरणादिति भावः । *निषेध इति* ॥ तथाच 'भूतलं घटवदि'तिवद् 'भूतलं मध्ये संयोगेन घटवत्' इति सम्बन्धावच्छेदकविशिष्टावच्छिन्नत्वेनाधिकरणताप्रत्ययस्यापि सिद्धत्वादिति पर्यवसितार्थः । तथाच तद्घटितं मिथ्यात्वं सुज्ञेयमेवेति भावः । *यथाश्रुते* 'नहि' इति पङ्क्तेरेवकारानन्तर्भावेण सम्बन्धादिविशेषं विनाऽधिकरणत्वप्रत्ययस्याभावादित्यर्थ इति भावः । *असङ्गतम्=बाधितम् । *धीसत्त्वादिति* ॥ सा च 'भूतलं घटवदि'त्याकारा सर्वसिद्धैव । 'विनाऽपी'त्यपिना 'भूतलं मध्ये संयोगेन घटवदि'ति प्रत्ययस्य समुच्चयः । रूपपदेन विवक्षितयोः सम्बन्धावच्छेदकविशेषयोर्नैकधा निवेशः ; तयोस्तदवच्छेदकत्वयोश्चानुगतरूपासम्भवात्, सम्भवेऽपि वा समवायेन कपिसंयोगवति तेनैव तदभावं तदनवच्छेदकावच्छिन्नम्, अग्रावच्छेदेन संयोगवति तदवच्छेदेनैव समवायान्यसम्बन्धावच्छिन्नाभावं चादाय सिद्धसाधनस्य तादवस्थ्यापत्तेः, किन्तु भिन्नरूपेणैव द्विधैव तयोर्निवेशः, इत्यभिप्रायेण परिष्करोति मूले—*तथाचेति* ॥ *अवच्छेदकविशेषः=कालविशेषो देशविशेषश्च, कालविशेषावच्छिन्नदेशविशेषो वा । एवं द्विधा द्वयो रूपभेदेन निवेशे रूपपदेनोभयोक्तिः किमर्थमिति चेत्, *न* ; व्याप्यवृत्तिघटत्वादिमिथ्यात्वस्यैकोक्त्या भानार्थमिति गृहाण । *प्रतीतिर्यत्र भवितुमर्हति=विशेष्यतासम्बन्धेन प्रतीत्युत्पत्तियोग्यताश्रयः । निरुक्तयदधिकरणताप्रतीतिविशेष्यत्वयोग्यं यदिति पर्यवसितार्थः । तत्र योग्यतानिवेशो लाघवार्थमित्याह—*प्रतीतिनिवेश इति* ॥ *सम्भवेनेति* ॥ नच प्रमात्वं निवेश्यम् ; सिद्धान्ते कपालेऽपि घटाधिकरणत्वप्रमासम्भवेनासम्भवात्, उक्ततादृशप्रमाविषयत्वेन पराभिमतत्वस्य विवक्षणेऽपि गौरवस्य दुर्वारत्वादिति भावः ॥

*ननु*—तद्योग्यत्वं निरुक्तयदधिकरणतावत्त्वमेव, तथाच तदेव निवेश्यताम् ; लाघवात् । किञ्च गगनाधिकरणत्वाप्रसिद्ध्या तत्राव्याप्तिरित्याशङ्क्याधिकरणतास्थाने सम्बन्धित्वं निवेश्य परिष्करोति—*तथाचेति* ॥ *यदिति* ॥ सदिति शेषः । तेनासति नातिव्याप्तिः । 'प्रतिपन्नोपाधौ'त्यादिवाक्यात् कथं लाभः ? तत्राह—*प्रतिपन्नपदेनेति* ॥ गगनेऽव्याप्तिं वारयति—*सम्बन्धित्वमिति* ॥ संयोगेनेत्यादिः ॥ अवच्छेदकवत् सम्बन्धस्य

अद्वैतसिद्धिः

चावच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र भवितुमर्हति, तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदक-

तरङ्गिणी

कपिसंयोगाधिकरणता। तथाच येन सम्बन्धविशेषेण, अवच्छेदकविशेषेण वा यदधिकरणताप्रतीतिर्यत्र

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सम्बन्धित्वं भूतलादौ गगनादेरपि, इति न तत्राव्याप्तिरिति भावः। *तेनैव सम्बन्धविशेषेणेति* ॥ प्रतियोगित्व-मित्यत्रान्वेति। संयोग-समवायाद्युभयसम्बन्धावच्छिन्नप्रतियोगित्वमादाय सिद्धसाधनात् (१) तदन्यसम्बन्धान-वच्छिन्नप्रतियोगित्वलाभायैवकारः। *तेनैवावच्छेदकविशेषेणेति* ॥ (२) तदन्यावच्छेदकानवच्छिन्नेत्यर्थः। तस्य तदधिकरणकत्वेनान्वयः। सिद्धान्तेऽत्यन्ताभावमात्रस्य सर्वदेश-कालवृत्तित्वेनावच्छिन्नवृत्तिकान्यत्वात् 'तदवच्छिन्ने'त्यनुक्त्वा 'तदन्यानवच्छिन्ने'त्युक्तम्। *वस्तुतस्तु*—अवच्छिन्नवृत्तिकान्यत्वमेव तदधिकरण-कात्यन्ताभावे देयम्; अन्यथा व्याप्यवृत्तिसाधारणपक्षकानुमाने व्याप्यवृत्त्यंशे यथोक्तसाध्यासम्भवादिति ध्येयम्।

विठ्ठलेशीयटिप्पणी

तदधिकरणकत्वान्वयित्वभ्रमं निरस्यति—*प्रतियोगित्वमित्यत्रेति* ॥ 'तेनैवे'त्येवकारफलमाह—*संयोगेति* ॥ तत्सम्बन्धावच्छिन्नत्वं न देयम्; व्यर्थत्वात्, तत्सम्बन्धान्यसम्बन्धानवच्छिन्नप्रतियोगिताकत्वस्याभावविशेषणत्वे तु संयोगावच्छिन्नसंयोगाभावस्य च समवायेन गगनाभावेनाभेदात् सिद्धसाधनं दुर्वारमिति बोध्यम्। अग्रावच्छिन्नसंयोगवति तदभावस्याग्रान्यमूलाद्यवच्छिन्नत्वेऽपि गुणादौ तस्य तदनवच्छिन्नत्वाद् न सिद्धसाधन-निरासः, इत्यत आह—*तस्येति* ॥ *तदधिकरणकत्वेन* ॥ उभयत्वेन संयोग-समवाययोरभावप्रतियोगिता-वच्छेदकत्वस्योपगमेऽप्युभयत्वेनाग्र-मूलयोः कपिसंयोगाभावाधिकरणतावच्छेदकत्वस्यानुपगमात् किमर्थमत्रैवकारार्थो विवक्षितः? तत्राह—*सिद्धान्त इति* ॥ *अवच्छिन्नवृत्तिकान्यत्वादिति* ॥ इतीति शेषः। *तदवच्छिन्ने-तीति* ॥ एवकारस्यानन्तर्भावेऽन्तर्भावे वा प्रतीयमानमपीति शेषः। एवमवच्छेदकविशेषघटितं साध्यं विशेषतः कपिसंयोगाद्यव्याप्यवृत्तिपक्षकानुमान एव बोध्यम्, विशेषतो घटत्वादिव्याप्यवृत्तिपक्षकानुमाने तु तद्घटितस्याप्रसिद्धेस्तदघटितमेवेति मूलाभिप्रायः। स्वयं तु सामान्यानुमानसाधारण्यानुरोधेन विशेषानुमानेऽपि विशेषणान्तरमाह—*वस्तुतस्त्विति* ॥ *देयमिति* ॥ अव्याप्यवृत्तितामादाय सिद्धसाधनवारणायेति भावः। *अन्यथा*=तदवच्छेदकावच्छिन्नत्वस्य तदन्यावच्छेदकानवच्छिन्नत्वस्य वा तदधिकरणकत्वेऽदाने। *व्याप्यवृत्ति-घटत्वादिसाधारणपक्षकेति* ॥ साधारणसामान्यधर्मावच्छेदेन तद्विशिष्टपक्षकानुमान इत्यर्थः। *व्याप्यवृत्त्यंशे*= व्याप्यवृत्तिपक्षैकदेशे। *यथोक्तेति* ॥ येन सम्बन्धेन यदवच्छेदेन यत्सम्बन्धि यत् सत्, तन्निरूपिता या तदवच्छेदका-वच्छिन्ना तदन्यावच्छेदकानवच्छिन्ना वा विशेषणतासम्बन्धावच्छिन्नाधेयता, तदाश्रयीभूतात्यन्ताभावीयतदन्य-सम्बन्धानवच्छिन्नप्रतियोगितारूपं यत् तत् साध्यम्, तस्य घटत्वरूपयत्पदार्थावच्छेदकस्य तदन्यस्य चाप्रसिद्ध्याऽ-सम्भवादित्यर्थः। ननु चैवमपि—'यदवच्छेदेने'ति पदार्थभूतदेश-कालरूपावच्छेदकावच्छिन्नाया घटत्वादिरूपयत्पदार्थ-

(१) विशेषानुमानदृष्टान्ते 'रजतत्वेन घटो नास्ती'ति प्रमितिसिद्धाभावप्रतियोगिनि घटे व्यधिकरणधर्मावच्छिन्नाभावे सम्बन्धविशेषावच्छिन्नत्वाप्रसिद्ध्या सम्बन्धविशेषावच्छिन्नोक्तप्रतियोगिताभावेन साध्यवैकल्यमिति न्यायभास्करोक्तमप्येतेन पराहतम्। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि सम्बन्धविशेषावच्छिन्नत्वाङ्गीकारादिति ॥

(२) *ननु*—रजतत्वेन घटाभावप्रतियोगितामादायार्थान्तरवारणार्थं प्रकारतावच्छेदकताधर्मपर्याप्तावच्छेदकताकत्वस्य प्रतियोगितायां निवेशनावश्यकत्वात् तादृशस्य दृष्टान्तस्यासिद्धिरिति—चेत्, *न*; रजतत्वेन घटाभावीयप्रतियोगिता-शून्यत्वे सतीति पक्षविशेषणेनैवोक्तदोषवारणेन गौरवग्रस्तस्योक्तविशेषणस्यादानेन दृष्टान्तसिद्धिसम्भवात्। पारमार्थिकत्वेनेति पक्षे तु तद्रूपसामानाधिकरण्यनिवेशसम्भवाद् नोक्तपक्षतावच्छेदकनिवेश इत्यादिकं पक्षतावच्छेदकविचारे विठ्ठलेशीये प्रतिपादितम्, इत्युक्तदोषापादनपरा न्यायभास्करोक्तयः पराहता इति मन्तव्यम्—इति ॥

### अद्वैतसिद्धिः

विशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम्? यदि पुनर्ध्वंस-प्रागभावप्रतियोगित्वमिवात्यन्ताभावप्रतियोगित्वमाकाशादौ न स्यात्; साधकमानाभावस्य तुल्यत्वात्,

### तरङ्गिणी

भवितुमर्हति, तेनैव सम्बन्धविशेषेण तेनैवावच्छेदकविशेषेण तदधिकरणात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम्?

यदि पुनः—ध्वंस-प्रागभावप्रतियोगित्वमिवात्यन्ताभावप्रतियोगित्वमप्याकाशादिषु न स्यात्; साधकमाना-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—नोक्तसिद्धसाधनस्यावकाशः। प्रकृतानुमानावतारात् पूर्वमेवावृत्तिगगनादावत्यन्ताभावप्रतियोगित्वे वृत्तिमत्सु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वे च वक्ष्यमाणरीत्या मानाभावात्, तत्राह—*यदि पुनरित्यादि* ॥ *न स्यात् = नास्ति। मिथ्यात्वानुमानावतारात् पूर्वमिति शेषः ॥

### सिद्धिव्याख्या

संयोगादिषु च सिद्धसाधनमित्यर्थः। *यदि पुनरिति* ॥ अस्य व्यवहितेन तदेत्यनेनान्वयः। *ननु*—'आकाशो भविष्यति', 'आकाशो ध्वस्तः' इति प्रतीत्यभावाद् माऽस्तु ध्वंसप्रागभावप्रतियोगित्वम्, अत्यन्ताभावसाधकप्रतियोगित्वं तु स्यात् *इत्याशङ्क्याह—साधकेति* ॥ तुल्यत्वमेव दर्शयति—*इहेति* ॥ 'इहाकाशो भविष्यती'ति प्रत्यक्षप्रतीत्य-

### विट्ठलेशीयटिप्पणी

सम्बन्धिताया अप्रसिद्ध्याऽयं दोषो दुर्वार एवेति—वाच्यम्; अवच्छिन्नवृत्तिकान्यत्वनिवेशेनैव संयोगादौ सिद्धसाधनवारणेन प्रयोजनविरहेण यत्सम्बन्धितायां 'यदवच्छेदेने'त्यस्याप्यनिवेशात्। नच—सम्बन्धावच्छेदकयोः केनाप्यनुगतरूपेण निवेशमाश्रित्य यद्रूपावच्छिन्नयत्सम्बन्धितावद् यत् सत्, तद्रूपान्यरूपानवच्छिन्नतन्निरूपितविशेषणतासम्बन्धावच्छिन्नवृत्तितावदभावीयप्रतियोगितायाः साध्यत्वेन घटत्वादौ यद्रूपशब्देन सम्बन्धमेवोपादाय साध्यनिर्वाहसम्भवाद् मूलोक्तमेव सम्यक्; अनुगतरूपेण सम्बन्धावच्छेदकयोर्निवेश उक्तदोषैवकारार्थनञ्द्वयद्विधाघटनाप्रसरात्, इति—वाच्यम्; यतस्तद्रूपान्यरूपानवच्छिन्नत्वस्य सम्बन्धघटितस्यावच्छेदकघटितस्य वाऽभावविशेषणत्व उक्तरीत्या सिद्धसाधनस्य दुर्वारतया प्रथमस्य प्रतियोगितायां द्वितीयस्य सद्वृत्तितायां विशेषणत्वं वाच्यम्; तथाच घटत्वादिपक्षकानुमाने सद्वृत्तित्वविशेषणघटकतया तद्रूपपदेन समवायसम्बन्धस्योपादाने तदन्यविशेषणतासम्बन्धावच्छिन्नसद्वृत्तित्वे तदनवच्छिन्नत्वस्यासत्त्वेनावच्छेदकविशेषस्यैवोपादेयतया तस्य तद्रूपपदोपादेयस्याप्रसिद्ध्योक्तसाध्यस्य घटत्वादिपक्षेऽनिर्वाहात्, 'यदवच्छेदेन' 'तदवच्छेदेने'ति द्वयमप्यपहायाभावेऽवच्छिन्नवृत्तिकान्यत्वमेवोपादेयमिति भावः। 'यदि पुनरि'त्यादिमूलेन गगनादीनामत्यन्ताभावप्रतियोगित्वं नास्ति; प्रमाणाभावात्, इत्युक्तम्, तावताऽपि प्रकृते का क्षतिः? इत्याकाङ्क्षां पूरयन् तदवतारयति—*ननु नोक्तेति* ॥ 'नन्वेवमि'त्यादिना शङ्कितं यत् सिद्धस्य प्रकृतानुमानावतारपूर्वकालीननिश्चयविषयस्य साधनम्, प्रकृतानुमानेन सिद्धिप्रसङ्गः, तस्य नावकाश इत्यर्थः। उक्तमिथ्यात्वस्योक्तनिश्चयाविषयत्वादिति भावः। अत्र हेतुमाह—*प्रकृतेति* ॥ *तत्राहेति* ॥ इत्यालोचनेन मिथ्यात्वे सम्बन्धावच्छेदकघटनावैयर्थ्याशङ्कायां 'यदी'त्यादिना प्रापितायामिष्टापत्त्या 'तदे'त्यादिना तां परिहरतीत्यर्थः। यथाश्रुते 'यदि पुनरि'त्यादिग्रन्थेन तच्छङ्कासमाधानानुक्तत्वाद् असङ्गतेः। यदि न स्यादिति नान्वयः, प्रकृतार्थसन्देहस्याभावात्, किन्तु 'यदीत्यालोच्यते' इत्यध्याहृतेन; आलोचनस्य स्फूर्त्यधीनस्य सन्देहात्, तथाच न स्यादित्यसङ्गतम्; उक्तप्रतियोगित्वाभावस्यात्रानापादनीयत्वात्, अतो व्याचष्टे—*न स्यादिति* ॥ *नास्ति=न सिद्ध्यति। *ननु* गगनप्रत्यक्षवादिनां तदभावस्यापि प्रत्यक्षं सम्भवत्येव, इत्यसम्भवाभिधानं मूलकृतामसङ्गतम्, एवम्—'अनुमाने च तर्काभावादि'त्यप्यसङ्गतम्; अनुमानस्यैवासम्भवात्। तथाहि—गगने सन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वसाधने सन्मात्र-

**अद्वैतसिद्धिः**

'इहाकाशो नास्ती'ति प्रत्यक्षप्रतीत्यसम्भवात्, अनुमाने चानुकूलतर्काभावात्, सामान्यतो दृष्टमात्रेण

**तरङ्गिणी**

भावस्य तुल्यत्वात्, 'इहाकाशो नास्ती'ति प्रत्यक्षप्रतीत्यसम्भवात्, अनुमाने चानुकूलतर्काभावात्, सामान्यतो

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*ननु*—गगनादेरप्रत्यक्षत्वमते तदभावस्य प्रत्यक्षत्वासम्भवेऽपि गगनादिकम्, भूतलादिनिष्ठात्यन्ताभावप्रतियोगि, भूतलादिनिष्ठस्य वृत्तिनियामकसम्बन्धस्याप्रतियोगित्वात्, नित्यरूपादिनिष्ठात्यन्ताभावप्रतियोगि, नित्यरूपादिनिष्ठसम्बन्धाप्रतियोगित्वात्, तज्जलादिवदित्याद्यनुमानं मानमस्तु, तत्राह—*अनुमाने चेति* ॥ *तर्काभावादिति* ॥ अप्रत्यक्षस्यापि गुरुत्वादेस्तेजआदावत्यन्ताभावोऽनुमीयते, तत्र तदसत्त्वे गुरुत्वाद्यापत्त्या पतनाद्युत्पत्त्याद्यापत्तिरूपतर्कसत्त्वात्, प्रकृते तु न तर्क इति भावः। अन्यथेति शेषः। *सामान्यतो

**सिद्धिव्याख्या**

संभवात्—'इहाकाशो नास्ती'ति प्रत्यक्षप्रतीतेरप्यसंभवादित्यर्थः। आनुमानिकप्रतीतिमाशङ्क्याह—*अनुमाने चेति* ॥

**विट्ठलेशीयटिप्पणी**

निष्ठसम्बन्धाप्रतियोगित्वं हेतुर्न सम्भवति ; घटादौ व्यभिचारात् ; सर्वस्मिन् सति घटादिसम्बन्धाभावेन हेतोस्तत्र सत्त्वात्, साध्यस्य चेदानीं संयोगेन घटादिमति व्यधिकरणसम्बन्धेनापि तदभावानुपगमेनासत्त्वात्। नापि सन्निष्ठसम्बन्धाप्रतियोगित्वम् ; पक्षे दृष्टान्ते च तदसिद्धेः, नापि सन्निष्ठवृत्तिनियामकसम्बन्धाप्रतियोगित्वम् ; दृष्टान्तासिद्धेः, इत्याशङ्क्य, मतान्तरेण गगनाभावप्रत्यक्षासम्भवाभिधानं सङ्गमयन् गगन उक्तात्यन्ताभावप्रतियोगित्वसाधकैकानुमानासम्भवेऽप्यनुमानद्वयादिना तत्सिद्धिसम्भवाभिप्रायेण—'अनुमाने चे'ति मूलमवतारयति—*ननु गगनादेरिति* ॥ *भूतलादीति* ॥ वृत्तिनियामकसम्बन्धेन परस्परमसम्बद्धान् तदन्येन गगनसम्बद्धान् कतिपयपदार्थान् केनापि रूपेण हेतौ निवेश्य तानेव दृष्टान्तीकृत्य कतिपयानुमानानि, केनापि सम्बन्धेन परस्परं गगनेन चासम्बद्धान् तथा तानादाय कतिपयानुमानानीति रीत्या गगनादौ यावत्सन्निष्ठात्यन्ताभावप्रतियोगित्वसिद्धिः सम्भवतीति भावः। अत्र भूतलादिपक्षकगगनाद्यत्यन्ताभावसाध्यकानुमानं न सम्भवति ; गगनसम्बन्धानुयोगित्वस्य हेतुत्वे स्वरूपासिद्धेः, गगनीयवृत्तिनियामकसम्बन्धानुयोगित्वस्य त्वप्रसिद्धेः, वृत्तिनियामकसम्बन्धेन गगनस्य केनापि सह कार्य-कारणभावविरहात्, इतरकारणविशिष्टस्य तज्जन्याभावस्य जनकाभावस्य वाऽप्रसिद्धेः, हेत्वन्तरस्याप्यसम्भवात्, इति गगनपक्षकमुक्तप्रतियोगित्वसाध्यकमेवोक्तम् ॥

*ननु*—तेजः, गुरुत्वात्यन्ताभाववत्, गुरुत्वसमवायाभावात्, गुरुत्वं वा समवायावच्छिन्नतेजोनिष्ठात्यन्ताभावप्रतियोगि, तेजोऽसमवेतत्वात्, इत्यनुमानयोः कस्तर्कः? प्रकृते तर्काभावादित्युच्यते। अथ तत्र हेतुभङ्गापत्तिरूपः सः, प्रकृतेऽपि सोऽक्षत एवेत्यत आह—*अप्रत्यक्षस्यापीति* ॥ *तत्र=तेजसि। *तदसत्त्वे=गुरुत्वात्यन्ताभावसत्त्वानुपगमे। *गुरुत्वाद्यापत्त्या=गुरुत्वसमवायाद्यापत्त्या। *पतनाद्युत्पत्त्यापत्तिरूपेति* ॥ तथाच तत्र हेतुभङ्गापत्ताविष्टापत्तिशङ्काया निवारिका पतनादिकार्यापत्तिः ; पतनाभावस्य प्रत्यक्षेण निश्चयात्, इति तत्र हेतुभङ्गापत्तिरूपस्तर्कोऽक्षत इति भावः। अत्र पतनाभावस्तु न हेतुः ; अपतितशुष्कफलादौ व्यभिचारात्। गुरुत्वान्यपतनकारणकूटविशिष्टत्वस्य तत्र विशेषणत्वे तु प्रयासगौरवम्। एवं तर्हि गुरुत्वं स्वेतरपतनकारणकूटविशिष्टमेव पतनस्यापादकम्, उक्तव्यभिचारादिति। अयं दोषो गुरुत्वसमवायाभावहेतुकेऽपीति चेत्, सत्यम्, तथापि तस्य कल्पनागौरवतुल्यत्वादिति बोध्यम्। *प्रकृते=आकाशपक्षकानुमाने। *न तर्क इति* ॥ यद्यप्याकाशे भूतलादिनिष्ठात्यन्ताभावप्रतियोगित्वानुपगमे भूतलादावाकाशीयवृत्तिनियामकसम्बन्धापत्त्या तन्निष्ठोक्तसम्बन्धाप्रतियोगित्वरूपहेतुभङ्गापत्तिरत्राप्यवतरति, तथापि सेष्टापत्तिदोषेण प्रतिबध्यते। नहि भूतलादावाकाशीयवृत्तिनियामकसम्बन्धोपगमे कस्यचिदापत्तिरस्ति ; तेन सम्बन्धेन तस्य कार्यकारणतया तत्कार्यापत्तेरभावात्। नचैवम्—भूतलमाकाशाधिकरणमिति व्यवहारा-

अद्वैतसिद्धिः

ध्वंस-प्रागभावप्रतियोगित्वस्यापि सिद्धिप्रसङ्गात्, तद्व्यतिरेकेण कस्य चित् कार्यस्यानुपपत्तेरभावाच्च ।

तरङ्गिणी

दृष्टमात्रेण ध्वंस-प्रागभावप्रतियोगित्वस्यापि सिद्धिप्रसङ्गात्, तद्व्यतिरेकेण कस्यचित्कार्यस्यानुपपत्तेरभावाच्च ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

दृष्टमात्रेण=तर्कहीनेनान्वयव्यतिरेकिणा गगन-तज्जन्यान्यतरत्वादिहेतुना । *नन्वेवम्*—आकाशादौ घटादिभेदोऽपि न स्यात्, अयोग्याधिकरणे भेदस्याप्रत्यक्षत्वात्, अनुमानस्याप्रयोजकत्वाच्च, तत्राह—*तद्व्यतिरेकेणेति* ॥

विट्ठलेशीयटिप्पणी

पत्तिरिति—वाच्यम् ; तदधिकपरिमाणवत्त्वस्यैव तदधिकरणत्वव्यवहारनियामकत्वात् । अत एव तेषामवृत्तित्वप्रवादोऽप्युपपद्यते । नचैवम्—नित्यरूपेणापि सह गगनस्य वृत्तिनियामकसम्बन्धः स्यादिति—वाच्यम् ; इष्टापत्तेः, तयोः परम्परासम्बन्धस्य सर्वैरुपगमात्, सर्वसम्बन्धित्वं विभुत्वमिति वदता साक्षात्सम्बन्धस्याप्युपगमात्, तादृशसम्बन्धस्यैवास्माभिर्बाधकाभावबलेन वृत्तिनियामकतामात्रस्य स्वीकारात्, तादात्म्यस्यापि वृत्तिनियामकताया रूपादि-घटादितादात्म्यानुरोधेन सिद्धान्त उपगमस्य पूर्वं ग्रन्थकृतोक्तत्वादिति भावः ॥

*मूले* 'तर्काभावादि'त्यस्यानुमित्यात्मकप्रतीतेरप्यसम्भवादिति शेषः । आकाशादिवृत्तप्रतियोगित्वासिद्धौ 'न स्यादि'त्यन्तार्थे तुल्यत्वादिति हेतुः, तत्र चासम्भवादित्यादि द्वयम्, 'सामान्यतः' इत्यादि—'प्रसङ्गादि'त्यन्तं तु न तयोरन्वेति, इत्यतस्तदन्वययोग्यं पूरयति—*अन्यथेति शेष इति* ॥ *अन्यथा=तर्कं विनाऽप्यनुमानेनार्थसिद्धिस्वीकारे । मात्रपदार्थमाह—*तर्कहीनेनेति* ॥ सामान्यतोदृष्टेति संज्ञाशब्दं व्याचष्टे—*अन्वयव्यतिरेकिणेति* ॥ *ननु*—तादृशहेतुर्न गगनत्वम् ; पक्षमात्रवृत्तित्वात्, नापि पृथिवीत्वादिकम् ; पक्षावृत्तित्वात्, नापि द्रव्यत्वगगनपृथिव्यन्यतरत्वादिकम् ; व्यभिचारित्वात्, नापि गगन-जन्यान्यतरत्वम् ; जन्यत्वस्य प्रागभावप्रतियोगितारूपत्वे तस्य साध्यत्वे हेतु-साध्ययोरभेददोषाभावेऽपि ध्वंसप्रतियोगितासाधने ध्वंसे व्यभिचारात्, अत आह—*गगनेति* ॥ तज्जन्यं जन्यजन्यभिन्नत्वेन प्रवेश्यम्, एवं जन्यपृथिव्यादीनामपि तद्भिन्नत्वेन निवेशेन हेतवो बोध्याः । तर्कहीनता चात्र गगने ध्वंसादिप्रतियोगित्वानुपगमेऽपि गगन-तज्जन्यान्यतरत्वादिरूपहेतुभङ्गापत्तेरभावादिति भावः । *ननु*—गगने भूतलादिनिष्ठात्यन्ताभावप्रतियोगित्वानुपगमे भूतलादिनिष्ठवृत्तिनियामकसम्बन्धाप्रतियोगित्वरूपहेतुभङ्गापत्तिरूपतर्कस्येष्टापत्त्या सम्भवेऽपि हेतुभिन्नस्यैव कस्यचित् कार्यस्यानुपपद्यमानस्याभावापत्तिरूपतर्कसम्भवे तस्यैवोक्तानुमानसहकारित्वं सम्भवति, इत्याशङ्क्य मूले 'तद्व्यतिरेकेणे'ति पङ्क्त्या तादृशतर्कान्तरस्याप्यभाव उक्तः, स च तदैव सङ्गच्छते, यदि साध्यानुपगमाधीनाया हेतुभिन्नकार्याभावापत्तेः क्वचिदनुमानसहकारित्वस्य क्लृप्तत्वमस्ति, तदेव नेत्याशङ्कामपाकर्तुं प्रतिवादिनिरासकतया तस्य क्लृप्तत्वं दर्शयितुं गगन उक्तप्रतियोगित्वे मानाभावोक्त्युपरि प्रतिबन्द्या शङ्कयैवोक्तमूलपङ्क्तिमवतारयति—*नन्वेवमिति* ॥ *एवम्=आकाश उक्तरीत्या मानाभावेनोक्तात्यन्ताभावप्रतियोगित्वासिद्धौ । *न स्यात्=न सिद्ध्येत ; मानाभावादिति शेषः । प्रत्यक्षत्वस्य भेदोऽपि तथा स्यात्, अत आह—*अयोग्याधिकरण इति* ॥ भेदप्रत्यक्षेऽधिकरणयोग्यतायास्तन्त्रत्वादिति भावः । *अनुमानस्येति* ॥ पट-गगनान्यतरत्वहेतुकस्येत्यादिः । *अप्रयोजकत्वादिति* ॥ गगने घटभेदे पट-गगनभिन्नो घटः, इति तद्भिन्नत्वरूपोक्तहेतुभङ्गः स्यादिति न भ्रमितव्यम्, तथा सति घटस्यापि गगनाभिन्नतया तदुभयभिन्नदण्डादिभिन्नत्वरूपोक्तहेतोः सम्भवादिति भावः । कार्यान्तरभङ्गस्तु न प्रसज्यते, प्रसक्तोऽपि वा नाप्रयोजकत्वशङ्कोच्छेदायालमित्यभिमानः । *तद्व्यतिरेकेणेति* मूलस्य घटभेदसाधकानुमाने तर्कसद्भावपरत्वं न सम्भवति ; 'अभावादि'त्यस्यासङ्गतेः, नापि तर्काभावपरत्वम् ; तत्र तर्कसत्त्वेन बाधात्, नापि तत्स्थलीयो यस्तर्कः, तस्योक्तप्रतियोगित्वे साध्येऽभावपरत्वम् ; तत्र तदभावस्याकिञ्चित्करत्वात्, अतः स्वव्युत्क्रमभिमानं निराकुर्वन् उक्तप्रतियोगित्वसाधकानुमाने मूलकृत्प्रदर्शिताभावप्रतियोगितर्कदृष्टान्तभूतं पटभेदसाध्ये

अद्वैतसिद्धिः

एवं संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्त्वे मानाभावात्

तरङ्गिणी

एवं संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्त्वे मानाभावात् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

आकाशे घटाभेदे घटत्वस्यातिप्रसक्त्या तद्रूपेण कपालादिकार्यताप्रत्यक्षरूपकार्यस्य व्यतिरेकः स्यात् ; नित्यसाधारणरूपस्य कार्यतानवच्छेदकत्वादिति भावः । आकाशात्यन्ताभावस्य त्वस्वीकारे न तथेत्यर्थः ॥

*एवमिति* न "घटादेरत्यन्ताभावसामानाधिकरण्यमि"त्यग्रिमेणान्वेति । एवंशब्दार्थं प्रत्यक्षानुमानाद्यभावरूपं हेतुं प्रकटयति—*संयोगेत्यादि* ॥ *ननु*—प्रतियोग्यत्यन्ताभावयोर्विरोधित्वं संबन्धविशेषमन्तर्भाव्यैव कल्पनीयम् । *तथाहि*—विरोधित्वं सहानवस्थानम्, तदपि द्विविधम्—साक्षात्, ज्ञानद्वारकं च ।

विट्ठलेशीयटिप्पणी

कार्यान्तरभङ्गापत्तिरूपं तर्कमुक्तप्रतिबन्दीं निरासाय दर्शयति—*आकाश इति* ॥ गगने घटभेदे साध्ये घटत्वावच्छिन्नकार्यताप्रत्यक्षं तु न हेतुः ; समवायेन तस्य स्वरूपासिद्धेः, न विषयतया ; पटे व्यभिचारात्, स्वज्ञानविषयीभूतगगनपटान्यतरत्ववत्त्वसम्बन्धेन हेतुत्वेऽव्यभिचारेऽप्युक्तान्यतरत्वस्यैव हेतुत्वसम्भवेन तद्घटितसम्बन्धेनान्यस्य हेतुत्वानौचित्यादिति ध्येयम् ॥ *घटाभेद इति* ॥ उपगत इति शेषः । *घटत्वस्येति* ॥ घटाभेदस्य तद्रूपत्वात् । *अतिप्रसक्त्येति* ॥ कपालादिकार्यतयेत्यादिः । नित्यसाधारणधर्मस्य कार्यतानवच्छेदकत्वादिति भावः । *तद्रूपेण=घटत्वरूपेण । अवच्छिन्नत्वं कार्यत्वान्वयि तृतीयार्थः । तदवच्छिन्नकार्यताया व्यतिरेकोऽप्यापादयितुं यद्यपि शक्यते ; तथापि तत्रेष्टापत्तिवारणाय स्वप्रकाशतत्प्रत्यक्षव्यतिरेकापत्तेरनुधावनस्यावश्यकत्वाद् मूलस्थकार्यपदस्वरसाच्च स एवापादितः । *स्यादिति* ॥ तर्कसम्भवादिति शेषः । तस्य चाकाशे घटभेदसिद्ध्यर्थमेवोक्तानुमानसहकारित्वं स्वीकार्यमिति भावः । एवं क्लृप्तानुमानसहकारिताकतर्कजातीयोऽपि तर्क उक्तप्रतियोगित्वरूपसाध्यके नास्तीति मूलार्थमाह—*आकाशात्यन्ताभावस्येति* ॥ अयं तद्व्यतिरेकेतिपदार्थः । तस्योक्ताभावप्रतियोगितार्थकत्वे 'गगने' इत्यध्याहार्यं स्यात् । अत एवं व्याख्यातम् । गगननिष्ठोक्तप्रतियोगित्वार्थकत्वे तु तत्रैव पर्यवसानम्, पुनश्चेदानीमाकाशात्यन्ताभावस्यैवाप्रसिद्धौ तद्रूपतत्पदार्थव्यतिरेकोपगमपरत्वं व्यतिरेकपदस्य न सम्भवति, इत्यतः स्वीकारव्यतिरेकार्थकतामाह—*अस्वीकार इति* ॥ गगन उक्तप्रतियोगित्वास्वीकार इति पर्यवसितार्थः । तेनोक्तरीत्या नाप्रसिद्धिसाम्यमस्थ्यम् । *न तथा=न कस्यचित् कार्यस्य व्यतिरेकः । *अभावादिति* ॥ अभावपदस्य च नेति विवरणम् । यथाश्रुत आकाशाभावानुपगमे कस्यचित् कार्यस्यानुपपत्त्यभावात् सर्वस्य कार्यस्योपपत्तेरित्यर्थं न तद्वैयर्थ्यम् । तथाचाकाशात्यन्ताभावानुपगमावधीनायाः कार्यविशेषव्यतिरेकापत्तेरभावादिति मूलार्थः । वृत्तिनियामकसम्बन्धेनाकाशस्येव तदत्यन्ताभावस्यापि साक्षात् परम्परया वा क्वाप्यप्रयोजकत्वादिति भावः । प्रक्रान्तप्रकारवैशिष्ट्यार्थकैवमित्यस्य येन प्रकारेण गगनात्यन्ताभावाविरोधित्वं न सिद्ध्यति, तेन प्रकारेणेत्यर्थः । स च प्रकारो मानाभावः । तृतीयार्थो वैशिष्ट्यम्, स च न 'मानाभावादि'त्यादौ सन्निहितेऽन्वययोग्यः, इत्यतस्तदन्वययोग्यं दर्शयति—*न घटादेरिति* ॥ *अत्यन्ताभावसामानाधिकरण्यम्*=स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । 'सिद्ध्यती'त्यनुषक्तं नञा सम्बध्यते । एवमर्थस्य नञर्थेऽन्वयः । पौनरुक्त्यं परिहरति—*एवमिति* ॥ *हेतुमिति* ॥ उपपादयितुमिति शेषः ॥ *प्रकटयति=विवृणोति । तथाच 'शङ्खः पाण्डुर एव नापाण्डुरः' इतिवद् 'लाघवेने'त्याद्युपपादकान्वयार्थमपेक्षणाच्च न पौनरुक्त्यदोष इति भावः । *ननु* सम्बन्धविशेषघटितविरोधित्वकल्पने तेन चोक्तार्थे प्रमाणावतारशङ्कायामेव 'लाघवेने'त्यादिना विरोधे सम्बन्धविशेषत्यागेन तत्परिहारो न्याय्यः ; तदेव नेत्याशङ्क्य, तत् कल्पयित्वा तेन तत्र मानमाशङ्कते—*नन्वित्यादिना* ॥ *ननु* प्रतियोगिनो वैरूप्यविरोधोऽभावे न सम्भवति ; अचेतनत्वात्, तत्प्रतियोगिकत्वस्यासु सम्बन्धान्तरावच्छिन्नाभावेऽपि सम्भवति, इत्यतस्तद् निर्वक्ति—*तथाहीति* ॥ *साक्षात्=मानागर्भम् । *ज्ञानद्वारकम्=

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*तत्राद्यं* तद्देश-तत्कालावच्छेदेन तेन संबन्धेन तद्रूपविशिष्टप्रतियोगिनोऽधिकरणे तद्देश-कालावच्छेदेन वर्तमानत्वस्याभावस्तत्संबन्ध-तद्रूपावच्छिन्नप्रतियोगिताकात्यन्ताभावनिष्ठम्, *द्वितीयं तु* तादृशाधिकरणनिश्चय-क्षणे च तादृशाभावस्य तादृशवर्तमानत्वज्ञानाभावः। तथाचोक्तविरोधितयोरन्यथानुपपत्तिरेव संयोगादिना तदुत्तरघटाद्यधिकरणक्षणे समवायादिना तदभावसाधिका, तत्राह—*लाघवेनेत्यादि* ॥

विठ्ठलेशीयटिप्पणी

गर्भम् ॥ *ननु*—एकधर्म्यवृत्तित्वं तेन रूपेण ज्ञानाविषयत्वरूपं वा तद् अवच्छेदकभेदेन रूपभेदेन चैकनिष्ठयोस्तत्त्वेन ज्ञायमानयोश्च तयोरसम्भवि, तत्राह—*तत्रेति* ॥ *आद्यमिति* ॥ इदं च द्वितीयनिर्वाहाय कल्पनीयम्; घटवत्ताज्ञानं हि घटाभाववत्ताज्ञानं प्रतिबध्नाति, न पटाभावज्ञानमित्यनुभवसिद्धम्। तत्र बीजं विषयविरोध-तदभावावेव वाच्या-विति भावः। समवायेन द्रव्यत्वादिमदभावादिनिष्ठः संयोगेन घटादिमद्वृत्तित्वाभावो न विरोधपदार्थः, न वा प्रति-बन्धकताबीजम्, इत्यतः—'तत्सम्बन्धेने'त्यादि—'निष्ठे'त्यन्तम्। एवं कस्यचिदभावान्तरस्यापि; घटादिमत्त्वेन निश्चितधर्मिवृत्तित्वज्ञानाविषयत्वसम्भवात्। एतदर्थमेव तादृशाभावस्येत्यग्रे। तत्सम्बन्धेत्यस्य नियमेनेत्यादिः। तथाच तादृशवर्तमानत्वाभावव्याप्यमीदृशात्यन्ताभावत्वमित्यर्थः। *द्वितीयमिति* ॥ इदं तु लोकानुभवादेव कल्पनीयम्। *तादृशेत्यादि* ॥ तादृशाधिकरणनिश्चयाधिकरणक्षण-तदुत्तरक्षणान्यतरकालावच्छेदेन यत्तादृशाधिकरणवर्तमानत्वज्ञान-विषयतावच्छेदकत्वाभावः, तादात्म्येन तद्व्याप्यं तादृशात्यन्ताभावत्वमित्यर्थः। तेन रूपान्तरेण ज्ञानमादाय न दोषः। *ननु* एवंरीत्योक्तविरोधद्वयकल्पनेऽपि घटसंयोगिनि समवायेन तदभाववृत्तौ किं प्रमाणमागतमिति ? अत आह—*तथाचेति* ॥ *उक्तेति* ॥ एकावच्छेदक-सम्बन्धघटितेत्यर्थः। *अन्यथा=घटसंयोगिनि समवायावच्छिन्नघटा-भावस्य वृत्तेरनुपगमे। *अनुपपत्तिः=असम्भवः। नच—घटसंयोगिनि समवायावच्छिन्नघटाभावस्यावृत्तावपि संयोगा-वच्छिन्नतदभावस्य तदवृत्तित्वादिरूपविरोधित्वनियमे का क्षतिः ? नहि तत्सम्बन्धावच्छिन्नतदभाव एव तत्सम्बन्धेन तद्वदवृत्तिरिति नियमः; समानकालीनत्वादिसम्बन्धावच्छिन्नघटाभावे संयोगादिना घटादिमदवृत्तौ व्यभिचारादिति —वाच्यम्; संयोगावच्छिन्नघटाभावस्य घटसंयोग्यवृत्तित्वादिनियम इत्यस्य हि संयोगावच्छिन्नघटाभावत्वं घटसंयोग्य-वृत्तित्वादिव्याप्यमित्यर्थः। तथाच समवायावच्छिन्नघटाभावस्यापि घटसंयोग्यवृत्तित्वेऽभ्युपगते तदवृत्तित्वादिघटित-विशेषाभावे व्यभिचारवारणाय घटत्वावच्छिन्नप्रतियोगिताकाभावत्वत्वेनैव घटाभावत्वस्योक्तव्याप्यतासम्भवात् तत्समानाधिकरणतद्घटितसंयोगावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावत्वत्वेनोक्तव्याप्यताया असम्भवः स्यात्; स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमिति नियमात्, तस्य तदवृत्तित्वे तु तस्मिन् घटत्वावच्छिन्नप्रतियोगिताकाभावत्वस्योक्तव्यभिचारितया तद्व्यावृत्तसंयोगावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताका-भावत्वत्वस्योक्तव्याप्यतावच्छेदकत्वसम्भवः। तथाचोक्तविरोधित्वयोरन्यथानुपपत्तिरित्यस्योक्ताभावत्वत्वस्योक्तव्याप्यता-वच्छेदकत्वविरहापादकसमवायावच्छिन्नघटाभावधर्मिकघटसंयोग्यवृत्तित्वापादकापत्तिरूपतर्क इत्यर्थकत्वेन सामञ्जस्यात्। *तदभावसाधिकेति* ॥ तदभावसाधकतत्प्रमेत्यादिलिङ्गानुमानसहकारिणीत्यर्थः। 'कस्यचित् कार्यस्ये'त्यत्र कार्य-पदस्योपलक्षणपरतया हेत्वन्यवस्तुविरहापत्तेरप्यनुमानसहकारिताया उक्तत्वादिति भावः ॥

यद्वा—संयोगसम्बन्धावच्छिन्नघटाभावत्वत्वम्, स्वसमानाधिकरणघटसंयोग्यवृत्तित्वव्याप्यतावच्छेदकरूपान्तरा-घटितम्, घटसंयोग्यवृत्तित्वव्याप्यतावच्छेदकत्वात्, यद् यद्व्याप्यतावच्छेदकम्, तत् स्वसमानाधिकरणतद्व्याप्यता-वच्छेदकरूपान्तराघटितम्; यथा वह्निव्याप्यतावच्छेदकं धूमत्वं स्वसमानाधिकरणवह्निव्याप्यतावच्छेदकरूपान्तरा-घटितम्, यत्त स्वसमानाधिकरणयद्व्याप्यतावच्छेदकरूपान्तरघटितम्, तत् तद्व्याप्यतानवच्छेदकम्; यथा नीलधूम-त्वादि, इत्यनुमानमेवात्राभिप्रेतम्। समवायावच्छिन्नघटाभावस्यापि घटसंयोग्यवृत्तित्वे घटाभावत्वत्वस्याप्युक्त-व्याप्यतावच्छेदकतया तद्घटिततत्समानाधिकरणसंयोगावच्छिन्नघटाभावत्वत्वस्य तादृशरूपान्तराघटितत्वरूपसाध्या-

अद्वैतसिद्धिः

लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात्,

तरङ्गिणी

लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात्,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*लाघवेन=अभावप्रतियोगितामात्रस्य संबन्धावच्छिन्नत्वाकल्पनया, संबन्धविषयत्वघटितरूपेणाभावबुद्धेः प्रतिबन्धकत्वाकल्पनया च लाघवसंभवेन। *घटात्यन्ताभावत्वेन=घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वेन। *घटसामानाधिकरण्यविरोधित्वेति* ॥ सामानाधिकरण्यघटितस्य साक्षाद् विरोधित्वस्य ज्ञानद्वारकविरोधित्वस्य

विट्ठलेशीयटिप्पणी

निर्वाहात्। उक्तहेतुबलेनोक्तसाध्यं सिद्ध्यद् उक्तपक्षघटकस्य घटाभावत्वस्य घटसंयोग्यवृत्तित्वव्याप्यतावच्छेदकत्वमुन्मूलयति; तदर्थं तद्व्यभिचारितावच्छेदकत्वसम्पादनाय तदाश्रयस्य समवायाद्यवच्छिन्नघटाभावस्य घटसंयोग्यवृत्तित्वमुन्मूलयति, इति तत्सिद्धिरेव तस्य तद्वृत्तित्वपर्यवसायिनी। अत्र च संयोगसम्बन्धावच्छिन्नघटाभावत्वत्वं यदि स्वसमानाधिकरणघटसंयोग्यवृत्तित्वव्याप्यतावच्छेदकरूपान्तरघटितं स्यात्, तदा घटसंयोग्यवृत्तित्वव्याप्यतावच्छेदकं न स्यात्, इति हेतुभङ्गापत्तिरूप एवानुकूलतर्कः, आपाद्यापादकयोश्च न विभिन्नधर्मिकत्वमिति बोध्यम् ॥

वस्तुतस्तु—अर्थापत्त्यैवात्र तत्सिद्धिराशङ्किता; 'अन्यथानुपपत्तिरि'त्यस्य सिसाधयिषितवस्तुव्यतिरेकव्यापकीभूतव्यतिरेकप्रतियोगित्वार्थत्वात् 'साधिके'त्यस्यार्थापत्तिरूपसिद्धिप्रयोजिकेत्यर्थकत्वात् तत्र च नोपपाद्योपपादकयोः समानधर्मिकत्वाद्यपेक्षेति यथाश्रुतमेवास्तु, 'लाघवेने'त्यादिना चोक्तविरोधित्वरूपोपपाद्यनिरासात् तच्छङ्कानिरासः। एवञ्चानुमाननिरासपरो'क्तयुक्तेरि'ति ग्रन्थे पौनरुक्त्यशङ्काऽपि न, इति न तन्निरासप्रयासादर इति ध्येयम् ॥

*ननु*—घटात्यन्ताभावत्वस्य घटविरोधित्वव्याप्यत्वकल्पनेऽपि तत्तत्सम्बन्धावच्छिन्नतत्तदभावत्वानां तत्तत्सम्बन्धावच्छिन्नतद्वत्ताघटितविरोधित्वव्याप्यत्वस्यापि दुर्वारत्वेन तत्कल्पनप्रयुक्तलाघवासम्भवाद् 'लाघवेने'त्यादि मूलमसङ्गतम्। यद्यपि सामान्यतो घटाभावत्वत्वस्य घटविरोधित्वव्याप्यतावच्छेदकत्वक्लृप्तौ तद्घटिततत्तत्सम्बन्धावच्छिन्नतत्तदभावत्वत्वानां तत्तत्सम्बन्धघटिततत्तद्विरोधित्वव्याप्यतावच्छेदकत्वस्योक्तनियमबलेनासम्भवात् तत्कल्पनप्रयुक्तलाघवसम्भवादेव तत्सङ्गतिः, इत्थं चापतरणोक्तानुमानोपष्टम्भकोक्ततर्कस्येष्टापत्त्याऽनवतारात् तन्निरासः। नच—'स्वसमानाधिकरणे'त्याद्युक्तनियमोऽप्रामाणिकः, प्रामाणिकोऽपि वा स्वरूपसम्बन्धरूपचिलक्षणव्याप्यतावच्छेदकत्वघटितः, तद्घटितव्यापकत्वनिष्ठाधिकरणतानिरूपकतावच्छेदकत्वरूपं तदवच्छेदकत्वं तादृशधर्मान्तरघटितस्यापि दुर्वारम्, इति नोक्तलाघवसम्भव इति—वाच्यम्; तादृशनियमानुपगम उक्ततर्कस्य तदुपष्टम्भकोक्तानुमानस्य चासम्भवेन 'लाघवेने'त्यादिग्रन्थस्यैवानुत्थितिप्रसङ्गात्; तथाप्युक्तविरोधिताद्वयाभ्युपगमे तन्निर्वाहाय तत्तत्सम्बन्धावच्छिन्नप्रतियोगितानां तत्तन्निरूपकाभावानां चावश्यकल्प्यत्वम्, न तु तदनभ्युपगमः, इति तेषां क्लृप्तत्वमभ्युपगम्य सम्बन्धविशेषादिघटितोक्तविरोधिताद्वयस्य लाघवेनाकल्पनापरत्वे उक्तमूलस्यासङ्गतिर्दुर्वारेत्याशङ्क्य, तादृशप्रतियोगित्वाद्यकल्पनप्रयुक्तलाघवपरतयैव तादृशमूलं व्याचष्टे—*लाघवेनेति* ॥ उक्तद्वयाकल्पन एव लाघवम्, नत्वन्यथा, इति तन्निश्चयात् 'सम्भवेने'त्युक्तम् ॥ *अभावप्रतियोगितामात्रस्येति* ॥ साक्षाद् विरोधित्वनिर्वाहकेत्यादिः। *सम्बन्धविषयकत्वेति* ॥ ज्ञानद्वारकविरोधित्वनिर्वाहकेत्यादिः। एवं निर्वाहकाकल्पने निर्वाह्याकल्पनप्रयुक्तमपि लाघवमस्ति यद्यपि; तथापि तस्य स्फुटत्वात् 'समानाधिकरणे'त्यादिनियमानुपगमेऽसम्भवाच्च तद् नोक्तमिति ध्येयम्। विरोधशरीरे सम्बन्धस्येव प्रतियोगितावच्छेदकधर्मस्याप्यनिवेशः, इत्याशङ्कां निरसितुं व्याचष्टे—*घटात्यन्ताभावत्वेनेति* ॥ व्यापकत्वरूपमवच्छेदत्वं तृतीयार्थो विरोधित्वान्वयि। सामानाधिकरण्यपदस्याघाताघातत्वशङ्कां विधुन्वन् व्याचष्टे—*घटसामानाधिकरण्यविरोधित्वेतीति* ॥ एवकारार्थं स्फुटयन्

अद्वैतसिद्धिः

सम्बन्धविशेषप्रवेशे च गौरवाद् घटसमवायाद्यभावमात्रविषयतया प्रतीत्युपपत्तेः,

तरङ्गिणी

सम्बन्धविशेषप्रवेशे च गौरवाद् घटसमवायाद्यभावमात्रविषयतया प्रतीत्युपपत्तेः,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

चेत्यर्थः। देश-कालावच्छेदं संबन्धं तदवच्छिन्नत्वं वाऽनन्तर्भाव्यैवोक्तविरोधिते वाच्ये ; उक्तलाघवसंभवादिति भावः। *गौरवात्=संयोगादिनानासंबन्धावच्छिन्नप्रतियोगिताकानन्ताभावानां कल्पनागौरवात्, संबन्धघटित-रूपेणाभावबुद्धेः प्रतिबन्धकत्वकल्पने संयोगादिसंबन्धावच्छिन्नत्व-घटत्वाद्यवच्छिन्नत्वयोः प्रतियोगितांशे विशेषण-विधया विषयतयोर्निवेश्यतया प्रतियोगिताविषयतायामेकविषयतानिरूपितत्वविशिष्टस्यापरविषयतानिरूपितत्वस्य विशेषणत्वे वाच्ये विनिगमकाभावेनावच्छेदकभेदात् प्रतिबन्धकताभेदे गौरवाच्च। *ननु*—घटसंयुक्ते 'समवायेन घटो नास्ती'ति प्रतीत्यन्यथाऽनुपपत्त्याऽभावस्य संबन्धावच्छिन्नप्रतियोगिताकत्वं सिद्ध्यतु, किंत्वभाव-बुद्धेः संबन्धावच्छिन्नप्रतियोगित्वविषयकत्वमनन्तर्भाव्यैव प्रतिबन्धकत्वे 'संयोगेनात्र घटो नास्ती'ति बुद्धेरपि 'समवायेनात्र घटः' इति धीप्रतिबन्धकत्वापत्तिः, *अथ*—संबन्धावच्छिन्नप्रतियोगित्वविषयिका धीर्न प्रतिबन्धिकेति—चेत्, *तर्हि* 'समवायेन नात्र घटः' इति बुद्धेरप्युक्तप्रतिबन्धकत्वं न स्यात्, तत्राह—*घटसमवायाद्यभावमात्रविषयकतयेति* ॥ घटसमवायत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वाद्यवच्छिन्न-प्रकारतानिरूपितभूतलादिविशेष्यताकत्वेनेत्यर्थः। *प्रतीत्युपपत्तेः='समवायेन घटोऽत्र नास्ती'तिप्रतीते-र्विषयोपपत्तेः, 'समवायेनात्र घटः' इति धीप्रतिबन्धकत्वोपपत्तेश्च। *मात्रेत्यनेन* संबन्धावच्छिन्नप्रतियोगिता न विषयः, न वा तद्घटितरूपेण प्रतिबन्धकतेत्यर्थः ॥

विट्ठलेशीयटिप्पणी

समुदायभावमाह—*देश-कालावच्छेदमिति* ॥ *मूले*—सम्बन्धविशेषेत्युपलक्षणम्—अवच्छेदकविशेषेत्यस्य। एवं संयोगेत्युत्तरपङ्क्तेरिति भावः। उक्तरीत्या तदकल्पनाया लाघवम्। तत्कल्पनयैव गौरवं व्याचष्टे—*गौरवादिति* ॥ तदधीनगौरवान्तरमाह—*सम्बन्धघटितेति* ॥ तदधीनगौरवान्तरमप्याविष्करोति—*संयोगादिसम्बन्धावच्छिन्नत्व-घटत्वाद्यवच्छिन्नत्वयोरिति* ॥ अवच्छिन्नत्वयोर्ये विषयते, तयोरित्यर्थः। व्याख्यातप्रतिबन्धकताकल्पने तत्कल्पने 'संयोगादी'त्यादिरीत्या प्रतिबन्धकताभेदे च गौरवाच्चेत्यावृत्त्या योजना। 'घटसमवाये'त्यादिमूलस्य समवायावच्छिन्न-घटाभावस्य घटसंयुक्तवृत्तित्वप्रतीत्युपपादनमात्रपरत्वे सम्बन्धावच्छिन्नप्रतियोगित्वाकल्पने तद्विषयप्रतीत्युपपादनस्याव्या-वश्यकतया तदकरणे न न्यूनता, एवं सम्बन्धविषयकत्वाघटितरूपेण प्रतियोग्यभावज्ञानयोः प्रतिबध्य-प्रतिबन्धकभावानु-पपत्तिपरिहारस्याप्यकरणाद् न्यूनता, इत्यतस्तदनुपपत्त्यै तदवतारयति—*नन्विति* ॥ *प्रतियोगिताकत्वमिति* ॥ तदाश्रयस्याभावस्य घटसंयुक्तवृत्तित्वं चेति शेषः। सम्बन्धविषयकत्वघटितोक्तरूपेणोक्तस्य प्रतिबन्धकत्वस्यानुपपत्तिं सम्बन्धावच्छिन्नप्रतियोगितासाधिकां परिहर्तुमुद्भावयति—*न प्रतिबन्धिकेति* ॥ सम्बन्धावच्छिन्नत्वाविषयकत्वस्य प्रतिबन्धकतावच्छेदककोटावेव तदर्थं निवेश्यत्वादिति भावः। समवायावच्छिन्नघटाभावत्वेन घटसमवायाभावविषयकत्वे सम्बन्धावच्छिन्नप्रतियोगित्वमन्तरा नोक्तप्रतीत्युपपत्तिरित्यतो व्याचष्टे—*घटसमवायत्वाद्यवच्छिन्नेति* ॥ मात्रपदेन धर्मिविषयकत्वस्य व्यावृत्तिर्न सम्भवति ; धर्मविषयकाभावप्रतीतेरभावात्, इति भूतलविशेष्यकत्वान्तर्भावः। इदं 'भूतलं समवायेन घटाभाववत्' इत्याकारकप्रत्ययाभिप्रायेण, "भूतले समवायेन घटो नास्ति" इति प्रतीतेस्तु घट-समवायाभावत्वत्वावच्छिन्नविशेष्यकभूतलप्रकारकत्वेनेति बोध्यम्। भूतलवृत्तिघटाभाव-घटाभाववद्भूतलयोस्तुल्यवित्ति-वेद्यत्वाभिप्राये तु यथोक्तमेव समञ्जसम्। 'प्रतीत्युपपत्तेरि'त्यत्र प्रतीतिपदं यदि प्रतीतिसामान्यपरम्, तदा घटादिप्रतीते-र्घटसमवायाभावविषयकत्वेनासङ्गतिः, एवमुपपत्तिपदस्य प्रतीत्यन्वितोपपत्तिमात्रपरत्व उक्तप्रतिबन्धकत्वोपपत्तेरलाभः, इत्यतः प्रतीतिपदं तद्विशेषपरतया, उपपत्तिपदं च तदन्वितविषयधीविशेषप्रतिबन्धकत्वोभयोपपत्तिद्वयपरतया व्याचष्टे—*प्रतीत्युपपत्तेरिति* ॥ मात्रपदस्य व्यवच्छेद्यतावच्छेदकतयोक्तोभयोपपादकतया पराभिमतोभयस्येति स्पष्टयति—*मात्रेत्यनेनेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

"शिखी चैत्रो नष्टः" इत्यादौ चैत्रीयशिखादेर्नाशप्रतियोगित्वमिव 'समवायेन घटो नास्ती'-त्यादौ समवायविशिष्टघटत्वादिरूपेण घटादेर्भानेऽपि घटीयसमवायादेरत्यन्ताभावप्रतियोगित्वं भाति, इति। 'समवायेनात्र घटः' इति ज्ञानं प्रति 'घटसमवायोऽत्र नास्ती'ति निश्चयस्य परैरपि प्रतिबन्धकत्वं वाच्यम्,

विट्ठलेशीयटिप्पणी

*ननु* 'समवायेनात्र घटो नास्ति' इत्यादिशब्दाद् घटसमवायाभावशाब्दं न सम्भवति ; प्रथमान्तार्थघटस्य समवाये प्रतियोगितया तृतीयान्तार्थसमवायस्य च नञर्थेऽन्वयस्य क्वचिदप्यदर्शनेनाव्युत्पन्नत्वात्, वैशिष्ट्यस्य घटान्वयिनस्तृतीयार्थत्वेऽपि समवायविशिष्टघटस्यैवाभावांशे प्रतियोगितया भानम्, नतु समवायस्य ; एवञ्च तदाकारप्रतीतेर्न तद्विषयकत्वम्, अत आह—*शिखीति* ॥ चैत्रसत्त्वदशायामित्यादिः । *समवायविशिष्टेति* ॥ घटसंयुक्तभूतलवृत्त्यभावांशे विशेषणविधयेत्यादिः । *भानेऽपीति* ॥ तृतीयान्तार्थसमवायस्य प्रतियोगितयाऽभावान्वयस्याव्युत्पन्नत्वेऽपीति शेषः॥ *भातीति* ॥

*अयं भावः*—तृतीयार्थो वैशिष्ट्यं घटान्वयि, एवं चात्र 'शिखी चैत्रो नष्टः' इत्यत्र च समवाय-शिखाविशिष्ट-घट-चैत्रयोर्न नञ्-नष्टपदार्थात्यन्ताभाव-ध्वंसयोः प्रतियोगितयाऽन्वयः ; बाधात्, नापि समवाय-शिखयोः; एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयाऽन्वयस्यायोगात्, घटीयत्व-चैत्रीयत्वाभ्यां समवाय-शिखयोः शब्दानुपस्थितौ तेन रूपेणाभावान्वयबोधस्य विवक्षितस्याप्यसम्भवात्, घट-चैत्रयोरभावांशे विशेषणत्वेन भानानुभवविरोधाच्च, नापि विशिष्टवैशिष्ट्यबोधमर्यादया विशेषणतावच्छेदकसमवाय-शिखयोरभावांशे प्रतियोगितयाऽन्वयः ; बाधेन घट-चैत्रयोरनन्वये तद्विशेषणस्याप्यन्वयासम्भवात्, 'विशेष्यान्वयिन्येव विशेषणतावच्छेदकस्यान्वयः' इति हि तन्नियमः। नापि—केनापि सम्बन्धेन समवायादिविशिष्टघटाद्यन्विततेऽभावे समवायादेः प्रतियोगितयाऽन्वय इति—वाच्यम्; एवमपि समवाये घटीयत्वालाभेन घटसमवायाभावलाभानुपपत्तेर्दुर्वारत्वात्, किन्तु समवाय-शिखाविशिष्टघट-चैत्रयोरभावांशे स्वीयसमवाये शिखाप्रतियोगिकत्वरूपपरम्परासम्बन्धेन विशेषणतया भान उक्तप्रतीत्योर्घटीयसमवायात्यन्ताभाव-चैत्रीयशिखाध्वंसविषयकत्वं पर्यवस्यति ; "सविशेषणे हि विधि-निषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इति न्यायस्यात्रैव तात्पर्यम्। यद्यपि 'शिखी चैत्रो नष्टः' इत्यत्र नष्टपदार्थस्य नाशप्रतियोगिनः स्वाभिन्नशिखाश्रयत्वसम्बन्धेनैव चैत्रांशे शाब्दे भानम्; तथापि तदुत्तरमानसे चैत्रस्य स्वीयशिखाप्रतियोगिकत्वसम्बन्धेन नाशांशे भानं सम्भवतीति बोध्यम् ॥

*भट्टाचार्यास्तु*—'विशिष्टाभावोल्लेखिप्रतीतेः सति बाधके विशेषणाभावविषयकत्वं मत्वर्थीयार्थाविवक्षयोपपादयाम्बभूवुः—अनुमानदीधितिटिप्पण्यां विशेषनिरुक्तौ। तदपि चैत्रादिपदासमभिव्याहृत'शिखी नष्टः' इत्यादिवाक्याभिलप्यविशेष्यानुपरक्तविशेषणाभावविषयकप्रतीत्यभिप्रायेण कथञ्चिद् युज्यते एव। 'समवायेनात्र घटो नास्ती'त्याकारकविशेष्योपरक्तविशेषणाभावविषयकप्रतीतिस्थले तु प्रदर्शितैव रीती रमणीया। दर्शितरीतेश्चावश्यकत्वप्रदर्शनायैव ग्रन्थकारैर्दृष्टान्तप्रतीत्यभिलापकवाक्ये 'शिखी चैत्रो नष्टः' इत्यत्र चैत्रपदमुपात्तमित्यवधेयम्। शिखापदमेव चैत्रीयशिखापरम्, तत्त्वग्राहके मत्वर्थीयचैत्रपदेऽविवक्षितार्थ इति तु न श्लिष्टतरम्। तादृशं च प्रकृतेऽपि समवायपदमेव घटीयसमवायपरं तत्त्वग्राहके तृतीया घटपदे विवक्षितार्थ इति दिक् ॥

*नन्वेवम्* 'समवायेनात्र घटो नास्ती'ति निश्चयस्य घटसमवायाभावविषयकत्वे 'समवायेनात्र घटोऽस्ति' इति बुद्धिप्रतिबन्धकत्वं न स्यात्; ग्राह्यघटाभावानवगाहित्वात्, घटसमवायाभावस्य तद्व्याप्यत्वेनाग्रहेण ग्राह्याभावव्याप्यत्वेन गृहीतधर्मानवगाहित्वाच्च, स्वातन्त्र्येण तस्य तादृशबुद्धिप्रतिबन्धकत्वप्रकल्पने गौरवादित्यत आह—*समवायेनेति* ॥ *घटसमवाय इति* ॥ स्वरूपसम्बन्धेनेत्यादिः ॥ *वाच्यमिति* ॥ तदुत्तरं तदनुत्पादस्य सर्वानुभव-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

परं तु स्वरूपसंबन्धावच्छिन्ना या घटसमवायत्वावच्छिन्नप्रतियोगिता, तन्निरूपकाभावविषयकत्वेन । तथाच लाघवाद् उक्तसंबन्धावच्छिन्नत्वमनन्तर्भाव्यैव तदुच्यताम् । नच—घटसंयुक्तादिदेशे केनचित् संबन्धेन घटसमवायस्य सत्त्वात् तदभावोऽपि तत्र न सम्भवति, इत्युक्तधीप्रमात्वोपपत्तये समवायेन घटाभाव एव तद्विषय इति—वाच्यम् ; स्वरूपसंबन्धेन हि परैर्घटसमवायस्याभावो यः स्वीक्रियते, स एवास्माभिर्घटसमवायाभाव उच्यते ; तस्यैव हि घटसमवायीयदैशिकसाक्षात्संबन्धसामान्ये विरोधिता ॥

विट्ठलेशीयटिप्पणी

सिद्धत्वादिति भावः । *ननु* परैः सम्बन्धान्तरावच्छिन्नाभावज्ञानव्यावृत्तये घटसमवायत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वेनैव तस्य तत्प्रतिबन्धकत्वमुच्यते, 'समवायेनात्र घटो नास्ती'तिज्ञानस्य तूक्तरीत्या घटसमवायाभावविषयकत्वेऽपि तत्प्रतियोगितायां स्वरूपसम्बन्धावच्छिन्नत्वस्यानुल्लेखेन न तेन रूपेण प्रतिबन्धकतासम्भवः, इत्याशङ्क्य परिहरति—*परन्त्विति* ॥ *लाघवात्=प्रतिबन्धकत्वान्तराकल्पनप्रयुक्तात्, उक्तसम्बन्धावच्छिन्नत्वानिवेशप्रयुक्ताच्च ॥ *अनन्तर्भाव्येति ॥ सम्बन्धावच्छिन्नप्रतियोगितायाः एवाकल्पनेन सम्बन्धान्तरावच्छिन्नाभावज्ञानस्यैवालीकतया तद्व्यावृत्तेरनपेक्षितत्वेन तदन्तर्भावे प्रयोजनाभावात्, अप्रसिद्धिप्रसङ्गाच्चेति भावः ॥ *तदुच्यतामिति* ॥ तथाचोक्तरूपेणैव 'समवायेन घटो नास्ती'ति ज्ञानस्योक्तज्ञानीयक्लृप्तप्रतिबन्धकत्वेन निर्वाहाद् न तदनुपपत्तिः, न वा गौरवमिति भावः । सम्बन्धावच्छिन्नप्रतियोगित्ववादी शङ्कते—*नचेति । केनचित्=कालिकविशेषणतादिना । *तदभावोऽपीति* ॥ तत्र केनचित् सम्बन्धेन घटसत्त्वेन समवायावच्छिन्नघटाभाव इवेति शेषः ॥ *उक्तधीः='समवायेनात्र घटो नास्ती'ति धीरित्यर्थः । *समवायेन घटाभाव एवेति* ॥ स्वरूपसम्बन्धेन घटसमवायाभावस्य तद्विषयकत्वेन प्रमात्वोपपादने सम्बन्धावच्छिन्नप्रतियोगित्वस्य कण्ठे पातात् किमपराद्धं समवायेन ? इति नोक्तलाघवसम्भव इति भावः । एवञ्च सम्बन्धावच्छिन्नप्रतियोगित्वसिद्धिरिति शङ्काभिप्रायः । *स्वरूपसम्बन्धेनेति* ॥ घटसमवायीयस्वरूपसम्बन्धाभाव एव घटसमवायाभाव इति तु नोक्तम् ; केनचित् सम्बन्धेन तादृशस्वरूपसम्बन्धवति तदभावस्याप्यसम्भवात्, स तदीयस्वरूपसम्बन्धाभावरूपः, एवं सोऽपि तदीयस्वरूपसम्बन्धाभावरूपः, एवं सोऽपीत्यनवस्थापत्तेः ॥ *य इति ॥ 'स्वरूपसम्बन्धेनात्र घटसमवायो नास्ती'ति प्रत्ययगम्य इति शेषः । 'घटसमवायेन घटो नास्ती'ति प्रतीतिविषयतयोपगम्यमान इत्यादिः । *ननु* 'स एवे'ति कुतः ? सम्बन्धान्तरावच्छिन्नतदभावोऽपि घटसमवायाभाव उच्यताम्, अत आह—*तस्यैवेति* ॥ आधेयत्वं षष्ठ्यर्थः । *सामान्य इति* सप्तम्यर्थो निरूपितत्वं व्यत्ययो वा बोध्यः । *विरोधितेति* ॥

नञादेः प्रतियोगि-तत्सम्बन्धान्यतरविरोध्यभावबोधकताया भेदस्य विशिष्टबुद्धिविषयताव्यवस्थापनशोधे पूर्वमुक्तत्वेन घटसमवायाभावपदेन घटसमवायविरोध्यभावस्तत्सम्बन्धविरोध्यभावो वा प्रतिपाद्यते । तत्र च सम्बन्धो दैशिकसाक्षात्सम्बन्ध एव घटकः ; कालिकादिपरम्परासाधारणसम्बन्धसामान्यघटितविरोधित्वस्य कस्मिन्नप्यभावेऽप्रसिद्धत्वात्, सम्बन्धत्वेन सम्बन्धानामभावप्रतियोगितानवच्छेदकतया सम्बन्धसामान्यावच्छिन्नप्रतियोगिताकाभावस्य परैरप्यनङ्गीकारात्, सम्बन्धसामान्येन प्रतियोगिनः केवलान्वयितया तस्याप्रसिद्धेश्च, यत्किञ्चित्सम्बन्धान्तरघटिततद्विरोधस्यापि यत्किञ्चित्सम्बन्धान्तरावच्छिन्नप्रतियोगिताकत्वेनाभिमताभावेऽसम्भवात् ; तथाच घटसमवायीयदैशिकसाक्षात्सम्बन्धरूपस्वरूपसम्बन्धविरोध्यभावः 'स्वरूपेण घटसमवायोऽत्र नास्ती'ति प्रत्ययविषयो यः, स 'घटसमवायाभावविषयतयैव प्रतीत्युपपत्तेरि'ति मूलस्थघटसमवायाभावपदेनोच्यते ; तद्विषयविषयक एव 'समवायेनात्र घटो नास्ती'ति प्रत्यय इत्युपगम्यते । तादृशाभावश्च घटसंयुक्तदेशेऽप्यक्षतः, इत्युक्तप्रमात्वनिर्वाहाद् न समवायावच्छिन्नघटाभावस्तद्विषयः, इति न सम्बन्धावच्छिन्नप्रतियोगित्वसिद्धिरिति भावः ॥ नञ्प्रयोगस्थलस्य एव विरोध्यभावबोधकत्वम्, न तु 'घटाभावः' इत्यादावभावादिपदानामित्यपि पूर्वं तत्रैवोक्तम् ; तथाच 'न समवायाभावः' इत्यत्राभावपदेन नञ्पदमेव विवक्षितमिति तात्पर्यम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत एव*—केनचित् संबन्धेन घटादेः सर्वत्र जन्ये मूर्ते च सत्त्वात् तत्र घटसामान्याभावधीप्रमात्वोपपत्तये संबन्धविशेषावच्छिन्नप्रतियोगिताऽवश्यं वाच्येति—*परास्तम्* ; घटीयदैशिकसाक्षात्संबन्धसामान्याभावस्यैव घटसामान्याभावत्वात् । तादृशश्च घटस्य संबन्धः संयोगः समवायश्च, नतु कालिकी दिङ्निष्ठा वा विशेषणता, न वा स्वाश्रयसंयोगादिः । अत एव तद्वत्यपि 'घटो नास्ती'ति धीः प्रमात्वेन सर्वसिद्धा । *ननु*—'संयोगेन रूपं नास्ती'त्यादौ रूपीयसंयोगादेरप्रसिद्धया तदभावो न विषयः, नच—संयोगाद्यंशे रूपीयत्वादेर्भ्रमत्वं तत्रेति—वाच्यम् ; तादृशप्रतीतेः सर्वांशे प्रमात्वस्य सर्वजनसिद्धत्वादिति—चेत्, *सत्यम्* ; रूपीयत्वादिना संयोगाद्यभावस्यैव तत्र विषयत्वात्, व्यधिकरणधर्मावच्छिन्नाभावस्वीकारात्, परैरपि तत्र व्यधिकरणसम्बन्धस्य प्रतियोगितावच्छेदकत्वस्वीकारात्, प्रतियोग्यंशे विशेषणतानापन्नस्यैव व्यधिकरणधर्मस्य प्रतियोगितांशेऽवच्छेदकतया विशेषणत्वेन भ्रमत्वाभावात्, प्रतियोग्यंशे

विट्ठलेशीयटिप्पणी

*नन्वेवमपि* 'कालिकादिसम्बन्धेन घटवति कालादौ 'घटो नास्ती'ति घटसामान्याभावविषयिणी धीः प्रमात्वेन सर्वसिद्धा नोपपद्यते ; त्वया सम्बन्धविशेषानन्तर्भावेणैव प्रतियोग्यभावयोर्विरोधस्योपगमेन तत्र घटसामान्याभावरूपविषयबाधेन तत्प्रमात्वानुपपत्तेः, न हि तस्यां घटीयसंयोगस्य समवायस्याभाव एव भासत इति वक्तुं शक्यम् ; 'संयोगेने'त्येवं तदनुल्लेखात्, 'कपाले भूतले घटो नास्ती'ति धियः प्रमात्वापत्तेश्च, नैल्यादिविशेषरूपानुल्लेखिन्या रक्तत्वादिविशेषणरूपावच्छिन्नघटवतीव संयोगादिसम्बन्धविशेषानुल्लेखिन्या अप्युक्तबुद्धेः समवायादिसम्बन्धविशेषेण घटवति प्रमात्वस्यानिष्टत्वात्, नापि घटीयसंयोग-समवाययोरभावद्वयम् ; तयोरनुल्लेखात्, तथा सति घटासम्बन्धिनोऽप्रसिद्धया घटसामान्याभावापलापापत्तेश्च । अतः सम्बन्धविशेषमन्तर्भाव्यैव विरोधमुपगम्य संयोग-समवायान्यतररूपघटीयसाक्षाद्दैशिकसम्बन्धसामान्यावच्छिन्नघटाभावस्यैव कालाद्यावुक्तधीविषयतामुपगम्योक्तधियः प्रमात्वमुपपाद्यम् । तथाच तदनुरोधेनैव सम्बन्धावच्छिन्नप्रतियोगित्वादिसिद्धिर्दुर्वारेत्याशङ्कां परिहरति—*अत एवेति* ॥ स्वरूपसम्बन्धेन तदीयतत्सम्बन्धानधिकरणे सम्बन्धान्तरेण तदधिकरणेऽपि तदीयतत्सम्बन्धाभावस्योपगमादेवेत्यर्थः । तदनुपगमे कालिकादिसम्बन्धेन घटीयदैशिकसम्बन्धवति कालादौ घटीयदैशिकसम्बन्धसामान्याभावस्यासम्भवेन तस्य घटसामन्याभावरूपतोपगमेनाप्युक्तधियः प्रमात्वोपपादनासम्भवादुपष्टम्भसङ्गतिः । *'मूर्ते चे'ति चकारेण परम्परया घटादिमतो नित्यरूपादेः समुच्चयः । *घटीयेति* ॥ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वेन पराभ्युपगतेत्यादिः । नच—'कालादौ घटो नास्ती'त्याद्याकारकबुद्धौ घटीयदैशिकसाक्षात्सम्बन्धस्यानुल्लेखात् कथं तदभावभानमिति—वाच्यम् ; उक्तवाक्ये घटपदस्य निरूढलक्षणयोक्तसम्बन्धपरतया तदुल्लेखसम्भवात्, सम्बन्धविशेषावच्छिन्नत्वविशेषित-घटत्वावच्छिन्नत्वविशेषितप्रतियोगिताकाभावत्वेन तादृशसम्बन्धाभावभानसम्भवाच्च । *एतेन*—सर्वत्रैवाभावप्रत्ययानां तत्सम्बन्धाभावविषयकत्वे घटसामान्याभावस्यापलापप्रसङ्ग इति—*परास्तम्* ; तादृशसम्बन्धस्य न दैशिकत्वादिना निवेशः, तेषां दुर्वचत्वात्, गौरवाच्च, किन्तु संयोगसमवायान्यतरत्वेनेति व्यञ्जयितुं तादृशसम्बन्धान् विशिष्य दर्शयति—*तादृशश्चेति* ॥ दैशिकत्वस्य व्यावर्त्यमर्थमाह—*नत्विति* ॥ साक्षात्त्वस्याह—*न वेति* ॥ तद्व्यावृत्तेरपि फलं स्पष्टयति—*अत एवेति* ॥ कालिकविशेषणतादीनामतादृशत्वादेवेत्यर्थः । *तद्वति*—घटीयकालिकविशेषणतादिमति कालादौ । *तत्र*—'संयोगेन रूपं नास्ती'ति प्रतीतौ । *सिद्धत्वादिति* ॥ प्रत्यक्षे शाब्दी व्युत्पत्तिरप्रयोजिकेति भावः । प्रतियोगितायाः अवच्छेदकत्वे सामानाधिकरण्यस्य तन्त्रत्वात् कथमिदम् ? अत आह—*परैरपीति* ॥ *ननु* 'प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकतया भानमि'ति नियमात् प्रतियोगितावच्छेदकतया भासमानस्य रूपीयत्वस्य संयोगांशे विशेषणत्वमावश्यकम्, इति कथमुक्तप्रतीतिः सर्वांशे प्रमा स्यात् ? इत्याशङ्कां तन्नियमानुपगमेन परिहरति—*प्रतियोग्यंशे विशेषणतानापन्नस्यैवेति* ॥ तादृशनियमोपगमे तूक्ताशङ्कामिष्टापत्त्या परिहरति—*प्रतियोग्यंशे विशेषणस्यैवेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विशेषणस्यैवोक्तविशेषणत्वमिति नियमेऽपि व्यधिकरणधर्मावच्छिन्नाभावधीमात्रस्य प्रतियोग्यंशे तादृशधर्मभ्रमत्वस्वीकारेण प्रकृतेऽपि भ्रमत्वे बाधकाभावाद् न दोषः । नच—'घटो न पटः' इत्यादिनिश्चयकालेऽपि 'पटत्वेनात्र घटो नास्ती'ति ज्ञानोत्पत्तेर्घटादौ पटत्वादिवैशिष्ट्याभाव एवोक्तज्ञाने विषयः, वैशिष्ट्यस्य साहित्यरूपस्य तृतीयार्थत्वेन तदत्यन्ताभावबोधने घटपदोत्तरं न सप्तम्यपेक्षेति—वाच्यम् ; उक्तनिश्चयकाले घटत्वादिविशिष्टे पटत्वादिभानासम्भवेऽपि 'एकत्र द्वयमि'ति रीत्या शुद्धघटादौ घटत्वपटत्वाद्युभयं विशेषणीकृत्योक्तज्ञानोत्पत्तिसम्भवात्, उक्तज्ञाने घटादौ पटत्वादिवैशिष्ट्याद्यभावभाने 'अत्र घटः पटत्वेनास्ती'त्याकारकस्य—'एकत्र द्वयमि'ति रीत्या घटत्वपटत्वाद्युभयविशिष्टविषयकस्य सत्त्वेऽप्युक्तज्ञानोत्पत्त्यापत्तेरित्याशयः । *नन्वेवम्*—'समवायेन घटो नास्ती'त्यादिज्ञाने प्रतियोगितांशे सम्बन्धा-

विट्ठलेशीयटिप्पणी

*मात्रस्य=सामान्यस्य । *प्रकृते='संयोगेन रूपं नास्ती'ति प्रतीतौ । *भ्रमत्वे=संयोगांशे रूपीयत्वभ्रमत्वे । *बाधकाभावादिति* ॥ प्रतियोगितावच्छेदकत्वांश एव प्रामाण्यस्याप्रसक्तत्वादिति भावः । तादृशशाब्दप्रतीतौ तु तृतीयान्तार्थसंयोगवैशिष्ट्यं रूपे, रूपं च स्वप्रतियोगिकत्वावच्छिन्नसंयोगनिष्ठप्रतियोगिताकत्वसम्बन्धेन नञर्थाभावे प्रकारः, इति संयोगवैशिष्ट्यांशे भ्रमत्वम् । यदि रूपस्य स्वप्रतियोगिकत्वविशिष्टसंयोगप्रतियोगिकत्वं तत्र सम्बन्धः, तद्विशिष्टप्रतियोगिकत्वं च तद्विशिष्टावच्छिन्नप्रतियोगिताकत्वम्, तदा संयोगे स्वप्रतियोगिकत्वांशेऽपि भ्रमत्वमिति बोध्यम् । व्यधिकरणधर्मावच्छिन्नाभावसिद्धिं शङ्कते—*नचेति* ॥ *वैशिष्ट्याभाव एवेति* ॥ उक्तनियमानुरोधेन प्रतियोगितावच्छेदकतया भासमानघटत्वस्य पटांशे भानस्यावश्यकस्योक्तनिश्चयरूपप्रतिबन्धककालेऽसम्भवेन पटत्वावच्छिन्नघटाभावभानस्यासम्भवः । *उक्तज्ञाने*=उक्ताकारकज्ञानसामान्ये । समानाकारकप्रत्ययानां सदा समानविषयकत्वस्य नयात्तयोक्तनिश्चयशून्यकालीनोक्तज्ञानेऽप्युक्तवैशिष्ट्याभावस्यैव विषयत्वात् । तथाच व्यधिकरणधर्मावच्छिन्नाभावे साधकाभाव इति शङ्काभावः । *ननु* अत्यन्ताभावबोधेऽनुयोगिनि सप्तम्यपेक्ष्यते, सा चात्र नास्ति, इति कथं वैशिष्ट्याभावबोध इति ? अत आह—*वैशिष्टयेति* ॥ *साहित्यरूपस्य=साहित्यतुल्यस्य । तदन्वयवैशिष्ट्येऽपि प्रकृताभ्युपगमस्थानम्, 'इत्थंभूतलक्षणे' इति तृतीयाविधानात् साहित्यरूपवैशिष्ट्यस्यानपेक्षणात्, अनुपयोगात्, असम्भवाच्च, साहित्यतुल्यताकथनं 'पुत्रेण सह नागतः' इत्यादौ साहित्याभावबोध इवात्र सप्तम्यनपेक्षासूचनायेति बोध्यम् । *तृतीयार्थत्वेनेति* ॥ 'घटो न पटः' इति वाक्यप्रामाण्यवारणानुरोधेन प्रातिपदिकार्थाभावबोधे सप्तम्यपेक्षणेऽपि 'चैत्रो न पचति' 'इदं न चैत्रस्ये'त्यादिवाक्यप्रामाण्यानुरोधेन विभक्त्यर्थाभावबोधे न तदपेक्षेति भावः । उक्तनिश्चयकाले='घटो न पटः' इति निश्चयकाले । *घटत्वादिविशिष्टे=घटत्वादिकं धर्मितावच्छेदकीकृत्य । *एकत्रेति* ॥ निर्धर्मितावच्छेदककेदृशबुद्धेरुक्तनिश्चयस्याविरोधित्वादिति भावः । *उक्तज्ञानोत्पत्तिसम्भवादिति* ॥ पटत्वावच्छिन्नघटाभावविषयकस्य 'पटत्वेन घटोऽत्र नास्ती'त्याकारकज्ञानस्योत्पत्तिसम्भवादित्यर्थः । तथाचेयमेव व्यधिकरणधर्मावच्छिन्नाभावसिद्धिरिति भावः । *ननु* उक्तज्ञानस्याक्लृप्तव्यधिकरणधर्मावच्छिन्नाभावविषयकत्वापेक्षया क्लृप्तोक्तवैशिष्ट्याभावविषयकत्वे लाघवमित्याशङ्क्य तत्र बाधकमाह—*उक्तज्ञानेति* ॥ *सत्त्वेऽपीति* ॥ निश्चयस्येत्यादिः । निर्धर्मितावच्छेदककस्य तस्योक्तज्ञानाविरोधित्वादिति भावः । *आपत्तेरिति* ॥ अस्माकं तु पटत्वावच्छिन्नघटप्रकारकनिश्चयस्य पटत्वावच्छिन्नघटाभावविशिष्टविषयकोक्तज्ञाने प्रतिबन्धकत्वाद् न तदा तदापत्तिरिति भावः । सम्बन्धावच्छिन्नप्रतियोगिताप्रतिक्षेपपरमूलग्रन्थे घटात्यन्ताभावघटसमवायाभावपदयोर्घटत्वावच्छिन्नप्रतियोगिताकाभाव-घटसमवायत्वावच्छिन्नप्रतियोगिताकाभावार्थकत्वे प्रतियोगितायां प्रतियोगिविशेषणतापन्नधर्मावच्छिन्नत्वमुपगतमित्यायातम्, तद् व्यवस्थापयितुं तत्र तज्ज्ञानमाक्षिपति—*नन्वेवमिति* ॥ *ननु* एवं घटसमवायप्रतियोगिकाभावस्यैव घटसमवायविरोधित्वमुपगन्तव्यम् । तथाच घटसमवायिनि कपाले

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वच्छिन्नत्वाभाने घटसमवायत्वाद्यवच्छिन्नत्वमपि न भातीति कुतो नोच्यते ? तादृशावच्छिन्नत्वेन पराभ्युपगतप्रतियोगिताव्यक्तिसम्बन्धेन घटसमवायविशिष्टस्याभावस्य घटसमवायविरोधित्वम्, उक्तसम्बन्धेन घटसमवायत्वमात्रेण चावच्छिन्नाया अभावांशे प्रकारताया एव प्रतिबन्धकतावच्छेदकत्वमित्यस्य वक्तुं शक्यत्वात् । यदि च प्रतियोगिताया धर्मावच्छिन्नत्वं सर्वानुभाविकमित्युच्यते, तदा सम्बन्धावच्छिन्नत्वमपि तथेति वक्तुं शक्यत इति—चेत्, *अत्रोच्यते* ; 'जले वह्निर्नास्ती'तिवद् 'जले द्रव्यं नास्ती'त्यस्यापि प्रमात्वं स्यात्, यत्प्रतियोगिताव्यक्तिविशेषसम्बन्धेन वह्निविशिष्टो योऽभावः, तस्य तेन सम्बन्धेन द्रव्यात्मकवह्निविशिष्टत्वात् । *अथ* वह्नित्वावच्छिन्नं प्रत्येव सम्बन्धस्तत्प्रतियोगिता, नतु द्रव्यत्वावच्छिन्नं प्रतीति—चेत्, *न* ; तत्प्रतियोगिता वह्नित्वावच्छिन्नप्रतियोगिताका, नतु द्रव्यत्वावच्छिन्नप्रतियोगिताकेत्येवं ह्युक्तवाक्यार्थः । तथाच वह्नित्वावच्छिन्नप्रतियोगिताकत्वमपेक्ष्य वह्नित्वावच्छिन्नत्वमेव लघु तत्प्रतियोगितायां कल्प्यताम् । *किंच* 'विशिष्टस्य वैशिष्ट्यमि'ति रीत्या ज्ञानस्य 'विशेष्ये विशेषणं तत्रापि विशेषणान्तरमि'ति रीत्या ज्ञानाद् वैलक्षण्यसिद्धये 'विशिष्टस्ये'त्यादिज्ञाने विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपेण विशेषणसम्बन्धो भातीति स्वीक्रियते । तथाचाभावप्रत्यक्षस्य 'विशिष्टस्ये'त्यादिज्ञानत्वनियमाद् 'घटोऽत्र नास्ती'त्यादिप्रत्यक्षस्य घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपेणानुयोगिताविशेषरूपोऽभावे घटादेः सम्बन्धो भाति, 'घटत्वादी'त्यादौ संयोगादेर्घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपेण भानवदिति । नचैवम्—'कम्बुग्रीवादिविशिष्टवदि'त्यस्येव 'कम्बुग्रीवादिविशिष्टमत्र नास्ती'त्यस्यापि 'विशिष्टस्ये'त्यादिज्ञानस्य प्रमात्वापत्तिः, गुरुधर्मस्याभावनिष्ठानुयोगितासम्बन्धप्रतियोगितावच्छेदकत्वे संयोगादि-

## विट्ठलेशीयटिप्पणी

किञ्चिद्विशिष्टत्व-द्वित्वाद्यवच्छिन्नघटसमवायप्रतियोगिताकाभावस्याप्यसम्भवात् प्रतीत्यनुपपत्तिः, एवं घटसमवायविशिष्टबुद्धौ तत्प्रतियोगिकाभावग्रहत्वेनैव प्रतिबन्धकताया वक्तव्यतया 'पूर्वक्षणवृत्तित्वविशिष्टघटसमवायोऽत्र नास्ति' 'घटसमवाय-पटोभयं नास्ति' इति बुद्ध्योरपि शुद्धघटसमवायत्वावच्छिन्नप्रकारकज्ञानप्रतिबन्धकताप्रसङ्गः, अस्माकं तु शुद्धघटसमवायत्वावच्छिन्नप्रतियोगिताकाभाव-तद्ग्रहयोरेव घटसमवाय-तद्वत्ताग्रहविरोधित्वोपगमसम्भवाद् नोक्तदोष इत्याशङ्क्य क्रमेण परिहरति—*तादृशावच्छिन्नत्वेनेति* ॥ *उक्तसम्बन्धेनेति* ॥ वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताविलक्षणव्यक्तिसम्बन्धेनेत्यर्थः । प्रतियोगितायाः सम्बन्धानिवेशनलाघवाय संसर्गविधया निवेशः । अनेन सम्बन्धेन घटसमवायविशिष्टश्च न वैशिष्ट्याद्यवच्छिन्नाभावः, इति न तस्य तद्विरोधित्वप्रसङ्गः । घटसमवायत्वमात्रावच्छिन्नप्रकारकाभावबुद्धौ द्वित्वाद्यवच्छिन्नप्रतियोगितायाः संसर्गत्वे तद्वारणाय—'उक्तसम्बन्धेने'ति । एवमुक्तसम्बन्धसंसर्गकाभावबुद्धौ किञ्चिद्विशिष्टघटसमवायत्वाद्यवच्छिन्नप्रकारकत्वे तद्वारणाय मात्रपदम् ; अन्यथा त्वेकतरमेवालमिति बोध्यम् । *प्रकारताया इति* ॥ ईदृशप्रकारताशालित्वं च 'घटसमवायो नास्ती'ति बुद्धेः, न किञ्चिद्विशिष्टतदभावादिबुद्धेः, इति नोक्तविशिष्टबुद्धिप्रतिबन्धकत्वप्रसङ्ग इति भावः । *ननु*—यद्युक्तवाक्यस्य तत्प्रतियोगिताया वह्नित्वावच्छिन्नप्रकारतानिरूपितसंसर्गत्वमेव, नतु द्रव्यत्वावच्छिन्नप्रकारतानिरूपितसंसर्गत्वमित्यर्थः, सम्बन्धसम्बन्धप्रतियोगित्वानुयोगित्वे च न विशिष्टबुद्धिविषयावित्युच्यते, तदोक्तलाघवरूपयुक्त्यन्तरेण न धर्मावच्छिन्नप्रतियोगितासिद्धिः सम्भवतीत्यतो युक्त्यन्तरमाह—*किञ्चेति* ॥ *वैलक्षण्येति* ॥ विषयवैलक्षण्याधीनेत्यादिः । 'अर्थेनैव विशेषः' इत्याद्युक्तेः । *एतेन*—विषयतावैलक्षण्येनापि तत्सिद्धिसम्भवे नायं प्रकार आवश्यक इति—*परास्तम्* । *भानवदितीति* ॥ स्वीकार्यमिति शेषः । 'भूतलं कम्बुग्रीवादिविशिष्टवदि'ति ज्ञानस्य प्रमात्वम् । 'कम्बुग्रीवादिविशिष्टमत्र नास्ती'ति ज्ञानस्य त्वप्रमात्वं मन्वानः शङ्कते—*नचैवमिति* ॥ *प्रमात्वापत्तिरिति* ॥ गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्व इत्यादिः । *निष्ठानुयोगितासम्बन्धेति* संयोगसम्बन्धसाम्यायोक्तम् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सम्बन्धप्रतियोगितायामप्यनवच्छेदकत्वेन द्वयोरप्युक्तज्ञानयोरप्रमात्वं स्यादिति—वाच्यम् ; गुरुत्वाज्ञाने सत्यप्युक्तज्ञानयोरुत्पत्त्या प्रमात्वस्येष्टत्वात् , गौरवस्य कारणतावच्छेदकत्वादिविरोधित्वेऽपि सम्बन्धप्रतियोगितावच्छेदकत्वाविरोधित्वात् । *अथवा*—'विशिष्टस्ये'त्यादिज्ञाने विशेषणतावच्छेदकं विशेष्येणान्वयिनि विशेष्ये विशेषणतया भाति, यदेव हि स्वविशेष्यविशेष्ये विशेषणम्, तद् विशेषणम् , तदन्यत्तु प्रकारीभूतमप्युपलक्षणमुपाधिर्वा। तथाच 'घटः प्रमेयः' 'दण्डिमदिदमि'त्यादौ विशेषण विशेषणतावच्छेदकयोरेकजातीयेन तादात्म्यादिसम्बन्धेन प्रमेयादौ विशेषणत्वेऽपि संयोगादिसाक्षात्सम्बन्धेन दण्डादेरिदमादौ बाधकाले स्वाश्रयसंयोगादिपरम्परासम्बन्धेनापीदमादौ 'विशिष्टस्ये'त्यादिरूपोक्तज्ञाने दण्डादेर्भानवत् 'घटोऽत्र नास्ती'त्यादौ घटाद्यभावे स्वप्रतियोगितानिरूपितानुयोगितासम्बन्धेन घटादेः प्रकारत्वेऽपि घटत्वादेस्तेन सम्बन्धेन तत्र बाधात् स्वाश्रयप्रतियोगितानिरूपितानुयोगितासम्बन्धेन तस्य प्रकारत्वे 'जले द्रव्यं नास्ती'त्यस्यापि प्रमात्वापत्तेः, अन्यस्य चैक-

### विट्ठलेशीयटिप्पणी

*ननु* गौरवस्य प्रतियोगितावच्छेदकत्वविरोधित्वात् कथं तज्ज्ञाने सत्युक्तज्ञानोत्पत्तिः स्यादिति ? अत आह—*गौरवस्येति* ॥ उक्तरीत्या विशिष्टवैशिष्ट्यबोधवैलक्षण्योपपादने घटत्वादिविशिष्टवैशिष्ट्यबोधे घटत्वाद्यवच्छिन्नप्रतियोगिकत्वविशिष्टसंयोगादिसंसर्गकत्वस्वीकाराद् विशेषणरूपेण संसर्गतापत्तिः । किञ्च यथा 'घटत्वादिविशिष्टस्तज्ज्ञानविषयः, तदभावप्रतियोगितावच्छेदकश्च, इत्यादौ घटत्व-घटोभयं विधेयान्वयितया प्रतीयते, एवं 'घटत्वादिविशिष्टं भूतलाद्यंशे विशेषणमि'त्यादावपि घटत्व-घटोभयं भूतलाद्यंशे विशेषणमिति प्रतीयते । तच्चोक्तप्रकारे नोपपद्यते, अतः प्रकारान्तरेणैवोक्तबोधवैलक्षण्यमुपपादनीयम्, इदं कल्पान्तरानुसरणबीजमाविष्कर्तुमेव हि वक्ष्यति—'यदेव हि स्वविशेष्यविशेष्ये विशेषणम्, तद्विशेषणमिति' । तत्र च कथं घटत्वादेः प्रतियोगितावच्छेदकत्वसिद्धिः ? तत्र घटादेः शुद्धानुयोगितासम्बन्धेनैव भानेन घटत्वादेस्तत्प्रतियोगितावच्छेदकत्वेनाभानात्, इत्याशङ्कायां स्वपक्षेऽपि तदुपपादयितुं तं पक्षमुपन्यस्यति—*अथवेति* ॥ तत्कालेऽसदुपलक्षणम्, सदुपाधिः । *ननु* 'एतदंशे एतद्विशिष्टमनेन सम्बन्धेन विशेषणमि'त्यत्र विशेषण-तद्धर्मैकसम्बन्धेन विशेषणत्वप्रतीतेर्विशिष्टवैशिष्ट्यबोधेऽपि शुद्धे धर्मिणि विशेषणतत्तावच्छेदकयोरेकजातीयसम्बन्धेन विशेषणत्वमावश्यकम् ; यथा 'प्रमेयो घटः' इत्यत्र प्रमेये घटत्व-घटयोरभेदेन विशेषणत्वम् ; यथा वा—'इदं दण्डिमदि'त्यत्रेदंपदार्थे प्रमेये दण्ड-तद्वतोः । तथाच 'घटो नास्ती'त्यत्र घटत्वस्याभावांशे प्रतियोगितयैव भानं वाच्यम्, नतु तदवच्छेदकतया, इति कथं तत्सिद्धिरिति ? अत्राह—*तथाचेति* ॥ 'प्रमेयं घटः' इति योजना । एवमिदं दण्डिमदिति योजना । इदं पदार्थः प्रमेयम् ; 'प्रमेयादावि'त्युत्तरपङ्क्तौ सत्त्वात् । उक्तव्यवहारे 'अनेन सम्बन्धेनेत्यस्यैवंरूपतया इत्यर्थस्य प्रतियोगिभेदेन सम्बन्धभेदेनासम्भवेनेदंजातीयलक्षणाया आवश्यकत्वात् तद्घटितपरम्परायाः कथञ्चित् सजातीयतयाऽनेन सम्बन्धेन विशेषणतावच्छेदकाभानेऽपि तद्व्यवहारोपपादनसम्भवात्, उक्तबोधे क्वचिद् विशेषण-तत्त्वावच्छेदकयोः सजातीयेन भिन्नसम्बन्धेनापि विशेषणता स्वीकर्तुं शक्या, आधम्भिका च, अन्यथा संयोगादिसंसर्गकोक्तबोधवैलक्षण्यानुपपत्तेरित्यभिप्रायेण—'अपि'त्वसूचितोक्तशङ्कां परिहरति—*संयोगादीति*॥ *इदमादौ=तदर्थभूतलत्वादिविशिष्टे । *बाधकाल इति* ॥ एवं चासति बाधकेऽत्यन्तमेकजातीयसम्बन्धेन तत्र बाधके सति तद्घटितपरम्परासम्बन्धेन कथञ्चित् तत्सजातीयेन विशेषण-तत्तावच्छेदकयोरेकधर्मिण्युक्तबोधे भानमिति नियमपर्यवसानमिति भावः । *ननु* एवमप्यभावबुद्धौ तदंशे घटत्वादेः स्वाश्रयप्रतियोगितानिरूपितानुयोगितया भानेऽप्युक्तनियमोपपत्तेः प्रतियोगितावच्छेदकतया भानमनावश्यकमित्याशङ्कां परिहरति—*स्वाश्रयप्रतियोगितेति* ॥ *प्रमात्वापत्तेरिति* ॥ तथाचैतादृशबाधकान्तरबलाद् उक्तपरम्पराघटकप्रतियोगित्वे स्वावच्छिन्नत्वस्याप्यन्तर्भावावश्यकत्वाद् घटत्वादेरभावप्रतियोगितावच्छेदकतया भानसिद्धिरिति भावः । *ननु* अन्य एव कश्चित् सम्बन्धः स्यात्, इति सम्भावनां निरस्यति—*अन्यस्य चेति* ॥ काकादौ काकिकादेर्वक्तुं शक्यत्वात् । *घटाभाव इति* ॥ तस्मिन्नपि

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

जातीयसम्बन्धस्य घटाभावे घटत्वादेर्वक्तुमशक्यत्वात्, स्वावच्छिन्नप्रतियोगिताकानुयोगितैव तस्य तत्र सम्बन्ध उच्यते ; 'दण्डिमदिदमि'त्यादावपि स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितासम्बन्धेनेदमादौ दण्डादेर्भानमिष्टम्, कदाचित् संयोगादेरिव तस्याप्यबाधात्, तस्य दण्डावच्छिन्नप्रतियोगिताकाधिकरणतात्वात्, 'सामानाधिकरण्येन संख्याविशिष्टं परिमाणमत्र नास्ती'त्यादौ तु स्वप्रतियोगिकत्वसम्बन्धेनैवैकस्मिन्नभावे संख्यापरिमाणयोर्भानम् ; तस्य सम्बन्धस्य तत्राबाधात् । *ननु*—'विशिष्टं केवलादन्यदि'ति मते 'विशिष्टस्ये'त्यादिज्ञाने विशिष्टस्य विशेषणत्वम्, 'विशेष्ये विशेषणमि'त्यादिज्ञाने तु न तस्य विशेषणत्वम्, किन्तु भूतलादौ शुद्धघटादेः, तत्र घटत्वादेरित्यस्य वक्तुं शक्यत्वाद् नोक्तयुक्तीनामवकाश इति—चेत्, *सत्यम्* ; तथापि 'संयोगसम्बन्धेने'त्यादिमूले नानुपपत्तिः । 'घटात्यन्ताभावत्वेने'त्यस्य घटत्वविशिष्टप्रतियोगिकाभावत्वेनेत्यर्थकत्वात्, 'घटसमवायाद्यभावे'त्यस्यापि घटसमवायत्वादिविशिष्टप्रतियोगिकाभावेत्यर्थकत्वात्, घटत्वादेः प्रति-

विट्ठलेशीयटिप्पणी

घट-तत्संयोगयोर्विरोधरूपसम्बन्धासम्भवात् । *घटत्वादेरिति* ॥ स्वावच्छिन्नप्रतियोगिताकानुयोगिता न केवलमभावबुद्धावेव विशेषणतावच्छेदकस्य संसर्गः, किन्त्वन्यत्रापि, इति तस्यास्तस्त्वेन क्लृप्तत्वस्य प्रदर्शनाय विशेषणसम्बन्धजातीयसम्बन्धबाधे तद्घटितपरम्परया इव तस्या अपि बाधे तद्घटितपरम्परादिसम्बन्धस्यापि तथा भानस्य प्रामाणिकत्वप्रदर्शनाय चान्यत्रापि तस्याः संसर्गत्वमाह—*दण्डिमदिदमिति* ॥ *कदाचित्=स्वाश्रयसंयोगेन विशेषणतावच्छेदकबाधग्रहे, शाब्दस्थले तादृशानुयोगितायामेव तात्पर्यग्रहे वा । *ननु* एवं तस्य भ्रमत्वं स्यात्, तत्राह—*संयोगादेरिवेति* ॥ *तस्य=तादृशानुयोगितारूपसम्बन्धस्य । 'प्रतियोगिताके'त्यत्र प्रतियोगितानिरूपकता ; आधेयतेति यावत् । *ननु* अभावबुद्धौ क्वचिद् विशेषण-तत्तावच्छेदकयोरेकजातीयसम्बन्धेन भानस्य क्लृप्तत्वेन तद्बाधे तद्घटितपरम्परादिना विशेषणतावच्छेदकभानं सम्भवेत, तदेव नेत्याशङ्क्य, तस्य क्लृप्तत्वं दर्शयति—*सामानाधिकरण्येनेति* ॥ यद्वा—*ननु* उक्तनियमेऽत्यन्तैकजातीयसम्बन्धेनेत्यस्यानादरणे कथंचित् साजात्यस्याव्यावर्तकत्वेन विशेषणसम्बन्धघटितपरम्परयेव तद्घटितपरम्परयाऽपि कदाचिद् विशेषणतावच्छेदकस्य भानं स्यात्, एवं परम्पराघटकतया स्वाश्रयप्रतियोगिकत्वभागे किञ्चिद्बाधके सति स्वावच्छिन्नप्रतियोगिकत्वमेव तत्स्थाने भासत इति सूपगतमेव । तथाच—'इदं दण्डिमदि'त्यादौ दण्डादेः स्वाश्रयसंयोगेनेव संयोगप्रतियोगितया दण्डाद्यवच्छिन्नत्वानुपगमेन स्वावच्छिन्नप्रतियोगिताकसंयोगेन भानासम्भवेऽपि दण्डादिरूपस्वावच्छिन्नप्रतियोगिताकानुयोगितायाः प्रसिद्ध्या कदाचित् तत्सम्बन्धेन भानापत्तिः ; स्वाश्रयवृत्तिप्रतियोगिताकानुयोगितासम्बन्धेन भाने दण्डविरहकालीनोक्तबुद्धेः प्रमात्वापत्तेः, इति शङ्कामिष्टापत्त्या परिहरति—*दण्डिमदिदमित्यादावपीति*॥ *ननु*—प्रमेयादिधर्मिकविशिष्टवैशिष्ट्यबोधस्थल एव सम्भवादुत्सर्गत एकजातीयसम्बन्धघटितनियम आस्ताम् ; अभावधर्मिकोक्तबोधे तु क्वचिदप्येकजातीयसम्बन्धासम्भवात् तदघटित उक्तपरम्पराघटित एव नियमोऽस्तु, इत्याशङ्कामभावबुद्धावपि क्वचित् तत्सम्भवप्रदर्शनेन परिहरति—*सामानाधिकरण्येनेति*, इत्यवतरणीयम्* ॥

एतावता 'विशिष्टं शुद्धाद् नातिरिच्यते' इति मते घटत्वादेः प्रतियोगितावच्छेदकत्वं व्यवस्थापितम्, मतान्तरे तदसिद्धिं शङ्कते—*नन्विति* ॥ *इत्यस्य=उक्तज्ञानयोर्वैलक्षण्योपपादकप्रकारस्य । *उक्तयुक्तीनामिति* ॥ लाघवरूपा प्रथमा, 'किञ्चे'त्याद्युक्ता द्वितीया, 'अथवे'त्याद्युक्ता तृतीयेति बहुत्वम् । इष्टापत्त्या परिहरति—*सत्यमिति* ॥ तथापि घटत्वाद्यवच्छिन्नप्रतियोगिताकार्थकघटात्यन्ताभावादिपदानां 'संयोगेने'त्यादिमूलस्थानामनुपपत्तिरित्यत्राह—*तथापीति* ॥ घटत्वादेः प्रतियोगितावच्छेदकत्वासिद्धावपीत्यर्थः । *ननु* यद्रूपविशिष्टसम्बन्धितया प्रतीयमानयावन्निष्ठाभावीयं तद्रूपावच्छिन्नप्रतियोगित्वं मिथ्यात्वमुक्तम्, तच्च घटत्वादेः प्रतियोगितानवच्छेदकत्वे न सम्भवतीत्यत आह—*घटत्वादेरिति* ॥ *तद्विशिष्टस्येति* ॥ 'तद्रूपावच्छिन्ने'त्यस्य स्थान इदमेव निवेश्यमिति भावः । *ननु* एवं

अद्वैतसिद्धिः

आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वशङ्कानुदयात्, उक्तयुक्तेश्च न घटादेरत्यन्ताभाव-

तरङ्गिणी

आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वशङ्कानुदयात्, उक्तयुक्तेश्च न घटात्यन्ताभाव-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

योगितानवच्छेदकत्वेऽपि तद्विशिष्टस्य स्वाधिकरणनिष्ठाभावप्रतियोगित्वेन मिथ्यात्वसम्भवेनोक्तानवच्छेदकत्वोक्तौ मूलकारस्यौदासीन्यात्। जले वह्नित्वविशिष्टस्याभावसत्त्वेऽपि द्रव्यत्वविशिष्टस्याभावासत्त्वात् 'जले द्रव्यं नास्ती'ति बुद्धेर्नापत्तिः। *ननु* घटात्यन्ताभावत्वेनैव घटविरोधित्वस्वीकारेऽपि भूतलादौ घटात्यन्ताभावोऽस्तु, घटस्यावृत्तित्वस्वीकारेणोक्तविरोधित्वोपपत्तेः, तत्राह—* आधाराधेयभावस्येति* ॥ भूतल-घटाद्योरित्यादिः। *ननु*—घटसंयोगी, घटात्यन्ताभाववान्, घटसमवायाभावात्, नित्यरूपवदित्यनुमेयम्, तत्राह—*उक्तयुक्तेरिति*॥ तर्काभावात्। भूतलम्, घटध्वंसवत्, कपाल-भूतलान्यतरत्वात्, कपालवदित्यनुमानापत्तेः, तद्व्यतिरेकेऽनुपपत्त्यभावात् ॥

विट्ठलेशीयटिप्पणी

घटत्वादेः प्रतियोगितावच्छेदकत्वमत एतद्ग्रन्थासङ्गतिः स्यात्, अत आह—*उक्तानवच्छेदकत्वोक्ताविति* ॥ *औदासीन्यादिति* ॥ घटात्यन्ताभावादिपदानां मतभेदेनार्थभेदसम्भवादिति भावः। लाघवरूपयुक्तिनिरासस्फुटीकरणाय संस्थूलमूलापत्तिं धारयति—*जल इति* ॥ वह्नित्वविशिष्ट-द्रव्यत्वविशिष्टयोर्भेदादिति भावः। *बुद्धेः*—तत्प्रमात्वस्य। *ननु* घटस्यावृत्तित्वशङ्का न पूर्वग्रन्थोत्थाप्या, इति तदनुदयाभिधानं न प्रकृतोपयोगितामासादयति, इत्याशङ्क्य तस्याः पूर्वग्रन्थोक्तार्थासम्भवोत्थापकतया तदनुदयाभिधानं प्रकृत उपयोजयितुं तदुत्थशङ्कया तदवतारयति—*ननु घटात्यन्ताभावत्वेनैवेति* ॥ 'भूतलादावि'त्यस्य घटसंयोगिनीत्यादिः। *घटात्यन्तेति* ॥ समवायसम्बन्धावच्छिन्नेत्यादिः। *घटस्येति* ॥ घट-भूतलसंयोगस्याङ्गुलिद्वयसंयोगवद् वृत्त्यनियामकत्वस्वीकारादिति भावः। *उक्तविरोधित्वोपपत्तेरिति* ॥ नच—घटस्यावृत्तित्वे तदधिकरणावृत्तित्वरूपविरोधः कथं घटात्यन्ताभावे सम्भवेत्? इति वाच्यम्; तथापि स्वाधिकरणवृत्तित्वरूपव्यधिकरणसम्बन्धावच्छिन्नतदभाववत्त्वस्य स्वाधिकरणावृत्तितत्कत्वस्य वा तद्विरोधित्वस्य सम्भवादिति भावः। अत एवोक्तविरोधित्वस्याव्यवहितपूर्वग्रन्थार्थत्वेऽपि घटावृत्तित्वोपगमाधीनयोक्तविरोधित्वानुपपत्तिशङ्कयैवा'धाराधेयभावस्ये'ति पङ्क्तिमनवतार्य व्यवहिते'वं संयोगेने'ति ग्रन्थार्थानुपपत्तिशङ्कया साऽवतारितेति बोध्यम्। *ननु* मूले मानाभावे 'कल्पनात्', 'प्रतीत्युपपत्तेः', 'उक्तयुक्तेरि'ति पञ्चम्यन्तत्रयं हेतुः, तत्र मध्यमेन शब्दप्रत्यक्षानुमाननिरासः, आद्येनोक्तरीत्या तर्कं निरस्य तदुपष्टम्भ्यानुमाननिरासोऽपि, इति तृतीयम् 'उक्तयुक्तेरि'ति व्यर्थम्, इत्याशङ्क्य तर्करहितानुमानस्य प्रकृतार्थसाधकत्वशङ्कानिरासकतया तर्कान्तरशङ्कानिरासकतया च तत् सार्थकीकर्तुं तच्छङ्कोत्थापनापेक्षिततर्काभावोपन्यासार्थं पुनरनुमानशङ्कयैव तृतीयमवतारयति—*ननु* घटसंयोगीति* ॥ समवायेनेति शेषः। आद्यस्यार्थापत्तिमाननिरासपरत्वे तु ऋजुरेव सरणिरित्युक्तम्। *तर्काभावादिति* ॥ उक्तानुमाने साध्यानुपगमेऽपि हेतुभङ्गापत्तेरसम्भवादिति भावः। *ननु* तर्कहीनस्याप्यनुमानस्योक्तार्थसाधकत्वमस्त्वित्यत आह—*भूतलमिति* ॥ *ननु* घटसंयोगिन्युक्तात्यन्ताभावव्यतिरेकोपगमे हेतुभिन्नस्यैव कस्यचित् पदार्थस्य व्यतिरेकापत्तिरूपस्तर्कः स्यादित्यत आह—*तद्व्यतिरेक इति* ॥ कस्यचिदिति शेषः। *अनुपपत्त्यभावादिति* ॥ 'लाघवेने'त्यादिनोक्तविरोधितानुपपत्तेर्निरस्तत्वादिति भावः। *ननु*—घटस्योत्पादानन्तरं पुनरुत्पादापत्तिवारणाय समवायेन घटं प्रति घटः प्रतिबन्धकः, समवायावच्छिन्नघटाभावः कारणमिति—वाच्यम्; तथाच घटोत्पत्तिपूर्वं घटसंयोगिकपालेषु समवायावच्छिन्नघटाभावानुपगमे घटरूपकार्यस्यानुपपत्तिः स्यादिति तर्कान्तरं

## अद्वैतसिद्धिः

सामानाधिकरण्यम् ; एवं संयोग-तदभावयोर्नैकाधिकरण्यम् ; 'अग्रे वृक्षः कपिसंयोगी मूले ने'ति प्रतीतेरग्र-मूलयोरेव संयोग-तदभाववत्तयोपपत्तेः, तदा सन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं

## तरङ्गिणी

सामानाधिकरण्यम् ; एवं संयोग-तदत्यन्ताभावयोर्नैकाधिकरण्यम् ; 'अग्रे वृक्षः कपिसंयोगी मूले ने'ति प्रतीतेरग्र-मूलयोरेव संयोग-तदत्यन्ताभाववत्तयोपपत्तेः, तदा सन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्,

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

[*ननु* घटोत्पादानन्तरं पुनर्घटोत्पादवारणाय समवायेन घटं प्रति घटः प्रतिबन्धकः, तत्सम्बन्धावच्छिन्न-तदभावः कारणम् । तथाच घटसंयुक्तकपालेषु घटोत्पत्तिर्न स्यात् ; उक्तप्रतिबन्धकाभावघटितसामग्र्यभावात्, तत आह—*उक्तेति*॥ (ख)] एकसम्बन्धवत्यपरसम्बन्धस्यैव प्रतिबन्धकतासम्भवेन तदभावस्यैव प्रतिबन्धकाभावविधया प्रयोजकत्वादित्याद्युक्तेरित्यर्थः । *अग्र-मूलयोरिति*॥ औपाधिकभेदवतोस्तदवच्छिन्नवृक्षयोर्वेति शेषः । अग्रावच्छिन्नवृक्षाद् मूलावच्छिन्नवृक्षे भेदस्वीकारेण तयोरेव संयोग-तदभावौ भासेते, इति न कुत्राप्यव्याप्यवृत्तित्वमिति भावः । *उपपत्तेरिति*॥ इत्यालोच्यत इति शेषः । *सन्मात्रनिष्ठेति*॥ सत्त्वव्यापकेत्यर्थः ।

## विट्ठलेशीयटिप्पणी

स्यात्, अत आह—*एकसम्बन्धवतीति* ॥ घटीयसंयोगरूपसम्बन्धवतीत्यर्थः । तदभावस्येत्यत्रान्वयः । *अपर-सम्बन्धस्यैव=घटीयसमवायस्यैव । समवायेन घटं प्रतीति शेषः । *तदभावस्य=घटसमवायाभावस्य । अस्य च घटसंयोगिकपालेष्वपि सत्त्वस्योक्तत्वेन पूर्वं सत्त्वाद् घटरूपकार्योत्पत्तिनिर्वाहाद् न तदनुपपत्तिरिति भावः । घटोत्पत्त्युत्तरं तु घटसमवायरूपप्रतिबन्धवशाद् न पुनस्तदुत्पत्तिरिति तु व्यक्तमेव ॥

मूले *एवम्=मानाभावात् ; अवच्छेदकविशेषाद्यघटितविरोधकल्पने लाघवादिति भावः । प्रत्यक्षशाब्द-प्रतीतिमन्यथोपपादयति—*अग्र इति* ॥ *ननु* अत्राग्रे संयोगोऽवच्छेदकतया भाति, मूले च समवायावच्छिन्न-तदभावत्वेनाभिमतोऽवच्छेदकतयैवेति न सम्भवति ; 'प्रतियोग्यभावान्वयौ तुल्ययोग-क्षेमौ' इति व्युत्पत्तिभङ्गापत्तेः ; किन्त्ववच्छेदकतासम्बन्धावच्छिन्नतदभावतयाऽभिमतो मूले विशेषणतयेति, अग्रे संयोगः समवायेन तदवच्छिन्न-तदभावत्वेनाभिमतश्च मूले विशेषणतयेति चोपगम्यत इति वाच्यम् । तथापि वृक्ष इति प्रथमान्तोल्लेखिप्रतीतेर्वृक्ष-विशेष्यकत्वानुभवविरोधः, इत्यत आह टीकायाम्—*औपाधिकेति* ॥ अवच्छिन्नपदानि विशिष्टपराणि ; इदानीमवच्छेद्यावच्छेदकभावस्याविवक्षणात् । 'अग्रे वृक्षः' इत्यादेः समवायावच्छिन्नाधेयतासम्बन्धेनाग्रविशिष्टो वृक्ष इत्यादिरर्थः ; 'पर्वते वह्निरि'त्यादाविव सप्तम्या संसर्गाभिलापात् । विशिष्ट-शुद्धयोरिव भिन्नविशेषणविशिष्टयोरपि भेद इति भावः । अत्राप्यनुमाने 'तर्काभावादि'त्याद्यर्थकम्—'उक्तयुक्तेश्चे'त्यनुषञ्जनीयम् । 'यदि पुनरि'त्यादिग्रन्थे क्रियमाणस्याकाशादावत्यन्ताभावप्रतियोगित्वादीनां मानाभावेन निराकरणस्यासन्दिग्धत्वात् तेन सन्दिग्धताव्यञ्जक-'यदी'त्यस्यान्वयो न सम्भवतीत्यतस्तदन्वययोग्यं पूरयति—*इत्यालोच्यत इति* ॥ *आलोचना=विचारः । स च स्फूर्त्याद्यधीनत्वात् सन्दिग्ध इति भावः । इत्थं च मिथ्यात्वलक्षणे सम्बन्धावच्छेदकविशेषयोर्निवेश-वैयर्थ्यमित्याशङ्कायां पर्यवसितायां तामिष्टापत्त्या परिहरति मूले—*तदेति* ॥ 'सन्मात्रनिष्ठे'त्यस्य सदन्यावृत्तित्वे सति सद्वृत्तीति नार्थः ; सत्यन्तस्य वैयर्थ्यात्, यावत्त्वालाभेन सिद्धसाधनाच्च, इत्यतो व्याचष्टे—*सन्मात्रनिष्ठेतीति* ॥ *सत्त्वव्यापकेति* ॥ सत्त्वमत्र व्यावहारिकादिसाधारणम् ; अन्यथा ब्रह्मरूपसन्निष्ठाभावप्रतियोगित्वस्यैव साध्यत्वे व्यापकत्ववैयर्थ्यात् । अत एव यद् यत्र यत्र प्रतीयते, तत्र तत्र तस्य मिथ्यात्वं सिद्ध्यति । अत्र 'यावत्सन्निष्ठे'ति तु नोक्तम् ; 'सन्निष्ठयावत्त्वसमानाधिकरणे'त्युक्तौ सिद्धसाधनतादवस्थ्यात् । यद् यत् सत्, तन्निष्ठेत्युक्तौ दुर्ज्ञेयत्वात्, 'सन्निष्ठयावत्त्वव्यापके'त्युक्तौ ततः सत्त्वव्यापकत्वस्य लघुत्वादिति भावः । *ननु* अधिकरणत्वकत्वाभावपक्षेऽभावाधि-करणयोरत्यन्ताभेदे सम्बन्धात्मकभावात् सद्रूपब्रह्मनिष्ठो यो ब्रह्मासंसृष्टस्य वियदादिप्रपञ्चाभावस्याभावो वियदादिरूपः,

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अधिकरणमेवाभाव इति पक्षेऽपि केवलसद्रूपस्याभावत्वविशिष्टेन सद्रूपेण तादात्म्यसम्बन्धसत्त्वाद् व्यापकत्वोपपत्तिः। नच—उक्तपक्षे 'नेह नाने'त्यादिश्रुत्यनुपपत्तिः, तथा ब्रह्मणि प्रपञ्चाभावाधारत्वबोधनादिति—वाच्यम्; उक्तपक्षे घटाद्यभावस्य भूतलादौ तादात्म्यसम्बन्धस्यैव स्वीकारेण ब्रह्मणि प्रपञ्चाभावतादात्म्यस्यैवोक्तश्रुत्या बोधनात्। *उक्तं हि न्यायकुसुमाञ्जलावभावीयसम्बन्धविचारप्रसङ्गे*—'परस्य तादात्म्यमस्तीति चे'दिति। *परस्य = अधिकरणस्वरूपाभाववादिनो भट्टादेर्मत इति तत्र टीकाकारः*। अधिकरणातिरिक्ताभावपक्षेऽपि 'चैत्रे गोशून्यता नास्ती'त्यादौ गवादिरूपाभावस्याधारत्वेन चैत्रादिप्रत्ययाभावात् स्वामित्वसम्बन्धस्य वृत्त्यनियामकत्वाच्चाभावधी-मात्रस्य भावाधारत्वविषयकत्वानियमात्, 'घटाभावे न घटः' इत्यादावभेदेऽप्याधाराधेयत्वस्य सर्वैरपि स्वीकार्य-त्वेनोक्तश्रुत्यादिजन्यज्ञानस्य ब्रह्मादावभावाधारत्वविषयकत्वस्योक्तपक्षद्वयेऽपि सम्भवाच्च।

## विट्ठलेशीयटिप्पणी

तत्प्रतियोगित्वात् तदभावस्य तत्त्वव्यापकत्वानुपपत्तिरित्यत आह—*अधिकरणमेवेति* ॥ *केवलेति* ॥ विशिष्ट-केवलयोर्भेदात् सम्बन्धसम्भव इति भावः। अत्र पक्षे श्रुतिविरोधमाशङ्क्य निराचष्टे—*नचोक्तपक्ष इति* ॥ *आधारत्वेति* ॥ 'तत्त्वे'ति चोक्तपक्षे तयोः सम्भवत्तादात्म्यसम्बन्धस्याधारत्वानियामकतया बाधादिति भावः। *स्वीकारेणेति* ॥ नञ्समभिव्याहृतसप्तम्याऽऽधारत्वबोधकत्वासम्भवादिति शेषः। *तादात्म्यस्येति* ॥ तादात्म्य-सम्बन्धावच्छिन्नप्रतियोगिताका अधिकरणतायामभावीयायास्तादात्म्यरूपतया तादात्म्यस्याप्यधिकरणसमर्थत्वादिति भावः। तादात्म्यस्याभावसम्बन्धत्वे संवादमाह—*उक्तं हीति* ॥ अयं ग्रन्थ उक्तपक्ष एवेति क ऊचुः? तत्राह—*परस्येति* ॥ *ननु* एवमेतत्पक्षेऽभावबुद्धेराधारविषयकत्वानियमप्रसङ्गः, इत्यत आह—*अधिकरणातिरिक्तेति* ॥ *गोशून्यता=स्वामित्वसम्बन्धावच्छिन्नगवभावः। *अभावस्य*=उक्तगवभावाभावस्य। *आधारत्वेनेति* ॥ उक्त-प्रतीतेः संयोगादिसम्बन्धावच्छिन्नाधारत्वविषयकत्वं वाच्यम्, तच्चाप्रसिद्धम्; स्वामित्वस्य वृत्त्यनियामकत्वादिति भावः। घटभेदाभावस्य घटत्वादिस्वरूपतया समवायावच्छिन्नतदाधारत्वेन घटादिप्रत्ययसम्भवात् तादात्म्य-सम्बन्धावच्छिन्नस्थलमुपेक्ष्य स्वामित्वसम्बन्धस्थलानुसरणम्। *आधारत्वविषयकत्वानियमादिति* ॥ 'मन्दुरायां गौर्नास्ती'ति बुद्धौ गवभावीयस्वरूपसम्बन्धावच्छिन्नाधारत्वेन मन्दुराभानस्य सम्भवाद् नियमपदम्। तथा चाधिकरण-स्वरूपाभावपक्षेऽपि तदनियमो न क्षतिमावहतीति भावः। तत्पक्षे तद्बुद्धीनां तद्विषयत्वावच्छेदेनैव तदभावः स्यादिति तु न शङ्क्यम्; 'गोष्ठादौ गोशून्यता नास्ति' इत्यादौ गवादिरूपाभावस्य संयोगादिसम्बन्धावच्छिन्नाधारत्वेन गोष्ठादिभानसम्भवात्। *वस्तुतस्तु*—अभावस्याधिकरणस्वरूपतापक्षेऽभावाधिकरणयोः सम्बन्धनिर्वाहाय कथञ्चिद् भेदोपगम आधाराधेयभावोऽपि तेनैवोपपद्यते। नचैवमपि—तत्र तयोः सम्बन्धस्तादात्म्यमेव, तस्य च वृत्त्य-नियामकत्वात् कथं स उपपद्यते? इति—वाच्यम्; तादात्म्यस्यापि वृत्तिनियामकतायाः प्रथममिथ्यात्वनिरुक्तिशेषे व्यवस्थापितत्वात्, अन्यथाऽधिकरणातिरिक्ताभावपक्षेऽपि 'घटाभावे न घटः' इत्यादावगतेः, तत्र स्वरूपसम्बन्धस्यापि तादात्म्यपर्यवसितत्वात्। एवं चोक्तश्रुत्यनुपपत्तिशङ्कैव नेत्याह—*घटाभावे न घट इति* ॥ *सर्वैरपीति* ॥ अधिकरणरूपाभाववादिभिरिव तदतिरिक्ताभाववादिभिरपीत्यर्थः। *पक्षद्वयेऽपीति* ॥ *अधिकरणातिरिक्ताभावपक्ष इव तत्स्वरूपाभावपक्षेऽपीत्यर्थः* ॥

*अत्रेदं बोध्यम्*—प्रथमे पक्षे नाभावसामान्यस्याधिकरणस्वरूपत्वम्; घटाभावाद्यभावस्य घटस्वरूपत्वेन भूतलाद्यनात्मकत्वात्, किन्तु भावप्रतियोगिकाभावसामान्यस्य। एवं द्वितीयपक्षेऽपि न तत्सामान्यस्य तदतिरिक्तत्वम्; स्वाधिकरणकस्य घटाभावादेरनतिरेकात्, किन्तु स्वातिरिक्ताधिकरणकाभावसामान्यस्य। अभावाभावप्रतियोगिकाभावाधिकरणकाभावादीनां येषामधिकरणस्वरूपत्वमिष्टम्, तत्तद्भिन्नत्वेनाप्यभावो विशेषणीय इति ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अत्र यद्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्त्वं सत्त्वव्यापकतावच्छेदकम्, तद्धर्मवत्त्वं मिथ्यात्वम्। तेन मेयत्वादिरूपेण व्यापकतामादाय न सिद्धसाधनम्। नच—यस्या अभावव्यक्तेः सद्वृत्तिभेदप्रतियोगितावच्छेदकत्वमनवच्छिन्नं नास्ति, तद्व्यक्तिप्रतियोगित्वं मिथ्यात्वमित्येव वक्तुं शक्यम्; घटादिमति पूर्वक्षणवृत्तित्वविशिष्टस्य घटाद्यभावस्याश्रयाद् भेदो वेदान्तिमतेऽप्यस्ति, इत्यतो'ऽनवच्छिन्नमि'त्युक्तम्। एवं च घटसंयुक्तादौ समवायादिना घटाद्यभावनिराकरणं व्यर्थम्; तदभावव्यक्तेरतथात्वेन; सद्वृत्तिभेदप्रतियोगितावच्छेदकत्वेन तामादाय सिद्धसाधनाभावात्, इति—वाच्यम्; विशेषणतादिव्यधिकरणसम्बन्धेन घटाद्यभावव्यक्तेः केवलान्वयित्वेन तामादाय सिद्धसाधनात्॥

## विट्ठलेशीयटिप्पणी

*ननु* 'सत्त्वव्यापकात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमि'त्यत्र सत्त्वव्यापकत्वं न सन्निष्ठात्यन्ताभावाप्रतियोगित्वम्; द्वित्वाद्यवच्छिन्नतादृशाभावप्रतियोगित्वस्य केवलान्वयित्वेन तदभावस्याप्रसिद्धेः, किन्तु सन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। तथाच घटादिसत्त्वतावादिनाऽपि तदभावस्य तादृशप्रमेयत्वादिरूपधर्मवत्त्वोपगमात् सिद्धसाधनं स्यात्, अत आह—*अत्रेति*॥ *यद्धर्मः*=घटत्वादिः। *सत्त्वव्यापकतावच्छेदकम्*=सन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणम्; तेन पूर्वक्षणवृत्तित्वविशिष्टघटाभाववत्त्वस्य सन्निष्ठतादृशप्रतियोगितावच्छेदकत्वेऽपि न क्षतिः; सम्बन्धघटितात्यन्ताभावघटिततादृशव्यापकत्वपरिष्कारे घटसंयुक्तादौ संयोगादिना घटाद्यभावस्यासत्त्वेऽपि समवायादिना घटाद्यभावसत्त्वे, एवं घटसमवायिनि तस्यासत्त्वेऽपि संयोगादिना घटाभावसत्त्वे तदुभयसाधारणधर्मस्य घटत्वावच्छिन्नाभावत्वादेः परमतेऽपि सत्त्वव्यापकतावच्छेदकत्वसम्भवात् सिद्धसाधनं स्यात्, अतस्तन्निराकरणप्रयासोऽपेक्ष्यते; तथा सति परानुगतोक्तव्यापकतावच्छेदकत्वसाधनाद् नोक्तदोषः। भेदघटितव्यापकत्वं निवेश्य तद्वैयर्थ्यमाशङ्कते—*न चेति*॥ *यस्या इति*॥ सद्वृत्तिभेदप्रतियोगित्वस्यानवच्छिन्नावच्छेदकत्वाभावो यदभावव्यक्तिनिष्ठः, तत्प्रतियोगित्वमित्यर्थः। अनवच्छिन्नत्वप्रयोजनमाह—*घटादिमतीति*॥ *तदभावव्यक्तेः*=समवायावच्छिन्नघटाभावव्यक्तेः। घटसंयुक्ते सत्त्वेऽपि घटसमवायिन्यसत्त्वेनेति शेषः। *अतथात्वेन*=घटसमवायिरूपसन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन। *ताम्*=तद्व्यक्तिप्रतियोगित्वम्। *सिद्धसाधनादिति*॥ एवञ्चैतद्दोषवारणाय भेदघटितव्यापकत्वनिवेशेऽप्युक्तप्रयासोऽपेक्ष्यत एव। तथा सति तत्सत्यतामते व्यधिकरणसम्बन्धेन घटाद्यभावव्यक्तेरपि घटसंयोग्यादावसत्त्वेनोक्तभेदप्रतियोगितावच्छेदकत्वेन मिथ्यात्वाघटकतया तादृशानवच्छेदकीभूताभावान्तरप्रतियोगितामादाय घटादौ साध्यं सिद्ध्यद् घटसंयोग्यादावपि पराभ्युपगतं संयोगादिसम्बन्धावच्छिन्नघटाभावम्, घटसामान्याभावं वा पूर्वोक्तमादाय पर्यवस्यति, इति घटादेः सत्यतोन्मूलनसम्भव इति भावः॥

*अत्रेदमवधेयम्*—भेदघटितोक्तव्यापकतानिवेशे केवलान्वयिनं घट-गगनोभयाभावं पूर्वक्षणवृत्तित्वविशिष्टघटाद्यभावं वाऽऽदाय सिद्धसाधनं स्यादिति न शङ्कनीयम्; घटत्वादिरूपपक्षतावच्छेदकावच्छेदेन तादृशाभावप्रतियोगित्वरूपसाध्यसिद्धेरुद्देश्यत्वात्, तदुक्ताभावप्रतियोगितयोश्च घटत्वावच्छिन्नत्वबाधाद् [illegible] भात्, गगन-घटोभयत्वावच्छिन्न[illegible] सिद्धसाधनस्येष्टत्वात्, उक्तोभयत्वावच्छिन्नत्वस्य [illegible] युक्तिरजतसमकक्षत्वात्, अभावसामान्यस्यैवाव्याप्यवृत्तिताया अनुपैव निराकृतत्वात्, पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्योत्तरक्षणविशिष्टपर्वतादौ सत्त्वेन तद्भेदस्य पूर्वक्षणविशिष्टपर्वतादौ सत्त्वेन सन्निष्ठभेदप्रतियोगितावच्छेदकत्वेनोक्तसाध्याघटकत्वाच्च। [illegible] उक्तोभयत्वावच्छिन्न[illegible] सिद्धसाधनं [illegible] नेऽपि समानम्। [illegible] समान एव, एवं [illegible] भिन्नाभ्यां घटत्वावच्छिन्नाभावाभ्यां च सन्निष्ठभेदप्रतियोगितावच्छेदकत्वम्, इत्युक्ताभावत्वादिना [illegible] अवधेयः॥

अद्वैतसिद्धिः

मन्तव्यम् । नच—एवं सति भावाभावयोरविरोधात् तज्ज्ञानयोर्बाध्य-बाधकभावो न स्यादिति—वाच्यम् ; भिन्नसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात् यत्र भूतले यस्य घटस्यात्यन्ताभावो

तरङ्गिणी

इति मन्तव्यम् । नच—एवं सति भावाभावयोरविरोधात् तज्ज्ञानयोर्बाध्य-बाधकभावो न स्यादिति—वाच्यम् ; भिन्नसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात् , यत्र भूतले यस्य घटस्यात्यन्ताभावो व्यावहारिकः,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*एवम्=उक्तानुमानस्योक्तमिथ्यात्वसाधकत्वे । *बाध्य-बाधकभाव इति* ॥ भावाभावयोः भावासामानाधिकरण्यज्ञाने सति तयोरेकज्ञानमपरज्ञानस्य न बाधकम्, अत उक्तज्ञानाभावविशिष्टं,भावयोर्विरोधविषयकं वा तयोरेकस्य ज्ञानमपरस्य ज्ञाने बाधकं वाच्यम् , तादृशज्ञानं च मिथ्यात्वज्ञानवतां न सम्भवतीति भावः । *वाच्यमिति* ॥ अधिकसत्ताकाभावेनान्यूनसत्ताकाभावेन वा घटितं मिथ्यात्वमिति पक्षयोराद्यपक्ष इति शेषः । इदं 'भिन्नसत्ताके'त्युत्तरग्रन्थान्वयि । *न व्यावहारिक इति* ॥ किंतु

विट्ठलेशीयटिप्पणी

एतेन—सन्निष्ठात्यन्ताभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वशून्यत्वरूपव्यापकतानिवेशोऽपि—*अपास्तः* । 'यद्धर्मे'त्यादेश्च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसद्व्यापकतावच्छेदकताश्रयीभूतधर्मवत्त्वमित्यर्थः, तेनोक्तानुगमेन साध्यस्य विशिष्टरूपतानिर्वाहेण विशिष्टपरामर्शनिर्वाहः । सत्त्वेन प्रतीत्यर्हत्व-चिद्भिन्नत्वरूपसामान्यधर्मावच्छेदेन मिथ्यात्वानुमाने घटत्वादिधर्माणां यत्त्व-तत्त्वेन निवेशेऽननुगमाद् अंशतो बाधः, मिथ्यापदनानार्थत्वं चेति दूषणं चानवकाशमिति ॥

'नचैवमि'त्यत्रैवंपदस्याव्यवहितपूर्व'सन्मात्रनिष्ठे'त्यादिपङ्क्त्युक्तार्थस्वीकार इत्यर्थकत्वं न सम्भवति ; तस्य शङ्क्यमानभावाभावज्ञानबाध्य-बाधकभावविरहाप्रयोजकत्वात् , इत्यतो व्याचष्टे—*एवमिति* ॥ *उक्तानुमानस्य=प्रपञ्चपक्षकदृश्यत्वादिलिङ्गकानुमानस्य । *उक्तमिथ्यात्वेति* ॥ भावाभावसामानाधिकरण्यनिर्वाह्यमिथ्यात्वेत्यर्थः । तत्र 'प्रतिपन्नोपाधी'त्यादेः पूर्वोक्तयथाश्रुतार्थे तु तस्य घटकतयैव तन्निर्वाहकता, 'सन्मात्रे'त्यादिनिष्कर्षे तु घटाभावादेर्घटादिसामानाधिकरण्यं विना सत्त्वव्यापकताया असम्भवेनेति दिक् । ईदृशमिथ्यात्वज्ञानस्य कथमुक्तबाध्यबाधकभावविघटकत्वम् ? अत आह—*भावाभावयोरिति*॥ *बाधकम्=स्वोत्तरमनुत्पादप्रयोजकम्, पूर्वस्य भ्रमत्वज्ञापकं वा । *न सम्भवतीति* ॥ मिथ्यात्वज्ञानस्योक्तसामानाधिकरण्यविषयकत्वेन तत्सत्त्वे तदभावविशिष्टत्वासम्भवात् , विरोधज्ञाने तस्य प्रतिबन्धकतया विरोधविषयकज्ञानानुत्पादाच्चेति भावः ॥ एवं च प्रपञ्चज्ञानं प्रति तदभावघटितप्रपञ्चमिथ्यात्वसिद्धेर्बाधकतयाऽकिञ्चित्करत्वमिति शङ्कापर्यवसानम् । *ननु* समानसत्ताकभावाभावयोर्विरोधे व्यावहारिकघटादेर्व्यावहारिकाभावं स्वाप्निकगजादेः स्वाप्निकतदभावं चादाय स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगित्वरूपं मिथ्यात्वं कथं निर्वहेत् ? इत्याशङ्क्य, 'वाच्यमि'त्युत्तरं विरोधान्वयिनं शेषं पूरयति—*अधिकसत्ताकाभावेनेति* ॥ तदोक्तविरोधेऽपि घटादेः स्वाधिकरणब्रह्मरूपतया पारमार्थिकाभावमादाय, स्वाप्नगजादेस्तु जागरिकव्यावहारिकाभावमादाय मिथ्यात्वनिर्वाहः, पूर्वोक्तस्वाप्नविषयविरोधे तु न मानमित्यभिप्रायः । एवं चेदृशमिथ्यात्वसिद्धेर्व्यावहारिके पारमार्थिकत्वरूपसत्यत्वबाधकतया प्रातिभासिके च व्यावहारिकत्वबाधकतया तावन्मात्रेणोद्देश्याद्वैतसिद्धेर्नाकिञ्चित्करत्वमिति समाधिपर्यवसानम् ॥

*ननु* तर्हि घटीयव्यावहारिकाभाववति व्यवहारदशायां कथं घटः प्रतीयत इति ? अत आह मूले—*यत्रेति* ॥ किं तर्हि तात्त्विकः ? नेत्याह टीकायाम्—*किन्त्विति* ॥ यत्र व्यावहारिकत्वस्य व्यवहारकालाबाध्यत्वरूपस्य बाधो व्यवहारकालबाध्यत्वपर्यवसितः, तत्र कालत्रयाबाध्यत्वरूपस्य पारमार्थिकत्वस्यापि सुतरां बाधो भवति, इति प्रातिभासिकत्वमेव पर्यवस्यतीति भावः ॥

अद्वैतसिद्धिः

व्यावहारिकः, तत्र स घटो न व्यावहारिक इति नियमात्। नच—एवं सति 'शुक्तिरियं न रजतमि'ति ज्ञानविषयीभूताभावस्य व्यावहारिकत्वेन पुरोवर्तिप्रतीतरजतस्य व्यावहारिकत्वापहारेऽपि प्रातीतिकसत्त्वानपहाराद् बाधोत्तरकालेऽपि 'इदं रजतमि'ति प्रतीतिः स्यादिति—वाच्यम्;

तरङ्गिणी

तत्र स घटो न व्यावहारिक इति नियमात्। नच—एवं सति 'शुक्तिरियं न रजतमि'ति ज्ञानविषयीभूताभावस्य व्यावहारिकत्वेन पुरोवर्तिप्रतीतरजतस्य व्यावहारिकसत्त्वापहारे प्रातीतिकसत्त्वानपहाराद् बाधोत्तरकालेऽपि 'इदं

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रातीतिक इति शेषः। *रजतस्य व्यावहारिकत्वेति*॥ रजते कल्पितस्य व्यावहारिकत्वस्य, *अपहारे=उच्छेदे। *प्रातीतिकसत्त्वेति* ॥ प्रातिभासिकस्वरूपेत्यर्थः। 'पुरोवर्तिप्रतीतरजतस्ये'त्यनुषज्यते। *बाधोत्तरेति* ॥ उक्तज्ञानोत्तरेत्यर्थः। *स्यादिति* ॥ तथाच समानसत्तामनन्तर्भाव्य प्रातीतिकान्याभावस्यैव भावविरोधित्वं स्वीकृत्य तज्ज्ञानस्य भावबाधकत्वं वाच्यम्। अतः स्वाधिकसत्ताकात्यन्ताभावस्यापि भावविरोधित्वात् तद्घटितमिथ्यात्वमनुपपन्नमिति भावः॥

विट्ठलेशीयटिप्पणी

मूले—'इति नियमादि'त्यस्य यत्र च घटो व्यावहारिकः, तत्र तदभावो न व्यावहारिक इति नियमाच्चेति शेषः। *एवं सति*=उक्तनियमेनोक्तविरोधे सति। *शुक्तिरियं न रजतमिति ज्ञानेति*॥ 'शुक्तिरियमि'ति ग्रहः रजताभावव्याप्यत्वेन गृहीतशुक्तित्वविषयकः प्रथमं जायते, तत इदं जायते, भ्रमसंशयोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुत्वात्, तत्र चेदन्त्वमिव शुक्तित्वमपि धर्मितावच्छेदकतया भासते; सामग्रीसत्त्वादिति भावः। *ननु* 'रजतस्य व्यावहारिकत्वापहारे' इत्यसङ्गतम्; रजतपदार्थे प्रातिभासिकरजते व्यावहारिकत्वानभ्युपगमेनापहारासम्भवात्, अतो व्याचष्टे—*रजतस्येति*॥ अपहारो न चौर्यम्; अयोग्यत्वात्, अतो व्याचष्टे—*अपहारेति*॥ *उच्छेदे=अभावबोधे। *ननु* प्रातिभासिकरजतस्वरूपमपहृतम्? न वा? आद्ये तत्सत्त्वानपहारासम्भवः, तत्प्रतीत्यापत्त्यसम्भवश्च; द्वितीये तत्सत्त्वापहारेऽपि तत्प्रतीत्यापत्तिसम्भवात् प्रातीतिकसत्त्वानपहारादिति व्यर्थम्, अतो व्याचष्टे—*प्रातीतिकसत्त्वेतीति*॥ उक्तरीत्याऽन्यत्वरूपानपहारस्याकिञ्चित्करत्वात् पूरयति—*रजतस्येति*॥ बाधपदं न त्रैकालिकाभावपरम्, तदव्यवहितोत्तरत्वस्योत्तरपदार्थस्याप्रसिद्धेः, अतो व्याचष्टे—*बाधोत्तरेतीति*॥ *ननु* समसत्ताकभावाभावयोर्विरोधे बाधोत्तरकाल 'इदं रजतमि'ति प्रतीतिः—'नचैवमि'त्यादिनाऽऽपादिता, सा च तयोरविरोधेऽपि दुर्वारा, प्रत्युत तदा व्यावहारिकत्वमपि दुरुच्छेदम्, किञ्चैतावता किमत्यन्तानिष्टम्? अधिकसत्ताकाभावघटितमिथ्यात्वस्य प्रातिभासिकरजते निष्प्रत्यूहत्वात्, इत्याशङ्क्य, शङ्काभावमाह—*तथाचेति*॥ *भावबाधकत्वम्=भावज्ञानानुत्पादप्रयोजकत्वादि। एवं च नोक्तप्रतीत्यापत्तिरिति भावः। मिथ्यात्वानुपपत्तिमप्याह—*अत इति*॥ *अनुपपन्नमिति*॥ प्रातीतिक-व्यावहारिकरजतादौ तत्कालावच्छेदेन तदधिकरणे व्यावहारिकस्य पारमार्थिकस्यापि वा तदभावस्योक्तविरोधवशाद् असम्भवेन स्वसमानाधिकरण-स्वाधिकसत्ताकत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्य बाधादिति भावः। *ननु* मूले—'तत्रैवं शुक्तिरि'त्यादिनैतच्छङ्काया समाधानमुक्तम्; तत्रेत्थं प्रतीयते—'नेदं रजतमि'ति रजतीयव्यावहारिकाभावबुद्ध्या रजते व्यावहारिकत्वापहारेऽधिकसत्ताकत्वघटितमिथ्यात्वनिश्चयः, इदमेव बाधाभावबुद्धेः फलम्; अधिष्ठानप्रमया रजतप्रतीतिप्रतिबन्धेऽपि प्रतीतस्य मिथ्यात्वनिश्चयाजननात्, 'इदं शुक्तिरि'त्यधिष्ठानप्रमया च प्रातीतिकसत्त्वस्यापहाराद् न बाधोत्तरं रजतप्रतीत्यापत्तिः; एवं च समसत्ताकभावाभावयोर्विरोधे न काचिदनुपपत्तिरिति। तच सन्दर्भविरुद्धम्; प्रथम'नचैव'मित्यादिना भावाभावज्ञानयोर्बाध्य-बाधकभावानुपपत्तिशङ्कायां तदुपपत्त्यर्थं समसत्ताकभावाभावयोर्विरोध उक्तः, तदुपरि द्वितीय-

अद्वैतसिद्धिः

तत्र 'इयं शुक्तिरि'त्यपरोक्षप्रमया प्रातीतिकरजतोपादानाज्ञाननिवृत्तौ प्रातीतिकसत्त्वस्याप्यपहारात्,

तरङ्गिणी

रजतमि'ति प्रतीतिः स्यादिति—वाच्यम्; तत्र 'इयं शुक्तिरि'त्यपरोक्षप्रमया प्रातीतिकरजतोपादानाज्ञाननिवृत्तौ

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

समानसत्ताकयोर्भावाभावयोर्विरोधेऽपि न तादृशयोरेव बाध्य-बाधकधीविषयत्वमुच्यते, येन प्रातीतिकत्वविशिष्टरजतस्य व्यावहारिकाभावधीर्बाधिका न स्यात्, किं त्वन्यादृशयोः। *तथाहि*—अभावज्ञानस्य भावज्ञानं प्रति बाधकत्वं भावोपादानाज्ञाननिवृत्तिप्रयोजकान्तर्गतत्वं वा? भावभ्रमे भ्रमत्वज्ञापकत्वं वा? अधिष्ठानधीविधयाभावज्ञानोच्छेदकत्वं वा? *आद्ये* 'अधिकसत्ताकरजतात्यन्ताभावव्याप्यं शुक्तित्वमि'त्याकारकेण निश्चयेनोद्बुद्धसंस्कारेण वा विशिष्टस्य 'इयं शुक्तिरि'त्याकारकसाक्षात्कारस्य प्रातिभासिकरजतोपादानाज्ञाननिवर्तकत्वेन व्यावहारिकाभावज्ञानस्य प्रातिभासिकरजतादिधीबाधकत्वं नानुपपन्नम्। *द्वितीयेऽनुपपत्त्यभावस्त्वयैव स्वीकृतः; व्यावहारिकाभावज्ञाने रजतव्यावहारिकत्वापहारकत्वस्योक्तत्वात्। व्यावहारिकत्वं हि विश्वमिथ्यात्वनिश्चयपूर्ववर्तिनो मिथ्यात्वनिश्चयस्याविशेष्यत्वम्। तदपहारश्चोक्तनिश्चयविशेष्यत्वादेव। तथाच मिथ्या-

विट्ठलेशीयटिप्पणी

'नचैवमि'त्यादिना शङ्किताया बाधोत्तरं प्रातीतिकरजतद्वयापत्तेरधिष्ठानतत्त्वापरोक्षप्रमया वारणेन तद्वयवस्थापनेऽपि तत्त्वकस्योक्ताभावबुद्धेर्भावज्ञानबाधकत्वानुपपत्तिपरिहारस्यात्रालाभात्, इत्याशङ्क्य, तल्लाभाय 'तत्रेवमि'त्यादिसमाधानाशयं वर्णयति—*समानेति* ॥ *तादृशयोरेव=समानसत्ताकयोरेव। *अन्यादृशयोः=असमानसत्ताकयोः। *ननु* ईदृशयोरविरोधात् कथं बाध्य-बाधकधीविषयत्वम्? इति मौलप्रथमशङ्कातादवस्थ्यम्, अत आह—*तथाहीति* ॥ यद्यपि रजताभावव्याप्यशुक्तित्वनिश्चयादिविशिष्टशुक्तित्वसाक्षात्कारस्येव तद्विशिष्टोक्तनिश्चयादेरप्युक्तनिवृत्तिप्रयोजकत्वं विनिगमकाभावादक्षतम्; तथापि विशिष्टस्योक्तनिवृत्त्युपधायकत्वे विशेष्य-विशेषणोभयस्यैव तत्र पर्यवस्यति, न प्रत्येकम्, इत्यभावज्ञानमात्रस्य नोक्तप्रयोजकत्वं सम्भवतीत्यन्तर्गतपदम्। *ननु* ईदृशबाधकत्वस्य समसत्ताकभावाभावयोरविरोधेऽपि सम्भवात् किमर्थं तद्विरोधः कल्प्यते? 'नेदं रजतमि'ति निषेधबुद्धेश्चाकिञ्चित्करत्वम्, अत आह—*भावभ्रम इति* ॥ *ननु* एवमपि निषेधबुद्धेः स्वसमानाधर्मिकभावज्ञानोच्छेदकत्वं क्वचिदपि नागतम्, अत आह—*अधिष्ठानधीविधयेति* ॥ अधिष्ठानतत्त्वधीविधयेत्यर्थः। एतत् स्थलमनुपदमेव व्यक्तीभविष्यति। *आद्य इति* ॥ अविद्यान्यदोषानुत्सारणस्थल इति शेषः। तदुत्सारणस्थले तु तृतीयं वक्ष्यते। *व्यावहारिकाभावज्ञानस्येति* ॥ 'शुक्तित्वं रजताभावव्याप्यमि'त्याकारकस्येति भावः। *व्यावहारिकाभावज्ञान इति* ॥ 'नेदं रजतमि'त्याकारक इति भावः। अभावे व्यावहारिकत्वं तु व्यवहारकाले बाधाभावानुभवेनेति बोध्यम्। *उक्तत्वादिति* ॥ समसत्ताकभावाभावयोर्विरोधोपगमादिति भावः। *ननु* रजतीयव्यावहारिकाभावज्ञाने रजतव्यावहारिकत्वापहारकत्वस्योक्तत्वेऽपि तज्ज्ञानभ्रमत्वज्ञापकत्वं कथम्? तत्राह—*व्यावहारिकत्वं हीति* ॥ *विश्वमिथ्यात्वेति* ॥

व्यवहारकालाबाध्यत्वं कुत उपेक्षितम्? इति चेत्, उक्ताबाध्यत्वं हि व्यवहारकालीनत्वसमानाधिकरणस्वाधिकसत्ताकाभावप्रतियोगित्वनिश्चयाविशेष्यत्वम्, आपणस्थत्वे 'नेदं रजतमि'ति भ्रमविषयप्रातिभासिकाभावप्रतियोगित्वनिश्चयविशेष्यत्वात् तत्राव्याप्तिः, इति स्वाधिकसत्ताकत्वनिवेशः। उक्तप्रतियोगित्वमेव च मिथ्यात्वम्। व्यवहारकालश्च विश्वमिथ्यात्वनिश्चयपूर्वकाल एव। तथाचात्रैव पर्यवसानमित्यवेहि ॥

*नन्वेवमपि* प्रतियोगिव्यधिकरणतदभाववति तत्प्रकारकत्वरूपं भ्रमत्वं कथं रजतज्ञाने गृह्यते? तत्राह—*तथाचेति* ॥ रजतस्योक्तमिथ्यात्वनिश्चयविशेष्यत्वे चेत्यर्थः। *मिथ्यात्वविषयकत्वेति* ॥ इदमेव बाधित-

अद्वैतसिद्धिः

शुक्त्यज्ञानस्य प्रातीतिकरजतोपादानत्वेन तदसत्त्वे प्रातीतिकरजतासत्त्वस्यावश्यकत्वात् । अत एव यत्र परोक्षयाऽधिष्ठानप्रमया न भ्रमोपादानाज्ञाननिवृत्तिः, तत्र व्यावहारिकत्वापहारेऽपि प्रातीतिकत्वा-नपहारात् 'तिक्तो गुडः' इत्यादिप्रतीतिरनुवर्तते । एवमखण्डब्रह्मसाक्षात्कारात् पूर्वं परोक्षबाधेन

तरङ्गिणी

प्रातीतिकसत्त्वस्याप्यपहारात्, शुक्त्यज्ञानस्य प्रातीतिकरजतोपादानत्वेन तदसत्त्वे प्रातीतिकरजतासत्त्वस्या-वश्यकत्वात् । अत एव यत्र परोक्षयाऽधिष्ठानप्रमया न भ्रमोपादानाज्ञाननिवृत्तिः, तत्र व्यावहारिकत्वा-पहारेऽपि प्रातीतिकत्वानपहारात् 'तिक्तो गुडः' इति प्रतीतिरनुवर्तते । एवमखण्डब्रह्मसाक्षात्कारात् पूर्वं

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयकत्वरूपभ्रमत्वं रजतज्ञान उक्ताभावज्ञानेन ज्ञापितमिति स्वीकृतमेवेत्याशयेनाह—*तत्रेयमिति* ॥ *प्रमयेति* ॥ शुक्तित्वे रजतीयव्यावहारिकात्यन्ताभावव्याप्यताविषयकेन निश्चयेनोद्बुद्धसंस्कारेण वा सहितयेति शेषः । 'सत्त्वस्यापी'त्यपिना व्यावहारिकत्वस्य समुच्चयादुक्तरीत्या रजतज्ञाने व्यावहारिकाभाव-ज्ञानस्य भ्रमत्वज्ञापकत्वमुक्तम् । *तदसत्त्व इति* ॥ *असत्त्वम् = उच्छेदः ॥ *आवश्यकत्वादिति ॥ परिणामिन उच्छेदे परिणामस्याप्युच्छेदः, तयोस्तादात्म्यादिति भावः । *अत एव = अज्ञान-तत्प्रयुक्तोच्छेदयो-

सौगन्ध्यविमर्शः

कल्पविभागः पातञ्जलानामुपपद्यते ; अन्यथा तूभयोरप्यसद्विषयत्वाविशेषाद् विभागोऽनुपपन्नः स्यात् । वस्तुशून्यो विकल्प

विट्ठलेशीयटिप्पणी

विषयकत्वं तत्र तत्रोच्यत इति बोध्यम् । *ज्ञानेनेति* ॥ रजते मिथ्यात्वनिश्चयद्वारेति शेषः । रजताभाव-व्याप्यत्वेनागृहीतशुक्तित्वज्ञानमात्रेण रजतोपादानानिवृत्तेः पूरयति—*शुक्तित्व इति* ॥ मूले—*प्रातीतिकसत्त्वस्य= प्रातिभासिकरजतस्वरूपस्य । *अपहारात्=निवृत्तेः । तथा च न तत्प्रतीत्यापत्तिरिति भावः । शुक्तित्वप्रमयैव 'नेदं रजतमि'ति ज्ञानद्वारा तद्व्यावहारिकत्वापहारस्याप्यर्थत्वे फलाभावः, तदर्थकत्वाभावे वैयर्थ्यम्, द्वितीयपक्षस्य मूलादलाभश्च, इत्यतोऽपेस्तदर्थकताफलमाह—*अपिनेति* ॥ *व्यावहारिकत्वस्येति* ॥ व्यावहारिकरजताभाव-ज्ञानापहार्यस्येति भावः । अज्ञाननिवृत्तौ रजतनिवृत्तिरिति कुतः ? तत्रोक्तं मूले—*शुक्त्यज्ञानस्येति* ॥ तत्रासत्त्वपदं नाशैकधर्मपरम् ; प्रकृतानुपयोगात्, अज्ञानादेस्तदनुपगमाच्च, इत्यतो व्याचष्टे—*असत्त्वमिति* ॥ उच्छेदस्तु व्याख्यास्यते, सैव च निवृत्तिः । *आवश्यकत्वात्=सामान्यप्रयोजक-प्रयोज्यभावसिद्धत्वादित्यर्थः । तं प्रयोज्य-प्रयोजकभावं सतर्कमाह—*परिणामिन इति* ॥

मूले—'अत एवे'त्यस्य शुक्त्यज्ञानोच्छेदे रजतोच्छेदस्यावश्यकत्वादेवेति नार्थः ; तस्य तिक्तत्वादिप्रतीति-प्रत्यनुपष्टम्भकत्वात्, नापि परिणामोच्छेदे ; परिणाम्युच्छेदस्य प्रयोजकत्वादेवेत्यर्थः । तादृशप्रयोजकत्वं हि परि-णाम्यज्ञानानुच्छेदे तत्परिणामतिक्तत्वाद्यनुच्छेदस्य तदुच्छेदे च तदुच्छेदस्यैवोपष्टम्भकम् ; न तु तिक्तत्वादिप्रतीत्य-नुवृत्ति-निवृत्त्योः ; तिक्तत्वाद्युच्छेदोच्छेदयोरेव तदुपष्टम्भकत्वात्, अतोऽन्यथा व्याचष्टे—*अत एवेति* ॥ जीवेश्वर-भेदाद्यनादिसंग्रहाय 'तत्परिणामे'त्यनुक्त्वा 'तत्प्रयुक्ते'त्युक्तम् ? *अविप्रकर्षादेवेति* ॥ तथा तत्पज्ञानानुच्छेदे तत्प्रयुक्त-तिक्तत्वाद्यनुच्छेदात् तत्प्रतीत्यनुवृत्तिः ; तदुच्छेदे तदुत्तरकालमेव तत्प्रयुक्तोच्छेदात् तत्प्रतीतिनिवृत्तिः । यदि तयोर्वि-प्रकर्षः, तर्हि परोक्षाधिष्ठानप्रमयाऽज्ञानानुच्छेदेऽपि तत्प्रयुक्तोच्छेदसम्भवात् तत्प्रतीतिर्न स्यात् ; अपरोक्षाधिष्ठान-प्रमयाऽज्ञानोच्छेदेऽपि तत्प्रयुक्तानुच्छेदसम्भवेन तत्प्रतीतिश्च स्यात्, इत्युपष्टम्भसङ्गतिः ॥

*मूले*—अधिष्ठानप्रमा='गुडो न तिक्तः' इत्याकारिका, 'बाधेने'त्यत्र बाधश्च "नेह नानाऽस्ति किञ्चने"त्याकारागमजन्यः । तौ च यथाक्रमं प्रतिबन्धकीभूतपित्तविशेष-दुरितविशेषादिरूपदोषदशायां परोक्षौ;

अद्वैतसिद्धिः

प्रपञ्चस्य व्यावहारिकसत्त्वापहारेऽपि प्रतीतिरनुवर्तत एव, अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तिष्यते ।

तरङ्गिणी

परोक्षबाधेन प्रपञ्चस्य व्यावहारिकत्वापहारेऽपि प्रतीतिरनुवर्तत एव ; अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तते"—इति, *अत्रोच्यते* ; यदुक्तं क्वचिदप्युपाधावित्यादि, तन्न ; "असच्चेद् न प्रतीयेते"ति वदता तादृशा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रविप्रकर्षादेव । *व्यावहारिकसत्त्वापहारे = मिथ्यात्वनिश्चये । *अधिष्ठानाज्ञानेति* ॥ व्यावहारिकेण तिक्तत्वाभावेन विशिष्टस्य गुडस्य जीवब्रह्मैक्यस्य चाज्ञानेत्यर्थः । प्रतिबन्धकदोषोत्सारणाधीनाद् अधिष्ठानसाक्षात्कारादित्यादिः । *एतेन*—तृतीयेऽपि बाधकत्वे नाभावस्य भावविरोधित्वापेक्षेति—*सूचितम्* ॥ *निवृत्तौ=

विट्ठलेशीयटिप्पणी

तज्ज्ञानदशायान्त्वपरोक्षाविति बोध्यम् । तदेतद् वक्ष्यति टीकायाम्—'प्रतिबन्धकदोषोत्सारणाधीनादधिष्ठानसाक्षात्कारादित्यादिरि'ति । एवमखण्डब्रह्मसाक्षात्कारः=निर्विकल्पकब्रह्मात्मसाक्षात्कारपूर्वकालीनप्रपञ्चाभावविशिष्टब्रह्मसाक्षात्कारः । अधिष्ठानाज्ञानपदं न्यूनतापरिहारायोभयपरतया व्याचष्टे—*अधिष्ठानाज्ञानेति* ॥ एतन्निवृत्तिः कस्मात् ? इत्यपेक्षायामाह—*प्रतिबन्धकेति* ॥ *अधिष्ठानसाक्षात्कारादिति* ॥ तिक्तत्वाभावविशिष्टगुडस्य प्रपञ्चाभावविशिष्टब्रह्मणो वा साक्षात्कारादित्यर्थः । मानान्तरजन्याया अपि योग्यप्रतियोग्यधिकरणकस्य विषयापरोक्ष्यवतोऽभावस्य प्रतीतेः साक्षात्काररूपतया प्रपञ्चाभावविशिष्टब्रह्मज्ञानस्य साक्षात्काररूपता, अस्य जीवब्रह्मैक्याज्ञाननिवर्तकत्वं निर्विकल्पकब्रह्मात्मैक्यसाक्षात्कारद्वारा बोध्यम् ; समानविषयकयोरेव ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावात् , मूलाज्ञानस्य शुद्धचैतन्यविषयकत्वेन प्रपञ्चाभावाविषयकत्वात् । यदि तु मूलस्थाखण्डब्रह्मसाक्षात्कारपदमन्नत्याधिष्ठानसाक्षात्कारपदं च निर्विकल्पकब्रह्मात्मसाक्षात्कारपरम् , तदा तृतीयकल्पेऽभावज्ञानस्याधिष्ठानधीविधयाऽभावज्ञानोच्छेदकत्वस्यानेन ग्रन्थेन प्रदर्शनीयस्यालाभप्रसङ्गः, अत एवं व्याख्यातम् ॥

*ननु*—एवं प्रपञ्चाभावविशिष्टब्रह्मसाक्षात्कार-तदुत्तरशुद्धब्रह्मसाक्षात्कारोभयं शुद्धचैतन्यविषयकमूलाज्ञाननिवृत्तिद्वारा प्रपञ्चप्रतीतिनिवर्तकमित्यायातम् ; तथाचोक्तप्रपञ्चाभावज्ञानस्य प्रपञ्चोपादानाज्ञाननिवृत्तिप्रयोजकान्तर्गतत्वेन प्रथमकल्पोदाहरणत्वमेवागतमिति—चेत् , *सत्यम्* ; अधिष्ठानाज्ञानपदव्याख्याने जीव-ब्रह्मैक्यपदेन शुद्धचैतन्यं न विवक्षणीयम् , किन्त्वद्वितीयं प्रपञ्चाभावविशिष्टं ब्रह्म ; तथाच तद्विषयकं प्रपञ्चोपादानं तूलाज्ञानं समानविषयकेण प्रपञ्चाभावविशिष्टब्रह्मसाक्षात्कारेण शुद्धब्रह्मसाक्षात्कारासहकारेणैव निवर्त्यते, इति तृतीयकल्पोदाहरणत्वसम्भवात् , शुद्धब्रह्मविषयकमूलाज्ञानप्रयोज्यानां नित्यत्वादिविशिष्टब्रह्मज्ञानानामनित्यत्वाद्युपासनानां नित्यत्वादिविशिष्टब्रह्मज्ञाननिवर्त्यानां तूलाज्ञानानामुपगमसम्भवेन प्रपञ्चाभावविशिष्टब्रह्मज्ञानस्याप्युक्तविधस्य सम्भवात् , शुद्धब्रह्मसाक्षात्कारेण तूलाज्ञानद्वारा सर्वप्रपञ्चोपादानशुद्धब्रह्मविषयकमूलाज्ञाननिवृत्तिः । नच—तेन तेन रूपेण ब्रह्मज्ञानस्य तन्निवर्त्यस्य तेन रूपेण तदज्ञानस्य च सत्त्वेऽपि नानुगतस्य प्रपञ्चनिवृत्तिकारणस्य सम्भवः, इति तत्तद्रूपावच्छिन्न प्रपञ्चसामान्याभावविशिष्टब्रह्मज्ञानाज्ञानयोरावश्यकत्वमस्तु, शुद्धब्रह्मज्ञानाज्ञाने तु किमर्थमिति—वाच्यम् ; प्रपञ्चसामान्याभावरूपधर्मस्यापि शुद्धब्रह्मण्यसम्भवेन तज्ज्ञान-तदज्ञानयोरप्यवर्जनीयत्वात् । अत एव तयोः सामान्यतो विशेषतश्च सर्वप्रपञ्च-तन्निवृत्तिकारणयोरनुगतयोर्लाभोऽपीति बोध्यम् ॥

*एतेन=अधिष्ठानतत्त्वसाक्षात्काररूपस्याभावज्ञानस्य भावोपादानाज्ञाननिवृत्तिद्वारा भावप्रतीतिनिवर्तकताऽभिधानेन । सूचितमित्यन्वयः । *तृतीये=अभावज्ञानस्याधिष्ठानधीविधया भावज्ञानोच्छेदकत्वमिति तृतीये प्रकारे । *बाधकत्वे=भावज्ञाननिवर्तकधीविषयत्वे । अपेक्षेत्यन्वयः । *ननु* एवं जीवन्मुक्तस्य ब्रह्मात्मसाक्षात्कारेण तदज्ञाननिवृत्तेरावश्यकत्वात् प्रपञ्चप्रतीतेरनुवृत्तिरनुभूयमाना नोपपद्यते, इत्यतो निवृत्तिपदं व्याचष्टे—*निवृत्ताविति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उच्छेदे-। जीवन्मुक्तस्य तु नाज्ञानमुच्छिन्नम् ; संस्कारात्मना सत्त्वात् । *अथवा* प्रारब्धभोगोपयोगिदेहादिक-मज्ञानशब्देनोच्यते । तथाच "भूयश्चान्ते विश्वमायानिवृत्तिरि"तिश्रुत्या विश्वमायानिवृत्त्युत्तरं भूयोऽपि देहादि-निवृत्त्युक्तेः 'प्रारब्धनाशात् प्रतिभासनाशः' इति स्मृतेश्च देहाद्युच्छेद एव प्रपञ्चाप्रतीतिप्रयोजक इति भावः ॥

*अत्रेदमवधेयम्*—यत्क्षणे यस्याज्ञानस्य उच्छेदः, तत्क्षणे तत्प्रयुक्तस्यावश्यमुच्छेद इति न नियमः ;

विट्ठलेशीयटिप्पणी

*उच्छेदे=स्थूलरूपेण संस्काररूपेण चावस्थितिसामान्याभावे । ईदृशोच्छेदोऽपि तस्य कुतो नेति ? अत आह— *जीवन्मुक्तस्येति* ॥ प्रारब्धकर्मरूपप्रतिबन्धकवशेन तस्याज्ञानावस्थितिसामान्यविरहप्रयोजकब्रह्मात्मसाक्षात्कार एव नोत्पन्नः, किन्त्वसम्भावनादिदोषमात्रनिवृत्त्या स्थूलरूपेणाज्ञानावस्थितिविरहमात्रप्रयोजकब्रह्मात्मसाक्षात्कार एव, अतः प्रपञ्चप्रतीत्यनुवृत्तिर्भवत्येव ; तन्निवृत्तावज्ञानावस्थितिसामान्यविरहस्यैव प्रयोजकत्वादिति भावः । *ननु* ज्ञानस्या-ज्ञानावस्थितिसामान्यविरहरूपोच्छेदप्रयोजकताया एव शुक्तिसाक्षात्कार-तदज्ञानस्थले दृष्टत्वाद् जीवन्मुक्तस्यापि ब्रह्मात्म-साक्षात्कारेण संस्काररूपेणाप्यविद्यानिवृत्तेर्दुर्वारतया कथं प्रपञ्चप्रतीत्यनुवृत्तिः ? इत्याशङ्क्य, प्रपञ्चोपादानस्याप्य-ज्ञानस्योच्छेदो न प्रपञ्चाप्रतीतौ प्रयोजकः, किन्त्वन्यदेवेत्याशयेन प्रकारान्तरेण मूलं व्याचष्टे—*अथवेति* ॥ अधिष्ठानाज्ञाननिवृत्तावित्यत्रेति शेषः । *उच्यते=लक्षणया प्रतिपाद्यते । *ननु* देहादेः प्रपञ्चानुपादानस्योच्छेद एव कुतस्तदप्रतीतौ प्रयोजक इति ? अत आह—*तथाचेति* ॥ *भूयश्चान्त इति* ॥ ब्रह्मसाक्षात्काराधीनाज्ञान-निवृत्तेरेव सर्वप्रपञ्चप्रतीतिनिवर्तकत्वे तु द्विस्तन्निवृत्त्युक्तेरसङ्गतिः ; एकदैव तन्निवृत्तिसम्भवात्, इति जीवन्मुक्तस्यै-वोच्छिद्येतेति भावः ॥

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्त-चरण-श्रवण-त्वगादीन् प्रेयान् नमो भगवते पुरुषाय तस्मै ॥

श्रीमद्विट्ठलशुभपद्मकमलं करोतु मो वाचम् । यद्धि परोक्षप्रियविभु निश्वसितैर्वर्णितञ्च विश्वसितेः ॥

अत्र 'परिणामिनोऽज्ञानस्योच्छेदे परिणामस्य रजतादेरुच्छेदः ; तयोस्तादात्म्यात्,' इति ग्रन्थे समवायिकारण-नाशात् कार्यनाशमतवद् अज्ञान-रजतयोरुच्छेदयोश्चाव्यवहितपूर्वापरीभावः प्रयोज्य-प्रयोजकभावश्च प्रतीयते । अत एवा'-ज्ञान-तत्प्रयुक्तोच्छेदयोरविप्रकर्षादेवे'त्युत्तरपङ्क्तौ 'समकालत्वादि'त्यनुक्त्वाऽविप्रकर्षादित्युक्तम् ; अव्यवहितपूर्वापरी-भावादिति तदर्थात्, तच्च नोपपद्यते ; ज्ञानेन स्वसमकालमेवाज्ञानस्येवाज्ञानोच्छेदेनापि स्वसमकालमेवाज्ञानप्रयुक्त-रजतादेरप्युच्छेदसम्भवात्, यत्क्षणे यस्याज्ञानस्योच्छेदः, तत्क्षणे तत्प्रयुक्तस्यावश्यमुच्छेद इति नियमात्, एवमुच्छेदो यदि नाशः, तदा विदुषि जायमानस्याविद्या-तत्प्रयुक्तनाशस्य दृश्यत्वेन "विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुत्युक्त-सर्वदृश्योच्छेदबाधापत्तिः, नाशपरम्परानवस्थापत्तिर्गौरवापत्तिश्चेत्याशङ्क्याह—*अत्रेदमवधेयमिति*॥ *यत्क्षण इति*॥ अज्ञानस्येव तत्प्रयुक्तस्यापि ज्ञानमेवोच्छेदकमिति नियमादिति भावः । ज्ञानस्याज्ञानं प्रत्येव विरोधित्वात् साक्षा-दुच्छेदकत्वम्, नतु तत्प्रयुक्तोच्छेदकत्वम् ; जीवन्मुक्तौ ज्ञानेनाज्ञानोच्छेदेऽप्यज्ञानप्रयुक्तस्य तत्संस्कारस्य सत्त्वात् । *ननु*—अज्ञानसंस्कारो नाम ज्ञानाधीनसंस्कारवत् पदार्थान्तरम्, तन्नाशो वा, तत्सूक्ष्मावयवो वा सूक्ष्मरूप-पदाभिधेयः ; तदुच्छेदे चाज्ञानोच्छेदस्यैवैतन्मते प्रयोजकत्वं वाच्यम् । तथाच जीवन्मुक्तौ ज्ञानेनाज्ञानोच्छेदे तेन तत्प्रयुक्ततत्संस्कारस्याप्युच्छेदः कुतो न जायते ? नच—प्रारब्धकर्मरूपप्रतिबन्धकवशादिति—वाच्यम् ; ज्ञानस्यैवा-ज्ञानप्रयुक्तसंस्कारोच्छेदकत्वोपगममतेऽप्युक्तप्रतिबन्धकवशेन जीवन्मुक्तावज्ञानसंस्कारानुच्छेदोपपत्तावज्ञानोच्छेदस्य तत्संस्कारोच्छेदकत्वकल्पनायां गौरवादिति—चेत्,

*न* ; परिणामोच्छेदे परिणाम्युच्छेदस्य प्रयोजकत्वस्य क्लृप्तत्वेन 'यत्सामान्ये' इति न्यायेनाज्ञानोच्छेदस्या-ज्ञानपरिणामरजताद्युच्छेदे प्रयोजकत्वे कल्पनीयेऽज्ञान-चित्सम्बन्धसाधारण्यायाज्ञानपरिणामत्वं विहायाज्ञानप्रयुक्तत्व-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

जीवन्मुक्तावज्ञानसंस्कारास्वीकारपक्षे व्यभिचारात्, नापि यदज्ञानप्रयुक्तोच्छेदप्रतिबन्धकशून्ये यत्क्षण इत्यादि-नियमः ; विदेहत्वप्रयोजकब्रह्मसाक्षात्कारोत्पत्तिक्षणे 'ब्रह्म साक्षात्करोमी'त्यनुभवेनाज्ञानासत्त्वेऽपि तत्प्रयुक्तमन-स्तत्परिणामरूपब्रह्मसाक्षात्कारादिसत्त्वेन व्यभिचारात्, तादृशोत्पत्तिक्षणे हि नोक्तप्रतिबन्धकमस्ति ; तद्द्वितीयक्षणे विदेहत्वसंपत्त्या सर्वदृश्योच्छेदात्, किन्तु यत्क्षणे या प्रमा, तत्क्षणेऽवश्यं तत्समानविषयकाज्ञानोच्छेदः ; उक्तप्रतिबन्धकशून्ये यत्क्षणे यस्याज्ञानस्योच्छेदः, तदव्यवहितोत्तरक्षणेऽवश्यं तत्प्रयुक्तस्योच्छेदः । या प्रमा यदज्ञानसमानविषयिका, सा तदज्ञानाधिकरणक्षणावृत्तिः । यो यस्तत्प्रमावानुक्तप्रतिबन्धकशून्यक्षणः, स तदज्ञान-

विठ्ठलेशीयटिप्पणी

स्यैवोच्छेद्यतावच्छेदकत्वकल्पनाया आवश्यकत्वेन तस्य च तत्संस्कारसाधारण्येनाज्ञानपरिणामत्वस्याप्यज्ञानसंस्कार-साधारणस्य कथञ्चिद् वक्तुं शक्यत्वेन चाज्ञानोच्छेदस्यैवाज्ञानसंस्कारोच्छेदकत्वमस्तु ; स्वसमानविषयकाज्ञानमात्र-विरोधिनो ज्ञानस्याज्ञानसंस्कारोच्छेदकत्वासम्भवादिति तु नियमनिराकर्तृणामभिप्रायः । *इत्यादीति* ॥ यस्या-ज्ञानस्योच्छेदो यत्क्षणे, तत्क्षणे तत्प्रयुक्तस्यावश्यमुच्छेद इतीत्यर्थः । तथाच जीवन्मुक्तिक्षणेऽज्ञानप्रयुक्तसंस्कारानु-च्छेदं प्रति प्रतिबन्धकस्य प्रारब्धकर्मणः सत्त्वेन तच्छून्यत्वाभावाद् न व्यभिचार इति भावः । *विदेहत्वप्रयोजकेति* ॥ प्रारब्धकर्मरूपाज्ञानप्रयुक्तोच्छेदप्रतिबन्धकनाशसहकृतेत्यादिः । इदं प्रयोजकान्तं च ब्रह्मसाक्षात्कारविशेषणम् । *अनुभवेन=तत्सत्त्वेन । *अज्ञानासत्त्वेऽपीति* ॥ तदनुभव-तदज्ञानयोर्विरोधादिति भावः । 'ब्रह्मसाक्षात्कारा-दी'त्यादिपदेन देहेन्द्रियादि । *ननु* उक्तक्षणे प्रारब्धकर्मनाशसत्त्वे किं प्रमाणम् ? अत आह—*तादृशोत्पत्तिक्षणे हीति* ॥ *तद्द्वितीयक्षणे विदेहत्वसम्पत्त्या सर्वदृश्योच्छेदादिति* ॥ तथा "विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुति-सिद्धैतदन्यथानुपपत्तिरेव तत्पूर्वक्षणे प्रारब्धकर्मरूपप्रतिबन्धकनाशोत्पत्तौ प्रमाणमिति भावः । उक्तदोषवारणायाज्ञान-तत्प्रयुक्तोच्छेदयोः पूर्वोत्तरक्षणान्तर्भावेण व्याप्तिं वक्ष्यमाणः ज्ञानस्याज्ञानोच्छेदं प्रत्यपि व्याप्तिस्तादृशक्षणद्वयान्तर्भावे-णैवेति भ्रमं निराकर्तुं तद्घटकमप्युच्छेदपदं व्याख्यातुं च तामपि व्याप्तिं तेजस्तिमिरयोरिव ज्ञानाज्ञानयोरेकत्रैक-क्षणानवस्थानरूपविरोधादेकक्षणान्तर्भावेणोक्तविरोधमुखेन दर्शयति—*किन्तु यत्क्षणे या प्रमेति* ॥ अज्ञान-तत्प्रयुक्तोच्छेदयोर्व्याप्तिमुक्तक्षणद्वयान्तर्भावेण दर्शयति—*उक्तेति* ॥ आद्यव्यभिचारवारणाय 'तत्क्षणे' इत्यपहाय 'तदव्यवहितोत्तरक्षणे' इति । अत्रोभयत्रोच्छेदस्य ध्वंसरूपत्व उक्तदोषत्रयवारणाय ध्वंसरूपोच्छेदपदार्थाघटनया प्रथमां व्याप्तिं व्याचष्टे—*या प्रमेति* ॥ तत्प्रमावत्क्षणत्वं तत्प्रमासमानविषयकाज्ञानात्यन्ताभावक्षणत्वव्याप्यमित्यर्थः । एतद्व्याप्तावनुभवसिद्धो ज्ञानाज्ञानयोरुक्तविरोध एव मूलम्, तद्बलाच्च तादात्म्येन प्रमातृचैतन्यनिष्ठब्रह्मसाक्षात्कारस्य कालिकसम्बन्धेनाधिकरणक्षणे ब्रह्माज्ञानात्यन्ताभावस्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकः स्वरूपसम्बन्धेन प्रमातृ-चैतन्यनिष्ठः कालिकसम्बन्धेन सिद्ध्यन् तत्क्षणावच्छेदेन प्रमातरि सिद्ध्यति । अयमेवात्रोच्छेदपदार्थः । स चाधिकरणी-भूतप्रमातृत्वोपलक्षितचैतन्यरूपब्रह्मस्वरूपः, इति नामृते ध्वंसरूपोच्छेदपदार्थपक्षोक्तदोषकालकूटमिति भावः । द्वितीयां व्याप्तिं तथा व्याचष्टे—*तत्प्रमावानिति* ॥ अत्रापि तद्विषयकाज्ञानप्रयुक्तोच्छेदप्रतिबन्धकशून्यत्वे सति तद्विषयक-प्रमावत्क्षणत्वं तद्विषयकाज्ञानप्रयुक्तदृश्याधिकरणकालपूर्ववर्तिभिन्नत्वव्याप्यमित्यर्थः । अत्र प्रतिबन्धकान्तस्थाने प्रतिबन्धकत्वेन पराभिमतप्रारब्धकर्म तत्तत्प्रमाश्रीयप्रारब्धकर्मत्वेन निवेश्यम्, तेन न ध्वंसरूपोच्छेदस्य प्रवेशापत्तिः । अत्र व्याप्तौ तत्क्षणनिष्ठायास्तत्प्रमाधिकरणतायास्तत्क्षणनिष्ठतदज्ञानात्यन्ताभावाधिकरणताद्वारा तदव्यवहितोत्तरक्षणनिष्ठां तदज्ञानप्रयुक्तदृश्यात्यन्ताभावाधिकरणतां प्रति प्रयोजकत्वं मूलम् । यद्यपि तदज्ञानाभाववान् उक्तक्षणः, तदज्ञान-प्रयुक्तदृश्याधिकरणकालपूर्ववर्तिभिन्न इत्येवालम् ; तथापि "विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुत्या ज्ञानस्यैव सर्व-दृश्याभावप्रयोजकत्वोक्तेः—'तत्प्रमावानि'त्युक्तम् । एवं च तत्पुरुषीयप्रारब्धकर्मशून्यतत्पुरुषीयब्रह्मसाक्षात्कारवत्क्षणा-व्यवहितोत्तरक्षणे तादृशक्षणत्वेन तत्पुरुषीयब्रह्माज्ञानप्रयुक्तदृश्याभाववत्त्वसिद्ध्या तत्पुरुषे तादृशक्षणावच्छेदेन तादृश-

## अद्वैतसिद्धिः

*एतेन*—उपाधिशब्देनाधिकरणमात्रविवक्षायामर्थान्तरम्; वाय्वधिकरणकात्यन्ताभावप्रतियोगित्वेऽपि रूप्यस्यामिथ्यात्वात्, अधिष्ठानविवक्षायां तु भ्रमोपादानाज्ञानविषयस्याधिष्ठानत्वेनान्योन्याश्रयत्वम्, ज्ञानस्य भ्रमत्वे विषयस्य मिथ्यात्वम्, विषयस्य मिथ्यात्वे च ज्ञानस्य भ्रमत्वमितीति—परास्तम्; उक्तरीत्याऽधिकरणविवक्षायां दोषाभावात् ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रयुक्तदृश्याधिकरणकालपूर्ववृत्तिभिन्न इति यावत्। तथाचाज्ञानसमानविषयकमनोवृत्त्युत्पत्तिक्षणे मनोवृत्त्यादिसत्त्वेऽपि न क्षतिः। अज्ञानस्यावरण-विक्षेपरूपशक्तिद्वयस्वीकारपक्षे त्वावरणशक्तेरेव सविषयकत्वाद् आद्यनियमेऽज्ञानस्थानेऽज्ञानीयावरणशक्तिर्वाच्या। यस्या आवरणशक्तेः समानविषया या प्रमा, सा तस्या अधिकरण-

## न्यायामृततसौगन्ध्यम्

**(१) किञ्च—उपाधिशब्देनाधिकरणमात्रविवक्षायामर्थान्तरम्, वाय्वाद्यधिकरणताकात्यन्ताभावप्रतियोगिनो रूपस्यामिथ्यात्वात्, अधिष्ठानविवक्षायां तु भ्रमोपादानाज्ञानविषयस्याज्ञानाधिष्ठानत्वेनान्योन्याश्रयत्वम्, ज्ञानस्य भ्रमत्वे हि विषयस्य मिथ्यात्वम्, विषयस्य मिथ्यात्वे ज्ञानस्य भ्रमत्वम्—इति। नच—सत्तादात्म्येन**

## सौगन्ध्यविमर्शः

इत्यनेन हि स्वतस्तादात्म्येन वा सदविषयकमित्येवार्थो विवक्ष्यते, न तु शून्यस्यासतः सत्त्वेन ज्ञानमिति शशशृङ्गाद्यसद्विशेष्यकत्वे विकल्पः, शुक्तिरूप्यादिसद्विशेष्यकत्वे विपर्यय इति भेदकल्पनमप्यसङ्गतम्; अन्यस्यान्यात्मताज्ञानत्वेन साम्यानिवारणात्।

(१) उपाधिपदेन मिथ्यात्वघटकेनाधिकरणसामान्यमेव विवक्ष्यते। प्रतिपन्नपदसमभिव्याहारस्तु स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वमेव विवक्ष्यते। वायौ तु रूपं न प्रतिपन्नमिति तत्र तदभावेन रूपस्यामिथ्यात्वमकिञ्चित्करम्। अधिष्ठानस्यैवोपाधिपदेन विवक्षायामपि बाधज्ञानविषयत्वस्यैवात्राधिष्ठानत्वात् नान्योन्याश्रयापादनमपि सौगन्ध्यकाराणामवसरति। एतेन—ब्रह्मणि मिथ्यात्वलक्षणातिव्याप्तिरपि "स एवाधस्तादि"ति श्रुतिप्रतिपन्नदेशादौ ब्रह्मणोऽभावात्सौगन्ध्या-

## विट्ठलेशीयटिप्पणी

**दृश्याभाववत्त्वं श्रुत्युक्तं सिद्ध्यतीति भावः। *ननु*—उक्तदृश्याधिकरणकालभिन्न इत्येवास्तु, किं तत्पूर्ववर्तिकालभिन्न इत्यनेनेति? अत आह—*तथाचेति* ॥ पूर्ववर्तिनिवेशे चेत्यर्थः। *न क्षतिः=न व्यभिचारः। तथा 'परिणामिन उच्छेदे' इत्यादिग्रन्थे प्रतीयमानस्याज्ञान-तत्प्रयुक्ताभावाधिकरणतयोः पूर्वापरीभावस्य प्रयोज्य-प्रयोजकभावस्य च नासङ्गतिरिति प्रवक्तॄकाभिप्रायः। *ननु*अज्ञानस्यैकाऽऽवरणशक्तिः, यया शुक्त्यादिविषयस्यावरणम्, इतीयमेव ज्ञानोच्छेद्या, अपरा च विक्षेपशक्तिः, यया शुक्तौ रजतस्योत्पत्तिप्रतीतिः, इयं च प्रारब्धकर्मरूपप्रतिबन्धकाभावसहकृताज्ञानीयावरणशक्त्युच्छेदोच्छेद्या। उक्तशक्तिद्वयानभ्युपगमे ब्रह्मज्ञानेन तदज्ञानोच्छेदे तत्प्रयुक्तप्रपञ्चस्याप्युच्छेदेन प्रपञ्चप्रतीतिर्न स्यात्। तत्र प्रारब्धकर्मणः प्रतिबन्धकत्वे ज्ञानाज्ञानयोर्विरोधः, जीवन्मुक्तिश्च विलुप्यते, उक्तशक्तिद्वयोपगमे त्वावरणशक्तेरेव ज्ञानेन विरोधाद् उच्छेदः। तत्र भोक्तकर्म प्रतिबन्धकम्, किन्तु विक्षेपशक्त्युच्छेदे, तदुच्छेदेऽपि विक्षेपशक्तिमदज्ञानसत्त्वात् तत्प्रयुक्तप्रपञ्चप्रतीतिर्जीवन्मुक्तस्योक्तप्रतिबन्धकवशादुपपद्यते, इति जीवन्मुक्तिसिद्धिः। एवञ्च या प्रमा यदज्ञानसमानविषया, सा तदधिकरणक्षणावृत्तिरित्याद्यनियमे व्यभिचारः, जीवन्मुक्तौ ब्रह्मप्रमासत्त्वेऽपि तदज्ञानसत्त्वात्। एवं तत्प्रमाधान् उक्तप्रतिबन्धकशून्यो यः क्षणः, स तदज्ञानप्रयुक्तदृश्याधिकरणकालपूर्ववर्तिभिन्न इति द्वितीयनियमोपगमेऽपि विदेहताकालेऽज्ञान-तदीयविक्षेपशक्तिप्रयुक्तप्रपञ्च-तत्प्रतीत्यभावमात्रं स्वीकृत्याज्ञान-तद्विक्षेपशक्तिसत्त्वस्वीकारेऽप्युक्तनियमाभङ्गात् सर्वदृश्योच्छेदानुपपत्तिरित्यत आह—*अज्ञानस्यावरण-विक्षेपरूपशक्तिद्वयस्वीकारपक्षे त्विति*॥ 'आवरणशक्तेरेवे'त्येवकारेणाज्ञानस्य तदीयशक्त्यन्तरस्य च व्युदासः। ज्ञानसमानविषयकत्वरूपस्य ज्ञाननिवर्त्यतावच्छेदकस्य निर्वाहायैव सविषयकत्वस्वीकारादिति भावः। तामुक्तिं स्पष्टयति—*यस्या आवरणशक्तेरिति* ॥ *तेन=अज्ञानमनिवेश्य विशिष्यावरणशक्तिनिवेशनेन। 'यदज्ञानशक्तेरि'त्युक्तौ**

न्यायामृतम्

नापि पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वमित्यन्वयः; अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात्, 'रूप्यं नास्ति नासीद् न भविष्यती'ति "नेह नानास्ति किंचने"ति च स्वरूपेणैव निषेधाच्च; अन्यथा नृशृङ्गादेरपि न स्वरूपेण निषेधः, किंतु सत्त्वेनेति स्यात्, रूप्यवत् तत्पारमार्थिकत्वस्याप्यपरोक्षप्रतीत्यन्यथानुपपत्त्या धीकाले वर्तमानतया निषेधायोगाच्च। पारमार्थिकत्वस्य पारमार्थिकत्वेन निषेधे त्वनवस्था; सुखाद्यनुभवरूपस्य ब्रह्मणोऽपि

तरङ्गिणी

प्रतीतिं प्रति प्रयोजकस्यासत्त्वस्य प्रतीत्यनुपाधिकस्यैव वाच्यत्वात्। निरस्तं चैतदधस्तात्। यच्चोक्तम्—'येन रूपेणे'त्यादि, सन्मात्रनिष्ठेत्यादि च, तदुभयमपि न; लाघवेन भावाभावयोरेव सामानाधिकरण्यविरोधात्, सत्ताभेदस्याद्याप्यसिद्धेश्च, मिथ्यात्वानुमानादेव च सत्ताभेदसिद्धावन्योन्याश्रयात्, श्रुतेः प्रत्यक्षबाधाच्च। तस्मात् साधूक्तमत्यन्तासत्त्वं दुर्वारमिति॥

*अबाध्यत्वरूपेति*॥ अबाध्यत्वरूपपारमार्थिकत्वज्ञाने सति तद्घटितमिथ्यात्वज्ञानम्, बाध्यत्वरूपमिथ्यात्वज्ञाने च तदभावरूपाबाध्यत्वज्ञानमित्यन्योन्याश्रय इत्यर्थः॥ *रूप्यं नास्तीति*॥ अन्यथा 'पारमार्थिकत्वेन रूप्यं नास्ति' पारमार्थिकत्वेन नाना नास्ती'ति च निषेधोल्लेखः स्यादित्यर्थः॥ *अन्यथेति*॥ तथाच नृशृङ्गादेरपि पारमार्थिकस्वरूपातिरिक्तं किञ्चित् स्वरूपमनिषिद्धं स्यादित्यर्थः। 'रूप्यं नास्ति' "नेह नास्ती"ति रूप्य-प्रपञ्चयोः 'पारमार्थिकत्वेन निषेधानन्तरमपारमार्थिकं रूप्यस्य प्रातिभासिकं प्रपञ्चस्य व्यावहारिकं स्वरूपमनुवर्तेत; तस्यानिषिद्धत्वात्, नचेष्टापत्तिः; मोक्षेऽपि तदनुवृत्तौ निष्प्रपञ्चतया असिद्ध्यापातादित्यपि बोद्धव्यम्॥ *रूप्यवदिति*॥ पारमार्थिकत्वस्यापि निषेधाय बुद्धिपूर्वकारोपरूपा प्रसक्तिर्वाच्या। आरोपश्चानिर्वचनीयपारमार्थिकत्वविषयः, इति पारमार्थिकत्वस्यापि न स्वरूपेण निषेधः, किन्तु पारमार्थिकत्वान्तरेण, तस्याप्युक्तविधया पारमार्थिकत्वान्तरेणेत्यनवस्था स्यादित्यर्थः॥ *सुखादीति*॥ प्रतिपन्नोपाधौ पारमार्थिक-

न्यायामृतकण्टकोद्धारः

द्वितीयपक्षं निषेधति—*नापीति*॥ अत्र पारमार्थिकत्वं व्यावहारिकत्वं वा विवक्षितम्? अबाध्यत्वं वा? नाद्यः; तादृशपारमार्थिकत्वेन त्रैकालिकनिषेधस्य मयाऽप्यङ्गीकृतत्वेन सिद्धसाधनात्, न द्वितीय इत्याह—*अबाध्यत्वरूपेति*॥ *अन्यथेति*॥ यदि स्वरूपेणैव निषेध्यत्वेन प्रतीतस्य पारमार्थिकत्वेन निषेध उच्यत इत्यर्थः॥ नच—शशशृङ्गादेः स्वरूपेण निषेधे बाधकाभावात् तत्र तथोच्यते, प्रकृते तु स्वरूपेण निषेधेऽर्थक्रियाकारित्वाद्यनुपपत्तिरूपबाधकसद्भावात् पारमार्थिकत्वेन निषेधप्रतियोगित्वमिति—वाच्यम्; शशशृङ्गादावपि परोक्षप्रतीतिविषयत्वाद्यनुपपत्तिरूपबाधकस्य वक्तुं शक्यत्वात्, अन्यथा स्वरूपेण प्रतिषिद्धस्यैव पारमार्थिकत्वेन प्रतिषिद्धस्य शुक्तिरूप्यादेरप्यर्थक्रियाकारित्वादर्शनेन प्रपञ्चस्य पारमार्थिकत्वेन प्रतिषेधे तदनुपपत्तिप्रसङ्गेनासत्त्वादिना प्रतिषेधकल्पनापत्तेः।

किञ्च पारमार्थिकत्वाकारेण निषेध इत्यस्य पारमार्थिकत्वस्य त्रैकालिकनिषेध इति पर्यवसितोऽर्थः। तत्र पारमार्थिकत्वस्यापि किं स्वरूपेण वा निषेधो विवक्षितः? पारमार्थिकत्वाकारेण वा? नाद्य इत्याह—रूप्यवदिति। नान्त्य इत्याह—पारमार्थिकत्वस्येति॥ ब्रह्मण्यतिव्याप्तिमप्याह—सुखाद्यनुभवरूपस्येति॥ न च—निर्धर्मकत्वाद् निषेधप्रतियोगित्वरूपधर्मोऽपि नास्तीति कथमतिव्याप्तिरिति—वाच्यम्; निर्धर्मकत्वरूपहेतु-प्रतियोगित्वाभावरूपसाध्याभावाभ्यां व्याघातस्योक्तत्वात्। न च

सौगन्ध्यविमर्शः

वादिताऽनवसरेति सूचितम्। देशादेर्भ्रमानधिष्ठानत्वात्, "स एवाधस्तादि"त्यादीनामपि सर्वत्राधिष्ठानतया ब्रह्मबोधन एव

न्यायामृतम्

'मयि सुखाद्यनुभवः' इत्यादिप्रत्यक्षेण "स एवाधस्तादि"त्यादिश्रुत्या च प्रतिपन्नोपाधौ निर्धर्मकत्वेन पारमार्थिकत्वाकारेण निषेधेनातिव्याप्त्यापत्तेश्च, प्रतिपन्नोपाधिशब्देनाध्यस्ताधिष्ठानविवक्षायां चाध्यस्त-

अद्वैतसिद्धिः

नच—"स एवाधस्तादि'ति श्रुत्या प्रतिपन्ने देश-कालाद्युपाधौ परमार्थतो ब्रह्मणोऽभावात्

तरङ्गिणी

त्वाकारेण निषेधप्रतियोगित्वं ब्रह्मण्यतिव्याप्तमित्यर्थः। निर्धर्मकतया पारमार्थिकधर्मशून्यस्यापि ब्रह्मणः स्वरूपं परमार्थसदिति यदि, तदा प्रपञ्चस्यापि तथाऽस्त्विति बोध्यम् ॥ *मयीति* ॥ मदंशोऽधआदिश्च ब्रह्मणोऽपि प्रतिपन्नोपाधिरस्तीत्यर्थः। *ननु*—पारमार्थिकस्य ब्रह्मणः कथं पारमार्थिकत्वेन निषेध इति ? अत उक्तम्—*निर्धर्मकत्वेनेति* ॥ *प्रतिपन्नोपाधिशब्देनेति* ॥ तथाच ब्रह्मण्यतिव्याप्तिरिति भावः। *ननु*—

न्यायामृतकण्टकोद्धारः

—अभावरूपधर्माभ्युपगमात् न दोष इति—वाच्यम्, प्रतियोगित्वस्याभावविरहरूपत्वस्याभावा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

क्षणावृत्तिः। तेन विक्षेपशक्तेस्तदज्ञानस्य च जीवन्मुक्तिकाले सत्त्वेऽपि न क्षतिः। द्वितीयनियमे तु तदज्ञानप्रयुक्तस्थाने तदज्ञान-तदीयविक्षेपशक्ति-तत्प्रयुक्तेति त्रितयं वाच्यम्। *एतेन*—'प्रतिपन्नोपाधी'त्यादे-रुक्तव्याख्यानेन। *प्रतिपन्ने=ब्रह्मसम्बन्धितया ज्ञाते। *परमार्थतः=पारमार्थिकत्वेन। स्वरूपेण चेति शेषः। *अभावादिति* ॥ *भावः=प्राप्तिः। 'भू प्राप्तावि'त्यनुशासनादिति भावः। तदभावादित्यर्थः।

न्यायामृतसौगन्ध्यम्

प्रतीयमानत्वमेव प्रतिपन्नोपाधौ प्रतीयमानत्वमिति—वाच्यम्, सत्तादात्म्येन प्रतीतत्वं भ्रमविषयत्वं च व्याहतमिति प्रागुक्तदोषग्रासात्। किञ्च "स एवाधस्तादि"ति श्रुत्या प्रतिपन्नदेश-कालाद्युपाधौ परमार्थतो

सौगन्ध्यविमर्शः

तात्पर्येण देशाद्यधिष्ठितत्वेन ब्रह्मबोधने तात्पर्याभावेन च देशादेर्ब्रह्मानधिकरणत्वाच्च। वस्तुतस्तु—निर्धर्मके ब्रह्मण्यभाव-

विट्ठलेशीयटिप्पणी

दोषमाह—*विक्षेपशक्तेरिति* ॥ 'यदज्ञानसमानविषयके'त्युक्ते दोषमाह—*तदज्ञानस्य चेति* ॥ *वाच्यमिति* ॥ तत्प्रमावाद्युक्तप्रतिबन्धकशून्यो यः क्षणः, स तदज्ञान-तदीयविक्षेपशक्ति-तत्प्रयुक्तद्वयाधिकरणकालपूर्ववर्तिभिन्न इति वाच्यमित्यर्थः। विदेहमुक्तावुक्तत्रयाणां पृथगभावत्रयनिर्वाहाय निवेशः। 'एतेने'त्यस्याभावज्ञानस्य भावज्ञानबाधकत्व-रूपाव्यवहितार्थकत्वासम्भवाद् व्यवहितार्थकतया व्याचष्टे—*एतेनेति* ॥ मूले—*उपाधिशब्देनाधिकरणमात्रविवक्षाया-मिति* ॥ एतन्मते प्रतिपन्नपदं प्रसिद्धार्थकं तुच्छमादायार्थान्तरवारकं बोध्यम् ॥

*उक्तरीत्या=येन रूपेण यदधिकरणतया यत् प्रतिपन्नम्, तेन रूपेण तन्निष्ठेति, सन्मात्रनिष्ठेति वा रीत्या। *स एवाधस्तादिति* ॥ "स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमि"ति छान्दोग्यश्रुत्येत्यर्थः। अत्र स इति पूर्ववाक्योक्तभूमा ब्रह्म परामृश्यते। तस्य सर्वदेशवृत्तिता प्रतिपाद्यते। अनेन सर्वकालवृत्तित्वमपि प्रतिपादितं भवति; सर्वदेशवृत्तेः सर्वकालवृत्तित्वनियमात्, "भूतं भवद् भविष्यत् सर्वमोङ्कार एवे"ति, "पुरुष एवेदं सर्वम्" इति च श्रुत्यन्तरमपि तत्रानुसन्धेयम्। 'कालादी'-त्यादिपदेनाकाशादि 'स एवेदं सर्वमि'त्यनेनोक्तं ग्राह्यम्। *उपाधौ=धर्मिणि। मिथ्यात्वघटकसम्बन्धित्वेन ज्ञातत्वलाभाय प्रतिपन्नपदं व्याचष्टे—टीकायाम्—*ब्रह्मसम्बन्धितया ज्ञात इति* ॥ नाभावे पारमार्थिकत्वम्, तस्य मिथ्यात्वा-घटकत्वात्, तद्घटकप्रतियोगितावच्छेदकानुक्तेर्न्यूनता च, इत्यतो व्याचष्टे *परमार्थत इति* ॥ पूर्वकल्पाय प्रति-योगितावच्छेदकं पूरयति—*स्वरूपेण चेति शेष इति* ॥ *ननु*'ब्रह्मणोऽभावादि'त्यसङ्गतम्; 'अधस्तात्सोऽस्ति' इतिवद् 'अधस्तात् स नास्ती'ति प्रत्ययाभावादित्यत आह—*भावः=प्राप्तिरिति* ॥ *एवमपि कालादौ ब्रह्मसम्बन्धा-

न्यायामृतम्

स्वस्य निरुच्यमानमिथ्यात्वानतिरेकेणात्माश्रयात्, शेषवैयर्थ्याच्च। ब्रह्मणः प्रतिपन्नोपाध्यभावेऽपि पारमार्थिकत्वरूपधर्माभावस्य ब्रह्मण्यपरिच्छिन्नसद्रूपत्वाविरोधित्ववद् घटादेः प्रतिपन्नोपाधिसद्भावेऽपि पारमार्थिकत्वाभावस्य घटादौ परिच्छिन्नसद्रूपत्वाविरोधित्वोपपत्तेश्च। नहि ब्रह्मण्यपि स्वरूपातिरिक्तं

अद्वैतसिद्धिः

तत्रातिव्याप्तिरिति—वाच्यम्; निर्धर्मके तस्मिन्नभावप्रतियोगित्वरूपधर्माभावात्। नचैवम्—

तरङ्गिणी

अध्यस्तत्वं न मिथ्यात्वम्, येनात्माश्रयः, किन्तु सदसद्भ्यामन्यत्वमित्यत आह—*शेषेति*॥ वैयर्थ्यादित्युपलक्षणम्। इष्टापत्तिरपि बोध्या। *ननु* प्रतिपन्नोपाधौ पारमार्थिकत्वाकारेण निषेधप्रतियोगित्वं मिथ्यात्वलक्षणं न ब्रह्मण्यतिव्याप्तम्; ब्रह्मणः प्रतिपन्नोपाधेरभावात्। नच—'मयि सुखानुभवः' इति प्रत्यक्षेणं "स एवाधस्तादि"त्यादिश्रुत्या च मदंशोऽध आदिर्वाऽस्ति ब्रह्मणोऽपि प्रतिपन्नोपाधिरिति—वाच्यम्; ब्रह्मणः सर्वाधिष्ठानत्वेन मदंशाधआदेर्ब्रह्मण्यध्यस्तस्य ब्रह्म प्रत्यधिष्ठानत्वायोगादित्यत आह—*ब्रह्मण इति*॥ पारमार्थिकत्वधर्मशून्ययोरपि ब्रह्म-जगतोः प्रतिपन्नोपाधिविरह-तत्सद्भावप्रयुक्तापरिच्छिन्नत्व-परिच्छिन्नत्वाभ्यां विशेषेऽपि न परमार्थस्वरूपे विशेष इत्यर्थः। *ननु* द्रव्यत्वहीनं गुणादिकमद्रव्यमितिवत् पारमार्थिकत्वहीनं जगदपारमार्थिकमेव स्यात्, अत आह—*न हीति*॥ पारमार्थिकत्वहीनमपारमार्थिकं चेत्, ब्रह्माप्यपारमार्थिकं

न्यायामृतकण्टकोद्धारः

त्मकत्वात्? *प्रतिपन्नोपाधिशब्देनेति*॥ बाध्यं यत् स्वम्, तदधिष्ठानत्वविवक्षायामित्यर्थः। *शेषेति*॥ बाध्यत्वमात्रस्य मिथ्यात्वलक्षणत्वसम्भवादिति भावः। अर्थान्तरतामप्याह—*ब्रह्मण इति*॥ *ननु* ब्रह्मणि पारमार्थिकत्वमेवास्तीत्यत आह—*न हीति*॥ *ननु* पारमार्थिकत्वस्य ब्रह्मरूपत्वात् माद्वैत-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाच प्रतिपन्नोपाधौ कालादौ ब्रह्मसम्बन्धाभावस्य सर्वसम्मतत्वात् सम्बन्धसामान्याभावस्यैव सम्बन्धिसामान्याभावत्वात् तादृशाभावप्रतियोगित्वस्य ब्रह्मणि सत्त्वादतिव्याप्तिरिति भावः। *निर्धर्मके = अभाव-

न्यायामृतसौगन्ध्यम्

ब्रह्मणोऽभावात् तत्रातिव्याप्तिः। नच—निर्धर्मके तस्मिन्नभावप्रतियोगित्वरूपधर्मो नास्तीति—वाच्यम्;

सौगन्ध्यविमर्शः

प्रतियोगित्वस्याभावाद् न मिथ्यात्वलक्षणस्यातिव्याप्तिः। यथा च निर्धर्मकत्वे भावाभावाभ्यां न व्याघातस्तथा पूर्वमेव विवेचितम्।

विट्ठलेशीयटिप्पणी

भावादित्यर्थः। तत्रापि किं प्रमाणम्? तत्राह—*तथाचेति*॥ *सर्वसम्मतत्वादिति*॥ "असङ्गो ह्ययं पुरुषः" इति श्रुतेः। *सङ्गः=सम्बन्धः। प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववान् पुरुष इत्यर्थः। पुरुषस्य पूर्णस्य सम्बन्धो जगति नास्ति। पुरुषे पूर्णे जगत्सम्बन्धो नास्तीति यावत्। अपूर्णस्यान्येन सम्बन्धः सम्भवति, अन्यसत्त्वे पूर्णत्वासम्भवात् पूर्णत्वमद्वितीयत्वे पर्यवस्यति। यद्यप्याध्यासिकः सम्बन्धो दुर्वारः; तथापि पारमार्थिको नास्तीत्यत्र तात्पर्यम्। *नन्वेवम्* ब्रह्मसम्बन्धाप्रसिद्ध्या तदभावाप्रसिद्धिः, प्रसिद्धौ वा सम्बन्धे तत्प्रतियोगिता न ब्रह्मणि, इति कथमतिव्याप्तिरिति? अत आह—*सम्बन्धसामान्याभावस्येति*॥ स्वप्रतियोगिताकत्वसम्बन्धेन ब्रह्मणा व्यधिकरणेन रूपेण गगनवद्वृत्तिना सम्बन्धसामान्याभावस्येति, पारमार्थिकत्वेन ब्रह्मसम्बन्धाभावस्येति वाऽर्थः। *सम्बन्धिसामान्याभावत्वादिति*॥ पारमार्थिकत्वेन सम्बन्धसामान्येन ब्रह्माभावत्वादित्यर्थः। तथाच समनियताभावानामैक्यात् श्रुतिसिद्धब्रह्मसम्बन्धाभावप्रतियोगित्वस्य ब्रह्मणि सत्त्वादतिव्याप्तिर्दुर्वारेत्यर्थः। *ननु* ब्रह्मणि निरुक्तप्रतियोगित्वरूपमिथ्यात्वलक्षणासिद्धिमुद्भावयितुर्ब्रह्मणः स्वाभिमतसत्यत्वादिधर्मवत्तानिर्वाहाय "नेहे"ति श्रुतितोऽयनिर्धर्मकत्वसङ्कोचेऽपि तात्पर्यात् तदुपरि 'निर्धर्मके' इति समाधानं भावयति, इत्यतो व्याचष्टे—*निर्धर्मके इति*॥ प्रतियोगित्वप्रयोजकधर्मस्याखण्डघटत्वादिरूपत्वे

**अद्वैतसिद्धिः**

सत्यत्वमपि तत्र न स्यात्, तथाच "सत्यं ज्ञानमनन्तमि"त्यादिश्रुतिव्याकोप इति—वाच्यम्;

**तरङ्गिणी**

स्यादित्यर्थः। *ननु* पारमार्थिकत्वस्य तत्त्वतः सत्त्वेऽपि नाद्वैतहानिः; तस्य ब्रह्मस्वरूपत्वेन ब्रह्मण इव

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

प्रतियोगित्वप्रयोजकधर्मवच्छिन्ने। येन रूपेण यस्याभावः प्रत्यक्षः, येन वा हेतुना यत्राभावप्रतियोगित्वमनुमीयते, तद्रूपमुक्तप्रयोजकम्, ब्रह्मणि तु तद् नास्त्येव; केनापि रूपेण ब्रह्मणोऽभावप्रत्यक्षाभावात्। शुद्धब्रह्मणस्तु नाभावः प्रत्यक्षः सम्भवति; प्रतियोगिताऽनुयोगितावच्छेदकरूपाभ्यामेवाभावः प्रत्यक्ष इति नियमात्। उपहित-ब्रह्मतादात्म्यादेर्ब्रह्मणि सत्त्वेऽपि न तस्याभावप्रतियोगितानुमापकत्वम्; अप्रयोजकत्वादिति भावः। *तत्र= तत्स्वरूपे। *श्रुतीति*॥ अखण्डाकारबोधे जननीये द्वारीभूतस्य सत्यत्वादिधर्मविशिष्टब्रह्मबोधस्य जनकश्रुतीत्यर्थः।

**न्यायामृतसौगन्ध्यम्**

हेतोर्भावाभावाभ्यां व्याघातात्॥ किञ्चैवं सत्यत्वादिकमपि तत्र न स्यात्। तथाच "सत्यमि"त्यादिश्रुतिविरोधः स्यात्॥

**विट्ठलेशीयटिप्पणी**

तद्व्यक्त्यन्ताभावनिवेशे तद्वृत्तिघटत्वत्वादिसर्वघटितप्रतियोगितावच्छेदकधर्मनिवेशे गौरवात् स्वरूपतो घटत्वादिना धर्मिमात्रघटिततद्भेदपरतया व्याचष्टे—*धर्मवच्छिन्न इति*॥ जातित्व-पशुत्वादिरूपसखण्डस्थले प्रतियोगितावच्छेद-कतावच्छेदकनिवेशस्योभयत्र तुल्यत्वेन धर्मिघटितभेदनिवेश एव गौरवात् तादृशधर्मात्यन्ताभाव एव निवेश्य इति बोध्यम्। प्रतियोगिताप्रयोजकरूपमाह—*येनेति*॥ यद्रूपविशिष्टयत्प्रतियोगिकत्वेनाभावः प्रत्यक्षविषय इत्यर्थः। *अनुमीयत इति*॥ तत्रेति शेषः। यस्य केनापि रूपेणाभावो न प्रत्यक्षः, तदभावस्याप्रसिद्ध्याऽनुमानं न सम्भवति, इति यत्राभावप्रतियोगित्वं येन हेतुनाऽनुमीयत इति खण्डशस्तदभावानुमानं हेतोरेव प्रतियोगिताप्रयोजकत्वं चानुसृतम्। यद्यपि यद्रूपावच्छेदेनाभावप्रतियोगित्वमनुमीयत इत्यपि वक्तुं शक्यम्; तथापि हेतोरेव प्रयोजकत्व-सम्भवाद् अक्रमवच्छेदकावच्छेदेनानुमानानुसरणेनेति भावः। *ब्रह्मणो भावेति*॥ ब्रह्म नास्ति, 'अहं नास्मि' 'आत्मा नास्ती'त्याद्याकारकेत्यर्थः। *ननु* अभावांशे यदीयसंसर्गविधया प्रतियोगित्वं प्रत्यक्षम्, तदपि स्वरूपतः प्रतियोगित्वप्रयोजकम्, अखण्डं च ब्रह्मरूपं प्रतियोगिताप्रयोजकम्, अखण्डं च ब्रह्म स्वरूपतो विषयीकृत्य 'ब्रह्म नास्ती'त्याकारकाभावप्रत्यक्षं सम्भवतीत्याशङ्कां वारयति—*शुद्धब्रह्मण इति*॥ अनुयोगितेत्यधिकरणतार्थं दृष्टान्तविषयोक्तम्। ब्रह्म, अभावप्रतियोगि, घटाद्युपहितस्य तदाकारवृत्त्युपहितस्य वा ब्रह्मणस्तादात्म्यात्, कपालादिवत्; अन्तःकरणवद्वा। घट-तदाकारवृत्त्याद्युपहितस्य कपालान्तःकरणावच्छेदेन शुद्धब्रह्मचैतन्य एवाध्यासः, नतु कपालाद्यु-पहिते; जडत्वेन तस्याध्यासाधिष्ठानत्वासम्भवात्; अतो न स्वरूपासिद्धिः; यदुपहिते यदवच्छिन्ने वा यस्य तादात्म्यम्, तत्रापि तस्य तादात्म्यम्; अतो दृष्टान्तसिद्धिरित्यनुमानं निराकरोति—*उपहितब्रह्मतादात्म्यादेरिति*॥ आदिना घटाद्युपाधितादात्म्यपरिग्रहः। *अप्रयोजकत्वादिति*॥ नहि घटादितादात्म्याध्यासेऽभावप्रतियोगित्वं प्रयोजकम्; अज्ञानावरणस्य तत्र प्रयोजकत्वात्, इत्यभावप्रतियोगित्वरूपसाध्यानुपगमेऽप्युक्तहेतुभङ्गाद्यापत्तिरूपतर्काप्रसरादिति भावः। एवञ्चासङ्गस्य ब्रह्मणः संसर्गस्य देश-कालाद्यवच्छेदेऽपि पारमार्थिकतदभावस्य प्रसिद्धत्वेऽपि तस्याप्रसिद्ध-ब्रह्माभावात्मकत्वात् तत्सम्बन्धस्य तत्प्रतियोगित्वम्, न ब्रह्मणः, इति न तत्र मिथ्यात्वलक्षणातिव्याप्तिः, नवा निर्धर्मकत्वसङ्कोच इति ग्रन्थकृत्तात्पर्यम्। मूले *नचैवमिति*॥ *एवम्=निर्धर्मकत्वसङ्कोचाभावे। ब्रह्मणि किञ्चिद्विशिष्ट उपहिते वा सत्यत्वं स्यात, अतो व्याचष्टे टीकायाम्—*तत्र तत्स्वरूप इति*॥ शुद्धब्रह्मस्वरूपे ब्रह्मणीत्यर्थः। *ननु* "सत्यं ज्ञानमनन्तमि"ति श्रुत्याऽखण्डाकारस्य निर्विकल्पकस्य शुद्धब्रह्मस्वरूपबोधस्य जननात् शुद्धे सत्यत्वादि-धर्माभावे कथमुक्तश्रुतिव्याकोप इति? अतो व्याचष्टे—*अखण्डाकारबोध इति*॥ *जननीय इति*॥ 'नेह नाने'-त्यादिश्रुत्यनुरोधेन तत्र "सत्यं ज्ञानमि"ति श्रुतेर्मुख्यतात्पर्यादिति भावः। *द्वारीभूतस्येति*॥ सत्य-ज्ञानाद्यनेकपद-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*उक्तं हि पञ्चपाद्याम्—'आनन्दो विषयानुभवो नित्यत्वं चेति ब्रह्मणो धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इति। चकारात् सत्यत्वादिसंग्रहः। *पृथगिवेति* ॥ निरुपाधीष्टत्वादिविशिष्टरूपेण कल्पितेन केवलचिद्रूपाद् भिन्ना इवेत्यर्थः। केवलचिदेव ह्युक्तविशिष्टरूपतादात्म्योपलक्षिता सती आनन्दरूपा। शुद्धायामपि चिति निर्विकल्पकवृत्ति-तन्नाद्ययाज्ञानयोर्विषयत्वस्येव विशिष्टचित्तादात्म्यस्यापि सत्त्वाद् विशिष्टकेवलयोस्तादात्म्यस्यावश्यकत्वाद् धर्मान्तरस्य शुद्धचित्स्वीकारेऽपि विशिष्टतादात्म्यादिस्वीकारात्। *यत्तु*—केवलचिदेव निरुपाधीष्टत्वाकारवृत्त्या भासमाना आनन्दरूपा। आवरणविरोधिविशिष्टत्वाकारवृत्त्या

विट्ठलेशीयटिप्पणी

सार्थक्याय, असत्यत्वादिभ्रमनिवृत्तये चेति भावः। फलीभूतशाब्दबोधेऽप्रकारस्य द्वारीभूतशाब्दबोधप्रकारत्वं तात्पर्यसत्त्वासत्त्वाभ्यां दुर्वचम्; अतस्तत्र "नित्यं विज्ञानमानन्दं ब्रह्म" "यः सर्वज्ञः सर्वविदि"ति श्रुतिजन्ये तादृशबोधे वृद्धसम्मतिमाह—*उक्तं हीति* ॥ *अपृथक्त्वेऽपि* ॥ मूलकृता नचशङ्का-समाधाने वक्ष्यमाणे केवलधर्मिण एव किञ्चिद्विशिष्टस्य धर्मत्वेन मुख्यतात्पर्यविषयीभूते बोधे पृथक्त्वेन भिन्नधर्मत्वेन प्रकारविधयाऽभासमाना अपि पृथग् अवान्तरतात्पर्यविषयीभूते पृथक्त्वेन प्रकारविधयाऽवभासन्त इत्यर्थः। अर्थवादवाक्यादावुक्तद्विविधतात्पर्याभ्यां द्विविधबोधस्य प्रसिद्धेरिति भावः। द्वारीभूतबोधे प्रकृतार्थसंग्रहमाह—*चकारादिति* ॥ इवशब्देनानन्दादेर्भिन्नधर्मत्वं वस्तुतो नास्ति, किन्तु कल्पितमिति द्योतितं स्पष्टयति—*निरुपाधीति* ॥ इतरेच्छानधीनेच्छाविषयत्वादित्यर्थः। आदिना चन्दनादिसंपर्कजन्यवृत्त्युपहितत्वम्। मुक्तिदशासाधारण्याय निरुपाधीष्टत्वानुधावनम्। *विशिष्टरूपेण=विशिष्टात्मकेन रूपेण कल्पितेन। अभेदे तृतीया। कल्पितो निरुपाधीच्छाविषयत्वादिविशिष्ट आनन्दपदार्थः केवलचिद्रूपाद् ब्रह्मणो भिन्न इवेत्यर्थः। निर्धर्मकत्वोपपत्तये कल्पितत्वोक्तिः। *विषयानुभवः=विषयाकारवृत्त्युपहिता चित्। इवपदव्यङ्ग्याभेदे सत्यपि धर्म-धर्मिभावमुपपादयति—*केवलचिदेवेति* ॥ सत्यानवच्छिन्नानन्दरूपा केवलचिदेव निरुपाधीष्टत्वादिविशिष्टरूपो यो धर्मभूतानन्दज्ञानपदार्थः, तत्तादात्म्योपलक्षिता ॥ तादात्म्यसम्बन्ध उक्तोपलक्षणीभूतानन्दज्ञानपदार्थवत्त्वेन "आनन्दो ब्रह्म" "यः सर्वज्ञः" इति वाक्येन प्रथमं द्वारतया बोध्यत इति शेषः। 'आनन्दमि'ति हि अर्शआद्यजन्तम्; केवलानन्दशब्दस्य पुंलिङ्गत्वात्। 'सर्वज्ञः' इति च कर्तृप्रत्ययान्तम्; निरुपाधीष्टत्वादेः कल्पितत्वेन मोक्षदशायामसत्त्वादुपलक्षणत्वम्। अत एव केवलचितो निर्धर्मकत्वमुपपद्यते। यद्वा केवलचिदेव निरुपाधीष्टत्वादिविशिष्टतादात्म्योपलक्षिता। *आनन्दरूपा=आनन्दाख्यधर्मस्वरूपा, धर्मिण्या एव चित उक्ततादात्म्योपलक्षिताया आनन्दाख्यधर्मस्वरूपमिति यावत्। धर्मसम्बद्धस्य कथं शुद्धत्वमिति? अत्राह—*शुद्धायामपीति* ॥ सर्वप्रपञ्चस्याज्ञानाधीनत्वेनाज्ञानविषयतावच्छेदकत्वासम्भवात्, "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥" इत्युक्तेश्चाज्ञानविषयत्वं केवलचितः; अज्ञानसमानविषयकज्ञानस्यैव तन्निवर्तकत्वात्। अद्वितीये ब्रह्मणि महावाक्यतात्पर्याच्च तस्या एव महावाक्यजन्यनिर्विकल्पकवृत्तिविषयत्वमिति भावः। दृष्टान्तमुक्त्वा युक्तिमप्याह—*विशिष्ट-केवलयोरिति* ॥ *धर्मान्तरस्य=मायान्तःकरणाद्यवच्छिन्ननिष्ठस्य कर्तृत्व-भोक्तृत्वादेः। *आवश्यकत्वादिति* ॥ 'स्वीकारादि'त्यत्र हेतुः। उक्तानन्दज्ञानपदार्थविरुद्धं मूलकृद्वक्ष्यमाणसत्यत्वादिपदार्थविरुद्धमानन्दादिपदार्थकथनमनुवदति दूषयितुम्—*यत्त्विति* ॥ *इष्टत्वाकारवृत्त्या=इष्टत्वप्रकारकवृत्त्या। *भासमाना=विषयतासम्बन्धेनोक्तवृत्त्युपलक्षितेत्यर्थः; 'तत्तदाकारवृत्त्युपलक्षितत्वे'त्युत्तरग्रन्थाद् उक्तवृत्त्युपलक्षितत्वेन प्रतीयमानेति नार्थः; वृत्तिविषयकवृत्त्यन्तराभावात्, वृत्तिविषयकत्वात्मकप्रतीत्यर्थकत्वे तूक्तार्थ एव पर्यवसानात्। *आनन्दरूपा=आनन्दाख्यधर्मस्वरूपा। *आवरणेति* ॥ घटत्वादिप्रकारकावरणविरोधिनी। *विशिष्टत्वाकारा=घटत्वादिवैशिष्ट्यविषयणी या वृत्तिः, तया भासमाना तदुपलक्षिता। *ज्ञानरूपा=ज्ञानाख्यधर्मस्वरूपा। 'विरोधित्वविशिष्टे'ति पाठ आवरणनिवर्तकत्ववैशिष्ट्यविषयकघटत्वप्रकारकवृत्त्येत्यर्थः। वृत्तेः स्वग्राहकत्वमिव स्वनिष्ठा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानरूपा । एवं मिथ्यात्वाभावविशिष्टत्वाद्याकारवृत्तिभिः सत्यत्वादिरूपा । तादृशेष्टत्वादीनां शुद्धब्रह्मण्यसत्त्वेऽपि तादृशेष्टचित्तादात्म्यस्य तत्र सत्त्वात् तदाकारवृत्तिर्निवेश्या । यदि चोक्ततादात्म्यं तदुपहितचित्येव स्वीक्रियते, नतु शुद्धचितीति पक्षः स्वीक्रियते, तदोक्ततादात्म्याकारवृत्तिद्वारकशुद्धब्रह्माकारवृत्तिर्निवेश्या । अत एव 'पृथगिवे'त्यस्यान्तःकरणवृत्त्युपाधौ भिन्ना इवेति विवरणकारव्याख्यानम्—इति ; *तन्न* ; तत्तद्रूपोपलक्षितचित एवानन्दादिरूपत्वसम्भवे तत्तदाकारवृत्त्युपलक्षितस्य तद्रूपत्वकल्पने गौरवात् । विवरणे वृत्तिनिवेशस्तु निरुपाधीष्टत्वादौ प्रमाणसूचनाय, इत्याशयेनाचार्य आह—*मिथ्यात्वाभावरूपसत्यत्वस्येत्यादि* ॥

[ *वस्तुतस्तु*—निरुपाधीष्टत्वादिनोपलक्षितत्वं तत्प्रकारकमनोवृत्त्युत्तरं निर्विकल्पकमनोवृत्त्या विषयीकृतत्वम् ; अन्यथा शुद्धस्यैव तद्रूपोपलक्षितत्वेन सत्यत्वानन्दत्वादिधर्मभेदानुपपत्तेः । तत्तद्धर्मप्रकारकज्ञानोत्तरं नित्यव्यावृत्तधीविषयत्वस्यापि तत्रैव पर्यवसानम् । आनन्दादीनां विशिष्टरूपत्वे तु स्वरूपात्मकता न स्यात् ।

सौगन्ध्यविमर्शः

एतेन—ब्रह्मणः सत्यत्वादिकमपि—व्याख्यातम् ; मिथ्यात्वाभावत्वोपलक्षितस्वरूपत्वात्सत्यत्वस्य ब्रह्मरूपत्वाद् न निर्धर्मकत्व-

विठ्ठलेशीयटिप्पणी

वरणविरोधित्वग्राहकत्वमपि स्वीक्रियत इति भावेनेदम् । तादृशवृत्त्युपलक्षिता ज्ञानरूपेत्यर्थः । *मिथ्यात्वाभावेति* ॥ मिथ्यात्वाभाववैशिष्ट्यविषयकवृत्तिविषयत्वोपलक्षिता सत्यपदाभिधेयेत्यर्थः । 'सत्यत्वरूपे'ति पाठे सत्यत्वाख्य-धर्मवती तादृशवृत्तिरेव सत्यमित्यर्थः । विषयानन्द-विषयानुभव-सत्यत्वपदार्थे वृत्त्यन्तर्भावे विवरणसम्मतिमाह—*अत एवेति* ॥ अन्तःकरणवृत्त्युपाधाविति* ॥ निरुपाधीष्टत्वाद्याकारान्तःकरणवृत्तिरूपोपाधिसम्बन्धे सति धर्मिणः सकाशाद् भिन्ना इवेत्यर्थः । इदं दूषयति—*तन्न इति* ॥ *तत्तद्रूपेति* ॥ निरुपाधीष्टत्वादिरूपेत्यर्थः । *इदमेव= निरुपाधीष्टत्वादिविशिष्टतादात्म्यम् । अत एव तादृशतादात्म्योपलक्षिता सती आनन्दरूपेति पूर्वग्रन्थेनैकार्थता । *तत्तदाकारेति* ॥ निरुपाधीष्टत्वाद्याकारेत्यर्थः । तत्र ज्ञानपदार्थघटाद्याकारवृत्तावावरणविरोधित्वस्य तदा-कारत्वस्य वा प्रवेशो गौरवाद् न कार्यः । *तद्रूपत्वेति* ॥ धर्मभूतानन्दादिपदार्थरूपत्वेत्यर्थः । कथं तर्हि विवरणे वृत्तिनिवेशः ? तत्राह—*विवरण इति* ॥ *आहेति* ॥ वृत्त्यघटितं सत्यत्वमित्यादिः । *मिथ्यात्वाभावरूपसत्य-त्वस्येति* ॥ मिथ्यात्वाभावत्वविशिष्टोपलक्षितरूपस्य सत्यत्वस्येत्यर्थः । *ननु* 'विवरणे वृत्तिनिवेशो निरुपा-धीष्टत्वादौ प्रमाणसूचनाये'त्यसङ्गतम् ; अन्तःकरणवृत्त्युपाधौ भिन्ना इति पृथक्पदव्याख्यानविवरणपङ्क्तावन्तः-करणवृत्तौ निरुपाधीष्टत्वाद्याकारस्यानुल्लेखात् । अतस्तत्रान्तःकरणवृत्तिपदेन चैतन्यविषयकनिर्विकल्पकवृत्तिरेव विवक्षिता, 'वृत्त्युपाधावि'त्यनेन च वृत्त्युपहितस्यानन्दादिपदार्थता, आनन्द-ज्ञान-सत्यपदार्थतावच्छेदकीभूतस्योपाधे-र्भेदकञ्च निरुपाधीष्टत्वादिप्रकारकवृत्तिमिथ्याभावत्वविशिष्टप्रकारवृत्त्युत्तरत्वम् ; तावतैव निरुपाधीष्टत्वादौ प्रमाण-लाभोऽपीत्याशयेनाह—*वस्तुतस्त्विति* ॥ 'मनोवृत्त्युत्तरनिर्विकल्पकवृत्त्ये'ति समस्तपाठः । 'मनोवृत्त्युत्तरं निर्विकल्पकवृत्त्ये'त्यसमस्तपाठः । 'मनोवृत्त्ये'त्यसमस्तपाठेऽप्युत्तरमित्यस्य क्रियाविशेषणत्वात् स एवार्थः । *वृत्त्या विषयीकृतत्वम्=वृत्तिकालीनं वृत्तिविषयत्वम् ; वृत्त्युपहितत्वमिति यावत्, नतु तदुपलक्षितत्वम् ; शुद्धस्यैव तदुपलक्षितत्वेन ज्ञानानन्दपदार्थभेदानुपपत्तितादवस्थ्यापत्तेः । *अन्यथा=निरुपाधीष्टत्वाद्युपलक्षितस्यैवानन्दादिपदार्थत्वे । *धर्मभेदानुपपत्तेरिति* ॥ शुद्धेन धर्म-धर्मिभावानुपपत्तेश्चेति बोध्यम् । नचैवं निरुपाधीष्टत्वाद्युपहितस्यैवा-नन्दादिपदार्थत्वमस्तु ; किं तदाकारवृत्त्युत्तरोपाधिनिवेशनेन ? इति—वाच्यम् ; निरुपाधीष्टत्वादौ प्रमाणलाभानुपपत्तेः । अन्योक्तं प्रकारान्तरमत्रैवान्तर्भावयति—*तत्तद्धर्मप्रकारकज्ञानोत्तरेति* ॥ *नित्यव्यावृत्तधीविषयत्वस्येति* ॥ नित्यम्= नियमेन, व्यावृत्तविषयिणी=जडादिव्यावृत्तविषयिणी या धीः, तद्विषयत्वेत्यर्थः । *तत्रैव पर्यवसानम्* ॥ तादृशधियो निर्विकल्पकत्वनियमादिति भावः । *आनन्दादीनाम्=धर्मभूतानन्दादिपदार्थानाम् । *विशिष्टरूपत्वे=निरुपाधीष्टत्व-तदाकारवृत्ति-तदुत्तरनिर्विकल्पकवृत्त्यन्यतमादिविशिष्टरूपत्वे । *स्वरूपात्मकता=शुद्धचैतन्यस्वरूपधर्मता । *न स्यादिति* ॥ विशेषणस्य चैतन्यानात्मकत्वात् तत्तद्धर्मोपहितस्य चैतन्यस्वरूपधर्मता सम्भवति ; तत्र धर्मिणो

न्यायामृतम्

पारमार्थिकत्वं तत्त्वतोऽस्ति ; अद्वैतहानेः । नच सोपाधिकबाधाभावगर्भितं पारमार्थिकत्वं निरुपाधिक-

अद्वैतसिद्धिः

अधिकरणातिरिक्ताभावानभ्युपगमेन, उक्तमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मस्वरूपविरोधात् । एतेन—स्वप्रकाशत्वाद्यपि—व्याख्यातम् ; परप्रकाश्यत्वाभावो हि स्वप्रकाशत्वम्,

तरङ्गिणी

ब्रह्माद्वैताविरोधित्वादित्यत आह—*नचेति* ॥ सोपाधिकत्व-निरुपाधिकत्वाभ्यां पारमार्थिकत्व-ब्रह्मणोर्नैकस्वरूप-

न्यायामृतकण्टकोद्धारः

हानिरित्यत आह—*नचेति* ॥ तर्हि सत्यत्वाविशेषे ब्रह्म-जगतोः को विशेष इति ? अत आह—*एवं चेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तस्माद् मिथ्यात्वेत्यादिमूलमपि विवरणवाक्यानुसारेण व्याख्येयम् । ख ] *परप्रकाश्यत्वेति । अन्याधीन-

न्यायामृतसौगन्ध्यम्

नच—अधिकरणातिरिक्ताभावानभ्युपगमेनोक्तमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मस्वरूपत्वमङ्गीक्रियत

विठ्ठलेशीयटिप्पणी

चैतन्यस्वरूपत्वस्यातन्त्रत्वात् ; उपहित-शुद्धयोर्भेदाद् धर्म-धर्मिभावश्चोपपद्यत इति भावः । *ननु* एवं 'मिथ्यात्वाभावरूपसत्यत्वस्ये'ति मूलं विवरणविरुद्धं स्यात्, तत्राह—*तस्मादिति* ॥

*विवरणवाक्यानुसारेणेति* ॥ निरुक्तमिथ्यात्वाभावत्वविशिष्टप्रकारकमनोवृत्त्युत्तरनिर्विकल्पकवृत्त्युपहितरूप-सत्यत्वस्येत्यर्थकतया—इत्यर्थः । *ननु* एवं ब्रह्मणः स्वप्रकाश-नित्य-विभु-पूर्णादिपदशक्यतावच्छेदकीभूतास्व-प्रकाशत्वादिभ्रमनिवर्तकनिर्विकल्पकधीकारणीभूतविशिष्टधीप्रकारीभूतास्वप्रकाशत्वादिव्यावर्तकस्वप्रकाशत्वादिभावरूप-धर्मवत्त्वानुपपत्तिः ; अनावृतचित्त्वं स्वप्रकाशत्वम्, सर्वकालवृत्तित्वं नित्यत्वम्, सर्वदेशवृत्तित्वं विभुत्वम्, सर्ववस्तुतादात्म्यं पूर्णत्वम् । न हि ब्रह्मणः स्वप्रकाशत्वादि अपारमार्थिकम्, येन तत्सत्त्वेऽपि स्वसमानसत्ताकधर्मा-भाववत्स्वरूपं निर्धर्मकत्वमुपपद्यते । ब्रह्मणोऽस्वप्रकाशत्वाद्यापत्तेरित्याशङ्क्याह मूले—*एतेनेति* ॥ सत्यपदार्थताव-च्छेदकव्याख्यानरीत्या । *स्वप्रकाशत्वम्=स्वप्रकाशपदार्थतावच्छेदकम् । *परप्रकाश्यत्वाभाव इति* ॥ स च ब्रह्मस्वरूपः, इति न ब्रह्मणो निर्धर्मकत्वानुपपत्तिः ; स्वातिरिक्तधर्माभाववत्त्वस्य तदर्थत्वादिति भावः । अत्र यदि परप्रकाश्यत्वं स्वान्यकर्तृकप्रकाशविषयत्वम् ; स्वम्=घटादि, तदन्यत्=अन्तःकरणम्, तत्कर्तृकः=तज्जन्यत्वे सति तन्निष्ठो यः प्रकाशः=वृत्तिप्रतिबिम्बभूतचैतन्यम्, तद्विषयत्वम्=तद्भास्यत्वं घटादौ, तदभावो ब्रह्मणि ; "ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयं प्रकाशमानत्वाद् नाभास उपयुज्यते" इत्युक्तेः । यन्मते चित्प्रतिबिम्बसहिताया एव वृत्तेः स्वविषयीभूतब्रह्माज्ञानबाधकत्वम्, तन्मतेऽप्यज्ञानबाधे तत्कार्यवृत्तेरपि तदुत्तरक्षणे बाधेनोपाध्यभावे प्रतिबिम्बस्याप्य-भावेनानावृतं ब्रह्मस्वरूपमेव भासते, नतु वृत्तिप्रतिबिम्बितचिता ; तस्याः "न तत्र सूर्यः" इति श्रुत्या "न तद्भासयते सूर्यः" इति स्मृत्या च ब्रह्मप्रकाशाभिभूतत्वेन स्वयंप्रकाशब्रह्मावभासने दीपप्रभाया आदित्यावभासन इव सामर्थ्याभावादिति । तर्हि अन्तःकरण-तद्धर्मभाने वृत्त्यनपेक्षापत्तेरन्तःकरण-तद्धर्माणां निरुक्तस्वप्रकाशत्वापत्तिः, स्वान्यो यः प्रकाशः, तद्भास्यत्वं तु न परप्रकाश्यपदमुख्यार्थः ; स्वान्याधीनप्रकाशभास्यत्वस्यैव ततः शक्त्या प्रतीतेः, प्रतिबिम्बप्रकाशविषयत्वं घटादौ व्यवहारार्थं व्यवहारेण ग्राह्यम् ; तथा च स एव प्रकाशपदेन विवक्षितुमुचित इत्याशयेन व्याचष्टे टीकायाम्—*परप्रकाश्यत्वेतीति* ॥ *अन्येति* ॥ स्वान्येत्यर्थः । स्वम्=परप्रकाश्यत्वाभिमतो घटादिः ।

### अद्वैतसिद्धिः

कालपरिच्छेदाभावो नित्यत्वम्, देशपरिच्छेदाभावो विभुत्वम्, वस्तुपरिच्छेदाभावः पूर्णत्वमित्यादि।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यवहारकत्वेत्यर्थः। घटादेरिव चितोऽपि व्यवहारो हि चिदधीनः, न चिदन्याधीनः; व्यवहारविषयतामात्रे चित्तादात्म्यस्य प्रयोजकत्वात्। न च चिति तत्तादात्म्यासम्भवः; व्यवहारपूर्वकालोपहितचिति केवलचित्तादात्म्यसत्त्वात्, कार्यपूर्वकालोपहिते कारणसम्बन्धस्यैव कार्येषु प्रयोजकत्वात्। *कालपरिच्छेदः=नाशप्रतियोगित्वम्। *देशपरिच्छेदः=अत्यन्ताभावप्रतियोगित्वम्॥ *वस्तुपरिच्छेदः=भेदप्रतियोगित्वम्।

### विट्ठलेशीयटिप्पणी

व्यवहारः=शब्दप्रयोगः। *ननु* तद्विषयकव्यवहारे तद्विषयकज्ञानं कारणम्, इति चिद्व्यवहारे चिद्विषयकं ज्ञानं कारणं वाच्यम्, तच्च विघ्नितम्; अत्यन्ताभेदे विषयविषयिभावासम्भवात्। तथाच चितोऽपि परप्रकाश्यत्वापत्तिः, अत आह—*घटादेरिवेति*। यद्वा—घटादेर्व्यवहारोऽयं घट इत्याकारकः। तत्र घटान्या या घटाकारवृत्त्यवच्छिन्नाऽनावृता चित् सा तादात्म्येन कारणम्, तथा चितो व्यवहारः=अहं ब्रह्मास्मीत्याकारः। तत्र स्वात्मिकाऽनावृता या चित्, सा तादात्म्येन कारणमित्यर्थः। *न चिदन्याधीन इति*॥ स्वान्यचिदधीनो नेत्यर्थः। तेन चिद्व्यवहारेऽज्ञानावरणभङ्गद्वारा चिदन्यवृत्तेः प्रयोजकत्वेऽपि न क्षतिः; स्वान्यचिदधीनव्यवहारविषयत्वस्यैव परप्रकाश्यत्वरूपत्वात्। विषयतासम्बन्धेन व्यवहारे विषयतासम्बन्धेन ज्ञानं कारणम्। ज्ञानं चानावृतचित्, विषयता च तादात्म्यम्, तदिदमाह—*व्यवहारविषयतामात्रे चित्तादात्म्यस्य प्रयोजकत्वादिति*॥ आभासोक्तं दोषं वारयितुं शङ्कते—*नचेति*॥ *चिति तत्तादात्म्यासम्भव इति*॥ अत्यन्ताभेदे तादात्म्यानुपगमादिति भावः। *ननु* एवमपि शुद्धचिति तत्तादात्म्यमसम्भावितमेवेत्याशङ्क्य तदभावेऽपि न क्षतिः; क्वापि कार्ये केवलतदधिकरणे कारणसम्बन्धस्याप्रयोजकत्वात्, सर्वकार्यपूर्वकालोपहित एव कारणसम्बन्धस्य प्रयोजकत्वात्, इत्यभिप्रायेणाह—*कार्यपूर्वकालोपहित इति*॥ *ननु* कालपरिच्छेदो नाम यदि कालिकसम्बन्धेन यत्किञ्चित्कालावृत्तित्वम्, तदा तदभावस्य किञ्चित्कालवृत्तित्वस्यानारोपितस्य भावरूपधर्मस्य स्वानात्मकस्य निर्धर्मके ब्रह्मण्यसम्भवः, यदि कालान्तरावृत्तित्वे सति तत्कालवृत्तित्वम्, तदा तत्र सर्वकालवृत्तित्वपक्षे विशेष्यदलस्याखण्डाभावमात्रसम्पादकतयाऽनतिप्रयोजनकत्वम्। *एतेन*—किञ्चित्कालावच्छिन्नदेशनिष्ठाभावप्रतियोगित्वं किञ्चित्कालावच्छिन्नदेशवृत्तित्वं वा—*परास्तम्*; गौरवात्। यदि कालावच्छिन्नदेशवृत्तित्वम्, तदा व्याप्यवृत्तेरवच्छेदकोपगमे ब्रह्मसाधारणमित्याशङ्क्य, कालपरिच्छेदः किञ्चित्कालनिष्ठनाशप्रतियोगित्वम्, तत्र च कालवृत्तित्वमव्यावर्तकतया परित्यज्याह—*कालपरिच्छेदो नाशप्रतियोगित्वमिति*॥ तच्च ध्वंसस्यापि; "अतोऽन्यदार्तमि"ति श्रुतेः, इति न प्रागभावप्रतियोगित्वघटितान्यतरत्वनिवेशः कृतः। प्रागभावप्रतियोगित्वमेव तु न निवेशितम्; प्रागभावजीवाद्यनादेर्नित्यत्वोपपत्तेः, एवं देशपरिच्छेदो नाम=न दैशिकवृत्तिनियामकसम्बन्धेन देशविशेषावृत्तित्वं वा, तत्सहितदेशविशेषवृत्तित्वं वा, देशविशेषावच्छिन्नकालवृत्तित्वं वा; उक्तयुक्तेः, किन्तु देशे परिच्छेद इति व्युत्पत्तिगम्यः। तत्र परिच्छेदो न नाशः; कालपरिच्छेदेन गतार्थत्वात्, अपितु तद्व्यापकोऽत्यन्ताभावः। देशवृत्तित्वं तु न प्रवेश्यम्, व्यर्थत्वात्, इत्याशयेनाह—*देशपरिच्छेदोऽत्यन्ताभावप्रतियोगित्वमिति*॥ तच्च न ब्रह्मणः; अस्मन्मते वृत्तिनियामकेन भेदाभेदोभयरूपतादात्म्येन तस्य सर्वत्र सत्त्वात्, इति विभुत्वोपपत्तिः। तथा वस्तुपरिच्छेदो न यत्किञ्चिद्वस्तुतादात्म्याभावः, तत्सहितं यत्किञ्चिद्वस्तुतादात्म्यं वा; उक्तयुक्तेः, किन्तु वस्तुनि परिच्छेद इति व्युत्पत्तिलभ्यः। तत्र वस्तुनिष्ठत्वं प्रयोजनाभावाद् न प्रवेश्यम्; परिच्छेदपदार्थश्च प्रतियोग्यभेदविरोध्यन्योन्याभावो भेद इत्याह—*वस्तुपरिच्छेदो भेदप्रतियोगित्वमिति*॥ तच्च न ब्रह्मणि; "सर्वं खल्विदं ब्रह्म" "इदं सर्वं यदयमात्मा" "सदेव सोम्येदमग्र आसीत्" "स एवेदं सर्वमि"ति श्रौतस्य 'घटोऽस्ति भाति प्रियश्चे'ति लौकिकस्य

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—ब्रह्मणो मिथ्यात्वाभावादिस्वरूपस्य सत्यतादिरूपत्वमनुपपन्नम् ; उक्ताभावत्वादिविशिष्टस्य मिथ्यात्वात्, अत एव नोक्ताभावत्वादिविशिष्टतादात्म्योपलक्षितस्वरूपस्य सत्यतादिरूपत्वम् ; तादात्म्यस्यापि स्वोपहित एव सत्त्वेन तदुपलक्षितत्वस्य शुद्धब्रह्मण्यसत्त्वात्, शुद्धे तत्स्वीकारेऽपि प्रपञ्चेऽतिव्याप्तिः ; मिथ्यात्वादेरपि मिथ्यात्वेन प्रपञ्चेऽपि तदभावस्य प्रपञ्चस्वरूपस्य सत्त्वेन तत्तादात्म्योपलक्षितस्वरूपत्वानपायात् ; नहि यदधिष्ठानरूपमधिकरणम्, तदेवाभावस्य स्वरूपम्, नान्यदधिकरणमित्यत्र मानमस्ति ।

## विट्ठलेशीयटिप्पणी

जगति ब्रह्माभेदप्रत्ययस्य सत्त्वेन जगति ब्रह्माभेदसत्त्वेऽपि तस्य ब्रह्मभेदविरोधित्वाभावात् । तादृशभेदश्च घट-पटयोरिव परस्परम्, नतु ब्रह्मणः, इति घटादौ प्रसिद्धस्य भेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्याभावो ब्रह्मणि, इति पूर्णत्वं सिद्धम् । *ननु*एतावता मूले ब्रह्मणि मिथ्यात्वलक्षणातिव्याप्तिराशङ्क्य निर्धर्मकत्वात् परिहृता, तदुपरि सत्यत्वस्य भावरूपत्वे ब्रह्मणस्तद्वत्त्वानुपपत्तिमाशङ्क्य सत्यत्वस्य मिथ्यात्वाभावरूपतयाऽधिकरणीभूतब्रह्मस्वरूपत्वमभ्युपगम्य समाहितम्, तदतिदेशेन स्वप्रकाशत्वादीनां भावरूपत्वासम्भवमाशङ्क्य ब्रह्मस्वरूपाभावमभ्युपगम्य समाहितम्, एतदुपरि तथा भावभूतधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूपतया न काचिदनुपपत्तिरिति ग्रन्थः पुनरुक्तः । नच—भावाभावयोः को विशेषः ? येन निर्धर्मकस्य ब्रह्मणो भाववत्ता न स्वीक्रियते, अभाववत्ता तु स्वीक्रियत इति शङ्कावारणार्थं तद्ग्रन्थसार्थक्यमिति—वाच्यम् ; *ननु* "एवं सत्यत्वमपी"तिशङ्कासमाधानेनापि अधिकरणातिरिक्तेतिग्रन्थेनैव तद्वारणात् । नच निगमनवदुपसंहाररूपतया तत्सार्थक्यम्, अर्थादेव तल्लाभसम्भवेन कण्ठतस्तदभिधानस्य पुनरुक्तप्रायत्वादित्याशङ्क्य सत्यत्वादेर्भावरूपत्वेऽपि ब्रह्मणः सत्यत्वाद्यनुपपत्तिशङ्कया तद्ग्रन्थमवतारयति—*ननु ब्रह्मण इति* ॥ *अनुपपन्नमिति* । अत्यन्ताभेदे धर्म-धर्मिभावासम्भवादिति भावः । *ननु* मिथ्यात्वाभावत्वविशिष्टं सत्यत्वं शुद्धब्रह्मणो धर्म इत्यत आह—*उक्ताभावत्वविशिष्टस्य मिथ्यात्वादिति* ॥ ब्रह्मातिरिक्तवस्तुमात्रस्य मिथ्यात्वात् । अत एव तेन न निर्धर्मकत्वव्याघातः । तथाचोक्तविशिष्टरूपसत्यत्वस्य मिथ्यात्वाद् ब्रह्मणोऽसत्यत्वापत्तिरिति भावः । *अत एव*=धर्म-धर्मिभावासम्भवादेव । *तादात्म्योपलक्षितस्वरूपस्येति* ॥ तदुपलक्षितं यत् स्वरूपं तस्येत्यर्थः । नच—ब्रह्मणः स्वेन धर्म-धर्मिभावासम्भवेन 'शुद्धे तत्स्वीकारेऽपि' इति ग्रन्थासङ्गतिरिति—*वाच्यम्* ; एकस्यैव ब्रह्मणस्तदुपलक्षितत्वेन धर्मत्वम्, स्वरूपतो धर्मित्वमित्याशयात् । यद्वा—तादात्म्योपलक्षितस्य यत् स्वरूपम्=उपलक्षणीभूतनिरुक्ततादात्म्यरूपो धर्मः, तस्येत्यर्थः । *स्वोपहित एवेति* ॥ अनुपहितस्य शुद्धस्य निर्धर्मकत्वादिति भावः । *तदुपलक्षितत्वस्य=उपलक्षणीभूततादृशतादात्म्यस्य । *शुद्धब्रह्मण्यसत्त्वादिति* ॥ अन्यथा शुद्धत्वव्याहतिप्रसङ्गादिति भावः । *ननु* स्वान्यानुपहितब्रह्मवृत्तित्वमेव शुद्धब्रह्मधर्मत्वम्, अत एवाज्ञानस्या"श्रयत्व-विषयत्वभागिनी"ति सिद्धान्तः सङ्गच्छते, निर्विभागा=शुद्धा । अज्ञाननिवर्तकाखण्डाकारवृत्तिस्तत्समानविषयिणी शुद्धविषयिकेति सिद्धान्तश्च सङ्गच्छते ; अन्यथा ज्ञानाज्ञानयोः स्वोपहितविषयकत्वे सिद्धान्तविरोधः स्यात्, अत आह—*शुद्धे तत्स्वीकारेऽपीति* ॥ नच शुद्धत्वव्याघातः ; मिथ्यात्वाभावस्य तत्त्वेन भेदकल्पनेन धर्मत्वेऽपि वस्तुतो ब्रह्मस्वरूपात्यन्ताभेदात् । नचैवं भावरूपधर्मस्य सम्भवति । एवञ्च वस्तुतः स्वातिरिक्तधर्मशून्यत्वरूपं निर्धर्मकत्वमव्याहतमिति भावः । *प्रपञ्चेऽतिव्याप्तिरिति* ॥ मिथ्यात्वाभावरूपसत्यत्वस्येत्यादिः । मिथ्यात्ववति प्रपञ्चे कथं तदभावः ? अत आह—*मिथ्यात्वादेरपीति* ॥ *तत्तादात्म्योपलक्षितस्वरूपत्वेति* ॥ तादात्म्यसम्बन्धेनोक्ताभावत्वविशिष्टरूपोपलक्षणीभूतधर्मवत्त्वेत्यर्थः । *ननु* ब्रह्मणोऽधिष्ठानतया तन्निष्ठोक्ताभावस्यैव तत्स्वरूपत्वम्, नतु प्रपञ्चनिष्ठोक्ताभावस्य ; प्रपञ्चस्वरूपत्वम्, अत आह—*नहीति* ॥ अभावस्याधिकरणमात्रस्वरूपत्वादिति भावः ॥

न्यायामृतम्

ब्रह्ममात्रम् । एवं च ब्रह्म कालत्रयेऽपि सत्, वियदादि रूप्यादि च कदाचिदेव, इति नित्यत्वानित्यत्वाभ्यामेव वैषम्यम्, नतु सत्यत्व-मिथ्यात्वाभ्याम् ।

अद्वैतसिद्धिः

तथाच भावरूपधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूपतया न काऽप्यनुपपत्तिरिति सर्वमवदातम् ॥

तरङ्गिणी

त्वमिति भावः । ब्रह्म-जगतोः सत्यत्वेऽप्यवान्तरवैषम्यमाह—*एवञ्चेति* ॥ ब्रह्मणः कालत्रयेऽपि सत्त्वेन नित्यत्वम्, जगतस्तु स्वकाले कदाचिदेव सत्त्वेनानित्यत्वम्, इति नित्यत्वानित्यत्वाभ्यामेव ब्रह्म-जगतोर्वैषम्यम्,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अथ*—मिथ्यात्वादिविशिष्टाद् भेदः सत्यत्वादिकं वाच्यम्; तथापि मिथ्यात्वादिधर्मस्य ब्रह्मण्येव कल्पितत्वात् कथं तल्लोक्तभेदः ? तत्राह—*तथाचेत्यादि* ॥ *तथाच=सत्यत्वादेरभावरूपत्वे च* ॥ *भावरूपधर्मानाश्रयत्वेऽपि = मिथ्यात्वादिधर्मान् प्रति सम्बन्धविशेषेणानाश्रयत्वेऽपि । *सर्वधर्माभाव-

न्यायामृतसौगन्ध्यम्

इति—वाच्यम्, ब्रह्मणो मिथ्यात्वाभावरूपसत्यत्वस्वरूपत्वे हि तत्र सत्यत्वाभावः स्यादेव, इति श्रुति-

विठ्ठलेशीयटिप्पणी

*मिथ्यात्वविशिष्टाद् भेद इति* ॥ मिथ्यात्ववन्निष्ठतदवच्छिन्नप्रतियोगिताकभेद इत्यर्थः । *ननु* प्रपञ्चनिष्ठमिथ्यात्वस्य प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वस्वरूपस्य मिथ्यात्वे कपालादौ घटाद्यभाववद् घटादौ तादृशप्रतियोगित्वाभावः सिद्धः, सच व्यावहारिकः कपालादौ; घटादौ तादृशप्रतियोगित्वञ्च व्यावहारिकं प्रातिभासिकं वा, तथाच घटादौ तादृशप्रतियोगित्वस्य व्यावहारिकस्य प्रातिभासिकस्य वा सत्त्वेऽपि तदवच्छेदकावच्छेदेन त्रैकालिकतदत्यन्ताभावस्य स्वीकारे तद्विशिष्टभेदसत्त्वे को विरोधः ? इति चेत्, *न* ; यथा अव्याप्यवृत्तिकपिसंयोगादिमति तदभावसत्त्व-तन्नैयत्यासत्त्वयोः प्रतीत्यप्रतीती एव बीजम्, तथा ब्रह्मातिरिक्तप्रपञ्चान्तर्गतनिरुक्तमिथ्यात्वस्यात्यन्ताभावघटितमिथ्यात्वव्यवहारेण तत्प्रतीतिसत्त्वात् तद्वति घटादौ तदभावः स्वीक्रियते, तद्विशिष्टभेदस्तु न स्वीक्रियते; 'घटादिकं न मिथ्या' इति व्यवहाराभावेन तथा प्रतीत्यभावात्, इति नातिव्याप्तिरिति भावः । अत्र यद्यपि ब्रह्मणि निरुक्तमिथ्यात्वं व्यावहारिकं न सम्भवति; तथापि प्रातिभासिकं सम्भवति, इति न तत्र तद्विशिष्टभेदरूपं सत्यत्वमित्याह—*तथापीति* ॥ 'तथाचे'त्यस्याव्यवहितस्वप्रकाशत्वादीनामभावरूपत्वे चेत्यर्थकत्वे सत्यत्वासंग्रहः, इत्यतो व्याचष्टे—*तथाचेति* ॥ *ननु* ब्रह्मणि निरुक्तप्रतियोगित्वरूपमिथ्यात्वादीनां भावरूपाणां कल्पितत्वादाध्यासिकतादात्म्येन सत्त्वात् कथं तदनाश्रयत्वम् ? अतो व्याचष्टे—*भावरूपधर्मानाश्रयत्वेऽपीति* ॥ *सम्बन्धविशेषेण=घटादिवृत्तितानियामकस्वरूपसम्बन्धेन । नच—धर्म्यध्यासस्य धर्माध्यासजनकत्वाद् घटादिप्रपञ्चस्य ब्रह्मणि तादात्म्येनाध्यासात् स्वरूपसम्बन्धेन तद्धर्मप्रतियोगित्वादीनां तेन सम्बन्धेन कथं नाध्यासः ? इति—वाच्यम्; 'ब्रह्म मिथ्ये'ति प्रतीति-व्यवहारयोरभावेन तत्र तेन सम्बन्धेन तदध्यासानङ्गीकारात् । नहि धर्म्यध्यासमूलकधर्माध्यासस्थले सर्वत्र सर्वधर्माणामध्यासनियमः; प्रतीतिनियतत्वादध्यासानाम्, "आरोपे सति निमित्तानुसरणम्, नतु निमित्तमस्तीत्यारोपः" इत्याद्युक्तेः । अत एव जपोपाधिकलौहित्यारोपवद् अन्येषां रसादीनां जपाधर्माणां नारोपः, तादात्म्येन तु मिथ्यात्वादीनामारोपो दुरपह्नवः; "इदं सर्वं यदयमात्मे"त्यादिश्रौतप्रतीतेः । एवञ्च तादृशप्रतियोगित्वरूपमिथ्यात्वादीनां स्वरूपसम्बन्धेन ब्रह्मण्यसत्त्वाद् न तल्लक्षणातिव्याप्तिरिति भावः । मूले ब्रह्मणः सत्यत्वोपपादनाय

### न्यायामृतम्

तथाच—

"स्वरूपेण त्रिकालस्थनिषेधो नास्ति ते मते ।
रूप्यादेस्तात्त्विकत्वेन निषेधस्त्वात्मनोऽपि च ॥"

### तरङ्गिणी

नतु सत्यत्वमिथ्यात्वाभ्यामित्यर्थः । उक्तार्थं संगृह्णाति—*तथाचेति* ॥ *निषेधो रूप्यादेरित्यन्वयः* ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रूपतया = स्वाधिष्ठानसर्वधर्माभावत्वविशिष्टतादात्म्योपलक्षितस्वरूपत्वेन । तथाचाध्यासिकतादात्म्येन ब्रह्मणः प्रतियोगित्वादिरूपमिथ्यात्वादिधर्मवत्त्वेऽपि विशेषणताविशेषादिसम्बन्धेन तद्विशिष्टाद् भेदसम्भवेन तत्समानाधिकरणो यो मिथ्यात्वात्यन्ताभावः, तद्वत्तादात्म्योपलक्षितस्वरूपम्, उक्तभेदवत्तादात्म्योपलक्षितस्वरूपं वा सत्यत्वा-

### सौगन्ध्यविमर्शः

विरोधः । एतेन—मिथ्यात्वाभावत्वविशिष्टस्य मिथ्यात्वेन तद्बोधकश्रुतेरप्रामाण्यापत्तिरपि सौगन्ध्याषादिता—परास्ता ; अभावत्वोपलक्षितस्वरूपस्यैव ब्रह्मत्वाभ्युपगमेनोक्तदोषानवतारात् । अत्र प्रकरणे—अभावत्वोपलक्षितस्यैव ब्रह्मरूपत्वमिति

### विट्ठलेशीयटिप्पणी

सर्वधर्माभावरूपत्वमुक्तम्, तत्र स्वस्य स्वेन सह धर्म-धर्मिभावानुपपत्तिः । एवं सर्वान्तःपातिसत्यत्वरूपधर्माभावत्वापत्तिश्चेत्यतो व्याचष्टे—*स्वाधिष्ठानकेति* ॥ स्वम्=ब्रह्म, स्वाधिकरणकं प्रपञ्चीयसर्वधर्माभावत्वविशिष्टं यत् स्वम्, तत्तादात्म्योपलक्षितस्वरूपत्वेन । यद्वा—प्रपञ्चनिष्ठमिथ्यात्वस्य मिथ्यात्वेन प्रपञ्चस्यापि स्वनिष्ठमिथ्यात्वाभावरूपतया ब्रह्मवत् सत्यत्वापत्तिरित्याशङ्क्य, अभावस्य नाधिकरणमात्रस्वरूपत्वम्, अपितु स्वप्रतियोगिरूपाध्यस्ताधिष्ठानरूपाधिकरणस्वरूपत्वम्, स्वाध्यासाधिष्ठानरूपाधिकरणस्वरूपत्वं वा स्वीक्रियते, प्रपञ्चस्तु स्वनिष्ठमिथ्यात्वस्य तदभावस्य च नाधिष्ठानम् ; स्वाधिकसत्ताकस्वाधिकरणस्यैवाधिष्ठानपदार्थत्वात्, प्रपञ्चस्य तु तन्न ; मिथ्यात्वतदभावयोर्व्यावहारिकत्वेन तुल्यसत्ताकत्वात्, इति प्रपञ्चस्य तदभावरूपत्वाभावाद् न सत्यत्वापत्तिः । ब्रह्मणि तु पारमार्थिके प्रपञ्चतन्मिथ्यात्वादि तादात्म्येनाध्यस्तं व्यावहारिकम्, इति ब्रह्मणो मिथ्यात्व-तदभावाधिष्ठानत्वाद् मिथ्यात्वाभावाधिकरणत्वाच्च तदभावरूपता, इति सत्यतोपपत्तिरित्यभिप्रायेण व्याचष्टे—*स्वाधिष्ठानकेति* ॥ *स्वाधिष्ठानकाः=स्वन्यूनसत्ताका ये स्वाध्यस्ताः सर्वे धर्माः, तदभावत्वविशिष्टेत्यादिरर्थः । युक्तं चैतत् ; अध्यस्तस्याधिष्ठानमात्रत्वात् । अत एव सर्वधर्मेत्युक्तम्, नतु मिथ्यात्वादिधर्मेति ; ब्रह्मणः सर्वधर्माधिष्ठानतया सर्वधर्माभावरूपत्वसम्भवात् । *ननु* एवमपि सत्यत्वं किं मिथ्यात्वाभावः ? मिथ्यात्वविशिष्टभेदो वा ? नाद्यः ; प्रपञ्चेऽतिव्याप्तेः । नान्त्यः ; ब्रह्मणि तादात्म्येनोक्तप्रतियोगित्वरूपमिथ्यात्वस्याध्यासेन तद्विशिष्टभेदासम्भवात्, इत्यत आह—*तथाचेति* ॥ *धर्मवत्त्वेऽपीति* ॥ धर्मवत्त्वेन तद्विशिष्टभेदासम्भवेऽपीत्यर्थः । *विशेषणताविशेषेति* ॥ प्रपञ्चवृत्तितावच्छेदकीभूतमिथ्यापदार्थतावच्छेदकतावच्छेदकीभूतस्वरूपसम्बन्धेनेत्यर्थः । *तत्समानाधिकरणेति* ॥ निरुक्तभेदसमानाधिकरणेत्यर्थः । इदं प्रपञ्चेऽतिव्याप्तिवारणाय । *मिथ्यात्वात्यन्ताभाव इति* ॥ मिथ्यात्वाभावरूपसत्यत्वमित्यर्थः । इदं च मूलोपक्रमसंरक्षणाय । धर्मिभेदाच्च न वैयर्थ्यम् । *तद्वत्तादात्म्येति* ॥ अधिकरणातिरिक्ताभावाभिप्रायेणेदम् । अधिकरणरूपाभावपक्षे तु तत्त्वविशिष्टतादात्म्येति बोध्यम् । लाघवात् स्वातन्त्र्येणाह—*उक्तभेदवत्तादात्म्योपलक्षितस्वरूपमिति* ॥ उक्तभेदत्वविशिष्टतादात्म्योपलक्षितस्वरूपं वेति बोध्यम् । अत्रोपलक्षितस्य स्वरूपमिति विग्रह उपलक्षणीभूतं मिथ्यात्ववद्भेदवत्त्वे सति मिथ्यात्वाभावत्वविशिष्ट

न्यायामृतकण्टकोद्धारः

उक्तमर्थं कारिकया संगृह्णाति—*तथाचेति* ॥

---

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

दीति भावः। *एतेन*—मिथ्यात्वाद्यभावतादात्म्यवति ब्रह्मणि भावानाश्रयत्वोक्तिर्न युक्ता—*इत्यपास्तम्* ॥

---

न्यायामृतसौगन्ध्यम्

विरोधस्तदवस्थ एव। किञ्चोक्ताभावत्वादिविशिष्टस्य मिथ्यात्वेन तद्बोधकश्रुतेरप्रामाण्यं स्यात् ॥

---

सौगन्ध्यविमर्शः

लघुचन्द्रिकोक्तमक्षिनिमीलनेनापरामृश्यैव दूषणं पुनः पुनः सौगन्ध्येनानूक्त इति "न हि रुतमनुरौति ग्रामसिंहस्य सिंहः" इति नीतिरेवावलम्बनीयाऽस्माभिरपि। अधिकं सिद्धिव्याख्यातोऽधिगन्तव्यम्।

---

सिद्धिव्याख्या

सद्रा सन्मात्रेति* ॥ उक्तदोषाणामसंभवादिति भावः ॥ *मयैवं सतीत्यादि* स्पष्टम् ॥ इति ॥

---

विट्ठलेशीयटिप्पणी

मिथ्यात्वाभावविशिष्टं वा यद् ब्रह्म, तदेव तादात्म्येन सत्यपदार्थतावच्छेदकं सत्यत्वं शुद्धस्य ब्रह्मणो धर्मः। उपलक्षितं स्वरूपमिति विग्रह उक्तभेदद्वये सति मिथ्यात्वाभावत्वविशिष्टं मिथ्यात्वाभावविशिष्टं वा यद् ब्रह्म, तत्तादात्म्योपलक्षितं शुद्धमेव ब्रह्मणो धर्मः। एवं स्वरूपसम्बन्धेन मिथ्यात्वबद्भेदत्वविशिष्टम्, उक्तभेदविशिष्टं वा यत्; तत् तादात्म्योपलक्षितस्वरूपमप्युक्तरीत्या द्विविधं बोध्यम्। उपलक्षितत्वेन धर्मत्वम्, स्वरूपतो धर्मित्वमित्युक्तम्। *एतेनेति* ॥ भावरूपधर्मानाश्रयत्वपदस्य मिथ्यात्वादिधर्मविशेषाणां स्वरूपसम्बन्धावच्छिन्नाश्रयत्वाभावार्थकतया व्याख्यानेनेत्यर्थः। *तादात्म्यवति=भेदसमानाधिकरणाखण्डाभावरूपधर्मवति। *भावाना-श्रयत्वेति* ॥ भावसामान्यस्य सम्बन्धसामान्यावच्छिन्नाश्रयत्वाभावेत्यर्थः। *अपास्तमिति* ॥ निरुक्तप्रतियोगित्वरूपमिथ्यात्वादीनां स्वरूपसम्बन्धाश्रयत्वाभावस्योक्ततादात्म्यवत्यपि ब्रह्मण्यव्याहतत्वादिति भावः। *अत्रेदं बोध्यम्*—निरुक्ताभावत्वोपलक्षितस्वरूपं निरुक्ताभावोपलक्षितस्वरूपं वा सत्यत्वं सम्भवति ; तद्धर्मविशिष्टतादात्म्य-तद्धर्मयोः समनैयत्यादिति कृतबुद्धयो विदाङ्कुर्वन्तु ॥

---

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः
न्यायामृताद्वैतसिद्धयोः द्वितीयमिथ्यात्वविचारः ॥

---

# अथ तृतीयमिथ्यात्वविचारः

न्यायामृतम्

नापि ज्ञानत्वेन ज्ञाननिवर्त्यत्वमिति तृतीयः ; अतीतघटादावव्याप्तेः, शुक्तिज्ञानेन रूप्यं नष्ट-

अद्वैतसिद्धिः

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् । *ननु*—उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने अतिव्याप्तिः, मुद्गर-

तरङ्गिणी

*अतीतेति* ॥ अतीतस्य ज्ञानेन विनैव निवृत्तत्वादित्यर्थः ॥ *शुक्तिज्ञानेनेति* ॥ तथाच

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

"विद्वान् नाम-रूपाद्विमुक्तः" इत्यादिश्रुत्यर्थे विवदमानं प्रति साध्यान्तरमाह—*ज्ञाननिवर्त्यत्वं वेति* ॥ *अतिव्याप्तिः = सिद्धसाधनम् । [ उत्तरज्ञाननिवर्त्यताया मिथ्यात्वरूपत्वाभावाद् मिथ्यात्वलक्षणस्य तस्यामतिव्याप्तिः, मिथ्यालक्षणस्य तु न सा ; तदाश्रयश्च लक्ष्यमेव । क ]

न्यायामृतसौगन्ध्यम्

नापि ज्ञाननिवर्त्यत्वम् ; उत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तेः, मुद्गरपातादिनिवर्त्यघटादावव्याप्तेश्च,

सिद्धिव्याख्या

*ज्ञानेति* ॥ किं ज्ञाननिवर्त्यत्वमात्रम् ? उत ज्ञानत्वेन तन्निवर्त्यत्वम् ? अथवा ज्ञानत्वव्याप्यधर्मेण तन्निवर्त्यत्वमित्यभिप्रायेण शङ्कते—*नन्विति* ॥ *आद्ये* दोषमाह—*उत्तरेति* ॥ तस्य साध्यनिर्वचनरूपत्वे तदंशे सिद्धसाधनञ्चेत्यपि बोध्यम् । दोषान्तरमाह—*मुद्गरेति* ॥ तस्य साध्यनिर्वचनरूपत्वे तदंशे बाधोऽपि बोध्यः । इदमुपलक्षणम्—'शुक्तिज्ञानेन रूप्यं नष्टमि'ति कदाऽप्यननुभवेन तत्राव्याप्तिः । साध्यनिर्वचनरूपत्वे तद्विकल्पो

विट्ठलेशीयटिप्पणी

श्रीपाण्डुरङ्गदेवस्य यो भवेत् सम्मुखो नरः । प्रत्यङ्मुखं भवेत् तस्य स्वेष्टमेवावधार्यताम् ॥

मूले "किमिदं मिथ्यात्वं साध्यते" इति प्रश्नोत्तरे साध्यतया मिथ्यात्वं निरुच्यते, न तु लक्षणविधया । तथाच "ज्ञाननिवर्त्यत्वं वा मिथ्यात्वमि"त्यनेन तत्साध्यकानुमानं विवक्षितम् । तत्र चोत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तिकथनमसङ्गतम् ; अतिव्याप्तेर्लक्षणदोषस्यानुमानेऽनुद्भावनीयत्वात् । नच—'मिथ्यात्वमि'त्यस्य मिथ्यापदार्थतावच्छेदकम्, इत्यर्थाद् 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमि'त्युक्तेः, पदार्थतावच्छेदकनिरूपणस्य लक्षणनिरूपणतया प्रकृतेऽतिव्याप्त्युद्भावनमुचितम्, अत एव पूर्वं मिथ्यात्वस्य ब्रह्मण्यतिव्याप्तिमाशङ्क्य परिहृतमिति—वाच्यम् ; तथापि उत्तरज्ञाननिवर्त्यपूर्वज्ञानस्य वृत्तिरूपस्य तदवच्छिन्नचैतन्यरूपस्य वा मिथ्याभूतस्य लक्ष्यत्वेनातिव्याप्तिकथनासङ्गतिः, अतो व्याचष्टे—*अतिव्याप्तिरिति* ॥ *सिद्धसाधनमिति* ॥ पक्षतावच्छेदकसामानाधिकरण्येन सामान्यानुमाने विशेषानुमाने चेत्यादिः । यथाश्रुतमपि कथञ्चित् सङ्गमयति—*उत्तरज्ञाननिवर्त्यताया इति* ॥ *मिथ्यात्वलक्षणस्येति* ॥ तस्यापि प्रकृते विवक्षितत्वादिति भावः । नच—पूर्वज्ञाने तत्कथनासङ्गतिरेवेति—वाच्यम् ; उत्तरज्ञाननिवर्त्यताविशिष्टपूर्वज्ञानेऽतिव्याप्त्युक्तेः *सविशेषणे हीति* न्यायेन विशेषणीभूतोत्तरज्ञाननिवर्त्यत्वे तदुपसङ्क्रमात् । तर्हि कुतोऽन्यथाव्याख्यानम् ? इति चेत् ; तत्राह—*मिथ्यालक्षणस्य तु न सेति* ॥ सा=अतिव्याप्तिः ॥ सम्भवतीति शेषः । मिथ्यात्वलक्षणस्यैवात्र प्राधान्येन विवक्षितत्वात्, मिथ्यात्वलक्षणस्य विवक्षितत्वेऽपि तदतिव्याप्तेः 'सविशेषणे ही'ति न्यायेनोत्तरज्ञाननिवर्त्यत्वेऽन्वये क्लिष्टत्वापत्तेश्च 'सिद्धसाधनमि'ति व्याख्यानमुदक्षरमपि ऋजुभावमावहतीति भावः । *तदाश्रयः=ज्ञाननिवर्त्यत्वाश्रयः ।

न्यायामृतम्

मिति कदाप्यननुभवेन तत्राप्यव्याप्तेश्च । 'एतावन्तं कालं शुक्त्यज्ञानमासीत्' 'भ्रम आसीदि'त्यनु-

अद्वैतसिद्धिः

पातादिनिवर्त्ये च घटादावव्याप्तिः, ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्ययं दोषः, अधिष्ठानसाक्षात्कार-

तरङ्गिणी

दृष्टान्तः साध्यविकल इत्यर्थः ॥ *एतावन्तमिति* ॥ ज्ञानत्वेन ज्ञाननिवर्त्यत्वं भ्रमाज्ञानादिवत् सत्यत्वेऽपि

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ज्ञानत्वेन ज्ञाननिवर्त्यत्वेति* ॥ ज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यतावन्नाशप्रतियोगित्वेत्यर्थः । *अयम् = अव्याप्तिरूपः । प्रपञ्चनाशं प्रति ब्रह्मज्ञानस्य न कारणता ; चरमतत्त्वज्ञानजन्यनाशस्याना-

न्यायामृतसौगन्ध्यम्

नत्र ज्ञानत्वेन ज्ञाननिवर्त्यत्वं तत् ; अधिष्ठानसाक्षात्कारत्वेन निवर्त्यशुक्तिरजतादौ ज्ञानत्वेन ज्ञाननिवर्त्य-

सिद्धिव्याख्या

दृष्टान्तविकल इत्यपि बोध्यम् । *द्वितीयं पक्षमाशङ्क्य तत्र दोषमाह—*ज्ञानत्वेति* ॥ *अयमिति* ॥ 'एतावन्तं कालं शुक्त्यज्ञानमासीत्' 'भ्रम आसीत्' इत्यनुभवेन शुक्तिवत् सत्येऽज्ञान-भ्रमादौ 'शुक्तिज्ञानेन तदज्ञानं नष्ट-मि'त्यनुभवेन ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य सत्त्वेन तत्रातिव्याप्त्याख्यो दोष इत्यर्थः । यदि च साध्यनिर्वचन-रूपत्वाद् नायं दोषः, तदाऽर्थान्तरम् ; ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य भ्रमाज्ञानादाविव सत्यत्वेऽपि प्रपञ्चे संभवादिति ध्येयम् । दोषान्तरमाह—*अधिष्ठानेति* ॥ इदमुपलक्षणम्—एवं सति लक्षणस्यासंभवोऽपि द्रष्टव्यः । *तृतीय-

विट्ठलेशीयटिप्पणी

*ननु* ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायां नेयमतिव्याप्तिः ; आत्मविशेषगुणानामुत्तरोत्पन्नगुणनाश्यत्वात्, इच्छादि-साधारण्यानुरोधेन गुणत्वनिवेशात् पूर्वज्ञानस्य ज्ञानत्वेनोत्तरज्ञाननिवर्त्यत्वाभावादित्यत आह—मूले *मुद्गरपातादि-निवर्त्य इति* ॥ ब्रह्मज्ञानं विनैव मुद्गरपातादिजन्यनाशप्रतियोगिनीत्यर्थः । घटादावव्याप्तिर्लक्षणे, अनुमाने तु बाधो बोध्यः । अत्र ज्ञाननिवर्त्यत्वं स्वाधिष्ठानतत्त्वज्ञानजन्यनाशप्रतियोगित्वम् । तत्र च 'ज्ञानत्वेने'त्यस्य न तादृशप्रतियोगितारूपनिवर्त्यत्वेऽन्वयः ; अविद्या-तत्कार्यवियदादिनिष्ठप्रतियोगित्वस्य व्यधिकरणज्ञानत्वानवच्छिन्न-त्वात्, ज्ञाननिष्ठस्यापि तस्य तदनवच्छिन्नत्वात्, तद्व्यक्तित्वस्यैव ध्वंसप्रतियोगितावच्छेदकत्वात्, अतः स्वाधिष्ठान-ज्ञाननिष्ठजनकतायां तदन्वयः, इत्याशयेन व्याचष्टे टीकायाम्—*ज्ञानत्वेन ज्ञाननिवर्त्यत्वेतीति* ॥ 'अयं दोषः' इत्य-स्यातिव्याप्त्यव्याप्तिरूपोभयविधदोषपरत्वेऽसङ्गतिः ; अतिव्याप्तेरुक्तविवक्षया परिहारात्, अतो व्याचष्टे—अयमव्याप्तिरूप इति* ॥ न्यूनतापरिहाराय साध्याप्रसिद्धिं वक्तुमाह—*प्रपञ्चनाशं प्रतीति* ॥ *नाशस्य=अविद्यादिसंस्कारनाशस्य ॥ *अनाशापत्त्येति* ॥ नच—उक्तसंस्कारनाशोत्पत्तिक्षणे चरमतत्त्वज्ञानस्य सत्त्वात् तेन तन्नाश इति—वाच्यम् ; तथा सति तस्य क्षणिकत्वापत्त्याऽपसिद्धान्तात्, तद्द्वितीयक्षणे च चरमतत्त्वज्ञानस्य स्वेनैव नाशात् । सिद्धान्तानुरोधेन तस्योत्पत्तिक्षणावच्छिन्नस्य स्वनाशकत्वानङ्गीकारात्, तत्त्वज्ञानान्तराभावाद् उक्तसंस्कारनाशस्य नाशो न स्यात् । चरमतत्त्वज्ञानजन्यनाशपदेन चरमतत्त्वज्ञाननाशस्यापि ग्रहणात् तस्य नाशो न स्यादिति भावः । नच—चरमतत्त्वज्ञानेन स्वद्वितीयक्षणेऽज्ञानसंस्कारादिनाशः, तेन स्वद्वितीयक्षणे तत्त्वज्ञाननाशः, तेन स्वद्वितीयक्षणे संस्कारनाशनाशः, तेन स्वद्वितीयक्षणे तत्त्वज्ञाननाशनाशः, एवं क्रमेण सर्वनाश उपपद्यत इति—वाच्यम् ; एवं सति तत्त्वज्ञानस्य तादृशनाशपरम्परानाशकत्वाभावेन व्यभिचारात्, तत्त्वज्ञानस्य प्रपञ्चनाशकारणता नास्तीत्युक्तौ बाधकाभावात्, अप्रामाणिकानन्तनाशकल्पने गौरवाच्च । अत्र श्रुतिविरोधमप्याह—*विद्वानिति* ॥ *अत्रेदं बोध्यम्*—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इति श्रुतेस्तत्त्वसाक्षात्कारस्य स्थूल-सूक्ष्मदेहेन्द्रियतादात्म्यसंस्काररूपहृदयग्रन्थिनाशकत्वं सञ्चित-क्रियमाणकर्म-

### न्यायामृतम्

अबेन शुक्तिवत् सत्येऽज्ञान-प्रमादौ 'शुक्तिज्ञानेन तदज्ञानं नष्टमि'त्यनुभवेन ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य सत्त्वेनातिव्याप्तेश्च । अपरोक्षाध्यासं प्रति ज्ञानस्यापरोक्षतया निवर्तकत्वेन ज्ञानत्वेनानिवर्तकत्वाच्च,

### तरङ्गिणी

प्रपञ्चस्योपपन्नम्, अतोऽर्थान्तरमिति भावः ॥ *अपरोक्षेति* ॥ तथाचासम्भव इत्यर्थः ॥ *ज्ञानत्व-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञापत्त्या "विद्वान् नाम-रूपाद्विमुक्तः" इत्यादिश्रुतिविरोधापत्तेः, तस्य ज्ञानानिवर्त्यत्वात्, सत्यत्वापत्तेः, "अतोऽन्यदार्तमि"त्यादिश्रुतिबाधाच्च । तथाच शुक्तिरूप्यादावप्युक्तज्ञाननाश्यत्वे मानाभावात् साध्याप्रसिद्धि-

### न्यायामृतसौगन्ध्यम्

त्वाभावात् साध्यविकलता ॥ ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां स्मृतित्वेन ज्ञाननिवर्त्ये

### विट्ठलेशीयटिप्पणी

नाशकत्वं च, प्रारब्धनाशकत्वं तु न ; सम्प्रदायोच्छेदापत्तेः, किन्तु भोगादेव तन्नाशः ; "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥" इति श्रुतेः । लिङ्गदेहनाशस्तु स्वारंभककर्म-स्वोपादानाविद्यानाशात् । अत एव हृदय-ग्रन्थिपदं स्थूलदेहपरं प्रसिद्धम् । *ननु* "विद्वान्नाम-रूपाद्विमुक्तः" इत्यत्र नाम-रूपोभयात्मकभावरूपप्रपञ्चोच्छेद एव ज्ञानप्रयोज्यत्वेन प्रतिपाद्यते, चरमतत्त्वज्ञानजन्योक्तनाशस्तु नाममात्रम्, न तस्य किञ्चिद्रूपमस्ति, इत्युक्त-नाशसत्त्वेऽपि नोक्तश्रुतिविरोध इत्यत आह—*तस्येति* ॥ उक्तनाशस्येत्यर्थः । *ज्ञानानिवर्त्यत्वापत्तेरिति* ॥ तथाच ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्याभावाद् लक्षणेऽव्याप्तिः, अनुमाने बाधः, तस्य सत्त्वापत्तिश्चेति भावः । *ननु* अविनाशिप्रपञ्च एव मिथ्यात्वस्य लक्षणे लक्ष्यः, अनुमाने च पक्षः, विनाशिप्रपञ्चस्य तु मिथ्यात्वासिद्धावपि न क्षतिः, विनाशित्वादेव ततो वैराग्यम्, आत्मनि नित्ये वैलक्षण्यं च सिद्ध्यति, उक्तविनाशस्तु विनाशी ; अतस्तस्य ज्ञाननिवर्त्यत्वे का क्षतिः ? नच सत्यत्वापत्तिः ; तावताऽपि मुक्तिदशायामद्वैतसिद्धेः, प्रपञ्चदशायामपि पारमार्थिकाद्वैत-वद् नित्याद्वैतसिद्धेः, इत्यत आह—*"अतोऽन्यदार्तमि"ति* ॥ *श्रुतिबाधाच्चेति* ॥ अविनाशिप्रपञ्चाङ्गीकार इत्यादिः । तथाच ब्रह्मान्यस्य सर्वस्यापि प्रपञ्चस्य विनाशित्वेनेतरस्येवोक्तविनाशस्याप्युक्तलक्ष्यता-पक्षतयोरावश्यकत्वेन मिथ्यात्व-सिद्धिरावश्यिका ; अन्यथाऽव्याप्ति-बाधयोरापत्तेः, सत्यत्वापत्तेश्च ; सर्वदा पारमार्थिकाद्वैतसिद्धान्तविरोधापत्तेश्चेति भावः । एतावत्पर्यवसितां साध्याप्रसिद्धिमाह—*तथाचेति* ॥ प्रपञ्चनाशं प्रति ज्ञानस्याकारणत्वे चेत्यर्थः । *साध्याप्रसिद्धिरिति* ॥ नच—ज्ञानजन्यनाशप्रतियोगित्वरूपसाध्यस्याज्ञाने प्रसिद्धेः कथमप्रसिद्धिः ? इति—वाच्यम् ; शुक्तिरूप्यादौ दृष्टान्ते साध्यवैकल्यस्यैव साध्याप्रसिद्धिपदेन विवक्षितत्वात् । *ननु* शुक्तिरूप्यस्य शुक्तिज्ञानजन्यशुक्त्यज्ञाननाशेन नाशात् शुक्तिज्ञानप्रयोज्यनाशप्रतियोगित्वाद् ज्ञाननिवर्त्यपदेन ज्ञानप्रयोज्यनाश-प्रतियोगित्वस्य विवक्षणाद् न तत्र साध्याप्रसिद्धिरिति --चेत्, *न* ; अज्ञाननाशजन्यनाशस्याविनाशित्वे"ऽतोऽन्य-दार्तमि"ति श्रुतिविरोधः । नचान्यपदेन भावरूपमन्यदेव ग्राह्यम् ; सङ्कोचे मानाभावात्, अभावाविनाशित्वे"विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुतिविरोधः ; भावमात्रविमुक्तिविषयकत्वेन सङ्कोचे मानाभावात्, उक्तरीत्याऽनन्त-नाश-तत्कार्य-कारणभावकल्पनागौरवात्, मानाभावाच्चेति भावः । *ननु* मुद्गरपातादिना घटादेः स्थूलरूपेणैव नाशः, नतु कारणात्मना ; तेनापि रूपेण नाशस्तु ज्ञानेनैव, तच्च कारणमज्ञानम् ; साधारण्यात् । ज्ञानं चाधिष्ठानतत्त्वसाक्षात्काररूपम् । एवञ्चाधिष्ठानतत्त्वसाक्षात्कारजन्यनाशप्रतियोगित्व-स्वोपादानान्यतरकत्वमेव ज्ञान-निवर्त्यत्वमित्यनेन विवक्षितम्, इति न घटादिप्रपञ्चे मुद्गरपातादिनिवर्त्येऽव्याप्तिरित्यत आह—*मूले—अधिष्ठानसाक्षात्कारत्वेनेति* ॥ *निवर्त्यें=स्वकारणाज्ञाननिवृत्तिनिवर्त्ये । 'रजतादी'त्यादिपदेन तदुपादानाज्ञानम् ।

न्यायामृतम्

ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वस्य चेच्छाद्यनिवर्त्ये स्मृतित्वेन स्मृतिनिवर्त्ये संस्कारादावतिव्याप्तेः,

अद्वैतसिद्धिः

त्वेन निवर्त्ये शुक्तिरजतादौ च ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् साध्यविकलता, ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां ज्ञानत्वव्याप्येन स्मृतित्वेन ज्ञाननिवर्त्ये संस्कारेऽतिव्याप्तिरिति—चेत्, *न* ;

तरङ्गिणी

व्याप्येति* ॥ तथाचापरोक्षत्वेन ज्ञाननिवर्त्यत्वेऽप्युक्तमिथ्यात्वमस्त्येवेत्यर्थः ॥ *इच्छाद्यनिवर्त्ये इति* ॥ तथाच संस्कारादेरिव प्रपञ्चस्य सत्यत्वेऽप्युपपत्तिरित्यर्थः ॥

सिद्धिव्याख्या

माशङ्क्य निराकरोति—*ज्ञानत्वव्याप्येति* ॥ 'विवक्षायामि'त्यनन्तरमपरोक्षत्वेन ज्ञाननिवर्त्येऽप्युक्तमिथ्यात्वस्य सत्त्वेऽपीति शेषः। *संस्कार इति* ॥ नच—संस्कारादेर्न स्मृतित्वेन स्मृतिनिवर्त्यता, किंतु योग्योत्तरात्मविशेषगुणत्वेन, अन्यथा इच्छादेः संस्काराद्यनिवर्तकत्वापत्तेरिति—वाच्यम् ; एवमपीच्छाद्यनिवर्त्यस्मृतिमात्रनिवर्त्ये संस्कारेऽतिव्याप्त्यवारणात्, इच्छानिवर्त्यसंस्कारस्थले संस्कारस्येव तन्निवर्त्यसंस्कारस्थलेऽपि तस्य सत्त्वावश्यंभावेन तत्रातिव्याप्तितादवस्थ्यम्। नच—अनुभवत्वव्याप्यधर्मेण तन्निवर्त्यत्वं विवक्षितम्, स्मृतौ चानुभवत्वव्याप्यधर्मस्याभावाद् न तन्निवर्त्यसंस्कारातिव्याप्तिरिति—वाच्यम् ; यत्र प्रमोत्तरमुत्पन्नस्य भ्रमस्य प्रमाजन्यस्मृतिपर्यन्तं बाधो न जातः, प्रथमप्रमाजनितस्मृतिविषयबाधश्च दृश्यते, तत्राव्याप्तेः। नच—प्रमोत्तरप्रमानिवर्त्यत्वं विवक्षितम् ; प्रमात्वं च यथार्थज्ञानत्वमेव, नत्वनधिगतत्वगर्भम्, येन यथार्थस्मृतिविषयेऽव्याप्तितादवस्थ्यं स्यादिति—वाच्यम् ; तत्त्वज्ञानसंस्कारनिवर्त्याज्ञानसंस्कारेऽव्याप्तेः। नच—अज्ञानसंस्कारस्यापि तत्त्वज्ञाननिवर्त्यत्वमेव स्वीक्रियते, अतो न तत्राव्याप्तिरिति—वाच्यम् ; अज्ञानस्येवाज्ञानसंस्कारस्याज्ञानत्वाभावेन ज्ञाननिवर्त्यत्वानुपपत्तेः, ज्ञानाज्ञानयोरेव निवर्त्य-निवर्तकभावात्। नच—अज्ञानसंस्कारस्याप्यज्ञानोपादानतया तत्त्वज्ञानेन स्वोपादानाज्ञाननिवृत्तौ स्वस्यापि तद्द्वारा तन्निवर्त्यत्वमविकलमिति—वाच्यम् ; अज्ञानसंस्कारनिवृत्तौ कर्तव्यायामज्ञाननिवृत्तेस्तत्त्वज्ञानत्वे मानाभावात्। नच—स्वोपादानाज्ञाननिवर्तकज्ञाननिवर्त्यत्वं विवक्षितम्, अतो न संस्कारादावव्याप्तिरिति—वाच्यम् ; अज्ञानादेरनादेर्योऽध्यासस्तत्र चोपादानासंभवेनाव्याप्तेः, लाघवेनाज्ञानोपादानकत्वे तस्यैव लक्षणत्वापाताच्चेति भावः। प्रथमपक्षमादाय तत्रोक्तदोषोद्धारं प्रतिजानीते—*नेति* ॥

विट्ठलेशीयटिप्पणी

*ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावादिति* ॥ शुक्त्याद्यधिष्ठानपरोक्षेण शुक्त्यज्ञान-रजतयोरनिवृत्तेरिति भावः। *ननु* निवर्तकतायामज्ञानत्वव्याप्यधर्मावच्छिन्नत्वविवक्षणाद् नायं दोषः, इत्यत आह—*ज्ञानत्वव्याप्यधर्मेणेति* ॥

*स्मृतित्वेनेति* ॥ अनुभवाहितसंस्कारस्य प्रथमस्मृत्या नाशः, तया च संस्कारान्तरं जन्यते, चरमस्मृतेर्वा संस्कारनाश इति तान्त्रिकैरुपगमादिति भावः। *अतिव्याप्तिरिति* ॥ संस्कारनिष्ठस्मृतिनिवर्त्यत्वे मिथ्यात्वलक्षणातिव्याप्तिः, अनुमाने तु स्मृतिनिवर्त्यसंस्कारे सिद्धसाधनमित्यर्थः ॥ *ननु* साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वविवक्षण उक्तसाध्यवैकल्यातिव्याप्त्योर्नावकाशः। एवञ्च स्वाधिष्ठानज्ञाननिष्ठसाक्षात्कारत्वावच्छिन्नजनकताकनाशप्रतियोगित्व-स्वोपादानान्यतरकत्वं ज्ञाननिवर्त्यत्वम्। अज्ञानस्य मिथ्यात्वाय स्वनिवेशः, तदुपादानकरजतादेस्तन्निर्वाहाय स्वोपादानस्य निवेशः ; तेन मुद्गरनाश्यघटादावपि नाव्याप्तिः। नच—अज्ञानोपादानाप्रसिद्ध्या तत्राव्याप्तिरिति—वाच्यम् ; ब्रह्मरूपविवर्तोपादानप्रसिद्धेरिति—चेत्, *मैवम्* ; अज्ञानचित्सम्बन्धस्यासङ्ग्रहात्। नच—अज्ञानमेव तदुपादानमिति—वाच्यम् ; तस्यानादित्वेनाज्ञानपरिणामत्वस्य चिन्निगमनाविरहेण वा तदध्यस्तत्वस्य वाऽभावात्, उभयोरपि ब्रह्मण्येवाध्यासात्। नच—उपादानोत्तरं तत्स्थाने वा स्वप्रयोजकं निवेश्यम्, अज्ञानसम्बन्धस्यानादित्वेऽप्यज्ञानप्रयोज्यत्वस्य क्षेमसाधारणस्य प्रागभाववदुपगमादिति—वाच्यम् ; अज्ञानस्य प्रयोजकाप्रसिद्ध्या सङ्ग्रहानुपपत्तेः। *ननु* अज्ञानस्येव तत्सम्बन्धस्यापि ब्रह्मैव

न्यायामृतम्

अनुभवत्वव्याप्यधर्मेण तन्निवर्त्यत्वस्य च यथार्थस्मृतिनिवर्त्यायथार्थस्मृतिविषयेऽव्याप्तेः, भ्रमोत्तरप्रमानिवर्त्यत्वस्य च तत्त्वज्ञानसंस्कारनिवर्त्याज्ञानसंस्कारेऽव्याप्तेः, स्वोपादानाज्ञाननिवर्तकज्ञाननिवर्त्यत्वस्य चानाद्यध्यासेऽभावात्, लाघवेनाज्ञानोपादानकत्वस्यैव लक्षणत्वापाताच्च। तथाच—

"विज्ञाननाश्यता मिथ्यारूप्यादौ नानुभूयते।
किं त्वधिष्ठानवत् सत्ये तदज्ञानेऽनुभूयते॥"

अद्वैतसिद्धिः

ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम्।

तरङ्गिणी

*अनुभवत्वेति* ॥ स्मृतावनुभवत्वव्याप्यधर्मस्याभावादित्यर्थः ॥ *भ्रमोत्तरप्रमेति* ॥ अत्र प्रमात्वं यथार्थज्ञानत्वमात्रम्, नत्वनुभवत्वगर्भम्। तेन यथार्थस्मृतिनिवर्त्येऽयथार्थस्मृतिविषये नाव्याप्तिः ॥ *अज्ञानसंस्कार इति* ॥ सर्वपदार्थानां संस्काररूपेण विद्यमानत्वस्य परैरङ्गीकृतत्वादज्ञानस्यापि संस्कारोऽस्ति। स चाज्ञाने निवृत्तेऽपि जीवन्मुक्त्यवस्थायां भिक्षाटनादिप्रवृत्तिहेतुरनुवर्तमानस्तत्त्वज्ञानसंस्कारेण निवर्तते; अतस्तत्राव्याप्तिरित्यर्थः॥ *स्वोपादानेति* ॥ अज्ञानादेरनादेर्योऽध्यासः, तत्राप्युपादानासम्भवादित्यर्थः ॥ *लाघवेनेति* ॥ अज्ञानस्य स्वं प्रत्युपादानत्वे स्वस्याज्ञानोपादानकत्वं फलितम्, तदेव लक्षणमस्त्वित्यर्थः। *संगृह्णाति—विज्ञानेति* ॥ *मिथ्यारूप्यादौ=मिथ्यात्वेनोभयसंमते रूप्यादौ विज्ञाननाश्यता नानुभूयते, अधिष्ठानवत् सत्ये रूप्याज्ञाने विज्ञाननाश्यताऽनुभूयते; तथाच रूप्यादावव्याप्तिः, रूप्याज्ञाने चातिव्याप्तिरित्यर्थः।

"(सि०) *ननु* ज्ञाननिवर्त्यत्वं नाम ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वम्।

न्यायामृतकण्टकोद्धारः

तृतीयपक्षं निराकरोति—*नापीति* ॥ *अत्र कश्चित्*—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रित्यपि बोद्धव्यम्। *ज्ञानप्रयुक्तेत्यादि* ॥ *ज्ञानप्रयुक्तः=अधिष्ठानतत्त्वज्ञानव्यापकः, यः अवस्थितिसामान्यस्य = स्व-स्वीयसंस्कारान्यतरस्य, अभावः,* तत्प्रतियोगित्वमित्यर्थः ॥

न्यायामृतसौगन्ध्यम्

संस्कारेऽतिव्याप्तिः ॥ *ननु*—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम्,

विठ्ठलेशीयटिप्पणी

विवर्तोपादानं प्रसिद्धम्, इति पूर्वनिरुक्तिरेव साधीयसीति—चेत्, अज्ञानप्रयुक्तनाशस्य नित्यत्वे "अतोऽन्यदार्तमि"ति श्रुतिविरोधात्, अनित्यत्वे "विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुतिविरोधात्। अत एव नाशस्थाने विरहपदेनात्यन्ताभावं निवेश्य सिद्धान्तयति—*ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वमिति* ॥ *श्रीगुरुपरमात्मने विठ्ठलाय नमः* ॥ अत्र ज्ञानपदं न ज्ञानसामान्यपरम्; घटपरोक्षापरोक्षज्ञानयोर्घटोपादानाज्ञानविरहाप्रयोजकत्वात्, किन्त्वधिष्ठानतत्त्वसाक्षात्कारपरम्, एवं प्रयुक्तत्वं न प्रयोज्यत्वम्; अत्यन्ताभावे विरहपदार्थे तदसम्भवात्, किन्तु व्यापकत्वमिति व्याचष्टे—*ज्ञानप्रयुक्त इति* ॥ *अधिष्ठानतत्त्वज्ञानेति* ॥ स्वाधिष्ठानसाधारणरूपसाक्षात्कारेत्यर्थः। *अवस्थितिः* ॥ अवस्थितिर्यदि स्वाधिष्ठाने *वृत्तिः=स्वसम्बन्धः*, तद्विरहप्रतियोगित्वं तस्यैव, न स्वस्य, इत्यसम्भवः। नच—अवस्थित्या सम्बन्धेन यो विरहः, तत्प्रतियोगित्वमित्यर्थाद् नासम्भव इति—वाच्यम्; घटादेर्मुद्गरादिना नाशदशायां कपालनिष्ठविरहस्य घटाधिष्ठानज्ञानानधीनतयाऽव्याप्तेर्दुर्वारत्वात्, अतो व्याचष्टे—*अवस्थितिसामान्यस्य=स्व-स्वीयसंस्कारान्यतरस्येति* ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

या(१) याऽप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा, सा स्वसमानविषयकाज्ञानक्षणावृत्तिः। या या स्वजन्यपटुतमसंस्कारसहितोक्तप्रमा, सोक्ताज्ञान-तत्संस्कारक्षणावृत्तिः। सहितान्तोपादानादुक्तसहितान्यशुक्त्यादिप्रमाया उक्तसंस्कारक्षणवृत्तित्वेऽपि न व्यभिचारः। अत एव जीवन्मुक्तनिष्ठब्रह्मप्रमाऽपि तादृशक्षणवृत्तिः। या योक्तप्रमा, सा स्वसमानविषयकाज्ञानप्रयुक्त-तत्संस्कारवत्कालपूर्वभिन्ना। तथाच तादात्म्यसम्बन्धेनोक्तप्रमां प्रति स्वाधिकरणक्षण-

## विट्ठलेशीयटिप्पणी

निरुक्तज्ञाननिवर्त्यत्वघटकस्याज्ञान-तत्संस्कारयोर्विरहे ज्ञानव्यापकत्वस्य निर्वाहकं विरोधनियमं वक्तुं ज्ञानाज्ञानयोर्विरोधनियमं पूर्वोक्तं स्मारयति—*या येति* ॥ *अप्रामाण्यज्ञानादिशून्येति* ॥ आदिनाऽऽहार्यत्व-संशयत्वे। निरुक्तप्रमात्मकसाक्षात्कारत्वं स्वसमानविषयकाज्ञानाधिकरणक्षणावृत्तित्वव्याप्यमित्यर्थः। नच—एतद्व्याप्तिनिर्वाहाय ज्ञानस्याज्ञाननाशकारणत्वं वाच्यम्; अज्ञानात्यन्ताभावस्य नित्यत्वात्, तथाचोक्तदिशा नाशानन्त्यप्रसङ्गो दुर्वार इति—वाच्यम्; तेजसि तिमिराभावस्येव ज्ञानेऽज्ञानाभावव्याप्तावपि कस्यचिद् विप्रतिपत्तेरभावेन सर्वसम्मत्याऽप्रयोजकत्वशङ्कानवकाशेन तर्कानपेक्षणात्, एवमग्रिमव्याप्तावपि बोध्यम्। उक्तज्ञानक्षण उक्तव्याप्त्याऽज्ञानाभावप्रसिद्धावप्यज्ञानसंस्कारस्यानुभविकत्वेन तदभावस्यासिद्धयोक्तसंस्काराभावसाधिकां व्याप्तिमाह—*या या स्वजन्येति* ॥ *पटुतमेति* ॥ प्रथमात् साक्षात्कारात् संस्कारो जायते, स च द्वितीयादेः पटुर्भवति, तृतीयादेः पटुतरो भवति, तावताऽपि विपरीतभ्रमो न निवर्तते, चतुर्थादेः ( साक्षात्कारात् ) पटुतमो भवति, तत्क्षणोत्तरं च विपरीतभ्रमो न भवति। तथाच स्वजन्यपटुतमसंस्कारविशिष्टाप्रामाण्यज्ञानादिशून्यप्रमात्मकसाक्षात्कारत्वं स्वसमानविषयकाज्ञान-तत्संस्कारक्षणावृत्तित्वव्याप्यम्। यद्यपि प्रथमनियमेनैवाज्ञानाभावसिद्धिसम्भवात् तत्संस्काराभावसिद्धये तत्संस्कारमात्रघटित एवायं नियमो वक्तव्यः; तथापि लाघवाद् नियमद्वयस्थानेऽज्ञान-तत्संस्कारोभयघटित एक एव नियम आदृतः। *अत एव*=सहितान्तोपादानादेव ॥ *तादृशक्षणवृत्तिः*=मूलाज्ञानसंस्कारक्षणवृत्तिः सम्भवति। अत एव जीवन्मुक्तस्य कदाचित् समाधिव्युत्थाने आवश्यकलौकिक-वैदिककर्मणि प्रवृत्तिरुपपद्यते। पटुतमसंस्कारं विनाऽज्ञान-संस्कारानिवृत्तेर्व्यभिचारः, इति पटुतमत्वनिवेशः। पटुतमस्यापि केवलसंस्कारस्याज्ञान-तत्संस्काराविरोधित्वाद् व्यभिचारः, इत्युक्तप्रमानिवेशः। एतन्नियमेनाज्ञाने निरुक्तज्ञाननिवर्त्यत्वनिर्वाहेऽपि तत्प्रयुक्तरजताकाशादि-चिज्ज्ञानसम्बन्धादिप्रपञ्चे तदनिर्वाहात् तन्निर्वाहाय नियमान्तरमाह—*या येति* ॥ *उक्तप्रमेति* ॥ उक्तसंस्कारसहितोक्तप्रमेत्यर्थः। उक्तप्रमाक्षण एव नाज्ञानप्रयुक्तरजतादेर्निवृत्तिः, किन्तु तदुत्तरक्षण एव, इति तद्घटितपृथङ्नियमादरः। तत्प्रयुक्तत्वम्=तस्मिन् सत्यग्रिमक्षणे सत्त्वे सति तदभावोत्तरक्षणेऽवश्यमसत्त्वम्, अनादिचिज्ज्ञानयोगाज्ञानपरिणामवियदाद्युभयसाधारणम्। तत्संस्कारः=अज्ञानप्रयुक्तसंस्कारः। स्वसंस्कारासहितज्ञानोत्तरक्षणेऽज्ञानप्रयुक्तरजतादिनिवृत्तावपि तत्संस्कारानिवृत्तेर्व्यभिचारः, इत्युक्तसंस्कारसाहित्यनिवेशः। *ननु* उक्तनियमद्वयोपगमेऽपि निरुक्तज्ञाननिवर्त्यत्वघटकव्यापकता कथं लभ्यते? इत्याशङ्क्योक्तप्रमासामान्येऽज्ञान-तत्संस्कारक्षणावृत्तित्वोक्तावज्ञान-तत्संस्कारान्यतरस्य स्वाधिकरणक्षणवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावो लभ्यते, एवमज्ञानप्रयुक्त-तत्संस्कारवत्कालपूर्ववर्तिभिन्नत्वोक्तौ स्वाधिकरणकालपूर्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकोऽज्ञानप्रयुक्त-तत्संस्कारान्यतराभावो लभ्यते, इत्याशयेनोक्तलक्षणं सङ्गमयति—*तथाचेति* ॥ *तादात्म्यसम्बन्धेनेति* ॥ उक्तप्रमायां स्वस्या अप्युक्तप्रमात्वघटकविशेषण-विशेष्यभावभेदेन भिन्नरूपभेदेन भेदसम्भवात् तादात्म्यसम्भवः। *उक्तप्रमामिति* ॥ अप्रामाण्यज्ञानादिशून्यस्वजन्यपटुतमसंस्कार-

( १ ) अज्ञान-तत्संस्कार-तत्त्वज्ञानादिसकलद्वयनाशरूपत्वमपि तत्त्वज्ञानस्येति न्यायरत्नावल्यादृतपक्षात् पक्षान्तरमिदम्। एतदभिप्रायेण च व्याप्तिभेदः। तत्त्वज्ञान-नाशयोः प्रयोज्य-प्रयोजकभावस्य व्याप्य-व्यापकभावं विनाऽसम्भवात्

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वृत्तित्वसम्बन्धेनोक्ताज्ञान-तत्संस्कारान्यतरस्याभावः, उक्ताज्ञानप्रयुक्त-तत्संस्कारान्यतरस्य स्वाधिकरणकालपूर्वक्षण-वृत्तित्वसम्बन्धेनाभावश्च व्यापकः। तादृशाभावप्रतियोगित्वस्याज्ञान-तत्प्रयुक्त-तत्संस्कारेषु सत्त्वाद् लक्षण-समन्वयः। तादात्म्येन तादृशप्रमां प्रति स्वसमानविषयकत्वं कालिकत्वं चेति सम्बन्धद्वयेनाज्ञान-तत्संस्कारान्यतर-स्याभावः, स्वप्रयोजकाज्ञानसमानविषयकत्वं स्वाश्रयकालपूर्वत्वं चेति सम्बन्धद्वयेनाज्ञानप्रयुक्त-तत्संस्कारान्य-तरस्याभावश्च व्यापक इति तु निष्कर्षः(१)।

विट्ठलेशीयटिप्पणी

विशिष्टप्रत्यक्षप्रमामित्यर्थः। अग्रे 'तादृशप्रमामि'त्यत्राप्ययमेवार्थः। तेनाज्ञानतत्प्रयुक्तयोरेकलक्षणतानिर्वाहः। उक्ता-ज्ञानपदद्वयं स्वसमानविषयकाज्ञानपरम्। *सम्बन्धेन=सम्बन्धावच्छिन्नप्रतियोगिताकः॥ *तादृशाभावप्रतियोगि-त्वस्य=तादृशाभावद्वयान्यतरप्रतियोगित्वस्य॥ *तत्संस्कारेषु=अज्ञान-तत्प्रयुक्तसंस्कारेषु। लाघवादेतद् निष्कर्ष-यति—*तादात्म्येनेति*॥ निष्कर्षः*॥ व्यापक इत्यन्तस्य निष्कर्षः॥

*ननु* उक्ताभावद्वयान्यतराभावप्रतियोगित्वं यद्यज्ञान-तत्संस्काराज्ञान-प्रयुक्ततत्संस्कारान्यतमत्वपर्यवसितम्, तर्हि स न ज्ञाननिवर्त्यत्वपदार्थः, उक्तप्रमाव्यापकीभूत उक्तद्विविधसम्बन्धद्वयावच्छिन्नप्रतियोगिताकत्वद्वयान्यतरवान् यः स्व-स्वसंस्कारान्यतराभावः, तत्प्रतियोगित्वमित्युक्तौ तु संस्कारेऽव्याप्तिः; तत्संस्काराप्रसिद्ध्या तस्य स्वपदेनो-पादानासम्भवादिति—चेत्, *न* उक्तप्रमाव्यापक उक्तद्विविधसम्बन्धद्वयावच्छिन्नप्रतियोगिताकत्वद्वयान्यतरवान् योऽभावः, तत्प्रतियोगितायाः समानाधिकरणः सन् अवच्छेदकीभूतो यः स्व-स्वसंस्कारान्यतरत्व-स्व-स्वसंस्कार्या-न्यतरत्वान्यतररूपो धर्मः, तदाश्रयत्वे तात्पर्यात्। *वस्तुतस्तु*—निरुक्तावच्छेदकीभूतो यो धर्मः, तद्वत्त्वमर्थः। तत्राज्ञानत्वाज्ञानसंस्कारत्व-घटत्व-घटसंस्कारत्वादीनादायाज्ञानादिषु लक्षणसमन्वयः। निरुक्तप्रमाव्यापकीभूतो यः प्रथमनिरुक्तोऽभावः, यश्च द्वितीयनिरुक्तोऽभावः, तदन्यतरस्य निरुक्तप्रतियोगितावच्छेदकीभूतधर्मवत्त्वम्, तादृशा-भावयोर्यौ निरुक्तप्रतियोगितावच्छेदकधर्मौ, तदन्यतरत्वं वाऽर्थो बोध्यः। तूलाज्ञानप्रयुक्तानां शुक्तिरधिष्ठानम्, तत्साक्षात्कारव्यापकत्वं तूलाज्ञानाभावानाम्, मूलाज्ञानकल्पितानां वियदादीनां ब्रह्मैवाधिष्ठानम्, तत्साक्षात्कार-व्यापकाश्च तदभावाः, इति सर्वत्र लक्षणसमन्वयः। मुद्गरनाश्यघटादिव्यक्त्यभावस्यापि ब्रह्मसाक्षात्कारव्यापकत्वाद् नाव्याप्तिः। नाप्युत्तरज्ञाननिवर्त्यपूर्वज्ञाने सिद्धसाधनम्; परमते तस्याकल्पितत्वेन तदभावस्याधिष्ठानसाक्षात्कार-व्यापकत्वानुपगमात्, तैर्ज्ञानकाल एव 'घटमहं जानामी'त्यधिष्ठानात्मसाक्षात्कारोपगमात्। नाप्युत्तरज्ञानजन्यनाश-प्रतियोगित्वे मिथ्यात्वलक्षणातिव्याप्तिः; तस्य निरुक्तज्ञाननिवर्त्यत्वानात्मकत्वात्। नच—एवं स्वरूप-संस्कारो-भयविधावस्थितिसामान्यनिवेशनं व्यर्थमिति—वाच्यम्; ज्ञानपदस्य संस्काराविद्यानिवृत्तिक्षमनिरुक्ताधिष्ठान-तत्त्वसाक्षात्कारपरत्वबोधनायैव तन्निवेशादिति दिक्॥

अत्रैकाज्ञानपक्षो यद्येकजीवपक्षः, तदैकदैव सवासनाज्ञानादिनिवृत्तिक्षमस्वजन्यपटुतमसंस्कारविशिष्टतत्त्व-साक्षात्कारः, तत्पूर्वं तत्त्वसाक्षात्कारमात्रादज्ञानमात्रनिवृत्तिः, तावतैव शुकादीनां मुक्तत्वव्यवहारः, निरुक्ताधिष्ठान-तत्त्वसाक्षात्कारव्यापकत्वं च निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाज्ञानाद्यभावे निर्वहति, इत्यज्ञानादौ लक्षण-

---

सामानाधिकरण्यानिवेशेन व्यापकत्वनिवेशः। तेन तत्त्वज्ञानक्षणस्य दृश्याधिकरणक्षणपूर्वत्वाभावेऽनुकूलतर्कोऽपि सूचित इत्यादि-न्यायरत्नावल्यादिषु विस्तरेण प्रतिपादितमिति॥

(१) न्यायरत्नावल्यां तु स्वप्रयोजकाज्ञानकालत्वशून्यवृत्तिज्ञानकालत्वरूपं ज्ञानोच्छेद्यत्वम्; स्वप्रयोजकपदेन स्वकाले वर्तमानत्वस्यैव विवक्षणाद् जीवेशभेदादावपि साध्यसमन्वय इति प्रतिपादितम्, इत्युक्तनिष्कर्षस्यापि तत्रैव तात्पर्याद् न न्यायभास्करोक्तार्थान्तराणां प्रसक्तिरिति॥

अद्वैतसिद्धिः

अवस्थितिश्च द्वेधा ; स्वरूपेण कारणात्मना च ; सत्कार्यवादाभ्युपगमात् ।

तरङ्गिणी

अवस्थितिर्द्वेधा—स्वरूपेण कारणात्मना च ; सत्कार्यवादाभ्युपगमात् ।

न्यायामृतकण्टकोद्धारः

अवस्थितिश्च द्वेधा—स्वरूपेण कारणात्मना च ; सत्कार्यवादाभ्युपगमात् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नानाऽज्ञानपक्षे तत्पुरुषीयत्वमपि प्रमाऽज्ञानयोर्निवेश्यम् । *अवस्थितिरिति* ॥ प्रकृतस्याव-स्थितिपदस्यार्थः । *स्वरूपेण कारणात्मना चेति* ॥ अज्ञान-तत्प्रयुक्तस्वरूपेण स्थूलावस्थाकारणीभूत-

न्यायामृतसौगन्ध्यम्

अवस्थितिश्च द्वेधा—स्वरूपेण, कारणात्मना च ; सत्कार्यवादाभ्युपगमात् ।

विट्ठलेशीयटिप्पणी

सङ्गतिः । यदि नानाजीवपक्षः, तदा यस्मिन् जीवे ब्रह्मज्ञानमुत्पद्यते, तत्राज्ञानमंशेन निवर्तते, अंशान्तरेण जीवान्तरेऽनुवर्तते इति वा, तत्त्वविदि—अज्ञानसंसर्गो निवर्तत इति वा स्वीकार्यम् । तथाच निरुक्ततत्त्वसाक्षात्कार-व्यापकत्वं तत्तज्जीवावरकांशविशिष्टाज्ञानाभावस्य वा तत्तज्जीवसंसर्गविशिष्टाज्ञानाभावस्य वा निर्वहति । नच चालनी-न्यायेन व्यापकत्वभङ्गः ; यत्किञ्चिदेकैकनिरुक्ततत्त्वसाक्षात्कारव्यापकत्वस्य विवक्षितत्वात् । नच—एकाज्ञानपक्षेऽपि तत्तज्जीवसंसर्गविशिष्टाज्ञानाभावस्यैवैकैकतत्त्वज्ञानव्यापकत्वविवक्षणे 'नानाऽज्ञानपक्षे तत्पुरुषीयत्वं ज्ञानाज्ञानयो-र्निवेश्यम्' इत्युत्तरपङ्क्तेरसङ्गतिः ; एकाज्ञानपक्षे तत्पुरुषीयत्वनिवेशावश्यकत्वोक्तेः, इति—वाच्यम् ; नानाऽज्ञानपक्षे तत्पुरुषीयत्वस्योपलक्षणत्वात्, एकाज्ञानपक्षे तु विशेषणत्वादिति भेदात् ॥ *तत्पुरुषीयत्वमपीति* ॥ नच यथाश्रुते प्रमाऽज्ञानयोर्निष्कर्ष उक्तसम्बन्धद्वयमध्ये सामानाधिकरण्यनिवेशेन निर्वाहः ; अस्य तत्रैव तात्पर्यात् ॥

*अत्रेदमवधेयम्—स्वजन्यपटुतमसंस्कारविशिष्टाप्रामाण्यज्ञानादिशून्यत्वाधिष्ठानतत्त्वसाक्षात्कारे प्रमारूपे कस्मिन्नपि स्वसमानविषयकत्व-कालिकत्वोभयसम्बन्धेनाज्ञान-तत्संस्कारान्यतरस्य स्वप्रयोजकाज्ञानसमानविषयकत्व-स्वाश्रयकाल-पूर्वत्वोभयसम्बन्धेनाज्ञानप्रयुक्त-तत्संस्कारान्यतरस्य चासत्त्वाद् निरुक्तप्रमायां विशेषणतासम्बन्धेन वर्तमानः प्रथम-निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः, यश्च द्वितीयनिरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिकाभावः, तत्त-त्प्रतियोगितावच्छेदकान्यतरधर्मवत्त्वस्यैव ज्ञाननिवर्त्यत्वरूपत्वे दोषाभावाद् व्यापकत्वरूपस्य स्वरूपसम्बन्धरूपस्य वा प्रयुक्तत्वस्य निवेशनं किमर्थम् ? इति—चेत्, *शृणु* ; निरुक्ताभावयोर्निरुक्तप्रमावृत्तित्वस्य ज्ञाननिवर्त्यत्वरूप-साध्यघटकत्वेन तत्र तदनभ्युपगमे निरुक्तप्रमाव्यापकत्वस्य निरुक्तप्रमाप्रयोज्यत्वस्य वाऽनुपपत्तिः, इत्यनुकूलतर्कसूचनाय तन्निवेशादरादिति । किञ्च ज्ञानाज्ञानविरोधमनभ्युपगम्य कस्मिंश्चिदेकस्मिन् ज्ञाने प्रयोजकान्तराधीनमज्ञानाद्यभाव-मभ्युपगम्याज्ञानादौ साध्यनिर्वाहाद् ज्ञानोच्छेद्यतारूपमिथ्यात्वासिद्ध्याऽर्थान्तरम्, इत्यज्ञानाभावनिष्ठज्ञानव्यापकता-घटितज्ञानाज्ञानविरोधघटितसाध्यादरः । उक्तव्यापकत्वनिर्वाहाय प्रयोजकान्तरकल्पनामपेक्ष्य व्याप्यविरोधज्ञानस्यैव प्रयोजकत्वकल्पने लाघवाद् नोक्तरीत्याऽर्थान्तरम् । एतेन—स्वरूपसम्बन्धरूपप्रयुक्तत्वनिवेशोऽपि सफलः—इति ॥

अवस्थितिपदस्य सर्वत्र वक्ष्यमाणार्थकत्वाभावादाह—*प्रकृतस्यावस्थितिपदस्यार्थ इति* ॥ *स्वरूपेण=स्वस्य मिथ्यात्वेनाभिमतस्याज्ञान-तत्प्रयुक्तस्य, *रूपम्=स्वरूपम्, तेनेत्यर्थं व्याचष्टे—*अज्ञान-तत्प्रयुक्तस्वरूपेणेति* ॥ 'कारणात्मने'त्यस्य *कारणम्=अज्ञान-तत्प्रयुक्तस्य कारणम्, संस्कारः ; तदात्मना=तद्रूपेणेत्यर्थः ; तत्राज्ञानस्यानादि-तया तत्संस्कारस्य च तज्जन्यतया तत्कारणत्वासम्भवः, इत्यतो व्याचष्टे—*स्थूलावस्थाकारणीभूतसंस्कारेणेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

संस्काररूपेण च घटिताज्ञानसंस्कारस्य स्थूलावस्थोपधायकत्वं जीवन्मुक्तिदशायामस्त्येव ; तदर्थमेव तत्स्वीकारात् । *ननु*—संस्काररूपे मानाभावः, तत्राह—*सत्कार्यवादेति* ॥

कार्याणां तदधिष्ठानतत्त्वसाक्षात्कारपर्यन्तं किञ्चिद्रूपमवश्यैकं वाच्यम् ; प्रलयकालेऽदृष्टादिजन्यायाः कार्यावस्थाया-स्तत्कालसाधकश्रुत्यादिसिद्धत्वात्, "तद्धेदं तर्ह्यव्याकृतमासीदि"त्यादिश्रुत्या तत्काले कार्यस्यानभिव्यक्तरूपेण

विट्ठलेशीयटिप्पणी

अवस्थितिपदार्थेऽज्ञान-तत्प्रयुक्तादौ स्वात्मकजन्यरूपस्य वैशिष्ट्यं तृतीयार्थो न सम्भवति, इत्यत आह—*घटितेति* ॥ अभिन्नेत्यर्थः । *ननु* अज्ञानसंस्कारस्याज्ञानजन्यस्य कथमज्ञानीयस्थूलावस्थाकारणत्वम् ? क्वचित् तदुपधायकत्वं विना तत्स्वरूपयोग्यताया अप्यसम्भवात्, अत आह—*अज्ञानसंस्कारस्येति* ॥ अधिष्ठान-तत्त्वसाक्षात्कारेण स्वोत्पत्तिक्षणे प्रयोजितस्याज्ञाननाशस्थानीयस्य तदीयसूक्ष्मावस्थारूपस्य तत्संस्कारस्येत्यर्थः । *स्थूलावस्थोपधायकत्वमिति* ॥ यथा चन्द्रादेः स्थूलावस्थातः सूक्ष्मावस्था, ततश्च स्थूलावस्था ; यथा वा रोगादेः स्थूलावस्थस्यौषधादिना यत्र सशेषनाशः, तत्रापथ्याशनादिना पुनः स्थूलावस्थारूपत्वम्, यत्र तु निःशेषनाशः, तत्र न पुनः स्थूलावस्थात्वम् । शेषः=लेशः, सूक्ष्मावस्था । यथा निस्सारितोत्कटगन्धवद्द्रव्य-भाण्डादौ तद्द्रव्यस्य, तथा तत्त्वज्ञानेनोत्पन्नमात्रेणाज्ञानस्य सूक्ष्मावस्थारूपः संस्कारः । स च यावत् तदावृत्तिरूपं निदिध्यासनं समाध्यपरपर्यायं तावदस्ति, ततो व्युत्थितस्य वृत्त्यन्तरकाले तत्संस्कारादेवावश्यकलौकिक-वैदिक-व्यवहारोपयोगिनी किञ्चित् तस्य स्थूलावस्था भवति, न त्वनुत्पन्नतत्त्वसाक्षात्कारदशायां यादृशी, तादृश्येवास्ति । प्रारब्धकर्मक्षये समाधिपरिपाकदशायां स्वजन्यपटुतमसंस्कारसहिततत्त्वसाक्षात्कारेण तु संस्कारस्यापि निवृत्तिरिति भावः । *तदर्थम्=स्थूलावस्थाज्ञानार्थम् । *तत्स्वीकारात्=अज्ञानसंस्कारस्वीकारात् ॥ तत्त्वसाक्षात्कारमात्रेण ससंस्काराज्ञाननिवृत्तौ तु जीवन्मुक्तव्यवहारो विलुप्येतेति भावः । *ननु* अधिष्ठानतत्त्वसाक्षात्कारेणाज्ञानस्येव तत्संस्कारस्यापि निवृत्तिरस्तु, जीवन्मुक्तस्यावश्यकलौकिक-वैदिकव्यवहारस्तु भोगैकनाश्यप्रारब्धकर्मवशादे-वोपपद्यते । नच—एवं ससंस्काराविद्यानिवृत्तौ विपरीतभावनाया असम्भवात् तन्निवर्तकनिदिध्यासनविधि-वैयर्थ्यमिति—वाच्यम् ; वृत्त्यन्तरोत्पादकारणाभावेन वृत्तिस्वभावान्तःकरणस्य पूर्वतत्त्वसाक्षात्काराहित-संस्कारवशाद् उत्तरोत्तरतत्त्वसाक्षात्कारपरम्परायाः संस्कारसिद्धाया निदिध्यासनविधिनाऽनुवादात् । नच—तत्त्वसाक्षात्कार-तत्संस्कारयोरप्याविद्यकत्वात् तत्त्वज्ञानेन कुतो न निवृत्तिरिति—वाच्यम् ; अन्तःकरणादेरिव तयोरपि प्रारब्धकर्मरूपप्रतिबन्धकवशेनानिवृत्तिसम्भवात्, इत्याशङ्क्य 'सत्कार्यवादाभ्युपगमादि'ति मूलमव-तारयति—*नन्विति* ॥ कार्य-कारणयोस्तादात्म्यात् कार्यं कारणरूपेण सदेव पूर्वानभिव्यक्तरूपेणोत्पद्यते, तेनैव च रूपेण विनश्यति, कारणरूपेण त्वस्त्येवेति वादस्य=प्रवादस्य सांख्यमतप्रसिद्धस्याभ्युपगमादिति मूलार्थः । तत्कारणमेव तत्संस्कार इत्युच्यत इति भावः । *ननु* संस्कारे मानाभावशङ्कायां मतविशेषाभ्युपगमकथनं न युक्तमत आह—*कार्याणामिति* ॥ स्थूलरूपेण नाशमापन्नानामपीति शेषः । *तदधिष्ठानेति* ॥ स्वजन्य-पटुतमसंस्कारविशिष्टेत्यादिः । *पर्यन्तमिति* ॥ तदुत्तरं तदभावस्य सिद्धान्तेऽपीष्टत्वादिति भावः । *किञ्चिद्रूप-मिति* ॥ नाशतादात्म्यापन्नं कारणम् । इदं च संस्कारव्यवस्थापनं सृष्टिकाले नावश्यकम् ; घटादिकार्यकारणानां कपालादीनां संस्कारत्वाभिमतानां प्रागुत्तरकालयोः प्रत्यक्षसिद्धत्वात् । अतः प्रलये कपालादिकारणपरम्पराया अपि नाशाद् न्यायमते नित्यस्य चरमकारणस्य परमाण्वादेरिव वेदान्तिमते ब्रह्मान्यस्य सर्वस्यानित्यत्वेन कस्यचिदनङ्गीकारात् तत्र कस्यापि कार्यस्य कारणीभूतसूक्ष्मसंस्काररूपस्य सद्भाव इदानीन्तनशरीरिणामसंनिकर्षेण तदानीं शरीरिणामभावेन च स्वभानाभावशङ्कायां श्रुतिं प्रमाणयति—*प्रलयकाल इति* ॥ प्रलय एव किं मानम् ? अत आह—*तत्कालसाधकेति* ॥ श्रुतिमाह—*तद्धेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्थितिबोधनात्, 'दण्डपातेन घटो नष्टः' इत्यादिप्रत्ययेन दण्डपातजन्यनाशावगाहनाच्च। नहि तार्किकादिमतेऽपि कार्यस्य नाशोऽपलप्यते, परं तूक्तश्रुत्या 'घटो नाशत्वमापन्नः' 'पूर्वावस्थैवोत्तरावस्था जाते'त्याद्यनुभवेन च सिद्धं नाशस्य पूर्वावस्थातादात्म्यापन्नोत्तरावस्थारूपत्वम् ॥

विठ्ठलेशीयटिप्पणी

*तत्=इदम्, इदानीं स्थूलरूपेण प्रत्यक्षं जगत्। *तर्हि=इदानीन्तनसृष्टेः प्राक्। *अव्याकृतम्=अप्रत्यक्षरूपमासीत्, ह इति प्रसिद्धम्। तच्च नेदानीमनुभूयमानं स्थूलम्; अप्रत्यक्षत्वासम्भवात्, नच ग्राहकाभावः; ग्राह्यस्य स्थूलस्य सत्त्वेन तेन तदनुमानात्। ( ग्राहकस्यापि सत्त्वसम्भवात् ) आकाशादिसृष्टिप्रतिपादकश्रुतिविरोधाच्च, किं तु सूक्ष्मम्; सूक्ष्मात् प्रागवस्थकपालादेः स्थूलघटादेः, मुद्गराद्यभिहतस्थूलघटादेरुत्तरावस्थसूक्ष्मकपालादेश्चोत्पत्तिदर्शनात्। तच्च रूपं न्यायमते परमाणुरूपं नित्यम्, सांख्यमते प्रधानम्, वेदान्तिमतेऽविद्या-मायारूपमनादि सान्तम्; प्रागभाववत्। नच तस्याः कथमदृष्टजन्यत्वम्? एतत्सृष्टिपूर्वसृष्टिनाशत्वेन तस्या जन्यत्वात्, तत्र चरमकार्यनाशे कारणान्तरासम्भवात् कार्यसामान्येऽदृष्टस्य कारणत्वाच्च तस्यास्तेन रूपेणादृष्टजन्यत्वम्। नचैतत्सृष्टिपूर्वसृष्टौ प्रमाणाभावः; "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेरेव पूर्वोत्तरसृष्ट्योः, मध्ये प्रलये च प्रमाणत्वात्। 'अदृष्टादी'त्यादिपदेन काल-कर्मेश्वरादि साधारणम्, असाधारणञ्च स्थूलावस्थं कार्यम् ॥ *ननु* अदृष्टादिना चरमकार्यस्य नाशे यदि किंचित् प्रमाणं भवेत्, तर्हि तत्त्वेनाव्याकृतपदार्थमायाया जन्यत्वं सुवचम्, तदेव नास्ति; ज्ञानेनाज्ञान-तत्प्रयुक्तादीनामिवादृष्टादिनापि प्रयोज्यायाश्चरमकार्यस्य निवृत्तेरेव सिद्धान्तेऽङ्गीकारसम्भवात्, इत्यत आह—*दण्डपातेनेति*॥ नाशो ध्वंसः; नाभावान्तरम्; *पातेनेति* तृतीयामुख्यार्थजन्यत्वानन्वयप्रसङ्गादित्याह—*दण्डपातजन्यनाशावगाहनाच्चेति* ॥ एवमनुभवसिद्धकपाल-कपालिकादिनाशवत् चरमकार्यस्य नाश एवाङ्गीकार्यः, न त्वत्यन्तनिवृत्तिः; बीजाभावेन पुनः सृष्ट्यनुपपत्तेः। नच नाशपरम्पराकल्पने गौरवं बाधकम्; प्रामाणिकत्वात्, विदुषस्तु पुनः संसाराभावात्, अप्रामाणिकानन्तनाशकल्पने गौरवाद् बाधकात्, ज्ञानेन नामरूपात्यन्तनिवृत्तिरेव "विद्वान्नाम-रूपाद्विमुक्तः" इति श्रुतिसिद्धाऽङ्गीक्रियत इति भावः। *ननु* अस्मन्मते गुरुमते च घटादिकार्यनाशो नातिरिक्तः, किन्तु कारणीभूतकपालादिरूपः, तस्य कथं दण्डपातादिजन्यतावगाही प्रत्यय इति? अत आह—*न हीति* ॥ *तार्किकादिमतेऽपीति* ॥ तथाच तन्मत उक्तप्रत्ययो दण्डपातजन्यत्वेन घटनाशावगाही दुरपह्नवः, इति तदुपपत्तये तस्य स्वमते गुरुमते च घटादिनाशत्वेन दण्डपातजन्यत्वेन कपालाद्यवगाहित्वं स्वीकार्यमिति भावः। तर्हि अतिरिक्त एव नाशोऽस्तु, किमियता प्रयासेनेति? अत आह—*परं त्विति* ॥ *उक्तश्रुत्या='तद्धेदं तर्हि अव्याकृतमासीदि'ति श्रुत्या। अनया हि प्रलय इदानीं दृश्यमानस्य जगतः प्रागभावात्मकपूर्वावस्थारूपमव्याकृतं तत्तादात्म्यापन्नं प्रतिपाद्यते। तदेव पूर्वसर्गीयजगत उत्तरावस्था नाशरूपा; कार्यकारणयोः(=कार्यनाश-कारणरूपाधिकरणयोः) तादात्म्यादिति। कार्य-तन्नाश-तत्कारणकपालादीनां त्रयाणां परस्परं तादात्म्यादिति भावः। अत्रैव लोकानुभवमाह—*घटो नाशत्वमापन्न इति* ॥ इत्यनुभवेनेत्यन्वयः। *पूर्वेति* ॥ घटस्य पूर्वावस्था प्रागभावरूपम्, उत्तरावस्था नाशरूपं कपालं जातमित्यनुभवेनेत्यर्थः। इमौ चानुभवौ 'दण्डपातेन घटो नष्टः' इति प्रत्ययकालीनौ बोध्यौ। प्रथमेऽनुभवे घट-तन्नाशयोस्तादात्म्यम्, द्वितीये च घटस्य प्रागभावरूपकपाल-नाशरूपकपालयोस्तादात्म्यं भासते। घट-कपालयोस्तादात्म्यं तु सर्वसिद्धम्। *नाशस्य=जगन्नाशस्य घटनाशस्य च। यद्यप्युक्तश्रुत्या जगतः पूर्वावस्थापन्नाविद्यारूपकारणरूपत्वं दर्शितम्, न तु पूर्वोत्तरावस्थयोस्तादात्म्यम्; तथापि या यस्य पूर्वावस्था, सैव तस्योत्तरावस्था; यथा घटस्य कपालम्, इति व्याप्तिबलात् पूर्वप्रलये जगतः प्रागभावरूपपूर्वावस्थारूपाऽव्याकृताविद्यैवोत्तरप्रलये जगतो नाशरूपोत्तरावस्थेति प्रकृतं सिद्ध्यति। एतदर्थमेव लोकानुभवप्रदर्शनम्। *ननु* अनादेरज्ञानस्य घटादेः कपालस्येव कारणत्वाभावात् किंरूपा तस्योत्तरा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नच—पूर्वावस्थोत्तरावस्थयोस्तादात्म्यमनुपपन्नमिति—वाच्यम् ; भिन्नकालीनयोः प्रतियोग्यनुयोगिभावसम्बन्धस्येव तादात्म्यस्याप्यनुभवबलेन सम्भवात्, अन्यथा घटादिकालावृत्तिज्ञानादेर्घटादौ विषयतादिसम्बन्धस्यापलापापत्तेः। तथाच सर्वदा व्यवहारकाले कार्यस्य तादात्म्यापन्नं किंचित् कार्यरूपमस्ति; तत्त्वदर्शनं विना तत्तत्पुरुषाणां तन्निवृत्त्योच्छेदासम्भवात्, इति सत्कार्यवादः सांख्यानामिवास्माकमपि,(१) परं त्वस्माकं तद्रूपं मिथ्यात्वेन तत्त्वदर्शनोच्छेद्यमिति विशेषः ॥

*ननु*—ज्ञानजन्यनाशप्रतियोगित्वमेव ज्ञाननिवर्त्यत्वमस्तु, मुद्गरपाताविना तु घटादेर्नाशो न जन्यते; मुद्गरादिपातपूर्वसिद्धस्य घटाद्युपादानस्य कपालादेरेव तत्तत्कालावच्छिन्नस्य घटादिनाशत्वात्। नचैवम्—

विट्ठलेशीयटिप्पणी

कस्या ज्ञानेन भवेत्? का संस्कार इत्युच्यत इति—चेत्, *शृणु*; अनादेरप्यज्ञानस्य सांशत्वोपगमात् केवलज्ञानेनाज्ञानस्य बहूनामंशानां निवृत्तावपि कश्चिदंशः संस्कारनामोत्तरावस्थारूपः पटुतमज्ञानसंस्कारपर्यन्तमनुवर्तते। स एव व्युत्थानकाले किञ्चित् स्थूलो भूत्वा जीवन्मुक्तभावश्यके प्रवर्तयति, प्रवृत्त्यनुकूला शक्तिरेव वा स्थूलावस्था। सा च समाधौ विनश्यति, उत्पद्यते व्युत्थाने। तस्याप्यंशस्य क्रमेणोक्तसंस्कारविशिष्टेन ज्ञानेन निवृत्तिः; यथा निस्सारणेऽपि वस्त्रादौ कस्तूरिकादेः कश्चिदंशोऽवशिष्यते, संक्षालने तु तस्यापि निवृत्तिरिति। *पूर्वावस्थोत्तरावस्थयोः=घट-प्रागभावावच्छिन्नघटध्वंसावच्छिन्न-कपालयोः। *अनुपपन्नमिति*॥ भिन्नकालीनत्वादिति भावः। *भिन्नकालीनयोः*=घट-तत्प्रागभावध्वंसयोः। *अन्यथा=भिन्नकालीनयोस्तादात्म्यानुपगमे विषयतासम्बन्धस्यापि तादात्म्यरूपत्वादिति भावः। *तथाच=नाशस्य प्रतियोगितादात्म्यापन्नतत्कारणस्वरूपत्वेन प्रतियोगितादात्म्यापन्नत्वे च। *सर्वदा=कार्य-कारण-तत्प्रागभावकाल-कारणान्तराधीनतन्नाशकालेषु सप्रलयेषु। *व्यवहारकाले=अधिष्ठानतत्त्वसाक्षात्कारपूर्वकाले। *कार्यस्य=आकाश-घटादेः। *किञ्चित्=कारणीभूताव्याकृताज्ञानकपालादिरूपम्। स्वजन्यपटुतमसंस्कारपूर्वं तत्त्वदर्शनेऽप्यज्ञानस्य तदंशसंस्कारादिरूपमस्ति। तन्निवर्तकमाह—*तत्त्वदर्शनमिति* ॥*तदुच्छेदेति* ॥ कार्यसंस्कारोच्छेदेत्यर्थः। अज्ञानसंस्कारनिवृत्तये तु स्वजन्यपटुतमसंस्कारविशिष्टमेव तदलमिति बोध्यम्। तर्हि सांख्या विजयेरन्? तत्राह—*परं त्विति* ॥ *मूले*—नाशघटितं ज्ञाननिवर्त्यत्वं दूषयित्वाऽवस्थितिसामान्यविरहघटितं लक्षणं कृत्वा 'तथाचे'त्यादिनाऽवस्थितिसामान्यविरहघटितलक्षणेनाघटितलक्षणोक्ताव्याप्त्यादिदोषाभावोपपादनं सामान्यपदप्रयोजनं व्यञ्जितम्, तच्च संदर्भरचनासम्प्रदायसिद्धत्वाद् यद्यप्यावश्यकम्; तथाप्युक्तलक्षणस्य पुरःस्फूर्तिकत्वात् तदर्थक'तथाचे'त्यंशवैयर्थ्यम्। अत एतद्रीत्या नाशघटितलक्षणपरिष्कारं दूषयितुं तदाशङ्क्यैव 'तथाचे'त्युपष्टम्भकमवतारयति—*नन्विति*॥ तत्र ज्ञानजन्यस्व-स्वसंस्कारान्यतरनाशकत्वं नार्थः; अन्यतरत्वस्य नाशप्रतियोगितानवच्छेदकत्वात्, नापि ज्ञानप्रयुक्तस्वनाश-स्वसंस्कारनाशोभयकत्वम्, ज्ञानप्रयुक्तस्वनाश-स्वसंस्कारनाशान्यतरकत्वं वा; स्वनाशनिवेशवैयर्थ्यात्, नापि ज्ञानप्रयुक्तस्वसंस्कारनाशकत्वम्; सर्वत्र संस्कारेऽव्याप्तेः, अतः स्वनाशमात्रघटनया परिष्करोति—*ज्ञानजन्यनाशप्रतियोगित्वमेवेति* ॥ एवकारेण संस्कारघटितोक्तलक्षणानामवस्थितिसामान्यविरहघटितलक्षणस्य च व्यवच्छेदः। अधिष्ठानतत्त्वज्ञानान्यनाश्यघट-पूर्वज्ञानयोरव्याप्त्यतिव्याप्ती परिहर्तुं घटादिनाशस्योक्तज्ञानान्यजन्यत्वमपलपति—*मुद्गरपातादिनेति* ॥ आदिनोत्तरज्ञानम्, घटादेरित्यादिना पूर्वज्ञानम्, घटादीत्यादिना पूर्वज्ञानम्। तज्जन्यत्वाभावे हेतुः—*मुद्गरादिपातपूर्वसिद्धस्येति* ॥ *घटोपादानस्य=घटाद्युपादानस्य। आदिना पूर्वज्ञानम्, कपालादेरित्यादिनाऽन्तःकरणम्। घटादिसत्त्वदशायां नाशप्रत्ययवारणाय—*तत्तत्कालावच्छिन्नस्येति* ॥ मुद्गरपातोत्तरकालावच्छिन्नस्येत्यर्थः ॥ यद्यप्युत्तरकालावच्छिन्नस्य कपालादेर्न मुद्गरपातात् पूर्वसिद्धत्वम्; तथापि स्वोत्तरकालावच्छिन्नकपालरूपघटनाशस्य न मुद्गरपातजन्यत्वसम्भवः;

(१) तथाचोक्तं सांख्याचार्यैः—"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥" इति।

अद्वैतसिद्धिः

तथाच मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहेऽपि कारणात्मनाऽवस्थितिविरहाभावाद् ब्रह्मज्ञानप्रयुक्त एव सः, इति नातीतघटादावव्याप्तिः ॥

तरङ्गिणी

तथाच मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहेऽपि कारणात्मनाऽवस्थितिविरहाभावाद् ब्रह्मज्ञानप्रयुक्त एव सः, इति नातीतघटादावव्याप्तिः ॥

न्यायामृतकण्टकोद्धारः

तथाच मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहेऽपि कारणात्मनाऽवस्थितिविरहाभावाद् ब्रह्मज्ञानप्रयुक्त एव सः, इति नातीतघटादावव्याप्तिः—इत्याह, *तन्न* ;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्त्वज्ञानेनापि कपालादिरूपस्य नाशस्याजननाद् घटादावव्याप्तिरिति—वाच्यम् ; श्रुतिप्रामाण्याद् ज्ञानकालीनकपालादिरूपाणां घटादिनाशानां ज्ञानाजन्यत्वेऽपि ज्ञानोत्तरकालोत्पन्नस्य स्वेतरसर्वप्रतियोगिक[illegible] ज्ञानजन्यत्वे सिद्धे कपालादिनाशस्यापि घटादिनाशत्वेन घटादिनाशस्य ज्ञानजन्यत्वानपा[illegible] तदाह—*तथाचेति* ॥ 'ज्ञानप्रयुक्ते'त्यादिलक्षणे कृते चेत्यर्थः ।

न्यायामृतसौगन्ध्यम्

तथाच मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहेऽपि कारणात्मनाऽवस्थितिविरहाभावाद् ब्रह्मज्ञानप्रयुक्त एव सः, इति नातीतघटादावव्याप्तिः ॥

सिद्धिव्याख्या

ज्ञाननिवर्त्यत्वं निर्वक्ति—*ज्ञानेति* ॥ अवस्थितिद्वैविध्यकथनेन फलितं दर्शयति—*तथाचेति* ॥ तस्य साध्य-

विट्ठलेशीयटिप्पणी

तदुत्तरोत्पन्नस्यैव तदुत्तरकालावच्छिन्नत्वेन तज्जन्यत्वात् । नच—विशिष्टस्य शुद्धाद् भेदेनोत्तरकालावच्छिन्नकपालं पूर्वकपालाद् भिन्नमुत्तरोत्पन्नमिति—वाच्यम्, तथा सति क्षणभङ्गवादप्रसङ्गात्, प्रत्यभिज्ञाविरोधात्, विशिष्ट-शुद्धयोर्भेदाभेदस्वीकाराच्च 'दण्डपातेन घटो नष्टः' इति प्रत्ययस्य को विषयः ? इति चेत्, भ्रम एव सः ; कपालद्वयविभागनिष्ठदण्डपातजन्यत्वस्योत्तरकालावच्छिन्नकपालरूपघटनाशपदार्थेऽभानात् । यद्वा—'णश अदर्शने' इत्यनुशासनाद् घटत्वावच्छिन्नत्वेन घटतादात्म्यापन्नोत्तरकालावच्छिन्नकपाले दर्शनविषयत्वाभावस्याधिकरणरूपस्य दण्डपातप्रयोज्यत्वेनोक्तप्रत्यये भानात् तस्य प्रमात्वं सम्भवति । एवञ्चोत्तरज्ञानेन पूर्वज्ञानस्य नाशाजननात् तत्र नातिव्याप्तिः, नापि घटेऽव्याप्तिः ; मुद्गरपातेन घटस्यानाशात्, ज्ञानेनैव तन्नाशादिति भावः । तुल्यन्यायेन ज्ञानेनापि घटस्य नाशसम्भवाद् अव्याप्तिं शङ्कते—*नचैवमिति* ॥ तत्त्वज्ञानेनेति* ॥ घटाद्यधिष्ठानस्य शुद्धस्य कपालावच्छिन्नस्य वा चैतन्यस्य साक्षात्कारेणेत्यर्थः । *ज्ञानकालीनेति* ॥ अयं ज्ञानाजन्यत्वे हेतुः । ज्ञानपूर्वं मुद्गरपातजन्यत्वेनाभिमतानामिति शेषः । मुद्गरपातादीनां घटादिनाशं प्रत्यजनकत्वे तत्त्वज्ञानस्य तज्जनकत्वे च किं प्रमाणम् ? अत आह—*श्रुतिप्रामाण्यादिति* ॥ "विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुतिप्रामाण्यादित्यर्थः । सिद्ध इत्यन्वयः ; तत्रोद्देश्यतावच्छेदकीभूतवेदनस्य नाम-रूपात्मकप्रपञ्चीयविमोक्षपदार्थनाशरूपविधेयजनकत्वभानादिति भावः । स्वम्=ज्ञानम् । *कपालादिनाशस्यापि घटादिनाशत्वेनेति* ॥ यत्कपालरूपो यद्घटनाशो ज्ञानपूर्वदण्डपातजन्यत्वेनाभिमतः, ज्ञानजन्यतत्कपालनाशस्य तद्घटनाशरूपत्वमावश्यकम् ; तदाऽपि 'तद्घटो नष्टः' इति प्रत्ययात् । घटध्वंसस्य घटप्रागभावध्वंसत्ववत् । एवञ्च ज्ञानजन्यतत्कपालनाशाभिन्नतद्घटनाशस्यापि कपालनाशत्वेन ज्ञानजन्यत्वाद् न तद्घटेऽव्याप्तिरिति भावः । 'तथाचे'त्यस्य सत्कार्यवादाभ्युपगमपरत्वेऽवस्थितिद्वैविध्यपरत्वे वाऽनन्वय, इत्यतो व्याचष्टे—*तथाचेति* ॥ *कृते चेत्यर्थ इति*॥ अस्यातीते ज्ञानात्पूर्वं नष्टे घटादौ नाव्याप्तिरित्यत्रा[illegible] अतीतपदेन सूचितम्-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ब्रह्मेत्यादि* ॥ एवकारः 'सः' इत्यस्योत्तरं योजनीयः। तथाच *स एव=उक्तसम्बन्धेना-ज्ञानप्रयुक्त-तत्संस्कारान्यतराभावरूपोक्तावस्थितिसामान्याभाव एव, *ज्ञानप्रयुक्तः=ज्ञानाधीनः, नतु घटादि-नाशो ज्ञानकालीनकपालादिनाशरूपः ; तस्य ज्ञानजन्यत्वे पश्चाद् नाशकाभावेन स्वनाश्यत्वस्वीकारे ज्ञानानाश्यत्वेन च सत्यत्वापत्तेः। नच—उक्तावस्थितिसामान्याभावस्येव कपालादिप्रपञ्चनाशस्यापि ज्ञानोत्पत्तिक्षणे, द्वितीयक्षणे वा ज्ञानस्य अक्षणिकत्वपक्ष, उत्पन्नत्वेन प्रपञ्चसमानकालीनत्वं स्वीकृत्य ज्ञानप्रयुक्तत्वमुच्यतामिति—वाच्यम् ; नाशस्य प्रतियोगिक्षणावृत्तित्वनियमात्, प्रतियोगिक्षणवृत्तिनाशे

विट्ठलेशीयटिप्पणी

व्याप्तिग्रीजं निरसितुमुद्घाटयति मूले—*मुद्गरेत्यादिनाऽप्यन्तेन* ॥ ज्ञानात्पूर्वमित्यादिः। *घटस्येति* ॥ नाशादिति शेषः। *विरहेऽपीति* ॥ तथाच ज्ञानप्रयुक्तावस्थितिविरहप्रतियोगित्वाभावादव्याप्तिरिति भावः। अव्याप्त्यभावे हेतुमाह—*कारणात्मनेति* ॥ ज्ञानात् पूर्वं मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहवत् कपालरूपकारणात्मनाऽव-स्थितिविरहोऽपि यदि भवेत्, तदा स्यात् तद्घटेऽव्याप्तिः ; एतल्लक्षणघटकस्य घटीयस्य स्व-स्वसंस्कारान्यतराभावस्य यः कारणात्मनाऽवस्थितिविरहः, स तु नास्ति ; कपालरूपकारणरूपेण घटस्य सत्त्वात्, स्वेतरसर्वनिवर्तकज्ञानोत्तर-मेव घटीयतादृशाभावस्य प्रतियोग्यप्रसारणेन निर्वाहाद् ज्ञानप्रयुक्तत्वात् तत्तत्प्रतियोगित्वात् तद्घटे लक्षणसङ्गते-रित्यर्थः। अत्रावस्थितिसामान्यानिवेशे मुद्गरनाश्यघटस्य स्वरूपेणाभावस्य ज्ञानात् पूर्वस्य ज्ञानाप्रयोज्यत्वेना-व्याप्तितादवस्थ्यम्, तन्निवेशे तु स्वरूप-स्वकारणरूपसंस्कारान्यतराभावस्य मुद्गरपातेऽप्यसतः ज्ञानोत्तरमेव सतः ज्ञानप्रयुक्तत्वाद् लक्षणसङ्गतिः, इति सामान्यनिवेशप्रयोजनमपि सूच्यते। नच—स्वसंस्काराभाव एव निवेश्यता-मिति—वाच्यम् ; तत्प्रतियोगित्वस्य स्वस्मिन्नभावेनाव्याप्तितादवस्थ्यापत्तेः। नच—ज्ञानप्रयुक्तस्वसंस्काराभाव-कत्वमेव—वाच्यम् ; चरमकारणस्वरूपसंस्कारेऽव्याप्तेः। नच—ज्ञानप्रयुक्तत्वस्य व्यापकत्वरूपत्वोक्तेर्मुद्गरनाश्य-घटाधिष्ठानज्ञानकाले तादृशघटाभावस्य सत्त्वनियमेन तादृशघटे लक्षणसमन्वयात् सामान्यपदं व्यर्थमेवेति—वाच्यम् ; स्वरूपसम्बन्धरूपप्रयुक्तत्वनिवेशे तत्सार्थक्योक्तेः। 'तथाचे'त्युपष्टम्भकं सङ्गमयितुं प्रकारान्तरेण ज्ञाननिवर्त्यत्व-निर्वचने दोषसूचनायैवकारं व्यत्यस्य योजयति—*एवकार इति* ॥ *उक्तसम्बन्धेन=स्वप्रयोजकाज्ञानसमान-विषयकत्व-स्वाश्रयकालपूर्वत्वोभयसम्बन्धेन। *अज्ञानप्रयुक्तम्=आकाश-घटादि। *नन्विति* ॥ ज्ञानकालीनं यत् कपालं मुद्गरजन्यं घटनाशरूपम्, ज्ञानोत्तरतन्नाशरूपघटनाशः कपालनाशत्वेनापि ज्ञानाधीनो नेत्यर्थः। इदमुप-लक्षणम्—ज्ञानपूर्वो मुद्गरनाश्यघटस्य स्वरूपेणावस्थितिविरहोऽपि ज्ञानाधीनो नेत्यपि बोध्यम्। *तस्य=कपाल-नाशस्य। *पश्चात्=कपालनाशोत्तरक्षणे। कपालनाशोत्पत्तिक्षणोत्तरं ज्ञानासत्त्वेऽपि कपालनाशस्य क्षणिकत्वापत्ते-र्नाशकाभावेन नित्यत्वापत्त्या सत्यत्वापत्तेरित्यन्वयः। *स्वनाश्यत्वेति* ॥ द्वितीयक्षणावच्छिन्नस्वनाश्यत्वेत्यर्थः। *ज्ञानानाश्यत्वेन=ज्ञाननाश्यत्वरूपमिथ्यात्वाभाववत्त्वेन। *प्रपञ्चसमानकालीनत्वं स्वीकृत्येति* ॥ ब्रह्मज्ञानेन स्वोत्पत्तिक्षण एवाज्ञानस्येव तदुपादानककपालादिप्रपञ्चस्य विनश्यदवस्थस्य सतोऽपि सूक्ष्मरूपेण (-सूक्ष्मरूपो वा-) स्थूलरूपाविरोधी नाशो जन्यते। तदुत्तरक्षणे च तादृशनाशसहितप्रपञ्चस्य नाशस्तेनैव ज्ञानेन जन्यत इति शङ्कितुराशयः। *ज्ञानप्रयुक्तत्वमिति* ॥ कपालनाश-तन्नाशयोरित्यादिः। ज्ञानोत्पत्तिकालोत्पत्तिकस्यापि प्रपञ्चनाशस्य ज्ञानप्रयुक्तत्व उक्तावस्थितिसामान्याभावस्येवेति दृष्टान्तः। अज्ञानप्रयुक्त-तत्संस्कारान्यतरा-भावस्येवेत्यर्थः। तस्योक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकत्वेन स्वजन्यपटुतमसंस्कारविशिष्टज्ञानोत्पत्तिकालीनत्वं बोध्यम्। अत्र स्थूलरूपेणैव कपालादेर्नाशः संस्काररूपः स्थूलरूपाविरोधी विवक्षित इति न भ्रमितव्यम् ; तस्य प्रतियोगिविरोधित्वेन तदविरोधिनाशानङ्गीकारेण निराकरणासम्भवात्, सोपादानाज्ञाननाशस्यैव तत्र कारणत्वेन तदुत्तरक्षण एव तत्सम्भवाच्च। *प्रतियोगीति* ॥ स्थूलस्वरूपप्रतियोगीत्यर्थः ; कारणीभूतसंस्काररूपस्य नाशाविरोधित्वात्। *ननु* यथा स्थूलरूपेण कपालादेर्नाशः कपालिकाद्यात्मककारणस्वरूपस्तद्रूपाविरोधी

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मानाभावात्, चरमक्षणस्य स्वेतरसकलदृश्यनाशत्वसम्भवेऽपि स्वनाशत्वासम्भवेन तस्य ज्ञानजन्यनाशप्रतियोगित्वोपपादनासम्भवात्, उक्तावस्थित्यभावविषयकतया 'ज्ञानाद् दृश्यं सर्वं नष्टम्' इति प्रत्ययोपपत्तेः, तत्त्वज्ञानजन्यनाशे मानाभावाच्च। तस्मात् स एव ज्ञानाधीनः; 'ज्ञानादुक्ताभावः' इति प्रत्ययेन ज्ञानकालीनेऽप्युक्ताभावे ज्ञानाधीनत्वसम्भवाद् ज्ञाननाशकालीनस्योक्ताभावस्य स्वीकारे तस्य नाशकाभावेन सत्यत्वापत्तेः, नतु कपालादिनाशः; मानाभावात्, इति याऽतीतघटादौ ज्ञाननाश्यत्वलक्षणस्या-

विट्ठलेशीयटिप्पणी

स्वीक्रियते, तद्विषक एवोक्तनियमः, तथा कारणीभूतसूक्ष्मरूपेण कपालादेर्नाशः स्थूलरूपाविरोधी कश्चनास्तु, इत्यत आह—*प्रतियोगिक्षणवृत्तिनाशे मानाभावादिति*॥ कपालादेः स्थूलरूपेण सत्त्वदशायां कारणीभूतसूक्ष्मकपालिकारूपस्यापि सत्त्वेनापाद्योक्तनाशस्य केनापि रूपेणासम्भवात् प्रतियोग्यविरोधित्वानिर्वाहात्। नच—उपादानाज्ञानकपालिकादिनाशाधीनो यत्र कपालादिकार्यनाशः, तत्र तादृशोपादाननाश एवं कारणरूपेण कपालादेर्नाशः, तस्य स्थूलरूपाविरोधित्वेऽपि कारणस्वरूपविरोधित्वं सम्भवतीति—वाच्यम्; तत्र 'कपालिका नष्टे'त्येवं प्रत्ययेन 'कपालं नष्टमि'ति प्रत्ययाभावेन कपालिकाप्रतियोगिकस्य तस्य कपालप्रतियोगिकत्वासम्भवात्, तदुत्तरकालोत्पन्नस्य स्थूलरूपेण कपालनाशस्य नाशकालाभावाच्चेति भावः। *ननु* प्रथमक्षणे चरमतत्त्वज्ञानम्, तत्क्षण एव मूलाज्ञाननाशः, द्वितीयक्षणे सर्वदृश्यनाशः, तृतीयक्षणे तत्त्वज्ञाननाशः सर्वदृश्यनाशनाशश्च, तौ च तत्त्वज्ञानजन्यौ तृतीयक्षणस्वरूपौ, तन्नाशक्षण एव विदेहकैवल्यम्, इत्यत आह—*चरमक्षणस्येति*॥ चरमतत्त्वज्ञानतृतीयक्षणरूपस्य विदेहकैवल्यावाप्तिक्षणस्येत्यर्थः। *सकलदृश्यनाशत्वसम्भवेऽपीति*॥ कपालरूपस्य घटनाशस्य कपालनाशदशायां कपालनाशरूपत्ववत् सर्वदृश्यनाशस्य नाशदशायां स नाशस्तत्क्षणस्वरूपः; सर्वदृश्यनाशस्यापि तत्क्षणस्वरूपत्वावश्यकत्वात्, अतिरिक्तत्वे गौरवादिति भावः। *तस्य=चरमक्षणस्य। *ननु* एवं 'विद्वानि'ति श्रुतिजन्यस्य 'ज्ञानाद् दृश्यं नष्टमि'ति प्रत्ययस्य को विषय इति, अत आह—*उक्तावस्थित्यभावविषयकतयेति*॥ प्रपञ्चनाशस्य तत्त्वज्ञानप्रयुक्तत्वं नास्तीत्युक्त्वोक्तावस्थित्यभावे ज्ञानप्रयुक्तत्वमुपपादयितुमुपसंहरति—*तस्मादिति*॥ *स एवेति*॥ उक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽज्ञानप्रयुक्त-तत्संस्कारान्यतराभाव एव। *ननु* ज्ञानोत्तरकालीनस्यैव ज्ञानप्रयुक्तत्वम्, नतु ज्ञानोत्पत्तिकालीनस्येत्यत आह—*ज्ञानादिति*॥ *ननु* उक्तप्रत्यय उक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकोक्ताभावो न भासते; ज्ञानसमानकालीनस्य तस्य ज्ञानप्रयुक्तत्वासम्भवात्, किन्तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावः, स च तत्त्वज्ञानप्रयुक्ताज्ञाननाशक्षण एव सम्भवति, न तु पूर्वम्; उक्तान्यतररूपप्रतियोगिसत्त्वे तदभावरूपस्य तस्यासम्भवाद् उक्तान्यतरनाशद्वारैवोक्ताभावस्य तत्त्वज्ञानप्रयोज्यत्वं भासते, न साक्षात्; असम्भवात्, अत आह—*ज्ञाननाशकालीनस्येति*॥ नाशद्वारैव ज्ञानप्रयोज्यस्येति शेषः॥ *तस्य=ज्ञानादिदृश्यनाशस्य॥ *सत्यत्वापत्तेरिति*॥ तथाचोक्तान्यतरान्तःपातिज्ञानोत्पत्तिकालीनस्य सकलदृश्यनाशात् प्रागेव सतो नित्यस्यापि स्वप्रयोजकाज्ञानसमानविषयकत्व-स्वाश्रयकालपूर्वत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्याज्ञानप्रयुक्त-तत्संस्कारान्यतराभावस्य 'ज्ञानादुक्ताभावः' इति प्रतीतिबलात् स्वरूपसम्बन्धरूपं साक्षाद् ज्ञानप्रयोज्यत्वं दुःखप्रागभावस्य प्रायश्चित्तप्रयोज्यत्ववत् सिद्ध्यति। प्रयोजकतावच्छेदकसम्बन्धस्तादात्म्यम्, प्रयोज्यतावच्छेदको विशेषणता। यदि प्रयोजकताघटकसम्बन्धः कालिकः, तदा स्वप्रयोजकाज्ञानसमानविषयकज्ञानाधिकरणकालत्व-स्वाश्रयकालपूर्वत्वोभयसम्बन्धः प्रतियोगितावच्छेदक इति भावः। 'स एवे'ति व्यावर्त्यांशमुपसंहरति—*न तु कपालादिनाश इति*॥ ज्ञानाधीन इत्यनुषज्यते। *इति=इतिरीत्या॥ यदि तु प्रयुक्तत्वं व्यापकत्वं पूर्वव्याख्यातमाद्रियते, तदाऽपि निवर्त्यत्वस्य नाशघटितत्व उक्तरीत्या "विद्वानि"ति श्रुतिविरोधाद् उक्तावस्थितिविरहघटितमेव निवर्त्यत्वमिति बोध्यम्। उक्तावस्थितिसामान्याभावघटितलक्षणाकरणे सृष्टिकाले

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्याप्तिः, सा 'ज्ञानप्रयुक्ते'त्यादिकरणाद् नेत्यर्थः। *ननु*—उक्तावस्थित्यभावोऽपि न ब्रह्मज्ञानप्रयुक्तः; प्रलयादौ ब्रह्मज्ञानं विनाऽपि तत्सत्त्वेन तस्य ब्रह्मज्ञानानधीनत्वात्, इत्यत उक्तम्—*मुद्गरपातेनेति* ॥ उपलक्षणमिदम्—ब्रह्मज्ञानान्येनादृष्टादिनेत्यर्थः। प्रयुक्तत्वं तृतीयार्थः। तस्य च विरहपदार्थद्वयेऽन्वयः। तथाच घटादिस्वरूपप्रतियोगिकविरहस्य ब्रह्मज्ञानान्यप्रयुक्तत्वेऽपि घटादिसंस्कारप्रतियोगिकोक्तावस्थितिसामान्याभावस्य ब्रह्मज्ञानान्याप्रयुक्तत्वेन ब्रह्मज्ञानप्रयुक्तत्वं तस्याक्षतमिति भावः। यदि च चरमक्षणे स्वेतरस्येव स्वस्यापि ध्वंसत्वं स्वीक्रियते; एकत्रापि तत्र रूपभेदेन ध्वंसत्वं प्रति प्रतियोगित्वानुयोगित्वयोः सम्भवात्, सकलदृश्यत्वेन हि तत्र प्रतियोगित्वम्, चरमतत्त्वज्ञानाश्रयतत्क्षणव्यक्तित्वेनानुयोगित्वम्; 'घटा-

## विट्ठलेशीयटिप्पणी

मुद्गरपातनाश्यघटादाविव प्रलयेऽदृष्टनाश्यद्व्यणुकारम्भकपरमाणुसंयोगेऽप्यव्याप्तिसत्त्वात् तदकथनेन न्यूनतां परिहर्तुं मुद्गरपातपदं व्याख्यातुमवतारयति—*नन्विति* ॥ पतत्यनेनेति पातः=अदृष्टम्, मुद्गरश्च पातश्च=मुद्गरपातम्, तेन, इति व्याख्यानेनादृष्टसङ्ग्रहसम्भवेऽपि नाशकान्तरसङ्ग्रहायाजहत्स्वार्थलक्षणया ब्रह्मज्ञानान्यत्वावच्छिन्नपरतामाह—*इदमुपलक्षणमिति* ॥ 'अदृष्टादिने'त्यादिना मुद्गर-पाषाण-क्रियाविशेष-कालादिः ॥ *प्रयुक्तत्वम्*=स्वरूपसम्बन्धरूपम् ॥ *विरहपदार्थद्वय इति* ॥ अवस्थितिपदार्थद्वयान्वितेत्यादिः। एवं सति ज्ञानप्रयुक्तस्वरूपावस्थितिविरह-स्वसंस्कारावस्थितिविरहद्वयकत्वं नार्थः; उक्तघटादावव्याप्तितादवस्थ्यात्, किन्तु ज्ञानप्रयुक्तस्वरूप-स्वसंस्कारान्यतरविरहप्रतियोगित्वमर्थ इति बोधयन् सामान्यपदप्रयोजनं व्यञ्जयन् ज्ञानान्यप्रयुक्तावस्थितिविरहप्रतियोगिनि लक्षणं सङ्गमयति—*तथाचेति* ॥ घटादिस्वरूपप्रतियोगिकेति* ॥ घटादिमात्रप्रतियोगिकेत्यर्थः। *ब्रह्मज्ञानान्यप्रयुक्तत्वेऽपीति* ॥ तथाच तदभावस्य लक्षणाघटकत्वात् सामान्यपदानुपादाने मुद्गरादिनाश्यघटेऽव्याप्तिरिति भावः। *घटादिसंस्कारप्रतियोगिकेति* ॥ घटादि, तत्संस्कारश्च; उभयप्रतियोगिकेत्यर्थः। *उक्तावस्थितिसामान्याभावस्येति* ॥ स्व-स्वसंस्कारान्यतरत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः। *तस्याक्षतमिति* ॥ तथाच लक्षणघटकोक्ताभावप्रदर्शनायैव सामान्यपदोपादानमिति भावः। अत्र प्रयुक्तपदस्य व्यापकत्वे लक्षणा, अवस्थितिविरहस्योक्तद्विविधान्यतरत्वद्वयावच्छिन्नप्रतियोगिताकाभावद्वयादेरन्यतरत्वेन निवेशे गौरवं च, सामान्यपदस्य चोक्तरीत्या वैयर्थ्यम्, 'ज्ञानाद् दृश्यं सर्वं नष्टमि'ति प्रत्ययस्य चात्यन्ताभावविषयकत्वे नाञ्जस्यम्; पञ्चम्यर्थानन्वयात्, णशधातोर्नाशार्थत्वात् चरमक्षणादेरनष्टत्वेनाभावे सर्वपदार्थानन्वयापत्तिश्च, इत्यतो ज्ञाननिवर्त्यपदस्य ज्ञानजन्यनाशप्रतियोगित्वार्थकत्वं व्यवस्थापयितुं तादृशार्थे तत्त्वज्ञाननाशस्य प्रतियोगिविधया तत्त्वज्ञानजन्यत्वाद् न तत्राव्याप्तिः, इत्युक्तचरमक्षणेऽव्याप्तिमात्रं दोषं परिहर्तुमाह—*यदि चेति* ॥ पूर्वोत्तरप्रकारान्तराणां सत्त्वात् 'यदि चे'त्युक्तम्। *चरमक्षण इति* ॥ चरमसाक्षात्कारस्य द्वितीये सर्वदृश्योच्छेदाधिकरणीभूत उत्तरक्षणे विदेहकैवल्यप्राप्तेर्भावित्वात् तत्पर्यन्तमेव मुच्यमानतज्जीवक्षणव्यवहारात् चरमक्षण इत्यर्थः। *ध्वंसत्वं प्रतीति* ॥ अत्यन्ताभावत्व-ध्वंसत्वादिकं स्वाश्रयीभूताभावे प्रतियोगिनः सम्बन्धः। तस्य चैकस्मिन्नपि प्रतियोगित्वानुयोगित्वे गादाधरीयसिद्धान्तलक्षणोक्ततद्घट-तत्पटसंयोगस्येव सम्भव इति भावः। इयांस्तु विशेषः—तत्र तद्घटे तत्पटसंयोगनिरूपितप्रतियोगित्वानुयोगित्वे तन्निरूपक-तदवच्छेदकरूपयोस्तत्पटानुयोगिकत्व-तत्पटप्रतियोगिकत्वयोर्भेदः, इह तु चरमक्षणे ध्वंसत्वनिरूपितप्रतियोगितानुयोगित्वे तदवच्छेदकरूपयोर्भेदः, इत्याह—*सकलदृश्यत्वेनेति* ॥ प्रथममहाप्रलयाव्यवहितपूर्वक्षणे द्व्यणुकत्वावच्छिन्नप्रतियोगिताकध्वंस उक्तसिद्धान्तलक्षण उक्तः, तथाऽयं सर्वदृश्यत्वावच्छिन्नसर्वदृश्यनिष्ठप्रतियोगिताको ध्वंसः। एतस्य प्रतियोगिता हि चरमतत्त्वज्ञान-तदुत्पत्तिक्षण-तद्द्वितीयक्षणघटितसर्वदृश्येषु; पूर्वोत्पन्नानां दृश्यनाशानामपीदानीमुत्पद्यमानदृश्यनाशरूपत्वादिति भावः। इदञ्च दृश्यं तत्पुरुषीयाज्ञानकल्पितं तत्पुरुषीयज्ञानाद् नश्यतीति टीकायामेव स्फुटमनुपदमेवोक्तं न विस्मर्तव्यम्। *तत्त्वज्ञानाश्रयेति* ॥ तत्त्वज्ञानाश्रयत्वाभिमतेत्यर्थः; ज्ञानानाश्यत्व-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावे स नास्ती'त्यादिप्रत्ययबलेनाश्रमस्वामिनां मते घटाभावादिप्रतियोग्यनुयोगिकस्यात्यन्ताभावत्वस्येव 'ज्ञानात् सर्वं दृश्यं नष्टमि'त्यादिप्रत्ययबलेन सर्वदृश्यप्रतियोगिकस्य चरमक्षणानुयोगिकस्य ध्वंसत्वस्य सम्भवात्, तदा 'ज्ञानप्रयुक्तावस्थिती'त्यादेर्ज्ञानाधीनो यः स्व-स्वीयसंस्कारोभयस्य नाशः, तत्प्रतियोगित्वमर्थः ।

## विट्ठलेशीयटिप्पणी

सत्यत्व-तन्नाशकान्तरकल्पनापत्तिभयेन द्वितीयक्षणे तन्नाशस्याप्यावश्यकत्वेन तदाश्रयत्वासम्भवात्, तदुत्पत्तिक्षण-व्यक्तेश्च ज्ञानजन्यनाशरूपत्वासम्भवात् । *तत्क्षणव्यक्तित्वेनेति* ॥ तत्त्वज्ञानद्वितीयक्षणव्यक्तित्वेनेत्यर्थः । *ननु* तद्घट-तत्पटसंयोगस्य तद्घटे प्रतियोगित्वानुयोगित्वे परस्परं तयोर्विशिष्टबुद्ध्यनुरोधात् स्वीक्रियेते, एकस्मिन् ध्वंसत्वं-प्रतियोगित्वानुयोगित्वयोः स्वीकारे तु किं प्रमाणमिति ? अत आह—*ज्ञानात् सर्वं दृश्यं नष्टमिति प्रत्ययबलेनेति* ॥ इदानीमित्यादिः । *ननु* संयोगस्येव ध्वंसत्वादेः सम्बन्धत्व एकस्मिन् तत्प्रतियोगित्वानुयोगित्वयोः सत्त्वे च मानाभावः ; उक्तप्रत्ययस्य योग्यताबलेन नाशजनकज्ञान-तदधिकरणीभूततत्क्षणाभ्यामतिरिक्तसर्वदृश्यप्रतियोगिक-नाशावगाहितयाऽप्युपपत्तिसम्भवात्, इत्यत आह—*घटाभावे स नास्तीति प्रत्ययबलेनेति* ॥ *स इति* ॥ घटाभाव इत्यर्थः । स्वस्मिन् स्वस्य वृत्तेरनुपगमादिति भावः । *ननु* विशिष्टबुद्धिमात्रे विशेष्य-विशेषण-भेदभानोपगमे पूर्वं 'घटाभावो घटभाववानि'ति प्रत्ययस्य भ्रमत्वापत्तिरित्याशङ्क्य परिहृतम्, तेनेदं विरुद्ध-मिति चेत्, *शृणु* ; अत एवाश्रमस्वामिनां मत इत्युक्तम् । वस्तुतस्तु—तत्र घटविरोध्यभावत्वावच्छिन्ने घटप्रतियोगिकाभावत्वावच्छिन्नस्य भेदसमानाधिकरणविशेषणतासम्बन्धेन वृत्तिः प्रतिपादिता, इह घटप्रतियोगिका-भावत्वावच्छिन्ने घटप्रतियोगिकाभावत्वावच्छिन्नस्य केवलविशेषणतासम्बन्धसत्त्वेऽपि भेदसमानाधिकरणविशेषणता-सम्बन्धेन वृत्तिर्नास्ति, इति तत्र तदभावप्रत्ययः प्रतिपाद्यते; इति न कोऽपि विरोधः । 'आश्रमस्वामिनां मते' इत्युक्तिस्तु घटाभावाभावस्य घटस्वरूपत्वेऽतिरिक्तत्वे वा घटाभावे स्वप्रतियोगिकात्यन्ताभावत्वासम्भवाद् अभावसामान्यस्याधिकरणस्वरूपत्वमतेऽभावप्रतियोगिकाभावस्याधिकरणीभूताभावत्वरूपत्वमते वा तत्सम्भव इति ज्ञापयितुमिति भावः । *अत्यन्ताभावत्वस्येवेति* ॥ अनुयोगित्वसम्बन्धेन हि अभावे प्रतियोगिनो विशिष्टबुद्धिः, अनुयोगित्वं चात्यन्ताभावेऽत्यन्ताभावत्वम्, ध्वंसे ध्वंसत्वम्, भेदादौ भेदत्वादि । *ननु* 'घटो नास्ति' इति प्रत्ययेऽभावेऽत्यन्ताभावत्वरूपानुयोगित्विसम्बन्धेन घटस्य भानादत्यन्ताभावत्वस्य सम्बन्धत्व-सिद्धावपि ध्वंसत्वरूपानुयोगित्वस्य न तत्सिद्धिः ; 'घटो नष्टः' ध्वस्तः ; नश्यति, ध्वंसते' इत्यादि प्रत्ययानां प्रतियोगिताप्रकारकत्वात्, तत्र कर्तृप्रत्ययार्थप्रतियोगितायां धात्वर्थध्वंसस्य निरूपितत्व-स्वरूपसिध्वंसत्वनिरू-पितत्वसम्बन्धेन भानेऽपि ध्वंसत्वस्य सम्बन्धत्वासिद्धेरिति—चेत्, *न* ; ध्वंसादेरत्यन्ताभावविरोधित्वमतेऽ-न्तरा श्यामे घटे 'रक्तं रूपं नास्ती'ति प्रत्ययस्य ध्वंसे ध्वंसत्वसम्बन्धेन घटप्रकारकत्वेन ध्वंसत्वस्यापि तत्सिद्धेः । नच—पूर्वापररक्तिमध्वंसादिमति रक्तेऽपि तत्प्रसङ्ग इति—वाच्यम् ; तत्कालावच्छेदेन ध्वंसस्य रक्तरूपत्वावच्छिन्न-प्रतियोगिताकत्वानुपगमात्, रक्तरूपानधिकरणकालावच्छेदेनैव तत्र तदुपगमात् । एवञ्च ध्वंसत्वस्य सम्बन्धत्व-सिद्धौ—'ज्ञानाद् इदानीं सर्वं दृश्यं नष्टमि'त्यादिप्रत्ययस्यासङ्कोचेनोपपादनाय तत्र नाशं प्रति जनकत्वेनाधिकरणत्वेन च भासमानज्ञान-तत्कालयोरपि प्रतियोगित्वभानमावश्यकम् । एवमभावसामान्यस्याधिकरणस्वरूपत्वमते तत्क्षणाधि-करणकत्वेन भासमाननाशस्य तत्क्षणस्वरूपत्वात् तत्क्षणस्य ज्ञानजन्यसकलदृश्यप्रतियोगिकध्वंसत्वोपगमात् तदनु-योगित्वमप्यावश्यकमिति भावः । *तदेति* ॥ चरमक्षणे ज्ञानजन्यनाशप्रतियोगिताघटितवक्ष्यमाणलक्षणसमन्वया-दिति भावः । अज्ञानप्रयुक्त-तत्संस्कारनाशस्य पूर्ववर्तिज्ञानजन्यत्वेऽप्यज्ञान-तत्संस्कारनाशस्य ज्ञानोत्पत्तिकालोत्पत्ति-कस्य ज्ञानं विनाऽसम्भवेन 'ज्ञानादज्ञानं नष्टमि'ति प्रत्ययेन च ज्ञानप्रयुक्तत्वस्य स्वरूपसम्बन्धरूपस्य सम्भवेऽपि कारणत्वस्य पूर्ववर्तित्वघटितत्वेन ज्ञानजन्यत्वासम्भवात्, प्रयुक्तपदस्य यथाश्रुतत्वानुरोधाच्च व्याचष्टे—*ज्ञानाधीन इति*॥ अवस्थितिसामान्यपदार्थमाह—*स्व-स्वीयसंस्कारोभयस्येति*॥ नाशो विरहपदार्थः । अत्र ज्ञानप्रयुक्तत्वनाश-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उत्तरज्ञाननाश्यत्वमादाय पूर्वज्ञाने सिद्धसाधनात्–*संस्कारनिवेशः* ॥ स्मृतिनाश्यसंस्कारकत्वमादायानुभवे सिद्धसाधनात् *स्वेत्यस्य* निवेशः ॥ संस्कारस्य स्मृत्यनाश्यत्वे तु न तद् निवेश्यम् । *अवस्थितिश्चेत्यादि* ॥ अवस्थितिपदार्थं उभयरूप इत्यर्थः । *ननु* मुद्गरपातादिनाऽपि घट-तत्संस्कारयोर्नाशसम्भवेन नोक्तनाशो ज्ञान-प्रयुक्तः, तत्राह—*तथाचेत्यादि* ॥ विरहपदे नाशपरे । *विरहाभावादिति* ॥ तथाचोक्तश्रुत्यादिसिद्धो दण्डाद्यनाश्यो घटादिसंस्कारः प्रलयादिनिष्ठ आवश्यक इति भावः । *सः = स्वरूप संस्कारोभयनाशः । *ज्ञानप्रयुक्त एवेति* ॥ स्वरूपनाशात्मकसंस्कारप्रतियोगिकस्य नाशस्यापि स्वरूपनाशत्वेनोभयप्रतियोगिक-नाशो ज्ञानप्रयुक्त एव, इति नातीतघटाद्यव्याप्तिरिति भावः । *अथवा*–'ज्ञानप्रयुक्तावस्थिती'त्यादेरयमर्थः-—

विट्ठलेशीयटिप्पणी

स्व-संस्कारनाशोभयकत्वं नार्थः ; नाशस्य द्वेधा निवेशनगौरवात्, मुद्गरनाश्यघटनाशस्य ज्ञानानधीनत्वेन तत्रा-व्याप्तेश्च, उभयप्रतियोगिकत्वेनैकनाशनिवेशे तु तद्वारणमनुपदमेव करिष्यते । ज्ञानाधीनस्वनाशकत्वोक्तावाह—*उत्तरज्ञानेति* ॥ ज्ञानाधीनस्वसंस्कारनाशकत्वोक्तावाह—*स्मृतीति* ॥ *ननु* उत्तरज्ञानं पूर्वज्ञानीयाधिष्ठान-तत्त्वसाक्षात्काररूपं चेत्, इष्टापत्तिः, तदन्यच्चेत्, तद्विवक्षायां नायं दोषः, नाप्युत्तर इति चेत्, *न* ; ज्ञानपदस्यात्र पक्षे यथाश्रुतार्थकत्वात् सामान्यपदप्रयोजनपरतया 'तथाचेति' ग्रन्थसङ्गमनसम्भवेऽपि 'ब्रह्मज्ञानप्रयुक्त एव सः' इति यथाश्रुतैवकारयोजनाय घटादि-तत्संस्कारोभयनाशस्य ज्ञानाप्रयुक्तत्वशङ्कयाऽवतारयति—*नन्विति* ॥ 'मुद्गरपातादिने'त्यादिनाऽदृष्टपरिग्रहः, सृष्टिकाले मुद्गरेण घटादिस्वरूपमात्रनाशेन कारणीभूतकपालादिसंस्काराणां सत्त्वेऽपि ब्रह्मज्ञानं विनाऽपि कार्यसामान्यानधिकरणे कार्य-द्रव्यानधिकरणे वा प्रलयेऽदृष्टादिना कपालादि-संस्काराणामपि विनाशाद् घटादितत्संस्कारोभयनाशो न ब्रह्मज्ञानप्रयुक्त इत्यर्थः । *ननु* प्रकृते को वा घटसंस्कारः ? तत्र च किं प्रमाणम् ? किञ्च प्रयोजनम् ? अत आह—*तथाचेति* ॥ *उक्तश्रुतिः= "तद्धेदं तर्ह्यव्याकृतमासीदि"त्यादिश्रुतिः । घटादिसंस्कारो ब्रह्मज्ञानैकनाश्याव्याकृताविद्यारूप आवश्यकः ; पुनः सृष्ट्यनुरोधात् । *ननु* मुद्गरेण घटस्य स्वरूपनाशः सृष्टिकाले ज्ञानात् पूर्वं कृतः ; ज्ञानेन तु तत्संस्कारमात्र-नाशः कृतः, तथाचोभयनाशो न ज्ञानप्रयुक्तः, अत आह—*स्वरूपनाशात्मकेति* ॥ प्रागभावनाशात्मककार्य-नाशस्य प्रागभावनाशत्ववदर्शनेन स्वनाशनाशस्य स्वनाशत्वं स्वीकार्यम् ; स्वनाशनाशकालेऽपि स्वनाशप्रत्ययादिति भावः ॥ अथैवमनुभवनाशरूपसंस्कारनाशस्यानुभवनाशरूपतयोभयप्रतियोगिकत्वेन स्मृतिजन्यतत्प्रतियोगित्वमादायानु-भवे सिद्धसाधनं दुर्वारम् । नच—अनुभवजन्यस्मृतिजनकसंस्कारोऽतिरिक्तो भावरूप इति—वाच्यम् ; क्लृप्तानु-भवनाशेनैव स्मृतेरुपपत्तावतिरिक्ततत्कल्पने मानाभावात्, भावरूपातिरिक्तसंस्कारपक्षेऽपि तन्नाशस्यापि लाघवेनानुभवनाशत्वावश्यकत्वात् । एवं ज्ञानाधीनत्व-स्वसंस्कारोभयप्रतियोगिकनाशप्रतियोगित्वरूपनिष्कर्षेऽज्ञान-तत्प्रयुक्तयोरुक्तसाध्यासङ्गमनेऽपि तत्संस्कारयोर्न तत्समन्वयः ; अनवस्थापत्त्या संस्कारस्य संस्कारानभ्युपगमेना-प्रसिद्ध्या स्वपदेनोपादानासम्भवात् । नच—तथाप्युक्तनाशप्रतियोगित्वं संस्कारेऽस्त्येवेति—वाच्यम् ; अज्ञानस्य स्वपदेनोपादाने तन्निष्ठोक्तप्रतियोगित्वस्यैव स्वत्वघटितोक्तनिरुक्तयर्थत्वेन संस्कारनिष्ठोक्तप्रतियोगित्वस्योक्तनिरुक्तयर्थ-त्वाभावात् । नच—ज्ञानप्रयुक्तनाशप्रतियोगित्वमेव निरुक्त्यर्थः, ज्ञानप्रयुक्तमज्ञानादि-तत्संस्कारोभयनाशमादायो-भयत्र साध्यवत्त्वनिर्वाहात्, यद्वा—घटादिसंस्कारनाशस्य घटनाशरूपत्वेन घटनाशस्यापि संस्कारनाशत्वेन ज्ञानप्रयुक्तत्वात् प्रत्येकनाशद्वयमादायोभयत्र साध्यवत्त्वमुपपादनीयमिति—वाच्यम् ; एवं सति सामान्यपदवैयर्थ्यात्, स्वरूप-संस्कारोभयप्रतियोगिकत्वरूपसामान्यार्थेन नाशस्य साध्याघटकत्वेऽपि प्रत्येकं नाशमादायापि साध्यनिर्वाहेण निरुक्तोभयप्रतियोगिकैकनाशमादायैव साध्यनिर्वाहस्यानावश्यकत्वेन तत्सूचनरूपप्रयोजनस्याप्यसम्भवादित्यत आह—*अथवेति* ॥ अत्र कल्पे प्रयुक्तत्वं स्वरूपसम्बन्धरूपम्, प्रथमकल्पे व्यापकत्वमित्येव तस्य भेदः । नच—

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अज्ञानप्रयुक्त-तत्संस्कारान्यतरस्य पूर्वोक्तसम्बन्धद्वयेन योऽत्यन्ताभावो ज्ञानाधीनः, तत्प्रतियोगित्वं ज्ञाननिवर्त्यत्वम्,

## विट्ठलेशीयटिप्पणी

तर्हि प्रथमकल्पे 'तथाचे'ति फक्किकाव्याख्यानेऽज्ञान-तत्प्रयुक्त-तत्संस्कारान्यतराभावे 'ज्ञानप्रयुक्ताभावः' इति प्रत्ययबलेन स्वरूपसम्बन्धरूपप्रयुक्तत्वोपपादनं व्यर्थमिति—वाच्यम्; एतत्कल्पोपयोगितयैव तदुपपादनात्, किन्तु प्रथमेऽज्ञान-तत्संस्कारान्यतराभावाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावद्वयं प्रविष्टम्, अत्र त्वज्ञानप्रयुक्त-तत्संस्कारान्यतराभावमात्र-मित्यतोऽपि भेदः। नच—एवमज्ञान-तत्संस्कारयोरव्याप्तिरिति—वाच्यम्; अज्ञानस्याज्ञानप्रयुक्तस्थूलप्रपञ्च-सूक्ष्म-पूर्वोत्तरावस्थात्मकसंस्काररूपत्वात् संस्कारस्य चाज्ञानप्रयुक्तत्वेनाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावप्रतियोगित्व-स्यैवाज्ञान-तत्संस्कारयोः सत्त्वेनाव्याप्तिवारणसम्भवात्, प्रथमकल्पे तु ज्ञानोत्पत्तिकालेऽज्ञाननिवृत्तिः स्वजन्य-पटुतमसंस्कारसहितज्ञानकालेऽज्ञानसूक्ष्मावस्थारूपतत्संस्कारनिवृत्तिः, तदुत्तरक्षणे चाज्ञानप्रयुक्तस्थूलदेहेन्द्रियादि-प्रपञ्चनिवृत्तिरिति विशेषव्युत्पादनाय निरुक्तान्यतराभावद्वयोपादानं कृतम्, अत्र च लाघवमालोच्य निरुक्तै-कान्यतराभावनिवेशनं कृतमित्यविरोधः। *पूर्वोक्तसम्बन्धद्वयेन=स्वप्रयोजकाज्ञानसमानविषयकत्व-स्वाश्रयकाल-पूर्वत्वोभयसम्बन्धेन॥ स्वीयपटुतमसंस्कारविशिष्टाधिष्ठानतत्त्वसाक्षात्कारोत्तरक्षणेऽज्ञान-तत्सूक्ष्मावस्थारूपसंस्कार-तत्प्रयुक्तस्थूलप्रपञ्च-तत्संस्काराणां नियमेनासत्त्वाद् उक्तसाक्षात्कार उत्पत्तिक्षणावच्छेदेन निरुक्तोभयसम्बन्धावच्छिन्न-प्रतियोगिताकाज्ञानप्रयुक्त-तत्संस्कारान्यतराभाववत्त्वनिर्वाहात् सर्वत्र पक्षेषु साध्यवत्त्वनिर्वाहः। नच—उक्तान्यतर-त्वावच्छिन्नप्रतियोगिताकत्वं व्यर्थम्; ज्ञानप्रयुक्ताभावीयनिरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगित्वस्यैव सम्यक्त्वात्, प्रत्येकाभावमादाय सर्वत्र साध्यनिर्वाहादिति—वाच्यम्; अज्ञानस्य प्रयोजकाज्ञानान्तराप्रसिद्ध्या प्रथमसम्बन्धा-प्रसिद्ध्या तत्सम्बन्धावच्छिन्नाभावस्यैव केवलान्वयितया तदीयप्रतियोगितायां सम्बन्धान्तरस्य गौरवेणा-नवच्छेदकतया निरुक्तोभयसम्बन्धावच्छिन्नाभावाप्रसिद्ध्या तत्राव्याप्तिप्रसक्त्या तद्वारणाय तत्सार्थक्यात्। *अन्यतरस्य =अन्यतरत्वावच्छिन्नस्य॥ *ज्ञानाधीनः=अधिष्ठानतत्त्वज्ञानाधीनः॥ *ननु* निरुक्ताभावप्रतियोगितावच्छेदकी-भूतनिरुक्तान्यतरत्ववत्त्वमेवास्तु, किं ज्ञानाधीनाभावनिवेशनेन? इति—चेत्, *अत्रोच्यते*;—अज्ञान-तत्प्रयुक्तान्यतर-त्वस्य प्रपञ्चसत्यत्ववादिभिरपि प्रपञ्च उपगतस्य साधने सिद्धसाधनात्। निरुक्ताभावप्रतियोगितावच्छेदकीभूतोक्ता-न्यतरत्वसाधनेऽपि तत्रशब्देनैतत्पुरुषीयाज्ञानकल्पितवियदादि-तत्संस्कारान्यतरस्योपादाने तत्प्रयोजकमूलाज्ञाना-समानविषयके वियदादिज्ञाने वियदादौ वा प्रथमसम्बन्धाभावेनैतत्पुरुषीयाज्ञानकल्पितवियदादेरेतत्पुरुषीयज्ञानेन निवृत्त्युत्तरोत्पन्ने पुरुषान्तरीयब्रह्मज्ञाने द्वितीयसम्बन्धाभावेन तन्निष्ठमुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय तत्प्रतियोगित्वस्यैव तत्पुरुषीयाज्ञानकल्पितवियदादौ सर्वसिद्धस्य साधनप्रसङ्गः, तत्पुरुषीयब्रह्मज्ञानेनापि तत्पुरुषाज्ञान-तत्कल्पितवियदादेर्निवृत्तिमनभ्युपगम्याप्रयोजकत्वं चाशङ्क्येत, अज्ञानपदयौगिकार्थज्ञाननिवर्त्यत्वरूपतानुपपत्तिश्च। ज्ञानप्रयुक्तघटितोक्तसाध्यस्य तत्पुरुषीयस्वाधिष्ठानतत्त्वसाक्षात्कारप्रयुक्तत्वेन विशेषितस्य तत्पुरुषीयाज्ञानघटितोभय-सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगित्वं तत्पुरुषीयाज्ञानप्रयुक्त-तत्संस्कारान्यतरस्मिन् साधनीयम्। तथाच तत्पुरुषीयब्रह्मज्ञानं विनाऽपि पुरुषान्तरीयब्रह्मज्ञाननिष्ठोक्ताभावस्य तत्पुरुषीयब्रह्मज्ञानाप्रयुक्तत्वान्न तत्प्रसङ्गः सिद्ध-साधनम्। नच—तत्पुरुषीयब्रह्मज्ञाने विद्यमानेन तत्प्रयुक्तेनोक्ताभावेन वियदादिनिष्ठस्योक्ताभावस्य भेदात् सिद्धसाधन-तादवस्थ्यमिति—वाच्यम्; अधिकरणस्वरूपाभावानामधिकरणभेदेन भेदात्, उक्ताभावाधिकरणतायां तत्पुरुषीय-ब्रह्मज्ञानप्रयुक्तत्वानिवेशेनादोषात्। एवं तत्पुरुषीयब्रह्मज्ञाने जातेऽपि तत्पुरुषीयाज्ञानतत्कल्पितस्य निवृत्त्यनुपगमे "विद्वान् नाम-रूपाद्विमुक्तः" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिश्रुतिसिद्धस्य ज्ञानेऽज्ञान-तत्कल्पितनिवृत्ति-प्रयोजकत्वस्य भङ्गप्रसङ्गाद् नाप्रयोजकत्वशङ्का। एवं तत्पुरुषीयस्याज्ञानपदार्थज्ञाननिवर्त्यत्वरूपतोपपत्तिश्चेति।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

इति पूर्वमते नाशस्येवैतन्मतेऽत्यन्ताभावस्य ज्ञानसमानकालीनस्यापि ज्ञानाधीनत्वम् ; 'सर्वं दृश्यमुच्छिद्यते' 'तत्त्वज्ञानादज्ञानप्रयुक्तमुच्छिद्यते' इति प्रत्ययात् । *ननु*—उक्तात्यन्ताभावस्याविद्यकत्वेन तस्याप्युक्तात्यन्ताभावो ज्ञानाधीनो वाच्यः, एवं तस्यापीत्यनवस्थेति—चेत्, *न* ; पूर्वमते एकस्यैव स्व-स्वेतरनाशत्ववदेतन्मतेऽप्येकस्यैव स्व-स्वेतरोक्तात्यन्ताभावत्वस्य सम्भवात् । *ननु*—प्रलयादावुक्तात्यन्ताभावस्य ब्रह्मज्ञानं विनाऽपि सत्त्वेन न स तत्प्रयुक्तः, तत्राह—*तथाचेत्यादि* ॥ *मुद्गरपातेन = ब्रह्मज्ञानान्येन ।

विठ्ठलेशीयटिप्पणी

*ज्ञानसमानकालीनस्य=ज्ञानोत्पत्तिकालीनस्य ॥ यद्यपि ज्ञानोत्तरक्षण एव कालिकसम्बन्धावच्छिन्नाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावः ; तथापि स्वाश्रयपूर्वत्वसम्बन्धावच्छिन्नतदभावो ज्ञानोत्पत्तिक्षण एवेति भावः । ईदृशस्य कथं ज्ञानाधीनत्वम् ? तत्राह—*पूर्वमते नाशस्येवेति* ॥ अन्यथा ज्ञानोत्पत्तिकालोत्पत्तिकनाशप्रतियोगिन्यज्ञानादाव-व्याप्तिः स्यादिति भावः । तत्र प्रतीतिं प्रमाणयति—*सर्वं दृश्यमुच्छिद्यत इति* ॥ 'तत्त्वज्ञानादि'त्यनुषज्यते । उच्छेदः=पूर्वमते नाशः, एतन्मते निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावः, तत्प्रतियोगित्वं वा धात्वर्थः । प्रतियोगित्वमाश्रयत्वं वा यथायथमाख्यातार्थः । धात्वर्थे ज्ञानप्रयुक्तत्वस्य पञ्चम्यन्तार्थस्यान्वयः । उक्तप्रत्ययाद् ज्ञानोत्पत्तिकालोत्पत्तिकाज्ञानादिनाशेऽपि ज्ञानाधीनत्वम् । पूर्वमत इवैतन्मतेऽपि ज्ञानोत्पत्तिक्षणावच्छेदेन ज्ञाननिष्ठनिरुक्तोभय-सम्बन्धावच्छिन्नदृश्यसामान्याभावेऽपि ज्ञानाधीनत्वं स्वरूपसम्बन्धरूपं भासते । तत्त्वज्ञानानुत्पत्तिक्षणे तदभावात् तदुत्तरकालमात्रवर्तित्वनियततत्प्रयुक्तत्वं कथं तदुत्पत्तिकालीने भासते ? इत्याशङ्क्य, एतत्प्रत्ययस्य तत्त्वज्ञानोत्तरकाल-मात्रवर्तित्वनियततत्प्रयुक्तत्वावगाहिप्रत्ययसमानाकारत्वेन तज्जातीयतदवगाहित्वमिति समाधिं व्यञ्जयितुं तन्निश्चत-तदवगाहिप्रत्ययं दर्शयति—*तत्त्वज्ञानादज्ञानप्रयुक्तमुच्छिद्यत इति* ॥ अत्र यथाऽज्ञानप्रयुक्तस्य वियदादेरुच्छेदो नाशः, कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावो वोत्तरक्षणमात्रभावी स्वरूपसम्बन्धरूपज्ञानप्रयुक्तत्वेन पञ्चम्या प्रत्याय्यते ; अन्यथा पञ्चम्या नानार्थत्वप्रसङ्गादिति भावः । *उक्तात्यन्ताभावस्य=उक्तोभयसम्बन्धावच्छिन्न-प्रतियोगिताकस्याज्ञानप्रयुक्त-तत्संस्कारान्यतराभावस्य ॥ *आविद्यकत्वेन=अज्ञानप्रयुक्तपरिणामत्वेन ॥ *तस्येति* निरुक्तान्यतरत्वावच्छिन्नाभावस्येत्यर्थकमधिकम्, 'उक्तात्यन्ताभावस्ये'त्यस्यैवोक्तात्यन्ताभाव इत्यत्रान्वयसम्भवात् । 'पर्वतस्य धूमवत्त्वेन तस्य वह्निमत्त्वमि'त्यप्रयोगात् ; 'पर्वतस्य धूमवत्त्वेन वह्निमत्त्वमि'त्येव प्रयोगात् । *उक्तात्यन्ताभावः=स्व-स्वसंस्कारसाधारणान्यतरत्वावच्छिन्ननिरुक्तसम्बन्धद्वयावच्छिन्नप्रतियोगिताकाभावः ॥ *ज्ञानाधीनः=तत्त्व-ज्ञानाधीनः । *एवं तस्यापीति* ॥ अज्ञानप्रयुक्त-तत्संस्कारान्यतरत्वावच्छिन्नोक्तसम्बन्धद्वयावच्छिन्नप्रतियोगिताका-भावस्याविद्यकत्वेन स्व-स्वसंस्कारसाधारणान्यतरत्वावच्छिन्नोक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तत्त्वज्ञानाधीनो वाच्य इत्यर्थः । *अनवस्थेति* ॥ यद्यपि तादृशाभावपरम्पराया उच्छेदेऽपि पूर्वोत्पन्नचरमतत्त्वज्ञानेनैव प्रयुक्तत्व-सम्भवेन प्रयोजकान्तरापेक्षाविरहादियमनवस्था न दोषावहा, तथाप्येकैकघटितापरगुरुधर्मावच्छिन्नप्रतियोगितानां तन्निरूपकाभावानां चानन्तानां कल्पने गौरवदोषावहा भवत्येवेति भावः । *एकस्य=चरमक्षणस्य ॥ *स्वम्=चरमक्षणः ॥ *स्वेतरत्=अज्ञानादिनिखिलप्रपञ्चः, तदुभयसाधारणसर्वदृश्यत्वावच्छिन्नप्रतियोगिताकनाशत्ववदित्यर्थः । *एकस्य=अज्ञानप्रयुक्त-तत्संस्कारान्यतरत्वावच्छिन्नाभावस्य ॥ स्वम्=उक्तात्यन्ताभावः ॥ स्वेतरत्=अज्ञानादिनिखिल-प्रपञ्चः ; तदुभयप्रतियोगिकेत्यर्थः । *उक्तात्यन्ताभावत्वस्य=उक्तसम्बन्धद्वयावच्छिन्नाज्ञानप्रयुक्त-तत्संस्कारान्यतरत्वा-वच्छिन्नप्रतियोगिताकाभावत्वस्य । *सम्भवादिति* ॥ अज्ञानप्रयुक्त-तत्संस्कारान्यतरत्वरूपप्रतियोगितावच्छेदकैक्येन तन्निरूपकाभावभेदासम्भवादिति भावः । सत्ताजातिशून्यत्वाद्यवच्छिन्नप्रतियोगिताकाभावो यथा स्व-स्वेतराभावरूपः, तथेति बोध्यम् । 'तथाचे'ति ग्रन्थस्य पूर्वमतवद् व्याख्यानं दर्शयितुं तद्ग्रन्थमवतारयति—*नन्विति* ॥ *उक्तात्यन्ता-भावस्य=अज्ञानप्रयुक्त-तत्संस्कारान्यतराभावस्य ॥ *सः=उक्तात्यन्ताभावः ॥ *मुद्गरपातेन ब्रह्मज्ञानान्येनेति* ॥

इत उत्तरं विरहपदेऽत्यन्ताभावपरे । तथाचोक्तश्रुतिसिद्धो दण्डाद्यप्रयोज्यविरहप्रतियोगी घटादिसंस्कारः प्रलयनिष्ठ

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ज्ञानप्रयुक्तः=ज्ञानाधीनः । *अथवा*—*ज्ञानप्रयुक्तः=ज्ञानाधीनः *योऽवशिष्यतिसामान्यस्य, स्वात्मकसामान्यस्याभावः=तत्प्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । स्वात्मकञ्च स्वसमसत्ताकं ग्राह्यम्, तच स्व-स्वीय-संस्काररूपस्वीयपरिणामादिरूपमेव, न तु ब्रह्म । ज्ञानेन ह्यज्ञान-तत्परिणामसामान्याभावः स्वोत्पत्तिद्वितीयक्षणावच्छिन्नः साध्यते । साध्यता च तत्र क्षेमसाधारणी ॥

विट्ठलेशीयटिप्पणी

आवश्यक इति भावः । *सः=उभयसम्बन्धावच्छिन्नाज्ञानप्रयुक्त-तत्संस्कारान्यतरविरह इति पूरणीयम् । ज्ञानप्रयुक्तो ज्ञानाधीन एवेति यथाश्रुतं योजनीयम् । दर्शितव्याख्यानेषु प्रयुक्तत्वस्य प्रयोजकोत्पत्तिकालीनसाधारण्यम् । एवमवस्थिति-सामान्यपदार्थस्य स्व-स्वसंस्कारोभयरूपस्य तदन्यतरत्वेनानुगमे तद्घटकभेदयोर्विशेष्य-विशेषणभावे विनिगमनाविरहेण गौरवम्, तत्त्वज्ञानानुयोगिकतादात्म्यसम्बन्धावच्छिन्नप्रयोजकतानिरूपितत्वज्ञानानुयोगिकविशेषणसम्बन्धावच्छिन्न-प्रयोज्यतयोक्तसम्बन्धावच्छिन्नप्रतियोगिताकावस्थितिसामान्याभावनिष्ठया घटितस्य ज्ञाननिवर्त्यत्वस्यानुमानेन सिद्धावपि "विद्वान् नामरूपाद् विमुक्तः" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इति श्रुत्यर्थसाधनाय प्रवृत्तैतदनुमानस्य न साक्षात् तत्साधकत्वमायाति ; उक्तश्रुतिभ्यां ज्ञानादज्ञानादिनिवृत्तेर्जीवचैतन्यनिष्ठत्वेन प्रतिपादनात् तन्निष्ठप्रत्यासत्त्यैव तयोः प्रयोज्य-प्रयोजकभावलाभात्, इति दोषत्रयमसहमानस्तत्परिहाराय प्रकारान्तरेण व्याचष्टे—*अथवेति* ॥ *ज्ञान-प्रयुक्तो ज्ञानाधीन इति* ॥ ज्ञाननिष्ठा जीवचैतन्यानुयोगिकेन पूर्वक्षणावच्छिन्नेन समवायेन तादात्म्येन वाऽवच्छिन्ना या प्रयोजकता, तन्निरूपिता या जीवचैतन्यानुयोगिकेनोत्तरक्षणावच्छिन्नेन विशेषणतासम्बन्धावच्छिन्ना प्रयोज्यता, तदाश्रय इत्यर्थः । *स्वात्मकसामान्यस्य*॥ *स्वम्=अज्ञानादि, तादात्म्यसम्बन्धेन तद्विशिष्टसामान्यस्य तादात्म्य-सम्बन्धेन हि स्ववैशिष्ट्यं स्वीये परिणामे संस्कारे स्वस्मिंश्च ; स्वस्मिन्नपि केनचिद्रूपेण स्वस्य भेदसत्त्वाद् अभेदस्य चाखण्डस्य सम्भवात् तदुभयस्य तादात्म्यमक्षतमिति भावः । *ननु* तादात्म्येनाज्ञानादिरूपस्ववैशिष्ट्यं ब्रह्मणोऽपि, इति अज्ञानरूपस्वविशिष्टब्रह्माभावस्य ज्ञानाधीनत्वाद् ब्रह्मण्यतिव्याप्तिरित्यत आह—*स्वात्मकं चेति* ॥ तादात्म्येन स्वविशिष्टमित्यर्थः । *ग्राह्यमिति* ॥ तथाच स्वम्=अज्ञानादि, व्यावहारिकं प्रातिभासिकं वा, तद्विशिष्टं ब्रह्म न तत्समसत्ताकम्, इति ब्रह्मणि पारमार्थिके नातिव्याप्तिरिति भावः । तदाह—*तच्चेति* ॥ अज्ञानादेः स्वपदे-नोपादानेन तत्समसत्ताकं तद्विशिष्टं चेत्यर्थः । *स्वेति* ॥ स्वम्=स्वीयसंस्कारात्मकं सूक्ष्मरूपम्, स्वीयम्= परिणामात्मकं स्थूलरूपं चेत्यर्थः । एवकारेण ब्रह्मणो निवृत्तिः । *ननु* ज्ञानेनाज्ञानस्य स्वोत्पत्तिक्षणावच्छेदेनैव निवर्तनात् तदभावे नोत्तरक्षणवर्तित्वनियतं तत्प्रयुक्तत्वम्, इति स्वविशिष्टस्वाभावनिवेशे तत्राव्याप्तिः । नच—ज्ञानाधीनस्वविशिष्टस्वसंस्कारनिवृत्तिकत्वनिवेशे संस्कारेऽव्याप्तिसत्त्वेऽपि तादात्म्येन स्वविशिष्टयत्किञ्चित्प्रति-योगिकाभावे ज्ञानाधीनत्वनिवेशाद् नाज्ञानेऽव्याप्तिः ; तत्परिणामसंस्कारस्य ज्ञानेन स्वद्वितीयक्षणावच्छेदेनैव निवृत्तेरिति—वाच्यम् ; स्मृतिनाश्यसंस्कारकानुभवे सिद्धसाधनप्रसङ्गेन स्वविशिष्टं यद् यत्, तदभावकूटे ज्ञाना-धीनत्वस्य निवेश्यतयाऽज्ञानरूपस्वविशिष्टाज्ञानाभावस्योत्तरक्षणवृत्तित्वनियतज्ञानप्रयुक्तत्वाभावेनाव्याप्तेर्दुर्वारत्वात्, इत्यत आह—*ज्ञानेन हीति* ॥ *अज्ञान-तत्परिणामसामान्याभावः=तादात्म्यसम्बन्धेनाज्ञानरूपस्वावच्छिन्न-प्रतियोगिताकाभावः । स च न ज्ञानोत्पत्तिक्षणे ; अज्ञाननिवृत्तावपि तत्परिणामस्यानिवृत्तेः, किन्तु तदुत्तरक्षणे, इत्युत्तरक्षणवृत्तित्वनियतं ज्ञानप्रयुक्तत्वं तस्याक्षतम्, इति नाज्ञानाव्याप्तिरित्याह—*स्वोत्पत्तिद्वितीयक्षणावच्छिन्नः साध्यत इति* ॥ आकाशादिवद् ब्रह्मरूपतया वा नित्येऽज्ञानादिवदनादौ वाऽज्ञान-तत्परिणामसामान्यात्यन्ताभावे कथं ज्ञानप्रयुक्तत्वम् ? अत आह—*साध्यता चेति* ॥ यत्क्षणावच्छेदेन यत्र यस्य सत्त्वे सति तदुत्तरक्षणाव-च्छेदेन यस्य यत्र सत्त्वं सम्बन्धः, यत्क्षणावच्छेदेन यत्र यस्यासत्त्वे सत्यवश्यं तदुत्तरक्षणावच्छेदेन यस्य यत्रा-सत्त्वम्=सम्बन्धाभावः, तस्य तत्प्रयुक्तत्वमिति पारिभाषिकं साध्यत्वम् । पूर्वक्षणे तत्र ज्ञानसत्त्वादुत्तरक्षणे तत्राज्ञान-तत्परिणामसामान्याभावः इति प्रत्ययसिद्धं स्वरूपसम्बन्धविशेषरूपं वा नित्येऽप्यत्यन्ताभावे नैयायिकसिद्धमस्माभि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स चाभावः स्वान्यसर्वदृश्यविरोधी क्षणिक इति—*व्याख्या* । तदेतद् व्याख्याचतुष्टयं(१) दर्शितम् ।

सिद्धिव्याख्या

निर्वचनरूपत्वे बाधोऽपि नेति ध्येयम् । *ननु*—कारणात्मनाऽवस्थितिविरहाभावेऽङ्गीक्रियमाणे स्वरूपेणावस्थितिविरहाभावस्याप्यभ्युपगमापत्तिः । नच—'मुद्गरपातादिना घटो निवृत्तः' इत्यबाधितानुभवबलात् स्वरूपेणावस्थितिविरह एवाभ्युपगम्यत इति—वाच्यम्; तथा सति तत एव कारणत्मनाऽवस्थितिविरहस्याभ्युपगम्यतयाऽव्याप्तितादवस्थ्यमेवेति—चेत्, *न*; स्वरूपेणावस्थितिविरहमात्रमादायान्यथासिद्धस्य तस्यानुभवस्य कारणात्मनाऽवस्थितिविरहाविषयकत्वात्, इतरथा मुद्गरपातानन्तरं 'घटः स्वरूपेण निवृत्तः' इत्यनुभववत् 'कारणात्मना निवृत्तः' इत्यनुभवापत्तेः । ततश्च नातीतघटादावव्याप्तिरिति भावः । *यदुक्तम्*—'उत्तरज्ञानेन पूर्वज्ञानं निवृत्तमि'त्यबाधितानुभवसिद्धज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगिनि पूर्वज्ञानेऽतिव्याप्तिः,

विट्ठलेशीयटिप्पणी

ह्युपगम्यते । उत्तरक्षणावच्छिन्नस्य तत्सम्बन्धस्यानित्यत्वेन ज्ञानाधीनत्वस्य निरुक्तस्वात्मकसामान्याभावीयसम्बन्धे निवेशेनादोषाच्चेति भावः । *ननु* उक्ताभावस्यापि ब्रह्मानात्मकत्वेनाविद्यकदृश्यस्य सत्त्वे मुक्तौ कथं सकलदृश्योच्छेदः ? नच—स ब्रह्मस्वरूप इति—वाच्यम्; तथाप्यज्ञान-तत्परिणामसामान्याभावत्वविशिष्टस्य ब्रह्मभिन्नत्वात् । एवं तस्य स्वात्मकदृश्याविरोधित्वे कथं दृश्यान्तरविरोधित्वम् ? निरुक्तप्रयुक्तत्वे वाऽपरितोष इति ? अत आह—*स* चाभाव इति* ॥ स्वान्यसर्वदृश्यविरोधीति* ॥ तादृशाभावत्वविशिष्टस्य दृश्यत्वेऽप्यविद्या-चित्सम्बन्धादीनामिवाविद्यापरिणामत्वानुपगमेन तादात्म्यसम्बन्धेन स्वविशिष्टरूपप्रतियोगितावच्छेदकानाक्रान्तत्वेन न स्वविरोधित्वम् । दृश्यान्तराणां निरुक्तप्रतियोगितावच्छेदकाक्रान्तत्वात् तद्विरोधित्वं युक्तम् । यद्यपि ज्ञानाव्यवहितोत्तरक्षणे तादृशाभावत्वविशिष्टरूपदृश्यस्य सत्त्वाद् न सकलदृश्योच्छेदो मुक्ते, तथापि तस्य क्षणिकत्वेन तदुत्तरक्षणे तस्याप्यभावरूपेऽखण्डब्रह्मरूपमुक्ते सकलदृश्योच्छेदोपपत्तिः, न वा तन्निवृत्तिपरम्परापत्तिः । एवं चाज्ञान-तत्परिणामाभावस्योक्तान्वय-व्यतिरेकाभ्यां ज्ञानजन्यत्वेन ज्ञानाधीनत्वमपि समञ्जसमिति सन्तोष्टव्यमिति भावः । तदाह—*क्षणिक इति* ॥ तत्क्षण उत्पन्नः=तत्क्षणमात्रस्थायी; उत्तरक्षणवृत्तिब्रह्मस्वरूपाभावप्रतियोगीत्यर्थः । अज्ञानसंस्काराज्ञानचित्सम्बन्धोक्ताज्ञानविशिष्टाभावान् स्वपदेनोपादाय तादात्म्येन तद्विशिष्टानां सर्वेषामेवाभावानां केवलब्रह्मरूपाणामपि ज्ञानोत्तरमेव व्यवहाराद् ज्ञानाधीनत्वसत्त्वेन तेषु ज्ञाननिवर्त्यत्वं सङ्गमनीयम्, "अत एवे"त्यस्य घटाद्यवस्थितिसामान्यविरहनिष्ठब्रह्मज्ञानप्रयुक्तत्वरूपाव्यवहितपूर्वपङ्क्त्युक्तार्थकत्वं न सम्भवति; पूर्वज्ञानावस्थितिसामान्यविरहनिष्ठोत्तरज्ञानप्रयोज्यत्वाभावस्यैव पूर्वज्ञाने सिद्धसाधनवारकत्वात् । नच—एवकारस्य ब्रह्मज्ञानमात्रप्रयुक्तत्वार्थकत्वेन ब्रह्मज्ञानान्याप्रयुक्तत्वस्य लाभाद् उक्तसिद्धसाधनवारकोक्तार्थलाभसम्भवः; एवकारस्य ब्रह्मज्ञानप्रयुक्तत्वाभावव्यावृत्त्यर्थकत्वेऽपि तन्निर्वाहकतयोक्तार्थस्यापि लाभसम्भवस्य दुर्वारत्वादिति—वाच्यम्; तस्यास्फुटत्वात्, प्रथमव्याख्याने 'स एवेति' योजनयोक्तविरहमात्रनिष्ठस्य ब्रह्मज्ञानप्रयुक्तत्वस्यैवोक्तवाक्यार्थत्वाच्च, इत्यतो व्याख्या-

---

( १ ) 'ज्ञानप्रयुक्ते'त्यत्र प्रयुक्तत्वं किमधीनत्वम् ? उत व्यापकत्वम् ? *आद्येऽपि किमवस्थित्या सामान्यं विशेष्यते ? विरहो वा ? तत्रापि विरहपदार्थः किमत्यन्ताभावः ? उत नाशः ? इति विकल्पमभिप्रेत्यावस्थित्या विरहविशेषणत्वपक्षवर्ज्यं सर्वपक्षोपपत्तिः सम्भवतीति सूचनार्थं व्याख्याचतुष्टयं दर्शितम् । तत्प्रयुक्तत्वस्याधीनतारूपत्वे विरहपदस्य नाशपरत्वे च द्वितीयव्याख्यानम्, तत्रैव विरहपदस्यात्यन्ताभावपरत्वे तृतीयं व्याख्यानम्, तत्रैवावस्थित्याः सामान्यविशेषणत्वे विरहपदेनात्यन्ताभावविवक्षणे च प्रथमं व्याख्यानमिति विवेकः ।

### अद्वैतसिद्धिः

अत एवोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने न सिद्धसाधनम् ; न वा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वासिद्ध्याऽर्थान्तरम् ; उत्तरज्ञानेन लीनस्य पूर्वज्ञानस्य स्वकारणा-

### तरङ्गिणी

अत एव न पूर्वज्ञाने सिद्धसाधनम् ; नवा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वासिद्ध्याऽर्थान्तरम् ;

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत एव = यथाश्रुतस्य ज्ञाननिवर्त्यत्वस्यासाध्यत्वादेव । *तद्वदेव = पूर्वज्ञानस्योत्तरज्ञाननाश्यत्व इव । *ननु* उक्तसम्बन्धद्वयेन कस्यचिद् योऽत्यन्ताभावः, तत्प्रतियोगित्वमेवास्तु, किमुक्तान्यतराभावस्य

### न्यायामृतसौगन्ध्यम्

अत एवोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने न सिद्धसाधनम्, न वा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वा-

### सिद्धिव्याख्या

साध्यनिर्वचनस्वरूपत्वे सिद्धसाधनम्—इति, तदपि नेत्याह—*अत एवेति* ॥ अतश्शब्दार्थमाह—*उत्तरेति* ॥

### विट्ठलेशीयटिप्पणी

चतुष्टयसाधारण्याय च सिद्धसाधनप्रयोजकयथाश्रुतार्थपरित्यागपरतामाह—*अत एवेति* ॥ प्रथमे व्याख्यान उत्तरज्ञानस्य पूर्वज्ञानाधिष्ठानतत्त्वज्ञानरूपत्वे तन्निवर्त्यत्वस्य पूर्वज्ञाने सिद्धौ न सिद्धसाधनम्, तद्रूपत्वाभावेऽपि तस्य साध्याघटकत्वात् । प्रथम-तृतीययोः पूर्वज्ञान-तत्संस्कारान्यतराभावस्य, द्वितीये पूर्वज्ञान-तत्संस्कारोभयनाशस्य, चतुर्थे पूर्वज्ञानरूपस्वात्मकसामान्याभावस्य, पूर्वज्ञानसंस्कारानिवर्तकोत्तरज्ञानाप्रयुक्तत्वाद् नोक्तदोष इत्याह मूले—*उत्तरज्ञानेनेति* ॥ तृतीयार्थः प्रयुक्तत्वं लयान्वयि, नतु विरहान्वयि ; विरहस्य प्रयुक्तत्वानुपपत्तेः । स्वाधिष्ठान-तत्त्वसाक्षात्कारत्वावच्छिन्नजनकताकनाशप्रतियोगित्व-स्वोपादानान्यतरत्वमिति यथाश्रुतज्ञाननिवर्त्यत्वनिष्कर्ष-परित्यागे श्रुतिविरोधरूपबीजस्योक्तावपि शुद्धतार्किकं प्रति तदन्यदूषणमपि तद्बीजतयाऽऽह—*नवा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपीति* ॥ 'तद्वदेवे'त्यस्य सिद्धसाधनवदित्यर्थोऽर्थान्तरान्वयी चेत्, वैयर्थ्यम् ; तयोः सादृश्यबोधने प्रयोजनाभावात्, इत्यतो व्याचष्टे टीकायाम्—*तद्वदेवेति* ॥ परैः सत्यत्वेनाभिमतस्यापि पूर्वज्ञानस्योत्तरज्ञाननाश्यत्वे स्वीकृतेऽपि यथा न मिथ्यात्वम्, तथा सत्यत्वेन स्वाभिमतेऽप्याकाशादौ सिद्धान्तिसाध्यस्य ब्रह्मसाक्षात्कारत्वा-वच्छिन्ननाश्यत्वस्य सिद्धावपि मिथ्यात्वासिद्ध्या यदर्थान्तरं प्रसक्तम्, तद् निरुक्तयथाश्रुतार्थं परित्यज्य निरुक्तावस्थिति-सामान्यविरहघटितसाध्यादराद् न ; आकाशादेः स्व-स्वकारणाज्ञानरूपसंस्कारान्यतराभावस्याधिष्ठानब्रह्मसाक्षात्कार-प्रयुक्तत्वसिद्धौ सत्यत्वोपगमासम्भवाद् मिथ्यात्वसिद्धेः, मिथ्यात्वेनोभयोपगते शुक्तिरजतादावेवाधिष्ठानशुक्ति-साक्षात्कारप्रयुक्तस्व-स्वोपादानान्यतराभावकत्वदर्शनादित्यर्थः । 'शशविषाणे'त्यादि'मूलं ज्ञानप्रयुक्तत्वनिवेशप्रयोजन-परमिति प्रतीयते । तत्राभावे स्व-स्वसंस्कारान्यतरप्रतियोगिकत्वमज्ञान-तत्संस्कारान्यतरप्रतियोगित्वं वा वृथा ; अभाव-प्रतियोगित्वस्यैव सम्यक्त्वात् । नच ब्रह्मण्यतिव्याप्तिः ; तस्य निर्धर्मकत्वात् प्रतियोगित्वात्मकभावरूपधर्मानाश्रय-त्वात् पूर्वं परिहृतत्वात् । *किञ्च* अभाव उक्तविशेषणसत्त्वे शशविषाणे नातिव्याप्तिप्रसक्तिः ; तत्संस्कारस्या-प्रसिद्धेः, अज्ञानप्रयुक्त-तत्संस्कारान्यतरत्वशून्यत्वाच्च, इत्यत उक्ताभावविशेषणप्रयोजनपरत्वमपि तन्मूलस्य स्फुटीकर्तुं तादृशविशेषणसहितज्ञानप्रयुक्तत्ववैयर्थ्याशङ्कया तन्मूलमवतारयति—*नन्विति* ॥ *उक्तसम्बन्धद्वयेनेति* ॥ स्व-प्रयोजकाज्ञानसमानविषयकत्व-स्वाश्रयकालपूर्वत्वरूपसम्बन्धद्वयेनेत्यर्थः । नचेदमपि व्यर्थम् ; भूतलादिनिष्ठसमवायादि-सम्बन्धावच्छिन्नाभावप्रतियोगित्वस्य घटादौ सिद्धस्य साधनप्रसङ्गात्, तदुपादाने तु मिथ्याभूतरजतादेरेवोक्त-सम्बन्धद्वयावच्छिन्नप्रतियोगिताकाभावस्य शुक्तिज्ञाने प्रसिद्धत्वात् तादृशाभावप्रतियोगित्वस्य मिथ्यात्वरूपत्वसम्भवेन तत्साधने सिद्धसाधनताप्रसक्तेः । नच—एवं शशविषाणस्योक्तसम्बन्धद्वयाप्रसिद्धेः कथं तदवच्छिन्नतदभावप्रसिद्धिः ?

अद्वैतसिद्धिः

त्मनाऽवस्थानादवस्थितिसामान्यविरहानुपपत्तेः। शशविषाणादाववस्थितिसामान्यविरहेऽपि तस्य

तरङ्गिणी

उत्तरज्ञानेन लीनस्य पूर्वज्ञानस्य स्वकारणात्मनाऽवस्थानादवस्थितिसामान्यविरहानुपपत्तेः। शशविषाणादाव-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानप्रयुक्तत्वस्य वा निवेशेन ? द्वितीयपक्षे च किमुक्तनाशत्वस्य ज्ञानप्रयुक्तत्वस्य च निवेशेन ? तत्राह—*शशेत्यादि*॥ *अवस्थितिसामान्यविरहे=उक्तसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वे॥

न्यायामृतसौगन्ध्यम्

सिद्ध्याऽर्थान्तरम्; उत्तरज्ञानेन लीनस्य पूर्वज्ञानस्य स्वकारणात्मनाऽवस्थानादवस्थितिसामान्यविरहा-नुपपत्तेः। शशविषाणादाववस्थितिसामान्यविरहेऽपि तस्य ज्ञानप्रयुक्तत्वाभावान्न नातिव्याप्तिः॥

सिद्धिव्याख्या

*अनुपपत्तेरिति*॥ ततश्च न पूर्वज्ञानेऽतिव्याप्तिः। न वा तदादाय सिद्धसाधनमिति ज्ञेयम्। *अन्यथा*—पूर्वज्ञानस्य स्वकारणात्मनाऽवस्थाने स्वरूपेणाप्यवस्थानापत्तिः; विनिगमकाभावात्, नच—उत्तरज्ञानेन पूर्वज्ञानं निवृत्तमित्यनुभवात् तत्सिद्धिरिति—वाच्यम्; तर्हि तत एव तस्यापि सिद्ध्याऽतिव्याप्ति-सिद्ध-साधने स्यातामिति—चेत्, *न*; पूर्वज्ञानप्रतियोगिकस्वरूपेणावस्थितिविरहमात्रविषयकतयाऽन्यथासिद्धस्यो'त्तर-ज्ञानेन पूर्वज्ञानं निवृत्तमि'त्यनुभवस्य कारणात्मनाऽवस्थितिविरहाविषयकत्वात्, अन्यथा 'उत्तरज्ञानेन पूर्वज्ञानं स्वरूपेण नष्टमि'त्यनुभववत्, 'कारणात्मना नष्टम्' इत्यनुभवापत्तेः। नच—'उत्तरज्ञानेन पूर्वज्ञानं न स्वरूपेण निवृत्त-मि'त्यनुभवस्य पूर्वज्ञाने लीनमात्रविषयकत्वे 'विश्वमायानिवृत्ति'रिति श्रुतमायानिवृत्तेरपि विलयमात्ररूपतापत्तिरिति—वाच्यम्; मायाया अनादित्वेन स्वकारणाभावेन कारणात्मनाऽवस्थित्यनुपपत्त्या तन्निवृत्तेरवस्थितिसामान्यविरह-रूपत्वोपपत्तेरिति भावः। ज्ञानपदव्यावर्त्यमाह—*शशविषाणादाविति*॥ *यदुक्तम्*—'शुक्तिज्ञानेन रूप्यं

विट्ठलेशीयटिप्पणी

इति—वाच्यम्; उक्तसम्बन्धयोः स्वत्वस्याघटकतया घट-शुक्तिरजतादिप्रतियोगिकतया प्रसिद्धाभ्यां प्रयोजका-ज्ञानसमानविषयकत्वाश्रयकालपूर्वत्वाभ्यां सम्बन्धाभ्यां शशविषाणाभावस्य संयोग-समवायाभ्यामभावाभावस्येव प्रसिद्धेः। नच—एवं ब्रह्मणोऽपि प्रयोजकत्वमुखप्रथमसम्बन्धाप्रसिद्धेस्तद्घटिततदुभयसम्बन्धाभ्यामभावं संयोग-समवाया-वच्छिन्नद्रव्यत्वाभावमिव प्रसिद्धमादाय तत्रातिव्याप्तिरिति—भ्रमितव्यम्; दत्तोत्तरत्वात्। *कस्यचिदिति* निरुक्ता-न्यतरप्रतियोगिकत्वनिवेशव्यवच्छेदाय। स्व-स्वसंस्कारोभयनाशत्वघटितद्वितीयकल्पे तुच्छे तादृशनाशप्रतियोगित्व-बाधादतिव्याप्त्यसङ्गतिः; अतस्तस्याप्यनिवेशेन तां सङ्गमयति—*किमुक्तनाशत्वस्येति*॥ स्व-स्वसंस्कारोभयप्रति-योगिकत्वे उत्पत्तिमत्त्वे च सत्यभावत्वस्येत्यर्थः। अभावत्वं तु निवेश्यमेव। नच—तदपि व्यर्थम्; प्रतियोगित्वस्यैव सम्यक्त्वादिति—वाच्यम्; घटादौ सिद्धसाधनवारणायाभावप्रतियोगित्वस्यावश्यकत्वात्। नच—तथापि तद्दोष-तादवस्थ्यमिति—वाच्यम्; अभावे सत्त्वव्यापकत्वनिवेशेनापि तद्वारणसम्भवात्। एतावतोक्तनिरुक्तिघटकोक्त-विशेषणानामसाधारणप्रयोजनलाभ इति भावः। अवस्थितिसामान्यपदस्य स्व-स्वसंस्कारान्यतरार्थकत्वे शशविषाणादे-स्तथाभावाप्रसिद्ध्याऽनन्वयः, एवं विरहे शशविषाणादिनिष्ठत्वं नातिव्याप्तिप्रसञ्जकम्, अतो व्याचष्टे—*उक्तसम्बन्धा-वच्छिन्नेति*॥ *प्रतियोगिताकात्यन्ताभावप्रतियोगित्वे इति*॥ अत्रात्यन्ताभावीयोक्तसम्बन्धद्वयावच्छिन्नप्रतियोगित्वे तात्पर्यम्; द्वेधा प्रतियोगित्वनिवेशे गौरवात्, किञ्चिद्विशिष्टस्वाभावनिष्ठप्रतियोगित्वसिद्ध्याऽर्थान्तराच्चेति बोध्यम्॥

*श्रीगुरुपरमात्मने विट्ठलाय नमः*॥ प्रथमपक्षे 'एव स' इत्यस्य स एवेति योजना, चतुर्थपक्षे तु 'तथाचे'ति ग्रन्थस्य मध्यमकल्पद्वयवरेवावतारात् यथाश्रुतमेवैवकारयोजना, एवं द्वितीयपक्षे विरहपदार्थो नाशे लक्षणा, एवं

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

चतुर्थपक्षे तु 'तथाचे'त्यादि 'नातिव्याप्तिरि'त्यन्तो ग्रन्थः सङ्गच्छतेतमाम् । *ननु*—तत्पक्षे दृश्यसामान्यस्याध्यासिकतादात्म्यसम्बन्धेनात्यन्ताभावो ज्ञानाधीनः ? सम्बन्धान्तरेण वा सः ? *आद्ये* तादात्म्यस्य भेद-

## विट्ठलेशीयटिप्पणी

पूर्वकल्पत्रयेऽपि 'शशविषाणादावि'त्यादिपङ्क्तेर्ज्ञानप्रयुक्तत्वमात्रप्रयोजनपरतया प्रतीयमानाया निरुक्तान्यतरप्रतियोगिकत्वादिसहिततत्प्रयोजनपरतयोक्तरीत्या सङ्गमनं नातिशययुक्तम्, चतुर्थकल्पे तु तादात्म्येन स्वविशिष्टसामान्याभावरूपस्वात्मकसामान्याभावं शशविषाणादिप्रतियोगिकं ज्ञानाप्रयुक्तमादाय तत्रातिव्याप्तिर्ज्ञानप्रयुक्तत्वनिवेशाद् नेत्येवं ज्ञानप्रयुक्तत्वमात्रप्रयोजनपरतया सङ्गमनमतिशययुक्तमित्याह—*चतुर्थपक्षे त्विति* ॥ चतुर्थरीत्या व्याख्यायमान इत्यर्थः । व्याख्याचतुष्टयभेदेनोक्तग्रन्थस्य चतुर्विधत्वेन बहुवचनविभक्त्योपपदे विधीयमानाया तमपः सङ्गतिः । प्रथमकल्प एवकारयोजनाक्लेशात् 'तथाचे'त्यादीत्युक्तम्, प्रथमादिकल्पत्रये 'शशविषाणादि'पङ्क्तिक्लेशाद् 'नातिव्याप्तिरित्यन्तः' इत्युक्तम् ; तदुभयस्य चतुर्थकल्पेऽभावात् कल्पत्रयात् प्रकर्ष इति निर्गलितार्थः । *ननु तत्पक्ष इति* ॥ चतुर्थपक्ष इत्यर्थः । प्रथम-तृतीययोर्ज्ञानोत्पत्तिकालावच्छेदेन विशेषणतासम्बन्धेन ज्ञाननिष्ठ उक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽज्ञानादिदृश्यात्यन्ताभावो ज्ञानव्यापको ज्ञानाधीनः ; व्याप्यता-प्रयोजकत्वे तादात्म्येन ; व्यापकत्व-प्रयुक्तत्वे विशेषणतासम्बन्धेन, एवंविध एव लक्षणघटकः । द्वितीये तु—दृश्यध्वंस एव सम्बन्धानवच्छिन्नप्रतियोगिताकः । चतुर्थे तु—ज्ञानोत्पत्तिद्वितीयक्षणावच्छेदेन जीवचैतन्यनिष्ठो दृश्यसामान्यात्यन्ताभावो ज्ञानाधीनत्वेन लक्षणघटकः । स च किंसम्बन्धावच्छिन्नप्रतियोगिताकः ? इति विचार्यते—जीवचैतन्यरूपे ब्रह्मणि येन सम्बन्धेन दृश्यमध्यस्तम्, तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाव एव दृश्योच्छेदोपलक्षितात्मरूपमोक्षघटकत्वाद् मोक्षजनकतत्त्वज्ञानसाध्यो वाच्यः, इत्याशयेनाह—*आध्यासिकतादात्म्येति* ॥ तादात्म्यस्य पारमार्थिकत्वे तदत्यन्ताभावस्य ज्ञानाधीनत्वासम्भवात् 'आध्यासिके'त्युक्तम् । यद्यपि दृश्यस्याध्यासिकत्वमपि तदभावस्य ज्ञानाधीनत्वे प्रयोजकम्, तथाप्यनध्यस्तप्रकारीयाध्यस्तसंसर्गाभावस्य ज्ञानाधीनत्वनिर्वाहाय तादात्म्य एवाध्यासिकत्वमुक्तम् । नचाध्यस्तस्यानध्यस्तसम्बन्धेनाभावासङ्ग्रहः ; अध्यस्तप्रतियोगिकसम्बन्धस्याध्यस्तत्वनियमात् तदभावाप्रसिद्धेः । उक्तोभयसम्बन्धव्यावृत्तये—*तादात्म्येति* ॥ ध्वंस-प्रागभावयोः संसर्गाभावत्वनिर्वाहाय समवायस्थानीयतादात्म्यावच्छिन्नप्रतियोगिताकत्वे तद्व्यावृत्तये—*अत्यन्ताभाव इति* ॥ ज्ञानाधीन इति* ॥ तत्त्वेन लक्षणघटकः । अत्र पक्षे वक्ष्यमाणदोषादाह—*सम्बन्धान्तरेण वेति* ॥ 'दिक्-कालौ नेश्वराद् नातिरिच्येते' इति सिद्धान्ताद् दिक्-कालयोर्ब्रह्माभिन्नजीवचैतन्यस्वरूपत्वेन दिक्कृतविशेषणतया कालिकविशेषणतया वेत्यर्थः । ज्ञानादेर्विषयतया, अभावस्य तदीयविशेषणतया, मूर्तस्य संयोगेन, सर्वस्यापि समानकालीनत्वादिपरम्परासम्बन्धेनेत्यपि बोध्यम् । तेषां सर्वेषामप्यध्यस्तप्रतियोगिकत्वेनाध्यासिकत्वात् तत्सम्बन्धावच्छिन्नदृश्याभावस्य ज्ञानप्रयुक्तत्वनिर्वाहः । *सः=दृश्यसामान्यस्यात्यन्ताभावः । *तादात्म्यस्य भेदप्रतियोगितायामेवावच्छेदकत्वादिति* ॥ *ननु* ज्ञानप्रयुक्ततादात्म्यसम्बन्धावच्छिन्नाभावरूपभेदस्यैव सिद्धिरस्तु, तावताऽपि देहेन्द्रियप्रपञ्चभेदस्य ब्रह्मात्मनि सिद्धिसम्भवेन तदभेदभ्रमरूपसम्बन्धनिवृत्तिसम्भवाद् "विद्वानि"तिश्रुत्युक्तमोक्षोपपत्तेः । नच—नित्यस्य तस्य न ज्ञानप्रयुक्तत्वमिति—वाच्यम् ; "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुत्या जीवब्रह्माभेदस्येव भवन्मते प्रपञ्चात्यन्ताभावस्येव च प्रपञ्चभेदस्यापि निर्विकल्पकप्रपञ्चाधिष्ठानब्रह्मात्मज्ञानप्रयुक्तत्वसम्भवात्, तत्तज्ज्ञानस्य प्रपञ्चाभेदव्यावर्तकप्रपञ्चभेदोपलक्षितब्रह्मरूपदर्शनत्वात्, शुक्तौ रजतभेदस्य शुक्तित्वरूपरजताभेदव्यावर्तकधर्मदर्शनाधीनत्वं यथा, तथा तदधीन 'नेदं रजतमि'तिभेदज्ञानाधीनत्ववत् तदधीना"स्थूलमनणु" इत्यादिश्रुतिजन्यभेदज्ञानाधीनत्वसम्भवाच्च । नच—'नाहमीश्वरः' इति ज्ञानाधीनानिर्वचनीयजीवब्रह्मभेदसिद्धिप्रसङ्ग इति—वाच्यम् ; जीवब्रह्माभेदबोधकश्रुतिशतविरोधानुरोधेन तद्भेदसिद्धेरसम्भवादिति—चेत्, *न* ; तादात्म्यं यत्रभेदमात्रम्, तदवच्छिन्ना-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रतियोगितायामेवावच्छेदकत्वादसङ्गतिः, *द्वितीये* अध्यस्तसर्वसम्बन्धैरत्यन्ताभावस्य ज्ञानप्रयुक्ततया प्रतीतिर्विरुध्येतेति—चेत्, *न* ; आध्यासिकतादात्म्यस्य विषयतायाः समवायस्य च स्थानापन्नत्वेनात्यन्ताभावप्रतियोगितायामेवावच्छेदकत्वात्, भेदप्रतियोगितायाः सम्बन्धावच्छिन्नत्वे मानाभावात् ।

### विट्ठलेशीयटिप्पणी

भेदश्च भेदविरोधी "इदमिदं नेति" प्रतीतिसिद्धोऽन्योन्याभावः, तदा देहेन्द्रियप्रपञ्चसत्यत्ववादिनैयायिकादिभिरपि ब्रह्मात्मन्युक्तप्रपञ्चभेदस्वीकारेण तान् प्रति सिद्धसाधनप्रसङ्गात्, "नेह नाने"त्यादिश्रुत्येकवाक्यतया "विद्वान् नामरूपाद्विमुक्तः" इति श्रुतेरपि प्रपञ्चात्यन्ताभावबोधकतया ज्ञाननिवर्त्यत्वानुमानस्य 'विद्वानि'तिश्रुत्यर्थसाधकत्वोक्तिविरोधापत्तेश्च, ब्रह्मात्मनि प्रपञ्चभेदनिश्चयेन तद्भेदभ्रमाधीनस्य प्रपञ्चे रागस्य निवृत्तावपि ममत्वाभिमानमूलरागनिवृत्तये निरुक्तात्यन्ताभावघटितमिथ्यात्वनिश्चयस्यावश्यकत्वाच्च । तन्निश्चये च सति ब्रह्मणि मिथ्याभूतप्रपञ्चभेदनिश्चयेऽहन्त्वाभिमानाधीनरागस्यापि निवृत्त्या प्रपञ्चाद् वैराग्यसिद्धिः । तादात्म्यं यदि भेदाभेदोभयरूपम्, तदा तदवच्छिन्नाभावस्यात्यन्ताभावरूपतामुपेत्यैवैतत्पूर्वपक्षसमाधानादिष्टापत्तिरिति—ध्येयम् ॥ *असङ्गतिः*॥ अप्रसिद्धेः ॥ *अध्यस्तसर्वसम्बन्धैरिति* ॥ यद् यद् येन येन सम्बन्धेन यत्र यत्र प्रतीयते, तत्र तत्राध्यस्ततत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्तत्तदत्यन्ताभावस्तत्तन्निष्ठो ब्रह्मात्मत्वज्ञानप्रयुक्तः ; यथा शुक्तिरजतस्य शुक्तौ तादात्म्येन कालादौ च कालिकादिसम्बन्धेनाध्यस्तस्य शुक्तित्वज्ञानप्रयुक्तात्यन्ताभाव इति सिद्धान्त इत्यर्थः । . *विरुध्येतेति* ॥ तादात्म्यान्यसम्बन्धावच्छिन्नाभावानामेव ज्ञानप्रयुक्तत्वस्वीकारे तत्तत्सम्बन्धान्तर्गततादात्म्यसम्बन्धावच्छिन्नाभावस्य ज्ञानप्रयुक्तत्वप्रतीतेर्बाधेनासम्भवात्, भ्रमत्वापाताच्चेति भावः । इदमुपलक्षणम्—आत्मनि देहेन्द्रियादिप्रपञ्चस्य तादात्म्येनाध्यस्तस्यात्यन्ताभावस्य ज्ञानानधीनत्वे ज्ञानाधीनत्वघटितैतल्लक्षणरूपसाध्याघटकतया निरुक्तमोक्षघटकाभावस्यात्मन्यसिद्धयापाताच्चेत्यपि बोध्यम् । *आध्यासिकतादात्म्यस्य=भेदाभेदोभयरूपतादात्म्यस्य । *विषयतायाः* ॥ स्थानापन्नत्वेनेत्यन्वयः ; वृत्त्यवच्छिन्नचैतन्यरूपज्ञानविषयतायास्तादात्म्यरूपत्वस्योक्तत्वात् । *समवायस्य च स्थानापन्नत्वेनेति* ॥ गुण-गुण्यादयोर्नैयायिकैः समवायः स्वीक्रियते, भट्टादिभिस्तु—उक्तं तादात्म्यमिति भावः । *अत्यन्ताभावप्रतियोगितायामेवावच्छेदकत्वादिति* ॥ एवञ्च ब्रह्मणि प्रपञ्चान्योन्याभावसिद्धयापत्त्या न सिद्धसाधनमिति भावः । नच—एवं तादात्म्यसम्बन्धावच्छिन्नदृश्याभावस्य ब्रह्मणि सिद्धावपि कालादौ कालिकादिसम्बन्धावच्छिन्नदृश्याभावो न सिद्ध्येत् ; उक्तसाध्याघटकत्वादिति—वाच्यम् ; कपालादौ विद्यमानस्य घटादेरेव कालादौ कालिकसम्बन्धेन सत्त्वम्, तद्ध्वंसादिदशायां तु तत्र तत्सम्बन्धावच्छिन्नतदभावो यथा, तथा ब्रह्मणि जगतो मुख्याधिष्ठाने तादात्म्येन स्थितस्यैव सम्बन्धान्तरेण यथायथमन्यत्र सत्त्वम्, तत्र तदभावदशायां त्वन्यत्रापि सम्बन्धान्तरावच्छिन्नतदभावपरम्परया ज्ञानप्रयोज्यः सिद्धिमर्हति । *वस्तुतस्तु*—तत्तज्जीवचैतन्यरूप आत्मनि तदीयतत्त्वज्ञानेन तदज्ञानकल्पितकालादिसर्वदृश्यस्याप्यभावाद् ध्रुवेण सम्बन्धेन केन स्थातव्यम् ? इति न किञ्चिदेतत् । *ननु* एवं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमित्यन्योन्याभावलक्षणमतिव्याप्तम्, असम्भूतं चेत्याशङ्क्य, लक्षणान्तराभिप्रायेण समाधत्ते—*भेदप्रतियोगितायाः सम्बन्धावच्छिन्नत्वे मानाभावादिति* ॥ तथाच सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं संसर्गाभावत्वम्, सम्बन्धानवच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्, इति संसर्गाभावान्योन्याभावयोर्निरुक्तिसौष्ठवम् ; अन्यथा संसर्गाभावलक्षणे तादात्म्यान्यत्वस्य सम्बन्धे प्रवेश्यत्वेन गौरवम् । अत एव केवलाभेदरूपतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति लक्षणमुपेक्षितमिति भावः ॥

*इदमत्रावधेयम्*—'घटो न पटः' इति प्रतीयमानभेदप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वपक्षे प्रतिबध्यस्य 'घटः पटः' इति ज्ञानस्य प्रकारताऽपि सम्बन्धानवच्छिन्नैव, इति नाभावान्तरप्रतियोगितावद् भेदप्रतियोगिताया

## न्यायामृतकण्टकोद्धारः

एतावता कारणात्मनाऽवस्थितिविशेषविरहस्य ज्ञानत्वप्रयोज्यत्वेऽपि कार्यात्मनाऽवस्थितिविशेषविरहस्य ज्ञानत्वप्रयोज्यत्वाभावेनावस्थितिसामान्यविरहस्य ज्ञानत्वप्रयोज्यत्वाभावेन घटादावव्याप्तितादवस्थ्यम् । किञ्चात्र विरहशब्देन न प्रागभावात्यन्ताभावौ विवक्षितौ ; प्रागभावस्यानादित्वेन प्रतियोग्युत्पादकनाश्यत्वेन चात्यन्ताभावस्य चानादिनित्यत्वेन तथा ज्ञानत्वप्रयोज्यत्वाभावात् ? नापि ध्वंसः ; तस्यावस्थितिसामान्यविरहत्वासम्भवात्, सम्भवे वा ज्ञानत्वप्रयोज्यावस्थितिः ध्वंसप्रतियोगित्वमित्युक्तं भवति । तथाच शुक्तिरूप्येऽव्याप्तिः, अज्ञान-भ्रमादौ चातिव्याप्तिः ; नहि 'शुक्तिरूप्यं तत्त्वज्ञानेन नष्टमि'ति कस्यचिदनुभवः । अस्ति चा'ज्ञानं भ्रमश्च तत्त्वज्ञानेन नष्टः' इत्यनुभवः ॥

किञ्च शुक्तिरूप्यस्यावस्थित्यभावेन तद्विरहस्य ज्ञानत्वप्रयोज्यता न सम्भवति । *नच*—अपरोक्षप्रतीत्यन्यथानुपपत्त्या शुक्तिरूप्यादेरवस्थितिसामान्यमङ्गीकरणीयमिति—*वाच्यम्* ; शशविषाणादेरप्यपरोक्षप्रतीतिविषयत्वान्यथानुपपत्तेरपि वक्तुं शक्यत्वेन तत्रातिव्याप्तेः । किञ्च ज्ञानत्वस्य भ्रमादिसाधारणत्वेन निवृत्तिप्रयोजकता न सम्भवति ; अन्यथा वस्तुत्वस्यापि तत्प्रयोजकतापत्तेः । तथाचासम्भवीदं लक्षणम् ॥

## विट्ठलेशीयटिप्पणी

अपि प्रतिबध्य-प्रतिबन्धकभावानुरोधेन सम्बन्धावच्छिन्नत्वस्यावश्यकत्वापत्तिः ; सम्बन्धावच्छिन्नतत्प्रकारताकज्ञानं प्रति सम्बन्धावच्छिन्नतत्प्रतियोगिताकाभावज्ञानस्य प्रतिबन्धकत्वसम्भवात् । उक्तभेदप्रतियोगितायाः केवलाभेदरूपतादात्म्यावच्छिन्नत्वपक्षे तज्ज्ञानप्रतिबध्यज्ञानप्रकारताऽपि केवलाभेदरूपतादात्म्यावच्छिन्नैव । भेदाभेदोभयरूपं तादात्म्यं तु न भेदप्रतियोगितावच्छेदकम् ; तथा सति घटत्वावच्छिन्ने घटत्वावच्छिन्नाभेदसत्त्वेऽपि तद्भेदाभावेन तद्घटितोभयसम्बन्धावच्छिन्नाभावसम्भवेन 'घटे न घटः' इत्यत्यन्ताभावप्रतीतिवद् 'घटो न घटः' इति भेदप्रतीत्यापत्तेः । अत एव केवलभेदो न भेदप्रतियोगितावच्छेदकः ; पटेऽपि घटभेदोच्छेदापत्तेश्च । केवलाभेदश्चास्यात्यन्ताभेदोऽर्थः । स च व्युत्पत्तिवादोक्तासाधारणतत्तद्व्यक्तित्वादिधर्मरूपः, नतु भेदासहिताभेदस्तदर्थः । अतो नीलत्वावच्छिन्ने तद्घटे घटत्वावच्छिन्नतद्घटस्य भेदाभेदोभयसत्त्वेऽपि न केवलाभेदसम्बन्धावच्छिन्नभेदप्रत्ययः, न वा भेदाभेदोभयावच्छिन्नात्यन्ताभावप्रत्ययः । नच—शुक्त्याद्यधिष्ठानेऽध्यस्तरजतभेदाभेदोभयस्य 'इदं रजतमि'ति सामानाधिकरण्यप्रत्ययानुरोधेन सत्त्वाद् अभेदसम्बन्धावच्छिन्नभेदावगाही 'नेदं रजतमि'ति प्रत्ययो न स्यादिति—वाच्यम् ; भेदाभेदोभयघटकाभेदस्याध्यस्तत्वेन तदवच्छिन्नतद्घटितोभयसम्बन्धावच्छिन्नतद्भेदस्य तत्र प्रत्ययोपपत्तेः । अत एव भेदाभेदोभयरूपतादात्म्येन स्वाश्रयत्वेन प्रतीयमानशुक्तिनिष्ठात्यन्ताभावीयभेदाभेदोभयरूपतादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वरूपं मिथ्यात्वं शुक्तिरजतादेरुपपद्यते । नच—एवं घटत्वावच्छिन्ने तद्घटे घटत्वावच्छिन्नतद्घटस्याभेदसत्त्वेऽपि भेदस्यासत्त्वेन तद्घटितोभयसम्बन्धावच्छिन्नाभावस्यात्यन्ताभावत्वेऽपि तदवगाहिप्रत्ययः—'घटो न घटः' इत्याकारक एव स्यात्, नतु—घटे न घटः' इति ; भेदाभेदोभयसंसर्गकज्ञानस्य समानाधिकरणपदद्वयाभिलप्यतया तदुभयसम्बन्धावच्छिन्नाभावज्ञानस्यापि समानाधिकरणपदद्वयसहितनञ्पदाभिलप्यतायाः प्रतियोग्यभावान्वययोस्तुल्यत्वनियमेन युक्तत्वादिति—वाच्यम् ; यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नस्य यत्संसर्गकः प्रत्ययः समानाधिकरणेनासमानाधिकरणेन वा यादृशपदद्वयेनाभिलप्यः प्रसिद्धः, तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नस्य तत्संसर्गावच्छिन्नाभावप्रत्ययस्तादृशपदद्वयसमभिव्याहृतनञ्पदाभिलप्यो भवति । इदमेव प्रतियोग्यभावान्वययोस्तुल्यत्वम् ; 'कपालं घटः', 'शुक्लो घटः' इति तादात्म्येन प्रतियोगिप्रत्ययप्रसिद्धेः, 'कपालं न घटः' 'घटो न शुक्लः ; इत्यभावप्रत्ययोऽभिलप्यते । घटत्वावच्छिन्नस्य केवलाभेदेन वा भेदाभेदोभयरूपतादात्म्येन वा सम्बन्धेन 'घटो न घटः' इति प्रत्ययस्याप्रसिद्धेः, तत्र तत्सम्बन्धावच्छिन्नतदभावावगाहिनो 'घटो न घटः' इति प्रत्ययस्याप्रसक्तेः,

अद्वैतसिद्धिः

ज्ञानप्रयुक्तत्वाभावाद् नातिव्याप्तिः । शुक्तिरजतादेश्चापरोक्षप्रतीत्यन्यथानुपपत्त्या प्रतिभासकाले-ऽवस्थितत्वाङ्गीकाराद् न बाधकज्ञानं विना तद्विरहः, इति न साध्यविकलता ।

तरङ्गिणी

वस्थितिसामान्यविरहेऽपि तस्य ज्ञानप्रयुक्तत्वाभावाद् नातिव्याप्तिः । शुक्तिरजतादेश्चापरोक्षप्रतीत्यन्यथानुपपत्त्या

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नच—उक्ताभावस्य कैवल्येऽप्यनुवृत्त्यापाताद् "विद्वान् नाम-रूपाद् विमुक्तः" इत्यादिश्रुतिविरोध इति—वाच्यम् ; क्षणिकत्वस्योक्तत्वात् । *ननु* शुक्तिरजतादेरपि शशविषाणवदलीकत्वेनाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावाप्रतियोगित्वात् साध्यवैकल्यम्, तत्राह—*शुक्तीत्यादि* ॥ *तद्विरह इति* ॥ अत एव

न्यायामृततरङ्गिणी सौगन्ध्यम्

शुक्तिरजतादेश्चापरोक्षप्रतीत्यन्यथानुपपत्त्या प्रतिभासकालेऽवस्थित्यङ्गीकाराद् न बाधकज्ञानं विना

सिद्धिव्याख्या

महमि'त्यननुभवेन तत्राप्यव्याप्तिः । साध्यनिर्वचनरूपत्वे साध्यविकलो दृष्टान्त इति, तद् दूषयति—*शुक्ति-रजतादेश्चेति* ॥ उक्तार्थेऽभियुक्तवचनं प्रमाणयति—*अत एवेत्यादिना* ॥

विट्ठलेशीयटिप्पणी

मृद्भिन्नकपालद्वये 'घटः' इति 'घटे शुक्लं रूपमि'तिवत् 'घटे घटः' इति समवायस्थानीयतादात्म्यसंसर्गकभ्रमप्रत्ययस्य प्रसिद्धेः, 'कपाले न घटः' इति 'घटे न शुक्लं रूपमि'तिवत् 'घटे न घटः' इत्यभावप्रत्ययो जायत इत्यलमतिपल्लवेन । *उक्ताभावस्य=तादात्म्यावच्छिन्नप्रतियोगिताकदृश्यसामान्याभावस्य ॥ *कैवल्ये=विदेहकैवल्यदशायाम् ॥ *अनुवृत्त्या-पातादिति* ॥ तन्निवर्तकत्वं हि तत्त्वज्ञानस्य वाच्यम्, तच्च न सम्भवति, तेन स्वद्वितीयक्षणावच्छेदेन स्वघटितदृश्या-भावसम्पादनादिति भावः । तथापि भावाद्वैतसिद्धेरुक्तापत्तिरिष्टापत्तिरस्तु, इत्यत आह—*'विद्वानि'ति* ॥ क्षणिक-त्वस्येति* ॥ तस्य स्वनिवर्तकत्वोपगमात् । तन्निवृत्तिश्च ब्रह्मरूपा, इति न तन्निवर्तकापेक्षा । नच—एवमुक्तप्रथमाभाव एव ब्रह्मरूपोऽस्तु, किं तदीयाभावान्तरकल्पनेन ? इति—वाच्यम् ; उक्तश्रुत्यादिबोध्यदृश्याभावनिष्ठज्ञानप्रयोज्य-त्वोपपत्तये तस्यातिरिक्तत्वोपगमात् तस्य क्षणिकत्वम्, तदभावस्य ब्रह्मस्वरूपत्वं चोक्तश्रुत्याद्यनुरोधादेवेति भावः । स्वमतेऽनिर्वचनीयख्यात्यङ्गीकारेण शुक्तिरजतादौ साध्यवैकल्यशङ्कानुदयात्, असत्ख्यातिमते तच्छङ्कया शुक्तीत्यादि-फक्किकामवतारयति—*नन्विति* ॥ असत्ख्यातिमत इति शेषः । इदमुपलक्षणम्—सत्ख्यातिमतादावप्येतच्छङ्का-सम्भवो बोध्यः । *शशविषाणवदलीकत्वेनेति* ॥ ब्रह्मवत् सत्यत्वेन वेति शेषः । *ज्ञानप्रयुक्तेति* ॥ शुक्त्यादि-निष्ठरजतादेरज्ञानप्रयुक्तत्वाभावेन तन्निष्ठतदभावस्य प्रथम-तृतीयव्याख्यानयोरज्ञानप्रयुक्तप्रतियोगिकत्वाभावेन ज्ञान-निवर्त्यत्वघटकोक्तान्यतरप्रतियोगिकत्वाभावात् कल्पचतुष्टयेऽपि च ज्ञानप्रयुक्तत्वाभावादिति भावः । *साध्यवैकल्यम्*॥ दृष्टान्ते । मूले—*शुक्तीत्यादि* ॥ *इदन्त्वेन शुक्तितादात्म्येन भासमानरजतादेरित्यर्थः । शुक्तिरजतम्, नासत्, अपरोक्षप्रतीतिविषयत्वात्, घटवत्, इत्यनुमाने हेतुभङ्गापत्तिरूपतर्कं सूचयति—*अपरोक्षप्रतीत्यन्यथानुपपत्त्येति* ॥ असद्विलक्षणत्वेन सिद्धस्येति शेषः । शुक्तिरजतं न सत्, तत्पुरुषस्यैव स्वप्रतिभासकालमात्रावच्छेदेन धर्मिवृत्ति-त्वात् ; स्वप्नगजवत्, अन्यथा पुरुषान्तरं प्रत्यपि कालान्तरेऽपि शुक्त्यादौ स्यात्, प्रतीयेत ; नच बाध्येत । नच—'शुक्तौ रजतं नास्ति, नासीत्, न भविष्यति' इति कालत्रयेऽपि निषेधप्रतीतेः कथमसद्विलक्षणत्वमिति—वाच्यम् ; अपरोक्षज्ञानविषयत्वाद् 'नास्ती'त्यंशे पारमार्थिकत्वेन तदभावप्रतीत्यभ्युपगमाच्च, इत्यनुमानेन सद्विलक्षण-त्वमपि सूचयति—*प्रतिभासकाल इति* ॥ तन्मात्रावच्छेदेनेत्यर्थः । *अवस्थित्यङ्गीकारादिति* ॥ शुक्तौ सद्विलक्षणत्वेन सिद्धस्येति शेषः । *एवम्=सद्विलक्षणत्वाज्ञान-तत्प्रयुक्तत्वनियमात् शुक्तिरजतादेः शुक्त्यज्ञानप्रयुक्तत्वात् ॥ *बाधक-

### अद्वैतसिद्धिः

अत एवोक्तं विवरणाचार्यैः—'अज्ञानस्य स्वकार्येण प्रविलीनेन वर्तमानेन वा सह ज्ञानेन निवृत्तिर्बाधः'

### तरङ्गिणी

प्रतिभासकालेऽवस्थित्यङ्गीकाराद् न बाधकज्ञानं विना तद्विरहः, इति न साध्यविकलता। अत एवोक्तं विवरणाचार्यैः—"अज्ञानस्य स्वकार्येण प्रविलीनेन वर्तमानेन वा सह ज्ञानेन निवृत्तिर्बाधः" इति।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तस्याज्ञानप्रयुक्तत्वमिति शेषः। *अत एव = उक्तात्यन्ताभावस्य ज्ञानव्यापकत्वात्, ज्ञानाधीनत्वाद्वा, उक्तनाशस्य ज्ञानाधीनत्वाद्वा। *स्वकार्येण = स्वप्रयुक्तेन। *विलीनेन = संस्कारेण। *वर्तमानेन = स्थूलेन।

### न्यायामृतसौगन्ध्यम्

तद्विरहः, इति न साध्यविकलतेति चेत्, न; घटादेरवस्थितिविशेषविरहस्य ज्ञानाप्रयुक्तत्वेन घटावस्थितिसामान्यविरहस्य ज्ञानाप्रयुक्तत्वात्, विशेषाभावातिरिक्तसामान्याभावस्य त्वया निरसिष्यमाणत्वात्॥

नच—अवस्थितिसामान्यं कारणात्मनाऽवस्थितिः, तद्विरहश्च ज्ञानप्रयुक्त एवेति—वाच्यम्, एवं हि ज्ञानप्रयुक्तविरहप्रतियोगि(१)कारणकत्वमिति लक्षणं स्यात्। तच्चानाद्यविद्यादावव्याप्तम्॥

### सौगन्ध्यविमर्शः

(१) घटादिकार्यदृष्ट्या हि ज्ञानप्रयुक्तविरहप्रतियोगिकारणकत्वं सिद्धौ विवक्षितम्, न त्वविद्यादिदृष्ट्याऽपि; तथाच नानाद्यविद्यादावव्याप्तिकथनस्यावसरः; अविद्यासाधारणन्तु ज्ञाननिवर्त्यत्वं ज्ञाननिवर्त्याविद्यास्वरूपत्व-तत्प्रयुक्तत्वान्यतरत्वमेव, इति न दोषलेशोऽपि। नच घटादीनामविद्यात्वन्तु बाधितमिति ज्ञानप्रयुक्तविरहप्रतियोग्यविद्यास्वरूपत्वमादायोक्तान्यतरत्वसिद्ध्याऽर्थान्तरावकाशः सौगन्ध्यापादितः सम्भवदुक्तिकः। अधिकं सिद्धिव्याख्यायाम्॥

### विट्ठलेशीयटिप्पणी

ज्ञानम्='शुक्तिरियमि'ति शुक्तित्वप्रकारकसाक्षात्कारं तदधीन'नेदं रजतमि'ति रजतात्यन्ताभावसाक्षात्कारं च विना न तद्विरहः, किन्तु सत्युक्तबाधकज्ञान इति शेषः। अज्ञानप्रयुक्तत्वाभावशङ्काव्युदासस्फुटीकरणाय टीकायां पूरयति—*अत एव तस्याज्ञानप्रयुक्तत्वमिति शेष इति*॥ मूलस्थेतिपदेन सह योजनया—इत्यतस्तस्य ज्ञानप्रयुक्तत्वमेवेत्यर्थः। इदमुपलक्षणम्—अज्ञान-तत्प्रयुक्तान्यतरप्रतियोगिकमित्यपि बोध्यम्। अज्ञानस्य ज्ञानविरोधिभावत्वे रजतादेस्तत्कार्यत्वे तदभावस्य ज्ञानप्रयुक्तत्वे च विवरणकारसम्मतिमाह मूले—*अत एवोक्तं विवरणाचार्यैरिति*॥ अज्ञानस्य ज्ञानाभावत्वे तस्य निवृत्तिः=अभावो ज्ञानरूपः; तस्य ज्ञानप्रयोज्यत्वासम्भवात् तस्य भावरूपत्वम्, तत्त्वे च तदभावस्य ज्ञानातिरिक्तस्य ज्ञानप्रयोज्यत्वसम्भवः। एवं भ्रमे सत्यस्यालीकस्य वा रजतस्य भानस्वीकारे तस्याज्ञानकार्यत्वासम्भवः। अनिर्वचनीयस्य भाने तु तत्सम्भवः, एवं तदभावस्य ज्ञानप्रयुक्तत्वानङ्गीकारे तदुत्तरमपि तत्प्रतीत्यापत्तिरिति भावः। *ननु* ज्ञानेनाज्ञानस्यैव निवृत्तिः; विरोधात्, तत्कार्यरजतादेस्तूपादानाज्ञाननिवृत्त्यैव, तथाच ज्ञाननिवर्त्यत्वरूपसाध्यस्य पक्षे वियदादौ दृष्टान्ते शुक्तिरजतादौ च वैकल्यमित्याशङ्क्य, तन्निराकरणपरतामपि विवरणग्रन्थस्य सूचयितुमुपष्टम्भकं व्याचष्टे टीकायाम्—*अत एवेति*॥ *उक्तात्यन्ताभावस्य=अज्ञानप्रयुक्त-तत्संस्कारान्यतराभावस्य, स्वात्मकसामान्यात्यन्ताभावस्य वा। 'ज्ञानव्यापकत्वादि'ति *प्रथमे व्याख्याने, 'ज्ञानाधीनत्वादि'ति *तृतीये चतुर्थे च*। उक्तनाशस्य=स्व-स्वसंस्कारोभयनाशस्य। 'ज्ञानाधीनत्वादि'ति *द्वितीये*। अज्ञानप्रयुक्तरजताद्यभावस्य साक्षाद् ज्ञाननिवर्त्यत्वलाभकं व्याचष्टे—*स्वकार्येणेति*॥ अज्ञानसम्बन्धसाधारण्यायाह—*स्वप्रयुक्तेनेति*॥ 'प्रविलीनेने'त्यस्य नष्टेनेत्यर्थोपगमे प्रागभावस्याप्रा न लाभः, इत्यतस्तत्संग्रहाय व्याचष्टे—*संस्कारेणेति*॥ प्रागभाव-ध्वंसोभयसाधारणेन सूक्ष्मरूपेणेत्यर्थः। सूक्ष्मतादशायामपि वर्तमानत्वाद् व्याचष्टे—*स्थूलेनेति*॥ सहार्थस्य ज्ञानेऽन्वयसाङ्गत्युक्तमाह—*सह=सहितस्येति*। विशिष्टस्येत्यर्थः। तेन विशेषणनिवृत्तेरपि लाभः। *यद्वा*—समभिव्या-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*सह = सहितस्य। *ज्ञानेन = ज्ञानव्यापिका, ज्ञानाधीना वा। *निवृत्तिः = उक्तात्यन्ताभावः, उक्तनाशो वा।

*अत्रेदं बोध्यम्—निवृत्तेर्ज्ञानाधीनत्वपक्षे ज्ञानोत्पत्तिकालीनेऽप्यज्ञान-तत्सम्बन्धयोर्निवृत्तिस्वरूपेऽखण्ड-धर्मरूपं ज्ञानाधीनत्वमविरुद्धम्; घटादिस्वरूपे तत्प्रागभावनिवृत्तित्वविशिष्टे घटाद्यधीनत्ववत्; 'घटात्

न्यायामृतसौगन्ध्यम्

*यत्तु*—ज्ञानप्रयुक्तोऽधिष्ठानतत्त्वप्रमाव्यापको योऽवस्थितिसामान्यस्य स्व-स्वीयसंस्कारान्यतरस्या-भावस्तत्प्रतियोगित्वम्—इति, *तन्न*; एवं दण्डादिनिवर्त्यस्य घटाद्यवस्थाविशेषस्य ज्ञानानिवर्त्यत्वेऽपि ज्ञानप्रयुक्तावस्थाविशेषविरहमादायान्यतरत्वेन लक्षणसमन्वयेऽर्थान्तरत्वापत्तेः ॥

*एतेन*—या याऽप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा, सा सा स्वसमानविषयकाज्ञानक्षणा-वृत्तिः, या या स्वजन्यपटुतमसंस्कारसहितोक्तप्रमा, सा सोक्ताज्ञान-तत्संस्कारक्षणावृत्तिः, सहितोपादाना-दुक्तसहितान्यशुक्त्यादेः प्रमाया उक्तसंस्कारक्षणवृत्तित्वेऽपि न व्यभिचारः। अत एव जीवन्मुक्तनिष्ठ-ब्रह्मप्रमाऽपि तादृशक्षणवृत्तिः। एवं या योक्ता प्रमा, सा स्वसमानविषयकाज्ञानप्रयुक्त-तत्संस्कारवत्काल-पूर्वभिन्ना। तथाच तादात्म्येनोक्तप्रमां प्रति स्वाधिकरणक्षणवृत्तित्वसम्बन्धेनोक्ताज्ञान-तत्संस्कारान्य-तरस्याभाव उक्ताज्ञानप्रयुक्त-तत्संस्कारान्यतरस्य स्वाधिकरणकालपूर्वत्वसम्बन्धेनाभावश्च व्यापकः। तादृशाभावप्रतियोगित्वस्याज्ञान-तत्प्रयुक्त-तत्संस्कारेषु सत्त्वाद् लक्षणसमन्वयः। तादात्म्येन तादृशप्रमां प्रति स्वसमानविषयकत्वं कालिकत्वं चेति सम्बन्धद्वयेनाज्ञान-तत्संस्कारान्यतरस्याभावः, स्वप्रयोजका-

विट्ठलेशीयटिप्पणी

इतनिवृत्तिपदार्थाभावादिकालः सहशब्दार्थः, तद्घटकाभावादौ प्रतियोगितया कार्यान्वयः। तादृशकालवैशिष्ट्यस्या-ज्ञानस्य निवृत्तावन्वये स्वकार्यनिवृत्तिकालावच्छिन्नत्वस्याज्ञाननिवृत्तौ लाभेन तत्र भासमानं ज्ञानप्रयुक्तत्वं तद्विशेषणकोटिप्रविष्टाज्ञानकार्यनिवृत्तौ लभ्यत इति बोध्यम्। जन्यत्वस्य तृतीयार्थत्वेऽत्यन्ताभावासंग्रहादाह—*ज्ञानेनेति* ॥ विशेषणे तृतीया, वैशिष्ट्यं संबन्धः। स च व्यापकत्वम्, प्रयुक्तत्वं वा। हेतौ वा तृतीया स्वघटितसामग्रीजन्यनिष्ठव्यापकत्व-प्रयुक्तत्वान्यतरलाक्षणिकीत्याह—*ज्ञानज्ञापिका ज्ञानाधीना वेति* ॥ निवृत्तिर्न यत्नविशेषः; अज्ञानस्याचेतनत्वेनानन्वयात्, नापि 'निश्चयेन संशयनिवृत्तिरि'त्यत्र संशयान्तरानुत्पादवद् अज्ञान-कार्यान्तरानुत्पादोऽर्थः; उत्पन्नकार्यनिवृत्तेरलाभप्रसङ्गात्, अतो व्याचष्टे—*निवृत्तिः=उक्तात्यन्ताभाव उक्तनाशो वेति* ॥ अत्र ज्ञानप्रयुक्तो योऽज्ञानस्वरूप-स्वप्रयुक्ततत्संस्काराभावः, तत्कालीनो योऽज्ञान-तत्संस्काराभावो ज्ञानप्रयुक्तः, स वाध इति पर्यवसितार्थः। तन्नाभावोऽत्यन्ताभावः, उभयनाशो वा बोध्यः। *प्रयुक्तत्वं च* व्यापकत्वं स्वरूप-संबन्धविशेषरूपं वेति बोध्यम्। *ननु*—उत्तरोपन्यस्तवार्तिके 'सम्यग्धीजन्ममात्रतः' इत्युक्तेः समानविषयक-ज्ञानाज्ञानयोर्विरोधाच्च ज्ञानोत्पत्तिकाल एवाज्ञान-तत्संबन्धयोर्ज्ञानाद् निवृत्तिरिति प्रतीयते, तच्च विरुद्धम्; स्वोत्पत्ति-कालीने स्वस्मिन्निव स्वभिन्नेऽपि स्वप्रयुक्तत्वासंभवात्, तस्य स्वोत्तरमात्रकालीनत्वनियतत्वात्, इत्याशङ्कां परिहरति—*अत्रेदं बोध्यमिति* ॥ निवृत्तेरत्यन्ताभाव-नाशान्यतररूपाया ज्ञानोत्पत्तिकालीनाया अपि ज्ञान-व्यापकत्वे बाधकाभावाद् *ज्ञानाधीनत्वपक्ष* इत्युक्तम्। *निवृत्तिस्वरूप इति* ॥ ज्ञानाधिकरणादिभाव-भिन्नस्वरूपे निवृत्तिपदार्थ इति, अज्ञाननिवृत्तित्वविशिष्टब्रह्मस्वरूप इति वार्थः। *अखण्डधर्मरूपम्=स्वरूपसंबन्ध-विशेषरूपम्। *अविरुद्धमिति* ॥ स्वरूपसंबन्धविशेषरूपस्य प्रयुक्तत्वस्य स्वोत्तरमात्रकालीनत्वनियतत्वे मानाभावादिति भावः। व्यभिचारमपि दर्शयति—*घटादिस्वरूप इति* ॥ घटातिरिक्तस्य घटोत्तरत्वस्यासंभवाद् घटस्वरूप इति। अत्यन्ताभेदे प्रयोज्य-प्रयोजकभावासंभवाद् भेदप्रयोजकं स्वरूपमाह—*तत्प्रागभाव-निवृत्तित्वविशिष्ट इति* ॥ स्वोत्पत्तिकालोत्पत्तिकेऽपीति शेषः। *ननु*—तत्र 'घटात् तत्प्रागभावो निवर्तते' इति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्प्रागभावो निवर्तते' इति धीवत् "तरति शोकमात्मवित्" "सोऽविद्याग्रन्थिं विकिरती"त्यादिप्रतीतेः, ज्ञानोत्पत्तिकाल एवाविद्यानिवृत्त्यनुभवाच्च ॥

न्यायामृतसौगन्ध्यम्

ज्ञानसमानविषयकत्वं स्वाश्रयकालपूर्वत्वं चेति सम्बन्धद्वयेनाज्ञानप्रयुक्त-तत्संस्कारान्यतरस्याभावश्च व्यापक इति प्रलापोऽपि—*अपास्तः* ; 'सन् घटः' इति प्रमाया आपातजन्यप्रमायाश्च त्वन्मते ब्रह्मप्रमात्वेन स्वीकृतायाः स्वसमानविषयकज्ञानकालवृत्तित्वेन व्यभिचारात्, विशेष्यताख्यविषयता-मादायैव ज्ञानाज्ञानयोस्समानविषयकत्वं हि त्वया वाच्यम्, न तु समानप्रकारकत्वमादाय ; अखण्डार्थक-वेदान्तजन्यब्रह्मज्ञानाज्ञानयोस्तदसंभवात् । तथोक्तप्रमयोरप्यस्ति ॥

सौगन्ध्यविमर्शः

प्रमाशब्देन हि तत्त्वप्रमैव विवक्षिता, अधिष्ठानसाक्षात्कार इति यावत् । तथा चाधिष्ठानतत्त्वसाक्षात्कार-स्यैव व्याप्यवृत्तित्वविवक्षणात् शुक्त्यादिप्रमाया अखण्डब्रह्मप्रमाया एव च प्रकृते ग्रहणम्, घटादिप्रमा तु नाधिष्ठानतत्त्व-साक्षात्कारः, केनापि रूपेणाज्ञातत्वासमानाधिकरणं ज्ञातत्वमेवाधिष्ठानतत्त्वत्वम् ; घटादिप्रमास्थले चाधिष्ठानं घटावच्छिन्नं चैतन्यमानन्दत्वादिनाऽज्ञातमेव वर्तते, इति न घटादिसाक्षात्कारोऽधिष्ठानतत्त्वप्रमा भवितुमर्हति, इति न व्यभिचारावसरः । वस्तु-तस्तूपहितान्याविषयकत्वे सत्युपहितविषयकत्वमेव ज्ञानाज्ञानयोः समानविषयकत्वमिति लघुचन्द्रिकायां वर्णनाद् घटादिविषय-घटादिप्रमाया घटोपादानाज्ञानसमानविषयकत्वाभावेन समानविषयकज्ञानकालवृत्तित्वाभावात् कस्य वा प्रलाप इति सर्व एव विवेचयन्तु ॥

विट्ठलेशीयटिप्पणी

प्रतीतिबलात् तथाऽभ्युपगम्यते, प्रकृते तथाऽभ्युपगमे किं प्रमाणम् ? अतस्तदधिगमकं श्रुतिप्रमाणमाह—*तरति शोक-मात्मविदिति*॥ अत्र शोकः=तन्निदानमज्ञान-तत्संबन्धौ, तयोस्तरणम्=प्लवनम्, गतिः ; तथाच तरतिनाऽभावो कथ्यते ; "धातुसंबन्धे प्रत्ययाः" इत्यनुशासनात् । अज्ञानाभावरूपधात्वर्थसमानकालीनत्वेन भासमानात्मज्ञानरूपोद्देश्यता-वच्छेदकप्रयोज्यत्वं तादृशधात्वर्थे विधेये भासते । *किंच* 'तरति' इति लटो वर्तमानकालोऽर्थः, स चेह न प्रकृत-शब्दप्रयोगाधिकरणकालः ; यतः स यदीश्वरस्य शब्दप्रयोगाधिकरणीभूतः सर्गाद्यकालः, तदा जीवानाम-ज्ञानमात्रोपाधीनां न देहेन्द्रियाणि, नापि तत्त्वज्ञानम्, कुतो मोक्षः ? यद्यध्यापकानाम्, तदा सर्वदैकैकजीवस्य तत्त्वज्ञान-मोक्षावावश्यकौ ; अन्यथा यद्वाक्योच्चारणकाले न तौ, तत्र तद्वाक्यार्थबाधः स्यात्, न चैवं संभवति ; "यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" । "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इत्यादिवाक्यैस्तस्य दुर्लभत्वेनासार्वदिकत्वात् । *किंच* तद्वाक्यस्य यत्काल उच्चारणम्, तत्पूर्वोत्तरकालीनतत्त्वज्ञान-मोक्षयोः प्रयोज्य-प्रयोजकभावाबोधनेनोक्तश्रुतेस्त्रैकालिकाज्ञाननिवृत्तिपरत्वस्याघातः स्यात्, किंतूद्देश्यतावच्छेदकीभूतात्म-ज्ञानोत्पत्तेर्वर्तमानकाल एवेह लडर्थः, इति तत्कालीनत्वं शोकनिवृत्तौ भासते ; तन्मात्रबोधे प्रयोजनाभावात्, उद्देश्य-विधेयभावमहिम्ना ज्ञानाज्ञानयोर्विरोधाच्च तत्प्रयोज्यत्वं लभ्यत इति भावः । उक्तश्रुतौ शोकपदस्या-विद्या-तत्संबन्धपरत्वेन तृधातोर्निवृत्तिपरत्वेन चोक्तार्थकत्वे श्रुत्यन्तरसंवादमाह—*सोऽविद्याग्रन्थिं विकिरतीति* ॥ *सः=ब्रह्मात्मसाक्षात्कारवान् । अविद्यासहितं ग्रन्थिम्=ग्रन्थिवत् दृढं तत्संबन्धम् *विकिरति=वराहो भूमीमिवोन्मूल-यतीत्यर्थः । तत्र लोकानुभवमप्याह—*ज्ञानोत्पत्तिकाल एवेति* ॥ 'इदं रजतमि'ति भ्रमोत्तरं नीलपृष्ठत्वादिविशेष-दर्शनेन दूरत्वादिदोषापगमेन वा शुक्तित्वप्रकारकसाक्षात्कारक्षण एव रजतभ्रमोपादानतूलाविद्यानिवृत्तेः सर्वानुभव-सिद्धत्वात्, ब्रह्मात्मसाक्षात्कारक्षण एव प्रपञ्चभ्रमोपादानमूलाविद्यानिवृत्तेर्जीवन्मुक्तानुभवसिद्धत्वाच्चेत्यर्थः ॥

*ननु*—अस्तु ज्ञानोत्पत्तिकाल एवाज्ञाननिवृत्तिः, किंतु तस्यां स्वोत्तरमात्रवृत्तित्वनियतं ज्ञानप्रयुक्तत्वं न

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यदि च स्वोत्पत्तिक्षणावच्छिन्नायां निवृत्तौ ज्ञानाधीनत्वं न स्वीक्रियत इत्याग्रहः, तथापि घटादिजनकसामग्र्या एव घटादिप्रागभावनिवृत्तिजनकत्वस्वीकारादव्यवहितपूर्वत्वसम्बन्धेन घटविशिष्टत्वेनैव तस्य वाच्यत्वाद् जनकतावच्छेदकस्यापि कार्ये प्रयोजकत्वाद् 'घटात् तत्प्रागभावनिवृत्तिरि'तिप्रत्यये घटप्रयोज्यत्वं निवृत्तौ भाति ॥

न्यायामृतसौगन्ध्यम्

*यत्तु* घटादिस्वरूपप्रतियोगिकविरहस्य ब्रह्मज्ञानान्यप्रयुक्तत्वेऽपि घटादिसंस्कारप्रतियोगिकस्योक्तावस्थितिसामान्याभावस्योक्तब्रह्मज्ञानप्रयुक्तत्वं तस्याप्यक्षतमिति, *तन्न* ; तथाहि ज्ञानप्रयुक्तविरहप्रतियोगिकारणकत्वमिति सिद्धम् ; तत्र चोत्तरज्ञान(१)प्रयुक्तनाशप्रतियोगिपूर्वज्ञानजन्यसंस्कारे सिद्धसाधनम् । *यत्तु* यदि च चरमक्षणे स्वेतरस्येव स्वस्यापि ध्वंसत्वं स्वीक्रियते ; एकत्रापि तत्र रूपभेदेन ध्वंसप्रतियोगित्वानुयोगित्वयोस्संभावात् , सकलदृश्यत्वेन हि तत्र प्रतियोगित्वम्, चरमतत्त्वज्ञानाश्रयतत्क्षणव्यक्तित्वेनानुयोगित्वम्, 'घटाभावे स नास्ति' इत्यादिप्रत्ययबलेन घटाभावादिप्रतियोग्यनुयोगिकस्यात्यन्ताभावत्वस्येव 'ज्ञानात् सर्वं दृश्यं नष्टमि'त्यादिप्रत्ययबलेन सर्वदृश्यप्रतियोगिकस्य चरमक्षणानुयोगिकस्य ध्वंसत्वस्य संभवात्, तदा 'ज्ञानप्रयुक्तावस्थिती'त्यादेः—ज्ञानाधीनो यः स्व-स्वीयसंस्कारोभयस्य नाशः, तत्प्रतियोगित्वमर्थः, उत्तरज्ञाननाश्ये तु न तद् निवेश्यम्—इति, *तन्न* ; ध्वंस(२)स्य

सौगन्ध्यविमर्शः

( १ ) निरुच्यमानज्ञाननिवर्त्यत्वस्य पूर्वज्ञान उत्तरज्ञाननिवर्त्यत्वरूपाभावाद् नोक्तसिद्धसाधनादिप्रसङ्ग इति स्पष्टं सिद्धिव्याख्यायां विवेचितम् ॥ ( २ ) सत्यमुक्तरीत्या लघुचन्द्रिकायामेव प्राभाकरमतरीत्या चरमक्षणस्य स्वनाशत्वमतनिरासेन ज्ञानप्रयुक्तात्यन्ताभावपक्ष एव समर्थितः ; तथाऽपि तुष्यतु दुर्जनन्यायेन कृतचिन्तयैवास्य ग्रन्थस्य प्रवृत्तिरिति "यदि स्वीक्रियते" इति निर्देशेन निर्णयाद् नात्र किमपि वयं समालोचनीयं पश्यामः ॥

विट्ठलेशीयटिप्पणी

संभवति । नच—उक्तव्याप्तौ मानाभावः ; स्वोत्पत्तिकालोत्पत्तिके स्वप्रयुक्तत्वस्याप्यग्राहकस्य स्वीकारे मानस्य भवतैव वक्तव्यत्वात्, भूयःसहचारदर्शनस्य तद्व्याप्तिग्राहकत्वाच्च । नच—घटप्रागभावनिवृत्तौ घटरूपायां घटप्रयुक्तायां व्यभिचारज्ञानसंभवाद् न व्याप्तिग्रहसंभवः ; तज्ज्ञानविरहसहकृतसहचारदर्शनस्यैव व्याप्तिग्राहकत्वात्, इति—वाच्यम् ; घटप्रागभावनिवृत्तौ घटप्रयुक्तत्वानुपगमात्, घटजनकसामग्रीप्रयुक्तत्वस्यैव तत्रोपगमात्, इत्याशङ्कते—*यदि चेति* ॥ स्वम्=ज्ञानम् । *निवृत्तौ=अज्ञाननिवृत्तौ । 'ज्ञानेनाज्ञाननिवृत्तिः' 'घटात् स्वप्रागभावनिवृत्तिरि'त्यादिव्यवहाराणां विवरणकाराद्यभियुक्तकृतानां गौणत्वेनोपपादनस्यान्याय्यत्वात्—*यदि चेति—आग्रह इत्युक्तम्* ॥ अभ्युपगम्य प्रागभावनिवृत्तिं प्रतिबन्द्या समाधातुमुपक्रमते—*तथापीति—स्वीकारादिति* ॥ तथाच प्रकृतेऽपि ज्ञानजनकसामग्र्या एवाज्ञाननिवृत्तिप्रयोजकत्वं स्वीकार्यमिति भावः । कथं तर्हि घटात् तत्प्रागभावनिवृत्तिरिति प्रत्ययः ? तत्राह—*अव्यवहितपूर्वत्वसंबन्धेनेति* ॥ *घटविशिष्टत्वेनैवेति* ॥ अन्यथा घटत्वावच्छिन्नजनकतावच्छेदकानि यावन्ति, तावदवच्छिन्नत्वेनापरावच्छिन्नविशिष्टैकावच्छिन्नत्वेन वा जनकत्वेऽवच्छेदकगौरवम्, विनिगमनाविरहेण कारणताबाहुल्येन गौरवं च स्यादिति भावः । *तस्य=घटप्रागभावनिवृत्तिजनकत्वस्य । *जनकतावच्छेदकस्यापीति* । जनकविधया प्रयोजकत्वस्यैव पूर्ववृत्तित्वनियतत्वात्, घटस्य प्रागभावनिवृत्तिसमानकालीनत्वेऽपि जनकतावच्छेदकविधया प्रयोजकत्वं संभवतीति यथा, तथा प्रकृतेऽव्यवहितपूर्वत्वसंबन्धेन ज्ञानविशिष्टत्वेनैव लाघवेन तत्सामग्र्या अज्ञाननिवृत्तौ जनकत्वाद् ज्ञानस्य तदवच्छेदकत्वात् समानकालीनत्वेऽपि जनकतावच्छेदकविधया प्रयोजकत्वमव्याहतमिति भावः ॥

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

यदि चोक्तनिवृत्तिर्घट एव, न तदन्या, तत्र च कपालत्वादिनैव हेतुत्वम्, नतु घटवत्त्वेन, इति न घटस्य स्वस्मिन् प्रयोजकत्वमुच्यते, तदा 'घटात् तत्प्रागभावो निवृत्तः' इति व्यवहारो न मुख्यः, किन्तु

**न्यायामृतसौगन्ध्यम्**

**प्रतियोगिकालावृत्तित्वनियमात्, प्रतियोगि-प्रागभावयोरिव प्रतियोगि-ध्वंसयोरभेदोक्तेः—'मूकोऽहमि'तिवद् व्याहतत्वात्, 'चरमक्षणस्य ध्वंसः' इतिवत् 'चरमक्षणः स्वध्वंसः' इति व्यवहारापत्तेश्च, इष्टापत्तौ जगति व्यवस्थामात्रस्योच्छेदः स्यात्। 'घटाभावे स नास्ति' इत्यादि तु सम्यगेव; तद्व्याघाताद्यभावात्॥**

***यत्तु* दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभावो दृश्योच्छेद इति, *तन्न*; दृश्याधिकरण-क्षणवृत्तिध्वंसप्रतियोगित्वरूपपूर्वत्वस्यात्यन्ताभाव-ध्वंसयोर्द्वयोर्ध्वंसाद्यभावे हि तेनैव दृश्येन त्वदुक्तं व्याहतं स्यात् (१), भावे च तेनैव दृश्येनोक्तदूषणं स्यात्, प्रतियोग्युन्मज्जनापत्तिश्च॥ *नच*—दृश्यमात्रस्य ध्वंसश्चरमवृत्त्यात्मकः, वृत्तेरपि (२) ध्वंसत्वेन स्वात्मकध्वंसप्रतियोगित्वमिति—*वाच्यम्*; एकस्य हि पूर्वत्वादिघटितजन्य-जनकत्व आत्माश्रयादिदोषेण व्याहतेः॥ *नच*—चरमवृत्तित्वेन जनकत्वम्, दृश्यध्वंसत्वेन जन्यत्वम्, इति रूपभेदेन नोक्तदोष इति—वाच्यम्; रूपभेदेऽप्येकस्यैवोत्तरपूर्वादि-वृत्तित्वासंभवात्, अन्यथा दृश्यस्यैव घटस्य घटत्वेन कार्यत्वम्, द्रव्यत्वादिना कारणत्वम्, इति जगति कार्य-कारणभावादिव्यवस्थोच्छि[illegible]त॥**

**सौगन्ध्यविमर्शः**

( १ ) ध्वंसात्यन्ताभावयोरपि दृश्यत्वेन ज्ञाननाश्यत्वाद् दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभावो न विरुद्धः। ध्वंसध्वंसेऽपि प्रतियोग्युन्मज्जनापत्तिस्तु प्रागभावध्वंसात्मकघटनाशेऽपि प्रागभावानुन्मज्जनाद् न प्रसरति। वस्तु-तस्तु—दृश्याधिकरणक्षणपूर्वत्वाभावो नाम दृश्यप्रागभावावच्छिन्नक्षणत्वाभाव एव, न तु दृश्याधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वा-भावः, इति चरमवृत्ति-दृश्यसामान्य-तत्प्रागभावानां सर्वेषां वृत्तिक्षणे तदनन्तरक्षणे वा नाशाद् न दोषलेशोऽपि। न केवलमत्र प्रागभावमात्रनाशः, किन्तु तन्नाशात्मकदृश्यनाशोऽपि, इति न दृश्योत्पत्तिप्रसङ्गः॥

( २ ) अखण्डाकारवृत्तेः सर्वदृश्यनाशकत्वस्य श्रुतिसिद्धत्वादन्वय-व्यतिरेकसहचारग्रहानपेक्षत्वाद् वृत्तेरेव ध्वंसत्वेन स्वजनकत्वमपि न व्याहतम्। भावाद्वैतमते तु न दोषलेशोऽपि; भावदृश्याधिकरणक्षणपूर्वत्वाभावस्यैव विवक्षणात्। दृष्टं हि रूपभेदेन ज्ञेयत्वं ज्ञातृत्वं चात्मनः, इति विरुद्धयोर्धर्मयो रूपभेदेनासति बाधके सामानाधिकरण्यमबाधितमेव। घटस्यैव रूपभेदेन कार्य-कारणभावं विना तु न किञ्चिदनुपपन्नम्, अत्र तु श्रुतिरनुपपन्ना स्यादिति वैषम्यमिति। न चैवं ब्रह्मणोऽप्यखण्ड-साक्षात्कारानन्तरक्षणवृत्तित्वं नास्ति, इत्युच्छिन्नत्वव्यवहारापत्तिः; यदि क्षणसम्बन्धाभावमात्रमुच्छेदपदार्थः, तर्हि स्यादेव, न तु तथा; साक्षात्कारानन्तरं दृश्यानां क्षणस्य च स्वरूपतोऽप्यभावेन खलूच्छिन्नत्वं मन्यते, ब्रह्मणोऽपि यदि स्वरूपतोऽभाव एवोच्छेदव्यवहारापत्याऽऽपाद्यते, तर्हि तु श्रुतिविरुद्धत्वात् "तरति शोकमात्मवित्" "विद्वान्नामरूपाद्विमुक्तः" इति श्रुत्यर्थ-परीक्षणप्रसङ्गानुपयुक्तत्वाच्च नैतत्समालोचनार्हमपि। "ब्रह्मणः कालासम्बन्धित्वे तुच्छत्वम्, 'सदेवे'ति वाक्याप्रामाण्यञ्चे"ति त्वदुक्तोपालम्भनम्। न हि वयं कल्पितोऽपि कालसम्बन्धो व्यवहारदशायामपि नास्तीति वदामः, किन्तु परमार्थतः काला-सम्बन्धित्वम्। न च तदेव तुच्छत्वम्; घटादेरतुच्छत्वाभ्युपगमात्॥

**विट्ठलेशीयटिप्पणी**

***ननु*—[illegible]विधया प्रयोजकत्वमपि पूर्ववृत्तित्वनियतमेव, इत्यत आह—*यदि चेति*॥ *उक्त-निवृत्तिः*=घटप्रागभावनिवृत्तित्वविशिष्टरूपा। *तत्र*=घटरूपायामुक्तनिवृत्तौ। *कपालत्वेनैवेति*॥ लाघवाद् घटत्वं [illegible]च्छेदकीकृत्येति शेषः। प्रकृतेऽज्ञाननिवृत्तिर्ज्ञानरूपा, तां प्रति ज्ञानत्वं जन्यतावच्छेदकीकृत्याऽऽत्मत्वादिना [illegible] हेतुत्वम्, न ज्ञानत्वेनेति भावः। *न मुख्य इति*॥ किंतु घटपदस्य घटजन्यकार्यकतया गौणः; [illegible]: प्रयोजकतावच्छेदकत्वार्थकत्वे लाक्षणिकेऽपि गौणत्वं दुर्वारमिति भावः। प्रकृतेऽपि गौण्या श्रौतव्यवहारस्य उप-**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'घटजनकाद् घटप्रागभावनिवृत्तिरि'त्येव मुख्यो व्यवहारः। "तरति शोकमि"त्यादौ शोको नाविद्यादिकम्, किन्तु दृश्यमात्रम्। *आत्मवित् = आत्मज्ञानसाधनवानिति *दिक्* ॥

इतरदृश्यनिवृत्तौ तु ज्ञानसाध्यताऽपि सम्भवति; ज्ञानोत्पत्त्युत्तरकालीनत्वात्। उक्तसाध्यताऽपि ज्ञानाधीनाग्रिमसमयसम्बन्धरूपा तादृशदृश्यविरोधित्वविशिष्ट एवात्यन्ताभावे स्वीक्रियते। स्वम् = तादृशात्यन्ताभावः, ज्ञानपूर्वकालीनत्वविशिष्टे तादृशात्यन्ताभावे ज्ञानसाध्यत्वस्याप्रतीतेः। तादृशविरोधित्वं च तस्य नानुपपन्नम्; तत्त्वज्ञानस्योक्तात्यन्ताभावेतरदृश्याश्रयकालपूर्वत्वविशिष्टान्यत्वनियमात्। तादृशाभावस्यापि

न्यायामृतसौगन्ध्यम्

किञ्चैवं ब्रह्माधिकरणक्षणत्वाधिकरणक्षणपूर्वत्वाभाव इत्यपि संभवेन ब्रह्मणोऽप्युच्छेदापत्तिः। तस्य कालासम्बन्धित्वे तुच्छत्वम्; "सदेव सोम्येदमग्र आसीदि"त्यादिवाक्याप्रामाण्यं च स्यात् ॥

किञ्च दृश्याधिकरणक्षणे दृश्याधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावः तत्क्षणस्य नित्यत्वेन

विट्ठलेशीयटिप्पणी

पादयति—*तरतीति* ॥ *अविद्यादिकमिति* ॥ आदिना तत्संबन्धः। *दृश्यमात्रम्=अविद्या-तत्संबन्धान्य-दृश्यम्, अविद्यादिदृश्यसामान्यं वा। अज्ञानादिमात्रनिवृत्तिस्तु ज्ञानाज्ञानयोर्विरोधाद् ज्ञानोत्पत्तिकालस्यैव लोकसिद्धैव, इति न श्रुत्या प्रतिपाद्यत इति भावः। अत्र विधेयकोटौ लक्षणाया अन्याय्यत्वात् कल्पान्तरम्। उद्देश्यकोटौ लक्षणयाऽऽह—*आत्मविदिति* ॥ अस्मिन् पक्षेऽज्ञाननिवृत्तिर्ज्ञानप्रयुक्तत्वेन लोकैरभिमन्यमाना ज्ञान-साधनप्रयुक्तत्वेन श्रुत्या बोध्यते, तत्प्रयुक्तनिवृत्तिस्तदुत्तरकालेऽर्थसिद्धेति ध्येयम्। *दिगिति* ॥ शोकोऽ-विद्यादिकमेव, तत्र चात्मज्ञानरूपोद्देश्यतावच्छेदकप्रयोजकत्वं समानकालीनत्वमुभयं वा संसर्गमर्यादया भासते, इति न कस्यापि गौणत्वमिति दिगर्थः। अस्मिन् पक्षे विवरणवाक्ये 'ज्ञानेने'त्यत्र ज्ञानपदं ज्ञान-तज्जनका-न्यतरप्रयोजकपरम्, प्रयोजकत्वं वा तृतीयार्थ इति बोध्यम्। [ "तरति" "विद्वान्नामरूपाद्विमुक्तः" इति श्रुत्योर्दृश्यसामान्याभावे प्रयोजकत्वबोधकत्वेऽपि प्रामाण्यस्य मुख्यत्वोपपादनायाह—(क) ] *इतरदृश्यनिवृत्ता-विति* ॥ अविद्यादीतरदृश्यमात्रनिवृत्तावित्यर्थः, अविद्यादिसाधारणदृश्यसामान्यनिवृत्तावित्यर्थो वा। *ज्ञान-साध्यताऽपीति* ॥ अपिनाऽविद्यादिनिवृत्तिनिष्ठज्ञानजनकसाध्यत्वस्योक्तस्य समुच्चयः ॥

*ननु*—नाशरूपनिवृत्तिपदार्थे ज्ञानजन्यतारूपज्ञानसाध्यतासंभवेऽपि नित्येऽत्यन्ताभावे कथं सा संभवति?—इत्यत आह—*उक्तसाध्यताऽपीति* ॥ ज्ञानाधीनो यो ज्ञानाव्यवहितोत्तरक्षणसबन्धस्तद्रूपेत्यर्थः। *ननु*—दृश्या-त्यन्ताभावे ज्ञानोत्तरक्षणसंबन्धः कथं ज्ञानाधीनः? पदार्थान्तरनिष्ठस्यास्येव दृश्यात्यन्ताभावनिष्ठस्य ज्ञानपूर्वक्षणसंबन्ध-स्येव चास्यापि ज्ञानाधीनत्वासंभवादित्याह—*तादृशदृश्यविरोधित्वविशिष्ट इति* ॥ एतदस्वीकारे बाधकमाह—*ज्ञानपूर्वकालीनत्वविशिष्ट इति* ॥ *ज्ञानसाध्यत्वस्याप्रतीतेरिति* ॥ तथाच तत्प्रत्ययापत्तिरेव तत्र बाधिकेति भावः। दृश्यकालीनस्य कथं दृश्यविरोधित्वम्? कथं वा तद्विशिष्टनित्यस्य ज्ञानोत्तरक्षणसंबन्धस्य ज्ञानप्रयुक्तत्वम्? तत्राह—*तादृशविरोधित्वं चेति* ॥ दृश्यविरोधित्वं न दृश्यानधिकरणक्षणवृत्तित्वम्; दृश्यानधिकरणस्यत्वस्य दृश्यात्यन्ताभाववत्त्वे दृश्यवत्त्वेदरूपत्वे वा तत्रापि ज्ञानाधीनत्वकथनताया अक्षतत्वात्, किन्तु दृश्याधिकरणक्षणा-वृत्तित्वम्। तद्विशिष्टे दृश्यात्यन्ताभावे ज्ञानोत्तरक्षणसंबन्धः=तद्वैशिष्ट्यावच्छिन्ना या तादृशक्षणवृत्तिता तदाश्रयत्वम्, दृश्याधिकरणक्षणावच्छिन्नज्ञानोत्तरक्षणावच्छिन्नदैशिकविशेषणतावच्छिन्नज्ञानाश्रयनिष्ठाधिकरणताकत्वं वा। तत्र ज्ञानप्रयुक्तत्वनिर्वाहकं नियममाह—*तत्त्वज्ञानस्येति* ॥ तथाचैतन्नियमबलेन ज्ञानोत्तरक्षणस्य दृश्याश्रयत्वविघटनाद् दृश्याभावे दृश्याश्रयक्षणवृत्तित्वविघटनेन तदभाववैशिष्ट्यनिर्वाहात् तदवच्छिन्नज्ञानोत्तरक्षणवृत्तितानिर्वाह इति भावः। तत्स्वज्ञानोत्तरक्षण उक्तात्यन्ताभावव्यवहारनिर्वाहाय—*उक्तात्यन्ताभावेतरेति* ॥ तादृशात्यन्ताभावत्वविशिष्टस्य-दृश्यस्य मोक्षदशायामनुवृत्तिवारणायाह—*तादृशाभावस्यापि क्षणिकत्वमिति* ॥ अत्र दृश्यविरोधित्वविशिष्ट-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

क्षणिकत्वम् ; दृश्याश्रयकालपूर्वत्वविशिष्टान्यत्वनियमादिति । एवमज्ञानप्रयुक्तसाहित्यस्याज्ञाने कथनाद् अज्ञानस्य निवृत्तिक्रियायां प्राधान्यलाभात् प्रथममज्ञानस्य पश्चादज्ञानप्रयुक्तस्य निवृत्तिरिति सूचितम् ॥

तत्रापि स्वसहितस्य स्वप्रयोजकाज्ञानस्य निवृत्तिः, अज्ञानप्रयुक्तस्य बाध इति बोध्यम् ; अज्ञानप्रयुक्तस्यैव बाध्यत्वव्यवहारात् । स्वप्रयोजकाज्ञाने निवृत्तेऽपि जीवन्मुक्ते देहादिबाधाव्यवहारात् *स्वसहितस्येति* ॥ प्रलयादौ घटादेर्निवृत्तिरपि जीवन्मुक्तस्य नानाशरीरप्रापकप्रारब्धकर्मणाऽग्रिमकल्पे संसरिष्यत इन्द्रादेश्चाज्ञाननिवृत्तिसहिता, इति तस्यास्तं प्रति घटादिबाधत्वाभावात्—*ज्ञानप्रयुक्तेति* ॥

### न्यायामृतसौगन्ध्यम्

**तद्ध्वंसस्य तत्क्षणासम्बन्धित्वेन वा स्यात्, (१)तदुभयमप्यसंभवि । *एतेन*—उच्छेद्यमात्रस्योच्छिद्यमानधर्मत्वात् षट्सु हि 'जायतेऽस्ती'त्यादिभावविकारेषु यास्केन परिगणितेषु चरमस्य तस्य जन्मसामानाधिकरण्य-**

### सौगन्ध्यविमर्शः

( १ ) न हि वयं क्षणनित्यत्वेन ध्वंसस्य क्षणासम्बन्धित्वेन वा दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभावं वदामः, येनोभयमप्यसंभवीति दूषणं सावसरं स्यात्, किन्तु क्षणादिसर्वदृश्यानां साक्षात्कारानन्तरं स्वरूपतोऽभावेनेति मन्तव्यम् ।

### विट्ठलेशीयटिप्पणी

दृश्यात्यन्ताभावत्वेनैव क्षणिकत्वम्, अत एव 'ज्ञानपूर्वकालीनत्वविशिष्टे तादृशात्यन्ताभावे' इत्यनेन न विरोधः, उक्तात्यन्ताभावस्तु ब्रह्मरूपतया नित्य इति भावः । एतन्निर्वाहकं नियममाह—*दृश्याश्रयेति* ॥ तादृशाभावस्य विशिष्टस्येत्यादिः । उक्तविवरणवाक्येनाज्ञानस्य भावरूपत्वम्, तन्निवृत्ति-तत्प्रयुक्तनिवृत्त्योर्ज्ञानप्रयुक्तत्वं यथा बोध्यते, तथाऽज्ञाननिवृत्तिः पूर्वम्, तदुत्तरं तत्प्रयुक्तनिवृत्तिरित्यपि बोध्यत इत्याह—*एवमिति*—प्राधान्यलाभादिति* ॥ "सहयुक्तेऽप्रधाने" इत्यनुशासनात् 'पुत्रेण सहागतः पिता' 'पित्रा सहागतः पुत्रः' इति प्रयोगयोरसांकर्यादिति भावः । *प्रथममिति* प्रकृताभिप्रायम् । क्वचित्पाण्डित्यं क्वचिदामन्त्रणादि प्राधान्यप्रयोजकम् । तेन अग्रगेण पुत्रेण सह पण्डित आहूतः पिता आगत इति प्रयोगनिर्वाह इति बोध्यम् ॥

उक्तविवरणवाक्येऽज्ञानस्य निवृत्तिरज्ञानस्य बाध इति प्रतीयते, तच्च न युक्तम्; अज्ञाने बाध्यत्वव्यवहाराभावात्, किन्तु निवृत्तिपदोत्तरं स्वकार्यस्येति पूरणाद् निरुक्ताज्ञाननिवृत्तिरज्ञानप्रयुक्तस्य बाध इत्यर्थ इत्याह—*तत्रापीति* ॥ स्वसहितस्येति* ॥ स्वम्=अज्ञानप्रयुक्तं शुक्तिरजतादि । तथाच ज्ञानप्रयुक्तस्वनिवृत्तिपूर्वकालीनस्वप्रयोजकाज्ञाननिवृत्तिकत्वम्, ज्ञानप्रयुक्तस्वप्रयोजकाज्ञाननिवृत्युत्तरकालीननिवृत्तिप्रतियोगित्वं वा बाध्यत्वमित्यर्थः । उक्तव्याख्याप्रयोजनं स्वयं दर्शयति—*अज्ञानप्रयुक्तस्यैवेति* ॥ एवकारेणाज्ञानव्यवच्छेदः । स्वनिवृत्तिपूर्वकालीनत्वरूपस्वसाहित्यनिवेशे प्रयोजनमाह—*स्वप्रयोजकाज्ञानेति* ॥ स्वम्=देहादि । तन्निवेशे तु स्वोपादानाज्ञानविनाशेऽपि प्रारब्धकर्मादिरूपप्रतिबन्धकबलेन देहादेरनाशाद् न तद्बाध्यत्वव्यवहार इति भावः । स्वनिवृत्तौ ज्ञानप्रयुक्तत्वप्रयोजनमाह—*प्रलयादौ घटादेर्निवृत्तिरपीति* । जीवन्मुक्तस्याज्ञाननिवृत्तिसहितेति, 'नाने'त्यादिविशेषणाक्रान्तस्येन्द्रादेरज्ञाननिवृत्तिसहितेति चान्वयौ । उत्तरकालीनेति सहितपदार्थः । एकाज्ञानपक्षे तत्कल्पितघटादौ जीवन्मुक्तेन्द्राद्यज्ञानस्य प्रयोजकत्वात्, नानाज्ञानपक्षे तत्तत्पुरुषीयप्रतीयमानप्रातिभासिकरजतादेस्तत्तदज्ञानकल्पितत्वात्, व्यावहारिकस्य वियदादिप्रपञ्चस्यापि तत्तदज्ञानकल्पितत्वाद् जीवन्मुक्तेन्द्राद्यज्ञानयोर्घटादिप्रयोजकत्वात्, स्वप्रयोजकस्वघटितोक्तबाधत्वापत्तिसङ्गतिः । *तस्याः=प्रलयावच्छिन्नाया घटादिनिवृत्तेः । *तं प्रति=जीवन्मुक्तमिन्द्रादिकं च प्रति । *घटादिबाधत्वाभावादिति* ॥ तदापत्तिः, अत इति शेषः । *ज्ञानप्रयुक्तेतीति* ॥ उक्तनिवृत्तिश्च न ज्ञानप्रयुक्ता, इति नोक्तापत्तिरिति भावः । उक्तबाधलक्षणेऽज्ञाननिवृत्तौ ज्ञानप्रयुक्तत्वं न प्रवेश्यम् ; तत्र तस्या व्यभिचारेण प्रयोजनाभावात्, अज्ञानकार्यनिवृत्तौ तल्लाभायैव तदुपादानात् ॥

*ननु*—अज्ञानकार्यनिवृत्तिः 'प्रविलीनेन' इत्युक्तेः संस्कारस्यैव प्रविष्टेत्युक्तम्, प्रलयकालीनघटादिनिवृत्तिस्तु न तादृशी, इति तत्रापि ज्ञानप्रयुक्तत्वं व्यर्थमिति—चेत्, *न* ; विवरणे 'प्रविलीनेन' इत्युक्ति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उक्तविवरणवाक्ये निवृत्तिपदमत्यन्ताभावपरमपि वक्तुं शक्यते; वक्ष्यमाणवार्तिकवाक्येन 'नासीदि'त्यादिनाऽविद्या-तत्प्रयुक्तात्यन्ताभावस्य बोधनात् ॥ *अत एवोक्तं वासिष्ठादौ—

"दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चेत्, तदोत्पन्ना परा निर्वाणनिर्वृतिः ॥" इति ।

न्यायामृतसौगन्ध्यम्

भुवितम्, तथैवानुभवात् । अत एव चिरविनष्टे घटे प्रागेव घटो नष्टो नेदानीमिति प्रत्ययः । ये तु ध्वंसमनुच्छेदस्वभावाभावमिच्छन्ति, तेषामुक्तप्रतीतिविरोधः, विपरीतप्रत्ययापत्तिः, "णश अदर्शने" इत्यादिधात्वर्थाननुगमः, 'नाशश्छेदः' इति भावार्थकघञाद्यनुपपत्तिश्च स्यात् । भावविकाराणां च न पृथग् भावविकाराः, यथा गुणानां न गुणाः; स्वाश्रयात् पृथगसत्त्वात्, अनवस्थापत्तेश्च । एवं च दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभाव एवाधिकरणात्मा चरमदृश्यस्य ब्रह्मसाक्षात्काररूपस्य चरमो विकारो दृश्योच्छेदः, तन्तुदाहस्तदवयव-तद्विकाराणामिवाविद्या-विश्व-चरमवृत्तीनामेक एवाभ्युपगम्यत इति मन्दप्रलपितम्—*निरस्तम्* ॥ सान्वयोच्छेदवादिनां 'घट्स्वि'त्यादित्वदुक्तार्थसंभवेऽपि निरन्वयोच्छेदवादिनस्तव तदसंभवात् । 'अत एवे'ति सम्यगेव; 'प्रागेव नष्टो घटः' इत्यादेः प्राक्कालोत्पन्ननाशप्रतियोगी घटः नेदानीमुत्पन्ननाशप्रतियोगीत्यर्थात् । उच्छेदो भावो वाऽभावो वेति । उभयथाऽपि पूर्वावस्थाऽदर्शनं तुल्यमेव ॥

किञ्च धातूनां ह्यनेकार्थत्वम् । न हि 'ओष्ठो भिन्नः' 'देशान्तरे स्थितस्य घटस्यात्रा-

विट्ठलेशीयटिप्पणी

संस्काराज्ञानकार्यनिवृत्तिरेव ज्ञानप्रयुक्ता, न तु प्रलयकालीनेति ज्ञापनायैव, लक्षणे तु कार्यस्य स्वरूपनिवृत्तिसंस्कारनिवृत्तिद्वयसाधारणकार्यनिवृत्तित्वेनैव निवेश इत्यभिप्रायात् । नच—प्रलयकालीनघटादिनिवृत्तिवारणाय स्वस्वसंस्कारान्यतरत्वेनैव कार्यनिवृत्तेर्निवेशोऽस्त्विति—वाच्यम्; एवं सति 'ज्ञानेन' इत्यस्य सर्वथा वैयर्थ्यापत्तेः । 'ज्ञानेनाज्ञानकार्यस्य' बाध इति व्यवहारविषयस्यैव निर्वचनाय 'ज्ञानेने'ति तदर्थस्यैव निवेश्यत्वाच्चेति ध्येयम् । विवरणवाक्ये निवृत्तिपदस्यात्यन्ताभावपरत्वग्राहकतया वार्तिकोपन्यासं सफलयितुमाह—*उक्तविवरणवाक्य इति* ॥ अपिना नाशपरम्; 'ज्ञानेने'ति जन्यत्वार्थकतृतीयास्वारस्यात् । *नासीदित्यादिनेति* ॥ *अत्र* आत्माऽऽविद्यादिरूपो नासीदिति भेदार्थकत्वं तु न; 'तरती'त्यादिश्रुत्येकवाक्यतयाऽऽत्मनि अविद्यादि नास्तीत्यत्यन्ताभावमात्रबोधकत्वात्, नापि ध्वंस-प्रागभावार्थकत्वम्; 'नास्ति' इत्यस्याविद्यादिकालीनस्य प्रत्ययस्य तद्विषयकत्वासम्भवात्, अत्यन्ताभावविषयकत्वं तु सम्भवतीति पूर्वोक्तं न विस्मर्तव्यमिति भावः । प्रसङ्गाद् एतत्समानार्थकं योगवासिष्ठवाक्यं व्याख्यातुमेतदुपष्टम्भकतयोपन्यस्यति—*अत एवोक्तमिति*॥ *दृश्यं नास्तीति*॥ आत्मनीत्यादिः । *मार्जनम्=मलापाकरणम्* । प्रकृते दृश्यरूपमलबोधकदृश्यपदसन्निधानादपाकरणमात्रम् । तच्चाभाववत्त्वसम्पादनम् । तदपि सम्पन्नपदसमभिव्याहारादभाववत्त्वमात्रम् । तत्र 'बोधेने'ति तृतीयार्थप्रयुक्तत्वान्वयः । अभावे दृश्यान्वितप्रतियोगित्वरूपकर्मत्वस्य षष्ठ्यर्थस्यान्वयः; 'घटं नाशयति', 'अपाकरोति' इत्यादावभावप्रतियोगिताया अपि कर्मप्रत्ययार्थत्वात् । *परा*=निरतिशया । व्यापिकेति यावत् । निर्गतं वानं गतिर्नाशो यस्याः सा, निर्वाणा । *निर्वृतिः*=सुखम् । *उत्पन्ना*=आत्मस्वरूपतया नित्याऽप्यविद्यावृतत्वादविद्यमानेव विद्यमानाऽविद्यानिवृत्त्यानुत्पन्नेव स्वतः प्रकाशते; 'उत्पन्ने'ति सिद्धनिर्देशः कारणान्तरापेक्षासूचनायेति बोध्यम् ॥

अत्र मनःपदेन तत्तादात्म्यापन्नं चैतन्यं जीवात्मपदार्थरूपं विवक्षितम्; तस्यैव तत्र उपाध्युपलक्षणत्वाभ्यां

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु*—मनस इत्यस्य बोधेऽन्वयः ? मार्जने वा ? *आद्ये तत्त्वज्ञानसाध्यस्य दृश्यसामान्याभावस्य स्वेतरसर्वदृश्यविरोधित्वस्य पूर्वोक्तस्य भङ्गः ; तादृशविरोधित्वे सति तादृशाभावस्य तत्कालीनमनोनिष्ठवृत्तिरूपबोधविषयत्वासम्भवात्, *अत एव न द्वितीयः* ; उक्तात्यन्ताभावरूपस्य मार्जनस्य मनोनिष्ठत्वासम्भवात् , अथ दृश्ये तदन्वयः, तथापि तादृशबोधस्य वृत्तिरूपस्य दृश्यत्वेनोक्तो दोषः, तस्यानपायात् , इति—चेत् , *न* ; उक्तात्यन्ताभावस्य स्वविषयकवृत्तिभिन्नसर्वदृश्यविरोधित्वस्यैव स्वीकारात् ,

### न्यायामृतसौगन्ध्यम्

दर्शनमि'त्यादा'वोष्ठो विदीर्णः' 'अत्र तद्घटस्य नाशः' इति व्यवहारोऽस्ति, बाधानुपपत्तिर्वा, अस्त्येव घटस्य नाशः पटस्य ध्वंस इत्यादौ ; धात्वर्थतुल्यत्वात् ॥

'एवं चे'त्याद्ययुक्तम् ; दृश्यस्य ब्रह्मसाक्षात्कारस्योच्छेदे किमधिकरणम्—दृश्यान्तरम् ? ब्रह्म वा ? आद्ये तस्याप्युच्छेदेन भाव्यमित्यनवस्था, द्वितीये साध्यासाध्ययोस्सापेक्ष-निरपेक्षयोरेकस्वभावस्यासंभवः(१), स्वप्रकाशरूपस्य तस्य सर्वदैव सत्त्वेन दृश्याधिष्ठानं कदापि न स्यात् । न हि त्वत्प्रलपित-

### सौगन्ध्यविमर्शः

( १ ) स्वप्रकाशमपि चैतन्यं केन चन रूपेण दृश्याधिकरणक्षणेऽज्ञातमेव वर्तते, न सर्वात्मना नावृतम् । दृश्याभावस्तु सर्वथाऽनावृतमेव चैतन्यम्, तथाचावृतत्वे दृश्याधिष्ठानत्वम्, सर्वात्मनाऽनावृतत्वे तु दृश्योच्छेदरूपत्वमिति न विरोधः । यथाच स्वप्रकाशस्यापि चैतन्यस्य यावदखण्डसाक्षात्कारं नाज्ञानेन विरोधः, तथाऽज्ञानाश्रय-विषयविवेकप्रकरणे सुष्टु विवेचयिष्यते । न हि वयमपि घटादीनां निरन्वयोच्छेदं वदामः ; तदुपादानस्य ब्रह्मणः सत्यत्वोपगमात् , इति दृश्योच्छेदस्य ब्रह्मरूपत्वे न कोऽपि दोषः । एतेन— दृश्याधिकरणं किं दृश्यान्तरम् ? उत ब्रह्म ? द्वितीये साध्यासाध्ययोः सापेक्ष-निरपेक्षयोरेकस्वभावत्वविरोधादित्यादि—न सावसरम् ; पूर्वोक्तरीत्याऽभावत्वोपलक्षितस्यैवाभावस्य ब्रह्मरूपत्वेन विशिष्टस्यैव साध्यत्वादिना च दोषाभावात् । "न हि त्वदुक्तषड्भावविकाराणामेकत्र स्थितिर्दृष्टा युक्ता वे"त्यादि त्वनुक्तोपालम्भनम् ; ब्रह्मसाक्षात्काररूपस्य दृश्यस्योच्छेदकाभावात् सर्वदृश्योच्छेदरूपत्वासम्भव इति तु शङ्का वृत्तिक्षणिकतामते व कथमपि संभवति । अद्वैत दृष्ट्यापि मनःपरिणामत्वादखण्डाकारवृत्तेर्मनोनाशेनाविद्यानाशेन वा बाधो ज्ञानप्रयुक्तोऽविरुद्ध एव । यथा

### विट्ठलेशीयटिप्पणी

तत्त्वज्ञान-दृश्यमार्जन-मोक्षान्वययोग्यत्वात् । *आद्य इति* ॥ मनसि स्वविषयकवृत्तिरूपस्य स्वेतरदृश्यस्य स्वीकार इति शेषः । दृश्याभावे मनोनिष्ठवृत्तिरूपस्वेतरदृश्यविषयत्वस्वीकार इत्यर्थः । *तत्त्वज्ञानम्=उक्तदृश्याभावबोधः, तदुत्तरकालीननिर्विकल्पकात्मज्ञानं च, तत्साध्यस्येत्यर्थः । विरोधित्वस्येत्यत्रान्वयः । *भङ्गः=अभावापत्तिः । *ननु*—दृश्यभावस्योक्तवृत्तिविषयत्वे सत्यप्युक्तविरोधित्वमप्यस्तु, इत्यप्रयोजकत्वशङ्कामुक्तविषयत्वरूपापादकभङ्गापत्त्या निराकरोति—*तादृशविरोधित्वे सतीति* ॥ मनस्युक्तवृत्तिरूपस्य स्वेतरदृश्यस्यासंभवेनेति शेषः । *अत एव= मनसो बोधेऽन्वयानुपगमेऽपि तदा स्वीकृतबोधस्यान्यनिष्ठत्वासम्भवेन मनस्येवोक्तबोधरूपदृश्यस्य स्वीकारादेवेत्यर्थः । *उक्तात्यन्ताभावरूपस्य* ॥ स्वेतरसर्वदृश्यविरोधित्वविशिष्टस्य दृश्यात्यन्ताभावरूपस्येत्यर्थः । *तादृशबोधस्य= मनस्तादात्म्यापन्नात्मनिष्ठस्य दृश्याभावबोधस्य । चैतन्यरूपस्य दृश्यत्वाभावाद् वृत्तिरूपस्येत्युक्तम् । *उक्तो दोषः= उक्तबोधविषयस्य जीवात्मनि दृश्यविरोधिदृश्यात्यन्ताभावस्यासम्भवः । *तस्यानपायात्* ॥ दुर्वारत्वादित्यर्थः । *स्वेति* ॥ स्वम्=उक्तात्यन्ताभावः । स्वभिन्नत्वे सति स्वविषयकवृत्तिभिन्नानि यानि सर्वदृश्यानि तद्विरोधित्वस्यैव स्वीकारादित्यर्थः । एवकारेण पूर्वोक्तविरोधित्वव्यवच्छेदः । एवं च 'मनस' इत्यस्य बोधेऽन्वयेऽपि दृश्याभावेन तद्विरोधित्वस्यानुपगमात् , तद्विषयीभूतस्यापि दृश्याभावस्य तदितरत्वघटितोक्तविरोधित्वस्य न भङ्गः ; एवं मार्जनेऽन्वयपक्षेऽपि । 'दृश्यं नास्ती'ति बोधे तादृशबोधान्यदृश्याभावस्यैव भानेन तस्य मनोनिष्ठत्वसम्भवात् । एवं दृश्येऽन्वयपक्षेऽपि समीचीन एवेति भावः । उक्तविरोधित्वे स्वविषयकवृत्तिभिन्नत्वानिवेशे तूक्तदृश्याभावबोधो न वृत्तिरूपः, किंतु अन्तःकरणोपलक्षितचैतन्यात्मकसाक्षिरूपः,

### न्यायामृतसौगन्ध्यम्

षड्विकाराणामेकस्मिन् काले स्थितिर्दृष्टा, युक्ता वा ; ब्रह्मसाक्षात्काररूपदृश्यस्यातिरिक्तोच्छेदकाभावेनोच्छेदोऽपि दुर्लभः। स्वस्योच्छेदकत्वं चात्माश्रयादिना पराहतम्। अत एव—अथवा सप्रपञ्चाविद्यायाश्चरमप्रत्ययात्मक एव चरमो विकारः, तस्य च न विकारापेक्षा, इत्यधिष्ठानमात्रपरिशेष इति—निरस्तम् ; तस्य चरमविकारस्य नित्यत्वापत्तेः, तस्य ज्ञाननिवर्त्यत्वाभावेन त्वदभिमतमिथ्यात्वासिद्धेश्च, तस्य ब्रह्मात्मकत्वे च दोषस्योक्तत्वात्॥ किञ्च दृश्यमात्रविरोधितच्चरमविकारात्मकब्रह्मणस्सदैव सत्त्वेन दृश्यस्य सदैवोच्छेदस्स्यात्॥

यत्त्वेवम्—परोद्भावितव्याघातानवकाशः। किञ्च सोऽयं व्याघातश्चरमक्षणे? मुक्तौ वा? आद्ये त्वदुक्तद्वितीयानभ्युपगमात्, द्वितीय उभयानभ्युपगमाच्च व्याघातकाप्रसिद्धिः, द्वितीये व्याघातस्योभयशून्यतापादकस्याद्वैतानुकूल्यं च। *यदपि* प्रतियोग्युन्मज्जनप्रसञ्जनम्, *तदपि तुच्छम्* ; व्याप्तेरप्रसिद्ध्याऽऽपादनासंभवात्, घटस्य ध्वंसेऽपि प्रागभावानुन्मज्जनेन व्यभिचाराच्चेति, *तन्न* ; त्वद्व्याख्याभासस्य दूषितत्वेन व्याघातस्येष्टत्वात्। अत एव किञ्चेत्याद्युक्तविकल्पप्रलापोऽप्यशुद्ध एव ; उक्तव्याघातस्याद्वैतानुकूल्ये 'मूको(१)ऽहमि'त्यादिव्याघातस्यापि तदापत्तेः॥ *यदपीत्यशुद्धम्* ; कालत्वस्य हि प्रागभाव-प्रतियोगि-ध्वंसान्यतमव्याप्यत्वेन प्रतियोग्युन्मज्जनस्यावश्यकत्वात्(२)॥ 'घटस्य ध्वंसेऽपी'त्यशुद्धम् ; घट(३)ध्वंसोऽपि हि प्रागभावस्य ध्वंसः॥

*यत्तु*—'ब्रह्माधिकरणक्षणे' इति, *तदयुक्तम्* ; निर्विशेषस्याधिकरणाप्रसिद्धेः, "स्वे महिम्नी"ति श्रुतेः। 'तस्य काले'त्ययुक्तम् ; न हि क्षणसम्बन्धाधीनं कस्यचित् सत्त्वम् ; प्रतिक्षणं पूर्वपूर्वक्षणध्वंसे

### सौगन्ध्यविमर्शः

च ज्ञाननिवर्त्यत्वं घटादिसाधारणम्, तथा पूर्वमेव विवेचितम्। अयं भावः—आत्मसाक्षात्कारेणाविद्यामात्रनिवृत्तिमभिप्रेत्य किं वृत्त्युच्छेदकाभावोऽभिमन्यते? उताविद्या-तत्कार्यसाधारणदृश्योच्छेदमभिप्रेत्य? आद्ये तु वृत्तिमात्रानुच्छेदः किमित्यापाद्यते? कुतो वाऽविद्येतरसर्वदृश्यानुच्छेद एव नापाद्यते? यदि तत्त्वसाक्षात्कारस्याविद्या-तत्कार्योभयनाशकत्वं स्वीकर्तव्यम्, तर्हि कुत आत्मसाक्षात्कारोऽपि वृत्तिरूपो नाविद्याकार्यतया नश्यति? यदि स्वस्यैव स्वनाशकत्वाभावादिति मन्यते, तर्हि विवेचनीयम्—को नाम विरोधः स्वस्यैव स्वनाशकत्वे? यदि क्षणिकत्वापत्तिरखण्डाकारवृत्तेः, तर्हि कं प्रतीयमापत्तिः—किमखण्डाकारवृत्तिस्थायितावादिनं प्रति? तर्हि जितमेव भवताम् ; असत्कल्पप्रतिवादिनिराकरणेनासाधारणपराक्रमप्रदर्शनात्। अखण्डाकारवृत्तिक्षणिकतावादिनं प्रति तु नेयमापत्तिः, किन्तु मङ्गलाचरणमेव। एतेन—चरमप्रत्ययात्मत्वे चरमविकारस्य तज्ज्ञाननिवर्त्यत्वाभावान्मिथ्यात्वानुपपत्तिः, तस्य नित्यत्वापत्तिश्चेति शङ्काऽपि—परास्ता ; यथाच ब्रह्मण एव चरमविकारात्मत्वं न दुष्टम्, सर्वदृश्यचरमविकारात्मकब्रह्मणस्सर्वदैवासत्त्वं च, तथा पूर्वमेव विवेचितम्। सति चैवम्—"किञ्च दृश्यमात्रविरोधिचरमविकारात्मकब्रह्मणस्सदैव सत्त्वेन दृश्यस्य सदैवोच्छेदः स्यादिति चर्वितचर्वणमेव। सर्वथा तु नाद्वैतिनां व्याख्यानं दृश्योच्छेदस्वरूपविषयकं दुष्टम्, इति निर्धर्मकस्य ब्रह्मण एव दृश्याभावरूपत्वादौ न व्याघाताद्यवकाशः पूर्वोक्तरीत्या॥

(१) सद्वितीयस्यैव ब्रह्मणो द्वितीयानामपरमार्थत्वादद्वितीयत्वं कथं व्याघातकम्? यथा मूकोऽहमिति वाक्ये व्यवहारासामर्थ्य-तत्सामर्थ्योभयविरोधः, नैवमत्र विरोधः। द्वितीयाभावानिषेधेऽपि तु न प्रतियोग्युन्मज्जनापत्तिः॥

(२) सत्यं कालस्य प्रागभाव-प्रतियोगि-ध्वंसान्यतमव्याप्यत्वम्, मुक्तौ तु कालस्यापि बाधात् कथं प्रतियोग्युन्मज्जनापत्तिः। वस्तुतस्तु—कालत्वस्य प्रागभाव-प्रतियोगि-ध्वंसान्यतमव्याप्यत्वमिति नायमपि नियमः ; प्रागभावध्वंसरूपघटध्वंसाधिकरणे प्रागभाव-तद्ध्वंसान्यतराभावात्। प्रागभावप्रागभावस्त्वप्रसिद्ध एव॥

(३) यदि घटध्वंसस्यैव प्रागभावध्वंसत्वमिति प्रागभावध्वंसाधिकरणत्वं कालस्य मन्यते, तर्हि चरमक्षणेऽपि दृश्योच्छेदोच्छेदस्यापि दृश्योच्छेदत्वाद् न प्रतियोग्युन्मज्जनमिति समानम्। यदि परिभाषामात्रमिदम्, तर्हि घटध्वंसस्यैव प्रागभावध्वंसत्वमित्यपि परिभाषामात्रमेवेति समानम्।

न्यायामृतसौगन्ध्यम्

जगतः क्षणिकत्वापत्तेः, आकाशेश्वरादीनामनित्यत्वानेकत्वाद्यापत्तेश्च, न्यायनयेऽपि नित्यानां महाकालवृत्तित्वानभ्युपगमेनासत्त्वापत्तेः, आत्माश्रयदोषेण महाकालस्यैवासत्त्वापत्तौ तत्सम्बन्धाधीनं जगतस्सत्त्वमित्युक्तेः शून्यवादपर्यवसानाच्च। 'ब्रह्माधिकरणे' इत्याद्ययुक्तम्; इयमुक्तिर्यदि सामान्यतस्तदधिकरणक्षणे तदधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावस्तन्नित्यत्व-क्षणसम्बन्धिध्वंसप्रतियोगित्वान्यतरमात्रोपपाद्य इति नियमपरा, तर्हि स्वाप्नव्याघ्र-शुक्तिरजतादिषु व्यभिचारः; तेषां बाधातिरेकेण नाशाप्रसिद्धेरिति, *तन्न*; तस्य हि कालसम्बन्ध उक्त(१)श्रुत्या बोधितः॥

किञ्च त्वदुक्तो (२)निर्विशेषः प्रमाणगम्यः? न वा? नाद्यः; प्रमाणेन सत्यत्वेनैव बोधनात्। द्वितीये तस्यासिद्धिरेव, न हि प्रमाणं विनाऽर्थस्सिद्ध्यति; अन्यथा शशशृङ्गादीनामपि सिद्धिः स्यात्। "यद्दिवे"तिश्रुत्या चाधेयान्तरवत् तस्याधाराधीनत्वनिरासात्। *नहीत्ययुक्तम्*; सत्त्वस्य क्षणसम्बन्धाधीनत्वं ह्यस्माभिर्नोक्तम्, (३) किन्त्ववर्जनीयं सम्बन्धमात्रम्। 'आकाशेश्वरादी'त्ययुक्तम्; तेषां महाकालसम्बन्धित्वात्॥

सौगन्ध्यविमर्शः

(१) यथाच निर्विशेषस्य ब्रह्मणः कल्पितः कालसम्बन्धो व्यावहारिकदशायां स्वीक्रियते, तथा पूर्वमेव विवेचितम्, इति कथं ब्रह्माधिकरणक्षणे ब्रह्माधिकरणक्षणपूर्वत्वाभावरूपस्य ब्रह्मोच्छेदस्य प्रसङ्गः? "सदेव सोम्येदमग्र आसीदि"ति तु वाक्यमिदन्तादात्म्यापन्नस्यैव ब्रह्मणोऽग्रकालनिष्ठत्वं बोधयति, न तु निर्विशेषस्य; तस्य स्वमहिमप्रतिष्ठत्वात्, "स्वे महिम्नी"ति श्रुतेः। न हि कालसम्बन्धमात्रेण कालस्य तदधिकरणता॥

(२) निर्विशेषं तु ब्रह्म तात्पर्यतो वेदसिद्धमेव। "सत्यं ज्ञानमि"त्यादिवाक्यानामपि यथा निर्विशेषपरत्वम्, तथोत्तरत्र स्पष्टीभविष्यति, इति "तत्र प्रमाणस्याप्यभावः" इति मतस्वरूपमेवाज्ञात्वा बहुशः प्रलापो विचाराशक्तिमेव गमयति। "त्वदुक्तो निर्विशेषः प्रमाणगम्यो वा? न वा? इति विकल्पे त्वदुक्तपदेनौपनिषद इत्यर्थविवक्षायामुपनिषद्गम्यस्यौपनिषदत्वं वा न वेति विकल्पस्यासम्बद्धप्रलापित्वात्। प्रमाणेन सत्यत्वेनैव बोधनादिति स्वमनोरथमात्रम्; न तु क्षोदक्षमम्; स्वरूपतोऽबाधितार्थबोधकत्वं हि प्रामाण्यम्, नत्वबाधितत्वेन सत्यत्वेन वाऽर्थबोधकत्वमिति न कोऽपि दोषः। अन्यथा "सत्यं ज्ञानमि"त्यादिवाक्ये सत्यपदवैयर्थ्यात्॥

(३) अत्रायं निष्कर्षः—तस्य कालासम्बन्धित्वे तुच्छत्वं स्यादिति खलु द्वैतिनां प्रतिज्ञा। तत्र च कालासम्बन्धेन सत्त्वाभावो यद्यापाद्यते, तर्हि कालसम्बन्धः सत्त्वप्रयोजक इति विवक्षितं भवति। तत्र च पूर्वपूर्वक्षणध्वंसे जगतः क्षणिकत्वापत्तिरिति कथं न दूषणमवतरति? सम्बन्धमात्रमवर्जनीयमिति सौगन्ध्यकाराः कालपदपरित्यागेन स्वाचार्याणामपि मतं दूषयन्तीति तु सर्वविदितमिदम्। एतन्मतरीत्याऽपि कालासम्बन्धित्वे न तुच्छत्वमिति तु सम्मतमेव। यदि तु कालासम्बन्धित्वे ब्रह्मतुच्छत्वापत्तिरित्यनुक्तोपालम्भनमिति मन्यते, तर्हि तु स्वपूर्वग्रन्थ एव--"कालासम्बन्धित्वे तुच्छत्वं स्यात्" इत्युपालभ्यताम्। तथाच पूर्वोत्तरविरोधोऽप्यपरिहरणीयः। किञ्च सम्बन्धमात्रमवर्जनीयमित्यनेन किं विवक्ष्यते—किं ब्रह्मणः क्षणसम्बन्धाभावेऽपि सम्बन्धान्तरं स्वीकर्तव्यमिति? उत क्षणसम्बन्धः स्वीकर्तव्य इति? आद्ये कालासम्बन्धे तुच्छत्वं स्यादिति रिक्तं वचनम्। किञ्च सम्बन्धमात्राभावे तुच्छत्वं वदता सत्त्वस्य सम्बन्धव्याप्यत्वं वर्णनीयम्; यतः सम्बन्धमात्रमवर्जनीयमुच्यते; तत्र च सत्त्वं यद्यबाध्यत्वम्, तर्हि तु नान्वयव्याप्तिः; ब्रह्मव्यतिरिक्तस्य बाध्यत्वात्। यदि तु सत्ताजातिमत्त्वम्, तर्हि तु ब्रह्मणि सत्ताजात्यनङ्गीकाराद् न ब्रह्मणस्सम्बन्धमात्रमवर्जनीयम्। न हि निर्विशेषब्रह्मणः पारमार्थिकसम्बन्धबोधकं किमपि प्रमाणमस्ति। तथाच कल्पितसम्बन्धमात्रं यद्यवर्जनीयं मन्यते, तर्हि तु नेयमापत्तिः। एतेन--क्षणसम्बन्धापत्तिरपि—परास्ता। वस्तुतस्तु—मिथ्यात्व-मिथ्यात्वविचारावसरे सौगन्ध्यकारैरेवासतोऽपि सम्बन्धाभ्युपगमवर्णनात् सत्त्वस्य सम्बन्धमात्राधीनत्वमपि स्वनिबन्धस्यैव विरुद्धम्। तथाच क्षणासम्बन्धित्वस्यासत्त्वप्रयोजकत्वाभावाद् ब्रह्मणः क्षणासम्बन्धेऽपि न तुच्छत्वम्; अन्यथा वियदादेरपि तत्तत्क्षणसम्बन्धाभावेन जन्यानामेव महाकालसम्बन्ध इति मते नित्यानामीश्वरादीनामपि महाकालासम्बन्धेन चासत्त्वापत्तिः॥

अद्वैतसिद्धिः

इति। वार्तिककृद्भिश्चोक्तम्—"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति॥" इति। 'सह कार्येण नासीदि'ति लीनेन कार्येण सह

तरङ्गिणी

वार्तिककृद्मिश्रोक्तम्—"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति॥" इति। 'सह कार्येण नासीदि'ति लीनेन कार्येण सह निवृत्त्यभिप्रायम्। 'सह कार्येण

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

साक्षिभास्यत्वस्वीकाराद्वा, इत्याशयेनाह—*वार्तिकेत्यादि* ॥ *लीनेन = ज्ञानकालीनसंस्काररूपलयप्रतियोगिना। तथाचाज्ञानस्य वर्तमानत्वेऽप्यतीतकार्यसहितरूपेणातीतत्वाद् 'आसीदि'त्यस्य प्रसक्त्या

विठ्ठलेशोपाध्यायीटिप्पणी

स च न दृश्यः; ब्रह्मरूपत्वात्, इत्याशयेनाह—*साक्षिभास्यत्वस्वीकाराद्वेति* ॥ *मूले—तत्त्वमस्यादीति* ॥ आदिना 'अहं ब्रह्मास्मी'त्याद्यखण्डार्थवाक्यानां परिग्रहः। *सम्यक्=प्रमारूपा अनधिगताबाधितार्थब्रह्मात्मरूपधर्मिमात्रविषयिणी 'नेहे'त्यादिवाक्यजन्यप्रपञ्चबाधनिश्चयपूर्विका निर्विकल्पिका। *धीः=श्रवण-मनन-निदिध्यासनादिसाधनपरिपाकोत्तरजाता चरमा मनोवृत्तिः, तज्जन्म=तदुत्पत्तिः, तन्मात्रतः=तृतीयान्तात् तसिः। तत्प्रयोज्यत्वं तदर्थः। मात्रपदेन स्वोत्तरभाविप्रयोजकान्तरव्यवच्छेदः। तन्त्रेण 'तज्जन्मे'ति बहुव्रीहेस्तदुत्पत्तिकालार्थकात् सप्तम्यन्तात् तसौ तत्कालीनत्वमपि तदर्थः। तदुभयस्याप्यविद्यात्यन्ताभावरूपतन्निवृत्तौ नञर्थेऽन्वयः। नञोऽ'स्ति भविष्यति'इत्युभाभ्यामपि सम्बन्धः। कार्यसाहित्यमविद्यायां कार्यविशिष्टत्वं कार्याभावप्राक्कालावच्छिन्नत्वं वा। तथाच कार्यविशिष्टायाः कार्यनिवृत्तिप्राक्कालावच्छिन्नाया वाऽविद्याया भूता वर्तमाना भविष्यन्ती च या सत्ता=आत्मानुयोगिकः सम्बन्धस्तादात्म्यरूपः, ज्ञानप्रयुक्तं नञाऽऽत्मनि तदभाववत्त्वं स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्त्वपर्यवसितं बोध्यते। *यद्वा*—सत्ता पारमार्थिकत्वम्; तदभाववत्त्वमविद्यायाम्—आत्मनि पारमार्थिकत्वावच्छिन्नप्रतियोगिताकतदभाववत्त्वपर्यवसितं बोध्यते॥

*ननु*—सह कार्येणेति किमर्थम्? उपादानकारणाविद्याया वियोत्पत्तिकालेऽभावे बोधिते तदुपादानकातीतकार्याभावस्यापि तदुत्तरकाले लाभसम्भवात्, इत्याशङ्क्य, 'सह कार्येणे'त्यस्यानुपादाने 'अविद्या नासीदि'ति अविद्याकर्तृकातीतसत्ताप्रतियोगिकविरहबोधनं न सम्भवति; अविद्याया वर्तमानत्वेन तत्सत्ताया अपि वर्तमानत्वेन वर्तमानकालवृत्तिध्वंसप्रतियोगित्वरूपातीतत्वासम्भवाद् अविद्याकर्तृकातीतसत्तारूपप्रतियोग्यप्रसिद्धेः। नच—अविद्यायां घटादिकर्तृकातीतसत्तारूपस्य प्रसिद्धस्य प्रतियोगिनोऽभावो बोध्यत इति—वाच्यम्; विद्यमानायामविद्यायामतीतसत्त्वस्य भ्रमेण प्रसक्तेस्तद्विरहबोधनसम्भवेऽप्यविद्याविरहस्यालाभप्रसङ्गादिति शङ्कानिरासकतया 'सह कार्येणे'त्येतत् सार्थकयति—*सह कार्येणेत्यादिना*—अभिप्रायमित्यन्तेन*। तत्र लीनपदार्थो नातीतद्रव्यवत्त्वम्; बाधात्, वक्ष्यमाणाभिप्रायाननुगुणत्वाच्च, किन्त्वतीतनाशप्रतियोगित्वम्। अतीतत्वं च अज्ञानं 'नासीदि'त्याकारकं यद् वर्तमानज्ञानम्, तदधिकरणकालवृत्तिध्वंसप्रतियोग्युत्पत्तिकत्वमुक्तज्ञानकालीनत्वे पर्यवसितम्, नाशश्च संस्काररूपः, इत्याशयेन व्याचष्टे—*लीनेति* ॥ *ननु*—एवमपि वर्तमानाज्ञानसत्तायाः कथमतीतत्वम्? तत्राह—*तथाचेति* ॥ अतीतं यत् कार्यम्, तद्विशिष्टरूपेणेत्यर्थः; कार्यपदस्यातीतकार्यपरत्वात्। 'पुत्रेण सहागतः पिते'त्यादौ हि पितुःअन्वयिपुत्रादिवैशिष्ट्यमेव सहशब्दार्थः। तस्य च स्वागमनादिकालीनत्वं पित्राद्यन्वय्यागमनादौ पुत्रादेः संसर्गतया भासते, तद्वत् प्रकृतेऽप्यतीतकार्यवैशिष्ट्यमेव सहार्थोऽज्ञानेऽन्वेति॥ तस्य स्वसत्त्वाभाववत्त्वकालावच्छिन्नत्वं नञर्थे संसर्गतया भासत इति बोध्यम्। एवं च विशिष्ट-तत्सत्तयोः शुद्ध-तत्सत्ताभ्यां भेदेनातीतकार्यविशिष्टाज्ञान-तत्सत्तयोरतीतत्वमिति भावः। *आसीदि'त्यस्येत्यादि* ॥ अतीतकार्यविशिष्टाज्ञानकर्तृ-

### अद्वैतसिद्धिः

निवृत्त्यभिप्रायम् । 'सह कार्येण न भविष्यती'ति तु भाविकार्यनिवृत्त्यभिप्रायमित्यन्यदेतत् ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'नासीदि'ति निषेधसम्भव इति भावः । *भाविकार्येत्यादि* ॥ कार्यजनकस्यादृष्टादेरत्यन्ताभावात् तत्कार्यस्यात्यन्ताभावरूपा या निवृत्तिः, तत्सहिताज्ञाननिवृत्त्यभिप्रायकमित्यर्थः । तथाचादृष्टादिकारणसत्त्वेऽग्रे भाविता यज्जातीयस्य कार्यस्य प्रसक्ता, तज्जातीयस्यादृष्टाद्यभावाद् ज्ञानप्रयुक्तादभावो 'न भविष्यती'त्यनेन बोध्यत इति । *अन्यदिति* ॥ कारणाभावप्रयुक्तस्य कार्याभावस्य तत्त्वज्ञानं विनाऽपि सत्त्वेन न बाधरूपत्वम्,

### विट्ठलेशीयटिप्पणी

कल्याससधास्वर्थसत्त्वस्य तादात्म्यरूपसम्बन्धस्य मिथ्याभूतस्य—'अज्ञोऽहमि'त्यनादिभ्रमविषयत्वेन प्राप्तस्य 'नासीदि'ति नञा स्वरूपेण पारमार्थिकत्वेन वा तत्त्वज्ञानप्रयुक्तस्याभावस्य बोधनसंभव इत्यर्थः । एवं 'ज्ञानेनाज्ञानं नास्ती'ति बोधिते तदुपादानकभाविकार्यनिवृत्तिलाभेऽपि 'सह कार्येणे'त्यस्या'विद्या न भविष्यती'त्यत्राप्यन्वयेन वर्तमानाज्ञानकर्तृकसत्ताया वर्तमानप्रागभावप्रतियोगित्व-वर्तमानकालध्वंसाधिकरणकालवृत्तित्वरूप-भविष्यत्वप्रसक्तिसूचकतया सार्थक्यमाह—*मूले—*सह कार्येणेत्यादिना—अभिप्रायमित्यन्तेन* ॥

*श्रीपाण्डुरङ्गाय नमः* । तद्व्याख्यातुं गृह्णाति—*भाविकार्येत्यादीति*॥ 'सह कार्येणाविद्या न भविष्यती'त्यत्र कार्यपदं भाविकार्यपरम्, तद्वैशिष्ट्यं तृतीयार्थोऽविद्यायामाश्रयतासम्बन्धेन नञर्थेऽत्यन्ताभावे स्वसत्त्वात्यन्ताभावकालावच्छिन्नत्व-सम्बन्धेनान्वेति । तथाचात्मनि भाविकार्यात्यन्ताभावकालीनो भाविकार्यविशिष्टाविद्याकर्तृकभविष्यत्सत्तात्यन्ताभाव इति बोधः । तत्र भाविकार्यजनकादृष्टादेः सत्त्वे कथं तदत्यन्ताभाव इति ? अत आह—*कार्यजनकस्येति*॥ *तदिति* । उक्तनिवृत्तिसहिता याऽज्ञाननिवृत्तिः, तदभिप्रायमित्यर्थः । यत्र यद्वैशिष्ट्यं सहपदेन बोध्यते, तदन्वयिनि समभिव्याहृततत्पदार्थेन तदन्वितसमभिव्याहृततत्पदार्थस्य साहित्यं समानकालीनत्वादिरूपं धर्मिपारतन्त्र्येण बोध्यत इति नियमादिति भावः । तत्राविद्याया वर्तमानत्वेऽपि भविष्यत्कार्यविशिष्टत्वेन तस्यास्तत्सत्तायाश्च भविष्यत्वप्रसक्तौ सत्यां तन्निषेधबोधो वाच्यः, स च न संभवति ; तत्त्वज्ञानेनेदानीमविद्यानिवृत्तौ तत्परिणामविशेषरूपभाविकार्यस्यादृष्टमात्रेण जननासंभवेनाप्रसिद्धेरित्यत आह—*तथाचेति* ॥ *अदृष्टादिकारणसत्त्व इति* ॥ यज्जातीयेत्यादिः । *प्रसक्तेति* ॥ तद्विशिष्टत्वेन चाविद्यायास्तत्सत्तायाश्च भाविता प्रसज्यत इति शेषः । *ननु* अविद्यादिपरिणाम्युपादानसहकारितया तत्तुल्यकारणान्तरस्यपरत्वेनादृष्टान्तररूपसहकारिविरहेण तादृशादृष्टस्याविद्यापरिणामत्वाभावात् तदभावस्य तत्त्वज्ञान-प्रयुक्तत्वासंभवेनासंभवाद् अदृष्टेन केवलेनाप्यविद्यान्योपादानसहकृतेन वा किंचित् कार्यं स्यादेव, इति कथं तन्निवृत्तिः ? तत्राह—*तज्जातीयस्येति* ॥ कार्यस्येति शेषः । अभाव इत्यत्रान्वयः । *अदृष्टाद्यभावादिति* ॥ तज्जातीयेत्यादिः । आदिना तदन्यपरिणाम्युपादानपरिग्रहः । *ज्ञानप्रयुक्तादिति*॥ ब्रह्मज्ञानादिषट्कान्यस्यादृष्टादिसकलस्य तत्पूर्वादृष्टान्तर-सहकारेणाविद्यापरिणामत्वादिति भावः । *न भविष्यतीत्यनेन बोध्यत इति* ॥ एतद्बोध्यो यो भावित्वेन प्रसक्तज्जातीयकार्यविशिष्टाविद्याकर्तृकभविष्यत्सत्तात्यन्ताभावः, तदन्वयितया सहशब्देन बोध्यत इत्यर्थः । *ननु*—'अन्यदेतदि'त्यनेनोक्तकार्यस्याप्रकृतत्वं बोध्यते, तत् किमर्थेति ? अत आह—*कारणाभावेति* ॥ कारणाभावः=अदृष्टविशेषाभावः । तत्प्रयुक्तः कार्याभावः=भावित्वेन प्रसक्तविजातीयकार्याभावः । *तत्त्वज्ञानं विनाऽपीति* ॥ अविद्यापरिणामादेरेवाविद्यावद् ज्ञाननिवर्त्यत्वाद् भावित्वेन प्रसक्तस्य चाविद्यापरिणामत्वम् ; तत्स्वाधीनत्वात्, तदभावश्च तत्त्वज्ञानात् पूर्वमपीदानीमस्ति, सोऽपि भावित्वेन प्रसक्तमुक्तित्वेन प्रसक्तसामान्यधर्मावच्छिन्न-प्रतियोगिताकः, इति नाप्रसिद्धप्रतियोगिकत्वम्, तथात्वेऽपि वा न क्षतिः ; अप्रसिद्धप्रतियोगिकाभावाङ्गीकारादिति भावः । *सत्त्वेनेति* ॥ तत्त्वाज्ञानप्रयुक्तत्वासंभवादिति शेषः । ज्ञानाभावप्रयुक्तत्वघटितबाधरूपत्वं नेत्यर्थः ।

अद्वैतसिद्धिः

रूप्योपादानमज्ञानं स्वकार्येण वर्तमानेन लीनेन वा सहाधिष्ठानसाक्षात्काराद् निवर्तते । तत्तद्भ्रमोपा-

तरङ्गिणी

न भविष्यती'ति भाविकार्याभिप्रायमि'त्यन्यदेतत् । रूप्योपादानमज्ञानं स्वकार्येण वर्तमानेन लीनेन वा सहाधिष्ठानसाक्षात्काराद् निवर्तते । तत्तद्भ्रमोपादानानामज्ञानानां भेदाभ्युपगमात्, इति न दृष्टान्ते साध्य-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

इति स प्रकृतानुपयुक्त इत्यर्थः । *ननु* एकाज्ञानपक्षे शुक्तिरूप्यादेर्ब्रह्मज्ञानं विना निवृत्त्यभावेन तत्र ज्ञाननिवर्त्यत्वस्योक्तानुमानपूर्वमग्रहेण व्याप्तिग्रहासम्भवः, तत्राह—*रूप्येत्यादि* ॥ *वैकल्यम् = अग्रहः । तथाच नानाऽज्ञानपक्ष एवेदं साध्यम् । *वस्तुतस्तु*—एकाज्ञानपक्षेऽपि दोषजन्यधीविषयत्वेन शुक्तिरूप्यादे-र्ज्ञाननिवर्त्यत्वमनुमाय व्याप्तिग्रहसम्भवः । *ननु* पूर्व इवोत्तरोऽप्यवधिर्दृश्याऽवधेर्नास्त्येव । *तदुक्तं प्रलयस्याप्यस्वीकर्तृभिर्मीमांसकैः—'*न कदाचिदनीदृशं जगदि'ति* । आस्तां हि तत्त्वज्ञानमात्यन्तिकदुःख-

विट्ठलेशीयटिप्पणी

*सः=अदृष्टविशेषाभावप्रयोज्यो भावित्वेन प्रसक्तकार्याभावः । *प्रकृतानुपयुक्त इति* ॥ ज्ञानेनाविद्याप्रयुक्तबाधलक्षण-परविवरणपङ्क्तिसमानार्थकत्वेन 'वार्तिककृद्भिश्चोक्तमि'त्यादिनोपन्यस्तश्लोकस्य बाधलक्षणपरत्वावश्यकत्वात् श्लोके 'कार्येण सहे'त्येतदंशस्य कार्यबाधलक्षणनिरूपणायैवोपादानाच्च बाधलक्षणाघटकतादृशाभावकथनस्य प्रकृतानुपयोग इति भावः । पूर्वं मूले शुक्तिरजतस्यालीकत्वेन तदभावस्य ज्ञानप्रयुक्तत्वासंभवाद् दृष्टान्ते साध्यवैकल्यमाशङ्क्य, तस्य प्रातिभासिकत्वमाश्रित्य तदभावस्य ज्ञानप्रयुक्तत्वोपपादनेन परिहृतम्; इदानीं भ्रमभेदेन तदुपादानाज्ञानभेदमाश्रित्य परिहारदर्शनाद् एकाज्ञानपक्षे प्रकारान्तरेण दृष्टान्ते साध्यवैकल्यशङ्कया रूप्योपादानेति मूलग्रन्थमवतारयति—*नन्वेकाज्ञानपक्ष इति* ॥ एकमेवाज्ञानं सर्वभ्रमोपादानमिति पक्ष इत्यर्थः । *निवृत्त्यभावेनेति* ॥ शुक्त्यादि-ज्ञानेन तन्निवृत्ताविदानीमेव मुक्तिप्रसङ्गादिति भावः । *पूर्वमिति* ॥ असत्त्वेनेति शेषः । उत्तरं तु तत्र तत्सत्त्वेऽपि मानुमानापेक्षेति भावः । शुक्तिरूप्यस्यापि ब्रह्मज्ञाननिवर्त्यत्वोपगमाद् न साध्यस्यासत्त्वरूपवैकल्यम्, अतो व्याचष्टे—*वैकल्यमग्रह इति* ॥ *अग्रहः=प्रत्यक्षाभावः; अनुमितेर्वक्ष्यमाणत्वात् । नानाऽज्ञानपक्षे शुक्त्यज्ञानस्य तत्कार्य-रजतादेश्च ज्ञानप्रयोज्याभावो मूलोक्तप्रत्यक्षसिद्धः । *इदम्=ज्ञाननिवर्त्यत्वम् । एकाज्ञानपक्षे तु पूर्वमुक्ताभि साध्यानि । तत्पक्षेऽपि प्रकृतानुमाननिर्वाहमाह—*वस्तुतस्त्विति* ॥ *अनुमायेति* ॥ श्रुतिसिद्धब्रह्मज्ञाननिवर्त्य-मूलाज्ञानवियदादिदृष्टान्तेनेति भाव इति *केचित्*, तन्न; श्रुत्यर्थे विवदमानं प्रत्येवानुमानोपन्यासात् पक्षस्य तद्दृष्टान्तपक्षकानुमाने दृष्टान्तत्वेऽन्योन्याश्रयात् । *वस्तुतस्तु* वियदादिपक्षकेऽनुमाने शुक्तिरूप्यम्, तत्पक्षके रज्जुसर्पः, तत्पक्षके स्वाप्नगजादिकं दृष्टान्तः; पूर्वपूर्वानुमानानां विरलानामपेक्षणेऽपि नानवस्था दोषः, बीजाङ्कुरवत् । *मूले*—'रूप्योपादानमि'त्यादि 'निवर्तते' इत्यन्तार्थे दृष्टान्ते साध्यावैकल्यहेतुतयोक्ते 'तत्तद्भ्रमे'त्यादि-पञ्चम्यन्तार्थो न हेतुः; एकाज्ञानपक्षे रूप्योपादानाज्ञानस्यैव अनुपादानाज्ञानरूपत्वेन शुक्तिसाक्षात्कारेणैव अनुपा-दानाज्ञाननिवृत्तिप्रसङ्ग इत्याशङ्कापरिहारायोक्तपञ्चम्यन्तेनाज्ञानानां भेदस्य कथनात्, किन्तु 'मुद्गरपातानन्तरमि'त्यादि-सर्वसंमतत्वादित्यन्तार्थः, स च व्यर्थः; ज्ञानेनाज्ञाननिवृत्तौ ज्ञानाज्ञानयोर्विरोधस्यैव हेतुत्वेन प्रसिद्धौ इत्याकाङ्क्षा-विरहादित्याशङ्क्य, उक्तविरोधमेवानुपगच्छतो मीमांसकादेराशङ्कया विशेषेणोक्तहेतुमवतारयति—*ननु पूर्व इति* ॥ पूर्वोऽवधिः=आदिः प्रागभावः । *उत्तरोऽवधिः=अन्त्यो नाशोऽत्यन्ताभावो वा, उभयैतदवधेर्यस्यावावधेरित्युक्तम् । *नास्त्येवेति* ॥ सत्यस्य ज्ञानानुच्छेद्यत्वात्, दृश्योपादानभूतस्याज्ञानस्यापि ज्ञानोच्छेद्यत्वानुपगमात्, सत्यानां पर-माण्वादीनामेव जगदुपादानत्वात् । *ननु*—प्रलये दृश्याभावः सर्वसिद्धः, इत्यत आह—*तदुक्तमिति* ॥ *नन्वेवम्*—सर्वदृश्योच्छेदघटितमोक्षस्यासंभवे कीदृशो मोक्षस्तत्त्वज्ञानसाध्यः ? तत्राह—*आस्तां हीति* ॥

अद्वैतसिद्धिः

दानानामज्ञानानां भेदाभ्युपगमात्, इति न दृष्टान्ते साध्यवैकल्यम्; 'मुद्गरपातानन्तरं घटो नास्ती'ति प्रतीतिवत्—'अधिष्ठानज्ञानानन्तरं शुक्त्यज्ञानं तद्गतरूप्यं च नास्ती'ति प्रतीतेः सर्वसम्मतत्वात्॥

तरङ्गिणी

वैकल्यम्। 'मुद्गरपातानन्तरं घटो नास्ती'ति प्रतीतिवद'धिष्ठानज्ञानानन्तरं शुक्त्यज्ञानं तद्गतं रूप्यं च नास्ती'ति प्रतीतेः सर्वसम्मतत्वात्॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नाशस्य नित्यसुखसाक्षात्कारस्य वा मोक्षस्य हेतुः; *शोकम्=दुःखम्, *आनन्दम्=आनन्दः, *ब्रह्मणः=बृहतः; जीवस्येति यावत्, *रूपम्=नित्यधर्मः, *मोक्षे=मोक्षहेतुतत्त्वज्ञाने, *प्रतिष्ठितम्=अविच्छिन्नस्य मानससाक्षात्कारस्य विषयः, इत्यर्थिकाया मीमांसकादिसम्मतायाः—"तरति शोकमात्मवित्; "आनन्दं ब्रह्मणो रूपम्" "तच्च मोक्षे प्रतिष्ठितमि"त्यादिश्रुतेः, उक्तनिवृत्तिप्रयोजकं तु कुतः? तत्राह—*मुद्गरेत्यादि*॥ *पातानन्तरम्=पातोत्पत्तिरूपव्यवधायकशून्यकाले, पातोत्पत्तिक्षण इति यावत्। *घटो नास्तीति*॥ स्वाश्रयकालपूर्वत्वसम्बन्धेन घटो नास्तीत्यर्थः। एवं ज्ञानानन्तरमित्यादिदृष्टान्तेऽप्यर्थः। 'रूप्यं चे'ति चकारात् तत्कारणाज्ञानसंबन्धग्रहणम्। ज्ञानसाध्यनिवृत्तिपक्षे त्वनन्तरपदयोरुत्पत्त्यव्यवहितोत्तरक्षणोऽर्थः। 'नास्ती'ति शब्दस्याद्यस्य मुद्गरपातप्रयुक्ता, द्वितीयस्य

विट्ठलेशीयटिप्पणी

*आत्यन्तिकेति*॥ स्वसमानाधिकरणदुःखप्रागभावासमानकालीनस्य दुःखनाशस्येत्यर्थः। *नित्येति*॥ नित्यं यत्सुखम्, तत्साक्षात्कारस्येत्यर्थः। *आद्ये* प्रमाणभूतां श्रुतिं व्याचष्टे—*शोकं दुःखमिति*॥ शोकजनकत्वाद् दुःखस्य। *तरति=अत्यन्तं नाशयतीत्यर्थः। *द्वितीये* आनन्दमिति लिङ्गव्यत्यासेनेत्याह—*आनन्द इति*॥ परमते ब्रह्मण ईश्वरस्य न सुखम्, जीवेश्वरयोश्च भेदः, अतो व्याचष्टे—*बृहतो व्यापकस्येति*॥ रूपस्य परमतेऽनित्यधर्मत्वाद् गौण्या रूपं नित्यधर्म इति विवक्षितमित्याह—*रूपमिति*॥ यद्यपि मोक्षे=मोक्षदशायामिति व्याख्यायामपि प्रतिष्ठितपदार्थान्वयसंभवः; तथापि तत्कारणलाभाय व्याचष्टे—*मोक्षहेतुतत्त्वज्ञान इति*॥ सतीति शेषः। नित्यसुखस्य तद्विषयत्वात् प्रतिष्ठितपदस्य नित्यस्थित्याश्रयार्थकत्वे वैयर्थ्यम्; रूपपदेनैव तल्लाभात्, अतोऽविच्छिन्नसाक्षात्कारविषयार्थकतया व्याचष्टे—*अविच्छिन्नस्येति। *अविच्छेदः=प्रवाहः। स च स्वसमानाधिकरणस्वसमानविषयकसाक्षात्कारसामान्यकत्वम्। मानसेति स्वरूपकीर्तनम्; सुखस्य मनोमात्रग्राह्यत्वात्। आदिना नैयायिकादिः। तेषामुक्तार्थकत्वेन सम्मतायाः—'तरती'त्यादिश्रुतेर्नैयायिकादिभिरपि तथार्थकत्वस्वीकारात्। एतन्मते तत्त्वज्ञानमात्मनि देहेन्द्रियादिरूपेतरभिन्नत्वप्रकारकः साक्षात्कार इति बोध्यम्। *उक्तनिवृत्तीति*॥ *उक्तनिवृत्तिः=दृश्यसामान्यस्य स्वाश्रयपूर्वत्वस्वप्रयोजकाज्ञानसमानविषयकत्वोभयसंबन्धावच्छिन्नाभावरूप उच्छेदः। तत्प्रयोजकं तत्त्वज्ञानं कुत इत्यर्थः। 'पातानन्तरमि'त्यस्य पाताव्यवहितोत्तरक्षणार्थकत्वे पातोत्पत्तिक्षणस्य घटवत्कालपूर्वत्वाभावाकथनेन न्यूनता, तां परिहर्तुं व्याचष्टे—*पातानन्तरमिति—पातोत्पत्तिरूपेति*॥ पातोत्पत्तिः रूपं धर्मो यस्य सः, पातोत्पत्तिरूपो यो व्यवधायकक्षणान्तरशून्यः कालः, तत्रेत्यर्थः। तदाह—*पातोत्पत्तिक्षण इति*॥ *यावदिति*॥ *घटः=तद्घटः। मुद्गरपातोत्पत्तिक्षणे तद्घटस्य कालिकसंबन्धेन सत्त्वात् *स्वाश्रयपूर्वत्वसम्बन्धेनेति। *दृष्टान्तेपीति*॥ ज्ञानोत्पत्तिक्षण इति शेषः। दृष्टान्त इत्यस्य मिथ्यात्वानुमानदृष्टान्तविषयकप्रत्ययाभिलापके 'मुद्गरपाते'त्यादिवाक्यदृष्टान्तकदार्ष्टान्तिकवाक्य इत्यर्थः। *संबन्धः=शुक्त्यवच्छिन्नचित्संबन्धः। *पक्ष इति*॥ तत्साध्यत्वस्य तदुत्तरकालमात्रवृत्तित्वनियतत्वपक्षे चेत्यपि बोध्यम्। *आद्यस्य=दृष्टान्तघटकस्य। *मुद्गरपातप्रयुक्तेति* उत्तरज्ञानविषयोल्लेखः। *द्वितीयस्य=दार्ष्टान्तिकघटकस्य। ज्ञानप्रयुक्तेति पूर्ववत्। *निवृत्तिः=तद्घटसमवायावच्छिन्नकालिकसंबन्धावच्छिन्नतद्घटाभावः। शुक्त्यज्ञानादेः शुक्त्यवच्छिन्नकालिकसंबन्धावच्छिन्नाभावश्च यथायथं

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानप्रयुक्ता निवृत्तिरस्तीत्यर्थः ; नञो निवृत्त्यर्थत्वादिति भावः । 'अनन्तरमि'ति च सावधारणम् । तथाचास्तीत्यस्य वर्तमानत्वार्थकत्वेने'दानीमेव मुद्गरपातप्रयुक्ता निवृत्तिः, न तु क्षणान्तरे' इति धीवद् 'एतत्क्षण एव ज्ञानप्रयुक्ता सर्वदृश्यनिवृत्तिः, न तु क्षणान्तरे' इति सार्वलौकिकधीबलादुक्तनिवृत्तिप्रयोजकत्वं ज्ञानस्य युक्तम् ।

### विट्ठलेशीयटिप्पणी

बोध्यः । *ननु*—कपालावच्छेदेन मुद्गरपातोत्तरक्षणनिष्ठा तदवच्छेदेन कपालनिष्ठा वा घटाद्यभाववत्तारूपा निवृत्तिः, तादृशवायुसंयोगाद्यधिकरणतावत् काकतालीयन्यायसिद्धा, न तु मुद्गरपातादिप्रयोज्येत्याशङ्क्य, प्रयोज्य-प्रयोजकभावग्राहकं व्यतिरेकाव्यभिचारं दर्शयितुमेवकारमध्याहरति—*अनन्तरमिति—सावधारणमिति* ॥ मुद्गरपातानन्तरमेव 'तत्कपाले तद्घटो नास्ती'त्यत्रानन्तरपदमव्यवहितोत्तरकालार्थकम् । ततः "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ; अधिकरणतायामन्वयसहचारग्रहौपयिकतया व्यापकत्वरूपात्यन्तसंयोगस्यापि विवक्षितत्वात्, मुद्गरपातादिपदस्य स्वेतरसकलप्रयोजकसमवहितमुद्गरपातपरत्वात् । तथात्र प्रयोजकान्तरसमवहितमुद्गरपातानन्तरक्षणत्वव्यापिका मुद्गरपातानधिकरणसकलक्षणनिष्ठाभावप्रतियोगिनी मुद्गरपातानन्तरक्षणनिष्ठा या तत्कपालावच्छिन्ना स्वाधिकरणता, तन्निरूपिता या वर्तमानकालावच्छिन्नाधेयता, तदाश्रयः कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्तद्घटाभाव इति बोधः, इत्यभिप्रायेणाह—*तथाचेति* ॥ निवृत्तिर्यत इदानीं मुद्गरपातानन्तरक्षण एव, न तु क्षणान्तरे मुद्गरपातानधिकरणक्षणे, अतो मुद्गरपातप्रयोज्येत्यर्थो दृष्टान्ते, एवं दार्ष्टान्तिकेऽपि बोध्यम् । *वर्तमानार्थकत्वेनेति* । *प्रयुक्तेति* ॥ एतेन प्रत्यक्षयोग्यता व्यज्यते ; कार्य-कारणभावस्येव प्रयोज्य-प्रयोजकभावस्याप्यन्वय-व्यतिरेकग्रहसहकृतप्रत्यक्षग्राह्यत्वात् । *सार्वलौकिकत्वं* दुरपह्नवत्वाय । अत एव ज्ञानाज्ञानयोर्विरोधोऽपि सर्वसिद्धः । *युक्तमिति* ॥ उक्तमीमांसकादिमतं त्वयुक्तम् ; आत्यन्तिकदुःखध्वंसस्य नित्यसुखसाक्षात्कारस्य वा मुक्तित्वे तस्य जन्यत्वेन "नास्त्यकृतः कृतेन" इति श्रुतिविरोधापत्तेः, ब्रह्मभिन्नस्य तस्यातोऽन्यत्क्षार्तश्रुत्या विनाशित्वेन स्वर्गादिवदस्य पुरुषार्थत्वानुपपत्तेश्च । नच—धारा नित्येति—वाच्यम् ; धारिणां प्रत्येकमनित्यत्वे तदनतिरिक्तसन्ततिरूपधाराया नित्यत्वासंभवात्, आत्मभिन्नस्य सुखस्य तद्भिन्नतत्साक्षात्कारस्य तद्धारायाश्च स्वीकारे गौरवाच्च, दुःखध्वंसस्य मोक्षत्वे मुक्तस्य पाषाणतुल्यत्वापत्तेश्चेति भावः ॥

*अत्रैवं संग्रहः*—*अथ* नैयायिकाद्वैतवेदान्तमतयोर्विशेषाविशेषौ विविच्येते । *द्वैतमते* देहेन्द्रियादिप्रपञ्चः सत्यः, *अद्वैतमते* तु मिथ्या । *मतद्वयेऽपि* आत्मनस्तद्भिन्नत्वेन श्रवण-मनन-निदिध्यासनजन्यं तत्साक्षात्काररूपं यद् ज्ञानम्, तद् मुक्तिसाधनम् । तत्र *द्वैतमते* सत्यादपि प्रपञ्चात् सत्येऽप्यात्मनि शब्दादिशून्यत्वात् ज्ञानादिमत्त्वाच्च भेदधीः, *अद्वैतमते तु* मिथ्याभूतात् प्रपञ्चात् सत्यस्यात्मनोऽभेदधीः । *द्वैतमते* प्रपञ्चसत्यत्वं सुनिश्चेयम्, *अद्वैतमते* प्रपञ्चमिथ्यात्वं सुनिश्चेयम्, तदनिर्णये तु मिथ्यात्वशून्यत्वात् सत्यत्वाच्चोक्तभेदधीः, इति न फलतो विशेषः । द्वैतमते* जीवेश्वरयोर्भेदः सत्यः, *अद्वैतमते तु* कल्पितो मिथ्या । आत्मनि ईश्वराभेदज्ञानं निरतिशयानुरागरूपभक्तिद्वारा मुक्तिकारणमिति *मतद्वयेऽपि तुल्यम्* ॥ तत्तु एकस्य भ्रमः, अपरस्य प्रमेत्यन्यदेतत् । *मतद्वयेऽपि* एकविंशतिदुःखध्वंसविशिष्टसुखसाक्षात्कारो मोक्षः । तच्च सुखमेकमतेऽनित्यमात्मनो भिन्नधर्मः, तत्साक्षात्कारश्च तत्सदृशो जन्यो विनाशी, अविच्छिन्नधारावाही वा सविकल्पकः, *अन्यमते तु* सुखमात्मस्वरूपं नित्यम्, तत्साक्षात्कारोऽप्यात्मस्वरूपो नित्यो निर्विकल्पक इति विशेषोऽस्तु । *तथापि मतद्वये* मुक्तिदशायां देहेन्द्रियादिप्रपञ्चस्य नष्टस्य विद्यमानस्य चेश्वराकाशादिप्रपञ्चस्य भेदाभेदयोरुभयोरपि भानं नास्तीति समानम् । एवञ्चाद्वैतमतमेव किमर्थमादरणीयमिति *पूर्वः पक्षः* ॥

*अत्रेदमवधेयम्*—परमकृपया सर्वाधिकारिजीवोद्धरणार्थं शास्त्रं गौतमादिमुनिभिः प्रणीतम् । *तदिदमुक्तम्*—जगदेतद् दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं विद्यां परमकारुणिको मुनिः प्रणिनायेति* । उत्तमाधिकार्युद्धारार्थं तु श्रीबादरायणशास्त्रमेव । तदिदमुक्तम्—"तत्त्वं तु बादरायणादि"ति ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तदनुसृत्य पूर्वोक्तव्याप्तीनां कल्पनमपीति भावः। *ननु*—उक्तव्याप्तीनां ग्राहकः कस्तर्कः ? इति-चेत्, 'दण्डपातोत्पत्तिक्षणो यो यः, स घटसमवायितत्तद्देशावच्छेदेन घटवत्कालपूर्वो ने'ति व्याप्तौ 'स यदि तथा न स्यात्, तदोक्तपूर्वत्वेन प्रमीयेते'ति, तत्त्वप्रमा या या, सा स्वसमानविषयकाज्ञान-

विट्ठलेशीयटिप्पणी

*अत्रेदमाकूतम्*—देहेन्द्रियादिप्रपञ्चमिथ्यात्वव्यवस्थापनं न केवलमात्मनि तद्भेदसिद्ध्यर्थम्, किन्तु ज्ञान-साधनश्रवणादौ प्रपञ्चवैराग्यरूपाधिकारसिद्ध्यर्थम्। नहि मिथ्यात्वेन निश्चिते शुक्तिरजतादौ प्रेक्षावतां प्रवृत्तिनिदान-भूतो रागः। नच—अनित्यत्वनिश्चय एव वैराग्यकारणमिति—वाच्यम्; हट्टस्थरजतादौ तन्निश्चयेऽपि रागोदयात्, मनःपरमाण्वादौ नित्यत्वस्यैव परैरुपगमाच्च। नह्येवं निर्विचिकित्समिथ्यात्वनिश्चये रागोदयव्यभिचारः, देहादौ तु शब्दादिप्रमाणेन मिथ्यात्वनिश्चयो जायमानोऽप्यनादिदुर्वासनया विचिकित्सात्मको भवति। स च चिराभ्यस्त-मिथ्यात्वभावनयेश्वरप्रणिधानप्रसादसहकृतया निर्विचिकित्सात्मकः शुक्तिरजतादाविव जायमानो वैराग्यं जनयति। किञ्च प्रपञ्चस्य मिथ्यात्वं "न तत्र रथाः" "सदेव सोम्येदम्" "नेह नाना" इत्यादिश्रुत्यादिप्रमाणैः सिद्धम्, तत् कथं वारणीयम् ? एवं जीव-परमात्माभेदोऽपि तत्त्वमस्यादिश्रुतिसिद्धो न वारयितुं शक्यः। एवं सति प्रमात्मक-मेव तदभेदज्ञानं निरतिशयानुरागरूपभक्तिद्वारा मुक्तिकारणं संपद्यते; अन्यथा देहेन्द्रियाद्याविवात्मतादात्म्यभ्रमाहितोऽ-पीश्वरानुरागो जघन्यः कथं मुक्तिसाधनं स्यात् ? सत्याभिसन्धस्यैव मोक्षश्रवणात्। *किञ्च जीवब्रह्माभेदज्ञानं साक्षादेव मुक्तिकारणम्, ईश्वरभक्तिस्तु श्रवणादेः सहकारिणी; "यस्य देवे परा भक्तिरि"ति श्रुतेः। एवं मोक्ष-पदार्थोऽप्यद्वैतमते समीचीनः; आत्मान्यसुखस्य तत्साक्षात्कारस्य च स्वीकारे गौरवाद् आत्मस्वरूपस्यैव तस्य स्वीकर्तुं युक्तत्वात्। एवञ्च निर्विकल्पकत्व-नित्यत्व-सत्यत्वान्यर्थसिद्धानीति *सिद्धान्तः=इत्यलम्॥

*तत्=तत्त्वज्ञानस्योक्तध्वंस्यनिवृत्तिप्रयोजकत्वम्। *अनुसृत्य=निर्वाहयितुम्। *उक्तव्याप्तीनाम्="ज्ञानप्रयुक्ताव-स्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम्" इति मूलपङ्क्तिव्याख्यानावसरोक्तव्याप्तीनाम्। *कल्पन-मपीति*॥ युक्तमित्यनुषज्यते। तत्र दृष्टान्तभूतां व्याप्तिमुक्तप्रायां स्पष्टयित्वा तद्ग्राहकं तर्कमाह—*दण्डपातोत्पत्तिक्षण इति*॥ यद्यद्देशावच्छेदेन घट इत्यादिः। *तत्तद्देशावच्छेदेनेति*॥ घटवत्त्वान्वयिदेशश्चात्र कपालादिरवयवः॥ *अत्राहुः*—एकघटे दण्डपातानन्तरक्षणस्य घटान्तरवत्त्वेन प्रसक्तव्यभिचारस्य घटैक्यनिवेशेन वारणेऽपि, देशैक्य-निवेशाद् यत्किञ्चिदवयवनाशेऽपि *'यावत्प्रत्यभिज्ञं नावयविनाशः'* इति न्यायविरोधेन नावयविविनाशः; यावदव-यवनाशमवयविनां तन्नाशकल्पने गौरवादिति मते तत्कपालावच्छेदेन तद्घटे दण्डपातानन्तरक्षणस्य तदन्यकपाला-वच्छेदेन तद्घटवत्त्वेऽपि न व्यभिचारः। यदि च यत्किंचिदवयवनाशे तावदवयवारब्धावयविनो नाशादवयव्यन्तर-मुत्पद्यते; प्रत्यभिज्ञायाः सादृश्यविषयकत्वेनोपपत्तेरिति मन्यते, तदा घटैक्यनिवेशेनाप्युक्तदोषवारणंसम्भवतीति बोध्यम्॥

परेतु—देशैक्यनिवेशाद् एकघटे दण्डपातानन्तरक्षणस्य घटान्तरवत्त्वेऽपि न व्यभिचारः। यद्यपि घटैक्य-निवेशेनाप्येतद्दोषवारणसम्भवः, नच—तद्घट एककपालावच्छेदेन दण्डपातानन्तरक्षणस्य कपालान्तरावच्छेदेन तद्घट-वत्त्वेन व्यभिचारो दुर्वार इति—वाच्यम्; यदा यत्कपालावच्छेदेन यद्घटे दण्डपातः, तदनन्तरक्षणे तत्कपालसहित-कपालान्तरारब्धतद्घटस्य नाश एव; तदुत्तरक्षणे कपालान्तरारब्धं घटान्तरमेवोत्पद्यते; प्रत्यभिज्ञायाः सादृश्यनिबन्धन-त्वादिति मताश्रयणात्, तथाच किं देशैक्यनिवेशेन ? तथापि यत्किंचिदवयवादिनाशेऽपि यावत्प्रत्यभिज्ञं नावयविनाशः, यावदवयवनाशमवयव्यन्तराणां तत्प्रागभाव-तन्नाश-तदत्यन्ताभावादीनां च कल्पने प्रत्यभिज्ञायाः सादृश्यविषयकत्व-कल्पने च गौरवादिति मते घटैक्यनिवेशेऽप्युक्तव्यभिचारप्रसक्तेस्तद्वारणाय देशैक्यनिवेशस्यावश्यकत्वमिति भाव इति—*प्राहुः*॥ *सः=उक्तक्षणः। *तथा=उक्तपूर्वत्वाभाववान्। *न स्यात्=उक्तपूर्वत्वाभावाभावरूपोक्त-पूर्वत्ववान् स्यादित्यर्थः। प्रतीतेर्भ्रमरूपाया इष्टत्वात् प्रमीयतेत्युक्तम्। *तत्त्वप्रमेति*॥ अप्रामाण्यज्ञाना-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रयुक्तत्ववत्कालपूर्वा ने'त्यादिव्यासौ 'सा यदि तथा न स्यात्, तदोक्तपूर्वत्वेन प्रमीयेते'त्यादितर्को ग्राहकः। यदि चैवं न स्वीक्रियते, तदा दुःखनाशस्य तत्त्वज्ञानसाध्यत्वेऽपि तदधिकरणे दुःखं कुतो नोपलभ्यते ? कुतो वा नानुवर्तते ? नाशस्य प्रतियोग्यसमानकालीनत्वनियमादिति चेत्, *न*; उक्तनियम एव हेतोः पृष्टत्वात्। *अथ*—नाशजनकदण्डपातादिसमूहाश्रयक्षणस्य घटाद्याश्रयकालपूर्वत्वाभावनियमादिति चेत्, *न*; दण्डपातादेरुक्तविशेषणं विनाप्युक्तनियमस्य त्वया स्वीकारात्, प्राभाकरादिमते नाशस्य तत्तदधिकरणरूपस्य दण्डपाताद्यजन्यत्वेन तादृशनियमस्यैव स्वीकाराच्च। तत्त्वज्ञानस्थलेऽपि तत्त्वज्ञानादिसमूहाश्रयक्षणस्य दुःखाधिकरणकालपूर्वत्वाभावव्याप्तिः प्राभाकरादिभिस्त्वयापि स्वीक्रियते। तथाच तद्वदेव मन्मते प्रमाया-मुक्तपूर्वत्वाभावनियमे न कोऽपि दोषः। यदि चोक्तविशेषणविशिष्टदण्डपातादेरेव तथा नियमः,

### विट्ठलेशीयटिप्पणी

स्कन्दितत्वजन्यपटुतमसंस्कारविशिष्टाधिष्ठानतत्त्वसाक्षात्काररूपा प्रमेत्यर्थः। *ननु*—अस्तूक्तव्याप्तिः; तथापि सा ज्ञानस्याज्ञानप्रयुक्तनाशजनकत्वेऽप्युपपद्यत एव; यदि शुक्त्यादिप्रमया रजतादिनाशो न जन्यते, तदा तदुत्तरं रजतं क्व गतम् ? केनापहृतम् ? कथं च तदत्यन्ताभावरूपा निवृत्तिः ? इत्यतोऽवश्यं शुक्त्यादिप्रमाया रजतादिनाशकत्वं स्वीकरणीयम्। नित्यसुखसाक्षात्कारस्य मुक्तित्वपक्षेऽप्यात्यन्तिकदुःखनाशविशिष्टस्यैवोक्तसाक्षात्कारस्य मुक्तित्वेन तत्त्वज्ञानस्य दुःखनाशजनकत्वमावश्यकम्, न तूक्तनिवृत्तिप्रयोजकत्वम्, अत आह—*यदि चैवं न स्वीक्रियत इति*॥ *तदधिकरणेति*॥ दुःखनाशाधिकरणेत्यर्थः। *ननु*—दुःखं स्वात्मकविषयाभावाद् नोपलभ्यते, तत्राह—*कुतो वेति*॥ *नानुवर्तते=न तिष्ठति॥ तत्कालीनस्थित्यभावो दुःखे, दुःखस्थित्यभावो वा तत्काले। *कालीन-त्वनियमादिति*॥ 'नोपलभ्यते' 'नानुवर्तते' इत्यनुषङ्गेणान्वयः। *उक्तनियमे=नाशस्य प्रतियोग्यसमानकालीनत्व-नियमे। *हेतोः=ग्राहकतर्कस्य। *पृष्टत्वात्='कुतो ने'त्यादिप्रश्नतात्पर्यविषयत्वात्। *नाशजनकेति*॥ घटादि-नाशजनकेत्यर्थः। जनकत्वं स्वरूपयोग्यत्वम्। अत एव तत्समूहपर्यन्तनिवेशः। आदिना दुःखनाशजनके ज्ञानादि-समूहाश्रयक्षणस्य दुःखकालपूर्वत्वाभावनियमादिति लभ्यते। 'दुःखं नोपलभ्यते' 'नानुवर्तते' इत्यनुषङ्गेणान्वयः। उक्ततर्कगृहीतादिति शेषः। *उक्तविशेषणम्=घटादिनाशजनकत्वविशेषणम्। 'विनाऽपी'त्यादिनोक्तविशेषणघटित-नियमसमुच्चयः। *त्वयापि=दण्डपातादेर्घटादिनाशजनकत्वमङ्गीकुर्वता नैयायिकेनापि। *स्वीकारादिति*॥ उक्त-तर्कबलेनेति भावः। एवं च दण्डपातादेर्घटादिनाशजनकत्वमस्वीकृत्यापि तद्घटितव्याप्तिबलाद् दण्डपाताद्युत्तरक्षणे घटाद्यत्यन्तभाववत्त्वं सिद्ध्यतीति भावः। *ननु*—नियमे दण्डपातादेर्नाशजनकत्वरूपविशेषणमनुपादाय नियम-स्वीकारेऽपि वस्तुगत्या तस्य नाशजनकत्वोपगमे तदुत्तरक्षणे नाश एव प्रतियोग्यननुवृत्तौ प्रयोजकः; नाशस्य प्रतियोग्यसमानकालीनत्वनियमात्, घटादिनाशो यदि प्रतियोगिसमानकालीनः स्यात्, तर्हि तथा प्रतीयेतेति तर्कस्य तद्ग्राहकस्य सत्त्वात्, इत्यत आह—*प्राभाकरादिमत इति*॥ *तत्तदधिकरणेति*॥ प्रतियोगि-समवायीत्यर्थः। नच—कपालादेर्घटादिनाशत्वेन दण्डपातादिजन्यत्वासम्भव इति—वाच्यम्; उक्तनियमबलादेव दण्डपाताद्युत्तरक्षणे घटाद्यत्यन्ताभाववत्त्वनिर्वाहे कपालादेर्घटादिनाशत्वस्य गौरवेणाकल्पनादिति भावः। नैयायिकं प्रत्याह—*तत्त्वज्ञानस्थलेऽपीति*। 'तत्त्वज्ञानादी'त्यादिना प्रारब्धकर्मरूपप्रतिबन्धकाभावपरिग्रहः। *व्याप्ति-रिति*॥ नह्येवा दुःखनाशमात्रनिर्वाहः; तत्त्वज्ञानेन तज्जन्येन वा पूर्वदुःखान्तरोत्पत्तिप्रतिबन्धं विना तदनिर्वाहादिति भावः। *स्वीक्रियते*॥ उक्तक्रमस्य दुःखात्यन्ताभाववत्त्वनिर्वाहायेति भावः। *तथाच=तत्त्वज्ञानस्थले दुःखनाशनिर्वाहकव्याप्तिस्वीकारे। *तद्वत्=तत्त्वज्ञानघटितोक्तनियमवत्। *प्रमायाः= प्रमासामान्ये। *उक्तेति*॥ स्वसमानविषयकाज्ञानप्रयुक्तत्वत्कालेत्यर्थः। *नन्वेवम्*—'दण्डपातेन घटो नश्यती'ति व्यवहारो न निर्वहति, इत्यत आह—*यदि चेति*॥ *उक्तविशेषणम्=घटादिनाशनिरूपितस्वरूपयोग्यता-रूपं जनकत्वम्। 'दण्डपातादेरेवे'त्येवकारेण समूहान्तरव्यवच्छेदः। दण्डपातोत्पत्तिक्षणस्य तदुत्पत्तेरित्यर्थः। *ननु*—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्राभाकरादिमतेऽपि घटादिचरमक्षणरूपो नाशो दण्डपातादिजन्यः, तदुत्तरक्षणरूपस्य तत्क्षणनाशस्यापि घटादिनाशत्वादग्रेऽपि तन्नाशव्यवहार इत्युच्यते, तदा तत्त्वज्ञानस्थलेऽपि तथा दर्शितमेव। ब्रह्मज्ञानोत्पत्ति-द्वितीयक्षणस्य तूत्तरक्षणाप्रसिद्धेर्न तन्नाशस्याग्रेऽनुवृत्तिः, इति स एव दृश्याब्धेस्तीररूपा मर्यादा

सिद्धिव्याख्या

*ननु*—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वमित्यत्र—किमवस्थित्या सामान्यं विशेष्यते? विरहो वा? *आद्ये*ऽवस्थितिसामान्यं कारणात्मनाऽवस्थितिः, कारणमिति यावत्; ज्ञानप्रयुक्त-व्यतिरेकप्रतियोगिकारणकत्वमित्यर्थः। तत्रोत्तरज्ञानप्रयुक्तव्यतिरेकप्रतियोगिपूर्वज्ञानजन्यसंस्कारादौ सिद्धसाधनम्, अनाद्यविद्यादौ च बाधः, कारणशब्देनानाद्यविद्योक्तौ चाविद्याकारणत्वमेवास्तु; शेषवैयर्थ्यात्, अनाद्यविद्यादौ बाधश्च, *न द्वितीयः*; घटाद्यवस्थितिसामान्यविरहे ज्ञानयुक्तत्वं न संभवति; विनष्टघटाद्यवस्थितिविशेष-द्वयविरहस्य ज्ञानाप्रयुक्तत्वात्, विशेषाभावातिरिक्तसामान्याभावस्य त्वयैवाविद्यावादे निरसिष्यमाणत्वात्, ज्ञान-प्रयुक्तविरहप्रतियोग्यवस्थायामवस्थात्वस्यातिप्रसक्तेन प्रतियोगितानवच्छेदकत्वाच्च। शुक्तिरजतादेरवस्थित्यस्वीकारे स्वरूपेण निषेधोक्त्ययोगश्च। रूप्यादेः स्वरूपेणैव निषेध इति त्वदभ्युपगमपक्षे रूप्यादेरत्यन्तासत्त्वस्यापादितत्वेन रूप्याद्यभावोऽपि शशविषाणाद्यभाव इव ज्ञानप्रयुक्त इति दृष्टान्तस्य साध्यवैकल्यमेव, पक्षे बाधश्च, इति—

विट्ठलेशीयटिप्पणी

प्राभाकरमते कपालाद्यधिकरणरूपस्य घटादिनाशस्य कथं दण्डपातादिजन्यत्वम्? अत आह—*प्राभाकरादिमत इति*॥ *घटादिचरमक्षणरूपो नाश इति*॥ स्वीक्रियत इति शेषः। यथाकथंचिद्भावस्वरूपाभावाभ्युपगमे निर्बन्ध-स्तेषाम्, न त्वधिकरणमात्रस्वरूपत्वाभ्युपगमे। *तदुक्तम्*—"ज्ञानविशेष-कालविशेषस्वरूपत्वमभावस्ये"ति। *वस्तुतस्तु*—घटचरमक्षणोऽपि घटनाशस्य कालिकसम्बन्धेनाधिकरणमेव, इति तद्रूपत्वेऽप्यभावस्याधिकरणस्वरूप-मतस्य न हानिः। *किंच* आश्रयनाशजन्यगुणनाशस्य स्वाश्रयकालस्वरूपत्वं नैयायिकेनाप्यभ्युपगम्यते। तथाच सर्वत्रैव तत्स्वरूपत्वं नाशस्य युक्तम्; ऐकरूप्ये लाघवात्। यद्यपि क्षणो नातिरिक्तः, किन्तु क्रिया-शब्दादिरूपः, तस्य च न दण्डपातजन्यत्वं स्वरूपतः; नाप्यन्त्यक्षणत्वावच्छिन्नस्य क्षणत्वेन; तेन रूपेण कैरप्यनभ्युपगमात्, नापि घटनाश-त्वेन; तस्य सति जन्यत्वे नाशत्वम्, सति नाशत्वे जन्यत्वमित्यन्योन्याश्रयात्; तथापि घटचरमक्षणोत्पन्नक्रियादेः स्वत एव दण्डपातादिजन्यत्वम्; कारणान्तरजन्यघटनाशे व्यभिचारवारणाय दण्डपातोत्तरत्वावच्छिन्नं प्रति दण्डपातस्य कारणत्वादिति भावः। *ननु*—घटचरमक्षणरूपस्य घटनाशस्यापि तदुत्तरक्षणे तद्रूपजननात् तदा घटनाशव्यवहारानुप-पत्तिरत आह—*तदुत्तरक्षणस्येति*॥ घटचरमक्षणस्तदर्थः। *अग्रेऽपि=घटनाशरूपक्षणनाशक्षणेऽपि। *तन्नाशव्यवहार-इति*॥ घटप्रागभावनाशरूपघटनाशस्य घटप्रागभावनाशत्वेन घटनाशदशायां घटप्रागभावनाशव्यवहारवदिति भावः। *इत्युच्यत इति*॥ तथाच तत्त्वज्ञानस्यात्यन्तिकदुःखध्वंसजनकत्वमस्तु, न तूक्तात्यन्ताभावनिवृत्ति-प्रयोजकत्वमिति शङ्कितुरभिप्रायः। दुःखध्वंसवत् सकलदृश्यध्वंसजनकत्वमङ्गीकृत्येष्टापत्त्या परिहरति—*तत्त्व-ज्ञानस्थलेऽपीति*॥ *तथा दर्शितमिति*॥ तत्त्वज्ञानद्वितीयक्षणे तत्क्षणरूपस्तत्त्वज्ञानद्वितीयक्षणघटितसकलदृश्य-नाशो जायते; स एव सर्वदृश्यनिवृत्तिः सर्वदृश्योच्छेदपदार्थः। तदुपलक्षितः पूर्णानन्दरूप आत्मा मोक्ष इति दर्शितमित्यर्थः। *ननु*—तत्त्वज्ञानद्वितीयक्षणरूपः सकलदृश्यनाशोऽपि दृश्यमेव, ब्रह्मान्यत्वात्, तथाच मुक्तौ कथं सर्वदृश्योच्छेदरूपो दृश्याब्धेः पारः? तत्राह—*ब्रह्मज्ञानोत्पत्तीति*॥ *उत्तरक्षणाप्रसिद्धेरिति*॥ सकलक्षणो-पाधीनां नाशादिति शेषः। *न तन्नाशस्य=तत्त्वज्ञानद्वितीयक्षणरूपस्य सर्वदृश्यस्य, *अग्रे=उत्तरकाले, *अनुवृत्तिः=सत्त्वं नेत्यर्थः। उत्तरकालस्यैवाभावादिति भावः। *स एव=उक्तक्षणरूपो दृश्यसामान्यध्वंस एव। अत्यन्ताभावस्य ध्वंस-प्रागभावयोर्विरोधाभिप्रायेणैवकारः, अविरोधे तु तद्व्यापकस्तदत्यन्ताभावोऽपीति बोध्यम्। *तीररूपा=परपाररूपा। "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि। तं मा

अद्वैतसिद्धिः

ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वमित्यपि साधु ; उत्तरज्ञानस्य पूर्वज्ञाननिवर्तकत्वं च न ज्ञानत्वव्याप्य-

तरङ्गिणी

ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वमित्यपि साधु ; उत्तरज्ञानस्य पूर्वज्ञाननिवर्तकत्वं न ज्ञानत्वव्याप्यधर्मेण,

गौडब्रह्मानन्दी (लघुचन्द्रिका)

ब्रह्मज्ञानं वा । सर्वथाऽपि ब्रह्मज्ञानं स्थिराया निवृत्तेर्न जनकमिति सिद्धम् । ज्ञानव्यापकतावच्छेदकं यदज्ञान-

सिद्धिव्याख्या

चेत्, *मैवम्* ; पूर्वज्ञानस्य ज्ञानत्वेन ज्ञानप्रयुक्तव्यतिरेकिप्रतियोगित्वाभावेन तादृशकारणकत्वस्य तत्राभावात् । नच—अनाद्यविद्यायां बाध इति—शङ्क्यम् ; कारणशब्देनाविद्यास्वरूपकारणस्यैवोक्तेः । नच—तर्हि अविद्या-कारणकत्वमेवास्तु, शेषवैयर्थ्यादिति—वाच्यम् ; शेषस्याविद्याकारणत्वरूपकथनपरत्वेन यथोक्तविशेषण-विशेष्यभावे वैयर्थ्याभावात् । नच—अनाद्यविद्यादौ बाध इति—वाच्यम् ; निरुक्तकारण-कारणकत्वान्यतरस्य विवक्षितत्वात् । नापि मिथ्याज्ञाने बाधः ; तत्रापि ज्ञानत्वेन ज्ञानप्रयुक्तव्यतिरेकप्रतियोग्यविद्याकारणकत्वस्य सत्त्वेनोक्त-साध्यानपायादिति ॥ *ज्ञानत्वव्याप्येति* ॥ नच—भवन्मते ब्रह्मत्वाद्विज्ञानत्वव्याप्यधर्मेण ब्रह्मनिवर्त्येऽर्थगतसंशय-

विट्ठलेशीयटिप्पणी

भगवान् शोकस्य परं पारं तारयतु" इति श्रुतेः । *तरति=निवृत्त्यनुकूलव्यापाराश्रयः । निवृत्तौ शोकमिति द्वितीयार्थप्रति-योगित्वान्वयः । व्यापारे चात्मज्ञानरूपोद्देश्यतावच्छेदकस्याभेदेनान्वयः । *मां शोकस्य परं पारं तारयतु भगवान्= मन्निष्ठो यश्शोकनिवृत्त्यनुकूलो ज्ञानरूपो व्यापारस्तदनुकूलो य आत्मतत्त्वरूपोपदेशरूपो व्यापारो मत्प्रार्थनाविषयः, तद्वान् भगवानित्यर्थः । निवृत्तौ परपारस्याभेदेनान्वयः ; क्रियाविशेषणत्वाद् निवृत्तेः । परपाररूपकेण शोकस्याब्धिरूपत्वं व्यङ्ग्यम् । शोकस्येति कर्मणि शेषे षष्ठी । *यद्वा*—शोकस्य या परपारपदेन] निगीर्णाऽऽत्यन्तिकी निवृत्तिः, तां मां तारयतु=प्रापयतु । *प्राप्तिः=सम्बन्धः, आश्रयाश्रयिभावः, तदनुकूलो ज्ञानरूपो व्यापारः प्रापेरर्थः । मन्निष्ठ-तदनुकूलो भगवन्निष्ठो व्यापारो णिजर्थ इत्यभिप्रायेणेदम् । *वस्तुतस्तु*—प्रथमेऽर्थे ज्ञानरूपव्यापार एव परपारस्या-भेदान्वयः । द्वितीये च परपारपदेनात्यन्तिकशोकनिवृत्त्यनुकूलं ज्ञानमेव निगीर्यते, तत्प्राप्त्यनुकूलो यो मन्निष्ठः श्रवणादिरूपो व्यापारः, तदनुकूलोपदेशरूपव्यापारश्च णिजन्तार्थः । अत एव "तस्मै मृदितकषायाय तमसः पारं दर्शयति स्मे"त्युपसंहृतम् । *तमसः=आविद्यकस्यासज्जड-दुःखात्मकप्रपञ्चस्य । *पारम्=वस्तुतस्तदनात्मकं ब्रह्मात्म-स्वरूपमानन्दम्, *दर्शयति स्म=तद्विषयकसाक्षात्कारानुकूलोपदेशरूपव्यापारवानित्यर्थः । 'तस्मै' इति साक्षात्कारा-न्वय्याश्रयाश्रयिभावरूपकर्मत्वार्थिका व्यत्ययेन चतुर्थी । स्मयोगे भूते लट् । तदभिप्रायेणाह—*ब्रह्म-ज्ञानं वेति* ॥ दृश्याब्धेस्तीररूपा मर्यादेत्यनुषङ्गः । तत्काल एव दृश्यस्यास्फुरणात् । किमर्थं तर्हि दृश्य-निवृत्तिरुक्तरीत्या द्विविधा स्वीक्रियते ? इति *चेत्, शुक्तिज्ञान-तदज्ञान-तज्जतत्स्थलीयानुभवबलात्, व्याप्तिबलात्, विद्वदनुभवबलात्, "तरति शोकमात्मवित्" "विद्वान् नामरूपाद्विमुक्तः" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादि-श्रुतिबलाच्चेति गृहाण । उक्तद्विविधनिवृत्त्योर्मध्य एकतरनिवृत्तिपक्षे नाग्रहः, किन्तु ब्रह्मज्ञानस्यास्थिरनिवृत्तिजनकत्वं, इत्याह—*सर्वथाऽपीति* ॥ उक्तद्विविधपक्षपरिग्रहेऽपीत्यर्थः । [ *ननु* ब्रह्मज्ञानस्य स्थिरनिवृत्तिजनकत्वं परोक्तं प्रतिषिध्यते, नञ्व्यत्यासेनास्थिरनिवृत्तिजनकत्वं वा प्रतिपाद्यते (क)] ; अत्यन्ताभावरूपनिवृत्तिपक्षेऽत्यन्ताभावस्य ब्रह्म-रूपतया स्थिरत्वे येन दृश्यसामान्यात्यन्ताभावत्वविशिष्टरूपेण तस्यज्ञानजन्यत्वम्, तेन रूपेणास्थिरत्वमेव ; ब्रह्मज्ञान-द्वितीयक्षणरूपायाः सर्वदृश्यनाशात्मकनिवृत्तेरुत्तरकालाप्रसिद्ध्या तद्वृत्तित्वरूपानुवृत्त्यभावस्यानुपदमेवोक्तत्वात्, नोत्तर-कालाभावाप्रतियोगित्वरूपं स्थिरत्वम् । नच—नाशाप्रतियोगित्वरूपं तस्यास्त्वस्तीति—वाच्यम् ; स्वात्मक-नाशाप्रतियोगित्वस्याङ्गीकारात् स्वान्यनाशाप्रतियोगित्वपर्यन्तस्थिरत्वनिर्वचने प्रयोजनाभावात्, नाशाप्रतियोगित्व-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्संस्कारान्यतराभावत्वाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावत्वयोरन्यतरत् , तदाश्रयप्रतियोगित्वमज्ञान-तत्प्रयुक्त-तत्संस्कारसाधारणं ज्ञाननिवर्त्यत्वम्, ज्ञानाधीनतावच्छेदकं यदुक्तान्यतरत्, तदाश्रयप्रतियोगित्वं वा, ज्ञानसाध्यतावच्छेदकं यदज्ञाननाशत्वमज्ञानप्रयुक्तनाशत्वं च तयोरन्यतरवत्त्वं वा, तादृशं यदज्ञानाभावत्वमज्ञानप्रयुक्ताभावत्वं च तयोरन्यतरवत्त्वं वा ज्ञानप्रयुक्तनिवृत्तित्वम्, तदाश्रयप्रतियोगित्वं वा ज्ञाननिवर्त्यत्वमिति पूर्वोक्तरीत्या निष्कर्षो बोध्यः। पटुतरसंस्कारादिविशिष्टज्ञानस्य कालिकसम्बन्धेन या व्याप्यता, तन्निरूपितविशेषणतासम्बन्धावच्छिन्नव्यापकतावच्छेदकं यत् कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाज्ञान-तत्संस्कारान्यतराभावत्वम्,

### सिद्धिव्याख्या

विशेषेऽतिव्याप्तिः ; तादृशसंशयनिवर्तकत्वेनैव मननस्य सप्रयोजनत्वोक्तेरिति—वाच्यम् ; संशयमात्रस्य लक्ष्यत्वेन

### विट्ठलेशीयटिप्पणी

रूपस्थिरत्वस्य द्विविधनिवृत्त्योरसत्त्वात्। स्मृतेः संस्कारनिवर्तकत्वपक्षे संस्कारातिव्याप्त्या निरस्तं ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वकल्पं तत्पक्षदोषत्वेनोक्तातिव्याप्तिमुद्धरिष्यन् सिद्धान्तत्वेन समुच्चिनोति मूले—*ज्ञानत्वव्याप्यधर्मेणेति* ॥ मुद्गरनाश्यघटादावतिव्याप्तिमुद्धर्तुं पूर्वं निरुक्तज्ञाननिवर्त्यत्वपदार्थघटकप्रयुक्तत्वं व्यापकत्वरूपं निवेश्य पूर्वोक्तरीत्या परिष्करोति टीकायाम्—*ज्ञानव्यापकतावच्छेदकमिति* ॥ 'तत्संस्कारे'त्यत्र प्रथमं तत्पदम ज्ञानपरम्, द्वितीयमज्ञानप्रयुक्तपरम्, तृतीयं तदुभयपरम्। स्वरूपसंबन्धरूपं प्रयुक्तत्वं निवेशयाह—*ज्ञानाधीनतावच्छेदकमिति* ॥ ज्ञाननिवर्त्यत्वपदस्य यौगिकत्वाय ज्ञाननिवृत्तिं निरुच्य तद्घटितं ज्ञाननिवर्त्यत्वमाह—*ज्ञानसाध्यतावच्छेदकमिति* ॥ साध्यता चात्र जन्यता। ज्ञानादज्ञानादेर्नाशरूपा निवृत्तिर्जायत इति कल्पाभिप्रायेण *यदज्ञाननाशत्वमिति* ॥ अत्यन्ताभावरूपा निवृत्तिर्भवतीति कल्पाभिप्रायेण—*तादृशमिति* ॥ ज्ञानसाध्यतावच्छेदकमित्यर्थः। साध्यत्वं चात्र प्रयोज्यता। अज्ञान-तत्प्रयुक्तसंस्कारयोरज्ञानप्रयुक्तत्वेन तत्संग्रहात् तद्विवेकेऽपि न क्षतिरिति भावः।

केवलज्ञानस्याज्ञानाद्यभावव्याप्यत्वासंभवाद् व्याप्यतावच्छेदकं विशेषणं निवेश्य प्रथमं कल्पं परिष्करोति—*पटुतरसंस्कारादीति* ॥ आदिनाऽप्रामाण्यज्ञानाभावपरिग्रहः, वैशिष्ट्यमेकक्षणावच्छिन्नैकधर्मिवृत्तित्वसंबन्धेन। *ज्ञानस्य*=साक्षात्कारस्य। *अत्र* उक्तविशिष्टसाक्षात्कारत्वमेव ज्ञानत्वव्याप्यधर्मोऽज्ञानाद्यभावव्याप्यतावच्छेदकः। यद्यप्यज्ञानाभावव्याप्यतावच्छेदककोटावप्रामाण्यज्ञानशून्यत्वमात्रं व्यभिचारवारकतया निवेशमर्हति, न तु संस्कारवैशिष्ट्यम्; ज्ञानोत्पत्तिक्षण एवाज्ञानाभावसत्त्वेन व्यभिचाराप्रसक्तत्वात्; तथापि [ ज्ञानसंस्कारशून्यज्ञानक्षणेऽज्ञानसंस्कारानिवृत्त्योक्तविशेषणस्याज्ञान-तत्संस्कारान्यतराभावव्यभिचारवारकत्वेनावश्यकत्वात् तत्क्षणे (क) ] द्वयसामान्याभावाभावेनोक्तसंस्कारवैशिष्ट्यस्य द्वयसामान्याभावव्याप्यतावच्छेदककोटौ निवेशनस्यावश्यकत्वात्। उक्तज्ञाने संस्कारवैशिष्ट्यलाभायात्र तदुक्तिः। स्वसमानाधिकरणेत्यादिनियमस्याप्रयोजकत्वे व्यभिचारावारकविशेषणघटितस्यापि स्वरूपसंबन्धरूपव्याप्यतावच्छेदकत्वसंभवात्, अनतिरिक्तवृत्तित्वरूपतदवच्छेदकत्वे निर्विवादत्वेति भावः। विषयितासंबन्धेन तत्त्वज्ञानस्य तत्पूर्वकालीनतत्त्वजिज्ञासा-तन्मूलेष्टसाधनताज्ञानयोः संबन्धत्वात्, अज्ञानस्य च कालिकसंबन्धेन सत्त्वात् तत्संबन्धावच्छिन्नाभावं प्रति तत्त्वज्ञानस्य संबन्धसामान्येन व्याप्यत्वासंभवात्—*कालिकसंबन्धेन वा व्याप्यतेत्युक्तम्* ॥ नच—अज्ञानकालेऽप्यज्ञानानधिकरणदेश-कालावच्छेदेन कालिकसंबन्धावच्छिन्नतदभावोऽस्त्येवेति—वाच्यम्; तत्त्वज्ञानपूर्वकालावृत्तेरज्ञानव्यधिकरणस्यैवाज्ञानाभावस्य मोक्षपदार्थघटकस्य स्वरूपसंबन्धरूपतत्त्वज्ञानप्रयोज्यत्वाश्रयस्यैव विवक्षितत्वात्। नच—तत्त्वज्ञानवति स्थूलकालेऽज्ञानस्य कालिकसंबन्धेन सत्त्वात् तद्व्यधिकरणस्तदभावस्तत्र दुर्लभ इति—वाच्यम्; तत्त्वज्ञानोत्पत्त्यधिकरणक्षणत्वव्यापकत्वस्यैवाभिप्रेतत्वात्। तत्त्वज्ञानक्षणेऽज्ञानाभावस्य संयोग-विषयितादिसंबन्धेनाभावस्य सत्त्वाद् न व्यापकत्वसंभव इत्यतः—*विशेषणतासंबन्धावच्छिन्नव्यापकतेत्युक्तम्* ॥ संबन्धान्तरावच्छिन्ना-

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

कालिकसम्बन्धेनोक्तज्ञानं प्रति विशेषणतासम्बन्धावच्छिन्नव्यापकतायामवच्छेदकं यत् स्वाश्रयकालपूर्वत्व-सम्बन्धावच्छिन्नदृश्यत्वावच्छिन्नप्रतियोगिताकाभाववत्वं च तयोरन्यतराश्रयप्रतियोगित्वमिति *दिक्* ॥

**न्यायामृतसौगन्ध्यम्**

'न्यायनये' इत्ययुक्तम् ; तैर्नित्यानामपि महाकालवृत्तित्वस्वीकारात् । अत एव दीधितिकृता नित्यानां कालासम्बन्धित्वाङ्गीकारेऽस्वरसमुद्भाव्य, तेषां कालवृत्तित्वपक्षे प्रतियोग्यनधिकरणहेत्वधि-

**सौगन्ध्यविमर्शः**

एतेन—न्यायमते नित्यानामपि महाकालवृत्तित्वाभ्युपगमादिति—परास्तम् ; मतान्तराभिप्रायेण मतान्तरनिरसनासम्भवात् । सौगन्ध्यकारा अपि मतान्तरमेव नित्यानां कालावृत्तित्वपक्षः , न तु तत्पक्षस्यैवासम्भव इति वर्णयन्ति । महाकालस्यापि नित्यत्वेन महाकालसम्बन्धाभ्युपगम आत्माश्रयदोषस्तु नित्यानां कालवृत्तित्वपक्षे त्वपरिहरणीय एव । एतन्मते—कालोऽस्तीत्येव प्रत्ययः, न तु कालः सर्वदाऽस्तीति । तथाचैतन्मतरीत्या देश-कालयोरपि देश-कालासम्बन्धित्वेनासत्त्वापत्तिः, इति कालासम्बन्धिनोऽपि ब्रह्मणो न तुच्छत्वम् ; कालासम्बन्धस्य तुच्छत्वाप्रयोजकत्वात् , कालस्य काला-

**सिद्धिव्याख्या**

तत्रातिव्याप्तेरभावात् । नच—संशयस्य कोटिद्वयावलम्बिन एककोट्यंशे लक्ष्यत्वेऽप्यपरकोट्यंशे यथार्थतयाऽलक्ष्यत्वात् तत्रातिव्याप्तिरिति—वाच्यम् ; तर्हि ज्ञानत्वसाक्षाद्व्याप्यधर्मेण ज्ञाननिवर्त्यत्वं लक्षणेन विवक्षितम् । साक्षाद्व्याप्यत्वं च ज्ञानत्वव्याप्याव्याप्यत्वे सति ज्ञानत्वव्याप्यत्वम् , मननत्वं तु न तथेति बोध्यम् । *उत्तरज्ञानस्येति* ॥

**विट्ठलेशीयटिप्पणी**

ज्ञानाभावस्य तत्त्वज्ञानपूर्वक्षणसाधारणत्वात्—*कालिकसंबन्धावच्छिन्नप्रतियोगिताकेत्युक्तम्*॥ यद्यपि शुक्तितत्त्वज्ञानक्षणे रज्ज्वज्ञानस्य, रज्जुतत्त्वज्ञानक्षणे शुक्त्यज्ञानस्य च कालिकसंबन्धेन सत्त्वात् कथं तत्त्वज्ञानसामान्यं प्रति तत्तदज्ञानाभावस्याज्ञानसामान्याभावस्य वा व्यापकत्वसंभवः ? तथापि तत्तद्विषयकतत्त्वज्ञानं तत्तद्व्यक्तित्वेनोपादाय तत्तद्विषयकाज्ञानव्यक्त्यभावेषु व्यापकत्वं विवक्षणीयम् ; *ज्ञानत्वव्याप्यधर्मेण* इत्यनेन तत्तद्व्यक्तित्वस्याप्युपादानात् । *यद्वा*—कालिकसंबन्धेन तत्त्वज्ञानसामान्यं प्रति स्वसमानविषयकज्ञानवत्त्व-कालिकोभयसंबन्धावच्छिन्नप्रतियोगिताकस्याज्ञानसामान्याभावस्य विशेषणतासंबन्धावच्छिन्नव्यापकत्वं विवक्षणीयम् , शुक्त्यादितत्त्वज्ञानोत्पत्तिक्षणे रज्ज्वाद्यज्ञानस्य प्रथमसंबन्धाभावात् , शुक्त्याद्यज्ञानस्य द्वितीयसंबन्धाभावाद् उक्तोभयसंबन्धावच्छिन्नप्रतियोगिताकस्याज्ञानसामान्याभावस्य व्यापकत्वं समर्थनीयम् । नच—प्रथमसम्बन्धनिवेशेनैव निर्वाहः, शुक्तितत्त्वज्ञानोत्पत्तिक्षणे तत्त्वज्ञानस्य प्रथमसम्बन्धसत्त्वेऽपि तदज्ञानस्यासत्त्वात् तत्सम्बन्धावच्छिन्नतदभावस्य सुलभत्वादिति—वाच्यम् ; एतत्स्फुटीकारायैव द्वितीयसम्बन्धोपादानात् । अत एव तादात्म्येन प्रमां प्रति स्वसमानविषयकत्व-कालिकोभयसम्बन्धावच्छिन्नप्रतियोगिताकाज्ञानाभावस्य व्यापकत्वं पूर्वोक्तं सङ्गच्छते । *उक्तज्ञानं प्रति*=तत्त्वसाक्षात्कारं प्रति । *दृश्यत्वावच्छिन्नेति* ॥ तत्समानविषयकाज्ञानप्रयुक्त-तत्तद्दृश्यत्वावच्छिन्नेत्यर्थः । तेन शुक्त्यादिसाक्षात्कारोत्पत्तिक्षणे रज्ज्वाद्यज्ञानप्रयुक्तदृश्यसत्त्वेऽपि न क्षतिः । *यथाश्रुते तु* स्वप्रयोजकाज्ञानसमानविषयकज्ञानवत्त्वं प्रतियोगितावच्छेदकसम्बन्धकोटौ विभावनीयम् । *अथवा* अत्र ज्ञानपदे ब्रह्मात्मसाक्षात्कारपरे तत्क्षणे कस्याप्यज्ञानस्य तदुत्तरक्षणे च कस्यापि दृश्यस्यानुपगमेन नोक्तव्यापकत्वयोरनुपपत्तिः ; 'ज्ञानत्वव्याप्यधर्मेणे'त्यनेन पटुतरसंस्कारविशिष्टब्रह्मात्मसाक्षात्कारत्वोपादानात् । लक्षणे तु ज्ञानपदं यथाश्रुतम् । तेन 'ज्ञानत्वव्याप्यधर्मेणे'त्यस्य पूर्वज्ञाननिष्ठायामुदीच्यात्मविशेषगुणत्वेन ब्रह्मसाक्षात्कारनिवर्त्यतायामतिव्याप्तिवारकतया सिद्धसाधनवारकतया च सार्थक्यसम्भवेऽपि स्मृतेः संस्कारनाशकत्वानुपगमेन संस्कारातिव्याप्तिनिरासस्य वक्ष्यमाणस्य नासङ्गतिः, न वा शुक्तिरूप्यादिदृष्टान्तासिद्धिः ; पूर्वज्ञानं प्रत्युत्तरज्ञानस्य यदुत्तरज्ञानत्वेन निवर्तकता, तदा तदतिव्याप्तिस्तदवस्थैवेत्याशङ्क्योत्तरज्ञानत्वे पूर्वज्ञाननिवर्तकता-

अद्वैतसिद्धिः

धर्मेण, किंत्विच्छादिसाधारणेनोदीच्यात्मविशेषगुणत्वेन, उदीच्यत्वेन वा, इति न सिद्धसाधनादि।

तरङ्गिणी

किंत्विच्छादिसाधारणेनोत्तरात्मविशेषगुणत्वेन, इति न सिद्धसाधनादिति। नापीच्छाद्यनिवर्त्यं स्मृतित्वेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*उदीच्यात्मविशेषगुणत्वेन = विभुविशेषगुणत्वेन। सामानाधिकरण्य-स्वाव्यवहितपूर्वत्वोभयसम्बन्धेन नाशकत्वम्, इति नातिप्रसङ्गः; *यथाश्रुते* समानाधिकरणयोग्यविभुविशेषगुणत्वेन नाश्यत्वात् शब्दं प्रति नाशकत्वासम्भवात्। *अथवा सामानाधिकरण्यस्य निवेशे प्रयोजनाभावाद् आत्मगुणत्वेनैव नाशकत्वे लाघवादाह—

सिद्धिव्याख्या

*ज्ञानत्वव्याप्यधर्मेण=ज्ञानत्वसाक्षाद्व्याप्यधर्मेणेत्यर्थः। *उदीच्यात्मविशेषगुणत्वेनेति*॥ अत्र गुणत्वेन निवर्तकत्वे सङ्ख्यादेरपि निवर्तकत्वप्रसङ्गः, अतो *विशेषगुणत्वेनेति*॥ तावत्युक्ते शब्दादेरपि निवर्तकत्वापत्तिः, अत *आत्मेति*॥ तावत्युक्ते स्वस्य निवर्तकत्वाभावादसंभवः, अतः—*उदीच्येति*॥ नन्वेवम्—धर्माधर्मादावतिप्रसङ्ग

विट्ठलेशीयटिप्पणी

वच्छेदकत्वं निराकरोति मूले—*उत्तरज्ञानस्येति* ( ३२९पृ० )॥ धर्मेणेति*॥ उत्तरेच्छायाः पूर्वज्ञानं प्रति निवर्तकत्वसान्तरप्रसङ्गादिति शेषः। *किन्त्विति*॥ उक्तप्रसङ्गपरिहारार्थमिति शेषः॥

उदीच्यत्वम् = अव्यवहितोत्तरकालोत्पन्नत्वम्। तस्य संसर्गत्वे सम्भवति प्रकारत्वे गौरवात् तत्परित्यज्य, आत्मपदस्य जीवमात्रपरत्वे पूर्वशब्दनाशं प्रत्युत्तरशब्दस्य नाशकतान्तरप्रसङ्गाद् योगेन विभुपरतया तत्पदं व्याचष्टे टीकायाम्—*विभुविशेषगुणत्वेनेति*॥ *ननु*—आत्मत्वत्यागेन विभुत्वनिवेशे पूर्वशब्दं प्रत्युत्तरज्ञानादेर्नाशकत्वे बाधकाभावेऽपि मूर्ताकाशादिनिष्ठद्वित्वादिसंख्या-पृथक्त्व-संयोग-विभागादेरुत्तरोत्पन्नज्ञानद्वितीयक्षणे नाशप्रसङ्गः, एवमुदीच्यत्वत्यागे पूर्वज्ञानादेरुत्तरज्ञाननाशकत्वापत्त्योत्तरज्ञानादेरपि क्षणिकत्वापत्तिः, अत आह—*सामानाधिकरण्य-स्वाव्यवहितपूर्वत्वोभयसम्बन्धेनेति*॥ ज्ञानादिकं प्रत्युत्तरोत्पन्नसंस्काराद्ययोग्यस्यापि नाशकत्वाद् योग्यत्वं तदवच्छेदके न निवेशितम्। *ननु*—पूर्वशब्दत्वेनोत्तरशब्दनाश्यत्व आत्मपदस्य विभुपरत्वं व्यर्थम्, अत आह—*यथाश्रुत इति*॥ आत्मपद इति शेषः। अयोग्यसंस्कारादेरुत्तरज्ञानाद्यनाश्यत्वात् नाश्यतावच्छेदके योग्यत्वप्रवेशः; तद्व्यधिकरणस्य तदनाशकत्वात्। *समानाधिकरणेति* उक्तसम्बन्धद्वयघटकसामानाधिकरण्यलाभाय। *नाश्यत्वात्=पूर्वज्ञान-शब्दयोरुत्तरज्ञान-शब्दाभ्यां नाश्यनाशकभावैक्यानुरोधेन नाश्यत्वोपगमात्। *शब्दं प्रतीति*॥ उत्तरोत्पन्नशब्दज्ञानादेरिति शेषः। अत्र योग्यविभुविशेषगुणत्वेन नाश्यत्वं मूर्ताकाशादिसामान्यगुणद्वित्वादीनामुत्तरोत्पन्नशब्दनाश्यत्ववारणाय सामानाधिकरण्यनिवेशोऽप्यावश्यकम्, तावतैव द्वित्वादीनां व्यधिकरणज्ञानादिनाश्यत्ववारणे सामानाधिकरण्यनिवेशनं व्यर्थम्; शब्द-ज्ञानादीनां व्यधिकरणोत्तरज्ञानादिनाश्यत्वोपगमे क्षतिविरहात्, इत्याह—*अथवेति*॥ *आत्मगुणत्वेनैवेति*॥ एवकारेण विशेषत्वव्यवच्छेदः। उत्तरोत्पन्नसंख्यादेरपि नाशकत्वे बाधकाभावाद् उदीच्यत्वं पूर्वत्वरूपसम्बन्धपर्यवसायित्वाद् नोक्तम्। *ननु*—अपेक्षाबुद्धिद्वितीयक्षणे समानाधिकरणविशेषगुणोत्पादानुपगमेऽपि व्यधिकरणवायुसंयोगादेरुत्पादनैयत्यात् तेन तृतीयक्षणे तन्नाशो दुर्वार इति—चेत्, *न*; तत्र द्वितीयक्षणादेः प्रतिबन्धकत्वोपगमात्, विशिष्टबुद्धौ विशेषणज्ञानहेतुत्वानुपगमे निर्विकल्पकानुपगमेन तद्द्वितीयक्षणे विशिष्टप्रकारकप्रत्यक्षसंभवेन तस्याः क्षणत्रयावस्थाने प्रयोजनाभावाच्च। अत्र व्यधिकरणस्यापि नाशकत्व आत्मगुणत्वमपि व्यर्थम्; कस्याप्युदीच्यस्य योग्यविभुविशेषगुणनाशकत्वे बाधकाभावात्, इत्यभिप्रेत्याह—*लाघवादाहोदीच्यत्वेनेतीति*॥ उदीच्यत्वं च न नाशकतायां प्रकारविधया स्वरूपसंबन्धरूपावच्छेदकत्ववत्; स्वत्वस्यानिवेशे स्वसाधारण्यात्, निवेशेऽननुगमात्, किन्तु स्वाव्यवहितपूर्वत्वस्य संबन्ध-

### न्यायामृतसौगन्ध्यम्

करणवृत्त्यभावप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभावः, तद्धर्मावच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति मतान्तरमुक्तम् ; अन्यथा तेषां पूर्वकालवृत्तित्वघटितकारणत्वं न स्यात् ॥

'आत्माश्रये'त्यशुद्धम् ; 'प्रमेयत्वे प्रमेयत्वम्' 'घटाभावे घटो नास्ती'त्यादिवत् कालस्सदाऽस्तीति प्रीतत्या कालस्यापि कालसम्बन्धित्वसम्भवात् ॥ इयं शुक्तिरित्याद्यशुद्धम्(१)। प्रातिभासिकाधिकरणक्षणे हि दृश्याधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावस्तस्य नित्यत्वेन ध्वंसस्य क्षणासम्बन्धित्वेन वोपपाद्य इत्यस्मदुक्तौ त्वत्प्रलापानवकाशात्॥ किञ्च प्रातिभासिकस्य नाशाप्रतियोगित्वे ज्ञाननिवर्त्यत्वरूपमिथ्यात्वं न स्यात्। यच्च—अथवा ज्ञानप्रयुक्तो ज्ञानाधीनो योऽवस्थितिसामान्यस्य स्वात्मकसामान्यस्य योऽभावः, तत्प्रतियोगित्वं ज्ञाननिवर्त्यत्वम्। स्वात्मकं च स्वसमानसत्ताकम्। तच्च स्व-स्वीयसंस्कार-स्वीय-परिणामादिरूपमेव ॥ ज्ञानेन हि अज्ञान-तत्परिणामादिदृश्यसामान्यस्यात्यन्ताभावः, स्वोत्पत्तिद्वितीय-क्षणावच्छिन्ने साध्यते। साध्यता चात्र क्षेमसाधारणी, स चाभावः, स्वान्यसर्वदृश्यविरोधी क्षणिकः—इति, तन्न ; अत्यन्ताभावस्य हि स्वप्रतियोग्यादिना दैशिक एव विरोधः, न तु कालिकः। तस्य साध्यत्वं च त्वत्कपोलकल्पितमेव ॥ किञ्च क्षणिकत्वं स्वोत्पत्तिद्वितीयादिक्षणवृत्तिध्वंसप्रतियोगित्वम्, तथाच ध्वंसानामेवाधारापत्त्या त्वदभिमतदृश्यमात्रोच्छेदोऽसिद्धः ॥

ननु—ज्ञानत्वव्याप्यधर्मेणेत्यपि साधु ; स्मृतेस्संस्कारनिवर्तकत्वे मानाभावात्, स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम्।

### सौगन्ध्यविमर्शः

सम्बन्धात्। वस्तुतस्तु—काल: सर्वदाऽस्तीति सर्वदाशब्दगृहीतो न महाकालः ; तस्यैकत्वेन सर्वशब्देनासङ्गतेः। तथा च महाकालस्य महाकालवृत्तित्वे नायं प्रत्ययः प्रमाणम्। खण्डकालसम्बन्धविवक्षणे तु वियदादेरिव तत्तत्क्षणविशिष्टत्वेन तत्तत्क्षणध्वंसेन च महाकालस्यापि क्षणिकत्वापत्तिरिति स एव दोषस्तदवस्थः ॥

(१) दृश्याधिकरणक्षणे दृश्याधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावः क्षण-दृश्योभयासम्बन्धेनैव भवति, न तु क्षणनित्यत्वेन, तस्य ध्वंसासम्बन्धेन वा ; क्षणनित्यत्वे प्रमाणाभावात्। शुक्तिरजतादिस्थले हि शुक्तिसाक्षात्कारक्षणस्य शुक्तिक्षणपूर्वत्वानधिकरणत्वं शुक्तिसाक्षात्कारेण रजतस्य बाधात् शुक्त्यज्ञानकार्यान्तरस्य तदधिकरणक्षणस्योभयस्याभावे-नैवोक्तार्थनिर्वाहः, न तु तदधिकरणक्षणनित्यत्वेन तस्य ध्वंसासम्बन्धेन वा ; रजतक्षणस्य नित्यस्यासम्भवात्। एतेन—प्रातिभासिकाधिकरणक्षणे हि दृश्याधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावस्तस्य नित्यत्वेन ध्वंसस्य क्षणासम्बन्धेन वोपपाद्यः, इत्यसदुक्तौ त्वत्प्रलपनावकाश इति—परास्तम् ; शुक्तिरजतादिषु पूर्वोक्तरीत्या बाधेन तेषां प्रतिभास-मात्रकालसम्बन्धित्वेन तत्सम्बन्धिनः कालान्तरस्य नित्यस्य ध्वंसासम्बन्धिनो वाऽभावादुक्तनियमस्य तत्र व्यभिचारा-परिहारात्। नच—घटाधिकरणक्षणे घटाधिकरणपूर्वत्वाभावेन दण्डपातोत्तरघटध्वंसोऽपि घटोच्छेदः स्यादिति—वाच्यम् ; नाशस्थले हि कारणात्मना घटादिसत्त्वाद् न घटाधिकरणक्षणे घटाधिकरणपूर्वत्वाभावः ; तत्र द्वितीयक्षणस्य घटध्वंसेन सम्बन्धेन घटानधिकरणत्वाभावात्। शुक्तिरूप्यादिस्थले तु शुक्तिसाक्षात्कारेणाज्ञानेन साकमेव रजतस्य नाशाद् न साक्षात्कारानन्तरक्षणस्य रजतनाशेनासम्बन्धः ; कारणात्मनाऽपि रजतस्याभावात्। अतः कारणात्मनाऽ-भावस्यैव दृश्योच्छेदपदार्थत्वात् शुक्तिरजतादिषु क्षणनित्यत्वेन क्षणस्य ध्वंसासम्बन्धेन वा दृश्याधिकरणक्षणे दृश्या-धिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावाभावाद् व्यभिचारोक्तिस्तत्रैवोपपन्नैव। इदमेवाभिप्रेत्योक्तम्—"तेषां शुक्तिरूप्यादीनां बाधातिरेकेण नाशाप्रसिद्धेरि"ति। अत्र बाधातिरेकेण नाशाप्रसिद्धेरिति बाधरूप एवाभावः शुक्तिरूप्यादीनाम्, न तु घटादीनामिव स्वरूपादर्शनमात्रमित्येव विवक्षितम्, येनोक्तव्यभिचारोपपादनं पूर्वोक्तरीत्या संभवेत्, न तु शुक्तिरूप्यादीनां ध्वंसाभावो निवृत्त्यभावो वा। एतेन—प्रातिभासिकस्य नाशप्रतियोगित्वे ज्ञाननिवर्त्यत्वरूपमिथ्यात्वं न स्यादिति—प्रत्युक्तम् ; अनुक्तोपालम्भनत्वात्। ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम्, न तु ज्ञानजन्य-नाशप्रतियोगित्वमित्येव सिद्धान्तात्। प्रतियोग्यत्यन्ताभावयोर्न दैशिक एव विरोधः, किन्तु कालिकोऽपि, इति तु मतान्तर-मेव। न हि कालिकोऽपि विरोधोऽस्तीति मतान्तरस्याप्यभावः, इति तत्पक्षाभिप्रायेणोक्तं परिष्करणम् ॥

## अद्वैतसिद्धिः

नापीच्छाद्यनिवर्त्ये स्मृतित्वेन ज्ञाननिवर्त्ये संस्कारेऽतिव्याप्तिः ; स्मृतित्वेन स्मृतेः संस्कारनिवर्तकत्वे मानाभावात् । स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम् ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*उदीच्यत्वेनेति* ॥ उदीच्यत्वव्यापिका योग्यविभुविशेषगुणनाशकतेत्यर्थः । तथाच ज्ञानत्वेच्छात्वादि-प्रत्येकरूपेण जातिविशेषेण वा सेति भावः । 'साधनादी'त्यादिनोक्तार्थान्तरम् । *अनुभवसिद्धम् = विलक्षण-

## सिद्धिव्याख्या

इति—वाच्यम् ; योग्योत्तरात्मविशेषगुणत्वेनेति विवक्षितत्वात् । *यत्तु*—विवक्षितलक्षणस्यापि संस्कारेऽति-व्याप्त्यापादनम्, तन्निराकरोति—*नापीति* ॥ *मानाभावादिति* ॥ तथाच संस्कार उक्तलक्षणस्यैवाभावाद् नातिव्याप्तिरिति भावः । *ननु*—स्मृतिः, संस्कारनिवर्तिका, तत्कार्यत्वात्, धर्माधर्मनिवर्तकसुख-दुःखादिवत्, इत्याशङ्क्याह—*स्मृतौ हीति* । तथाच सुखे दुःखे च जाते धर्माधर्मौ दृढौ भवतः, इत्यनुभवाभावाद् युक्तं तयो-स्ताभ्यां निवृत्तिरिति, प्रकृते तु संस्कारो दृढो भवतीत्यनुभवाद् न तस्य स्मृत्या निवृत्तिः, अनुमाने च दृढत्वमुपाधि-

## विट्ठलेशीयटिप्पणी

विधयाऽवच्छेदकत्वस्फोरकम्, इत्याशयेनाह—*उदीच्यत्वव्यापिकेति*॥ नाश्यतावच्छेदकं तु सदेवेत्याह—*योग्यविभु-विशेषगुणेति* ॥ धर्मविधया नाशकतावच्छेदकमाह—*तथाचेति* ॥ ज्ञानत्वेच्छात्वादिप्रत्येकरूपेण तथात्वे कारणताबाहुल्यं व्यभिचारश्चेत्यत आह—*जातिविशेषेण वेति* । उक्तकारणतावच्छेदकतया सिद्धज्ञानेच्छादिसाधा-रणेत्यादिः । प्रमेयत्वादिना नाशकत्वे वाच्यत्वादिना विनिगमनाविरहादिति भावः । *मूल इति* ॥ उत्तरज्ञान-निष्ठायाः पूर्वज्ञाननिवर्तकताया ज्ञानत्वव्याप्यधर्मावच्छिन्नत्वाभावात् । अयं सिद्धसाधनाभावे हेतुः । *नोक्तार्थान्तर-मिति* ॥ 'ज्ञानत्वव्याप्यधर्मेणे'त्युक्तावपि वियदादौ ब्रह्मज्ञाननाश्यत्वरूपमिथ्यात्वसिद्धावप्युत्तरज्ञाननाश्यपूर्वज्ञानवत् सत्यत्वाविरोधाद् अर्थान्तरं नेत्यर्थः ; ब्रह्मसाक्षात्कारप्रयोज्यस्व-स्वसंस्कारान्यतराभावप्रतियोगित्वरूपमिथ्यात्व-साध्यत्वस्य सत्यत्वविरोधित्वादिति भावः । *मूले*—स्मृतित्वस्य निवर्तकतावच्छेदकत्वाय 'इच्छाद्यनिवर्त्ये'त्युक्तम् । *अतिव्याप्तिः=सिद्धसाधनम् । *मानाभावादिति* । नच—अनुभवजन्यः स्मृतिजनकः संस्कारः, स्मृतिनाश्यः, व्यापारत्वात् ; अपूर्ववत्, इत्यनुमानं मानमस्तीति—वाच्यम् ; इन्द्रियार्थसन्निकर्षादौ प्रत्यक्षजनके व्यभिचारात् । अत एव धारावाहिकप्रत्यक्षोपपत्तिः । अत्र कालान्तरभाविकार्यव्यापारत्वस्य हेतुत्वे उक्तव्यभिचार-वारणसंभवाद् यावत्स्मृतिसंस्कारकल्पने गौरवस्योभयमते सत्त्वाद् अन्यद् बाधकमाह—*स्मृतौ हीति* । संस्कार-स्यातीन्द्रियत्वेन प्रत्यक्षानुभवसिद्धत्वं न संभवतीत्यतो व्याचष्टे—*विलक्षणस्मृतिजनकत्वानुमेयमिति* ॥ वैलक्षण्यं चिन्ताद्यनपेक्षणेन झटिति जायमानत्वम् । *दृढत्वं च* यद्यपि संस्कारस्य नाविनाशकत्वम् ; अन्यभावत्वेन चरमस्मृति-रोगविशेष-दीर्घकालादिनाशकत्वाङ्गीकारात्, तथापि प्रथमादिस्मृत्यविनाश्यत्वमभिप्रेत्य दृढत्वं मूले निर्वक्ति दृढत्वं चेति । *समानेति* । तथाच संस्कारस्य दृढत्वं नाम स्वसमानविषयकत्वैककालावच्छिन्नत्वसामाना-धिकरण्य-स्वभिन्नत्वैतत्त्रितयसंबन्धेन संस्कारविशिष्टत्वम् । संस्कारद्वय-त्रयादिवैशिष्ट्यं च नार्थः । उपेक्षान्यज्ञानत्वेनैवा-नुभवस्य संस्कारद्वारा समानविषयकस्मृतिकारणता, नत्वनुभवत्वेन, इति स्मृतेः संस्कारजनकत्वोपपत्तिः । नच—उक्तद्वितीयसंबन्धेन स्मृतिविशिष्टत्वमेव संस्कारस्य दृढत्वमस्तु, किं स्मृतिजन्यसंस्कारकल्पनगौरवेणेति—वाच्यम् ; *"जायते च पुनः पुनः स्मरणाद् दृढतरः संस्कारः"* इत्यभियुक्तोक्तिविरोधात् । अभियुक्ताश्च महर्ष्यनुसारिणः । महर्षयश्च स्वतन्त्राः । स्मृतेः संस्कारनाशकत्वस्य तावताऽप्यप्रसक्तेश्च, इति संस्कारनाशकत्वे बाधकोऽत्रावकयथाश्रुत-मूलार्थः । टीकाकृतस्तु 'स्मृतौ ही'ति ग्रन्थस्य प्रथमादिस्मृतौ सत्यां तज्जनकीभूतः संस्कारः स्मृतिप्रयोज्यो विलक्षण-स्मृतिप्रयोजको यो दृढत्वनामाऽऽश्रयाविनाशानिर्वाह्यो धर्मः, तद्वान् भवतीत्यर्थमभिप्रेत्य, तत्र स धर्मो न जातिरूपः ;

**अद्वैतसिद्धिः**

तेषां दृढत्वं च समानविषयकसंस्कारानेकत्वात्, इत्यदोषः ।

**तरङ्गिणी**

स्मृतिनिवर्त्ये संस्कारेऽतिव्याप्तिः ; स्मृतेः संस्कारनिवर्तकत्वे मानाभावात् । स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम् । दृढत्वं हि समानविषयकसंस्कारानेकत्वमित्यदोषः ॥

**न्यायामृतकण्टकोद्धारः**

*ज्ञानत्वव्याप्यधर्मेणेति* ॥ नच—स्मृतित्वस्य संस्कारनिवर्तकतावच्छेदकत्वमसिद्धम् ; स्मृत्या संस्कारदार्ढ्यस्यैव जायमानत्वादिति—*वाच्यम्* ; स्मृतेः संस्कारनाशकत्वाभावे नाशकान्तराभावेन संस्कारानाशापत्तेः, संस्कारदार्ढ्यस्य समानविषयकसंस्कारान्तरेणाप्युपपत्तेः, विपरीतोत्तरज्ञाननिवर्त्ये पूर्वविपरीतज्ञानेऽतिव्याप्तेश्च ॥

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

स्मृतिरूपकार्यानुमेयम् । *ननु*—विलक्षणस्मृत्या विलक्षण एव संस्कारोऽनुमीयते, तथाच स्मृत्या पूर्वसंस्कारो नश्यत्येव,तत्राह—*दृढत्वं चेति* ॥ *समानेत्यादि* ॥ तथाच समानविषयकत्व-सामानाधिकरण्योभयसम्बन्धेन संस्कारविशिष्टसंस्कारत्वेन तत्समनियतजातिविशेषेण वा विलक्षणस्मृतिहेतुत्वे स्वीकृतेऽपि स्मृतेः संस्कारं प्रति नाशकता न कल्प्यते ; गौरवादिति भावः । नच स्मृतिधारापत्तिः ; उद्बोधकविच्छेदात् ।

**न्यायामृतसौगन्ध्यम्**

दृढत्वं च समानविषयकसंस्कारानेकत्वमित्यदोषः ॥ *वस्तुतस्तु*—साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम् । अतो न पूर्वोक्तदोषः । नापि निश्चयत्वेन ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्य-

**सौगन्ध्यविमर्शः**

ब्रह्मव्यतिरिक्तस्य सर्वस्य नश्वरत्वाद् अभावानादित्वे प्रमाणाभावाच्च साध्यत्वं तत्क्षणिकत्वं च स्वकपोलकल्पितमेव । क्षणिकत्वं नाम स्वाधिकरणक्षणपूर्वत्वाभावः, न तु स्वोत्पत्तिद्वितीयादिक्षणवृत्तिध्वंसप्रतियोगित्वमेव, सति

**सिद्धिव्याख्या**

रिति भावः । *ननु*—अनुभवसिद्धदृढसंस्कारः स्मृतिजन्योऽन्य एव, इत्याशङ्क्याह—*दृढत्वञ्चेति* ॥ ततश्च

**विट्ठलेशीयटिप्पणी**

स्मृतिप्रयोज्यत्वेनानित्यत्वात्, अतो वैजात्यविशिष्टं संस्कारान्तरमेव स्मृतिजन्यं विलक्षणस्मृतिजनकं स्वीकार्यम्, पूर्वसंस्कारस्तु स्मृत्या नश्यत्येवेत्याशङ्क्य दृढतरत्वनिर्वचनमवतारयन्ति—*ननु विलक्षणस्मृत्येति* ॥ 'तेषां दृढतरत्वं चे'ति मूलपाठः । दृढत्वस्य जातिरूपत्वे दृढतरत्वादिकमपि जातिरूपं वाच्यम् ; तच्च न संभवति ; जातावुत्कर्षापकर्षानभ्युपगमात्, अतः समानविषयकानेकसंस्कारविशिष्टत्वं संस्कारस्य दृढतरत्वं वाच्यम् । तथाच समानविषयकसंस्कारविशिष्टत्वमेव दृढत्वं युक्तम्, नतु पूर्वसंस्कारनाश-विलक्षणसंस्कारोत्पादौ ; गौरवात् । तथाच विलक्षणस्मृतिजनकतावच्छेदकीभूतदृढत्वादिरूपत्वं संस्काराणां प्रथमादिस्मृतिप्रयोज्यत्वम्, अल्पत्व-भूयस्त्वादिरूपोत्कर्षापकर्षरूपत्वं च युज्यत इत्याशयेन मूलाशयमाह—*तथाचेति* ॥ उभयत्वविशिष्टबुद्धिसामान्ये भेदस्य विषयताव्यवस्थापनात् तद्भेदस्तृतीयः संबन्धः प्रथमसंस्कारमात्रदशायां दृढत्ववारणायावश्यनिवेश्योऽपीह पृथग् नोक्तः । अन्यविषयत्वादेरन्यासंबन्धत्वात् स्वांशो नोक्तः । लाघवादाह—*तत्समनियतजातिविशेषेण वेति* ॥ तथाचोक्तदृढत्वादिकमुक्तजातिविशेषस्य परिचायकम् ; तस्य तदुत्कर्षापकर्षादिकमेव जातिविशेष उपचर्यत इति भावः । यद्यप्युक्तरूपाभ्यां विलक्षणस्मृतिहेतुत्वे स्मृतेः संस्कारनाशकत्वं न प्रसज्यते ; प्रथमस्याप्रसिद्ध्यापातात्, द्वितीयस्य परिचायकाभावेन दुर्ज्ञेयत्वापातात्, तथापि जन्यतावच्छेदकतया सिद्धजात्यन्तरवदस्यापि जातिविशेषस्य ज्ञानसंभवात् प्रसक्तां स्मृतेः संस्कारनाशकत्वशङ्कां निराकरोति—*स्वीकृतेऽपि स्मृतेरिति* ॥ *नचेति* ॥ स्मृत्या पूर्वसंस्काराविनाशादिति भावः । *विच्छेदादिति* ॥ तस्य फलबलकल्प्यत्वादिति भावः ॥

**अद्वैतसिद्धिः**

*वस्तुतस्तु*—साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम्, अतो न पूर्वोक्तदोषः। नापि निश्चयत्वेन ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्ये संशयेऽतिव्याप्तिः, इति सर्वमवदातम् ॥

**तरङ्गिणी**

*वस्तुतस्तु*—साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम्, अतो न पूर्वोक्तदोषः, नापि निश्चयत्वेन ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्ये संशयेऽतिव्याप्तिः—इति ॥

**न्यायामृतकण्टकोद्धारः**

*एतेन*—वस्तुतस्तु साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वमिति—*निरस्तम्*; साक्षात्कारत्वस्य भ्रमादिसाधारणत्वेन निवर्तकतानवच्छेदकत्वात् ॥ 'साक्षात्कारेण शुक्तिरूप्यं नष्टमि'त्यननुभवेना'ज्ञानभ्रमौ नष्टावि'त्यनुभवेनाव्याप्त्यापत्तेश्च। *भ्रमोत्तरेति* ॥ नच—भ्रमपूर्वप्रमानिवर्त्येऽव्याप्तिरिति—वाच्यम्;

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*संशये = विपरीतज्ञाने ॥ *ननु*—विपरीतज्ञानस्यानादिसंसर्गाभाव एव निश्चयरूपप्रतिबन्धकप्रयुक्तः, न तु नाशः, अतः कथं विपरीतज्ञानेऽतिव्याप्तिः ? ज्ञानजन्यनाशस्यैव हि प्रकृतलक्षणे निवेशः, अन्यथो-

**न्यायामृतसौगन्ध्यम्**

संशयेऽतिव्याप्तिरिति—चेत्, *न*; विलक्षणस्मृत्या(१) विलक्षण एव संस्कारोऽनुमीयते। वैलक्षण्य-जनितया च स्मृत्या पूर्वसंस्कारो नश्यत्येव ॥ *यत्तु* समानविषयकत्व-सामानाधिकरण्योभयसम्बन्धेन संस्कारविशिष्टसंस्कारत्वेन तत्समनियतजातिविशेषेण वा विलक्षणस्मृतिहेतुत्वेऽपि स्मृतेः संस्कारं प्रति नाशकता न कल्प्यते गौरवादिति, *तन्न*; स्मृतीनां धारापत्तेः ॥ न चोद्बोधकासत्त्वादुच्छेदः। एवं त्वन्वय-व्यतिरेकाभ्यामुद्बोधकैरेव स्मृतिसंभवे संस्कारानुभवयोस्स्मृतिकारणत्वविलोपापत्तेः, संस्कारस्य सविषयकत्वोपपादकत्वेन तार्किकैः स्मृतिनाश्यत्वाभ्युपगमात्। तथाहि—अथ भावनाया अदृष्टवत् निर्विषयकत्वमेव युक्तम्, तत्तद्विशेष्यक-तत्तत्प्रकारकस्मृतिं प्रति तत्तद्विशेष्यक-तत्तत्प्रकारक-निश्चयस्य स्वजन्यभावनासम्बन्धेन हेतुत्वाद् नातिप्रसङ्गः ॥

*यत्तु* एवं सति घटांश उपेक्षात्मकाद् 'भूतलं घटवत् पटवच्चे'ति निश्चयाद् घटांशेऽपि स्मृति-

**सौगन्ध्यविमर्शः**

चैवं ध्वंससाधारणसर्वद्वयोच्छेदोऽपि न विरुद्धः। न हि स्मृतेः संस्कारनाशकत्वं संभवति; स्मृत्यन्तरदर्शनविरोधात्। नच विलक्षणसंस्कारान्तरमनुमीयत इति—वाच्यम्; अनुभवान्तरं विना संस्कारान्तरकल्पनासंभवात्। सकृदनुभूतस्यैव प्रेमास्पदस्य वस्तुनः क्षणमात्रेण नष्टस्य पुनः पुनः स्मृतिदर्शनं हि नान्यथोपपद्यते। यदि स्मृत्या पूर्वसंस्कारोऽपि नाश्यते, संस्कारान्तरमपि जन्यत इति मन्यते, तर्हि कल्पनागौरवात् समानविषयकसंस्कारान्तरजननमेव युक्तम्। अतो न विलक्षणसंस्कारानुमानेऽपि संस्कारनाशकत्वं युक्तमिति न दोषः। स्मृतिधारा उद्बुद्धसंस्काराधीनैव वाच्या; न तु संस्कारमात्राधीना, तत्र चोद्बोधक-

**विट्ठलेशीयटिप्पणी**

*श्रीगुरुपरमात्मने नमः*। *ननु*—लाघवाद् विजातीयस्मृतिं प्रति विजातीयसंस्कारत्वरूपहेतुत्वेनैव हेतुता; तथाच पूर्वसंस्कारसद्भावे प्रमाण-प्रयोजनयोरभावाद् विजातीयस्मृतित्वेनैव पूर्वसंस्कारनाशकता स्वीकार्या; चरमस्मृते-रन्ततः संस्कारनाशकता दुर्वारा; अन्यथा तस्य नित्यत्वापत्तिरित्याशयेनाह *मूले*—*वस्तुतस्त्विति* ॥ *पूर्वोक्त-दोषः=उत्तरज्ञाननिवर्त्यपूर्वज्ञान-स्मृतिनिवर्त्यसंस्कारातिव्याप्ति-सिद्धसाधनरूपो दोषः। मुद्गरनाश्यघटाद्यव्याप्तिस्तु पूर्ववदेव वारणीयेति भावः। कल्पान्तरानुसरणबीजं पूर्वकल्पेऽतिव्याप्त्यनन्तरं स्वयमाह—*नापीति* ॥ संशयवद् विपरीतनिश्चयस्यापि निश्चयप्रतिबध्यत्वाद् मूले न्यूनता, इति संशयपदं व्याचष्टे—*संशय इति*॥ *विपरीतज्ञाने=प्रति-बन्धकनिश्चयप्रकाराभावप्रकारकलौकिकसन्निकर्षाजन्ये ज्ञाने। *अनादिसंसर्गाभावः=प्रागभावः। *नन्विति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्तरज्ञाननाश्यत्वमादाय सिद्धसाधनस्योक्त्यसम्भवादिति—चेत्, *सत्यम्* ; यदि ज्ञानप्रयुक्तात्यन्ताभाव-प्रतियोगित्वं ज्ञाननिवर्त्यत्वं स्वीकृत्य तन्नाशकस्यापि तदत्यन्ताभावप्रयोजकत्वं स्वीक्रियते, 'उत्तरज्ञानात् पूर्व-ज्ञानात्यन्ताभावः' इति धीश्च स्वीक्रियते, तेनोत्तरज्ञाननाश्ये पूर्वज्ञानेऽतिव्याप्तिकथनमपि नानुपपन्नम्, तदाऽपि साक्षात्कारत्वेन प्रयोजकतानिवेशेन विपरीतज्ञानातिव्याप्तिर्वारयितुं शक्यत इति भावः ।

न्यायामृतसौगन्ध्यम्

प्रसङ्गः ; स्वजन्यभावनायाश्च पटांशे स्मृत्यनुरोधेन स्वीकारात् । नचोपेक्षान्यत्वस्य स्मृतिहेतुतावच्छेदके निवेशान्नायं दोषः ; सर्वांशोपेक्षाजन्यानन्तभावनाभयेनोपेक्षान्यत्वेन भावनां प्रत्येव हेतुत्वादिति, *तत्तुच्छम्* ; आंशिकोपेक्षाभेदानां स्मृतिहेतुतावच्छेदके प्रवेशेनैव सामञ्जस्यादिति ॥ *अत्र नव्याः*—समानाकारकफलस्य भावनानाशकत्वाद् भावनायास्स्वविषयकत्वसिद्धिः ॥ नच—स्मृतिक्षणोत्पन्न-संस्कारस्य क्षणिकत्ववारणाय फलं स्वस्य वाच्यम्, तथाच तत्तद्व्यक्तित्वेनैव नाशकत्वं युक्तम्, इति तद्भावनाजन्यचरमफलस्यैव तद्भावनानाशकत्वमस्त्विति—वाच्यम् ; जनकतया तत्तद्विशेष्यक-तत्तत्प्रकारक-स्मृतेः प्रतियोगितया तादृशभावनानाशहेतुत्वस्यानुगतत्वात् ॥ नच—तत्पुरुषीयभावनासामान्यनाशं प्रति भावनासामान्यनाशं प्रत्येव वा तत्पुरुषीयचरमस्मृतिव्यक्तेस्तत्त्वेन चरमस्मृतिमात्रस्य वैजात्येन हेतुत्वमिति—वाच्यम् ; एवं सत्यजनितोपान्त्यात्मकस्मृतिकानां भावनानां सत्त्वोपगमे ताभ्यः स्मृत्युत्पत्तिप्रसङ्गात् ॥ न चोद्बोधकाभावाद् न तथा ; सदृशसम्बन्ध्याद्यात्मकयद्यद्व्यक्तिज्ञानादेव यद्यत्पुरुषस्य सति संस्कारे यद्यदर्थस्मृतिः, तत्तत्पुरुषीयतत्तदर्थस्मृतौ तत्तद्व्यक्तिज्ञानत्वेनैवोद्बोधकत्वेन तस्य तत्र सत्त्वात्, अन्यथोद्बोधकस्यैव विशिष्य स्मृतिहेतुत्वेनानतिप्रसङ्गेऽनुभवस्यापि तद्धेतुत्वं न स्यात्, प्रतिपुरुषं जगति वैक एव नित्यः संस्कारस्स्यात्, नैव वा स्यात् ; अतिप्रसङ्गस्योद्बोधकेनैव वारणादित्याहुः ॥

*ननु* स्मरणोत्तरमपि स्मरणोदयेन पूर्वसंस्कारसत्त्वेऽपि न क्षतिरिति—चेत्, *न* ;

सौगन्ध्यविमर्शः

सामग्रीनाशे न स्मृतिधारायाः समापत्तिः । उद्बोधकसामग्री च भावनादिकं स्मृतिमात्रेण नश्यतीति न दोषः । उद्बोधकाना-मेव स्मृतिजनकत्वापत्तिरिति तु स्मृतिमात्रस्य संस्काराजन्यत्वस्वीकारेण स्मृतित्वमेव घातयतीति वृद्धिमिच्छतो मूलहानिः ॥

( १ ) अस्तु वा संस्कारस्य स्मृतिनाश्यत्वमिति पक्षान्तरम्, तावताऽपि न ज्ञाननिवर्त्यत्वरूपमिथ्यात्वानुपपत्तिः । साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वस्यैव मिथ्यात्वरूपत्वाद् न दोषः । नित्यपरोक्षाणां गुरुत्वादीनामपि ब्रह्मसाक्षात्कारेणैवा-विद्यानिवृत्त्या निवृत्तिर्मन्यते, न तु परोक्षप्रमया, इति न सौगन्ध्योक्तरीत्या तत्राव्याप्तिः, ज्ञानपदेनात्राधिष्ठानतत्त्वज्ञानमेव विवक्ष्यते, न तु साक्षात्कारसामान्यम्, इति न प्रवृत्तिप्रागभावेऽप्यतिव्याप्तिः ; तत्रोपादानज्ञानस्याधिष्ठानज्ञानत्वाभावात् । स्पर्शनादिना शुक्त्यादीनां परोक्षमेव ज्ञानम् ; न हि नीलपृष्ठत्वादिकं स्पर्शनग्राह्यम् । अतोऽधिष्ठानसाक्षात्कारत्वेन निवर्तकत्वविवक्षायां न कोऽपि दोषः, इति तत्त्वसाक्षात्कारत्वमेव निवर्तकतावच्छेदकम् । वस्तुतस्तु—साक्षात्कारत्वस्यैव निवर्तकतावच्छेदकत्वेऽपि न हानिः । न हि स्पर्शनादिरूपे शुक्तिसाक्षात्कारे सत्यपि रजतभ्रमोऽनुवर्तत इति कुत्रापि दृष्टम्, यतस्तत्तदिन्द्रियप्रयोज्यरजतादिभ्रमहेत्वज्ञाने तत्तदिन्द्रियप्रयोज्यशुक्त्यादिधीत्वेन निवर्तकत्वमावश्यकम् ; अन्यथा दग्धेऽयःपिण्डे चक्षुरिन्द्रियप्रयोज्यफलभ्रमहेत्वज्ञानस्य स्पार्शनसाक्षात्कारेणानिवृत्त्यापत्तेः ।

विठ्ठलेशीयटिप्पणी

तस्योत्तरज्ञानप्रयोज्यत्वादिति भावः । पूर्वज्ञानस्योत्तरज्ञाननाश्यत्वमादाय सिद्धसाधनं सङ्क्रमयति—*तन्नाशकस्यापीति* ॥ *तदत्यन्ताभावेति* ॥ तन्नाशं विना तदधिकरणासम्बन्धेत्यादिः । प्रत्यक्षातिप्रसङ्गमिष्टापत्त्या परिहरति—*विपरीतज्ञानेति* ॥ प्रागभावद्वारा निवर्तकप्रयुक्तात्यन्ताभावप्रतियोगीत्यादिः । *शक्यत इति* ॥ ज्ञानस्य-व्याप्यत्वानिवेशेन कार्यं नेत्यपि बोध्यम् । *इति भाव इति* ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानप्रयुक्ताभावप्रतियोगित्वरूपं लक्षणं स्वीकृत्य वा पूर्वापरग्रन्थसङ्गतिः। नच—तथापि प्रवृत्तिप्रागभावेऽतिव्याप्तिः; उपादानप्रत्यक्षस्य साक्षात्कारत्वेन प्रवृत्तिरूपतन्नाशं प्रति प्रयोजकत्वादिति—वाच्यम्; प्रागभावस्यानङ्गीकारात्, नाशत्वेनात्यन्ताभावत्वेन वा प्रयोज्यतानिवेशाद्वा। *ननु*—स्पार्शनादिरूपे शुक्त्यादिसाक्षात्कारे सत्यपि चाक्षुषादिरूपस्य रजतादिभ्रमस्योत्पत्त्या तदिन्द्रियप्रयोज्यरजतादिभ्रमहेतुत्वज्ञाने तदिन्द्रियप्रयोज्यशुक्त्यादिधीत्वेन निवर्तकत्वमावश्यकम्, तथाच साक्षात्कारत्वेन न तदिति—चेत्, तथा सति वह्न्यादेः स्पार्शनाद्युत्तरं तत्र तदन्यत्वचाक्षुषाद्यापत्तेः, तस्येष्टत्वेऽनुभवविरोधात्, क्वचिद्भिन्नेन्द्रियजन्यज्ञानस्यानिवर्तकत्वं तु तत्राप्रामाण्यज्ञानात्, समानेन्द्रियजत्वान्तर्भावेण निवर्तकत्वस्वीकारेऽपि 'यद्विशेषयो'रितिन्यायेन साक्षात्कारत्वेनापि निवर्तकत्वस्वीकाराच्च। नच सेतुदर्शननाश्यपापेऽतिव्याप्तिः;

## विट्ठलेशीयटिप्पणी

इत उत्तरं ज्ञानप्रयुक्ताभावप्रतियोगित्वरूपं लक्षणं स्वीकृत्य वा पूर्वापरग्रन्थसङ्गतिरिति पाठः। स च *ननु* तन्नाशस्तदधिकरणे तदत्यन्ताभावसंबन्ध एव प्रयोजकः, न तु तदत्यन्ताभावे; तस्य नित्यत्वात्, ज्ञानप्रयुक्तसंबन्धप्रतियोगित्वमिति विवक्षायां तु गौरवमित्याशङ्क्याऽवतारणीयः। *पूर्वापरेति*। नाशमादाय पूर्वस्य, प्रागभावमादायोत्तरस्य ग्रन्थस्य सङ्गतिरित्यर्थः। *तन्नाशमिति*॥ अभावमिति शेषः। तेन नाशत्वाघटितलक्षणद्वयेऽपि शङ्कासङ्गतिः। एवं च नाशत्वात्यन्ताभावत्वाघटितलक्षणत्रयेऽपीयं शङ्केति भावः। *प्रागभावस्यानङ्गीकारादिति*॥ प्रतिबन्धकनिश्चयस्य प्रतिबध्यज्ञानात्यन्ताभावसंबन्धे साक्षादेव प्रयोजकत्वमिति भावः। तदङ्गीकारेऽप्याह—*नाशत्वेनेति*॥ *अत्यन्ताभावत्वेनेति*॥ अभावत्वेनेत्यपि बोध्यम्। प्रवृत्तौ तु प्रवृत्तित्वेनैवोपादानप्रत्यक्षप्रयोज्यता; लाघवादिति भावः॥ *धीत्वेनेति*॥ *ननु*—साक्षात्कारत्वं जातिविशेषो वा? इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वं वा? उभयथाऽपि तदिन्द्रियप्रयोज्यसाक्षात्कारत्वेनोक्ताज्ञाननिवर्तकत्वसंभवाद्व नेयं शङ्का संगच्छत इति—चेत्, *न*; साक्षात्कारत्वं विषयिताविशेषः, ज्ञानाकरणकज्ञानत्वं वा; तथाच तदिन्द्रियप्रयोज्यतद्रूपापेक्षया तदिन्द्रियप्रयोज्यधीत्वेन निवर्तकत्वे लाघवमित्यभिप्रायात्। *वस्तुतस्तु*—रजतादिलौकिकचाक्षुषभ्रमहेत्वज्ञानं प्रति शुक्त्यादिलौकिकचाक्षुषत्वेनैव निवर्तकतेत्यत्रैवास्य ग्रन्थस्य तात्पर्यमिति शङ्कासङ्गतिः। *न तत्=*नोक्ताज्ञाननिवर्तकत्वम्। *तथा सति=*चाक्षुषादिभ्रमहेत्वज्ञानं प्रत्यधिष्ठानचाक्षुषत्वादिना निवर्तकत्वे सति। *तदन्यत्वेति*॥ वह्न्यादिभिन्नत्व-गुञ्जा-पद्मराग-नक्षत्रादिगोचरेत्यर्थः॥ *अनुभवविरोधादिति*॥ अधिष्ठानसाक्षात्कारत्वेनैवाज्ञाननिवर्तकत्वावश्यकत्वादिति शेषः। कथं तर्हि शुक्तिस्पार्शनोत्तरं रजतचाक्षुषभ्रमोत्पत्तिः? तत्राह—*क्वचिदिति*॥ *तत्र=*भिन्नेन्द्रियजन्ये। *अप्रामाण्यज्ञानादिति*॥ तदनास्कन्दितस्यैव निवर्तकत्वमिति भावः। *ननु*—सर्वत्रोक्तस्थले प्रामाण्यज्ञानोत्पत्तिकल्पने मानाभावः, तदुत्पत्तिक्षण उक्तभ्रमापत्तिश्चेत्यत आह—*समानेन्द्रियजत्वान्तर्भावेणेति*॥ चाक्षुषत्वाद्यन्तर्भावेणेत्यर्थः। *न्यायेनेति*॥ स्वबाधकाभावविशिष्टा यद्धर्मावच्छिन्नकार्यतानिरूपिता यद्धर्मावच्छिन्नकारणता यत्र, तत्र तद्धर्मव्यापकधर्मावच्छिन्नकार्यतानिरूपिता तद्धर्मव्यापकधर्मावच्छिन्नकारणता; यथा घटत्वावच्छिन्नकारणे कपालत्वावच्छिन्ने पृथिवीत्वावच्छिन्नकार्यतानिरूपितपृथिवीत्वावच्छिन्नकारणता कपाल इति व्याप्तेरित्यर्थः। *स्वम्=*सामान्यकारणता। तत्रैव द्रव्यत्वावच्छिन्ननिरूपितकारणतायाः पृथिवीत्वावच्छेदेन जलादौ व्यतिरेकव्यभिचारेणासत्त्वात्, पृथिवीत्वावच्छिन्ननिरूपितकारणताया द्रव्यत्वावच्छेदेन जलादावन्वयव्यभिचारेणासत्त्वाच्च व्यभिचार इत्यतः—*स्वबाधकाभावविशिष्टेति*॥ एवं च रजतचाक्षुषभ्रमहेत्वज्ञाननिवर्तके शुक्तिचाक्षुषे साक्षात्कारत्वावच्छेदेन रजतसाक्षात्कारभ्रमहेत्वज्ञाननिवर्तकत्वसिद्धिः। न च—शुक्तिस्पार्शने रजतचाक्षुषभ्रमोपधायकाज्ञानानिवर्तकान्वयव्यभिचार एव बाधक इति—वाच्यम्; विशेषकारणविशिष्टसामान्यकारणस्यैव फलोपधायकत्वेनान्वयव्यभिचारस्याबाधकाभावादिति भावः॥ *नच सेतुदर्शनेति*॥ तत्रापि 'यद्विशेषयोरि'ति न्यायेन सेतुसाक्षात्कारत्वेन पापविशेषनाशकत्वादिति भावः।

तरङ्गिणी

*अत्रोच्यते* ; यदुक्तं ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वमिति, तत्रावस्थित्या सामान्यं वा विशेष्यते ? विरहो वा ? आद्येऽवस्थितिसामान्यं कारणात्मनाऽवस्थितिः, कारणमिति यावत्; ज्ञानप्रयुक्तव्यतिरेकप्रतियोगिकारणकत्वमित्यर्थः स्यात् । तत्र चोत्तरज्ञानप्रयुक्तव्यतिरेकप्रतियोगिपूर्वज्ञानजन्यसंस्कारादौ च बाधः, कारणशब्देनाविद्योक्तौ चाविद्याकारणकत्वमेवास्तु ; शेषवैयर्थ्यात्, अनाद्यविद्यादौ बाधश्च । *न द्वितीयः ; घटाद्यवस्थितिसामान्यविरहस्य ज्ञानप्रयुक्तत्वं न सम्भवति ; विनष्टघटाद्यवस्थितिविशेषद्वयविरहद्वयस्य ज्ञानप्रयुक्तत्वाभावात्, स्वरूपेणावस्थितिविरहस्य ज्ञानप्रयुक्तत्वाभावात्, विशेषाभावातिरिक्तसामान्याभावस्य त्वयैवाविद्यावादे निरसिष्यमाणत्वात्, ज्ञानप्रयुक्तविरहप्रतियोग्यवस्थायामवस्थात्वस्यातिप्रसंगेन प्रतियोगितानवच्छेदकत्वाच्च, शुक्तिरजतादेरवस्थित्यङ्गीकारे स्वरूपेण निषेधोक्त्ययोगाच्च । 'रूप्यादेः स्वरूपेणैव निषेधः' इति त्वदभ्युपगतपक्षे रूप्यादेरत्यन्तासत्त्वस्यापादितत्वेन रूप्याद्यभावोऽपि शशविषाणाद्यभाव इव ज्ञानाप्रयुक्तः, इति दृष्टान्तस्य साध्यवैकल्यमेव, पक्षे बाधश्च(१) ॥ *यच्चोक्तम्*—ज्ञानत्वव्याप्येत्यादि, *तदपि न* ; तव मते मननत्वादिना ज्ञानत्वव्याप्यधर्मेण मनननिवर्त्येऽर्थगतसंशयविशेषेऽतिव्याप्तेः, तादृशसंशयनिवर्तकत्वेनैव मननस्य सप्रयोजनत्वोक्तेश्च । 'उत्तरात्मविशेषगुणत्वेने'त्याद्यपि न युक्तम् ; धर्माधर्मादावतिप्रसङ्गात् ॥ *यच्चोक्तम्*—स्मृतेः संस्कारनिवर्तकत्वं नेति, *तन्न* ; सुखादेर्धर्मादेरिव स्मृतेरपि स्वकारणसंस्कारस्य निवर्तकत्वात् । दृढसंस्कारस्तु स्मृतिजन्योऽन्य एव ॥

न्यायामृतसौगन्ध्यम्

अनुभवानन्तरं यत्रोपेक्षात्मकं स्मरणम्, तदनन्तरं स्मरणवारणाय तन्नाशकत्वावश्यकत्वादित्यन्यदिति ॥ वस्तुतस्त्वित्यप्ययुक्तम् ; परोक्षप्रमानिवर्त्यपरोक्षभ्रमविषयेऽव्याप्तेः, प्रवृत्तिप्रागभावेऽतिव्याप्तेश्च । उपादानप्रत्यक्षस्य साक्षात्कारत्वेन प्रवृत्तिरूपतन्नाशं प्रति प्रयोजकत्वात् ॥ नच—प्रागभावो नाङ्गीक्रियते, तन्नाशत्वेनात्यन्ताभावत्वेन वा प्रयोज्यत्वं निवेश्यत इति—वाच्यम् ; प्रतियोगिजनकनाश्यप्रागभावस्थानीयावस्थाविशेषस्यावश्यकत्वात्, उक्तरूपेण प्रयोज्यत्वस्यापि सम्भवाच्च ॥ किञ्च स्पार्शनादिरूपे शुक्तिसाक्षात्कारे सत्यपि चाक्षुषादिरूपस्य रजतादिभ्रमस्योत्पत्त्या तदिन्द्रियप्रयोज्यरजतादिभ्रमहेत्वज्ञाने तदिन्द्रियप्रयोज्यशुक्त्यादिधीत्वेन निवर्तकत्वमावश्यकम्, तथाच साक्षात्कारत्वेन न तत् ॥ नच तथा सति वह्न्यादेः स्पार्शनाद्युत्तरं तत्र तदन्यत्वचाक्षुषापत्तिः ; तत्सामग्र्यां सत्यामिष्टत्वात् ॥ नच 'यद्विशेषयोरि'ति न्यायेन साक्षात्कारत्वेनापि निवर्तकत्वमावश्यकम्; विशेषकार्य-कारणभावेनैव निर्वाहे सामान्यकार्य-कारणभावस्याकल्पनात्, व्याप्यधर्मे व्यापकधर्मस्यान्यथासिद्धत्वाच्च ॥ किञ्च सेतुदर्शनादिना सत्यस्यैव दुरितस्य (२) निवृत्तिवद् ज्ञानेन सत्यस्यैव निवृत्तिः स्यात् ॥ न च "सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती"त्यादिस्मृत्या सेतुचाक्षुषत्वेनैव निवर्तकत्वम्, न तु ज्ञानत्वेनेति—वाच्यम् ; दृशेः साक्षात्कारमात्रवाचकत्वात्, अन्यथा 'दृष्ट्वैव मुच्यते' इत्यादावपि तथात्वापत्तेः ॥

---

(१) सर्वं चेदमक्षरशोऽनूद्य सिद्धिव्याख्यायां निरस्तम् ।

(२) 'सेतुं दृष्ट्वे'ति सेतुदर्शनयोग्यदेशावच्छिन्नसमुद्रदेशज्ञानमेव विवक्ष्यते, इति विट्ठलेशोक्तरीत्या 'सेतुचाक्षुषत्वेने'त्यस्य सेतुदर्शनयोग्यचक्षुःसन्निकर्षयोग्यदेशावच्छिन्नसमुद्रज्ञानत्वेनेत्यर्थस्यैव विवक्षणाद् वस्तुगत्या सेतुदर्शनमात्रस्य पापनिवर्तकत्वाभावाच्च नार्थान्तरावकाशः । 'सेतुं दृष्ट्वे'त्यस्य वाक्यान्तरैकवाक्यतां विनैव प्रतीयमानार्थविवक्षयैव यदि पापनिवर्तकत्वं मन्यते, तर्हि तु दृष्ट्वेत्यस्य बाह्यार्थसमभिव्याहृतस्य चाक्षुषप्रत्यक्षबोधकत्वस्यैव युक्तत्वात्, सेतोर्मानसप्रत्यक्षविषयत्वासंभवात्, स्पार्शनप्रत्यक्षे सेतुविषये संभवत्यपि दृशधातोर्मुख्यार्थस्य चाक्षुषप्रत्यक्ष एव युक्तत्वाच्च चाक्षुषत्वेनैव निवर्तकत्वं स्वीकरणीयम्, दृशेः साक्षात्कारमात्रवाचकत्वासंभवात्, 'दृष्ट्वैव मुच्यते' इत्यादौ त्वात्मनश्चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वासंभवाद् विशेषणांशत्यागेन साक्षात्कारमात्रपरत्वमिति युक्तम्, न तु 'सेतुं दृष्ट्वे'त्यत्रेति न दोषः । वस्तुतस्तु—विट्ठलेशोक्तरीत्याऽभ्युपगमवाद एवायम् ; वस्तुस्थितिस्तु सेतुदर्शनस्य ज्ञानत्वेनापि न निवर्तकत्वम्, इति विट्ठलेशोक्तमेव साधु—इति ज्ञाननिवर्त्यत्वरूपमिथ्यात्वोपपत्तिः ॥

### तरङ्गिणी

*यच्चोक्तम्* 'वस्तुतस्त्वि'त्यादि, *तदपि न* ; त्वया प्रत्यक्षस्य शब्दबाध्यत्वमङ्गीकुर्वता 'नायं सर्पः' इत्याप्तोपदेशस्यापि सर्पादिभ्रमबाधकताया उक्तत्वेन साक्षात्कारत्वस्य बाधकतानवच्छेदकत्वादिति ॥

---

### न्यायामृतकण्टकोद्धारः

भ्रमसमानाधिकरणविपरीतप्रमानिवर्त्यत्वस्य विवक्षितत्वात् । *लाघवेनेति* ॥ नच—*अज्ञानोपादान-कत्वमेव विवक्षितमिति—वाच्यम् ; अज्ञान एवाव्याप्तेः, तस्याप्यज्ञानान्तरोपादानकत्वेऽनवस्था, स्वोपादान-कत्वे त्वात्माश्रयः । उक्तमर्थं कारिकया सङ्गृह्णाति—*तथाचेति* ॥

---

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्यादिस्मृत्या सेतुचाक्षुषत्वेनैव तत्र निवर्तकत्वबोधनादिति भावः ॥

---

### सिद्धिव्याख्या

स्मृतिविषयकसंस्कारानेकत्वस्य स्मृतिजन्यसंस्कार एवेति नियन्तुमशक्यत्वेन जनकसंस्कारमात्रनाशानुपपत्तौ न जनकीभूतसंस्कारस्य स्मृत्या निवृत्तिरिति ध्येयम् ॥

---

### विट्ठलेशीयटिप्पणी

*स्मृत्येति* ॥ अन्वय-व्यतिरेकग्रहघटितसामग्रीग्राह्याया विशेषकारणताया एव सामान्यकारणत्वव्याप्यत्वम्, न तु शब्दप्रमाणादिग्राह्यायाः, इति नात्र सेतुसाक्षात्कारत्वेनोक्तनाशकत्वमिति भावः । तदाह—*सेतुचाक्षुषत्वेनैवेति* ॥ *ननु*—अन्धस्य सेतुसमीपे समुद्रस्नानस्यापि पापविशेषनाशकत्वं न स्यात् ; सेतुचाक्षुषाभावात्, न चेष्टापत्तिः । "चातुर्विद्योपपन्नस्य विधिवद् ब्रह्मघातने । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाहरेत् । वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः ॥ अहं दुष्कृतकर्मा वै महापातककारकः । गृहद्वारे तु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥ गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च । तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥ एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम् । ब्रह्महा विप्रमुच्येत स्नात्वा तस्मिन् महोदधौ ॥ ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम् । दत्त्वा वस्त्रं पवित्राणि पूतात्मा प्रविशेद् गृहम् ॥ गवां चाऽपि शतं दत्त्वा चातुर्विद्याय दक्षिणाम् । एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः॥" इति मिताक्षरायां पराशरस्मृतौ सेतुचाक्षुषस्य पापविशेषनाशकत्वानुक्तेः, व्रतविशेषविशिष्टसमुद्र-सेतुगमनसेतुसन्निहितसमुद्रस्नानयोरेव तन्नाशकत्वोक्तेश्च, सेतुसमुद्रस्नानं विनाऽपि सेतुचाक्षुषमात्रेणोक्तपापनिवृत्तिसम्भवेन तत एव पापिनां स्वदेशगमनापत्तेश्च । नचैवमाचारः, इति—चेत्, *न* ; उक्तस्मृतिद्वयैकवाक्यतया प्रायश्चित्तेन्दुशेख-रोक्तविन्ध्योत्तरदेशत उक्तनियमकलापविशिष्टसमुद्रसेतुदेशगमन-चक्षुःसन्निकर्षयोग्यदेशावच्छिन्नसमुद्रस्नानयोः समुदितयोः पापविशेषनाशकत्वस्वीकार उक्तसकलदोषपरिहारेण सामञ्जस्यात् । तत्स्वदीपने तु दूरदेशागमनादियुतस्य सेतुदेशप्राप्त्या कल्मषनिवृत्तिरित्युक्तम् । तत्र प्राप्तिपदेन स्नानमुपलक्षणीयम् । टीकायां चाक्षुषत्वेन पापनिवर्तकत्वोक्तिरभ्युप-गमवादः, सेतोश्चाक्षुषयोग्यत्वेनेत्यर्थिका वेति बोध्यम् ॥

## इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सत्व्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योः तृतीयमिथ्यात्वविचारः ॥

---

# अथ चतुर्थमिथ्यात्वविचारः

———:*:———

### न्यायामृतम्

*एतेन*—स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वमिति चतुर्थोऽपि—निरस्तः ;

### अद्वैतसिद्धिः

स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्। तच्च स्वात्यन्ताभावाधिकरण एव

### तरङ्गिणी

*एतेनेति* ॥ अत्यन्तासत्त्वापादनादिनेत्यर्थः ॥ *दोषस्योक्तत्वाच्चेति* ॥ स्वरूपेणात्यन्ताभावप्रतियोगित्वपक्षेऽत्यन्तासत्त्वापसिद्धान्तादेः पारमार्थिकत्वेन तत्प्रतियोगित्वपक्षे ब्रह्मवत् पारमार्थिकत्वधर्म-

### न्यायामृतकण्टकोद्धारः

चतुर्थपक्षं द्वितीयपक्षदूषणातिदेशेन दूषयति—*एतेनेति* ॥ असत्यव्याप्तिश्च ॥ नच—

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अधिकरण एवेति* ॥ एवकारोऽशेषार्थकः। अशेषत्वं च व्यापकत्वम्। तथाच 'वाच्य एव मेयत्वमि'त्यादौ वाच्यत्वे मेयत्वस्येव प्रकृते स्वात्यन्ताभावे स्वप्रकारकधीविशेष्यत्वस्य व्यापकतालाभाद् उक्तव्यापकत्वाश्रयात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्। *पूर्ववैलक्षण्यम् = स्वाधिकरणनिष्ठात्यन्ताभावप्रति-

### न्यायामृतसौगन्ध्यम्

*यत्तु* स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्। तच्च स्वात्यन्ताभावाधिकरण एव

### सिद्धिव्याख्या

*स्वाश्रयेति* ॥ नच—संयोगादौ सिद्धसाधनमिति—वाच्यम्; संयोग-तदत्यन्ताभावयोरवच्छेदकभेदेन भिन्नाश्रितत्वस्यैवानुभवेन सत्त्वपक्षे सामानाधिकरण्यायोगात्, नापि शुक्तिरूप्यादौ साध्यवैकल्यम्; तस्यापि पारमार्थिकत्वाकारेण स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिति भावः। *ननु* आश्रयशब्देन स्वाश्रयत्वेन प्रतीतमात्रोक्तौ चान्यथाख्यातिपक्षे रजतत्वादेः स्वाधिकरणत्वेन प्रतीतशुक्त्यादावत्यन्ताभावस्य सत्त्वात् सिद्धसाधनम्, इत्याशङ्क्याह—तच्चेति* ॥ तत्पक्षे च रजतत्वादिकं स्वात्यन्ताभावानधिकरणे रजतेऽपि भाति, इति न

### विट्ठलेशीयटिप्पणी

*मूले—स्वाश्रयनिष्ठेति* ॥ स्वाश्रयत्वेन प्रतीयमानयावन्निष्ठेत्यर्थः। अत एवेदं प्रतिपन्नेत्याद्युक्तादपौनरुक्त्याय विशेष्य-विशेषणभावव्यत्यासेन स्वयं व्याचष्टे—*तच्चेति* ॥ अत्र स्वात्यन्ताभावाधिकरणान्यस्मिन्नप्रतीयमानत्वं नैवकारार्थः, स्वात्यन्ताभावस्य केवलान्वयित्वेन तद्वदन्याप्रसिद्धेः, इत्येतदर्थमाह टीकायाम्—*एवकारोऽशेषार्थक इति* ॥ तस्य च प्रतीतावन्वयः। तथाचाशेषा सर्वा स्वप्रकारकप्रतीतिः = स्वात्यन्ताभावाधिकरणविशेष्यिका, उक्तप्रतीतित्वम् = उक्तविशेष्यकत्वव्याप्यम्; स्वप्रकारकप्रतीतिविशेष्यत्वम्, स्वात्यन्ताभाववत्त्वव्याप्यमिति यावत्। तद्व्याप्तिश्च न तद्वदन्यावृत्तित्वम्, अप्रसिद्धेः, किंतु स्वव्यापकतत्कत्वमित्याशयेनाह—*अशेषत्वं चेति* ॥ अशेषपदार्थान्वयलभ्यं चेत्यर्थः। अशेषपदार्थान्वय्यन्वयिन्यन्वययोग्यमिति शेषः। एवकारसमभिव्याहारे तादृशव्युत्पत्तिस्वीकारे प्रयोजनं दर्शयितुमाह—*तथाचेति* ॥ *वाच्य एव मेयत्वमिति* ॥ अन्यथा द्रव्य एव मेयत्वमिति व्यवहारापत्तेरिति भावः। *स्वाधिकरणनिष्ठेति* ॥ स्वविशिष्टत्वेन प्रतीयमानयावन्निष्ठेत्यर्थः। यद्यपीदानीमुभयत्र विशेष्य-विशेषणाभावसाम्यम्; तथापि पूर्वत्र यावत्पदेन प्रातिस्विकरूपेण तत्तद्व्यक्तयो विवक्षिताः,

अद्वैतसिद्धिः

प्रतीयमानत्वम् । अतः पूर्ववैलक्षण्यम् । दूषणपरिहारः पूर्ववत् । नच—संयोगिनि समवायिनि

तरङ्गिणी

शून्यस्यापि जगतो ब्रह्मवदेवामिथ्यात्वोपपत्तेरित्यादेर्दोषस्योक्तत्वादित्यर्थः । संयोगिनि समवायिनि वा देशे

न्यायामृतकण्टकोद्धारः

स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वं विवक्षितमिति—वाच्यम्; 'शशविषाणमस्ती'ति शब्दादिना "तद्धैक आहुरि"त्यादिना चासतोऽपि प्रतीतिसम्भवात् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

योगित्वरूपात् प्रतिपन्नेत्यादिनोक्तरूपाद् वैलक्षण्यम् । *दूषणेति* ॥ कपालादौ संयोगादिसम्बन्धेन घटाद्यभावमादाय सिद्धसाधनादीत्यर्थः । *पूर्ववदिति* ॥ येन सम्बन्धेन यद्वत्तया प्रतीतं यत्, तन्निष्ठाभावीयं यत् तत्सम्बन्धावच्छिन्नं प्रतियोगित्वमित्यादिविवक्षयेत्यर्थः । संयोगिनि देशे तदुत्पत्तिकाले प्रलयकालादौ वा प्रतियोगितत्संयोगयोर्नाशेनात्यन्ताभावसत्त्वे विरोधाभावादाह—*समवायिनीति* ॥ समवायेन नित्ययुक्त इत्यर्थः । तथाच घटादौ पाकेन रूपादेर्नाशकाले तदुत्पत्तिपूर्वकाले वा तदत्यन्ताभावस्य दर्शनेन

न्यायामृतसौगन्ध्यम्

प्रतीयमानत्वमिति, *तन्न*; संयोगिनि समवायिनि वा देशे तदत्यन्ताभावस्यासम्भवात्, स्वरूपेणैव

सिद्धिव्याख्या

सिद्धसाधनम् । नच—एवकारव्यावर्त्यस्वात्यन्ताभावानधिकरणाप्रसिद्धिरिति—वाच्यम्; स्वाश्रयत्वेन प्रतीयमानयावन्निष्ठप्रतीतिविषयसंबन्धावच्छिन्नात्यन्ताभावप्रतियोगित्वस्य विवक्षितत्वादिति भावः । *एतेन*—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्यनेन पूर्वोक्तेन पुनरुक्तिः परिहृतेत्याह—अत इति* ॥ उपाध्योर्भेदादिति भावः । *ननु*—त्रैकालिकनिषेधपक्ष उक्तानि दूषणान्यत्रापि प्रसरन्ति, इत्याशङ्क्य तत्रोक्ताः परिहारा अत्राप्यावर्तनीया इत्याह—*दूषणेति* ॥ *नचेति* ॥ अत्र 'नचे'त्यनन्तरं स्वाश्रयशब्दे तात्त्विकाश्रयोक्ता-

विट्ठलेशीयटिप्पणी

अत्र तु व्यापकत्वम्, इति न पौनरुक्त्यम् । स्पष्टा चेयं रीतिः साकल्यलक्षणे गादाधर्याम् । स्वप्रकारकप्रतीतिनिवेशेनावृत्तिगगनादिषु सिद्धसाधनरूपदूषणाभावाद् दूषणपदं व्याचष्टे—*दूषणेतीति* ॥ 'साधनादी'त्यादिनाऽव्याप्यवृत्तिकपिसंयोगादिषु सिद्धसाधनम् । पूर्वत्र प्रतिपन्नपदस्य प्रतीतार्थकत्वाद् व्याचष्टे । *प्रतीतमिति* ॥ यावदिति शेषः । 'इत्यादिविवक्षये'त्यादिना, स्व-स्वाभावयोर्देश-कालरूपावच्छेदकैक्यविवक्षा ग्राह्या; एवं संबन्धादिविवक्षायामपि । उक्तानुमाने बाधमाशङ्कते *मूले—नचेति* ॥ घटादेरिति शेषः—*तदत्यन्ताभावेति* ॥ संयोगेन समवायेन चेत्यादिः । *असंभवः=प्रतियोग्यभावयोर्विरोधे, अविरोधे तु संभवो बोध्यः । तत्संयोगिनि संयोगेन तदत्यन्ताभावसंभवमाशङ्क्य 'समवायिनी'त्येतदवतारयति टीकायाम्—*संयोगिनीति*॥ देश इति* ॥ चक्र-वेमादौ जन्ये नित्ये वा परमाण्वादौ । *तदुत्पत्तिकाले=घटाद्युत्पत्तिकालावच्छेदेन । तत्संयोगानुत्पत्त्येति शेषः । *प्रलयकालादाविति* ॥ खण्डेत्यादिः । आदिना घटादिप्रतियोगिनाशकालः, प्रतियोगिनि क्रियोत्पत्तितृतीयक्षणश्च । अवच्छिन्ने सप्तमी । *प्रतीति* ॥ 'प्रतियोगि-तत्संयोगयोर्नाशेनेत्यस्य नित्यस्यैव परमाण्वादेर्नित्ये गगनादौ महाकाले संयोगनाशेनेत्यर्थः । *अत्यन्ताभावसत्त्वे=संयोगसंबन्धावच्छिन्नतदत्यन्ताभावसत्त्वेऽपि । *विरोधाभावात्=प्रतियोग्यभावयोरेकावच्छेदेनैकधर्म्यवृत्तित्वरूपविरोधनियमभङ्गाभावात् । *नित्ययुक्त इति* ॥ प्रतियोगिनेत्यादिः । नित्ययोगे मत्वर्थीयेनिस्वीकारे फलं स्पष्टयति—*तथाचेति* ॥ घटादौ घटत्वादेस्तत्समवायस्य च घटाद्यधिकरणीभूतसर्वकालावच्छेदेन सत्त्वेनेत्यर्थः । तत्र घटादौ घटत्वाद्यत्यन्ताभावस्य सिद्ध्यसंभवेनेत्यर्थः । *विरोधेन=प्रतियोग्य-

अद्वैतसिद्धिः

वा देशे तदत्यन्ताभावासम्भवः, संभवे तूपादानत्वाद्यनुपपत्तिरिति—वाच्यम् ; काले सह संभववद्

तरङ्गिणी

तदत्यन्ताभावासम्भवः, सम्भवे तूपादानत्वानुपपत्तिरित्यपि बोध्यम् । ( सि० ) अत्र वदन्ति—"काले सह

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तयोरविरोधेऽपि घटत्वादेर्घटादौ समवायस्य घटाद्याधारे सर्वकाले सत्त्वेन तत्र घटत्वाद्यत्यन्ताभावस्य विरोधेनासम्भवः । अत्यन्ताभावस्य स्वप्रतियोगिविरोधग्राहकमानस्यामिथ्यात्वग्राहकमानेन नाभिभव इत्यभिमानः । *ननु*—कालभेदेन कपालादौ घटादि-तदत्यन्ताभावयोः सम्भववदेककालेऽपि घटत्वादि-तदभावयोः सम्भवोऽस्तु, तत्राह—*सम्भवे त्विति* ॥ प्रतियोगि-तदत्यन्ताभावयोरेकदेशे युगपत् सम्भवे त्वित्यर्थः । *उपादानत्वाद्यनुपपत्तिरिति* ॥ सदा घटशून्यस्यापि घटोपादानत्वे तन्त्वादेरपि तत् स्यादिति भावः । आदिपदाद् घटादिप्रत्यक्षकाले घटाभावादेः कपालादावप्रत्यक्षतानुपपत्तिः, 'कपालादिकं सदा

न्यायामृतसौगन्ध्यम्

त्रैकालिकनिषेधप्रतियोग्यधिकरणस्योपादानत्वासंभवाच्च । नचोपादानत्वे प्रागभाववत्त्वं तन्त्रम् ; तादृशाधिकरणे प्रागभावस्याप्यसंभवात् । नच क्वाप्यत्यन्ताभाव-प्रागभावयोः सामानाधिकरण्यं दृष्टम् ;

सिद्धिव्याख्या

वित्यध्याहर्तव्यम् । *संभवे त्विति* ॥ अत्यन्ताभावाधिकरणस्योपादानत्वादर्शनादिति भावः । किं सहा-संभवमात्रं विरुद्धम् ? उत स्वाश्रयस्योपादानत्वम्, नाद्य इत्याह—*कालेति* ॥ न चैवं सति—भावाभावयोर्विरोध एवोच्छिन्नकथः स्यात्, इति व्यावहारिकत्वेऽपि व्यवस्था न स्यात्, द्वैताद्वैतयोरविरोधापातेनाद्वैतज्ञानस्य द्वैतज्ञाननि-वर्तकत्वं च न स्यादिति—वाच्यम् ; भावाभावयोर्विरोधे समानसत्ताकभावाभावविषयतयाऽवकाशसत्त्वे तया व्याव-हारिक्या व्यवस्थायाः सिद्ध्युपपत्तेः, प्रकृते चाश्रयनिष्ठाभाव-तत्प्रतियोगिनोर्भिन्नसत्ताकतयाऽविरोधात् । द्वैताद्वैतयो-रविरोधेऽप्यद्वैतस्य पारमार्थिकसत्ताकस्य श्रुतिबोध्यतया तस्य प्राबल्येन तज्जनितज्ञानस्य द्वैतप्रत्यक्षबाधकत्वोपपत्तेश्चेति

विट्ठलेशीयटिप्पणी

भावयोर्विरोधनियमेन । *ननु*—मिथ्यात्वानुमानबलेन तत्र तत्सिद्धिः स्यात्, अत आह—*अत्यन्ताभावस्येति* ॥ मानस्य=अनुमानस्य । घटत्वादिसत्यत्वप्रत्यक्षानुगृहीतस्येति शेषः ॥ *मानेन=अनुमानेन । *अभिमान इति* ॥ मिथ्यात्वानुमाने तद्बोधकश्रुत्यनुगृहीतत्वेन सत्यत्वानुमानासंभवात् तदनुसन्धानेन तत्परिहार इति भावः । *संभववदिति* ॥ विरोधस्यैकावच्छेदघटनया संकोचमङ्गीकृत्येति भावः । *एककालेऽपीति* ॥ संकुचितं विरोधमनङ्गीकृत्येति भावः । घटादौ घटत्वादि-तदभावयोः स्वीकारेऽपि घटादौ नित्यघटत्वादेः समवायिकारणत्वरूपो-पादानत्वस्य परैरनङ्गीकारेण तदनुपपत्त्युद्भावनासंभवेन व्याचष्टे—*संभवे त्विति । *प्रतियोगीति* ॥ सकलेत्यादिः । सर्वत्र विरोधानुपगमेनेति भावः । *ननु*—अस्तूपादानत्वमपि, तत्राह—*सदेति* ॥ *तत् स्यादिति* ॥ तथाच सदा घटशून्ये तन्त्वादौ घटोपादानत्वाभावदर्शनेन सदा घटशून्यत्वे घटोपादानत्वाभावव्याप्तिनिश्चयेन कपाले सदा घटशून्यत्वापादकिका घटोपादानत्वाभावापत्तिः सदा घटशून्यत्वसिद्धिं प्रतिबध्नातीति भावः । घटादौ घटत्वाभावादि-संभवे बाधकाभावादाह—*आदिपदादिति । *ननु* अभावप्रत्यक्षे प्रतियोगिप्रत्यक्षं प्रतिबन्धकम्, अतो नोक्तदोष इत्यत आह—*कपालादिकमिति* ॥ घटप्रत्यक्षकाल इत्यनुषज्यते ; कालान्तर उक्तव्यवहारस्येष्टत्वात् ॥

*मूले* काले सह संभववदिति* ॥ प्रतियोग्यभावयोरित्यादिः । अत्र घट-दैशिकसम्बन्धावच्छिन्नतदभावयोः काले कालिकसंबन्धेनैकदेशावच्छेदेन सत्त्वं दृष्टान्तः, तस्यैव निर्विवादत्वादिति न संभवति ; तयोः स्वाधिकरण-भिन्नदेशावच्छेदेनैव कालेऽङ्गीकारेणैकदेशावच्छिन्नत्वरूपसहपदार्थानन्वयात् । नच—कपालमेव विभिन्नकालावच्छिन्नं तयोरधिकरणं कालवृत्तावच्छेदकमिति—वाच्यम् ; तत्रापि विभिन्नकालावच्छिन्नावच्छेदकतयोर्भेदात् । समवाया-

## अद्वैतसिद्धिः

देशेऽपि सह संभवाविरोधात्, प्रागभावसत्त्वेनोपादानत्वाविरोधाच्च। नच—अत्यन्ताभावाधिकरणे प्रागभावस्याप्यनुपपत्तिरिति—वाच्यम्; काले व्यभिचारात्। नच—काले प्रागभावात्यन्ताभावयोः सामा-

## तरङ्गिणी

सम्भववद् देशेऽपि सह सम्भवाविरोधः, प्रागभावसत्त्वेनोपादानत्वाविरोधश्च। नच—अत्यन्ताभावाधिकरणे प्रागभावस्याप्यनुपपत्तिरिति—वाच्यम्, काले व्यभिचारात्। नच—काले प्रागभावात्यन्ताभावयोः सामानाधि-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

घटाद्यभाववदि'त्यादिज्ञानेष्वप्रमात्वव्यवहारानुपपत्तिश्च। *अत्यन्ताभावाधिकरणे=सदा घटादिशून्ये कपालादौ। *अनुपपत्तिरिति* ॥ अत्यन्ताभावस्य स्वप्रतियोगिनेव तत्प्रागभाव-ध्वंसाभ्यामपि विरोधादिति शेषः।

## सिद्धिव्याख्या

भावः। द्वितीयं दूषयति—*प्रागभाव इति* ॥ *नचात्यन्तेति* ॥ ततश्च न प्रागभावसत्त्वमादायोपादानत्वोपपत्तिरिति भावः। *नच काल इति* ॥ तथाच दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमिति ध्येयम्। *मिथ्यात्वेति* ॥

## विठ्ठलेशीयटिप्पणी

वच्छिन्नानुयोगिता-घटत्वात्यन्ताभावीयविशेषणतयोः काले सह संभवो दृष्टान्तः; समवायस्यैक्येऽपि घटत्वसमवायस्य घटत्वसमवायानुयोगितायाश्च नानात्वेन स्वरूपसंबन्धरूपायास्तस्याः समवायीयकालनिष्ठकालिकविशेषणतानतिरिक्तायाः काले संभवादित्यपि न संभवति; विशेष्यतासम्बन्धेन घट इव 'अयं घटः' इति प्रमायाः कालेऽसत्त्वेन तन्नियामिकाया घटत्वप्रतियोगिकत्वविशिष्टसमवायीयविलक्षणानुयोगितायाः कालेऽभ्युपगमासंभवात्। नापि कालिकसम्बन्धेन घटत्व-तत्सम्बन्धावच्छिन्नतदभावीयकालिकविशेषणतयोः काले सह सम्भवो दृष्टान्तः; काले हि घटत्वं स्वाधिकरणीभूतघटावच्छेदेन कालिकसम्बन्धेनास्ति, तत्सम्बन्धावच्छिन्नतदभावस्तु विशेषणतासम्बन्धावच्छिन्ननित्यवृत्तिर्नित्याद्यवच्छेदेन, घटत्वानधिकरणपटाद्यवच्छेदेन तु विशेषणतासम्बन्धेनापि; सर्वथा तयोर्न कालवृत्तिरेकदेशावच्छेद्या, परं त्वात्मत्वादिकं स्वाधिकरणीभूतात्मावच्छेदेन काले कालिकसम्बन्धेनास्ति, तत्सम्बन्धावच्छिन्नतदभावोऽपि स्वाधिकरणीभूतात्मावच्छेदेनैवास्ति, इति तयोः काले सह सम्भवाद् दृष्टान्तः सम्भवेत्, एवं नित्यत्व-तदभावयोः। अयमपि प्रकृतानुपयुक्तः; दार्ष्टान्तिकेऽभावनिष्ठदैशिकविशेषणतासम्बन्धावच्छिन्नदेशवृत्तेरेव विवक्षितत्वेन दृष्टान्तेऽपि तादृश्या एव कालवृत्तेर्विवक्षितत्वात्, अतः कालिकसम्बन्धेन घटत्वादिमति काले कालिकसम्बन्धावच्छिन्नघटत्वाभावस्य या विशेषणतासम्बन्धावच्छिन्ना वृत्तिः, तस्याः प्रतियोगिनैकदेशावच्छिन्नत्वं देशविशेषानवच्छिन्नत्वं वा प्रसाध्य दृष्टान्तत्वेनोपन्यासः कृत इत्यग्रे टीकायाम्—'किंचे'त्यादिना स्फुटीकरिष्यते। एवं व्याप्यवृत्तेः सर्वदेश-कालावच्छिन्नत्वे सहपदयोरेकदेशावच्छिन्नत्वमर्थः। देश-कालानवच्छिन्नत्वे त्वनवच्छिन्नत्वमिति बोध्यम्। *संभवः=वृत्तिः। *नन्वेवम्*—कपालं यदि सदा घटशून्यं स्यात्, तर्हि घटोपादानं न स्यात्, तन्तुवदिति तर्को दुर्वारः, तत्राह—*प्रागिति* ॥ *उपादानत्वाविरोधादिति* ॥ (१)केवलसदाघटशून्यत्वस्य घटोपादानत्वाभावाव्याप्यत्वादित्यर्थः। *अयं भावः*—घटादेरुपादानमात्रवृत्तेः प्रागभावस्याभ्युपगमेन तन्त्वादौ तद्विरहस्य घटाद्युपादानत्वाभावरूपापाद्यव्यापकत्वेन कपाले सदाघटशून्यत्वरूपापादकाव्यापकत्वेन चोक्ताऽऽपाद्यापादकव्याप्तिभञ्जकोपाधित्वेन घटप्रागभावाभावविशिष्टस्यैव सदाघटशून्यत्वस्य घटोपादानत्वाभावव्याप्यत्वोपगमेनोक्तविशिष्टापादकस्य कपाले विरहेण केवलघटशून्यत्वोपगमे घटोपादानत्वाभावापत्तिरूपबाधकाभावादित्यर्थः—इति। बाधकान्तरोद्धारोऽपि टीकायामनुपदमेव स्फुटीकरिष्यते। कदाचिदत्यन्ताभावाधिकरणे कदाचित् प्रागभावोऽपि स्यात्, अतो व्याचष्टे—*सदेति* ॥ *विरोधादिति* ॥ तथाच कपाले सदा घटशून्यत्वोपगमे घटप्रागभावा-

---

( १ ) घटप्रागभावाभावविशिष्टसदाघटशून्यत्वस्यैव घटोपादानत्वाभावव्याप्यत्वादिति।

अद्वैतसिद्धिः

नाधिकरण्यम्—'इदानीं घटात्यन्ताभावः' 'इदानीं घटप्रागभावः' इति प्रतीतिबलादङ्गीकृतम्, देशे तु

तरङ्गिणी

करण्यम्—'इदानीं घटात्यन्ताभावः' 'इदानीं घटप्रागभावः' इति प्रतीतिबलादङ्गीकृतम्, देशे तु तदुभयसामानाधि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*व्यभिचारादिति* ॥ यदा यत्र यस्यात्यन्ताभावः, तदा तत्र न तस्य प्रागभाव इति व्याप्तौ, सदा यस्य यत्रात्यन्ताभावः, तत्र तस्य न प्रागभाव इति व्याप्तौ वा व्यभिचारात्। *इदानीम् = कालिकसम्बन्धेनै-

न्यायामृतसौगन्ध्यम्

कालिकसम्बन्धेन तयोर्विरोधात्। नच—तन्तुषु पटप्रागभावात्यन्ताभावयोस्सामानाधिकरण्यं दृष्टम्; 'अत्र पटो भविष्यती'ति प्रतीतिबलादस्माकं तत्संभवेऽपि 'नास्ति नासीद्‌ न भविष्यती'ति त्रैकालिकनिषेधमङ्गीकुर्वतस्ते तदसंभवात्। नच विषमसत्ताकयोः प्रतियोग्यत्यन्ताभावयोरविरोधः; एवं हि बाध्यबाधकभावो न स्यात्॥ किञ्च "स एवाधस्तादि"त्यादिश्रुत्या प्रतिपन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगिनि ब्रह्मण्यतिव्याप्तिश्च॥ नच तस्यात्यन्ताभावप्रतियोगित्वे मानाभावः; असङ्गत्वेन सर्वत्र सम्बन्धाभावस्यैव मानत्वात्॥

विट्ठलेशीयटिप्पणी

भावापत्त्या घटोपादानत्वाभावापत्तिः, अतस्तद्‌ नोपगन्तव्यमिति भावः। हेतुं पूरयति—*अत्यन्तेति* ॥ तन्त्वादाविवेत्यादिः। *ननु*—समवायावच्छिन्नतदत्यन्ताभावत्वं तत्प्रागभाव-तद्ध्वंसान्यतरवदवृत्तित्वव्याप्यमिति व्याप्तेः काले व्यभिचारोक्तिर्न सङ्गच्छते; उक्तान्यतरवत्तायास्तद्वृत्तितायाश्च दैशिकविशेषणतासम्बन्धावच्छिन्नाया विवक्षणात्, काले तयोः—'इदानीमि'ति प्रत्ययनियामककालिकसम्बन्धेनैव सामानाधिकरण्यस्य प्रदर्शनेनोक्तव्याप्तिभङ्गाभावात्, अतो व्याचष्टे—*यदेति* ॥ यत्कालावच्छेदेन यद्देशे यस्य समवायावच्छिन्नात्यन्ताभावो विशेषणतासम्बन्धेनास्ति, तत्कालावच्छेदेन तद्देशे विशेषणतासम्बन्धावच्छिन्नतत्प्रागभावाभावो विशेषणतासम्बन्धेनास्ति, यत्काले यद्देशावच्छेदेन समवायावच्छिन्नयदत्यन्ताभावः कालिकसम्बन्धेनास्ति, तत्काले तद्देशावच्छेदेन कालिकसम्बन्धावच्छिन्नतत्प्रागभावाभावो विशेषणतासम्बन्धेनास्ति, इति वा व्याप्तौ व्यभिचारात्, घटोत्पत्तिपूर्वकाले घटात्यन्ताभाव-घटप्रागभावयोः कालिकसम्बन्धेन सत्त्वादित्यर्थः। अत्र प्रथमव्याप्तौ घटोत्पत्तिपूर्वकालान्यकालावच्छिन्नतन्त्वादिर्दृष्टान्तः, घटोत्पत्तिपूर्वकालावच्छिन्नः कपालादिः पक्षः। द्वितीयव्याप्तौ तन्त्वाद्यवच्छिन्नो घटोत्पत्तिपूर्वकालान्यकालो दृष्टान्तः, कपालावच्छिन्नः पक्षः। उभयत्र घटात्यन्ताभावो घटप्रागभावाभाव इति साध्यम्। घटोत्पत्तिपूर्वकाले तत्र प्रथमे दृष्टान्ते व्याप्यवृत्तितया कालानवच्छिन्नत्वेनासिद्धिः, द्वितीये घटकाल आपादकापाद्ययोः सिद्धावप्यापाद्यस्य व्याप्यवृत्तितया देशानवच्छिन्नत्वेनासिद्धिः, इत्यतः प्रकारान्तरेण व्याप्तिमाह—*सदेति* ॥ पूर्वकालावच्छिन्नो निरवच्छिन्नो वा यद्देशे यस्यात्यन्ताभावः, तद्देशे तत्प्रागभावाभावः; यथा तन्तौ घटात्यन्ताभावघटप्रागभावाभावौ, इति व्याप्तावित्यर्थः। सर्वकालावच्छिन्ने निरवच्छिन्ने वा कपाले पक्षे घटमिथ्यात्वघटकतयाऽभ्युपगतेन घटात्यन्ताभावेनाऽऽपादकेन घटप्रागभावाभाव आपिपादयिषित इति पर्यवसितम्, तत्रापि व्यभिचारः; घटोत्पत्तिपूर्वकाले घटप्रागभावप्रत्ययेन कपाले घटप्रागभावाभावस्याव्याप्यवृत्तित्वेन सर्वकालावच्छिन्नत्व-निरवच्छिन्नत्वयोरभावात्। अत्र पक्षान्तर्भावेणापि व्यभिचारो निश्चितत्वाद्‌ दूषणम्, बाधस्त्वत्र दोषो नोक्तः; आपत्तौ तस्यानुकूलत्वात्। 'इदानीमि'त्यस्य एतत्कालावच्छेदेन देशावृत्तित्वार्थकत्वेऽनेनैव देशे सामानाधिकरण्यसिद्धौ 'देशे त्वि'त्यनेन तत्र प्रमाणाभावोक्तेरनुपपत्तिरित्यतो व्याचष्टे—*इदानीमिति* । *इदानीं घटप्रागभाव इति* ॥ 'घटो भविष्यती'ति शब्दान्तराभिलाप्येयं प्रत्यक्षप्रतीतिर्यत्काले, तत्काल एवेदानीं घटात्यन्ताभाव इति प्रत्यक्षप्रतीतिरित्यनुभव इति

अद्वैतसिद्धिः

तदुभयसामानाधिकरण्ये न किंचिदपि प्रमाणमिति—वाच्यम् ; मिथ्यात्वानुमितेः श्रुतेश्च प्रमाणत्वात् ।

तरङ्गिणी

करण्ये न किंचिदपि प्रमाणमिति—वाच्यम् ; मिथ्यात्वानुमितेः श्रुतेश्च प्रमाणत्वात् । विषमसत्ताकयोरविरोधश्च-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्कालवृत्तिः । *सामानाधिकरण्ये = दैशिकविशेषणतयैकाधिकरण्ये । *प्रमाणत्वादिति* ॥ *एतेन*—घटादावधिष्ठानगतस्य सत्त्वस्यारोपोऽनादिदृढवासनासहितो दोषविधया तत्र मिथ्यात्वग्रहे प्रतिबन्धकः, इति

विट्ठलेशीयटिप्पणी

भावः । कालिकसम्बन्धावच्छिन्नसामानाधिकरण्ये प्रमाणोक्तेः पुनरुक्तापत्तिः, अतो व्याचष्टे—*दैशिकेति* । *मूले—न किञ्चिदिति* ॥ अत्यन्ताभावस्य प्रतियोगि-तद्ध्वंस-प्रागभावविरोधनियमस्यायाप्यनिराकरणात् कपाले घटोपादानत्वान्यथानुपपत्तिसिद्धप्रागभावविषयिकायाः प्रतीतेरन्यथानुपपत्तेः—'अस्मिन् कपाले घटो नास्ति' 'घटात्यन्ताभावोऽस्ति' इति प्रत्यक्षप्रतीतेरसिद्धेरिति भावः । एवं चैतावता घटध्वंस-प्रागभावान्यतरावच्छिन्ने कपाले त्रैकालिकघटात्यन्ताभावेऽप्रमाणशङ्कायां कृतायां तत्परिहारमाह—*मिथ्यात्वानुमितेरिति* ॥ *एतेन*—घटात्यन्ताभावावच्छिन्नकपाले घटप्रागभावे प्रमाणाकाङ्क्षायां मिथ्यात्वानुमितेरित्युक्तिर्जातिः, तथा तस्याविषयीकरणात्—*इत्यपास्तम्* ॥ *ननु*—कपाले घटादिप्रत्यक्षेण तद्विषयघटादिलिङ्गकेन घटादिविरुद्धतदत्यन्ताभावाभावग्राहकानुमानेन च प्रतिबन्धात् कथं घटात्यन्ताभावग्राहकमिथ्यात्वानुमितेरुदय इति ? अत आह—*श्रुतेश्चेति* ॥ "नेह नाने"त्यादिप्रपञ्चमिथ्यात्वग्राहकश्रुतेश्चेत्यर्थः । तस्याः स्वतःप्रमाणायाः सर्वतो (१) बलवत्त्वात् (२) तदनुगृहीतमिथ्यात्वानुमानस्याप्युक्तप्रत्यक्षानुमानाभ्यां बलवत्त्वमिति भावः । एतावता मिथ्यात्वानुमानेन कपालादौ सदा घटादिशून्यत्वसिद्धौ कपालादेर्घटाद्युपादानत्वानुपपत्तेः परिहारेऽप्यादिपदसूचितोक्तानुपपत्त्योरपरिहारेण न्यूनतां परिहर्तुमस्य मूलस्य तत्परिहारसूचकतामाह—*एतेनेति* ॥ घटादिमिथ्यात्वानुमितेः श्रुत्यनुगृहीतत्वेन प्रामाण्यबलवत्त्वकथनेनेत्यर्थः । *अनेन*—'घटः सन्' इत्यादिप्रत्यक्षस्यारोपत्वम्, उक्तानुमित्युत्पत्तावनुत्पादरूप उपमर्दः, तदुत्पत्तेः प्रागुत्पादश्च लभ्यते, इत्याशयेनाह—*घटादाविति* ॥ आरोपान्वयिविशेष्यकत्वं सप्तम्यर्थः । *अधिष्ठानगतसत्त्वस्येति* ॥ तादात्म्येन घटाद्यारोपविशेष्यसद्रूपब्रह्मधर्माबाध्यत्वरूपसत्त्वस्येत्यर्थः । परस्पराध्यासाभ्युपगमात् सद्रूपब्रह्मणोऽपि घटादौ तादात्म्येनारोपात् तद्धर्मसत्त्वस्याबाध्यत्वस्यारोप इति भावः । *यद्वा*—उक्तसद्रूपब्रह्मप्रतियोगिकतादात्म्यरूपसत्त्वस्येत्यर्थः, तेन ब्रह्मणो नानध्यस्तत्वसिद्धान्तासङ्गतिः । तन्मतेऽधिष्ठानसंसर्गाध्यास एव परस्पराध्यासघटक इति भावः । कपालादौ सत्त्वानुपरक्तघटप्रत्यक्षस्य घटाभावप्रत्यक्षे प्रतिबन्धकता न सम्भवति ; घटे बाधितत्वशङ्कया तज्ज्ञाने बाधितविषयकत्वरूपाप्रामाण्यसंशयास्कन्दितत्वात्, अतो घटादावबाध्यत्वस्य सत्तादात्म्यस्य वा भानमुक्तम् । जीवन्मुक्तीयघटाद्यभावप्रत्यक्षरूपे घटादिमिथ्यात्वग्रहे तदीयघटादिप्रत्यक्षस्य प्रतिबन्धकताप्रसङ्गादाह—*अनादिदृढवासनासहित इति* ॥ अनादित्वं दृढत्वे हेतुः, दृढत्वं च परोक्ष-प्रथमादिजातमिथ्याग्रहानुच्छेद्यत्वम् । वासना चेयमारोपसमानविषयिणी । जीवन्मुक्तस्य तु श्रुत्यनुमानजन्ये मिथ्यात्वनिश्चये मननेनाप्रामाण्यशङ्कानिरासाद् निदिध्यासनपरिपाकसहकारेणोक्तमिथ्यात्वनिश्चयेनोक्तवासनोच्छेदात् तदीयघटसत्त्वारोपस्य तदीयघटाद्यभावप्रत्यक्ष ऐन्द्रजालिकवद् न प्रतिबन्धकतेति भावः । प्रतियोगिसत्तानिर्णयस्य मिथ्यात्वग्रहप्रतिबन्धकतायामनादिदृढवासनाया अनङ्गत्वात्, *दोषविधये*त्युक्तम् । तदभावाभावत्वावच्छिन्नसत्त्वावच्छिन्नतद्वत्ताग्रहस्य स्वातन्त्र्येण प्रतिबन्धकतासूचनाय वा तदुक्तम् । लौकिकसन्निकर्षाजन्यतदभाव-

( १ ) अपौरुषेयत्वेनासम्भावितपुरुषदोषतया "यो होता सोऽध्वर्युरि"त्युपदेशशास्त्रस्यातिदेशशास्त्रापेक्षयेवानुमानादितः प्राबल्यमिति भावः । ( २ ) स्वयं दुर्बलाया अपि समाख्याया लिङ्गरूपप्रबलप्रमाणाश्रितायाः प्रकरणबाधकत्वस्य पूषानुमन्त्रणमन्त्रविनियोगस्थले दृष्टत्वादिति भावः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

घटादिप्रत्यक्षकाले चक्षुरादिना घटाभावादेर्न प्रत्यक्षम् ; अत एवोक्ताप्रमात्वव्यवहारोऽपि, मिथ्यात्वग्राहक-श्रुत्यादिनोक्तारोपस्योपमर्दे तु तस्य प्रत्यक्षमिति—*सूचितम्* ॥ किंच काल-देशयोरस्य वृत्तिस्तुल्ये-त्यनेनेदं सूचितम्—मन्मते कस्यापि केवलान्वयित्वं न स्वीक्रियत इत्यस्य वक्ष्यमाणत्वेन व्यतिरेकि-

विट्ठलेशीयटिप्पणी

वत्ताज्ञाने तद्वत्तानिश्चयत्वेन, तदिन्द्रियजन्यतदभाववत्ताज्ञाने तदिन्द्रियजन्यतद्वत्ताज्ञानत्वेन च प्रतिबन्धकत्वात् तदभाव-प्रत्यक्षत्वावच्छिन्नं प्रति तद्वत्ताप्रत्यक्षत्वेन प्रतिबन्धकत्वस्य पार्थक्यसूचनाय वा तदुक्तम् । *तदुक्तं सिद्धान्तलक्षणे दीधितिकृता*—"वृक्षत्वावच्छेदेन वृक्षे संयोगसामान्यास्वीकर्तृमते परितः प्रतियोग्युपलब्धेर्दोषाद्वा 'वृक्षे न संयोगः' इति नाध्यक्षमि"ति । *तत्र=घटादौ मिथ्यात्वस्य ग्रहे प्रत्यक्षरूपे बाधेन शाब्दबोधस्योत्पत्तिर्न प्रतिबध्यते, किंतूत्पन्ने तत्राप्रामाण्यं गृह्यत इति दीधितिकारोक्तेः, उक्तघटादिप्रत्यक्षसत्त्वेऽपि श्रुत्या घटादौ मिथ्यात्वनिश्चयो जायते । श्रुतिरूपप्रबलप्रमाणजन्यत्वाच्च तत्राप्रामाण्यग्रहो न जायते । चन्द्रप्रादेशिकत्वप्रत्यक्षे सत्यपि ज्योतिरागमेन बहु-योजनपरिच्छिन्नत्वबोधवत् श्रुत्युपोद्बलितानुमानादपि तथैव मिथ्यात्वनिश्चयो जायत इति ॥ ग्रहपदं प्रत्यक्षपरम् । मिथ्यात्वज्ञानं तु नाहार्यम् ; तद्घटकप्रतियोगिमत्त्वस्य वैज्ञानिकत्वात् । *घटादिप्रत्यक्षेति* ॥ भिन्नेन्द्रियजन्ययोरपि विरोधित्वे 'त्वगादिने'त्यादिः । समानेन्द्रियजन्ययोरेव तथात्वे त्वग्भिन्नचक्षुरादिनेत्यस्यात्रापकर्षः । *नन्वेवमपि* कपालादौ घटादिप्रत्यक्षशून्यकाले बाधकाभावादुत्पन्ने घटाद्यभावप्रत्यक्षेऽप्रमात्वव्यवहारः घटादिप्रत्यक्षकालीनः—'पूर्वमुत्पन्नमुत्तरमुत्पत्स्यमानं वा कपालं सदा घटाभाववदिति ज्ञानमप्रमा'—इत्याकारकोऽनुभूयमानः सिद्धान्ते न स्यात् ; घटादेर्मिथ्यात्वोपगमेन कपालादौ सदा घटाभावाभ्युपगमात्, घटादेस्तु कदाऽप्यनुपगमात्, इत्यत आह—अत एवेति* ॥ कपालादौ घटादिप्रत्यक्षकाले प्रातिभासिकघटादेरुपगमात् तन्मिथ्यात्वस्य चाग्रहादेवेत्यर्थः । तथा-चोक्तघटाद्यभावज्ञाने घटादिप्रत्यक्षकाले घटादिमति घटाद्यभावप्रकारकत्वरूपाप्रमाणत्वग्रहसंभवेनोक्तव्यवहारोपपत्ति-रिति भावः । *नन्वेवम्*—कपालादौ घटाद्यभावप्रत्यक्षं तत्प्रमात्वव्यवहारश्च कदाऽपि न स्यात् ; घटादिविषय-कानादिदृढवासनावशेन घटादिमानससाक्षिप्रत्यक्षस्य तत्प्रतिबन्धकस्य तदप्रमात्वग्राहकस्य सर्वदा संभवात्, एवं जीवन्मुक्तस्य निष्प्रपञ्चब्रह्मसाक्षात्कारो न स्यात् ; तस्य चक्षुरादिनाऽपि प्रपञ्चसाक्षात्कारसंभवात्, इत्यत आह—मिथ्यात्वग्राहकश्रुत्यादिनेति* ॥ साधनचतुष्टयसंपन्नस्य श्रवण-मनन-निदिध्यासनपरिपाकसहकृतमिथ्यात्वग्राहकश्रुत्या प्रपञ्चमिथ्यात्वनिश्चयेनेत्यर्थः । उक्तविधश्रौतप्रपञ्चमिथ्यात्वनिश्चयं प्रत्युक्तप्रपञ्चप्रत्यक्षस्य सवासनस्याप्यप्रतिबन्धकत्वस्य तदप्रामाण्याग्राहकत्वस्य चानुपदमुक्तत्वादिति भावः । *उक्तारोपस्य=कपालादौ घटादिसत्त्वप्रत्यक्षरूपारोपस्य । *उपमर्द इति* ॥ प्रथमं भ्रमत्वग्रहरूप उपमर्दः । ततः प्रपञ्चमिथ्यात्वप्रत्ययाभ्यासेन तद्वासनादार्ढ्यम्, इति तद्वि-परीतप्रपञ्चसत्त्ववासनानिवृत्तिरूपः, तावत्पर्यन्तं कदाचिदुक्तारोपोत्पत्तिः, परन्तु तत्र भ्रमत्वग्रहात् तेन प्रतिबन्धा-भावात् कदाचिद्‌ घटादेरप्यभावप्रत्यक्षमपि, परन्तु विपरीतवासनावशेन तत्रापि भ्रमत्वग्रहः, उक्तरीत्या प्रपञ्च-मिथ्यात्वदृढवासनाबलेन तत्सत्त्ववासनानिवृत्त्युत्तरं तु प्रपञ्चप्रत्यक्षारोपस्यानुत्पादरूप एवोपमर्दः, इति क्व तदधीनस्तद-भावज्ञानधर्मिको भ्रमत्वग्रहः ? इति बोध्यम् । *तस्य=घटादिरूपप्रपञ्चाभावस्य । *प्रत्यक्षमिति* ॥ भ्रमत्वज्ञाना-नास्कन्दितं प्रत्यक्षमित्यर्थः । एवं जीवन्मुक्तानां निष्प्रपञ्चब्रह्मसाक्षात्कारोऽपि निर्विचिकित्सो निर्बाध इति भावः । *ननु*—*एतावता समवायादिना घटादिमति कपालादौ तत्संबन्धावच्छिन्नप्रतियोगिताकस्तदभावः साधितः, स च प्रतियोगिविरोधमनुपमृद्य ध्वंस-प्रागभावविरोधमात्रमुपमृद्य ध्वंस-प्रागभावकालावच्छेदेन कपालादौ कालिकाव्याप्य-वृत्तिरस्तु । नच—काले कालिकसंबन्धेन घटादिप्रतियोगि-तदभावयोः सह संभववद्‌ देशे दैशिकसंबन्धेन तयोः सह संभवोऽस्तु, इत्युक्तं मूल एवेति—वाच्यम् ; काले तयोर्विभिन्नदेशावच्छेदेनैवाभ्युपगमसंभवेन दृष्टान्तासंप्रतिपत्त्या तदुक्तौ विवादात्, इति सिद्धसाधनाशङ्कां तन्मूलाभिप्रायवर्णनेन परिहरति—*किंचेति* ॥ *काल-देशयोरिति* ॥ 'काले सह संभववद्‌ देशेऽपि सह संभवाविरोधादि'ति मूलोक्तेनेत्यादिः । सर्वदृश्यानां व्यतिरेकित्वं न संभवति ;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वस्तुमात्रस्य परेणापि कालेऽत्यन्ताभावस्वीकारेण च सर्वदृश्यानां व्यतिरेकित्वेन कालेऽत्यन्ताभावस्तावदवश्यं वाच्यः। तस्य च किंचिद्देशावच्छेदेन काले किंचित्कालावच्छेदेन देशे वृत्तिरिति स्वीकारे देश-कालनिष्ठानामनन्तावच्छेदकत्वव्यक्तीनां कल्पने महागौरवाद् घटादेरत्यन्ताभावः सर्वत्रैव स्वीक्रियते। *अत एव*—सम्बन्धो न तत्प्रतियोगितावच्छेदकः—*इत्युक्तम्*॥ *नच*—'एतत्काले गृहे घटो नास्ती'ति धीः कालादिनिष्ठमवच्छेदकत्वं गाहत इति—वाच्यम्; गृहादिनिष्ठाया घटाद्यधिकरणताया अवच्छेदकत्वस्याभावं हि सा तत्कालादावबगाहते, नतु घटाद्यभावाधिकरणतायां गृहादिनिष्ठायामवच्छेदकत्वं तत्कालादौ। अत एव 'वृक्षे मूले न संयोगः' इत्यादिधीरपि वृक्षादिनिष्ठसंयोगाद्यवच्छेदकत्वाभावं मूलादौ गाहते। *नन्वेवम्*—कार्याव्यवहितप्राक्कालावच्छेदेन कार्य-

विट्ठलेशीयटिप्पणी

प्रमेयत्वादीनां केवलान्वयित्वात्, अत उक्तम्—*मन्मते कस्यापीति*॥ निर्धर्मके ब्रह्मणि प्रमेयत्वादीनामभावाङ्गीकारादिति भावः। सर्वदृश्यानां दैशिकव्यतिरेकित्वेऽपि तद्वति काले तदत्यन्ताभावः केन स्वीक्रियत इति? अत आह—*व्यतिरेकिवस्तुमात्रस्येति। *परेण = नैयायिकेन॥ *काल इति*॥ कालिकसंबन्धेन प्रतियोगिमत्यपि। प्रतियोग्यनधिकरणदेशावच्छेदेनेति शेषः। *सर्वदृश्यानाम्=घट-प्रमेयत्वादीनाम्। मिथ्यात्वसिद्धये—*सर्वेति*॥ *काले = तत्तद्दृश्यवत्यपि। *वाच्यः*॥ परेण। तद्दृष्टान्तेन दैशिकसंबन्धेन घटादिप्रतियोगिमति देशे तदत्यन्ताभावस्त्विदानीं मया साध्यत इति शेषः। *तस्य=घटादिदृश्यात्यन्ताभावस्य। *किंचिद्देशेति* दृष्टान्ते; प्रतियोग्यनधिकरणदेश इत्यर्थः। *किंचित्कालेति* दार्ष्टान्तिके; प्रतियोग्यनधिकरणकाल इत्यर्थः। *अत्यन्ताभाव इति*॥ स च काले कालिकसंबन्धावच्छिन्नप्रतियोगिताकः, देशे दैशिकसंबन्धावच्छिन्नप्रतियोगिताको विशेषणतासंबन्धेन वर्ती बोध्यः। *'सर्वत्रैवे'ति*॥ सर्वदेशावच्छेदेन काले, सर्वकालावच्छेदेन देश इत्यर्थः। केषांचित् प्रतियोग्यवच्छेदकत्वम्, केषांचिदभावावच्छेदकत्वं चापेक्ष्य सर्वेषामभावावच्छेदकत्वे लाघवादिति भावः। वस्तुतस्तु—व्याप्यवृत्तेरवच्छेदकानुपगमात् सर्वत्रेत्यस्य निरवच्छिन्न इत्यर्थः। एवं च लाघवं सम्यगुपपद्यते। *नन्वेवम्* घटादेरत्यन्ताभावस्यैव विरोध इति वक्तव्यम्, तत्राह—*अत एवेति*॥ तत्संबन्धानां तदभावप्रतियोगितावच्छेदकत्वकल्पन उक्ततदभावभेदकल्पने च गौरवादित्यर्थः। एवं चैक एव घटादेरत्यन्ताभावः सर्वदेशकालेषु सर्वकाल-देशावच्छिन्नवृत्तिको निरवच्छिन्नवृत्तिको वा मिथ्यात्वघटकतया सिध्यन् घटमुन्मूलयतीति भावः। कालिकाव्याप्यवृत्तित्वप्रत्ययमन्यथोपपादयितुं शङ्कते—*नचैतत्काल इति*॥ नच—इयं धीरेतद्गृहनिष्ठघटस्य कालिकसंबन्धावच्छिन्नाभावमेतत्कालेऽवगाहते, इत्येतत्कालावच्छिन्ने गृहे घटकालावच्छिन्नगृहाद् भिन्ने घटाभावावगाहिनी चेयं धीरिति पूर्वोक्तप्रकारद्वयम्—शङ्क्यम्; प्रकारान्तरस्य वक्ष्यमाणत्वादिति भावः। *अवच्छेदकत्वमिति*। गृहनिष्ठाया घटाभावाधिकरणताया इति शेषः। *अवच्छेदकत्वस्याभावम्=अवच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताकाभावम्, तेन नाप्रसिद्धिरिति केचित्, तन्न; संबन्धस्याभावप्रतियोगितावच्छेदकताया इदानीमेव निराकृतत्वात्। नचाप्रसिद्धिः; 'इदानीं गृहे घटः' इत्यारोपविषयतयाऽऽध्यासिकस्य प्रसिद्धेः; अन्यथा सप्तम्यन्तोल्लेख्यावच्छेदकत्वरूपसंबन्धाप्रसिद्धौ तदवच्छिन्नप्रतियोगिताकाभावस्य दुर्वचत्वात्। तथाच यथाश्रुतमेव सम्यक्। *परमते* एतत्काले प्रसिद्धस्य घटाधिकरणतावच्छेदकत्वस्य कालान्तरेऽभावः, *सिद्धान्तिमते तु* तत्कालेऽपि घटादि येन येन संबन्धेन यत्र यत्र प्रतिभासते, घटादिप्रतियोगिकतत्तत्संबन्धमिथ्यात्वसिद्ध्या घटादिमिथ्यात्वसिद्ध्या च तत्र तत्र तत्तत्संबन्धैः घटवत्ताविरोधी, परेषां तत्तत्संबन्धावच्छिन्नघटाभावकूट-संबन्धसामान्यावच्छिन्नघटाभावस्थानीयः संबन्धानवच्छिन्नप्रतियोगिताको घटसामान्याभावो विषयीक्रियमाणः तत्र तत्र तत्तत्संबन्धेन घटवत्तामुपमर्दयति; यथा तुच्छाभावः, इयांस्तु विशेषः—घटादिः सत्त्वेन प्रतीयते, न तुच्छमिति भावः। दैशिकाव्याप्यवृत्तित्वप्रसङ्गं मूले पूर्वमन्यथोपपादितमपीदानीं प्रकारान्तरेणान्यथोपपादयति—*अत एवेति*॥ अभावस्य निरवच्छिन्नवृत्तिकत्वादेवेत्यर्थः॥ *एवम्=

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यद्देशे वर्तमानस्याभावस्याप्रतियोगित्वे सत्यनन्यथासिद्धत्वं कारणत्वमित्यादिव्यवहारो नोपपद्यत इति—चेत्, *नोपपद्यताम्* ; तथापि यत्क्षणावच्छेदेनोत्पद्यमानस्य कार्यस्य यद्देशे सम्बन्धः, तत्क्षणाव्यवहितपूर्वक्षणावच्छेदेन कारणस्य तद्देशे सम्बन्धः, इति यत् कार्यनिष्ठं कारणस्य सामानाधिकरण्यम्, तदवच्छेदकघटत्वकत्वरूपस्य दण्डादिव्याप्यत्वस्य घटादिकार्ये सत्त्वेन स्वसामानाधिकरण्यावच्छेदकघटत्वरूपस्य घटकारणत्वस्य दण्डादौ व्यवहार उपपद्यत एवेति दिक् ।

बिट्ठलेशीयटिप्पणी

काल-देशयोर्देश-कालनिष्ठाभाववत्ताया अवच्छेदकत्वानुपगमे । घटादिमति कालान्तरावच्छेदेन दण्डादेरभावसत्त्वाद् घटादिकारणत्वव्यवहारानुपपत्तिः, अतः—*कार्याव्यवहितप्राक्कालावच्छेदेनेत्युक्तम्* ॥ *नोपपद्यत इति* ॥ उक्ताभाव उक्तकालावच्छिन्नत्वासंभवादिति भावः । इष्टापत्त्या परिहरति—*नेति* । तर्हि कारणत्वव्यवहारस्य को विषय इति ? अत आह—*तथापीति* ॥ स्वसामानाधिकरण्येत्यादि उपपद्यते । एवेत्यन्तेनान्वयः । तस्य अनन्यथासिद्धत्वसहितस्येत्यादिः । तेन रासभे घटकारणत्वव्यवहारो नेति बोध्यम् । स्वम्=दण्डत्वावच्छिन्नम् । घट-दण्डपदे घटत्व-दण्डत्वावच्छिन्नपरे । ईदृशं घटत्वावच्छिन्नकारणत्वं रासभत्वावच्छिन्नसाधारणम् ; आधेयतारूपसामानाधिकरण्यस्यावच्छेदकवत्ताया रासभसाधारणत्वात् । यदि स्वविशिष्टान्यावृत्तित्वविशिष्टत्वं स्वसामानाधिकरण्ये विशेषणम्, तदा घटेष्वपि दण्डवदन्यवृत्तित्वसत्त्वेन तदभावविशिष्टसामानाधिकरण्यावच्छेदकत्वस्य घटत्वेऽसंभवेन दण्डत्वावच्छिन्नेऽपि निरुक्तघटत्वकत्वस्यासत्त्वेनोक्तव्यवहारानुपपत्तिरित्यत आह—*कार्यनिष्ठमिति* ॥ घटादिनिष्ठं यद् दण्डादिसामानाधिकरण्यम्, *तदवच्छेदकघटत्वादीत्यर्थः । अवच्छेदकत्वं चेदमनतिप्रसक्तत्वनियतं स्वरूपसंबन्धविशेषरूपम्, दीधितिकारोक्तं पारिभाषिकं वा, तेन रासभत्वावच्छिन्ने नोक्तव्यवहारापत्तिरिति भावः । *ननु*—एवमपि घटादौ स्वसंयोगसामानाधिकरण्यनियमाद् निरुक्ततदवच्छेदकताश्रयघटत्वसत्त्वात् स्व-स्वसंयोगकारणत्वव्यवहारापत्तिः, इत्यत आह—*यत्क्षणावच्छेदेनेति* ॥ उत्पद्यमानस्येति विशेषणात्, *यत्क्षणः=कार्योत्पत्तिक्षणः, तदवच्छिन्नः=कार्यस्य कार्यतावच्छेदकघटत्वादिविशिष्टप्रतियोगिकश्चक्रादिरूपयद्देशानुयोगिकः कार्यतावच्छेदकसंबन्धः, तत्क्षणाव्यवहितपूर्वक्षणावच्छिन्नः कारणतावच्छेदकदण्डत्वादिविशिष्टप्रतियोगिकश्चक्रादितद्देशानुयोगिकः कारणतावच्छेदकसंबन्ध इति व्यवहारविषयीभूतं यदित्यर्थः । कारणतावच्छेदकदण्डत्वादिविशिष्टप्रतियोगिकघटाद्युत्पत्तिपूर्वक्षणावच्छिन्नसंयोगादिसंबन्धवच्चक्रादिदेशानुयोगिकः स्वोत्पत्तिक्षणावच्छिन्नः संयोगादिसंबन्धः, घटादिनिष्ठं तत्प्रतियोगित्वरूपमिति यावत् । अभावसंबन्धस्यैव देश-कालावच्छिन्नत्वानुपगमः, भावसम्बन्धस्य तु तदुपगन्तव्यमेव ; अन्यथा 'अग्रे वृक्षः कपिसंयोगी' इति प्रतीतिरिव 'मूले वृक्षः कपिसंयोगीति प्रतीतिरपि प्रमा स्यादिति हृदयम् । संयोगेन दण्डादिव्याप्यं दण्डादिपूर्वभूतलादिसंबन्धं दण्डावयवं च प्रति दण्डादेः कारणतापत्तिः, अतः—*कार्याव्यवहितपूर्वक्षणावच्छिन्नत्वं* कारणसंबन्धे निवेशितम् । घटोत्पत्तिद्वितीयक्षणावच्छेदेन घटादिमति संयुज्यमानं घटादिव्याप्यं च घटादिकं प्रति घटादेः कारणतापत्तिः, अतः—*कार्योत्पत्तिक्षणावच्छिन्नत्वं* कार्यसंबन्धे निवेशितम् । केनचिद् रूपेण कारणनिवेशे दण्डत्वविशिष्टसामानाधिकरण्यावच्छेदकघटत्वकत्वाद् नीलत्वविशिष्टदण्डे घटकारणताव्यवहारापत्तिः, अतः—*कारणतावच्छेदकनिवेशः* ॥ तथाच नीलविशिष्टदण्डसामानाधिकरण्यावच्छेदकत्वस्य निरुक्तस्य घटत्वेऽसत्त्वाद् न नीलदण्डे घटकारणत्वापत्तिः । पृथिवीत्वविशिष्टसामानाधिकरण्यावच्छेदकत्वस्य घटत्वे सत्त्वेऽपि दण्डत्वव्यापकपृथिवीत्वेन दण्डस्यान्यथासिद्धत्वाद् न पृथिवीत्वविशिष्टे घटकारणत्वापत्तिः, केनचिद्रूपेण कार्यनिवेशे दण्डत्वविशिष्टसामानाधिकरण्यावच्छेदकघटत्वकत्वाद् दण्डत्वविशिष्टे द्रव्यत्वावच्छिन्नकारणत्वापत्तिः, अतः—*कार्यतावच्छेदकनिवेशः* । तथाच द्रव्यत्वे दण्डसामानाधिकरण्यावच्छेदकत्वाभावाद् नोक्तापत्तिः । एवं च संयोगघटितसामानाधिकरण्यावच्छेदकत्वस्य घटत्वेऽभावाद् नोक्तापत्तिः ; संयोगेन समवायेन च दण्डवति भूतलादौ दण्डावयवे च घटस्य समवायेन संयोगेन च नियमेनासत्त्वात् । अत्र बहुशातिप्रसङ्गः कारणतावारीरे नियमनिवेशनेन वारयितुं

**न्यायामृतसौगन्ध्यम्**

**यत्तु—अबाध्यत्वोपलक्षिततादात्म्यस्वरूपेणात्यन्ताभावाधिकरण एव प्रतीयमानत्वं तत्। तच्च स्वस्मिन्नपि स्वरूपसम्बन्धेनास्त्येव। तत्तत्त्वान्यतरत्वेनेति वाऽर्थः। तेन तादात्म्ये नाव्याप्तिः। सत्त्वावच्छिन्नस्वप्रकारतानिरूपितविशेष्यताव्यापकात्यन्ताभावकत्वम्, सत्त्वावच्छिन्नस्वाधिकरणताव्यापकात्यन्ताभावत्वम्, स्वसमानाधिकरणस्वावच्छिन्नाधिकरणताव्यापकतावच्छेदकयद्धर्मावच्छिन्नात्यन्ताभावत्वं वा तद्वत्त्वम्—इति, तन्न; शुक्तिरजतादौ शुक्त्याद्यवच्छिन्नस्य शुक्तिसमसत्ताकस्यैव तादात्म्येनाबाध्यत्वोपलक्षिततादात्म्याभावेन तेन प्रतीयमानत्वासंभवात्, शुद्धचितस्त्वयैवानैन्द्रियकत्वाङ्गीकारात्।**

**सौगन्ध्यविमर्शः**

(१) "इदं रजतं सत्" इति शुक्तौ प्रतीयमानं रजतं वस्तुगत्या शुक्ते रजताभावाधिकरणत्वात् स्वभावाधिकरणे सत्त्वेन व्यवहारकालाबाध्यतादात्म्येनानेकसत्तावादे कालत्रयाबाध्यतादात्म्येनैकसत्तावादे च प्रतीयत इति ह्यद्वैतप्रक्रिया। तथाच शुक्तिरजतादावबाध्यत्वोपलक्षिततादात्म्याभावेनाव्याप्तिकथनं सौगन्ध्यकाराणामनुपपन्नमेव। न हि वयमापेक्षिकाबाध्यत्वोपलक्षिततादात्म्यमप्यसत ऊरीकुर्मः, तूलाज्ञानाकार्यत्वादसतः। तूलाज्ञानकार्यस्यापेक्षिकाबाध्यत्वोपलक्षिततादात्म्यम्, मूलाज्ञानकार्यस्य तु कालत्रयाबाध्यत्वोपलक्षिततादात्म्यमिति खलु सिद्धान्तः। एतेन—आपेक्षिकाबाध्यत्वोपलक्षिततादात्म्येन प्रतीयमानत्वमित्युक्तावसत्यतिव्याप्तिरिति—परास्तम्; अनुक्तोपालम्भनत्वात्। तत्र ब्रह्मणस्तादात्म्यस्य वाऽप्रसिद्धया तत्र न ब्रह्मणस्तादात्म्येन प्रतीयमानत्वम्, इति कथं वा ब्रह्मण्यतिव्याप्तिरिति सौगन्ध्यानुयायिन एव वदन्तु। यत्तु—प्रपञ्चे तत्संबन्धस्य मिथ्यात्वेन तदभावसत्त्वात्, "स एवाधस्तादि"त्यादिना स्वाधिकरणताप्रतीतेश्च ब्रह्माभावाधिकरणप्रसिद्ध्यादिकं सौगन्ध्य उपपादितम्, तत्रेदमालोचनीयम्—किं ब्रह्मणः सत्त्वेन भवदभिमते स्वाभावाधिकरणे प्रपञ्चे प्रकारतया भानम्? उत विशेष्यतया? आद्ये तु—प्रपञ्चस्यानधिष्ठानत्वेन ब्रह्मणः स्वरूपत आरोपितत्वाभावेन न ब्रह्मणः सत्त्वेन प्रकारतया भानम्, इति न तत्रातिव्याप्तिः। द्वितीयेऽपि सत्त्वावच्छिन्नप्रकारतानिरूपितविशेष्यताव्यापकाभाववत्त्वस्यैव प्रकृतमिथ्यात्वरूपत्वाद् नातिव्याप्तिः। अत एव प्रपञ्चे सत्त्वावच्छिन्नप्रकारतानिरूपितविशेष्यताव्यापकब्रह्माभावाभावाद् ब्रह्माभाववत्त्वेन न प्रपञ्चग्रहणं संभवति। वस्तुतस्तु—प्रकृतेनैवानुमानेन मिथ्यात्वसाधनात् साम्प्रतं ब्रह्माभाववत्त्वस्य ब्रह्मसंबन्धमिथ्यात्वनिर्णयात् पूर्वमसिद्धया कथं ब्रह्माभाववत्त्वेन प्रपञ्चग्रहणम्? इति ब्रह्माभावाधिकरणमप्रसिद्धमेव; प्रतीयमाने प्रपञ्चे सद्रूपेण ब्रह्मणोऽपि प्रतीयमानत्वाद् ब्रह्माभावोऽपि प्रतीयमानः प्रपञ्चस्यानधिष्ठानत्वेन तद्रूपत्वासंभवादसत्कल्प एव। निर्गुणवाक्यानन्तरसगुणश्रुत्यर्थनिर्णयार्थत्वादस्य लक्षणस्य प्रपञ्चाभाववत्त्वेन सत्पदार्थ एव विवक्ष्यते, न तु ब्रह्माभाववत्त्वेन प्रपञ्चः, इति ब्रह्ममिथ्यात्वे न संभावनामात्रमपि, इति नानुमानेन तत्सिद्धिमादायार्थान्तरावकाशः। न हि "अस्थूलम्" इत्यादिवाक्येऽस्थूलादिपदेन प्रपञ्चस्य ग्रहणम्, सृष्टेः पूर्वं सद्रूप इदंपदार्थः प्रपञ्चः आसीदिति कल्पनायां सृष्टिवैयर्थ्यापत्तेः। अस्मन्मते तु—इदंपदार्थस्य सद्रूपब्रह्मात्मनाऽवस्थानं कारणात्मनाऽवस्थानं वा सृष्टेः प्राक्, अनन्तरं तु स्वरूपेणापीति सुष्ठु लगति। तथाच निर्णीतं ब्रह्मणः स्वरूपतः सद्रूपत्वम्। प्रपञ्चस्य तु सद्रूपेण प्रतीयमानस्य सद्रूपत्वं किं स्वरूपतः? आहो ब्रह्मतादात्म्येन? इति संशयनिरासार्थं खलूक्तानुमानम्। तथाच ब्रह्माभाववत्त्वेन प्रपञ्चं गृहीत्वा ब्रह्ममिथ्यात्वपरतयाऽर्थान्तरस्य न कोऽप्यवसरः; यतः—ब्रह्मणि सद्रूपत्वं निर्णीतं श्रुत्यैव, इति प्रपञ्चाधिकरणतायाः सत्त्वावच्छिन्नत्वं न सन्दिग्धमपि। "स एवाधस्तादि"त्यादिकमपि ब्रह्मणि सर्वेषां कल्पितत्वेन तादात्म्यमेव बोधयति। न हि तादात्म्येन यत्र यत् प्रतीयते, तत् तस्याधिकरणम्, इदंतादात्म्येन प्रतीयमानस्य रजतस्येदमधिकरणतापत्तेः, किन्तु—यत्र यत्तादात्म्यम्, यच्चाध्यस्तम्, तदेव तस्याधिकरणम्, यथा शुक्ती रजतस्याधिकरणम्, ब्रह्म प्रपञ्चस्य, न तु रजतं शुक्तेः, प्रपञ्चो वा ब्रह्मणः, इति न कोऽपि दोषः। एतेन—प्रपञ्चस्यासत्त्वेन ब्रह्माधिकरणतायाः सत्त्वावच्छिन्नत्वमिति सिद्धान्तोऽपि—व्याख्यातः। ब्रह्मवत् प्रपञ्चस्यापि सत्त्वानिर्णयादित्येव 'प्रपञ्चस्यासत्त्वेने'त्यनेन विवक्षणात्। एतेन—प्रपञ्चमिथ्यात्वसिद्धौ तस्य सत्त्वाभावसिद्धिः, तत्सिद्धौ ब्रह्मण्यतिव्याप्त्यभावेन मिथ्यात्वसिद्धिरित्यन्योन्याश्रय इति सौगन्ध्योक्तं—परास्तम्; न हि मिथ्यात्वसिद्ध्यधीना प्रपञ्चसत्त्वाभावसिद्धिः; किन्तु तदबाध्यत्वग्राहकप्रमाणाभावात्। व्यक्तीकरिष्यते चेदं सत्त्वस्य प्रत्यक्षग्राह्यत्वपरीक्षणावसरे निबन्ध एवोत्तरत्र। सति चैवं नान्योन्याश्रयः, नापि वा ब्रह्मण्यतिव्याप्त्या प्रपञ्चमिथ्यात्वासिद्धिः। ब्रह्मण्यतिव्याप्त्या खल्वाभाससाम्यं समापतति। न चाभाससाम्यं प्रकृतानुमानदूषणम्, किन्तु सिद्धान्तान्तरभङ्गापादनम्। तत्र च

अद्वैतसिद्धिः

विषमसत्ताकभावाभावयोरविरोधः पूर्वमुपपादितः। नच—असत्यतिव्याप्तिः; स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वस्य विवक्षितत्वात्। नच—"तद्धैक आहुरसदेवेदमग्र आसीदि"ति

तरङ्गिणी

पूर्वमुपपादितः। नचासत्यतिव्याप्तिः; स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वस्य विवक्षितत्वात्। नच—"तद्धैक आहुरसदेवेदमग्र आसीदि"त्यादिश्रुत्याऽसतः सत्त्वप्रतीतेस्तत्रातिव्याप्तिर्दुरुद्धरेति—वाच्यम्; "सदेवे-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

समानसत्ताकयोर्भावाभावयोर्विरोधे स्वीकृतेऽपि न क्षतिः; मिथ्यात्वघटकाभावस्याधिष्ठानस्वरूपत्वेन प्रतियोगिभिन्नसत्ताकत्वात्, इति पूर्वोक्तं स्मारयति—*विषमेत्यादि*॥ *सत्त्वेनेति*॥ सत्त्वावच्छिन्नस्वप्रकारतानिरूपितधीविशेष्यताव्यापकात्यन्ताभावकत्वं वाच्यमित्यर्थः॥

न्यायामृतसौगन्ध्यम्

आपेक्षिकाबाध्यस्यापलक्षिततादात्म्येन प्रतीयमानत्वमित्युक्तावसत्यतिव्याप्तेः। अत एव प्रथमलक्षणं निरस्तम्, अत्र रूप्यमित्यध्यस्तेऽव्याप्तेः, अन्ततो ब्रह्मण्यतिव्याप्तेः, प्रपञ्चे तत्सम्बन्धस्य मिथ्यात्वेन तदभावसत्त्वात्। "स एवोपरिष्टादि"त्यादिनाऽधिकरणताप्रतीतेश्च॥ *नच*—प्रपञ्चस्यासत्त्वेन ब्रह्माधिकरणतायाःसत्त्वानवच्छिन्नत्वमिति—वाच्यम्; प्रपञ्चमिथ्यात्वसिद्धौ तत्र सत्त्वाभावसिद्धिः, तत्सिद्धौ ब्रह्मण्यतिव्याप्त्यभावेन मिथ्यात्वसिद्धिरित्यन्योन्याश्रयात्॥

सिद्धिव्याख्या

सतश्च न वैषम्यमिति ध्येयम्। विरोधेनानुमितश्रुत्योरेव बलवत्त्वं स्वरूपत इत्याशङ्क्याह—*विषमेति*॥ न च—लाघवेनात्यन्ताभावमात्रस्य प्रतियोगिसामानाधिकरण्यविरोधितेति—वाच्यम्; एकदैकत्र रजतप्रत्यक्ष-तदभावप्रत्यक्षप्रमाभ्यां गौरवस्य प्रामाणिकत्वेन समानसत्ताकात्यन्ताभावस्यैव प्रतियोगिसामानाधिकरण्यविरोधिताया वक्तव्यत्वादिति भावः। *नचासतीति*॥ असतः शशशृङ्गादेः स्वात्यन्ताभावाधिकरण एव शशादौ प्रतीयमानत्वादिति भावः। *स्वात्यन्तेति*॥ सत्त्वेन प्रतीयमानत्वस्य तत्राभावाद् न तत्रातिव्याप्तिरिति भावः। सत्त्वेन प्रतीतिरप्यस्ति, इत्यतिव्याप्तितादवस्थ्यं शङ्कते—*नच तद्धैक इति*॥

विट्ठलेशीयटिप्पणी

शक्यते, स तथैव वारणीयः। अन्याद्दशस्त्वन्यथासिद्धत्वेन; अन्यथासिद्धेरननुगतत्वादिति संप्रदायः॥ प्रपञ्चे मिथ्यात्वबोधकप्रकृतानुमानेन श्रुत्यनुगृहीतेन समानसत्ताकभावाभावयोर्विरोधमुपपाद्यैव मिथ्यात्वस्य साधयितुं शक्यत्वाद् मूले विषमसत्ताकभावाभावयोरविरोधस्मारणमत्र व्यर्थमित्याशङ्क्य, श्रुत्यनुग्रहमन्तराऽपि समानसत्ताकभावाभावयोर्विरोधमभ्युपगम्यापि मिथ्यात्वसिद्धिर्संभव इत्यभिप्रायेणोक्तस्मारणं सार्थकयति—*समानसत्ताकयोरिति*॥ 'स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वमि'ति लक्षणे प्रतीतिपदं यदि विकल्पाख्यवृत्तिसाधारणरूपेण ज्ञानाख्यवृत्तिमात्रपरम्, नतु तदवच्छिन्नचैतन्यपरम्, न वा विकल्पव्यावृत्तरूपेण ज्ञानपरम्; तदा शशविषाणादितुच्छेऽतिव्याप्तिं शङ्कते मूले—*नचासत्यतिव्याप्तिरिति*॥ उक्तप्रकारेण तु व्यावृत्तेः पूर्वमभिधानात् प्रकारान्तरेण परिहरति—*स्वेति*॥ अत्र स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वे तादृशाधिकरणमात्रवृत्तिसत्त्वप्रकारकप्रतीतिविशेष्यत्वं तादृशाधिकरणमात्रविशेष्यकप्रतीतिप्रकारत्वं वाऽर्थमाश्रित्य परिहारो न संभवति; सदसतोरुपरागाभावेन त्रिविधसत्ति असद्भानानङ्गीकारेऽपि तुच्छविशेष्यकतुच्छप्रकारकं 'शशविषाणं खपुष्पमि'ति शब्दजन्यं विकल्पमादायातिव्याप्तेर्दुर्वारत्वात्। एवं स्वप्रकारकप्रतीतिविशेष्यताव्यापकीभूताभावप्रतियोगित्वमिति निष्कर्षेऽपि, इत्यतो व्याचष्टे—*सत्त्वेनेतीति*॥ सत्त्वम्=सत्तादात्म्यम्, तादात्म्येन भासमानं सदेव वा। *व्यापकात्यन्ताभाव-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*सदेवेत्यादि* ॥ "सदेवे"त्यादिश्रुत्या यत्र यत्प्रकारकबोधो जन्यते, तत्र तदभावप्रकारकधीः—"असदेवे"त्यादिना बोध्यते । उक्तं हि छान्दोग्यभाष्ये—'असतः पदानभिधेयत्वेऽपि नञ्युक्तवाक्यस्य तदयुक्तवाक्यार्थधीविरोधिधीजनकत्वमानुभाविकमि"ति । *तत्रायं भावः—'सदेवे'त्यादिवाक्यं बौद्धानां तार्किकादीनां च मतनिरासार्थम् । बौद्धमते हि सुषुप्ताविव प्रलये सतोऽभावात् कारणं विनैव सुषुप्त्युत्तरजागराद्यक्षण इव सृष्ट्यारम्भकाल आद्यकार्योत्पत्तिः । यद्यद् अर्थक्रियाकारित्वरूपस्य सत्त्वस्याश्रयः, तस्य सर्वस्य क्षणिकत्वेन सृष्ट्यारम्भक्षण उत्पत्तिः कारणं विनैव वाच्या; तत्पूर्वं क्षणिकस्यार्थक्रियाकारिणोऽभावात् । तथाच सृष्ट्यारम्भ-

### विट्ठलेशीयटिप्पणी

कत्वम्=व्यापकात्यन्ताभावप्रतियोगित्वम् । तेन घटवति घटाभावमादाय न सिद्धसाधनम् । "सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्" "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम्" "तस्मादसतः सज्जायते" "कुतस्तु खलु सोम्यैवं स्यादिति होवाच" "कथमसतः सज्जायेतेति" "सत्त्वेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इति छान्दोग्ये सृष्टिश्रुतिः । तत्र मतान्तरनिरासपूर्वकं सतो जगत्कारणत्वं प्रतिपादयितुं सन्मात्रस्य प्रलयकालसत्त्वं 'सदेवे'ति प्रथमवाक्येनोक्तम् । तदुत्तरम्—'तद्धैके' इति द्वितीयवाक्येनासन्मात्रस्य प्रलयकालसत्त्वं प्रतिपाद्य, 'तस्मादि'ति तृतीयवाक्येनासतो जगत्कारणत्वमेकीयमतत्वेनोक्तम् । "कुतस्तु" इति चतुर्थेन तन्मतं निरस्य पञ्चमेन "सत्त्वेवे"त्यादिना सन्मात्रस्यैवाग्रसत्त्वमुपसंहृत्य जगत्कारणत्वं प्रतिपाद्यत इत्याशयेन मूले सत्त्वप्रकारकत्वनिवेशेऽप्युक्तातिव्याप्तितादवस्थ्यं शङ्कते—*नचेति* ॥ "तद्धैके" इति "तस्मादिति" वाक्यद्वयेनासतो जगत्कारणत्वमेकीयमतत्वेन नोपन्यस्यते, किंतु सतोऽग्रसत्त्वं निषिध्य जगत्कारणत्वाभाव आशङ्क्यत इत्यभिप्रायेण समाधत्ते—*सदेवेति* ॥ मूले—"सदेव सोम्येदमग्र आसीदि"त्यस्येत्यस्य=एतद्वाक्यप्रतिपाद्यस्यार्थस्येत्यर्थः । स चार्थोऽग्रकालसत्त्वविशिष्टमद्वितीयं सत्तादात्म्यापन्नं जगत्, अद्वितीयसत्तादात्म्यापन्नजगत्कर्तृकमग्रकालसत्त्वं वा; तदभावस्य "तद्धैक आहुरि"त्यादिवाक्येन बोधनेनोक्तातिव्याप्तिपरिहारेऽप्यभावस्य जगत्कारणता प्राप्नोति । *तस्मात्=असतो जगदभावात् सद् जायते इत्युत्तरवाक्यार्थात् । सा च बौद्धानामप्यनिष्टा; व्यावहारिकोक्तजगदभावस्य व्यावहारिकत्वात्, जगतो निरुपाख्योपादानताया एव तदभिमतत्वात्, इत्यतो व्याचष्टे—*सदेवेत्यादीति* ॥ *यत्र=इदंपदार्थे जगति, यत्प्रकारकः=असत्त्वप्रकारकः, अद्वितीयसत्प्रकारकश्च बोधो जन्यते, तत्र जगति तदभावप्रकारिकाऽसत्त्वाभावप्रकारिका, अद्वितीयसदभावप्रकारिका च धीर'सदेवे'त्यादिवाक्येन जन्यत इत्यर्थः । कारणं विनैवापूर्वमेव जगदुत्पद्यत इति तदभिप्रायः । एवं च 'असदि'ति वाक्येनासति सत्त्वप्रकारकप्रतीतेरजननाद् नासत्यतिव्याप्तिरिति भावः । *नन्वेवम्*—लक्षणातिव्याप्तिपरिहारानुरोधेन 'तद्धैके' इति श्रुतेरसज्जगत्कारणत्वमतनिरासार्थं तदनुवादित्वं स्वरसतः प्रतीयमानं परित्यज्य कथमुक्तार्थपरत्वं स्वीक्रियते ? इत्याशङ्क्य, श्री-भाष्यकारादृतोक्तश्रुतिव्याख्यानस्यादेवेत्याह—*उक्तं हि छान्दोग्यभाष्य इति* । *असतः पदानभिधेयत्वेऽपीति* ॥ *अनेन*—असतोऽलीकस्य जगत्कारणत्वमतानुवादः, तन्निराकरणं द्वयमप्यलीकमेवेति—*दर्शितम्* । *नञ्युक्तवाक्यस्येति* ॥ तदयुक्तवाक्यसमानानुपूर्वीकस्य 'घटोऽग्रे नासीदि'त्यादिवाक्यस्येत्यर्थः । *तदयुक्तवाक्येति* ॥ 'घटोऽग्र आसीदि'ति वाक्येत्यर्थः । *आनुभाविकमिति* ॥ एवं च लोकसिद्धमेवासदेवेति वाक्यस्य 'सदेवे'ति वाक्यार्थाभावबोधकत्वमिति । इदमुपलक्षणम्—'आसीदिति' कालसंबन्धः, 'एकमि'ति संख्यासंबन्धः, 'अद्वितीयमि'ति द्वितीयाभावसंबन्धः, एतेषामसत्यसंभवोऽपीत्यपि बोध्यम् । *ननु तर्हि—असज्जगत्कारणवादिनो बौद्धा इति प्रवादो विलुप्येत, इत्यत आह—*अयं भाव इति* ॥ *ननु*—कालत्रयाबाध्यं सत्पदार्थः, तस्य प्रलये कथमभावः ? इत्याशङ्क्य, तन्मते सत्पदार्थकथनेनोक्तं विवृणोति—*यद्यदिति* ॥ *क्षणिकस्येति* ॥ 'तत्पूर्वमि'त्यादिपञ्चम्यन्तार्थे हेतुः, स च 'कारणं विनैवे'त्यत्र । *वाच्येति* ॥ प्रलये विद्यमानादसतः कारणात् सर्गाद्यकार्योत्पत्तिरित्युक्तौ कारणत्वाभि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

काल एव जागराद्यक्षण इव विनाऽपि कारणं कार्यमुत्पद्यत इति स्वीक्रियते। *तदुक्तं पञ्चपाद्याम्*—'अकस्मादेव जागरादावैवमिति धीदर्शनादि'ति। *विवरणेऽप्युक्तम्*—'सुषुप्ते विज्ञानलेशस्याप्यभावादि'ति। तार्किकादि-मते तु प्रलये सदात्मकमपि जगत्कारणं यदासीत्, तद् नाद्वितीयम्; गुणादिरूपद्वितीयविशिष्टस्वभावत्वात्, तयोर्मतयोर्निरासाय—'सदेवे'त्यादिश्रुतिः। *इदम्*=जगत्। *अग्रे*=प्रलये। अव्याकृतावस्थमद्वितीय-सद्रूपकारणात्मकमासीदिति बोधयति। 'असदेवे'त्यादि वाक्यं तु इदं जगत् प्रलये नासीत्, न वा सदात्मकम्, किं त्विदानीमिवार्थक्रियाकारित्वेन न सदिति बोधयति। *ननु*—असदिति समासान्तर्गतं नञ्पदं सद्भिन्नस्यैव बोधकम्, न त्वग्रे सत्त्वादेरभावबोधकमिति—चेत्, *न*; 'अ-मा-नो-नाः प्रतिषेधवाचकाः' इत्यनुशासनात्, अकारस्य प्रकृते नञ्विकारत्वाभावेन—'असदि'त्यस्यासमासत्वात्। अत एव मूले नञेत्यस्या-कारेणेत्यर्थः। *ननु*—कथं नु खलु सौम्यैवं स्यात् कथमसतः सज्जायेते'त्युत्तरवाक्येनासतः कारणात् सतः कार्यस्य बौद्धस्वीकृतोत्पत्तेर्निराकरणात्—'सदेवे'त्यादिपूर्ववाक्येनासत्कारणात्मकतया प्रलये जगतः सत्त्व-मुच्यते, कार्याणां हि ध्वंसरूपा सूक्ष्मावस्था प्रलयकालव्यापकत्वादक्षणिकत्वादसती सृष्ट्यारम्भसमये स्थूल-

विट्ठलेशीयटिप्पणी

मसत्य कालवृत्तित्वेनार्थक्रियाकारित्वेन च सत्त्वापरया सन्मतसिद्धमसत्त्वमेव भज्यत इति भावः। *स्वीक्रियत इति* ॥ एतावतैवासज्जगत्कारणवादित्वप्रवादः सङ्गच्छते। आद्यजगत्कारणम्, असत्, अलीकम्; नास्तीति प्रवादादिति भावः। सुषुप्त्युत्तरक्षणे कारणं विनैव कार्योत्पत्तिरूपे दृष्टान्ते संमतिमाह—*तदुक्तं पञ्चपाद्यामिति* ॥ सुषुप्तौ सतोऽभाव इत्यत्र सामाह—*विवरणेऽप्युक्तमिति*। *तार्किकादिमते तु प्रलय इत्यादि* ॥ अयमेव तन्मते सद्वैकश्रुतिवाक्यार्थः। *जगत्कारणमिति* ॥ इदंपदार्थोऽयम्। *स्वभावत्वादिति* ॥ नाद्वितीयम्= कार्याभिन्नं न। कार्य-कारणयोर्भेदाभ्युपगमादित्यपि तन्मते तदर्थ इति बोध्यम्। *तस्मात् सतः*=अद्वितीयात् सतः, *जगद् नाजायत*, किंतु सद्वितीयादेव सतो जगदजायतेत्युत्तरश्रुतेस्तन्मतेऽर्थः। *इदम्*=परिदृश्यमाननाम-रूपात्मकमव्याकृतावस्थं नाम-रूपात्मनाऽनभिव्यक्तम्। *नासीदिति* ॥ कारणात्मना हि तदा जगता भवितव्यम्, जगत्तु प्रलयवृत्तिमूलकारणशून्यम्, असो नासीदित्यर्थः। *ननु*—सदेव तत्कारणं तद्रूपतया स्यात्, अत आह— *नवा सदात्मकमिति* ॥ प्रलय इत्यनुषङ्गः। सतस्तत्कारणस्यानुपगमात्, अकारणकसर्गाद्यकार्योत्पत्तेरुपगमादिति भावः। *ननु*—अग्रेदमग्रे नासीत्, इदं न सत्, इति वाक्यभेदेन—'अग्रेदं'पदावृत्तिप्रसङ्गः, अद्वितीयैक-सदात्मकजगदग्रे नासीदित्येकमेव वाक्यं चेत्, विशिष्टे कालवृत्तित्वाभावबोधनेऽपि विशेष्ये जगति सद्बाधेन विशेषणीभूतसदद्वैदस्यालाभापत्तिः, न ह्यग्राग्रकाले विशिष्टाभावस्य विशिष्टेऽग्रकालवृत्तित्वाभावनिर्वाहकत्वम्; विशेष्ये तद्बाधात्, न वा विशेष्याभाववति विशिष्टाभावो विशेषणाभावपर्यवसायीति—*चेत्*, *सत्यम्*; अगत्या आद्यपक्षस्योपगमात्। *इदानीमेवेति* ॥ जगदिति शेषः। *यद्वा*—अग्र इदं सत्र नासीत्, किन्तु इदानीमेव तदुभयविशिष्टमस्ति, इत्यर्थः। यत एवम्, तस्मात्, *असतः कारणात्*=कारणं विनैव, *जगदजायतेति*=सतः कारणात् जगत् नाजायत, किन्तु कारणं विनैवेति चोत्तरश्रुतिवाक्यार्थः। *सद्भिन्नस्यैवेति* ॥ अन्यथाऽसामर्थ्येन समासानुप-पत्तेरिति भावः। *प्रकृत इति* ॥ समासप्रकृतिभूत इत्यर्थः। नञ्विकारः, "नलोपो नञः" इत्यनेन। *ननु*—'न त्वसतः सत्त्व'मिति पुनरुक्तम्, इत्याशङ्क्य, उत्तरवाक्यपर्यालोचनया 'असदेवेति' वाक्यस्यासति सत्त्वबोधकत्वमेव सम्भवतीत्याशङ्क्या तदवतारयति—*ननु कथमिति* ॥ उत्तरवाक्यनिराक्रियमाणबौद्धमतानुवाद-कत्वेनेति शेषः। सतो जगतोऽसद्रूपत्वं कथम्? अत आह—*कार्याणामिति* ॥ पूर्वसृष्टकार्याणामित्यर्थः। भावरूपत्वेऽसत्त्वं न स्यात्, अतः—*ध्वंसरूपेति* ॥ *सूक्ष्मावस्थेति* ॥ 'परिणमते' इत्यनेनान्वयः। *तर्हि* अर्थक्रियाकारित्वरूपं सत्त्वमेव स्यात्, कथमसत्त्वम्? तत्राह—*प्रलयकालेति* ॥ प्रमाणो शब्दादि-रूपेत्यादिः। *अक्षणिकत्वादिति* ॥ क्षणिकत्वरूपव्यापकाभावाद् अर्थक्रियाकारित्वाद् अन्याहशब्दाद्यभावस्यादि-

### न्यायामृतसौगन्ध्यम्

*यत्तु* स्वाधिकरणावृत्तिर्यः, स्वानधिकरणवृत्ति तदन्यात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्। संयोगादौ दृष्टान्ते साध्यप्रसिद्ध्यर्थमवृत्त्यन्तम्। स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वेन पक्षविशेषणादव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वे पर्यवस्यति। अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वेन पक्षे विवक्षिते स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा साध्यं व्याप्यवृत्त्यत्यन्ताभावे पर्यवस्यतीति तत्त्वविवेकोक्तम्, *तन्न*; अभावाधिकरणात्मवादिप्राभाकरादिमते(१) सिद्धसाधनात्, तैरपि प्रपञ्चस्य ब्रह्मावृत्तित्वस्वीकारात्, मयाऽपि प्रपञ्चस्य स्वनिष्ठत्वस्वीकारेण ब्रह्मणि तदभावसम्भवाद् अभावातिरिक्तत्वानतिरिक्तत्वाभ्यामेव हि विवादः पर्यवसन्नः, नतु मिथ्यात्व-सत्यत्वाभ्यामेव॥ किञ्च "तद्धैक आहुरसदेवेदमग्र आसीदि"ति श्रुत्याऽसतस्सत्त्वप्रतीतिरुक्ता॥ नच "सदेवेदमग्र आसीदि"त्यस्यार्थस्याभाव एवात्र बोध्यते, अतश्चासतस्सत्त्वं विरोधादिति—वाच्यम्; विरोधगन्धाभावात्(२)॥

### सौगन्ध्यविमर्शः

रस्वामिनोक्तम्—यदि दुष्यति, दुष्यतु किं तेन दुष्टेनादुष्टेन वा प्रकृतं त्वया साधितं भवति? मदीयो वा पक्षो दूषितो भवति? इत्यादिकमेव समाधानमूहनीयम्। यथाच नामासत्साम्यम्, तथापि व्यक्तीकरिष्यत उत्तरत्र, इति न कोऽपि दोषः। अथ—ब्रह्मण इव प्रपञ्चस्य सत्यत्वमपि स्यात्, इति सत्यत्वविरोधिमिथ्यात्वासिद्ध्या सिद्धसाधनं मन्यते, तर्हीदमपि पुनरपि चर्व्यते—'यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि' इति। तत्र च सिद्धमुक्तमुत्तरमेव—विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य 'यदेव भवतां गोत्रं तदेव ममापि' इति वदतो वरस्य भ्राता भवानिति।

(१) लघुचन्द्रिकोक्तरीत्या स्वाश्रयावृत्तिः सन् स्वाधिकरणवृत्तिर्यः, तदन्यात्यन्ताभावप्रतियोगित्वमेव साध्यम्। अधिकरणात्मत्ववादेन प्रपञ्चाभावस्यावृत्तित्वेऽपि तु स्वाश्रयवृत्तित्वविशिष्टस्वानधिकरणवृत्तित्वस्य प्रपञ्चाभावेऽस्वीकारेण प्रपञ्चमिथ्यात्वसमन्वयो भवत्येव। अभावस्योपलक्षितत्वेन ब्रह्माभावस्याधिकरणात्मकम्, न तु विशिष्टत्वेन, इति न प्रपञ्चाभावस्यात्मवृत्तित्वमपि, इति न प्रभाकरमतरीत्याऽपि प्रपञ्चस्य सत्यत्वविरोधिमिथ्यात्वासिद्धिः। सत्यं प्राभाकरा भवन्तश्च ब्रह्मणि प्रपञ्चं न स्वीकुर्वन्ति; निमित्तकारणत्वाद् भवताम्, निमित्तकारणस्य कार्यानधिकरणत्वात्, स्वसमानाधिकरणाभावप्रतियोगित्वं च नोभयेऽपि मन्यन्ते, ब्रह्मणः प्रपञ्चाधिकरणत्वानङ्गीकारात्। यदि तु—तदपि स्वीक्रियते, तर्हि न सिद्धसाधनमिदम्। यदि भवतामपि सिद्धमेव, तर्हि न भवन्तो द्वैतिन इति॥

(२) असतोऽपि सतो यदि न विरोधः, तर्हि किमिति सतोऽप्यसत्त्वं नोरीक्रियते? इति ब्रह्मापि कथं न भवन्मतेऽसद्भवति? कथं वा भ्रमविषयाणामिव शुक्तिरूप्यादीनां प्रमाविषयाणां घटादीनामपि नासत्त्वमेव भवन्तः स्वीकुर्वन्ति? इति सत्यं भवन्त एव प्रच्छन्नबौद्धाः। असतोऽपि सत्त्वेनाविरोधेन सर्वमसत्कल्पं साधयितुं प्रवृत्तान् मन्ये भवत एवाधिकृत्य "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते" इति पाद्मपुराणवचनं प्रवृत्तम्। न ह्यद्वैतिनो भवन्त इव मायावादिनश्चासत्ख्यात्यवलम्बनेन च शास्त्रं प्रवृत्तं मन्यन्ते; अनिर्वचनीयख्यातिवादित्वात् तेषाम्। मायावादित्वं हि मायाशब्दप्रयोगमात्रेण तदर्थस्यान्यथाकरणेन च भवतामेव, नाद्वैतिनाम्। भवन्त एव हि परेश-जीवयोरैक्यम्—भिन्नयोरेव जीवेश्वरयोरैक्यं साधर्म्यापरपर्यायं मन्यन्ते, नाद्वैतिनः। अत्र परपदं हि नाद्वैतमते सप्रयोजनम्। भवन्तो हि—"अनन्योऽप्यन्यशब्देन" इति भेदाभेदयोरविरोधं स्वीकुर्वन्तः पूर्वापरविरुद्धं च बहु लपन्ति, इति "वेदार्थवन्महाशास्त्रं मायया यदवैदिकम्" इति हि भवतामेवाप्रसिद्धकाठरायणादिश्रुत्यवलम्बनेन "अपार्थं श्रुतिवाक्यानां दर्शयन् लोकगर्हितम्।" इत्युक्तप्रकारेण श्रुत्यर्थानामन्यथाकरणेन लोकनाशनार्थं प्रवृत्तानां विषयीकरोति, इति सुष्ठु गन्धो रक्षितः सौगन्ध्यकारैः स्वीये निबन्धेऽसतः सता विरोधगन्धस्याप्यभावकथनेन। अधिकमन्यत्र व्यक्तम्। "असदेवेदमग्र आसीत्" इत्यत्र सतोऽग्रेऽभावशङ्कैव क्रियते, नासतः सत्त्वम्; शब्देनाहार्यबोधस्य जननासम्भवात्। यथाच "नेह नानास्ती"त्यादौ नाहार्यबोधः, तथा बहुशो लघुचन्द्रिकादिषु प्रतिपादितम्। वस्तुतस्तु—"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति ही"ति न्यायो विरुद्धयोरविरोधप्रतीतिस्थल एवोपयुज्यते, नासदासीदित्यादौ; भवतां मते विरोधगन्धस्याप्यनङ्गीकारेणाहार्यबोधस्यैवात्रासम्भवात्। यदि कृत्वाचिन्तयाऽस्य ग्रन्थस्य प्रवृत्तिः, तर्हि सदसत्ख्यातिवादिताऽसत्ख्यातिवादिता वा, इति नासतोऽपि सत्त्वप्रतीतिवादः क्षोदक्षमः। यत्तु कुत्रचन "नेह नानास्ती"त्यादावप्याहार्यबोधस्वीकारः, स तु कृत्वाचिन्तयैवेति लघुचन्द्रिकादिष्वेव व्यक्तम्॥

अद्वैतसिद्धिः

श्रुत्याऽसतः सत्त्वप्रतीतेस्तत्रातिव्याप्तिर्दुष्परिहरेति—वाच्यम् ; "सदेवेदमग्र आसीदि"त्यस्यार्थस्याभाव एव नञा प्रतिपाद्यते, न त्वसतः सत्त्वम् ; विरोधात् ॥

तरङ्गिणी

दमग्र आसीदि"त्यस्यार्थस्याभाव एव नञा प्रतिपाद्यते, नत्वसतः सत्त्वम् ; विरोधात्, अतो नातिव्याप्तिः"—इति, *अत्रोच्यते* ; यदुक्तम्—प्रतियोगि-तदत्यन्ताभावयोः काल इव देशेऽप्यविरोध इति, तन्न ; तथा सति भावाभावयोर्विरोध एवोच्छिन्नकथः स्यात्, इति व्यावहारिक्यपि व्यवस्था न स्यात्, द्वैताद्वैतयोरविरोधापत्तेरद्वैत-

न्यायामृतकण्टकोद्धारः

नच—"सदेव सोम्येदमग्र आसीदि"त्यस्यार्थस्याभाव एव नञा बोध्यते, अतो नासतः सत्त्वेन प्रतीतिरिति—वाच्यम् ; मुख्यार्थपरत्वे बाधकाभावात् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कार्यरूपेण परिणमते । तेनासदात्मकत्वं जगतो नानुपपन्नम् । भिन्नकालीनयोरपि तयोस्तादात्म्यं "तद्धेदं तर्ह्यव्याकृतमासीदि"त्यादिश्रुत्याऽप्युक्तमेव । अत एव 'तस्मादसतः सज्जायते' इत्युत्तरवाक्यं तथैव बोधयति, तत्राह—*नत्वसतः सत्त्वं विरोधादिति* ॥ 'अघटो घटः' इति बोधस्येवासदासीदिति बोधस्याहार्य-

न्यायामृतसौगन्ध्यम्

*यत्तु*—'अघटो घटः' इति बोधस्येव 'असदासीदि'ति बोधस्याहार्यत्वेन शाब्दधीत्वासम्भवेन नोक्त-

सिद्धिव्याख्या

परिहरति—*सदेवेति* ॥ नच—'सदेवेदमि'ति श्रुत्यर्थाभावबोधकत्वेऽप्यसद्बोधकत्वं दुर्वारम्, 'सदेवे'त्यस्य ब्रह्मसत्त्वार्थकत्वेन तदभावस्यात्यन्तासत्त्वानतिरेकात्, नहि ब्रह्मसत्त्वाभावः क्वचिद् देशे काले वाऽस्तीति—वाच्यम् ;

विट्ठलेशीयटिप्पणी

रूपसत्त्वाभावाद् असतोऽभावरूपासत्पदार्थरूपतेत्यर्थः । *तेन*=जगत उक्तासत्पदार्थपरिणामरूपत्वेन । *तयोः* ॥ सदसतोरित्यादिः । आसीदित्यादिना तादात्म्यम् । *तयोः*=कार्य-कारणयोः । *उक्तम्*=उक्तप्रायमिति । 'श्रुत्याऽपी'त्यपिना भिन्नकालीनयोस्तादात्म्यबोधक'तद्धैक आहुः' इतिश्रुतिसमुच्चय इति व्याख्येयम् । *अत एव*= 'तद्धैके' इति पूर्ववाक्यस्यासतो जगत्कारणत्वबोधकत्वादेव । *तस्मात्*=प्रलयवृत्तेः । *जायते*=अजायत । *बोधयतीति* ॥ तथाच 'तद्धैक आहुरि'तिश्रुतिजन्यमसति सत्त्वप्रकारकबोधमादायोक्तमिथ्यात्वलक्षणस्यासत्यति-व्याप्तिर्दुर्वारेति भावः ॥

*ननु*—उक्तरीत्या विरोधपरिहारात् को विरोधः ? अत आह—*अघट इति* ॥ *अयं भावः*—यदि पूर्वकार्यध्वंसरूपा कार्यसूक्ष्मावस्थोत्तरकार्यपरिणामिनी भावभिन्नत्वादसती सप्तमपदार्थरूपा प्रलयकाले स्वीक्रियते, तदा व्यावहारिकस्यैव जगत्कारणत्वं सिद्धम्, नालीकस्य, न वाऽकारणसृष्टिपक्षस्य, इति न बौद्धमतानुवादः । नापि तत्र मिथ्यात्वलक्षणातिव्याप्तिः ; 'कथमसतः' इति श्रुतिरप्यभावस्य भावकारणत्वनिराकरणपरतया सङ्गच्छते । *किञ्च* असत्पदस्याव्यक्तपरतया प्रधानकारणवादिसांख्यमतानुवादिन्येव 'तद्धैके' इति श्रुतिरस्तु, तैः पूर्वोत्तर-कार्ययोरुत्तरपूर्वावस्थारूपस्य प्रधानस्य स्वीकारात्, कार्योत्पत्तौ चेतनापेक्षाया अनङ्गीकारादेवकारसङ्गतिः । अत एव 'कथं नु सोम्ये'त्यनेन तन्निराकरणमपि सङ्गच्छते । तस्मात् 'तद्धैके' इति वाक्यस्य बौद्धमतानुवादित्वेऽसत्पदेन सन्निहितत्वेनालीकमनूद्य, तत्र प्रलयकालवृत्तित्व-जगत्कारणत्वरूपसत्त्वबोधस्याहार्यत्वम् । यदि धर्मितावच्छेदकी-भूतमसत्त्वं मोक्तविधया सत्त्वाभावरूपम्, किन्त्ववाच्यत्वरूपं सत्यत्वाभावरूपं वा, तदाऽप्यलीकस्य कालवृत्तित्वार्थ-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वेन शाब्दधीत्वानुपपत्तेर्नोक्तवाक्यादुक्तबोधः। *द्वितीयोऽर्थं उच्यते*—सत्त्वं नासत्कारणप्रयुक्तम् ; सत्त्वविशिष्टे कार्येऽसतः कारणत्वं नेति यावत्। *विरोधात् = असतोऽर्थक्रियारूपे कार्येऽकारणत्वे स्वीकृतेऽसत्त्वव्याघातात्। तथाच 'तस्मादसतः सज्जायते' इत्यस्य यस्मादिदमग्रे नासीत्, न वाऽग्रे सदात्मकम्, तस्मात् प्रलये विद्यमानात् सत आद्यकार्यरूपं सद् न जायत इत्यर्थः। 'अग्रे' इत्यस्यानुषङ्गेण प्रलये विद्यमानादिति लब्धम्। तेनेदानीं सतः सदुत्पत्तावपि न बाधः। "कथमसतः" इत्यादेरपि सतः सद् न जायत इति कथम्? सद्रूपस्यैकस्य सर्वकार्यात्मकतया प्रत्ययेन ततस्तज्जायत एवेत्यर्थः। *ननु*—'अभावस्य निरुपाख्यत्वादपि न जगत्कारणत्वमि'ति पञ्चपादिकावाक्यं विवरणे व्याख्यातम्—'नच निरुपाख्योपादानता जगतः ; सदन्वयात्' इति ; तत्त्वदीपने च तदवतारितम्—'निरुपाख्यकारणवादिनं प्रति निरुपाख्यत्वादिति हेत्वसङ्गतेराह—नच निरुपाख्यतेत्यादी'ति ; तथाच निरुपाख्यकारणवादी बौद्ध इति तत्त्वदीपने स्पष्टमिति—चेत्, *न* ;

न्यायामृतसौगन्ध्यम्

वाक्यादुक्तबोध इति, *तन्न* ; "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि"तिन्यायेन कलहाङ्कुरस्थल-

विट्ठलेशीयटिप्पणी

क्रियाकारित्वस्वीकारेऽलीकत्वव्याघाताद् नालीकजगत्कारणत्वानुवादः, न वाऽकारणकसृष्टिपक्षानुवादकत्वम्, अतस्सत्कारणनिषेधकत्वमेवोक्तवाक्ये स्वीकार्यम्, इति नासति मिथ्यालक्षणातिव्याप्तिशङ्केति। *अत्र 'नत्वसतः सत्त्वमि'ति मूले* प्रतिपाद्यत इत्यनुषङ्गेणान्वयः। तदभावेऽप्याह—*द्वितीयोऽर्थ इति*॥ 'न त्वसतः सत्त्वमि'ति मूलस्येति शेषः। सत्त्वस्य कार्यतावच्छेदकत्वोपगम एवासत्प्रयुक्तत्वप्रसक्तेस्तन्निषेधस्य तन्निषेधपरतामाह—*सत्त्वविशिष्ट इति*॥ *ननु*—सत्त्वं नासत्कार्यतायामवच्छेदकम्, आद्यसत एवासत्कार्यत्वोपगमेनेदानींतनसज्जन्ये सति व्यभिचारात्, इति सत्त्वस्यासत्प्रयुक्तत्वं मयाऽपि न स्वीक्रियत इति को विरोधः? तत्राह—*असतोऽर्थक्रियारूप इति*। *कार्ये=आद्यकार्ये। *तथाच='असदेवे'ति वाक्यस्य—इदं जगत् प्रलये नासीत्, न वा सदात्मकमित्यर्थकत्वे च। *न जायते*॥ किन्तु कारणं विनैवेति शेषः। एतन्मतनिराकरणमपि व्याचष्टे—*कथमसत इत्यादेरपीति*॥ *प्रत्ययेन="सदेव सोम्येदमग्र आसीत्" "इदं सर्वं यदयमात्मा" "सर्वं खल्विदं ब्रह्मे"त्यादिश्रौतेन 'घटः सन्नि'त्यादिलौकिकेन च प्रत्ययेन। उक्तरीत्योक्तश्रुतेर्बौद्धमतत्वेनाकारणकसृष्ट्यनुवादित्वेऽसतः कारणत्वं तन्मतत्वेनानूद्य दूषणपराचार्यग्रन्थविरोधं शङ्कते—*नन्विति*॥ *अभावस्य*॥ भवतीति भावः सत्, तद्भिन्नस्यासतः। *निरुपाख्यत्वात्=पदार्थस्वरूपत्वाभावात्, जगत्कारणत्वं न सम्भवतीति पञ्चपादिकार्थः। *निरुपाख्यम्* अपदार्थस्वरूपं तुच्छमुपादानं यस्य, तन्निरुपाख्योपादानम्, तत्त्वं जगतो न ; सदन्वयात्, इति तद्व्याख्यानविवरणार्थ इति शङ्काभिप्रायः। *ननु*—असतो निरुपाख्यत्वाद् जगत्कारणत्वं न सम्भवति, इत्यतः कारणं विनैव जगदुत्पद्यत इति त्वया वाच्यम्, तच्च न सम्भवति ; सर्वदा सृष्टिप्रसङ्गेन प्रलयानुपपत्तेरिति गूढहेतुकः पञ्चपादिकार्थः। तद्व्याख्यानविवरणस्यापि जगति सदन्वयाद् असदुपादानता न सम्भवति, नाप्यकारणकत्वम् ; सदन्वयादेवेत्यर्थ इत्याशङ्क्य, विवरणव्याख्यानतत्त्वदीपनविरोधाद् नायमर्थ इत्याह—*तत्त्वदीपने चेति*॥ निरुपाख्यं कारणं वदति इति निरुपाख्यकारणवादी, न तु कारणाभाववादी। तथा सति, अकारणवादिनं प्रतीत्येव ब्रूयात्, प्रसिद्धकार्य-कारणभावस्य सोपाख्यत्वेन निरुपाख्यत्वरूपहेत्वसङ्गतेस्तत्रापि सम्भवात् तं प्रति निरुपाख्यत्वहेतोः कारणे तेनाभ्युपगतत्वेन कारणत्वाविरोधित्वेनासङ्गतेः। *सदन्वयात्=कार्ये सत्त्वप्रत्ययात्, कारणे सत्त्वस्यावश्यकत्वेन सदुपादानत्वस्यैव वाच्यत्वादिति हेत्वन्तरमाहेति तत्त्वदीपनार्थः। नच—उत्पन्नस्यैव सत्त्वमिति—शङ्क्यम् ; आद्यक्षणसम्बन्धरूपस्य द्वितीयक्षणाद्यभावेन तस्य स्वकारणसत्कत्वरूपतयाऽसतः कारणत्वेऽसत्त्वव्याघातेन सत्कारणत्वस्यावश्यकत्वेन तद्गतसत्त्वस्यैव कार्ये उपगन्तव्यत्वादिति भावः। भवतु मूल-विवरणयोरर्थान्तरम्, तत्त्वदीपनस्य त्वर्थान्तरासम्भवात् तद्विरोधो दुर्वार इत्याह—*तथाचेति*॥ तत्त्व-

न्यायामृतम्

अत्यन्ताभावस्य तात्त्विकत्वे प्रातिभासिकत्वे व्यावहारिकत्वे च दोषस्योक्तत्वाच्च, अत्यन्ताभावप्रतियोगित्वं स्वरूपेणेति पक्षे पारमार्थिकत्वाकारेणेति च पक्षे दोषस्योक्तत्वाच्च ॥

---

तरङ्गिणी

ज्ञानस्य द्वैतज्ञाननिवर्तकत्वं न स्यात् । *यच्चोक्तम्*—मिथ्यात्वानुमानादेरेवात्यन्ताभाव-प्रागभावयोर्देशसामानाधिकरण्ये प्रमाणत्वमिति, *तन्न* ; विरोधेनानुमानस्वरूपस्यैवालभ्यत्वात् । *यदपि चोक्तम्*—विषमसत्ताकयोस्तयोरविरोध इति, *तन्न* ; लाघवेनात्यन्ताभावमात्रस्यैव प्रतियोगिसामानाधिकरण्यविरोधित्वात् । *यच्चोक्तम्*—"असदेवेदमि"तिश्रुत्यर्थाभावमात्रं बोध्यत इति, *तन्न* ; "सदेवेदमि"तिश्रुत्यर्थाभावबोधकत्वेऽप्यसद्बोधकत्वस्य दुर्वारत्वात् । तथाहि—सदेवेत्यस्य ब्रह्मसत्त्वमर्थः, तदभावस्त्वत्यन्तासन्नेव । नहि ब्रह्मसत्त्वाभावः क्वचिद् देशे काले वाऽस्तीति ॥

---

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उक्ततत्त्वदीपनवाक्यस्य यदि निरुपाख्यं कारणं बौद्धो वदेत् , तदा तं प्रति निरुपाख्यत्वहेत्वसम्भवादाद्येत्यर्थकत्वात् ; अन्यथा ह्यसतः कारणत्वेऽर्थक्रियाकारित्वरूपसत्त्वापत्त्या विरोधः । अत एव "नासतोऽदृष्टत्वादि"ति सूत्रे भामती-कल्पतर्वोर्बौद्धमतेऽसद् न कारणमिति स्पष्टमिति भावः । *ननु*—तथापि सत्त्वेनासद्बोधिवादिनं

न्यायामृतसौगन्ध्यम्

इत्यानाहार्यबोधसम्भवात्, "नेह नाने"ति श्रुतिं व्याकुर्वता इह दृश्यविशिष्टे ब्रह्मणि द्रष्टव्यं नासीदिति, इहेतिपदं व्याकुर्वता तत्रानाहार्यबोधासम्भवमाशङ्क्य, आहार्यशाब्दबोधस्यापि स्वीकृतत्वाच्च ॥

---

सिद्धिव्याख्या

'सदेवे'त्यस्य ब्रह्मस्वरूपसत्त्वार्थकत्वेऽपि तदभावस्यानिर्वचनीयस्वरूपत्वेनात्यन्तासत्त्वातिरेकात् तस्य न क्वचिद् देशे काले वा बाधोऽस्तीति संभवादिति भावः ॥

---

विट्ठलेशीयटिप्पणी

दीपनेऽप्यर्थान्तरमाश्रित्य तद्विरोधमपि परिहरति—*उक्ततत्त्वदीपनवाक्यस्येति* ॥ *यदीति* ॥ अगतोऽकारणकत्वरूपं स्वपक्षं त्यक्त्वाऽपीति शेषः । *अन्यथा = तत्त्वदीपनस्याप्यसतो जगत्कारणत्वं बौद्धमतमित्यर्थकत्वे । *विरोधः=असत्त्वव्याघातः । उक्ताचार्यग्रन्थविरोधशङ्कायाः अयं परिहारोऽपि 'न त्वसतः सत्त्वं विरोधादिति' मूलार्थ इति भावः । उक्ताचार्यग्रन्थानामुक्तव्याख्यान आचार्यान्तरग्रन्थसंवादमाह—*अत एवेति* ॥ असतः सत्कारणत्वासंभवादेवेत्यर्थः । *ननु*—'असतो नातिव्याप्तिरि'ति पूर्वेण गतार्थत्वाद् व्यर्थः, इत्याशङ्क्य, शङ्कान्तरनिरासकतया तत् सार्थकयति—*नन्विति* ॥ तथाप्यसतः कारणत्वरूपसत्त्वस्यासंभवेन बौद्धस्यान्यस्य वा तन्मतासंभवेऽप्यसतः पदाभिधेयत्वेन सन्निकृष्टत्वावच्छिन्ने सत्त्वबोधस्याहार्यत्वेन 'असदेव' वाक्येन जननासंभवेऽपि च सत्त्वेना-

अद्वैतसिद्धिः

अतो नातिव्याप्तिः । सर्वं चान्यत् पूर्वोक्तमेवात्रानुसन्धेयमित्युपरम्यते ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रति किं मिथ्यात्वं वाच्यम् ? तत्राह—*अतो नातिव्याप्तिरिति* ॥ यतोऽसतः सत्त्वेन न धीः, अतः प्रातीतिकस्यापि सत्तादात्म्यरूपसत्त्वस्यासत्यभावेन व्यावहारिकस्य सुतरामभावेन च स्वनिष्ठसत्त्वावच्छिन्नप्रकारतानिवेशसम्भवाद् नातिव्याप्तिरित्यर्थः । यद्वा—*अतः=स्वनिष्ठसत्त्वात् । ल्यब्लोपे पञ्चमीयम् । तथाच स्वनिष्ठसत्त्वं पुरस्कृत्यातिव्याप्त्यभावोऽस्तीत्यर्थः ॥

विट्ठलेशीयटिप्पणी

सद्धीराहार्यमानसरूपा स्यादिति वादिभिं प्रतीत्यर्थः । *किं वाच्यम्* ॥ सत्त्वप्रकारकत्वनिवेशेऽप्यसत्यतिव्याप्तितादवस्थ्यादिति भावः । *न धीरिति* ॥ आहार्यमानसरूपाऽपीति शेषः । पारमार्थिकसत्त्वस्य तद्विषयत्वायोग्यत्वादिति भावः । प्रातीतिकमेव तद्विषयोऽस्तु, तत्राह—*प्रातीतिकस्यापीति* ॥ आहार्यं हि बाधदशायां जायते, नहि तदाऽज्ञानमस्ति, यत्परिणामः प्रातीतिकं सम्भ्रमश्च स्यात् । *किंच* अज्ञानस्य सदेव विषयः, नासत्, इति कथमसति सत्त्वभ्रम आहार्योऽपि स्यादिति भावः । *व्यावहारिकस्य सुतरामिति* ॥ तस्य ब्रह्ममात्रविषयकमूलाज्ञानजन्यत्वादिति भावः । *ननु*—अनुभूयमानारोपो नाज्ञानमूलकः, किंतु स्मर्यमाणारोप एव ; अत एवाधिष्ठाननिष्ठपारमार्थिकत्वस्य रजतादौ भानसंभवेन तत्र प्रातिभासिकतदुत्पत्तेरनङ्गीकारेण पारमार्थिकत्वेन रजताभावप्रतियोगित्वरूपमिथ्यात्वस्य प्रातिभासिकरजत उपपत्तिः । स्पष्टं चेदं वेदान्तपरिभाषादिग्रन्थेषु । *एवं च* ब्रह्मनिष्ठाबाध्यत्वरूपस्य प्रपञ्चनिष्ठसत्तादात्म्यरूपस्य वा सत्त्वस्यानुभूयमानस्यासत्याहार्यभ्रमो दुर्वार इत्यत आह—*स्वनिष्ठस्येति* ॥ केचित्तु—*न धीरिति* ॥ *ननु*—उक्तधीनिराकरणे स्वनिष्ठत्वं व्यर्थम्, तन्निवेशे चोक्तधीनिराकरणानुपयोग इति—चेत्, *न* ; शङ्ककस्यान्यथाख्यातिसत्त्वेऽपि सिद्धान्तिनस्तदभावेन तन्मतेऽनिर्वचनीयख्यातिरूपतादृशप्रतीतिं निराकृत्य स्वनिष्ठत्वनिवेशेऽप्यतिव्याप्त्युद्धारोपपत्तेः । तथाचोभयमते तदुद्धारायोभयमावश्यकम्—*इत्याहुः* ॥ सत्त्वेनासद्धियोऽभावस्यातःपदार्थत्वे पुनरुक्तिर्दुर्वारा, इत्यतः स्वनिष्ठत्वनिवेशस्यातःपदार्थतामाह—*यद्वा अत इति* ॥

[ स्वनिष्ठसत्त्वस्य बुद्धिस्थत्वादिदंपदार्थताऽस्तु, अतिव्याप्त्यभावे न प्रयोजकता, इति कः पञ्चम्यर्थ इति ? तत्राह—*ल्यब्लोपे पञ्चमीयमिति* ॥ पुरस्कृत्य पुरतो मुखपदार्थे सत्त्वे निवेश्य=तामाश्रित्य । एतत्समानकर्तृकां क्रियामाह—*अतिव्याप्त्यभावोऽस्तीति* ॥ *मूले सर्वं चान्यदिति* ॥ येन रूपेण येन सम्बन्धेन यत्र यस्य प्रतीतिः, तत्र तस्य तेन रूपेण तत्सम्बन्धावच्छिन्नात्यन्ताभावस्य विशेषणतासम्बन्धेनाधिकरणत्वविवक्षादिकमित्यर्थः । *पूर्वोक्तम्=‘प्रतिपन्नोपाधी’त्यादिलक्षणोक्तम् । उपरम्यते=इहापि तदुक्तौ ग्रन्थविस्तरप्रसङ्गात् सुधीभिरूहनसंभवाच्चेति कृतबुद्धयो विदांकुर्वन्तु ॥ (ख) ]

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-ससव्याख्योपव्याख्योपेतयोः
न्यायामृताद्वैतसिद्धयोः चतुर्थमिथ्यात्वविचारः ॥

# अथ पञ्चममिथ्यात्वविचारः

—:*:—

न्यायामृतम्

पञ्चमेऽपि सत् किं सत्ताजातिमद् विवक्षितम्? अबाध्यं वा? ब्रह्म वा? नाद्यः; त्वन्मते घटादौ जातेस्सत्त्वात्, द्वितीये बाध्यत्वं मिथ्यात्वमिति स्यात्, तच्च निरस्तम्। न तृतीयः; सिद्धसाधनात्, नृशृङ्गादावपि सद्रूपत्वाभावात्, अन्यस्यासत्त्वस्याभावेनात्यन्तासत्त्वापाताच्च, मन्मतेऽबाध्यत्वादिरूपस्य सत्त्वस्याभिधेयत्ववत् स्वाश्रितत्वेन ब्रह्मणि सत्त्वाभावे सद्रूपत्वासिद्धेश्च ॥ तस्मात्—

अद्वैतसिद्धिः

सद्विविक्तत्वं वा मिथ्यात्वम्। सत्त्वं च प्रमाणसिद्धत्वम्। प्रमाणत्वं च दोषासहकृत-

तरङ्गिणी

*सद्विविक्तत्वमिति पक्षं दूषयति* ॥ *पञ्चमेऽपीति* ॥ त्वन्मतेऽपीति* ॥ तथाचासम्भवः, ब्रह्मण्यतिव्याप्तिश्च ॥ *सिद्धसाधनादिति* ॥ प्रपञ्चे ब्रह्मभेदस्य मयाऽप्यङ्गीकृतत्वादित्यर्थः। 'सद्रूपत्वाभावः' इत्यस्य ब्रह्मण्यतिव्याप्तिश्चेत्याह—*मन्मत इति* ॥ *ननु* ब्रह्मणः सत्त्वाभावेऽपि न सद्रूपत्वासिद्धिः, सत्त्वे सत्त्वान्तराभावेऽपि सद्रूपत्वमिव ब्रह्मणोऽपि तथात्वोपपत्तेरित्यत उक्तम्—*सत्त्वस्याभिधेयत्ववत् स्वाश्रित-त्वेनेति* ॥ *ननु* सत्त्वस्य स्वाश्रितत्व आत्माश्रयः स्यात्, अभिधेयत्वे तु नात्माश्रयः; अभिधेयत्वेऽप्यभिधानविषयत्वस्य प्रमितत्वादित्यत उक्तम्—*अबाध्यत्वादिरूपस्येति* ॥ यथा घटादावबाध्यत्वेन तादृशं सत्त्वम्, तथाऽबाध्यत्वस्याप्यबाधितत्वात् तादृशसत्त्ववत्त्वं प्रमितम्। अतो नात्माश्रयदोष इति भावः।

(सि०) अत्र वदन्ति—"प्रमाणसिद्धत्वमेव सत्त्वम्। प्रमाणत्वं च दोषासहकृतज्ञानकरणत्वम्, तेन

न्यायामृतकण्टकोद्धारः

*पञ्चमेऽपीति* ॥ *अत्र कश्चित्*—सत्त्वं प्रमाणसिद्धत्वम्। तथाच प्रमाणसिद्धभिन्नत्वं मिथ्या-

न्यायामृतसौगन्ध्यम्

नापि—सद्भिन्नत्वं मिथ्यात्वम्। सत्त्वं च प्रमाणसिद्धत्वम्। प्रमाणत्वं च दोषासहकृतज्ञानकरण-

सिद्धिव्याख्या

*सद्विविक्तत्वं वेति* ॥ *ननु* सतः सत्ताजातिमत्त्वादिरूपत्वे वक्ष्यमाणदोषापत्तिः, इत्यत आह*—*सत्त्वं चेति* ॥ न तु सत्ताजातिमत्त्वादिरूपत्वम्, येन वक्ष्यमाणदोषापत्तिः स्यादित्यर्थः। प्रमाणत्वं कीदृशम्? इत्याशङ्क्याह—*प्रमाणत्वं चेति* ॥ ततश्च फलितमाह—*तेनेति* ॥ दोषासहकृतज्ञानकरणसिद्धभिन्नत्वेनेत्यर्थः।

विट्ठलेशीयटिप्पणी

*मूले*—सद्विविक्तत्वम्=सद्भिन्नत्वम्। अत्र प्रतियोगितावच्छेदकीभूतसत्त्वस्य सत्ताजात्यादिरूपत्वे दोषस्य वक्ष्यमाणत्वात् स्वयं तद् निर्वक्ति—*सत्त्वं चेति* ॥ प्रमात्वं च यदि व्यवहारकालाबाध्यविषयकत्वम्, कालत्रयाबाध्यविषयकत्वं वा, तदा 'सन् घटः' इत्यादिज्ञानानामपि घटादौ सत्त्वांशे च प्रमात्वाद् घटादीनामपि प्रमाणसिद्धत्वात् तद्भिन्नत्वरूपमिथ्यात्वानुपपत्तिः, अतो व्याचष्टे—*प्रमाणत्वं चेति* ॥ *तत्सहकृतम्=तत्सहकारेण कार्यजनकम्, तज्जन्यकार्यजनकम्। तदजन्यकार्यजनकं तदसहकृतम्। एवं च ज्ञानकारणे दोषासहकृतत्वस्य दोषाजन्यकार्यजनकत्वरूपस्य विवक्षणे दोषाजन्यकार्यान्तरजनकस्य भ्रमकारणस्याव्यावृत्तिः, इत्यतोऽसहकृतत्वघटक-कार्येऽसहकृतत्वानुयोगिकरणजन्यवृत्तिरूपज्ञानभेदो विवक्षणीयः। तथाच दोषजन्यं यत् स्वकरणकतत्तज्ज्ञानकरणत्व-मित्यर्थः स्यात्; तस्य च ज्ञानकरणत्वघटकज्ञाने प्रमात्वाघटिततया यौगिकप्रमाणपदार्थत्वानुपपत्तिर्गौरवं च, इत्यतो

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*दोषासहकृतेत्यादि* ।। दोषविधया ज्ञाने निमित्तकारणमविद्या, तादृशकारणतानिरूपकं तत्त्वमस्यादिवेदान्तवाक्याजन्यज्ञानम्; तस्य सर्वस्य भ्रमत्वात्, नतूक्तवाक्यजन्यज्ञानम्, प्रमात्वात्। *ननु*— शुद्धब्रह्मणो वृत्त्यविषयत्वपक्षे तस्य ज्ञानस्य स्वविषयत्वोपहितविषयकत्वाद् उक्तब्रह्मणश्च मिथ्यात्वात् कथं तस्य प्रमात्वम्? इति—चेत्, *उच्यते*; अबाधितस्य वृत्तिविषयत्वोपहितं रूपं यस्य ज्ञानस्य विषयः,

विट्ठलेशीयटिप्पणी

कायवाद् ज्ञानकरणत्वघटकज्ञाने दोषसहकृतपदेन दोषाजन्यत्वरूपं प्रमात्वं निवेश्य व्याख्यातुं मूलप्रतीकमाददाति— *दोषासहकृतेत्यादि* ॥ अत्र दोषाजन्यज्ञानकरणजन्यधीविषयान्यत्वं सद्विविक्तत्वरूपं मिथ्यात्वम्, इत्यर्थपर्यवसाने घटादिविषयकवृत्तिरूपज्ञानस्य शुक्तिरजतादिज्ञानस्येवाविद्यान्यदोषजन्यत्वासंभवाद् अविद्यारूपपरिणामत्वेन दोषजन्यत्वं स्वीकृत्य घटादिषु मिथ्यात्वोपपादने तत्त्वमस्यादिवाक्यजन्यब्रह्मात्माकाराखण्डवृत्तेरप्यविद्यातादात्म्यापन्नान्तःकरणपरिणामत्वेनाविद्यारूपदोषजन्यत्वाद् दोषाजन्यज्ञानाप्रसिद्धिरित्याशङ्क्य, दोषपदेनाविद्योपादानाद् दोषविधया तस्याः कारणत्वं विवक्षणीयम्, नतु परिणाम्युपादानविधया, इत्याशयेन दोषाजन्यज्ञानप्रसिद्धिमाह *टीकायाम्—*दोषविधयेति* ॥ भ्रमत्वावच्छिन्नं प्रति कारणत्वादिदोषपदार्थत्वव्याप्यरूपेणेत्यर्थः। तच्च प्रकृतेऽविद्यात्वमेव। *ज्ञाने=घटादिज्ञाने। *निमित्तकारणमविद्येति* ॥ तत्र तस्याः परिणाम्युपादानविधया कारणतासत्त्वेऽपि सा नेह घटिका, किंतु दोषविधया; तस्य 'नेह नाने'त्यादिवाक्यजन्यज्ञानबाधितघटादिविषयकत्वेन भ्रमत्वात्, भ्रमे च ज्ञानसामान्योपादानकारणतातिरिक्तदोषत्वव्याप्यरूपावच्छिन्नकारणतानिरूपकत्वस्यावश्यकत्वात्, शुक्तिरजतादिभ्रमेऽप्यविद्याया दोषविधया कारणत्वसंभवाद् घटादिभ्रमेऽप्यविद्याया एव दोषविधया कारणत्वं स्वीकार्यम्, नतु महावाक्यजज्ञाने; तस्याबाधितब्रह्मात्मविषयकत्वेन प्रमात्वात्। तत्र च दोषस्याकारणत्वादिति भावः। तथापि भ्रमत्वं शङ्कते—*नन्विति* ॥ *तस्य=तत्त्वमस्यादिवाक्यजन्यस्य। *स्वम्=ज्ञानम्। *उक्तब्रह्मणः=उक्तवृत्तिविषयत्वोपहितब्रह्मणः; कर्णशष्कुल्याद्युपहिताकाशस्येव परिच्छिन्नत्वेन स्वबाधितवृत्त्युपाधिकत्वाच्च *मिथ्यात्वात्=बाधितत्वात् *तस्य=बाधितविषयकोक्तज्ञानस्याबाधितविषयकत्वरूपं प्रमात्वं नेत्यर्थः। अबाधितविषयः स्वाश्रयतादात्म्यसंबन्धेन विषयतावान् यस्य, तत्त्वं प्रमात्वम्। तच्च तत्त्वज्ञानस्येत्याशयेन समाधातुमुपक्रमते—*उच्यत इति* ॥ *अबाधितस्येति* ॥ तादात्म्येन संबन्धित्वं षष्ठ्यर्थो वृत्त्युपहिते रूपेऽन्वेति; शुद्धेऽप्युपहिततादात्म्याङ्गीकारस्याग्रुपदं वक्ष्यमाणत्वात्, अन्यथा वृत्त्युपहितमध्यस्तं प्रति शुद्धस्याधिष्ठानत्वानुपपत्तेः, अन्यस्य तदसंभवात्। *वृत्तिविषयत्वोपहितं रूपं यस्य ज्ञानस्य विषय इति* ॥ अनवच्छिन्नाकाशात् कर्णशष्कुल्यवच्छिन्नाकाशमिव, वृत्त्यविषयादनुपहितादबाधितात् शुद्धाद् ब्रह्मणो वृत्तिविषयत्वोपहितं ब्रह्म भिन्नम्, अतस्तत्संबन्धिवेदान्तजवृत्तिविषयश्च भवति। यद्यपि—तादात्म्यस्य स्वभेदाभेदोभयरूपत्वाद् अनुपहितादुपहितमभिन्नम्; तथापि वृत्तिविषयत्वावच्छेदेन वृत्तिविषयः। 'शुद्धस्य ब्रह्मणो वृत्त्यविषयत्वमि'त्यस्य निरवच्छिन्नं वृत्तिविषयत्वं नास्तीत्यर्थः। तद्वृत्तिविषयत्वं तद्वृत्तेरविषयोऽपि तद्वृत्तिविषयतावच्छेदकं भवति; तज्ज्ञानाविषयत्वेऽप्येकनिष्ठतज्ज्ञानीयविशेष्यता-प्रकारतयोरवच्छेद्यावच्छेदकभाववत्। नच—श्रोत्रत्वादेराश्रयस्यापि कर्णशष्कुल्यादेः श्रोत्रत्वाद्यवच्छेदकत्वे स्वाश्रयतावच्छेदकत्वे वाऽऽत्माश्रय इति—वाच्यम्; अगत्या तस्यादोषत्वाङ्गीकारात्। *यद्वा* विषयतासंबन्धेन तद्वृत्तिस्तद्वृत्तिविषयतायामवच्छेदिका। अत एव 'वह्नौ घृतं जुहोति' इत्यत्राग्निसंयोगानुकूलक्रियानुकूलव्यापारस्य जुहोत्यर्थत्वेऽप्याधेयतासंबन्धेन वह्निविशिष्टे संयोगे वह्निवृत्तित्वान्वयं स्वीकृत्योद्देश्य-विधेयभेदो व्युत्पत्तिवादे दर्शितः। *अथ*—अज्ञानस्य शुद्धं स्वोपहितं वा ब्रह्म विषयो भवतु, उभयथाऽपि तत्त्वज्ञानस्य स्वोपहितविषयकस्य तत्समानविषयकत्वाभावेन तन्निवर्तकत्वानुपपत्तिः, तदज्ञानासमानविषयकस्य ज्ञानस्य तन्निवर्तकत्वे घटादिज्ञानस्य घटाद्यवच्छिन्नचैतन्यविषयकस्य मूलाज्ञाननिवर्तकतापत्तिरिति—चेत्; *न*; स्वान्याद्यनुपहितविषयकत्वेन स्वान्योपाध्यनवच्छिन्नविषयकत्वेन वा मूलाज्ञान-तत्त्वज्ञानयोरपि समानविषयत्वस्य सुवचत्वात्। *स्वम्* अज्ञानं ज्ञानं च,

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्त्वं प्रमात्वम् । घटादिकं वृत्तिविषयत्वानुपहितमपि वृत्तिविषयः ; तथापि [1]सर्वस्य ज्ञानस्य स्वविषयत्वोपहितमपि विषयः, [ तेन घटादेस्सर्वस्य सप्रकारकवृत्तिविषयत्वेन दृश्यत्वेन मिथ्यात्वाद् बाधितत्वात् तदाकारवृत्तिमात्रं न प्रमा ॥ क ] घटाद्याकारवृत्तिश्च मिथ्या' इति भ्रमकाले घटादेः सत्यत्वं जानतां घटाद्याकारवृत्तेः प्रमात्वव्यवहारो जायत एव । तथाचाविद्यारूपदोषनिष्ठोक्तकारणतानिरूपकान्यधीविषयो यः, तदन्यत्वं मिथ्यात्वम् ; ज्ञानकरणादिनिवेशे प्रयोजनाभावात् ॥

*इदं तु बोध्यम् ;—एतस्य लक्षणत्वे वृत्त्युपहितब्रह्मभिन्नं ब्रह्मालीकभिन्नं लक्ष्यम् ; अन्यथा वृत्त्युपहितब्रह्मण्यव्याप्त्यापत्तेः । एवमनुमान एतस्य साध्यत्वे तादृशब्रह्मालीकाविषयक-

विट्ठलेशीयटिप्पणी

यथायथं बोध्यम् । *यत्तु*—वृत्तिः स्वविषयविशेषितवृत्तिविषयतायामिव स्वविषयविषयतायामप्यवच्छेदिकेति, *तन्न* ; वृत्तेः स्वविषयविशेषितायाः स्वविषयत्वेऽपि स्वविषयांशेऽविषयत्वेन स्वविषयनिष्ठस्वविषयतायामवच्छेदकत्वा-संभवात् । *ननु*—घटादावबाध्यत्वरूपसत्यत्वग्रहदशायां घटाद्याकारवृत्तावबाधितविषयकत्वरूपं यथाश्रुतं प्रमात्वं गृह्यते, व्यवह्रियते च । नच—घटादौ ब्रह्मवदबाधितत्वग्रहे वृत्तिविषयता न स्यादिति—वाच्यम् ; चिद्रूपत्वेन ब्रह्मण एव वृत्तिविषयतानुपगमात् । नच—घटादौ चिद्रूपत्वग्रहदशायामुक्ताशङ्का दुर्वारेति—वाच्यम् ; वस्तुतश्चिद्रूप-त्वस्य वृत्तिविषयत्वविरोधित्वेऽपि तद्ग्रहस्य तद्विरोधित्वानुपगमात्, तद्ग्रहविरहदशायां घटादौ वृत्तिविषयताग्रह-संभवाच्च, उक्तवृत्तावुक्तप्रमात्वग्रहसंभवात् । एवं चाबाध्यत्वेन गृह्यमाणे घटादौ वृत्तिविषयत्वानुपहित एव वृत्तिविषयत्व-संभवे वृत्तिविषयत्वोपहिते वृत्तिविषयत्वस्वीकारे प्रयोजनाभावेनाबाधितीयवृत्तिविषयत्वोपहितरूपविषयकत्वरूपनिरुक्त-प्रमात्वस्य घटादौ दुर्ग्रहत्वेन तद्व्यवहारो न स्यादिति शङ्कते—*घटादिकमिति*॥ यद्यपीत्यादिः । अनुपहितमपीत्यपि-रेवार्थे ; उपहितसमुच्चयार्थत्वे शङ्कानुत्थितेः । स्वविषयकवृत्तिकालीने घटादौ वृत्तिविषयता स्वोपहित एवाङ्गीकार्या, 'अयं घटः' इत्यादिवृत्तेः स्वोपहितं विषय इत्युक्तौ विद्यमानघटस्य वृत्तिविषयत्वप्रतीतेः, स्वसमानकालीनस्य समभिव्याहृतपदार्थान्वयोपाधित्वात्, तदनुपहितेऽसंभवत एव तदुपहितवृत्तित्वमिति नियमश्चाप्रयोजक इत्याशयेन समाधत्ते—*तथापीति* ॥ *सर्वस्य ज्ञानस्येति* ॥ स्वविषयसमानकालीनस्येति शेषः । अपिपदेन स्वविषया-समानकालीनज्ञानस्यानुपहितविषयकत्वं समुच्चीयते । 'अबाधितस्य वृत्तिविषयत्वोपहितं रूपमि'त्यादिप्रमात्वनिरुक्तौ वृत्तिपदेन तद्बहिर्भूतार्थकेन तदुपादानासम्भवात् । एवं च घटाद्याकारवृत्तावपि घटादिवत् सत्यत्वाग्रहे प्रमात्वग्रहासंभव इत्याशङ्क्याह—*घटाद्याकारवृत्तिश्चेति* ॥ *मिथ्येति* ॥ बाधितेत्यर्थः । तथाचैतत्प्रतिबन्धकवशाद् न तत्र सत्यत्वग्रह इति भावः । भ्रमपदं परमतेन ; स्वमते ज्ञानमात्रार्थकम् । यदि घटादि वृत्तिश्च मिथ्येति भ्रमशून्यकाले इति पाठो घटादि-सत्यत्वज्ञानोपयोगितया कल्प्यते, मिथ्येत्यस्य भ्रम इत्यर्थ इत्युच्यते, तदाऽपि भ्रमपदस्योक्तैव गतिः । क्वचित्तु प्रमात्व-व्यवहारो जायत इति । एतेनाबाधितस्येत्यादिप्रमात्वनिरुक्तौ प्रयोजनान्तरमपि सूचितमिति बोध्यम् । दोषपदेना-विद्यामात्रविवक्षणे दोषविधया कारणत्वालाभः, तन्मात्रविवक्षणे तदाश्रयालाभ इत्युभयं विवक्षित्वा निष्कृष्टार्थमाह—*तथाचेति* ॥ *अविद्यारूपदोषनिष्ठोक्तेति* ॥ अविद्यानिष्ठदोषत्वव्याप्यरूपावच्छिन्नेत्यर्थः । दोषत्वं च भ्रमा-साधारणकारणत्वम् । *प्रयोजनाभावादिति*। निरुक्तकारणताकान्यज्ञानकरणजन्यसिद्धावुक्तज्ञानाभेदस्याविवक्षणे घटादि-सिद्धेः प्रतियोगिकोटौ पातात् तद्विषयान्यत्वाप्रसिद्धिः, विवक्षणे तु गौरवम्, शिरोवेष्टनेन नासास्पर्शतुल्यत्वाद् वैयर्थ्यं चेति भावः । *नन्वेवम्* तत्त्वज्ञानस्य स्वोपहितब्रह्मविषयकस्य निरुक्तप्रमात्वे तदुपहितब्रह्मणो घटाद्युपहितब्रह्मण इव मिथ्याभूतस्याविद्यानिष्ठदोषत्वावच्छिन्नजनकताकान्यधीविषयस्य तदन्यत्वरूपमिथ्यात्वाभावाद् वृत्त्युपहिते ब्रह्मणि प्रकृतमिथ्यात्वलक्षणस्याव्याप्तिः, अनुमाने च व्यभिचार इति दोषद्वयं परिहर्तुमाह—*इदं तु बोध्यमिति* ॥ *वृत्त्यु-पहितब्रह्मभिन्नं लक्ष्यमिति* । तथाच वृत्त्युपहितब्रह्मणोऽलक्ष्यत्वाद् नाव्याप्तिरिति भावः । वृत्त्युपहितब्रह्मभिन्नयोः शुद्धब्रह्मालीकयोर्लक्ष्यत्वे मूले तद्वारकविशेषणोपादानविरोधः, इत्यत उक्तम्—*ब्रह्मालीकभिन्नमिति* ॥ शुद्धब्रह्मभिन्नम्,

अद्वैतसिद्धिः

ज्ञानकरणत्वम् । तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्धयति ।

तरङ्गिणी

स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्धयति । प्रमाणसिद्धत्वं चाबाध्यत्वव्याप्यमित्यन्यत् । अत्राप्य-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वृत्तिविषयत्वादिरूपमेव दृश्यत्वं हेतुः ; अन्यथा व्यभिचारापत्तेः । *ननु* घटाद्याकारवृत्ताव-विद्याया दोषविधया निमित्तकारणत्वे मानाभावः, तत्राह—*तेनेत्यादि* ॥ *स्वप्नादिवदिति* ॥ घटादेरिति शेषः । *प्रमाणसिद्धेति* ॥ दोषनिष्ठोक्तकारणतानिरूपकान्यधीविषयेत्यर्थः ॥ तथाच स्वाप्नघटादेरिव व्यावहारिकप्रपञ्चस्य "विद्वान् नाम-रूपाद्विमुक्तः" इत्यादिश्रुत्या ब्रह्मज्ञानबाध्यत्व-

न्यायामृतसौगन्ध्यम्

फत्वम् । तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्धयति । प्रमाणसिद्धत्वं चाबाध्यत्वव्याप्य-

सिद्धिव्याख्या

*प्रमाणसिद्धभिन्नत्वेनेति* ॥ उक्तकरणसिद्धभिन्नत्वेनेत्यर्थः । *ननु* एतादृशप्रमाणसिद्धभिन्नत्वस्य भवन्मते घटा-

विट्ठलेशीयटिप्पणी

अलीकभिन्नं चेत्यर्थः । तल्लाभायैवैतदुक्तिः । अन्यथा हि वृत्त्युपहितं ब्रह्म न लक्ष्यमित्येव वदेत् । *अन्यथा=वृत्त्युपहितब्रह्मभिन्नत्वं लक्ष्यतावच्छेदकेऽनिवेश्य तस्य लक्ष्यत्वोपगमे । अनुमाने व्यभिचारमुद्धर्तुं हेतुं परिष्करोति—*तादृशेति* ॥ वृत्त्युपहितेत्यर्थः । एतन्मते दृश्यत्वं वृत्तिविषयत्वमात्रम् ; तदभावादेव शुद्धब्रह्मणि व्यभिचारवारणे वृत्तिप्रतिबिम्बितचिद्विषयतापर्यन्तनिवेशे प्रयोजनाभावात् । एवं च वृत्त्युपहितस्य वृत्तिविषयतामात्रेणाज्ञाननिवृत्त्या स्वप्रकाशब्रह्मसाक्षात्कारसंभवे जडघटादेरिव वृत्तिप्रतिबिम्बितचिद्विषयत्वे प्रयोजनाभावाद् वृत्त्युपहिते व्यभिचारप्रसक्तिः, अतस्तदविषयकत्वनिवेशसङ्गतिः । विकल्पाख्यवृत्तिसाधारणरूपेण वृत्तेर्निवेशेऽलीकेऽपि व्यभिचारप्रसक्त्याऽलीका-विषयकत्वस्य निवेशसङ्गतिः । यदि विषयकान्तेन चित्प्रतिबिम्बवैशिष्ट्यमेव विवक्ष्यते ; तदाऽपि व्यभिचारवारणं संभवतीति बोध्यम् । *अन्यथा=केवलवृत्तिविषयकत्वस्य दृश्यत्वहेतुरूपत्वे । *मूले—'तेने'त्यस्याबाध्यविषयकत्वं प्रमात्वं विहाय दोषाजन्यत्वरूपप्रमात्वं निवेश्य तद्घटितप्रमाकरणत्वनिवेश इत्यर्थः प्रतीयते, स च न सङ्गच्छते 'सन् घटः' इत्यादिप्रत्यक्षादिज्ञानानां शुक्तिरजतज्ञानादीनामिवाविद्यान्यदोषजन्यत्वाभावात् । नचाविद्यैव दोषः ; परिणाम्युपादानविधयाऽन्तःकरणद्वारा तज्जन्यत्वस्य वेदान्तजन्यतत्त्वज्ञानेऽपि सत्त्वादित्यतः—*तेनेत्यस्य* दोष-विधयाऽविद्यारूपदोषाजन्यत्वरूपप्रमात्वाश्रयकरणत्वनिवेशेनेत्यर्थो वाच्यः । स चाविद्याया दोषविधया तत्त्वज्ञानान्य-घटादिज्ञानं प्रति निमित्तकारणत्व एव सङ्गच्छते, इत्यतस्तत्र प्रमाणपरतया 'स्वप्नादिवत्' इत्यादिग्रन्थं व्याख्यातुं तत्र प्रमाणाभावशङ्कयैव तदवतारयति—*ननु घटाद्याकारवृत्ताविति* ॥ *मूले स्वप्नादिवदिति* ॥ *स्वप्नः=स्वाप्निकम् । आदिना जागरिकम् । वत्यर्थस्य मिथ्यात्वेऽन्वये मिथ्यात्वस्य प्रातिभासिकत्वं प्रतीयेत, मिथ्यात्वसिद्धिपक्षालाभश्च, इत्यतो वत्यर्थान्वयिनं पूरयति—*घटादेरिति शेष इति* ॥ घटादेरविद्यान्यदोषाजन्यप्रमाविषयत्वात् कथं प्रमाणसिद्ध-भिन्नत्वम् ? अतो व्याचष्टे—*प्रमाणसिद्धेति* ॥ *दोषनिष्ठोक्तेति* ॥ अविद्यानिष्ठदोषत्वव्याप्यरूपावच्छिन्नेत्यर्थः ॥

*ननु*—स्वप्न-जागरप्रातिभासिकस्य जागराद्यधिष्ठानतत्त्वसाक्षात्कारेण बाधात् तद्विषयकज्ञानस्य भ्रमत्वाद् दोषस्य निद्रा-काचकच्यरूपस्य कारणत्वमस्ति, व्यावहारिकविषयघटादिप्रपञ्चस्य बाधाभावात् तज्ज्ञानस्य भ्रमत्वे माना-भावात, तत्राविद्यायाः परिणाम्युपादानविधया कारणीभूताया अपि दोषविधया निमित्तकारणत्वे मानाभावः, इत्यत आह—*तथाचेति* ॥ 'स्वाप्नघटादेरि'त्यस्य यथाश्रुतस्य ब्रह्मज्ञानबाध्यत्वबोधने नान्वयः ; ब्रह्मज्ञानात् पूर्वमेव तस्य बाधात्, किन्तु स्वप्नमात्रे प्रतीयमानस्य जागरे बाध्यत्वेनानुभूतस्य घटादेरित्यर्थः । आदिना स्वप्नपटादिर्जागरिक-प्रातिभासिकशुक्तिरजतादिश्च ग्राह्यः । तथाच स्वाप्नघटादेर्यथा जागरिकाधिष्ठानसाक्षात्कारेण बाध्यत्वमनुभव-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

बोधनेन तदाकारवृत्तेर्भ्रमत्वात् तत्राविद्यायाः काम-कर्मणोश्च दोषविधया निमित्तकारणत्वमावश्यकम्; विक्षेपशक्त्यंशेन विपरीतकार्यहेतुत्वेन, आवरणशक्त्यंशेन वास्तवरूपे 'अस्ति भाती'ति धीप्रतिबन्धकत्वेन चाविद्यायाः पित्तादिदोषवद् निमित्तकारणत्वौचित्यात्, 'यद्विशेषयो'रिति न्यायेन पित्तादिदोषरूपेण परिणताविद्यायाः पित्तत्वादिविशेषरूपेणेवाविद्यात्वरूपसामान्यरूपेण भ्रमत्वावच्छिन्नं प्रति हेतु-

विट्ठलेशीयटिप्पणी

सिद्धम्, यथाच तदाकारवृत्तेर्भ्रमत्वम्, तत्र दोषस्य निद्रा-चाकचक्यादेर्निमित्तकारणत्वम्, तथेत्यर्थः। अस्य बाध्यत्व-बोधनादिषु यथायथमन्वयः। *तदाकारवृत्तेरिति* ॥ बाधितविषयकत्वेनेति शेषः। *तत्र=व्यावहारिकप्रपञ्च-भ्रमे। *अविद्यायाः काम-कर्मणोश्चेति पाठः। कर्मणोर्वेत्यपपाठः। "ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च। मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ॥ प्राणोऽपानस्तथा व्यान उदानश्च समानकः। ··················पञ्चैता वायुवृत्तयः ॥ ख-वाय्वग्न्यप्क्षितयो भूतसूक्ष्माणि पञ्च च। अविद्या-काम-कर्माणि लिङ्गं तत्त्वाष्टकं विदुः ॥" इति वार्तिके सप्तदशावयवकं लिङ्गशरीरमुक्त्वा लिङ्गांशघटकतयैव सप्तदशावयवलिङ्गकारणीभूतानि सूक्ष्मभूतान्युक्त्वा तत्कारणी-भूतानाम्—'अविद्या-काम-कर्माणी'ति तुल्यतया द्वन्द्वेनोपादानात्। अत्र हि—अनादिजीवानां कामो रागः, कर्म-अदृष्टम्, ईश्वरेच्छा-प्रयत्नौ वा। तयोः सूक्ष्मभूतद्वारा व्यावहारिकप्रपञ्चं प्रति निमित्तकारणत्वात् तत्साहचर्याद-विद्याया अपि निमित्तकारणत्वमपि, एवं सति रजतादिभ्रमेषु सादृश्य-दूरत्वादिदोषाणां कारणत्वदर्शनाद् व्यावहारिक-प्रपञ्चभ्रमेऽपि दोषाणां कारणत्वमावश्यकम्, इत्यविद्या-काम-कर्मणां क्लृप्तनिमित्तकारणताकानामेव दोषत्वव्याप्यधर्मा-वच्छिन्नकारणत्वमास्थेयम्; तत्र तदन्यदोषाणामसम्भवात्, रजतादिभ्रमेषु त्वविद्याया दोषविधया कारणत्वसत्त्वेऽपि शुक्त्यविद्ययैव भ्रमः, न घटाद्यविद्यया, इति नियमार्थं सादृश्यादिदोषाणामपि कारणत्वं स्वीकार्यम्। एवं व्यावहारिकघटादिभ्रमेष्वप्युक्तकाम-कर्मणी इव दण्ड-चक्रादीनि घटादिकारणानि च वैचित्र्यप्रयोजकानीति भावः। *ननु*—व्यावहारिकप्रपञ्चे काम-कर्मणी निमित्तं कारणम्, अविद्या तु परिणाम्युपादानविधयैव; साहचर्यस्य सर्वत्रा-नियामकत्वात्, एवञ्चोक्तत्रयस्यापि दोषविधया न कारणत्वम्, एतज्जातीयानां दोषत्वादर्शनेनैतेषां दोषत्वानुपगमात्, इत्यतोऽनुमानेनाविद्याया दोषत्वव्याप्यधर्मावच्छिन्नत्वयोग्यनिमित्तकारणत्वं साधयति—*विक्षेपशक्त्यंश इति* ॥ अविद्या, व्यवहारिकाकाशादिप्रपञ्चभ्रमे निमित्तकारणम्, अधिष्ठानांशे तदसाधारणधर्मविरुद्धधर्मधीरूपकार्यजनकता-वच्छेदकविक्षेपशक्तिमत्त्वे सत्यधिष्ठानासाधारणधर्मरूपवास्तवरूपविषयकधीप्रतिबन्धकतावच्छेदकीभूतावरणशक्तिमत्त्वात्, पित्तदोषो यथा मधुरत्वविरुद्धतिक्तरसधीप्रयोजको मधुरत्वधीप्रतिबन्धप्रयोजकशक्तिमान् तिक्तत्वभ्रमे निमित्त-कारणम्। नहि स पित्तदोषपरिणामः। निमित्तकारणत्वं न समवाय्यसमवायिकारणान्यकारणत्वम्; अविद्याया घटादिवृत्त्यावन्तःकरणद्वारोपादानत्वात्, किन्तु समवाय्यसमवायिकारणतान्यकारणत्वम्। हेतावेककेशादिज्ञानप्रतिबन्धक-दूरत्वदोषसहकृताविद्यायां व्यभिचारवारणाय सत्यन्तम्। वंश उरगधीजनकमण्डूकवसाञ्जनसहकृताविद्यायां ······· विशेष्यम्। तत्रोक्तदोषयोरेवोक्तकार्यप्रतिबन्धकत्वोक्तकार्यजनकत्वयोः स्वीकारे तूक्तं हेतुद्वयं बोध्यम्। 'अस्ति' 'भाति' इति प्रकृताभिप्रायम्, सत्, चित्, सुखमित्यर्थः। *विपरीतं कार्यम्=तद्विलक्षणं मिथ्याजडस्वरूपाकाशादि-प्रपञ्च-तद्भ्रमरूपं कार्यम्। एतदनुमानसिद्धे निमित्तकारणत्वे दोषत्वव्याप्याविद्यात्वरूपधर्मावच्छिन्नत्वसाधिकां व्याप्ति-माह—*यद्विशेषयोरिति* ॥ अनेन कारणत्वपर्यन्तसिद्धावप्युपादानविधया कारणत्ववैलक्षण्यसिद्धये पूर्वानुमानापेक्षा। यदि च पित्तत्वरूपविशेषधर्मावच्छिन्नकारणताया निमित्तकारणतारूपत्वादविद्यात्वरूपसामान्यधर्मावच्छिन्नकारणताऽपि निमित्तकारणतैव सेत्स्यतीत्युच्यते, तदाऽपि सोपानारोहणवत् क्रमेणार्थसिद्ध्यर्थं पूर्वानुमानापेक्षा। प्रथममावश्यक-मित्यन्तेन कारणत्वसिद्धिः। तत औचित्यादित्यन्तेन निमित्तकारणतासिद्धिः। ततो 'यद्विशेषयोरि'त्यनेन तत्र दोषत्वव्याप्यधर्मावच्छिन्नत्वसिद्धिरिति भावः। *पित्तादिदोषरूपेणेति* ॥ गुडे तिक्तरसभ्रमं प्रतीत्यादिः। *भ्रमत्वावच्छिन्नं प्रतीति* ॥ भ्रमत्वघटितधर्मावच्छिन्ननिरूपितनिमित्तकारणत्वस्यैव दोषविधया कारणतारूपत्वस्यानु-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वसम्भवात्, अविद्यादिदोषरूपसामान्यकारणसत्त्वेऽपि प्रातिभासिकभ्रमेष्वन्वय-व्यतिरेकाभ्यां पित्तादिदोष-विशेषाणां व्यावहारिकभ्रमेष्विन्द्रियसन्निकर्षादीनां दोषविधया हेतुत्वात्। किञ्च वाचस्पतिमतेऽविद्यायाः कार्यमात्रे नोपादानत्वम्, किन्तु प्रमातृनिष्ठदोषविधया निमित्तकारणत्वमित्यस्य कल्पतर्वादौ निर्णीतत्वात् तन्मते मिथ्यात्व-मीदृशं सम्भवत्येव। तन्मत एवेदं लक्षणम्, इति ब्रह्मणि नातिव्याप्तिरिति मूले स्पष्टम्। विवरणादिमते शुद्धब्रह्मण एव दोषाजन्यवृत्तिविषयत्वेन तत्रानतिव्याप्तेः। किञ्चाविद्याया उपादानत्वमेव, नतु दोषविधया निमित्तत्वमित्याग्रहेऽपि घटादिज्ञानेष्विन्द्रियसन्निकर्षादीनामेव दोषविधया कारणत्वात् तेषां दोषजन्यत्वात् प्रकृते नानुपपत्तिः। नच—भ्रमत्वघटितधर्मावच्छिन्नं प्रति निमित्तकारणत्वमेव दोषविधया कारणत्वम्, इन्द्रियसन्नि-कर्षादौ न तदिति—वाच्यम्; एकभ्रमे हि यस्य दोषस्य कारणता, तस्य तद्व्यक्तित्वावच्छिन्नं प्रत्येव सा, नतु

## विट्ठलेशीयटिप्पणी

पदं वक्ष्यमाणत्वात्। *नन्वेवम्* भ्रमसामान्यस्याविद्यारूपदोषजन्यत्वोपपत्तौ गुडादितिक्तरसादिभ्रमेषु पित्तादिदोष-विशेषाणां हेतुत्वासंभवः, इत्यत आह—*अविद्येति*॥ *ननु*—अविद्याया आकाशादाविव तद्भ्रमेऽपि जन्यत्वं जन्यतावच्छेदकीकृत्य परिणाम्युपादानविधया हेतुत्वेनैव 'यद्विशेषयोरि'ति व्याप्तेरप्युपपत्तौ भ्रमत्वावच्छिन्नं प्रत्यविद्याया दोषविधया हेतुत्वे मानाभावः, पित्तादिदोषस्यापि तिक्तरस-तद्भ्रमोभयसाधारणधर्मावच्छिन्नं प्रति हेतुत्वसंभवेन भ्रमत्वघटितधर्मावच्छिन्नहेतुत्वरूपदोषविधया हेतुत्वानुपगमसंभवात्, इत्यत आह—*किञ्च वाचस्पति-मत इति*॥ *नोपादानत्वमिति*(१)॥ "मायां तु प्रकृतिं विद्यात्" इति श्रुतौ ब्रह्मनिष्ठविवर्तोपादानत्वनिर्वाहक-परतया प्रकृतिपदसङ्गतिसद्भावः। *ईदृशम्=*अविद्यानिष्ठभ्रमत्वघटितधर्मावच्छिन्ननिरूपितकारणताकान्यज्ञानविषयान्यत्व-रूपम्। मतान्तरे कथम्? अत आह—*तन्मत एवेति*॥ मतान्तरे तन्मूलासङ्गतिमाह—*विवरणादिमत इति*॥

*नन्वेवम्*—"मायां तु प्रकृतिं विद्यादि"ति श्रुतौ प्रकृतिपदस्वारस्यभङ्गः, इत्यत आह—*किं चाविद्याया इति*॥ *नत्विति*॥ तथाच घटादिज्ञानानामविद्यानिष्ठभ्रमत्वावच्छिन्नीयकारणताकान्यत्वात् तद्विषयान्यत्व-रूपमिथ्यात्वस्य घटादावव्याप्तिर्बाधश्चेति भावः। *घटादिज्ञानेष्विति*॥ तिक्तरसादिभ्रमेषु पित्तादिदोषाणामिवा-न्वय-व्यतिरेकाभ्यामित्यादिः। *दोषविधयेति*॥ घटादिज्ञानानां "विद्वान् नाम-रूपाद्विमुक्तः" "नेह नानास्ति किंचन" इत्यादिश्रुतिबाधितघटादिविषयकत्वेन भ्रमत्वात् तत्र च दोषकारणताया आवश्यकत्वात् इन्द्रियसन्निकर्षा-दीनामेव घटादिभ्रमत्वावच्छिन्नजनकत्वं स्वीकार्यमिति भावः। *तेषाम्=*घटादिज्ञानानाम्। *दोषजन्यत्वात्=*इन्द्रियसन्निकर्षादिनिष्ठभ्रमत्वघटितधर्मावच्छिन्नीयकारणताकत्वात्। *प्रकृते=*प्रकृतमिथ्यात्वनिर्वचने। *नानुपपत्ति-रिति*॥ *न घटादावव्याप्तिर्बाधश्चेत्यर्थः। *न तदिति*॥ प्रत्यक्षत्व-चाक्षुषत्वानुमितित्वादीनामेवेन्द्रियसन्निकर्षा-दिजन्यतावच्छेदकतया, भ्रमत्वस्य तज्जन्यतानवच्छेदकत्वादिति भावः। एकजातीयपित्तादिदोषाणां काल-पुरुष-भेदेनानेकतिक्तादिरसभ्रमजनकत्वात् तत्र तत्तद्व्यक्तित्वादीनां जन्यतावच्छेदकत्वे कारणताबाहुल्यापत्त्या गौरवात् तत्र तद्भ्रमत्वस्य जन्यतावच्छेदकत्वसंभवात्—*एकभ्रम* इत्युक्तम्। एकभ्रमव्यक्तावित्यर्थः। *यस्य=*यद्व्यक्ति-विशेषरूपस्य। *तस्य=*दोषस्य। *सा=*कारणता। *नत्विति*॥ तथाच भ्रमत्वघटितधर्मावच्छिन्नीयकारणत्वस्य

---

(१) यद्यपि वाचस्पतिमिश्रमतेऽज्ञानाश्रयविषयभेदाभ्युपगमादज्ञानायैव जगत्कारणत्वं युक्तम्; "पुरत्रये क्रीडति यश्च जीवः ततस्तु जातं सकलं विचित्रम्" "मायां तु प्रकृतिं विद्यात्" "सृष्ट्वा तदनुप्रविश्य" "मूढ इव व्यवहरन्नास्ते मायया" इत्यादि-श्रुतीनामप्येवं सत्येव स्वारस्यात्, "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिस्तु जीवब्रह्माभेदाभिप्रायेणेत्यादिन्यायरत्नावली-वचनपर्यालोचनायां वाचस्पतिमतेऽपि मायाया उपादानत्वमेवेत्येव प्रतीयते; तथापि जीवनिष्ठाज्ञानविषयब्रह्मोपादानकं जगद् न जीवोपादानकम्; जगद्वाचित्वाधिकरणीयसिद्धान्तविरोधात्। एवमविद्याऽपि नोपादानम्; ब्रह्मनिष्ठजगतो व्यधिकरण-त्वात्। न हि शरावादिनिष्ठदुग्धादेर्घटादिनिष्ठदध्यादिरूपः परिणामः सम्भवतीति कल्पतर्वादौ वाचस्पत्याशयस्य वर्णितत्वात् तदभिप्रायेणोक्तमिति मन्तव्यम्॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तद्भ्रमत्वावच्छिन्नं प्रति ; गौरवात् । नचैवम्—दोषजन्यत्वेन भ्रमत्वस्यानुमानं न स्यादिति—वाच्यम् ; भ्रमजनकत्वरूपदोषत्वेन यद् निश्चितम्, तज्जन्यत्वमेव हि भ्रमत्वस्यानुमापकम्, नतु वस्तुगत्या यो भ्रमजनकः तज्जन्यत्वम् । [तथाच पूर्वमेव भ्रमत्वनिश्चयाद् न तद् भ्रमत्वानुमापकम् । तद्धि रजतत्वाभाववद्विशेष्यकत्वादिकम् (क) ] नच—इन्द्रियसन्निकर्षादिजन्यत्वानामनन्तानां प्रातिस्विकरूपेण निवेशे दुर्ज्ञेयता स्यादिति—वाच्यम् ; भ्रमाजनकजन्यधीविषयान्यत्वं मिथ्यात्वमिति सुज्ञेयताप्रकारस्य सत्त्वात्, भ्रमत्वस्यापि जातिविशेषरूपत्वेन भ्रमविषयघटितत्वनिबन्धनदुर्विज्ञेयत्वस्याभावाच्च ।

## न्यायामृतकण्टकोद्धारः

त्वम् । नच—निर्धर्मकत्वेन ब्रह्मण्यसति चातिव्याप्तिरिति—वाच्यम् ; सत्त्वप्रकारकप्रतीतिविषयत्वे सतीति विशेषणस्य दत्तत्वात्, तयोश्च सत्त्वप्रकारकप्रतीतिविषयत्वाभावात्—इत्याह *तत्र* ; ब्रह्मण्यसति चातिव्याप्तेः, तयोरपि "तत् सत्यम्" "तद्धैक आहुरि"त्यादिना सत्त्वप्रकारकप्रतीतिविषयत्वात् । नच—प्रतीतिपदं प्रमापरमिति—वाच्यम् ; व्याहृतत्वेन साधयितुमशक्यत्वात्, शुक्तिरूप्यादावव्याप्तेश्चेत्यलमतिप्रसङ्गेन ॥

## न्यायामृतसौगन्ध्यम्

मित्यन्यत् । अत्राण्यसति निर्धर्मके ब्रह्मणि चातिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वं विशेषणं देयम् ।

## विट्ठलेशीयटिप्पणी

दोषविधया कारणत्वरूपत्वासंभवाद् भ्रममात्रवृत्तिधर्मावच्छिन्नीयजनकत्वस्य दोषविधया जनकत्वरूपताया वक्तव्यत्वाद् घटादिप्रत्यक्षत्वादीनां भ्रममात्रवृत्तितया तदवच्छिन्नीयजनकत्वरूपस्य दोषविधया जनकत्वस्येन्द्रियसन्निकर्षादौ संभव इति भावः । *एवम्=भ्रमत्वस्य यत्किंचिद्दोषजन्यतानवच्छेदकत्वे । *न स्यादिति* ॥ दोषजन्यत्वमस्तु, भ्रमत्वं माऽस्तु, इत्यप्रयोजकत्वशङ्कासंभवात् । इयं हि भ्रमत्वे दोषजन्यत्वन्यूनवृत्तित्वशङ्का तदन्यूनानतिरिक्तवृत्तित्वनियततदवच्छेदकत्वाभावापत्तिरूपतर्केण निवर्त्या, सा चापत्तिरिष्टापत्तिशङ्कया नोत्पद्यत इति भावः । *भ्रमजनकत्वरूपदोषत्वेनेति* ॥ इदमेवानुगतं दोषत्वमिति भावः । *तज्जन्यत्वमेवेति* ॥ यत्र भ्रमजनकत्वनिश्चयः, तज्जन्यत्ववति भ्रमत्वानङ्गीकारे तत्र तत्र भ्रमजनकत्वभङ्गापत्तिरूपतर्केणाप्रयोजकत्वशङ्कोच्छेदसंभवादिति भावः । *नन्विति* ॥ उक्ताप्रयोजकत्वशङ्कानिवर्तकतर्काभावादिति भावः । *प्रातिस्विकरूपेणेति* ॥ भ्रमत्वघटितधर्मावच्छिन्नजनकतानिरूपितजन्यतात्वरूपस्यानुगमकरूपस्याभावादिति भावः । *निवेशे=मिथ्यात्वे निवेशे । *दुर्ज्ञेयता स्यादिति* ॥ नच—भ्रमजनकत्वरूपानुगतदोषत्वेन दोषान् अनुगमय्य भ्रमजनकजन्यतासामान्याभावनिवेशोऽस्ति सुज्ञेयतेति—वाच्यम् ; अन्तःकरणादेर्भ्रमसाधारणकारणतया तज्जन्यतत्त्वज्ञानस्याप्यसंग्रहापातादिति भावः । *भ्रमाजनकजन्येति* ॥ भ्रमजनकान्यजन्येत्यर्थः । *ननु*—भ्रमत्वं यदि बाधितविषयकत्वम्, तर्हि तत्त्वज्ञानस्यापि स्वोपहितब्रह्मरूपबाधितविषयकत्वेन भ्रमत्वात् तत्संग्रहानुपपत्तिः, अतस्तदभाववति तत्प्रकारकत्वमेव भ्रमत्वं वाच्यम्, तच्च निर्विकल्पकतत्त्वज्ञानव्यावृत्तं तदितरसकलज्ञानसाधारणम्, तच्च घटादिरूपविषयघटितत्वादननुगतम्,—तत्संबन्धावच्छिन्नत्वाभाववन्निष्ठविशेष्यतानिरूपितत्व तत्संबन्धावच्छिन्नत्वनिष्ठत्वोभयसंबन्धेन किंचिद्विशिष्टप्रकारताकत्वं संबन्धभेदेन, स्वावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपितत्व-स्वावच्छिन्नत्वोभयसंबन्धेन संबन्धविशिष्टप्रकारताकत्वं च प्रकारभेदेनाननुगतमेव, तद्घटकपरम्पराणां संबन्धत्वे मानाभावाद् प्रामाणिकं च, इत्यत आह—*भ्रमत्वस्येति* ॥ जातिविशेषरूपत्वेनेति ॥ तत्त्वज्ञानान्यसकलज्ञानवृत्तिजातिरूपत्वेनेत्यर्थः । वृत्त्युपहितब्रह्म-शुद्धब्रह्मालीकभेदरूपकारणनिरूपितविषयतासंबन्धावच्छिन्नकार्यतावच्छेदकतया तादृशजातिसिद्धिरिति भावः । *ननु*—मूले *प्रमाणसिद्धत्वं बाधाव्यत्वव्याप्यमित्यन्यदिति* ग्रन्थेनोक्तसिद्धत्वस्योक्तव्याप्यत्वकथनस्य 'अन्यदि'त्यनेन तस्य प्रकृतानुपयुक्तत्वकथनस्य चानुपयोगः, इत्याशङ्क्य, प्रकृतोपयोगितां घटयितुं तद्ग्रन्थ-

अद्वैतसिद्धिः

प्रमाणसिद्धत्वं चाबाध्यत्वव्याप्यम् इत्यन्यत्। अत्राप्यसति निर्धर्मके ब्रह्मणि चातिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वं विशेषणं देयम्; तयोः सत्त्वप्रकारकप्रतीतिविषयत्वाभावात्।

तरङ्गिणी

सति निर्धर्मके ब्रह्मणि चातिव्याप्तिवारणाय सत्त्वेन प्रतीमानत्वं विशेषणं देयम्, तयोः सत्त्वप्रकारकप्रतीतिविषयत्वाभावादि'ति, *अत्रोच्यते*; प्रमाणसिद्धत्वस्य सुखादौ तव मते सत्त्वेऽपि घटादावसत्त्वादव्याप्तिः। यच्चोक्तं 'प्रमाणसिद्धत्वमबाध्यत्वव्याप्यमि'ति, तन्न; प्रमाणासिद्धस्यापि ब्रह्मणोऽबाध्यत्वात्, प्रमाणसिद्धस्यापि प्रपञ्चस्य बाध्यत्वाच्चेति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु* 'दोषासहकृते'त्यादिरूपं प्रमाणसिद्धत्वं कुतो निवेशितम्? अबाध्यविषयकधीविषयत्वरूपस्यापि तस्य सम्भवात्, तत्राह—*प्रमाणसिद्धत्वमिति* ॥ उक्तप्रमाणसिद्धत्वमित्यर्थः। *अबाध्यत्वव्याप्यम्=अबाध्यस्य शुद्धब्रह्मणो यद् वृत्त्युपहितं रूपं तत्त्वस्य व्याप्यम्, *इति=हेतोः, *अन्यत्=बाध्यत्वघटितादन्यत्।

तथाचाबाध्यत्वघटितस्य निवेशे बाध्यत्वेतरांशस्यानतिप्रयोजनकतया बाध्यत्वाघटितस्यैव निवेशो युक्तः, बाध्यत्वं ज्ञाननिवर्त्यत्वादिरूपं पूर्वमुक्तमिति भावः। *असतीति* ॥

सिद्धिव्याख्या

दावभावादव्याप्तिः, इत्याशङ्क्याह—*प्रमाणसिद्धत्वं चेति* ॥ ततश्च घटादेर्बाध्यत्वे तत्राबाध्यत्वाभावाद् व्यापकनिवृत्त्या तद्व्याप्यप्रमाणसिद्धत्वस्यापि निवृत्त्या प्रमाणसिद्धभिन्नत्वस्य संभवाद् नाव्याप्तिरित्यर्थः। *ननु* प्रमाणसिद्धत्वमबाध्यत्वव्याप्यमित्ययुक्तम्; प्रमाणासिद्धस्यापि ब्रह्मणोऽबाध्यत्वात्, प्रमाणसिद्धस्यापि घटादेर्बाध्यत्वाच्च, तत आह—*अन्यदिति* ॥ अबाध्यत्वव्याप्यप्रमाणसिद्धत्वमव्यभिचरितमन्यदित्यर्थः। *अत एवोक्तम्*—दोषासहकृतेत्यादिना; *ननु* तर्हि निर्धर्मके ब्रह्मण्यसति चातिव्याप्तिः; तयोर्निर्धर्मकत्वेनाबाध्यत्वरूपधर्माभावे पूर्ववत् तद्व्याप्यप्रमाणसिद्धत्वस्यापि निवृत्तौ प्रमाणसिद्धभिन्नत्वस्य तयोरपि संभवात्, *इत्याशङ्क्याह—अत्रापीति* ॥ विशेषणदानेऽप्यतिव्याप्तिः कथं परिहृता? इत्याशङ्क्याह—*तयोरिति* ॥ असद्ब्रह्मणोरित्यर्थः। *अभावादिति* ॥ ततश्च प्रमाणसिद्धभिन्नत्वस्य सत्त्वेऽप्युक्तविशेषणाभावे तद्विशिष्टलक्षणाभावाद् नातिव्याप्ति-

विट्ठलेशीयटिप्पणी

मवतारयति—*नन्विति* ॥ अबाध्यविषयकेति* ॥ अबाध्यस्य वृत्त्युपहितं यद्रूपं तद्विषयकेत्यर्थः, तेन नाप्रसिद्धिः। नैयायिकादिमतसिद्धप्रत्यक्षादिप्रमाणसिद्धत्वमबाध्यत्वमबाध्यत्वशून्येऽपि घटादौ विद्यमानं कथं तद्व्याप्यम्? ततो व्याचष्टे—*उक्तप्रमाणसिद्धत्वमिति* ॥ *ननु*—दोषाजन्यतत्त्वमस्यादिमहावाक्यजन्यप्रमारूपधीविषयत्वस्य वृत्त्युपहिते ब्रह्मणि सत्त्वात्, अबाध्यत्वस्य च तत्रासत्त्वात् कथं व्याप्यत्वम्? तत्राह—अबाध्यस्येति* ॥ अबाध्यविषयकत्वरूपप्रमात्वनिवेशाकरणबीजकथनायोक्तव्याप्यत्वकथनाद् 'इत्यन्यदि'त्यनेन तस्य प्रकृतानुपयोगित्वकथनासङ्गतिः, अत आह—*हेतोरिति* ॥ तद्व्याप्यत्वं तद्भेदघटितमित्यभिप्रायेणेदम्। *यद्वा*—अबाध्यत्वव्याप्यम्, अबाध्यत्वव्याप्यमेव, नत्वभिन्नमिति हेतोरित्यर्थः। 'अन्यदि'त्यस्य प्रतियोग्याकाङ्क्षायामबाध्यत्वादिति वाच्यम्, तावता अबाध्यविषयकत्वरूपप्रमात्वानिवेशबीजस्यास्फुटत्वात् तत्स्फुटत्वायाह—*बाध्यत्वेति*॥ बाध्यत्वघटितादबाध्यत्वादन्यदित्यर्थः। तदेव स्फुटयति—*तथाचेति* ॥ अबाध्यत्वघटितस्येति* ॥ अबाध्यविषयकत्वरूपप्रमात्वाश्रयधीविषयान्यत्वरूपमिथ्यात्वनिर्वचने तद्घटकबाध्यत्वस्यैव मिथ्यात्वरूपत्वसंभवादितरांशस्य यथानिवेशेऽवैयर्थ्येऽप्यव्याप्त्यादिवारणरूपप्रयोजनाभावादित्यर्थः। *बाध्यत्वाघटितस्येति* ॥ भ्रमजनकान्यजन्यधीविषयान्यत्वरूपमिथ्यात्वनिर्वचनं युक्तमित्यर्थः। अत्र बाध्यत्वस्याघटकत्वाद न वैयर्थ्याशङ्का, भ्रमत्वस्य जातिविशेषरूपस्य वृत्त्युपहितरूपाव्यावृत्तस्य विवेश्यतया बाध्यविषयकत्वरूपभ्रमत्वानिवेशाद् इति बोध्यम्। *ननु*—अबाध्यत्वस्य वृत्त्युपहितरूप-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अलीकं न वृत्तेर्विषयः ; वृत्तेः सत्त्वेन सदसतोः संसर्गासम्भवात् , अलीकाविषयकेणापि विकल्पेन शशविषाणादिपदोक्तिरूपव्यवहारोत्पत्तिसम्भवात् । तस्य तद्विषयत्वेऽपि सा न भ्रमः; प्रमाणबाध्यविषयकत्व-स्यैवाभावात् । अत एव 'प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः' इति वृत्तिविभाजकं पातञ्जलसूत्रम् ।

### न्यायामृतसौगन्ध्यम्

**तयोः सत्त्वप्रकारकप्रतीतिविषयत्वाभावादिति—वाच्यम् ; सत्यदोषराहित्यं(१) हि प्रपञ्चग्राहकमानेऽप्यस्ति, कल्प्यदोषस्य तु त्वदभिमतप्रमाणेऽपि सम्भवः ॥**

### सौगन्ध्यविमर्शः

(१) 'दोषासहकृतज्ञानकरणत्वमि'त्यत्र दोषाणां कल्प्यत्वेन पारमार्थिकत्वेन वा न जनकत्वम् ; सत्त्वादीनां कारणता-नवच्छेदकत्वात्, "पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ । हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥" इति वचनात् । तथाच—सत्यदोषराहित्यं हि प्रपञ्चग्राहकमानेऽप्यस्ति, इत्याद्यनुक्तोपालम्भनमिति—सूचितम् । यथाच प्रपञ्चज्ञानमप्यविद्या-रूपदोषजन्यत्वादिन्द्रियसन्निकर्षादिरूपदोषजन्यत्वाद्वा भ्रम एव, तथा लघुचन्द्रिकायां निरूपितमेव । न हि दोषजन्यत्वेन मिथ्यात्वं कुत्रापि निर्णीयते, दोषाणां स्वरूपत एव भ्रमं प्रति कारणत्वात्, अन्यथा सर्वत्र भ्रमत्वनिर्णयेऽन्योन्याश्रयापत्तेः, किन्तु मिथ्यात्वे प्रकारान्तरेण निर्णीते पश्चादेव कस्यचन तन्मात्रकारणस्य दोषत्वं निर्णीयते । बाधानन्तरमपि दोषविशेषा-निर्णये तु गौणत्वव्यवस्थेति खलु व्यवस्था । सति चैवं प्रपञ्चस्य—"अतोऽन्यदार्तमि"त्यादिश्रुत्या मिथ्यात्वावगमात् तज्ज्ञानस्य यत्किञ्चिद्दोषजन्यत्वावधारणार्थे प्रयत्ने सति त्वविद्याया एवेन्द्रियसन्निकर्षादीनां वा दोषत्वावधारणे नान्योन्याश्रयगन्धोऽपि ; मिथ्यात्वनिर्णयस्य बाधज्ञानाधीनत्वात्, दोषनिर्णयस्य च कारणान्तराधीनत्वात् । सति चैवं यस्य बाधज्ञानानन्तरमपि घटादीनां सत्त्वज्ञानं गौणं भ्रमो वेति संशयः, तं प्रति दोषविशेषसंभवोपपादनार्थमेवोक्तानुमानम्, प्रपञ्चज्ञानं न दोषा-सहकृतज्ञानकरणजन्यमिति साधनदोषसहकृतज्ञानकरणजन्यं पर्यवस्यति । तथाच ज्ञाने दोषासहकृतज्ञानकरणाजन्यत्वे स्वाप्नादिषु

### विट्ठलेशीयटिप्पणी

**विषयकधीविषयान्यत्वरूपमिथ्यात्वस्य वृत्त्युपहिते ब्रह्मण्यभावाद् एतल्लक्षणालक्ष्ये तत्र बाध्यत्वरूपघटकांशसत्त्वादति-व्याप्तिः, अतस्तच्छङ्कासार्थक्यमिति—चेत् , *न* ; लक्षणान्तरलक्ष्यत्वेनालक्ष्यत्वस्यैकलक्षणेऽनभ्युपगमेऽप्युक्ताव्याप्तेः सिद्धान्तेऽसंभवादित्याहुः ॥**

**विकल्पाख्यवृत्तेर्भ्रमानात्मकत्वे दोषाजन्यतया तद्विषयेऽसति तदन्यधीविषयत्वरूपलक्षणातिव्याप्तिर्मूलोक्ता न सङ्गच्छते, अतस्तां सङ्गमयति—*अलीकं न वृत्तेर्विषय इति* ॥ अलीकासंबद्धस्य विकल्पस्य कथं तद्व्यवहार-नियामकत्वम् ? अत आह—*अलीकाविषयकेणापीति* ॥ अत एव—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इत्युक्तम् । वस्तुशून्यो निर्विषयक इत्यर्थः । कालिकप्रत्यासत्त्या, आत्मनिष्ठप्रत्यासत्त्या वा विकल्पासद्व्यवहारयोः कार्य-कारणभाव इति भावः । *ननु*—शशविषाण-खपुष्पादिविचित्रपदव्यवहारानुरोधेन तन्मूलवृत्तीनां विषय-कृतमेव वैचित्र्यं वाच्यम् ; वृत्त्यन्तरेषु प्रायस्तत्कृतवैजात्यस्यैव दर्शनात्, 'वस्तुशून्यः' इत्यस्य सदविषयक इत्यर्थसंभवात्, असमानकालीनयोरिव सदसतोरपि वृत्ति-तद्विषययोः संबन्धस्याङ्गीकारात्, इत्यत आह—*तस्य तद्विषयत्वेऽपीति* ॥ *सा=विकल्पाख्या वृत्तिः । *न भ्रम इति* ॥ ननु—तस्या भ्रमत्वेऽपि दोषजन्यत्वात् तदजन्यवृत्त्यन्तराविषयत्वाद असत्यतिव्याप्तिसङ्गमे भ्रमत्वाभावकथनं धीपदस्य विलक्षणवृत्तिपरत्वेन तत्सङ्गमनं च व्यर्थमिति—वाच्यम् ; तस्य तद्विषयत्वे यद्यपि न भ्रमः, इत्यपेर्यद्यपीत्यर्थकतया भिन्नक्रमेण व्याख्येयत्वात् । *प्रमाणबाध्यविषयकत्वस्यैवेति* ॥ 'शशविषाणं नास्ती'ति बाधज्ञानस्य प्रमाणनिरपेक्षत्वादिति भावः । *ननु*—बाध्यविषयकत्वमेव भ्रमत्वम्, बाधे प्रमाणसापेक्षत्वं कुतो निवेश्यम् ? तत्राह—*अत एवेति* ॥ *प्रमाणम्= प्रत्यक्षादिप्रमाणजन्या, *विपर्ययः=दोषजन्या, विकल्पः=शशविषाणादिपदमूला, *निद्रा=स्वापः, *स्मृतिः=स्मरणम् ।**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाच तस्या दोषाजन्यत्वेऽपि "ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे"तिश्रुत्या मनोवृत्तेरेव धीत्वोक्त्या प्रमाणवृत्त्यन्यस्य विपर्ययादेरविद्यावृत्तित्वेन धीत्वाभावाद् दोषाजन्यधीविषयान्यत्वमलीकेऽतिव्याप्तम्, ब्रह्म तु स्वप्रकाशत्वाद्

### न्यायामृतसौगन्ध्यम्

एतेन—उपादानमप्यविद्या दोषविधया निमित्तकारणम्, तादृशकारणतानिरूपकं तत्त्वमस्यादिवेदान्तवाक्याजन्यं ज्ञानम्; तस्य सर्वस्य भ्रमत्वादिति—निरस्तम्; जगन्मिथ्यात्वसिद्धेः प्राक् त्वत्प्रलापस्य निरर्थकत्वात् ॥

### सौगन्ध्यविमर्शः

स्वरूपतो विषयतश्च मिथ्यात्वदर्शनात् प्रपञ्चस्यापि मिथ्यात्वम्, इति प्रकृतानुमानेनैव मिथ्यात्वनिर्णयात्—"जगन्मिथ्यात्वसिद्धेः प्राक् त्वत्प्रलापस्य निरर्थकत्वात्" इति सौगन्ध्योक्तम्—परास्तम्। नचाविद्याया उपादानविधयेव दोषविधयाऽपि कारणत्वेऽखण्डाकारवृत्तेरप्यविद्योपादानकत्वात् तस्या अप्यविद्यारूपदोषजन्यत्वाद् ब्रह्मज्ञानमपि भ्रमः स्यादिति—वाच्यम्; तत्र हि ज्ञानस्य दोषापेक्षा, यत्र विषयतो बाधः, ब्रह्मज्ञाने तु विषयतः सत्यत्वस्य प्रमाणान्तरसिद्धत्वात् "अतोऽन्यदार्तमि"ति वाक्येनापि तद्भिन्नस्यैव मिथ्यात्वप्रतिपादनाद् न तत्र दोषापेक्षा, इति नाविद्यायास्तत्र दोषत्वेनापि कारणत्वमिति विरोधाभावात्। इदमेवाभिप्रेत्योक्तं लघुचन्द्रिकायाम्—तादृशकारणतानिरूपकं च वेदान्तवाक्याजन्यं ज्ञानम्; तस्य सर्वस्य भ्रमत्वात्, न तूक्तवाक्यजन्यं ज्ञानम्; तस्य प्रमात्वादिति। तत्त्वमस्यादिवाक्यजन्ये हि ज्ञाने शुद्धचैतन्यमेव भासते, तच्च प्रत्यक्षावान्तरवाक्याधीनं ज्ञानम्। अवान्तरवाक्येन लक्ष्यतत्पदार्थः, लक्ष्यत्वंपदार्थो वा भासते, तन्मात्रज्ञानं हि न शुद्धब्रह्मज्ञानम्; जीवत्वेश्वरत्वोभयोपस्थितिपूर्वकशुद्धचैतन्यावगमस्यैव ब्रह्मसाक्षात्काररूपत्वात्, इतरस्य च तत्परोक्षज्ञानमात्रत्वात्। ततश्च न वेदान्त-

### विट्ठलेशीयटिप्पणी

पञ्च वृत्तय इति सूत्रशेषः। अत्र विकल्पस्य विपर्ययात् पृथक् परिगणनादेवोक्तभ्रमत्वे प्रमाणाधीनत्वस्य बाधे निवेश इति भावः। *तथाच=विकल्पस्य भ्रमान्यत्वे च ॥ *तस्या दोषाजन्यत्वेऽपीति* ॥ असतो दोषाजन्यविकल्पाख्यवृत्तिविषयत्वेऽपीत्यर्थः। 'विपर्ययादी'त्यादिपदेन विकल्प-निद्रे। *दोषाजन्यधीविषयान्यत्वमिति* ॥ *ननु*—अत्र दोषाजन्यत्वं व्यर्थम्, शुक्तिरजतादिप्रातिभासिक-तदाकारविपर्ययाख्यवृत्त्योस्तूलाविद्यापरिणामत्वेन वियदादिव्यावहारिक-तदाकारविपर्ययाख्यवृत्त्योरपि तन्मूलकतत्स्मृतेश्च मूलाविद्यापरिणामत्वेन धीत्वाभावादेव धीविषयवृत्त्युपहितब्रह्मभिन्नत्वेन प्रातिभासिक-व्यावहारिकेषु लक्षणसङ्गतिसंभवादिति—चेत्, *अत्रेदं वक्तव्यम्*—दोषाजन्यधीविषयान्यत्वं मिथ्यात्वमित्यत्र तत्त्वज्ञानस्य दोषाजन्यत्वं निर्विवादम्; तस्य प्रमात्वात्, 'इदं रजतमि'ति प्रातिभासिकज्ञानस्य दोषजन्यत्वं निर्विवादम्; तस्य भ्रमत्वात्, घटादिज्ञानस्य तु परमते प्रत्यक्षादिप्रमाणजन्यत्वाद् अबाधितविषयकत्वाच्च प्रमात्वाद् दोषजन्यता नास्ति, ज्ञानत्वं चास्ति, सिद्धान्तिना तु "विह्लानिति" "नेहे"-त्यादिश्रुत्या घटादीनां बाध्यतां तज्ज्ञानानां च भ्रमत्वं प्रसाध्य तेन दोषजन्यत्वं प्रसाध्यते। तेन चाविद्यावृत्तित्वसिद्धया मनोवृत्तिविशेषरूपधीत्वाभावः सिद्ध्यति। तत्रैव दोषाजन्यज्ञानपदेन घटादिवृत्तिं विहाय वेदान्तजन्यतत्त्वज्ञानमात्रस्योपादानाद् घटादौ साध्यज्ञाननिर्वाहः। दोषाजन्यत्वानिवेशे तु केवलज्ञानपदेन घटादिवृत्तेरप्युपादानसंभवाद् न तत्र साध्यज्ञाननिर्वाहो भवति, इत्येवमर्थं दोषाजन्यत्वोपादानं कृतम्। अत एव धीविषयत्वरूपहेतुत्वहेतोरेतत्साध्यस्य च न विरोधः; अन्यथा हि धीविषयान्यत्व-धीविषयत्वयोर्विरोधः स्पष्ट एव। शुद्धे ब्रह्मणि विवरणमते दोषाजन्यतत्त्वज्ञानविषयत्वात् तदन्यत्वरूपलक्षणातिव्याप्त्यसङ्गतेस्तां वाचस्पतिमते सङ्गमयति—*ब्रह्म त्विति* ॥ शुद्धं ब्रह्मेत्यर्थः। *स्वप्रकाशत्वादिति* ॥ अज्ञानविषयताया अपि स्वोपहित एवाङ्गीकारेण तन्निवृत्तये महावाक्यजन्यवृत्तिविषयताया अपि तत्रैवावश्यकत्वेन शुद्धे प्रयोजनाभावेन वृत्त्यपेक्षप्रकाशत्वभङ्गापत्त्या च वृत्तिविषयत्वाननुगमात्। *ननु* वृत्तिरूपोपाधेरुपधेयेन ब्रह्मणा संबन्धाभावे कथं ब्रह्म वृत्त्युपहितं स्यात्? इति तयोः संबन्ध आवश्यकः, स च विषयतारूप एवास्तु, एवमज्ञानस्यापि, इति तन्निवृत्तिरपि प्रयोजनम्। नचैवं स्वप्रकाशत्वभङ्गः;

### अद्वैतसिद्धिः

अत एव—'सद्विविक्तत्व'मित्यत्र सत्त्वं सत्ताजात्यधिकरणत्वं वा, अबाध्यत्वं वा, ब्रह्मरूपत्वं वा। आद्ये घटादावाविद्यकजातेस्तथाऽभ्युपगमेनासम्भवः, द्वितीये बाध्यत्वरूपमिथ्यात्वपर्यवसानम्।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उपहिततादात्म्यान्यभावरूपधर्मानाश्रयत्वाच्च न वृत्तिविषयः। अतस्तत्रापि तदतिव्याप्तमिति भावः। सत्त्वमुक्तधीविषयत्वमेव,नतु सत्ताजात्यादिमत्त्वमित्यत्र नियामकं दूषणान्तरमाह—*अत एवेत्यादि*॥ *आविद्यकेति*॥ अविद्यारूपेत्यर्थः। 'षडस्माकमनादयः' इत्यादिसिद्धान्तादनादिजातेरविद्यान्यत्वासम्भवात्, चिद्रूपत्वपक्षस्येवाविद्यारूपत्वपक्षस्यापि सिद्धान्ते स्वीकारात्। उपपादयिष्यते चेदम्॥

### सिद्धिव्याख्या

रित्यर्थः। *अत एवेति*॥ अस्य निरस्तमित्यनेन संबन्धः। *असंभव इति*॥ ब्रह्मण्यतिव्याप्तिश्चेति बोध्या। *पर्यवसानमिति*॥ तच्च पूर्वपक्षे दूषणमिति भावः।

### विट्ठलेशीयटिप्पणी

वृत्तिप्रतिबिम्बितचैतन्यानपेक्षणेन तदुपपत्तेः, इत्यत आह—*उपहिततादात्म्यान्येति*॥ उपहिततादात्म्यानङ्गीकारे उपहितरूपाध्यस्ताधिष्ठानत्वं शुद्धस्य न स्यात्, 'वृत्त्युपहितं ब्रह्म वृत्तिविषयः' इति ब्रह्मण्युपहितसामानाधिकरण्यप्रत्ययश्च न स्यात्, इति तदङ्गीकारस्यावश्यकत्वात्—*तदन्येत्युक्तम्*॥ *भावरूपधर्मानाश्रयत्वाच्चेति*॥ "नेह नानाऽस्ति किंचन" इति श्रुत्या ब्रह्मणि भावमात्रं निषिध्यते, अभावस्तु तथैव बोध्यते, स च ब्रह्मस्वरूपः, इति नाद्वैतहानिः। अत एव निरुक्तविषयान्यत्वरूपलक्षणातिव्याप्तिसङ्गतिरिति भावः। नच—उपहिते वृत्तिविषयत्वोपगमे उपहिततादात्म्यापन्नं शुद्धेऽपि वृत्तिविषयत्वं दुर्वारमिति—वाच्यम्; उपहितस्यैव तद्धर्मस्याध्यस्तस्याङ्गीकारे बाधकाभावात्, पारमार्थिकत्वेनैव निषेधात्। अत एव सर्वज्ञत्व-जगत्कारणत्वादयो धर्मास्तदभाववत्त्वं चेति द्वयमुपपद्यत इति विभावनीयम्। *मूले—(३७६) *तयोः=असतः शुद्धब्रह्मणश्चेत्यर्थः। नच—यद्यप्यसतः सत्त्वेन प्रतीतिर्नास्तीति पूर्वमुपपादितम्; तथापि सतः 'सदेव सोम्ये'ति वाक्येन सत्त्वप्रकारकप्रतीतिरुपगतैवेति—वाच्यम्; तत्रैवंपदार्थसूक्ष्मावस्थाविद्यातादात्म्यापन्नसत एवाग्रसत्त्वेन बोधनेऽपि शुद्धस्य सतो ब्रह्मणः सत्त्वेन प्रतीतेरनङ्गीकारादिति भावः। *ननु—'अत एवेति' ग्रन्थस्य सद्विविक्तत्वे सत्त्वस्य प्रमाणसिद्धत्वरूपस्यैव निवेशाभ्युपगमात् सत्ताजात्यादिरूपस्य निवेशानभ्युपगमात् तदभ्युपगमपक्षे परोक्तदोषाणामनिरास इत्यर्थः प्रतीयते; स चायुक्तः; सत्त्वस्य प्रमाणसिद्धत्वरूपत्वपक्षे सत्ताजात्यादिरूपत्वपक्षोक्तदोषाणामप्रसक्तेः, इत्याशङ्क्य, तद्ग्रन्थस्य सत्त्वस्य सत्ताजात्यादिरूपत्वपक्षदूषणपरत्वमाह—*सत्त्वमुक्तधीविषयत्वमेवेति*॥ अत एव 'अत एवे'त्यस्यानभ्युपगमादेवेति व्याख्यानं कृतं मूले। जातेरविद्याजन्यत्वरूपमाविद्यकत्वं न संभवति; तस्या अविद्यावज्ज्ञाननिवर्त्यत्वेऽप्याकाशादिवदुत्पत्तेरश्रवणेनानादित्वात्, इत्यतो व्याचष्टे—*अविद्यारूपेत्यर्थ इति*॥ *ननु* जीवादिवदविद्यान्यैव जातिरनादिरस्तु, इत्यत आह—*षडस्माकमिति*॥ *ननु* जातेर्नित्यत्वाद् ब्रह्मचैतन्यस्वरूपत्वमेवाकरप्रसिद्धम्, तत्राह—*चिद्रूपत्वपक्षस्येवेति*॥ *ननु* एकाऽविद्या कथं घटत्वादिनानाजातिरूपेति? अत आह—*उपपादयिष्यते चेदमिति*॥ अविद्या चिद्वा घटाद्युपहिता घटत्वादिजातिः, द्रव्याद्युपहिता द्रव्यत्वादिः, द्रव्यादित्रयोपहिता सत्ता, इति रीत्या एकस्या अप्युपाधिभेदाद्भेद इति भावः। *मूले—बाध्यत्वरूपेति*॥ तथाच तदितरांशवैयर्थ्यमिति भावः। *ननु*—सदसद्विलक्षणत्वपक्षे सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन व्याघाताशङ्का-तत्परिहारावुक्तौ, अत्रापि यदि सत्त्वे सति सद्भेदो मिथ्यात्वमुच्येत, तदा भेदप्रतियोगितावच्छेदकयोर्घटत्व-घटभेदयोरिव परस्परस्याभावरूपत्वादिविरोधाद् व्याघातशङ्का स्यात्, सा च विशेषणीभूतं देश-कालवृत्तित्वरूपं प्रतियोगितावच्छेदकीभूतं च निरुक्तप्रमाणसिद्धत्वम्, इति रीत्या परिहार्याऽपि स्यात्; तथा तु नोच्यते, किंतु सत्त्वेन प्रतीयमानत्वे सति सद्भिन्नत्वं मिथ्यात्वमुच्यते। तत्र चोक्तविशेषणोक्तभेदयोर्घटत्वेन प्रतीयमानत्व-घटभेदयोरिव

### न्यायामृतम्

अनिर्वाच्येऽप्रसिद्ध्यादिः प्रतीते प्रतिषेध्यता । स्वाश्रयेऽत्यन्तविरहः सद्विलक्षणता तथा ॥

### अद्वैतसिद्धिः

तृतीये सिद्धसाधनमिति—निरस्तम् ; अनभ्युपगमादेव । सदसद्विलक्षणत्वपक्षोक्तयुक्तयश्चात्रानुसन्धेयाः ।

### तरङ्गिणी

संगृह्णाति—*तस्मादिति*(३६९)॥ *अनिर्वाच्ये=सदसद्विलक्षणत्वे । *प्रतीते=प्रतिपन्नोपाधौ । *प्रतिषेध्यता=त्रैकालिकनिषेधप्रतियोगित्वम् । *ननु* तव मते शुक्तिरजतादेर्मिथ्यात्वात् त्वयाऽपि तद् निर्वक्तव्यम्, इति न

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*उक्तेति* ॥ 'गुणादिकमि'त्यादिग्रन्थोक्तेत्यर्थः । [ सदसद्विलक्षणत्वरूपे लक्षणे सद्विलक्षणत्वस्य प्रपञ्चे सिद्धत्वेऽपि न सिद्धसाधनमित्यादिकम्, तथा सद्विविक्तत्वे सत्त्वेन प्रतीयमानत्वविशेषणदानेऽपि तादृशविशेषणमादाय न सिद्धसाधनमित्यादि बोध्यम् । (क) ] *अत्र* भ्रमविषयत्वेऽविनाश्यवृत्तिधर्मवत्त्वे वा तात्पर्यम् ; लाघवात् । पक्षतावच्छेदकावच्छेदेन तस्य साध्यत्वाद् न सिद्धसाधनमिति बोध्यम् ॥

### सिद्धिव्याख्या

*सिद्धसाधनमिति* ॥ प्रपञ्चे ब्रह्मभेदस्य मयाऽप्यङ्गीकृतत्वादित्यर्थः । अतश्शब्दार्थमाह—*अनभ्युपगमादिति* ॥

### विट्ठलेशीयटिप्पणी

परस्पराभावरूपत्व-विरोधयोरभावाद् व्याघाताशङ्काया एवाभावात् तच्छङ्का-तत्परिहारानुसन्धानं नावश्यकम्, अतो व्याचष्टे—*गुणादिकमित्यादिग्रन्थोक्तेत्यर्थ इति*॥ घटादिप्रपञ्चे सत्त्वेन प्रतीयमानत्वस्य सिद्धत्वेऽपि सद्भेदस्यासिद्धत्वाद् न सिद्धसाधनम्, सद्भिन्ने तुच्छे दृश्यत्वादर्शनेन सत्त्वेन प्रतीयमानत्वमिलितस्यैव सद्भेदस्य दृश्यत्वप्रयोजकतया मिलितसिद्धिरुद्देश्या, शुक्तिरजतादौ मिलितप्रसिद्धिरिति युक्तयोऽनुसन्धेया इत्यर्थ इति भावः । *ननु*—सत्ख्यातिमतेऽसत्ख्यातिमते च 'इदं रजतमि'त्यादिभ्रमेष्वापणस्थानामलीकानां वा रजतादीनामेव भानोपगमेन घटादावेतदनुमानात् पूर्वमारोप्यरजतादौ निरुक्तमिलितप्रसिद्धिः संभवति, इत्यत आह *मूले—*अवशिष्टं च दृष्टान्तसिद्धौ वक्ष्याम इति*(३८९)॥ अनिर्वचनीयख्यातिरेव 'रजतं पश्यामि' इत्यनुभवानुरोधादित्युक्त्या व्यवस्थापयिष्यत इति भावः । *ननु* एतल्लक्षणे सत्त्वेन प्रतीयमानत्वरूपविशेषणोपादाने सदसद्विलक्षणत्वरूपलक्षणादेस्तल्लक्षणस्य नात्यन्तं भेदः, क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वस्य तत्रासद्विलक्षणत्वरूपत्वात् । यदि तत्रेदं विशेष्यम्, अत्र च विशेषणम्, एवं तत्र सत्त्वं त्रिकालाबाध्यत्वम्, अत्र तु निरुक्तं प्रमाणसिद्धत्वम्, इति भेद इत्युच्यते, तदाऽपि तल्लक्षणप्रपञ्चतैवास्य पर्यवस्यति, नैतावता लक्षणान्तरत्वेनोपन्यासार्हता । एवमेतल्लक्षणस्य पूर्वलक्षणलक्ष्ये वृत्त्युपहितब्रह्मण्यसत्त्वादव्याप्तेरलक्ष्यतया परिहारः, अनुमाने व्यभिचारवारणाय हेतुपरिष्कारश्चायुक्त इत्याशङ्क्यैतदुन्नेयलक्षणान्तरे तात्पर्यमाह—*अत्रेति* ॥ केवलस्य निरुक्तसद्विविक्तत्वस्य तुच्छे भ्रमविषयत्वादिरूपलक्षणान्तरव्यभिचारित्वेऽप्युक्तविशेषणसहितस्य तद्व्याप्यत्वात् तदुन्नायकता । भ्रमविषयत्वं च वृत्त्युपहितस्यापि ; बाधितत्वात्, इति न तत्राव्याप्तिः । नापि शुद्धब्रह्मणि तुच्छे चातिव्याप्तिः ; तयोर्भ्रमविषयत्वाभावात् । भ्रमत्वं बाधितविषयकत्वं जातिविशेषरूपं वेति भावः । *नन्वेवम्*—उक्तविशेषणविशिष्टसद्विविक्तत्वस्य रूपान्तरेणापि लक्षणत्वालाभादत्र तत्तात्पर्यमयुक्तम्, अतस्तत्साधारणरूपावच्छिन्नेऽस्य तात्पर्यमाह—*अविनाश्यवृत्तिधर्मवत्त्वे वेति* ॥ केवलस्य दोषाजन्यधीविषयान्यत्वस्याभावरूपधर्मस्याविनाशिनि शुद्धे ब्रह्मण्यसति च वर्तित्वेऽपि, सत्त्वेन प्रतीयमानत्वविशिष्टस्य तदधिकरणत्वस्य वा तदवृत्तित्वात् तद्धर्ममादाय घटादौ साध्यनिर्वाहः । *ननु* घटादीनां परमतेऽपि विनाशित्वात् तत्र घटत्वादिकमादाय सिद्धसाधनम्, अत आह—*पक्षतावच्छेदकावच्छेदेनेति* ॥ तथाचाकाश-परमाण्वादीनां परमतेऽ-

### न्यायामृतकण्टकोद्धारः

एतेन—नृसिंहाश्रमेणोक्तं 'स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमि'ति तल्लक्षणम्। अस्यार्थः—स्वस्य मिथ्यात्वधर्मिणः शुक्तिरजतस्य यदनधिकरणं घटादि, तदधिकरणं न भवति यस्यात्यन्ताभावस्य, तत्प्रतियोगित्वमिति। शुक्तिरूप्यादेर्घटादिनिष्ठाभावादन्य एव 'नेदं रजतमि'ति प्रतीयमानोऽभावः, तदधिकरणं ब्रह्मेत्युक्तमिति नासम्भवः। प्रमाणं त्वत्र स्वसमानाधिकरणात्यन्ता-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*केचित्तु*—स्वाश्रयावृत्तिः सन् स्वानधिकरणवृत्तिर्यः, तदन्यो योऽत्यन्ताभावस्तत्प्रतियोगित्वं साध्यम्,

### सौगन्ध्यविमर्शः

वाक्याप्रमाणत्वम्। वस्तुतस्तु—प्रत्यक्षादीनामपि ब्रह्मांशे प्रमात्वेऽपि न वेदान्तवाक्याप्रामाण्यम्; अबाधितार्थविषयकत्वेन प्रामाण्याविरोधात्। अज्ञाननिवर्तकत्वं तूपाध्यन्याविषयकत्वे सत्युपहितविषयकत्वेन, इति न घटादिज्ञानेनावान्तरवाक्यार्थज्ञानेन चाज्ञाननिवृत्तिरिति तु विशेषः। यथाच नावान्तरवाक्येन महावाक्यानां गतार्थत्वम्, तथा न्यायरत्नावल्यां ब्रह्मानन्दसरस्वतीभिः स्पष्टमुपपादितम्, इति तत एवाधिकमवगन्तव्यम्। *यत्तु* 'शुद्धब्रह्मणो वृत्त्यविषयत्वपक्षे त्वत्प्रलापस्य निरर्थकत्वादि'ति, *तत्र* लघुचन्द्रिकायामिदन्तु बोध्यम्—इत्यादिनोक्तम्—'शुद्धब्रह्मणो वृत्त्यविषयत्वपक्षे वृत्त्युपहितब्रह्मभिन्नं ब्रह्मालीकभिन्नं लक्ष्यम्' इति वाक्यमविद्यमानं कृत्वैवेत्यनुक्तोपालम्भनमेव॥

### विट्ठलेशीयटिप्पणी

विनाशित्वात् तद्वृत्तिधर्मवत्त्वमसिद्धम्, इति न सिद्धसाधनम्; तद्विनाशित्वस्याप्यनेन क्रोडीकारात्। शुद्धब्रह्मावृत्तित्वोक्तौ तदन्यत्वे पर्यवसानात् सिद्धसाधनं तुच्छसाधारण्यं च, इत्यविनाश्यवृत्तित्वमुक्तम्। एवं भ्रमविषयत्वमादायापि साध्यनिर्वाहो बोध्यः। नच—आकाशादौ विनाशित्वमात्रस्वीकार आकाशत्वमादायाप्युक्तसाध्यनिर्वाहसम्भवात् सामान्यरूपेणापि नोक्तमिथ्यात्वसिद्धिसंभव इति—वाच्यम्; अनेन विनाशित्वसिद्धौ तेन मिथ्यात्वसिद्धिरित्यभिप्रायात्, अविनाश्यवृत्तिस्ववृत्तियावद्धर्मवत्त्वं मिथ्यात्वमित्युक्तावुक्तमिथ्यात्वानामपि सिद्धिसम्भवाच्च। अत्र *यावत्त्वानुक्तौ विशिष्टसद्विविक्तत्व-भ्रमविषयत्वयोरसिद्धिः, *स्ववृत्तित्वानुक्तौ घट-पटयोः पटत्व-घटत्वयोरस्यत्वादसम्भवः। *अविनाश्यवृत्तित्वानुक्तावाकाशत्वादिकं सत्त्वेन प्रतीयमानत्वं चादायाकाशादौ सिद्धसाधनं स्यात्; अतस्तदुपादानम्। परन्तु वृत्त्युपहिते ब्रह्मणि निरुक्तसद्विविक्तत्वस्यासत्त्वात् तदादाय साध्यपर्यवसानासम्भवादत्र भ्रमविषयत्वे तात्पर्यकथनम्। पूर्वोक्तं सदसद्विलक्षणत्वमादायापि तत्र साध्यपर्यवसानं सम्भवतीति बोध्यम्॥

*श्रीः*—'प्रतिपन्नोपाधौ'इत्यादेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्यर्थः। प्रतिपन्नत्वं यद्यपि स्वाश्रयत्वेन प्रतीयमानत्वम्; तथाप्यनिर्वचनीयख्यातिपक्षे तत् प्रातिभासिकं व्यावहारिकरूपस्वाश्रयत्वनियतमेव। *किञ्च* स्वाधिकरणत्वस्यैव प्रवेशेऽपि धर्मिणि तद् गृहीत्वैव स्वस्मिन् तद्घटितं मिथ्यात्वं ग्राह्यम्, इति स्वाधिकरणत्वस्यैव प्रतिपन्नपदार्थत्वेऽपि न विशेषः। तत्र च समानसत्ताकभावाभावयोर्विरोधाद् व्यावहारिकप्रपञ्चाभावस्य प्रातिभासिकत्वे सिद्धसाधनाद् उक्तमिथ्यात्वघटकाभावस्तात्त्विको वाच्यः; स चातिरिक्तत्वेऽद्वैतहानिप्रसङ्गात् स्वाधिकरणीभूतब्रह्मस्वरूप एवाभ्युपेयः। तथाच तस्य प्रपञ्चवद्ब्रह्मवृत्तित्वाभावात् प्रपञ्चस्य तद्घटितं मिथ्यात्वं न सम्भवति, इत्यतः *केचित्* प्रकारान्तरेण मिथ्यात्वं परिष्कुर्वन्ति, तन्मतमुपन्यस्यति—*केचित्त्विति*॥ यथाश्रुते यदि ब्रह्मस्वरूपस्यापि प्रपञ्चाभावस्य तत्त्वेन प्रपञ्चवद्ब्रह्मवृत्तित्वमित्युच्यते, तदा संयोगादेरिवाव्याप्यवृत्तित्वोपगमेनार्थान्तरप्रसङ्गात् स्वसमानाधिकरणपदविवक्षितार्थमाह—*स्वेत्यादिना—अन्य इत्यन्तेन*॥ योऽभावः स्वसमानाधिकरण एव, न स्वासमानाधिकरण इत्येवकारार्थान्तर्भावेण स्वाश्रयावृत्तित्वरूपस्य, यः स्वाधिकरण एव वर्तते,

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

संयोगादिर्दृष्टान्तः ॥ तत्र साध्यप्रसिद्ध्यर्थमवृत्त्यन्तम् । व्याप्यवृत्तिघटत्वादिकं पक्षः । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्य पक्षविशेषणत्वादवृत्त्यभावप्रतियोगित्वमादाय न पक्षे साध्यपर्यवसानम् । अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वेन विशेषिते पक्षे स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा साध्यं व्याप्यवृत्तिस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमादाय पर्यवस्यति—*इत्याहुः* ॥

## विट्ठलेशीयटिप्पणी

न स्वानधिकरण इत्येवकारार्थान्तर्भावेण स्वानधिकरणवृत्तित्वरूपस्य च प्रतियोगिविशेषणस्य लाभः । एतद्विशेषणद्वयवदन्यत्वं च स्वाश्रयवृत्त्यभावे सम्भवति, अवृत्त्यभावे चेति । अत्र शुक्तिरूप्यं न दृष्टान्तः ; शुक्तौ रजततदभावयोर्मतद्वयसिद्धत्वं विना रजताभावस्य रजताश्रयवृत्तित्वाभावात्, प्रसाध्याङ्गकत्वे प्रयासगौरवात्, शुक्तितदवच्छिन्नचैतन्यनिष्ठस्य तत्स्वरूपस्याप्यभावस्यावृत्तित्वरूपत्वाभावाच्च, इत्यत आह—*संयोगादिर्दृष्टान्त इति* ॥ संयोगाभावे संयोगाश्रयवृत्तित्वस्य मतद्वयसिद्धत्वादिति भावः । *तत्र=संयोगे दृष्टान्ते । *अवृत्त्यन्तमिति* ॥ संयोगाभावस्य संयोगानधिकरणगुणादिवृत्तितया तदन्यत्वाभावात् संयोगाश्रयवृत्तितया तच्छून्यान्यत्वाच्चेति भावः । घटादेः समवायादिनाऽव्याप्यवृत्तित्वेन संयोगतुल्यत्वाद् वक्ष्यमाणपक्षविशेषणासम्भवाच्च पक्षत्वासम्भवादाह—*व्याप्यवृत्तिघटत्वादिकं पक्ष इति* ॥ तत्र स्वाश्रयवृत्त्यभावप्रतियोगित्वमादाय सिद्धसाध्यपर्यवसानेऽव्याप्यवृत्तित्वेनार्थान्तरादाह—*स्वसमानाधिकरणेति* ॥ *पक्षविशेषणत्वादिति* ॥ स्वाश्रयवृत्त्यभावमादाय साध्यपर्यवसानासम्भवादिति शेषः । *अवृत्त्यभावेति* ॥ स्वाधिकरणीभूतं घटत्वाधिकरणं घटस्तदवच्छिन्नं ब्रह्म वा, तद्रूपतया तद्वृत्त्यभावेत्यर्थः । अस्याभावस्य घटत्वादिरूपस्वाश्रयावृत्तित्वेन तद्भिन्नत्वाभावात् स्वानधिकरणवृत्तित्वस्य प्रतियोगिनि प्रवेशः । तथा सति घट-तदवच्छिन्नचैतन्यानिष्ठस्य तद्रूपस्य घटत्वाद्यभावस्याप्यवृत्तित्वेन घटत्वानधिकरणपटादिवृत्तित्वाभावेऽपि पटादिनिष्ठविषयत्वादीनां घटत्वादीनां वा सति घटत्वाश्रयावृत्तित्वे घटत्वानधिकरणवृत्तित्वेन तद्भिन्नपटादिनिष्ठघटत्वरूपावृत्त्यभावप्रतियोगित्वं घटत्वादौ सिद्ध्यतीति भावः । *नन्वेवमपि* घटत्वाश्रयावृत्तिघटत्वानधिकरणपटादिनिष्ठतद्रूपावृत्त्यभावमादायैव साध्यपर्यवसानसम्भवाद् घटादिनिष्ठतद्रूपतादृशाभावप्रतियोगित्वपर्यवसानासम्भवेन मिथ्यात्वासिद्धिः । अथाधिष्ठानतत्त्वज्ञानप्रयोज्याभाव एवाधिष्ठानस्वरूपः, न त्वभावमात्रमधिकरणस्वरूपम्, इति पटादिनिष्ठो घटत्वाद्यभावो घटत्वाद्याश्रयावृत्तिर्घटत्वानधिकरणवृत्तिश्च, इति तद्भिन्नत्वं घट-घटत्वाद्यवच्छिन्नचैतन्यरूपाधिष्ठानस्वरूपस्यावृत्तेर्घटत्वाद्यभावस्य, इति घटत्वस्य तत्प्रतियोगित्वरूपमिथ्यात्वसिद्धिः, अत एव संयोगाभावस्य संयोगाश्रयवृत्तितया संयोगे साध्यप्रसिद्धिरित्युच्यते, तदा ज्ञानप्रयोज्याधिष्ठानरूपाभावस्यापि तत्तदभावत्वेन घटत्वाद्याश्रयवृत्तितया तमादाय साध्यपर्यवसानासम्भवे कथमवृत्त्यभावमादाय साध्यपर्यवसानम् ? यदि तादृशाभावसिद्धैव मिथ्यात्वसिद्धिः, तदा पक्षविशेषण-साध्ययोर्विरोधोऽव्याप्यवृत्तित्वेनार्थान्तरं वा । यदि ज्ञानप्रयोज्याधिष्ठानरूपाभावस्य केनापि रूपेण नाधिष्ठानवृत्तित्वमित्युच्यते, तदाऽप्येतस्य स्वसमानाधिकरणपदार्थस्य उद्भासत्वं गौरवं च, इत्यत आह—*अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वेनेति* ॥ देश-कालावच्छिन्नवृत्तिकतत्सम्बन्धावच्छिन्नाभावप्रतियोगित्वेनेत्यर्थः । एकविशेषाभावनिश्चयसहितसामान्यधर्मसिद्धिसामग्र्या अपरविशेषसिद्धिजनकत्वाद् व्याप्याव्याप्यवृत्त्यभावप्रतियोगित्वरूपद्विविधस्वसमानाधिकरणाभावप्रतियोगित्वयोर्मध्ये व्याप्यवृत्त्यभावप्रतियोगित्वरूपापरविशेषसिद्धयेऽव्याप्यवृत्त्यभावप्रतियोगित्वरूपैकविशेषाभाववत्त्वं पक्षविशेषणं कर्तव्यमिति भावः । *पक्षे=घटत्वादौ । *स्वेति* ॥ तत्सम्बन्धेन स्वाधिकरणनिरूपितविशेषगतासम्बन्धावच्छिन्नाधेयताश्रयीभूताभावप्रतियोगित्वमित्यर्थः । *साध्यमिति* ॥ संयोगादिदृष्टान्तेनेत्यादिः । *व्याप्यवृत्तीति* ॥ देश-कालावच्छिन्नवृत्तिकान्येत्यर्थः । स्वाधिकरणनिष्ठनिरवच्छिन्नाधिकरणताकेति वा समानाधिकरणान्तार्थः । *पर्यवस्यतीति* ॥ देश-कालावच्छिन्नवृत्तिकाभावप्रतियोगित्वमादाय तदभावविशिष्टे पर्यवसानासम्भवादिति भावः ॥

न्यायामृतकण्टकोद्धारः

भावप्रतियोगि शुक्तिरजतम्, स्वानधिकरणमात्रावृत्त्यत्यन्ताभावप्रतियोगि, दृश्यत्वात्; संयोगवत्। स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वेनार्थान्तरत्ववारणाय पक्षविशेषणम्। एतत् साध्यं त्वत्यन्ताभावस्य रजताधिकरणकत्वेन, अवृत्तित्वेन वा सिद्ध्यति। तत्र च पक्षविशेषणमहिम्ना प्रथमस्य पक्षे बाधाद् वृत्त्यत्यन्ताभावप्रतियोगित्वमेव सिद्ध्यति, इत्युक्तमिथ्यात्वसिद्धिः। नच घटादौ व्यभिचारः; तस्य पक्षसमत्वादिति—निरस्तम्; अत्राप्यत्यन्ताभावस्य पारमार्थिकत्वादिदूषणग्रासात्। नच—अत्यन्ताभावस्य ब्रह्मरूपत्वात् पारमार्थिकत्वेन नाद्वैतहानिरिति—वाच्यम्; सोपाधिक-निरुपाधिकयोरैक्यासम्भवस्योक्तत्वात्। किञ्च—'अत्र रजतं ने'ति प्रतीत्या "नेह नाने"ति श्रुत्या च प्रतीयमानात्यन्ताभावस्य ब्रह्माधिकरणत्वेन प्रतीत्याऽऽधाराधेयभावयोश्च भेदस्यावश्यकत्वेन तयोरभेदानुपपत्तिः। अपि चाभावद्वैविध्यकल्पने प्रमाणाभावात् शुक्तिरूप्यादावव्याप्तिः; तदत्यन्ताभावस्य पारमार्थिकत्वायोगात्। नच—तत्रापि ब्रह्मैवाधिष्ठानम्; 'इदमि'ति शुक्तेरधिष्ठानत्वेन प्रतीतेः, एकेनैवाभावेन प्रतीति-व्यवहारोपपत्तेश्चानुमानमर्थान्तरग्रस्तम्; अवृत्त्यत्यन्ताभावप्रतियोगित्वस्याऽऽकाशात्यन्ताभावादाविव सत्त्वेऽप्युपपत्तेः। नच—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत् प्रकारान्तरमात्रम्, नतु 'प्रतिपन्नेत्यादिमूलोक्तरीत्यसम्भवप्रयुक्तम्; स्वरूपेणावृत्तेरप्यधिष्ठानब्रह्मस्वरूपस्य घटाद्यभावत्वविशिष्टरूपेण घटाद्यधिकरणब्रह्मवृत्तित्वसम्भवेन मूलोक्तरीतावदोषात्॥

विट्ठलेशीयटिप्पणी

*प्रकारान्तरमात्रम्*=प्रकारान्तरमेव। एवकारव्यवच्छेद्यमाह—*नत्विति*॥ *मूलोक्तरीतौ*=मूलोक्ते स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वलक्षणे। ब्रह्मरूपस्य प्रपञ्चाभावस्य केनापि रूपेण प्रपञ्चवृत्तित्वाभावेनासम्भवरूपदोषप्रयुक्तं प्रकारान्तरं नेत्यर्थः। असम्भवं परिहरति—*स्वरूपेणेति*॥ *अधिष्ठानब्रह्मस्वरूपस्य*=घटाद्यभावस्य स्वरूपेणाधिष्ठानब्रह्माभेदेन भेदनियताधाराधेयभावस्यासम्भवादित्यर्थः। *घटाद्यभावत्वविशिष्टरूपेण*=घटाद्यभावत्वविशिष्टस्य रूपं घटाद्यभावत्वम्, तेनेत्यर्थः। धर्मिणो ब्रह्मणः सकाशाद् आधाराधेयभावनियामकस्य भेदस्य लाभाय धर्मस्य विशिष्टत्वोक्तिः। एकविशेषणविशिष्टस्य शुद्धाद् विशेषणान्तरविशिष्टाच्च भेदादाधारतावच्छेदकरूपमाह—*घटाद्यधिकरणब्रह्मेति*॥ घटत्वेन प्रतीयमानत्वं त्वाधारतावच्छेदकम्; अधिकरणत्वाप्रवेशात्। आधाराधेयभावेन तदुभयभेदस्य तदुभयत्वावच्छेदकस्य वा भेदो नियामक इति हृदयम्। *अदोषात्*=लक्षणेऽसम्भवरूपदोषविरहात्। अत एव भवदुक्तद्वितीयप्रकारे नासम्भवः। नच—अव्याप्यवृत्त्यैनार्थान्तरवारणायोक्तपक्षविशेषणोपादानावश्यकत्वाद् द्वितीयप्रकार आवश्यकः स्यादिति—वाच्यम्; मूलोक्तमिथ्यात्वे 'स्वाधिकरणवृत्त्यभावे'त्यत्राधिकरणतात्वेनैवाभावाधिकरणतानिवेशात्, स्वत्वस्य प्राचां मतेऽनुगतत्वात् संयोगादिदृष्टान्तेऽव्याप्यवृत्त्यधिकरणताघटितसाध्यस्य प्रसिद्धिः। घटत्वादिपक्षे घटसम्बद्धानां देश-कालानां घटत्वावच्छेदकतया तदवच्छेदकदेशकालावच्छिन्नत्वबाधग्रहवशाद् घटनिष्ठघटत्वाभावीयव्याप्यवृत्त्यधिकरणताघटितसाध्यसिद्धिः, इत्युक्तपक्षविशेषणोपादाने प्रयोजनविरहात्। नच—उक्तबाधग्रह एवोक्तपक्षविशेषणेन बोध्यत इति—वाच्यम्; कादाचित्कोक्तबाधग्रहकालीनानुमित्यैवोक्तरीत्या मिथ्यात्वसिद्धिसम्भवे बाधग्रहनैयत्यग्राहकोक्तविशेषणवैयर्थ्यात्, मूलोक्तमिथ्यात्वे स्वाधिकरणनिरवच्छिन्नाधिकरणतात्वेनाधिकरणतायाः प्रवेश उक्तबाधग्रहस्याप्यनावश्यकत्वाच्च। *ननु*—संयोगस्य दृष्टान्तत्वासम्भव इति—चेत्, *न*; शुक्तिरूप्यस्यैव मूले दृष्टान्तत्वेनोपन्यासात्॥

*केचित्तु*—'तत्प्रकारान्तरमात्रम्' इत्यनेन प्रथमप्रकार एव विवक्षितः, द्वितीयप्रकारस्तु मूलोक्तः। *मूले*—'प्रतिपन्ने'त्यादिग्रन्थके स्वाश्रयेत्याद्यानुपूर्वीकवाक्यान्तराभावात्, उत्तरपङ्क्तौ 'स्वसमानाधिकरणे'त्यादिमूलोक्तस्यैव 'प्रतिपन्ने'त्यादिवाक्यार्थभूतस्येदानीमुपन्यस्तद्वितीयप्रकारेऽनुवादादिति—*व्याचक्षते*॥

न्यायामृतम्

इति पक्षत्रयेऽत्यन्तासत्त्वं स्यादनिवारितम् । धीनाश्यत्वे त्वनित्यत्वमेव स्याद् न मृषात्मता ॥

न्यायामृतकण्टकोद्धारः

अभावैकस्यभावो भावो विवक्षित इति—वाच्यम् ; ब्रह्मस्वरूपात्यन्ताभावस्याभावैकस्वभावत्वासिद्धेः । किञ्च ब्रह्मणि दृश्यत्वस्याग्र उपपादयिष्यमाणत्वेन तत्र व्यभिचाराद् विपक्षे बाधकाभावेनाप्रयोजकत्वम् । नच—अपरोक्षतया प्रतीयमानस्य रजतस्य तत्र सत्त्वे त्रैकालिकाभावप्रमानुपपत्तिरिति—वाच्यम् ;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नच—शुक्तिरूप्यादेर्माध्वमतेऽलीकत्वस्वीकारेण 'स्वसमानाधिकरणे'त्यादिमूलोक्तसाध्ये माध्वं प्रति शुक्तिरूप्यादेर्दृष्टान्तत्वासम्भव इति—वाच्यम् ; माध्वं प्रति शुक्तिरूप्यादेरपरोक्षत्वादिनाऽलीकान्यत्वं प्रसाध्योक्तानुमानसम्भवात्, अन्यथा संयोगादेर्मिथ्यात्वसाधने शुक्तिरूप्यादेर्दृष्टान्तत्वासम्भवात् । नच—घटत्वादिकमेव तत्र दृष्टान्त इति—वाच्यम् ; संयोगादिदृष्टान्तेन यद् घटत्वादौ साधितम्, तस्यैव संयोगादौ साधने सिद्धसाधनात्, अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वविशिष्टे तस्य साधने तु बाधः । किञ्च संयोगादौ मिथ्यात्वानुमितेः पूर्वं शुक्तिरूप्यस्येव घटत्वादेरपि मिथ्यात्वस्य प्रसाध्यत्वेन तयोर्दृष्टान्तत्वे न विशेषः ।

न्यायामृतसौगन्ध्यम्

त्वदुक्तज्ञानं हि ब्रह्माद्यतिरिक्ताभेदविषयकं चेत्, भ्रम एव । नो चेत्, प्रत्यक्षावान्तरवाक्यादिना

विट्ठलेशीयटिप्पणी

मूलोक्तलक्षणेऽसम्भवदोषाभावेऽप्यनुमाने मूलोक्तदृष्टान्तासिद्धिं शङ्कते—*नचेति* ॥ *अलीकत्वस्वीकारेणेति* ॥ स्वपदार्थत्वाभावादिति शेषः । *इत्यादीति* ॥ स्वनिष्ठनिरवच्छिन्नाधिकरणताकाभावप्रतियोगित्वम्, स्वनिष्ठावच्छिन्नवृत्तिकान्याभावप्रतियोगित्वं वाऽर्थः । *दृष्टान्तत्वासम्भव इति* ॥ अत एव संयोगदृष्टान्तकोक्तप्रकारान्तरसाध्यकानुमानमस्माभिरनुसृतमिति भावः । 'अपरोक्षत्वादी'त्यादिना सत्त्वेन प्रतीयमानत्वं ग्राह्यम् । व्यतिरेकेऽलीकम्, अन्वये ब्रह्म दृष्टान्तः । *उक्तेति* ॥ मूलोक्तेत्यर्थः । *अन्यथा*=प्रसाध्यदृष्टान्तकानुमानानङ्गीकारे । *मिथ्यात्वसाधने=उक्तप्रकारान्तरमिथ्यात्वसाधने । नच—संयोगादिपक्ष उक्तप्रकारद्वयसाध्यकानुमान उक्तपक्षविशेषणोपादाने संयोगादिपक्षे तद्वैशिष्ट्यबाधात् पक्षाप्रसिद्धिः, तदनुपादानेऽव्याप्यवृत्तित्वेन सिद्धसाधनमिति—वाच्यम् ; उक्तघटकाभावाधिकरणताया अनवच्छिन्नत्वेऽभावस्यावच्छिन्नवृत्तिकान्यत्वे वा लाघवम्, इति लाघवज्ञानसहकारेणोद्देश्यसिद्धेः पक्षविशेषणोपादाने प्रयोजनाभावात् । नच—घटत्वादिपक्षकानुमानेऽप्येवमेवास्त्विति—वाच्यम् ; उपायस्योपायान्तरादूषकत्वात् । *शुक्तिरूप्यादेरिति* ॥ अलीकत्ववादिनं प्रतीति शेषः । *घटत्वादिकमिति* ॥ अनलीकत्वात् स्वपदेनोपादानार्हत्वादिति भावः । *तत्र=संयोगपक्षकानुमाने । *यत्=यद्धर्मावच्छिन्नम् । *तस्य=तद्धर्मावच्छिन्नस्य । संयोग-घटत्वयोरेकसाध्यव्यक्तेरभावात् । संयोगे हि स्वाश्रयवृत्त्यभावप्रतियोगित्वम्, घटत्वे तूक्तविशेषणबलाद् अवृत्त्यभावप्रतियोगित्वमिति साध्यव्यक्तिभेदात् । *सिद्धसाधनादिति* ॥ घटत्वपक्षकानुमानात् पूर्वमेव संयोगादौ स्वाश्रयवृत्त्यभावप्रतियोगित्वरूपसाध्यस्य सिद्धत्वात् । *ननु* पक्षविशेषणोपादानेनात्राप्यवृत्त्यभावप्रतियोगित्वमसिद्धमेव सेत्स्यति, इत्यत आह—*संयोगादाविति* ॥ *तस्य=अवृत्त्यभावप्रतियोगित्वरूपस्य तद्धर्मावच्छिन्नस्य । *ननु* विनैव पक्षविशेषणमभावस्यावृत्तित्वे लाघवज्ञानादेवोक्तसाध्यव्यक्तिसिद्धिसंभवाद् न सिद्धसाधनम्, न वा पक्षविशेषणासिद्धिः, इत्यत आह—*किंचेति* ॥ *न विशेष इति* ॥ तस्मात् प्रसाध्यदृष्टान्तकानुमानस्य प्रकारान्तरसाध्यानुसरणेऽप्यावश्यकतया मूलोक्तसाध्येऽपि शुक्तिरूप्यादेर्दृष्टान्तत्वसंभवात् प्रकारान्तरानुसरणं न मूलोक्तरीतिदोषप्रयोज्यमिति भावः । इदं च मूलकारेणापि ध्वनित-

न्यायामृतम्

मम त्वत्यन्तासत्त्वमेव मिथ्यात्वम् , इति नास्मत्प्रतिबन्दी ॥

अद्वैतसिद्धिः

अवशिष्टं च दृष्टान्तसिद्धौ वक्ष्यामः ॥

तरङ्गिणी

ममेव पर्यनुयोग इत्यत आह—*मम त्विति* ॥ मदभिमतं मिथ्यात्वं तु न त्वया प्रपञ्चस्येष्यत इति भावः ॥

मिथ्यात्वपक्षाः पञ्चत्वं प्रापिताः पूर्वपक्षिभिः । दूरं (१)निरस्तास्ते तर्कैरिति संशृणवामहे ॥

व्यासादिसूततर्काम्बुपूरैः पक्षयुगं युजि । न्यायामृततरङ्गिण्यां मिथ्याभावोक्तिभङ्ग ऐत् ॥

न्यायामृतकण्टकोद्धारः

असत्त्वेनाप्युपपत्तेः । नचासत्त्वेऽपरोक्षप्रतीतिविषयत्वानुपपत्तिः ; परोक्षप्रतीतिविषयत्ववदपरोक्षप्रतीतिविषयत्वस्यापि संभवेन प्रातिभासिकदोषवशेनासन्निकृष्टस्यापि प्रत्यक्षविषयत्वोपपत्तेरिति दिक् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अवश्यं चास्माभिः सर्वदृश्यमिथ्यात्ववादिभिः शुक्तिरूप्यादेर्मिथ्यात्वं साधनीयमेवेत्याशयेनाह—*अवशिष्टं चेत्यादि* ॥

*आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते* । *चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्* ॥

इति पञ्चविधं प्रोक्तं मिथ्यात्वं ध्वान्तनाशकम् ॥

न्यायामृतसौगन्ध्यम्

ज्ञातब्रह्ममात्रविषयकं स्यात् । तथाचाज्ञातज्ञापकत्वाभावेन तज्जनकवेदान्तवाक्यस्याप्रमाणत्वं स्यादेव ॥ किञ्च शुद्धब्रह्मणो वृत्त्यविषयत्वपक्षे त्वत्प्रलापस्य निरर्थकत्वाच्च ॥

विट्ठलेशीयटिप्पणी

मित्याह—*अवश्यं चेति* ॥ एकविधमिथ्यात्वनिर्वचनेनैव प्रकृतनिर्वाहे बहुविधमिथ्यात्वनिर्वचनं विश्वमिथ्यात्वे स्वमतस्य सर्वाचार्यसंमतिप्रदर्शनायेत्याह—*आद्यं स्यादिति* ॥ *आद्यम्=सदसत्त्वानधिकरणत्वम् । *द्वितीयम्=प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् , *तृतीयम्=ज्ञाननिवर्त्यत्वम् , इमे विवरणोक्ते । *चतुर्थम्=स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वम् । *पञ्चमम्=सद्विविक्तत्वम् । *ध्वान्तम्=विप्रतिपन्नविम्बमिथ्यात्वाज्ञान-तदधीनविभ्रमसत्यत्वज्ञानम् । *तन्नाशकम्=तन्निवर्तकमित्यर्थः । तथाचोक्तरीत्या द्वैतप्रपञ्चमिथ्यात्वसिद्धावद्वैतसिद्धिः ॥

## इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योः पञ्चममिथ्यात्वविचारः ॥

(१) अनेन ग्रन्थेन—उच्छ्वसितिं मिथ्यात्वपक्षे स्वस्य तदुपसर्पणापाटवम् , मृतमारणे स्वीयः पराक्रमश्च—प्रदर्श्यते, वस्तुस्थितिस्तु—न मिथ्यात्वपक्षा मृताः, न वा तेषां दूरतो निरासः, तथा प्रतीतिस्तु पञ्चशब्दमात्रसाम्याद् ध्वान्तविजृम्भितमिति तत्त्वम् ॥

# अथ मिथ्यात्वमिथ्यात्वविचारः

———:०:———

**न्यायामृतम्**

अस्तु वा मिथ्यात्वं यत्किंचित्, तथापि मिथ्यात्वमबाध्यम्? बाध्यं वा? आद्येऽद्वैत-

**अद्वैतसिद्धिः**

*ननु*—उक्तमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः; एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयो-

**न्यायामृतकण्टकोद्धारः**

विशेषतो मिथ्यात्वं खण्डयित्वा सामान्यतोऽपि खण्डयति—*अस्तु वेति* ॥ *ननु* मिथ्यात्वस्य

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*प्रसक्तयोः=ज्ञातयोः। *एकमिथ्यात्वे=एकतरमिथ्यात्वे। *अपरसत्यत्वनियमात्=अन्यतरस्याधिक-

**न्यायामृतसौगन्ध्यम्**

अपिच मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः। एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्ध-

**सिद्धिव्याख्या**

*ननु* उक्तमिथ्यात्वस्य मिथ्यात्वमात्रेण न प्रपञ्चस्य सत्यत्वं स्यात्, तत्र मानाभावादित्याशङ्क्य, तत्रानुमानमभिप्रेत्य तन्मूलभूतां व्याप्तिं दर्शयति—*एकस्मिन्निति* ॥ एकस्मिन्नात्मनि प्रसक्तयोर्मिथ्यात्व-सत्यत्वयोर्मिथ्यात्वमिथ्यात्वे सत्यत्वसत्यत्वस्य नियमेन दृष्टत्वादित्यर्थः। तथाच जगत्, सत्यम्, मिथ्याभूतमिथ्यात्वकत्वादात्म-

**विट्ठलेशीयटिप्पणी**

*मूले*—उक्तमिथ्यात्वस्य* ॥ *ननु* प्रपञ्चमिथ्यात्वं यदि मिथ्या स्यात्, तर्हि प्रपञ्चः सत्यः स्यात्, इत्यापत्तिपरत्वमेतत्पङ्क्तेर्बोध्यम्; तच्च न संभवति; मिथ्यात्वस्य सत्यत्वाव्याप्यत्वात्, आपाद्यापादकयोः पक्षभेदाच्च, इत्यत आह—*एकस्मिन्निति* ॥ प्रसक्तिर्नापत्तिरनुमितिर्वा; विरुद्धयोरेकस्मिन् धर्मिण्येकदा तयोरसंभवात्, अतो व्याचष्टे—*प्रसक्तयोरिति* ॥ *ज्ञातयोरिति* ॥ ज्ञानं तु संशयरूपं संभवतीति भावः। तद्धर्मिवृत्तित्वेन ज्ञायमाननिष्ठं तद्धर्मिघटितं मिथ्यात्वं स्वाश्रयविरुद्धत्वसंबन्धेन तद्धर्मिवृत्तित्वेन ज्ञायमाननिष्ठस्य तद्धर्मिणि सत्यत्वस्य स्वाधिकसत्ताकत्वस्य व्याप्यमिति 'नियमादि'त्यन्तस्यार्थः। बौद्धकल्पितप्रातिभासिकाभावप्रतियोगिनि ब्रह्मणि सत्यत्वस्य सर्वैरास्तिकैरुपगमात्। एवं च ब्रह्मणि प्रतीयमानप्रपञ्चमिथ्यात्वस्य ब्रह्मणि प्रपञ्चाभावपर्यवसितस्य मिथ्यात्वोपगमे स्वाश्रयविरुद्धत्वसंबन्धेन प्रपञ्चे मिथ्यात्वोपगमपर्यवसानात् तद्व्यापकसत्यत्वापत्तिः, इति नापाद्यापादकयोर्विरोधः, पक्षभेदश्चेति भावः। *अस्मिन् पक्षे* एकस्मिन् ब्रह्मणि प्रसक्तयोः प्रपञ्च-तदभावयोरेकस्य प्रपञ्चाभावस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वापत्तिरित्यक्षरबोध्यार्थः—*इति केचित्* ॥ *टीकाकारमते तु* प्रपञ्चमिथ्यात्वमिथ्यात्वोपगमे स्वाश्रयविरुद्धत्वसंबन्धेन प्रपञ्चनिष्ठत्वेन ज्ञाते सत्यत्वे मिथ्यात्वापगमपर्यवसानात् तद्व्यापकस्याधिकसत्तात्मकत्वस्य सत्यत्वस्य आपत्तिरिति—भावः ॥ *अस्मिन् पक्षे* प्रपञ्चरूपैकधर्मिणि प्रसक्तयोर्व्यावहारिकयोर्मिथ्यात्व-सत्यत्वयोर्मध्ये एकस्य मिथ्यात्वस्य मिथ्यात्वे सत्यत्वस्य तात्त्विकत्वापत्तिरित्यक्षरार्थः। एकस्मिन् धर्मिणि ज्ञातयोर्द्वयोर्मध्ये यस्यैकस्य मिथ्यात्वम्, ततोऽपरस्य सत्यत्वम्, अधिकसत्ताकत्वं वेत्यर्थः; शुक्तिनिष्ठयो रजत-तदभावयोर्मध्ये रजतस्यैकस्य मिथ्यात्वेऽपि ततोऽपरस्य तदभावस्य सिद्धान्ते सत्यत्वानुपगमेन प्रथमव्याप्तौ व्यभिचारात्, सिद्धान्ते रजताभावस्य व्यावहारिकत्वेन घटादिवन्मिथ्यात्वेऽपि रजतस्याधिकसत्ताकत्वाभावेन द्वितीयव्याप्तावपि व्यभिचारात्, इत्यत एकपदमेकतरार्थकतया व्याचष्टे—*एकतरमिथ्यात्व इति* ॥ अपरपदं चान्यतरार्थकतया व्याचष्टे—*अन्यतरस्येति* ॥ शुक्तौ रजत-तदभावयोः कस्यापि सत्यत्वानुपगमात् व्यभिचारः, अतः सत्यत्वपदमधिकसत्तापरतया व्याचष्टे— *अधिकसत्तेति*॥

## सिद्धिव्याख्या

वदित्यनुमानात् सत्यत्वसिद्धिः । नच—आत्मनि सत्येऽपि साध्यव्यापकत्वात् पक्ष एव साधनाव्यापकत्वाच्चात्मत्वमुपाधिरिति—वाच्यम् ; अत्रात्मत्वस्योपाधित्वं न साधने साध्यव्यभिचारोन्नायकतया, मिथ्याभूतमिथ्यात्वकत्वस्य सत्यत्वाव्यभिचारित्वात् सत्यत्वव्यापकात्मत्वाव्यभिचारित्वेन साध्यव्यभिचारानुमापकस्य हेतावुपाधित्वव्यभिचारित्वरूपहेतोरसिद्धत्वाच्च, किन्तु सत्प्रतिपक्षोन्नायकतयेति वक्तव्यम्, तदपि नोपपद्यते ; प्रपञ्चसत्यत्वविषयकस्थापकानुमाने मिथ्याभूतमिथ्यात्वकत्वस्य हेतोः सत्यत्वरूपसाध्येन व्याप्तिग्राहकस्य व्याघातरूपतर्कस्य सद्भाववदात्मत्वस्योपाधेर्व्यतिरेकेणानात्मत्वेन क्रियमाणे स्थापनानुमानीयसाध्यस्य सत्यत्वस्य व्यतिरेकानुमानेऽनुकूलतर्काभावेनोपाधेरप्रयोजकत्वात् । *ननु*—रूप्यगतमिथ्यात्वस्य मिथ्यात्वेन मिथ्याभूतमिथ्यात्वकत्वरूपहेतुमति रूप्ये साध्यं सत्यत्वं नास्ति, इति तत्र हेतोर्व्यभिचारः, नच—यदि रूप्ये मिथ्यात्वं मिथ्या, तर्हि मिथ्यात्वविरुद्धं सत्यत्वं सत्यं स्यात् ; तथाच रूप्यम्, मिथ्याभूतमिथ्यात्वाधिकरणं न भवति, सत्यभूततद्विरुद्धसत्यत्वानधिकरणत्वात् ; यत् सत्यभूतयद्विरुद्धाधिकरणं न भवति, तद् मिथ्याभूततद्विरुद्धाधिकरणं न भवति, यथा सत्यभूतगोत्वविरुद्धगोत्वाभावानधिकरणं गौर्गोत्वाभावविरुद्धमिथ्याभूतगोत्वाधिकरणं न भवति, तथाच रूप्यमिथ्यात्वस्य सत्यत्वेन रूप्ये हेतोरेवाभावाद् न व्यभिचार इति—वाच्यम् ; सत्यभूतसत्यत्वस्यानधिकरणमपि रूप्यं सत्यभूतमिथ्यात्वस्याधिकरणं न भवति, किन्तु मिथ्यात्वस्यापि मिथ्याभूतस्यैवाधिकरणम् ; धर्मिणो रूप्यस्य मिथ्यात्वात् । *तथाच प्रयोगः*—रूप्यगतत्वेनोच्यमाने सत्यत्व-मिथ्यात्वे, मिथ्या, मिथ्यात्वोपेतधर्मिकत्वात् ; स्वप्नप्रतीतगजरूपवत् । तथाच जगत् सत्यं स्यादित्युक्तानुमानस्य रूप्ये व्यभिचारतादवस्थ्यम् । नच—रूप्यमिथ्यात्वे मिथ्यात्वसाधकस्य मिथ्यात्वोपेतधर्मिकत्वस्य हेतो रूप्यमिथ्यात्वे मिथ्यात्वाभावसाधकेन सामान्यव्याप्तिमूलकानुमानेन सत्प्रतिपक्षितस्य न रूप्यमिथ्यात्वमिथ्यात्वरूपसाध्यज्ञानजनकत्वम्, अतो रूप्ये मिथ्याभूतमिथ्यात्वकत्वस्य हेतोरज्ञानाद् नोक्तानुमानस्य रूप्ये व्यभिचार इति—वाच्यम् ; परस्परविरहयोरेकाभावेऽन्यस्य सत्त्वनियमरूपायाः सामान्यव्याप्तेर्धर्मिसत्तास्थलविषयतया गवादावमिथ्यात्वरूपोपाधिग्रस्तत्वेन तन्मूलकानुमानस्य हीनबलत्वेन तेनारूप सत्प्रतिपक्षितत्वाभावेन रूप्ये हेतुज्ञानसंभवेन व्यभिचारतादवस्थ्यात् । यत् सत्यभूततद्विरुद्धाधिकरणं न भवति, तन्मिथ्याभूततदधिकरणं न भवतीति सामान्यव्याप्तौ वन्ध्यासुते व्यभिचारश्च । नहि सत्यभूतस्य गौरत्वविरुद्धस्य श्यामत्वादेरनधिकरणे वन्ध्यासुते तद्विरुद्धं गौरत्वं मिथ्याभूतं नास्ति, किंतु गौरत्वं तद्विरुद्धं श्यामत्वं चेत्युभयमपि वन्ध्यासुते मिथ्यैव, धर्मिण एव मिथ्यात्वात् । तथाचोक्तव्याप्तेस्तत्र व्यभिचारः स्फुट एव । यदि चोक्तसामान्यव्याप्तौ विरुद्धत्वं न सहानवस्थित्यादिसाधारणम्, किंतु परस्परविरहरूपत्वम् ; नच गौरत्व-श्यामत्वे परस्परविरहरूपे, अतो नोक्तव्यभिचार इत्युच्येत, तदाऽपि यत्र स्वप्नावस्थायां दृष्टे क्वचिदधिकरणे सत्यभूतस्य गजाभावविरहरूपस्य गजस्यानधिकरणत्वं वर्तते, गजविरहरूपस्य गजाभावस्य मिथ्याभूतस्य चाधिकरणत्वम्, नतु सत्यभूतस्यैव गजाभावस्याधिकरणत्वमिति चास्ति, तत्र गजो गजाभावश्चेत्युभयमपि मिथ्यैव, इति परस्परविरहरूपविरुद्धत्वगर्भाया अप्युक्तव्याप्तेर्व्यभिचारस्तदवस्थ इति—चेत्, *मैवम्* । यदुक्तम्—रूप्यस्य धर्मिणो मिथ्यात्वात् तत्र सत्यत्व-मिथ्यात्वे परस्परविरहरूपे अपि मिथ्यैव—इति, *तन्न* ; प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा मिथ्यात्वम्, नच प्रतियोगित्वं धर्मान्तरवद् धर्मिसत्त्वापेक्षम्, किं त्वनपेक्षम् ; धर्मिसत्त्वानपेक्षधर्मस्य सत्यत्वं तु धर्मिमिथ्यात्वेऽपि युक्तमेव । तथाच त्वदुक्तहेतोरप्रयोजकत्वादस्मदुक्तहेतोर्न रूप्ये व्यभिचार इति । नच—प्रतियोगित्वमपि धर्मो विना धर्मिणं नावतिष्ठते, वन्ध्यासुतादावपि नात्यन्ताभावप्रतियोगित्वम्, किन्त्वत्यन्ताभाव एव वन्ध्यासुतप्रतियोगिकत्वमिति—वाच्यम् ; अत्यन्ताभावस्य वन्ध्यासुतप्रतियोगिकत्वे वन्ध्यासुतस्यापि तत्प्रतियोगित्वस्यावर्जनीयत्वात्, भवदुक्तमिथ्यात्वोपेतधर्मिकत्वहेतोर्धर्म्यसत्त्वप्रयुक्तसत्त्वाभावरूपोपाधिग्रस्तत्वेन सोपाधिकत्वाच्च । नच—ब्रह्मण्यारोपितमिथ्यात्वादौ साध्याव्याप्तिरिति—वाच्यम् ; अस्य साधनावच्छिन्नसाध्यव्यापकोपाधित्वात् । नन्द्वयान्तर्भावाच्च न वन्ध्यासुतश्यामत्वादौ साध्याव्याप्तिः

### न्यायामृतम्

हानिः । न हि प्रपञ्चोपाधिकं भ्रमकालानिश्चितं तद् मिथ्यात्वं निरुपाधिक-भ्रमकालनिश्चिताधिष्ठानब्रह्ममात्रम् ; तस्य मां प्रत्यपि (१)सिद्धत्वात्, दृश्यत्वादेर्मिथ्यात्व एव व्यभिचारश्च । मिथ्यात्वस्य चादृश्यत्वेऽनुमानवैयर्थ्यम् ; तस्य साध्यज्ञप्त्यर्थत्वात्, अन्त्ये सिद्धसाधनम्, अद्वैतश्रुतेरतत्त्वावेदकत्वं च स्यात्, जगच्च सत्यं स्यात् ; आत्मवत् ॥

### तरङ्गिणी

*ननु* मिथ्यात्वस्याबाध्यत्वेऽपि नाद्वैतहानिः ; तस्य ब्रह्मस्वरूपत्वात्, इत्यत आह—*नहीति* ॥ *भ्रमकालानिश्चितमिति* ॥ अन्यथा रूप्यभ्रमाद् रूप्यार्थिप्रवृत्तिर्न स्यादित्यर्थः ॥ *अधिष्ठानेति* ॥ एतच्च भ्रमकाले ब्रह्मणो निश्चयोऽस्तीत्यस्योपपादकम् ॥ *तस्येति* ॥ ब्रह्मस्वरूपमात्रस्य प्रपञ्चमिथ्यात्वस्येत्यर्थः ॥ *दृश्यत्वादेरिति* ॥ ब्रह्मस्वरूपेऽबाध्ये मिथ्यात्वे दृश्यत्वस्य सत्त्वादित्यर्थः । *ननु* साध्याभाववत्यपि मिथ्यात्वे दृश्यत्वस्य हेतोरभावाद् व्यभिचारः, इत्यत आह—*मिथ्यात्वस्य चेति* ॥ मिथ्यात्वानुमाने यदि मिथ्यात्वं न विषयः, तदा मिथ्यात्वानुमानवैयर्थ्यमित्यर्थः ॥ *तस्येति* ॥ मिथ्यात्वानुमानस्य मां प्रति मिथ्यात्वज्ञप्त्यर्थत्वेन त्वया प्रयुक्तत्वादित्यर्थः ॥ *अन्त्य इति* ॥ मिथ्यात्वस्य बाध्यत्व इत्यर्थः ॥ *सिद्धसाधनमिति* ॥ अविद्यमानानतिरिक्तबाध्यत्वरूपमिथ्यात्वस्य प्रपञ्चे ममानिष्टत्वाभावादित्यर्थः ॥ *अद्वैतश्रुतेरिति* ॥ बाध्यत्वरूपमिथ्यात्वस्यातत्त्वस्यावेदकत्वादित्यर्थः ॥ *जगदिति* ॥ जगत्, सत्यम्, मिथ्याभूतमिथ्यात्वकत्वात् ; आत्मवदित्यनुमानादित्यर्थः ॥

### न्यायामृतकण्टकोद्धारः

ब्रह्मस्वरूपत्वाद् नाद्वैतहानिकरत्वम्, अत आह—*न हीति* ॥ विरुद्धधर्माधिकरणयोरैक्यासम्भवादिति भावः । *ननु* निरुपाधिकं भ्रमकालनिश्चितं निरुक्तातिरिक्तमेव मिथ्यात्वं ब्रह्मस्वरूपं साध्यते, अतो न दोषः, इत्यत आह—*तस्येति* ॥ एतादृशमिथ्यात्वरूपं ब्रह्मैव प्रपञ्चे साध्यते चेत्, तस्य ब्रह्मरूपमिथ्यात्वस्य प्रपञ्चे मयाऽप्यङ्गीकारात् सिद्धसाधनं स्यादित्यर्थः । ब्रह्मणो व्यापकत्वेनान्तर्यामित्वेन सर्वत्राङ्गीकारादिति भावः । *जगच्चेति* ॥ तथाच जगत्, सत्यम्, मिथ्याभूतमिथ्यात्वकत्वात्, आत्मवदित्यनुमानं फलितमित्यर्थः ॥

### सिद्धिव्याख्या

शङ्क्येति । नच पक्षे साध्यव्याप्तिः शङ्क्या ; मिथ्यात्वस्य धर्मिसत्यत्वविरहरूपत्वेन धर्मिसत्यत्वानपेक्षत्वेन प्रत्युत धर्मिसत्यत्वप्रतिक्षेपकतया तत्प्रतिकूलत्वात्, अन्यथा सत्यत्वविरहरूपातिरिक्तस्य ब्रह्माभिन्नत्वादिरूपस्य पारिभाषिकमिथ्यात्वस्य सत्यत्वपक्षेऽप्यविरोधेन सिद्धसाधनतापातात् । *किंच* प्रतिपन्नोपाधावभिषिद्धम्, प्रत्युत बाधकज्ञानेन विहितमपि रूप्यमिथ्यात्वं यदि प्रातिभासिकरूप्यसंबन्धमात्रेण प्रातिभासिकम्, तर्हि सति ब्रह्मणि निषिद्धा अपि धर्माः सन्तः स्युः ; सद्ब्रह्मसंबन्धात्, रूप्याधिष्ठानं शुक्तिरपि प्रातिभासिकी स्यात् ; प्रातिभासिकरूप्यसंबन्धात्, रूप्ये प्रपञ्चे च सद्वैलक्षण्यं सत्संबन्धात् सत् स्यात्, तस्मिन्नेवासद्वैलक्षण्यमसत् स्यात् ; असत्संबन्धात्, असति सद्वैलक्षण्यमसत् स्यात् ; अधिकरणत्वेनासता संबन्धात्, रूप्य-तन्मिथ्यात्वयोर्मिथ्यात्वे भ्रान्ति-बाधव्यवस्था च न स्यात् ; अनिर्वचनीयरजतादिज्ञानस्य समानाधिकरणप्रकारकतयाऽभ्रान्तत्वापत्त्या मिथ्याभूतार्थविषयकतया भ्रान्तित्वं वक्तव्यम्, अमिथ्याविषयकतया च बाधत्वमिति वक्तव्यम्, उभयोरपि मिथ्याविषयकत्वे भ्रान्ति-बाधव्यवस्थानुपपत्तेः

(१) मिथ्यात्वस्य ब्रह्मस्वरूपत्वे प्रपञ्चो मिथ्येत्यस्य प्रपञ्चो ब्रह्मस्वरूपवानित्यर्थः स्यात् । इदं च मां प्रत्यपि सिद्धम् ; ब्रह्मणो व्यापकत्वेन प्रपञ्चेऽपि सत्त्वेन सिद्धसाधनतेति भावः ॥ (श्रीनि०)

अद्वैतसिद्धिः

रेकमिथ्यात्वेऽपरसत्यत्वनियमात्, मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः, उभयथाऽप्यद्वैत-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्तानियमात् । *तद्वदेवेति* ॥ यथा मिथ्यात्वसाधकमानं मिथ्यात्वे न प्रवर्तते, तथा प्रपञ्चेऽपीत्यर्थः ।

सिद्धिव्याख्या

स्पष्टत्वात् । *किंच* त्वदुक्तेन मिथ्यात्वोपेतधर्मिकत्वेन हेतुना साध्यस्य मिथ्यात्वमिथ्यात्वस्यापि प्रातिभासिक-रूप्यसंबन्धात् प्रातिभासिकत्वापत्त्या हेतोः प्रातिभासिकविषयकतया रूप्यज्ञानस्येव व्यवहारदशायामप्रामाण्यं स्यात् । *अपिच* रूप्यमिथ्यात्वे मिथ्यात्वसाधनाय हेतूकृतस्य मिथ्यात्वोपेतधर्मिकत्वस्य मिथ्यात्वे घटरूपादिधर्मिणि घटादौ मिथ्याभूतत्वस्याभावेन मिथ्याभूतमिथ्यात्वोपेतधर्मिकत्वस्य हेतोर्घटरूपादौ सत्त्वाद् मिथ्यात्वरूपसाध्यस्याभावाद् व्यभि-चारापत्त्या सत्यभूतेतिविशेषणावश्यंभावाद् विरोधश्च स्यात् । रूप्यगतमिथ्यात्वे पक्षीकृते सत्यभूतमिथ्यात्वोपेतधर्मिकत्व-हेतुसिद्ध्यर्थं सत्यत्वेनाङ्गीकृते रूप्यमिथ्यात्वे यदि मिथ्यात्वं साध्यते, तदा पक्षे न हेतुः स्यात् । तथाच हेतु-साध्ययोः पक्षे सहावस्थानविरोध इति स्पष्ट एव । *यत्तु*—परस्परविरहरूपविरुद्धत्वगर्भायामप्युक्तव्याप्तौ स्वप्नावस्थायां दृष्टे क्वचिदधिकरणे व्यभिचारः—इति, *तन्न ;* विरहशब्देनात्रात्यन्ताभावविवक्षायां स्वप्नप्रतीतयोर्गज-तद्वत्सयोः परस्परात्यन्ताभावरूपत्वाभावेनोभयोरपि मिथ्यात्वेन स्वप्नप्रतीतगज-तन्मिथ्यात्वयोरुभयोरप्यमिथ्यात्वेन गजस्यैव मिथ्यात्वेन गजे मिथ्यात्वस्य गजात्यन्ताभावगर्भतया सत्यत्वात् । तस्माद् मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापात इति यदुक्तमिति ध्येयम् । *मिथ्यात्वसत्यत्वे चेति* ॥ *तद्वदेव* ॥ मिथ्यात्ववदेवेत्यर्थः । *उभयथाऽपीति* ॥ सत्यत्व-मिथ्यात्वलक्षणप्रकारद्वयेनापीत्यर्थः । नच—मिथ्यात्वस्य सत्यत्वपक्षे नाद्वैतव्याघातः, तस्य ब्रह्मस्वरूपत्वादिति —वाच्यम् ; प्रपञ्चोपाधिकस्य रूप्यार्थप्रवृत्त्यनुपपत्त्या भ्रमकालानिश्चितस्य च मिथ्यात्वस्य निरुपाधिकभ्रमकाल-निश्चिताधिष्ठानब्रह्ममात्रत्वायोगात्, भ्रमकाले ब्रह्मणो निश्चितत्वाभावेऽधिष्ठाननिश्चयायोगेन भ्रमस्यैवासंभवापत्तेः, तथाभूतब्रह्मणो मिथ्यात्वरूपत्वे 'जगन्मिथ्ये'ति प्रतिज्ञाया जगद्ब्रह्मसंबन्ध्यर्थकतया तस्यार्थस्य मां प्रत्यपि सिद्धत्वेन सिद्धसाधनाच्च । *किंच* बाध्यत्वेन स्वीकृतं मिथ्यात्वं दृश्यं वा ? न वा ? *आद्ये* दृश्यत्वादेर्मिथ्यात्व एव व्यभिचारः ; ब्रह्मस्वरूपेऽबाध्येऽपि मिथ्यात्वे दृश्यत्वस्य सत्त्वात् । *न द्वितीयः* ; मिथ्यात्वस्यादृश्यत्वेऽ-नुमितिं प्रत्यविषयत्वेन विषयान्तरस्य चाभावेनानुमानवैयर्थ्यापत्तेः । *ननु*—मिथ्यात्वं ब्रह्मानतिरिक्तमेव, तच्च द्वितीयाभावोपलक्षितब्रह्मस्वरूपम्, नतु निरुपाधिकम्, न वा भ्रमकाले निश्चितम् ? इति न पूर्वोक्तब्रह्माभेदायोगः, नवा सिद्धसाधनमिति—चेत्, *न* ; उपलक्षणीभूतद्वितीयाभावस्य बाध्यत्वे 'जगद् मिथ्ये'त्युक्तेर्बाध्यद्वितीयाभावोपलक्षितब्रह्म-संबन्ध्यर्थः स्यात् । तथाच सिद्धसाधनम् । अबाध्यत्वेऽपि ब्रह्मानतिरिक्तत्व उपलक्षणत्वायोगः, अतिरिक्तत्वे चाद्वैत-हानिः । *किंच* अप्रसिद्धस्योपलक्ष्यस्य प्रसिद्धमुपलक्षणं भवति, द्वितीयाभावरूपोपलक्षणं प्रत्युपलक्ष्यस्य शुद्धब्रह्मणो नित्यसिद्धत्वेन तत् प्रति न तस्योपलक्षणत्वम् । नच—काकेन गृहगतसंस्थानविशेष इव प्रकाशमानब्रह्मगतधर्मान्तरमेव द्वितीयाभावेनोपलक्ष्यत इति—वाच्यम् ; उपलक्षणकाले द्वितीयमात्राभावेन वैषम्यात् । *अपिच* ज्ञातस्यैवोपलक्षणत्वेन

विट्ठलेशीयटिप्पणी

उक्तरीत्या मिथ्यात्व-मिथ्यात्वस्य सत्यत्वव्यासेरनुपगम आपादकत्वासंभवादाह—*नियमादिति* ॥ मिथ्यात्वसाधक-श्रुत्यनुमाने जाग्रति कथं मिथ्यात्वे सत्यत्वोपगमः ? कथं वा प्रपञ्चसत्यत्वापत्तिः ? अतो व्याचष्टे—*तद्वदेवेतीति* ॥ यथा प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापत्तिरूपतर्केण प्रपञ्चमिथ्यात्वे मिथ्यात्वाभावः सिद्धः, इति बाधादेव मिथ्यात्वसाधकमानं न प्रवर्तते, तथा तत्रैव दृश्यत्वादिति हेतोर्व्यभिचारेण प्रपञ्चे मिथ्यात्वसाधकमानं न प्रवर्तत इत्यर्थः । एवं मिथ्यात्वशून्यं प्रपञ्चमिथ्यात्वम्, सत्यत्व-मिथ्यात्वान्यतरवत्, उपहितचित्तादात्म्यवत्त्वात्, शुक्तिरजत-वत्, ब्रह्मवदित्यनुमानेन प्रपञ्चमिथ्यात्वे सत्यत्वोपगमसंभवेनोक्तव्याप्तिबलात् प्रपञ्चसत्यत्वापत्तिरिति भावः । मौलैकापर-

## न्यायामृतकण्टकोद्धारः

*अत्र कश्चित्*—( सि: ३९५ ) मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तिः। नच—परस्परविरुद्धयोरेकमिथ्यात्वेऽपरसत्यत्वनियम इति—वाच्यम्; यत्र मिथ्यात्वावच्छेदकस्य विरुद्धधर्मवृत्तिता नास्ति, तद्विषयत्वादस्य नियमस्य, परस्परविरहरूपधर्मविषयत्वाद्वा; यथा—परस्परविरहरूपयो रजतत्व-तदभावयोः शुक्तौ; यथा वा—परस्परविरहव्यापकयो रजतभिन्नत्व-रजतत्वयोस्तत्रैव; निषेध्यतावच्छेदकभेदनियमात्। यथाच न सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्वम्, परस्परविरहव्याप्यत्वं वा, न वा परस्परविरहव्यापकत्वम्; तथोपपादितमधस्तात्। यत्र तु निषेध्यतावच्छेदकमुभयवृत्ति, तत्रोभयोरपि विरुद्धयोर्धर्मयोर्निषेधः; यथा गजे गोत्वाश्वत्वयोरुभयोर्निषेधः; निषेध्यतावच्छेदकस्य गजत्वात्यन्ताभावव्याप्यत्वस्योभयत्र विद्यमानत्वात्, प्रकृते च निषेध्यतावच्छेदकं दृश्यत्वं सत्यत्व-मिथ्यात्वयोरुभयोरप्यस्ति, इत्युभयनिषेधोपपत्तिः। अस्तु वा परस्परविरहरूपत्वम्, तथापि विषमसत्ताकयोर्विरोध एव नास्ति; व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात्, तार्किकमतसिद्धसंयोग-तदत्यन्ताभाववत् सत्यत्व-मिथ्यात्वयोः समुच्चयाभ्युपगमाच्च। एकसाधकेनापरस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम्; यथा शुक्तिरूप्य-तदभावयोः, एकबाधकबाध्यत्वं हि समसत्ताकत्वे प्रयोजकम्; यथा शुक्तिरूप्य-शुक्तिभिन्नत्वयोः। अस्ति च प्रपञ्च-मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वम्। अतः समसत्ताकत्वाद् मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधनाद् नाद्वैतहानिः—इत्याह ॥

*तन्न*; प्रकृतेऽपि तुच्छ-ब्रह्मणोरपि दृश्यत्वस्य विद्यमानत्वेन निषेध्यतावच्छेदकत्वात्। किञ्च परस्परात्यन्ताभावरूपयोरेकमिथ्यात्वेऽपरसत्यत्वनियमः, गोत्वाश्वत्वयोश्च न परस्परात्यन्ताभावरूपत्वम्; तयोर्जातित्वेन भावरूपत्वात्। नच—सत्यत्व-मिथ्यात्वयोरपि परस्परात्यन्ताभावरूपत्वमसिद्धमिति—वाच्यम्; प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभावस्यैव सत्यत्वात्। नच—तुच्छस्यापि सत्यत्वापातः; तत्र मिथ्यात्वव्यतिरेकासिद्धेः। तथाचोक्तनियमानामप्रयोजकत्वमिति ॥

*यच्चोक्तम्*—परस्परविरहरूपत्वेऽपि विषमसत्ताकयोर्न विरोध इति, *तन्न*; सिद्धे प्रपञ्चमिथ्यात्वे विषमसत्ताकयोरविरोध इति कल्पना, तस्यां च सत्यां मिथ्यात्वसिद्धिः, इतीतरेतराश्रयप्रसङ्गात्। *यदपि*—संयोग-तदत्यन्ताभावयोरिव समुच्चयोऽभ्युपगम्यत इति, *तदपि न*; संयोग-तदत्यन्ताभावयोरवच्छेदकभेदेन भिन्नाश्रितत्वस्यैवानुभवेन समुच्चयासम्प्रतिपत्तेः, तद्वत् प्रकृतेऽवच्छेदकभेदाभावाच्च। नच—अत्रापि स्वरूपेण सत्यत्वं पारमार्थिकत्वेन निषेधः, इति समुच्चयोपपत्तिरिति—वाच्यम्; उक्तरीत्या सत्यत्व-मिथ्यात्वयोर्निर्धर्मके ब्रह्मण्यपि सम्भवेन ब्रह्मणि सत्यत्व-मिथ्यात्वे इत्यङ्गीकारः स्यात्। *यदपि च*—एकबाधकबाध्यत्वं समसत्ताकत्वे प्रयोजकमिति, *तदपि न*; प्रपञ्चवत् तन्मिथ्यात्वस्यापि ब्रह्मज्ञानबाध्यताङ्गीकारे मिथ्यात्वस्य तात्त्विकत्वाद् ब्रह्मस्वरूपत्वेन नाद्वैतहानिः, इति स्वोक्तिविरोधापत्तेरिति दिक् ॥

## सिद्धिव्याख्या

द्वितीयाभावस्याभावरूपोपलक्षणस्य ज्ञानार्थं तदधिकरणीभूतशुद्धब्रह्मज्ञानमावश्यकम्। तथाचोपलक्षणज्ञानात् प्रागेव ज्ञातं शुद्धं ब्रह्म प्रति न द्वितीयाभावस्योपलक्षणत्वं संभवति। सर्वदा प्रतीयमानत्वेनाङ्गीकृताविद्यायाः प्रतीतेस्तदधिकरणशुद्धब्रह्मस्फुरणं विनाऽसंभवेन तदर्थं शुद्धब्रह्मज्ञानस्यावश्यकत्वेन तद्भेदेनोपलक्षणद्वैताभावज्ञानार्थमपि शुद्धब्रह्मस्फुरणस्यावश्यकत्वात्। तस्माद् बहुदोषग्रस्तत्वाद् मिथ्यात्वस्य सत्यत्वमपि न संभवतीति ध्येयम्। नच—मिथ्यात्वस्य सत्यत्व-मिथ्यात्वाभ्यां दूषणं नित्यसमा जातिरिति—वाच्यम्; स्वव्याघातकोत्तरजातित्वेन तल्लक्षणाभावे जातित्वा-

न्यायामृतम्

नचात्मत्वमुपाधिः ; सत्यत्वं विना(१)तद्विरुद्धस्य मिथ्यात्वस्य मिथ्यात्वे व्याघातवदज्ञातृत्वादिरूपानात्मत्वस्यासत्यत्वं विना व्याघाताभावेनोपाधेरप्रयोजकत्वात् ॥ नच—मिथ्यात्वं न ब्रह्ममात्रम्, किन्तु द्वितीयाभावोपलक्षितं ब्रह्मेति—वाच्यम् ; उपलक्षणे द्वितीयाभाव एव बाध्याबाध्यविकल्पात् । द्वितीयाभावाधिकरणतयाऽविद्याधिष्ठानतया तत्साक्षितया च भासमानचिदन्यस्योपलक्ष्यस्याभावेन द्वितीयाभावस्योपलक्षणत्वायोगाच्च ॥

*ननु*—रूप्यधर्मो मिथ्यात्वमपि मिथ्यैव, नच—तथात्वे रूप्यस्य सत्यत्वं सत्यं स्यादिति—

तरङ्गिणी

*नचेति* ॥ आत्मनि सत्ये साध्यव्यापकम्, पक्ष एव साधनाव्यापकमात्मत्वमुपाधिर्न स्यादित्यर्थः ॥ *सत्यत्वं विनेति* ॥ प्रपञ्चसत्यत्वविषयके स्थापनानुमाने मिथ्याभूतमिथ्यात्वकत्वस्य हेतोः सत्यत्वरूपसाध्येन व्याप्तिग्राहको व्याघातरूपस्तर्कोऽस्ति । आत्मत्वस्योपाधेर्व्यतिरेकेणानात्मत्वेन क्रियमाणे स्थापनानुमानीयसाध्यस्य सत्यत्वस्य व्यतिरेकानुमानेऽनुकूलतर्काद्यभावेनोपाधेरप्रयोजकत्वादित्यर्थः॥ *नचेति*॥ द्वितीयाभावोपलक्षितं ब्रह्मस्वरूपं च न निरुपाधिकम्, न वा भ्रमकाले निश्चितम्, इति न पूर्वोक्तदोष इति भावः ॥ *उपलक्षण इति* ॥ उपलक्षणद्वितीयाभावस्य बाध्यत्वे तद्रूपस्य मिथ्यात्वस्य बाध्यत्वात् सिद्धसाधनादि, अबाध्यत्वे त्वद्वैतहानिरिति दूषणसहिताद् विकल्पाद् न वाच्यमित्यनेनान्वयः ॥ *द्वितीयेति* ॥ अप्रसिद्धोपलक्ष्यस्य प्रसिद्धमुपलक्षणं भवति ; द्वितीयाभावरूपोपलक्षणं प्रत्युपलक्ष्यस्य ब्रह्मणो नित्यसिद्धत्वेन न तत् प्रति तस्योपलक्षणत्वमित्यर्थः । ज्ञातस्यैवोपलक्षणत्वेन द्वितीयाभावस्याभावरूपोपलक्षणस्य ज्ञानार्थं तदधिकरणभूतशुद्धब्रह्मज्ञानमावश्यकमित्यभिसन्धायोक्तम्—*द्वितीयाभावाधिकरणतयेति* ॥ तथाचोपलक्षणज्ञानार्थं प्रागेव ज्ञातं शुद्धं ब्रह्म प्रति न द्वितीयाभावस्योपलक्षणत्वमिति भावः । सर्वदा प्रतीयमानत्वेनाङ्गीकृताविद्यायाः प्रतीतिस्तदधिकरणशुद्धब्रह्मस्फुरणं विना न सम्भवति, इति तदर्थमपि शुद्धब्रह्मज्ञानमावश्यकमित्यभिप्रायेणोक्तम्—*अविद्येत्यादि* ॥ *ननु* काकेन गृहगतसंस्थानविशेष इव प्रकाशमानब्रह्मगतधर्मान्तरमेव द्वितीयाभावेनोपलक्ष्यतामित्यत उक्तम्—*अन्यस्येत्यादि* ॥ उपलक्षणकाले द्वितीयमात्राभावादिति भावः । जगच्च सत्यं स्यादात्मवदित्युक्तानुमाने व्यभिचारं शङ्कते—*नन्विति* ॥ रूप्यगतमिथ्यात्वस्य मिथ्यात्वेन मिथ्याभूतमिथ्यात्वकत्वं हेतू रूप्ये वर्तते, साध्यं च सत्यत्वं नास्ति, इति व्यभिचार इति भावः । सिद्धान्ती व्यभिचारपरिहारं शङ्कते—*नच तथात्व इति* ॥ यदि रूप्ये मिथ्यात्वं मिथ्या, तर्हि मिथ्यात्वविरुद्धं सत्यत्वं सत्यं स्यात् ; यथा गवि

न्यायामृतकण्टकोद्धारः

जगत्, सत्यम्, मिथ्याभूतमिथ्यात्वकत्वादित्यत्रोपाधिमाशङ्क्य निषेधति—*नचेति* ॥ उपाधेः स्वातन्त्र्येण दूषकत्वाभावात्, जगत्, सत्यम्, अनात्मत्वादिति सत्प्रतिपक्षोन्नायकतया दूषकत्वं वक्तव्यम् । तच्च न सम्भवति ; प्रतिपक्षानुमानस्याप्रयोजकतापराहतत्वात् । नच—अप्रयोजकत्वं पूर्वानुमानेऽप्यविशिष्टमिति—वाच्यम् ; तत्र विपक्षे व्याघातरूपबाधकवत् प्रकृते बाधकाभावात् । नच—प्रपञ्चस्य मिथ्यात्वेन यः सत्यः, स आत्मा नेति व्याप्त्या हेतुच्छित्तिरेव बाधिकेति—वाच्यम् ; अस्य मिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्, तस्माद् नायमुपाधिरित्याह—*सत्यत्वं विनेति* ॥ 'न ब्र'त्युक्तपरिहारमाशङ्क्य निषेधति—*नचेति* ॥ तथाच न विरुद्धधर्माधिकरणत्वमिति भावः । द्वितीयाभावस्तदोपलक्षणं स्यात्, यदि तदुपलक्ष्यं पूर्वाज्ञातं किञ्चित् स्यात्, तदेव नास्तीत्याह—*द्वितीयाभावाधिकरणतयेति* ॥ जगत्, सत्यम्, मिथ्याभूतमिथ्यात्वादित्यत्र व्यभिचारं शङ्कते—*नन्विति* ॥ तथाच रूप्ये व्यभिचार इति भावः । उक्तानुमाने व्यभिचारपरिहारमाशङ्क्य

(१) सत्यत्वं विनेत्यादि । *अयमभिप्रायः*—आत्मत्वमुपाधिमुक्त्वा तद्व्यतिरेकेण जगद्, सत्यं न,

व्याख्याकृतम्

वाच्यम् ; धर्मिणो मिथ्यात्वे विरुद्धयोरपि धर्मयोर्मिथ्यात्वात्, परस्परविरुद्धयोरेकस्याभावेऽन्यस्य सत्त्व-

तरङ्गिणी

गोत्वाभावस्य मिथ्यात्वे गोत्वं तद्विरुद्धं सत्यम्, तथाच प्रयोगः—रूप्यम्, मिथ्याभूतमिथ्यात्वाधिकरणं न भवति, सत्यभूततद्विरुद्धसत्यत्वानधिकरणत्वात् ; यत् सत्यभूततद्विरुद्धाधिकरणं न भवति, तद् मिथ्याभूततदधिकरणं न भवति, यथा सत्यभूतगोत्वविरुद्धगोत्वाभावानधिकरणं गौर्गोत्वाभावविरुद्धमिथ्याभूतगोत्वाधिकरणं न भवति ; तथाच रूप्यमिथ्यात्वस्य सत्यत्वेन रूप्ये हेतोरेवागमनाद् न व्यभिचार इति भावः। पूर्वपक्षी व्यभिचारपरिहारं दूषयति—*धर्मिण इति* ॥ सत्यभूतसत्यत्वानधिकरणमपि रूप्यं सत्यभूतमिथ्यात्वस्याधिकरणं न भवति, किन्तु मिथ्यात्वस्यापि मिथ्याभूतस्यैवाधिकरणम् ; धर्मिणो रूप्यस्य मिथ्यात्वात्। तथाच प्रयोगः—रूप्यगतत्वेनोच्यमाने सत्यत्व-मिथ्यात्वे, मिथ्या, मिथ्यात्वोपेतधर्मिकत्वात् ; स्वप्नप्रतीतगजरूपवदिति। तथाच जगच्च सत्यं स्यादित्युक्तानुमानस्य रूप्ये व्यभिचारस्तदवस्थ इति भावः। *ननु* रूप्यमिथ्यात्वे मिथ्यात्वसाधकस्य मिथ्यात्वोपेतधर्मिकत्वस्य हेतो रूप्यमिथ्यात्वे मिथ्यात्वाभावसाधकेन सामान्यव्याप्तिमूलकेनानुमानेन सत्प्रतिपक्षितस्य न रूप्यमिथ्यात्वे मिथ्यात्वरूपसाध्यज्ञानजनकत्वम्, अतो रूप्ये मिथ्याभूतमिथ्यात्वकत्वस्य हेतोरज्ञानाद् नोक्तानुमानस्य रूप्ये व्यभिचारः, इत्यतः सिद्धान्त्युक्तसामान्यव्याप्तावुपाधिमाह—*परस्परेत्यादिना* ॥

व्याख्यामुखकण्टकोद्धारः

निषेधति—*नच तथात्व इति* ॥ तथाच धर्मिमिथ्यात्वम्, मिथ्या, धर्मिमिथ्यात्वादित्यनुमानं फलितम् ; उक्तव्याप्तेश्च सत्यभूतधर्मिविषयकत्वादिति भावः। *ननु*—तर्हि सामान्यनियमस्य का गतिरिति ? अत आह—*परस्परेति* ॥ तस्यापि सत्यतद्धर्मिविषयकत्वादिति भावः। धर्म्यसत्त्वेऽप्यस्य

---

अनात्मत्वात्, व्यतिरेकेणाऽऽत्मवदिति सत्प्रतिपक्षोन्नयनं कार्यम्, तन्न संभवति ; अनात्मत्वमस्तु सत्यत्वं माऽस्त्वित्यप्रयोजकत्वेन सत्यत्व आत्मत्वोपाधेरप्रयोजकत्वात्। नच—एवं भवदीये स्थापनानुमानेऽप्यस्तु मिथ्याभूतमिथ्यात्वकत्वम्, सत्यत्वं माऽस्त्वित्यप्रयोजकत्वमेवेति साम्यमिति—वाच्यम् ; मिथ्याभूतमिथ्यात्वकत्वे सत्यत्वस्यैव प्राप्त्या पुनः सत्यत्वं माऽस्त्वित्युक्तेः स्वक्रियाविरुद्धत्वेन व्याघाताख्यानुकूलतर्कस्य हेतु-साध्यव्याप्तिग्राहकस्य सत्त्वाद् नाप्रयोजकताशङ्कया ; शङ्काया व्याघातावधित्वात्। 'व्याघातावधिराशङ्के'त्युदयनोक्तेः। *ननु* तर्हि मदीये सत्प्रतिपक्षानुमानेऽपि व्याघातरूपानुकूलतर्कस्य हेतु-साध्यव्याप्तिग्राहकस्य सत्त्वाद् नाप्रयोजकतेति—चेत्, *न* ; अनात्मत्वमस्तु, सत्यत्वमेवास्त्वित्यत्रानात्मत्व-सत्यत्वयोर्व्याघाताभावात्। *ननु*—अस्ति व्याघातः, असत्यत्वमनात्मत्वम्, सत्यत्वमेव चात्मत्वमिति—चेत्, *न* ; अनात्मत्वस्याज्ञातृत्वादिरूपत्वात्, सत्यत्वस्य चाबाध्यत्वादिरूपत्वेन विरोधाभावादिति ॥ यद्वा—इत्थं व्याख्येयम्—आत्मत्वं नोपाधिः ; कुत इति ? अत उक्तम् ; *अप्रयोजकत्वादिति* ॥ साध्याभावाविनाभाव्यभावकत्वाभावेन सत्यत्व आत्मत्वस्याप्रयोजकत्वादित्यर्थः ; "साध्याभावाविनाभावी स उपाधिर्यदत्यये" इति वचनात्। तथाचोपाधेः साध्याभावाविनाभाव्यभावकत्वेन यत्रात्मत्वाभावस्तत्र सत्यत्वाभाव इति व्याप्तिस्तावदवश्यं ग्राह्या। सा च न युक्ता ; अनात्मत्वेऽपि सत्यत्वोपपत्तेः, इत्यप्रयोजकत्वात्। *ननु*—तर्हि भवदनुमानेऽपि मिथ्याभूतमिथ्यात्वकत्वेऽपि सत्यत्वं माऽस्त्वित्यप्रयोजकता स्यादिति—चेत्, *न* ; सत्यत्वं विना मिथ्याभूतमिथ्यात्वकत्वेऽङ्गीक्रियमाणे व्याघातेनाप्रयोजकतायाः शङ्कानर्हत्वात्। *ननु*—तर्हि यत्रात्मत्वाभावः, तत्र सत्यत्वाभावः, इत्युपाध्यभाव-साध्याभावयोर्व्याप्तावपि नाप्रयोजकता ; असत्यत्वरूपानात्मत्वमङ्गीकृत्य सत्यत्वाभावानङ्गीकारे व्याघातसाम्यादिति—चेत्, *न* ; अज्ञातृत्वरूपानात्मत्वस्यासत्यत्वं सत्यत्वाभावं विनाऽवस्थित्यङ्गीकारे व्याघाताभावादिति—योजनाद्वयेऽपि प्रमेयं त्वेकमेव। इयांस्तु विशेषः—उपाधिमुक्त्वा क्रियमाणे सत्प्रतिपक्षोन्नयनेऽप्रयोजकतापरत्वेन प्राचीनव्याख्यानम्, उपाधेरप्रयोजकत्वादिति मूलग्रन्थस्वारस्यानुसारेण साध्याभावाविनाभाव्यभावकत्वस्योपाधिलक्षणत्वेनोपाध्यभाव-साध्याभावयोरवश्यं व्याप्तिर्ग्राह्या, तत्राप्रयोजकतापरत्वेन द्वितीयव्याख्यानमिति ॥ ( श्रीनि० )।

### न्यायामृतम्

नियमस्तु यत्र धर्मी सन्, तत्रैव । नहि वन्ध्यासुतस्य श्यामत्वाद्यभावे गौरत्वं सत्यम्, नवा स्वप्ने ज्ञातस्य गजस्य मिथ्यात्वे तत्रैव ज्ञातस्तदभावस्सत्य इति—चेत्, *न*; प्रतिपन्नोपाधौ त्रैकालिकनिषेध-

### तरङ्गिणी

*धर्मी सन्निति* ॥ तथाच तत्रामिथ्यात्वमुपाधिः । अतस्तस्य हीनबलत्वात् तेन नास्य सत्प्रतिपक्षितत्वम् ; अतो रूप्ये हेतुज्ञानसम्भवाद् व्यभिचारस्तदवस्थ इति भावः । उक्तसामान्यव्याप्तौ व्यभिचारमप्याह—*नहीति* ॥ नहि सत्यभूतस्य गौरत्वविरुद्धश्यामत्वस्यानधिकरणे वन्ध्यासुते तद्विरुद्धं गौरत्वं मिथ्याभूतं नास्ति, किन्तु सत्यभूतं गौरत्वमस्तीति युज्यते, किन्तु गौरत्वं तद्विरुद्धं श्यामत्वं चेत्युभयमपि वन्ध्यासुते मिथ्यैव ; धर्मिण एव मिथ्यात्वात् । तथाचोक्तव्याप्तौ व्यभिचार इति भावः । *ननु* उक्तसामान्यव्याप्तौ विरुद्धत्वं न सहानवस्थितत्वादिसाधारणम्, किन्तु परस्परविरहरूपत्वम्, नच गौरत्व-श्यामत्वे परस्परविरहरूपे ; अतो नोक्तो व्यभिचार इत्यत आह—*नवा स्वप्न इति* ॥ *स्वप्ने=स्वप्नावस्थायाम् । क्वचिदधिकरण इति शेषः ॥ *तत्रैवेति* ॥ तदधिकरण इत्यर्थः । स्वप्नावस्थायां दृष्टे क्वचिदधिकरणे सत्यभूतगजाभावविरहरूपस्य गजस्यानधिकरणत्वं वर्तते, गजविरहरूपस्य गजाभावस्य मिथ्याभूतस्य नाधिकरणत्वम्, किन्तु सत्यभूतस्यैव गजाभावस्याधिकरणत्वमिति नास्ति, किन्तु गजो गजाभावश्चेत्युभयमपि मिथ्यैव, इति परस्परविरहरूपविरुद्धत्वगर्भाया अप्युक्तव्याप्तेर्व्यभिचार इति भावः । रूप्यस्य धर्मिणो मिथ्यात्वात् तत्र सत्यत्व-मिथ्यात्वे परस्परविरहरूपे अपि मिथ्यैवेत्युक्तं दूषयति—*प्रतिपन्नेति* ॥

### न्यायामृतकण्टकोद्धारः

नियमस्याङ्गीकारेण बाधकमाह—*नहि वन्ध्येति* ॥ परस्परविरुद्धरूपत्वस्य विवक्षितत्वान्न नोक्तबाधकावसरः, इत्यतो बाधकान्तरमाह—*न वा स्वप्न इति* ॥ हेतोरेवानागमनान्न व्यभिचार इत्याह—*प्रतिपन्नोपाधाविति* ॥ तच्च सत्यमेव, इति न व्यभिचार इति शेषः । रूप्यमिथ्यात्वम्, मिथ्या,

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अत्रेदं बोध्यम्—ययोर्विरुद्धयोरेकं मिथ्या, तयोरेकापेक्षयाऽपरमधिकसत्ताकमित्येव नियमः, नतु विरुद्धयो-

### विट्ठलेशीयटिप्पणी

पद्योरुक्तव्याख्यानबीजं स्फुटयितुमुक्तनियमं परिष्करोति—*अत्रेदं बोध्यमित्यादिना* । *ययोरिति* ॥ मिथ्यात्वसमानाधिकरणं यद्धर्मिणि ज्ञातपरस्परविरुद्धोभयत्वम्, तद्धर्मिणि स्वाश्रयैकापेक्षाधिकसत्ताकस्वाश्रयापरकम् ; यथा शुक्तौ रजतनिष्ठमिथ्यात्वसमानाधिकरणं रजत-तदभावोभयत्वं स्वाश्रयरजताधिकसत्ताकस्वाश्रयरजताभावकमिति वा, परस्परविरुद्धोभयैकनिष्ठं मिथ्यात्वम्, स्वसमानाधिकरणैकधर्मिज्ञातपरस्परविरुद्धोभयत्वाश्रयैकापेक्षाधिकसत्ताकस्वाश्रयापरकनिष्ठम्, यथा रजतमिति वा, यन्निष्ठमिथ्यात्वं तद्धर्मिज्ञातपरस्परविरुद्धयदुभयैकवृत्ति, तत् तद्धर्मिणि तदुभयत्वाश्रयैकापेक्षाधिकसत्ताकतदुभयत्वाश्रयापरकमिति वा सामान्यव्याप्तिरित्यर्थः । एवञ्च केषांचिन्मते ब्रह्मणि प्रपञ्चाभावरूपप्रपञ्चमिथ्यात्वनिष्ठमिथ्यात्वे प्रपञ्च-तदभावोभयत्वाश्रयप्रपञ्चाभावाधिकसत्ताकप्रपञ्चकत्वं विषयीकुर्वाणा आपत्तिर्व्यावहारिकप्रपञ्चाभावाधिकसत्तां प्रपञ्चस्य विषयीकरोति । *नच*—निरुक्तोभयत्वाश्रयव्यावहारिकप्रपञ्चाधिकसत्ता प्रपञ्चाभावे कुतो न विषय इति—*वाच्यम्* ; तत्र मिथ्यात्वस्योपगमे तद्विरुद्धपारमार्थिकत्वस्य विषयत्वासम्भवात् । *टीकाकारमते तु* प्रपञ्चमिथ्यात्वनिष्ठमिथ्यात्वे प्रपञ्चमिथ्यात्व-सत्यत्वोभयत्वाश्रयप्रपञ्चमिथ्यात्वाधिकसत्ताकप्रपञ्चसत्यत्वकत्वं विषयीकुर्वन्त्यापत्तिः प्रपञ्चसत्यत्वे पारमार्थिकत्वं विषयीकरोति, नतु तदुभयत्वाश्रयप्रपञ्चनिष्ठव्यावहारिकसत्यत्वाधिकसत्तां पारमार्थिकत्वरूपां प्रपञ्चमिथ्यात्वे ; तत्र पारमार्थिकत्वस्योपगतमिथ्यात्वविरुद्धत्वात्, इति भावः । यथाश्रुतनियमं दूषयति—*नहीति* ॥ *विरुद्धयोरिति* ॥ मिथ्यात्वं स्वाश्रयाधिकसत्ताकस्वाश्रय-

न्यायामृतम्

प्रतियोगित्वं हि मिथ्यात्वम् । नच प्रतियोगित्वं धर्मान्तरवद् धर्मिसत्त्वापेक्षमित्यनिर्वाच्यत्वभङ्गे वक्ष्यते । धर्म्यसत्त्वे धर्मासत्त्वं तु धर्मिसत्त्वसापेक्षधर्मविषयम्, मिथ्यात्वं तु तत्प्रतिकूलम्; अन्यथा सिद्धसाधनात् ।

तरङ्गिणी

धर्मिसत्त्वानपेक्षधर्मस्य सत्यत्व . धर्मिमिथ्यात्वेऽपि युक्तम् । तथाच त्वदुक्तहेतोरप्रयोजकत्वादस्मदुक्तहेतोर्न रूप्ये व्यभिचार इति भावः । *ननु* प्रतियोगित्वमपि धर्मो विना धर्मिणं नावतिष्ठते, वन्ध्यासुतादावपि नात्यन्ताभावप्रतियोगित्वम्, किन्त्वत्यन्ताभाव एव वन्ध्यासुतप्रतियोगिकत्वमित्यत आह—*अनिर्वाच्यत्वभङ्ग इति* ॥ अत्यन्ताभावस्य वन्ध्यासुतप्रतियोगिकत्वे वन्ध्यासुतस्यापि तत्प्रतियोगित्वमवर्जनीयमेवेत्यादि वक्ष्यत इत्यर्थः । परोक्ते मिथ्यात्वोपेतधर्मिकत्वे हेतौ धर्म्यसत्त्वप्रयुक्तसत्त्वाभाववत्त्वमुपाधिमाह—*धर्म्यसत्त्व इत्यादिना* ॥ *असत्त्वे = सद्विलक्षणत्वे* ॥ *असत्त्वम् = सद्विलक्षणत्वम्* ॥ *धर्मिसत्त्वेति* ॥ धर्म्यसत्त्वप्रयुक्तसत्त्वाभाववत्त्वमित्यर्थः । अयं च साधनावच्छिन्नसाध्यव्यापको बोध्यः । तेन ब्रह्मण्यारोपितमिथ्यात्वादौ न साध्याव्याप्तिः, नञ्द्वयान्तर्भावाच्च वन्ध्यासुतश्यामत्वादौ च न साध्याव्याप्तिशङ्केति ध्येयम् । उक्तोपाधेः पक्षाद् व्यावृत्तिमाह—*मिथ्यात्वमिति* ॥ मिथ्यात्वं तु धर्मिसत्त्वस्य विरहरूपम्; अतो धर्मिसत्यत्वं नापेक्षते, प्रत्युत धर्मिसत्यत्वं प्रतिक्षिपति, इति तत्प्रतिकूलमित्यर्थः ॥ *अन्यथेति* ॥ सत्त्वविरहरूपातिरिक्तं ब्रह्मभिन्नत्वादिकं पारिभाषिकं मिथ्यात्वं सत्यत्वपक्षेऽप्यविरुद्धमित्यर्थः ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यन्मिथ्या तदपेक्षयाऽपरमभिकसत्ताकमिति नियमः; शुक्तिरूप्ये व्यावहारिकमिथ्यात्वयुक्ते तात्त्विक-

न्यायामृतकण्टकोद्धारः

धर्मिमिथ्यात्वादित्यत्राप्रयोजकत्वमाह—*नच प्रतियोगित्वमिति* ॥ तथाच धर्मिमिथ्यात्वेऽपि धर्मस्य सत्यत्वोपपत्तेरिति भावः । *नन्वेवम्* धर्म्यसत्त्वे धर्मासत्त्वमिति व्याप्तेः का गतिरिति ? अत आह—*धर्म्यसत्त्व इति* ॥ *अन्यथेति* ॥ यदि धर्मिसत्त्वानुगुणं मिथ्यात्वं साध्यत इत्यर्थः । *ननु*—

न्यायामृतसौगन्ध्यम्

धर्मयोरेकमिथ्यात्वेऽपरसत्यत्वनियमात्, मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः, उभयथाऽप्य-

सिद्धिव्याख्या

योगात्, प्रत्युतास्माकमनुगुणत्वाच्च । *तदुक्तम्—*"मिथ्यात्वस्य च मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् । सत्यत्वस्य च सत्यत्वे सत्यत्वं स्थापितं भवेत् ॥"* इति । नच—विशेषलक्षणस्य सत्त्वे त्वव्याघातकोसत्त्वरूपसामान्यलक्षणासत्त्वमदोषः; तत्साधारणसामान्यलक्षणान्तरस्यापि सम्भवात्, 'धर्मस्य तत्तद्रूपविकल्पानुपपत्तिः । धर्मिण-

विट्ठलेशीयटिप्पणी

विरुद्धकमित्यर्थः । तेन प्रपञ्चाभावमिथ्यात्वेन प्रपञ्चे सत्यत्वापत्तिः, प्रपञ्चमिथ्यात्वमिथ्यात्वेन प्रपञ्चसत्यत्वस्य पारमार्थिकत्वापत्तिर्वा भवतीति भावः । *शुक्तिरूप्य इति* ॥ शुक्तिरूप्यमिथ्यात्वस्य व्यावहारिकत्वेन मिथ्यात्वेऽपि शुक्तिरूप्यनिष्ठप्रातिभासिकसत्यत्वस्य पारमार्थिकत्वाभावेन व्यभिचारादित्यर्थः । शुक्तिरूप्याभावरूपस्य शुक्तिरूप्यमिथ्यात्वस्य व्यावहारिकत्वेन मिथ्यात्वेऽपि तदाश्रयविरुद्धे शुक्तिरूप्ये स्वाश्रये शुक्तिरूप्याभावाधिकसत्त्वस्य विरहेण व्यभिचारादिति वाऽर्थः । *अत्रेदं बोध्यमित्यादिना निष्कर्षे तु* रजतनिष्ठमिथ्यात्वस्य रजत-तदभावोभयैकवृत्तेस्तदुभयैकरजताधिकसत्ताकतदुभयापररजताभावकत्वाद् न व्यभिचार इति बोध्यम् । प्रपञ्चसत्यत्वापत्ताविष्टापत्तिं परिहरति मूले—*उभयथाऽप्यद्वैतव्याघात इति* ॥ तथाच "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"ति "नेह नानाऽस्ति किंचने"ति श्रुतिविरोध इति भावः । उक्तश्रुतिरूपप्रबलप्रमाणेन बाधादेव प्रपञ्चमिथ्यात्वे मिथ्यात्वापादकसत्यत्वापादकतर्केणापि मिथ्यात्वाभावो न सिद्ध्यति । एवञ्च मिथ्यात्वशून्यत्वरूपपक्षविशेषणबाधाद् उक्तश्रुतिविरोधाच्च प्रपञ्च-

अद्वैतसिद्धिः

व्याघात इति—चेत्, *न* मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तेः । तत्र हि विरुद्धयोर्धर्मयोरेक-

तरङ्गिणी

*अत्र वदन्ति*—(सि०) मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तिः । तत्र हि परस्परविरुद्धयोरेक-

न्यायामृतसौगन्ध्यम्

द्वैतव्याघातः ॥ *ननु*—मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चस्य सत्यत्वापत्तिः । तत्र हि विरुद्धयोर्धर्मयोरेक-

सिद्धिव्याख्या

स्तद्विशिष्टत्वभङ्गो नित्यसमा भवेत् ॥' इति विशेषलक्षणपर्यालोचनया मिथ्यात्वं बाध्यमबाध्यं वेति विकल्प्य दूषणाभिधानं नित्यसमा जातिरेव ; मिथ्यात्वस्य बाध्यत्वे प्रपञ्चस्य मिथ्यात्ववैशिष्ट्यभङ्गात्, अबाध्यत्वेऽपि प्रपञ्चान्तःप्रविष्टमिथ्यात्वस्य मिथ्यात्वासिद्ध्या सर्वप्रपञ्चमिथ्यात्वासिद्धेः, इति पक्षद्वयेऽपि मिथ्यात्ववैशिष्ट्यभङ्गस्याविशिष्टत्वादिति—वाच्यम् ; मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चमिथ्यात्ववैशिष्ट्यभङ्गदोषसत्त्वेऽपि मिथ्यात्वस्य सत्यत्वपक्षे तमनुक्त्वा मिथ्यात्वविशिष्टत्वमेवाङ्गीकृत्याद्वैतहानेरेवोक्तौ विशेषलक्षणस्याव्यभावादित्यभिप्रेत्योक्तम्—*अद्वैतव्याघात इति* ॥ यदि चाद्वैतहान्युद्भावनस्य बाधिततया विपर्ययपर्यवसानस्यावश्यकत्वेन मिथ्यात्ववैशिष्ट्यभङ्ग एव पर्यवसानाद् जातित्वं दुर्वारम्, तदा तदुद्भावनस्यापसिद्धान्त एव तात्पर्यम्, न मिथ्यात्ववैशिष्ट्यभङ्गे, इति न जातित्वमित्यपि द्रष्टव्यम् । प्रथमपक्षमादाय तत्रोक्तदोषोद्धारं प्रतिजानीते—*नेति* ॥ *मिथ्यात्वमिथ्यात्वेऽपीति* ॥ *यदुक्तम्*—विरुद्धयोरेकस्मिन् धर्मिणि प्रसक्तयोर्धर्मयोरेकमिथ्यात्वेऽपरसत्यत्वम्—*इति*, तद् दूषयति—*तत्र हीति* ॥ एकमिथ्यता-

विट्ठलेशीयटिप्पणी

मिथ्यात्वपक्षकसत्यत्व-मिथ्यात्वान्यतरसाध्यकोपहितसाधारण्यहेतुकानुमानेनापि प्रपञ्चमिथ्यात्वे सत्यत्वोपगमासम्भवेन प्रत्युतोक्तश्रुतिसहकारेणोक्तानुमानेन प्रपञ्चमिथ्यात्वे मिथ्यात्वस्यैवोपगमसम्भव इत्याशयेन समाधत्ते—*न मिथ्यात्वमिथ्यात्वेऽपीति* ॥ प्रपञ्चसत्यत्वानुपपत्तेरिति* ॥ प्रपञ्चसत्यत्वापत्त्यसम्भवादित्यर्थः । यद्यपि प्रपञ्चमिथ्यात्व उक्तरीत्या मिथ्यात्वोपगमे तत्र दृश्यत्वहेतोर्व्यभिचाराभावेन प्रपञ्चमिथ्यात्व इव प्रपञ्चेऽपि मिथ्यात्वग्राहकमनुमानमुक्तश्रुतिश्च प्रवर्तते ; तथापि तदुभयं प्रपञ्चसत्यत्वापत्त्यापादकव्यतिरेकनिश्चयविधयाऽनुकूलमेवेति । मिथ्यात्वरूपापादके सत्यत्वरूपापाद्यव्यभिचारवारणायापादकविशेषणोपादाने प्रपञ्चमिथ्यात्वे पक्ष आपादकासिद्धिमाह—*तत्र हीत्यादिना*—*तद्वदित्यन्तेन* ॥ गोत्वनिष्ठमिथ्यात्वे गजरूपधर्मिणि ज्ञाते गोत्वाश्वत्वरूपपरस्परविरुद्धोभयैकवृत्तौ तदुभयत्वाश्रययोर्गोत्वाश्वत्वयोर्द्वयोरपि गजरूपैकधर्मिणि प्रातीतिकतया, एकापेक्षयाऽपरस्याधिकसत्ताकत्वाभावेन वा, गजरूपधर्मिणि गोत्वाश्वत्वोभयत्वाश्रयैकापेक्षाधिकसत्ताकापरकत्वाभावेन वाऽऽपादकप्रविष्टे व्यभिचारः, इति तद्वारणाय परस्परविरुद्धोभयस्मिन् स्वावृत्तिधर्मनिष्ठाभावप्रतियोगितावच्छेदकसामान्यकत्वं विशेषणं देयम् । गोत्वाश्वत्वोभयस्मिन् गजनिष्ठाभावप्रतियोगितावच्छेदकीभूतगोत्वत्वाश्वत्वत्वयोरसत्त्वेऽपि तत्सामान्यान्तर्गतगजत्वात्यन्ताभावव्याप्यत्वस्य सत्त्वेन तदवृत्तित्वाभावाद् न व्यभिचारः । रजत-तदभावोभयस्मिंस्तु कस्यापि शुक्तिरूपधर्मिनिष्ठाभावप्रतियोगितावच्छेदकस्यासत्त्वात् तदवृत्तितत्सामान्यकत्वमस्ति, इति दृष्टान्तसिद्धिः ; तादृशरजतत्व-शुक्तित्वाभावव्याप्यत्वादीनां रजताभावेऽसत्त्वेनोभयावृत्तित्वात् । *यद्यपि*—यदि तद्धर्मिनिष्ठाभावप्रतियोगितावच्छेदकसामान्यशून्यत्वं तदुभयत्वावच्छेदेन निवेश्यते, तदा शुक्तिरूपनिष्ठाभावप्रतियोगितावच्छेदकीभूतरजतत्वस्य तदुभयैकदेशरजते सत्त्वेन रजताभावेऽपि तदुभयत्वावच्छेदेन तच्छून्यत्वाभावाद् दृष्टान्तासिद्धिः । यदि तु तदुभयत्वसामानाधिकरण्येन निरुक्तशून्यत्वं निवेश्यते, तदा तदुभयत्वाश्रयरजताभावे तत्सत्त्वाद् दृष्टान्तसिद्धिः । गोत्वाश्वत्वोभयताश्रययोर्द्वयोरपि गोत्वत्वाश्वत्वत्वयोर्गजत्वाभावव्याप्यत्वस्य च सत्त्वेन तदुभयैकस्मिन् तच्छून्यत्वाभावाद् न व्यभिचार इति, *तद्यपि* प्रकारान्तरमस्तु, परन्तु 'यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत्' इति मूलाक्षरस्वारस्याननुगुणम्, 'यथा गोत्वाश्वत्वयो'रित्यादिपङ्क्त्यननुगुणं चेति वक्ष्यते । पूर्वोक्तं तु तदनुगुणमिति विशेषः । प्रकृते ब्रह्मणि प्रपञ्चप्रपञ्चाभावरूपतन्मिथ्यात्वयोर्द्वयोरपि ब्रह्मनिष्ठाभावप्रतियोगितावच्छेदकीभूतदृश्यत्वादीनां सत्त्वात् प्रपञ्च-तदभावरूपो-

अद्वैतसिद्धिः

मिथ्यात्वेऽपरसत्यत्वम् , यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् ; यथा परस्परविरहरूपयो रजतत्वं-तदभावयोः शुक्तौ, यथा वा परस्परविरहव्यापकयो रजतभिन्नत्व-रजतत्वयोस्तत्रैव ; तत्र निषेध्यतावच्छेदकभेदनियमात् , प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि, यथा गोत्वाश्वत्वयोरेकस्मिन्

तरङ्गिणी

मिथ्यात्वेऽपरसत्यत्वम् , यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् ; यथा परस्परविरहरूपयो रजत-तदत्यन्ताभावयोः शुक्तौ, यथा वा परस्परविरहव्यापकयो रजतभिन्नत्व-रजतत्वयोस्तत्रैव ; तत्र निषेध्यतावच्छेदकभेदनियमात् , प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि ; यथा गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वा-

न्यायामृतसौगन्ध्यम्

मिथ्यात्वेऽपरसत्यत्वम् , यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् ; यथा परस्परविरहरूपयो रजतत्व-तदभावयोश्शुक्तौ, यथा वा परस्परविरहव्यापकयो रजतभिन्नत्व-रजतत्वयोस्तत्रैव ; तत्रैव निषेध्यतावच्छेदकभेदनियमात् , प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि । यथा गोत्वाश्वत्वयो-

सिद्धिव्याख्या

वच्छेदकावच्छिन्नयोरेकस्यापरप्रतिष्ठापकतास्थलं दर्शयति—*यथा परस्परेति* ॥ आद्योदाहरणे 'शुक्तौ रजतं नास्ती'ति निषेधे निषेध्यतावच्छेदकं रजतत्वम् , तत्रैव 'रजतत्वाभावो नास्तीति' निषेधे रजतत्वाभावत्वं निषेध्यतावच्छेदकम् , इति निषेध्यतावच्छेदकभेदात् तदवच्छिन्नयोरन्यतरनिषेधेऽन्यतरसत्त्वमावश्यकम् । द्वितीयोदाहरणेऽपि यत्र रजतभिन्नत्वम् , तत्र रजतत्वाभावः, यत्र रजतत्वम् , तत्र रजतभिन्नत्वाभाव इति व्याप्तेः सत्त्वात् परस्परविरहव्यापकयो-रपि रजतभिन्नत्व-रजतत्वयोः शुक्तावेकस्य निषेधेऽन्यस्य सत्त्वम् ; पूर्ववद् निषेध्यतावच्छेदकभेदादित्यर्थः । प्रकृते त्वेक-निषेध्यतावच्छेदकावच्छिन्नत्वाद् नकतरनिषेधेऽन्यतरसत्त्वमित्याह—*प्रकृते त्विति* ॥ तादृशस्थलमुदाहरति—*यथा

विठ्ठलेशीयटिप्पणी

भयस्मिन् उक्तविशेषणस्यासत्त्वेन तद्घटितस्यापादकस्य प्रपञ्चाभावमिथ्यात्वादावसत्त्वाद् नोक्तप्रपञ्चसत्यत्वघटितापादका-पत्तिरिति समुदायार्थः । एवं प्रपञ्चमिथ्यात्वनिष्ठमिथ्यात्वस्य प्रपञ्चे प्रसक्तव्यावहारिकमिथ्यात्व-सत्यत्वोभयैक-वृत्तिकत्वेऽपि तादृशोभयस्य प्रपञ्चनिष्ठाभावप्रतियोगितावच्छेदकवत्तया तच्छून्यत्वस्य स्वावृत्तितत्कत्वरूपस्य विशेषणस्य प्रपञ्चमिथ्यात्व-सत्यत्वोभयस्मिन्नसत्त्वेन तदघटिततदापादकाभावाद् न तदुभयैकमिथ्यात्वाधिकसत्ताकतदुभयापर-सत्यत्वकत्वापत्तिरिति बोध्यार्थः । अक्षरार्थस्तु—*तत्र हि=तत्रैव धर्मिणि । *यत्र मिथ्यात्वेति* ॥ यन्निष्ठाभाव-प्रतियोगितेत्यर्थः । *उभयवृत्ति न भवेदिति* ॥ मिथो विरुद्धयदुभयवृत्ति न भवेदित्यर्थः । तत्र स्वावृत्ति-तद्धर्मिनिष्ठाभावप्रतियोगितावच्छेदकसामान्यकत्वं विशेषणं देयमिति भावः । दृष्टान्त एतदुपपादयति—*यथेति* ॥ *परस्परविरहरूपयोरिति* ॥ एकस्मिन्नेकस्याभावेऽपरसत्त्वस्यावश्यकत्वेनेति शेषः । *नन्वेवम्* प्रतियोग्यभावयो-रित्येवास्तु, किं 'विरुद्धधर्मयोरि'त्यनेन ? उक्तविशेषणोपादानेन वा ? तावतैव गोत्वाश्वत्वयोर्व्यभिचारवारणस्य प्रपञ्च-सत्यत्वताग्धिकत्वापत्तेश्च वारणसम्भवात् , गोत्वाश्वत्वयोर्मिथ्यात्व-सत्यत्वयोश्च परस्परं प्रतियोग्यभावानात्मकत्वात् , इत्यत आह—*यथा वेति* ॥ *परस्परविरहव्यापकयो रजतभिन्नत्व-रजतत्वयोरिति* ॥ अनयोः परस्पराभावरूप-त्वानुगमे तत्रापि रजतभिन्नत्वविरहव्यापकस्य रजतत्वस्य विरहे व्याप्यरजतभिन्नत्वविरहाभावस्य रजतभिन्नत्वस्य रजते च रजतत्वविरहव्यापकस्य रजतभिन्नत्वस्य विरहे व्याप्यरजतत्वविरहाभावस्य रजतत्वस्यावश्यकत्वेनैकस्मिन् धर्मिणि रजतभिन्नत्व-रजतत्वयोरेकस्याभावेऽपरसत्त्वस्यावश्यकत्वादिति भावः । एवं चानयोः संग्रहेण न्यूनतापरिहाराय 'विरुद्धधर्मयोरि'त्युक्तौ गोत्वाश्वत्वयोर्व्यभिचारवारणायोक्तविशेषणोपादानमावश्यकमिति भावः । *तत्रैव=तद्धर्मिणि ज्ञातयोर्विरुद्धयोरेव । अत्र हेतुमाह—*तत्रेति* ॥ तादृशविरहरूपयोरित्यर्थः । *भेदनियमादिति* ॥ एकस्मिन्

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्यत्वापत्तेः—*इति* ॥ *ननु* परस्परविरहरूपयोः परस्परविरहव्यापकयोश्चैकमिथ्यात्वेऽपरस्याधिकसत्ता आवश्यिका ; अन्यथा समसत्ताकत्वे तयोः सहावस्थानं न स्यात् । तथाच गोत्वाश्वत्वयोः समानाधि-

### विट्ठलेशीयटिप्पणी

धर्मिणि तादृशविरुद्धयोः प्रत्येकमभावद्वयासम्भवादिति भावः । अत्रैकाभावेऽपरसत्त्वस्यावश्यकत्वं हेतुः । तत्र च परस्परविरहरूपत्वं परस्परविरहव्यापकत्वं वा । प्रकृते मिथ्यात्व-सत्यत्वयोर्मिथ्यात्वस्य स्वसमानाधिकरणाभावप्रतियोगित्वरूपत्वात् सत्यत्वस्य कालत्रयाबाध्यत्वरूपत्वाद् अनयोश्च न परस्पराभावरूपत्वम्, न वा परस्परविरहव्यापकत्वम् ; तुच्छ उक्तमिथ्यात्वोक्तसत्यत्वयोर्द्वयोरपि विरहात् , किन्तु मिथो विरुद्धत्वमात्रम् ; शुक्तिरजतादौ मिथ्याभूते सत्यत्वाभावात् , ब्रह्मणि सत्ये मिथ्यात्वाभावादिति । परन्तु शुक्तिरजतादिमिथ्यात्वस्यापि मिथ्यात्वोपगमे गजे गोत्वाश्वत्वयोरिव शुक्तिरजतादौ मिथ्यात्व-सत्यत्वयोरपि प्रत्येकमभावद्वयसत्त्वेन तदुभयसाधारणान्यतरत्वधर्मावच्छिन्नप्रतियोगिताकैकसामान्याभावसत्त्वेन च गोत्वाश्वत्वोभयस्मिन् गजरूपधर्मिघटितोक्तविशेषणविरहेण गोत्वादिनिष्ठमिथ्यात्व आपादकविरहेण व्यभिचारस्येव मिथ्यात्व-सत्यत्वोभयस्मिन् शुक्तिरजतादिधर्मिघटितोक्तविशेषणविरहेण मिथ्यात्वनिष्ठमिथ्यात्व आपादकविरहेणोक्तापत्तेरपि नावकाशः । एवं ब्रह्मणि प्रपञ्चाभावमिथ्यात्वेऽपि प्रपञ्चसत्यत्वापत्तेर्नावकाश इत्यवधेयम् । *ननु*—गोत्वस्याश्वत्वत्वयोर्गजरूपधर्मिनिष्ठाभावप्रतियोगितावच्छेदकयोः प्रत्येकं गोत्वाश्वत्वोभयावृत्तित्वात् तदुभयैकगोत्वादिवृत्तिमिथ्यात्वे गजे गोत्वाद्यधिकसत्ताकाश्वत्वादिकत्वाभावेन व्यभिचारः । *नच*—गोत्वत्वादेर्गोत्वाश्वत्वोभयत्वाश्रयगोत्ववृत्तित्वात् कथं तदुभयावृत्तित्वमिति—वाच्यम् ; रजतत्वे शुक्तिनिष्ठाभावप्रतियोगितावच्छेदके रजत-तदभावोभयत्वाश्रयरजतवृत्तित्वेन रजत-तदभावोभयैकरजतनिष्ठमिथ्यात्व आपादकाभावेन दृष्टान्तासिद्धिः, इति विरुद्धोभयनिष्ठैकाधिकरणताकत्वाभावरूपस्यावृत्तित्वस्यैव तद्धर्मिनिष्ठाभावप्रतियोगितावच्छेदके निवेश्यतया गोत्वत्वादेर्गोत्वाश्वत्वोभयनिष्ठैकाधिकरणताकत्वाभावेन व्यभिचारस्य दुर्वारत्वात्—इत्याशङ्क्य, सामान्यपदयोजनं व्यञ्जयन् गजनिष्ठाभावप्रतियोगितावच्छेदकसामान्यान्तःपातिनि गजत्वाभावव्याप्यत्वे गोत्वाश्वत्वोभयवृत्तित्वाद् न व्यभिचार इत्याह—*यथा गोत्वाश्वत्वयोरिति* ॥ प्रपञ्च-तदभावयोस्तु ब्रह्मनिष्ठाभावप्रतियोगितावच्छेदकमेकं दृश्यत्वं ब्रह्मभिन्नत्वादिकमस्ति, मिथ्यात्व-सत्यत्वयोस्तु प्रपञ्चनिष्ठाभावप्रतियोगितावच्छेदकमेकं तदुभयान्यतरत्वादिकमस्ति, इति पक्ष आपादकाभावाद् न प्रपञ्चसत्यत्वापत्तिरिति ध्येयम् । यद्यापादके तद्धर्मिनिष्ठाभावप्रतियोगितावच्छेदकसामान्यशून्यत्वं विरुद्धोभयत्वाश्रये प्रवेश्यते, तदा गोत्वाश्वत्वयोः प्रत्येकमपि गोत्वत्वस्याश्वत्वत्वस्य च तादृशस्य सत्त्वेन तत्सामान्यशून्यत्वस्याभावेन व्यभिचारशङ्कानुदयाद् एतत्फक्किकानुत्थितिः, अत एव तत्पक्षकथनानुगुणं तद्विशेषणमित्युक्तम् । *ननु*—सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्वे परस्परविरहव्यापकत्वे वा प्रपञ्चमिथ्यात्वमिथ्यात्वे प्रपञ्चसत्यत्वापत्तिः, अतस्तद्वारणाय 'यथा चेति' ग्रन्थेन तयोस्तदभाव उपपादित इत्युक्तम् ; तद्धर्मिज्ञातपरस्परविरुद्धयदुभयैकवृत्ति यन्मिथ्यात्वम्, तत् तद्धर्मिणि तदुभयत्वाश्रयैकापेक्षयाऽधिकसत्ताकतदुभयत्वाश्रयापरकमिति व्याप्तौ गजे गोत्वाश्वत्वोभयैकगोत्वादिवृत्तिमिथ्यात्वे गजे गोत्वाद्यधिकसत्ताकाश्वत्वादिकत्वाभावेन व्यभिचारेणोक्तापत्तेरसंभवात् , परस्परविरहरूपत्व-परस्परविरहव्यापकत्वान्यतरत्वस्य स्वावृत्त्येकधर्मिनिष्ठाभावप्रतियोगितावच्छेदकसामान्यकत्वपर्यवसितस्य परस्परविरुद्धोभयस्मिन्नापादकघटके निवेशेन तद्वारणे तु, उक्तव्याप्तेरप्रयोजकत्वशङ्कया दुर्निश्चेयतयोक्तापत्तिर्दुर्घटैव, इत्याशङ्क्योक्ताप्रयोजकत्वशङ्कां वारयन् उक्तापत्तिं घटयित्वा 'यथा चे'ति ग्रन्थमवतारयति—*नन्विति* ॥ *चेति* ॥ परस्परविरुद्धयोरेकधर्मिणीति शेषः । अप्रयोजकत्वं निरस्यति—*अन्यथेति* ॥ उक्तयोरेकधर्मिणि मिथ्यात्वेऽप्यपरस्याधिकसत्तानुपगम इत्यर्थः । समानसत्ताकत्व उपगन्तव्य इति शेषः । *तयोः=परस्परविरहव्यापकयोः । *सहावस्थानम्=एकधर्मिण्येकदेश-कालावच्छेदेन विरोधिताघटकसंबन्धेन वर्तमानत्वं न स्यात् ॥ समसत्ताकयोर्भावाभावयोर्व्यापकविरह-व्याप्यतोश्च विरोधादित्यर्थः । *ननु*—अस्त्वेवं रजत-तदभावयोः, मिथ्यात्व-सत्यत्वयोस्तु गोत्वाश्वत्वयोः

**अद्वैतसिद्धिः**

गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यम्, इति नैकतरनिषेधेऽन्यतरसत्त्वम्, तद्वत्। यथाच सत्यत्व-मिथ्यात्वयोर्न परस्परविरहरूपत्वम्, न वा परस्परविरहव्यापकत्वम्, तथोपपादितमधस्तात्।

**तरङ्गिणी**

त्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यम्, इति नैकतरनिषेधेऽन्यतरसत्त्वम्, तद्वत्। यथाच सत्यत्व-मिथ्यात्वयोर्न परस्परविरहरूपत्वम्, न वा परस्परविरहव्यापकत्वम्, तथोपपादितमधस्तात्।

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

करणप्रातीतिकयोः परस्परविरहत्वाद्यभावात् समसत्ताकत्वसम्भवेऽपि प्रपञ्चगतयोः सत्यत्व-मिथ्यात्वयोरुक्तविरहत्वादिमत्त्वाद् न समसत्तेत्यत आह—*यथेति* ॥ *येन प्रकारेणेत्यर्थः* ॥ *तथा = स प्रकारः। *उपपादितम्=सत्त्वासत्त्वे अधिकृत्य ज्ञापितम्(१)। तथाच सत्त्वासत्त्वयोः परस्पराभावत्वं नास्ति, प्रपञ्चे तयोरेकासत्त्वेऽप्यपरासत्त्वादिति यथोक्तं प्रथममिथ्यात्वे ; तथा सत्यत्व-मिथ्यात्वयोरपि तत्र ; तुच्छे द्वयोः प्रत्येका-

**न्यायामृतसौगन्ध्यम्**

रेकस्मिन् गजे निषेध्ये गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यम्, इति नैकतरनिषेधेऽन्यतरसत्त्वम्; तद्वत्। प्रकृते च सत्यत्व-मिथ्यात्वयोर्न परस्परविरहरूपत्वादिकमिति—चेत्, *न* ; द्वितीयमिथ्यात्वलक्षणप्रस्तावे मिथ्यात्वाभावस्सत्यत्वमिति त्वयाऽप्यङ्गीकृतत्वात् ॥

**सौगन्ध्यविमर्शः**

द्वितीयमिथ्यात्वप्रस्तावे हि—'अधिकरणातिरिक्ताभावानभ्युपगमेनोक्तमिथ्यात्वाभावरूपसत्यत्वस्य अबाधस्वरूपा-

**सिद्धिव्याख्या**

गोत्वेति* ॥ *तद्वदिति* ॥ निषेध्यतावच्छेदकद्वयत्वावच्छिन्नत्वेनैकतरनिषेधेऽन्यतरसत्त्वमित्यर्थः। *ननु* गोत्वाश्वत्वयोः परस्परविरहरूपत्वाभावादेकनिषेध्यतावच्छेदकावच्छिन्नत्वसंभवेनोक्तदोषाभावेऽपि परस्परविरहरूपयोः सत्यत्व-मिथ्यात्वयोस्तदसंभवेनोक्तदोषस्तदवस्थ एवेत्याशङ्क्याह—*यथा चेति*॥ ततश्च गोत्वाश्वत्वयोरिवैकनिषेध्यता-

**विठ्ठलेशीयटिप्पणी**

परस्परविरुद्धमात्रयोर्गजे प्रातीतिकत्वेन समसत्ताकयोरिव प्रपञ्चव्यावहारिकत्वेन समसत्ताकत्वमुचितम्, इत्याशङ्क्य, तयोर्वैषम्यमाह—*तथाचेति* ॥ *गोत्वाश्वत्वयोरिति* ॥ परस्परविरुद्धयोरपीति शेषः। *समानाधिकरणप्रातीतिकयोः=गजरूपैकधर्मिणि प्रतिभासकालमात्रस्थायिनोः। समसत्ताकत्वेऽयं हेतुः। *परस्परविरहत्वाद्यभावादिति* ॥ अविरोधादिति शेषः। *प्रपञ्चगतयोः=तत्र व्यावहारिकत्वेनाभ्युपेतयोः। *सत्यत्व-मिथ्यात्वयोरिति* ॥ मिथ्यात्वाभाव-मिथ्यात्वयोरित्यर्थः। मिथ्यात्वाभावरूपसत्यत्वस्येति पूर्वमूलपङ्क्तेः। *समसत्तेति* ॥ प्रपञ्च इत्यादिः। समसत्ताकभावाभावयोर्विरोधादिति भावः। तस्मात् प्रपञ्चे मिथ्यात्वमिथ्यात्वे सत्यत्वव्याधिकसत्ताकत्वापत्तिर्दुर्वारेति बोध्यम्। *आहेति* ॥ सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्वाद्यभावमित्यादिः। *ननु*—सत्त्वासत्त्वयोः परस्परविरहरूपत्वाद्यभावः पूर्वमुपपादितः, न तु सत्यत्व-मिथ्यात्वयोः, इत्यतो व्याचष्टे—*यथेतीति* ॥ *प्रकारः=युक्तिः। *नास्तीति* ॥ परस्पराभावयोरेकस्मिन् धर्मिण्येकासत्त्वेऽपरसत्त्वनियमात्, इह तु तन्नियमभङ्गादित्याह—*प्रपञ्च इति* ॥ *तत्=परस्पराभावरूपत्वादि। इह तन्नियमभङ्गमाह—*तुच्छ इति* ॥ *द्वयोः=सत्यत्व-मिथ्यात्वयोः। *प्रत्येकासत्त्वादिति* ॥ प्रत्येकाभावद्वयसत्त्वेनैकसत्त्वेऽप्यपरा-

---

(१) तुच्छस्वीकर्तृमताभिप्रायेणेदम्। *एतेन*—तुच्छास्वीकर्तृमते तुच्छे प्रत्येकासत्त्वाभावादिदमसंगतमिति [illegible]करोक्तिः—*परास्ता* ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्त्वादिति भावः । *ननु*—तथापि परस्पराभावव्याप्यत्वात् तयोर्व्यावहारिकयोर्न सामानाधिकरण्यम् । किञ्च मिथ्यात्वाभावरूपं सत्यत्वमित्यस्य द्वितीयमिथ्यात्वोक्तिशेषे स्वयमेवोक्तत्वात् परस्परविरहत्वमप्यस्त्येव, एवं

### सौगन्ध्यविमर्शः

विरोधादि'ति सिद्धिवाक्यं हि विवरणग्रन्थानुसारेण लघुचन्द्रिकायां मिथ्यात्वाभावत्वोपलक्षितमिथ्यात्वाभावस्यैव सत्यत्वरूपत्वं ब्रह्मस्वरूपत्वं चेति व्याख्यातम्, न तु मिथ्यात्वाभावत्वविशिष्टमिथ्यात्वाभावस्य ; यस्य निषेधेन मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वमित्यत्रोपपाद्यते । तथाचात्र निषेध्यत्वेनाभिमतस्य सत्यत्वस्य मिथ्यात्वाभावरूपत्वं न कुत्राप्यस्माभिरङ्गीकृतमिति हि वस्तुस्थितिः । एतेन—द्वितीयमिथ्यात्वलक्षणप्रस्तावे मिथ्यात्वाभावः सत्यत्वमिति त्वयाऽप्यङ्गीकृतत्वादिति त्वदुक्तोपालम्भन-

### विट्ठलेशीयटिप्पणी

सत्त्वादित्यर्थः । सदसत्त्वानधिकरणत्वं मिथ्यात्वमिति मते त्रिकालाबाध्यत्वम्=अनवच्छिन्नो बाध्यत्वाभावः, सत्यत्वं तु तदभावो बाध्यत्वम्, तच्चात्यन्ताभावप्रतियोगित्वेन ज्ञायमानत्वं भावरूपधर्मानाश्रये शुद्धे ब्रह्मणि कदाऽपि नास्ति, तुच्छे तु सदाऽस्ति, प्रातिभासिकरजतादौ तु शुक्त्याद्यधिष्ठानतत्त्वसाक्षात्कारोत्तरम्, व्यावहारिके तु ब्रह्मसाक्षात्कारात् पूर्वं परोक्षबाधेन, उत्तरं त्वपरोक्षबाधेनास्ति । सत्त्वेन प्रतीत्यनर्हत्वमसत्त्वम्, तदधिकरणत्वं च सत्त्वेन प्रतीत्यर्हत्वम्, तच्च सत्तादात्म्यपर्यवसितम् । एवं च बाध्यत्वविशिष्टं सत्तादात्म्यम्, सत्तादात्म्यविशिष्टं बाध्यत्वं वा मिथ्यात्वम् । एतच्छरीरे निरुक्तसत्यत्वाभावस्य बाध्यत्वरूपस्य प्रवेशेऽपि बाध्यत्वसामान्यान्योन्याभावरूपं सत्यत्वं बाध्यत्वघटित-विशिष्टरूपमिथ्यात्वस्याभावरूपविशेषाभावानात्मकं तदघटितं च । इमे हि सत्यत्व-मिथ्यात्वे ब्रह्म-प्रपञ्चयोः परस्परं व्यभिचारिणी, तुच्छे च परस्पराव्यापके । पूर्वमूलं तु प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमिति मताभि-प्रायेण । अत एव तन्मतशेष एव 'उक्तमिथ्यात्वाभावरूपसत्यत्वस्य' 'इत्युक्त'पदोपादानमित्याशयः । *ननु*—सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्व-परस्परविरहव्यापकत्वयोः प्रपञ्चसत्यत्वापत्त्यवतारभयाद् निराकृतत्वात् पुनस्तदव-लम्बनेनाशङ्का 'परस्परविरहरूपत्वेऽपी'त्यनेन मूलकृतोऽसङ्गता, इत्याशङ्क्य परस्परविरहव्यापकत्वपक्षावलम्बनेनोक्त-मूलाशङ्कां सङ्गमयति—*ननु तथापीति* ॥ *परस्परेति* ॥ व्यावहारिकमिथ्यात्वे व्यावहारिकसत्यत्वाभाव-व्याप्यत्वस्य, व्यावहारिकसत्यत्वे च व्यावहारिकमिथ्यात्वाभावव्याप्यत्वस्य निश्चयाद् व्यावहारिकसत्यत्व-मिथ्या-त्वयोः सामानाधिकरण्ये तेनैव प्रतिबन्धात् तज्ज्ञानं न सम्भवतीत्यर्थः । अत एव तदन्यथानुपपत्त्या प्रपञ्चवृत्तित्वेन ज्ञायमानमिथ्यात्वस्य मिथ्यात्वमभ्युपगच्छता प्रपञ्चवृत्तित्वेन ज्ञायमानसत्यत्वस्य पारमार्थिकत्वं वाच्यम् । तस्य ब्रह्मज्ञानात् पूर्वं व्यवहारकाले बाधाभावेन प्रातिभासिकत्वासंभवात्, गोत्वाश्वत्वयोस्तु व्यावहारिकयोरेव परस्परा-भावव्याप्यत्वम्, तयोस्तु न गजरूपैकधर्मिवृत्तित्वज्ञानम्, किंतु प्रातिभासिकयोरेव, तयोस्तु न परस्परविरोधः, इति गजे तयोरेकस्य मिथ्यात्वे नापरस्य सत्यत्वापत्तिरिति शङ्काशयः । *ननु*—परस्पराभावव्याप्यत्वेन गृहीतयोः प्रपञ्चरूपैकधर्मिवृत्तित्वज्ञानं यदि भवेत्, तर्हि तदन्यथानुपपत्त्या प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वस्य पारमार्थि-कत्वापत्तिः स्यात्, तदेव न ; तद्धर्माभावव्याप्यत्वेन गृहीतधर्मप्रकारकज्ञानत्व-तद्धर्मप्रकारैकधर्मिविशेष्यज्ञानत्वरूप-प्रतिबध्यप्रतिबन्धकतावच्छेदकधर्माक्रान्तत्वेन स्वप्रतिबध्यत्वात् । नच—उक्तज्ञानस्य संशयरूपत्वाद् न प्रतिबन्धकतेति—वाच्यम् ; सति कोटिद्वयभाने संशयत्वम्, सति संशयत्वे कोटिद्वयभानमित्यन्योन्याश्रयात् । कोटिद्वयाभावव्याप्यत्व-ज्ञाननाशोत्तरमेव संशयोपगमात् ; अन्यथा परस्परोत्तेजकताकल्पनापत्त्या गौरवात्, भावद्वयकोटिकसंशयानुपगमाच्च । एवं च परस्परविरहव्याप्यतापक्षे व्यावहारिकसत्यत्व-मिथ्यात्वयोः प्रपञ्च एकमिथ्यात्वेऽपरसत्यत्वापत्तिर्न संभवति । मौल-परस्परविरहरूपत्वपदस्य प्रसिद्धार्थतानुपपत्तिश्च, इत्यत आह—*किञ्चेति* । *मिथ्यात्वेति* ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वेत्यर्थः । एतच्च 'असद् नृश्रृङ्गमि'ति वृत्तिमादाय तुच्छेऽप्यस्ति, इति न तत्रैतदभावरूपसत्यत्वा-भावानुपपत्तिः । *सत्यत्वमिति* ॥ इदं च शुद्धे ब्रह्मण्येव तद्रूपत्वात् पारमार्थिकमस्ति, प्रपञ्चे त्वारोपितम्, अनयोश्च सत्यत्व-मिथ्यात्वयोः प्रपञ्चे ज्ञानं संशयरूपम् । नच—उक्तरीत्याऽन्योन्याश्रयादिदोषात् कथं तत्संभवः ? इति—

## अद्वैतसिद्धिः

परस्परविरहरूपत्वेऽपि विषमसत्ताकयोरविरोधात्, व्यावहारिकमिथ्यात्वेन व्यावहारिक-

## तरङ्गिणी

परस्परविरहरूपत्वेऽपि विषमसत्ताकयोरविरोधात्, व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिक-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तुच्छास्वीकर्तृमते परस्परविरहव्यापकत्वमप्यस्ति, तत्राह—*परस्परविरहरूपत्व इति* ॥ परस्परविरहात्मकत्वे

## न्यायामृतसौगन्ध्यम्

यथा शुक्तिरूप्य-तदभावयोः ; एकबाधकबाध्यत्वं च समसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्य-शुक्तिभिन्नत्वयोः । अस्ति च प्रपञ्च-तन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वम्, अतस्समसत्ताकत्वाद् मिथ्यात्व-

## सौगन्ध्यविमर्शः

मेवेति—सूचितम्, न हि निषेध्यत्वेनाभिमतयोः सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्वमद्वैतिनो मन्यन्ते । स्पष्टं हि प्रथममिथ्यात्वलक्षणप्रस्तावे सत्त्वासत्त्वयोः परस्परविरहरूपत्वं निरस्तं सिद्धिकारैरेव, इत्यलमियतैवेदानीम् ॥

## सिद्धिव्याख्या

वच्छेदकावच्छिन्नत्वम्, तद्वदेवान्यतरनिषेधेऽन्यतरासत्त्वं चोपपद्यत इति भावः । *यद्वा*—सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्वमेव, मिथ्यात्वं च वियदादिप्रपञ्चसमसत्ताकम् । एवं च न तात्त्विकाद्वैतहानिः ; नापि सिद्धसाधनम् ; त्वन्मते प्रपञ्चे स्वसमानसत्ताकमिथ्यात्वासिद्धेः । नच—प्रपञ्चमिथ्यात्वं प्रपञ्चसमसत्ताकमित्यङ्गीकुर्वता भवता प्रपञ्चवद् व्यावहारिकमित्यङ्गीकृतम्, सत्यत्वं तु न व्यावहारिकमित्यङ्गीकर्तुं शक्यते ; तथा सति तयोस्तुल्यसत्ताकत्वप्रयुक्तविरोधापत्तेः, इष्टापत्तावन्यतरस्यैव सत्त्वापत्त्योभयसत्त्वासंभवापत्तेः, अस्ति चोभयसत्त्वम्, अविरोधश्च सत्यत्वस्य प्रातिभासिकत्वेन वा संभवति, पारमार्थिकत्वेन वा, प्रातिभासिकत्वं च त्वयैव नेष्यते, इति तत्पारमार्थिकत्वं वज्रलेपायितमिति—वाच्यम् ; मिथ्यात्वस्य व्यावहारिकस्य काल्पनिकसत्यत्वेन सह विरोधाभावात्, काल्पनिकस्य मिथ्यात्वस्य व्यावहारिकसत्यत्वेन विरोधाभावाच्चेत्यभिप्रेत्याह—*परस्परविरहरूपत्वेऽपीत्यादिना काल्पनिकसत्यत्वानपहारा-

## विट्ठलेशीयटिप्पणी

वाच्यम् ; भावाभावकोटिकस्य संशयस्यानुभाविकत्वेनैककोटिज्ञानप्रतिबन्धकतायां कोट्यन्तरे साधारणधर्मवत्ताज्ञानतदधीनकोट्यन्तरोपस्थित्यादेरुत्तेजकत्वोपगमात्, प्रामाणिकतया गौरवस्यादोषत्वात् । एतच्च परस्परविरहरूपोक्तसत्यत्व-मिथ्यात्वयोः प्रपञ्चरूपैकधर्मिणि संशयविषययोरेकमिथ्यात्वेऽपरसत्यत्वापत्तिरिति भावः ॥

श्रीः ॥ न्यूनताभङ्गाय परस्परविरहव्यापकत्वपक्षेऽप्युक्तापत्तिशङ्कां सङ्गमयितुं सत्यत्व-मिथ्यात्वयोः परस्परविरहव्यापकत्वमाह—*तुच्छास्वीकर्तृमत इति* ॥ यद्यपि 'प्रतिपन्नोपाधी'त्यादिमिथ्यात्वस्य तुच्छसाधारण्यात्, तदभावरूपसत्त्वाभावस्य तुच्छे विरहेणोक्तसत्यत्व-मिथ्यात्वयोः परस्परविरहव्यापकत्वं तुच्छस्वीकारेऽप्युपपद्यते ; तथाप्युक्तमिथ्यात्वे प्रतिपन्नोपाधिघटकप्रतिपत्तेः—'असद् नृशृङ्गमि'ति विकल्पाख्यवृत्तिव्यावृत्तेन स्वप्रकारकधीत्वेन निवेशे परस्परविरहव्यापकत्वासंभवेऽपि तद्घटितमिथ्यात्वस्य ब्रह्मणीव तुच्छेऽपि विरहेण सत्यत्वव्यवहारापत्तिः, अतः—'तुच्छास्वीकर्तृमते' इत्युक्तम् । *इदं तु बोध्यम्*—नेयं पङ्क्तिः 'प्रतिपन्नोपाधी'त्यादिमिथ्यात्व-तदभावरूपसत्यत्वयोः परस्परविरहव्यापकत्वपरा, परस्परविरहत्वानाक्रान्तयोरेव पौनरुक्त्यभयेन तस्य वक्तव्यत्वात् । अत एव परस्परविरहस्य व्यापकत्वं तद्भेदविशेषितम् ; अन्यथा परस्परविरहत्ववतोरपि तत्सत्त्वेन तदुक्तेर्व्यर्थत्वापत्तेः । अत एव पूर्वं मूले 'यथा परस्परविरहरूपयो रजत-तदभावयोः शुक्तौ, यथा वा परस्परविरहव्यापकयो रजतभिन्नत्व-रजतत्वयोस्तत्रैवे'ति पृथगुदाहरणोक्तिः सङ्गच्छते, किंतु प्रथमनिरुक्ताबाध्यत्वरूपसत्यत्व-बाध्यत्वविशिष्टसत्तादात्म्यरूपमिथ्यात्वयोः परस्परविरहव्यापकत्वपरा ; तत्र तुच्छे तयोः प्रत्येकं विरहाभ्यां व्यापकताभङ्गः स्यात्, इति 'तुच्छास्वीकर्तृमते' इत्युक्तम् । *परस्परविरहव्यापकत्वमप्यस्तीति* ॥

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

परस्परविरहव्यापकत्वे परस्परविरहव्याप्यत्वे चेत्यर्थः ; परस्परविरहेण रूपणं यस्येति व्युत्पत्तेः, परस्परविरहस्य रूपणं यस्मादिति व्युत्पत्तेश्च व्यापक-व्याप्ययोरपि रूपपदेन लाभसम्भवात् । *ननु*—प्रपञ्चे सत्यत्वं मिथ्यात्वविषमसत्ताकमपि तात्त्विकमेव ; अन्यथा "सत्यं चानृतं च सत्यमभवदि"त्यादिश्रुतौ सत्यस्य ब्रह्मणः प्रातीतिकसत्यत्वाश्रयाकाशादिप्रपञ्चे कारणत्वोक्तेरनृतपदं विनाऽपि सम्भवेन तद्व्यर्थत्वापत्तेः, शुक्तिरूप्यादिव्यावृत्त-सत्यत्वस्य सत्यपदेन ग्रहणे तु शुक्तिरूप्यादिग्राहकत्वेनानृतपदं सार्थकम्, अतो नाद्वैतहानेरुद्धारः, तत्राह—

## सिद्धिव्याख्या

दित्यन्तेन* ॥ *ननु* विषमसत्ताके सत्यत्व-मिथ्यात्वे किं रूप्येऽङ्गीक्रियेते ? किं वा जगति ? *नाद्यः* ; शुक्तिरूप्य-मिथ्यात्वं तात्त्विकमित्यत्र उक्तत्वेन तद्विरोधात् । *नान्त्यः* ; विषमसत्ताकयोस्तयोः प्रपञ्चे त्वयाऽनङ्गीकारात्, अत्रैव सत्यत्व-मिथ्यात्वे प्रपञ्चसमसत्ताके इत्युक्तत्वाच्च, तथा सति, अप्रातिभासिकत्वेनाङ्गीकृतस्य प्रपञ्चसत्यत्वस्य

## विट्ठलेशीयटिप्पणी

तथाच तद्विशिष्टबुद्धौ तद्विरहव्यापकत्वेन गृहीतधर्मवत्ताज्ञानस्याविरोधित्वात् तथा गृहीतयोरप्युक्तसत्यत्व-मिथ्यात्वयोः प्रपञ्चे ज्ञानसंभवात् तयोरेकस्य प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चे सत्यत्वविरहव्यापकमिथ्यात्वविरहपर्यवसितेऽभ्युपगते व्याप्यस्य सत्यत्वविरहस्याभावः सत्यत्वरूप आवश्यकः, इति प्रपञ्चे सत्यत्वापत्तिः । सा चोक्तरीत्या सत्यत्वस्य पारमार्थिकत्वापत्तिपर्यवसितेत्यवतारिकाभिप्रायः । *रूपणम्=ज्ञापनम् । अनयाऽवतारिकया प्रकाशितां 'परस्परविरह-रूपत्वेऽपी'त्यनेन पुनरुत्थापितां प्रपञ्चसत्यत्वापत्तिं परिहरति मूले—*विषमसत्ताकयोरविरोधादिति* ॥ उक्तत्रिविध-परस्परविरहरूपयोरित्यादिः । *अयमभिप्रायः*—एकस्मिन् धर्मिणि प्रसक्तयोर्निरुक्तत्रिविधविरुद्धधर्मयोरेकमिथ्यात्वेऽ-परस्य सत्यत्वम्, अधिकसत्ताकत्वमिति वा न नियमः, किंतु तादृशयोरेकस्यैकधर्मिणि यत्सत्ताकत्वम्, अपरस्य तदन्यसत्ताकत्वरूपं विषमसत्ताकत्वमित्येव ; यथा शुक्तौ रजत-रजतत्वयोः प्रातिभासिकत्वे रजताभाव-रजतभिन्नत्वयो-र्व्यावहारिकत्वम् ; यथा वा गवाश्वयोः, गोत्वाश्वत्वयोर्वा व्यावहारिकत्वेऽश्वत्व-गोत्वयोः प्रातिभासिकत्वम् । *वस्तुतस्तु*—परस्परविरहव्याप्यत्वेन गृहीतयोर्व्यावहारिकयोस्तयोरेकस्मिन् नैकदा ज्ञानम्, गजे तु तयोः प्रातिभासि-कत्वेन समसत्ताकयोरपि संभवः ; तयोरुक्तत्रिविधस्यापि विरोधस्याभावादिति । *ननु*—प्रपञ्चे प्रसक्तयोर्मिथ्यात्व-सत्यत्वयोर्मध्ये मिथ्यात्वस्यैकस्य मिथ्यात्वोपगमे व्यावहारिकसत्ताकत्वोपगमे पर्यवसानात् सत्यत्वस्यापरस्य तदन्यसत्ताकत्वमुक्तव्याप्तिबलाद् वाच्यम् । तच्च प्रातिभासिकसत्ताकत्वरूपमेव संभवति, न तु पारमार्थिकसत्ता-कत्वरूपम् ; ब्रह्मान्यस्यापारमार्थिकत्वेनाद्वैतहान्यप्रसङ्गात् । एवं च 'व्यावहारिके'त्यादिपङ्क्त्या प्रपञ्चसत्यत्वस्य प्रातिभासिकत्वकथनं व्यर्थम्, एवमुक्तरीत्या प्रपञ्चसत्यत्वस्य प्रातिभासिकत्वापहारस्याप्रसक्तेस्तदभावपरत्वम्, यथाश्रुते प्रतीयमानं तु सुतराम्, इत्याशङ्क्य तां पङ्क्तिमवतारयति—*ननु प्रपञ्च इति* ॥ प्रातिभासिकत्वेऽप्युक्त-व्याप्त्यक्षतेस्तात्त्विकत्वमेवेति कुत इति ? अत आह—*अन्यथेति* ॥ प्रातिभासिकं चेदित्यर्थः । *सत्यमिति* ॥ "सत्यं ज्ञानमनन्तं ब्रह्म"इत्यौपक्रमिकं ब्रह्म, *सत्यम्=व्यावहारिकाकाशादिप्रपञ्चरूपेण ; *अनृतम्=प्रातिभासिक-रजतादिरूपेण । *अभवत्=अविद्यावशाद् व्यवर्तत, तद्विवर्तोपादानमिति श्रुत्यर्थः । *सत्यस्य=द्वितीयसत्यपदार्थस्य । *प्रातीतिकसत्यत्वाश्रयेति* ॥ शुक्तिरूप्यादिसाधारणेत्यादिः । 'आकाशादी'त्यादिना शुक्तिरूप्यं ग्राह्यम् । प्रातीतिकसत्यत्वाश्रय आकाशादिप्रपञ्चे शुक्तिरूप्यादौ चेति पाठः सुगमः । *अनृतपदं विनाऽपीति* ॥ प्रपञ्चे प्रातिभासिकसत्यत्वोपगमे सत्यपदं तादृशसत्यत्वाश्रयपरं वाच्यम् ; तथाच तेनैव प्रातिभासिकरजतादेरपि संग्रहेऽनृतपदं व्यर्थमिति भावः । स्वमते तत्सार्थक्यमाह—*शुक्तिरूप्यादिव्यावृत्तसत्यत्वस्येति* ॥ तच्च प्रकृते व्यावहारिकमिथ्या-त्वेन विषमसत्ताकमेव, इति सत्यपदं मुख्यमपीदानीं भवतीति बोध्यम् । *अत इति* ॥ एतावताऽपि प्रपञ्चे पारमार्थिकसत्यत्वानिराकरणादित्यर्थः । *अद्वैतहानेः* ॥ पूर्वपक्षिताया इति शेषः । *मूले—व्यावहारिक-

### अद्वैतसिद्धिः

सत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात्, तार्किकमतसिद्धसंयोग-तदभाववत् सत्यत्व-मिथ्यात्वयोः

### तरङ्गिणी

सत्यत्वानपहारात्, तार्किकमतसिद्धसंयोग-तदभाववत् सत्यत्व-मिथ्यात्वयोः समुच्चयाभ्युपगमाच्च । एकसाधकेना-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*व्यावहारिकेति*॥ *व्यावहारिकसत्यत्वेति* ॥ प्रातीतिकान्यसत्यत्वेत्यर्थः । *काल्पनिकेति* ॥ प्रातीतिकेऽर्थः । शुक्तिरूप्यादौ व्यावहारिकस्य मिथ्यात्वस्य प्रातीतिकस्य सत्यत्वस्य च दृष्टत्वेन प्रपञ्चेऽपि तादृशे ते कल्प्येते,

### न्यायामृतसौगन्ध्यम्

बाधकेन प्रपञ्चस्यापि बाधाद् नाद्वैतहानिरिति—चेत्, *न*; व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि जगतो ब्रह्मवत् पारमार्थिकत्वोपपत्तेः (१), अन्यथा व्यावहारिकसत्यत्वापहारे प्रातिभासिक-

### सौगन्ध्यविमर्शः

(१) 'व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि प्रातिभासिकसत्यत्वानपहारादि'ति वाक्येन हि प्रपञ्च-मिथ्यात्वप्रमा यावद् न भवति, तावत् प्रपञ्चे प्रातिभासिकं सत्यत्वं स्वीक्रियते ; मिथ्यात्वाज्ञानकार्यत्वादुक्तसत्यत्वस्य, इति प्रपञ्चस्य

### सिद्धिव्याख्या

व्यावहारिकमिथ्यात्वयुक्तस्य तात्त्विकत्वापत्तेर्दुर्वारत्वादित्याशङ्क्याह—*तार्किकमतेति* ॥ मत्पक्षे 'शुक्तिरूप्य-मिथ्यात्वं तात्त्विकमि'त्यग्रेतनग्रन्थविरोधः ; तत्र तात्त्विकपदस्य प्रातिभासिकत्वनिराकरणार्थत्वप्रयोजनकस्य व्यावहारि-

### विट्ठलेशीयटिप्पणी

मिथ्यात्वेनेति* ॥ प्रपञ्चमिथ्यात्वस्य मिथ्यात्वोपगमे घटादिवद् ब्रह्मज्ञानात् पूर्वमबाधेन व्यावहारिकत्वेनोपगम्येन प्रपञ्चमिथ्यात्वेनेत्यर्थः । व्यावहारिकसत्यत्वस्य=सत्यत्वव्यावहारिकत्वस्य । *अपहारेऽपीति* ॥ विषमसत्ताकत्व-घटितव्याप्तिबलात् । नच—विरुद्धयोरेकस्यैकस्मिन् यत्सत्ताकत्वम्, अपरस्य तदन्यसत्ताकत्वमिति हि व्याप्तिः, एवं च प्रपञ्चे मिथ्यात्वस्य व्यावहारिकत्वे सत्यत्वस्य तदन्यसत्ताऽस्तु, व्यावहारिकत्वाभावः कुतः ? इति—वाच्यम् ; एकस्य यत्सत्ताकत्वम्, अपरस्य तत्सत्ताविरहविशिष्टस्य तदन्यसत्तावत्त्वस्य त्रिविधान्यतमसत्तावत्त्वस्य वा तत्सत्ताविरहवत्त्व-मात्रस्यैव वा व्याप्तौ प्रवेशादिति भावः । तथापि प्रपञ्चसत्यत्वस्य तात्त्विकत्वसंभवे प्रातीतिकत्वं कुत इति ? अतो व्याचष्टे टीकायाम्—*प्रातीतिकान्यसत्यत्वेत्यर्थ इति* ॥ अयं भावः—प्रपञ्चसत्यत्वस्य व्यावहारिकत्वं व्यवहार-कालाबाध्यत्वम्, तस्यापहारः=व्यवहारकालबाध्यत्वम्, तस्मिन् सति बाध्यत्वसामान्याभावरूपं सत्यत्वमपि न संभवति ; प्रतीतिकालाबाध्यत्वे सति बाध्यत्वरूपं प्रातीतिकत्वं तु संभवतीति । *कल्पना=नार्थापत्तिः ; प्रामाणि-कत्वापत्तेः, अतो व्याचष्टे—*प्रातीतिकेत्यर्थ इति* ॥ *मूलेऽनपहारादिति* ॥ अपहाराभावेन विषमसत्ताकत्व-घटितव्याप्त्यक्षतेरद्वैतहानिपूर्वपक्षनिरासादित्यर्थः । नचैवम्—उक्तश्रुतावनृतपदवैयर्थ्यापत्तिरिति—वाच्यम् ; सत्यपदस्य प्रातीतिकसत्यत्वाश्रयपरत्वग्राहकतया तत्सार्थक्यसंभवात्, सत्यपदस्य व्यवहारकालाबाध्यपरत्वेऽनृतपदसार्थक्यस्यानुपदं वक्ष्यमाणत्वाच्च । किंच यन्निष्ठं मिथ्यात्वं व्यावहारिकम्, तन्निष्ठं सत्यत्वं प्रातीतिकम्, इति व्याप्त्यन्तरेणापि प्रपञ्चनिष्ठमिथ्यात्वस्य व्यावहारिकत्वात् प्रपञ्चनिष्ठं सत्यत्वं प्रातीतिकमिति वक्तुमुक्तव्याप्त्यन्तरग्राहकं दृष्टान्त-माह—*शुक्तिरूप्यादाविति* । *व्यावहारिकस्य मिथ्यात्वस्येति* ॥ प्रातीतिके शुक्तिरूप्ये व्यावहारिकसाधारण-व्यावहारिकरजतत्वस्येव व्यावहारिकमिथ्यात्वस्य स्वीकर्तुं शक्यत्वात्, ब्रह्मज्ञानात् पूर्वं 'शुक्तिरूप्यं न मिथ्ये'ति व्यवहाराभावात्, 'शुक्तिरूप्यं मिथ्ये'ति व्यवहारस्य च सत्त्वादिति भावः । *तादृशे=व्यावहारिक-प्रातीतिके । *ते=मिथ्यात्व-सत्यत्वे । प्रपञ्चगतसत्यत्वे प्रातीतिकत्वव्यापकयोस्तूलाज्ञानोपादानकत्व-ब्रह्मज्ञान-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शुक्तिरूप्यादाविव प्रपञ्चे मिथ्यात्वाज्ञानेन सत्यत्वस्योत्पत्तेरिव प्रपञ्चे मिथ्यात्वप्रमया तादृशाज्ञान-तत्कार्यसत्यत्वयो-रुच्छेदस्य स्वीकाराद् ब्रह्मप्रमान्यप्रमाबाध्यत्वेन शुक्तिरूप्यादिगतस्येव प्रपञ्चगतस्यापि सत्यत्वस्य (१)प्रातीतिकत्वं युक्तम्; उक्तश्रुतौ च सत्यपदस्य व्यवहारकालाबाध्यपरत्वेन नानृतपदं व्यर्थमिति भावः। *ननु*—प्रपञ्चे मिथ्यात्वाज्ञानं न तत्र सत्यत्वोत्पादकम्, किन्तु प्रपञ्चोत्पादकाज्ञानमेव; तस्यैव ब्रह्म-प्रपञ्चयोः परस्पर-तादात्म्याध्यास इव तद्धर्मयोः परस्पराधिकरणे संसर्गाध्यासेऽपि हेतुतया क्लृप्तत्वेन नित्यत्वादेरिव सत्यत्वस्यापि

## सौगन्ध्यविमर्शः

व्यावहारिकमिथ्यात्वे प्रातीतिकान्यसत्यत्वापहारेऽपि प्रातीतिकसत्यत्वस्वीकाराद् न दोष इति विवक्षितम्। अयं भावः—व्यावहारिकमिथ्यात्वमिथ्यात्वेन प्रातीतिकसत्यत्वं किमापाद्यते? उत पारमार्थिकसत्यत्वम्? आद्ये लौकिकपारमार्थिकत्वाकारेण प्रातीतिकान्यसत्त्वेन निषेधात् प्रातीतिकसत्त्वेनानिषेधादिष्टापत्तिः, द्वितीये त्वसंभवः, इति मिथ्यात्वमिथ्यात्वस्य व्यावहारिकत्वपक्षेऽपि न प्रपञ्चसत्त्वापत्तिः। प्रातीतिकस्याप्यर्थक्रियाकारित्वं तु न विरुद्धम्, इत्युत्तरत्र विशदीभविष्यति। *एतेन*—व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि जगतो ब्रह्मवत् पारमार्थिकत्वापत्तिः; अन्यथा व्यावहारिकसत्यत्वापहारे प्रातिभासिकत्वापत्त्याऽर्थक्रियाकारित्वानुपपत्तेरिति सौगन्ध्योक्तम्—*परास्तम्*। *वस्तुतस्तु*—सत्यत्वमेव प्रातिभासिकमुक्तवाक्येन विवक्ष्यते, इति जगतोऽर्थक्रियाकारित्वं कथं विरुद्धम्? न हि सत्त्वमर्थक्रियाकारितावच्छेदकमिति पूर्वमेवोपपादितम्। यथाच प्रातिभासिकेऽपि व्यावहारिकरजतत्वम्, मिथ्यात्वं च, एवं व्यावहारिकेऽपि प्रातिभासिकसाधारणं सत्त्वमित्यादि विट्ठलेशीय एव व्यक्तम्, इति तत एवाधिकमवगन्तव्यम्॥

## विट्ठलेशीयटिप्पणी

पूर्वभाविज्ञानोच्छेद्यत्वयोरसंभवात् प्रातीतिकत्वस्याप्यभावः, इत्याशङ्क्योक्तव्यापकविरहः प्रपञ्चसत्यत्वे नास्तीत्याह—*शुक्तिरूप्यादाविवेति*॥ 'उत्पत्तेरिवे'तीवकारान्तरेण यद् यत्प्रकारकाज्ञानकार्यम्, तत् तत्समानविशेष्यक-तत्प्रकारकज्ञानोच्छेद्यमिति व्याप्त्यन्तरं सूचितम्। तत्फलमाह—*प्रपञ्चे मिथ्यात्वप्रमयेति*॥ *स्वीकारादिति*॥ एतल्लभ्यहेतुकं प्रपञ्चगतसत्यत्वं प्रातीतिकम्, ब्रह्मप्रमान्यप्रमाबाध्यत्वात्, शुक्तिरूप्यगतसत्यत्ववदित्यनुमानान्तरमप्याह—*ब्रह्मप्रमान्यप्रमाबाध्यत्वेनेति*॥ एवं सत्युक्तमनृतपदवैयर्थ्यं परिहरति—*उक्तश्रुताविति*॥ *ननु*—प्रपञ्चे व्यावहारिकमिथ्यात्ववैधर्म्येण सत्यत्वस्य प्रातिभासिकत्वव्यवस्थापनेनैवाद्वैतहानेरुद्धाराद् मूले संयोग-तदभावदृष्टान्तेन, सत्यत्व-मिथ्यात्वयोर्व्यावहारिकयोः समुच्चयाभिधानं व्यर्थम्, इत्याशङ्क्य, प्रपञ्चे सत्यत्वस्य प्रातिभासिकत्वनिरासेन व्यावहारिकत्वं व्यवस्थाप्य मिथ्यात्वस्य विरोधेन तत्समसत्ताकत्वासम्भवात् प्रातीतिकत्वापत्त्या प्रपञ्चसत्यत्वापत्तावद्वैतहानितादवस्थ्यशङ्कया तदभिधानं सार्थकयितुमवतारयति—*ननु प्रपञ्च इत्यादिना*॥ *ननु* तद्धर्मिकतदभावाज्ञानमेव तद्धर्मिणि तदभावोत्पत्तौ कारणम्, न तु तद्धर्म्युत्पादकाज्ञानं स्वविषयीभूतधर्म्यन्तरधर्मोत्पत्तौ, इत्यत आह—*तस्यैवेति*॥ ब्रह्मविषयकस्य प्रपञ्चरूपधर्मिजनकाज्ञानस्यैवेत्यर्थः। *क्लृप्तत्वेनेति*॥ रज्जुसर्पाध्यासजनकरज्ज्वज्ञानस्य भयजनकत्व-वक्रत्वरूपपरस्परधर्माध्यासजनकत्वदर्शनादुक्तसामान्यहेतुत्वस्यावश्यकत्वादिति भावः। प्रपञ्चे मिथ्यात्वाज्ञानस्य सत्यत्वोत्पादकत्वस्वीकारेऽपि प्रपञ्चोत्पादकब्रह्माज्ञानस्य प्रपञ्चे ब्रह्मधर्मजनकत्वकल्पनस्य फलान्तरमाह—*नित्यत्वादेरिवेति*॥ नच—अत्राप्यनित्यत्वाज्ञानं कारणम्, अनित्यत्वज्ञानं च निवर्तकमिति—वाच्यम्; प्रपञ्चे ब्रह्मतादात्म्याध्यासे ब्रह्माज्ञान-

(१) *यत्तूक्तं न्यायभास्करे*—प्रपञ्चगतसत्यत्वस्य प्रातीतिकत्वे प्रपञ्चस्यापि प्रातिभासिकत्वापत्त्याऽर्थक्रियाकारित्वानुपपत्तिः—*इति*; तन्न; प्रपञ्चस्यैव मिथ्यात्वेनाज्ञातस्यासत्यत्वाधिष्ठानत्वमित्यभिप्रायेण प्रवृत्तेः, उक्तप्रकारे रूप्यमिथ्यात्वेन शुक्तिमिथ्यात्वापादनस्येवोक्तापादनस्याप्यसम्भवदुक्तिकत्वात्। अस्तु वा प्रातीतिकत्वम्, तावताऽपि स्वाप्नावगाहनादिप्रातिभासिकानामप्यर्थक्रियाकारित्वस्याद्वैतसिद्ध्यादौ सामान्यतोऽनुमाननिराकरणप्रकरण उपपादितत्वेनार्थक्रियाकारित्वोपपत्त्या तदनुपपत्त्यभावाच्चेति॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ब्रह्मधर्मस्य प्रपञ्चे तदुपादानाज्ञानादेव संसृष्टरूपेणोत्पत्तिसम्भवेन मिथ्यात्वाज्ञानस्य सत्यत्वोत्पत्तिहेतुत्व-कल्पनागौरवस्यान्याय्यत्वात् । एवञ्च ब्रह्मप्रमयैव तादृशसत्यत्वस्योच्छेदः, प्रपञ्चमिथ्यात्वप्रमया तु तादृशसत्यत्व-बुद्धावप्रमात्वधीमात्रं जन्यते । अत एव शुक्तिरूप्यादावपि तथैव स्वीक्रियते । किञ्च यत्र सत्यत्वस्यारोपः, तद्गतमिथ्यात्वाज्ञानस्य तद्धेतुतास्वीकारे सत्यत्वस्य तत्संसर्गस्य च प्रतीयमानस्योत्पत्तिस्तादृशाज्ञानाधीना

सौगन्ध्यविमर्शः

यथाच संयोग-तदभावस्थलेऽवच्छेदकभेदः, एवं प्रकृतेऽपि प्रपञ्चावच्छेदेन प्रपञ्चाभावरूपमिथ्यात्वम्, प्रपञ्चाभावरूपमिथ्या-त्वावच्छेदेन मिथ्यात्वाभावो ब्रह्मणि, इति युक्तं संयोग-तदभावदृष्टान्तानुसरणम् । एतेन—तार्किकेत्याद्युक्तम् ; तद्वत् प्रकृतेऽव-च्छेदकभेदाभावादिति सौगन्ध्योक्तम्—परास्तम् ; उक्तरीत्या संयोगवदेव मिथ्यात्व-सत्यत्वयोरप्यव्याप्यवृत्तित्वस्यैव स्वीकारात् । *एतेन*—अव्याप्यवृत्त्यभाव-प्रतियोगिनोरवच्छेदकभेदेनैकत्राविरोधेऽपि व्याप्यवृत्त्योस्तदसम्भवादित्यपि—*प्रत्युक्तम्* ॥

विट्ठलेशीयटिप्पणी

हेतुत्वस्य प्रपञ्चे ब्रह्माद्यधिष्ठानगतभूयोधर्माध्यासे तद्विपरीतधर्माज्ञानहेतुत्वस्य च कल्पन एकस्य शुद्धब्रह्माज्ञानस्य प्रपञ्चे सकलब्रह्मधर्माध्यासं प्रत्येकहेतुत्वकल्पनापेक्षया गौरवात् । *तदुपादानेति* ॥ प्रपञ्चोपादानब्रह्माज्ञानादे-वेत्यर्थः । *एतेन*—प्रपञ्चरूपधर्म्युत्पादकत्वेनावश्यकक्लृप्तत्वं ब्रह्माज्ञानस्य—*सूचितम्* ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मस्वरूपधर्मस्य कथमध्यासः ? तत्राह—*संसृष्ट-रूपेणेति* ॥ अध्यस्यमानं यत्, तदीयसंसर्गविशिष्टत्वेनोक्तप्रतियोगित्वरूपं यद् मिथ्याभूतं मिथ्यात्वम्, तत्प्रति-योगिकाभावत्वेन रूपेणेत्यर्थः । *मिथ्यात्वाज्ञानस्य=मिथ्यात्वानित्यत्वाद्यज्ञानस्य । हेतुत्वे कल्पने वान्वयः । *सत्यत्वोत्पत्तीति* ॥ सत्यत्व-नित्यत्वाद्युत्पत्तीत्यर्थः । *ननु* प्रपञ्चसत्यत्वे मिथ्यात्वप्रमोच्छेद्यत्वे प्रातिभासि-कत्वापत्तिः, अत आह—*एवं चेति* ॥ *यद्वा—ननु* एवं प्रपञ्चे मिथ्यात्वज्ञानस्य सत्यत्वोच्छेदकत्वं न स्यात्, सत्यत्वोपादानब्रह्मज्ञानस्यासमानविषयकत्वेनानुच्छेदकत्वादित्याशङ्कामिष्टापत्त्या परिहरति—*एवं चेति* ॥ प्रपञ्चे सत्यत्वादेः प्रपञ्चोपादानब्रह्माज्ञानोपादानकत्वे चेत्यर्थः । *ब्रह्मप्रमयेति* ॥ स्वसमानविषयकब्रह्माज्ञानजन्यत्वात् सत्यत्वादेरिति भावः । एवकारेण तदसमानविषयकमिथ्यात्वप्रमाप्रमाध्यवच्छेदः । तेन च प्रपञ्चसत्यत्वस्य प्रातीति-कत्वनिरासः । *तादृशसत्यत्वस्येति* ॥ ब्रह्माज्ञानजन्यसत्यत्वस्येत्यर्थः । *ननु*—प्रपञ्चे मिथ्यात्वप्रमायाः सत्यत्वाध्यासानिवर्तकत्वे, सत्यामपि मिथ्यात्वप्रमायां प्रपञ्चे सत्यत्वज्ञानसम्भवात् प्रपञ्चवैराग्यासम्भवः, अद्वैतसिद्ध्य-सम्भवश्च, एवं च मिथ्यात्वनिश्चयवैयर्थ्यात् श्रुत्यादौ महता प्रयासेन तदुपपादनं व्यर्थम्, इत्यत आह—*प्रपञ्चमिथ्यात्वप्रमया त्विति* । *तादृशेति* ॥ उक्तप्रमोत्तरोपस्थितायां सत्यत्वबुद्धौ प्रकारीभूतमिथ्यात्ववति धर्मिणि मिथ्यात्वाभावरूपसत्यत्वप्रकारकत्वरूपस्याप्रमात्वस्य धीः=निश्चयो जन्यते । मात्रपदेन सत्यत्व-तद्बुद्ध्योरनुच्छेदो बोध्यते । मिथ्यात्वाज्ञानोच्छेदस्तु जन्यत एवेति बोध्यम् । एवं चाप्रामाण्यज्ञानाना-स्कन्दितसत्यत्वज्ञानाभावाद् न प्रपञ्चे मिथ्यात्वनिश्चयवतां रागादिसम्भवः, न वाऽद्वैतसिद्धिप्रतिबन्धः, इत्यद्वैतसिद्धिसम्पत्त्या मूलाज्ञानस्यापि निवृत्त्या सकलधर्मविशिष्टप्रपञ्चनिवृत्तिसिद्ध्या मुक्तिसिद्धिरिति भावः । *ननु*—शुक्तिरूप्ये मिथ्यात्वज्ञानाज्ञानयोः सत्यत्व-तदुच्छेदजनकत्वस्य दृष्टस्य त्यागप्रसङ्ग इत्यत आह—*अत एव शुक्तिरूप्यादावपीति* ॥ *तथैवेति* ॥ शुक्त्यज्ञानमेव रजतोत्पादकं रजतसत्यत्वोत्पादकम्, ननु रजत-मिथ्यात्वाज्ञानम्, रजतमिथ्यात्वज्ञानं तु रजतसत्यत्वज्ञाने भ्रमत्वग्राहकम्, न तन्निवर्तकम्, निवर्तकं तु शुक्तिज्ञान-मित्येवेत्यर्थः । *स्वीक्रियत इति* ॥ अत एव उक्तरीत्या लाघवादेवेति हेतुरत्रान्वेति ॥ *ननु* प्रपञ्चे मिथ्यात्वादिज्ञाननिवर्त्यत्वेनानुभवसिद्धानि मिथ्यात्वाद्यज्ञानानि क्लृप्तान्येव, तेषां चाज्ञानत्वेन स्वसमानधर्मिक-स्वप्रकारकविपरीतप्रकारकाध्यास एकहेतुत्वमेव मयाऽपि स्वीक्रियते, इति क गौरवम् ? इत्याशङ्क्य, तत्पक्षे गौरवान्तर-माह—*किं चेति* ॥ *यत्र=आकाशादौ । *सत्यत्वस्येति* ॥ *ननु* एतत्पक्षेऽपि ब्रह्मनिष्ठसत्यत्वस्य संसर्ग एव

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्वीकार्या ; शुक्तित्वाज्ञानाधीनैव शुक्तित्वाभाव-तत्संसर्गोत्पत्तिः । यत्र सत्यत्वारोपः, तज्जनकाज्ञानस्य तद्धेतुत्व-स्वीकारे तु पूर्वसिद्धस्याधिष्ठानगतस्य सत्यत्वस्य संसर्गमात्रोत्पत्तिस्तादृशाज्ञानाधीना स्वीकार्येति लाघवम् । तस्मात् शुक्तिरूप्यादिनिष्ठस्य सत्यत्वस्य ब्रह्मप्रमान्यबाध्यत्वात् प्रातीतिकत्वेऽपि प्रपञ्चनिष्ठस्य सत्यत्वस्य ब्रह्म-प्रमात्राबाध्यत्वाद् व्यावहारिकत्वमेव युक्तमित्याशङ्क्य, व्यावहारिकयोरेव सत्यत्व-मिथ्यात्वयोरविरोधं सदृष्टान्त-

### सिद्धिव्याख्या

कत्वपरत्वात् । नच द्वितीयपक्षे विषमसत्तयोस्तयोः प्रपञ्चे त्वयाऽप्यङ्गीकारादित्युक्तं युक्तम्; प्रपञ्चे काल्पनिकमिथ्यात्वस्य व्यावहारिकसत्यत्वस्य चास्माभिरप्यभ्युपगमात् । नच—अत्रैव 'सत्यत्व-मिथ्यात्वे प्रपञ्चसमसत्ताके' इत्युक्तत्वात् तद्विरोध इति—वाच्यम् ; तदुक्तः प्रपञ्चस्येव सत्यत्व-मिथ्यात्वयोरपि पारमार्थिकत्वं नेत्यभिप्रायकतयाऽविरोधात् । तथाच सति

### विट्ठलेशीयटिप्पणी

प्रपञ्चे मिथ्यात्वाज्ञानादुत्पद्यताम्, नतु सत्यत्वमपि, इत्यत आह—*शुक्तित्वाज्ञानाधीनैवेति* ॥ शुक्तावित्यादिः । शुक्तौ शुक्तित्वाभावस्योत्पत्त्यनङ्गीकारे शुक्तित्वाभावस्य रजतस्येव प्रत्यक्षत्वं न स्यात् । *किंचैवं* रजतस्यापि शुक्तौ संसर्ग एवाध्यस्यताम्, न तु स्वरूपेण रजतमपि, इति संसर्गातिरिक्तप्रपञ्चस्यानध्यस्ततया ब्रह्मवत् सत्यत्वापत्तिः । नच—बाधाद् न सत्यतेति—वाच्यम् ; बाधस्यापि संसर्गविषयकत्वसम्भवात् । एतेन प्रत्यक्षविरोधोऽप्यपास्तः । तस्मात् सकलप्रपञ्चमिथ्यात्वसिद्धान्ते 'रजतं पश्यामी'त्यनुभवाद् 'नेदं रजत'मिति बाधसंरक्षणार्थं तदुत्पादकाज्ञानं तत्र स्वविषयीभूताधिष्ठानस्य तन्निष्ठधर्मस्य च संसर्गोत्पादकम्, तादृशाधिष्ठाने च तत्पूर्वसिद्धस्य तदधिकसत्ताकस्य तद्धर्मस्य संसर्गोत्पादकं यथा, तथा मूलाज्ञानं स्वविषयीभूते ब्रह्मणि प्रपञ्चं देहेन्द्रियादिरूपं तादात्म्येन तद्धर्मगौर-त्वान्धत्वादिसंसर्गं च युगपदुत्पादयद् देहेन्द्रियादिप्रपञ्चे ब्रह्मणस्तादात्म्यं ब्रह्मधर्मनित्यत्व-सत्यत्वादिसंसर्गं चोत्पाद-यति । प्रपञ्चस्यान्यत्राप्रसिद्धस्योत्पत्तिरावश्यिका, इतरेषां तु प्रसिद्धत्वात् संसर्गोत्पत्तिरेव । प्रपञ्चे मिथ्यात्वा-नित्यत्वाद्यज्ञानं तु न प्रपञ्चोत्पादकम्, न वा ब्रह्मविषयकम् ; अतो न ब्रह्मधर्मनित्यत्व-सत्यत्वादिसंसर्गं जनयितुमीष्टे । अतः स्वधर्मिणि स्वप्रकारविपरीतधर्मरूपसत्यत्वनित्यत्वादीनपूर्वानेव जनयति । अत एव शुक्तौ शुक्त्यज्ञानजन्यानां शुक्तित्वाभावादीनां प्रत्यक्षत्वम्, शुक्तौ शुक्त्यज्ञानस्य रज्जुसर्पानुत्पादकत्वाद् न तद्धर्मभय-जनकत्वसंसर्गाध्यासः, रजतजनकशुक्त्यज्ञाने रज्जोरविषयत्वाद् न शुक्तिरजते रज्जु-तद्धर्मवक्रत्वादिसंसर्गारोपः, न वा रज्जौ रजत-तद्धर्मसंसर्गयोरध्यासः, घटे मिथ्यात्वाज्ञानात् पटे सत्यत्वस्य घटे च नित्यत्वस्याध्यासापत्तिः, अतः *स्वधर्मिणि* इति, *स्वप्रकारविपरीतधर्मप्रकारेति चोक्तम्* ॥ यद्यपि ब्रह्माज्ञानेन प्रपञ्चे ब्रह्मधर्मसत्यत्वसंसर्गा-ध्यासे प्रपञ्चमिथ्यात्वाज्ञानेन प्रपञ्चेऽपूर्वसत्यत्व-तत्संसर्गयोरध्यासे वा प्रपञ्चे दार्ढ्याद् वैराग्यासंभवफले न विशेषः, तथापि दृष्टानुरोधित्वात् कल्पनाया उक्तनियमद्वयं स्वीकृत्य लाघवमुक्तम् । *ननु* शुक्त्यज्ञानेन स्वोत्पादितरजते स्वविषयशुक्तीदमंशनिष्ठस्य व्यावहारिकसत्यत्वस्य संसर्गोऽध्यस्यते, एवं च शुक्तिरजतस्यापि व्यावहारिकमेव सत्यत्वं स्यात् । यद्यध्यस्यमानसंसर्गस्य प्रातीतिकत्वात् संसृष्टरूपेण सत्यत्वस्यापि प्रातीतिकत्वमित्युच्यते, तदा शुक्त्य-ज्ञानजन्यरजताध्यस्तस्वविषयनिष्ठसत्यत्वसंसर्गवत् संसृष्टसत्यत्ववच्च ब्रह्माज्ञानजन्यप्रपञ्चाध्यस्तस्वविषयब्रह्मनिष्ठ-सत्यत्वसंसर्गस्य तत्संसृष्टसत्यत्वस्य च प्रातीतिकत्वानुमानमाशङ्क्य, ब्रह्मप्रमान्यप्रमाबाध्यत्वरूपोपाधिना निरसितुं प्रपञ्चसत्यत्वरूपपक्षे ब्रह्मप्रमामात्रबाध्यत्वादुपाध्यभावोक्त्योपाधेः साधनाव्यापकत्वं ध्वनयन् प्रपञ्चसत्यत्वस्य व्यावहारि-कत्वमुपसंहरति—*तस्मादिति* ॥ *ब्रह्मप्रमाबाध्यत्वात्=तन्मात्रबाध्यत्वात्* । *व्यावहारिकत्वमेव युक्तमिति* ॥ तथाच समसत्ताकभावाभावयोर्विरोधात् परस्पराभावरूपमिथ्यात्व-सत्यत्वयोर्व्यावहारिकयोरेकस्मिन् प्रपञ्चेऽवस्थाना-सम्भवेनोक्तरीत्या प्रपञ्चे सत्यत्वस्य व्यावहारिकत्वसिद्धौ तद्विरोधाद् मिथ्यात्वस्य व्यावहारिकत्वासम्भवाद् ब्रह्मान्य-त्वेनापारमार्थिकत्वात् प्रातिभासिकत्वापत्त्या प्रपञ्चसत्यत्वापत्त्याऽद्वैतहानिताद्वस्थ्यमिति शङ्काभिप्रायः । *ननु*

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

माह—*संयोगेत्यादि* ॥ यथा गोत्व-तदभावादिस्थले सामान्यतो दृष्टोऽपि विरोधः संयोग-तदभावादिस्थल एकावच्छेदेनैव स्वीक्रियते तार्किकादिभिः, तथा सत्यत्व-मिथ्यात्वयोः परस्परविरहादिरूपयोरविरोधोऽस्माभिः स्वीक्रियते ; प्रमाणस्य तेषामिवास्माकमपि सत्त्वात् । नचैवम्—'अभेदोपादाना भेदकल्पने'त्यादिरूपा भेदाभेदयोर्भिन्नसत्ताप्रतिपादनपरा भामती विरुद्धयेत, सामानाधिकरण्यप्रत्ययबलात् तयोः समानसत्ताकत्वस्यैव युक्तत्वादिति—वाच्यम् ; सम्भवप्राचुर्याद् भामत्यां तथोक्तत्वात् । समसत्ताकयोरपि भावाभावयोः स्वप्नवद्-

## विट्ठलेशीयटिप्पणी

संयोग-तदभावयोरेकस्मिन् वृक्षे 'मूले वृक्षः कपिसंयोगी, नाग्रे' इति प्रतीतिबलात् समुच्चयाभ्युपगमेऽपि प्रपञ्चे सत्यत्व-मिथ्यात्वयोः कथं समुच्चयाभ्युपगमः ? इत्याशङ्क्याह—*यथा गोत्व-तदभावादिस्थल इति* ॥ गोत्वाभावादौ गोत्वाद्यधिकरणवृत्तित्वाभावदर्शनेन निश्चीयमानोऽप्यभावत्वावच्छेदेन स्वप्रतियोग्यधिकरणवृत्तित्वाभावरूपो विरोधः, कृष्णसंयोगाभावे कृष्णसंयोगवद्वृत्तित्वग्रहविरोधेन व्याप्यवृत्तिगोत्वाभावत्वावच्छेदेनैवेति निश्चीयते, अव्याप्यवृत्तिकृष्णसंयोगाद्यभावत्वावच्छिन्ने स्वैकदेश-कालावच्छेदेन स्वप्रतियोगिमद्वृत्तित्वरूप एव स्वीक्रियत इति निश्चीयते, ननु स्वप्रतियोगिमद्वृत्तित्वसामान्याभावरूप इति यथेत्यर्थः । *अविरोधः=उक्तविरोधद्वयस्याप्यभावः ; एकदेश-कालावच्छेदेनैकधर्मिवृत्तित्वम् । *अस्माभिः=स्वनिष्ठसत्यत्व-मिथ्यात्वसहितप्रपञ्चमिथ्यात्ववादिभिः । तादृशविरोधमुपमृद्यैव दृश्यसामान्ये मिथ्यात्वस्य श्रुत्यनुमानाभ्यां साधनात् । *प्रमाणस्येति* ॥ सत्यत्व-मिथ्यात्वयोः प्रपञ्चनिष्ठ-परस्परात्मकस्वान्यूनसत्ताकाभावघटितमिथ्यात्वं गृह्णती श्रुत्यनुमाने एव ब्रह्मप्रमामात्रबाध्यत्वेन व्यावहारिकयोः सत्यत्व-मिथ्यात्वयोः प्रपञ्चसमुच्चयेन प्रमाणे इति भावः । अत्र वाचस्पत्यग्रन्थविरोधं शङ्कते—*नचैवमिति* ॥ *अभेदोपादाना भेदकल्पनेति* ॥ "तस्माद् भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति युक्तम् ; भिद्यमानतन्त्रत्वाद् भेदस्य, भिद्यमानानां च प्रत्येकमेकत्वात्, एकाभावे चानाश्रयस्य भेदस्यायोगात्, एकस्य च भेदानधीनत्वात्, 'नायमयमि'ति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्, एकत्वग्रहस्य चान्यानपेक्षत्वाद् अभेदोपादानैवानिर्वचनीयभेदकल्पनेति सांप्रतम् ; तथाच श्रुतिः "मृत्तिकेत्येव सत्यम्" इति हि पूर्वोत्तर-संदर्भः । *तदुपरि कल्पतरुः*—"विरोधादन्यतरबाधेऽप्यभेदो बाध्यः" इति सौगतमतमाशङ्क्याह—*अभेदोपादानेति* ॥ भेदः किं धर्मि-प्रतियोगिनोर्व्यासज्य वर्तते ? उत प्रतियोगिनमपेक्ष्य धर्मिण्येव ? *आद्ये* धर्मि-प्रतियोगिनोः प्रत्येकमेकत्वापेक्षेत्युक्तत्वात्, *द्वितीये* धर्म्यैक्यापेक्षेत्याह—*एकाभावे चेति* ॥ ततः स्वसत्तायामभेदापेक्षत्वाद् भेदस्य, स एवाभेदेऽध्यस्त इत्यर्थः । प्रतीतावपि भेदस्यैवाभेदापेक्षेत्याह—*नायमिति* ॥ "मृत्तिके"ति श्रुतिः कारणमेव सत्यमित्याह—*अतोऽत्यन्ताभेदपरेति* सहितस्तद्ग्रन्थः । तत्र *अभेदः=एकत्वम् । तस्य भेदनिरपेक्षतया पूर्वसिद्धस्योपादानम्=अधीनता=एकत्वेन ग्रहणम्=अपेक्षणं यस्यां भेदकल्पनायाम्, सा तथा । अभेदः सत्यत्वाद् भेदप्रयोजकत्वाच्चोपादेयः, भेदस्तु कल्पितत्वाद् अभेदप्रयोज्यत्वाच्च हेय इत्यर्थः । यथा 'नीलो घटः' इत्यत्रैकस्मिन्नेव घटे नीलत्व-घटत्वरूपोपाधिभेदाद् भेदः कल्प्यते । अतः सामानाधिकरण्यप्रत्ययः । 'घटो घटः' इति तु न प्रत्ययः ; उपाधिभेदस्याप्यभावेनोपधेये भेदस्याक्लृप्तेः, नैवं क्वचिद् भेदोपादानाऽभेदकल्पना, गवाश्वयोर्भेदे सत्यपि तत्र केनाप्युपाधिनाऽभेदस्य कल्पनाविरहात्, इति 'न गौरश्वः' इति सामानाधिकरण्यप्रत्ययः । यद्यपि भिन्नयोरपि वृक्षाद्योरभेदभ्रमो जायते, एवं सामानाधिकरण्यप्रत्ययोऽपि ; तथापि भेदेऽभेदस्यापेक्षारूपोपादानं नास्ति, अभेदज्ञानपूर्वकमेव सर्वत्र भेदज्ञानानभ्युपगमादित्यर्थः । *सामानाधिकरण्येति* ॥ 'नीलो घटः' इत्यादिप्रत्ययानां व्यावहारिकप्रमात्वानुरोधादित्यर्थः । *संभवप्राचुर्यादिति* ॥ प्रायो विषमसत्ताकयोरेव भावाभावयोः समुच्चयः, क्वचित्तु समसत्ताकयोरपीत्यर्थः । *स्वप्नवदिति* ॥ स्वाप्निकगज-तदभावयोरिवेत्यर्थः । *ननु* शुक्तिरूप्य-तदभावयोः शुक्तौ विषमसत्ताकत्वम्, सत्यत्व-मिथ्यात्वयोस्तु प्रपञ्चे समसत्ताकत्वम् ; तत् केन विशेषेण ?

अद्वैतसिद्धिः

समुच्चयाभ्युपगमाच्च । एकसाधकेनापरस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्य-

तरङ्गिणी

परस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम् ; यथा शुक्तिरूप्य-तदभावयोः । अस्ति च प्रपञ्च-तन्मिथ्यात्वयो-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विरोध इत्युक्तमेवेति भावः । *ननु* यत्र मिथ्यात्वावच्छेदकं नोभयवृत्ति, तत्राप्येकस्य मिथ्यात्वेऽपरस्याधिक-सत्तायां का युक्तिः ? तत्राह—*एकसाधकेनेत्यादि* ॥ *प्रयोजकम्=व्याप्यम् । ययोर्विरुद्धयोरेकस्य साधकं ज्ञानमपरस्य बाधकम्, तयोर्भिन्नसत्ताकत्वनियमः । यदि तयोर्भिन्नसत्ताकत्वं न स्यात्, तदा बाध्य-बाधकधी-विषयत्वं न स्यात् शुक्ति-रूप्ययोरिव, इति हेतूच्छित्तिप्रसङ्ग एव विपक्षे बाधकः ॥

न्यायामृतसौगन्ध्यम्

सत्यत्वापत्त्याऽर्थक्रियाकारित्वानुपपत्तेः । "तार्किके"त्याद्यशुद्धम् ; तद्वत् प्रकृतेऽवच्छेदकभेदासंभवात् । "अस्ति चे"त्याद्ययुक्तम् ; परस्परविरहरूपयोरसमसत्ताकयोरेकबाधकबाध्यत्वासंभवात् ॥

*यत्तु*—यथा गोत्व-तदभावादिस्थले सामान्यतो दृष्टोऽपि विरोधः संयोग-तदभावादिस्थले पृथगवच्छेदेनैव स्वीक्रियते तार्किकैः, तथा सत्यत्व-मिथ्यात्वयोः परस्परविरहादिरूपयोरविरोधोऽस्माभिः

विट्ठलेशीयटिप्पणी

इत्याशङ्कायाम्, शुक्तिरूप्य-तदभावयोः परस्परविरहरूपत्वेन शुक्तौ निषेध्यतावच्छेदकस्य रजतत्वस्य तदुभया-वृत्तित्वेन शुक्तौ रूप्याधिकसत्ताकत्वं तदभावस्य । प्रपञ्चसत्यत्व-मिथ्यात्वयोस्तु परस्परविरहरूपत्वाभावेन निषेध्यतावच्छेदकदृश्यत्वादेस्तदुभयवृत्तित्वेन तयोः समसत्ताकत्वं व्यावहारिकत्वेनेति विशेषस्य प्रदर्शितत्वात् । *एकसाधकेनेति* पङ्क्त्या विषमसत्ताकत्वप्रयोजकान्तरकथनं व्यर्थमित्याशङ्क्याप्रयोजकत्वशङ्कया तां पङ्क्ति-मवतारयति—*नन्विति* ॥ *यत्र=शुक्तौ प्रसक्तयो रूप्य-तदभावयोः, *मिथ्यात्वावच्छेदकम्=शुक्त्यादिनिष्ठाभाव-प्रतियोगितावच्छेदकं रजतत्वम्, रजताभावत्वं वा, *नोभयवृत्ति=न रजत-तदभावोभयवृत्ति, *एकस्य=रजतस्य, *मिथ्यात्वे, अपरस्य=रजताभावस्याधिकसत्तायाम्=रजतीयप्रातिभासिकसत्ताधिकव्यावहारिकसत्तायाम्, *का युक्तिः= अनुपगतायां को दोष इत्यर्थः । अत्रावतरणेऽधिकसत्तायामित्युक्त्या, अवतार्यमूलस्य 'विषमसत्ताकत्वे' इत्यस्य एकस्यापरापेक्षयाऽधिकसत्ताकत्व इत्यर्थ इति सूचितम् । *मूले* 'एकसाधकेने'त्यस्य एकस्मिन् धर्मिणीत्यादिः । बाध्यत्वाभावरूपसत्ताया नित्यत्वात् तत्प्रयोजकत्वोक्तेरसङ्गतिः, अतो व्याचष्टे—*प्रयोजकं व्याप्यमिति* ॥ अविरुद्धयोर्द्वयोरेकसाधकं नापरस्य बाधकम् । एवं शुक्तिरूप्य-तदभावयोरेकसाधकेनापरस्य बाध्यत्वं रज्जुसर्प-तदभावयोर्विषमसत्ताकत्वे न प्रयोजकम्, अतो व्याचष्टे—*ययोर्विरुद्धयोरिति* ॥ *एकस्य=यस्य यस्मिन् धर्मिणि । *साधकम्=ग्राहकमानम् । *अपरस्य=यस्य *बाधकम्=स्वप्रयोजकाज्ञाननिवृत्तिसहितनिवृत्तिप्रयोजकं यस्मिन् धर्मिणि, *तयोर्भिन्नसत्ताकत्वनियमः=तस्य तत्सत्ताधिकसत्ताकत्वनियमः । प्रथमयत्तदो रजत-तदभावावर्थः । तद्ग्राहकप्रमाणम्='नेदं रजत'मिति ज्ञानम्, तज्जनकम्—'इयं शुक्ति'रिति ज्ञानं च । द्वितीययत्तदोरर्थः शुक्तिः शुक्तिज्ञानं रजतस्योपादानाज्ञाननिवृत्तिसहितनिवृत्तिप्रयोजकम्, रजताभावः शुक्तिश्च रजतसत्ताधिकसत्ताकः, इति नियम-सङ्गतिः । अवतरणोक्ताप्रयोजकत्वशङ्कावारणायानुकूलतर्कमाह—*यदीति*॥ *तयोर्भिन्नसत्ताकत्वम्=रजताभावस्य शुक्तौ रजतसत्ताधिकसत्ताकत्वम्, *न स्यात्=तदा शुक्तौ *बाध्य-बाधकधीविषयत्वम्=रजतबाधकधीविषयत्वम्, रजतबाधक-धीजन्यधीविषयत्वं वा न स्यादित्यर्थः । अत्र यस्य यद्धर्मिणि यत्सत्ताधिकसत्ताकत्वाभावः, तस्य तद्धर्मिणि तद्बाधकधीविषयत्वाभाव इति व्याप्तिस्पष्टीभिका, तद्ग्राहकं दृष्टान्तमाह—*शुक्तिरूप्ययोरिवेति* ॥ क्रमिकभ्रम-विषययोरित्यादिः । द्वितीये स्वप्रथमसत्ताधिकसत्ताविरहवति प्रथमबाधकधीविषयत्वाभाव इवेत्यर्थः । *हेतूच्छित्ति-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अथवा*—*ननु*—मिथ्यात्वावच्छेदकस्योभयावृत्तित्वेऽप्येकमिथ्यात्वेऽपरस्याधिकसत्ता माऽस्तु ; विरुद्धयोरेकत्र प्रसक्तयोरुभयावृत्तिरूपेणैकस्य मिथ्यात्वेऽपरस्याधिकसत्तेति नियमाभावात्, गजे प्रसक्तयोर्गोत्वाश्वत्वयोः— 'अत्र गोत्वं नास्ति' 'अत्राश्वत्वं नास्ती'ति प्रत्येकरूपेण निषेधेऽपि समसत्ताकत्वात्, तत्राह—*एकसाधकेनेति*॥ तथाचोक्तनियमाभावेऽपि यद् यद्बाधकधीविषयः, तत् तदधिकसत्ताकमिति नियमोऽस्त्येव। एकसाधकेनापरस्य बाध्यत्वमुभयावृत्तिरूपेणैवेत्यभिप्रायेण 'उभयवृत्ति न भवेदि'त्यादिकं पूर्वमुक्तमिति भावः। प्रपञ्चगतयोः सत्यत्वमिथ्यात्वयोः समसत्ताकत्वे संयोग-तदभावदृष्टान्तेन सम्भावनामात्रमुक्तम्, तन्नेदानीं प्रमाणमाह—*एक-

### सिद्धिव्याख्या

अप्रातिभासिकत्वेनाङ्गीकृतस्य प्रपञ्चस्य व्यावहारिकमिथ्यात्वयुक्तस्य तार्किकमतसिद्धसंयोग-तदभावदृष्टान्तेन समुच्चये

### विट्ठलेशीयटिप्पणी

प्रसङ्गः=शुक्तिनिष्ठे रजताभावरूपपक्षे शुक्तौ रजतबाधकधीविषयत्वरूपहेत्वभावापत्तिरूपस्तर्को विपक्षे शुक्तौ रजतसत्ताधिकसत्ताकत्वरूपसाध्याभावोपगमे बाधकः सन् स्वसहकृतोक्तहेतुकानुमानेनोक्तपक्ष उक्तसाध्यसाधक इत्यर्थः। *ननु* मिथ्यात्वावच्छेदकस्योभयावृत्तित्वेऽप्येकमिथ्यात्वेऽपरस्याधिकसत्तायां का युक्तिरित्यवतारिका न युक्ता ; विरुद्धयोरेकत्र प्रसक्तावुभयावृत्तिरूपेणैकमिथ्यात्वेऽपरस्याधिकसत्तेति नियमस्यैव तत्र युक्तत्वात्, इत्याशङ्क्य, व्यभिचारेणोक्तनियमखण्डनेनावतारिकान्तरमाह—*अथवेति* ॥ *मिथ्यात्वावच्छेदकस्य=शुक्तिनिष्ठाभावप्रतियोगितावच्छेदकस्य रजतत्वस्य। *उभयावृत्तित्वेऽपि=रजत-तदभावोभयावृत्तित्वेऽपि। *एकस्य=रजतस्य। *मिथ्यात्वेऽपरस्य=रजताभावस्य। *अधिकसत्ता=रजतीयप्रातिभासिकसत्तापेक्षयाऽधिका व्यावहारिकी सत्ता॥ *माऽस्तु=न स्वीक्रियते। *ननु* तथा नियमात् सा स्वीकार्या, इत्याशङ्क्य नेत्याह*—*विरुद्धयोरिति* ॥ नियमाभावे व्यभिचारं हेतुमाह—*गजे प्रसक्तयोरिति* ॥ *समसत्ताकत्वादिति* ॥ प्रातिभासिकत्वेनेत्यादिः। तथाच गजे गोत्वाश्वत्वयोः प्रत्येकरूपेण निषेधेऽपि परस्पराधिकसत्ताविरहाद् व्यभिचार इति भावः। अयं ग्रन्थो न पूर्वोक्तशङ्काग्रन्थस्य पूर्वोक्तविशेषणोपादानेनोक्तव्यभिचारमुद्धृत्योक्तनियमपरत्वं व्यवस्थापयति, किंतु नियमान्तरपरत्वमित्याह—*तथाचेति* ॥ *यदिति* ॥ तथाच शुक्तौ रजताभावो रजतबाधकधीविषयो रजतसत्ताधिकसत्ताधिकश्च भवति, गोत्वाश्वत्वे तु गजे न परस्परबाधकधीविषयौ, इति तयोस्तत्र समसत्ताकत्वेऽपि न व्यभिचार इति भावः। एवं चेद् व्याप्तिः पूर्वशङ्काग्रन्थेऽभिप्रेता, तर्हि तन्निराकरणग्रन्थे मिथ्यात्वावच्छेदकस्योभयावृत्तित्वं किमर्थमुच्यते ? तत्राह—*एकसाधकेनेति* ॥ तदेव तद्धर्मिणि तत्साधकधीबाध्यम्, यत् तद्धर्मिणि तदवृत्तिरूपेणैव निषिध्यते, नतूभयसाधारणरूपेणैव ; यथा रजतं शुक्तौ रजताभावव्यावृत्तरूपेणैव निषिध्यते, गोत्वाश्वत्वे तु गज उभयसाधारणेन गजत्वाभावव्याप्यत्वेनापि निषिध्येते, अतो न परस्परबाधकधीविषयौ, इति न व्यभिचारः। एवं च प्रपञ्चे मिथ्यात्वं सत्यत्वसाधारणेन दृश्यत्वेनापि निषिध्यते ; अतः सत्यत्वज्ञानबाध्यं न, इति सत्यत्वस्य मिथ्यात्वबाधकधीविषयत्वरूपापादकाभावाद् न मिथ्यात्वसत्ताधिकसत्ताकत्वापत्तिरिति *'उभयवृत्ति न भवेदिति'* ग्रन्थाभिप्राय इत्यर्थः। अनेनानुकूलतर्कोऽपि सूचितः। शुक्तौ रजतस्य सत्ता प्रातिभासिकी व्यवहारकालबाध्यत्वरूपा, रजताभावस्य तदधिकसत्ता व्यवहारकालाबाध्यत्वम्, सा यदि रजताभावे न स्वीक्रियते, सोऽपि यदि व्यवहारकालबाध्य एव, कथं तर्हि रजतबाधकधीविषयः स्यात् ? यः स्वयमपि बाध्यसमकालमेव बाध्यम्, कथं तद् बाधकं स्यात् ? गजे गोत्वाश्वत्वयोर्युगपद् बाध्ययोरिवेति ध्येयम्। नच— प्रात्यक्षिकप्रपञ्चसत्यत्वस्य 'नेह नाने'त्यादिवाक्यजन्यप्रपञ्चमिथ्यात्वशाब्दबुद्ध्या बाध्यत्वाद् मिथ्यात्वस्य सत्यत्वव्यावहारिकत्वाधिकतात्त्विकत्वापत्तिरिति—वाच्यम् ; श्रौतमिथ्यात्वशाब्दबुद्धेः सत्यत्वप्रतीतौ भ्रमत्वग्राहकत्वेऽपि सत्यत्वाबाधकत्वात्, ब्रह्मप्रमाया एव तद्बाधकत्वादिति भावः। प्रपञ्चे सत्यत्व-मिथ्यात्वयोर्व्यावहारिकयोः समुच्चयस्य संयोग-तदभावदृष्टान्तेन व्यवस्थापितत्वात् तयोः समसत्ताकत्व एकबाधकबाध्यत्वस्य प्रयोजकत्वकथनं व्यर्थमित्याशङ्क्य तत् सार्थकयति—*प्रपञ्चगतयोरिति* ॥ एकत्वस्य केवलान्वयितयैकबाधकबाध्यत्वं शुक्तिरजत-

### तरङ्गिणी

रेकब्रह्मज्ञानबाध्यत्वम् ; अतस्समसत्ताकत्वाद् मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधाद् नाद्वैतहानिः—इति,

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

बाधकेति* ॥ 'यद् यद्बाधकबाध्यम्, तत् तत्समानसत्ताकमि'ति व्याप्तौ यद्युक्तसाध्यं न स्यात्, तदोक्तहेतुर्न स्यात्, शुक्तिरूप्य-घटयोरिव । पौर्वापर्येण बाधसम्भवाद् ब्रह्मज्ञानबाध्यं शुक्तिरूप्यादिकं व्यावहारिकेण स्वाभावादिना समसत्ताकमेव ; ब्रह्मप्रमाबाध्यत्वस्य व्यावहारिकत्वस्योभयत्रापि सत्त्वात् । *प्रपञ्चेति* ॥ स्वसत्यत्वादिघटितप्रपञ्चेत्यर्थः । *अथवा*—एकत्र प्रसक्तयोर्विरुद्धयोरेकस्यापरापेक्षयाऽन्यूनसत्ताकत्वं प्रत्यमिथ्यात्वं न प्रयोजकम्, किन्तु स्वाश्रयसमसत्ताकत्वम् ; अतो मिथ्याभूतमपि प्रपञ्चे मिथ्यात्वं प्रपञ्चगतसत्यत्वान्यून-

### विट्ठलेशीयटिप्पणी

घटयोरस्ति, समसत्ताकत्वं च नास्ति, इति व्यभिचारः, अप्रयोजकत्वं च, इत्यत आह—*यदिति* ॥ यथा शुक्तिरूप्यबाधकशुक्तित्वसाक्षात्कारबाध्यस्य शुक्तिभिन्नत्वस्य प्रातिभासिकत्वेन शुक्तिरूप्यसमसत्ताकत्वम् । घटस्य ब्रह्मप्रमाबाध्यस्य शुक्तिरूप्यबाधकशुक्तितत्त्वज्ञानाबाध्यत्वात् तत्समसत्ताकत्वाभावेऽपि न व्यभिचारः । तद्व्याख्यानानुकूलं तर्कमाह—*यदीति* ॥ शुक्तिभिन्नत्व इति शेषः । घट इव *उक्तसाध्यम्=शुक्तिरूप्यसमसत्ताकत्वम् *न स्यात्*, तर्हि *उक्तहेतुः=शुक्तिरूप्यबाधकशुक्तित्वप्रमाबाध्यत्वं न स्यात् । *शुक्तिरूप्यघटयोरिवेति* ॥ इति तर्कोऽनुग्राहक इति शेषः । *ननु* ब्रह्मज्ञानपूर्वभाविशुक्तिरूप्यस्य तदभावबाधकब्रह्मप्रमाबाध्यत्वात् मूलाज्ञानजन्यत्वेन प्रातिभासिकस्य व्यावहारिकतदभावसमसत्ताकत्वाद् व्यभिचारः, इत्याशङ्कां परिहरति—*ब्रह्मज्ञानबाध्यमिति* ॥ शुक्तिरूप्याभावबाधकेत्यादिः । *ब्रह्मप्रमाबाध्यत्वस्य व्यावहारिकत्वस्येति* ॥ मूलाज्ञानजन्यत्वं न प्रातिभासिकत्वम्, किंतु ब्रह्मप्रमान्यप्रमाबाध्यत्वमेवेति भावः । प्रकृतमाह मूले—अस्ति चेति* ॥ *ननु—प्रपञ्चसत्यत्वे तन्मिथ्यात्वसमसत्ताकत्वसाधनाय तद्बाधकब्रह्मज्ञानबाध्यत्वं वक्तव्यम्, प्रपञ्चे तदुक्तिर्व्यर्था, इत्यतो व्याचष्टे टीकायाम्—*सत्यत्वादिघटितप्रपञ्चेत्यर्थ इति*॥ अद्वैतहानिपरिहारमुपसंहरति—मूले—*मिथ्यात्वबाधकेनेति* ॥ *प्रपञ्चस्यापीति* ॥ अपिना तत्सत्यत्वस्येति बोध्यम् । *ननु*—प्रपञ्चे व्यावहारिकयोः सत्यत्वमिथ्यात्वयोः समुच्चयः संयोग-तदभावदृष्टान्तेनोक्तः, तावता दृष्टान्तवद् दार्ष्टान्तिकस्यापि प्रमाणसिद्धत्वलाभ इति टीकायां तद्व्याख्यान उक्तम् । स्पष्टीकृतं चात्र पूर्वम् । एवं च 'एकबाधकेने'त्यादिना तत्र प्रमाणकथनं व्यर्थम्, मौलप्रपञ्चपदस्य च तत्सत्यत्वपरत्वे जघन्यता, इत्यतः प्रकारान्तरेणैतत्पूर्वपक्षसमाधानपरतयोक्तपङ्क्तिमवतारयति—*अथवेति* ॥ एकत्रेति* ॥ पूर्वमेकत्र प्रसक्तयोर्विरुद्धयोरेकमिथ्यात्वेऽपरस्याधिकसत्ताकत्वं मूल एतत्प्रघट्टकादौ शङ्काबीजतयोक्तम्, तावता तादृशयोरेकस्यापरापेक्षया न्यूनसत्ताकत्वे मिथ्यात्वम्, अन्यूनसत्ताकत्वे चामिथ्यात्वं प्रयोजकम्, तथा सति प्रपञ्चमिथ्यात्वेऽमिथ्यात्वरूपव्यापकव्यतिरेकात् सत्यत्वान्यूनसत्ताकत्वरूपव्याप्यव्यतिरेकः स्यादिति लब्धम् । अत्र प्रयोजकं व्याप्यमिति नार्थः ; तथा सति, अमिथ्यात्वरूपव्याप्यव्यतिरेकस्यान्यूनसत्ताकत्वरूपव्यापकव्यतिरेकाप्रयोजकतया मिथ्याभूतमपीत्यस्यासङ्गतेः, किंतु व्यापकमित्यर्थः । एवं च व्यापकव्यतिरेकस्य व्याप्यव्यतिरेकप्रयोजकत्वात् तत्सङ्गतिः । तत्तु नेत्यर्थः ; स्वाप्नगज-तदभावयोर्मिथ्यात्वेऽपि परस्परान्यूनसत्ताकत्वादिति भावः । *स्वाश्रयेति* ॥ स्वम्=तादृशयोरेकः । स्वाप्नगज-तदभावयोः स्वाश्रयस्वाप्नभूतलादिसमसत्ताकत्वाद् अन्यूनसत्ताकत्वम् ; यथा वा शुक्तौ रजताभावस्य स्वाश्रयशुक्तेः समसत्ताकत्वाद् रजतान्यूनसत्ताकत्वम्, रजतस्य स्वसमसत्ताकत्वाद् न रजताभावन्यूनसत्ताकत्वम् । नच—पारमार्थिके शुद्धब्रह्मणि प्रपञ्च-तदभावयोः कथं व्यावहारिकत्वमिति—वाच्यम् ; मायोपहितस्य व्यावहारिकस्य ब्रह्मण एव प्रपञ्च-तदभावाधिष्ठानत्वात् । *अतः*=अमिथ्यात्वस्योक्तप्रयोजकत्वासंभवेन प्रयोजकान्तरोपगमात् । *मिथ्याभूतमपीति* ॥ एवं च मिथ्यात्वेऽमिथ्यात्वानुपगमाद् नाद्वैतहानिः ; नापि सत्यत्वान्यूनसत्ताकत्वरूपव्याप्यव्यतिरेकप्रयोजकत्वममिथ्यात्वव्यतिरेकस्येति भावः । ब्रह्मगतत्वधारणाय—*प्रपञ्चगते*-

अद्वैतसिद्धिः

तदभावयोः । एकबाधकबाध्यत्वं च समसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्य-शुक्तिभिन्नत्वयोः । अस्ति च प्रपञ्च-तन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वम् । अतः समसत्ताकत्वाद् मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधाद् नाद्वैतक्षतिः, इति कृतमधिकेन ॥

---

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्ताकम्; प्रपञ्चसमसत्ताकत्वात्, तदपि प्रपञ्चबाधकबाध्यत्वाद् नासिद्धमित्याशयेनाह—*एकबाधकेति* ॥

न्यायामृतसौगन्ध्यम्

स्वीक्रियते; प्रमाणस्य तेषामिवास्माकमपि सत्त्वाद्, इति—*तन्न*; अव्याप्यवृत्त्यभाव-प्रतियोगिनोरवच्छेदकभेदेनैकत्राविरोधेऽपि व्याप्यवृत्त्योस्तदसंभवात् ॥

सिद्धिव्याख्या

विरोधाभावाद् व्यावहारिकत्वमेव, इति न कोऽपि दोष इति भावः । *एकबाधकबाध्यत्वं चेति* ॥ नच—शुक्तिरूप्य-शुक्तिभिन्नत्वयोः परस्परविरहरूपत्वाभावादेकबाधकबाध्यत्वसंभवेऽपि प्रपञ्चगतसत्यत्व-मिथ्यात्वयोरेकबाधकबाध्यत्वं न सम्भवतीति—वाच्यम्; परस्परविरहरूपत्वाभावपक्षे तत्सम्भवादिति भावः । *नन्वेवमपि* कुतः प्रपञ्चस्य सत्यत्वक्षतिः? मिथ्याभूतं ब्रह्मणः सप्रपञ्चत्वं निष्प्रपञ्चत्वाविरोधि, इति त्वदुक्तरीत्या मिथ्याभूतमिथ्यात्वस्यापि सत्त्वाविरोधित्वस्य वक्तुं शक्यत्वादित्याशङ्क्याह—*कृतमधिकेनेति* । *अयं भावः* ॥ वियदादिप्रपञ्चसमानस्वभावं मिथ्यात्वम्, तच्च धर्मिणः सत्यत्वप्रतिक्षेपकम्; धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे चोभयसिद्धधर्मिसमसत्ताकत्वं तन्त्रम्, न पारमार्थिकत्वम्; प्रतिक्षेपके तदघटितत्वात्, इति घटत्वादावस्माकं पारमार्थिकत्वासम्प्रतिपत्तेर्ब्रह्मणः सप्रपञ्चत्वं न धर्मिसमसत्ताकम्, इति न निष्प्रपञ्चत्वप्रतिक्षेपकम् । *अत एव*—मिथ्यात्वस्य व्यावहारिकत्वे तद्विरोधिनोऽप्रातिभासिकस्य प्रपञ्चसत्यत्वस्य पारमार्थिकत्वं स्यादिति—*निरस्तम्*; धर्मिसमसत्ताकस्य मिथ्यात्वस्य व्यावहारिकत्वे धर्मिणोऽपि व्यावहारिकत्वनियमादिति ॥

---

विट्ठलेशीयटिप्पणी

त्युक्तम् । *प्रपञ्चेति* ॥ स्वाश्रयप्रपञ्चसमसत्ताकत्वादित्यर्थः । एवं च स्वाश्रये प्रसज्यमानस्वविरुद्धसत्यत्वान्यूनसत्ताकत्वव्यापकस्य स्वाश्रयसमसत्ताकत्वस्य सत्त्वेन तद्व्यतिरेकाभावात् न सत्यत्वान्यूनसत्ताकत्वव्यतिरेकः, किंतु सत्यत्वान्यूनसत्ताकत्वमेव; बाधकाभावात् । *यद्वा*—'प्रयोजकमि'त्यस्य समव्यापकमित्यर्थः । एवं चोक्तव्याप्यसत्त्वादप्युक्तव्यापकसत्ताऽऽवश्यिकेति भावः । *ननु*—प्रपञ्चमिथ्यात्वं कथं प्रपञ्चसमसत्ताकम्? मायोपहिते ब्रह्मणि सूक्ष्मभूतानाम्, तदुपहिते स्थूलानामिति रीत्या कपालाद्युपहिते घटस्य, तदुपहिते घटत्वस्येव, मायाद्युपाधौ सूक्ष्मभूतानामिव च सूक्ष्मभूतादिप्रपञ्चोपहिते तदुपाधिभूतभूतादिप्रपञ्चेऽपि मिथ्यात्वस्य कल्पितत्वे मायादीनां कल्पितत्वाविशेषेऽपि शुक्त्यपेक्षया तद्रजतस्येव प्रपञ्चापेक्षया तद्धर्मिमिथ्यात्वस्योत्तरकल्पितत्वेन न्यूनसत्ताकत्वात्, इत्यत आह—*तदपीति* ॥ प्रपञ्चमिथ्यात्वहेतुसंपादकप्रपञ्चसमसत्ताकत्वमपीत्यर्थः । *प्रपञ्चेति* ॥ प्रपञ्चबाधकब्रह्मप्रमाबाध्यत्वादित्यर्थः । यद् यद्बाधकप्रमाबाध्यम्, तत् तत्समसत्ताकम्; यथा शुक्तिभिन्नत्वं शुक्तिरूप्यबाधकशुक्तिप्रमाबाध्यं शुक्तिरूप्यसमसत्ताकं चेति व्याप्तेः । शुक्त्यपेक्षयोत्तरकल्पितत्वं न रजतस्य प्रातिभासिकत्वरूपन्यूनसत्ताकत्वे प्रयोजकम्, किन्तु ब्रह्मप्रमान्यज्ञानबाध्यत्वम्, तच्च न मिथ्यात्वेऽस्ति, तस्य ब्रह्मप्रमामात्रबाध्यत्वादिति भावः । तदाह *मूले—*अस्ति चेति* ॥ एतद्व्याख्याने प्रपञ्चपदे प्रपञ्चपरे, न तत्सत्यत्वपरे । *प्रपञ्च-तन्मिथ्यात्वयोरिति* ॥ मिथ्यात्वस्य स्वाश्रयप्रपञ्चबाधकब्रह्मप्रमाबाध्यत्वमित्यर्थः । एवं प्रपञ्चमिथ्यात्वस्य मिथ्यात्वेऽपि प्रपञ्चसत्यत्वान्यूनसत्ताकत्वसाधनेन प्रपञ्चसत्यत्वस्य तात्त्विकत्वापत्तिः परिहृता । यथाश्रुते प्रपञ्चसत्यत्वापत्तिरुक्ता, तामपि परिहरति—*मिथ्यात्वबाधकेनेति* ॥ *प्रपञ्चस्यापि बाधादिति* ॥ अबाध्यत्वरूपसत्यत्वासम्भवादिति भावः ॥

न्यायामृतम्

किंच प्रतिपन्नोपाधावनिषिद्धं प्रत्युत बाधकज्ञानेन विहितमपि रूप्यमिथ्यात्वं यदि प्रातिभासिकरूप्यसम्बन्धमात्रेण प्रातिभासिकम्, तर्हि सति ब्रह्मणि निषिद्धा अपि धर्मास्सन्तः स्युः, रूप्याधिष्ठानशुक्तिरपि प्रातिभासिकी स्यात्, रूप्ये प्रपञ्चे च सद्वैलक्षण्यं च सत् स्यात्, असद्वैलक्षण्यं चासत् स्यात्, असति च सद्वैलक्षण्यमसत् स्यात्, रूप्य-तन्मिथ्यात्वयोर्मिथ्यात्वे भ्रान्ति-बाधव्यवस्था च न स्यात्, त्वदुक्तेन धर्मिणो मिथ्यात्वेन हेतुना साध्यस्य मिथ्यात्वमिथ्यात्वस्यापि प्रातिभासिकत्वापत्त्या हेतोरत्यन्ताप्रामाण्यं च स्यात्,

तरङ्गिणी

*अत्रोच्यते* ; न तावत् परस्परविरहरूपयोरेकनिषेध्यतावच्छेदकावच्छिन्नत्वं सम्भवति ; क्वाप्यदर्शनात् । गोत्वाश्वत्वादौ तु न परस्परविरहरूपत्वम् ; अतो नोक्तदोषः । यथाच सत्यत्व-मिथ्यात्वयोः परस्परविरहरूपत्वम्, तथोपपादितमधस्तात्, उपपादयिष्यते च । यदपि च विषमसत्ताकयोरविरोध इत्युक्तम्, तदपि न ; विषमसत्ताके सत्यत्व-मिथ्यात्वे किं रूप्येऽङ्गीक्रियेते ? किं वा जगति ? नाद्यः ; त्वया 'रूप्यमिथ्यात्वं तात्त्विकमि'त्यग्र उक्तत्वेन तद्विरोधात्, रूप्ये मिथ्यात्वस्य व्यावहारिकत्वे बाध्यत्वापत्त्या रूप्ये सत्यत्वस्य तात्त्विकत्वापत्तेः, नान्त्यः ; विषमसत्ताकयोस्तयोः प्रपञ्चे त्वयाऽनङ्गीकारात्, अत्रैव 'सत्यत्व-मिथ्यात्वे प्रपञ्चे समसत्ताके' इत्युक्तत्वाच्च, तथा सति अप्रातिभासिकत्वेनाङ्गीकृतस्य प्रपञ्चस्य व्यावहारिकमिथ्यात्वयुक्तस्य तात्त्विकत्वापत्तेर्दुर्वारत्वाच्च । सत्यत्व-मिथ्यात्वयोस्समुच्चयस्त्वत्यन्तायुक्तः ; त्वयाऽपि सत्यत्व-मिथ्यात्वयोः परस्परसमुच्चये विरोधाद् बिभ्यता सदसद्वैलक्षण्यस्य रूप्येऽङ्गीकाराच्च । यच्चोक्तम्—एकबाधकेनापरबाध्यत्वमित्यादि, तदपि न ; परस्परविरहरूपयोरेकबाधकबाध्यत्वस्यासिद्धेः, शुक्तिरूप्य-शुक्तिभिन्नत्वयोः परस्परविरहरूपत्वाभावात् । यच्चोक्तम्—प्रपञ्चगतसत्यत्व-मिथ्यात्वयोः समसत्ताकत्वमिति, तदपि न ; निरसिष्यमाणत्वात्, विरुद्धयोर्द्वयोरेकाधिकरणे समुच्चयासिद्धेः, अन्यथा वह्नावपि व्यावहारिकानौष्ण्य-तदभावौ स्याताम्, इति कालात्ययापदिष्टमात्रोच्छेदः स्यात्, त्वयैव व्यावहारिकौष्ण्याभावविषयत्वेन बाधव्यवस्थोक्तेश्च, इति पूर्वापरविरोधपरिहारं भवानेव पृष्टो व्याचष्टाम् । तस्मात् साधूक्तम्—जगच्च सत्यं स्यादात्मवदिति ॥ *सन्तः स्युरिति* ॥ सद्ब्रह्मसंबन्धादित्यर्थः ॥ *रूप्याधिष्ठानेति* ॥ प्रातिभासिकरूप्यसम्बन्धादित्यर्थः ॥ *रूप्य इति* ॥ सत्सम्बन्धादित्यर्थः ॥ *असद्वैलक्षण्यं चेति* ॥ रूप्ये प्रपञ्चे चेत्यनुषङ्गः । ब्रह्मणीति शेषः ॥ *असत् स्यादिति* ॥ असत्सम्बन्धादित्यर्थः ॥ *असति चेति* ॥ अधिकरणत्वेनासता सम्बन्धादित्यर्थः ॥ *भ्रान्तीति* ॥ अनिर्वचनीयरजतवादे रजतज्ञानस्य समानाधिकरणप्रकारकतया भ्रान्तित्वासिद्ध्यापत्त्या मिथ्याभूतार्थविषयकतया भ्रान्तित्वम्, अमिथ्याविषयकतया च बाधकत्वं वक्तव्यम् ; उभयोरपि मिथ्याविषयकत्वे भ्रान्तिबाधव्यवस्था न स्यादित्यर्थः ॥ *मिथ्यात्वेनेति* ॥ मिथ्यात्वोपेतधर्मिकत्वेनेत्यर्थः ॥ *प्रातिभासिकत्वापत्त्येति* ॥ प्रातिभासिकरूप्यसम्बन्धादित्यर्थः ॥ *अप्रामाण्यं चेति* ॥ प्रातिभासिकविषयतया रूप्यज्ञानवद् व्यवहार-

न्यायामृतकण्टकोद्धारः

प्रातिभासिकरूप्यसम्बन्धात् तन्मिथ्यात्वमपि प्रातिभासिकमित्यत आह—*किञ्चेति* ॥ अत्र किमाधारस्य यादृशसत्यत्वम्, तादृशमाधेयस्येति नियमः ? अथवा यः सम्बन्धो यादृशसत्त्ववान्, स तत्सम्बन्ध्यारोपिततादृशसत्त्ववानिति नियमः ? उभयथाऽप्यतिप्रसङ्ग इत्याह--*तर्हि सति ब्रह्मणीत्यादिना*॥ *भ्रान्ति-बाधेति* ॥ उभयोरप्यसदर्थविषयकत्वादिति भावः ॥ नच—यत्र वल्मीके स्थाणुत्वभ्रम एव पुरुषत्वभ्रमो निवर्तते, तत्रोभयोरसदर्थविषयकत्वाविशेषेऽपि भ्रम-बाधकत्वव्यवस्थोपपत्तिवत् प्रकृतेऽप्युपपत्तिरिति—वाच्यम् ; अत्र भ्रान्ति-बाधशब्दाभ्यामन्यथाज्ञानस्य, सम्यग्ज्ञानस्य च विवक्षितत्वात् । नचैवम्—तत्र बाधव्यवहारो न स्यादिति—वाच्यम् ; एकधर्मिकपूर्वज्ञानविषयीकृताकारादन्य-

न्यायामृतम्

हेतूकृतस्य धर्मिमिथ्यात्वस्य मिथ्यात्वे घटरूपादौ व्यभिचारापत्त्या सत्यत्वावश्यंभावाद् विरोधश्च स्यात् । नच—(१)त्वन्मते रूप्यादिकं वियदादिकं वा वन्ध्यासुतवद् निःस्वरूपम् ; शून्यवादापातात् ।

तरङ्गिणी

दशायामप्रामाण्यं स्यादित्यर्थः ॥ *हेतूकृतस्येति* ॥ रूप्यमिथ्यात्वे मिथ्यात्वसाधनायेति शेषः ॥ *धर्मिमिथ्यात्वस्येति* ॥ मिथ्यात्वोपेतधर्मिकत्वस्येत्यर्थः । अतो नापक्षधर्मत्वम् ॥ *मिथ्यात्वे* ॥ मिथ्याभूतेति-विशेषणयुक्तत्व इत्यर्थः । यथाश्रुते त्वसिद्धिरेव स्यात्, न व्यभिचार इति बोद्धव्यम् ॥ *घटरूपादाविति* ॥ घटरूपादेर्धर्मिणि घटादौ मिथ्यात्वस्याभावेन मिथ्याभूतमिथ्यात्वोपेतधर्मिकत्वस्य हेतोर्घटरूपादौ सत्त्वाद् मिथ्यात्वरूपसाध्यस्य चाभावाद् व्यभिचार इत्यर्थः ॥ *व्यभिचारापत्त्येति* ॥ रूप्यमिथ्यात्व-साधनदशायां घटरूपादेरमिथ्यात्वसंप्रतिपत्त्या व्यभिचार इत्यर्थः ॥ *सत्यत्वेति* ॥ 'सत्यभूते'ति-विशेषणस्यावश्यंभावादित्यर्थः । यथाश्रुते त्वसिद्धिरेव परिहृता स्यात्, न तु वक्ष्यमाणो विरोध इति ध्येयम् ॥ *विरोधश्चेति* ॥ रूप्यगतमिथ्यात्वे पक्षीकृते सत्यभूतमिथ्यात्वोपेतधर्मिकत्वं हेतुस्तदा वर्तेत, यदि मिथ्यात्व-धर्मिणि रूप्ये मिथ्यात्वं सत्यं स्यात् । एवं च पक्षे हेतु-सिद्ध्यर्थं सत्यत्वेनाङ्गीकृते रूप्यमिथ्यात्वे यदि मिथ्यात्वं साध्यते, तदा पक्षे न हेतुः स्यात् । तथाच हेतु-साध्ययोः पक्षे सहानवस्थानविरोध इत्यर्थः । रूप्ये प्रपञ्चे च सत्यत्व-मिथ्यात्वे उमे अपि न स्त इत्यत्र दूषणान्तरमाह—*नचेति* ॥ चकारो दूषणान्तरसमुच्चयार्थः । रूप्यस्य प्रपञ्चस्य चोभयानधिकरणत्वे वन्ध्यासुतवद् निःस्वरूपत्वापत्त्या त्वदनभिमतशून्यवादापातः स्यादित्यर्थः । उभयाभावस्त्वया निःस्वरूपेऽङ्गीकृतः, नतु सस्वरूपेऽपि सोऽङ्गीकर्तुमुचितः । तथाच न व्यभिचार इति भावः । *ननु* तथापि मिथ्याभूतमिथ्यात्वकत्वादित्यस्य हेतोः स्वप्ने प्रतीतस्य गजादे-

न्यायामृतकण्टकोद्धारः

विरुद्धप्रकारकोत्तरज्ञानत्वेनैव तत्र बाधव्यवहारोपपत्तेः । रूप्यमिथ्यात्वम्, मिथ्या, धर्मिमिथ्यात्वा-दित्यनुमाने साध्यस्य मिथ्यात्वमिथ्यात्वस्य धर्मिमिथ्यात्वहेतुमत्त्वेन मिथ्यात्वाभावे व्यभिचारापत्त्या तस्यापि मिथ्यात्वे धर्मिमिथ्यात्वहेतोः प्रातिभासिकनिषेधत्वेनाप्रामाण्यमित्याह—*त्वदुक्तेनेति* ॥ *अत्यन्तेति* ॥ व्यावहारिकविषयत्वे किञ्चिदप्रामाण्यम्, प्रातिभासिकविषयत्वे त्वत्यन्ताप्रामाण्य-मित्यर्थः । किञ्च हेतूकृतं धर्मिमिथ्यात्वं मिथ्या वा ? सत्यं वा ? आद्ये घटरूपादौ मिथ्याभूत-धर्मिमिथ्यात्वं वर्तते, मिथ्यात्वं च नास्ति, इति व्यभिचारः, द्वितीये पक्षीभूतमिथ्यात्वस्य सत्यत्वमङ्गी-कृतम्, इति मिथ्यात्वे साध्यमाने विरोध इत्याह—*हेतूकृतस्येति* ॥ किञ्च परस्परविरुद्धयोर्धर्म-योरेकमिथ्यात्वेऽपरसत्यत्वमिति नियमाद् रूप्यमिथ्यात्वमिथ्यात्वे रूप्यसत्यत्वं सत्यं स्यात्, इति तत्र व्यभिचारोद्भावनमसङ्गतम् । *ननु*—अस्य नियमस्य यत्र धर्मिसत्यत्वं तद्विषयकत्वमावश्यकम् ; अन्यथा वन्ध्यासुतस्य श्यामत्वस्य मिथ्यात्वे गौरत्व-सत्यत्वापातात्, प्रकृते च धर्मिसत्यत्वाभावाद् रूप्यमिथ्यात्वस्य मिथ्यात्वेऽपि सत्यत्वानापत्त्या जगत्, सत्यम्, मिथ्याभूतमिथ्यात्वकत्वादित्यनुमाने व्यभिचारः सुस्पष्ट एवेत्यत आह—*नच त्वन्मत इति* ॥ एवं चास्य नियमस्यासद्विलक्षणविषयत्वात्

(१) अयं भावः—रूप्यमिथ्यात्वम्, मिथ्या, मिथ्यात्वोपेतधर्मिकत्वादित्यत्र मिथ्याभूतमिथ्यात्वोपेतधर्मिकत्वादिति हेतुर्विवक्षितश्चेत्, घटरूपादौ व्यभिचारः । घटरूपादिकं प्रति धर्मिभूतस्य घटादेर्यत् प्रातिभासिकत्वरूपम्, तद् मिथ्या ; घटादे-र्व्यावहारिकत्वात्, अतो मिथ्याभूतमिथ्यात्वोपेतधर्मिकत्वं घटरूपादावस्ति, साध्यभूतं प्रातिभासिकत्वापरपर्यायं मिथ्यात्वं नास्ति, इति व्यभिचारापत्त्या 'सत्यभूतमिथ्यात्वोपेतधर्मिकत्वादि'ति हेतौ कर्तव्ये विरोधश्च स्यात् । तथाहि—पक्षीकृते रूप्यगत-मिथ्यात्वे सत्यभूतमिथ्यात्वोपेतधर्मिकत्वरूपो हेतुरस्तीति तदा स्यात्, यदि पक्षीकृतं रूप्यमिथ्यात्वं प्रति धर्मिभूते रूप्ये मिथ्यात्वं सत्यं स्यात् । एवं च पक्षे हेतुसिद्ध्यर्थं सत्यत्वेनाङ्गीकृते रूप्यमिथ्यात्वे यदि मिथ्यात्वमनेनानुमानेन साध्यते,

न्यायामृतम्

स्वाप्नस्यापि कल्पितत्वेन तद्ध्वंसादेर्मिथ्यात्वेऽपि तन्मिथ्यात्वं स्वप्ने प्रतीतमप्यात्मवदबाधात् सत्यमेव । नच—मिथ्यात्वं प्रपञ्चसमसत्ताकम्, एवं च न तात्त्विकाद्वैतहानिः, नापि सिद्धसाधनम्, त्वन्मते प्रपञ्चे स्वसमसत्ताकमिथ्यात्वासिद्धेरिति—वाच्यम्; मिथ्यात्वस्य व्यावहारिकत्वे तद्विरोधिनोऽप्रातिभासिकस्यानपोदितस्वतःप्रामाण्यप्रत्यक्षादिसिद्धस्य च विश्वसत्यत्वस्य पारमार्थिकत्वापातात्, द्वैताद्वैतप्रमाणयोर्व्यावहारिक-पारमार्थिकविषयकत्वेन व्यवस्थोक्त्ययोगाच्च, मिथ्यात्वस्य प्रातिभासिके व्यावहारिकतया व्यावहारिके च प्रातिभासिकतया च दृष्टत्वेन तयोस्तुल्यसत्ताकत्वायोगाच्च, अन्यथा

तरङ्गिणी

तन्मिथ्यात्वस्य च मिथ्यात्वात् तत्र व्यभिचार इत्यत आह—*स्वाप्नस्यापीति* ॥ स्वाप्नस्य कल्पितत्वपक्षेऽपि स्वप्नप्रतीतस्य स्वप्नगजध्वंसादेरमिथ्यात्वेऽपि गजादेर्मिथ्यात्वं सत्यमेव, इति गजादौ हेतोरगमनाद् न व्यभिचार इत्यर्थः । *यद्वा*—परस्परविरहरूपविरुद्धत्वगर्भायामप्युक्तव्याप्तौ परोदीरितं व्यभिचारं परिहरति—*स्वाप्नस्यापीति* ॥ विरहशब्देनात्यन्ताभावोऽभिप्रेतः । स्वप्ने प्रतीतयोर्गज-ध्वंसयोस्तु न परस्परात्यन्ताभावरूपत्वम् । अत उभयोरपि मिथ्यात्वेऽपि स्वप्नप्रतीतगज-तन्मिथ्यात्वयोरुभयोरपि न मिथ्यात्वम्, किन्तु गजस्यैव, गजमिथ्यात्वं तु गजात्यन्ताभावगर्भतया सत्यमेवेत्यर्थः । *ननु* प्रपञ्चमिथ्यात्वं न बाध्यम्, नवाऽबाध्यम्, किन्तु प्रपञ्चसमसत्ताकम्, एकबाधकबाध्यत्वं हि समसत्ताकत्वे प्रयोजकम्; यथा शुक्तिरूप्य-शुक्तिभिन्नत्वयोः, अस्ति च प्रपञ्च-तन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वमिति शङ्कां निराकरोति—*नचेति* ॥ *एवञ्चेति* ॥ मिथ्यात्वस्य व्यावहारिकत्वादित्यर्थः । परस्परात्यन्ताभावयोरेकबाधकबाध्यत्वस्याभावादिति भावेनाऽऽह—*मिथ्यात्वस्येति* ॥ पारमार्थिकत्वापातादिति* ॥ तथाच सिद्धसाधनमेवेति भावः ॥ *द्वैतेति* ॥ उभयोरपि व्यावहारिकपरत्वेनाव्यवस्थैव स्यादित्यर्थः ॥ *तयोरिति* ॥ प्रपञ्च-तन्मिथ्यात्वयोरित्यर्थः ॥ *अन्यथेति* ॥ विरुद्धयोरेकत्र समसत्ताकत्वे प्रपञ्चे तात्त्विके सत्यत्व-मिथ्यात्वे वा तात्त्विकौ तदभावौ वा

न्यायामृतकण्टकोद्धारः

प्रकृते च त्वन्मते सद्विलक्षणस्य सत्त्वादेकमिथ्यात्वे नापरसत्यत्वापादनं सुशकम्, इति नोक्तव्यभिचार इति भावः । *ननु* अस्य नियमस्यासद्विलक्षणविषयकत्वे स्वाप्नगजस्याप्यसद्विलक्षणत्वात् तस्य मिथ्यात्वे तदभावः सत्यः स्यादिति—चेत्, अत्र हि गजाभावस्य सत्यत्वमापाद्यमानं किं तद्ध्वंसस्य? उत तदत्यन्ताभावस्य? नाद्य इत्याह—*स्वाप्नस्यापि कल्पितत्वेन तद्ध्वंसादेर्मिथ्यात्वेऽपीति* ॥ 'परस्परात्यन्ताभावयोरिति विवक्षितत्वेन गज-तद्ध्वंसयोश्च परस्परात्यन्ताभावरूपत्वाभावाद् न व्यभिचार इति भावः । न द्वितीयः; इष्टापत्तेः । *ननु*—स्वाप्नगजमिथ्यात्वमिथ्यात्वे स्वाप्नगजस्य सत्यत्वं स्यादित्यापाद्यत इत्यत आह—*तन्मिथ्यात्वं स्वप्ने प्रतीतमप्यात्मवदबाधात् सत्यमेवेति* ॥ स्वाप्नगजमिथ्यात्वस्यात्मवद् बाधकाभावेन सत्यत्वाद् हेतोरनागमनाद् न व्यभिचारचोदनमित्यर्थः । परमतावष्टम्भेन चैतदुक्तम्? स्वमते स्वाप्नस्य सत्यत्वादिति बोध्यम् । *अन्यथेति* ॥ यदि व्यावहारिकमेव

तदा हेतु-साध्ययोः पक्षे सहानवस्थानरूपो विरोधः स्यादिति । तथाच रूप्यमिथ्यात्वम्, मिथ्या, सत्यभूतमिथ्यात्वोपेतधर्मिकत्वादिति हेतुमभिदधता रूप्यमिथ्यात्वं सत्यमित्युक्तं स्यात् । तत्र च पुनर्मिथ्यात्वसाधने विरोधः स्यात् । सत्यभूतोष्णत्ववान् वह्निः, मिथ्याभूतोष्णत्ववानितिवदित्यर्थः, इत्येवं सुलभेनोपपादनं द्रष्टव्यम् ॥ रूप्यधर्मो मिथ्यात्वं मिथ्यैवेति परेणोक्ते रूप्यमिथ्यात्वस्य मिथ्यात्वे तत्सत्यत्वं सत्यं स्यादित्यसामिरापादिते, परेणोत्तरितम्—रूप्यरूपधर्मिण एवाभावाद् विरुद्धयोः सत्यत्व-मिथ्यात्वरूपधर्मयोरपि मिथ्यात्वमिति । पश्चात् परस्परविरुद्धयोरेकस्याभावेऽन्यस्य सत्त्वमिति नियमभङ्गेऽभिहिते परेण यत्र धर्मी सन्, तत्रैवायं नियमः । नहि वन्ध्यासुतस्य श्यामत्वाभावे गौरत्वं सत्यमित्युक्तम्, तत्र दूषणमाह—*नचेति* ॥ ( श्रीनि० )

### न्यायामृतम्

प्रपञ्चे सत्यत्व-मिथ्यात्वयोर्विधिसमुच्चयो वा निषेधसमुच्चयो वा स्यात्। तथाच—

"मिथ्यात्वं यद्यबाध्यं स्यात् सदद्वैतमतक्षतिः।
मिथ्यात्वं यदि बाध्यं स्याद् जगत्सत्यत्वमापतेत्॥"

नच—मिथ्यात्वस्य सत्यत्व-मिथ्यात्वाभ्यां दूषणं नित्यसमा जातिः; स्वव्याघातादेरभावात्।

### तरङ्गिणी

स्यातामित्यर्थः। *एतेन*—कल्पितस्योभयस्य तात्त्विकस्योभयाभावस्य च सत्त्वादिष्टापत्तिरिति—*निरस्तम्*; तथा सति रूप्येऽपि सत्त्वासत्त्वोभयसमुच्चयापत्त्या तदुभयवैलक्षण्यस्यानङ्गीकरणीयत्वात् ख्याति-बाधावपि सत्त्वासत्त्वाभ्यामेवोपपादनीयाविति भावः। *एतेनैव*—वृक्षे संयोग-तदत्यन्ताभावयोरिव प्रपञ्चे मिथ्यात्व-सत्यत्वयोः समुच्चय इति—*निरस्तम्*; तद्वदवच्छेदकभेदाभावात्, तत्सत्त्वे त्विष्टापत्तेः। उक्तं च बौद्धाधिकारे—'सदसत्त्वस्यैकत्र विरोधेन विधिवद् निषेधस्याप्यनुपपत्तेरि'ति। संगृह्णाति—*तथाचेति*॥ *ननु* साध्यस्य मिथ्यात्वस्य साध्यवत्त्व-तदभावाभ्यां दूषणाभिधानं जात्युत्तरं स्यादित्याशङ्क्यां निराकरोति—*नचेति*॥ *स्वेति*॥ जातिबीजस्य व्याघातादेरभावादित्यर्थः। प्रत्युत स्वानुगुण-

### न्यायामृतकण्टकोद्धारः

मिथ्यात्वमङ्गीक्रियत इत्यर्थः। *विधीति*॥ अस्तित्वेनेत्यर्थः। विरुद्धयोरुभयोरेकाकारसत्यत्वं विरुद्धमिति भावः। उक्तमर्थं सङ्गृह्णाति—*तथाचेति*॥ *स्वव्याघातादेरभावादिति*॥ मिथ्यात्वस्य

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत्रेदं विचारणीयम्*—प्रपञ्चमिथ्यात्वस्य सत्यत्व-मिथ्यात्वविकल्पनेनास्मान् प्रति दूषणोक्तिर्नित्यसमा

### न्यायामृतसौगन्ध्यम्

नच मिथ्यात्वस्य सत्यत्व-मिथ्यात्वाभ्यां दूषणं नित्यसमा जातिः; स्वव्याघातादेरभावात्(१)॥

### सौगन्ध्यविमर्शः

(१) जात्युत्तरार्थांशे, जात्युत्तरवाद्यभ्युपगतार्थान्तरांशे च व्याघातकत्वं मिथ्यात्वस्य मिथ्यात्वं वा सत्यत्वं वेति विकल्पेन दूषणाभिधानावसरे भवत्येव; यतो मिथ्यात्वमिथ्यात्वे न प्रपञ्चस्य मिथ्यात्ववैशिष्ट्यसम्भवः, सत्यत्वेऽप्यद्वैतहान्यापत्त्याऽलीकत्वमेवापादनीयम्, इति जात्युत्तरवाद्यङ्गीकृतप्रपञ्चमिथ्यात्वविरोधो भवत्येव। व्यक्तं चैतद्विट्ठलेशीये। अतो मिथ्यात्वं

### विट्ठलेशीयटिप्पणी

*अत्रेदमवधेयम्*—एतत्प्रघट्टकपूर्वपक्षमूलस्य *प्रपञ्चमिथ्यात्वम्*=ब्रह्मणि प्रपञ्चाभावः, तस्य मिथ्यात्वे ब्रह्मणि प्रपञ्चस्य सत्यत्वापत्तिरिति व्याख्यानं केषाञ्चित्, *तत्र* 'प्रकृते तु निषेध्यतावच्छेदकं दृश्यत्वादिकमेकमेवे'ति मूला-सङ्गतिः। प्रकृत इत्यस्य हि परस्परविरहरूपत्वोपहितरजतत्व-तदभावाद्युक्तलक्षणयोः प्रपञ्च-तदभावयोरित्यर्थो वाच्यः; स चासङ्गतः; प्रपञ्च-तदभावयोः परस्परविरहरूपत्वात्, अत एव 'यथा च सत्यत्व-मिथ्यात्वयोर्न परस्परविरहरूपत्व-मि'ति पङ्क्तौ सत्यत्व-मिथ्यात्वपदयोः प्रपञ्च-तदभावपरत्वेऽप्यसङ्गतिः। यदि संयोग-तदभावयोर्व्यभिचारवारणायान्यत्र परस्परविरुद्धत्वेन गृहीतयोः परस्परविरहरूपयोरित्यर्थकत्वं 'यथा परस्परविरहरूपयो'रित्यस्य स्वीक्रियते, प्रपञ्च-तदभावयोर्जगदुपादानाद् ब्रह्मणोऽन्यत्रासम्भवाद् न तथात्वम्, 'परस्परविरहरूपत्वेऽपी'त्यस्य केवलेत्यादिः, 'व्यावहारिकमिथ्यात्वे'ति पङ्क्तेरपि प्रपञ्चाभावस्य व्यावहारिकत्वेन प्रपञ्चस्य व्यावहारिकत्वापहारेऽपि काल्पनिक-त्वानपहारादिति दृष्टिसृष्टिवादाभ्युपगमेनार्थः, 'संयोग-तदभाववत् सत्यत्व-मिथ्यात्वयोरि'त्यस्य च प्रपञ्च-तदभावयोरित्यर्थ इत्युच्यते, तदाऽपि बहूनां पदानां यथाश्रुतार्थकत्वत्यागाद् वरं द्वयोः प्रपञ्चपदयोरेव त्यागः इति टीकाकाराभिप्रायः। किंच तयोरपि यथाश्रुतार्थकत्वमुक्तमेवेति॥ *ननु*—किमत्राधिकं वक्तव्यमस्ति; यत् 'कृतमधिकेने'त्युक्तम्, तत्राह—*अत्रेदं विचारणीयमिति*॥ प्रपञ्चे पक्षे साध्यभावस्य

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

जातिः, *तदुक्तम्*—"धर्मस्य तदतद्रूपविकल्पानुपपत्तितः। धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्॥" इति। नच—मिथ्यात्वस्य सत्यत्वे धर्मिणि न तद्वैशिष्ट्यभङ्गः, किंत्वद्वैतहानिरिति—वाच्यम्; विकल्पितकोट्योरेकस्या

## न्यायामृतसौगन्ध्यम्

**किञ्च "धर्मस्य तदतद्रूपविकल्पानुपपत्तितः। धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्॥" इति हि तल्लक्षणम्॥ न चात्र मिथ्यात्वस्य मिथ्यात्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्ग उक्तः, किन्त्वद्वैतहानिः। प्रत्युत भेदः किं भिन्नः? उताभिन्नः? इत्यादिस्त्वदुक्तिरेव भिन्नादिरूपविशिष्टमात्रनिरासकत्वेन स्वव्याघातात् जातिः॥**

***यत्तु*—विकल्पितकोट्योरेकस्या अद्वैतहानिप्रयोजकत्वेऽप्यन्यस्याः प्रपञ्चसत्यत्वप्रतारिवकत्वापत्ति-**

## सौगन्ध्यविमर्शः

मिथ्या वा सत्यं वेति नित्यसमा जातिरेव। एतेन—स्वव्याघातकत्वाभावाद् न नित्यसमा जातिरिति—प्रत्युक्तम्। यत्तु—मिथ्यात्वमिथ्यात्वे प्रपञ्चसत्यत्वापत्तिरिति, तदिदं वस्तुगत्या प्रपञ्चे मिथ्यात्ववैशिष्ट्यमेव भञ्जयति, इति कथं नोक्तविकल्पे धर्मिणस्तद्विशिष्टत्वभङ्गः? एतेन—नचात्र मिथ्यात्वमिथ्यात्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्गः, किन्त्वद्वैतहानिरिति सौगन्ध्योक्तम्—परास्तम्; न हि मिथ्यात्वमिथ्यात्ववादी प्रपञ्चमिथ्यात्वमिव तत्सत्यत्वमपि मन्यते, इति कथं न स्वीकृतमिथ्यात्वरूपधर्मवैशिष्ट्यभङ्गः। भेदः किं भिन्न उताभिन्न इति विकल्पेनाद्वैतिनां ब्रह्मेतरसर्वनिरासकानां दूषणाभिधानं तु स्वव्याघातकत्वाभावाद् न नित्यसमा जातिः। अधिकं लघुचन्द्रिकादिषु व्यक्तम्। यत्तु—मिथ्यात्वमिथ्यात्वे प्रपञ्चस्य तात्त्विकसत्त्वापत्तेरेव विवक्षितत्वात् तात्त्विकसत्त्वे प्रातिभासिकमिथ्यात्वस्याप्यविरोधाद् मिथ्यात्ववैशिष्ट्यभङ्गाप्रयोजकत्वमिति सौगन्ध्योक्तम्, तत्रेदमेवालोचनीयम्—यन्मिथ्यात्वमिथ्यात्वे किं प्रातिभासिकं सत्त्वम्? उत पारमार्थिकं सत्त्वमिति? तत्र च गूर्वोक्तरीत्या मिथ्यात्वमिथ्यात्वस्य प्रपञ्चाभावाभावस्य प्रपञ्चस्य मिथ्यात्वस्य च प्रपञ्चाभावरूपस्य ब्रह्मणि कल्पितत्वबोधन एव तात्पर्येण प्रपञ्चमिथ्यात्वमात्रप्रातिभासिकत्वकल्पने प्रमाणाभावः; अबाधात्। अन्यथा "नेह नानाऽस्ति किञ्चने"तिवाक्यस्य प्रातिभासिकप्रपञ्चाभावबोधकत्वापत्तेरप्रामाण्यं स्यात्। न हि प्रमाप्रतिपन्नस्य वस्तुनः स्वाधिकरणे श्रुत्याऽभावकल्पनं सम्भवति। विशेषदर्शनाभावसहकृताधिष्ठानज्ञानं खलु भ्रमं प्रति कारणम्। नच प्रपञ्चवत्तया पूर्वबोधिते ब्रह्मणि भ्रमविरोधिविशेषदर्शनाभावो नावर्तत, इति यदि नोभयोरपि कल्पितत्वम्, तर्हि प्रपञ्चवत्त्व-तदभावावपि श्रुत्या बोधयितुं न शक्यौ। तथाच प्रातिभासिकं मिथ्यात्वमिति कल्पनमसांप्रतमेव; एतच्छ्रुतिबाधकस्य प्रमाणान्तरस्यादर्शनात्। नहि प्रपञ्चा-

## विट्ठलेशीयटिप्पणी

**मिथ्यात्वस्य सत्यत्व-मिथ्यात्वरूपैककोटिपरिग्रहप्रश्नेन *अस्मान्* प्रपञ्चमिथ्यात्वाभ्युपगन्तॄन् वेदान्तिनः प्रति प्रत्येकं कोटिद्वये दूषणाभिधानं नित्यसमाख्यमसदुत्तरमित्यर्थः। नित्यसमलक्षणमाह—*तदुक्तमिति*। *धर्मस्य=साध्यस्य, *तद्रूपत्वातद्रूपत्वयोः=यौ विकल्पौ प्रत्येकं साध्येऽभ्युपगतौ, तयोरनुपपत्तिः* तत्तदापादकानिष्टापत्तिभयादसंभवः। तस्मात् *धर्मिणः=पक्षस्य, *तद्विशिष्टत्वस्य=साध्यविशिष्टत्वस्य, *भङ्गः=असम्भवः, नित्यसमाख्यो जातिविशेषरूपो दोष इत्यर्थः॥ प्रकृते पक्षे प्रपञ्चे मिथ्यात्वरूपसाध्यस्य मिथ्यात्वे, प्रपञ्चस्य सत्यत्वापत्तिः, सत्यत्वे चाद्वैतहानिप्रसङ्गः, इति मिथ्यात्वस्योक्तद्वयान्यतररूपतया दुर्वचत्वात्, तृतीयप्रकाराभीकत्वापत्त्या प्रपञ्चरूपपक्षस्य मिथ्यात्वरूपसाध्यवैशिष्ट्यभङ्गः, सदसतोरुपरागाभावाद् नित्यसमजातिदोषसमन्वय इति भावः। *ननु*—उक्तविकल्पयोर्द्वयोरपि प्रत्येकं साक्षाद् धर्मिणि धर्मवैशिष्ट्यभञ्जकत्व एव नित्यसमो दोषः, प्रकृते तु न तथा, इत्याशङ्कते—*नचेति*॥ *मिथ्यात्वस्य=प्रपञ्चमिथ्यात्वस्य। *सत्यत्वे=तदुपगमे। *धर्मिणि=प्रपञ्चे। *न तद्वैशिष्ट्यभङ्गः=मिथ्यात्ववैशिष्ट्यभङ्गः। सत्यस्य मिथ्यात्वस्य ब्रह्मण इव व्यावहारिकप्रपञ्चे सम्बन्धाङ्गीकारे बाधकाभावादिति भावः। विकल्पितकोट्योरेकस्या अपि कोटेः परम्परयाऽपि धर्मि-धर्मवैशिष्ट्यभञ्जकत्वे नित्यसम इत्यभिप्रायेण समाधत्ते—*विकल्पितकोट्योरिति*॥ *एकस्याः=मिथ्यात्वे सत्यत्वकोटेः। *अद्वैतहानीति*॥ तन्मात्रेत्यर्थः। *अन्यस्याः=मिथ्यात्वे मिथ्यात्वकोटेः। *ननु*—ब्रह्मणि मिथ्यात्ववतः**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अद्वैतहानिप्रयोजकत्वेऽप्यन्यस्याः प्रपञ्चसत्यत्वतात्त्विकतापत्तिद्वारा प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्ग-प्रयोजकत्वात्, अन्यथा मिथ्यात्वकोटिमात्रस्यास्माभिराश्रयणे सत्यत्वकोटिप्रयुक्तस्याद्वैतहानिदोषस्याप्यसम्भवात्। किंच मिथ्यात्वस्यापि मिथ्यात्वधर्मित्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभङ्गेन सत्यत्वकोटेरपि धर्मिणि तद्वैशिष्ट्यभङ्गप्रयोजकत्वमावश्यकम्। नच—जात्युत्तरं येनोच्यते, तं प्रति व्याघातकत्वमेव तस्य दुष्टताबीजम्, प्रकृते च तदभावाद् न जातिरियं दुष्टेति—वाच्यम्; त्वदीयस्य सर्वदेश-कालनिष्ठात्यन्ताभाव-

न्यायामृतसौगन्ध्यम्

द्वारा प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वमस्त्येव, अन्यथा मिथ्यात्वकोटिमात्रस्यास्माभिराश्रयणे सत्यत्वकोटिप्रयुक्तस्याद्वैतहानिदोषस्यानवकाशात्॥ किञ्च मिथ्यात्वस्यापि मिथ्यात्वधर्मिकत्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभङ्गेन सत्यत्वकोटेरपि धर्मिणि तद्वैशिष्ट्यभङ्गप्रयोजकत्वमावश्यकम्॥ नच—स्वव्याघातकत्वाभावान्न नेयं जातिरिति—वाच्यम्; त्वदीयसर्वदेशीयात्यन्ताभावप्रतियोगित्व-

सौगन्ध्यविमर्शः

भावत्वेन प्रपञ्चाभावस्य ब्रह्मणि निषेधकमेकमपि वाक्यमस्ति, येन प्रपञ्चाभावः प्रातिभासिकः स्यात्। दृश्यत्वेन निषेधे तु प्रपञ्चसमसत्ताक एव निषेधो भवितुमर्हतीत्युक्तम्। इदं च पक्षान्तरेण, यथाच प्रपञ्चप्रातिभासिकत्वमपि न विरुद्धम्। तथोपपादितमधस्तात्।

विट्ठलेशीयटिप्पणी

प्रपञ्चस्येव प्रपञ्चेऽपि मिथ्यात्वस्य वैशिष्ट्यसम्भवः, इत्यत आह—*प्रपञ्चसत्यत्वतात्त्विकतापत्तिद्वारेति*॥ मिथ्यात्वस्य तात्त्विकसत्यत्वेन विरोधात् तद्वति ब्रह्मणीव प्रपञ्चेऽपि मिथ्यात्ववैशिष्ट्यासम्भव इति भावः। *ननु*—सत्यत्व-मिथ्यात्वयोर्न परस्परविरहादिरूपत्वम्, तत्त्वेऽपि वा विषमसत्ताकत्वघटितव्याप्तिरेवाश्रयणीया; तथाच मिथ्यात्वमिथ्यात्वोपगमस्य प्रपञ्चसत्यत्वतात्त्विकत्वापत्त्यप्रयोजकत्वात् कथं तद्द्वारा प्रपञ्चे मिथ्यात्ववैशिष्ट्यभङ्ग-प्रयोजकत्वम्? अत आह—*अन्यथेति*॥ उक्तरीत्या मिथ्यात्वमिथ्यात्वस्य प्रपञ्चे मिथ्यात्ववैशिष्ट्यभङ्ग-प्रयोजकत्वानुपगम इत्यर्थः। अपिना प्रपञ्चसत्यत्वतात्त्विकत्वापत्तिरूपदोषस्याप्यसम्भवात् सिद्धान्तपथस्यैव स्फुरणात् पूर्वपक्षानुत्थितिरेव स्यात्। यथा सत्यत्व-मिथ्यात्वयोः परस्परविरहादिरूपत्वमधिकसत्त्वघटितव्याप्तिं चालम्ब्य पूर्वपक्षोत्थितिः, तथा तु नित्यसमदोषोऽपि दुर्वार इति भावः। द्वयोरपि कोट्योः प्रत्येकमेककोटेर्वा साक्षादेव धर्म-धर्मिवैशिष्ट्यभङ्गप्रयोजकत्व एव नित्यसम इत्युक्तावप्याह—*किंचेति*॥ *मिथ्यात्वधर्मित्वेन=मिथ्यात्वानुमाने पक्षत्वेन। *तस्य=मिथ्यात्वस्य। *सत्यत्वे=तात्त्विकसत्यत्वे। अत एव तत्पक्षेऽद्वैतहानिरूपदोषसङ्गतिः, तेन विरोधादिति शेषः। *भङ्गेनेति*॥ तदनुपगमे च तदभङ्गेनेति शेषः। *धर्मिणि=मिथ्यात्वानुमानपक्षे। *आवश्यकमिति*॥ अन्वय-व्यतिरेकसिद्धमित्यर्थः। *दुष्टताबीजमिति*॥ यथा पर्वतो वह्निमान् धूमवत्त्वात्, इति न्यायेन वह्निसाधकं प्रति प्रतिवादिनः पर्वतस्य धूमवत्त्वमस्तु, वह्निमत्त्वं मास्तु, इत्युत्तरं जातिरूपं स्वोपगत-धूमवत्त्वाभावापादकत्वेन व्याघातकत्वाद् दुष्टम्, यथा वह्निर्धूमकारणमिति प्रतिज्ञातारं प्रति नायं तथेति धूमार्थं वह्न्युपादानुत्तरं स्वोपादानव्याघातकत्वाद् दुष्टम्, *प्रकृते=प्रपञ्चमिथ्यात्वे सत्यत्व-मिथ्यात्वविकल्पेन दूषणाभिधान-रूपोत्तरे। *तदभावात्=व्याघातकत्वाभावात्। *इयम्=मिथ्यात्ववादिनं प्रत्युक्तदूषणाभिधानरूपोक्तिः। यतो न दुष्टा, अतो न जातिरित्यर्थः। जातिविशेषनित्यसमलक्षणे प्रपञ्चेऽपि स्वव्याघातकत्वं देयमिति भावः। यद्यपि जात्युत्तरस्य वक्तुर्व्याघातकत्वमेव दूषकताबीजम्; तथापि जात्युत्तरार्थांश एव व्याघातकत्वं न तथा, किंतु तदभ्युप-गतार्थान्तरांशेऽपीत्याशयेन स्वाभ्युपगतप्रपञ्चमिथ्यात्वे सत्यत्व-मिथ्यात्वविकल्पेन स्वोपरि तदीयदूषणाभिधानस्य स्वार्थव्याघातकत्वेऽपि, तद्वत् प्रतिवाद्यभ्युपगतशशविषाणाद्यसत्त्वस्य सत्त्वासत्त्वविकल्पेन तदुपरि स्वीयदूषणाभिधान-रूपप्रतिबन्द्युत्थापनेन जात्युत्तरप्रयोक्तुरर्थान्तरांशे व्याघातोऽस्त्येवेत्याह—*त्वदीयस्येति*॥ शशविषाणाद्यसति त्वयाऽ-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रतियोगित्वरूपासत्यत्वस्यासत्त्वे तद्विरुद्धस्य "असदेवेदमग्र आसीत्" इति वाक्यादसति प्रतिपन्नतया त्वदभ्युपगतस्य सत्त्वस्यासति तात्त्विकतापत्तिः, सत्त्वे तस्य सतोऽसति सम्बन्धानुपपत्तिरित्याद्यभिप्रेत्याह—*कृतमधिकेनेति* ॥ (सि० ४११) *ननु*—भेदः किं भिन्ने ? उताभिन्ने ? इत्यादित्वदुक्तिरपि जातिरिति—चेत्, *न* ; वैतण्डिकतामाश्रित्य वदतो मम स्थापनीयाभावाद् मां प्रति जातेर्व्याघातकत्वाभावात्, सर्वदृश्यानां खण्डनयुक्तिभिर्बाधस्य मदिष्टत्वात्। *तदुक्तं खण्डने*—

"अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत्तानि कस्माद् न यथावदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥" इति।

परमतखण्डनरूपस्य *अभीष्टस्य* सिद्धावपि *खण्डनयुक्तीनां राज्ञामिवाज्ञा=स्वातन्त्र्यं* नाखण्डि=नास्माभिर्निराकृतम् ॥ *तत्=तस्मात्, *तानि=खण्डनानि, *यथावत्=परमत इव सिद्धान्तसिद्धप्रक्रियायामपि कस्मान्न योजयध्वमित्यर्थः।

न्यायामृतसौगन्ध्यम्

**रूपासत्त्वस्यासत्त्वे तद्विरुद्धस्य "असदेवेदमग्र आसीदि"त्यादिवाक्याद् असति प्रतिपन्नतया त्वदभ्युपगतस्यासति तात्त्विकत्वापत्तिः, सत्त्वे तस्य सतोऽसति सम्बन्धानुपपत्तिः॥ उक्तं हि बौद्धाधिकारे—'सदसतोस्सम्बन्धानुपपत्तेरि'ति। नच—प्रागभाव-ध्वंसप्रतियोगित्वादेरिवासतोऽपि सम्बन्ध इति—**

विट्ठलेशीयटिप्पणी

भ्युपगतस्येत्यर्थः। *असत्त्वे=प्रसक्तयोर्विरुद्धयोः सत्त्वासत्त्वयोर्मध्येऽसत्त्वोपगमे सत्त्वस्यासति तात्त्विकत्वापत्तिरिति। तथाच तात्त्विकसत्यत्ववति ब्रह्मणीव तुच्छेऽप्यसत्त्ववैशिष्ट्यभङ्गप्रसङ्गः। *सत्त्वे* सत्त्वोपगमे। *तस्य=असत्त्वस्य। *इत्यादीति* ॥ इत्याद्यधिकमभिप्रेत्येत्यन्वयः। इति रीत्या प्रतिबन्दीस्फोरकत्वेन व्याघातकत्वादित्यर्थः। तथाच प्रपञ्चमिथ्यात्वस्य मिथ्यात्व-सत्यत्वविकल्पेन दूषणाभिधानस्योक्तप्रतिबन्द्योक्तत्वमतान्तरव्याघातकनित्यसमजातिदोषस्यावनुचितत्वमधिकपदार्थ इति भावः। प्रपञ्चमिथ्यात्वदूषको भेदखण्डकसिद्धान्त्युपरि प्रतिबन्दीमाशङ्कते—*नन्विति। भेदः किं भिन्न इति* ॥ पटादौ घटादिभेदसत्तायां यदि घटादेर्भेदः प्रयोजकः, तदाऽऽत्माश्रयादि ; यद्यभेदः, तदा तयोर्विरोधाद् बाध इति सिद्धान्तिनस्तव भेदखण्डनोक्तिरपि जातिरूपतया दुष्टा स्यादित्यर्थः। एवं च जीव-ब्रह्मणोर्भेदासिद्धिप्रसङ्ग इति भावः। व्याघातकजातेरेव दोषत्वमित्याशयेन समाधत्ते—*मां प्रतीति। *जातेः=भेदः किं भिन्ने, उताभिन्न इत्यादिमदुक्तजातेः। *व्याघातकत्वाभावादिति* ॥ ननु*—घटादेः स्वस्मिन्नभेदः, तत्त्वन्यस्मिन् इत्यस्ति, तत्राभेद-तदभावयोः प्रयोजकत्व आत्माश्रयादिविरोध-बाधयोः प्रसङ्गाद् जीव-ब्रह्मणोरभेदोऽपि न सिध्येत्, इति प्रतिबन्द्याः स्वसिद्धान्तभञ्जकत्वं स्वोक्तजातेर्दुर्वारम्, अत आह—*वैतण्डिकतामाश्रित्येति* ॥ *मम=ब्रह्मास्मान्यप्रपञ्चमिथ्यात्वोपगन्तुः। *स्थापनीयाभावादिति* ॥ जीवस्य ब्रह्माभेदो नाम न कश्चित् तदतिरिक्तः पदार्थः स्थापनीयः, किंतु तदभेदनिबन्धनं ब्रह्मस्वरूपत्वं बोधनीयम्। एवं दृश्यप्रपञ्चस्य सर्वस्य मिथ्यात्वोपगमाद् न कस्यचित् स्थापनमपेक्षितमित्यर्थः। तदाह—*सर्वदृश्यानामिति* ॥ *खण्डनयुक्तिभिः=श्रीहर्षग्रन्थस्थाभिः। *बाधस्य=अभावस्य। *मदिष्टत्वादिति* ॥ दृश्यस्य बाधो मिथ्यात्वं विना न संभवतीति मदभिमतमिथ्यात्वसिद्ध्यनुकूलत्वादित्यर्थः। श्रीहर्षेण नैयायिकादिमतखण्डनाय खण्डनग्रन्थः कृतः, न तु भवदभिमतं मिथ्यात्वं तस्य सिसाधयिषितम्, तत्राह—*तदुक्तमिति। *अखण्डीति* ॥ कर्मणि लुङ्। *सिद्धावपि=तदुद्देशेनोपदिष्टानामपीत्यर्थः। *स्वातन्त्र्यम्=वेदान्त्यनभिमतपदार्थखण्डने प्रवृत्तिः। *सिद्धान्तसिद्धेति* ॥ अद्वैतसिद्धान्तसिद्धेत्यर्थः। *प्रक्रियायाम्=दृश्यमिथ्यात्वव्यवस्थापनौपयिकदृश्यखण्डने। *कस्मान्नेति* ॥ योजयध्वमेवेत्यर्थः। एवं च न्यायादिमतखण्डनत्वोपदिष्टयुक्तीनां सिद्धान्तसिद्धदृश्यमिथ्यात्वसाधने योजनं श्रीहर्षानुमतमेवेति, यथा शुक्तिरजतम्, ब्रह्मवत्—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नचैवम्—ब्रह्मणोऽपि खण्डनयुक्त्या बाधापत्तिरिति—वाच्यम्; ब्रह्मणोऽसंसृष्टत्वेन तर्काविषयत्वात्, सर्वसाक्षित्वेनाबाध्यत्वाच्च। *यत्तु*—सत्यत्व-मिथ्यात्वयोः समुच्चयोक्तिर्न युक्ता, उक्तं हि बौद्धाधिकारे—'सदसत्त्वस्यैकत्र विरोधेन विधिवद् निषेधस्याप्यनुपपत्तेरि'ति। सत्त्वासत्त्वयोरिव तदभावयोरप्येकत्र विरोधेनासंभव इति तदर्थः—*इति*, तन्न; सत्त्वासत्त्वयोः परस्परात्यन्ताभावरूपत्वे हि विरोधः, तत्तु नास्त्येवेति मूल एवोक्तम्।

न्यायामृतसौगन्ध्यम्

वाच्यम्, प्रागभावादिप्रतियोगिन उक्तासत्त्वाभावात्। 'असच्छशविषाणमि'ति प्रतीतेः सत्त्वाश्रयासद्विषयकत्वे "वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रविरोधात्, स्वलक्षणस्य विकल्पागोचरत्वादिति बौद्धाधिकारीयवाक्यविरोधश्च। सत्सम्बन्धश्च बौद्धाधिकारादौ स्पष्टः—इति, *तन्न*; प्रपञ्चेऽतात्त्विकसत्त्वस्य तात्त्विकसत्त्वाविरोधेन तदापत्तिद्वारा मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वात्, अतात्त्विकमिथ्यात्वस्य प्रपञ्चे स्वीकारे क्षतेरभावात्॥

विट्ठलेशीयटिप्पणी

सत्यं न, बाध्यत्वात्; तुच्छवत्, असत्यमपि न; प्रतीयमानत्वात्; तस्मादुभयरूपेणानिर्वचनीयम्=मिथ्या; प्रकारान्तराप्रसिद्धेरिति पर्यवस्यति। तथा द्रव्यादिपदार्थानां खण्डनयुक्तिभिरभावसिद्धौ प्रतीत्यन्यथानुपपत्त्या मिथ्यात्वं पर्यवस्यति; बाध-प्रतीत्योः सत्त्वासत्त्वाभ्यां विरोधात्। *एवंच=खण्डनयुक्तीनामन्यत्रापि प्रयोजने। *ब्रह्मणोऽपीति* ॥ ब्रह्म, अभावप्रतियोगि, पदार्थत्वात्, वृत्तिविषयत्वाद्वा, घटादिवदिति। न चाप्रयोजकत्वम्; दृश्यप्रपञ्चविलक्षणपदार्थास्वीकारे लाघवादित्यनुमानेनाभावसिद्धौ प्रतीतौ मिथ्यात्वम्, अप्रतीतावसत्त्वं सिद्ध्येदिति भावः। *तर्कः=अनुमानम्, तदविषयत्वात्; हेतोरेवासम्बन्धादिति भावः। शुद्धस्यापि ब्रह्मणो वृत्तिविषयत्वोपगमे त्वाह—*सर्वसाक्षित्वेनेति* ॥ बाधसाक्षिणोऽपि बाधे बाधस्यासत्त्वप्रसङ्गात् साक्षिणोऽबाध्यत्वं स्वीकार्यमिति भावः। उक्तं चैतत्॥ श्रीहर्षमतविरोधाभावेऽप्युदयनाचार्यमतविरोध इत्याशङ्कते—*यत्त्विति* ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्, तदभावः सत्यत्वम्, प्रतिपत्तेर्विकल्पसाधारणरूपेण निवेशे तुच्छमपि मिथ्यैव, तुच्छानङ्गीकारो वा। एवं चोक्तसत्यत्वाभावरूपमिथ्यात्वमेवासत्यत्वम्। तयोर्व्यावहारिकयोर्दृश्यप्रपञ्चे समुच्चयात् परस्पराभावघटितं मिथ्यात्वं स्वाण्नगज-तदभावयोरिव निर्दहति, निर्धर्मकब्रह्मणि तूक्तप्रतियोगित्वरूपमिथ्यात्वस्यासत्त्वात् तदभावरूपं सत्यत्वं मिथ्यात्वासम्भवात् पारमार्थिकमधिकरणीभूतपारमार्थिकब्रह्मस्वरूपम्। अतः कथमपि नाद्वैतहानिरिति पूर्वं मूल उक्तं न युक्तम्; उदयनाचार्यमतविरोधात्। मूलविरुद्धं तन्मतमाह—*उक्तं हीति*। *सदसत्त्वस्य=सत्त्वासत्त्वयोरित्यर्थः। *एकत्र विरोधेन=एकधर्म्यवृत्तित्वेन। *विधिवत्=सद्भावस्येव। एवं च प्रपञ्चसत्यत्व-मिथ्यात्वयोः समुच्चयोक्तिस्वीकारे तद्दृष्टान्तोक्तिर्विरुद्धेति भावः। *निषेधस्येति* ॥ परस्पराभावरूपत्वादिति शेषः। *निषेधस्याप्यनुपपत्तेरिति* ॥ अनेनापि सत्यत्व-मिथ्यात्वसमुच्चयोक्तिर्विरुद्धा; तयोः परस्पराभावरूपत्वात्। एवं सदसद्विलक्षणत्वरूपं मिथ्यात्वमपि प्रपञ्चस्य न सम्भवति; तस्य सत्त्वाभावासत्त्वाभावोभयरूपत्वादिति भावः। इदं स्पष्टीकर्तुं व्याचष्टे—*सत्त्वासत्त्वयोरिवेति* ॥ *तदभावयोरिति* ॥ *ननु*—अनयोरसत्त्वसत्त्वरूपत्वात् कथमुपमानोपमेयभावः? इति—चेत्, *सत्यम्*; 'इदं सत्त्वमेकमिदमसत्त्वमेकमि'त्याकारकापेक्षाबुद्ध्या 'यं सत्त्वाभाव एकोऽयमसत्त्वाभाव एकः' इत्याकारकापेक्षाबुद्धिभ्यां जातद्वित्वभेदेन तत्तदवच्छिन्नतत्तदुभयभेदाद् उपमानोपमेयभावसङ्गतिरिति। विरोधादेकत्रासम्भव इति योजना। उक्तरविरोधं परिहरति—*तन्नेति* ॥ तत्र सदसद्विलक्षणत्वरूपं मिथ्यात्वं प्रपञ्चस्य सम्भावयति—*सत्त्वासत्त्वयोरिति* ॥ *तत्* परस्पराभावरूपत्वम्। *नास्तीति* ॥ *मूल एवोक्तमिति* ॥ कालत्रयाबाध्यत्वं सत्त्वम्, सत्त्वेन प्रतीत्यनर्हत्वमसत्त्वम्। इमे च न परस्पराभावरूपे;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

किंचोक्तवाक्यं बौद्धमतनिराकरणपरम्, न त्वद्वैतमतनिराकरणपरम्; अद्वैतमतस्य सर्वमतश्रेष्ठतया बौद्धाधिकार एवोक्तत्वात्। *तथाहि—

"न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः।
नो चेदनित्यमिदमीदृशमेव विश्वं तथ्यम्, तथागतमतस्य तु कोऽवकाशः॥" इति।

न्यायामृतसौगन्ध्यम्

**'किञ्चे'त्याद्यशुद्धम्; मिथ्यात्वस्य तात्त्विकत्वे मिथ्यात्वधर्मिताया(१) व्याहतत्वात्, मिथ्यात्वस्य तात्त्विकत्वपक्षे प्रपञ्च-तन्मिथ्यात्वादिनिष्ठमिथ्यात्वस्यैकस्याभावाच्च, अतात्त्विकमिथ्यात्वान्तरस्य तु तात्त्विकमिथ्यात्वधर्मिकत्वे बाधकाभावाच्च॥**

सौगन्ध्यविमर्शः

(१) किञ्च 'मिथ्यात्वस्यापि मिथ्यात्वधर्मित्वेन तस्य सत्यत्वे' इति चन्द्रिकावाक्ये मिथ्यात्वधर्मित्वेनेत्यनेन मिथ्यात्वानुमानपक्षत्वेनेत्येवार्थो विवक्षितः। तथाच मिथ्यात्वस्य सत्यत्वे सर्वेषां पक्षतयाऽभिमतानां मिथ्यात्वधर्मित्वं यद् विवक्षणीयम्, तदनुपपन्नं स्यात्; ततश्च पक्षैकदेशे बाधेनांशतो बाधापत्तिर्मिथ्यात्ववैशिष्ट्यभङ्गप्रयुक्ता भवत्येव, इति नित्यसमा जातिरपरिहरणीयैव।

विठ्ठलेशीयटिप्पणी

**यतोऽबाध्यत्वं सत्त्वेन प्रतीत्यर्हत्वं सत्तादात्म्यपर्यवसितं च, तयोरभावौ; तावपि न परस्पराभावरूपावित्युक्तं न विस्मर्तव्यमित्यर्थः। *एतेन*—सत्यत्व-मिथ्यात्वयोः समुच्चयोक्तावप्याचार्यमतविरोधपरिहारोऽपि—*सूचितः*॥ तत्र मूले 'परस्परविरहरूपत्वेऽपी'त्यादिना प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्व-तदभावसत्यत्वयोः परस्परविरहरूपयोरेव विषमसत्ताकत्वमुक्त्वा व्यावहारिकयोरेव तयोः समुच्चयस्याभिधानेऽप्याचार्याभिमतसत्त्वासत्त्वविरोधानभ्युपगमेन तदभिधानस्य निर्बाधत्वात्। उक्तविरोधानभ्युपगमश्च संयोग-तदभावदृष्टान्तेन मूले ध्वनितः। स्पष्टीकृतश्चासौ टीकायाम्। विशदीकृतश्चात्रेत्यनुसन्धेयम्। *नन्वेवम्* आचार्याभ्युपगतसत्त्वासत्त्वविरोधानभ्युपगमेन समुच्चयोक्तिसमर्थने तन्मतविरोधो दुष्परिहर इत्यत आह—*किंचेति*॥ बौद्धमतनिराकरणपरस्याप्यद्वैतमतनिराकरणपरत्वमपि स्यात्, एकस्य वाक्यस्योभयपरत्वं सम्भवति; महाभाष्योदाहृत-'श्वेतो धावती'त्यादिवाक्यवत्, इत्यत आह—*नत्विति*॥ *ननु*—अद्वैतमतनिराकरण आचार्यतात्पर्याभावेऽपि तद्वाक्योक्ता सत्त्वासत्त्वयोस्तद्व्यतिरेकयोश्च विरोधरूपा युक्तिरेकत्र प्रपञ्चे सत्त्वासत्त्वयोः समुच्चयेऽपि प्रसरन्ती कथं वारणीया? इति—चेत्, *अत्राहुः*—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्, तच्च नासत्त्वम्; तद्घटकप्रतिपत्तेर्विकल्पव्यावृत्तरूपेण निवेशे तुच्छाङ्गीकारे तुच्छे तदभावाद् उक्तमिथ्यात्वाभावः सत्यत्वम्, तच्च स्वरूपसम्बन्धेन सत्पदार्थतावच्छेदकत्वम्, असद्विलक्षणप्रतिपत्त्यादिघटितस्योक्तसम्बन्धो नासति, इति न तत्र सत्यत्वव्यवहारः। ब्रह्मणः स्वरूपाभिन्नस्याप्युक्ताभावस्य तत्त्वविशिष्टत्वेन कथञ्चिदुक्तसम्बन्धोऽस्ति; सत्य-मिथ्याभूतयोस्तादात्म्य-स्वरूपसम्बन्धाङ्गीकारात् तद्व्यवहारोपपत्तिः। नच तयोर्विरोध आचार्यैरभ्युपगतः; अप्रकृतत्वात्, नापि तदभावयोः; असति समावेशाच्च, किन्त्वर्थक्रियाकारित्वादिरूपसत्त्वतदभावरूपासत्त्वयोस्तदभावयोश्च, सोऽपि बौद्धाभ्युपगत एवाचार्यैरनूदितस्तन्मतदूषणाय; स्वमतेन तद्दूषणासम्भवात्। नच—गोत्व-तदभावयोरिव समानसत्ताकयोः प्रतियोग्यभावरूपयोरुक्तमिथ्यात्व-तदभावरूपसत्त्वासत्त्वयोर्विरोध आचार्याभ्युपगत एव सामान्यत इति—वाच्यम्; मिथ्यात्वग्राहकश्रुत्यनुमानाभ्यामुक्तविरोधमुपमृद्यैव तयोर्मिथ्यात्वसाधनात्। उदयनाचार्याणां चेदमेव संमतम्; तेषां प्रतियोग्यभावयोर्विरोधाभ्युपगमस्तु मन्दाधिकारिसमुद्धारार्थम्; परमकारुणिकमुनिप्रणीतन्यायशास्त्रव्याख्यातृत्वात् तत्सिद्धान्तानुरोधेन, न तु स्वरसेन। अत्र च तेषां सर्वमतापेक्षयाऽद्वैतमतस्य श्रैष्ठ्यकथनमेव प्रमाणयति—*अद्वैतमतस्य सर्वमतश्रेष्ठतया बौद्धाधिकार एवोक्तत्वादिति*॥ तैस्तथोक्तावनाश्वसन्तं प्रति तच्छ्लोकमेवोपन्यस्यति—*तथाहि—न ग्राह्यभेदमिति*॥ *विज्ञानवादेति*॥ ग्राह्यो घटादिरलीको विज्ञानस्यैवाकारः, न तु ततो भिन्नाभिन्न**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अस्मिन् विज्ञानवादिदूषणोपसंहाररूपे पद्येऽयमर्थः । *ग्राह्यभेदम्=घटादिबाह्यार्थम्, तिरस्कृत्य घटादि-

### न्यायामृतसौगन्ध्यम्

'त्वदीये'त्याद्यशुद्धम् ; तात्त्विकस्यैवा(१)भ्युपगमात्, सम्बन्धे बाधकाभावात्, बौद्धाधिकारोक्तस्य सर्वस्य मया त्वया चानभ्युपगमात् ॥ 'प्रागभावे'त्याद्यशुद्धम् ; आश्रयं विना प्रतियोगित्वस्योभयत्राव-स्थानसाम्येनासत्त्वस्याकिंचित्करत्वात् ॥

'वस्तुशून्ये'त्याद्यशुद्धम् ; यत्र तादृशप्रतियोगित्वादिकं न भासते—'चैतन्यं पुरुषस्य स्वरूप-मि'त्यादौ, तत्रैव तेषां विकल्प (२) इति व्यवहारात्, विकल्पस्य ज्ञानभिन्नत्वे स्मृतिव्यवहाराद्यनापत्तेः ॥

यत्तु—'भेदो भिन्ने वे'त्ययुक्तम् ; वैतण्डिकतामाश्रित्य वदतो मम स्थापनीयाभावेन मां प्रति जाते-र्व्याघातकत्वं नास्ति ; सर्वदृश्यानां खण्डनयुक्तिभिर्बाधस्य ममेष्टत्वात्—इति, तन्न; ब्रह्ममीमांसाधिकरणेषु सिद्धान्त्यभिमतार्थस्य खण्डनयुक्तिभिर्बाधसंभवेन तन्मीमांसाया उच्छेदापत्तेः । एवं ब्रह्मणोऽपि तद्युक्तिभि-र्बाधापत्तिश्च । नच—ब्रह्मणोऽसंसृष्टत्वेन तर्काविषयत्वेन सर्वसाक्षित्वेन च बाधासंभव इति—

### सौगन्ध्यविमर्शः

एतेन—मिथ्यात्वस्य तात्त्विकत्वे मिथ्यात्वधर्मिताया व्याहतत्वमिति—परास्तम्; न हि तात्त्विकं मिथ्यात्वं मिथ्येति वयं वदामः, येन व्याहतिः, किन्तु मिथ्यात्वस्य सत्यत्वपक्षे तत्साधारणपक्षतावच्छेदकनिर्देशानुपपत्तिं तत्साधारण्येन मिथ्यात्वानुमानप्रयोगानुप-पत्तिं वा, इति कथं न व्याहतिः ? वस्तुतस्तु "मिथ्यात्वतात्त्विकत्वे प्रपञ्च-तन्मिथ्यात्वनिष्ठस्यैकस्य मिथ्यात्वस्याभावात्" इति वदता भवताऽपि मिथ्यात्ववैशिष्ट्यभङ्ग एव पक्षतावच्छेदकावच्छेदेन समर्थ्यते, इति कथं नित्यसमा जातिरेव भवता न समर्थ्यते तत्खण्डन-परेणापि ? इति साधु सुगन्धितम् । यत्तु—अतात्त्विकमिथ्यात्वान्तरस्य तात्त्विकमिथ्यात्वधर्मित्वे बाधकाभाव इति, तत्रेदं पृच्छ्यते—मिथ्यात्वे मिथ्यात्व-सत्यत्वविकल्पप्रकरणे कति मिथ्यात्वानि विषया इति । एकमेव मिथ्यात्वमधिकृत्य मिथ्यात्वसत्यत्वविकल्पनाद् मिथ्यात्वतात्त्विकतापक्षेऽतात्त्विकमिथ्यात्वमतात्त्विकमिथ्यात्वपक्षे तात्त्विकमिथ्यात्वान्तरं चाप्रसिद्धमिति यदि मन्यते, तर्हि तु तात्त्विकमिथ्यात्वधर्मित्वमतात्त्विकमिथ्यान्तरस्येति शून्यमिदं वचनम् ।

(१) असत्त्वस्य तात्त्विकत्वं सताऽसतः सम्बन्धश्च स्वपरिभाषामात्रसिद्धम्, सत्त्वं सम्बन्धमात्रमिति च स्वपूर्व-ग्रन्थविरुद्धम्, असतोऽपि तात्त्विकसत्त्वाभ्युपगमे सदसतोर्विशेषाभावः । बौद्धाधिकारस्य प्रमाणविरुद्धांश एवोभाभ्याम-प्रामाण्यस्य स्वीकरणमुचितम् , प्रागभावप्रतियोगित्वादिकं हि कदाचित् स्वरूपतः सत एव भवति, नात्यन्तासतः ; अन्यथा शशविषाणं ध्वस्तमित्यादिव्यवहारापत्तेः । अत एवासतो विकल्पाख्यैव प्रतीतिः, न तु भ्रम-प्रमादिरूपा ; तथाच पातञ्जलस्मृतिविरोधोऽप्यपरिहरणीयः, इति पूर्वमेव वर्णितम् । न हि शशशृङ्गादीनां स्मृति-व्यवहारादिकमस्ति ॥

*वस्तुतस्तु*—प्रपञ्चाभावत्वेन प्रपञ्चनिषेधेऽपि न प्रपञ्चस्य नाधिकसत्ताकत्वम्, प्रपञ्चासाधकत्वात् प्रपञ्चाभाव-निषेधज्ञानस्येत्याद्यन्यत्र व्यक्तम् ।

### विट्ठलेशीयटिप्पणी

इति साकारविज्ञानवादे, क्षणिकविज्ञानमात्मा इति च वाद इत्यर्थः । अश्रुतपरिभाषासंवृतमर्थं विवृणोति—*अयमर्थ इति* ॥ ग्राह्यभेदमिति* ॥ घट-पटादिज्ञानानां भेदकं घट-पटादिरूपम् *बहिः=भूतलादौ प्रत्यक्षादिना प्रतीयमानमर्थं तिरस्कृत्यालीकत्वोपगमेन ज्ञानव्यावर्तकतया स्वीकृत्य घटादिरूपो यो ज्ञानाभिन्न आकारः, तेन रूपेण ज्ञानस्य वृत्तिः, ज्ञानान्तरभिन्नत्वेन संबन्धः क्वापि देशे काले वा नास्ति ; 'इदानीं घटमहं जानामि' 'इदानीं पटमहं जानामि' इत्याद्यनुभवेषु घट-पटादिविशेषणेनैव ज्ञानानां परस्परव्यावृत्ततया भानादित्यर्थः । प्रत्यक्षादिप्रमाणसिद्धघटादीना-मलीकत्वोपगमासंभवात्, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "नेह नानाऽस्ति किंचन" इत्यादिप्रबल-श्रुतिप्रमाणेन परोक्षघटादिमिथ्यात्वनिश्चयेऽप्युपादानमूलाज्ञानानिवृत्त्या घटादिप्रत्यक्षादिभ्रमानिवृत्त्या चैन्द्रजालिकवद्

न्यायामृतम्

(१) उक्तं हि—"मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् ।
सत्यत्वस्य च सत्यत्वे सत्यत्वं स्थापितं भवेत् ॥" इति ।

किंच "धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥" इति

तरङ्गिणी

मेवेत्याह—*उक्तं हीति* ॥ नित्यसमजातिलक्षणाभावाच्च न सा प्रकृते प्रसज्जतीत्याह—*किञ्चेति* ॥

न्यायामृतकण्टकोद्धारः

मिथ्यात्वे मिथ्यात्वाभाववत् सत्यत्वस्य सत्यत्वे सत्यत्वाभावाभावादित्यर्थः । आदिशब्देन व्याप्त्यादि-युक्ताङ्गहीनत्वपरिग्रहः ; लक्षणाभावाच्च न जात्युत्तरत्वमित्याह—*किञ्चेति* ॥ न केवलमस्मत्प्रयुक्त-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रूपाकाराभिन्नरूपेण ज्ञानस्य *वृत्तिः=सम्बन्धः क्वापि नास्ति, घटादिबहिरर्थबाधके=अद्वैतब्रह्मरूपाधिष्ठान-साक्षात्कारे जाते तु *बलिनि=सर्वेभ्यो द्वैतवादिमतेभ्यो बलवति *वेदनये=वेदान्तदर्शने *जयश्रीः= जयोत्कर्षकाष्ठा । बौद्धमतापेक्षया तार्किकमते जयः, तदपेक्षयापि सांख्यादिमते, आत्मनोऽसङ्गत्वादिस्वीकारात् ; तदपेक्षया वेदान्तिमते ; द्वैतमिथ्यात्वादिस्वीकारात्, अतो जयोत्कर्षकाष्ठा ।

विट्ठलेशीयटिप्पणी

ज्ञानव्यावर्तकत्वसंभवादिति भावः । *ननु*—शुद्धचित्तस्योक्तश्रुत्यर्थश्रवण-मनन-निदिध्यासनैरद्वैतब्रह्मरूपाधिष्ठान-साक्षात्कारे सत्युपादानमूलाज्ञाननिवृत्त्या घट-पटादिप्रपञ्च-तद्भ्रमनिवृत्तावप्रतीयमानानां घटादीनां न ज्ञानव्यावर्तकत्व-संभवः, इत्यत आह—*घटादिबहिर्थेति* ॥ *बाधके=उपादानाज्ञाननिवृत्तिसहितनिवृत्तिजनके । *अद्वैतब्रह्मरूपाधिष्ठान-साक्षात्कार इति* ॥ जीवन्मुक्तस्य समाधिकाले विदेहकैवल्यावाप्तिपूर्वकाले वेति शेषः । *वेदान्तदर्शने जयश्रीरिति* ॥ नित्यैकविज्ञानरूपब्रह्मरूपपरमपुरुषार्थसिद्धेरिति भावः । तदुक्तं बौद्धाधिकारविवृतौ तार्किकशिरोमणिभिः—*"उपसंहरति —*तस्मादिति* ॥ ग्राह्याणां नील-धवलादीनां हि भेदात् प्रतिनियततद्विषयकज्ञानानां भेदसिद्धिः, ग्राह्यभेदबाधने च ज्ञानभेदसाधकस्य प्रतिनियतविषयकत्वस्याभावात् क्षणिकानेकविज्ञानधाराकल्पने गौरवाद् एकत्वे च लाघवाद् बलवत्यौपनिषदे नये जयश्रीः । "एकमेवाद्वितीयम्" "सत्यं विज्ञानम्" "आनन्दो ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युपनिषदो नित्यमद्वितीयं ज्ञानं प्रतिपादयन्ती"ति ॥ *ननु*—'जयश्रीरि'त्यस्य जयप्रयुक्तशोभार्थकत्वे श्रीपदं केवलं पादपूरकं स्यात्, जयातिरिक्तशोभाविवक्षणे प्रयोजनाभावात्, एवं वेदान्तमते न केवलं प्रकृतबौद्धमतापेक्षया जयः, किंतु सकलद्वैतमतापेक्षया, इति 'बलिनी'त्यस्य सर्वेभ्यो द्वैतवादिभ्यो बलवतीत्येतद्व्याख्यानेन सूचितम् । तेनेतरमतानां स्वान्य-यत्किंचिन्मतापेक्षया जयोऽस्तीत्यपि लभ्यते, अतस्तदनुक्त्या न्यूनता च इत्याशङ्क्य, रूप-गुणादिनोत्कर्षपरमावधि-भूतलक्ष्मीवाचकश्रीशब्दमुत्कर्षकाष्ठार्थकतया व्याचष्टे—*जयश्रीरिति* ॥ *जयोत्कर्षकाष्ठेति* ॥ *जयः=उत्कर्षः । ततोऽप्युत्कर्षः, तस्यापि काष्ठा, उत्कर्षनिरूपकतदपेक्षयोत्कर्ष इत्यर्थः । एतेषां सामानाधिकरण्यस्याभावाद् वेदान्त-दर्शनसामान्ये न संभवः, इत्यतः पृथक्कृतं तदधिकरणं दर्शयति—*बौद्धमतापेक्षयेति* ॥ *तार्किकमते जय इति* ॥ बाह्यार्थभङ्ग-क्षणभङ्गनिरासेन स्थिरैकबाह्यार्थस्थिरैकात्मस्वीकारे लाघवादिति भावः । *तदपेक्षया=न्यायमता-पेक्षया । *सांख्यादिमत इति* ॥ जय इत्यनुषङ्गः । *आत्मनः=स्थिरैकात्मनः । *असंगित्वेति* ॥ कर्तृत्वाद्य-भावेत्यर्थः । *तदपेक्षया=बौद्ध-न्याय-सांख्यमतापेक्षया । *वेदान्तिमत इति* ॥ अत्रापि जय इत्यनुषङ्गः । सांख्यैः

(१) *ननु* कथं स्वव्याघातमात्रं ? अनयैव रीत्या सत्यत्वं सत्यं मिथ्या वेति विकल्प्य दूषणसम्भवादिति चेत्, न ; मिथ्यात्वस्य मिथ्यात्वे मिथ्यात्वं यथा बाधितं भवति, एवं सत्यत्वस्य सत्यत्वे सत्यत्वं न बाधितं भवति, प्रत्युत स्थापितमेव भवति, इति न स्वव्याघात इत्याशयेन तत्र विकल्पसम्मतिमाह—*उक्तं हीति* ॥ (श्रीनि०)

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यदि तु निष्कामकर्माननुष्ठानात् चित्तं न शुद्धम्, तदा श्रवणादौ सत्यपि तादृशसाक्षात्काराभावेन विश्वमनित्यतया प्रतीयमानमपि तथ्यमेव ; व्यावहारिकसत्यत्वात् । तत्रापाततस्तार्किकादिभिर्विश्वं ब्रह्मवत् परमार्थसत्यमिति वक्तुं शक्यम्, *तथागतस्य = बौद्धस्य तु *मतस्य = ज्ञानादत्यन्ताभिन्नं जगदलीकमित्येवंरूपस्य *कोऽवकाश इति* ॥ किञ्चोदयनाचार्याणां वेदान्तदर्शन एव महती श्रद्धा, बौद्धाधिकार एव हि सर्वदर्शनानि निराकृत्य वेदान्तदर्शनमेव पुरस्कृतं तैः । *तथाहि तत्रोक्तम्*— 'अस्तु तर्हि शून्यतैव परमनिर्वाणमिति चेत्, न ; सा हि यद्यसिद्धा, कथं तदवशेषं विश्वम् ? परतश्चेत् सिद्धा, परोऽप्युपगन्तव्यः । स च परो यदि संवृतिरेव, विश्व-शून्यतयोर्न कश्चिद्विशेषः, तदपि कथमवशिष्येत ?

विट्ठलेशीयटिप्पणी

सत्यस्यापि देहेन्द्रियादिप्रपञ्चस्यात्मनि न संसर्ग इत्युच्यते, वेदान्तिभिस्त्वसङ्गत्वसिद्धये देहेन्द्रियादिप्रपञ्चस्य मिथ्यात्वरूपा युक्तिर्व्यवस्थाप्यते, अतः पूर्वापेक्षयोत्तरस्योत्कर्षनिरूपणाद्व वेदान्तिमते जयोत्कर्षकाष्ठा, उत्कर्षान्तरनिरूपकसर्वमतावधिकोत्कर्ष इत्यर्थः । *नन्वेवम्*—'नोचेदि'त्यादिपक्षान्तरोपन्यासासंभवः, इत्यत आह— *यदि त्विति । *नन्वेवम्*—विश्वान्तर्गतस्य घटादेरुत्पाद-विनाशयोः प्रत्यक्षसिद्धत्वाद् वियदादेस्तु सृष्टि-प्रलयश्रुतिसिद्धत्वात् पूर्वोत्तरकालवृत्त्यभावप्रतियोगित्वात् शुक्तिरजतादिवद् मध्यकालवृत्त्यभावप्रतियोगित्वसिद्ध्यापत्त्या त्रैकालिकनिषेधप्रतियोगित्वरूपासत्त्वापत्तिः, इत्यत आह—*विश्वमनित्यतया प्रतीयमानमपीति* ॥ *तथ्यमेव=स्वप्रतीतिकालेऽबाधितम् । एवकारेणासत्यत्वव्यवच्छेदः ; असतः प्रतीत्यभावात्, शुक्तिरजत-घटादीनां तु प्रतीतिसत्त्वात्, तथापि नाद्वैतहानिरित्याह—*व्यावहारिकसत्यत्वादिति* ॥ व्यवहारकालमात्राबाध्यत्वादित्यर्थः । व्यवहारश्च प्रतीतिः, शब्दप्रयोगः, घटादौ जलाहरणाद्यर्थक्रियादिरूपः । ब्रह्मणस्तु कालत्रयाबाध्यत्वरूपं पारमार्थिकं सत्त्वम् । एवं च 'नोचेदि'ति पक्षान्तरेऽपि वेदान्तदर्शन एव जयश्रीरिति बोध्यम् । *इदम्=सन्निकृष्टं घटादिकं प्रत्यक्षेणानित्यम्, अतीन्द्रियं गुरुत्वादि विश्वमपि *इदृशमेव=अनित्यमेव । *यद्वा*—यथा इदं विश्वमनित्यम्=उत्पाद-विनाशशालि, व्यवहारदशायां स्थितिमत्, ईदृशमेव तथ्यम्=सत्यम् ; पूर्ववद् व्यवहारकालाबाध्यम् । *यद्वा*—इदं विश्वमनित्यम् ईदृशमेव तथ्यम्=अनित्यत्वसामानाधिकरण्ययोग्यव्यावहारिकसत्यत्वाश्रयः, न पारमार्थिकसत्यत्वाश्रयः । पारमार्थिकसत्यत्वस्य ब्रह्मणि नित्यत्वव्याप्यतया नित्यत्वरूपव्यापकव्यतिरेकवत्यावश्यकपारमार्थिकसत्यत्वरूपव्याप्यव्यतिरेकवति 'सन् घटः' इत्यादिप्रतीयमानसत्त्वस्य व्यावहारिकसत्यत्वरूपताया आवश्यकत्वादिति मूलाक्षरार्थः । *वस्तुतस्तु इदम्=विश्वम् । *ईदृशमेव = यादृशमनन्तरं तादृशमेव । तदपि नालीकम्, नापि पारमार्थिकम्, किन्तु अनित्यम् । *तथ्यम्=कदाचिद् व्यवहारकालेऽबाध्यमित्यर्थः ; ज्ञानादत्यन्तभिन्नत्वेन प्रतीयते । 'तथागतमतस्य तु' इति तुशब्दार्थमाह—*तत्रेति* ॥ बाध्ये घटादौ, तत्र व्यावहारिकसत्यत्वे च सतीत्यर्थः । *आपातत इति* ॥ "नेह नाना" "एकमेवाद्वितीयमि"त्यादिश्रुत्यर्थपर्यालोचनया "विश्वं सत्यं मघवाना" इति यथाश्रुतश्रुतिपर्यालोचनेनेत्यर्थः । *कोऽवकाश इति* ॥ सत्त्वेन प्रतीत्यर्हत्वरूपत्यासद्वैलक्षण्यस्य जगति सर्वसिद्धत्वात्, ज्ञानादत्यन्तभिन्नत्वेनैव बहिर्भूतभूतलादौ घटादेरनुभवसिद्धत्वाच्चेति भावः । *ननु*—भिन्नात्मशास्त्रप्रणेतृणामुदयनाचार्याणां बौद्धमतखण्डनप्रस्तावेन तथा श्लोकप्रणयनेऽपि तत्र न तात्पर्यम्, किं च तैर'स्तु तर्हि शून्यतैव परमनिर्वाणमि'ति वेदान्तविरुद्धः शून्यवादोऽप्युपन्यस्यः, तेषां कथं वेदान्तदर्शन एव श्रद्धा सम्भवेत् ? इत्याशङ्क्य, तद्ग्रन्थोत्तरसन्दर्भस्य वेदान्तिमतावलम्बनेन शून्यवादिमतनिराकरणपरस्य वेदान्तदर्शने तेषां महाश्रद्धाद्योतकत्वमाह—*किंचेति* ॥ *पुरस्कृतमिति* ॥ शून्यवादिमाध्यमिकमतनिराकरणायेति शेषः । *तत्र=बौद्धाधिकारे । *अस्तु तर्हीति* ॥ एतद्विवृतौ शिरोमणिराह—सर्वशून्यतावादी माध्यमिकः प्रत्यवतिष्ठते—*अस्तु तर्हीति* ॥ हेयोपादेय-तत्साधनविरहे द्वेष-भय-रागादिविरहात् परमा निर्वृतिरिति, तमेव वेदान्तिमतेन निराकुरुते—*सा हीति* ॥ असिद्धत्वाविशेषाद् विश्वमेव किं न स्यात् ? *परोऽपीति* ॥ *संवृतिः=विकल्पः । *तदपि=शून्यत्वमपि । *कथमवशिष्येत ॥ विश्वस्य संवृति-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

असंवृतिरूपश्चेत् परः, परत एव सिद्धावनवस्था। स्वयमसिद्धा चेत्, कथं शून्यत्वमपि साधयेत्? स्वतः सिद्धा चेदायातोऽसि मार्गेण। *तथाहि*—स्वतः सिद्धतया तदनुभवरूपम्। शून्यत्वादेव न तस्य कालावच्छेद इति नित्यम्। अत एव न तस्य देशावच्छेद इति व्यापकम्। अत एव निर्धर्मकमिति विचारास्पृष्टम्; तस्य धर्म-धर्मिभावमुपादाय प्रवृत्तेः। अत एव तस्य विशेषाभाव इत्यद्वैतम्। प्रपञ्चस्यापारमार्थिकत्वादेव निष्प्रतियोगिकमिति विधिरूपम्। अविचारितप्रपञ्चाक्षेपात्तु शून्यमिति व्यवहारः। तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन कः सम्बन्धः? येनायं प्रकाशत इति चेत्, वस्तुगत्या न कश्चित्, संवृत्या तु गगन-गन्धर्वनगरयोराधाराधेयभाव इव विषय-विषयिभावः। स च यथा नैयायिकैः समर्थयिष्यते, तथैव वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेषः। अविद्यैव हि तथा तथा विवर्तते, यथाऽनुभवीयतया व्यवह्रियते, तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति, गगनमिव स्वप्नदृष्टघटकटाह-कोटर-कुटीकोटिभिः। तदास्तां तावत्, 'किमार्द्रकवणिजो वहित्रचिन्तये'ति। तस्मादनुभवव्यवस्थितावनात्माऽपि स्फुरतीत्यवर्जनीयम्, इति प्रविश वाऽनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीनां पारमार्थिकत्वे" इत्यादि॥ उक्तवाक्यानां संक्षेपेण व्याख्यानम्। *संवृतिः = भ्रमः। *शून्यत्वात् = असङ्गत्वात्। *तस्य = विचारस्य। *निष्प्रतियोगिकम् = प्रपञ्चप्रतियोगिकत्वस्य स्वनिष्ठस्य मिथ्यात्वेन तच्छून्यम्। *विधिरूपम् = निर्विकल्पकधीवेद्यम्। *अविचारितप्रपञ्चाक्षेपात् = यतः प्रपञ्चो विचारासहः, अतस्तस्य श्रुत्या निषेधात्। *प्रकाशते = प्रकाशसम्बद्धः। *संवृत्या = अविद्यया।

विट्ठलेशीयटिप्पणी

सिद्धत्वात्। *असंवृतिरूपः=अनुभवरूपः। *कथमिति*॥ असिद्धेनैव शून्यतासाधने विश्वमेव किं न साधयेत्? *मार्गेण*॥ औपनिषदेन। औपचारिकनित्यत्वादिव्यवहारं समर्थयति—*शून्यत्वादेवेत्यादिना*॥ *शून्यत्वात्= द्वितीयविरहात्। *ननु*—बाध्योऽपि भवन् प्रपञ्चः प्रकाशते, प्रकाशश्चास्य यदि ज्ञानान्तरम्, तदा द्वैतापत्तिः। अथ ब्रह्मैव, तदा यथार्थानुभवस्य ब्रह्मणो विषयत्वात् प्रपञ्चस्य पारमार्थिकत्वप्रसङ्ग इत्याशयेन पृच्छति—*तथापीति*॥ वस्तुतः प्रपञ्चः प्रकाशत इत्येव न, आविद्यकस्तु तथा व्यवहार इति परिहरति—*वस्तुगत्येति*॥ *संवृत्या=अविद्यया। *वेद्यनिष्ठ इति*॥ *आविद्यकस्य=आविद्यकप्रपञ्चसम्बन्धस्य; परमार्थसति ब्रह्मण्यसंभवादिति भावः। घट-पटाद्यनुभवभेदं समर्थयति—*तत्तदिति*॥ एवं च प्रपञ्चवत् तस्याऽऽविद्यप्रकाशान्तरस्वीकारेऽपि न क्षतिरिति मन्तव्यम्। अथ निरस्यन्तु शून्यताम्, औपनिषदाद्वैतवादिनस्तु कथं तथैवे'त्यादि? अत्राविवृतम्, विवृतं च प्रकारान्तरेण स्वयं व्याख्यातुं प्रतिजानीते—*उक्तवाक्यानामिति*॥ व्याख्यानमिति*॥ क्रियत इति शेषः। *संवृतिर्भ्रम इति*॥ परिभाषेयम्। वस्तुतस्त्वाच्छादनपूर्वकत्वाद् भ्रमस्य योगो वा। *शून्यत्वादिति*॥ विवृतौ *द्वितीयविरहादिति व्याख्यातं फलितमित्याह—*असङ्गत्वादिति*॥ *तस्य विचारस्येति*॥ "दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इतिवत्, सर्वनाम्नां क्वचिद् विशेषणपरामर्शित्वस्यापि संभवादिति भावः। अनुभवरूपे ब्रह्मणि प्रपञ्चाभावोऽधिकरणीभूतब्रह्मरूपः। तथाच तस्य प्रपञ्चप्रतियोगिकत्वं कथम्? निष्प्रतियोगिकत्वात्, अत आह—*प्रपञ्चप्रतियोगिकत्वस्येति*॥ यद्यपि विधिरूपमित्यस्य भावरूपमित्यर्थः; तथापि भावाभावयोर्विशेषसूचनाय तत्परतामाह—*निर्विकल्पकधीवेद्यमिति*॥ अभावो हि प्रतियोग्यनुयोगिभ्यां निरूप्यः, न निर्विकल्पकधीविषयः, ब्रह्म तु जातिवदखण्डत्वात् तथेति भावः। विचारानिर्णीतप्रपञ्चस्य सिद्ध्यसिद्धिभ्यां निषेधव्याघात इत्यतो व्याचष्टे—*अविचारितेति*॥ विचारासहः सदसद्भ्यामनिर्वचनीयः। अनिर्वचनीयख्यातिप्रसक्तः। *श्रुत्या = "नेह नानाऽस्ति" "एकमेवाद्वितीयमि"त्यादिश्रुत्या। *निषेधादिति*॥ ब्रह्मण्यभावबोधनादित्यर्थः। स चाभावः स्वस्य व्यावहारिकत्वे प्रपञ्चसत्यत्वापत्तेः पारमार्थिकत्वेऽतिरिक्तत्वे द्वैतापत्तेर्ब्रह्मरूपः, इति सत् प्रपञ्चाभावरूपत्वाच्छून्यव्यवहारविषय इति भावः। प्रपञ्चस्य ब्रह्मवत् प्रकाशाभेदासंभवादाह—

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*विषय-विषयिभावः = विषयिप्रतियोगिकं विषयत्वम् । *नैयायिकैः = मादृशैः । *समर्थयिष्यते = प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयतेत्यादिना निरूपयिष्यते । *तथा = तादृशः । तार्किकमते तादात्म्यान्यसम्बन्धरूपोऽपि वेदान्तदर्शने तादात्म्यरूपस्तार्किकसंमतविषयतात्व-विशेष्यतात्वादिविशेषयुक्त इति भावः । *वेद्यनिष्ठः = वस्तुनिष्ठः, नतु वित्तिनिष्ठः । परस्पराध्यासानुरोधाद् वित्तितादात्म्यस्य वित्तिभिन्नेष्वेव कल्पितत्वात्, वित्तेः स्वप्रकाशत्वेन वित्तिविषयत्वासम्भवाच्च वित्तेस्तादात्म्यरूपा विषयताऽपि वित्तिभिन्नेष्वेव, नतु वित्ताविति भावः । *अस्मिन् दर्शने = वेदान्तदर्शने । *तत्तन्मायेति* ॥ मूलाविद्यापल्लवाविद्येत्यर्थः । मायोपनीततत्तदुपाधीनां भेदादिति वा योजना बोध्या । *वहित्रेति* ॥ महानौकेत्यर्थः । यथा शूर्पादिपात्र आर्द्रकाणि स्थापयित्वा विक्रीणतो वणिजो वहित्रमनुपयुक्तम्, प्रत्युत कार्यविरोधि; समुद्रगतवहित्रस्थस्यार्द्रकस्य तद्ग्राहकसकलसाधारणजनैर्दृष्टत्वासंभवात्, तथा द्वैतमतमेव परिष्कुर्वतो मम वेदान्तदर्शनमनुपयुक्तम्, द्वैतमतपरिष्कारविरोधि च; द्वैतखण्डनयुक्तीनां मिथ्यात्वग्राहकमानस्य च तत्र

**सौगन्ध्यविमर्शः**

अद्वितीयब्रह्मसिद्धिर्द्वितीयमिथ्यात्वनिर्णयाधीना ब्रह्मस्वरूपनिर्णयाधीना च । तत्र द्वितीयमिथ्यात्वं द्वितीया-

**विट्ठलेशीयटिप्पणी**

*प्रकाशसंबद्ध इति* ॥ 'संवृत्ये'त्यस्य भ्रमेणेति नार्थः; आरोप्यस्य भ्रमाजन्यत्वात्, भ्रमेण सह तस्याविद्याजन्यत्वात्, अतो व्याचष्टे—*अविद्ययेति* ॥ जन्यत्वं तृतीयार्थः । अविद्या ह्यारोप्ये दोषविधया परिणाम्युपादानविधया च जनिकेति भावः । *विषयेति* ॥ विषयनिष्ठो विषयिनिरूपितो भावो धर्मविशेष इत्यर्थः, तदाह—*विषयिप्रतियोगिकमिति*॥ यादृश-तादृशपदयोर्ज्ञानविषयतातिरिक्ततदुभयसंबन्धरूप इत्यर्थः । *सतः=पारमार्थिकस्य विषयस्य । *स्वभावविशेषः=धर्मविशेष इत्यर्थः । 'यः' 'सः' इति वक्तव्ये यादृश-तादृशेत्युक्तेः फलमाह—*तार्किकमत इति* । *तादात्म्यान्येति* ॥ भेदासहिष्णवभेदरूपतादात्म्यान्येत्यर्थः । *तादात्म्येति* ॥ भेदसहिष्णवभेदरूपेत्यर्थः । *तुः* एवार्थ इत्याह—*नत्विति । *वित्तिः=ज्ञानम् । *ननु*—रूपभेदेन स्वस्मिन्नपि स्वतादात्म्यसंभवाद् वित्तावपि वित्तेस्तादात्म्यसंभवः, इत्यत आह—*परस्पराध्यासानुरोधादिति*॥ सामानाधिकरण्यप्रतीत्यनुरोधेन दृग्-दृश्ययोरेव परस्परतादात्म्यम्, नतु शुद्धवित्तेः स्वस्याम्; प्रकृते शुद्धवित्तेरप्रकृतत्वात् । तत्र वेद्ये चित्तितादात्म्यं विषयता, वित्तौ वेद्यतादात्म्यं तु विषयितेति बोध्यम् । *ननु*—वित्तौ वित्तेस्तादात्म्यरूपविषयतां विना कथं व्यवहारविषयतेति ? अत आह—*वित्तेः स्वप्रकाशत्वेनेति* ॥ उपसंहरति—*वित्तेस्तादात्म्यरूपा विषयतेति* ॥ मायाया एकत्वात् कथं तत्तन्मायेति ? अत आह—तत्तन्मायेतीति*॥ सा सा चासौ माया चेति न विग्रहः, किंतु स स चासौ मायोपनीतोपाधिश्चेतीत्यभिप्रायेणाह—*मायोपनीतेति* ॥ मायाकल्पितेत्यर्थः । *ननु*—आर्द्रकवणिजोऽप्यार्द्रकानयनाय बलीवर्दादिवहित्रापेक्षेत्यतो व्याचष्टे—*महानौकेत्यर्थ इति* ॥ *ननु*—उदयनाचार्यैर्वेदान्तमतावलम्बनेन बौद्धमतनिराकरणेऽपि तेषां तत्र महती श्रद्धा कुतोऽवगता ? एतदग्रे 'द्वैतवादिनस्तु' इत्यादिना द्वैतवादिमतेनापि तन्मतनिराकरणात्, इत्याशङ्क्य, 'किमार्द्रके'त्याभाणकादेवेति व्यञ्जयितुमाभाणकं व्याचष्टे—*यथेति* ॥ आर्द्रकराशिविक्रयिणां वहित्रमार्द्रकानयन उपयुक्तमेवेत्यत आह—*शूर्पादिपात्र इति* ॥ *वणिजः=एकाकिनोऽल्पधनव्यवसायिनः । अनुपयुक्तमिति* ॥ तस्य बलीवर्देनाप्यार्द्रकानयनसंभवात् । *प्रत्युत कार्यविरोधीति* ॥ अल्पधनस्यैकाकिनो बहुधनबहुसहायसाध्ये स्वकृत्यसाध्ये प्रवृत्तौ स्वप्रवृत्तिसाध्यव्यवहारस्यापि भङ्गप्रसङ्गादिति भावः । आर्द्रकमहाराशिविक्रयिणां महावणिजां महानद्युत्तरतीरत आर्द्रकानयनार्थं वहित्रमेवोपयुक्तम्, अत आह—*समुद्रगतवहित्रस्थस्येति*॥ *तद्ग्राहकेत्यादि* ॥ सकलसाधारणजनप्रसिद्धस्यैवार्थस्याभाणके निबन्धनस्य सांप्रदायिकत्वादिति भावः । प्रकृतं दार्ष्टान्तिकं स्पष्टयति—*तथेति* ॥ *द्वैतमतम्=द्वैतसत्यतामतम् । *परिष्कुर्वतः=एतद्ग्रन्थे परिष्कारार्थं प्रवृत्तस्य मम । अनुपयोगे हेतुः—*द्वैतखण्डनयुक्तीनामिति* ॥ विरोधे हेतुः—*मिथ्यात्वग्राहकेति* ॥ *ननु*—

न्यायामृतम्

तल्लक्षणम्। नचात्र मिथ्यात्वस्य सत्यत्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्ग उक्तः, किन्त्वद्वैतहानिः। प्रत्युत भेदः किं भिन्ने? उताभिन्ने स्यात्? इति त्वदुक्तिरेवाभिन्नादिरूपविशिष्टमात्रनिरासकत्वेन स्वव्याघातापाताद् जातिः। उक्तं हि—"एतामेव जातिमवष्टभ्य शुष्कतर्कवादिनां बौद्धचार्वाक-वेदान्तिनां बालव्यामोहहेतवः कण्ठकोलाहलाः" इति ॥

तरङ्गिणी

*नचात्रेति* ॥ यद्यपि मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य मिथ्यात्वविशिष्टत्वभङ्ग एवोच्यते; तथापि मिथ्यात्वस्य सत्यत्वपक्षे स नोच्यते, किन्तु मिथ्यात्वविशिष्टत्वमेव, अद्वैतहानिस्तूच्यत इत्यर्थः॥ परस्यैव जातिवादित्वमित्याह—प्रत्युतेति* ॥ सूरिभिराघोषितं च परेषां जातिवादित्वमित्याह—*उक्तं हीति* ॥ *अवष्टभ्य=साधनमालम्ब्य ॥

व्यासाद्रिसुततर्काम्बुपूरैः पक्षयुगं युजि। न्यायामृततरङ्गिण्यां माध्वसामान्यभङ्ग ऐत् ॥

न्यायामृतकण्टकोद्धारः

दूषणस्य जात्युत्तरत्वाभावः, अपितु भवत्प्रयुक्ततर्कस्यैव साधारणासाधारणसामर्थ्यवत्त्वेन जात्युत्तरत्वमित्याह—*प्रत्युतेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पुरस्कारात्, तथापि वह्नित्रमिव वेदान्तदर्शनं पुरुषधौरेयस्य परमप्रयोजनं साधयत्येव, इति वेदान्तदर्शने तदन्यसर्वदर्शनेभ्य उत्कर्ष आचार्याभिप्रेत इति ॥

न्यायामृतसौगन्ध्यम्

वाच्यम्; असंसृष्टत्वहेतोर्भावाभावाभ्यां व्याघातात्। किञ्च त्वदभिमतं ब्रह्म प्रमाणवेद्यं वा? नवा? आद्ये प्रमाणविषयत्ववत् खण्डनयुक्तीनामपि तत्र प्रसङ्गसंभवः, द्वितीये ह्यसिद्धिः स्यात् ॥

इति सामान्यतो मिथ्यात्वमिथ्यात्वस्य भञ्जनम्। श्रीन्यायामृतसौगन्ध्ये श्रावितं वनमालिना ॥

सौगन्ध्यविमर्शः

निर्वचनीयत्वसाधनेन भवति, इति तत्र वितण्डावादेन परमतखण्डनमेवास्माकं कर्तव्यम्, ब्रह्मस्वरूपनिर्णयस्तु वेदान्ततात्पर्यनिर्णयाधीनः, इति तत्र स्वपक्षसाधनार्थं खण्डनयुक्तीनामपि निरसनं कर्तव्यमेव। अत एवाविरोधाध्यायादिषु तत्रैव मतान्तरयुक्तीनां निरासः सूत्रकारैः कृतः, नतु द्वितीयमिथ्यात्वविषये। द्वितीयमिथ्यात्वे संशयस्यैवाभावाद् न साक्षात् तदर्थमेकमप्यधिकरणम्। "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिसूत्राण्यपि ब्रह्मण उपादानत्वसमर्थनेनाद्वितीयत्वव्यवस्थापनार्थान्येव, द्वितीयमिथ्यात्वं तु द्वितीयसत्त्वसाधकप्रमाणाभावेनैव। तथाच भेदो भिन्न उताभिन्न इति विकल्पेन वैनण्डिकतामाश्रित्य वदतो मम स्थापनीयाभावेन मां प्रति जातेर्व्याघातकत्वं नास्ति, इति न ब्रह्ममीमांसाया उच्छेदापत्तिः। ब्रह्म हि शब्दप्रमाणमात्रगम्यम्, न तु युक्तिगम्यमिति खण्डनयुक्तीनां न ब्रह्म विषयः ॥

बिन्दुलेशीयटिप्पणी

एतावताऽद्वैताचार्याणां वेदान्तदर्शने प्रतीयते, इत्याशङ्क्य, उक्ताभाणकोपन्यासव्यङ्ग्यं स्पष्टयति—*तथापीति* ॥ *वह्नित्रमिवेति* ॥ महावणिज इत्यादिः। *पुरुषधौरेयस्य=पुरुषश्रेष्ठस्य। *परमप्रयोजनम्*—अविद्यानिवृत्त्युपलक्षितब्रह्मानन्दावाप्तिरूपं मोक्षम्। *साधयत्येवेति*॥ आभाणकतात्पर्यावधिरिति शेषः। एवकारो वेदान्तदर्शनमेवेत्येवमपि योज्यः। *एतेन*—इतरशास्त्राणां मोक्षानुपयुक्तत्वम्—*उक्तम्*; तत्त्वाभिसन्धस्यैव मोक्षश्रवणात्। *वेदान्तदर्शने=श्रीमच्छङ्कराभिमत औपनिषदमुख्यार्थभूतेऽद्वैतवेदान्तदर्शने। *तदन्यसर्वेति* ॥ द्वैतवेदान्त-स्वपरिच्छिद्यमानन्यायादिसकलदर्शनेभ्य इत्यर्थः। *उत्कर्षः=तत्साध्यमोक्षसाधकत्वम्, आचार्याभिप्रेत इति सिद्धम् ॥

**इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योः मिथ्यात्वमिथ्यात्वविचारः ॥**

# अथ दृश्यत्वहेतुविचारः

———:०:———

### न्यायामृतम्

दृश्यत्वहेतूक्तिरपि "स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् तथाहि यः प्रत्ययस्स मृषा दृष्टः, स्वप्नादिप्रत्ययो यथा ॥" इति बौद्धोक्तयुक्तिच्छर्दिमात्रम् । इयांस्तु विशेषः (भेदः)—बौद्धमते ह्यप्रामाण्यस्य स्वतस्त्वात् तद् युक्तम्, त्वन्मते तु प्रामाण्यस्य स्वतस्त्वात् तदयुक्तमिति ॥

### अद्वैतसिद्धिः

*ननु*—मिथ्यात्वे साध्ये हेतूकृतं यद् दृश्यत्वम्, तदप्युपपादनीयम् । *तथाहि*—किमिदं

### तरङ्गिणी

हेतुं निराचष्टे—*दृश्यत्वेति* ॥ *मिथ्या=मिथ्यार्थविषयकः ॥ *प्रत्ययत्वादिति* ॥ मीमांसकरीत्या न्यवयवप्रयोगः । नचालयविज्ञाने शून्यविज्ञाने च व्यभिचारः; विशिष्टप्रत्ययत्वस्य विवक्षितत्वात् । *छर्दिः=ष्ठीवनम् ॥ *बौद्धमत इति* ॥ स्तम्भादिप्रत्ययस्यासदर्थविषयकत्वरूपाप्रामाण्यं स्तम्भादिप्रत्ययग्राहकेणोत्सर्गत एव गृहीतम्, इत्यनुकूलतर्कसद्भावादुक्तानुमानेन स्तम्भादिप्रत्ययस्य मिथ्यार्थकत्वसिद्धिः, अन्यमते तु घटादिज्ञाने प्रामाण्यस्य सदर्थकत्वस्य स्वतस्त्वादबुभुत्सिताग्राहिज्ञानग्राहकेण साक्षिणा प्राग् मिथ्यात्वानुमानात् प्रामाण्यमेव गृहीतम्, इति पश्चात् प्रवृत्तस्य मिथ्यात्वानुमानस्य बाधिततया न स्वसाध्यसाधकत्वमित्यर्थः । सम्भावितप्रकारान् दृश्यत्वस्य दूषयितुं

### न्यायामृतकण्टकोद्धारः

अथ हेतुखण्डनमारभते—*दृश्यत्वहेतूक्तिरपीति* ॥ मिथ्येति* ॥ मिथ्याभूतार्थविषयक इत्यर्थः । *प्रत्ययत्वादिति* ॥ विशिष्टप्रत्ययत्वादित्यर्थः । तेनालयविज्ञानादौ न व्यभिचारः । *छर्दिमात्रमिति* ॥ उद्गिरणमात्रमित्यर्थः । छर्दिमात्रता च तेन प्रत्ययमात्रपक्षीकारे तद्विषयप्रपञ्चमात्रपक्षीकरणम्, प्रत्ययत्वस्य हेतूकरणे प्रत्ययविषयत्वस्य हेतूकरणमित्येवंरूपेति भावः । अस्त्वेवं दृश्यत्वादिहेतूक्तेर्बौद्धयुक्त्युद्गिरणत्वम्, तथापि तन्मत इव मन्मतेऽपि तस्योपपन्नत्वात् तदङ्गीकारो युक्त इत्यत आह—*इयांस्तु भेद इति* ॥ तथाच बौद्धमतेऽप्रामाण्यस्योत्पत्तौ स्वतस्त्वादुत्पद्यमानं ज्ञानमप्रमाणमेव, इति प्रत्ययत्वेनाप्रामाण्यसाधनं युक्तम्, त्वन्मते तूत्पत्तौ प्रामाण्यं (१)स्वतः, इत्युत्पद्यमानं ज्ञानं प्रमाणमेवोत्पद्यते । प्रामाण्यं चाबाधितार्थविषयकत्वम् । एवं च तस्य मिथ्यात्वे साध्यमाने बाधितार्थकत्वमेव साधितं स्यात् । बाधितार्थकत्वमेव चाप्रामाण्यम्, इति विरोधादयुक्तमिति भावः ॥

### सिद्धिव्याख्या

हेतौ दूषणानि परिहर्तुं पूर्वपक्षमुखेनोद्घाटयितुं च पातनिकामारचयति—*नन्विति* ॥ *उपपादनीयमिति* ॥ उपपादनं च कर्तुमशक्यम्, अतो न तेन मिथ्यात्वसिद्धिरित्यर्थः । कुतोऽशक्यत्वम् ? इत्याशङ्क्य तत्र सम्भावित-

---

(१) सत्यमुत्पत्तौ स्वतस्त्वं प्रामाण्यस्यास्मन्मते, तथाप्यप्रामाण्यस्य परतस्त्वात् सति बाधेऽप्रामाण्यं नानुपपन्नमिति न दोषः । यथाच न प्रत्यक्षस्य मिथ्यात्वविरोधिसत्त्वग्राहकत्वम्, न वाऽनुमानबाधकत्वं तथोत्तरत्र स्पष्टीभविष्यति ॥

न्यायामृतम्

किं चेदं दृश्यत्वम् ? (१)वृत्तिव्याप्यत्वम् ? फलव्याप्यत्वं वा ? साधारणं वा ? कदाचित्

अद्वैतसिद्धिः

दृश्यत्वम्—वृत्तिव्याप्यत्वं वा ? (१)फलव्याप्यत्वं वा(२) ? साधारणं वा(३) ? कदाचित् कथंचित्

तरङ्गिणी

पृच्छति—*किं चेति* ॥ इन्द्रियार्थसन्निकर्षाद् बाह्येन्द्रियद्वारा निस्सृतान्तःकरणपरिणामो वृत्तिः। तद्व्याप्यत्वम्—तया प्राप्यत्वम्, तया सह सम्बन्धविशेष इत्यर्थः ॥ *फलेति* ॥ उक्तरूपायां वृत्तौ प्रतिबिम्बितं चैतन्यं फलम्; तेन सम्बन्धः; तद्व्याप्यत्वमित्यर्थः ॥ *साधारणमिति* ॥ वृत्तिव्याप्य-फलव्याप्ययोरनुगतं व्यवहारप्रयोजकविषयत्वं वा, तदन्यतरत्वादिकं वेत्यर्थः ॥ *कदाचिदिति* ॥ स्वस्याविद्यमानतादशायां चिदविषयत्वेऽपि विद्यमानतादशायां चिद्विषयत्वं कदाचित् चिद्विषयत्वम्; 'धर्मं न जानामी'त्यज्ञानोपरागेण वा, 'घटं जानामी'ति ज्ञानोपरागेण वा चिद्विषयत्वं कथंचित् चिद्विषयत्वमित्यर्थः ॥

न्यायामृतकण्टकोद्धारः

पराभिप्रेतदृश्यत्वनिरुक्तिं खण्डयितुं पृच्छति—*किं चेति* ॥ *साधारणमिति* ॥ वृत्तिव्याप्य-फलव्याप्यसाधारणं ज्ञानविषयत्वमित्यर्थः। *कदाचित् कथंचिदिति* ॥ *कदाचित्*—स्वसत्ताकाले। तेनातीतघटादौ न भागासिद्धिः। नित्यातीन्द्रियादौ भागासिद्धिवारणाय—*कथंचिदिति* ॥ ज्ञातत्वा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*वृत्तिव्याप्यत्वम्*=वृत्तेराकाराख्यं विषयत्वम्। वृत्तित्वं तु 'ह्रीर्धीर्भी'रित्यादिश्रुत्याऽनूद्यमानो धीत्वरूपो

सिद्धिव्याख्या

प्रकारान् दूषयितुं पृच्छति—*किमिति* ॥ *वृत्तीति* ॥ इन्द्रियार्थसन्निकर्षाद् बाह्येन्द्रियद्वारा निःसृतान्तः-करणपरिणामो वृत्तिः, तद्व्याप्यत्वं तया व्याप्यत्वम्, तया सह सम्बन्धविशेषः। *फलेति* ॥ उक्तरूपायां वृत्तौ प्रतिबिम्बितं चैतन्यं फलम्, तेन सम्बन्धः; तद्व्याप्यत्वमित्यर्थः। *साधारणमिति* ॥ वृत्तिव्याप्य-फलव्याप्यानुगत-मित्यर्थः। तच्च व्यवहारप्रयोजकविषयत्वम्, तदपि वृत्तिव्याप्यत्व-फलव्याप्यत्वान्यतरत्वमिति द्रष्टव्यम्। *कदाचि-दिति* ॥ स्वस्याविद्यमानतादशायां चिदविषयत्वेऽपि विद्यमानतादशायां चिद्विषयत्वं कदाचित् चिद्विषयत्वम्, 'धर्मं न जानामी'त्यज्ञानोपरागेण वा 'घटं जानामीति' ज्ञानोपरागेण वा चिद्विषयत्वं कथंचित् चिद्विषयत्वमित्यर्थः ॥

विट्ठलेशीयटिप्पणी

एतावता मिथ्यात्वानुमाने मिथ्यात्वरूपं साध्यं पञ्चधा निरुक्तम्। ततस्तत्र हेतुं निर्वक्तुं हेतोर्दुर्वचत्व-मुद्भावयति—*नन्विति* ॥ *हेतूकृतम्*=ज्ञापकत्वेनोपन्यस्तम्। *तदप्युपपादनीयमिति* ॥ संभवद्यथाश्रुतार्थेषु दूषणसत्त्वाद् निष्कर्षणीयमित्यर्थः। के तेऽर्थाः ? कानि च तद्दूषणानीति ? अत आह—*तथाहीति* ॥ 'वृत्ति-व्याप्यत्वमि'त्यत्र व्याप्यत्वं नाव्यभिचरितत्वादिकम्; असंभवात्, अतो व्याचष्टे—*वृत्तिव्याप्यत्वमिति* ॥ आका-राख्यः स्वरूपसंबन्धविशेषः। परोक्षेऽन्तःकरणबहिर्निर्गमनाभावेन विषयासंबन्धात् तत्समानाकारान्तःकरण-परिणामासंभवाच्च प्रत्यक्षस्थले इन्द्रियद्वारा बहिर्निर्गतान्तःकरणस्य घटादिविषयाकारतुल्याकारः परिणामो घटादि-विषयसंबन्धी जायते; घटाद्यावन्तर्बहिर्विलिप्यमानद्रवादिवत्, इति तत्र स्वाकारसदृशाकारत्वं तयोः संबन्धो भवति; तथापि रूप-रसादिगुण-क्रियादीनां निराकारत्वात् स्वरूपसंबन्धरूप इत्युक्तम्। वृत्तिपदानन्तरस्यापि व्याप्यत्वपदस्य व्याख्यानं वृत्तिपदव्याख्यानादल्पत्वात् सूचीकटाहन्यायेन प्रथमं कृतम्। *ननु*—"वृत्तयः पञ्चतय्यः—प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः" इति पातञ्जलसूत्रोक्तपञ्चवृत्तिसाधारणरूपेण वृत्तिपदार्थनिवेशे तुच्छे व्यभिचारः, इत्यत आह—*वृत्तित्वं त्विति* ॥ ह्रीर्धीरित्यादीति* ॥ "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्ये-तत् सर्वं मन एवे"तिश्रुतीत्यर्थः। *अनूद्यमान इति* ॥ विधेयमनस्तादात्म्योद्देश्यतावच्छेदकतयेति शेषः। धीत्व-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

जातिविशेषः। नच—तस्य भ्रमरूपाविद्यावृत्तिनिष्ठत्वमस्ति ? न वा ? *आद्ये* उक्तश्रुतौ "एतत् सर्वं मन एवे"त्यस्यासङ्गतिः ; अविद्यावृत्तेर्मनःपरिणामत्वाभावेन मनस्तादात्म्याभावात्, *अन्त्ये* शुक्तिरूप्यादौ साधनवैकल्यम् ; सुखादौ वृत्त्यस्वीकारेण तत्रासिद्धिश्चेति—वाच्यम् ; पक्षद्वयेऽप्यदोषात्, उक्तश्रुतौ मनःपरिणामरूपाया एव धियो निर्देशेन तस्या एव मनस्तादात्म्योक्तेः सम्भवात्। उक्तश्रुतौ धीमात्रस्य निर्देशेऽपि विशेष्य-विशेषणाकारवृत्तिद्वयावच्छिन्नचित्यपि धीत्वव्यवहारात्, तस्याश्च विशेष्याकारमनोवृत्तिघटितत्वेन 'मन एवे'ति निर्देशसम्भवात्। अत एव संशयरूपविचिकित्साया अप्युक्तश्रुतौ मनस्तादात्म्योक्तेरुक्तरीत्या निर्वाहः ; एककोटिकस्यापातज्ञानस्यैव विचिकित्सापदेन निर्देशात्, द्विकोटिकस्यापि निर्देश एकधर्मिणि कोटिद्वयाकारवृत्तिद्वयावच्छिन्नचित एव विचिकित्सात्वेन तस्या एककोट्याकारमनोवृत्तिघटितत्वेन मनस्तादात्म्यसम्भवात्। धीत्वस्याविद्यावृत्तावस्वीकारेऽपि न दोषः; 'शुक्तिरूप्यादिकं मिथ्ये'त्याकारकमनोवृत्तिविषयत्वमादाय शुक्तिरूप्यसुखादौ

विट्ठलेशीयटिप्पणी

रूपोऽनुगतः प्रत्यक्षसिद्धो विकल्पादिव्यावृत्तो जातिविशेष इत्यर्थः। यद्यपि धीपदार्थवृत्तावुक्तश्रुत्या विधीयमानं मनस्तादात्म्यं मनःपरिणामत्वं विनाऽनुपपन्नं सद् मनःपरिणामत्वं कल्पयति, इत्यविद्यापरिणामरूपभ्रमात्मकवृत्तौ धीत्वासंभवः ; उक्तश्रुतिविरोधात्, तथापि शुक्तिरजतादौ साधनवैकल्यपरिहारायावश्यवक्तव्येऽविद्यावृत्तौ धीत्वस्वीकार उक्तश्रुतिविरोधं परिहर्तुं शङ्कते—*नचेति* ॥ *तस्य=हेतुघटकतावच्छेदकीभूतस्य धीत्वस्य। *एतत् सर्वम्=कामादि प्रत्येकम् ; सर्वे कामाः, सर्वा धिय इति यावत्। *अविद्यावृत्तेः=सर्वधीपदार्थान्तर्गतायाः। *मनःपरिणामत्वाभावेनेति* ॥ मनःपरिणामत्वस्य मनस्तादात्म्यव्यापकत्वादिति भावः। पक्षद्वयेऽपि दोषमाह—*सुखादाविति* ॥ विषयकत्वं सप्तम्यर्थो वृत्त्यन्वयि। *तत्र=सुखादौ। आद्य उक्तं दोषं परिहरति—*मनःपरिणामरूपाया एवेति* ॥ 'एतत्सर्वमि'त्यस्य कामादिघटितसमुदायार्थकत्वसंभवेनाविद्यावृत्तिरूपधीपदार्थे मनस्तादात्म्यबोधानङ्गीकारेणाबाधादिति भावः। *धीमात्रस्येति* ॥ 'सर्वमि'त्यस्य प्रत्येकमन्वयेनेति भावः। *युक्तं चैतत्*—अन्यथा प्रमाहितस्य कामस्य मनःपरिणामत्वम्, भ्रमाहितस्य त्वविद्यापरिणामत्वं स्यादिति। *तस्याश्चेति* ॥ धीमात्रान्तर्गतताया इत्यर्थः। *ननु—एवं मनोवृत्तिघटिते मनस्तादात्म्यव्यवहारस्वीकारे गौणतापत्तिः, इत्याशङ्क्य, अगत्या तस्यास्तत्राऽऽवश्यकत्वमाह—*अत एवेति* ॥ *उक्तरीत्या=उक्तप्रकारद्वयेन। तत्र प्रथमं प्रकारमाह—*एककोटिकस्येति* ॥ अबाधितैककोटिकस्य। *आपातज्ञानस्य=अप्रामाण्यशङ्कास्कन्दितस्य प्रमाणजन्यवृत्तिरूपज्ञानस्य। द्वितीयं प्रकारमाह—*द्विकोटिकस्यापीति* ॥ 'विचिकित्सा तु संशयः' इत्यमरः। तत्र ज्ञानप्रामाण्यस्य संशय इत्यर्थे प्रथमः, विषयस्य संशय इत्यर्थे द्वितीयः प्रकारो बोध्यः। *तस्याः=विचिकित्सारूपोक्तचितः। *एककोटीति* ॥ अबाधितैककोटीत्यर्थः। *ननु*—धीत्वस्याविद्यानिष्ठत्वस्वीकार उक्तप्रकारद्वयेनोक्तश्रुतिविरोधपरिहारस्य शुक्तिरूप्ये साधनवैकल्यपरिहारस्य च सम्भवेऽपि पातञ्जले वृत्तिविभाजकसूत्रे प्रमाणपदार्थप्रमाणजन्यमनोवृत्तेः पृथग् विपर्ययपदार्थभ्रमरूपाविद्यावृत्त्युपादानविरोधो दुर्वारः, इत्यत आह—*धीत्वस्याविद्यावृत्तावस्वीकारेऽपीति* ॥ *न दोषः=शुक्तिरूप्ये सुखे च साधनवैकल्यरूपः। *शुक्तिरूप्यादिकम्=शुक्तिरूप्य-सुखादिकम्। *मिथ्येत्याकारकेति* ॥ 'इदं रजतमि'तीदमाकारैन्द्रियिकवृत्तिकालीना रजताकारा वृत्तिरेवाविद्यापरिणामरूपा। एवं सुखादेः स्वकाले भानं स्वाकारवृत्तिं विनैवान्तःकरणोपलक्षितचैतन्यरूपसाक्षिणा। 'पुरोवर्तिनि भातरजतादिकं मिथ्ये'त्याकारकज्ञानं तु शब्दानुमानादिप्रमाणजन्यमनोवृत्तिरूपम्। एवं 'सुखं मिथ्या' इति ज्ञानमपि तथा। एवं 'सुखमहमस्वाप्सम्' इति स्मृतिवृत्तिरपि मनोवृत्तिरेवेति भावः। *'फलनिष्पत्तावि'ति* धातोः—'असतां लोचनमुकुरे किमपि प्रतिफलति

इन्द्रियार्थसन्निकर्षाद् बाह्येन्द्रियद्वारा निस्सृतान्तःकरणपरिणामो वृत्तिः। तद्व्याप्यत्वं नाम तया प्राप्यत्वम्। विषयत्वमित्यनुक्त्वा व्याप्यत्वमिति वचनं यथा तटाकोदकं कुल्यात्मना बहिर्निर्गत्य केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारेण भवति, तथा सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा बहिर्निर्गत्य विषयं व्याप्य तदाकारं भवति, सेयं वृत्तिरि"ति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

साधनसत्त्वात् । (१)*फलव्याप्यत्वम्=स्वा(२)कारकवृत्तिप्रतिबिम्बितचितो भग्नावरणकचितो वा तादात्म्यम् ।

विट्ठलेशीयटिप्पणी

यद् मनोवर्ती'त्यादौ प्रतिबिम्बे प्रयोगदर्शनात्, प्रतेर्द्योतकत्वात्, द्योतकसमभिव्याहाराभावेऽपि 'शरदि'त्यादौ स्त्रीत्वस्य प्रत्ययात्, 'उन्नवती'त्यत्रेव 'यागात् स्वर्गो भवती'त्यादावुत्पद्यत इत्याद्यर्थादिति दीक्षितोक्तेश्च, फलति=अर्थाद् वृत्तौ प्रतिबिम्बते, इति व्युत्पत्त्या फलशब्दो वृत्तिप्रतिबिम्बितचैतन्यपरः । तादात्म्येन तद्व्यक्तौ तद्व्यक्तेर्व्याप्यत्वस्य तादात्म्यसम्बन्धरूपत्वात्, व्युपसृष्टस्य च सम्बन्धसामान्यार्थकस्याप्लृधातोर्भेदसहिष्णुतादात्म्यरूपसम्बन्धविशेषार्थकत्वात्, तदुत्तरकर्मार्थककृत्प्रत्ययस्य 'चैत्रेण ग्रामः प्राप्तः' इत्यादाविवानुयोगित्वार्थकत्वात्, प्रकृते व्याप्यत्वपदं तादात्म्यरूपतद्विषयतापरमित्याशयेन व्याचष्टे—*फलव्याप्यत्वमिति* ॥ 'रूपवान् घटः' इति चाक्षुषविषयत्वस्य परिणामानङ्गीकारादाह—*स्वाकारकेति* ॥ *प्रतिबिम्बितचित इति* ॥ *ननु*—वृत्तिविषयत्वस्यैव दृश्यत्वपदार्थत्वसम्भवे वृत्तिविषयत्वनियतस्य वृत्तिप्रतिबिम्बितचैतन्यविषयत्वस्य किमिति दृश्यत्वपदार्थत्वस्वीकारः ? इति—चेत्, *शृणु* ; सर्वत्र दृश्येषु प्रमाणवृत्त्या स्वविषयगताज्ञानावरणस्य नाशमात्रं जन्यते, विषयप्रकाशस्तु वृत्तिप्रतिबिम्बितचैतन्यसम्बन्धेनैव, इति वृत्तिप्रतिबिम्बितचैतन्यस्य दृशधातुमुख्यार्थत्वानुरोधात् तादात्म्यरूपतद्विषयत्वस्य दृश्यत्वपदार्थत्वमिति । *तदुक्तं परिभाषायाम्*—"प्रत्यक्षप्रमाकरणं प्रत्यक्षम् । प्रत्यक्षप्रमा चात्र चैतन्यमेव । ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः । *तदुक्तं विवरणाचार्यैः*—"अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्" इति । परन्तु 'तत्त्वमसी'त्यादिमहावाक्यजन्यवृत्त्या शुद्धब्रह्मस्वरूपाज्ञानावरणनिवृत्तौ स्वप्रकाशचैतन्यरूपं ब्रह्म स्वत एव प्रकाशते, मेघाद्यावरणनिवृत्तौ सूर्य इव, न त्ववर्जनीयेनापि वृत्तिप्रतिबिम्बितचैतन्येन जलादिप्रतिबिम्बितसूर्येणेव ; बिम्बभूतस्य प्रकाशस्येतरप्रकाशानपेक्षत्वात्, प्रतिबिम्बभूतस्य बिम्बप्रकाशाभिभूतत्वात् । *तदुक्तम्*—"ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते । स्वयं प्रकाशमानत्वाद् नाभास उपयुज्यते ॥" इति । अतः सत्ये ब्रह्मणि निरुक्तदृश्यत्वरूपहेतोरभावाद् न व्यभिचार इति ध्येयम् ॥

*इदं तु बोध्यम्*—प्रत्यक्षे प्रतिवृत्ति बहिर्निर्गतान्तःकरणप्रतिबिम्बितविषयचैतन्याभिन्नप्रमातृचैतन्यविषयत्वम् । परोक्षे तु स्वस्थानमात्रस्थितान्तःकरणवृत्तिप्रतिबिम्बितप्रमातृचैतन्यविषयत्वम् । शुक्तिरजतस्वाप्नगजादिप्रातिभासिकेषु स्वाकाराविद्यावृत्तिप्रतिबिम्बितसाक्षिचैतन्यरूपप्रमातृविषयत्वम् । बहिर्विषयगताविद्या-

---

परेणोच्यमानत्वाद् विषयं व्याप्येति तदीयवचनानुसारेणेति ज्ञातव्यम् ॥ (१)*फलेति* ॥ उक्तरूपायां वृत्तौ प्रतिबिम्बितं तदुपारूढं ज्ञातृचैतन्यमस्ति, तथात्र घटादिविषयाधिष्ठानचैतन्यं चास्ति । घटाद्यावरकाज्ञानं च तत्रैवास्ति, अस्मन्मते तु पुंगतं तमः, तन्मते विषयगतमज्ञानम् । तथाच चैतन्याधिष्ठितया वृत्त्याऽज्ञाननाशेऽनन्तरं विषयाधिष्ठानं चैतन्यं व्यज्यते । अनन्तरं वृत्तिप्रतिबिम्बितं ज्ञातृचैतन्यं विषयाधिष्ठानचैतन्यं चैकीभवति । अत एव मया ज्ञातो घट इत्यादिव्यवहारः । यद्यपि केवलाया वृत्तेर्नाज्ञाननाशकत्वम्, चैतन्यस्य चाज्ञानस्फोरकत्वाद् नाज्ञाननाशकत्वं युक्तम् ; तथापि वृत्त्युपारूढस्य तद् युक्तम् । यथोक्तम्—"तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् । सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेत् ॥" इति । तथाच ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्याऽधिष्ठानचैतन्यं ज्ञानमित्युच्यते । वृत्तिस्तु ज्ञायतेऽनया चैतन्यमिति करणव्युत्पत्त्या ज्ञानमित्युच्यत इति तत्प्रक्रिया । यथोक्तम्—"स्वच्छेऽन्तःकरणेऽशनिप्रसृमरे नेत्रादिमार्गोद्गते तत्तद्बाह्यचयात्मना परिणते प्रतिबिम्बीभवन्ती चितिरेकाऽप्यर्थ-मनोविशेषकवशाद् द्वैतं प्रपन्ना हरत्यज्ञानम्, प्रकटीकरोति विषयान्—'ज्ञातं मयेदं त्वि'तीति । *प्रसृमरे=समाने । *बाह्यचयात्मना=घटादिबाह्यपदार्थसमूहात्मना । *चितिः=ज्ञातृचैतन्यम् । *अर्थ-मनोलक्षणविशेषकवशात्=व्यावर्तकवशात् । ज्ञातृचैतन्यं विषयाधिष्ठानचैतन्यमिति द्वैविध्यं प्राप्ता विषयान् विषयाधिष्ठानचैतन्यानीति यावत् । अत उक्तरूपायां वृत्तौ प्रतिबिम्बितं चैतन्यं तदभिव्यक्तमधिष्ठानचैतन्यं वा फलम्, तद्व्याप्यत्वं तत्सम्बन्ध इत्यर्थः ॥

(२) अन्तःकरणावच्छिन्नचैतन्यस्य वाऽविद्याप्रतिबिम्बस्य वा जीवत्वमिति मतयोर्हि प्रमात्रन्यस्यैव जगदुपादानत्वेन सर्वदृश्यतादात्म्यस्य प्रमातर्यभावेन 'घटमहं साक्षात्करोमी'त्यादिव्यवहारोपपत्त्यर्थं प्रतिबिम्बाश्रयप्रमावच्छेदकत्वरूपस्य प्रतिबिम्बा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*साधारणम् = वृत्तिव्याप्यत्व-फलव्याप्यत्वयोरन्यतरवत्त्वम् । अन्यतरत्वं च तदुभयमात्रमुख्यविशेष्यकं यद् ज्ञानम्, तन्मुख्यविशेष्यत्वम् । तद्व्यक्तित्वेन ज्ञानस्य निवेशः । तेन—वृत्तिव्याप्यत्वस्यैव हेतुत्वसम्भवेनान्य-वैयर्थ्यमिति—अपास्तम् ॥ *कदाचित् कथंचित् चिद्विषयत्वम् = किंचित्कालावच्छिन्नमावृतानावृतसाधारण-चिद्विषयत्वम्, चित्तादात्म्यमात्रं हेतुः । दैशिकसम्बन्धेन हेतुतालाभायावच्छिन्नान्तम्, कालिकसम्बन्धेन हेतुत्वे

न्यायामृतसौगन्ध्यम्

*ननु* मिथ्यात्वे साध्ये हेतूक्तं दृश्यत्वमुपपादनीयम् । तथाहि—तच्च वृत्तिव्याप्यत्वमिति—चेत्, *न* ; ब्रह्मणि व्यभिचारात्, अन्यथा ब्रह्मपराणां वेदान्तानां वैयर्थ्यप्रसङ्गात् ।

नच—शुद्धं ब्रह्म न दृश्यम्; "यत् तदद्रेश्यमि"ति श्रुतेः, किन्तूपहितमेव, तच्च मिथ्यैव ; न हि वृत्ति-दशायामनुपहितं भवतीति—वाच्यम्, "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते" इति त्वदीयैर्ब्रह्मणस्सर्व-प्रत्ययवेद्यत्वोक्तेः । नच तदप्युपहितविषयकम्; उपहिते उपधेयांशस्य शुद्धस्य वृत्तिवेद्यत्वावश्यकत्वात्,

विट्ठलेशीयटिप्पणी

वृत्त्याद्यन्तःकरणोपहितचैतन्यस्य प्रतिबिम्बस्य स्वतादात्म्यापन्नेदमाकारबहिर्निःसृतान्तःकरणवृत्तिप्रतिबिम्बितेदमवच्छिन्न-चैतन्याभिन्नत्वेन । नचैवम्—प्रमाणवृत्त्यपेक्षायां साक्षिवेद्यत्वं कथमिति—शङ्कनीयम्; इदमाकाराया वृत्तेर-पेक्षणेऽपि रजताकाराया अनपेक्षणात् । अत एवैकविशिष्टज्ञानत्वं भ्रमस्य । यदि तु प्रमात्राश्रिताविद्यावृत्तौ प्रमातुः प्रतिबिम्ब इत्युच्यते, तदा विशृङ्खलज्ञानद्वयत्वं स्यात्, इति बोध्यं साक्षादेव प्रमातृविषयत्वम्, इति न क्वापि भागासिद्धिरित्यभिमानः । 'ञिफला विशरणे' इत्यनुशासनात् फलधातोर्नाशार्थकत्वात्, अधिकरणे घञ्समानार्थक-कप्रत्ययान्तस्याज्ञानावरणनाशविशिष्टचैतन्यार्थकत्वात्, व्याप्यत्वपदस्योक्तार्थकत्वाच्चाह—*भग्नावरणचितो वेति* ॥ प्रत्यक्षस्थले विषयाकारबहिर्निःसृतान्तःकरणवृत्त्या वृत्त्यवच्छिन्नचैतन्यद्वारा प्रमातृचैतन्याभिन्ने विषयचैतन्ये 'घटो नास्ति न भाति' इति व्यवहारप्रयोजकस्याज्ञानावरणस्य नाशः, परोक्षस्थले तु विषयाकारान्तःस्थितान्तः-करणवृत्त्या विषयचैतन्ये प्रमातृ-प्रमाणचैतन्याभिन्ने 'नास्ति' इति व्यवहारप्रयोजकाज्ञानावरणमात्रस्य नाशः, 'न भाती'ति व्यवहारप्रयोजकं त्वस्त्येव । भानं यथारेखोपरेखं प्राकट्यापरपर्यायः स्पष्टः प्रकाश इति बोध्यम् । साधारणपदस्य प्रकृतोभयसाधारणरूपावच्छिन्नपरत्वमाह—*साधारणमिति* ॥ वृत्तिव्याप्यत्व-फलव्याप्यत्वान्यान्य-त्वरूपान्यतरत्वावच्छिन्नपरत्वे स्वघटकवृत्तिव्याप्यत्वातिरिक्तवैयर्थ्यम्, अत आह—*अन्यतरत्वं चेति* ॥ तदुभय-विशेष्यकत्वेन ज्ञाननिवेशेऽप्येतद्दोषतादवस्थ्यम्, अत आह—*तद्व्यक्तित्वेनेति* ॥ उक्तव्याख्याबीजं प्रकाशयति—*तेनेति* ॥ *अन्येति* ॥ तदतिरिक्तेत्यर्थः । भग्नावरणचिद्विषयत्वस्य तु न हेतुत्वसम्भवः; नित्यातीन्द्रियादौ भागासिद्धेः । 'कदाचिदि'त्यस्यार्थमाह—*किञ्चित्कालावच्छिन्नेति*॥ कथञ्चिदित्यस्याह—*आवृतानावृतसाधारणेति*॥ हेतुतावच्छेदकमाह—*चित्तादात्म्यमात्रमिति* ॥ मात्रपदेनावृतानावृतसाधारणत्वव्यवच्छेदः । अवच्छिन्नान्तफल-माह—*दैशिकेति* ॥ *अविद्यादीति* ॥ अविद्या जीव ईश इत्यादिषट्केत्यर्थः । नित्यातीन्द्रियपदे न कर्मधारया-श्रयणम्; तथासंग्रहेण न्यूनतापत्तेः, किन्त्वतीन्द्रियपदघटकातिपदेनातिक्रमक्रियान्वयार्थकेन नित्यपदस्य 'सुप् सुपा'

---

तादात्म्यावच्छेदकत्वरूपस्य प्रतिबिम्बवत्त्वरूपस्य वा संबन्धस्य प्रमातृ-विषययोरभ्युपगमनीयतया घटाद्याकारवृत्तौ वृत्तिकालावच्छेदेन घटादौ वा जीवप्रतिबिम्बसम्भवात् तत्तादात्म्यरूपं फलव्याप्यत्वं सर्वगतमेवेति पूर्वपक्षिणोऽभिमानः । जीव-ब्रह्मणोस्तु जीवानु-पादानत्वपक्षेऽप्यभिन्नतया न जीवप्रतिबिम्बापेक्षा, इति ब्रह्माकारवृत्तिप्रतिफलितजीवचैतन्याभिन्नत्वरूपस्य फलव्याप्यत्वस्य न ब्रह्मणि व्यभिचारः; पक्षद्वयेऽपि ब्रह्माकारवृत्तेरावरणभङ्गार्थत्वस्याभिप्रेतत्वात् । स्पष्टं चैतद् न्यायरत्नाकरव्याम्, इति तत्र द्रष्टव्यम् ॥

### न्यायामृतम्

कथंचित् चिद्विषयत्वं वा ? स्वव्यवहारे स्वातिरेकिसंविदपेक्षानियतिर्वा ? अस्वप्रकाशत्वं वा ? नाद्यः ; आत्मनोऽपि वेदान्तजन्यवृत्तिव्याप्यत्वात् ।

### अद्वैतसिद्धिः

चिद्विषयत्वं वा(४) ? स्वव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियतिर्वा(५) ? अस्वप्रकाशत्वं वा(६) ? नाद्यः ; आत्मनो वेदान्तजन्यवृत्तिव्याप्यत्वेन तत्र व्यभिचारात्, अत एव न तृतीयोऽपि ; नापि द्वितीयः ; नित्यातीन्द्रिये शुक्तिरूप्यादौ च तदभावेन भागासिद्धि-साधनवैकल्ययोः प्रसङ्गात्, नापि

### तरङ्गिणी

*स्वव्यवहार इति*।। अद्वितीयत्वादिविशिष्टचैतन्यव्यवहारेऽपि स्वातिरिक्तसंविदपेक्षाऽस्ति, इत्यव्यभिचाराय— *नियतिरिति* ।। स्वातिरिक्तसंविदपेक्षाव्याप्यस्वव्यवहारकत्वं तदर्थः । चैतन्ये तु स्वातिरिक्तसंविदन्तराभावेऽपि सुषुप्तौ नित्यसिद्धस्फुरणरूपव्यवहारदर्शनाद् न तन्नियम इत्यर्थः ।। *अस्वप्रकाशत्वं वेति* ।। पराप्रकाश्यत्वाभाव इत्यर्थः ।। *आत्मन इति* ।। वेदान्तजन्येनोक्तरूपमनःपरिणामेन वृत्त्याऽऽत्मनोऽपि व्याप्यमानत्वात् तत्र व्यभिचार इत्यर्थः ।।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ह्यविद्याद्यनादिषु भागासिद्धिः । 'स्वव्यवहारे' इत्यादिपक्षद्वयं तु मूले प्रकटीभविष्यति । *नित्यातीन्द्रिये= कदाचिदिन्द्रियमतिक्रान्तं घटादिकम्, नित्यं तदतिक्रान्तं तु गुरुत्वादिकम् ; तत्र, उक्तयोः फलव्याप्यत्वयोरभावेन भागासिद्धिः । वृत्तेरावरण(१)भङ्गार्थत्वपक्षे भग्नावरणेत्याद्येव फलव्याप्यत्वं वाच्यम् ; वृत्त्यादौ चित्प्रतिबिम्बे

### सिद्धिव्याख्या

*स्वव्यवहार इति* ॥ 'सुखमनुभवामी'ति चैतन्यव्यवहारेऽपि स्वातिरिक्तसंविदपेक्षाऽस्ति, इत्यव्यभिचाराय— *नियतिरिति* ॥ स्वातिरिक्तसंविदपेक्षाव्याप्यस्वव्यवहारकत्वं तदर्थः । चैतन्ये तु स्वातिरिक्तसंविदन्तराभावेऽपि सुषुप्तौ नित्यसिद्धस्फुरणरूपव्यवहारदर्शनाद् न तन्नियम इत्यर्थः । *अस्वप्रकाशत्वं चेति* ॥ पराप्रकाश्यत्वाभाव इत्यर्थः । *आत्मन इति* ॥ वेदान्तजन्येनोक्तरूपमनःपरिणामेन वृत्त्याऽऽत्मनोऽपि व्याप्यमानत्वात् तत्र व्यभिचार इत्यर्थः । *अत एवेति* ॥ ब्रह्मणि वृत्तिव्याप्यत्वरूपविशेषस्य सत्त्वेन सामान्यस्यापि सत्त्वाद् व्यभिचारादेव न तृतीय इत्यर्थः । *नित्यातीन्द्रियेति*॥ *एतेन*—अपरोक्षैकरसचैतन्यरूपफलव्याप्यत्वे नित्यातीन्द्रियत्वस्यैव हेतूकर्तव्यतयाऽसति विरोध-

### विट्ठलेशीयटिप्पणी

इति समासमभिप्रेत्य प्रयोजनमाह—*कदाचिदिति* ॥ एवञ्च कदाचिदिन्द्रियगोचरे घटादावुक्तफलव्याप्यत्वसत्त्वाद् नासिद्धिरिति भावः । *तत्र=गुरुत्वादौ । *उक्तयोः=वृत्तिप्रतिबिम्बितचित्तादात्म्य-भग्नावरणकचित्तादात्म्यरूपयोः । *अभावेनेति* ॥ गुरुत्वाद्याकारानुमानिकादिवृत्तेर्बहिर्निर्गमनाभावेन गुरुत्वस्य तद्वृत्त्येकदेशस्थत्वाभावेन वृत्त्यवच्छिन्न-चैतन्ये गुरुत्वावच्छिन्नचैतन्याभेदाभावेन—गुरुत्वे तत्तादात्म्यरूपविषयत्वासम्भवात् समानदेश-कालीनयोर्भिन्नरूपावच्छिन्नयोर्वस्तुतो भिन्नयोरेव तादात्म्यरूपसम्बन्धोपगमात्, वृत्तेराकाराख्यविषयत्वोपगमेऽपि तदवच्छिन्नचैतन्यरूपज्ञानस्य क्लृप्ततादात्म्यान्यविषयत्वानुपगमात् । एवं च गुरुत्वाद्याकारपरोक्षवृत्त्याऽन्तःकरणस्थितया परोक्षे गुरुत्वादौ नाज्ञानावरणशक्तिसामान्यभङ्गः । द्वे ह्यज्ञानस्यावरणशक्ती । एका 'नास्तीति' व्यवहारप्रयोजिकाऽसत्त्वापादिकेत्युच्यते, अपरा 'न भाती'ति व्यवहारप्रयोजिकाऽभानापादिकेत्युच्यते । तत्र प्रत्यक्षवृत्त्या प्रत्यक्षे विषय उक्तशक्तिद्वयस्यापि नाशः, परोक्षवृत्त्या परोक्षविषये स्वसत्त्वापादकावरणशक्तेरेव नाशः,अभानापादकावरणशक्तिस्त्वस्त्येव । प्रकृते च 'भग्नावरणके'त्यनेनावरणशक्तिसामान्यभङ्गविवक्षायां परोक्षे गुरुत्वाद्यसिद्धिरिति भावः । यदि यत्किंचिदावरणशक्ति-भङ्गमात्रं विवक्ष्यते, तदा शुक्तिरूप्यादौ साधनवैकल्यरूपं दोषान्तरमुक्तम्, तत् सङ्गमयति—*वृत्तेरावरणभङ्गार्थत्वपक्षे

---

(१) अविद्यावच्छिन्नचैतन्यमेव जीवः, अज्ञानाश्रयत्वस्य तद्विषयत्वस्य चैकत्रायोगेनाहमज्ञ इत्यादिप्रतीत्यनुसारेण

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मानाभावात्, तथाच शुक्तिरूप्यादौ साधनवैकल्यम्। नच—धर्मिज्ञानेन भग्नावरणकस्य शुक्त्याद्यवच्छिन्न-चैतन्यस्य शुक्तिरूप्यादिकमपि विषय इति—वाच्यम्; स्वावच्छिन्नस्याज्ञानविषयत्वस्य भङ्गविशिष्टचिद्विषयत्व-मेव हि फलव्याप्यत्वशब्दार्थः; अन्यथा गुरुत्वादावपि तदापत्तेः, चिद्विषयत्वस्यैव फलव्याप्यतारूपतापत्त्येतर-भागवैयर्थ्यापत्तेश्च। यत्र विषयत्वं स्थाप्यं तदेव स्वम्। *ननु*—ईश्वरीयायां मायापरिणामरूपायां विद्यमानसर्वविषयिकायां वृत्तौ प्रतिबिम्बितस्य चैतन्यस्य गुरुत्वादि सर्वं दृश्यं विषयः, *उक्तं हि विवरणे—

सिद्धिव्याख्या

तादवस्थ्यमिति—*निरस्तम्*; असत्तुच्छादिपदजन्यप्रतीतिविशेषहेत्वन्तरोपलब्धेश्च। नच—तस्य प्रपञ्चेऽपि सत्त्वेन व्यभिचारः, न ह्यसत्पदादिना प्रपञ्चो लक्षणयाऽपि न प्रतिपाद्यत इत्यस्तीति—वाच्यम्; शक्त्या तुच्छादिपदजन्यप्रतीति-

विट्ठलेशीयटिप्पणी

इति* ॥ *सिद्धान्तलेशसंग्रहानुसारिणस्तु*—द्विविधमज्ञानम्—पुरुषाश्रितं विषयविषयकं च। एकमेव वाऽज्ञानम्, तस्याश्रयतासम्बन्धः पुरुषे, विषयता तु विषये; तत्रापरोक्षवृत्त्याऽज्ञानद्वयस्याप्येकाज्ञानीयोक्तद्विविधसम्बन्धस्यापि वा निवृत्तिः, परोक्षवृत्त्या तु विषयगतस्यैवाज्ञानस्य तत्सम्बन्धस्य वा निवृत्तिः; तत्रावरणभङ्गार्थत्वपक्षे नित्यातीन्द्रिये भागासिद्धिः। तत्र स्वाकारवृत्तिनिवर्त्याज्ञानविषयताकत्वस्य फलव्याप्यत्वरूपत्वात्, स्वाकारवृत्तिनिवर्त्याज्ञाना-श्रयताकत्वस्य फलव्याप्यत्वरूपत्वे शुक्तिरजतादौ साधनवैकल्यम्। अपरोक्षवृत्त्यैवाज्ञानस्य निवृत्तिः, परोक्षवृत्त्या नाज्ञानस्य निवृत्तिः, किन्त्वज्ञानानुभवप्रतिबन्धेनाज्ञाननिवृत्तिभ्रममात्रमिति पक्षे तु स्वाकारवृत्तिप्रयोज्यो योऽज्ञाना-नुभवोऽज्ञाननिवृत्तिभ्रमो वा, तत्कत्वं फलव्याप्यत्वं चेत्, उक्तभागासिद्धिः; स्वाकारवृत्तिनिवर्त्याज्ञानकत्वं फलव्याप्यत्वं चेत्, उक्तं साधनवैकल्यम्—*इत्याहुः* ॥ *मानाभावादिति* ॥ रूपवत एव द्रव्यस्य प्रतिबिम्ब इति नियमात्, चितश्च नीरूपद्रव्यत्वात्, अर्थस्फुरणस्यावरणभङ्गेनैवोपपत्तेश्चेति भावः। *साधन-वैकल्यमिति* ॥ प्रातिभासिकस्य प्रतिभासकाल एव सत्त्वेनाज्ञानविषयत्वानुपगमादिति भावः। *धर्मिज्ञाने-नेति* ॥ इदंत्वप्रकारकेणेति शेषः। 'शुक्तिरूप्यादिकमपी'त्यपिना—इदंत्वविशिष्टा शुक्तिः; तत्तादात्म्यापन्नत्वात् तद्रूप्यस्येति भावः। *स्वावच्छिन्नस्येति*। स्वं यत्र फलव्याप्यत्वमुपपादनीयम्, तत्; घटादि, इदंत्वविशिष्टशुक्त्यादि चेति वक्ष्यते। घटादौ पक्षे फलव्याप्यत्वरूपहेतुसिद्धिः। घटादिकं हि स्वतादात्म्यापन्नस्वाधिष्ठानचैतन्यनिष्ठाज्ञानविषय-तायामवच्छेदकमेव, नत्वज्ञानविषयः, जडत्वात्। जडे च चैतन्यप्रकाशप्रतिबन्धरूपस्याज्ञानकार्यस्याभावात्, जडस्या-ज्ञानविषयतावच्छेदकत्वं त्वावश्यकम्; तत्तज्जडाद्यवच्छिन्नाज्ञानविषयत्वभङ्गं प्रति तत्तदाकारवृत्तेः कारणत्वात्, अन्यथा घटाद्याकारवृत्त्या शुद्धचैतन्यविषयकाज्ञानभङ्गापत्तेः। शुद्धचैतन्यविषयकाज्ञानभङ्गे तु शुद्धचैतन्याकारवृत्तेरेव कारणत्वं बोध्यम्। शुक्तिरूप्यादिकं च न स्वम्; तस्याज्ञानजन्यत्वेनाज्ञानविषयतानवच्छेदकत्वात्, घटाज्ञानजन्यघटच्छाया घटाज्ञानविषयतानवच्छेदकत्ववत्, इति साधनवैकल्यसङ्गतिः। *अज्ञानविषयत्वस्येति* ॥ भङ्गेऽन्वेति। स चाधि-करणरूपात्यन्ताभावोऽपि तादृशाज्ञानविषयत्वाभावो न स्वाकारवृत्तिजन्यः। *अन्यथा=स्वावच्छिन्नत्वस्यानिवेशे विषयान्तरावच्छिन्नाज्ञानविषयत्वभङ्गविशिष्टचिद्विषयत्वस्य स्वनिष्ठस्य स्वनिष्ठफलव्याप्यत्वशब्दार्थत्वे। *गुरुत्वादा-विति* ॥ आदिना प्रत्यक्षपर्वतादिनिष्ठानुमेयवह्न्यादिः। घटाद्याकारवृत्तिजन्याज्ञानविषयत्वभङ्गविशिष्टघटाद्यवच्छिन्न-चिद्विषयत्वादिति भावः। *तदापत्तेः=फलव्याप्यत्वापत्तेः। तथाच नित्यातीन्द्रियेति मूलविरोधो गुरुत्वादेः प्रत्यक्षविषयत्वव्यवहारापत्तिश्चेति भावः। *ननु*—योग्यत्वादिविशेषणस्योक्तफलव्याप्यत्वे निवेशाद् नेयमापत्तिः, अत आह—*चिद्विषयत्वस्यैवेति* ॥ योग्यत्वादिविशिष्टस्येत्यादिः। इष्टापत्तिशङ्कया वैतदवतार्यम्। *इतरभागेति* ॥ भग्नावरणके भाग इत्यर्थः। *वैयर्थ्यापत्तेरिति* ॥ गुरुत्वादिवारणस्यैव तत्फलत्वात् तस्य चासंभवादिति भावः। भागासिद्ध्यादिदोषसंभवमाशङ्कते—*नन्विति* ॥ *विद्यमानेति* ॥ अतीतानामीश्वरस्य स्मरणम्, अनागतसृष्टेरीक्षण-

च जीवस्यैवाज्ञानाश्रयत्वस्यावश्यकत्वात्, अन्तःकरणाज्ञानयोः सामानाधिकरण्याभिप्रायेणोक्तप्रतीत्युपपादनेऽहं मनुष्य इत्यादीना-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'ईशस्य सर्वकर्तृत्वादेव विद्यमानसर्वविषयज्ञते'ति । *उक्तञ्च तत्र तत्त्वदीपने—'ईश्वरोपाधिः सत्त्वप्रधाना माया विद्यमानसर्वविषयाकारेण परिणमते, तस्मिंश्च परिणामे प्रतिबिम्बितं चैतन्यं सर्वं पश्यत्याध्यासिकसम्बन्धादि'ति । अतः कथं भागासिद्ध्यादिकम् ? नच—तदापातत एव पूर्वपक्षिणोक्तमिति—वाच्यम् ; सिद्धान्ते फलव्याप्यत्वव्यतिरिक्तस्येत्यादिग्रन्थासङ्गतेरिति—चेत्, *न* ; फलपदस्य प्रमाफलार्थकत्वात्, ईश्वरीयमायावृत्तेश्च प्रमात्वाभावेन तत्प्रतिबिम्बितचितः फलपदार्थत्वाभावात् । येन हि पुरुषेण यदज्ञातम्, तद्विषयकवृत्तिस्तत्पुरुषीयप्रमा । नचेश्वरेण किञ्चिदज्ञातमस्ति, येन तदीया मायावृत्तिः प्रमा स्यात् । यदि च फलशब्दार्थमपहायेश्वरीयवृत्तिसाधारण एव हेतुरुच्यते, तदा नासिद्ध्यादिदोषः ॥

## सिद्धिव्याख्या

विशेष्यत्वेन हेतुत्वे व्यभिचाराभावात् । नच—येनापराधेनासति प्रतियोगित्वं नेत्यभ्युपगम्यते, तेनैवापराधेनासतस्तुच्छादिपदाशक्यत्वमभ्युपगम्यतामिति—वाच्यम् ; तुच्छादिपदानामसति शक्तिग्राहककोशादिविरोधप्रसङ्गेन तदशक्यत्वस्याभ्युपगन्तुमशक्यत्वात् । नच—संज्ञारूपेण तुच्छादिपदस्य शक्त्या देवदत्तादिप्रतिपादकत्वसम्भवेन तत्पदजन्यप्रतीतिविशेष्यत्वस्य तत्र व्यभिचार इति—वाच्यम् ; संज्ञारूपेण तुच्छादिपदजन्यप्रतीतिविशेष्यभिन्नत्वस्यापि विशेषणेन

## विट्ठलेशीयटिप्पणी

रूपमायावृत्त्युपाधिकेश्वरसाक्षिरूपं विज्ञानम्, इति सर्वज्ञत्वसिद्धिरीश्वरस्येति भावः । *केचित्तु*—ईश्वरस्योपाधिभूतमायापरिणामैश्च चित्प्रतिबिम्बग्राहिभिः कालत्रयवर्तिनोऽपि प्रपञ्चस्यापरोक्ष्येणाकलनात् सर्वज्ञत्वमिति—*वदन्ति*॥ *प्रतिबिम्बितं चैतन्यमिति* ॥ भग्नावरणकचिद्विषयत्वं फलव्याप्यत्वमिति पक्षे नेयं शङ्का, ईश्वरचैतन्यस्य स्वतः सर्वदाऽनावृतत्वेन वृत्तिप्रयोज्यावरणभङ्गविशिष्टत्वाभावात् । *सर्वमिति* ॥ विद्यमानमिति शेषः । *कथं भागासिद्ध्यादिकमिति* । नच—अभ्रान्तेश्वरस्य शुक्तिरजतविषयकमायावृत्तेरभावात् साधनवैकल्ये जागरूके कथं तया अभावात् कथमादिपदोपादानम् ? ईश्वरस्य रजततादात्म्यावगाहित्वेन रजताकाराविद्यावृत्तितादात्म्यापन्नेदंवृत्तिप्रतिबिम्बितचैतन्यरूपजीवभ्रमाकारवृत्तेः शुक्तौ जीवदृष्टं रजतं मिथ्येत्यादिवृत्तेश्च बाधितविषयिण्याः स्वीकारे भ्रान्तत्वापत्तेर्दुर्वारत्वादिति—वाच्यम् ; यतो बाधितस्याबाधितत्वावगाहि बाधितत्वानवगाहि वा ज्ञानं भ्रमः, अन्यथा 'नेदं रजतमि'ति बाधस्यापि भ्रमत्वापत्तेः, सिद्धान्ते घटादेरपि बाधितत्वेन तद्विषयकेश्वरीयमायावृत्तेरपि भ्रमत्वापत्तेश्च । एवं च बाधितत्वेन प्रातिभासिकविषयकेश्वरीयमायावृत्तेर्न भ्रमत्वम्, इति तत्प्रतिबिम्बितचैतन्यविषयत्वेन शुक्तिरूप्यादौ साधनवैकल्येनादिपदसङ्गतिः । बाधावगाह्याहार्यभ्रम-संशययोः पृथग् भ्रमत्वं निरुच्य तस्योक्तभ्रमस्य चान्यतरत्वेनानुगमसंभवात् । *तत्=उक्तभागासिद्ध्यादिकम् । *आपाततः=ईश्वरीयज्ञानमननुसन्धाय । *इत्यादीति* ॥ सर्वस्यापि पक्षस्य क्षोदक्षमत्वादित्यादीत्यर्थः । ग्रन्थासङ्गतेरिति* ॥ ईश्वरीयज्ञानमादाय फलव्याप्यत्वपक्षस्य क्षोदक्षमत्वेन तद्व्यतिरिक्तत्वविशेषणासंभवेन सर्वेषां पक्षाणां क्षोदक्षमत्वात्, इत्यस्यैव वक्तुं युक्तत्वादिति भावः । *प्रमाफलेति* ॥ अज्ञानविषयकवृत्तिप्रतिबिम्बितचैतन्येत्यर्थः । *प्रमात्वाभावेन=अज्ञानविषयकत्वाभावेन । *ननु* घटगुरुत्वादिकं जीवस्य कदाचिदज्ञातमेव, इत्यत आह—*येन हीति* ॥ तत्पुरुषस्य घटादिज्ञानोत्तरजातस्य पुरुषान्तराज्ञातघटादिज्ञानस्य तत्पुरुषीयप्रमात्ववारणाय पुरुषैक्यनिवेशः । नच—कालान्तरे घटादेस्तत्पुरुषाज्ञातत्वादुक्तदोषतादवस्थ्यमिति—वाच्यम् ; कालैक्यस्य निवेशनीयत्वात् । अबाधितविषयकत्वं तु न हेतुघटकप्रमात्वे निवेशनीयम् ; सर्वदृश्यानां सिद्धान्ते बाधितत्वेन हेत्वसिद्धिप्रसङ्गात् । *ननु* सुखादौ वृत्तिस्वीकारेऽप्यज्ञातत्वाभावेन भागासिद्धिः, इत्यत आह—*यदि चेति* ॥ फलशब्दार्थमज्ञातविषयकत्वघटितम् । *ईश्वरीयवृत्तिसाधारणः=स्वाकारवृत्तित्वेनेश्वरीयवृत्तिघटितः स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वरूपः । *तदा नासिद्ध्यादिदोष इति* ॥ निरुक्तभग्नावरणकचैतन्यविषयत्वरूपो हेतुर्यदुच्यते, तदा त्वन्मतेऽपि भागासिद्ध्यादिदोषः, इति

---

मपि तथाऽऽपत्त्याऽन्तःकरणविशिष्टे शरीराध्याससिद्धान्तभङ्गापत्तिरित्यादि विवरणे स्पष्टम् ॥ एवं चाविद्याश्रयस्य जीवस्यैव जगदुपादानत्वात् तदुपरागस्य दृशि असिद्धत्वाद् आवरणभङ्गार्थत्वमेव वृत्तेर्युक्तमिति वाचस्पतिमत इत्यर्थः ॥

### अद्वैतसिद्धिः

चतुर्थः ; 'ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमि'त्यनुभवेनात्मनि व्यभिचारात्, नापि पञ्चमः ; ब्रह्मण्यप्यद्वितीयत्वादिविशिष्टव्यवहारे संविदन्तरापेक्षानियतिदर्शनेन व्यभिचारात्, नापि षष्ठः ; स हि —अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपः । तथाच शुक्तिरूप्यादेरप्यपरोक्षव्यवहारयोग्यत्वेन

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ज्ञातम् = वृत्त्युपहितचिद्विषयः । *अवेद्यत्वे सतीत्यादि*॥ फलाव्याप्यत्वसमानाधिकरणं यदपरोक्षव्यवहार-योग्यत्वं तदभाव इत्यर्थः ।

### सिद्धिव्याख्या

तत्राव्यभिचारात् । तस्मादसत्त्वस्य सदनिर्वाच्यभिन्नत्वादिरूपत्वेन विरोध इति तत्त्वम् । *यदपि*—असति असत्त्व-सद्वैलक्षण्य-निरूप्यमानप्रतियोगित्वाभाव-परोक्षज्ञानव्यवहारादिवत् प्रतीत्यविषयत्व-सद्वैलक्षण्य-निषेधप्रतियोगित्वमप्युप-पद्यते—इति, *तन्न* ; धर्मिसत्तानपेक्षाणां धर्माणां धर्मिणं विनाऽप्यवस्थानसम्भवेऽप्यत्यन्ताभावप्रतियोगित्वं न तथा तिष्ठतीति वाच्यम् ; अन्यथा प्रागभावादिदशायामसत एव घटस्याप्यपरोक्षत्वं स्यात, इत्यतो न तत्र हेतुरस्तीति भावः । *शुक्तिरूप्यादाविति* ॥ पक्षैकदेशसाक्षिमात्रवेद्यान्तःकरण-तद्धर्मसुखादिरादिशब्दार्थः । तेषां साक्षिमात्रवेद्यतया तत्रान्तःकरणवृत्तेरभावेन तत्प्रतिफलितचैतन्यरूपफलव्याप्यत्वस्य सुतरामभावादेवमादिषु साधनवैकल्यप्रसङ्गादित्यर्थः । *ब्रह्म पूर्वमिति* ॥ नित्यातीन्द्रियवद् ब्रह्मणोऽपि ज्ञातत्वेन वाऽज्ञातत्वेन वा साक्षिविषयत्वस्य त्वयाऽप्यङ्गीकार्य-त्वात् तत्राऽऽत्मनि व्यभिचार इत्यर्थः । *अद्वितीयत्वादीति* ॥ स्वप्रकाशत्वादिविशिष्टत्वमादिशब्दार्थः । यस्मिन् कस्मिंश्चिद् आत्मगोचरव्यवहारे स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टविषयके स्वातिरिक्तसंविदो विशेषणविधया नियमेनापेक्षणादिति भावः । *स हीति* ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वम्, तत्र चातीन्द्रियेष्वति-व्याप्तिवारणाय 'अपरोक्षे'त्यादिविशेष्यम् । घटादावतिव्याप्तिवारणाय सत्यन्तं विशेषणम् । ब्रह्मणोऽपि वृत्तिवेद्यतयाऽ-व्याप्तिर्मा भूत्, इति फलव्याप्यत्वाभावो वेद्यत्वं विवक्षितम् । सुप्ति-प्रलयादावपरोक्षव्यवहाररहित आत्मन्यव्याप्तिवारणाय योग्यत्वं विशेषणम् । एवंरूपस्वप्रकाशत्वाभावोऽस्वप्रकाशत्वमित्यर्थः । दूषयति—*तथाचेति* ॥ अविद्यादिरा-दिशब्दार्थः । ततश्चोक्तास्वप्रकाशत्वविशेष्यवति घटादौ विशेषणाभावात् विशेषणवति नित्यातीन्द्रिये विशेष्या-

### विट्ठलेशीयटिप्पणी

'फलव्याप्यत्वव्यतिरिक्तत्वे'त्यादिग्रन्थसङ्गतिरिति भावः । यथाश्रुतस्य कदाचित्पदार्थकिञ्चित्कालावच्छिन्नत्वस्य हेतौ सम्भवाय 'पूर्वं न ज्ञातमिदानीं ज्ञातमि'ति मूल उक्तम् । *ननु*—शुद्धब्रह्मणो वेदान्तजन्यवृत्तिविषयत्वेऽपि तत्प्रति-बिम्बितचैतन्यविषयत्वाभावात् तद्घटितहेतुमत्त्वाभावेन कथं व्यभिचारः ? इत्यतो व्याचष्टे—*ज्ञातं वृत्त्युपहितचिद्विषय इति* ॥ शुद्धचिद्रूपे स्वप्रकाशेऽपि ब्रह्मणि वृत्त्युपहितचितस्तादात्म्येनाध्यस्ततया चित्तादात्म्यरूपनिष्कृष्टहेतौ व्यभि-चार इति भावः । "अहं ब्रह्मास्मि" "तत्त्वमसि" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिषु शुद्धविषयकव्यवहारेषु स्वाकार-वृत्ति-स्वरूपचैतन्ययोरपेक्षायामपि स्वान्यचिद्रूपसंविदपेक्षाविरहाद् मूले 'अद्वितीयत्वादिविशिष्टव्यवहारे' इत्युक्तम् । *संविदन्तरेति* ॥ द्वितीयाभावविशिष्टाकारवृत्तिप्रतिबिम्बितोक्तविशिष्टान्यचिदित्यर्थः । यद्यप्यस्वप्रकाशचैतन्या-श्रयत्वं शुक्तिरूप्येऽपीति साधनवैकल्यस्य वक्ष्यमाणस्य न प्रसक्तिः ; तथापि स्वप्रकाशत्वं स्वरूपप्रकाशाश्रयत्वम्, स्वरूपप्रकाशविषयत्वं वा स्वभेदनियतं ब्रह्मण्यप्रसिद्धम्, अतो व्याचष्टे मूले—*स हीति* ॥ *तथाचेति* ॥ उक्तार्थे चेत्यर्थः । 'अवेद्यत्वे'त्यस्य वृत्त्यविषयत्वार्थकत्वेऽविद्यावृत्तिविषये शुक्तिरूप्ये विशेषणाभावेन हेतुसत्त्वात् 'तथाचे'त्यादिना साधनवैकल्योक्तेरसङ्गतिः, शुद्धब्रह्मणो वृत्तिविषयत्वपक्षेऽवेद्यत्वस्याप्रसिद्ध्या साधनाप्रसिद्धिश्च, तत्त्यागे तु घटादौ प्रत्यक्षे हेत्वसिद्धिः, इत्यतो वेद्यत्वं व्याचष्टे टीकायाम्—*फलव्याप्यत्वेति* ॥ स्वाकारवृत्तिप्रतिबिम्बितचितो अना-वरणकचितो वा तादात्म्यरूपविषयत्वाभावेत्यर्थः । सतीत्येतदर्थतत्सामानाधिकरण्यस्याभावविशेषणत्वे घटादौ प्रत्यक्षे साधनसत्त्वानुपपत्तिः, अतो योग्यत्वरूपप्रतियोगिविशेषणतामाह—*समानाधिकरणेति* ॥ तथाच घटादौ विशे-

अद्वैतसिद्धिः

साधनवैकल्यादिति—चेत्, *मैवम्* ; फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वात् । नच—वृत्तिव्याप्यत्वपक्षे ब्रह्मणि व्यभिचारः, अन्यथा ब्रह्मपराणां वेदान्तानां वैयर्थ्यप्रसङ्गादिति—वाच्यम् ; शुद्धं हि ब्रह्म न दृश्यम् ; "यत्तदद्रेश्यमि"ति श्रुतेः, किंतूपहितमेव, तच्च मिथ्यैव ; नहि

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*क्षोदक्षमत्वात् = विचारसहत्वात् । *अद्रेश्यम् = अदृश्यम् । *उपहितम्=वृत्तिविषयत्वोपहितम् । *ननु* वृत्तिदशायामुपहितमेवास्ति, तस्य मिथ्यात्वे सत्यरूपाधिष्ठानशून्यतापत्तिः, तत्राह—*नहीत्यादि*।। वृत्तिदशायामनुपहितं शुद्धं यदधिष्ठानमरूपमस्ति, तद् नहि तदुपहितं भवतीत्यर्थः । तथाचानुपहितरूपस्योपहितदशायामपि सत्त्वाद्

सिद्धिव्याख्या

भावाद् भवतां मतम् । ततश्चाविद्यान्तःकरण-शुक्तिरूप्यादौ फलाव्याप्यत्वरूपविशेषणवदपरोक्षव्यवहारयोग्यत्वरूपविशेष्यस्यापि सत्त्वाद् विशिष्टव्यतिरेकरूपो हेतुस्तत्र नास्तीति साधनविकलो दृष्टान्त इत्यर्थः । इदमुपलक्षणम्—घटादौ चैतन्यरूपज्ञानविषयत्वस्याप्रामाणिकत्वेनापरोक्षव्यवहारयोग्यत्वरूपविशेष्यवत् फलाव्याप्यत्वरूपविशेषणमपि तत्र वर्तत एव, इति विशेषण-विशेष्ययोर्घटादौ सत्त्वाद् विशिष्टाभावस्तत्र नास्तीत्यसिद्धेश्च, इत्यपि द्रष्टव्यम् । दूषणोद्धाराय स्वाभिमतपक्षान् दर्शयति—*फलव्याप्यत्वेति* ॥ वृत्तिव्याप्यत्वपक्षे ब्रह्मण्युक्तव्यभिचारमनुवदति—*नच वृत्तीति* ॥ *अन्यथेति* ॥ आत्मनो वृत्तिव्याप्यत्वानङ्गीकार इत्यर्थः । *ननु* न वेदान्तवैयर्थ्यम् ; जपाद्यर्थत्वेनोपपत्तेरित्यत आह—*ब्रह्मपराणामिति* ॥ उपक्रमादिलिङ्गैर्ब्रह्मप्रतीतीच्छया पूर्वपूर्वाध्यापकोच्चारितानामित्यर्थः । *वैयर्थ्यप्रसङ्गादिति* ॥ फलाभावादिति भावः । इति नच वाच्यमित्यन्वयः । किं वृत्तिव्याप्यत्वं दृश्यत्वमित्युक्ते ब्रह्मणि व्यभिचार इत्युच्यते ? उत ब्रह्मपराणां वेदान्तानां वैयर्थ्यं वा ? *आद्येऽपि* किं शुद्धे ब्रह्मणि ? उतोपहिते ? इति विकल्पमभिप्रेत्य शुद्धे ब्रह्मणि व्यभिचार इति पक्षं दूषयति—*शुद्धं हीति* ॥ यत् शुद्धं तददृश्यमिति श्रुत्या दृश्यत्वस्य निषिद्धत्वात् शुद्धं न दृश्यमित्यर्थः । तथाचात्र हेतोरभावाद् न व्यभिचार इति भावः । द्वितीयपक्षमर्धाङ्गीकारेण परिहरति—*किं तूपहितमिति* ॥ तत्र हेतुवत् साध्यस्यापि सत्त्वाद् न व्यभिचार इत्याह—*तच्चेति* ॥ *ननु* वेदान्तजन्यवृत्तिदशायामुपाधेरभावादुपहितत्वं न संभवतीत्याशङ्क्य, उपाध्यन्तराभावेऽपि वृत्तरूपाधित्वमस्तीति व्यतिरेकमुखेन दर्शयति—*नहीति* ॥

विट्ठलेशीयटिप्पणी

षणाभावेन विशिष्टाभावरूपहेतुमत्त्वोपपत्तिरिति भावः । *क्षोदः='क्षुदिर् संपेषणे' इत्यनुशासनात् संपेषणम् । स च सूक्ष्मार्थप्रतिपादको व्यापारः, इति प्रकृते विचारो ग्राह्य इत्यभिप्रेत्य व्याचष्टे—*विचारसहत्वादिति* ॥ 'अद्रेश्यमि'त्यत्र दृशेः कर्मणि 'ऋदुपधाच्चा क्लृपि चृतेरि'ति क्यपि छान्दसे रमागमे सिद्धेन द्रेश्यपदेन नञ्समास इत्याह—*अद्रेश्यमिति* । *मूले—किंतूपहितमेवेति* ॥ दृश्यमित्यनुषज्यते । वृत्तिविषय इत्यर्थः । *ननु*—"तत्त्वमसीति" महावाक्यजन्यवृत्तेः कथमुपहितं विषयः ? तदा ह्यज्ञानस्य नाशेनोपाधित्वासम्भवात्, अन्तःकरणादेः सत्त्वेऽपि तदुपहितविषयकत्वं न तत्त्वज्ञानस्य ; स्वातिरिक्तोपाध्यनुपहितब्रह्माज्ञानानिवर्तकत्वप्रसङ्गात्, इत्यतो व्याचष्टे—*उपहितं वृत्तिविषयत्वोपहितमिति* ॥ तथाच तत्त्वज्ञानस्यापि स्वातिरिक्तोपाध्यनुपहितब्रह्मविषयत्वेन मूलाज्ञानसमानविषयकत्वेन तन्निवर्तकत्वोपपत्तिः । स्वात्मकोपाधेश्च न स्वविषयत्वम्, अतो ज्ञानाज्ञानयोर्न भिन्नविषयकत्वम्, न वाऽऽत्माश्रय इति भावः । 'नही'त्यादिफक्किका न वृत्त्युपहितत्वोपपादनपरा ; 'तच्च मिथ्या' इत्यनेन व्यवधानात् । अतस्तामव्यवहितोक्तोपहितमिथ्यात्वोपपादनपरतया व्याख्यातुं तदनुपपत्तिशङ्कयाऽवतारयति—*नन्विति* ॥ *उपहितमेवेति* ॥ नत्वनुपहितं सत्यमित्यर्थः । *तस्य=उपहितस्य । *सत्यरूपाधिष्ठानेति* ॥ आवश्यकाध्यासत्वनिर्वाहायापेक्षितेत्यादिः । यथाश्रुतेऽनुपहिताभावस्यैव लाभेन मिथ्यात्वोपपादनासम्भवात् तत्सम्भवायोपहितमित्यनुषज्य यत्पदमध्याहृत्य व्याचष्टे—*वृत्तिदशायामिति* ॥ *अनुपहितं शुद्धमिति* ॥ वृत्त्यादिरूपोपाधेः परिच्छिन्न-

न्यायामृतम्

अन्यथा ब्रह्मपराणां वेदान्तानां ब्रह्मज्ञानार्थं श्रवणादिविधेश्च वैयर्थ्यम्, ब्रह्म विचारयतोर्गुरुशिष्ययोर्मौनं मौढ्यं च स्यात् ।

तरङ्गिणी

*अन्यथेति* ॥ आत्मनो वृत्तिव्याप्यत्वानङ्गीकार इत्यर्थः । *ननु* न वेदान्तवैयर्थ्यम्; जपाद्यर्थवत्त्वोपपत्तेरिति, अत्राह—*ब्रह्मपराणामिति* ॥ उपक्रमादिलिङ्गैर्ब्रह्मप्रतीतीच्छया पूर्वपूर्वाध्यापकोच्चारितानामित्यर्थः ॥ *श्रवणादिविधेश्चेति* ॥ फलाभावादित्यर्थः । *ननु* न फलाभावः; श्रवणविधेर्विश्वजिन्न्यायेन स्वर्गफलवत्त्वस्यान्ततः सम्भवादित्यत उक्तम्—*ब्रह्मज्ञानार्थमिति* ॥ "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यत्र श्रवणेन भावयेत् किम्? इति फलाकाङ्क्षायां वाक्येन दर्शनं विनियुज्यते, नतु व्यवहितं स्वर्गादि सम्बध्यते; सन्निहितफलाभाव एव व्यवहितस्य कल्पनात्, अतः श्रवणविधिर्ब्रह्मज्ञानार्थस्त्वन्मते व्यर्थः स्यादित्यर्थः । *ननु* न श्रवणविधिर्ब्रह्मज्ञानार्थः; ब्रह्मणोऽदृश्यतया सन्निहितस्यापि दर्शनशब्दस्य तदबोधकत्वात्, अन्यथा भावयेत् किम्? इत्यपेक्षायां समानपदोपात्तं श्रवणमेव वाक्योपात्तदर्शनापेक्षयाऽतिसन्निहितं फलत्वेन सम्बध्येत । एवं च सन्निहितफलाभावे व्यवहितस्यापि ग्राह्यतया स्वर्गाद्यर्थ एव श्रवणविधिः; अतो न व्यर्थ इति यो ब्रूयात् तं प्रत्याह—*ब्रह्म विचारयतोरिति* ॥ *ब्रह्म विचारयतोः*=ब्रह्म विचारयितुमुपक्रान्तयोः । गुरोर्मौनम्, शिष्यस्य मौढ्यम् । चकारः पूर्वदूषणसमुच्चये । यद्वोभयेषामुभयम् । *ननु* आपाद्यमानं मौनं शब्दवक्तृत्वाभावो वा? वेदान्तरूपशब्दवक्तृत्वाभावो

न्यायामृतकण्टकोद्धारः

ज्ञातत्वाभ्यामित्यर्थः । *आत्मनोऽपीति* ॥ तथाचानैकान्त्यमिति भावः । *अन्यथेति* ॥ ब्रह्मणो वृत्तिव्याप्यत्वानङ्गीकार इत्यर्थः । *नन्वेवमपि* वेदान्तानां न वैयर्थ्यम्; तेषां कर्मादिपरत्वात्, इत्यत आह—*ब्रह्मपराणामिति* ॥ *ननु* श्रवणादिविधेरदृष्टार्थत्वाद् न वैयर्थ्यमित्यत आह—*ब्रह्मज्ञानार्थमिति* ॥ "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः" इति विधौ दर्शनानुवादेन श्रवणादेर्विहितत्वात् तस्य ब्रह्मज्ञानार्थत्वं गम्यत इति भावः । बाधकान्तरं चाह—*ब्रह्म विचारयतोरिति* ॥ अन्ये तु—न श्रवणविधिर्ब्रह्मज्ञानार्थः; ब्रह्मणोऽदृश्यतया सन्निहितस्यापि दर्शनशब्दस्य तदबोधकत्वात्, अन्यथा दर्शनापेक्षयाऽतिसन्निहितं श्रवणमेव भावनाफलत्वेन सम्बध्येत । एवं च सन्निहितफलालाभे व्यवहितस्यापि ग्राह्यतया स्वर्गाद्यर्थ एव श्रवणविधिः, अतो न वैयर्थ्यमित्यरुचेराह—*ब्रह्म विचारयतोरिति—इत्याहुः* ॥

*अत्रेदमालोचनीयम्* श्रुतफलपरित्यागेनाश्रुतफलकल्पने "पशुकामो यजेते"त्यत्रापि श्रुतपश्वादिरूपफलपरित्यागेनाश्रुतफलं स्वर्गादि कल्प्येत । यदि च तत्राद्दृश्यत्वरूपबाधकात् तथा कल्पनम्, तर्ह्यत्रापि गौणत्वादिकं बाधकमिति तुल्यम् । किञ्च नादृश्यत्वं तत्र बाधकम् । नहि "यत्तदद्रेश्यमि"त्यादिश्रुतावदृश्यत्वं सर्वथा दृगविषयत्वमभिप्रेतम्; किं तर्हि? वचनवृत्त्या शब्दजन्यवृत्त्यविषयत्वमात्रमेव; अन्यथा सत्य-ज्ञानादिवाक्यानां लक्षणास्वीकारवैयर्थ्यापत्तेः । अपिच ब्रह्मतत्त्वबोधका वेदान्ता इत्यङ्गीकुर्वाणेन मायिना न—श्रवणादिविधिः स्वर्गार्थो न ब्रह्मज्ञानार्थ इति वक्तुं—शक्यते । तथासत्यपसिद्धान्तापातादिति । *यदुक्तम्*—अतिसन्निहितं श्रवणमेव फलत्वेन सम्बध्येतेति, *तदपि न*; भावनाकरणत्वेन श्रुतश्रवणस्य तत्फलतया सम्बन्धापादनस्याप्रामाणिकत्वात् । *मौनं मौढ्यं चेति* ॥ ब्रह्मविषयकबोधजनकत्वे वेदान्तरूपशब्दाप्रयोगो मौनम् । मौढ्यं च तत्त्वज्ञानराहित्यम् । अन्ये त्वत्र—आपाद्यमानं मौनं

सिद्धिव्याख्या

*यत्तु* आद्य-द्वितीययोः फलाभावाद् ब्रह्मपराणां वेदान्तानां वैयर्थ्यमित्युक्तम्, *यदपि चान्यत्*—श्रवणादिविधेः फलाभावाद् वैयर्थ्यम्; ब्रह्म विचारयितुमुपक्रान्तयोर्गुरुशिष्ययोर्मध्ये गुरोर्मौनं शिष्यस्य मौढ्यं च स्यात्,

### न्यायामृतम्

किंच 'ब्रह्मजिज्ञासा' 'ब्रह्मज्ञानमि'त्यादौ कर्मणि षष्ठी, "तमेव धीरो विज्ञाये"त्यादौ द्वितीया, "दृश्यते त्वग्र्यया बुद्ध्ये"त्यादौ तङ्, "आत्मा वा अरे द्रष्टव्यः" इत्यादौ तव्यादिप्रत्ययश्च न स्यात् ।

### तरङ्गिणी

वा ? ब्रह्मज्ञानोद्देश्यकशब्दवक्तृत्वाभावो वा ? नाद्यः ; अज्ञेयत्वेऽपि ब्रह्मणस्तद्विचारे प्रवृत्तयोर्देहनिर्वाहादिहेतुभूतशब्दप्रयोगे विरोधाभावात् , न द्वितीयः ; ब्रह्माबोधकस्यापि वेदान्तरूपशब्दस्य स्तुतशस्त्राधिकरणन्यायेन वचनोपपत्तेः, न तृतीयः ; इष्टापत्तेः, ब्रह्मणो ज्ञानाविषयत्वेन तज्ज्ञानोद्देशेन शब्दप्रयोगस्य मयाऽनङ्गीकरणात् । नचैवम्—ब्रह्मविचारे वेदान्तवाक्यप्रयोगवैयर्थ्यमिति—वाच्यम् ; वेदान्तवाक्यैरेव ब्रह्मविचारस्य विहिततया तत्प्रयोगसम्भवात्, "वेदान्तविज्ञानसुनिश्चितार्थाः" इति श्रुतेरिति—चेत् , *उच्यते* ; उपक्रमादिलिङ्गकस्य ब्रह्मज्ञानेच्छापूर्वकोच्चरितत्वरूपवेदान्तनिष्ठब्रह्मविषयकतात्पर्यावधारणरूपस्य विचारस्यासिद्धेर्मौनशब्दार्थत्वेन विवक्षितत्वात् , ब्रह्मणोऽज्ञेयत्वे निरुक्तविचारस्यासम्भवत्स्वरूपत्वात् , मौढ्यशब्देन ब्रह्मज्ञानाभावोऽभिप्रेत इति न कश्चिद् दोषः ॥ *ब्रह्मजिज्ञासेति* ॥ कृदन्तजिज्ञासाशब्दयोगे जिज्ञासाकर्मभूतब्रह्मगतकर्मत्वमभिदधानाद् ब्रह्मशब्दात् षष्ठी ; "कर्तृ-कर्मणोः कृती"तिसूत्रात् । तस्याश्च "प्रतिपदविधाना षष्ठी न समस्यते" इति समासनिषेधेऽपि "कृद्योगलक्षणा षष्ठी समस्यते"इति प्रतिप्रसवात् समासे जाते "सुपो धातु-प्रातिपदिकयोः" इति सूत्रेण षष्ठीलोपे ब्रह्मजिज्ञासेति पदं निष्पद्यते, एवं ब्रह्मज्ञानमित्यपि । एवं च "ब्रह्मजिज्ञासा' 'ब्रह्मज्ञानमि'त्यादौ कर्मत्वार्थकषष्ठ्यर्थान्तर्भावेण वाक्यार्थो न स्यात् । षष्ठ्यर्थान्तर्भावश्च समासशक्त्या वा पूर्वपदलक्षणया वा लुप्तषष्ठीस्मृत्या वा षष्ठ्यर्थोपस्थितावित्यन्यदेतत् । ज्ञानापरपर्यायवृत्त्यव्याप्यत्वे ब्रह्मणो ज्ञानक्रिययाऽऽप्तुमिष्टतमत्वरूपज्ञानकर्मत्वानुपपत्त्योक्तषष्ठ्यर्थान्तर्भावेण वाक्यार्थो न निष्पद्येतेति भावः ॥ *तमेवेति* ॥ "कर्मणी"ति द्वितीया । तङ्-तव्यादिषु च सम्बध्यते ॥

### न्यायामृतकण्टकोद्धारः

शब्दवक्तृत्वाभावो वा ? वेदान्तरूपशब्दवक्तृत्वाभावो वा ? ब्रह्मज्ञानोद्देश्यकशब्दवक्तृत्वाभावो वा ? नाद्यः ; अज्ञेयत्वेऽपि ब्रह्मणस्तद्विचारे प्रवृत्तयोर्देहनिर्वाहादिहेतुभूतशब्दप्रयोगे विरोधाभावात् , न द्वितीयः ; ब्रह्माबोधकस्यापि वेदान्तरूपशब्दस्य स्तुत-शस्त्राधिकरणन्यायेन तद्वक्तृत्वस्योपपत्तेः , न तृतीयः ; इष्टापत्तेः, ब्रह्मणो ज्ञानाविषयत्वेन तज्ज्ञानोद्देशेन शब्दप्रयोगस्य मयाऽनङ्गीकारादिति—चेत् *उच्यते* ; उपक्रमादिलिङ्गकस्य ब्रह्मज्ञानेच्छापूर्वकोच्चारितत्वरूपवेदान्तनिष्ठब्रह्मविषयकतात्पर्यावधारणरूपस्य विचारस्यासिद्धेर्मौनशब्दार्थत्वेन विवक्षितत्वात्, ब्रह्मणोऽज्ञेयत्वे निरुक्तविचारस्यासम्भावितत्वादित्याहुः ।

*अत्रेदमालोचनीयम्*—परेण ब्रह्मणो ज्ञानविषयत्वानङ्गीकारेणापाद्यमानतया विवक्षितस्य ब्रह्मज्ञानेच्छापूर्वकोच्चरितत्वादिरूपविचारासिद्धिरूपमौनशब्दार्थस्य परं प्रतीष्टत्वेन तृतीयपक्षदूषणपरिहारात्, ब्रह्मापि ज्ञानविषयमिति यदि, तदा तृतीयपक्षेणैवोपपत्तावुक्तकुसृष्टिकल्पनस्यायुक्तत्वात्, तस्मात्कुसृष्टि-समाधानमयुक्तं । *ननु च* वृत्तिकर्मत्वं विवक्षितम् । तथाच वृत्तिविषयत्वेऽपि वृत्तिकर्मत्वाभावान्न व्यभिचार इत्यत आह—*किञ्चेति* ॥ *कर्मणि षष्ठीति* ॥ "कर्तृ-कर्मणोः कृती"ति कर्मणि षष्ठी । यद्यप्यत्र "प्रतिपदविधाना षष्ठी न समस्यते" इति समासनिषेधः ; तथापि "कृद्योगलक्षणा षष्ठी समस्यते" इति प्रतिप्रसवात् समासोपपत्तिः । *दृश्यते त्विति* ॥ अत्र लटः कर्मणि विधानात् तदादेशोऽपि तङ् कर्मणि विहित इति भावः । *तव्यादिश्चेति* ॥ तव्यादीनां 'कृत्याः' "प्राङ् ण्वुलः" इति कृत्यत्वात्

## सिद्धिव्याख्या

'ब्रह्मजिज्ञासा' 'ब्रह्मज्ञानमि'त्यत्र कर्मणि षष्ठी च न स्यात्, कृदन्तजिज्ञासाशब्दयोगे जिज्ञासाकर्मभूतब्रह्मगतकर्मत्वमभिदधानाद् ब्रह्मशब्दात् षष्ठी ; "कर्तृकर्मणोः कृती"ति सूत्रात्, तस्याश्च "प्रतिपदविधाना षष्ठी न समस्यते" इति समासनिषेधेऽपि "कृद्योगलक्षणा षष्ठी समस्यते" इति प्रतिप्रसवात् समासे जाते 'सुपो धातु-प्रातिपदिकयोः' इति सूत्रेण षष्ठीलोपे ब्रह्मजिज्ञासेति पदं निष्पद्यते, एवं ब्रह्मज्ञानमित्यपि। एवं च 'ब्रह्मजिज्ञासा' 'ब्रह्मज्ञानमि'त्यादौ कर्मत्वार्थकषष्ठ्यर्थान्तर्भावेण वाक्यार्थो न स्यात्। षष्ठ्यर्थान्तर्भावश्च समासशक्त्या वा, पूर्वपदलक्षणया वा, लुप्तषष्ठीस्मृत्या वा, षष्ठ्यर्थोपस्थितावित्यन्यदेतत्। ज्ञानापरपर्यायवृत्त्यव्याप्यत्वे ब्रह्मणो ज्ञानक्रिययाऽऽप्तुमिष्टतमत्वरूपज्ञानकर्मत्वानुपपत्त्या षष्ठ्यर्थान्तर्भावेण वाक्यार्थो न निष्पद्यत इति स्पष्टमेव—इति। तथा "तमेव धीरो विज्ञाय" इत्यादौ द्वितीया, "दृश्यते त्वग्र्यया बुद्ध्या" इत्यादौ तङ्, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादौ तव्यप्रत्ययश्च न स्यात्। 'तमि'त्यत्र कर्मणि 'दृश्यते' इत्यत्र (भावकर्मणोः) "तयोरेव कृत्य-क्त-खलर्थाः" इति पाणिनिमहर्षिणा कर्मणि द्वितीया-तङ्-तव्यप्रत्ययादीनां स्मरणात्। दृशोऽज्ञाने दृग्विषयत्वरूपदृश्यत्वज्ञानं च न स्यात्। नच—दृशोऽज्ञानेऽपि वृत्तिव्याप्यत्वं प्रकृतहेतुः स्वज्ञान एव, नहि दृग्विषयत्वरूपदृश्यत्वमत्र हेतुत्वेनाभिप्रेतम्, किंतु वृत्तिव्याप्यत्वरूपमिति—वाच्यम् ; तात्पर्यानवगमात्। न ह्यत्र प्रकृतहेतोरज्ञानमापाद्यते, किंतु मिथ्यात्वे साध्ये वृत्तिव्याप्यत्वरूपं पारिभाषिकं दृश्यत्वं हेतूकुर्वताऽपि प्रकृति-प्रत्ययावगतदृग्विषयत्वरूपदृश्यत्वमपि दुरपह्नवम्, परंतु न तद्धेतुत्वेनाभिप्रेतम्। एवं च हेतुत्वेनानभिमतोऽपि दृग्विषयत्वरूप उपाधिर्यदि वृत्तिव्याप्यः, तदा तदुपाधिविशेषणीभूतदृशोऽपि वृत्तिव्याप्यत्वमवर्जनीयमेव, इति तत्र व्यभिचारः, यदि न वृत्तिव्याप्यः, तदा तदुपाधेर्न मिथ्यात्वसिद्धिर्भागासिद्धिश्च स्यात्—इति दूषणजातम्, तदेतत् सर्वमप्यत एव परास्तम् ; उक्तस्य सर्वस्याप्युपहितपरतया सावकाशत्वात्। नापि तदुपाधिं प्रति विशेषणीभूतायां दृशि व्यभिचारापत्तिः ; उपाधिं प्रति विशेषणतापन्नत्वेन रूपेण तस्या अपि मिथ्यात्वेन तत्र साध्यसत्त्वात्। *केचित्तु*—श्रवणादिविधेः फलाभावाद् वैयर्थ्यमिति यदुक्तम्, तन्न, श्रवणविधेर्विश्वजिन्न्यायेनान्ततः स्वर्गफलवत्त्वस्य संभवात्। नच—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यत्र श्रवणेन भावयेत्, किमिति फलाकाङ्क्षायां वाक्येन दर्शनं विनियुज्यते, नतु व्यवहितं स्वर्गादि संबध्यते ; सन्निहितफलाभाव एव व्यवहितस्य कल्पनात्, अतः श्रवणविधिर्ब्रह्मज्ञानार्थ एव, इति त्वन्मते तद्वैयर्थ्यं तदवस्थमिति—वाच्यम् ; श्रवणविधिर्न ज्ञानार्थः, ब्रह्मणोऽदृश्यतया सन्निहितस्यापि दर्शनशब्दस्य तदबोधकत्वात्। अन्यथा भावयेत् किम् ? इत्याकाङ्क्षायां समानपदोपात्तं श्रवणमेव वाक्योपात्तदर्शनापेक्षयाऽतिसन्निहितं फलत्वेन संबध्येत। एवं च सन्निहितफलालाभे व्यवहितस्यापि ग्राह्यतया स्वर्गार्थ एव श्रवणविधिः, अतो न व्यर्थः। *यदपि*—ब्रह्म विचारयितुमुपक्रान्तयोरित्यादि ; तत्रापि किमापाद्यमानं मौनं शब्दवक्तृत्वाभावो वा ? वेदान्तरूपशब्दवक्तृत्वाभावो वा ? ब्रह्मज्ञानोद्देश्यकशब्दवक्तृत्वाभावो वा ? *नाद्यः* ; अज्ञेयत्वेऽपि ब्रह्मणस्तद्विचारे प्रवृत्तयोर्देहनिर्वाहादिहेतुभूतशब्दप्रयोगे विरोधाभावात्, *न द्वितीयः* ; ब्रह्माबोधकस्यापि वेदान्तरूपशब्दस्य स्तुत-शस्त्राधिकरणन्यायेन वचनस्योपपत्तेः, *न तृतीयः* ; इष्टापत्तेः, ब्रह्मणो ज्ञानाविषयत्वेन तज्ज्ञानोद्देशेन शब्दप्रयोगस्य मयाऽनङ्गीकरणात्। नचैवं—ब्रह्मविचारे वेदान्तवाक्यप्रयोगवैयर्थ्यमिति—वाच्यम् ; वेदान्तवाक्यैरेव ब्रह्मविचारस्य विहिततया तत्प्रयोगसंभवात्, "वेदान्तविज्ञानसुनिश्चितार्थाः" इति श्रुतेः। नच—उपक्रमादिलिङ्गकस्य ब्रह्मज्ञानेच्छापूर्वकोच्चारितत्वरूपवेदान्तनिष्ठब्रह्मविषयकतात्पर्यावधारणरूपस्य विचारस्यासिद्धेर्मौनशब्दार्थत्वेन विवक्षितत्वादेतादृशं मौनं स्यादिति—वाच्यम् ; शुद्धब्रह्मणोऽज्ञेयत्वेन निरुक्तविचारस्यासंभवेऽप्युपहितस्य ब्रह्मणो ज्ञेयत्वे निरुक्तविचारस्यापि संभवत्स्वरूपत्वात्। *अत एव* मौनशब्देन ब्रह्मज्ञानाभावोऽभिप्रेत इति शिष्यस्य न स्यादित्यपि—*निरस्तम्* ; निरुक्तविचारसंभवे तेन जन्येन ज्ञानेन शिष्यस्य ब्रह्मज्ञानाभावस्यैवासंभवादिति न कश्चिद् दोष इति—*वदन्ति* ॥ *परमार्थतस्तु*—शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम्, इति वक्ष्यमाणपक्षे शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न वेदान्तानां वैयर्थ्यम्, न वाऽऽत्मनि व्यभिचार इति द्रष्टव्यम् ॥

न्यायामृतम्

दृशोऽज्ञाने दृग्विषयत्वरूपदृश्यत्वज्ञानं च न स्यात्,

तरङ्गिणी

*दृशोऽज्ञान इति* ॥ 'विशेषणाज्ञाने विशिष्टाज्ञानादित्यर्थः । *ननु* मैव दृशं ज्ञासीत्, तथापि वृत्तिव्याप्यत्वरूपोक्तहेतुः सुज्ञान एव, नहि दृग्विषयत्वरूपं दृश्यत्वमत्र हेतुत्वेनाभिप्रेतमित्यत आह—*दृग्विषयत्वेति* ॥ अयमर्थः—नात्र प्रकृतहेतोरज्ञानमापाद्यते, किंतु मिथ्यात्वे साध्ये वृत्तिव्याप्यत्वरूपं पारिभाषिकं दृश्यत्वं हेतूकुर्वताऽपि प्रकृतिप्रत्ययावगतदृग्विषयत्वरूपदृश्यत्वमपि दुरपह्नवम्, परं तु तत् तेन हेतुत्वेन नाभिप्रेतम्। एवं च हेतुत्वेनानभिमतोऽपि दृग्विषयत्वरूप उपाधिर्यदि वृत्तिव्याप्यः; तदा तदुपाधिविशेषणीभूतदृशोऽपि वृत्तिव्याप्यत्वमवर्जनीयमेव । यदि न वृत्तिव्याप्यः, तदा तदुपाधेर्न मिथ्यात्वसिद्धिः, भागासिद्धिश्च स्यादिति । (सि०) *ननु* शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम्, अन्यथा 'शशविषाणं तुच्छमि'त्यादिशब्दजन्यवृत्तिविषये तुच्छे व्यभिचारस्य दुरुद्धरत्वापातात्, एवं च सति शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न तत्र व्यभिचारः; शुद्ध-तुच्छयोः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमात्, यद्वा—सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम्, प्रकारश्च सोपाख्यः कश्चिद्धर्मः, तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः, अभावत्वस्यापि सोपाख्यत्वादभावत्वप्रकारकज्ञानविषयीभूतेऽभावे न भागासिद्धिः, उपाख्या त्वस्तीति प्रतीतिविषयत्वादीत्यन्यदेतत्, तस्माद् नोक्तो व्यभिचार इति—चेत्, *न*; चाक्षुषतादृशघटादिविषयकवृत्तिविषयत्वाद् ब्रह्मणस्तत्र

न्यायामृतकण्टकोद्धारः

कृत्यानां च "तयोरेव कृत्य-क्त-खलर्थाः" इति कर्मणि विधानादिति भावः । *दृशोऽज्ञान इति*॥ *ननु* अत्र दृक्शब्देन वृत्तेर्विवक्षितत्वे न वृत्तेर्ज्ञानत्वाङ्गीकाराद् दृग्विषयत्वज्ञानं भविष्यति । नच—दृक्शब्देन चैतन्यं विवक्षितमिति—वाच्यम्; वृत्तिव्याप्यत्वरूपहेतुपक्षे दूषणानुपपत्तेः । तथाच "दृशोऽज्ञाने" इत्यनेन कथमनैकान्तिकत्वोपपादनमिति—चेत्, *अयमत्राभिप्रायः*; वृत्तिव्याप्यत्वमस्तु, मिथ्यात्वं माऽस्त्वित्यप्रयोजकत्वशङ्कायां मिथ्यात्वाभावे ज्ञानविषयत्वरूपं मिथ्यात्वं न स्यात् । ज्ञान-ज्ञेययोः संयोग-समवायाभावेन सम्बन्धान्तरस्य च निर्वक्तुमशक्यत्वेन दृगध्यस्तत्वघटितसम्बन्धेन दृग्विषयत्वे वक्तव्ये दृगध्यस्तत्वरूपज्ञानस्यावश्यकत्वेन दृगज्ञाने दृगध्यस्तत्वज्ञानासम्भवेन दृग्ज्ञानमेष्टव्यम् । एवं च विपक्षबाधकतर्कार्थं चैतन्यरूपदृग्ज्ञाने ज्ञानविषयत्वं ब्रह्मचैतन्येऽनैकान्तिकमिति ॥ *वस्तुतस्तु*—वृत्तिव्याप्यत्वं हि वृत्तिसम्बन्धित्वम् । तत्र हि वृत्तेः प्रपञ्चस्य च सम्बन्धो वक्तव्यः । स च साक्षाद्वा ? परम्परया वा ? तत्राद्ये साक्षात् सम्बन्धः किं संयोगो वा ? समवायो वा ? विषयविषयिभावो वा ? नाद्य-द्वितीयौ;—अनङ्गीकारात्, न तृतीयः; असम्बन्धत्वात्, विषयत्वस्य दुर्निरूपत्वाच्च । तस्माद् वृत्त्यभिव्यक्ताधिष्ठानचिदध्यस्तत्वरूपपरम्परासम्बन्धमादायैव वृत्तिसम्बन्धित्वरूपं वृत्तिव्याप्यत्वं वक्तव्यम् । तथाच "दृशोऽज्ञाने वृत्त्यभिव्यक्ताधिष्ठानचितो ज्ञाने दृग्विषयत्वरूपं दृश्यत्वज्ञानं न स्यात् । वृत्त्यभिव्यक्ताधिष्ठानचिदध्यस्तत्वरूपदृश्यत्वज्ञानं न स्यादित्यर्थः । घटकपदार्थाज्ञाने तद्घटितविशिष्टपदार्थज्ञानस्यासम्भवादित्यज्ञानसिद्धिरिति । अन्ये तु—*दृशोऽज्ञान इति* । विशेषणाज्ञाने विशिष्टाज्ञानादित्यर्थः ।

*ननु* मैव दृशं ज्ञासीत्, तथापि वृत्तिव्याप्यत्वहेतुस्तु सुज्ञान एव, नहि दृग्विषयत्वरूपं दृश्यत्वमात्रं हेतुत्वेनाभिप्रेतम्, इत्यत उक्तम्—*दृग्विषयत्वेति* ॥ *अयमर्थः*—नात्र प्रकृतहेतोरज्ञानमापाद्यते, किन्तु मिथ्यात्वे साध्ये वृत्तिव्याप्यत्वरूपं पारिभाषिकदृश्यत्वं हेतूकुर्वताऽपि प्रकृति-प्रत्ययावगतदृग्विषयत्वरूप-

न्यायामृतम्

"सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते" इत्यादिस्ववचनविरोधश्च स्यात् ।

अद्वैतसिद्धिः

वृत्तिदशायामनुपहितं तद् भवति । नच—"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति स्ववचन-

तरङ्गिणी

व्यभिचारस्य दुष्परिहरत्वात् । नच—घटादिप्रत्ययेषु न ब्रह्म विषय इति—वाच्यम्; तथा सति तव स्ववचनविरोधः स्यादित्याह—*सर्वप्रत्ययेति* ॥ घटादिसर्वप्रत्ययविषयो ब्रह्मेत्यङ्गीकुर्वतां स्वाचार्याणां

न्यायामृतकण्टकोद्धारः

दृश्यत्वमपि दुरपह्नवम्, परन्तु तत् तेन न हेतुत्वेनाभिप्रेतम् । एवं च हेतुत्वेनानभिमतोऽपि दृग्विषयत्व-रूप उपाधिर्यदि वृत्तिव्याप्यः, तदा तदुपाधिविशेषणीभूतदृशोऽपि वृत्तिव्याप्यत्वमवर्जनीयमेव । यदि न वृत्तिव्याप्यः, तदोपाधेर्न मिथ्यात्वसिद्धिः, भागासिद्धिश्च स्यादित्याहुः ॥

*अत्रेदमालोचनीयम्*—*यदुक्तम्*—वृत्तिव्याप्यत्वरूपोपाधिर्वृत्तिव्याप्यः? न वेति? तत्राद्य-मङ्गीकुर्मः । न चैवं विशेषणीभूतदृशोऽपि वृत्तिव्याप्यत्वमवर्जनीयमेवेत्युक्तमिति—वाच्यम्; दृग्ज्ञानेऽपि विमतिविषयत्वरूपपक्षतावच्छेदकप्रकारेण दृग्विषयत्वरूपोपाधिज्ञानसम्भवात्, पक्षतावच्छेदकप्रकारकपक्ष-ज्ञानस्यैवानुमित्यङ्गत्वात् । न हि पक्षीकृतपदार्थानां पक्षतावच्छेदकातिरिक्ततत्तदसाधारणधर्मप्रकारक-ज्ञानमनुमित्यङ्गम्, येन दृग्विषयत्वोपाधेर्वृत्तिव्याप्यत्वेन विशेषणीभूतदृशोऽपि ज्ञानमवर्जनीयं स्यात्, तथा सति प्रकृते पक्षीकृतपदार्थानामानन्त्येन तत्तदसाधारणधर्मपुरस्कारेणानन्तपदार्थज्ञानस्य जन्म-सहस्रेणापि दुःसम्पादत्वाद् अनुमानानवतार एव स्यात् । *किञ्च*—एवमनुगतपक्षतावच्छेदकनिर्वच-नायासोऽपि व्यर्थ एव स्यात् । नच—दृग्विषयत्वस्य विमतिविषयत्वरूपपक्षतावच्छेदकप्रकारेण ज्ञाने विमत्यवच्छेदकब्रह्मान्यत्वज्ञानस्यावश्यकत्वेन ब्रह्मणोऽपि वृत्तिव्याप्यत्वमवर्जनीयमेवेत्युक्तमुपपन्नमिति—वाच्यम्; पृथिवीत्वादीनामननुगतानामेव धर्माणां विमत्यवच्छेदकत्वाङ्गीकारेण गुरुभूतानेकपदार्थघटित-त्वेन 'ब्रह्मप्रमान्येने'त्याद्युक्तस्यावच्छेदकत्वानभ्युपगमेन ब्रह्मणो वृत्तिव्याप्यत्वस्य दूरनिरस्तत्वात् । नच—एवं पृथिवीत्वादीनामिव दृग्विषयत्वस्यापि ज्ञातव्यत्वेन दृग्ज्ञानमावश्यकमिति—वाच्यम्; पृथिवीत्वादीना-मनन्तत्वेन तेषां प्रातिस्विकरूपेण ज्ञानस्य जन्मसहस्रेणापि दुःसम्पादत्वेन विमतिविषयतावच्छेदकत्वेनैव तज्ज्ञानस्य स्वीकर्तव्यत्वेन दृग्विषयकत्वस्यापि तेन रूपेण ज्ञानसम्भवे दृग्ज्ञानस्यानावश्यकत्वात् । किञ्चैवं ब्रह्मणो वृत्तिव्याप्यत्वोपपादनस्योपरितनत्वेन फक्किकार्थत्वाभावेन तदर्थतया योजनस्यात्यन्तासङ्गतत्वा-दिति दिक् ॥ केचित्तु—चितोऽज्ञाने चिद्विषयत्वरूपजडत्वज्ञानं न स्यात् । नच विमतं मिथ्या जडत्वादिति जडत्वं हेतूकुर्वता तज्ज्ञानाभावोऽङ्गीकर्तुं शक्यते । नच तज्ज्ञानं दृक्शब्दशब्दितचिज्ज्ञानं विना सम्भवति । तथाच दृग्रूपचिद्घटितजडत्वादिरूपहेतुज्ञानार्थमवश्यं दृशो वृत्तिव्याप्यत्वं परेणाङ्गीकार्यम् । तथाच वृत्तिव्याप्यत्वस्यैव हेतुत्वे मिथ्यात्वरहिते दृश्ये च हेतुसत्त्वेन व्यभिचार इत्यर्थः—इत्याहुः ॥

अत्रेदमालोचनीयम्—प्रकृतदृश्यत्वरूपहेत्वज्ञानासिद्धिपरतायाः स्फुटप्रतिभासत्वेनाप्रकृतजडत्वहेत्व-ज्ञानासिद्धित्वापादनस्यागतिकत्वात्, चिद्विषयत्वं जडत्वमिति परेणानङ्गीकाराच्च, अङ्गीकारे वा दृश्यत्वेन

सिद्धिव्याख्या

*नच सर्वप्रत्ययवेद्य इति* ॥ घटादिसर्वप्रत्ययविषयो ब्रह्मेत्यङ्गीकुर्वतां स्वाचार्याणां वचनस्यापि स्ववचनत्वात्

विट्ठलेशीयटिप्पणी

त्वेन सर्वावच्छेदेनोपहितत्वासम्भवाद् मिथ्याभूतस्याध्यासाधिष्ठानं भवतीति भावः । मूले—*नच सर्वप्रत्ययवेद्य इति*॥

न्यायामृतम्

नच—विपक्षे धर्मिसमसत्त्वस्य हेतोर्वृत्तिर्व्यभिचारः, नत्वारोपितस्य; अतिप्रसङ्गात्, दृश्यत्वं च व्यावहारिके जगतीव पारमार्थिकात्मन्यपि व्यावहारिकमेव, इति न व्यभिचार इति—वाच्यम्; ब्रह्म-जगतोः पारमार्थिकत्व-व्यवहारिकत्वविभागस्याद्याप्यसिद्धेः। किंच पक्षे धर्मिसमसत्त्वस्य साध्यस्याभावो बाधः, पक्षे हेतोर्धर्मिसमसत्ताकस्य सत्त्वं च सिद्धिः, तदभावोऽसिद्धिः। तथाचात्मनि तात्त्विकधर्महीने स्वप्रकाशत्वादिरूपसाध्यस्य बाधः, तत्साधकानुभूतित्वादेश्चासिद्धिः। एवं विपक्षे धर्मिसमसत्ताकः साधनस्याभावोऽ-

तरङ्गिणी

वचनस्यापि स्ववचनत्वात् तद्विरोधः स्यादित्यर्थः। नच—विशिष्टं सर्वप्रत्ययवेद्यम्, न शुद्धमिति—वाच्यम्; "प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते" इत्युत्तरार्धेन जगद्विलयाधिष्ठानत्वोक्त्या सर्वप्रत्ययवेद्यस्य शुद्धत्वात्, पूर्वार्धेऽपि व्यवस्थित इत्यनेनानुगतत्वोक्त्या शुद्धस्यैव प्रतीतेः॥ *दृश्यत्वं चेति*॥ वृत्तिव्याप्यत्वरूपमिति शेषः॥ *व्यावहारिकमेवेति*॥ नतु पारमार्थिकसत्ताकधर्मसमसत्ताकम्, अतो न व्यभिचार इत्यर्थः॥ *ब्रह्म-जगतोरिति*॥ जगतो व्यावहारिकत्वे सिद्धे तन्मध्यवर्तिनो वृत्तिव्याप्यत्वस्य हेतोः पारमार्थिक-व्यावहारिकयोर्ब्रह्म-जगतोर्विद्यमानस्यापि व्यावहारिकत्वं सिद्धयति, पारमार्थिक-व्यावहारिकविभागश्चाद्यापि न सिद्ध इत्यर्थः। तथाच निश्चितसाध्याभाववति ब्रह्मणि निरुक्तहेत्वभावस्य सन्दिग्धत्वात् सन्दिग्धानैकान्तिकता स्यादिति भावः। यदि विपक्षे धर्मसमसत्त्वस्य हेतोर्वृत्तिर्व्यभिचारः, तदा गुञ्जापुञ्जारोपितवह्नौ वह्नित्वस्य धर्मिसमसत्ताकस्य व्यावहारिकोष्णत्वाभावसमानाधिकरणस्योष्णत्वेन व्यभिचारात्। वह्नित्वेनोष्णत्वानुमानं व्यावहारिकवह्नावपि न स्यादित्यपि दोषो बोध्यः॥ *किञ्चेति*॥ दूषकतौपयिके व्यभिचारे यदि धर्मिसमसत्ताकहेतुवृत्तिरपेक्षिता, तर्हि तादृशे बाधादिकेऽपि धर्मिसमसत्ता साध्येऽपेक्षिता स्यात्, समानन्यायत्वात्। किञ्च गमकतौपयिके रूपे च पक्षवृत्तित्वादौ हेतोर्धर्मिसमसत्ताकवृत्तिरपेक्षणीया स्यादित्यर्थः। ततः किमिति ? अत आह—*तथाचेति*॥ आत्मा, स्वप्रकाशः, अनुभूतित्वात्; व्यतिरेकेण घटवत्, इति त्वदुक्तानुमाने पक्षीकृत आत्मनि धर्मिसमसत्ताकस्य साध्यस्याभावोऽस्ति, इति बाधः स्यात्, तत्रैव धर्मिसमसत्ताकस्यानुभूतित्वस्य हेतोरभावादसिद्धिश्च स्यात्। तत्र हेतुस्तात्त्विकधर्महीन इत्यनेनोक्त इत्यर्थः॥ *एवमिति*॥ साध्याभाववति साधनाभावमात्रं नाव्यभिचारः, किन्तु साध्याभाववति धर्मिसमसत्ताकः साधनस्याभावो

न्यायामृतकण्टकोद्धारः

**साङ्कर्यापत्तेरिति। *सर्वप्रत्ययवेद्य इति*॥ नच—एतस्य वचनस्योपहितपरत्वेन शुद्धे सर्वप्रत्ययवेद्यत्वाभावान्न इति विरोध इति—वाच्यम्; उपहितस्य च मिथ्यात्वेनात्रोक्तसर्वप्रत्ययवेद्यत्व-प्रपञ्चप्रविलयाधिष्ठानत्वयोरनुपपत्तेः। आत्मनि व्यभिचारपरिहारमाशङ्क्य निषेधति—*नचेति*॥ आरोपितधूमस्य विपक्षे ह्रदादावपि सत्त्वेन धूमस्यापि व्यभिचारित्वं स्यादित्यतिप्रसङ्गादिति भावः। *अद्यापीति*॥ मिथ्यात्वसिद्धेः प्रागित्यर्थः। तथाच व्यावहारिक-पारमार्थिकविभागसिद्धौ दृश्यत्वहेतोर्व्यभिचाराभावसिद्धिः, व्यभिचाराभावसिद्धौ च व्यावहारिक-पारमार्थिकविभागसिद्धिरित्यन्योन्याश्रय इति भावः॥ अतिप्रसङ्गमप्याह—*किञ्चेति*॥ उक्तबाधासिद्धिलक्षणफलमाह—*तथाचेति*॥ अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्; व्यतिरेकेण घटवदिति त्वदुक्तानुमानेऽपि बाधासिद्धी स्यातामिति भावः। अतिप्रसङ्गान्तरमाह—*एवं विपक्ष इति*॥ तथाच तात्त्विकधर्मानधिकरणब्रह्मनिष्ठदृश्यत्वाभावस्य धर्मिसमसत्ताकत्वाभावाद् व्यभिचार इति भावः। यत्तु—धर्मिसमसत्ताकत्वं साधनस्य विशेषणम्, एवं च साध्याभाववत्यात्मनि दृश्यत्वादेः साधनस्याभावे विद्यमानेऽपि धर्मिसमसत्ताकत्वरूपविशेषणविशिष्टप्रतियोगिकत्वरूपविशेषणविशिष्टसाधनाभावस्याभावोऽस्ति, इति व्यभिचार एव स्यादित्यभिप्रायः—इति, *तन्न*;**

न्यायामृतम्

व्यभिचारित्वम्। तथाच दृश्यत्वादीनामात्मनि व्यभिचार इति च स्यात्। तस्माद् यथाऽऽत्मनः पक्षत्वे तत्र व्यावहारिकस्य हेतोस्संत्त्वाद् नासिद्धिः, तथा तस्य विपक्षत्वेऽपि व्यावहारिकस्य हेतोस्सत्त्वाद् व्यभिचारः। अथ धर्मिसमसत्त्वं हेतुविशेषणम्, तर्ह्यात्मन्येवंविधधर्मस्य कस्याप्यभावाद् विषयत्वादिरेव मिथ्यात्वे(१) हेतुः स्यात्, मम रीत्याऽऽत्मनि व्यभिचारश्च, दृष्टान्तस्य साधनवैकल्यं च॥

तरङ्गिणी

व्यभिचाराभाव इत्यपि स्यादित्यर्थः। तत्र दोषमाह—*तथाच दृश्यत्वादीनामिति*॥ वृत्तिव्याप्यत्वादीनामित्यर्थः। साध्याभाववत्यात्मनि दृश्यत्वादेः साधनस्याभावे विद्यमानेऽपि धर्मिसमसत्ताकत्वरूपविशेषणविशिष्टस्साधनाभावो नास्ति, इति व्यभिचार एव स्यादित्यभिप्रायः॥ *तस्मादिति*॥ त्वदुक्ते स्वप्रकाशत्वानुमानेऽनुभूतित्वहेतोर्व्यावहारिकस्यात्मनि पक्षे सत्त्वाद् यथा नासिद्धिः, तथा मिथ्यात्वानुमाने वृत्तिव्याप्यत्वस्य हेतोर्व्यावहारिकस्यात्मनि विपक्षे सत्त्वाद् व्यभिचारो दुरुद्धर इत्यर्थः॥ *अथ धर्मीति*॥ धर्मिशब्दस्य सम्बन्धिशब्दतया समभिव्याहृतपरत्वेन घटादिधर्मिसमसत्त्वरूपविशेषणविशिष्टस्य हेतोः पक्षे सत्त्वाद् न सिद्धिः, उक्तन्यायेनैवात्मपरतया धर्मिशब्दस्य विपक्ष आत्मनि तत्समसत्त्वस्य हेतोरभावाद् न व्यभिचारोऽपीत्यर्थः। व्यभिचारलक्षणान्तर्गतहेतौ धर्मिसमसत्त्वं विशेषणं प्रागभिहितम्, संप्रति तु न्यायवाक्यान्तर्गतहेत्ववयवार्थे प्रकृते हेतौ धर्मिसमसत्त्वं विशेषणमुच्यत इति भेदः॥ *तर्हीति*॥ विषयत्वापरपर्यायकर्मत्वार्थककृत्यप्रत्ययान्तेन व्याप्यशब्देन वृत्तिविषयत्वमभिहितम्। तथाच धर्मिसमसत्ताकत्वरूपविशेषणविशिष्टं विषयत्वमेव हेतुरस्तु, तात्त्विकधर्महीने च ब्रह्मणि धर्मिसमसत्ताकस्य कस्यचिद् धर्मस्याभावाद् व्यभिचाराभावेन वृत्तीत्यस्य विशेषणस्य वैयर्थ्यमिति भावः॥ *ममेति*॥ ब्रह्मणि तात्त्विकधर्मान् अङ्गीकर्तुः॥ *दृष्टान्तेति*॥ व्यावहारिकदृश्यत्वाधिकरणे शुक्तिरूप्ये धर्मिसमसत्त्वस्य दृश्यत्वस्याभावादित्यर्थः।

न्यायामृतकण्टकोद्धारः

विशिष्टसाधनरूपप्रतियोगिनोऽभावेऽपि तत्प्रतियोगिकत्वरूपविशेषणाभावापत्तौ प्रागभावे घटप्रतियोगिकत्ववैशिष्ट्यं न स्यादिति यत्किञ्चिदेतत्। असत्त्वात्मनि दृश्यत्वम्। नच व्यभिचारः; धर्मिसमसत्त्वस्य हेतुविशेषणत्वात्। न चात्मनि धर्मिसमसत्त्वं दृश्यत्वमस्ति, येन व्यभिचारः स्यादिति शङ्कते—*अथेति*॥ *विषयत्वादिरेवेति*॥ तथाच दृक्पदानर्थक्यमिति भावः। आदिपदेन वस्तुत्वादिपरिग्रहः। *ननु* एकधर्मिगतत्वेन लघु-गुरुभूतधर्मद्वयोपस्थितौ लघुभूतधर्मस्यैवावच्छेदकत्वम्, नतु गुरुभूतस्येति नियमः; यथा धूमगतत्वेन धूमत्व-नीलधूमत्वरूपधर्मद्वयोपस्थितेर्विद्यमानत्वेन लघुभूतधूमत्वस्यैव व्याप्यतावच्छेदकत्वम्, नतु गुरुभूतस्य नीलधूमत्वस्य। एवं प्रकृते यदि धर्मिसमसत्ताकदृश्यत्वरूपधर्मिगतत्वेन विषयत्वत्व-धर्मिसमसत्ताकदृग्विषयत्वत्वरूपधर्मद्वयस्योपस्थितिः स्यात्, तदा लाघव-गौरवचिन्ता, नचैवम्; तथाच वैयर्थ्यदानमनुचितमित्यपरितोषादाह—*मम रीत्येति*॥ उभयसाधारणदोषमाह—*दृष्टान्तस्येति*॥ मायिमते प्रातिभासिके विषयत्वं व्यावहारिकम्, इति न धर्मितुल्यसत्ताकत्वम्, मन्मते तु धर्म्यसत्त्वादेव न तदिति भावः॥

---

(१) *ननु* नान्योन्याश्रयः; विभागसिद्धेरनुमानसम्यक्त्वसिद्ध्यधीनत्वाभावात्। अपि तर्हि अनाशङ्कितदोषया "तत्सत्यम्" "अतोऽन्यदार्तमि"त्यादिश्रुत्यैव विभागसिद्धावुपोद्बलकतयैवानुमानस्योच्यमानत्वादित्यस्वरसादाह-- *किं चेति*॥ यदि धर्मिसमसत्त्वस्य हेतोर्वृत्तिर्व्यभिचारः, इति लक्षणं कल्पयित्वा व्यभिचारपरिहारः क्रियते, तर्हि साध्याभावमात्रं न बाधलक्षणम्। तथात्वे 'वह्निरनुष्णः' इत्यत्रापि प्रातिभासिकानुष्णत्वस्य सद्भावेन साध्याभावाभावाद् बाधाभावापत्तेः। तथा पक्षे हेतोः सत्त्वमात्रं न सिद्धिः; तथात्वे शब्दो नित्यश्चाक्षुषत्वादित्यत्रापि प्रातिभासिकहेतोः पक्षे सत्त्वेनासिद्ध्यभावापत्तेः। तस्मात् तत्परिहाराय धर्मिसमसत्ताकस्य साध्यस्याऽभावो बाधः, पक्षे धर्मिसमसत्ताकस्य हेतोः सत्त्वं सिद्धिः,

न्यायामृतम्

*ननु* शुद्धं ब्रह्म न दृश्यम्, किं तु विशिष्टमेव ; दृश्यत्वश्रुतयोऽपि तद्विषयाः ; अन्यथा

अद्वैतसिद्धिः

विरोध इति—वाच्यम् ; तस्याप्युपहितपरत्वात् । नच—एवं सति शुद्धसिद्धिर्न स्यादिति—

तरङ्गिणी

व्यभिचाराभावं शङ्कते—*नन्विति* ॥ साध्याभाववति शुद्धे हेतोरप्यभावः, हेतुमति च विशिष्टे साध्यमप्यस्ति। अतो न व्यभिचार इत्यर्थः। उक्तं च संक्षेपशारीरके—

न्यायामृतकण्टकोद्धारः

*ननु* शुद्धे वा व्यभिचारः ? विशिष्टे वा ? नाद्यः ; तत्र हेत्वभावात्, नहि द्वितीयः ; तस्य पक्षनिक्षिप्तत्वात्, इति शङ्कते,—*नन्विति* ॥ शुद्ध एव व्यभिचारः । नच—तत्र दृश्यत्वं नेति—वाच्यम् ;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नोपहितस्योक्तशून्यतेति भावः । *उपहितपरत्वादिति*॥ घटाद्याकारवृत्त्या घटाद्युपहितस्यैव सद्रूपस्य ग्रहणमिति भावः । *सिद्धिः = संशयाद्यगोचरत्वम् ॥

सिद्धिव्याख्या

तद्विरोधः स्यादिति नच वाच्यमित्यर्थः। अत्र हेतुमाह—*तस्यापीति* ॥ नच—"प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते" इत्युत्तरार्धे जगद्विलयाधिष्ठानत्वोक्त्या सर्वप्रत्ययवेद्यस्य शुद्धत्वमिति—शङ्क्यम् ; उपहिते ब्रह्मणि सर्वप्रत्ययवेद्यत्वे स्थिते, नेत्युक्त्या शुद्धे ब्रह्मणि प्रपञ्चस्य प्रविलयो नेतिशब्देन प्रतिपाद्यत इत्युत्तरार्धस्याविरोधोपपत्तेश्च, अन्यथा 'सर्वप्रत्ययवेद्ये च शुद्धरूपे' इति वचनव्यक्त्यापत्तेः । *अत एव* पूर्वार्धेऽपि 'व्यवस्थिते' इत्यनेनानुगतत्वोक्त्या शुद्धस्यैव प्रतीतिरिति—*निरस्तम्* ; उत्तरार्धानुसारेण सर्वप्रत्ययवेद्य उपहितब्रह्मरूपे शुद्धे व्यवस्थिते सतीत्यर्थकथनेऽप्यनुगतत्वोक्त्या शुद्धप्रतीत्यसंभवादिति ध्येयम् ॥

*नचैवं सतीति* ॥ शुद्धे वृत्तिव्याप्यत्वरूपहेत्वभावे सति शुद्धसिद्धिर्न स्यादित्यर्थः। तथाच शुद्धसिद्धि-

विट्ठलेशीयटिप्पणी

जीवन्मुक्तपरमिदं वचनम् । जीवन्मुक्तो हि व्युत्थानकाले देहयात्रानिर्वाहकमावश्यकं वैदिक लौकिकं च कर्म मिथ्यात्वेन पश्यन् करोति, समाधिकाले ब्रह्मरूपेऽबाध्येऽवतिष्ठते । अतस्तत्त्वविदपि ब्रह्मरूप एव व्यवतिष्ठते ; सर्वस्यापि जीवस्य सोपाधिकब्रह्मरूपत्वात्, अत उक्तम्—*सर्वप्रत्ययवेद्य इति* ॥ सोपाधिकं तत्तज्जीवरूपं तत्तज्जीवेनैव वेद्यम्, तदनुस्यूतं ब्रह्म तु सर्वेणापि वेद्यम् । *यद्वा*—'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥' इत्यभियुक्तोक्तेर्घटादिसकलजगति तादात्म्येन सच्चिदानन्दं ब्रह्म सर्वेषां सर्वाधिष्ठानतया 'घटोऽस्ति' 'भाति' 'प्रियश्च' इति भासते । तच्च शुद्धमेव, इति शुद्धस्य वृत्तिविषयताप्रतिपादकैतद्वचनविरोधः शुद्धस्य वृत्तिविषयत्वानुपगमपक्ष इति भावः । *तस्यापि=उक्तवचनस्यापि । *उपहितपरत्वादिति* ॥ वृत्त्युपहितब्रह्मपरत्वादित्यर्थः । समाधिकालेऽपि जीवन्मुक्तस्य वृत्तिरस्त्येव, निर्विकल्पकसमाधावपि ज्ञान-ज्ञेयज्ञरूपत्रिपुटीभेदस्फूर्तिः परं नास्ति । तस्मात् तादात्म्यवृत्त्युपहितब्रह्मरूप एव व्यवस्थित इत्युक्तवचनार्थ इति न तद्विरोधः । शुद्धस्य वृत्तिविषयत्वानुपगमपक्षेऽपि शुद्धब्रह्मभासस्तु विदेहकैवल्यदशायामेवेति भावः । *ननु* 'घटः सन्' इत्यादिप्रत्यये घटाधिष्ठानभूतं शुद्धमेव सद् ब्रह्म भासते, न वृत्त्युपहितम्, इति कथमुपहितस्य सर्वप्रत्ययवेद्यत्वम् ? अत आह—*घटादीति* ॥ 'शुद्धसिद्धिः' इत्यत्र सिद्धिपदं न निश्चयरूपवृत्तिपरम् ; तदनुपगमेन तदभावापादन इष्टापत्तिप्रसङ्गात्, अतो व्याचष्टे—*सिद्धिः संशयाद्यगोचरत्वमिति* शुद्धस्य निश्चयरूपवृत्त्यनुपगमे 'ब्रह्म शुद्धं न वा', 'ब्रह्म न शुद्धमि'ति संशय-विपर्ययगोचरत्वापत्तिरित्यर्थः ।

---

तदभावोऽसिद्धिरिति लक्षणं वाच्यम् । तथाच—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, इति ब्रह्मणः स्वप्रकाशत्वसाधकानुमानेऽपि अनुभूत्याख्यपारमार्थिकब्रह्मरूपधर्मिसमसत्ताकस्य स्वप्रकाशत्वरूपसाध्यस्याभावाद् बाधः स्यात्, ब्रह्मणि स्वप्रकाशत्वस्य व्यावहारिकत्वेन पारमार्थिकब्रह्मसमसत्ताकत्वाभावात् । तथा धर्मिसमसत्ताकस्यानुभूतित्वरूपहेतोः पक्षेऽभावेनासिद्धिश्च स्यात्, ब्रह्मण्यनुभूतित्वस्यापि व्यावहारिकत्वेन पारमार्थिकब्रह्मसमसत्ताकत्वाभावादित्यपि स्यात् । एवं विपक्षे साधना-

न्यायामृतम्

"यत्तदद्रेश्यमि"त्यादिश्रुतिविरोधादिति चेत्, *न* ; स्वतस्सिद्धेर्निराकरिष्यमाणत्वेन शुद्धासिद्धिप्रसङ्गात्, अज्ञाते धर्मिणि कस्यचिद् धर्मस्य विधातुं निषेद्धुं वाऽशक्यत्वेन शुद्धे दृश्यत्वनिषेधाय शुद्धस्य ज्ञेयत्वाच्च ।

अद्वैतसिद्धिः

वाच्यम् ; स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् । *ननु*—अज्ञाते धर्मिणि कस्यचिद् धर्मस्य विधातुं निषेद्धुं वाऽशक्यत्वेन शुद्धे दृश्यत्वनिषेधतायै शुद्धस्य ज्ञेयत्वमवश्यं स्वीकरणीयम्, नच—स्वप्रकाशत्वेन स्वतः सिद्धे शुद्धे श्रुत्या दृश्यत्वनिषेध इति—वाच्यम् ; 'शुद्धं स्वप्रकाशमि'ति शब्दजन्यविशिष्टवृत्तौ

तरङ्गिणी

"बहु निगद्य किमत्र वदाम्यहं शृणुत संग्रहमद्वय आत्मनि ।
सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभाक् ॥" इति ॥

*स्वत इति* ॥ शुद्धे वृत्तिव्याप्यत्वरूपहेत्वभावे शुद्धासिद्धिप्रसङ्गादित्यर्थः ॥ *अज्ञात इति* ॥ अन्यथा 'शुद्धं न दृश्यमि'ति ज्ञानाविषयत्वाविशेषाच्छुद्धेतरस्मिन्नपि दृश्यत्वाभावसिद्धिः स्यादित्यर्थः ॥ *दृश्यत्वनिषेधायेति* ॥ वृत्तिव्याप्यत्वनिषेधायेत्यर्थः ।

न्यायामृतकण्टकोद्धारः

तस्य दृश्यत्वाभावे तदसिद्ध्यादिप्रसङ्गादित्याह—*स्वतस्सिद्धेरिति* ॥ स्वतस्सिद्धिरिति कोऽर्थः ? स्वेनैव सिद्धिरिति वा ? अन्येनासिद्धिरिति वा ? नाद्यः ; कर्मत्व-करणत्वविरोधात् । करणव्यापार-

न्यायामृतसौगन्ध्यम्

अन्यथा शुद्धस्यासिद्ध्यापत्तेः । नच स्वप्रकाशत्वेन स्वतस्सिद्धं तत् ; प्रमाणं विना (१) सिद्धौ खपुष्पा-

सौगन्ध्यविमर्शः

(१) प्रमाणं हि प्रकाशार्थमेवापेक्षते । प्रकाश एव हि सिद्धिर्नाम । खपुष्पादिकमपि यदि स्वतः प्रकाशमानम्, तर्हि तु तस्यापि भवेदेव सिद्धिः, नतु खपुष्पादिकं स्वप्रकाशम्, इति प्रमाणं विना ब्रह्मप्रकाशे न खपुष्पादीनामपि सिद्धिः । अप्रकाशमान-स्यावृतस्य वा ज्ञानार्थं खलु प्रमाणापेक्षा, उपहितब्रह्मण एव विषयतेति वादे तु न शुद्धस्याज्ञानविषयत्वमपीति स्वत एव तत् सिद्धम् ॥

सिद्धिव्याख्या

मिच्छता तस्य वृत्तिव्याप्यत्वं वक्तव्यम्, इति तत्र व्यभिचार एवेति भावः । *स्वत एवेति* ॥ ननु वृत्ति-व्याप्यतयेत्यर्थः । स्वत एव सिद्धम्, नतु वृत्तिव्याप्यतयेत्यत्र हेतुः—*स्वप्रकाशत्वेनेति* ॥ तच्चाग्रे निरूपयिष्यते । ततश्च सिद्धिमन्यत एवेच्छता मया तस्य वृत्तिव्याप्यत्वं न वक्तव्यम्, इति न तत्र व्यभिचार इति भावः । पुनर्व्यभिचारं शङ्कते—*नन्वज्ञात इति* ॥ *दृश्यत्वं निषेद्धुमिति* ॥ वृत्तिव्याप्यत्वं निषेद्धुमित्यर्थः । *स्वीकरणीय-मिति* ॥ स्वीकारे च शुद्धे व्यभिचारस्तदवस्थ इति भावः ॥

विट्ठलेशीयटिप्पणी

*मूले—स्वत एवेति* ॥ वृत्तिं विनैव स्वप्रकाशनिश्चयरूपत्वादित्यर्थः । *अज्ञाते धर्मिणीति* ॥ तद्धर्मिक-भावाभावान्यतरशाब्दबोधे तद्धर्मिज्ञानस्य कारणत्वात्, तत्र तज्ज्ञानस्यावश्यकत्वाच्चेति भावः । *दृश्यत्वनिषेधतायै= दृश्यत्वस्य निषेधोऽभावबोधो यत्र तस्य भावः, तत्ता ; तस्यै दृश्यत्वाभावबोधे धर्मिविधया भानायेत्यर्थः । *ज्ञेयत्वम्=दृश्यत्वनिषेधकारणीभूतायां फलीभूतायां च वृत्तौ विषयत्वम् । *स्वतःसिद्धे=स्वप्रकाशनिश्चयरूपे । *शब्देति* ॥ श्रुतीत्यर्थः । *शुद्धाप्रकाश इति* ॥ शुद्धत्वभङ्गभियेत्यादिः । साधकान्तराभावादिति

---

भावमात्रं व्यभिचारो न भवति । तथात्वे पर्वतो धूमवान् वह्नेरित्यत्रापि विपक्षेऽयोगोलके वह्निरूपसाधनाभावस्यारोपितस्य सत्त्वाद्व्यभिचारित्वापत्तेः । तस्माद् धर्मिसमसत्ताकः साधनस्याभावोऽव्यभिचारित्वम्, विपक्षेऽयोगोलके व्यावहारिके वह्निरूप-

### न्यायामृतम्

नच स्वप्रकाशत्वेन स्वतः सिद्धे शुद्धे वृत्त्या दृश्यत्वनिषेधधीः, 'शुद्धं स्वप्रकाशमि'ति

### तरङ्गिणी

*ननु* अभावबुद्धावधिकरणोपस्थितिरपेक्षिता, न त्वभावग्राहकप्रमाणजन्याधिकरणोपस्थितिः, प्रमाणजन्या तदुपस्थितिर्वा, आद्ये वायौ रूपात्यन्ताभावश्चाक्षुषो न स्यात्, द्वितीये गौरवम्, अधिकरणोपस्थितिश्च स्वतः स्फुरणरूपाऽस्ति, इति सुबोधः शुद्धे वृत्तिव्याप्यत्वरूपहेतोर्व्यतिरेक इति शङ्कते—*नचेति* ॥ *दृश्यत्वेति* ॥ वृत्तिव्याप्यत्वरूपेत्यर्थः ॥ *शुद्धं स्वप्रकाशमिति* ॥

### न्यायामृतकण्टकोद्धारः

विषयत्वं कर्मत्वम्। नच करणस्येव तद् युज्यते। न द्वितीयः; अन्यथासिद्धिमात्रेण सिद्धत्वे तु तुच्छस्यापि सिद्धिप्रसङ्गादिति निराकरिष्यमाणत्वादित्यर्थः। *वृत्त्या दृश्यत्वनिषेधधीरिति*। इत्थंभूतलक्षणे तृतीया। वृत्तिरूपदृश्यत्वनिषेधधीरित्यर्थः। *शुद्धं स्वप्रकाशमिति* ॥

### न्यायामृतसौगन्ध्यम्

हीनामपि सिद्ध्यापत्तेः। किञ्चाज्ञाते (१)धर्मिणि कस्यचिद् धर्मस्य विधातुं निषेद्धुं वाऽशक्यत्वेन शुद्धे दृश्यत्वं निषेधता शुद्धस्य ज्ञेयत्वमवश्यं स्वीकार्यम्। नच—स्वप्रकाशत्वेन स्वतस्सिद्धे (२)शुद्धे वृत्त्या दृश्यत्वनिषेध इति वाच्यम्; 'शुद्धं स्वप्रकाशमि'ति वाक्यस्य लक्षणयाऽशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः।

### सौगन्ध्यविमर्दः

(१) स्पष्टं चैतत् सिद्धिव्याख्यायामभावबुद्धावधिकरणोपस्थितेरेव तत्सत्त्वेन प्रमाणजन्योपस्थित्यनावश्यकत्वात्, इत्यादिना कारणत्वेनात्र च शुद्धं न दृश्यमित्यादीनामशुद्धत्वं दृश्यत्वव्यापकमित्यर्थस्यैव विलक्षणोपपादनादिना च निरस्तम्।

(२) प्रागुक्तरीत्या स्वतः स्फुरणरूपोपस्थितेरेव तद्व्यावृत्तिसिद्ध्युपपत्तौ न दोष इत्यपि सिद्धिव्याख्यायामेव व्यक्तम्।

### सिद्धिव्याख्या

अभावबुद्धावधिकरणोपस्थितिरपेक्षिता, न त्वभावग्राहकप्रमाणजन्याधिकरणोपस्थितिः, प्रमाणजन्या तदुपस्थितिर्वा। अभावग्राहकप्रमाणजन्याधिकरणोपस्थित्यपेक्षायां वायौ रूपाभावस्याचाक्षुषत्वापत्त्या प्रमाणजन्योपस्थित्यपेक्षायां गौरवेण चाधिकरणोपस्थितिमात्रस्य तन्त्रत्वे, तस्यास्तत्स्फुरणरूपायाः प्रकृतेऽपि सत्त्वेन तत एव शुद्धे दृश्यत्वनिषेधबोधस्य सुकरत्वेन तदर्थं धर्मिगोचरवृत्तेरनपेक्षणेन शुद्धे व्यभिचाराप्रसक्तेः। *अत एव—'शुद्धं न दृश्यमि'ति शब्दजन्यविशिष्टवृत्त्यनभ्युपगमे तस्यां शुद्धाप्रकाशे च तत्र दृश्यत्वनिषेधासिद्धिः, विधि-निषेधयोरविषयस्य विधि-निषेधाभाजनत्वात्, अन्यथाऽतिप्रसङ्गादिति—*निरस्तम्*; 'शुद्धं न दृश्यमि'त्यादि शब्दजन्यविशिष्टवृत्तिकाले ब्रह्मणो वृत्तिरूपेण धर्मेणोपरक्ततया शुद्धत्वासंभवेन वृत्तौ शुद्धाप्रकाशस्येष्टत्वात्। नच—एवं सत्यनेन वाक्येन तत्र दृश्यत्वनिषेधासिद्धया तस्य वाक्यस्य वैयर्थ्यं स्यादिति—वाच्यम्; उक्तरीत्या मुख्यार्थासंभवे सति 'शुद्धं न दृश्यं' 'न

---

साधनाभावस्य प्रातिभासिकत्वेन धर्मिसमसत्ताकत्वाभावाद् नाव्यभिचार इति वाच्यम्। तथाच मिथ्यात्वसाधकदृश्यत्वानुमानस्य व्यभिचारः स्यात्; ब्रह्मणि दृश्यत्वरूपं यत् साधनम्, तदभावस्याद्वैतभङ्गापत्त्या ब्रह्मरूपधर्मिसमसत्ताकत्वाभावेनाव्यभिचारित्वलक्षणाभावात्। तस्मात् स्वप्रकाशत्वानुमाने व्यावहारिकस्य साध्यस्य व्यावहारिकस्य हेतोश्च पक्षे सत्त्वमात्रेण बाधासिद्धी परिहरणीये। एवमेव विपक्षे ब्रह्मणि व्यावहारिकस्य दृश्यत्वस्य सत्त्वाद् व्यभिचारस्तदवस्थः। *ननु* तथापि नात्मनि व्यभिचारः; धर्मिसमसत्ताकदृश्यत्वात्, इति दृश्यत्वे धर्मिसमसत्ताकत्वविशेषणं दीयत इति—चेत्, तर्हि दृश्यत्वं नाम वृत्तिव्याप्यत्वम्, व्याप्यत्वं च विषयत्वम्। एवञ्च धर्मिसमसत्ताकविषयत्वादित्येवास्तु। वृत्तीति विशेषणं व्यर्थम्। नच—ब्रह्मणि धर्मिसमसत्ताकं विषयत्वमस्तीति तत्र व्यभिचारवारणाय वृत्तीति विशेषणमिति—वाच्यम्; ब्रह्मणि धर्मिसमसत्ताकस्य कस्यापि धर्मस्याभावेन धर्मिसमसत्ताकविषयत्वरूपधर्मस्याप्यभावेन व्यभिचाराप्रसक्त्या वृत्तीति विशेषणं व्यर्थमेव स्यादित्याह—'पक्षे' इत्यारभ्य 'मिथ्यात्वे हेतुः स्यादि'त्यन्तेन ग्रन्थेन ॥ ( श्रीनि० )

अद्वैतसिद्धिः

शुद्धप्रकाशे तस्य स्वप्रकाशत्वासिद्धेरिति—चेत्, न; वृत्तिकाले वृत्तिरूपेण धर्मेणोपहितत्वेन शुद्धत्वा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*स्वप्रकाशत्वासिद्धेरिति*॥ नच—इदमाकारमनोवृत्ति-रजताकाराविद्यावृत्तिभ्यामवच्छिन्नस्य साक्षिणः—'इदं रजतं न वे'ति संशयादिविरोधित्ववत् शुद्धाविषयकस्वप्रकाशत्वाकारवृत्त्यवच्छिन्नसाक्षिण एव शुद्धे स्वप्रकाशत्वसंशयादिविरोधित्वमिति—वाच्यम्; रजतादितादात्म्योपहितेदंविषयकवृत्तेरेवाविद्या-परिणामभ्रमत्वेन दृष्टान्तस्यासिद्धत्वात्, सिद्धत्वेऽपि वा नील इत्यादिज्ञानस्यापि 'शुद्धं नीलं न वे'त्यादिधीविरोधित्वापत्तेरुक्तसाक्षिण उक्तसंशयाद्यविरोधित्वात्। *वृत्तिकाल इति*॥ शुद्धस्य वृत्ति-

सिद्धिव्याख्या

मिथ्ये'त्यस्यापि लक्षणयाऽशुद्धत्वं दृश्यत्व-मिथ्यात्वयोर्व्यापकमित्यर्थकतया सार्थकत्वात्, इति न कश्चिद् दोष इति

विट्ठलेशीयटिप्पणी

शेषः। *तस्य=शुद्धस्य॥ *स्वप्रकाशत्वासिद्धेरिति*॥ तथाच वृत्तिं विना निश्चयरूपस्याभावात् तत्र श्रुत्या दृश्यत्वनिषेधा-सम्भव इति भावः। एवं सति स्वप्रकाशत्वसंशयादिगोचरत्वमपि स्यात्, इत्यभिप्रेत्य तत्र शङ्कते टीकायाम्—*नचेति*॥ *वृत्तिभ्यामिति*॥ रजतेदंतादात्म्यावगाहिनीभ्यामिति शेषः। *साक्षिणः=बहिर्निःसृतेदंसंसृष्टान्तःकरणोपहित-चैतन्यस्य। शुद्धाविषयकत्वं स्वप्रकाशत्वधर्मेणैव ब्रह्मण उक्तशब्दजन्यवृत्तौ भानात्, तदाह—*स्वप्रकाशत्वाकारेति*॥ स्वप्रकाशत्वप्रकारकेत्यर्थः। *साक्षिणः=अन्तःस्थितान्तःकरणोपहितचैतन्यस्य तादात्म्येन शुद्धसम्बन्धिनः। *संशयादि-विरोधित्वम्=विशेषणतासम्बन्धेन निश्चयस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकसंशयाद्यभाववत्ताप्रयोजकत्वम्। *रजततादात्म्योपहितेति*॥ तादात्म्येन रजतविशेषितेत्यर्थः। *इदंविषयकवृत्तेरेवेति*॥ एवकारेणेदंतादात्म्यावगाहिन्या अविद्यावृत्तेर्व्यवच्छेदः। उक्तवृत्तिद्वयस्य भ्रमघटकत्वे ज्ञानद्वयं भ्रम इति गुरुमतप्रवेशापातादिति भावः। *अविद्या-परिणामभ्रमत्वेन=अविद्यापरिणामरूपभ्रमत्वेनेत्यर्थः। इदंवृत्तिः सन्निकर्षजन्यान्तःकरणपरिणामरूपेदंमात्रवृत्तितोऽन्य-विशिष्टविषयिणी अविद्यापरिणामरूपा। *ननु*—रजतरूपेणाविद्या इदमि तादात्म्येन परिणमते, रजताकारवृत्तिरूपेण चेदमाकारवृत्तौ तादात्म्येन परिणमते, इति रजततादात्म्यापन्नेदमाकारवृत्तितादात्म्यापन्नरजताकारवृत्तेर्विशिष्टभ्रमत्वम्, इति न ज्ञानद्वयभ्रमत्वम्, इत्यत आह—*सिद्धत्वेऽपि वेति*॥ *नील इत्यादिज्ञानस्य*॥ ब्रह्मान्यविषयकस्य घटादिविषयकस्य वा; समानविषयकत्वस्य प्रतिबन्धकत्वे तन्त्रत्वानुपगमात्। *शुद्धं नीलं न वेत्यादीति*॥ नच—अयं संशयः शुद्धत्वावच्छिन्ने ब्रह्मणि नीलत्व-तदभावोभयप्रकारकः कथं शुद्धविषयकः? तथात्वे वा शुद्धं कथं वृत्त्यविषय इति—वाच्यम्; 'शुद्धत्वं नीलवृत्ति न वे'त्यादिसंशयस्य विवक्षितत्वात्, नील इत्यादेः पृथिवीविषयकज्ञानस्य 'जलं नवे'त्यादिसंशयविरोधित्वापत्तेरप्यादिशब्दार्थत्वाच्च। *विरोधित्वापत्तेरिति*॥ तद्वारणाय समानविषयकत्वेन विरोधिताया वक्तव्यत्वादिति भावः। *उक्तसाक्षिणः=शुद्धाविषयकस्वप्रकाशत्वप्रकारकवृत्त्यवच्छिन्नसाक्षिणः। *उक्तसंशयाद्यविरोधित्वादिति*॥ शुद्धं स्वप्रकाशं न वेति, शुद्धत्वं स्वप्रकाशवृत्ति न वेति वा संशयाद्यविरोधित्वा-दित्यर्थः। 'संशयादी'त्यादिना शुद्धमस्वप्रकाशम्, अशुद्धत्वं स्वप्रकाशवृत्ति, इति विपर्ययो ग्राह्यः। एवं च शुद्धे "यत्तदद्रेश्यमि"ति श्रुत्या दृश्यत्वनिषेधाय वृत्तिविषयत्वं स्वीकार्यम्, इति शङ्कापर्यवसानं ध्वनयितुमादि पूरयितुं समा-धानमुपादत्ते—*वृत्तिकाल इतीति*॥ *शुद्धस्येति*॥ अदृश्यत्वबोधनायेति शेषः। *वृत्तिविषयत्वस्वीकार इत्यादि-रिति*॥ *एतेन*—वृत्त्यविषयत्वस्वीकारेण समाधानभङ्गो—*निरस्तः*॥

*मूले—धर्मेणोपहितत्वेन शुद्धत्वासम्भवात्*॥ अनुपहितत्वासम्भवादित्यर्थः। *नन्वेवम्*—'शुद्धं स्वप्रकाश-मि'ति वाक्यस्य का गतिरिति? अत आह—*शुद्धस्येति*॥ शुद्धत्व-वृत्तिविषयत्वयोर्विरोधादिति भावः। विरोधान्तरं पूरयति *टीकायाम्*—*शुद्धस्येति*॥

### अद्वैतसिद्धिः

संभवात् शुद्धस्य वृत्तिविषयत्वं न संभवति। अतः 'शुद्धं स्वप्रकाशमि'ति वाक्यस्य लक्षणयाऽशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथाचाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति, यथा

### न्यायामृतकण्टकोद्धारः

*अत्र कश्चित्*—वृत्तिकाले वृत्तिरूपेण धर्मेण शुद्धत्वासम्भवात् शुद्धस्य वृत्तिविषयत्वं न सम्भवति, इत्यतः 'शुद्धं स्वप्रकाशमि'ति वाक्यस्य लक्षणया, शुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथा चाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति। यथा भेदनिषेधेनाभिन्नत्वम्। तथाच ब्रह्मणि न ज्ञेयत्वम्—इति, *तन्न*; अज्ञेयत्वाभावेऽपि स्वप्रकाशता पर्यवस्यतीत्यस्याबोधविजृम्भितत्वात्।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयत्वस्वीकार इत्यादिः। *अत इति*॥ शुद्धस्य वृत्तिविषयत्वे स्वप्रकाशत्वविरोधाच्चेति शेषः। *अशुद्धत्वम् = उपहितत्वम्, नतु शुद्धभिन्नत्वम्; शुद्धस्य वृत्तिविषयत्वापत्तेः। *तथाच = उक्तव्यापकताधीसत्त्वे च। *अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यतीति*॥ उपहितत्वशून्यब्रह्मनिष्ठाभावप्रतियोगितारूपेण स्वप्रकाशत्वं न ज्ञायत इत्यर्थः। अस्वप्रकाशत्वज्ञानमनुपहितत्वविशिष्टविशेष्यकं नेति यावत्। तथाच स्वप्रकाशत्वाभावव्यापकाभावप्रतियोगित्वरूपायाः स्वप्रकाशत्वव्यतिरेकव्याप्तेर्यदोपहितत्वाभावरूपे शुद्धत्वे ज्ञानमुद्बुद्धसंस्कारो वा, तदोक्तशुद्धत्वविशिष्टे स्वप्रकाशत्वस्याभावो न ज्ञायते; वह्न्यभावव्यापक-

### सिद्धिव्याख्या

भावः। *ननु* दृश्यत्वे मिथ्यात्वाशुद्धत्वयोर्व्याप्य-व्यापकभावग्रहमात्रेण शुद्धेऽदृश्यत्वामिथ्यात्वयोर्न पर्यवसानम्, किंतु शुद्धे तदुभयव्यापकस्याशुद्धत्वस्य व्यावृत्तौ ज्ञातायामेव; तथाच व्यापकाशुद्धत्वव्यतिरेकज्ञानार्थमावश्यकं शुद्धज्ञानम्,

### विट्ठलेशीयटिप्पणी

*मूले—वाक्यस्य लक्षणयेति*॥ 'विषं भुङ्क्ष्वे'ति वाक्यस्येव शत्रुगृहभोजननिवृत्तिः; वह्निमानेव धूमवान् यस्तु अवह्निमान् स न धूमवान् इत्यत्र धूमाभावो वह्न्यभावव्यापक इतिवत्, स्वप्रकाशमेव शुद्धम्, यत्तु न स्वप्रकाशम्, तन्न शुद्धमि'त्यत्राशुद्धत्वमस्वप्रकाशत्वव्यापकमिति बोधसम्भव इति गूढाशय इत्यपि कश्चित्। उक्तलाक्षणिकार्थेऽप्युक्तदोषं परिहरति—*अशुद्धत्वमिति*॥ वस्तुसदुक्तव्यापकत्वं न प्रकृतोपयोगीत्यतो व्याचष्टे—*तथाचेति*॥ 'अशुद्धत्वे'त्यादिमूलस्य शुद्धेऽस्वप्रकाशत्वव्यापकत्वेन गृहीतस्योपहितत्वरूपस्याशुद्धत्वस्याभावज्ञानात् स्वप्रकाशत्वं सिद्ध्यतीत्यर्थः शुद्धस्य ज्ञेयतापत्त्या न सम्भवति, अतो ब्रह्मनिष्ठेत्यन्तं शुद्धमित्यन्तार्थः। *पर्यवसानम्=उक्तप्रतियोगित्वेन ज्ञानविषयत्वाभाव इत्यभिप्रायेण व्याचष्टे—*उपहितत्वशून्येति*॥ *नन्वेवम्* शुद्धस्य ब्रह्मणो ज्ञानविषयत्वे शुद्धत्वव्याघात इत्यत आह—*अस्वप्रकाशत्वज्ञानमिति*॥ *अनुपहितत्वविशिष्टविशेष्यकं न=अनुपहितत्वावच्छिन्नविशेष्यताकं न। तेन नोक्तदोषतादवस्थ्यमिति वक्ष्यते। *ननु* अस्वप्रकाशत्वस्योपहितत्वरूपाशुद्धत्वे व्यापकताग्रहेऽपि तदभावरूपशुद्धत्वे तत्प्रतियोगित्वरूपव्याप्तिग्रहः सर्वथा न संभवति; शुद्धत्वस्य च वृत्त्यविषये ब्रह्मणि ग्रहासंभवात्, इति तत्रास्वप्रकाशत्वज्ञाने किं प्रतिबन्धकम्? नच—अस्वप्रकाशत्वग्रहोऽपि तत्र न संभवतीति—वाच्यम्; तत्र स्वप्रकाशत्वग्रहस्याप्येवमसंभवे तत्सिद्धेरप्यसंभवात्, इत्यत आह—*तथाचेति*॥ उक्तपर्यवसितार्थे चेत्यर्थः। उपपत्तिरुच्यत इति शेषः। *न ज्ञायत इति*॥ तद्धर्मवति तद्धर्माभावरूपतद्धर्मव्यभिचारस्य तद्धर्मे तद्धर्मव्याप्तेश्च मिथो विरोधेन तद्धर्मविशिष्टविशेष्यकतद्धर्माभावप्रकारकबुद्धिं प्रति तद्धर्मे तद्धर्मनिरूपितान्वय-व्यतिरेकव्याप्त्यन्यतरविषयकत्वेनानुद्बुद्धसंस्कारान्यत्वविशिष्टेन तादृशव्याप्यत्वेन गृह्यमाणधर्मवत्ताज्ञानत्वेनैव प्रतिबन्धकता कल्प्या। नचैवमुक्तरूपेणेच्छादीनामपि प्रतिबन्धकत्वापत्तिः; तदा प्राय उद्बुद्धसंस्कारस्यापि सत्त्वेनेष्टापत्तेरिति भावः। अन्यत्राप्यनुभवबलाद् एतादृशप्रतिबन्धकतायाः क्लृप्तत्वमाह—*वह्न्यभावेति*॥ *ननु* एवं शुद्धत्वेऽस्वप्रकाशत्वव्यापकीभूताशुद्धत्वप्रतियोगित्वरूपस्वप्रकाशत्वव्यतिरेकव्याप्तिग्रहादेः

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावप्रतियोगित्वस्य धूमे निश्चय उद्बुद्धसंस्कारे वा सति धूमवति वह्न्यभावज्ञानाभाववदिति। तादृशव्याप्तिज्ञानस्य तादृशज्ञानाभावप्रयोजकत्वमेव स्वप्रकाशत्वविशिष्टशुद्धसाधकत्वमिति भावः। *एतेन*—शुद्धत्वस्य हेतोर्ब्रह्मण्यज्ञाने कथं तत्र स्वप्रकाशत्वस्यानुमितिरूपा सिद्धिरिति—*परास्तम्; शुद्धब्रह्मज्ञानं विनाऽपि शुद्धत्वे तादृशव्याप्तिधीसम्भवात्। किञ्च 'उपहितत्वमस्वप्रकाशत्वव्यापकमि'त्याकारकनिश्चय उद्बुद्धसंस्कारे वा सत्यप्युपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते; 'वह्निर्धूमव्यापकः' इत्याकारनिश्चय उद्बुद्धसंस्कारे वा सति वह्न्यभावविशिष्टे धूमज्ञानाभाववत्, उपहितत्वाभावरूपशुद्धत्वविशिष्टेऽस्वप्रकाशत्वज्ञानासंभवादुपहितत्वाभावरूपस्य शुद्धत्वस्याज्ञातत्वेऽपि न क्षतिः। नच—उपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायत इति वाक्यजन्यज्ञाने शुद्धब्रह्मभानमावश्यकमिति—वाच्यम्; उपहितत्वाभावावच्छिन्नविशेष्यतानिरूपितस्य ज्ञानप्रकारत्वस्यास्वप्रकाशत्व उक्तवाक्येनाभावबोधनात्। नच—उपहितत्वस्यास्वप्रकाशत्वव्यापकत्वे ज्ञाते शुद्धत्व-स्वप्रकाशत्वयोः सहचारज्ञानमपेक्ष्यते; अन्यथोपहितत्वाभाववद्वृत्त्यस्वप्रकाशत्वमिति व्यभिचारज्ञानानुच्छेदेनोक्तव्यापकताज्ञानासम्भवात्, उक्तसहचारस्य च

## विट्ठलेशीयटिप्पणी

शुद्धत्वविशिष्टेऽस्वप्रकाशत्वविशिष्टबुद्ध्यभावप्रयोजकत्वेऽपि शुद्धे स्वप्रकाशत्वसाधकत्वं कथम्? अत आह—*तादृशव्याप्तिज्ञानस्येति* ॥ *तादृशज्ञानाभावप्रयोजकत्वमेवेति* ॥ तत्र तदभावज्ञानाभावप्रयोजकं यत्, तदेव तद्विषयकतत्प्रकारकाज्ञाननिवर्तकम्, इति तादृशव्याप्तिज्ञानेन ब्रह्मविषयकास्वप्रकाशत्वप्रकारकाज्ञाननिवृत्तौ स्वप्रकाशं शुद्धं ब्रह्म वृत्तिं विनाऽपि स्वत एव सिद्ध्यतीति भावः। अशुद्धत्वव्यावृत्त्येति पङ्क्त्यर्थंयथाश्रुतार्थत्वे दोषं स्पष्टयति—*एतेनेति* ॥ शुद्धत्वे स्वप्रकाशत्वीयान्वय-व्याप्तिज्ञानोपेक्षाबीजमाह—*शुद्धब्रह्मज्ञानं विनाऽपीति* ॥ *तादृशव्याप्तीति* ॥ स्वप्रकाशत्वीयव्यतिरेकव्याप्तीत्यर्थः। व्यापकसामानाधिकरण्यरूपान्वयव्याप्तेः शुद्धब्रह्मघटितत्वेन तज्ज्ञानं विना ज्ञानं न संभवतीति भावः। *ननु* उपहितत्वाभाव उक्तव्याप्तिग्रहायोपहितत्वाभावो ज्ञातव्यः; स च प्रतियोग्यनुयोग्युपरागेणैव ज्ञेय इति तदनुयोगिनः शुद्धब्रह्मणो ज्ञानं दुर्वारमेव, इत्यत आह—*किंचेति* ॥ तद्धर्मे तद्धर्मव्यापकत्वस्य, तद्धर्माभावविशिष्टे तद्धर्मवत्त्वस्य च मिथो विरोधेन तद्धर्मे तद्धर्मव्यापकतानिश्चयाद्यपि तद्धर्माभावविशिष्टे तद्धर्मवत्ताज्ञाने प्रतिबन्धकमिति वाच्यमित्याशयेनाह—*उपहितत्वमस्वप्रकाशत्वव्यापकमित्यादिना—ज्ञानाभाववद् इत्यन्तेन* ॥ *अज्ञातत्वेऽपीति* ॥ शुद्धब्रह्मरूपानुयोगिज्ञानासंभवेनेत्यादिः। ज्ञानासंभवेन तत्रोक्तव्याप्तिग्रहासंभवेऽपीत्यर्थः। *न क्षतिः=नासिद्धिः। अस्वप्रकाशत्वज्ञानप्रतिबन्धकदौर्लभ्यमुक्तप्रतिबन्धकान्तरसौलभ्यादिति भावः। *वाक्यजन्यज्ञान इति* ॥ उक्तप्रमाणवाक्यजन्यस्वप्रकाशत्वाभाव उपहितत्वाभावविशिष्टविशेष्यकत्वविशिष्टज्ञानप्रकारकत्वाभाववानित्याकारकज्ञान इत्यर्थः। *आवश्यकमिति* ॥ उपहितत्वाभावविशिष्टत्वेन शुद्धब्रह्मण एव भानार्हत्वात्। तद्विशिष्टविशेष्यकत्वम्, तद्वन्निष्ठतदवच्छिन्नविशेष्यताकत्वम्। तत्राप्रसिद्धत्वात् तद्वन्निष्ठत्वांशमपहाय शेषांशो लक्ष्यते। एवमुक्तविशेष्यताकत्वविशिष्टज्ञाननिरूपितत्वघटकमुक्तविशेष्यतानिरूपितत्वमात्रं प्रकारतायां निवेश्योक्तवाक्यजन्यबोधमाह—*उपहितत्वाभावावच्छिन्नविशेष्यतेति* ॥ *अत्रेदं विचार्यते*—इयं विशेष्यता न घटनिष्ठानुपहितत्वरूपधर्मितावच्छेदकांशे भ्रमीया; तन्निरूपितप्रकारत्वस्यास्वप्रकाशत्वे सत्त्वेन तदभावस्य बाधात्, नापि ब्रह्मनिष्ठास्वप्रकाशत्वप्रमीया; शुद्धब्रह्मनिष्ठत्वे तस्य ज्ञेयत्वापत्तेः, उपहितब्रह्मनिष्ठत्वे स्वप्रकाशत्वेऽप्युक्तप्रकारत्वाभावावच्छिन्नत्वाभावः प्रतीयते; तस्यास्तदवच्छिन्नत्वे घटनिष्ठत्व उपहितब्रह्मनिष्ठत्वे चोपहितत्वाभावरूपधर्मितावच्छेदकांशे भ्रमीयत्वात्, शुद्धब्रह्मनिष्ठत्वेऽस्वप्रकाशत्वांशे भ्रमीयत्वात्, शुद्धत्वव्याघातापत्त्या शुद्धब्रह्मनिष्ठत्वासंभवाच्चेति 'घटोऽस्वप्रकाशः' इत्यादिप्रमीयायां घटत्वावच्छिन्नायां घटनिष्ठायां तस्यामुपहितत्वावच्छिन्नत्वाभावोऽबाधितो भासत इति युक्तम्, इत्युक्तज्ञानप्रतिबन्धकीभूतव्यापकताज्ञाने शुद्धत्वरूपज्ञानापेक्षया शुद्धज्ञानस्य दुर्वारत्वं शङ्कते—*नचेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शुद्धघटितत्वेन तद्धीः शुद्धविषयिकेति—वाच्यम् ; शुद्धस्य वृत्त्यविषयत्वादेव तद्धटितव्यभिचाराकारवृत्त्यसम्भवात्, उपहिते शुद्धत्वभ्रमकाले तादृशव्यभिचारज्ञानादुक्तव्यापकत्वज्ञानासम्भवेऽपि तदन्यकाले तत्सम्भवात्, उपहितरूपाधिकरणमादायोक्तसहचारभ्रमसम्भवाच्च। नच—उपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावज्ञानं माऽस्तु, 'स्वप्रकाशत्वं शुद्धस्वरूपवृत्ति न वे'ति ज्ञानं तु स्यादेवेति—वाच्यम् ; शुद्धस्य वृत्त्यविषयत्वादेव तद्वृत्तित्वाभावाकारभ्रमरूपवृत्तिसामग्र्या अकल्पनात्। नचैवम्—तादृशसामग्र्या अकल्पनादेव शुद्धास्वप्रकाशत्वयोर्वैशिष्ट्यधीवारण उक्तव्यापकताज्ञानस्योक्तधीप्रतिबन्धकस्य जनकं 'शुद्धं स्वप्रकाशमि'ति वाक्यमित्युक्तिर्व्यर्थेति—वाच्यम् ; *तादृशोक्तेर्ह्ययमभिप्रायः*—उक्तवैशिष्ट्यधियः कारणकूटाकल्पनादेव नोत्पत्तिः ; वाचस्पतिमते शुद्धस्य वृत्त्यविषयत्वात्, मतान्तरे तत्कल्पनेऽपि शुद्धत्वविशिष्टे तादृशधिय उक्तप्रतिबन्धकज्ञानाद् नोत्पत्तिः—

सिद्धिव्याख्या

'नन्वज्ञाते धर्मिणी'त्यादिप्रागुक्तेः, तथाच शुद्धज्ञानविषये शुद्धे व्यभिचारस्तदवस्थ एव। नच—प्रागुक्तरीत्या स्वतः

विट्ठलेशीयटिप्पणी

शुद्धविषयिकेति* ॥ तदसंभवे चोक्तव्यापकताज्ञानासंभवादुक्तज्ञानं दुर्वारमिति भावः। *शुद्धस्य वृत्त्यविषयत्वादिति* ॥ शुद्धविषयकज्ञानस्याप्रसिद्ध्या तत्सामग्र्येव न कल्प्यत इति भावः। *ननु* शुद्धविषयकोक्ताकारव्यभिचारभ्रमकाले कथं तत्संभव इति ? अत आह—*उपहित इति* ॥ *तदन्यकाल इति* ॥ भ्रमस्यानियतत्वादिति भावः। *व्यापकताज्ञानासंभवेऽपीति* ॥ तथाचोक्तव्यभिचारज्ञाननिरासायोक्तसहचारज्ञानमपेक्ष्यमिति भावः। तत्कालेऽप्याह—*उपहितरूपेति* ॥ उक्तव्यभिचारज्ञानसमानविषयकस्यैव सहचारज्ञानस्य विरोधित्वादिति भावः। *माऽस्त्विति* ॥ उक्तप्रतिबन्धकवशादिति भावः। *स्यादिति* ॥ स्वप्रकाशत्वे शुद्धस्वरूपावृत्तित्वज्ञानं हि शुद्धेऽस्वप्रकाशत्वज्ञानमिव शुद्धे स्वप्रकाशत्वसिद्धिविरोधि। नचाशुद्धत्वेऽस्वप्रकाशत्वव्यापकताज्ञानं स्वप्रकाशत्वे शुद्धस्वरूपवृत्तित्वसंशये प्रतिबन्धकम् ; स्वप्रकाशत्वस्य शुद्धवृत्तित्वे तदवृत्तित्वेऽपि वाऽस्वप्रकाशे सर्वत्राशुद्धत्वसंभवेन विरोधिविषयकत्वाभावात्, इति नात्रेष्टापत्तिरिति भावः। नच—अस्वप्रकाशत्वे शुद्धवृत्तित्वमुपहितत्वव्याप्यत्वम्, अशुद्धत्वेऽस्वप्रकाशत्वव्यापकत्वं च, अस्वप्रकाशत्वेऽशुद्धत्वरूपोपहितव्याप्यत्वमेव ; इदं च धूम-धूमाभावयोर्वह्निव्याप्यत्ववद् मिथो विरुद्धमिति—वाच्यम् ; धूम-धूमाभावयोः प्रमेयत्वादिकेवलान्वयिव्याप्यत्वात्। नच—भावाभावयोर्व्यतिरेक्येकैकव्याप्यत्वमेव विरुद्धमिति—वाच्यम् ; अनुपहितेऽपि स्वदेश-कालावच्छेदेन तत्तदुपाध्युपहितत्वसत्त्वेनोपहितत्वस्यापि केवलान्वयित्वेन भावाभावरूपस्वप्रकाशत्वास्वप्रकाशत्वयोस्तद्व्याप्यत्वे विरोधाभावात्। *तदवृत्तित्वेऽपि* ॥ शुद्धवृत्तित्वेऽपीत्यर्थः। *भ्रमरूपेति* ॥ स्वप्रकाशत्वविशेष्यकेत्यादिः। *सामग्र्या अकल्पनादिति* ॥ तथाच प्रतिबन्धकाभावात् शुद्धे स्वप्रकाशत्वसिद्धिरिति भावः। *एवम्=सामग्र्या अकल्पनेनोक्तभ्रमवारणे। *तादृशेति* ॥ शुद्धविषयकज्ञानजनकेत्यर्थः। *उक्तेति* ॥ अशुद्धत्वेऽस्वप्रकाशत्वनिरूपितेत्यर्थः। *उक्तधीति* ॥ शुद्धाप्रकाशवैशिष्ट्यधीत्यर्थः। *जनकमिति* ॥ लक्षणयेत्यादिः। *उक्तिः=मूलस्थोक्तिः। *उक्तेति* ॥ शुद्धास्वप्रकाशत्वेत्यर्थः। *वैशिष्ट्यधिय इति* ॥ अप्रसिद्धेयति शेषः। *मतान्तर इति* ॥ शुद्धस्य वृत्तिविषयत्वाङ्गीकर्तृविवरणकारमत इत्यर्थः। *तत्कल्पनेऽपि=शुद्धविषयकवृत्तिसामग्रीकल्पनेऽपि। *अत्रेदमवधेयम्*—"नेह नाने"त्यादिवाक्यसहकृत"तत्त्वमस्या"दिवाक्यजन्यनिर्विकल्पकवृत्तेर्निरुपाधिकं शुद्धमेव ब्रह्म विषयः ; तदा देहादिवद् वृत्तेर्वर्तमानत्वेऽपि बाधेनोपाधित्वासंभवात्, आत्माश्रयापत्तेश्च। अत एवाज्ञानस्यापि शुद्धमेव विषयः, इति ज्ञानाज्ञानयोः समानविषयत्वमुपपद्यते, "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला" इति च संगच्छत इति। *शुद्धत्वविशिष्टे=उपहितत्वाभावविशिष्टे। *तादृशधियः=अस्वप्रकाशत्वधियः। *उक्तप्रतिबन्धकेति* ॥ अशुद्धत्वेऽस्वप्रकाशत्वव्यापकतारूपविषयकेत्यर्थः। *किंच* भावाभावयोर्व्यतिरेक्येकवस्तुव्याप्ययोर्गोत्वाश्वत्ववद् वस्तुतो विरोधेऽपि विरोधिज्ञानं विना नैकस्य ज्ञानमपरस्य ज्ञाने प्रतिबन्धकम् ; ग्राह्याभावाप्रनवगाहित्वात्।

न्यायामृतकण्टकोद्धारः

**यतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिपर्यवसानं नामानुमानमेव। तथाच तादृशानुमितिविषयत्वं दुर्वारम्; अन्यथा स्वप्रकाशत्वासिद्धेः। तदविषयत्वेऽपि तत्र तत्सिद्धौ तुच्छेऽपि तत्सिद्धि-**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*इति* ॥ तस्मात् शुद्धत्व-सत्यत्वादिविशिष्टस्य तदुपलक्षितव्यक्तिमात्रस्य वा नास्वप्रकाशत्ववैशिष्ट्यधीसम्भवः। *यथेत्यादि*। तादात्म्यात्यन्ताभावव्यापकस्यात्यन्तिकभेदरूपात्यन्ताभावस्य निषेधज्ञानेन तादात्म्यरूपमभिन्नत्वं यथा सिध्यतीत्यर्थः। उपहितचित्तादात्म्यात्यन्ताभावव्यापकस्योपहितचिदत्यन्तभेदरूपात्यन्ताभावस्य शुद्धचिदन्यनिष्ठस्य प्रतियोग्युपहितचिद्भेदात्यन्ताभाव इति निश्चयोत्तरं तादृशात्यन्ताभावविशिष्ट उपहित-

न्यायामृतसौगन्ध्यम्

**तथा चाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशत्वं पर्यवस्यति; यथा भेदनिषेधेनाभिन्नत्वमिति—वाच्यम्;**

विट्ठलेशीयटिप्पणी

मतद्वयसाधारण्येनोपसंहरति—*तस्मादिति*॥ शुद्धविषयकवृत्तिसामग्र्यकल्पनात्, उक्तप्रतिबन्धकवशाद्वेत्यर्थः। उक्तन्यायं धर्मान्तरेऽप्यतिदिशति—*सत्यत्वादीति*॥ *ननु* उक्तप्रतिबन्धकेन ब्रह्मणि शुद्धत्वं धर्मितावच्छेदकीकृत्यास्वप्रकाशत्वविशिष्टबुद्धिर्मा भूत्; 'नेह नाने'ति श्रुत्या ब्रह्मणि तद्बाधोत्तरं निर्धर्मितावच्छेदकिका तु स्यादिति शङ्कां परिहरति—*तदुपलक्षितव्यक्तिमात्रस्येति*॥ तद्वत्ताग्रहोत्तरतद्बाधकालीनतदविषयकतदाश्रयीभूतव्यक्तिविषयक इत्यर्थः। इदमपि 'नेह'त्यादिनैकैकधर्मबाधाभिप्रायेण। यदि तु सकलधर्मबाधो युगपदेव, तदा क्वास्वप्रकाशत्वविशिष्टबुद्ध्यापत्तिरपीति ध्येयम्। *नास्वप्रकाशत्ववैशिष्ट्यधीसंभव इति*॥ इदं शुद्धेऽस्वप्रकाशत्ववैशिष्ट्यधीप्रतिबन्धकमशुद्धत्वेऽस्वप्रकाशत्वव्यापकताज्ञानरूपं 'शुद्धं स्वप्रकाशमिति' श्रुतिवाक्यजन्यम्, 'नेह नाने'त्यादिवाक्यजन्यधर्ममात्रबाधज्ञानं च साधनचतुष्टयसम्पन्नानां श्रवणादिनिष्ठानां विवरणकारमते नियमेनास्ति। वाचस्पतिमते मानाभावात् तादृशधीसामग्र्येव नास्ति। सर्वथा शुद्धास्वप्रकाशत्ववैशिष्ट्यधीरूपप्रतिबन्धकभावात् स्वप्रकाशशुद्धब्रह्मस्वरूपविषयकाज्ञानस्योक्तव्यापकताज्ञानेन "साक्षी चेता केवलो निर्गुणश्च" इति बोधेन च निवृत्तेश्च वृत्तिं विनाऽपि स्वत एव स्वप्रकाशब्रह्मस्वरूपसिद्धिरिति निर्गलितार्थः। मूले *यथा भेदनिषेधेनेति*॥ अत्राभिन्नत्वं न भेदाभावरूपम्; भेदनिषेधेन साधनेनैक्यात्, किंतु तादात्म्यम्, तथापि भेदनिषेधे तादात्म्यस्य व्याप्तिज्ञानं विना पर्यवसानमसंभवीत्यतो व्याचष्टे—*तादात्म्येति*। व्यतिरेकव्याप्तिः—*अत्यन्ताभावव्यापकस्येति*॥ एवं च व्यतिरेकव्याप्तिज्ञानसंभवाद् न दोष इति भावः। औपाधिकभेदाभावस्य तादात्म्यस्याश्रयेऽसत्त्वेनासाधकत्वात्—*आत्यन्तिकेति* भेदविशेषणम्। अनौपाधिकेत्यर्थः। साध्याभावव्यापकस्य भेदस्य प्रतियोगितावच्छेदकत्वस्यैव व्याप्तिरूपत्वात्॥ *भेदरूपात्यन्ताभावस्येति*॥ निषेधस्य स्वरूपतोऽसाधकत्वादाह—*निषेधज्ञानेनेति*। उक्तात्यन्ताभावप्रतियोगिताकत्वस्वरूपव्याप्तिविशिष्टवत्ताज्ञानेनेत्यर्थः। तादात्म्यरूपमभिन्नत्वमुक्तरीत्या शुद्धे स्वप्रकाशत्वस्य स्वतःसिद्धिरूपदार्ष्टान्तिकसाम्याय दृष्टान्ते स्वतःसिद्धिविषयतयोक्तम्। यथेत्यादिग्रन्थार्थं योजयितुमाह—*उपहितचित्तादात्म्येति*॥ *शुद्धचिदन्यनिष्ठस्येति*॥ *ननु* मायोपहितं चैतन्यमीश्वरो जगत्कारणम्, तत्तादात्म्यं शुद्धचिदन्यस्मिन् घटादौ तदुपहितचैतन्ये चास्ति, इति—तत्र तदत्यन्ताभावः कथम्? कथं वा तत्रोपहितचितोऽत्यन्तभेदः? अभेदस्यापि सत्त्वात्, तादात्म्यस्योभयरूपत्वादिति—चेत्, "तत्त्वमसी"त्यादिवाक्यजन्यनिर्विकल्पकवृत्त्युपहिता चिद् अत्रोपहितचिच्छब्देन विवक्षिता। तत्तादात्म्यं शुद्धचित्येव; तस्या एव तदधिष्ठानत्वात्। तदत्यन्ताभावश्च घटादावस्ति। तत्र च शुद्धचिदत्यन्तभेदोऽपीति वयं ब्रूमः। *वस्तुतस्तु* उक्ततादात्म्यमपि शुद्धचिन्निष्ठं ग्राह्यमिति वक्ष्यते। *इति निश्चयोत्तरमिति*॥ उपहितचिदत्यन्तभेद उपहितचित्तादात्म्यात्यन्ताभावव्यापक इति निश्चयोत्तरं वेति शेषः। तादृशोद्बुद्धसंस्कारयोरप्युपलक्षणमिदम्। *तादृशात्यन्ताभावविशिष्टे*—उपहितचिद्भेदात्यन्ताभावविशिष्टे। धर्मिणीति शेषः। *ननु* उपहितचिद्रूपे धर्मिणि भवेदिदम्, शुद्धे चिद्रूपे

**अद्वैतसिद्धिः**

भेदनिषेधेन अभिन्नत्वम्, नच—शुद्धपदेन अभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोगवैयर्थ्यमिति—वाच्यम्; पर्यवसितार्थमादाय सार्थकत्वोपपत्तेः। एवं च 'शुद्धं न दृश्यं न मिथ्ये'त्यस्याप्यशुद्धत्वं दृश्यत्व-मिथ्यात्वयोर्व्यापकमित्येतत्परत्वेन शुद्धे दृश्यत्व-मिथ्यात्वयोर्व्यतिरेकः पर्यवस्यति ॥

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

चित्तादात्म्यं यथा पर्यवस्यतीति यावत्। तादृशात्यन्ताभावविशिष्टशुद्धचितो वृत्त्यविषयत्वेऽपि तस्यामुक्त-तादात्म्यं यथोक्तरीत्या पर्यवस्यतीति भावः। उपहितचित्तादात्म्यमत्रोपहितचित्प्रतियोगिकत्वोपलक्षित-तादात्म्यं ग्राह्यम्; अन्यथोक्तप्रतियोगिकत्वविशिष्टतादात्म्यात्यन्ताभावस्योपहितचित्यपि सत्त्वाद् उपहित-चिदत्यन्तभेदस्योक्तात्यन्ताभावव्यापकत्वासम्भवात्। उक्ततादात्म्यमपि शुद्धचिन्निष्ठं ग्राह्यम्; अन्यथा घटादावपि तदुपहितचित्तादात्म्यसत्त्वेनोक्तात्यन्ताभावाप्रसिद्धेः। सर्वमतसाधारणदृष्टान्तापेक्षायां त्वेवं व्याख्येयम्। यथा तद्घटत्वरूपतद्घटाभिन्नत्वाभावस्य व्यापको यस्तद्घटभेदः, तद्रूपस्यात्यन्ताभावस्य प्रतियोगी तद्घटभेदात्यन्ताभाव इति निश्चयोत्तरं तद्घटभेदात्यन्ताभाववति तद्घटत्वाभावज्ञानानुत्पत्त्या तद्घटत्वं पर्यवस्यतीति। *पर्यवसितार्थमादायेति*। शुद्धत्वविशिष्टे स्वप्रकाशत्वाभावज्ञानासम्भवरूपं पर्यवसित-प्रयोजनमित्यर्थः। *एवम्=शुद्धस्य वृत्तिविषयत्वं विनैव तत्तार्थसिद्धिसम्भवे।

**विट्ठलेशीयटिप्पणी**

वृत्तिविषयत्वानङ्गीकारे कथमिदं पर्यवसानम्? अत आह—*तादृशात्यन्ताभावविशिष्टशुद्धचित इति* ॥ *तस्याम्=उक्तचिति। *उक्तरीत्या पर्यवस्यतीति* ॥ उक्तव्याप्तिनिश्चयोक्तव्यापकत्वनिश्चयादिनोक्तविशिष्टायाम्, उक्तोपलक्षितायां वा शुद्धचित्युपहितचित्तादात्म्याभाववैशिष्ट्यबुद्धिप्रतिबन्धे शुद्धचित्युपहितचित्तादात्म्यप्रकारकाज्ञाननिवृत्तौ च, शुद्ध-चित्युपहितचित्तादात्म्यं वृत्तिं विना स्वत एव सिद्ध्यतीत्यर्थः। *अन्यथा=विशिष्ट उक्तप्रतियोगिकत्वतादात्म्यग्रहणे। स्वप्रतियोगिताकत्वविशिष्टसंबन्धानुयोगितायाः स्वस्मिन् स्वविशिष्टबुद्ध्यापत्तिभयेनानभ्युपगमादिति भावः। उपहित-चिच्छब्दं यथाश्रुतं सङ्गमयितुमाह—*उक्ततादात्म्यमपीति* ॥ *शुद्धचिन्निष्ठं ग्राह्यमिति* ॥ एवं चात्र तादात्म्य-शब्दो लाक्षणिक इति भावः। *अन्यथा=तादात्म्यसामान्यग्रहणे। *तदुपहितेति* ॥ घटाद्युपहितेत्यर्थः। मायो-पहितोपलक्षणमिदम्। उपहितचित्पदस्य तत्त्वज्ञानोपहितचित्परत्वेऽप्ययं दोषः दुर्वार इत्युक्तमस्माभिः। *उपहितचित्=शुद्धचित्। 'भेदाभेदोभयरूपं तादात्म्यम्, अत्यन्तभेदः, वृत्तिः, अज्ञानम्, शुद्धस्य वृत्तिविषयत्वमस्ति नास्ति, वृत्तिं विना स्वतःसिद्धिरित्यादिव्यवहारस्य वेदान्तिमात्रप्रसिद्धत्वाद् वेदान्ति-नैयायिकोभयप्रसिद्धव्यवहारविषये दृष्टान्तमुप-पादयति—*सर्वमतेति* ॥ तद्घटत्वरूपं तद्घटाभिन्नत्वम्, तदभावस्येत्यर्थः। *इति निश्चयोत्तरमिति* ॥ तद्घट-भेदस्तद्घटत्वाभावव्यापक इति निश्चयोत्तरं चेत्यपि बोध्यम्। *तद्घटत्वमिति* ॥ तद्घटभेदाभाववतीत्यनुषङ्गः। *पर्यवस्यति* ॥ निश्चयविषयो भवतीत्यर्थः। *मूले—शुद्धपदेनेति* ॥ केवलेनेति शेषः। स्वप्रकाशपदसहितेन वाक्य-लक्षणयोक्तार्थबोधरूपफलजननात्। शङ्कते—*नचेति* ॥ शक्त्या विशिष्टस्मृतिजननात्। *शुद्धाप्रकाशे=शुद्धस्य वृत्त्यविषयत्वेन स्वप्रकाशपदेन शुद्धविषयकपदार्थस्मृतिवृत्तेरप्यजनने। तत्राभिधाया अपि शुद्ध एव वक्तव्यत्वात्। *तत्प्रयोगवैयर्थ्यम्=केवलशुद्धपदप्रयोगवैयर्थ्यमित्यर्थः। केवलशुद्धपदस्य पर्यवसितार्थासंभवात् स्वप्रकाशपदेन सहितस्य पदद्वयस्यवाक्यतां प्राप्तस्य वाक्यस्य लक्षणयोक्तप्रयोजनार्थकतया पर्यवसितार्थपदं व्याचष्टे टीकायाम्—शुद्धत्वविशिष्ट इति*॥ *स्वप्रकाशत्वाभावज्ञानासंभवरूपमिति* ॥ शुद्धे स्वप्रकाशत्वाज्ञाननिवृत्तिरूपं चेत्यपि बोध्यम्। स्वतः शुद्धे स्वप्रकाशत्वसिद्धेर्नित्यत्वेऽपि क्षेमसाधारणं प्रयोजनत्वं भवत्येव। *पर्यवसितेति* ॥ उक्तव्याप्तिव्यापकत्वज्ञानरूप-प्रतिबन्धकजननद्वारा सिद्धेत्यर्थः। 'एवं चेति' मूलस्थमेवपदं व्याचष्टे—*एवमिति* ॥ चकाररहितो वा पाठो बोध्यः। *मूले—पर्यवस्यतीति* ॥ दृश्यत्व-मिथ्यात्वभ्रम-तदुपादानाज्ञाननिवृत्त्या वृत्तिं विना स्वतः सिद्ध्यतीत्यर्थः ॥

*तत्र-ब्रह्मणि। मिथ्यात्वव्यतिरेकसिद्धिर्दृष्टान्तविधयोक्ता, मिथ्यात्वसाधकस्य दृश्यत्वहेतोर्ब्रह्मणि व्यभिचारो-

न्यायामृतम्

शब्दजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धेः, लाघवेन स्फुरणमात्रमेव मिथ्यात्वे तन्त्रम्,

अद्वैतसिद्धिः

*एतेन*—स्फुरणमात्रमेव मिथ्यात्वे तन्त्रम्; लाघवात्, अतः 'स्वतः स्फुरदपि ब्रह्म मिथ्यैवे'ति शून्य-

तरङ्गिणी

विधि-निषेधयोरविषयस्य विधि-निषेधाभाजनत्वात्, अन्यथाऽतिप्रसङ्गादित्यर्थः ॥ *लाघवेनेति* ॥ ब्रह्मण्य-मिथ्यात्वसिद्ध्यर्थं वृत्तिव्याप्यत्वरूपं दृश्यत्वं ब्रह्मण्यनभिप्रेतं मिथ्यात्वे प्रयोजकमभिहितं परेण। नचैतावताऽपि परेष्टसिद्धिः; लाघवेन स्फुरणमेव मिथ्यात्वे तन्त्रम्, नतूक्तं दृश्यत्वम्। एवं चादृश्यमपि ब्रह्म स्वतः-स्फुरदपि स्फुरणरूपमिथ्यात्वप्रयोजकवत्त्वाद् मिथ्यैव, नतु परतः स्फुरद्रूप्यादिमात्रमित्यपि स्यादित्यर्थः। *ननु* न लघुनोऽपि स्फुरणस्य मिथ्यात्वप्रयोजकत्वम्, किं तर्हि? गुरुणोऽप्युक्तदृश्यत्वस्यैव; अन्यथा ब्रह्मणोऽपि

न्यायामृतकण्टकोद्धारः

प्रसङ्गात्। एतेन—भेदनिषेधेनाभिन्नत्वमपि—व्याख्यातम्। तथाच ज्ञानविषयत्वाभावे स्वप्रकाशत्वा-सिद्धिः सुस्थैवेति। *लाघवेनेति* ॥ *ननु*—स्फुरणमात्रस्य मिथ्यात्वप्रयोजकत्वे शुक्तिरूप्यादेः स्फुरणरूपत्वाभावात् तत्र मिथ्यात्वं न स्यात्। नच—स्फुरणविषयत्वं विवक्षितम्; शुक्तिरूप्यादेः स्फुरण-विषयत्वेन मिथ्यात्वोपपत्तिरिति—वाच्यम्; स्फुरणविषयत्वस्य ब्रह्मण्यभावेन तन्मिथ्यात्वापादना-सम्भवादिति चेत्, *न*; यथाकथञ्चित् स्फुरणविषयत्वस्य विवक्षितत्वात्। तथाच ब्रह्मणः स्फुरणरूपत्वेऽपि कल्पितभेदेन ज्ञातृ-ज्ञेयभावादिवत् स्फुरणविषयत्वस्याज्ञातृत्वाद्यवच्छेदेनोपपत्तेः। अथवा—स्फुरणभेदेनाभिव्यक्तत्वं मिथ्यात्वप्रयोजकत्वेन विवक्षितम्। अस्ति चैतद् घटादाविव ब्रह्मण्यपि;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*एतेन* = मिथ्यात्वसाधकहेतोर्ब्रह्मावृत्तित्वस्थापनेन। *स्वतःस्फुरत्*=स्वविषयः। *ब्रह्म*=सर्व-

सिद्धिव्याख्या

स्फुरणरूपाधिकरणोपस्थितेरेव तद्व्यावृत्तिबुद्ध्युपपत्तौ न व्यभिचारप्रसक्तिरिति—वाच्यम्; तथात्वे मिथ्यात्वेऽपि स्फुरण-मात्रस्यैव लाघवात् तन्त्रत्वापत्त्या स्फुरणरूपब्रह्मणोऽपि मिथ्यात्वापत्त्या शून्यवादिमतप्रवेशापत्तेः, इत्याशङ्क्य वक्ष्यमाण-प्रकारेण निराकरोति—*एतेनेति* ॥ *लाघवादिति* ॥ अन्यतःस्फुरणस्य वा स्वतःस्फुरणस्य वा विशेषरूपस्य तन्त्रत्वे गौरवात् सामान्यरूपतया लाघवात् स्फुरणमात्रमेव तन्त्रमित्यर्थः। ततः किमिति? अत आह—*अत इति* ॥ यतः स्फुरणमात्रं तन्त्रम्, अत इत्यर्थः। शून्यवादिमतप्रवेशं दर्शयति—*स्फुरदपीति*॥ स्फुरणमात्रत्वं स्वतःस्फुरति ब्रह्मण्यप्य-

विट्ठलेशीयटिप्पणी

ज्ञापकेनापि तत्र तदुपगमात्। दृश्यत्वव्यतिरेकस्तु व्यभिचारोद्धाराय सिद्धान्तिना व्यवस्थापयितुमारब्धः। एवं-चेत्यादिपर्यवस्यतीत्यन्तयाऽनया पङ्क्त्या निगमितो योऽर्थस्तदर्थकत्वमेवैते नेत्यस्याह—*मिथ्यात्वेति* ॥ *ब्रह्मावृत्ति-त्वेति* ॥ शुद्धब्रह्मावृत्तित्वेत्यर्थः। शुद्धत्वव्याघातादिनेति भावः। *मूले—स्फुरणमात्रमिति* ॥ मात्रपदेन स्फुरणे स्वभिन्नत्वव्यवच्छेदः, तेन ब्रह्मणि हेतुसिद्धिर्वक्ष्यमाणा सङ्गच्छते। स्फुरणम्=ज्ञानं विषयतासंबन्धेन, ज्ञानविषयत्वं वा यत्र प्रयोजको हेतुरित्यर्थः। *विषयता=तादात्म्यम्; लाघवात्। स्वभिन्नत्वानुपादानेनेत्यादिः। *अतः=स्वभिन्नत्वानु-पादानात्। *स्वतःस्फुरदित्यस्य स्वात्मकस्फुरणकर्तृत्वमर्थः। तदभेदे जन्यजनकभावस्याश्रयाश्रयिभावस्य चासंभवात् स्फुरणतादात्म्यरूपं विषयत्वमित्याह—*स्वविषय इति* ॥ वेदान्तिमतसिद्धब्रह्मणः शून्यवादिनाऽनुप-गमात् तन्मतेन व्याचष्टे—*ब्रह्मेति* ॥ *सर्वं विषयकेति* ॥ ब्रह्मवत् सर्वज्ञत्वाय स्वविषयत्वाय च—*मिथ्यात्वेति* ॥

अद्वैतसिद्धिः

**वादिमतम्--*निरस्तम्*; स्वतः स्फुरणरूपतायाः शुक्तिरूप्यादावभावात्, स्फुरणविषयत्वस्य ब्रह्मण्यसिद्धेः।**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयकनिरुपप्लवक्षणिकविज्ञानसन्तानप्रविष्टं विज्ञानम्। *ननु* ब्रह्मणस्त्वन्मते वृत्तिरूपज्ञानविषयत्वास्वीकारेऽपि ज्ञानस्वरूपत्वमेव मिथ्यात्वे हेतुरस्तु; शून्यवादस्य विज्ञानवादविशेषत्वेन शून्यवादिनो मते सर्वस्य ज्ञानस्वरूपत्वेन शुक्तिरूप्यादौ साधनावैकल्यात्, तत्राह—*स्वतः-स्फुरणरूपताया इति* ॥ मन्मत इति शेषः। ज्ञानतादात्म्यापन्नरूपतायाः शुक्तिरूप्ये सत्त्वेऽपि ज्ञानात्यन्ताभिन्नस्वरूपताया मन्मते शुक्तिरूप्ये विरहेण मां प्रति तेन हेतुना ब्रह्मणि मिथ्यात्वं साधयितुं न शक्यमिति भावः। *ननु* तर्हि शुक्तिरूप्यादौ ज्ञानविषयत्वस्य सत्त्वात् तदेव हेतुरस्तु; मन्मते ज्ञानामात्रस्य स्वविषयत्वेन ब्रह्मण्यपि तत्सत्त्वाद् नासिद्धिः, तत्राह—*स्फुरणेति* ॥ मन्मत इत्यादिः।

सिद्धिव्याख्या

विशिष्टमिति जगद्वद् ब्रह्मापि मिथ्यैव स्यादित्यर्थः। तन्मतप्रवेशं परिहरति—*निरस्तमिति* ॥ कथं निरस्तमिति चेत्तत्र वक्तव्यम्, किं 'निर्विशेषं न सामान्यम्' इति न्यायेन भवदुक्तमपि स्वतःस्फुरणतयाऽन्यतः स्फुरणतया वा पर्यवस्यतीति त्वयाऽप्यङ्गीकरणीयम्? उत न्यायानुगृहीतगौरवस्यादोषत्वात्? *तत्राद्ये* दोषमाह—*स्फुरणेति*॥ तथाच मिथ्यात्व-

विट्ठलेशीयटिप्पणी

अविच्छिन्नेत्यर्थकं सन्तानविशेषणं नित्यतुल्यत्वाय। क्षणिकत्वं तन्मतेन। *सन्तानप्रविष्टम्=धाराघटकम्। *विज्ञानम्=तत्सामान्यम्। *ननु* स्वभिन्नत्वानिवेशेऽपि स्फुरणविषयत्वं शून्यवादिना हेतूकृतम्, तच्च स्फुरणरूपे ब्रह्मणि स्वात्यन्ताभिन्नस्फुरणनिरूपिततादात्म्यरूपमपि न संभवति; तादात्म्यस्य तद्भेदसहिततदभेदरूपत्वेन तदत्यन्ताभिन्ने तत्रासंभवात्, प्रयोजनाभावाच्च, शुद्धत्वव्याघाताच्च। अत एव—वृत्तिरूपज्ञानविषयत्वं शुद्धे ब्रह्मणि सिद्धान्तिना निराकृत्यैतेनेत्यनेन तदतिदेशेन स्फुरणविषयत्वं निरस्य शून्यवादिमतं—*निराकृतम्* ॥ एवं च तेन स्वतःस्फुरणरूपताया हेतूकरणाभावात् तन्मतनिराकरणार्थमुत्तरपङ्क्त्या शुक्तिरूप्यादौ तदसिद्धिकथनं व्यर्थम्, असंगतं चेत्याशङ्क्य शून्यवादशङ्क्या तदवतारयति—*नन्विति* ॥ *त्वया=वेदान्तिना। अपिना स्फुरणरूपज्ञानविषयत्वास्वीकार इत्यपि बोध्यम्। *विज्ञानवादीति* ॥ सर्वोऽप्यर्थो विज्ञानाद् भिन्नाभिन्नो विज्ञानस्याकारविशेषः, विज्ञानादत्यन्तभिन्नो न कोऽप्यर्थ इति विज्ञानवादिशून्यवादिनोस्तुल्यमिति भावः। *साधनावैकल्यादिति* ॥ तथाच ज्ञानस्वरूपत्वेन हेतुना शुद्धे ब्रह्मणि मिथ्यात्वसिद्धिः स्यादिति भावः। शून्यवादिमते स्फुरणरूपतायाः शुक्तिरूप्येऽपि सत्त्वात् पूरयति—*मन्मत इति शेष इति* ॥ वेदान्तिमत इत्यर्थः। *ननु* इदंतादात्म्यापन्नरजताकाराविद्यावृत्त्युपहितसाक्षिचैतन्यरूपज्ञानस्य तादात्म्यरूपविषयत्वस्य शुक्तिरूप्येऽपि सत्त्वेन स्फुरणात्मकतारूपस्फुरणतायाः शुक्तिरूप्ये सत्त्वात् कथं तदभाव इति? अत आह—*ज्ञानतादात्म्यापन्नरूपताया इति* ॥ *ज्ञानात्यन्ताभिन्नस्वरूपताया इति* ॥ ब्रह्मणि मिथ्यात्वसाधनाय त्वया हेतूकर्तव्याया इति शेषः। *मां प्रति* ॥ दृष्टान्ते पक्षे च वादि-प्रतिवादिसिद्धस्यैव व्याप्तिपक्षधर्मतानिश्चयसंभवेन साध्यानुमापकत्वादिति भावः। *ननु*—ब्रह्मणि वृत्तिविषयत्वनिराकरणेन स्फुरणविषयत्वस्यापि निराकृतप्रायत्वात्, एतेनेत्यनेन तदुक्तेश्च, स्फुरणविषयत्वस्य ब्रह्मण्यसिद्धेरिति पुनरुक्तम्, अतस्तदवतारयति—*नन्विति* ॥ *ज्ञानेति* ॥ स्फुरणरूपज्ञानेत्यर्थः। *मन्मते* ॥ शून्यवादिमत इत्यर्थः ॥ *ब्रह्मणि=सर्वविषयकविज्ञानसन्तानप्रविष्टविज्ञानरूपे। *तत्सत्त्वादिति* ॥ तस्य विज्ञानान्तरविषयत्वेऽनवस्थाभयेन स्वविषयत्वेन व्यवहारोपगमात्। अन्यथा व्यवहारे क्वचिद् ज्ञानविषयत्वम्, क्वचिद् ज्ञानमिति प्रयोजकभेदस्वीकारे गौरवात्, सर्वत्र ज्ञानविषयत्वस्यैव व्यवहारप्रयोजकत्वे लाघवात्। अत्यन्ताभिन्ने स्वस्मिन् स्वतादात्म्यस्य नैयायिकैरुपगमेन तद्रूपविषयत्वस्याक्षतत्वादिति भावः। *तत्रेति* ॥ स्वमताभिनिवेशेन शून्यवाद्याशङ्कायाम्। *आह*—स्वमताभिनिवेशेन वेदान्ती आहेत्यर्थः। तदाह—*मन्मत इति* ॥ सिद्धान्ते

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाच प्रतिवादिनं प्रत्यसिद्धो हेतुर्न प्रयोक्तव्यः, तत्र तस्यानुमितिजनकपरामर्शासम्भवादिति भावः।

न्यायामृतसौगन्ध्यम्

यत्राशुद्धत्वाभावस्तत्रास्वप्रकाशत्वाभाव इति व्यतिरेकसहचारज्ञानात् शुद्धस्यापि ज्ञेयत्वात्। किञ्च वृत्तिपदेनाविद्यावृत्तिः, मनोवृत्तिर्वा विवक्षिता ? नाद्यः ; जगन्मिथ्यात्वसिद्धेः प्राग् भ्रमरूपाविद्यावृत्तिविषयत्वासंभवात्, नान्त्यः ; साक्षिवेद्यशुक्तिरूप्यादावन्तःकरण-सुखादिषु च भागासिद्धेः॥

*यत्तु*—'शुक्तिरूप्यादिकं मिथ्ये'त्याकारकमनोवृत्तिविषयत्वमादाय शुक्तिरूप्य-सुखादौ साधनमस्तीति, *तन्न*, 'शुद्धं ब्रह्म वृत्तिव्याप्यं ने'त्याकारकवृत्तिविषयत्वस्य तथापि संभवेन व्यभिचारात्॥

सौगन्ध्यविमर्शः

प्रत्यक्षादिना शुक्तिरूप्यमिथ्यात्वस्य निर्णीतत्वात् तदाकाराविद्यावृत्तेर्जगन्मिथ्यात्वसिद्धेः प्रागविद्यावृत्तिरूपायाः सिद्धिरस्त्येव। असिद्धावपि विशेष्याकारमनोवृत्त्यवच्छिन्नचित्येव रजतस्याध्यासाद् इदं-रजतवृत्त्योरुभयोरपि तादात्म्येन रजतवृत्तेरपि मनोवृत्तित्वव्यपदेशसम्भवात्, व्यपदेशायोगेऽपि विट्ठलेशोक्तरीत्या भ्रमान्यकाले प्रातिभासिकानामपि शब्दादिजन्यमनोवृत्तिविषयत्वस्यैव च स्वीकारेण शुक्तिरूप्यं मिथ्येत्यादिमनोवृत्तिविषयत्वसम्भवाच्च न दोषलेशोऽपि। अत्र लघुचन्द्रिकोक्तभावानबोधेनैव—'शुद्धं ब्रह्म वृत्तिव्याप्यं ने'त्याकारमनोवृत्तिविषयत्वस्य तत्रापि सम्भवेन व्यभिचारः, इति सौगन्ध्यवचनं प्रवृत्तम्। 'शुद्धं ब्रह्म न वृत्तिव्याप्यमि'ति किं व्यवहारदशायां व्यपदेशः ? उत मुक्तिदशायाम्। आद्ये उक्तवृत्तिविषयत्वेन शुद्धत्वस्यैवाभावाद् वृत्तिविषयत्वेन तस्यापि मिथ्यात्वस्यैव सिद्ध्युक्तरीत्या स्वीकाराद् व्यभिचारः, द्वितीये तु मनोऽभावेन वृत्तेरप्यसम्भवः॥

विट्ठलेशीयटिप्पणी

स्वप्रकाशनित्यचैतन्यरूपं ब्रह्म यत् सर्वं जगत् स्वतादात्म्यसंबन्धेन प्रकाशयति व्यवहारयति च, कथं तत् स्वप्रकाशे स्वव्यवहारे चान्यमपेक्षेत ? इति न स्वविषयत्वापेक्षापि। तादात्म्यरूपविषयत्वं चात्यन्ताभेदे न संभवति ; घटो घट इति प्रत्ययाभावात्। औपाधिकभेदेऽपि यद्यपि तादात्म्यं संभवति, नीलो घट इति प्रत्ययात् ; तथापि निरुपाधिके शुद्धे ब्रह्मणि निरुपाधिकस्य ज्ञानरूपस्य ब्रह्मण औपाधिकोऽपि भेदो नास्ति, इति तत्तादात्म्यरूपं विषयत्वं हेतुभूतं शुद्धं ब्रह्मणि नास्ति, इति कथं तत्र मिथ्यात्वं साधयितुं शक्यम् ? इति भावः। मन्मतसिद्धो हेतुर्मया प्रयुक्त इत्याशङ्कां परिहरति—*तथाचेति*॥ *तत्र=प्रतिवादिनि। *परामर्शासंभवादिति*॥ स्वरूपासिद्धिज्ञानप्रतिबन्धादिति भावः॥

*यत्तु तु*—मूल 'एतेने'त्यस्य वक्ष्यमाणदूषणेनेत्यर्थः। *स्फुरणमात्रम्=स्वभेदाविशेषितम्। स्फुरणं क्वचिद् विषयतासंबन्धेन, क्वचित् स्वरूपं मिथ्यात्वे तन्त्रम्। *स्वतः स्फुरत्=स्फुरणस्वरूपम्, इति शून्यवादिमतं व्याख्याय, स्फुरणरूपं स्वस्मिन् मिथ्यात्वे प्रयोजकम् ? आहोस्वित् स्फुरणतादात्म्यं स्वाश्रये मिथ्यात्वे प्रयोजकम् ? *आद्ये*—*स्वतः स्फुरणरूपताया इति*, अन्त्ये—स्फुरणविषयत्वस्येति विकल्पेन तद्दूषणद्वयं सङ्गमयामः। *ननु* स्फुरणमभेदसंबन्धेन, स्फुरणाभेदो वा मिथ्यात्वे हेतुः, दृष्टान्ते शुक्तिरूप्ये स्फुरणस्याभेदो भेदाभेदोभयरूपतादात्म्यघटको मतद्वयेऽप्यस्ति, ब्रह्मणि स्फुरणस्यात्यन्ताभेदोऽप्युभयमतसिद्ध एवेति—चेत्, *न* ; अभेदो हि न भेदसामान्याभावः ; अप्रसिद्धेः, नापि स्वभेदसामान्याभावः ; अत्यन्तत्वस्याभेदासहितत्वरूपत्व आत्माश्रयात्, नाप्यखण्डो धर्मः ; तस्य संबन्धत्वेन भेदनियतस्य घटत्वावच्छिन्ने घटत्वावच्छिन्नस्येवात्यन्ताभिन्नत्वेन स्फुरणरूपे शुद्धे ब्रह्मणि शुद्धस्य स्फुरणज्ञानरूपस्य ब्रह्मणोऽसंभवात्। *एतेन*—भेदेऽत्यन्तत्वमखण्डोपाधिरित्यपि—*निरस्तम्। *नन्वेवमपि*—स्फुरण-तद्विषयान्यतरत्वं मिथ्यात्वे हेतुरस्तु, इति—चेत्, *न* ; लाघवेन स्फुरणविषयत्वस्यैव मिथ्यात्वे तन्त्रत्वौचित्यात्। केचित्तु*—मूले-'एतेनेत्यस्य' दृश्यत्वरूपहेतु-तन्मिथ्यात्वरूपसाध्ययोर्व्यतिरेकस्य ब्रह्मणि श्रुतिसिद्धत्वेनेत्यर्थः। वृत्तिज्ञानविषयत्वरूपदृश्यत्वव्यतिरेकस्य पूर्वं व्यवस्थापनेऽपि स्फुरणरूपज्ञानघटितदृश्यत्वहेतोर्विकल्पेन दृष्टान्त-पक्षोभयसाधारण्याभावमाह—*स्वत इति, स्फुरणेति च—इत्याहुः*॥ प्रका-

न्यायामृतम्

इति स्वतः स्फुरदपि ब्रह्म मिथ्यैव, तत्सत्यत्वश्रुतिस्तु जगत्सत्यत्वश्रुतिवदनुमानादिविरोधेनासद्वैलक्षण्यपरेत्यापाताच्च ॥ 'शुद्धं न दृश्यते' इत्यत्र शुद्धशब्दस्याभिधया लक्षणया वा शुद्धाबोधकत्वे तत्प्रयोगवैयर्थ्याच्च, विशिष्टे मिथ्यात्व-दृश्यत्वयोर्व्यतिरेकासंभवेन शुद्धनिष्ठव्यतिरेकज्ञानाय शुद्धस्य ज्ञेयत्वाच्च। विशिष्टज्ञाने विशेष्यस्यापि भानेन विशिष्टस्य दृश्यत्वेनैव शुद्धस्यापि दृश्यत्वसिद्धेश्च ॥

अद्वैतसिद्धिः

ननु—विशिष्टज्ञाने विशेष्यस्यापि भाने श्रुत्या विशिष्टस्य दृश्यत्वेनैव विशेष्यस्यापि दृश्यत्वाद् व्यभिचारः,

तरङ्गिणी

मिथ्यात्वापत्तौ तत्सत्यतापराणां "सत्यं ज्ञानम्" "तत्सत्यमि"त्यादिश्रुतीनामुपरोधः स्यात्, अत उक्तम्—*तत्सत्यत्वश्रुतिस्त्विति* ॥ *तत्प्रयोगवैयर्थ्याच्चेति* ॥ वाक्यस्थानां पदानां संभूयैकार्थप्रतिपादकत्वरूपमेकवाक्यत्वं स स्यादित्यर्थः ॥ *व्यतिरेकेति* ॥ व्यतिरेकसहचारज्ञानस्यापि व्याप्तिग्रहहेतुत्वादित्यर्थः। (सि०) अत्र वदन्ति—"वृत्तिकाले वृत्तिरूपेण धर्मेण शुद्धत्वासम्भवात् शुद्धस्य वृत्तिविषयत्वं न सम्भवति, अतः 'शुद्धं स्वप्रकाशमि'ति वाक्यस्य लक्षणयाऽशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथाचाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति; यथा भेदनिषेधादभिन्नत्वम्। नच—शुद्धपदेनाभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोगवैयर्थ्यमिति—वाच्यम्, पर्यवसितार्थमादाय सार्थकत्वोपपत्तेः। एवं च 'शुद्धं न दृश्यं

न्यायामृतकण्टकोद्धारः

'घटः स्फुरती'तिवत् 'चैतन्यं स्फुरती'ति प्रतीतेः। एवं च मिथ्यात्वापादनं युक्तमेवेत्याशयः। *ननु*—तर्हि ब्रह्मसत्यत्वप्रापकश्रुतेः का गतिरिति? अत आह—*तत्सत्यत्वश्रुतिरिति* ॥

*शुद्धं न दृश्यत इति*॥ नच—पर्यवसितार्थमादाय सार्थकत्वमिति—वाच्यम्; पर्यवसानस्य ज्ञानातिरिक्तस्य वक्तुमशक्यत्वात्। *विशिष्ट इति*। नच—शुद्धं न दृश्यम्, न मिथ्येत्यस्याप्यशुद्धत्वं दृश्यत्वमिथ्यात्वयोर्व्यापकमित्येतत्परत्वेन शुद्धे दृश्यत्वमिथ्यात्वयोर्व्यतिरेकः पर्यवस्यतीति—वाच्यम्; यतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिपर्यवसानस्यानुमानत्वेन वृत्तिविषयत्वापरिहारात्; अन्यथा व्यतिरेकासिद्धेः। *विशिष्टज्ञान इति*॥ नच—विशेष्यतापन्नस्य विषयत्वेऽपि वृत्त्यभावः, नच व्यभिचारः, तस्य मिथ्यात्वा-

गौडब्रह्मानन्दी (लघुचन्द्रिका)

*श्रुत्या=गुणविशिष्टब्रह्मबोधकश्रुत्या। *दृश्यत्वेन=ज्ञेयत्वेन। *विशिष्टस्य=विशेषण-विशेष्य-संसर्गेभ्योऽतिरिक्तस्य।

सिद्धिव्याख्या

बीजकाभावाच्छुक्तिरूप्यस्यामिथ्यात्वापत्त्या तत्र तत्र प्रयोजकमिति कुतस्तस्माद् ब्रह्मणो मिथ्यात्वापादनमिति भावः। *द्वितीये* दोषमाह—*स्फुरणविषयेति*॥ शुक्तिरूप्यप्रपञ्चयोः सत्त्वेपि ब्रह्मण्यसिद्धेरित्यर्थः। तथाच न ब्रह्मणो मिथ्यात्वसिद्धिरिति भावः। *ननु*—मा भूत् केवलस्वशुद्धस्य ज्ञानम्, तथापि शुद्धे व्यभिचार एव, अशुद्धस्य विशिष्टस्य ज्ञेयत्वेनैव तदनुगतस्य शुद्धस्य विशेष्यस्यापि ज्ञेयत्वादिति शङ्कते—*नन्विति*। *विशिष्टज्ञानेति*॥ विशिष्टस्य विशेषणादित्रितयात्मकत्वादिति भावः। *श्रुत्येति*॥ 'दृश्ये'त्यादिज्ञेयत्वश्रुत्येत्यर्थः। *व्यभिचार इति*॥

विट्ठलेशीयटिप्पणी

रान्तरेण शुद्धस्य वृत्तिविषयत्वं शङ्कते मूले—*नन्विति*॥ भान इति*॥ विशिष्टस्य शुद्धादनतिरेकपक्ष इति भावः। "तत्त्वमसी"त्यादिश्रुत्या विशिष्टज्ञानाजननाद् व्याचष्टे—*विशिष्टबोधकेति*॥ 'यः सर्वज्ञः' इत्यादीति शेषः। चिद्विषयत्वादिदृश्यत्वे *श्रुत्येति* तृतीयार्थजन्यतान्वयासंभवाद् व्याचष्टे टीकायाम्—*दृश्यत्वेनेति*॥ ज्ञेयत्वेन=वृत्तिविषयत्वेन। वृत्तौ जन्यत्वान्वयः। विशिष्टपदार्थस्य विशेष्य-विशेषणसंसर्गरूपत्वे विशेष्यस्यापि देवतात्वापत्तिः, अतो व्याचष्टे—*विशेषण-विशेष्य-संसर्गेभ्योऽतिरिक्तस्येति*॥ विशिष्टस्योक्तविधयाऽनतिरेके दृष्टान्तान्तरमाह—

### न्यायामृतसौगन्ध्यम्

यत्तु—अस्वप्रकाशत्वव्यापकाभावप्रतियोगित्वरूपायास्स्वप्रकाशत्वव्यतिरेकव्याप्तेर्यदोपहितत्वाभावरूपे शुद्धे ज्ञानम्, उद्बुद्धसंस्कारो वा, तदोक्तशुद्धत्वविशिष्टे स्वप्रकाशत्वस्याभावो न ज्ञायते ; वह्न्यभावव्यापकीभूताभावप्रतियोगित्वस्य धूमे निश्चय उद्बुद्धसंस्कारे वा सति धूमवति वह्न्यभावस्याज्ञानवत्, इति तादृशव्याप्तिज्ञानस्य तादृशज्ञानाभावप्रयोजकत्वमेव स्वप्रकाशत्वविशिष्टशुद्धसाधकत्वमिति, *तन्न* ; स्वप्रकाशत्वव्याप्यवत्तया शुद्धस्य ज्ञानाभावे तत्र स्वप्रकाशत्वाभावज्ञानस्य बाधकाभावात्, स्वप्रकाशत्वव्यतिरेकव्याप्त्या उपहितत्वाभावरूपे शुद्धत्वे ज्ञाते शुद्धज्ञानस्याप्यवर्जनीयत्वाच्च (१)। दृष्टान्तेऽपि वह्निव्याप्यधूमवत्तया ज्ञात एव हि पर्वतादौ वह्न्यभावो न ज्ञायते। किञ्चोपहितत्वस्यास्वप्रकाशत्वव्यापकत्वे ज्ञातव्ये शुद्धत्व-स्वप्रकाशत्वयोः सहकारज्ञानमपेक्ष्यते, अन्यथोपहितत्वाभाववद्वृत्त्यस्वप्रकाशत्वमिति व्यभिचारज्ञानानुच्छेदेनोक्तव्यापकताज्ञानासंभवाद् उक्तसहचारस्य शुद्धत्वघटितत्वेन तद्धीश्शुद्धविषयिका स्यादेव ॥ न च—शुद्धस्य वृत्त्यविषयत्वादेव तद्घटितव्यभिचाराकारवृत्त्यसंभव इति—वाच्यम् ; शुद्धत्वस्य वृत्तिमत्त्वज्ञानं विनाऽस्वप्रकाशत्वव्यापकीभूताभावप्रतियोगित्वज्ञानवत् स्वप्रकाशत्वव्यापकीभूताभावप्रतियोगित्वज्ञानस्यापि संभवात्, शुद्धत्वविशिष्टत्वेन शुद्धाज्ञाने शुद्धेऽस्वप्रकाशत्वनिषेधरूपस्वप्रकाशत्वस्य पर्यवसानासंभवाच्च ॥ यत्तु—यथा तद्घटत्वरूपतद्घटाभिन्नत्वाभावस्य व्यापको यस्तद्घटभेदः, तद्रूपस्यात्यन्ताभावस्य प्रतियोगी तद्घटभेदात्यन्ताभाव इति निश्चयोत्तरं तद्घटभेदात्यन्ताभाववति तद्घटाभावज्ञानानुत्पत्त्या तद्घटत्वं पर्यवस्यतीति दृष्टान्तः, स तु सम्यगेव ; तद्घटभेदात्यन्ताभाववत्त्वेन ज्ञात एव ह्यधिकरणे तद्घटत्वाभावज्ञानानुत्पत्तिस्स्यात् ॥

किञ्च स्फुरणमात्रं मिथ्यात्वे तन्त्रम् ; लाघवात्, अतः स्वतः स्फुरदपि ब्रह्म मिथ्या स्यात्।

नच—स्वतस्स्फुरणरूपतायाः शुक्तिरूप्यादावभावः, स्फुरणविषयत्वस्य च ब्रह्मण्यसिद्धिरिति—वाच्यम् ; (२)अज्ञानाविरोधिस्फुरणत्वस्य शुक्तिरूप्यादावपि वक्तुं शक्यत्वात्, तद्विरोधिस्फुरणत्वस्य

### सौगन्ध्यविमर्शः

(१) न हि व्यापकाभावेन व्याप्याभावज्ञानस्थले सर्वत्र व्याप्य-व्यापकसामानाधिकरण्यं नियतम् ; नहि पृथवी इतरभिन्ना गन्धवत्त्वादित्यादौ केवलव्यतिरेकस्थल इतरभेदाभावेन गन्धाभावज्ञाने जलादौ गन्धेतरभेदयोरुभयोरपि सामानाधिकरण्यं पश्यामः। अन्वय-व्यतिरेकस्थले ह्ययं नियमः। नच—अशुद्धत्वास्वप्रकाशत्वयोरप्यन्वय-व्यतिरेक्येवात्र विवक्षितः, यत्र यत्राशुद्धत्वम्, तत्र तत्रास्वप्रकाशत्वम्, यत्र यत्रास्वप्रकाशत्वाभावः, तत्र तत्राशुद्धत्वाभाव इति रीत्यैव शुद्धे स्वप्रकाशत्वनिषेधादिति—वाच्यम् ; न हि शुद्धं स्वप्रकाशमिति वाक्यमशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थकमनुमाननिरूपणपरम्, किन्तु अस्वप्रकाशस्वरूपप्रतिपादनपरम्। तथाच अस्वप्रकाशत्वग्राहकस्य प्रमाणस्य शुद्धाविषयकत्वात् शुद्धेऽस्वप्रकाशत्वस्य न प्रसक्तिरिति पर्यवसितम्। नह्यनुमानस्थल इव वाक्येऽपि व्यापकाभावेन व्याप्याभावनिर्णयस्थले व्याप्यवत्ताज्ञानं नियतम् ; अन्यथा कृष्णलचरौ वैतुष्याभावाद् अवघाताभावनिरूपणपरेणापि वाक्येन कृष्णले वैतुष्यावघातयोः सामानाधिकरण्यबोधकत्वापत्तिरित्याद्यन्यत्र व्यक्तम्। न हि वयमुपहितत्वस्यास्वप्रकाशत्वव्यापकत्वं साहचर्यज्ञानाधीनं वदामः, किन्तु वाक्याधीनम्। ततश्च शुद्धत्व-स्वप्रकाशत्वयोः सौगन्ध्योक्तरीत्या साहचर्यज्ञानं कुत्रोपयुज्यते ? नहि यत्र यत्रोपहितत्वम्, तत्र तत्रास्वप्रकाशत्वमित्युक्ते उपहितत्वाभाववद्वृत्त्यस्वप्रकाशत्वमिति व्यभिचारज्ञानमुदेति। वाक्यस्य प्रतीयमानार्थातिरेकेणार्थान्तरबोधकत्वायोगात्। न हि "तेन ह्यन्नं क्रियते" इति शूर्पस्यान्नकरणहेतुत्वस्य होमसाधनत्वबोधनार्थमनूद्यमानसाधनत्वस्य महिम्ना दर्वीपिठरादीनामपि होमसाधनत्वं कस्यापि सम्मतम्। वस्तुतस्तु स्फुरणात्मकं ज्ञानं शुद्धस्यापि पूर्वोक्तरीत्या स्वीकृतमेवेति न कोऽपि विरोधः। (२) स्वप्रकाशचैतन्यरूपत्वमेव स्वतः स्फुरणरूपत्वम्, न त्वज्ञानाविरोधिस्फुरणरूपत्वम्, येन शुक्तिरूप्यादावपि स्फुरणरूपत्वं स्यात्। वस्तुतस्तु शुक्तिरूप्यादावप्यभानापादकाज्ञानाभावेऽप्यसत्त्वापादकाज्ञानस्वीकारात् शुक्तिरूप्यस्फुरणस्याप्यज्ञानविरोधित्वमेवेति न दोषः। न वाऽज्ञानविरोधिस्फुरणत्वम्, येन ब्रह्मण्यभावः स्यात्।

न्यायामृतम्

नच—"विष्णवे शिपिविष्टाये"त्यादौ देवतात्ववद् विषयत्वमपि विशिष्ट एव, नतु विशेष्येऽपि—इति युक्तम् ; देवतात्ववदेव विषयत्वस्यापि विशेषणेऽप्यभावेन भागासिद्धेः, घटत्वादिविशिष्ट एव दृश्यत्वम्, न तु विशेष्ये घटे, इत्यापाताच्च, विशिष्टे ज्ञातेऽपि कदाचिद् विशेष्येऽज्ञानाद्यापाताच्च, 'दण्डी चैत्रः' इति

तरङ्गिणी

न मिथ्ये'त्यस्याप्यशुद्धत्वं दृश्यत्व-मिथ्यात्वयोर्व्यापकमित्येतत्परत्वेन शुद्धे दृश्यत्व-मिथ्यात्वयोर्व्यतिरेकः पर्यवस्यती"ति ।

*अत्र ब्रूमः* ; न तावदस्वप्रकाशत्वाशुद्धत्वयोर्व्याप्य-व्यापकभावग्रहमात्रेण शुद्धे स्वप्रकाशता पर्यवस्यति, किन्तु शुद्धेऽस्वप्रकाशत्वव्यापकस्याशुद्धत्वस्य व्यावृत्तौ ज्ञातायामेव । तथाच व्यापकव्यतिरेकग्रहार्थमावश्यकं शुद्धज्ञानम् । किं चास्वप्रकाशत्वाशुद्धत्वयोर्व्याप्य-व्यापकभावग्रहोऽपि तदुभयव्यतिरेकयोः शुद्धत्व-स्वप्रकाशत्वयोः शुद्धे सहचारग्रहे सत्येव, इति घट्टकुटीप्रभातवृत्तान्तः । *ननु* न मिथ्यात्व-दृश्यत्वव्यतिरेकयोः सहचारग्रहापेक्षा, सा हि निश्चितसाध्याभाववति साधनग्रहेण व्यभिचारज्ञाने सति स्यात् । नचात्र साध्याभावनिश्चयः शुद्धे सम्भवति ; न वा तत्र हेतुग्रहः सम्भवति ; शुद्धस्याज्ञेयत्वादित्यत आह—*विशिष्टज्ञान इति* ॥ (४५६) मा भूत् केवलस्य शुद्धस्य ज्ञानम्, तथापि शुद्धे व्यभिचार एव ; अशुद्धस्य विशिष्टस्य ज्ञेयत्वेनैव तदनुगतस्य शुद्धस्य विशेष्यस्य ज्ञेयत्वादित्यर्थः ॥ *नच विष्णव इति* ॥ तथाच विशेष्ये शुद्धे हेत्वगमनाद् न व्यभिचार इत्यर्थः ॥ *देवतात्ववदेवेति* ॥ विशेषणस्य मिथ्यात्वासिद्धिश्चेत्यपि द्रष्टव्यम् ॥ *घटत्वादीति* ॥ तथाच विशेष्यस्य घटस्य न मिथ्यात्वं स्यादित्यर्थः । *दृश्यत्वम्=वृत्तिव्याप्यत्वरूपम् ॥ *विशिष्ट इति* ॥ तथाच विशेष्यांशे यदज्ञानविरोधि, तदेव विशिष्टज्ञानमावश्यकमित्यर्थः ॥ *ननु* विशिष्टज्ञानानन्तरमव्यवधानेन विशेष्यज्ञानमुत्पद्यते, तत एव विशेष्यविषयकाज्ञानादिनिवृत्तिः, नतु विशिष्टज्ञानादित्यत आह—*दण्डीति* ॥ तथाचाव्यवहितविशेष्यज्ञानकल्पन-

न्यायामृतकण्टकोद्धारः

भ्युपगमादिति—वाच्यम् ; विशेष्यताविशिष्टस्य मिथ्यात्वेऽपि तदधिकरणस्यामिथ्यात्वेन तत्र व्यभिचारानुद्धारात् । नच—तत्र ज्ञानविषयत्वमेव नेति—वाच्यम् ; विशिष्टान्तर्गतत्वेन तत्र तस्यावश्यकत्वात् । *शिपिविष्टायेति* ॥ शिपिविष्टत्वरूपविशेषणविशिष्टायेत्यर्थः । *भागासिद्धेरिति* ॥ नच—ज्ञानान्तरविषयत्वेन विशेषणे भागासिद्ध्यभाव इति—वाच्यम् ; ज्ञानान्तरे विशेषण-विशेष्यत्वान्यतरस्यावश्यकत्वेन

न्यायामृतसौगन्ध्यम्

प्रमाणाभावात्, स्फुरणविषयत्वापेक्षया स्फुरणत्वस्यैव लघुत्वाच्च ॥ अपिच विशिष्टभाने विशेष्यस्यापि भाने श्रुत्या विशिष्टदृश्यत्वेनैव विशेष्यस्यापि दृश्यत्वाद्(१) व्यभिचारः ॥

सौगन्ध्यविमर्शः

(१) न हि शुद्धं ब्रह्म मानाधीनमिति वदामः, किन्तु स्वत एव सिद्ध्यतीति, तथाच कथं विशेष्यतापन्नस्य मिथ्यात्वे शून्यवादप्रसङ्गः ? शून्यमपि स्वत एव स्फुरतीति यदि मन्यते, तर्हि ब्रह्मवाद एवायं न शून्यवादः ॥

सिद्धिव्याख्या

विशेष्ये व्यभिचार इत्यर्थः । *इदमुपलक्षणम्*—घटत्वादिविशिष्ट एव दृश्यत्वम्, नतु विशेष्ये घट इत्यापत्त्या घटत्वाव्यमिथ्यात्वापत्त्या विशिष्टदृश्यत्वेनैव विशेष्यस्यापि घटस्य मिथ्यात्वमिति यदि, तदा विशेष्यस्यापि दृश्यतया तत्र व्यभिचारः स्फुट एवेति द्रष्टव्यम् । तुल्यन्यायेन विशेष्ये कदाचिदज्ञानाद्यापत्त्येष्टापत्तौ 'दण्डी चैत्रः' इति ज्ञानेनैव

न्यायामृतम्

ज्ञानेनैव चैत्रोऽपि ज्ञात इत्यनुभवाच्च । एतेन—अनुभवविरोधादिनैवाग्नीषोमयोर्देवतात्ववद् विषयत्वमपि व्यासज्यवृत्ति, इति न विशेष्ये तदिति—निरस्तम् ; अत एवादृश्यत्वश्रुतिः साकल्येनादृश्यत्वपरा,

अद्वैतसिद्धिः

न च—'विष्णवे शिपिविष्टाये'त्यादौ विशिष्टस्य देवतात्ववद् विशिष्टस्य विषयत्वम्, अग्नीषोमयोर्मिलितयोर्देवतात्ववद्वा मिलितस्य विषयत्वम्, अतो न विशेष्ये विषयत्वमिति—वाच्यम् ; तद्वदेव विशेषणस्याप्यविषयत्वे भागासिद्धिप्रसङ्गात्, इति—चेत्, *न* ; विशेष्यतापन्नस्य विषयत्वेऽपि क्षत्यभावात्, तस्य मिथ्यात्वाभ्युपगमात् ॥

तरङ्गिणी

मप्रामाणिकमिति भावः । एतेनेत्यस्य विवरणम्—*अनुभवविरोधादिनैवेति* ॥ विशिष्टज्ञानेनैव विशेष्यमपि ज्ञातमित्यनुभवेन ज्ञातत्वरूपविषयत्वस्य विशेष्येऽपि सत्त्वादित्यर्थः ॥ *अत एवेति* ॥ विशिष्टस्य दृश्यत्वे विशेष्यस्य दृश्यत्वादेवेत्यर्थः ॥ *साकल्येनेति* ॥ प्रतीतार्थासम्भवादित्यर्थः । श्रुतेरान्तरानुप-

न्यायामृतकण्टकोद्धारः

केवलभागासिद्ध्यपरिहारात् । एतेनेत्यस्यैव विवरणम्—अनुभवविरोधादिनेति* ॥ *ननु*—"यत्तदद्रेश्यमि"ति श्रुतेः का गतिरिति? अत आह—*अत एवेति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*मिलितस्य विषयत्वम्=उभयपर्याप्तम् । *विशेष्ये=विशेष्यमात्रेऽपर्याप्तम् । *भागासिद्धीति* ॥ स्वरूपसम्बन्धेन विषयत्वस्य हेतुत्वे विशेष्ये व्यभिचारापत्तेः पर्याप्तिसम्बन्धेनैव तस्य वाच्यत्वाद् भागासिद्धिः ।

न्यायामृतसौगन्ध्यम्

नच विषयताया व्यासज्यवृत्तित्वेन न विशेष्ये विषयत्वम् ; तद्वदेव विशेषणस्याप्यविषयत्वे भागासिद्धिप्रसङ्गात् ॥ *ननु*—विशेष्यतापन्नस्य विषयत्वेऽपि क्षत्यभावः ; तस्य मिथ्यात्वाभ्युपगमात्,

सिद्धिव्याख्या

चैत्रोऽपि ज्ञात इत्यनुभवविरोधापत्तिश्चेत्यपि द्रष्टव्यम् । *नच—विष्णव इति* ॥ *शिपिविष्टाय=रश्मिभिराविष्टाय । *विषयत्वम्*॥ दृश्यत्वापरपर्यायदृग्विषयत्वम्, ज्ञातत्वमिति यावत् । *तद्वदेवेति*॥ देवतात्ववदेव विषयत्वस्य विशेषणेऽप्यभावेन भागासिद्धिप्रसङ्गादित्यर्थः । किं शुद्धस्य विषयत्वं विशेष्यतापन्नत्वेन ? उत स्वरूपेण ? *नाद्यः* ; 'यत्तदद्रेश्यमि'तिश्रुतिविरोधेन तत्र विषयत्वाभावादित्यभिप्रेत्याद्यमिष्टापत्त्या परिहरति—*विशेष्यतापन्नस्येति* ॥ विशेष्यत्वेनेत्यर्थः । तमेव दर्शयति—*तस्येति* ॥ विशिष्टज्ञाने विशेष्यस्यापि ज्ञातत्वाद् न तत्र कदाचिद्-

विट्ठलेशीयटिप्पणी

*अग्नीषोमयोरिति* । *मिलितस्य=उक्तद्वयस्य प्रत्येकानतिरेकेण मिलितनिष्ठविषयत्वे प्रत्येकनिष्ठत्वं दुर्वारम्, अतो व्याचष्टे—*उभयपर्याप्तमिति* ॥ *विषयत्वम्=संसर्गतान्यविषयत्वम् । यथाश्रुते श्रयपर्याप्त्यर्थकं 'मिलितस्ये'ति । *नन्वेवं* विशेष्यावृत्तित्वं कथम् ? अत आह—*विशेष्यमात्रेऽपर्याप्तमिति* ॥ समुदायपर्याप्तस्य प्रत्येकं [illegible] भागासिद्धिः कथम् ? अत आह—*स्वरूपसंबन्धेनेति* ॥ पर्याप्तिरप्युभयत्र विद्यमाना प्रत्येकमप्यायाति, अत एकमात्रधर्मावच्छिन्नपर्याप्तिसंबन्धेनेत्यर्थः । यद्यपि विशेष्य-विशेषणयोर्विशेष्यता विशेषगता च भिन्ना, इति तत्पर्याप्तिरुभयत्र नैका ; तथापि वृत्तिविषयत्वं स्ववृत्तितत्तद्वृत्तिविषयत्वत्वावच्छिन्नप्रतियोगिकैकमात्रवृत्तिधर्मावच्छिन्नपर्याप्तिसंबन्धेन हेतुरिति निष्कर्षः । भागासिद्धिभयेन पर्याप्त्यन्यस्वरूपसंबन्धेन हेतुतामभ्युपेत्य शुद्धे ब्रह्मणि व्यभिचारमुद्धरति *मूले—*विशेष्यतापन्नस्येति* । *क्षत्यभावादिति* ॥ शुद्धे तदनुपगमेन व्यभिचाराभावादित्यर्थः । विशेष्यतापन्ने तर्हि व्यभिचारः, अत आह—*तस्येति* ॥

न्यायामृतम्

अन्यथा "यत्तदद्रेश्यमि"त्यादौ यच्छब्दाद्ययोगात् । एतेन—चरमवृत्त्युपहितस्यैवात्मनस्तद्विषयत्वात् तस्य च मिथ्यात्वाद् न व्यभिचार इति—निरस्तम् ; चरमवृत्तेः स्वविषयान्तर्भावे तस्याः

अद्वैतसिद्धिः

अत एव—उपहितविषयत्वेऽप्युपधेयस्य विषयत्वमक्षतमेवेति—निरस्तम् ; उपहितात्मना तस्यापि मिथ्यात्वाभ्युपगमात्, ज्ञानान्तरविषयत्वेन विशेषणे भागासिद्ध्यभावाच्च ।

तरङ्गिणी

पत्तिं चाह—*अन्यथेति* ॥ यत्पदादिना शुद्धस्य ब्रह्मणोऽप्रतिपादने शुद्धे ब्रह्मण्यदृश्यत्वं न सिद्ध्येदित्यर्थः ॥ *एतेनेति* ॥ उपहितस्य दृश्यत्वे शुद्धस्य तदुपधेयस्यापि दृश्यत्वमवर्जनीयमेव । तस्य च मिथ्यात्वाभावाद् व्यभिचार एवेत्यर्थः । चरमवृत्तेर्ब्रह्मेतराविषयकत्वे सति ब्रह्मविषयिकायाः परिशेषेणापि शुद्धविषयकत्वं वाच्यमित्याह—*चरमवृत्तेरिति* ॥ यद्वा—अस्त्वेतद् यथा तथा वा ; विशिष्टविषयकवृत्तौ विशेष्यस्य

न्यायामृतकण्टकोद्धारः

*अन्यथेति* ॥ सर्वथा दृश्यत्वाभावपरत्व इत्यर्थः । *स्वविषयान्तर्भाव इति* ॥ उपधायक-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*उपहितात्मनेति* ॥ एवकारश्शेषः । नच—विशिष्टज्ञाने शुद्धस्याभाने तदुत्तरं तत्र संशयादिकं स्यादिति—वाच्यम् ; विशिष्टविषयकनिश्चयस्यापि केवलसंशयप्रतिबन्धकत्वादिस्वीकारात् । *यत्तु*—घटादेरपि विशिष्टरूपेणैव वृत्तिविषयत्वम्, न तु केवलरूपेण ; निर्विकल्पकास्वीकारात्, तत्स्वीकारेऽपि नित्यातीन्द्रियेषु तदस्वीकारात्, केवलस्य तस्य विशिष्टज्ञानाविषयत्वात् तदीयकेवलरूपे भागासिद्धिः—इति, *तन्न* ; घटादेः केवलरूपस्य ज्ञानाविषयत्वेऽलीकत्वापातात् । *ज्ञानान्तरेति* ॥ विशिष्टविषयकज्ञानेत्यर्थः ।

न्यायामृतसौगन्ध्यम्

अत एव— उपहितविषयत्वेऽप्युपधेयविषयत्वमक्षतमेवेति—अपास्तम् ; उपहितात्मना तस्यापि मिथ्यात्वाभ्युपगमात् । ज्ञानान्तरविषयत्वेन विशेषणे भागासिद्ध्यप्रसङ्गाच्चेति—चेत्, न ; विशेष्यतापन्नस्य मिथ्यात्वे

सिद्धिव्याख्या

ज्ञानाबापत्तिः, नवा 'दण्डी चैत्रः' इति ज्ञानेनैव चैत्रोऽपि ज्ञात इत्यनुभवविरोधापत्तिश्चेति ध्येयम् । अत एवेत्यस्य निरस्तमित्यनेनान्वयः । *उपहितविषयत्वेऽपीति* ॥ उपहितस्य दृश्यत्वे शुद्धस्य तदुपधेयस्यापि दृश्यत्वमवर्जनीयमेव, तस्य मिथ्यात्वाभावात् तत्र व्यभिचार इत्यत एव निरस्तमित्यर्थः । अतश्शब्दार्थमेवाह—*उपहितात्मनेति* ॥ तथाच तस्यापि साध्यवत्त्वाद् न तत्र व्यभिचार इत्यर्थः । वस्तुतस्तु—'विष्णवे शिपिविष्टाय' इत्यादौ विशिष्टस्य देवतात्ववद् विशिष्टस्यैव विषयत्वम्, अग्नीषोमयोर्मिलितस्य देवतात्ववद्वा मिलितस्य विषयत्वम्, अतो न विशेष्यस्य विषयत्वम्, इति तत्र हेतोरेवाभावाद् न तत्र व्यभिचारः । नच—देवतात्ववदेव विषयत्वस्यापि विशेषणेऽप्यभावेन विशेषणे भागासिद्धिरिति—वाच्यम् ; ज्ञानान्तरविषयत्वेन विशेषणोपलक्षणयोर्भागासिद्ध्यप्रसङ्गादित्याह—*ज्ञानान्तरेति* ॥ ननु*—वेदान्तजन्याखण्डवृत्तेरुपहितविषयत्वाद् न तत्र व्यभिचार इति न युक्तम्, उपाधिसत्त्वे

विट्ठलेशीयटिप्पणी

*अत एव* ॥ वृत्तिविषयत्वस्य शुद्धेऽनुपगमादेवेत्यर्थः । *उपहितस्य विषयत्वेऽप्युपधेयस्य विषयत्वमक्षतमिति* ॥ उपाध्युपधेयोभयस्योपहितपदार्थत्वादिति भावः । उपहिते व्यभिचारं वारयति—*उपहितात्मनेति* ॥ निरूपकपर्याप्तिसंबन्धेन हेतुतामुपगम्यापि विशिष्टज्ञानविषयत्वमादाय विशेष्ये व्यभिचारवारणे विशेषणे भागासिद्धिरित्याशङ्क्य तां वारयति—*ज्ञानान्तरेति* ॥ विशेष्याविषयकेऽपि ज्ञानान्तरे विशेषणस्य केनचिद्रूपेण भाने भागासिद्धिर्दुर्वारा, इत्यतोऽन्यतरपदं व्याचष्टे—*विशिष्टविषयकेति* ॥ विशेषणमात्रविषयकज्ञानेति यावत् ।

### अद्वैतसिद्धिः

ननु—वेदान्तजन्याखण्डवृत्तेरुपहितविषयत्वे तदानीमुपाध्यन्तराभावेन तस्या एवोपधायक-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*तदानीम् = उक्तवृत्तिकाले । *उपाध्यन्तराभावेनेति* ॥ *ननु*—उक्तवृत्तिकाले सुखादेरात्मन्यध्य-स्तस्योक्तवृत्तिविषयत्वेऽप्युपाधित्वसम्भवात् तस्या एवेत्यसङ्गतमिति—चेत्, *न* ; सुखादीनां तदानीं नियमे-नानुत्पत्तेः । तस्मादुक्तवृत्तिकाले नियमेन यज्जातीय उपाधिः सम्भवति, तज्जातीयोपाधिरुक्तवृत्तिरेव, नतु सुखादिः । *यत्तु—स्थूलशरीरादिकमुपाधिः सम्भवति—*इति*, *तन्न* ; शुद्धब्रह्मणो यद् वृत्त्युपहितं रूपं तद्विषयकवृत्तेरेवाज्ञाननिवर्तकत्वात्, अन्यथा घटादियत्किञ्चिदुपाध्युपहितविषयकज्ञानस्यापि तदापत्तेः । अत एव सुखादेरपि नोपाधित्वसम्भवः । तस्या नियतोपाधित्वं त्वभ्युपगममात्रेणोक्तम् । तथा चोपाध्यन्तरेत्यस्याज्ञाननिवर्तकवृत्तिविषयत्वे सम्भवदुपाध्यन्तरेत्यर्थः ॥

### सिद्धिव्याख्या

'शुद्धं ब्रह्म निरुपाधिकमि'त्येवंरूपस्य वेदान्तजन्याखण्डाकारवृत्तेराकारस्य संभवितुमनर्हत्वात् । अथ—मिथ्याभूत-त्वादुपाधिसत्त्वेऽपि न तेन वास्तवनिरुपाधिकत्वाकारेण साक्षात्कारोदयो विरुध्यत इति—वाच्यम् ; वृत्तिव्यतिरिक्तस्य तादृशोपाधेरसंभवादित्याह—*उपाध्यन्तराभावेनेति* ॥ वृत्तिव्यतिरिक्तोपाध्यन्तराभावेनेत्यर्थः । तथाच वृत्तेर्नो-

### विट्ठलेशीयटिप्पणी

वेदान्तजन्यवृत्तेरुपाध्यसंभवेनोपहितविषयकत्वासंभवात् शुद्धस्यैव तद्विषयत्वं वाच्यम् ; तथाचोक्तव्यभिचारो दुर्वार इत्यभिप्रायेण शङ्कते *मूले—नन्विति* ॥ वृत्तितृतीयादिक्षणे वृत्तेरसत्त्वाद् व्याचष्टे—*तदानीमिति* ॥ उपाध्य-न्तरमाशङ्कते टीकायाम्—*नन्विति* ॥ 'सुखादी'त्यादिना दुःखाभावः । *अनुत्पत्तेरिति* ॥ दुःखस्यापि कदाचि-दुत्पत्तिसंभवात् तदभावोऽपि न नियतः । *यज्जातीय इति* ॥ पुरुषभेदेन वृत्तीनां नानात्वात् । *तज्जातीयेति* ॥ एकजातीयोपाधिकल्पने लाघवात् । अनियतानामुपाधित्वे नानाजातीयोपाधिकल्पने गौरवात् । आदिना सूक्ष्म-शरीरम् । *उपाधिरिति* ॥ नियत इति शेषः । *शुद्धेति* ॥ शुद्धत्वव्याघातेन शुद्धस्य वृत्तिविषयत्वासंभवादिति भावः । *वृत्त्युपहितम्=स्वात्मकवृत्तिमात्रोपहितम् । *तद्विषयकेति* ॥ तन्मात्रविषयकेत्यर्थः । *अज्ञानेति* ॥ स्वमात्रोपहितमात्रविषयकमूलाज्ञानेत्यर्थः । *अन्यथा=उपहितसामान्यविषयकवृत्तेरुक्ताज्ञाननिवर्तकत्वे । घटादी-त्यादिना शरीरसुखादिपरिग्रहः । *ज्ञानस्य* ॥ 'अयं घटोऽस्ति' 'भाति' 'प्रीणाति च' 'अयं घटसंयोगो भूतले समवेतो न कपाले' 'अहमिहैवास्मि सदने जानानः' 'अहं सुखी निद्रामि' इत्याद्याकारज्ञानस्येत्यर्थः । *अत एव* ॥ वृत्तिमात्रोपहितमात्रज्ञानस्यैवोक्ताज्ञाननिवर्तकत्वेन सुखाद्युपहितज्ञानस्य तदनिवर्तकत्वादित्यर्थः । अन्तःकरणं तु न नियतोपाधिः ; वेदान्तजन्यवृत्तिविषयत्वे तदुपहितस्य जीवत्वेन निरुपाधिकब्रह्माभेदासंभवात्, निरुपाधिकजीव-चैतन्यस्यैव त्वंपदार्थत्वात् । *ननु*—वेदान्तजन्यवृत्तिकाले नियमेन तदन्यवृत्त्यभावसत्त्वात् सैव तद्विषयत्वे नियतोपाधिरस्तु ; अज्ञानस्यापि तदुपहितविषयकत्वसंभवेन तत्समानविषयकत्वस्यापि संभवात्, इत्यत आह— *तस्या इति* ॥ वक्ष्यमाणजातिविशेषावच्छिन्नायास्तस्या एवेत्यर्थः । *अभ्युपगममात्रेण* ॥ तदन्यवृत्तीनामेकैकाभाव-व्यक्तीनामुपाधित्वे विनिगमनाविरहः ; तदन्यज्ञानरूपवृत्त्यभावत्वेनोपाधित्वे गौरवम् । तदपेक्षया वेदान्तजन्यतत्त-द्वृत्तिविषयत्वे तत्तद्वृत्तेः, उक्तवृत्तिविषयत्वसामान्ये उक्तवृत्तिसामान्यस्य च, उक्तवृत्तिषु मूलाज्ञान-तत्कार्यनिवर्तकता-वच्छेदकं विलक्षणसामान्यमभ्युपगम्योपाधित्वोपगमे तु लाघवम् । नापि स्वं प्रति स्वस्योपाधित्वम् ; स्वरूपसंबन्धेन वृत्तिविषयत्वं प्रति विषयतासंबन्धेन वृत्तेरुपाधित्वोपगमादित्यभिप्रायः ॥ अत्रोपाध्यन्तराभावेनेत्यक्षराणि योजयति— *तथाचेति* । *अज्ञानेति* ॥ अज्ञाननिवर्तकत्वावच्छेदकजातिविशेषावच्छिन्नेत्यर्थः । *संभवदिति* ॥ लाघवेन

अद्वैतसिद्धिः

त्वात् स्वविषयत्वापत्तिः, नचेष्टापत्तिः ; शाब्दबोधे शब्दानुपस्थिताभाननियमेन वृत्तेः शब्दानुपस्थिताया भानानुपपत्तेः, यथाकथञ्चिदुपपत्तौ वा न ततोऽज्ञान-तत्कार्ययोर्निवृत्तिः स्यात् ;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अथवा* ज्ञानमेवाज्ञान-तत्प्रयुक्तद्वयनाशः, ज्ञाननाशस्तु तदुपलक्षित आत्मैवेति मते ज्ञानकाले शरीरादेरभावः ; जीवन्मुक्तेरभावात्, तथाच यथाश्रुत एवार्थः । *उपधायकत्वात् = उपाधित्वात् । *आपत्तिरिति* ॥ 'नीलो घटो ज्ञातः' इत्यादौ नीलत्वाद्युपाधेरपि ज्ञातत्वप्रतीतेरिति शेषः । *कथञ्चित् = शाब्दवृत्तौ स्वभिन्नस्यैव शब्दानुपस्थितस्याभानमिति स्वीकारेण । *अज्ञान-तत्कार्ययोः=मूलाज्ञान-तत्प्रयुक्तयोः । *अज्ञानेति* । स्वनिवर्त्या-

सिद्धिव्याख्या

पाध्यन्तरोपहितविषयकत्वम्, इति तद्विषये शुद्धे ब्रह्मणि व्यभिचारो दुरपह्नव इत्यर्थः । नच—तदानीं मिथ्याभूतोपाध्यन्तरमस्त्येवेति न व्यभिचार इति—वाच्यम् ; 'तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरविरोधिनोऽपि विद्यमानत्वादि'ति भामतीग्रन्थविरोधेन वृत्तेरेवोपाधित्ववर्णनादिति भावः । तर्हि वृत्तेरेवोपाधित्वमस्तु । एवं च न भामतीग्रन्थविरोधः, न चाऽऽत्मनि व्यभिचारः, इत्याशयेन वृत्तेरेवोपधायकत्वं सिद्धवत्कृतम्—'तस्या एवोपधायकत्वादि'त्यन्तेन, तदपि दूषयति—*स्वविषयत्वेति* ॥ इष्टापत्तिमाशङ्क्याह—*नचेति* ॥ अभ्युपेत्याप्याह—*उपपत्तौ वेति । *न ततः=शब्दानुपस्थितवृत्तितः* । न स्यादित्यत्र हेतुमाह—*अज्ञानतत्कार्याविषयकज्ञानस्यैवेति* ॥

विट्ठलेशीयटिप्पणी

नियतसंभवदित्यर्थः । एतद्विशेषणानन्तर्भावेणाह—*अथवेति* । *ज्ञानमेव=विदेहकालीनचरमतत्त्वसाक्षात्कार एव । *अज्ञानेति* ॥ मूलाज्ञानेत्यर्थः । तर्हि मुक्तौ ज्ञाननाशरूपं द्वयं स्यात्, तत्राह—ज्ञाननाशस्त्विति । *तदुपलक्षितः=ज्ञानोपलक्षितः । *शरीरादेरिति* ॥ शरीरम्=स्थूलं सूक्ष्मं च । आदिना तदवच्छिन्नसुखादिपरिग्रहः । उक्ततत्त्वज्ञाने तु स्थूलं शरीरं सर्वकालवृत्तितयैवावच्छेदकम्, सूक्ष्मं चोपादानम्, तर्हि जीवन्मुक्तिः कथम् ? तत्राह—*जीवन्मुक्तेरिति* ॥ प्रारब्धकर्मणाऽऽरब्धशरीराद्यन्याज्ञान-तत्प्रयुक्तद्वयोच्छेदो जीवद्दशायां तत्त्वज्ञानजन्यो यो जीवन्मुक्तिपदार्थः, तस्य । *अभावात्=अस्माभिरनङ्गीकारात् । 'आत्मा सत्यः' 'जगद् मिथ्या' 'जीवो ब्रह्मैव नापरः' इति निश्चय एव जीवन्मुक्तिपदार्थः । तदधीनाज्ञान-तत्कार्यनिवृत्तौ तु प्रारब्धं प्रतिबन्धकम् । *यद्वा*—अज्ञानस्य स्थूलरूपेण निवृत्तिरुक्तनिश्चयकाल एव जायते ; तत्संस्कार-तत्कार्यद्वयसामान्यनिवृत्तिस्तु विदेहताकाल एव । तत्त्वज्ञानस्य कर्मनाशकत्ववचनानि तु विदेहताकालाभिप्रायाणि, प्रारब्धान्यकर्मादीनां भर्जितधानावत् फलजनकताविघटनाद् नष्टप्रायत्वाभिप्रायाणि वा बोध्यानि । अत एव जीवन्मुक्तानामावश्यके लौकिक-वैदिककर्मणि प्रवृत्तिः । 'यथाश्रुत एवे'त्यस्योपाध्यन्तराभावेनेत्यस्येत्यादिः । धात्वर्थोपाधौ तज्जनकत्वरूपकर्तृप्रत्ययार्थबाधात् तदविवक्षया व्याचष्टे—*उपधायकत्वादिति* ॥ *उपाधित्वादिति* ॥ 'सूर्यः प्रकाशते' 'ब्रह्म स्वयं प्रकाशते' इतिवत्, अभेद एव कर्तृप्रत्ययार्थ इति भावः । वृत्तेरात्मनिष्ठस्वविषयत्व उपाधित्वेऽपि कथं स्वविषयत्वापत्तिः ? उपधेयान्वितानन्वयिन एवोपाधित्वात्, अतः शेषं पूरयति—*नीलो घट इति* ॥ *ज्ञात इति* ॥ द्रव्यं चेति शेषः । तथाच द्रव्यपदार्थानन्वितत्वाद् नीलत्वस्योपाधित्वं स्वीकार्यमित्याह—*नीलत्वाद्युपाधेरपीति* ॥ *ज्ञातत्वप्रतीतेरिति* ॥ नीलत्वेनाज्ञाते तथा प्रतीत्यनुदयादित्यभिमानः । मूले—*नचेष्टापत्तिरिति* ॥ प्रत्यक्षादिवृत्तेरिव शाब्दवृत्तेरपि स्वविषयत्वं स्वीकार्यम् ; अन्यथा स्वगोचरवृत्त्युपहितचैतन्याभिन्नत्वघटितप्रत्यक्षत्वानुपपत्तेर्वृत्तिगोचरवृत्त्यन्तरस्वीकारेऽनवस्थापत्तेरिति शङ्काभावः । *शाब्दबोधे=शाब्दवृत्तौ । *वृत्तेः=शाब्दवृत्तेः । *भानानुपपत्तेरिति* ॥ शाब्दवृत्तेः प्रत्यक्षत्वाय तद्गोचरं वृत्त्यन्तरं स्वीकार्यम्, तच्च प्रत्यक्षवृत्तित्वात् स्वगोचरमिति नानवस्थेति भावः । उक्तनियमसत्त्वे केनापि प्रकारेण तदुपपत्तेरसंभवाद् व्याचष्टे टीकायाम्—*कथंचिदिति* ॥ *इति स्वीकारेणेति* ॥ नियमसंकोचस्वीकारेणेत्यर्थः । उक्तवृत्तेः स्वाविषयकत्वेऽपि

अद्वैतसिद्धिः

अज्ञान-तत्कार्याविषयकज्ञानस्यैव तदुभयनिवर्तकत्वात्, अन्यथा 'अहमज्ञः, अयं घटः' इत्यादिज्ञानाना-मप्युपहितविषयकत्वेनाज्ञाननिवर्तकत्वप्रसङ्ग इति—चेत्, *न* ; वृत्तेः शाब्दवृत्तावनवभासमानाया

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानेत्यर्थः । *अज्ञानेति*॥ मूलाज्ञानेत्यर्थः । *उपहितविषयकत्वेन=अज्ञानादिविशिष्टात्मविषयकत्वेन । *प्रसङ्ग इति* ॥ *ननु*—उक्तप्रसङ्गेनान्यविषयत्वानिरूपितात्मविषयताकज्ञानस्यैवाज्ञाननिवर्तकत्वमस्तु, अज्ञानाद्य-विषयकस्यैव तदिति नियमे तु किं मानम् ? 'इयं शुक्तिः' 'एतद्विषयकाज्ञानतत्कार्ये ज्ञाते' इत्यादिसमूहालम्बनस्येव 'अहं ब्रह्म मूलाज्ञानतत्कार्ये ज्ञाते' इत्यादिसमूहालम्बनस्याप्यज्ञाननिवर्तकतायां बाधकाभावात् । नच—एतत्

सिद्धिव्याख्या

समानविषयकतयैव ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावावश्यंभावात् तादृशवृत्तेश्च तदभावादिति भावः । *अन्यथेति* ॥ भिन्नविषयकस्याप्यज्ञाननिवर्तकत्व इत्यर्थः । तस्माद्वृत्तेरुपहितविषयकत्वे व्यभिचारः स्पष्ट इति स्थितम् । परिहरति —*वृत्तेरिति* ॥ यदुक्तम्*—'शुद्धं ब्रह्म निरुपाधिकमि'त्यखण्डाकारवृत्तेराकार इष्यमाणे सति निरुपाधिकत्वासिद्धिः, तस्य सत्युपाधौ संभवितुमनर्हत्वात्—इति, *तन्न* ; मिथ्याभूतेन सताऽप्युपाधिना वास्तवनिरुपाधिकत्वाकारस्य तस्योदये विरोधाभावात् । तादृशोपाधिश्च वृत्त्यतिरिक्त एव । नच भामतीग्रन्थविरोधः ; भामत्यां वृत्तेरेवोपाधित्व-वर्णनस्यान्ततो वृत्तिमात्रमस्तीत्यभ्युपेत्यवादत्वादिति परिमले तदभिप्रायकथनादिति भावः । यद्वा—वृत्तिरेवो-पाधिः, नचैवं स्वविषयत्वापत्तिः, वृत्तेः शाब्दवृत्तावनवभासमानाया एवोपधायकत्वाभ्युपगमेन स्वस्य स्वविषय-

विट्ठलेशीयटिप्पणी

साक्षात् तत्क्षणे तूलाज्ञानानिवर्तकत्वात स्वविषयकत्वस्य न तत्र प्रयोजकत्वम् । एवमज्ञाननिवृत्तिद्वारा द्वितीयक्षणे मूलाज्ञानकार्याकाशादिप्रपञ्चस्येव तत्कार्यतत्प्रयुक्तचिच्छिन्नतत्संबन्धतदवस्थाविशेषतूलाज्ञानस्यापि निवृत्तेस्तन्निवर्तकत्वा-नुक्त्या न्यूनतेत्यतो व्याचष्टे—*अज्ञान-तत्कार्ययोरिति*॥ शुक्त्यादिज्ञानस्य रज्ज्वादिभिन्नविषयकाज्ञान-तत्कार्यसर्पादि-विषयकस्यापि तदनिवर्तकत्वाद् ज्ञानाज्ञानयोः सामान्यतो निवर्त्य-निवर्तकत्वकथनासङ्गतिः, अतो व्याचष्टे—*अज्ञानेतीति* ॥ *स्वनिवर्त्याज्ञानेति* ॥ स्वसमानविषयकाज्ञानेत्यर्थः । तेन तन्निष्ठस्वनिवर्त्यत्वग्रहे स्वस्य तन्निवर्त-कताज्ञानापेक्षायामपि नात्माश्रयः । तथाच यद् ज्ञानं यदज्ञानविषयविषयकत्वे सति यदज्ञान-तत्प्रयुक्ताविषयकम्, तत् तदज्ञान-तत्प्रयुक्तोभयनिवर्तकमिति सामान्यव्याप्तिः फलिता । मूले—*अन्यथा=अज्ञान-तत्प्रयुक्ताविषयकत्वानिवेशेन तद्विषयकस्यापि तन्निवर्तकत्वे । *अयं घट इति* ॥ सन् इति शेषः । इदानीमुपाधेर्विशेषणत्वाभिमानसत्त्वाद् उपहितपदं विशिष्टपरतया व्याचष्टे टीकायाम्—*उपहितविषयकत्वेनेति* ॥ अज्ञानसमानविषयकत्वलाभायाह— *आत्मविषयकत्वेनेति* ॥ अज्ञानादीत्याद्युपाध्यवच्छिन्नविशिष्टज्ञानस्यापि तदात्मकविशेष्यकत्वं बोध्यम् । *उक्तप्रसङ्गेन* ॥ 'अहमज्ञः' इत्यादिज्ञानानां मूलाज्ञानादिनिवर्तकत्वापत्त्या तद्वारणार्थमिति यावत् । 'अहमज्ञः' इति ज्ञाने आत्मनि साक्षा-त्स्येनाज्ञानस्याध्यासः ; परम्पराध्यासरीत्याऽज्ञाने आत्मतादात्म्यस्य स्वतादात्म्योपहितात्मनश्च तादात्म्येनाध्यासः । एवं 'सन् घटः' 'घटः सन्' इति ज्ञानयोरपि द्वेधा विशेषण-विशेष्यभावोऽस्ति । तदुभयविधज्ञानवारणार्थमन्यविषय-त्वात्मविषयत्वयोः प्रकारता-विशेष्यतासाधारणेन विषयतास्वरूपेण निवेशनं कृतम् । *अस्त्विति* ॥ *अत्र केचित्*— एवमपि वृत्त्युपहितब्रह्मज्ञानस्य शुक्तिरूपान्यविषयतानिरूपितब्रह्मविषयताकत्वाद् न ततो मूलाज्ञाननिवृत्तिः स्यात्, इति शुक्त्यैव तत्त्वज्ञानविषयत्वं वाच्यम्, इति मिथ्यात्वानुमाने व्यभिचारो दुर्वारः, इति पूर्वपक्षोऽज्ञान-तत्कार्याविषयकत्वविशे-षोपष्टम्भेनोपक्रान्तः समः, किंतु अज्ञान-तत्कार्याविषयकत्वमेव किमर्थं निवेश्यते ? इत्येतच्छङ्काशयः । *सत्=मूलाज्ञान-निवर्तकत्वम् । *किं मानमिति* ॥ आत्मविषयकत्वे सति, अज्ञानाविषयत्वे सति, तत्कार्याविषयकत्वनिवेशे गौरवात् ; आत्मविषयकत्वे सत्यात्मान्याविषयकत्वनिवेशे च साम्यादिति भावः । शुक्त्यादिज्ञानस्यापि शुक्त्याद्यज्ञानविषयांशे शुक्त्यत्वप्रकारकत्वेऽपि तदज्ञानप्रकारीभूतशुक्तित्वांशेऽन्यप्रकारकत्वेन तदज्ञाननिवर्तकत्वम्, नतु तदज्ञान-तत्कार्या-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पूर्वपक्षिणोक्तमपि न सिद्धान्तसिद्धमिति—वाच्यम्; सिद्धान्तेऽप्युपाध्यविषयकत्वे सत्युपहितविषयकस्यैवाज्ञाननिवर्तकत्वमित्यस्यैव वाच्यत्वादिति—चेत्, *अत्रोच्यते*; शुद्धस्य वृत्त्यविषयत्वपक्षे शुद्धस्य वृत्त्युपहितं यद् रूपम्, तदंशे तदन्याविषयकज्ञानस्यैव निवर्तकता यद्यपि वक्तुं शक्यते; तथापि गौरवाद् न तथोच्यते, किंतूक्तोपहितान्याविषयकज्ञानस्यैव। नच—उक्तसमूहालम्बनसङ्ग्रहार्थत्वादुक्तगौरवं प्रामाणिकमिति वाच्यम्; उक्तसमूहालम्बनस्यैवासिद्धत्वात्। यथा हि तार्किकादिमते 'घटो न घटः' इत्यादिज्ञानमाहार्यत्वाद् न

विट्ठलेशीयटिप्पणी

विषयकत्वेन, इति, यद् ज्ञानं यदज्ञानविषयविषयकत्वे सति यदज्ञानविषयांशे यदज्ञानविषयान्याविषयकम्, तत् तदज्ञाननिवर्तकमिति सामान्यव्याप्तिः। तेन जातित्वादिना शुक्तित्वादिज्ञानव्युदास इति—*व्याचक्रुः*। *परंतु*—एवं व्याख्याने स्वातन्त्र्येणाज्ञान-तत्कार्यविषयकस्यापि वृत्त्युपहितात्मविषयकसमूहालम्बनज्ञानस्य निवर्तकत्वं स्यादित्याशङ्काया एवानवतारात्, इष्टापत्त्या तत्परिहार 'इयं शुक्तिरित्यादिना बाधकाभावादित्यन्तेन वक्ष्यमाणो निर्दलः स्यादिति—बोध्यम्।

परेतु—'अन्यविषयत्वानिरूपितात्मविषयकज्ञानस्यैवाज्ञाननिवर्तकत्वमस्तु' इत्यत्रान्यपदं वृत्तिरूपोपाध्यन्यपरम्; 'अत्रोच्यत' इति सिद्धान्तग्रन्थ एतदनुवादे तदन्येत्युक्तेः। तथाच 'अहमज्ञः' इत्यादिज्ञानवारणस्य, महावाक्यजन्यनिर्विकल्पकवृत्तेः स्वोपहितब्रह्मविषयिण्याः शुद्धस्य वृत्तिविषयत्वपक्षे वृत्तिविषयकत्वावश्यकत्वेऽप्यज्ञानादिनिवर्तकत्वस्य चोपपत्तिसंभवे, अज्ञान-तत्कार्याविषयकत्वनिवेशो वेदान्तजोक्तवृत्तेरज्ञानाद्यनिवर्तकत्वापादकोऽनुचित इति शङ्काशयः। एवं चोक्तवृत्तेः स्वातन्त्र्येणाज्ञानादिविषयिण्याः शुद्धस्य वृत्तिविषयत्वपक्षेऽप्यज्ञाननिवर्तकत्वापत्तिशङ्काया वृत्तेः स्वविषयत्वपक्षेऽवतारात्, 'इयं शुक्तिरि'त्यादिना 'बाधकाभावादि'त्यन्तेनेष्टापत्त्या परिहारोऽपि सामञ्जस्येनोपपद्यते—इत्याहुः। *नचैतदिति*॥ *एतत्=अज्ञाननिवर्तकतावच्छेदककोटावज्ञान-तत्कार्याविषयकत्वनिवेशनम्। *पूर्वपक्षिणा=ननु वेदान्तजन्याखण्डवृत्तेरित्यादिशङ्ककेन। *सिद्धान्तेति*॥ एतच्छङ्कासमाधानग्रन्थेत्यर्थः। *सिद्धान्तेऽपीति*॥ तत्र हि वृत्तेः शाब्दबोधेऽभासमानाया एवोपधायकत्वाभ्युपगमादित्युक्तम्। तेनोक्तवृत्तेरज्ञान-तत्कार्याविषयकत्वमुक्तम्। *ननु* वृत्तेस्तत्र भानमुपगम्यैवाज्ञान-तत्कार्याविषयकत्वनिवेशनं निराकृत्य वृत्त्यन्यविषयत्वनिरूपितात्मविषयताकत्वमज्ञाननिवर्तकतावच्छेदके निवेशिनम्, तदाह—*उपाध्यविषयकत्वे सतीति*॥ उपाधिश्चात्मज्ञान-तत्प्रयुक्तान्यतररूप एव। तदविषयकत्वं च वृत्त्युपहितात्मज्ञानस्य सिद्धान्ते वृत्तिविषयकत्वानुपगमेन निर्वाहितम्। *उपहितविषयकत्वम्=वृत्तिरूपोपाध्यवच्छिन्नात्मनिष्ठाश्रयताकविषयताकत्वम्, नतु वृत्तिरात्मा चेत्युभयपर्याप्तविषयताकत्वम्; वृत्तेः स्वविषयतानिराकरणात्। *शुद्धस्य वृत्त्यविषयत्वपक्ष इति*॥ वृत्तिरूपोपाधेश्च स्वविषयत्वपक्ष इति शेषः। *शुद्धस्य=वेदान्तप्रतिपाद्यस्य ब्रह्मात्मस्वरूपस्य। *वृत्त्युपहितम्*॥ शुद्धस्य विषयत्वानङ्गीकारात्। *यद्रूपम्=वृत्त्यन्यधर्मानुपहितं ब्रह्मात्मस्वरूपम्। *तदंश इति*॥ तन्निष्ठविषयतानिरूपितेत्यर्थः। *तदन्येति*॥ वृत्तिरूपोपाध्युपधेयोभयान्येत्यर्थः। उपधेयान्यत्वनिवेशे प्रयोजनविरहात्, वृत्तिरूपोपाध्यन्येति यावत्। आत्मनिष्ठविषयतानिरूपितवृत्त्यन्यविषयत्वानिरूपकज्ञानस्येति वा, वृत्त्यन्यविषयत्वानिरूपितात्मविषयताकज्ञानस्येति वा समुदायार्थः। *वक्तुं शक्यत इति*॥ 'अहमज्ञः' इत्यादिज्ञानवारणस्य वृत्त्युपहितात्मज्ञानसंग्रहस्य च संभवादिति भावः। *उक्तोपहितान्याविषयकज्ञानस्यैवेति*॥ स्वोपहितात्मभिन्नाविषयकज्ञानस्यैवेत्यर्थः। *स्वम्=वृत्तिरूपं ज्ञानम्। *नन्वेवं* शुद्धज्ञानासंग्रहोऽप्रसिद्धिर्वा। तथाच 'अहमज्ञः' 'घटः सन्' इत्यादिज्ञानवारणम्। वेदान्तजन्याखण्डवृत्तौ स्वोपहितान्यस्वविषयकत्वस्यैव सत्त्वेन न ततोऽज्ञान-तत्कार्यनिवृत्तिः स्यादिति पूर्वपक्षसङ्गतिः, उक्तवृत्तेः स्वाविषयकत्वव्यवस्थापनेन सिद्धान्तसङ्गतिश्चेति भावः। *प्रामाणिकमिति*॥ उक्तसमूहालम्बनस्याज्ञान-तत्कार्यभ्रमनिवर्तकत्वस्यानुभवसिद्धत्वेन तत्साधारणोक्तगुरुधर्मस्यापि तदवच्छेदकतासिद्धिरिति भावः। स्यादिदम्—उक्तसमूहालम्बनस्योक्तनिवर्तकत्वसिद्धौ, सैव नेत्याह—*उक्तसमूहालम्बनस्यैवेति*॥ सन्नि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानान्तरविरोधि ; तथा मन्मतेऽप्युक्तसमूहालम्बनमाहार्यत्वाद् नाज्ञान-तत्कार्यभ्रमविरोधि ; घट-तदभावविषयतयोरिव द्वैताद्वैतविषयतयोरनाहार्यज्ञाने विरुद्धत्वात् । अथ—विशेष्यतावच्छेदकत्वसम्बन्धेन घटभेदप्रकारकानाहार्यज्ञानोत्पत्तौ घटत्वनिष्ठविषयतासम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वादाद्ययोर्विषयतयोर्युक्तस्तादृशो विरोधः, अन्त्ययोस्तु स कुतः ? इति—चेत्, *न* ; अद्वैतत्वेन ब्रह्मज्ञानोत्तरमेव 'अहं ब्रह्मे'ति ज्ञानस्योत्पत्तेस्तत्कालेऽद्वैतत्वेन ब्रह्मण उद्बुद्धसंस्कारसत्त्वेन तस्यैव द्वैतधीविरोधित्वेनान्त्ययोरपि तयोरुक्तविरोधस्य युक्तत्वात्, शुक्तित्वं रजतभेदव्याप्यमित्याकारोद्बुद्धसंस्कारस्य 'शुक्तौ रजतमि'ति ज्ञाने प्रतिबन्धकत्ववद् 'द्वितीयाभावो ब्रह्मनिष्ठः' 'अज्ञानाद्यभावो ब्रह्मनिष्ठः' इत्याकारोद्बुद्धसंस्कारस्यापि 'ब्रह्मरूपसदात्मकं द्वितीयम्' 'सदात्मकमज्ञान-

न्यायामृतसौगन्ध्यम्

विशेष्यतानापन्ने वस्तुनि (१) मानाभावेन शून्यवादापातात्, ब्रह्मणि संदिग्धानैकान्तिकस्य दुर्वारत्वाच्च ॥ किञ्च "तद् विशिष्टं कल्पितम् ? अकल्पितं वा ? नाद्यः ; ब्रह्मणोऽखण्डार्थत्वहानिप्रसङ्गात् । न द्वितीयः ; तस्यावेद्यत्वायोगाद् वेदान्तानाम्, वेदान्तजन्याखण्डवृत्तेरुपहितविषयत्वे तदानीमुपाध्यन्तरस्याभावेन तस्यैवोपधायकत्वाद् विषयत्वापत्तिः । न चेष्टापत्तिः, अज्ञान-तत्कार्याविषयकज्ञानस्य

सौगन्ध्यविमर्शः

(१) वृत्तिसमानकालीनं चैतन्यं वृत्त्युपहितम्, तच्च न शुद्धम् । तथाच वृत्तिविषयत्वं तत्कालीनस्यैव चैतन्यस्येति न शुद्धविषयतापत्त्या व्यभिचारावकाशः ॥

विट्ठलेशीयटिप्पणी

वर्तकत्वस्यैवेत्यर्थः । तेनोक्तसमूहालम्बनस्याहार्यत्वस्य सिद्धावपि नासङ्गतिः । कुतस्तस्य न निवर्तकत्वम् ? तत्राह—*यथा हीति* ॥ घटो न घट इति ज्ञानवत् स्वविरोधिधर्मधर्मितावच्छेदककत्वप्रकारकत्वाभावात् कथमुक्तसमूहालम्बनस्याहार्यत्वम् ? तत्राह—*घट-तदभावविषयतयोरिवेति* ॥ *द्वैताद्वैतविषयतयोरिति* ॥ आद्यविषयताया द्वितीयविषयताकज्ञानप्रतिबध्यतावच्छेदकत्वादिति भावः । *अन्त्ययोस्तु कुत इति* ॥ 'अहं ब्रह्मे'ति ज्ञानमेव द्वैतज्ञानविरोधि ; तस्य च न द्वैतविषयताकत्वम्, निर्विकल्पकत्वादिति भावः । *अद्वैतत्वेन ब्रह्मेति* ॥ द्वैतसामान्याभावविशिष्टब्रह्मेत्यर्थः । *ज्ञानोत्तरमेवेति* ॥ तस्य तत्र कारणत्वात् । अन्यथा 'एकमेवाद्वितीयम्' इतिवाक्यजन्यबोधे द्वारीभूतावान्तरबोधानुरोधेन तात्पर्यविषयीभूतद्वितीयाभावत्वविशिष्टरूपद्वैताभानप्रसङ्गेन, उक्तरीत्या वृत्तिरूपद्वैतभानप्रसङ्गेन वा मुख्यतात्पर्यविषयनिर्विकल्पकाद्वैतब्रह्मबोधानुपपत्तेः । द्वैताभावविशिष्टब्रह्मज्ञाननाशोत्तरजायमानोक्तज्ञाने किं द्वैतभानविरोधि ? इत्यत आह—*तत्काल इति* ॥ *तस्यैव=उक्तसंस्कारस्यैव* । *विरोधित्वेनेति* ॥ 'अहं ब्रह्मे'त्यनाहार्ये शब्दज्ञाने द्वैतविषयत्वासंभवेनेति भावः । विरोधिविषयकसंशयान्यज्ञानत्वावच्छिन्ना प्रतिबन्धकता कथं संस्कारे स्यात् ? इत्याशङ्क्य विरोधिविषयकसंशयान्यगुणत्वाद्यवच्छिन्नैव प्रतिबन्धकता संस्कारेऽपि युक्तैवेति सदृष्टान्तमाह—*शुक्तित्वमिति* ॥ शुक्तिर्वेति शेषः । *रजतभेदव्याप्यमिति* ॥ रजतभेदवत्ताकोक्तभ्रमसंशयोत्तरप्रत्यक्षनिश्चये विशेषदर्शनस्य हेतुत्वेन तन्निश्चयस्यैतदधीनत्वात्, एतस्य प्रथमत्वात्, उद्बोधकाभावे प्रतिबन्धापलापः सुकरः, उद्बोधकसत्त्वे तु तदुत्तरं स्मृत्या प्रतिबन्धस्योभयसिद्धत्वेन तत्पूर्वक्षणे तदपलापो दुष्करः ; क्षणपौर्वापर्यस्य शपथनिर्णेयत्वात्, इति बोधयितुं *शब्देत्युक्तम्* । *द्वितीयाभावो ब्रह्मनिष्ठ इति* ॥ 'नेह नानाऽस्ति किंचने'ति वाक्यजन्यः "एकमेवाद्वितीयमि"ति वाक्यजन्यो वा 'द्वितीयाभाववद् ब्रह्म' इत्याकारको बोध्यः । *अज्ञानाद्यभावो ब्रह्मनिष्ठ इति* ॥ "यः सर्वज्ञः" इति वाक्याद् ब्रह्मण्यज्ञानाभावव्याप्यसर्वज्ञत्वबोधेन तेजस्तमसोरिव स्वप्रकाशचैतन्याज्ञानयोः स्वतो विरोधात् तेजसि तमस इव, स्वप्रकाशचैतन्यरूपे ब्रह्मण्यज्ञानस्यात्यन्ताभावः शास्त्रवासनावज्जीवसाक्षिणा च ग्रहः इत्युक्ताकारसंस्कारसंभवः । *ब्रह्मरूपसदात्मकं द्वितीयमिति* ॥ *सदात्मकमज्ञानमिति* ॥ उक्ताभावौ तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाविति, तज्ज्ञानादिप्रतिबध्ये अपीमे धियौ तादात्म्यसंबन्धसंसर्गके इति बोध-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मि'त्यादिधीप्रतिबन्धकत्वात् । नच—सत्तादात्म्यमविषयीकुर्वति तादृशसमूहालम्बने उक्तसंस्कारस्याप्रतिबन्धकत्वेन तदुत्पत्तौ बाधकाभाव इति—वाच्यम् ; सदन्यविषयतायाः सत्तादात्म्यविषयतानिरूपितत्वनियमस्य मूल एव वक्ष्यमाणत्वात् । *अथवा*—ज्ञानमेव ज्ञानोत्तरकालीनभोगसाधनानामज्ञान-तत्प्रयुक्तभ्रम-तद्विषयदृश्यानां नाशः, ज्ञानस्य तु नाशो जीवन्मुक्तिस्वीकारे ज्ञानोत्तरोत्पन्नो मनःपरिणामः, तदस्वीकारे तु ज्ञानोपलक्षित आत्मैव । नच—वृत्तिज्ञानविषयकसाक्षिणोऽपि भ्रमत्वादुक्तभ्रमनाशत्वं वृत्तिज्ञानस्यासङ्गतमिति—वाच्यम् ; भ्रमपदस्य स्वेतरविषयकभ्रमपरत्वात् । स्वपदं ज्ञानपरम्, स्वविषयकभ्रमो हि स्वकालत्व-

विट्ठलेशीयटिप्पणी

मायात्मकत्वम् । *तादृशसमूहालम्बने='अहं ब्रह्मास्मि' 'अज्ञान-तत्कार्ये ज्ञाते' इति ज्ञाने । *तदुत्पत्तौ=अनाहार्योक्तसमूहालम्बनोत्पत्तौ । प्रतिबन्धकज्ञानकालीनस्यैव ज्ञानस्याहार्यत्वादिति भावः । *नियमस्येति* ॥ सदन्यमात्रस्य सद्रूपे ब्रह्मचैतन्ये तादात्म्येनाध्यस्ततया तप्तायोगोलके 'वह्निरि'ति तप्तजलस्थवह्न्यंशेषु 'जलमि'ति, चित्तादात्म्यापन्नाहङ्कारे'ऽहमि'ति प्रत्ययेषु अयो-वह्नि-चितामनुल्लेखेऽपि तेषु सत्तादात्म्यभानवत्, सदन्यविषयकज्ञानेषु सतोऽनुल्लेखेऽपि सदन्यस्मिन् सत्तादात्म्यभानं नियतमिति भावः । अयमेव विश्वसत्यत्वभ्रमः । स चाज्ञानां यद्यपि नियतः ; तथापि तत्त्वज्ञानवतां विश्वमिथ्यात्वनिश्चयसंभवेन न विश्वस्मिन् सत्तादात्म्यभाननियमः संभवतीत्यभ्युपगमे त्वाह—*अथवेति* ॥ *ज्ञानमेव='अहं ब्रह्मास्मी'ति तत्त्वज्ञानमेव । *ज्ञानोत्तरकालीनेति* ॥ स्वोत्तरकालीनेत्यर्थः । तेन चैत्रीयोक्तज्ञानपूर्वकालीनभोगानां मैत्रीयोक्तज्ञानोत्तरकालीनत्वेऽपि नाप्रसिद्धिः । तदीयोक्तज्ञानोत्तरकालीनभोगश्च जीवन्मुक्त्यनङ्गीकारेऽन्यदीय एव प्रसिद्धः, तत्स्वीकारे तु तदीयोऽपि । *अज्ञानेति* ॥ मूलाज्ञानेत्यर्थः । *दृश्यानामिति* ॥ इमानि च जीवन्मुक्तिस्वीकारे ज्ञानोत्तरभोगसाधनस्थूल-सूक्ष्मदेहादृष्टाद्यघटितानि । तन्नाशस्तु चरमतत्त्वज्ञानमेव । जीवन्मुक्ततत्त्वज्ञाने नष्टानामज्ञानादीनां न भानसंभवः । अनष्टानां देहादीनामपि न समाधिकाले तत्त्वज्ञाने भानम्, किन्तु व्युत्थाने तेषां भोगसाधनत्वाद् भोगान्यथानुपपत्त्या भोगकालीनज्ञान एव । तदा च मोक्षतत्त्वज्ञानम्—यस्मिन् सत्तादात्म्यानुरागेणापि न सदन्यानां तेषां भानसंभवः, किंतु तत्त्वज्ञानाधीनसंस्कारमात्रम् । जीवन्मुक्त्यनभ्युपगमे तु विदेहताकाले चरमतत्त्वसाक्षात्कारेऽज्ञान-तत्प्रयुक्तदेहादिसकलदृश्योच्छेदरूपे कस्यापि दृश्यस्य कथमपि न भानसंभव इति, 'अहं ब्रह्मास्मि' 'अज्ञान-तत्कार्ये च ज्ञाते' इत्यनाहार्यसमूहालम्बनस्य कथमप्यसंभवात् । आहार्यत्वस्वविरोधीति न तत्साधारण्यानुरोधेनोक्तगुरुधर्मस्याज्ञाननिवर्तकतावच्छेदकत्वसिद्धिरिति सन्दर्भः । *ज्ञानस्य तु=प्रथमोत्पन्नतत्त्वज्ञानस्य तु । *मनःपरिणामः=तत्त्वज्ञानरूपो व्यावहारिकपदार्थज्ञानरूपो वा । तन्नाशस्तु तदुत्तरमनःपरिणामरूप एव । एवं चरमतत्त्वज्ञाननाशस्तदुपलक्षित आत्मैव । उक्तनाशानामतिरिक्तत्वाविनाशित्वयोः स्वीकारे विदेहताकालेऽपि नाशरूपदृश्यसत्त्वापत्तिः, अत उत्तरोत्तरविनाशिभावरूपत्वम्, चरमनाशस्य तु नित्यात्मस्वरूपत्वं च स्वीकृतम् । *तदस्वीकारे=जीवन्मुक्त्यस्वीकारे । तज्ज्ञाननाशकाले तज्ज्ञानस्य विशेषणत्वोपाधित्वयोरसंभवात् *ज्ञानोपलक्षितः* इत्युक्तम् । पूर्वतत्कालावच्छेदेन तज्ज्ञानवत्त्वे सति, तदुत्तरकालोपहित इति तदर्थः । तेनात्मन्यव्याप्तिः । *आत्मा=शुद्धात्मा । *वृत्तिज्ञानविषयकसाक्षिणः=वृत्तिरूपं यद् ज्ञानं तद्विषयकस्य साक्षिणः=वृत्त्युपहितचैतन्यरूपात्मनः । वेदान्तजोक्तवृत्त्या स्वोत्पत्तिकाले मूलाज्ञाननिवृत्तेर्भग्नावरणकोक्तात्मन उक्तवृत्तौ प्रतिबिम्बितत्वात् तेनोक्तवृत्तेः प्रकाशनादिति भावः । *भ्रमत्वात्=वृत्तिरूपमिथ्याविषयकत्वेनोक्तभ्रमान्तर्गतत्वात् । *उक्तभ्रमनाशत्वम्=ज्ञानोत्तरभोगसाधनाज्ञान-तत्प्रयुक्तभ्रमसामान्यतद्विषयदृश्यसामान्यनाशत्वम् । *वृत्तिज्ञानस्यासङ्गतमिति* ॥ उक्तवृत्तिरूपज्ञानकाले तद्विषयोक्तसाक्षिरूपभ्रमसत्त्वेन तन्नाशासम्भवादिति भावः । *भ्रमपदस्य* ॥ तत्प्रयुक्तभ्रम इत्यादिः । स्वपदं न भ्रमपरम्, तदितरविषयकत्वस्य भ्रमेऽव्यावर्तकत्वात्, अत आह—*स्वपदमिति* ॥ *ज्ञानपरमिति* ॥ उक्तवृत्तिरूपज्ञानपरमित्यर्थः । *ननु* स्वपूर्वकालीनस्वविषयकभ्रमनाशत्वं स्वस्यापि सम्भवति, इत्यत आह—*स्वविषयकभ्रमो

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यापकः, इति तन्नाशत्वं स्वस्य न सम्भवत्येव। न चैवम्—ज्ञानोत्तरमनःपरिणामस्याप्युत्पत्तिर्न स्यात्, अदृष्टनाशस्य ज्ञानस्वरूपस्य जातत्वादिति—वाच्यम्; "तस्य तावदेव चिरं यावद् न विमोक्ष्ये, अथ संपत्स्ये" इति श्रुतेः, 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति न्यायाच्च भुज्यमानादृष्टान्यदृश्यानामेव नाशत्वस्य ज्ञाने स्वीकारेणादृष्टाधीनानां मनःपरिणामानां देहादिरूपाणां ज्ञानोत्तरमुत्पत्तिसम्भवात्, ज्ञानरूपापन्नस्य मनसो

विट्ठलेशीयटिप्पणी

हीति*। *स्वकालस्वव्यापक इति*॥ स्वकाले स्वपूर्वभ्रमव्यक्तिनाशोऽपि स्वभ्रमानन्तरं स्वापरोक्षस्वावोक्तानुसानु-कसाक्षिचैतन्यप्रतिबिम्बस्य तत्तादात्म्यरूपविषयत्वस्य चावर्जनीयतया योक्तसाक्षिरूपमावश्यकमिति भावः। *तन्नाशत्वम्=निरुक्तभ्रमसामान्यान्तर्गतोक्तभ्रमनाशत्वम्। *न सम्भवत्येवेति*। तदसम्भव उक्तभ्रमासम्भवेनोक्त-व्यापकत्वभङ्गः स्यादिति भावः। *नचैवमिति*॥ *एवम्=तत्त्वज्ञानस्योक्तसकलदृश्यनाशत्वे। *न स्यादिति*॥ तथाचाज्ञाननाशस्य तद्रूपत्वं कथम्? इति भावः। *अदृष्टेति*॥ कार्यसामान्यकारणोक्तदृश्यसामान्यान्तःपात्य-दृष्टेत्यर्थः। *तस्य=उत्पन्नतत्त्वसाक्षात्कारस्य पुंसः। *तावदेव चिरम्=ब्रह्मभावे कालविलम्बः। यावत्कालं भोगैकनाश्यप्रारब्धकर्मक्षयरूपमोक्षाधीनः प्रारब्धकर्मारब्धशरीरपातो न भवति। *अथ=तादृशशरीरपातोत्तरम्। *संपत्स्ये=ब्रह्म प्राप्नोमि। एवं च तत्त्वज्ञानोत्तरमपि भोगस्तज्जनकादृष्टादिकं चास्तीति लभ्यते। एतदर्थकं सूत्रमाह—*भोगेन त्विति*॥ *इतरे=प्रारब्धकर्मजन्ये पुण्य-पापे। भोगेन विनाश्य *संपद्यते=ब्रह्मभावं प्राप्नोतीति। *न्यायात्*॥ सूत्रादित्यर्थः। अत एव—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" इति, "नाभुक्तं क्षीयते कर्म" इति श्रुतिद्वयेनाविरोधाय तत्त्वज्ञानस्य संचित-क्रियमाण-कर्मनाशकत्वम्, प्रारब्धकर्मानाशकत्वं च बोध्यते। नच—वैपरीत्येनाप्यविरोधः कुतो न? इति—वाच्यम्; तत्त्व-ज्ञानकाल एव प्रारब्धकर्मनाशे तद्देहपातापत्त्या ब्रह्मसाक्षात्कारवत उपदेष्टुरभावेन संप्रदायोच्छेदापत्तेः, "तस्य तावदेव चिरम्" इतिश्रुतिविरोधापत्तेश्च। अत एव जीवन्मुक्तिस्वीकारः, "आचार्यवान् पुरुषो वेद" इति श्रुतिसङ्गतिश्च; संचित-क्रियमाणयोरनाशे तद्भोगार्थं पुनर्जन्मपरम्परापत्त्याऽविमोक्षप्रसङ्गात्, "न स पुनरावर्तते" इति श्रुति-विरोधापत्तेः, मोक्षस्यापुनर्भवपदार्थत्वानुपपत्तेश्च, "तस्य तावदेव चिरम्" इत्यादिश्रुत्यादेस्तद्विरोधापत्तेश्च॥

*ननु*—अकर्त्रात्मबोधरूपतत्त्वज्ञानस्य कर्मनाशसामर्थ्ये सति ततः संचितादिवत् प्रारब्धकर्मणोऽपि कथं नाशो न? इति—*चेत्*; *अत्राहुर्भाष्यकाराः*—यथा कुलालचक्रे प्रवर्तितो वेगो नान्तराले प्रतिबध्यते, एवं प्रारब्धकर्मणैतद्देहावच्छिन्नभोगार्थं प्रवर्तिते सुकृत-दुष्कृते न भोगं विना क्षीयेते, इति जीवन्मुक्तिप्रसिद्धिः। तत्र "तस्य तावदेव चिरमि"ति श्रुतिसिद्धं तत्त्वज्ञानोत्तरकैवल्यप्राप्तौ देहपातावधिरूपं लिङ्गम्, श्रुतिस्मृतिषु स्थितप्रज्ञलक्षणोक्तिस्तत्त्वविदां याज्ञवल्क्यादीनां देहधारणोक्तिश्च प्रमाणम्। *यत्तु रामानन्दीय उक्तम्—प्रारब्धकर्मण-स्तत्त्वज्ञानं प्रति प्रयोजकत्वादुपजीव्यकत्वेन प्राबल्यमिति, *तत्तु न ज्ञानेन प्रारब्धकर्मानाशे युक्तिपरम्; अन्तःकरणादे-रप्येवं नाशानुपपत्तेः, किन्तु प्रारब्धकर्मणां ज्ञानेन सर्वांशाविद्यानिवृत्तौ प्रतिबन्धकत्वे युक्तिपरम्। *यदपि*—प्रतिबन्धकवशाद् विक्षेपकाविद्यांशस्थूलरूपेणैव निवर्तयति, तल्लेशरूपः संस्कारस्त्वनुवर्तत एव। एवं चाकर्त्रात्म-बोधरूपं तत्त्वज्ञानं कर्त्रात्मबोधरूपमिथ्याज्ञाननिवृत्तिद्वारैव कर्मोच्छेदकं वाच्यम्। न चात्यन्तिकी तन्निवृत्तिरस्ति; व्यवहारकाले तत्त्वज्ञानाभावेन संस्कारवशेन द्विचन्द्रज्ञानवत् तदनुवृत्तेरानुभाविकत्वात्—*इति*, *तदपि* न प्रारब्धकर्मानाशे युक्तिपरम्; संचितकर्मादीनामप्येवमनाशापत्तेः, किन्तूक्तरीत्या जीवन्मुक्तव्यवहारनिर्वाहमात्र-परमिति विभावनीयम्। *भुज्यमानेति*॥ ज्ञानोत्तरभोगसाधनेत्यर्थः। *अदृष्टाधीनानामिति*॥ भुज्यमानेत्यादिः। *मनःपरिणामानाम्=ज्ञानेच्छा-प्रयत्न-सुख-दुःखादिरूपाणाम्। देहादिरूपाणां तु ज्ञानोत्तरमुत्पत्तिः। शरीरस्य प्रतिक्षणमवयवापचयोपचयाभ्यामुत्पाद-विनाशशालित्वाभ्युपगमात्। देहेन्द्रियादिसंघातेन लभ्यमानानां प्रयोज्य-मानानामिति 'मनःपरिणामानामि'त्यस्यैव विशेषणं वा। *ननु*—उक्तदृश्यान्तःपातिमनसोऽपि ज्ञानकाले नाशात् कथं तत्परिणामसम्भव इति? अत आह—*ज्ञानरूपापन्नस्येति*॥ ज्ञानरूपपरिणामोपादानतया तत्तादात्म्यापन्नस्येत्यर्थः।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानरूपनाशासम्भवेन मनसोऽपि ज्ञानोत्तरं सत्त्वेन तत्परिणामसम्भवात् । तथाच तादृशदृश्यविषयकज्ञान-ध्वंसत्वस्य ज्ञाने स्वीकारेण तत्त्वज्ञानस्य नोक्तसमूहालम्बनरूपत्वम् । अत एव 'इयं शुक्तिरि'ति ज्ञानस्ये'दं रजतमि'त्याकारभ्रमरूपत्वासम्भवः ; तादृशज्ञानस्योक्तभ्रमनाशरूपत्वात् । नच—ज्ञानोत्तरभोगासाधनभ्रम-रूपत्वं ज्ञानस्य माऽस्तु, उक्तभोगसाधनदृश्यभ्रमरूपता तु स्यादिति—वाच्यम् ; तत्त्वज्ञानस्य भोगात्मकबन्धा-साधनत्वात्, 'मनो हि द्विविधं प्रोक्तं कारणं बन्ध-मोक्षयोः । बन्धाय विषयासक्तं मोक्षे निर्विषयं स्मृतम् ॥' इति श्रुत्या मोक्षसाधनमनःपरिणामस्य बन्धासाधनत्वोक्तेः । *अथ*—'विषयासक्तमि'त्यनेन सत्यत्वेन विषयज्ञान-युक्तस्योक्तत्वात्, तत्त्वज्ञानस्य 'विषया मिथ्ये'ति ज्ञानात्मकत्वं सम्भवतीति—चेत्, *न* ; 'मोक्षे निर्विषय-मि'त्यनेन मोक्षसाधनरूपेण परिणतमनसोऽनात्मविषयकत्वनिषेधात् । तदेतत् पक्षद्वयमभिप्रेत्य विवरण

### विठ्ठलेशीयटिप्पणी

तत्त्वज्ञानस्योक्तदृश्यनाशत्वमात्रस्वीकारे 'अहं ब्रह्मास्मि' 'अज्ञानतत्कार्यं च ज्ञाते' इति तत्तादात्म्याविषयकमतीत-ज्ञानविषयत्वेन तत्कालनष्टाज्ञान-तत्कार्यविषयकं समूहालम्बनं स्यादेव, इति तत्त्वज्ञानस्याज्ञानाद्यविषयकत्वरूपाज्ञानादि-निवर्तकतावच्छेदकवत्त्वं दुर्घटम् ; अतस्तस्य तादृशदृश्यरूपमिथ्याविषयकज्ञानरूपभ्रमनाशत्वमपि स्वीकार्यम्, इति 'अज्ञानतत्प्रयुक्तभ्रमतद्विषयेत्यत्र भ्रमपदप्रयोजनं ध्वनयन् प्रकृतमुपसंहरति—*तथाचेति* । *नोक्तसमूहालम्बनरूपत्व-मिति* ॥ स्वस्य स्वध्वंसत्वापत्तेरिति भावः । न केवलमियं प्रकृताभिमतसिद्ध्यनुरोधिनी कल्पना, किन्तु अन्यत्र दृष्टत्वादावश्यकीत्याह—*अत एवेति* ॥ *शुक्तिरिति ज्ञानस्य* ॥ तथाच यद्विषयकं यज्ज्ञानम्, तत् तद्विषयकाज्ञान-तत्प्रयुक्तभ्रम-तद्विषयदृश्यध्वंसरूपमिति सामान्यव्याप्तेरिति भावः । *भ्रमरूपत्वेति* ॥ स्वात्मकनाश-प्रतियोगिभ्रमरूपत्वेत्यर्थः । *स्वम्=ज्ञानम् । *उक्तेति* ॥ ज्ञानोत्तरभोगसाधनदेहादिदृश्यभ्रमरूपतेत्यर्थः । इदं च ज्ञानम् "अहं ब्रह्मास्मि" 'इदं च देहादिकं ज्ञायते' इत्याकारकं बोध्यम् । *स्यादिति* ॥ ज्ञानस्य तद्ध्वंसत्वानुपगमा-दित्यर्थः । *भोगात्मकबन्धेति* ॥ वैषयिकसुख-दुःखान्यतरसाक्षात्कारो भोगः । स च भोक्तृत्वाभिमानाभावेऽपि बन्धरूपः । तदभिमानस्यापि कदाचिद् जीवन्मुक्ते सम्भवात् । *असाधनत्वादिति* ॥ तथाच देहादिदृश्यपदार्थज्ञानं तदधीनोक्तभोगात्मकबन्धसाधनमिति तत्त्वज्ञानस्य देहादिविषयकत्व उक्तबन्धसाधनत्वापत्तिरिति भावः । *ननु*—उक्तबन्धसाधनत्वं तत्त्वज्ञानस्येष्टमेव, तत्त्वज्ञानान्यदेहादिज्ञानेन प्रारब्धकर्माधीनोक्तभोगात्मकबन्धस्यावश्यम्भावित्वात्, इत्याशङ्क्य तत्र श्रुतिविरोधमाह—*मनो हीति* ॥ *मनः* ॥ वृत्तिरूपेण परिणतमित्यर्थः । *विषयासक्तम्= ब्रह्मान्यविषयकम् । *निर्विषयम्=ब्रह्मान्याविषयकम् । परिणतम्=मनस्तत्परिणामरूपम् । यद्वा—*विषयासक्तम्= ब्रह्मान्यविषयकवृत्तिरूपज्ञानयुक्तं तज्जनकम् । *निर्विषयम्=ब्रह्मान्याविषयकज्ञानयुक्तं तज्जनकम् । मनःपदं यथाश्रुतम् । मनसो बन्ध-मोक्षकारणत्वमुक्तज्ञानद्वारा । मोक्षसाधनमनःपरिणामस्य ब्रह्ममात्रविषयकस्य बन्धसाधनमनःपरिणाम-रूपस्य ब्रह्मान्यविषयकस्य च बन्ध-मोक्षसाधनत्वोक्तेरिति । ब्रह्मान्यविषयकज्ञानस्यैव बन्धसाधनत्वोक्तेः, ब्रह्ममात्र-ज्ञानस्यैव तद्विरुद्धमोक्षसाधनत्वोक्तेश्च । अत एव द्विविधत्वसङ्गतिः । मिथो विरुद्धधर्मयोरेव विभाजकत्वादिति भावः । *सत्यत्वेनेति* ॥ विषयज्ञानेत्यत्रान्वयः । मिथ्यात्वेन तज्ज्ञानस्य बन्धाजनकत्वात् । *विषया मिथ्या इतीति* ॥ 'निर्विषयमि'त्यस्य सत्यत्वेन ब्रह्मान्याविषयकत्वे सति ब्रह्मविषयकमित्यर्थकत्वात् । 'विषयासक्त-मि'त्यत्र सत्यत्वेनेति शेषः । सत्यत्वेनागृहीतविषयज्ञानस्यापि मिथ्यात्वेन गृहीतविषयज्ञानस्यापि ऐन्द्रजालस्थले सुख-दुःखानुभावकत्वात्, इत्यतो 'निर्विषयमि'त्यनेनात्मान्यविषयकत्वसामान्याभावो बोध्यते, इत्याशयेन समाधत्ते—*मोक्षे निर्विषयमित्यनेनेति* । *अनात्मेति* ॥ 'विषयविषयिणोरि'ति भाष्येणात्मन्येव विषयिपदप्रयोगादिति भावः । उक्तरीत्या श्रुतिव्याख्याने महत्संमतिं दर्शयति—*तदेतत् पक्षद्वयमिति* ॥ द्वैतज्ञानेऽद्वैतत्वेन ब्रह्ममिथ्यात्वादिप्रति-बन्धकमिति पक्षः, तत्त्वज्ञानस्य ज्ञानोत्तरभोगसाधनसकलदृश्यध्वंसत्वरूपत्वमिति पक्षश्च, इति तत्त्वज्ञानस्यात्मान्या-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उक्तम्—'द्वैताद्वैतदर्शनयोर्न यौगपद्यम्, किन्तु कदाचिदद्वैतदर्शनम्, कदाचिद् द्वैतदर्शनमि'ति । *तत्त्वदीपनेऽपि तत्र व्याख्यातम्—'सन्तमस-बहुलालोकयोरिव द्वैताद्वैतदर्शनयोर्विरोधः' इति ॥ *यद्वा*—अज्ञानतत्कार्याविषयकज्ञानस्येत्यस्यात्मांशे किञ्चिदविषयकज्ञानस्येत्यर्थः, इतरविषयत्वानिरूपितात्मविषयताशालिज्ञानस्येत्यर्थः । यथाहि 'इदं रजतमि'त्यादिभ्रममूलाज्ञाने शुक्तित्वांशे जातित्वादिप्रकारक'मिय जातिमती'ति ज्ञानं न निवर्तकम्, अत इतरप्रकारत्वानिरूपितशुक्तित्वविषयतानिरूपितविषयताशालिज्ञानत्वेन तन्निवर्तकता ;

विट्ठलेशीयटिप्पणी

विषयकत्वसाधकं पक्षद्वयमित्यर्थः । *यौगपद्यम्=एकक्षण एकत्रोत्पत्तिः । *कदाचित्=साधनचतुष्टयसम्पन्नस्य श्रवणादिभिर्विशास्त्रनपरिपाककल्मषनिवृत्त्यादिघटितसामग्रीदशायाम् । *अद्वैतदर्शनम्=ब्रह्मात्ममात्रसाक्षात्कारः । *कदाचित्=उक्तसामग्र्यभावदशायाम् । *द्वैतदर्शनम्=ब्रह्मान्यपदार्थज्ञानम् । उक्तसामग्रीदशायामपि द्वैतदर्शनसामग्र्या द्वैतोपस्थितिघटितायाः सत्त्वात् कथं न यौगपद्यम्? अत आह—*तत्त्वदीपनेऽपीति* । *विरोध इति* ॥ उक्ताद्वैतदर्शनसामग्री द्वैताभावविशिष्टब्रह्मनिश्चयादिघटिता । सा च ब्रह्मणि द्वैतविशिष्टबुद्धिविरोधिनी । ब्रह्मासम्बद्धद्वैतबुद्धिस्तु भास्त्येव ; ब्रह्मोपादानकस्यैव तस्य श्रवणात् । तत्रापि च द्वैताभावविशिष्टब्रह्मनिश्चयोत्तरो ब्रह्ममात्रनिश्चयो निर्विकल्पकोऽपि विरोधी । तद्विशिष्टबुद्धौ तदभावावच्छेदकत्वादिना गृहीतधर्मवद्धर्मिण इव, तदभाववत्त्वेन गृहीतस्य धर्मान्तराविशेषितधर्मिणोऽपि निश्चयस्य विरोधित्वस्यौचित्येनोपगमादिति भावः । एतावता 'अहं ब्रह्मास्मि' 'अज्ञान-तत्कार्यं च ज्ञाते' इति समूहालम्बनासिद्धिरुपपादिता । एवं च तत्संग्राहकस्यापि वृत्त्यन्यविषयत्वानिरूपितात्मविषयताकज्ञानत्वस्य माज्ञानादिनिवर्तकतावच्छेदकत्वम् ; गौरवात् । अतो मूले 'अज्ञान-तत्कार्याविषयकज्ञानस्ये'त्यनेनोपहितान्याविषयकज्ञानस्योक्तनिवर्तकतावच्छेदकत्वमुक्त्वा वृत्त्युपहितात्मज्ञानस्योपहितान्यवृत्तिविषयकत्वेऽज्ञानादिनिवर्तकतानुपपत्तिरूपपूर्वपक्षः सङ्गच्छते । अग्रे चोक्तात्मज्ञानस्य वृत्त्यविषयकत्वव्यवस्थापनेन सिद्धान्तोऽपीति पर्यवसितम् । *ननु*—यद्युक्तरीत्या द्वैताद्वैतदर्शनयोर्विरोधं स्वभावतो वाधकाद्युपस्थितिस्वभावः कश्चित् 'अहं ब्रह्मास्मि' 'अज्ञानादिकं च ज्ञातम्' इति द्वैताद्वैतसमूहालम्बनासिद्धिं न मन्यते, तदोक्तसमूहालम्बनसंग्रहानुरोधेन वृत्त्यन्याविषयत्वानिरूपितात्मविषयताशालिज्ञानत्वेन गुरुणाऽप्यज्ञानादिनिवर्तकता स्वीकार्या, इति वृत्त्युपहितात्मज्ञानस्य वृत्तिविषयकत्वेऽप्यज्ञानादिनिवर्तकतोपपत्तेरज्ञान-तत्कार्याविषयकत्वमुक्तसमूहालम्बनासंग्राहकमपि निवेश्य तस्य तन्निवर्तकत्वापादनपूर्वपक्षो न सङ्गच्छत इत्याशङ्क्याज्ञानतत्कार्याविषयकत्वस्योक्तसमूहालम्बनसंग्राहकं वृत्त्यन्यांशनिवेशेन तत्संग्राहकोक्तरूपाद् लघुरूपमर्थमाह—*यद्वेति* । *आत्मांशे किञ्चिदविषयकेति* ॥ आत्मनिष्ठविषयतानिरूपितकिञ्चिन्निष्ठविषयत्वानिरूपकेति, किञ्चिन्निष्ठविषयत्वानिरूपितात्मविषयत्वानिरूपकेति वार्थः । तत्र च विनिगमनाविरहः ; गुरुधर्मावच्छिन्नाभावविवक्षापत्तिः, निर्विषयकमेव किञ्चिद् ज्ञानं तत्त्वज्ञानं नामेति भ्रमश्च स्यात्, अतस्तदपि व्याचष्टे—*इतरविषयत्वेति* ॥ इतरनिष्ठविषयत्वं नार्थः ; वृत्तीतरत्वविवेके पूर्वपक्षासङ्गतेः, आत्मान्यत्वविवेके गौरवापत्तेः, किन्तु आत्मविषयतारूपस्वेतरविषयत्वम्, तत्र स्वस्य स्वानिरूपितत्वं नास्तीति ( स्वेतरां ज्ञानान्तरीयां तदीयां वा स्वातन्त्र्येण भासमानां ज्ञाननिष्ठां विषयतामुपादाय वृत्तेः स्वाविषयत्वे ) तत्त्वज्ञानीयात्मविषयतायां विषयतानिरूपितत्वसामान्याभाववत्ता निर्वाह्येति सूचनाय स्वेतरत्वं विषयत्वे स्वरूपकीर्तनमात्रम्, तेन न पुनः स्वान्यत्वनिवेशप्रयुक्तगौरवापत्तिः, नाप्यननुगमः । *आत्मविषयताशालिज्ञानस्येति* ॥ तेन न निर्विषयकतत्त्वज्ञानभ्रमः । अत्र निरूपितत्वरूपवृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे तत्सम्बन्धावच्छिन्नप्रतियोगिताकविषयत्वसामान्याभावविशिष्टात्मविषयताशालिज्ञानस्येत्यर्थे निरूपितत्वीयसम्बन्धानिवेशादपि लाघवं बोध्यम् । अस्मिन्नर्थे सामान्यमुखव्याप्तिमूलानुमानं प्रमाणमित्याह—*यथा हीति* । *अज्ञाने=स्वरूपतः शुक्तित्वप्रकारके शुक्तिं न जानामीत्याकारके । *न निवर्तकम्* ॥ किंतु 'इयं शुक्तिरि'ति स्वरूपतः शुक्तित्वप्रकारकमेव निवर्तकम् । *निवर्तकता* ॥ ननु निरवच्छिन्नशुक्तित्वविषयतानिरूपितविषयिताबहिर्भूत-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाऽज्ञानादिविशिष्टात्मज्ञानस्य ब्रह्माज्ञान-तत्कार्यानिवर्तकत्वेनोक्तविषयताकज्ञानत्वेन तन्निवर्तकत्वम्, "तमेव विदित्वाऽतिमृत्युमेती"त्यादिश्रुत्या तु 'एकधैवानुद्रष्टव्यमि'त्यादिकेवलार्थकैकपदयुक्तश्रुत्यैकवाक्यतानुरोधेन केवलात्मज्ञानस्यैवाज्ञाननिवर्तकत्वं बोध्यते, न त्वात्मान्याविषयकस्य; न्यायसिद्धार्थस्य तच्छ्रुत्याऽनुवादात्। अत एवोक्तं ध्यानदीपिकायां विद्यारण्यस्वामिभिः—'न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता। उपमृद्नाति चेद् बुद्धिं ध्याताऽसौ नतु तत्त्ववित्॥' इति। बुद्धिर्ज्ञानस्यात्मान्याविषयकत्वरूपोपमर्दनाय यतमानत्वं ध्यातुरुचितम्, ध्यानस्य ध्येयान्यविषयकज्ञानासहितज्ञानधारारूपत्वेनोक्तोपमर्दनं विना तदनिष्पत्तेः, तत्त्वज्ञाने तूक्तोपमर्दनस्य नापेक्षा, घटादितत्त्वज्ञाने घटादिभिन्नविषयकत्वनिरासादर्शनादिति तदर्थः। *शुद्धं

विट्ठलेशीयटिप्पणी

विषयताशून्यत्वेन, तदज्ञानाद्यविषयकत्वादिना; 'इयं शुक्तिः' 'अयं घटो जातिमांश्च' 'शुक्त्यज्ञानादिकं च ज्ञातमि'ति समूहालम्बनानामुक्ताज्ञाननिवर्तकत्वापत्तेः। *उक्तविषयतेति* ॥ विषयत्वानिरूपितात्मविषयतेत्यर्थः। *तन्निवर्तकत्वम्* ॥ ननु स्वोपहितान्याविषयकात्मज्ञानत्वेन; 'अहं ब्रह्म' 'अज्ञानादिकं च ज्ञातमि'ति समूहालम्बनस्य तन्निवर्तकतापत्तेः। तथाच यदज्ञानं स्वरूपतो येन रूपान्तरेण च यद्विषयकम्, तथा तद्विषयकं ज्ञानमेव स्वातन्त्र्येण किंचिद्विषयमपि तदज्ञाननिवर्तकमिति व्याप्तेरज्ञान-तत्कार्यविषयकेत्यस्यात्मांश इति पूरणेनोक्तव्याख्यानमादृतम्। ब्रह्मज्ञानाज्ञाने च स्वोपहितविषयके अप्युपाधेर्विषयत्वाविषयत्वाभ्यां पूर्वपक्ष-सिद्धान्तयोर्विरोधाविरोधौ भजत इति भावः। *ननु* 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुत्यैवकारेणात्मान्याविषयकज्ञानस्यैवाज्ञानादिमृत्युनिवर्तकत्वमुक्तम्, इति तद्विरोध इत्यत आह—*तमेवेति*॥ 'एकधे'त्यस्यैकेन प्रकारेणेत्यर्थकत्वे तत्त्वज्ञानस्य सप्रकारकत्वापत्तेः—*केवलार्थकैकपदेति* ॥ धाप्रत्ययस्तु स्वार्थे। *केवलम्=निर्विशेषितमेव ब्रह्म, मोक्षाय ज्ञातव्यमित्यर्थः। *एकवाक्यत्वानुरोधेनेति* ॥ *तम्=शुद्धं धर्मिणमात्मानम्, यत्तदोः शुद्धधर्मिबोधकत्वात्। अत एव 'यद्विषयकत्वेनेति' मणिं यादृशविशिष्टविषयकत्वेनेति व्याचक्रुस्तार्किकशिरोमणयः। एवकारेण तदंशे प्रकारस्य व्यावृत्तिः, नतु स्वातन्त्र्येण पदार्थान्तरभानस्यापि। तदाह—*नत्विति* ॥ *ननु* एवकारार्थसंकोचानुरोधाद् एकधैवेत्यस्यैकमेवेत्यर्थोऽस्तु, तथाच श्रुतिद्वयेनाप्यात्मान्याविषयकमेव लभ्यत इति किं न स्यात्? अत आह—*न्यायसिद्धार्थस्येति*॥ 'यथाह्री'त्याद्युक्तरीत्याऽनुमानसिद्धस्येत्यर्थः। *तच्छ्रुत्याऽनुवादादिति* ॥ अन्यथा श्रुतेरपूर्वार्थकतापत्त्या गौरवापत्तेः, न्यायविरुद्धार्थबोधनासंभवाच्च। उक्तश्रुत्योरुक्तन्यायसिद्धोक्तार्थानुवादकत्वे माधवाचार्याणां संमतिमाह—*अत एवोक्तमिति* ॥ तत्त्वज्ञानस्यात्मांश इतराविषयकत्वेनैव निवर्तकत्वादेवेत्यर्थः। *घटतत्त्वस्य वेदिता=घटत्वप्रकारकप्रमावान्। *बुद्धिम्=स्वीयां घटत्वप्रकारकप्रमाम्। घटत्वप्रकारकाज्ञाननिवर्तनाय *मर्दयन्=घटान्यविषयकज्ञानासहितत्वं संपादयन् *न दृष्टः* ॥ स चेत् तां *बुद्धिमुपमृद्नाति=तथा संपादयति, तर्हि *असौ=घटस्य ध्याता, नतु तत्त्वविदिति पदार्थः। उक्तोपमर्दको ध्याता, न तत्त्वविदिति ध्यान-तत्त्वज्ञानयोर्विशेषं विना नोपपद्यते, इत्यतस्तदुपपादयन्नाह—*बुद्धेरिति* ॥ *ज्ञानस्य=ब्रह्मात्मज्ञानस्य। *ज्ञानासहितेति* ॥ एकक्षणावच्छिन्नसामानाधिकरण्यसंबन्धेन ज्ञानाभावविशिष्टेत्यर्थः। स्वविषयान्यविषयकज्ञानान्तरविशिष्टस्यापि ज्ञानस्य ध्यानपदार्थता नास्ति। अत एव ध्येयान्यविषयकज्ञानेति नोक्तम्। किं पुनः? स्वविषयान्यविषयकज्ञानस्येति। स्वात्मकतादृशज्ञानविशिष्टस्यापि तस्य तदभावविशिष्टत्वाभावेन ध्यानपदार्थत्वव्यावृत्तिः। *उक्तोपमर्दनम्=आत्मान्याविषयकत्वं विना *तदनिष्पत्तेः=ध्यानानिष्पत्तेः, *तत्त्वज्ञाने='अहं ब्रह्मास्मि' इत्यात्मतत्त्वज्ञाने, *उक्तोपमर्दनस्य=आत्मान्याविषयकत्वरूपस्य *अज्ञानादिनिवर्तकत्वे *नापेक्षा=नावच्छेदकत्वेन तदावश्यकत्वम्; 'अहं ब्रह्मास्मि' 'अज्ञानादिकं च ज्ञातमि'ति ज्ञानस्यापि तन्निवर्तकत्वौचित्यात्, अन्यत्रोक्तापेक्षाया अदर्शनात्, तदाह—*घटादितत्त्वज्ञान इति* ॥ घटाद्यज्ञानादिनिवर्तक इति शेषः। *भिन्नविषयकत्वनिरासस्य=तदवच्छेदकत्वाभावस्य, अदर्शनादित्यर्थः। 'अयं घटः' 'अयं च पटः' इति समूहालम्बनस्यापि घटाद्यज्ञानादिनिवर्तकत्वदर्शनादिति भावः। एवं चोक्तसमूहा-

अद्वैतसिद्धिः

एवोपधायकत्वाभ्युपगमात् । तदुक्तं कल्पतरुकृद्भिः—'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपा-

तरङ्गिणी

शुद्धात्मनो विषयत्वात् तत्र व्यभिचार इति । अविशिष्टविषयचरमवृत्तिविषयत्वात् शुद्धात्मनि स्पष्टो व्यभिचारः । *ननु* चरमवृत्तिरपि विशिष्टविषयैव, इति कस्यचित् समाधानमाशङ्क्य निराकरोति—*एतेनेति* ॥ चरम-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ब्रह्मेतीति* ॥ इतिशब्दोऽत्र वृत्तिविषयसमाप्तौ । *शुद्धं ब्रह्मेति* ॥ शुद्धब्रह्मणो वृत्त्युपहितं रूपमित्यर्थः । तथाच वृत्त्युपहितं ब्रह्मैव विषयीकुर्वाणेत्यर्थः । *अथवा* इतिशब्दो वृत्त्युपहितार्थकः ; तथाच शुद्धशब्देनैव वृत्त्युप-

सिद्धिव्याख्या

त्वानुपपत्तेरित्याह—*वृत्तेरिति* ॥ उक्तं च कल्पतरुसंमत्या द्रढयति—*तदुक्तमित्यादिना । *ननु* मिथ्याभूतानां तेषां साक्षात्कारेण निवृत्तावपि तस्य केन निवृत्तिरित्याशङ्क्याह—*स्वस्वेतरेति* ॥ अनेन चरमवृत्त्युदयकाल

विट्ठलेशीयटिप्पणी

लम्बनासिद्धावुपहितान्याविषयकत्वेन, तत्सिद्धावात्मांशे किंचिदविषयकत्वेन तत्त्वज्ञानस्याज्ञानादिनिवर्तकत्वम्, नतु किञ्चिदंशे वृत्त्यन्यत्वघटितेन निरुक्तरूपेण ; गौरवात्, अनतिप्रयोजनत्वाच्च, वक्ष्यमाणसिद्धान्तरीत्या तत्त्वज्ञानसंग्रहासंभवादिति । तत्त्वज्ञानस्य शुद्धविषयकत्वासंभवेन स्वोपहितविषयकत्वे नीलत्वेनाज्ञाते घटे 'नीलो घटो ज्ञातो द्रव्यं चेति' प्रतीतेरनभ्युपगमेनोपाधेरपि नीलत्वस्य ज्ञातत्वप्रतीत्यभ्युपगमेनोपाधेरप्युप-धेयान्वितान्वितत्वमित्यभिमानेन स्वोपहितात्मज्ञानस्य स्वविषयकत्वेनाज्ञानादिनिवर्तकत्वानुपपत्तिः पूर्वपक्षिता । तत्र नीलत्वेनाज्ञाते घट उक्तप्रतीतेरनभ्युपगमे नीलत्वं ज्ञातत्वांशे विशेषणम्, द्रव्यत्वांश उपाधिः, तत्र द्रव्यत्वावगाहित्वेव वा नेत्यभ्युपेयते । तत्रोक्तप्रतीतेरभ्युपगमे तु नीलत्वे द्रव्यत्ववद् ज्ञातत्वं न भासत इति विशे-ष्यान्वितस्यैव व्यावर्तकस्योपाधित्वं स्वीकार्यम् ; अन्यथा विशेष्यान्वितान्वयिव्यावर्तकरूपविशेषणादुपाधेर्वैल-क्षण्यानुपपत्तेः, इत्याशयेन स्वोपहितात्मज्ञानस्य स्वविषयकत्वाभिमानमुक्तपूर्वपक्षसमाधानाय निराकरोति मूले—*चेन्नेति* (४६४) ॥ *वृत्तेः=वेदान्तजन्याखण्डवृत्तेः । *शाब्दवृत्तावनवभासमानाया एवेति* ॥ शब्दानुपस्थितस्या-भाननियमादिति भावः । *उपधायकत्वादिति* ॥ स्वान्योपहितव्यावर्तकत्वे सति स्वोपहितान्वितत्वविषयत्वा-नन्वितत्वे सति स्वोपधेये स्वविषयत्वान्वयकाले वर्तमानत्वेनोपाधित्वादित्यर्थः । विशेषणत्वविलक्षणोपाधित्वा-भ्युपगमे महत्संमतिमाह—*तदुक्तमित्यादिना प्रवेशेनेत्यन्तेन* ॥ 'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिरि'त्यत्र—इतिपद-विषयीकुर्वाणपदयोरन्यतरद् व्यर्थम् ; तदर्थस्येत्याकारकत्वस्य तदन्यतरेणापि बोधनसंभवात् । किंच—अर्थोऽव्यक्तः ; शुद्धत्वे वृत्तिविषयत्वानङ्गीकारात्, इत्यत आह टीकायाम्—*इतिशब्द इति* ॥ समाप्तिसामान्यवाचीति शेषः । *वृत्तिविषयसमाप्तौ=समभिव्याहृतपदार्थविषयकवृत्तेः समभिव्याहृतपदार्थान्याविषयकत्वे । *ननु* वृत्तेः समभिव्याहृत-पदार्थशुद्धब्रह्मविषयकत्वासंभवः, तदन्यवृत्त्युपहितब्रह्मविषयकत्वात् तदभावासंभवश्च, इत्याशङ्क्य वाक्यार्थमाह—*शुद्धं ब्रह्मेतीति*॥ अत्र 'इति'पदार्थो वृत्त्युपहितं रूपम् । तत्र निपातार्थे शुद्धब्रह्मपदार्थस्य तादात्म्यसंबन्धेन विशेषणत्वम्, इत्यभिप्रायोपगमे 'तथाचे'त्यादिवाक्यार्थ एवकारोऽध्याहरणीयः । *यद्वा*—'शुद्धम्' 'ब्रह्मे'ति प्रतीकं पदद्वयरूपं टीकायां स्वीयेतिपदेन धृत्वा, तदर्थमाह—*शुद्धब्रह्मणो वृत्त्युपहितं रूपमित्यर्थ इति* ॥ *अथवा*—'शुद्धम्' 'ब्रह्म' 'इति'मौलपदत्रयं 'स्वीये'तिपदं विनोपादाय 'रूपमि'त्यन्तेन पदद्वयं व्याख्याय, 'इति' पदमितिपदेनैव व्याख्यातम् । व्याख्येयपदार्थस्येतिपदासहितेनाप्यर्थपदेन बहुशः सामानाधिकरण्यदर्शनात् । तत्रेतिपदार्थसमाप्तिमेवकारेणान्तर्भाव्य वाक्यार्थमाह—*तथाचेति* ॥ *एवं विषयीकुर्वाणेति* ॥ तदन्याविषयिणी सती ; तद्विषयिणीत्यर्थः । *अथवेति* ॥ अत्र पक्षे—वृत्त्युपहितरूपेतिपदार्थो ब्रह्मपदार्थे विशेषणम्, वृत्त्युपहिते ब्रह्मणि शुद्धपदार्थः, इत्यभिप्रेत्याह—

न्यायामृतम्

स्वप्रकाशत्वस्याप्रमात्वस्य चापातात् । वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न तु प्रतिभास्यतया, इति कल्पतरुविरोधाच्च, बहिर्भावे च विषयस्य सत्यत्वेन व्यभिचारानुद्धारात् । नच—स्वरूपेण

तरङ्गिणी

वृत्तेर्विशिष्टविषयत्वेन वक्ष्यमाणेनेत्यर्थः । तदेवाह—*चरमवृत्तेरिति* ॥ *स्वम्=चरमवृत्तिः ॥ स्वप्रकाशत्वस्येति* ॥ स्वस्मिन् स्वस्य विषयत्वाङ्गीकारादित्यर्थः ॥ *अप्रमात्वस्य चेति* ॥ मिथ्याभूतचरमवृत्तिविषयत्वादित्यर्थः । उपलक्षणमेतत्—शाब्दबोधे शब्दानुपस्थिताभाननियमेन वृत्तेः शब्दानुपस्थितायास्तत्र भानानुपपत्तेः, न वा ततोऽज्ञान-तत्कार्यनिवृत्तिः स्यात् ; अज्ञान-तत्कार्याविषयकवृत्तेरेव तदुभयनिवर्तकत्वात्, अन्यथा—'अहमज्ञोऽयं घटः' इत्यादिज्ञानानामप्युपहितविषयत्वेनाज्ञाननिवर्तकत्वप्रसङ्गः ॥ *बहिर्भावे चेति* ॥ चरमवृत्तेः स्वविषयबहिर्भावे चरमवृत्तिविषयस्य निष्प्रपञ्चस्य सत्यत्वाद् व्यभिचार इत्यर्थः ।

*ननु* न चरमवृत्तिः स्वविषयान्तर्गता, नापि तद्विषयस्य सत्यत्वम् ; वृत्तेः शाब्दवृत्तावनवभासमानाया एवोपधायकत्वाभ्युपगमात्, तदुक्तं कल्पतरौ—'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधि-

न्यायामृतकण्टकोद्धारः

चरमवृत्तेः स्वविषयकत्वेन स्वप्रकाशत्वं स्यात् ; स्वविषयकत्वस्यैव स्वप्रकाशत्वादिति भावः । *अप्रमात्वस्येति* ॥ वृत्तेर्मिथ्यात्वेन स्वविषयत्वे मिथ्याभूतार्थविषयकत्वेनाप्रमात्वं स्यादित्यर्थः । किञ्च शुद्धस्य वृत्तिविषयत्वार्थं चरमवृत्तेः स्वविषयत्वेन प्रतिभास्यतयोपयोगश्चेत्, तर्हि कल्पतरुवचनविरोध इत्याशयेन तदुक्तिमेव दर्शयति—*वृत्त्युपरागोऽत्रेति* ॥ अत्र शुद्धस्य वृत्तिविषयत्वे स्वरूपसन्नेवोपयुज्यत इत्यर्थः । *बहिर्भाव इति* ॥ *ननु* वृत्तेः शाब्दवृत्तावनवभासमानाया

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

हितान्याविषयकत्वलाभः । *स्वस्वेतरोपाधिनिवृत्तिः=स्वः स्वेतरश्च य उपाधिः=दृश्यम्, तदुच्छेदव्याप्येत्यर्थः ।

न्यायामृतसौगन्ध्यम्

हि त्वन्मते तदुभयनिवर्तकत्वम् ; अन्यथा 'अहमज्ञः' 'सन् घटः' इत्यादिज्ञानानामप्युपहितविषयकत्वेनाज्ञाननिवर्तकत्वप्रसङ्गात् ॥

*ननु* वृत्तेः शाब्दवृत्तावनवभासमानाया एवोपधायकत्वाभ्युपगमः ; तदुक्तं कल्पतरौ—'शुद्धं ब्रह्मेति-

विठ्ठलेशोपाध्यायटिप्पणी

*तथाचेति* ॥ *शुद्धशब्देनेति* ॥ शुद्धं केवलम् इतरासहितं वृत्त्युपहितं ब्रह्म विषयीकुर्वाणेति वाक्यार्थादिति भावः । *स्वस्वेतरोपाधिनिवृत्तिरित्यस्य *स्वं स्वम्=तत्तद्वृत्तिः, तस्यास्तदितरोपाधिमात्रनिवर्तकत्वार्थकत्वे स्वनिवर्तकत्वालाभः ; एवमुपाधिपदस्य विशेषणासिद्ध्यर्थकत्व उक्तवृत्तौ तदन्यस्योपाधित्वासंभवेन तन्निवर्तकत्वस्याप्यलाभः ; यद्यज्ञानादि दृश्यं क्वचित् किंचिदुपाधिर्भवतीत्युच्यते, तदा 'सन् घट उत्पद्यते' इति व्यवहारे सतोऽप्युपाधित्वात् तन्निवृत्तिप्रसङ्गः, एवमुपाधेः *निवृत्तिः=नाशः, तद्रूपा वृत्तिरित्यर्थे वृत्तेः स्वनाशत्वासंभवात् तदनुक्त्या न्यूनता ; 'उपाधेः निवृत्तिः=नाशो यस्याः सकाशात्' इति विग्रहेणोपाधिनाशजनकत्वार्थकत्वे नाशरूपोपाधेरुच्छेदकालाभः, इत्यतो व्याचष्टे—*स्वस्वेतरोपाधिनिवृत्तिरिति* । *उपाधिर्दृश्यमिति* ॥ 'सन् घट उत्पद्यते' इत्यत्र घटोपहितसत एव भानात् । तस्य च मिथ्यात्ववदुत्पत्तेरपि स्वीकाराद् निवृत्तिरिष्टा । शुद्धं सद् न काप्युपाधिरिति तद्भिन्नं दृश्यमेवोपाधिशब्दार्थ इति भावः । *उच्छेदव्याप्येत्यर्थ इति*॥ स्व-स्वेतरयोरुपाध्योर्निवृत्तिर्यस्या व्यापिकेति व्यापकत्वरूपषष्ठ्यर्थे बहुव्रीहिरिति भावः । उच्छेदो यदि नाशः ; तदा मोक्षकाले नाशरूपदृश्यस्वीकारप्रसङ्गः, इत्यत आह—

अद्वैतसिद्धिः

धिनिवृत्तिहेतुरुदयते ; स्वस्या अप्युपाधित्वाविशेषात् । एवं च नानुपहितस्य विषयता ; वृत्त्युपरागोऽत्र

तरङ्गिणी

निवृत्तिरुदयते ; स्वस्या अप्युपाधित्वाविशेषात् । एवं च नानुपहितस्य विषयता ; वृत्त्युपरागोऽत्र सत्तयोप-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादृशव्याप्यत्वं च पूर्वमेव विवेचितम् । *उपाधित्वेति* ॥ स्वनिवर्त्याज्ञानप्रयुक्तत्वेत्यर्थः । 'स्वो ज्ञाता-वात्मनि स्वं त्रिष्वात्मीये' इति कोशे आत्मन्यात्मीये च त्रिष्विति योजनाया वैयाकरणोक्तत्वात् स्वस्या

न्यायामृतसौगन्ध्यम्

विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते ; स्वस्या अप्युपाधित्वाविशेषात् । एवं च

विठ्ठलेशीयटिप्पणी

*तादृशव्याप्यत्वं चेति* ॥ दृश्यसामान्योच्छेदव्याप्यत्वं चेत्यर्थः । *पूर्वमेव विवेचितमिति* ॥ साक्षात् परम्परया वा स्वतादात्म्यापन्नाज्ञानसमानविषयकत्व-स्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नप्रतियोगिताको दृश्यसामान्याभावो दृश्योच्छेदपदार्थः । तस्य व्यापकता विशेषणतासंबन्धेन, उक्तवृत्तेर्व्याप्यता तादात्म्येन कालिकेन वा संबन्धेनेति पूर्वमुक्तमित्यर्थः । अत्र स्वप्रयोजकाज्ञानंसमानविषयकत्वस्य प्रथमसंबन्धविधया निवेशे ज्ञानोत्तरक्षणेऽज्ञानसत्त्व-प्रसङ्गः, इत्यतः—साक्षादित्यादिसंबन्धो निवेशितः । यद्यपि प्रथमसंबन्धस्य न प्रकृत उपयोगः ; उक्तद्वितीयसंबन्धा-वच्छिन्नाभावस्यैवोक्तवृत्तिव्यापकत्वात् ; तथाप्युक्तवक्ष्यमाणसामान्यमुखव्याप्तौ तदुपयोग इति बोध्यम् । स्वस्याः स्वनिवर्तकत्वं कथम् ? अत आह मूले—*स्वस्या अपीति* ॥ 'उपाधित्वाविशेषादि'त्यत्रोपाधित्वं अज्ञानान्वयि । स्वविषयत्वोपाधित्वं चेत्, तस्य स्वेतरदृश्येऽभावेनाविशेषादित्यस्यासङ्गतिः, अतो व्याचष्टे—*उपाधित्वेतीति* ॥ *स्वेति* ॥ यद् ज्ञानं यदज्ञाननिवर्तकम्, तत् तदज्ञानप्रयुक्तसामान्यनिवर्तकमिति सामान्यव्याप्तेरिति भावः । अत्र ज्ञाननिवर्तकत्वं कालिकविशेषणता-स्वसमानविषयकत्वोभयसंबन्धावच्छिन्नप्रतियोगिताकतदभाववत्त्वम् ; अज्ञानप्रयुक्त-निवर्तकत्वं स्वाश्रयकालपूर्वत्व-स्वप्रयोजकाज्ञानसमानविषयकत्वोभयसंबन्धावच्छिन्नप्रतियोगिताकतदभाववत्त्वम्, तद्व्या-प्यत्वं तु ज्ञानसामान्यस्यैव तद्वत्ताबोधनायेति पूर्वोक्तं न विस्मरणीयमिति—विज्ञापयामः ॥

*ननु*—"स्वः स्वर्ग-नभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने" इति हेमचन्द्रात्, "स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने" इति मेदिनीकोशात्, "विभाषा जसि" इति प्रकरणे 'स्वमात्मीये' इति वक्तव्ये "स्वमज्ञातिधनाख्यायाम्" इति सूत्रकारीयगुरुनिर्देशात् तदनुरोधेन पूर्वान्वय्यात्मनीतिपदयुक्तात् "स्वो ज्ञाता-वात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरसिंहकोशाच्च, दीक्षितमत आत्मवाचिनः स्वशब्दस्य पुंलिङ्ग-मात्रत्वात्, आत्मनि वृत्तिरूपेऽर्थे स्वस्या इति स्त्रीलिङ्गनिर्देशोऽनुपपन्नः, इत्यत आह—*स्वो ज्ञातावितिः* ॥ *आत्मन्यात्मीये चेति* । 'स्वं त्रिषु' इति पदद्वयं देहलीदीपन्यायेनोभयान्वयीति भावः । *वैयाकरणोक्तत्वा-दिति* ॥ एवं हि शब्दरत्न उक्तम्—'आत्मनी'त्यस्य 'स्वो ज्ञातावि'ति पूर्वान्वये 'स्वो ज्ञातावात्मनि धने स्वोऽस्त्री, आत्मीयके त्रिषु' इति पाठेनैव सिद्धेस्त्रिः स्वग्रहणवैयर्थ्यापत्तेः । 'बन्धूकबन्धूभवदेतदस्या मुखेन्दुना तेन सहोज्जिहाना । रागश्रिया शैशव-यौवनीयां स्वमाह सन्ध्यामधरोष्ठरेखा ॥" इति श्रीहर्षश्लोक आत्मानमित्यर्थकस्वमित्यस्य 'बन्धूक-बन्धूभवत्' इति विशेषणेन चामरकोश आत्मनीत्यस्य स्वमित्युत्तरान्वयाद् यदि नपुंसकत्वमस्ति, इत्युच्यते, तर्ह्यस्तु मेदिन्यादिप्रामाण्यात् पुंलिङ्गोऽप्यस्त्येवेति, स्वे स्वा इत्यस्यात्मान इति विवरणं दीक्षितोक्तं सम्यगेव—इति । तत्रैवं सत्यात्मार्थकस्वशब्दस्यामरसिंहमते नपुंसकमात्रत्वादुक्तकोशद्वयानन्तरोक्तसूत्रविरोधापत्तिः ; एवम् 'आत्मनि' 'आत्मीये' इत्यनयोर्मध्यपतितयोः 'स्वं' 'त्रिषु' इति पदयोरेकं स्वमित्युभयान्वयि, 'त्रिषु' इति तु उत्तरान्ययीति स्वीकारे वैरूप्यापत्तिः । किंच स्वमिति विवक्षितलिङ्गं पूर्वान्वयि, अविवक्षितलिङ्गमुत्तरान्वयि

## अद्वैतसिद्धिः

सत्तयोपयुज्यते, नतु भास्यतया विषयकोटिप्रवेशेने'ति। अयमभिप्रायः—यथा अज्ञानोपहितस्य

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

इति स्त्रीलिङ्गत्वं युक्तमेव। *एवञ्च=वृत्तेः स्वोपहितब्रह्मस्वरूपान्याविषयिकाया एव सर्वदृश्योच्छेदकत्वे च। *अनुपहितस्य=वृत्त्युपहितान्यस्य शुद्धब्रह्मणो दृश्यस्य वा। *ननु* वृत्त्युपहितस्य विषयत्वे वृत्तेरपि विषयत्वमावश्यकम्; 'नीलोपहितघटो ज्ञातः' इत्यादौ नीलस्य ज्ञातत्वप्रत्ययात्, तत्राह—*वृत्त्युपराग इति* ॥ *अत्र='वृत्त्युपहितं ब्रह्म विषयः' इति व्यवहारे। *वृत्तेरुपरागो=विषयत्वरूपः सम्बन्धः। *सत्तया= अविषयव्यावर्तकत्वे सति विद्यमानतया। *ननूक्तविद्यमानतयोपयुक्तस्य विषयत्वमप्यास्ताम्, तत्राह—

## विट्ठलेशीयटिप्पणी

इत्येकस्मिन् वैरूप्यापत्तिश्च, इति 'स्वं त्रिषु' इत्युभयमपि उभयान्वयि, इत्युचितम्। एवं सत्यमरसिंहमते आत्मीय इवात्मन्यपि स्वशब्दस्य त्रिलिङ्गत्वात् कोशान्तर-सूत्रकाराविरोधः, उक्तश्रीहर्षप्रयोगोपपत्तिः, प्रकृतश्रीमधुसूदनस्वाम्युक्त'स्वस्याः' इति प्रयोगोपपत्तिश्चेति युक्तं प्रतिभाति। एवं च 'वैयाकरणोक्तत्वादि'त्यत्र 'उक्तत्वात्' इत्यस्योक्तप्रायत्वादित्यर्थः, इति वयम्। ग्रन्थकृतः स्फुटतादृशप्राचीनव्याकरणग्रन्थदर्शनाद् यथाश्रुतं वा साधु। वेदान्तजन्यवृत्तेः सर्वदृश्योच्छेदकत्वरूपाव्यवहितपद्(?)त्यर्थस्यानुपहितविषयकत्वेऽप्रयोजकत्वाद् 'एवं च'त्यस्य सदर्थकत्वं न संभवतीति वृत्त्युपहितब्रह्मविषयकत्वे सति तदन्याविषयकत्वेन सर्वदृश्योच्छेदकत्वरूपपूर्वप्रकृतार्थमाह—*एवं चेति* ॥ *वृत्तेः=वेदान्तमहावाक्यजन्यवृत्तेः। एवकारेण स्वोपहितान्यविषयकत्वस्य दृश्योच्छेदकतावच्छेदकत्वव्यवच्छेदः। नचैवं विकल्पस्य संग्रहः; तद्द्वयावृत्तरूपेण ज्ञानस्य निवेशात्। 'अनुपहितस्ये'त्यस्य वृत्त्यनुपहितब्रह्मार्थकत्वे दृश्याविषयकत्वस्यालाभः, इत्यतस्तल्लाभाय व्याचष्टे—*अनुपहितस्येति* ॥ तदन्यतरतावच्छेदेनोक्तवृत्तिविषयतेत्यर्थः। 'वृत्त्युपरागः' इत्यादिपङ्क्त्या वृत्तेः स्वाविषयत्वोपपादनस्यानुपहितविषयकत्वोपपादकत्वासम्भवाद् वृत्तेः स्वविषयत्वशङ्कया तदवतारयति—*ननु वृत्त्युपहितस्येति* ॥ उपाधेरुपधेयान्वितान्वितत्वे दृष्टान्तमाह—*नीलोपहितेति* ॥ नीलाज्ञानदशायामयं व्यवहारो नास्ति, उपहितपदं च विशिष्टपदसमानार्थकमित्यभिमानः। 'अत्रे'त्यस्य स्वानुपहितसामान्ये वृत्त्यविषयत्व इति नार्थः, वृत्तिरूपतदेकदेशे विषयकोट्यप्रवेशस्य तद्धेतुत्वात्, अतो व्याचष्टे—*अत्रेति* ॥ 'वृत्त्युपहितब्रह्मणो विषयत्वे' इति वक्तव्ये प्रमाणलाभाय 'व्यवहारे' इत्युक्तम्। तद्विषयीभूतवृत्तिनिष्ठवृत्तिविषयब्रह्मोपाधित्व इत्यर्थः। उपयुज्यत इत्यत्रान्वयः। केतूपरागवद् वृत्तेरुपरागो न तत्कृतावरणम्; तस्या आवरणनिवर्तकत्वात्, अतः शेषषष्ठ्या समासेन व्याचष्टे— *वृत्तेरुपराग इति* ॥ सम्बन्धं विनोपाध्युपधेयभावासम्भवात् सम्बन्धान्तरस्य चासम्भवे विषयत्वस्य फलत्वादाह— *विषयत्वरूपः सम्बन्ध इति*॥ सत्तापदं न जातिविशेषसत्यत्वान्यतरपरम्, तस्य वृत्तिविषयत्वे बाधात्, प्रतिक्षेप्यभावस्य स्वविरोधित्वाच्च, इत्यत आह—*सत्तयेति*॥ 'अस भुवी'त्यनुशासनात् सत्ता विद्यमानत्वम्, तन्मात्रेणेत्यर्थः। मात्रपदव्यवच्छेद्यमाह मूले—*नतु भास्यतयेति* ॥ विद्यमानत्वमात्रं च नोपाधित्वप्रयोजकम्; वृत्त्यविषयीभूतानुपहितसाधारणत्वेनाव्यावर्तकत्वात्, अतः पूरयति—*अविषयव्यावर्तकत्वे सतीति* ॥ 'वृत्त्युपहितं ब्रह्म वृत्तिविषयः' इति वाक्यजन्यानुपहितव्यावृत्तोपहितब्रह्ममात्रवृत्तिविषयताविषयिणी या बुद्धिः, तत्प्रयोजकत्वे सति, इत्यर्थः। इदं चातीतजगत्कारणत्वादिसाधारणम्, अतो *विद्यमानतयेति* ॥ इदं चोपाधिताघटकविषयतारूपसम्बन्धे तत्प्रतियोगिवृत्तिरूपोपाधौ सदेव निर्वहति। उपाधिताघटकसम्बन्धसंसर्गकोपाधिप्रकारकज्ञानस्यैवोपधेयमात्रसम्बन्धित्वेनोपधेयान्यविधर्मावगाहिबुद्धित्वरूपव्यावृत्तिबुद्धित्वात्, इति सम्बन्धनिष्ठस्यास्य वृत्तिनिष्ठोपाधितानिर्वाहकत्वमुपयुज्यत इत्यनेन बोध्यते। *ननु*—वृत्तेरुपाधित्वघटकत्वादेव स्वाविषयत्वसिद्धौ 'नन्वि'त्यादिना तत्साधनं व्यर्थम्, अतस्तदवतारयति—*ननूक्तेति* ॥ विषयव्यावर्तकत्वविशिष्टेत्यर्थः। *उपयुक्तस्येति* ॥ वृत्तितद्विषयस्येति शेषः। *विषयत्वमप्यास्तामिति* ॥ पूर्वोक्तरीत्या सम्भवात्, बाधकाभावाच्चेति भावः। 'भास्यतये'त्यस्य

**अद्वैतसिद्धिः**

साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति ; जडत्वात्, किंतु साक्ष्यकोटावेव, एवं वृत्त्युपहितस्य

**तरङ्गिणी**

युज्यते, नतु भास्यतया विषयकोटौ प्रवेशेने'ति । अयमभिप्रायः—यथाऽज्ञानोपहितस्य साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति, किन्तु साक्ष्यकोटावेव, एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिविषयकोटौ प्रविशति ;

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*ननु भास्यतयेति* ॥ *ननु*—विषयत्वपर्याप्तिरूपं भास्यत्वं मयाऽपि नोच्यते, वृत्तिविशिष्टब्रह्मण्येव तत्स्वीकारात्, तत्राह—*विषयकोटीति* ॥ विषयघटकतयेत्यर्थः । *अनुपपत्तिरिति* ॥ अत्यन्ताभेदे सम्बन्धाभावादिति भावः ॥

**न्यायामृतसौगन्ध्यम्**

नानुपहितस्य विषयता, वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न मुख्यतया विषयकोटिप्रवेशेने'ति ॥ अयमभिप्रायः—यथाऽज्ञानोपहितस्य साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति ; जडत्वात्, किन्तु साक्ष्यकोटावेव, एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिर्विषयकोटौ प्रविशति, किन्तु स्वयमविषयोऽपि चैतन्यस्य विषयतां संपादयतीति न काप्यनुपपत्तिरिति—चेत्, न ; वृत्तेस्स्वविषयत्वं विनोपहितस्य

**विट्ठलेशीयटिप्पणी**

'विषयकोटिप्रवेशेने'ति व्याख्यानं सफलयितुमवतारयति—*ननु विषयत्वपर्याप्तिरूपमिति* । *भास्यत्वमिति* ॥ वृत्ताविति शेषः । *विषयघटकतयेति* ॥ विषयताश्रयतयेत्यर्थः । एवं सत्युपाधेर्विशेषणाद् वैलक्षण्यं न स्यात्, इति भावः । अत्रेष्टापत्तिशङ्कायामाह मूले—*अयमभिप्राय इति* । *यथाऽज्ञानोपहितस्येति* ॥ उपाधेरप्युपधेयान्वितत्वोपगमेऽज्ञानोपहितं साक्षीति व्यवहारो न स्यादिति भावः । *एवमिति* ॥ वृत्त्युपहितं ब्रह्म वृत्तिविषय इति व्यवहारानुरोधादिति भावः । *ननु* वृत्तेः स्वविषये ब्रह्मणि विशेषणत्वमेवास्तु, इत्यत आह—*स्वविषयत्वानुपपत्तेरिति* ॥ शाब्दवृत्तौ शब्दानुपस्थितस्याभाननियमात्, वेदान्तानामद्वैते ब्रह्मण्येव तात्पर्यावधारणात्, बाधितवृत्तिविषयकत्वेन तत्त्वज्ञानस्य भ्रमत्वापत्तेः, बाधितवृत्तिसंसृष्टतया भासमानस्य ब्रह्मणोऽपि तदंशेऽपि प्रमात्वानुपपत्तेः, महावाक्यस्याखण्डार्थत्वभङ्गापत्तेश्चेति भावः । यथा भास्यस्याज्ञानस्य भासकता नास्ति, एवं भासिकाया वृत्तेर्भास्यत्वं नास्ति, इत्यपि मूले दृष्टान्त-दार्ष्टान्तिकाभ्यां विवक्षितमिति ध्येयम् । युक्त्यन्तरमप्याह टीकायाम्—*अत्यन्ताभेदे सम्बन्धासम्भवादिति* ॥ *ननु*—एवं शाब्दवृत्तेरुक्तरीत्या स्वाविषयकत्वे स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वं विषयचैतन्यस्य प्रत्यक्षमिति परिभाषोक्तं प्रत्यक्षलक्षणं कथं शब्दवृत्तौ निर्वहेत् ? तद्विषयकवृत्त्यन्तरस्वीकारे त्वनवस्था । न च—शाब्दवृत्तिविषयिणी तदन्यैका वृत्तिः स्वीक्रियते, तद्विषयिणी तु नान्या, किन्तु स्वविषयिणीति नानवस्थेति—वाच्यम् ; अत्यन्ताभेदे सम्बन्धासम्भवेन कस्या अपि वृत्तेः स्वविषयत्वासम्भवात् । यदि यथाकथञ्चिद् रूपभेदेन स्वस्मिन्नपि भेदकल्पनया स्वविषयत्वरूपसम्बन्धसम्भव इत्युच्यते, तदा शाब्दवृत्तावपि स्वविषयत्वं दुर्वारमिति—चेत्, अत्रायमाशयः—स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वं बाह्यघटादिप्रत्यक्षत्वस्य लक्षणम् । तत्र स्वाकारवृत्त्युपहितनिवेशाद् रूपप्रत्यक्षकाले न परिमाणस्य प्रत्यक्षत्वापत्तिः । आन्तरान्तःकरण-तद्धर्मसुखादिवृत्तिरूपज्ञानादेः प्रत्यक्षत्वं तु स्वाकारवृत्त्युपहितत्वाविशेषितप्रमातृचैतन्याभिन्नत्वमात्रम्, वृत्त्यन्तःकरण-धर्मादिगोचरवृत्तिस्वीकारे प्रयोजनाभावः, इति शाब्दवृत्तेः स्वविषयत्वाभावेऽपि प्रत्यक्षत्वं निर्वहतीति । परिभाषाकारमते तु—शाब्दवृत्तेः स्वविषयत्वाभावेऽत्यन्ताभेदो न युक्तः, किन्तु शब्दानुपस्थाप्यत्वादिरुक्त एवेति—बोध्यम् । स्वोपहितचैतन्यविषयकवृत्तौ स्वयमविषयीभूताऽपि वृत्तिः कथं स्वविषयव्यावर्तिका स्यात् ? अत आह

## अद्वैतसिद्धिः

विषयत्वेऽपि न वृत्तिर्विषयकोटौ प्रविशति ; स्वस्याः स्वविषयत्वानुपपत्तेः, किंतु स्वयमविषयोऽपि चैतन्यस्य विषयतां सम्पादयति, इति न काऽप्यनुपपत्तिः ।

## तरङ्गिणी

स्वविषयत्वानुपपत्तेः, किन्तु स्वयमविषयोऽपि चैतन्यस्य विषयतां संपादयतीति न काप्यनुपपत्तिः—इति, *अत्र ब्रूमः* ; यदि वृत्तिः स्वसन्निधिमात्रेण चैतन्यस्य स्वोपहिततां संपाद्य स्वयमुपाध्यविषयाऽपि सत्युपहित-मिथ्याभूतार्थविषया भवति, तर्ह्यज्ञानमपि स्वसन्निधिमात्रेण चैतन्यस्य स्वोपहिततां संपाद्याज्ञानाविषयकं सदज्ञेयविषयकं स्यात्, इति मिथ्याभूतार्थविषयकमेवाज्ञानं स्यात्, नतु शुद्धचिद्विषयकम्, उक्तविधया मिथ्याभूतार्थाश्रितं च स्यात्, नतु शुद्धचिदाश्रितम् । इष्टं चाज्ञानस्य शुद्धचिदाश्रयविषयत्वं परेषाम् । यदाहुः—"आश्रयत्व-विषयत्वभागिनी निर्विशेषचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥" इति । तथाचापसिद्धान्तः ।

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*चैतन्यस्य विषयतां संपादयति=विषयचैतन्यमविषयाद् व्यावर्तयति । तथाच अज्ञानिते स्वविषयत्वे

## न्यायामृतसौगन्ध्यम्

विषयत्वानुपपत्त्या शुद्धस्यैव हि विषयत्वं स्यादिति व्यभिचारः ॥ किञ्चोपहितरूपेणैव शुद्धब्रह्मणोऽपि प्रमाणविषयत्वेन दृश्यत्वं (१)मिथ्यात्वं च स्यात्, तथाच स्फुटं शून्यवादः ; प्रमाणाविषयीकृतस्या-लीकत्वात्, शुद्धस्यैव साक्षित्वेनाज्ञानोपहितस्य साक्षित्वोक्तेर्वृथाप्रलापत्वात्, अन्यथा साक्षिसिद्धि-रज्ञानाधीना, अज्ञानसिद्धिश्च साक्ष्यधीनेत्यन्योन्याश्रयात् ॥

## सौगन्ध्यविमर्शः

(१) उपहितरूपेण शुद्धब्रह्मण इति व्याहतमिदं वचनम् । नहि शुद्धस्योपहितस्वरूपत्वमुपहितस्य वा शुद्धस्वरूपत्व-मिति पूर्वमेवोक्तम् । तथाचोपहितरूपेण मिथ्यात्वस्यामीप्सितत्वाद् उपहितरूपेण ब्रह्मणो दृश्यत्वं मिथ्यात्वं च स्यादिति नेयमसन्मत आपत्तिः, नवा शून्यवादापत्तिः । तथाचाज्ञानोपहितस्यैव साक्षित्वेऽपि यथाऽज्ञानं न साक्षिकोटौ प्रविशति, एवं वृत्तेरपि न विषयकोटौ प्रवेशः, इति वेदान्तजन्याखण्डाकारवृत्तेरज्ञानतत्कार्याविषयकत्वात् तन्निवर्तकत्वं नानुपपन्नम् । नहि वयं शुद्धचैतन्यं साक्षिचैतन्यमिति वदामः, किन्त्वज्ञानोपहितमेव । नन्वेवं परिभाषादिषु । अस्तु वा शुद्धचैतन्यमेव साक्षीति मतान्तरम्, तथापि त्वज्ञानोपहितं चैतन्यं साक्षीति मतमपि वर्तते इति तन्मतार्थमेवोक्तदृष्टान्तवाक्यप्रवर्तनात्—शुद्धस्यैव साक्षित्वेनाज्ञानोप-हितस्य साक्षित्वोक्तेर्वृथाप्रलापित्वादिति सौगन्ध्योक्तम्—परास्तम् । यत्तु साक्षिसिद्धिरज्ञानाधीना, अज्ञानसिद्धिश्च साक्ष्यधीने-त्यन्योन्याश्रय इति, तत्रेदमेवालोचनीयम्—किमुत्पत्त्यनुपपत्तिरन्योन्याश्रयेण मन्यते ? उत ज्ञानानुपपत्तिः ? नाद्यः ; अज्ञानस्य साक्षिणश्चानादित्वेनोत्पत्त्यनभ्युपगमात् । न द्वितीयः ; साक्षिणः स्वरूपसत एव स्वप्रकाशस्याज्ञानभासकत्वेन तज्ज्ञानस्या-ज्ञानभानार्थमनपेक्षणात् । तथाचाज्ञानोपहितसाक्षित्ववादोऽपि न विरुद्धः ।

## विट्ठलेशीयटिप्पणी

मूले—*स्वयमविषयोऽपीति* ॥ *ननु* वृत्तिः 'स्वयमविषयोऽपि चैतन्यस्य विषयतां सम्पादयती'त्यनुपपन्नम् ; वृत्तेः स्वविषयकत्वस्य चैतन्यविषयकत्वप्रयोजकत्वाप्रसक्तेः, वृत्तौ 'नेहे'त्यादिवाक्यसहकृताद्वैततात्पर्यकमहावाक्यजन्यत्वस्यैव तत्र प्रयोजकत्वादित्यतः स्वोपहितविषयकत्वस्य प्रयोजकतानिराकरणात्, तदभावेऽपि तद्व्यवहारोपपत्तिरित्येतत्परेयं पङ्क्तिरिति मनसिकृत्य *चैतन्यस्य=स्वोपहितचैतन्यस्य *विषयतां=अनुपहितचैतन्यव्यावृत्तां विषयतां सम्पादयति, इत्यक्षरार्थाभिप्रायेण व्याचष्टे टीकायाम्—*विषयचैतन्यमिति* ॥ स्वोपहितचैतन्यरूपं विषयमित्यर्थः । *अविषयात्= वृत्त्यविषयात् शुद्धचैतन्यात् । *व्यावर्तयति=व्यावृत्तविषयतावत्त्वेन बोधयति । अयं च बोधः 'स्वोपहितचैतन्यं वृत्तिविषयः' इति व्यवहारजन्यो बोध्यः । स्वविषयीभूताया अपि वृत्तेः स्वविषयत्वोपाधित्वेऽनुमानं प्रमाणयति— *तथाचेति* ॥ यदि चोपाधिलक्षणसमन्वयपरोऽयं ग्रन्थः स्यात्, तर्हि यदुनन्वितमित्यादिलक्षणं प्रथममुक्त्वा,

न्यायामृतकण्टकोद्धारः

पर्यौपधायकत्वम्। एवञ्च चरमवृत्त्युपहितस्य ज्ञानविषयत्वाद् न व्यभिचारः। नच—चरमवृत्तेर-विषयत्वे कथं तदुपहितविषयत्वमिति—वाच्यम्; भावानवबोधात्। अज्ञानोपहितचैतन्यस्य साक्षित्वेऽपि यथाऽज्ञानं साक्षिकोटौ न प्रविशति; जडत्वात्, किन्तु साक्ष्यकोटावेव, एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिविषयकोटौ प्रविशति; स्वविषयत्वानुपपत्तेः, किन्तु स्वयमविषयाऽपि चैतन्यस्य विषयतां सम्पादयति, इति न काऽप्यनुपपत्तिरिति—चेत्, *न*; चरमवृत्तेरुपाध्यविषयत्वेऽप्युपहितविषय-त्वोक्तिर्व्याहता; उपहितविषयत्व उपाधेरपि विषयत्वापरिहारात्। नच—चरमवृत्तेरुपलक्षणत्वाद-विषयत्वमिति—वाच्यम्; उपलक्षितभान उपलक्षणस्यापि भाननियमेनाभास्यत्वायोगात्, चरमवृत्ते-रुपलक्षणत्वे तटस्थाया एव वृत्तेर्व्यावर्तकत्वेन शुद्धस्यैव विषयत्वपर्यवसानेन व्यभिचारस्य दुरुद्धरत्वात्। नच—शुद्धस्य विषयत्वे वृत्तिर्निमित्तमित्यभिप्राय इति—वाच्यम्, तथा सति विषयत्वमन्यनिमित्तं विशेष्यभागमात्रेऽस्तीति भवतैव मिथ्यात्वानधिकरण उपाधिं प्रति विशेष्ये व्यभिचारस्योपपादितत्वात् सुस्थो व्यभिचारः, दृष्टान्तश्चायुक्तः, अननुकूलश्च। तत्राप्यज्ञानं चैतन्य-निष्ठसाक्षित्वे निमित्तम्, एवं च साक्षित्वमौपाधिकं चैतन्यमात्रनिष्ठं स्यादित्युक्तं स्यादिति यत्किञ्चिदेतत्॥

अन्ये तु—यदि वृत्तिः स्वसन्निधिमात्रेण चैतन्यस्योपहिततां सम्पाद्य स्वयमुपाध्यविषयाऽपि सत्युपहितमिथ्याभूतार्थविषया भवति, तर्हि अज्ञानमपि स्वसन्निधिमात्रेण चैतन्यस्य स्वोपहिततां सम्पाद्या-ज्ञानाविषयकं सदज्ञेयविषयकं स्यात्, इति मिथ्याभूतार्थविषयकमेवाज्ञानं स्यात्, नतु शुद्धचिद्विषयकम्, तथाचापसिद्धान्तः, इति परोक्तदूषणपरिहारम्—*आहुः*, *तदयुक्तम्*; अस्मदुक्तरीत्या व्यभिचारेणैव परोक्तदूषणपरिहारसम्भवेन प्रतिबन्द्युत्तरस्यानन्यगतिकत्वात्। *एतेन*—शब्दाजन्यवृत्तिविषयत्वं सप्रकारक-ज्ञानविषयत्वं वा दृश्यत्वमिति—निरस्तम्; आत्मनोऽपि—अनुभूतिः, स्वप्रकाशा, इत्याद्यनुमानजन्य-वृत्तिविषयत्वस्य 'सत्यं ज्ञानमि'त्यादिशब्दजन्यसप्रकारकज्ञानविषयत्वस्य च सत्त्वेन व्यभिचारानुद्धारात्। नच—तत्र शुद्धस्य न विषयत्वमिति—वाच्यम्; पर्यवसानस्याप्यनुमितिरूपस्योक्तत्वादित्यलं प्रसङ्गेन॥

*एतेनैव*—स्वाभिन्नेतरविशेषणप्रयुक्तविशिष्टविषयकवृत्तिव्याप्यत्वं दृश्यत्वम्, स्वाभिन्नेतरद् यद्विशेषणं घटत्वादि, तद्विशिष्टं यत् घटादि, तद्विषयकं यद् 'घटोऽयमि'ति प्रत्यक्षम्, धर्मपदजन्यो धर्म इति स्मृतिः, तद्विषयत्वाद् घटादौ न हेत्वसिद्धिः, इत्यपि कस्यचित् प्रलपनम्—*निरस्तम्*; ब्रह्म तु विशिष्टरूपेणैव

सिद्धिव्याख्या

उपाध्यन्तराणां संभवाद् भामत्यां वृत्तेरेवोपाधित्ववर्णनम्—वृत्तेरपि ज्ञाननिवर्त्यत्वरूपमिथ्यात्वसूचनद्वारा शुद्धस्य वृत्ति-विषयत्वाभावसूचनार्थम्। एवं च वेदान्तजन्यवृत्तिविशिष्टत्वरूपस्य तादृशवृत्त्युपहितत्वरूपस्य वा वृत्तिविषयत्वस्यैवात्र हेतुत्वेन विवक्षणात् शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि विवक्षितहेत्वविषयत्वेन तत्र व्यभिचारानवकाशः। नच—चाक्षुषतादृशघटादिविषयवृत्तिविषयत्वाद् ब्रह्मणस्तत्र व्यभिचारस्तन्मतेऽपि दुष्परिहर इति—वाच्यम्; घटादि-प्रत्ययेषु शुद्धब्रह्मणोऽविषयत्वात्। नच 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते' इति भवद्वचनविरोधः; विशिष्टं सर्वप्रत्ययवेद्यं न शुद्धमित्यर्थकत्वादित्यादेः पूर्वमेवोक्तत्वात्। यदपि—लब्ध उपहिते विषयेऽज्ञानस्वरूपसिद्धिः; अज्ञानस्वरूपे च सिद्धे तदुपहितरूपविषयसिद्धिरित्यन्योन्याश्रयापादनम्, तत्र किमन्योन्याश्रय उत्पत्तौ? ज्ञप्तौ? स्थितौ वा? *नाद्यः*; अनादित्वादुभयोः, *न द्वितीयः*; अज्ञानस्य चिद्भास्यत्वेऽपि चितः स्वप्रकाशत्वेन तदभास्यत्वात्। *न तृतीयः*; सा किं परस्पराश्रितत्वेन वा? परस्परसापेक्षस्थितिकत्वेन वा स्यात्? तत्रोभयस्याप्यसिद्धिः; अज्ञानस्य चिदाश्रयत्वेऽपि चिदधीनस्थितिकत्वेऽपि चित्स्वविषयाश्रितत्व-तदधीनस्थितिकत्वयोरभावादित्यादेर्वक्ष्यमाण-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अनन्वितत्वे सति विद्यमानत्वे च सति स्वविषयव्यावर्तकत्वाद् वृत्तेः स्वविषयत्व प्रत्युपाधित्वम् ।

### न्यायामृतसौगन्ध्यम्

**यत्तु—ब्रह्मान्विते स्वविषयत्वेऽनन्वितत्वे सति विद्यमानत्वे च सति स्वविषयव्यावर्तकत्वाद् वृत्तेः स्वविषयत्वं प्रत्युपाधित्वम् ; यदनन्वितं विद्यमानं यद्विशिष्टस्येतरस्माद्व्यावर्तकं यद् भवति, तत्तत्रोपाधिः ; यथा घटकारणत्वादौ दण्डत्वादिकमिति, *तन्न* ; वृत्तावुपाधिलक्षणाभावात् ॥ तथाहि—पङ्कजपदप्रयोगे पद्मत्वमुपाधिर्योगेन पद्मापद्मसाधारणपङ्कजपदप्रयोगं पद्मेतरस्माद् व्यावर्तयति, न तु पद्मे (१) तत् सम्पादयति ; योगेन प्रागेवात्र सम्पन्नत्वात् । न च स्वव्यापारस्वाश्रयं चेतरस्माद् व्यावर्तयति । किञ्च धर्मिणि विद्यमानस्तत्समसत्ताको धर्मो भवत्युपाधिः ; अन्यथा प्रातिभासिकपद्मत्वस्य कुमुदादावपि सम्भवेन तत्राप्युपाधिः स्यात् ।**

### सौगन्ध्यविमर्शः

(१) पद्मत्वं हि नोक्तोपाधिलक्षणान्वितम् ; पद्मान्वयानन्वयित्वाभावात्, किन्तु निरूढलक्षणया योगरूढ्या वा पङ्कजपदप्रवृत्तिनिमित्तत्वस्य पद्मत्वे स्वीकारादेव पङ्कजपदस्यान्यत्राप्रवृत्तिरिति वस्तुस्थितिः । तथाच पद्मत्वे नोपाधित्वव्यवहारः सर्वसम्मतः, इति तद्दृष्टान्तेन वैधर्म्येण वृत्त्युपाधित्वनिरासोऽनुपपन्न एव । एतेन—धर्मिणि विद्यमानस्तत्समसत्ताको धर्मो भवत्युपाधिः ; अन्यथा प्रातिभासिकपद्मत्वस्य कुमुदादावपि सम्भवेन तत्राप्युपाधिः स्यादिति—प्रत्युक्तम् ; नहि कुमुदे पद्मभ्रमवतां तत्र पद्मपदप्रयोगो दृष्टः । 'इदं रजतमि'ति हि रजतत्वव्यावहारिकत्वपक्षे प्रातिभासिकनिष्ठस्यापि रजतत्वस्य प्रवृत्तिनिमित्तत्वं दृष्टमेव । तत्प्रातिभासिकत्वपक्षेऽपीदंपदार्थे व्यावहारिकप्रातिभासिकरजतत्वकल्पनापक्षे रजतपदेनेदंपदार्थ-व्यवहारोऽपि दृश्यत एव । अस्तु धर्मिसमसत्ताक एव धर्म उपाधिरिति, एवमपि प्रकृतेऽपि वृत्तेरिवोपहितस्यापि पूर्वोक्तरीत्या मिथ्यात्वाद् धर्मिसमसत्ताकत्वं न विरुद्धम् ॥

### विट्ठलेशीयटिप्पणी

ब्रह्मानन्वित इत्यादिना तत्समन्वयो वक्तव्यः स्यात् ; व्यत्यासस्य सन्दर्भशैलीविरुद्धत्वात् । यथेत्यादिदृष्टान्तश्च नात्यन्तमुपयुज्येत । नच—अनुमानपरत्वेऽपि प्रथमतो ब्रह्मान्वित इत्यादिना हेतुनिर्देशोत्तरं वृत्तेः स्वविषयत्वं प्रत्यु-पाधित्वमिति साध्यनिर्देशोऽसांप्रदायिक इति—वाच्यम् ; पूर्वग्रन्थार्थसिद्धत्वात्, हेतूक्तेः प्राथम्यस्यावश्यकत्वात् । अत एव 'तथाचे'त्युक्तम् । *किंच* सर्वग्रन्थेषु प्रतिपदं बहुमता हेतुनिर्देशोत्तरं साध्यनिर्देशा दृश्यन्ते, 'धूमादग्निमान्' 'व्यापकत्वात् परापि स्याद् व्याप्यत्वादपरापि च' 'प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसंमतत्वादुपमानात् प्राग् अनुमानं निरूप्यते' 'अत एव नेतरः' इत्यादयः । लक्षण-तत्समन्वयौ तु नैवं व्यत्यासेन क्वचिदपि दृश्येते । एवं च वृत्तिः स्वविषयत्वं प्रत्युपाधिरिति प्रतिज्ञा, ब्रह्मान्वित इत्यादिर्हेतुः, यदनन्वितमित्याद्युदाहरणं सदृष्टान्तम्, इत्युदा-हरणान्तस्यावयवोपन्यास इति ध्येयम् । *ब्रह्मान्विते स्वविषयत्वेऽनन्वितत्वे सति* ॥ ब्रह्मनिष्ठस्वविषयत्वानाश्रयत्वे सति, ब्रह्मवृत्तितावच्छेदकीभूतस्वविषयत्वत्वावच्छिन्नानाश्रयत्वे सतीति वा । ब्रह्मविषयकस्वविषयताशून्यत्वे सतीति यावत् । तेन वृत्तेः स्वविषयत्वमतेऽपि ब्रह्मवृत्तिनिष्ठविषयत्वयोर्भेदेऽपि नैतद्घटितहेतोर्विशेषणत्वविलक्षणोपाधित्व-साधकतानुपपत्तिः । *विद्यमानत्वे सति* ॥ ब्रह्मणि स्वविषयत्वान्वयकाल इत्यादिः । *स्वविषयव्यावर्तकत्वा-दिति* ॥ स्वविषयतारूपविधेयविशिष्टस्य या स्वेतरस्माद् व्यावृत्तिः=भेदबुद्धिः, स्वविषयतायां स्वविशिष्टेतरावृत्तित्व-प्रतीतिर्वा, तत्प्रयोजकत्वं यत् स्वरूपयोग्यतारूपम्, तस्मात् तन्नियतावच्छेदकत्वेन ज्ञानविषयत्वादित्यर्थः । तच्च दृष्टान्ते 'दण्डो घटकारणमि'त्यादिज्ञानम्, प्रकृते 'विषयतया वृत्तिमद् ब्रह्म वृत्तिविषयः' इति ज्ञानम् । *स्वविषयत्वम्= ब्रह्मनिष्ठस्वविषयत्वम् । *प्रति=निरूपितम् । उपाधित्वमित्यर्थः । अत्र 'वृत्तिकालीनं ब्रह्म वृत्तिविषयः' इति व्यवहारे समानकालीनत्वसम्बन्धेन प्रकारीभूताया वृत्तेस्तेन सम्बन्धेन स्वविषयत्वं प्रत्युपाधित्वाद् हेतुघटकाद्यदलसत्त्वाच्च व्यभिचार इति हेतौ विशेष्यदलम् । तथा सति तेन सम्बन्धेन वृत्तेः स्वविषयमुद्रमसाधारणत्वेन स्वविषयतायां

तरङ्गिणी

*ननु* अज्ञानमपि स्वोपधानदशायामेव ब्रह्म विषयीकरोति ; स्वानुपधानदशायां स्वस्यैवाभावात् । तथा च ज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयत्वे सत्युपहितविषयत्वमपि । अत एवोपाधिविषयज्ञानानि नाज्ञाननिवर्तकानि ; अज्ञानस्योपाध्यविषयत्वेन समानविषयत्वाभावात्, समानविषयत्वेनैव तयोर्निवर्त्य-निवर्तकभावात्, मैवम् ; शुद्धचिदाश्रयविषयमज्ञानमिति सिद्धान्तभङ्गप्रसङ्गात्, अन्योन्याश्रयाच्च । तथाहि— लब्ध उपहिते विषयेऽज्ञानस्वरूपसिद्धिः, अज्ञानस्वरूपे च सिद्धे तदुपहितरूपविषयसिद्धिरिति । एवमुपहिताश्रयत्वेऽप्यन्योन्याश्रयः । किंच वृत्तेरप्यन्योन्याश्रयादेव नोपहितविषयत्वम् । तथाहि—अनुपहितस्य शुद्धस्य वृत्त्यविषयत्वेन चैतन्यस्य चरमवृत्तिविषयत्वाय तटस्थयाऽप्युत्पन्नया वृत्त्योपहितत्वम्, उपहिते सति चैतन्ये

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यदनन्वितं विद्यमानं यद्विशिष्टस्येतरस्माद् व्यावर्तकं यद् भवति, तत् तत्रोपाधिः ; यथा घटकारणत्वादौ दण्डत्वादिकम्, 'नीलघटो ज्ञातः' इत्यादिव्यवहारे तु नीलत्वादिकं विशेषणमेव, नोपाधिरिति भावः ।

न्यायामृतसौगन्ध्यम्

एतेन—अज्ञानमज्ञानोपहितं विषयीकरोति, ज्ञानं च ज्ञानोपहितं विषयीकरोति, स्वानुपाधानदशायां

सिद्धिव्याख्या

स्वात् । नच—उपहितविषयत्वस्य जन्यत्वादन्योन्याश्रय उत्पत्तावेव स्यादिति—वाच्यम् ; तस्याजन्यत्वात्, जन्यत्वेऽपि तद्विषयकाज्ञानस्याजन्यत्वाच्च, उपाधेरविद्याया उपहितस्य चैतन्यस्य वा जन्यत्वाभावाच्च । *तदुक्तम्*—'जीव ईशो विशुद्धा चित्' इत्यादि । नच—उपहितस्याज्ञानाजन्यत्वे कथं मिथ्यात्वम्? इति—वाच्यम् ; अज्ञानस्येवानादिभूतस्यतस्यापि स्वभावप्रयुक्तमिथ्यात्वस्याज्ञानजन्यत्वं विनाऽप्यविरोधात् । यदप्यन्योन्याश्रयान्तरापादनम्, तदप्यत एवा-

विट्ठलेशीयटिप्पणी

तद्वयावृत्त्यबोधकत्वाद् न व्यभिचार इति सार्थक्येऽपि 'वृत्तिविशिष्टं ब्रह्म न घटः' इति व्यवहारे वृत्तेर्विशेषणत्वे, 'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः'—इति व्यवहारे वृत्तेरुपलक्षणत्वेऽपि च, वृत्तौ निरुक्तस्वविषयव्यावर्तकत्वरूपहेतु-स्वविषयत्वोपाधित्वरूपसाध्ययोः सत्त्वेन व्यभिचाराप्रसक्त्या नाद्यदलद्वयस्य हेतौ सार्थक्यम् । *वस्तुतस्तु* समानकालीनत्वसम्बन्धेन वृत्तेः स्वविषयव्यावर्तकत्व-स्वविषयोपाधित्वयोरभावेऽपि विषयतासम्बन्धेन तदुभयसत्त्वाद् न व्यभिचारः, इति न विशेष्यदलसार्थक्यमपि, परन्तु वक्ष्यमाणसामान्यमुखव्याप्तौ प्रकृतहेतुसजातीयहेतौ निरुक्तदलत्रयसार्थक्यसम्भवात् तत्साजात्यनिरूपकत्वनिर्वाहाय प्रकृतहेतावपि दलत्रयसार्थक्यमिति बोध्यम् । वेदान्तजन्यवृत्तिसामान्यस्य पक्षत्वेन दृष्टान्ताभावेन विशेषतो व्याप्त्यसम्भवेन सामान्यव्याप्तिमाह—*यदनन्वितमिति* ॥ यत्र अनन्वितमित्यर्थः । 'धूमविशिष्टः पर्वतो गुणवान्' इति व्यवहारे विशेषणीभूते धूमे पर्वतनिष्ठगुणवत्त्वं प्रत्यप्यनुपाधौ व्यभिचारवारणायेदम् । *विद्यमानम्=यत्काले यत्र यदन्वयः, तत्र तत्काले विद्यमानम् । 'गन्धप्रागभावविशिष्टो घटो गन्धवान्' इति व्यवहार उपलक्षणीभूतगन्धप्रागभावे व्यभिचारवारणायेदम् । *यद्विशिष्टस्य=व्यवहारविधेयताशालियद्विशिष्टस्य । षष्ठ्यर्थविशेष्यकत्वस्य व्यावर्तकघटकानुमितावन्वयः । *इतरस्मात्=यद्विशिष्टेतरस्मात् । *व्यावर्तकम्=भेदानुमितिप्रयोजकम् । 'द्रव्यविशिष्टः पर्वतो रूपवान्' इति व्यवहारे द्रव्यत्वे रूपवद्व्यावर्तके रूपवत्त्वानुपाधौ व्यभिचारवारणायेदम् । *यत्=हेतुमत्त्वेनाभिमतं भवति । *तत्=तादृशहेतुमत् । *तत्र=तद्धर्मिनिष्ठविधेये । *उपाधिः=उपाधिव्यवहारविषयः । दृष्टान्तमाह—*यथेति* ॥ *घटकारणत्वादौ=दण्डनिष्ठघटकारणत्वादौ । चक्रादिनिष्ठकारणत्वे दण्डस्यानुपाधित्वात् । आदिभ्यां घटनिष्ठदण्डकार्यत्वादौ घटत्वादिकम् । *ननु*—'नीलो घटो ज्ञात' इति व्यवहारस्य नीलत्वाज्ञानदशायामभावात्, नीलत्वस्य घटान्वितज्ञातत्वेऽन्वयस्याबाधकत्वात्, तदनन्वितत्वघटितहेतोरभावेन ज्ञातत्व उपाधित्वसिद्धिर्न स्यात्, इत्याशङ्काभिप्रायस्या परिहरति—*नीलघटो ज्ञात इत्यादीति* ॥ *ननु*—वेदान्तजन्यज्ञानस्य स्वोपहितब्रह्मविषयकत्वे ब्रह्माज्ञाननिवर्तकतानुपपत्तिः,

### अद्वैतसिद्धिः

एतेन—ज्ञानाज्ञानयोरेकविषयत्वम्—व्याख्यातम् ; अज्ञानमपि हि स्वोपधानदशायामेव ब्रह्म

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ज्ञानाज्ञानयोः = ब्रह्मज्ञानाज्ञानयोः । *एकविषयत्वम् = समानविषयत्वम् । *उपाध्यविषयकत्वे सति=स्वोप·

### न्यायामृतसौगन्ध्यम्

स्वस्यैवाभावात् । तथाच ज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयत्वे सत्युपहितविषयत्वम्, समानविषयत्वे-नैव हि निवर्त्यनिवर्तकभाव इति--निरस्तम् ; उपाधिभेदेनोपहितस्य भिन्नत्वेन ज्ञानोपहितं ज्ञान-विषयम्, अज्ञानोपहितमज्ञानविषयमिति ज्ञानाज्ञानयोस्समानविषयत्वा(१)भावात् ।

### सौगन्ध्यविमर्शः

(१) ज्ञानाज्ञानयोः समानविषयकत्वं नाम स्वोपहितान्याविषयकत्वविशिष्टस्वोपहितविषयकत्वमेव, नतु ज्ञानोपहित-विषयत्वम्, अज्ञानोपहितविषयत्वं वा, येनाज्ञानस्य ज्ञानोपहिताविषयत्वेन ज्ञानस्याज्ञानोपहिताविषयत्वेन चासमानविषयत्वस्य सौगन्ध्योक्तस्यावसरः ।

### सिद्धिव्याख्या

पास्तम् ; विषयत्वस्य विषयानतिरेके विषयानादित्वेनैव तस्याप्यनादित्वात् । वस्तुतः प्रतीयमानान्योन्याश्रयस्य विषय-त्वातिरेकपक्षे तन्मिथ्यात्वोपपादकत्वाद् नाद्वैतमते स दोष इति न काप्यनुपपत्तिरिति ॥ *एतेनेति* ॥ वेदान्तजन्य-चरमवृत्तेः स्वस्वेतरोपाध्यविषयत्वे सत्युपहितविषयकत्वव्याख्यानेनेत्यर्थः । *ननु* वृत्तेः स्वोपधानदशायां ब्रह्म-विषयकत्वमस्तु, अज्ञानस्य तु कथम् ? इत्याशङ्क्याह—*अज्ञानमपीति* ॥ तत्र हेतुमाह—*स्वानुपधानेति* ॥ एवञ्च फलितमाह—*तथाचेति* । *समानविषयत्वमस्त्येवेति* ॥ मूलाज्ञानमपि स्वोपहितब्रह्मविषयकमेवेत्युक्त्वा-

### विठ्ठलेशीयटिप्पणी

अज्ञानस्य "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला" इत्युक्तेः शुद्धब्रह्मविषयकत्वेन भिन्नविषयकत्वात्, इत्यत आह मूले—*एतेनेति* ॥ उपहितविषयकज्ञानस्योपाध्यविषयकत्वव्यवस्थापनेनेत्यर्थः । शुक्तिज्ञान-तद-ज्ञानयोरेकविषयकत्वस्य सर्वसिद्धत्वेन व्याख्यानानपेक्षणाद् व्याचष्टे टीकायाम्—*ज्ञानाज्ञानयोरिति* ॥ भिन्नविषयक-शुक्तिज्ञान-घटाज्ञानयोरपि एकत्वसंख्याश्रयविषयकत्वस्य, विषयनिष्ठभेदाप्रतियोगिविषयकत्वरूपस्य, पारिभाषिकैकत्वा-श्रयविषयकत्वस्य वा, सम्भवादाह—*एकविषयकत्वमिति* ॥ *समानविषयकत्वमिति* ॥ मिथ इत्यादिः । समानपदस्योत्तरपदार्थवाचित्वाद् ज्ञानस्याज्ञानविषयविषयकत्वम्, अज्ञानस्य च ज्ञानविषयविषयकत्वमित्यर्थः । *ननु*—शुद्धब्रह्मविषयकाज्ञानस्य कथं स्वोपहितब्रह्मविषयकज्ञानसमानविषयकत्वम् ? उपहित-शुद्धयोर्भेदात् ; अन्यथा निर्विकल्पकघटज्ञान-घटत्वप्रकारकाज्ञानयोरपि समानविषयकत्वापत्तेः, इत्याशङ्कातादवस्थ्यमित्याशङ्क्य, अज्ञानस्याप्युपहितविषयकत्वं व्यवस्थापयति मूले—*अज्ञानमपीति* । *ननु* जीवभेदेऽज्ञानभेदादेकस्य ज्ञानेऽन्यस्याज्ञानरूपोपाधेः सत्त्वादज्ञानानुपहितप्रसिद्ध्याऽज्ञानस्य स्वविषयकत्वावर्तकत्वाभावात् स्वविषयत्वोपाधित्वानुपपत्तिः, इत्यतो जीवभेदेनाज्ञानभेदपक्षमाश्रित्याह—*स्वोपधानदशायामिति* । *स्वम्=तत्तदज्ञानम्* । ब्रह्मणि स्वपदार्थतत्तद-ज्ञानरूपोपाधिसंबन्धकाल इत्यर्थः । एतेन विद्यमानत्वमुक्तम् । *ब्रह्म=ब्रह्मैव, नतु स्वम्* । अनेन विषयत्वेऽन्वितत्व-मुक्तम् । एवकारार्थं स्फुटीकृत्य तेन स्वविषयव्यावर्तकत्वमाह—*स्वानुपधानदशायामिति* ॥ ज्ञानेन तत्तदज्ञान-रूपस्वपदार्थोपाधिनिवृत्तिदशायाम् । *स्वस्यैवाभावादिति* ॥ तथाच तदज्ञानव्यक्तेस्तदज्ञानानुपहितव्यावृत्तत्वेन स्वविषयव्यावर्तकत्वं सत्कर्मिति भावः । एतेनोक्तदलत्रयघटितस्वोपाधित्वसाधकहेतोः सत्त्वमभिहितमिति बोध्यम् । *ननु* तस्य वृत्त्युपहितब्रह्मविषयकत्वात्, अज्ञानस्य चाज्ञानोपहितब्रह्मविषयकत्वादुपाधिभेदेन चोपहितभेदात् तयोर्भिन्नविषयकत्वात् कथं समानविषयकत्वम् ? अत आह—*तथाचेति* ॥ उपहितविषयकत्वोपाधिविषयकत्वे

अद्वैतसिद्धिः

विषयीकरोति ; स्वानुपधानदशायां स्वस्यैवाभावात् । तथाच ज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयकत्वे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

हितान्याविषयकत्वे सति । *उपहितविषयकत्वात् = स्वोपहितविषयकत्वात् ; स्वविशिष्टब्रह्मविषयकवृत्तेरपि स्वोपहितब्रह्मविषयकत्वात् सत्यन्तम्, स्वाविषयकत्वस्य सत्यन्तार्थत्वे वृत्त्युपहितांशेऽज्ञानादिप्रकारस्य ज्ञानस्य

सिद्धिव्याख्या

दित्यर्थः । नच—अज्ञानस्य शुद्धचिदाश्रयविषयकत्वसिद्धान्तभङ्गस्यान्योन्याश्रयादेश्चोक्तत्वात् कथं समानविषयकत्व-मिति—वाच्यम् ; परिहृतत्वात् । नच—एतावताऽपि ज्ञानाज्ञानयोर्न समानविषयत्वम्, अज्ञानस्य स्वरूपसद-ज्ञानोपहितब्रह्मविषयकत्वात्, वृत्तेश्च स्वरूपासदुपहितब्रह्मविषयत्वात्, अन्यथा वृत्तेर्मिथ्याभूतार्थविषयकत्वं स्वरूपसत्त्वं न स्यादिति—वाच्यम् ; अज्ञानं हि स्वरूपसदज्ञानोपहितब्रह्मविषयमित्यत्र स्वरूपसत्त्वं ब्रह्मणो विशेषणम्? अज्ञानस्य वा ? *आद्ये* स्वरूपसद् अज्ञानोपहितञ्च यद् ब्रह्म तद्विषयकमज्ञानमिति प्राप्तम् । तच्च वृत्तेरप्यविशिष्टम् ; तस्या अपि स्वरूपसद्वृत्त्युपहितं यद् ब्रह्म तद्विषयकतया ज्ञानाज्ञानयोः समानविषयत्वमेव । *द्वितीये* स्वरूपतः सत्त्वं किम-बाध्यत्वरूपम् ? उत विद्यमानत्वमात्ररूपम् ? *आद्ये* अज्ञानमपि स्वरूपासदेव ; बाध्यत्वात् । ततश्च स्वरूपास-

विट्ठलेशीयटिप्पणी

ज्ञानाज्ञानरूपोपाध्योर्भेदात् तत्तद्विषयकतदुपहितविषयकज्ञानयोः समानविषयकत्वासंभवः ; उपाध्यविषयकत्वे तु न तथा ? स्वाविषयाविषयकत्वे सति स्वविषयकत्वस्यैव स्वसमानविषयकत्वरूपत्वात्, अतः पूर्वमवलम्बितोपाध्यविषयकत्वं सत्यन्तेनोक्तम् ; ज्ञानाज्ञानोपहितब्रह्मणोर्भेदेऽप्युपहितत्वेनानुगमात् स्वविषयोपहितविषयकत्वं विशेष्यदलमुक्तमिति यथाश्रुतमूलार्थः । ज्ञानाज्ञानयोरुपाधित्वं नोपाधिपदव्यवहार्यत्वम् ; ब्रह्मनिष्ठजगत्कारणत्वे मायाया इव मायानिष्ठ-जगदुपादानत्वे ब्रह्मणोऽप्युपाधित्वेन ब्रह्मज्ञानाज्ञानयोस्तदविषयकत्वासंभवात् । यदि स्वान्वयिताऽन्वितं यत्, तदनन्वितत्वे सति तत्कालीनत्वे सति तदाश्रयस्येतरस्मात् व्यावर्तकत्वम्, तद्व्याप्यत्वं स्वान्वयिनिष्ठतन्निरूपितोपाधि-त्वम्, तदा ब्रह्मणो मायानिष्ठजगदुपादानत्वोपाधित्वम् तस्याविवेकेन ब्रह्मज्ञानसंग्रहेऽपि ज्ञाने ब्रह्मनिष्ठज्ञानविषय-त्वोपाधित्वम्, अज्ञाने च ब्रह्मनिष्ठाज्ञानविषयत्वोपाधित्वं च, न तदुभयानुगतम्, इति ज्ञानाज्ञानयोस्तद्विषयकत्वं कथ-मनुगतम् ? एवमुपाधित्वस्यानुगतत्वाभाव उपहितत्वस्यापि ज्ञानाज्ञानोपहितब्रह्मण्यनुगतत्वाभावात् तद्विषयकत्वमपि न तदुभयानुगतम्, अतः सत्यन्तं पञ्चम्यन्तं च व्याचष्टे—*उपहितविषयकत्व इत्यादिना—विषयकत्वादित्यन्तेन* । *ननु*—स्वत्वस्याननुगम इदमपि कथं ज्ञानाज्ञानयोरनुगतमिति—चेत्, *न* ; स्वावृत्तित्व-स्वसमानकालीनत्वस्व-व्यापकत्वैतत्त्रितयसंबन्धेन यत्किञ्चिद्विशिष्टान्यविषयत्वानिरूपकत्वे सति, उक्तत्रितयसंबन्धेन यत्किञ्चिद्विशिष्टविषयता-निरूपकत्वस्योक्तलक्षणार्थत्वाद् ज्ञानाज्ञानविषयत्वयोरज्ञानज्ञानसमानकालीनत्वाभावाद् भोक्तसंबन्धत्रयेणाज्ञान-ज्ञानवैशिष्ट्यरूपं वैपरीत्येन तदुपहितविषयत्वमुक्तम् । *ननु* वेदान्तजन्यवृत्तेः स्वोपहितब्रह्ममात्रविषयकाया उपाध्य-विषयकत्वानियमात् सत्यन्तार्थवैयर्थ्यम्, अत आह—*स्वविशिष्टेति* । *स्वम्=महावाक्यजन्या वृत्तिः, तद्विशिष्टब्रह्म-विषयकवृत्तिश्च विद्वदनुभवसिद्धं ब्रह्म "तन्त्वौपनिषदं पुरुषं पृच्छामी"त्यादिवाक्यजन्या बोध्या ; स्वस्य विशेषणत्वेनो-पाधित्वासंभवात् । *स्वोपहितब्रह्मविषयकत्वादिति* । *स्वम्=उक्तवाक्यजन्या वृत्तिः, सा च वेदान्तमहावाक्यजन्य-निरुक्तवृत्तेरुक्तवृत्तिविषयत्वे विशेषणत्वेऽपि स्वयमुपाधिरेवेति स्वोपहितब्रह्मविषयकत्वं तस्या अक्षतमिति भावः । *ननु* —स्वाविषयकत्वोपहितब्रह्मविषयकत्वं ज्ञानाज्ञानयोः समानविषयकत्वमस्तु, एवं वृत्तिरूपं ज्ञानं "तत्त्वमसी"त्यादि-वाक्यजन्यम्, इत्युक्तवृत्तेर्निवारणादलमुक्तगुरुतरसत्यन्तार्थेनेत्यत आह—*स्वाविषयकत्वस्येति* । एवं यदि वृत्तिरूपं वेदान्तमहावाक्यजन्यं ज्ञानम्, तर्हि स्वविशिष्टब्रह्मविषयकोक्तवृत्तेर्वारणेऽपि ज्ञानान्तरसंग्रहप्रसङ्ग इत्यत आह—*वृत्त्युप-हितांश इति* ॥ वेदान्तजनिर्विकल्पकवृत्त्युपहितांश इत्यर्थः । *अज्ञानादिप्रकारस्येति* ॥ तदव्यवहितपूर्वोत्तरकाल-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

संग्रहापत्तेः स्वोपहितान्याविषयकत्वमेव सत्यन्तार्थः। तुच्छाकारज्ञानेऽपि सत्यन्तसत्त्वात् तद्वारणाय विशेष्य-दलम्। नच—सविषयकत्वमात्रेण तस्य वारणसम्भवात् तुच्छव्यवहारजनकवृत्तेराश्रमस्वाम्यादिभि-र्निर्विषयकत्वस्वीकारात् स्वोपहितनिवेशे गौरवमिति—वाच्यम्; स्वरूपसम्बन्धेन विषयितावि शिष्टत्वरूप-सविषयकत्वापेक्षया स्वोपहिताखण्डव्यक्त्या विषयितासम्बन्धेन विशिष्टत्वस्यागुरुत्वात्, तुच्छाकारवृत्तेः सविषयकत्वमते तेन तद्वारणाच्च। 'अहं ब्रह्म, घटो विनाशी'ति ज्ञानस्य मूलाज्ञाननाशकत्वस्वीकारे तु स्वोपहितब्रह्मनिष्ठा या विषयत्वानिरूपितविषयता, तच्छालित्वं समानविषयकत्वं वाच्यम्॥

विट्ठलेशीयटिप्पणी

आतस्य 'अहं देहेन्द्रियादिकं जानामि' इत्यादिप्रकारकस्येति शेषः। *नन्वेवम्*—उक्तगुरुतरसत्यन्तार्थेनापि न तद्वारण-मिति—चेत्, शृणु; यथाश्रुते स्वोपहितान्यद् यदज्ञानम्, तन्निष्ठप्रकारतारूपविषयताकत्वेन तच्छून्यत्वाभावात्, उक्त-संबन्धत्रयघटितनिष्कर्षे तु यदि स्वं ज्ञानम्, तदा स्वान्यज्ञानप्रकारतायाः स्वावृत्तित्वे कथंचित् स्वसमानकालीनत्वेऽपि च स्वाश्रयीभूतस्वोपहितब्रह्मवृत्तित्वाभावेन स्वव्यापकत्वाभावात्। यदि स्वं प्रकारीभूतमज्ञानम्, तदा स्वावृत्ति-त्वस्याप्यभावादित्याशयेनाह—*स्वोपहितान्याविषयकत्वमेव सत्यन्तार्थ इति*॥ *ननु*—स्वोपहितान्याविषयकं ज्ञानं स्वोपहितविषयकत्वनियतम्, अन्यथा निर्विषयकत्वेन ज्ञानत्वानुपपत्तेः, इत्यत आह—*तुच्छाकारज्ञानेऽपीति*॥ विकल्पाख्यवृत्तिरूपतज्ज्ञानेऽपीत्यर्थः। तत्साधारणमनोवृत्तिविशेषत्वरूपज्ञानत्वेनैव तत्त्वज्ञानस्याज्ञाननिवर्तकत्वादिति भावः। *सत्यन्तसत्त्वादिति*॥ निर्विषयकत्वात् स्वोपहितान्याविषयकत्वरूपसत्यन्तार्थवत्त्वं सुलभमिति भावः। नच विषयतासम्बन्धेन स्वोपहितप्रसिद्धिः, उक्तसम्बन्धत्रयेण तत्त्वज्ञानरूपयत्किञ्चित्स्वविशिष्टतदीय-विषयतान्यघटादिविषयतायाः प्रसिद्ध्या तन्निरूपकत्वस्य निर्विषयकोक्तविकल्पे प्रसिद्धेः। *सविषयकत्वेति*॥ उपहितविषयकत्वघटकविषयितावत्त्वेत्यर्थः। *तुच्छव्यवहारजनकेति* तत्पुरुषो बहुव्रीहिर्वा। *निर्विषयकत्व-स्वीकारादिति*॥ असदर्थे मिथ्याभूताया वृत्तेर्विषयतारूपसम्बन्धासम्भवादिति भावः। *स्वोपहितनिवेश इति*॥ विषयितांश इत्यादिः। *स्वोपहिताखण्डव्यक्त्येति*॥ स्वरूपसम्बन्धेन विषयिताया अखण्डविषयिता-त्वेनेव विषयितासम्बन्धेनाखण्डब्रह्मव्यक्तेः स्वपदार्थोपाधिरूपेण वैशिष्ट्यनिवेशेऽगुरुत्वात् तुल्यत्वात् इत्यर्थः। *ननु*—उपाध्योर्ज्ञानाज्ञानयोरप्यनुगमकरूपान्तरेण प्रवेश उक्तसम्बन्धत्रयघटितपरिष्कार इवात्रैव गौरवमिति—चेत्, ब्रह्मान्याविषयकत्वे सति विषयितासम्बन्धेन ब्रह्मविशिष्टत्वं वृत्त्यर्थ इति जानीहि। स्वोपहितब्रह्मविषयक-ज्ञानाज्ञानयोरपि ब्रह्मविषयकत्वानपायात् तदन्यब्रह्माभाज्ञानानां ब्रह्मान्यविषयकत्वनियमेन सत्यन्तेनैव वारणात्, उक्तोपहितब्रह्मज्ञानस्य वोपाध्यविषयकत्वेन संग्रहाच्च। एवं चोक्तसम्बन्धत्रयघटितपरिष्कारायामपि ज्ञानाज्ञाने स्वत्वेनोपादाय तदुपहितत्वेन ब्रह्मनिवेशस्य पूर्वं प्रतीतेस्तदभिप्रायेण। इदानीं तदुपहित-विशिष्टोभयानुल्लेखेन ब्रह्मणः स्वरूप एव निवेशोऽभिप्रेतः, इति न पूर्वोत्तरविरोध इति ध्येयम्। *सविषयकत्वमत इति*॥ सत्यब्रह्म-मिथ्या-प्रपञ्चयोः परस्परसंसृष्टत्वेन मिथ्यात्व-सत्यत्वारोपवद् असतः शशविषाणादेस्तुच्छाग्निपद्जन्यवृत्तेश्च परस्परसंसृष्टत्वेन सत्त्वासत्त्वरूपपरस्परधर्मारोपात् तयोरपि विषयतारूपसम्बन्धः सम्भवन् अङ्गीकार्यः; अन्यथा तुच्छवृत्ति-तुच्छाकार-वृत्तिपदानां व्युत्पत्त्यनुपपत्तेरिति भावः। *तेन*=सविषयकत्वनिवेशेन। *तद्वारणाच्चेति*॥ अतः स्वोपहित-विषयत्वं निवेश्यम्। नच—तदपि तत्रास्तीति—वाच्यम्; स्वोपहितब्रह्मविषयकत्वस्य तदर्थत्वादिति भावः। *ननु* स्वोपहितान्याविषयकत्वविशिष्टस्वोपहितब्रह्मविषयकत्वस्य समानविषयकत्वरूपत्वे आत्मांश इतरप्रकारकस्य 'अहमज्ञः' इत्यादिज्ञानस्य वारणेऽपि स्वालम्बनात्मान्यविषयकज्ञानविरोधित्वानुपपत्तिः, नचेष्टापत्तिः; तद्विरोधित्वस्य पूर्वं व्यवस्थापितत्वात्, इत्याशङ्कां परिहरति—*अहं ब्रह्म घटो विनाशीति ज्ञानस्येति*॥ एतत्संग्राहकपूर्वोक्त-परिष्कारं स्मारयति—*स्वोपहितब्रह्मनिष्ठेति*॥ उक्तसम्बन्धत्रयेण यत्किञ्चिद्विशिष्टब्रह्मनिष्ठा या विषयत्वानिरूपिता.

### अद्वैतसिद्धिः

सत्युपहितविषयकत्वात् समानविषयत्वमस्त्येव। एतेन—उपाधिविषयज्ञानानामज्ञानानिवर्तकत्वम्—व्याख्यातम् ; अज्ञानस्योपाध्यविषयकत्वेन समानविषयत्वाभावात्, समानविषयकत्वेनैव तयोर्निवर्त्य-निवर्तकभावात् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*निवर्त्य-निवर्तकभावादिति* ॥ निवर्तकत्वं ज्ञानस्य तत्समानविषयकं तदाश्रयमनोनिरूपितं यदज्ञानम्, तदाश्रयकालपूर्वत्वशून्यत्वमित्यादिकं पूर्वोक्तरीत्या बोद्धव्यम्। 'मया ब्रह्माज्ञातम्, ननु जीवन्मुक्तेने'त्यादिप्रतीतेर्नानाज्ञानपक्षे मनोविशेषस्याज्ञानविशेषे निरूपकत्वं बोध्यम्। *ननु*—'एवं चैत्रो ब्रह्मे'त्यादिवाक्यजन्यज्ञानस्यापि ब्रह्माज्ञानं प्रत्युक्तनिवर्तकत्वमास्तामिति —चेत्, *न*; अहन्त्वादिधर्मोपस्थित्यादिद्वारकवाक्यजन्यज्ञानस्यैव तथा-त्वात्। अत एवावस्थाश्रयविशिष्टजीवबोधकवाक्यानां महावाक्यशेषत्वम्, अवस्थाश्रयवत्त्वेन जीवबोधने हि तद्वाक्येन

### सिद्धिव्याख्या

दुपहितब्रह्मविषयत्वमुभयोः समम्, तेनाज्ञानं स्वरूपसदित्युक्तिविरोधः। *द्वितीये* स्वसत्तादशायां वृत्तेरपि सत्त्वात् स्व-रूपासदित्युक्तेः पूर्ववद् व्याघातः। अत एव—वृत्तेर्मिथ्याभूतार्थविषयकत्वं त्वदभिमतं न स्यादिति—प्रत्युक्तम्; उपहितवस्तुविषयके 'लोहितः स्फटिकः' इत्यादिज्ञाने मिथ्याभूतार्थविषयकत्वस्य स्पष्टत्वेन तद्वत् प्रकृतेऽपि तत्संभवादिति भावः। *ननु* 'तरति शोकमात्मवित्' इत्यादौ शोकरूपाज्ञानस्य तरणरूपनिवृत्तिं प्रति साधनत्वेनोक्ताया आत्म-विद्याया न तावदात्मविषयकभ्रमत्वं युक्तम्; भ्रमस्याज्ञानानिवर्तकत्वात्, किन्तु सा प्रमैव; प्रमात्वं च तस्याः

### बिट्ठलेशोपाध्यायी टिप्पणी

विषयता, तच्छालित्वं ज्ञानाज्ञानसाधारणं समानविषयकत्वमित्यर्थः। विषयत्वानिरूपितत्वं सत्यन्तार्थनिष्कर्षे विशेष्यदलपतिते ब्रह्मनिष्ठविषयत्वे विशेषणमिति भावः। समानविषयकत्व उपाध्यविषयकत्वनिवेशप्रयोजनं मूले स्फुटयति—*एतेनेति* ॥ उपाध्यविषयकत्वनिवेशेनेत्यर्थः। *ज्ञानानाम्*॥ 'अहमज्ञः' इत्याद्याकारकाणामिति शेषः। *समानविषयकत्वाभावात्=अज्ञानसमानविषयकत्वाभावात्। *ननु* स्वयं ब्रह्मविषयकत्वरूपसमानविषयकत्व-मस्त्येवेत्यत आह—*समानविषयकत्वेनैवेति* ॥ निरुक्तदलद्वयघटितसमानविषयकत्वेनैवेत्यर्थः। *ननु* ज्ञानस्या-ज्ञाननिवर्तकत्वं यद्यज्ञाननाशकत्वम्, तदा मोक्षकाले नाशरूपदृश्यसत्त्वेन सर्वदृश्योच्छेदघटितमोक्षासंभव इत्यत आह टीकायाम्—*निवर्तकत्वमिति* ॥ तत्पदद्वयस्याव्यवहितपूर्वपरामर्शित्वेन यत्तदुत्तरं ज्ञानस्येत्यनुक्तम्। व्यधिकरण-ज्ञाननिवर्तकत्वं निराचष्टे—*तदाश्रयमनोनिरूपितमिति* ॥ मनसोऽज्ञाननिरूपकत्वे प्रमाणमाह—*मयेति—निरूपकत्वं बोध्यमिति* ॥ अज्ञानस्य शुद्धचिन्निष्ठत्वेन मनोनिष्ठत्वासम्भवात्, ज्ञानस्य च मनःपरिणामरूपस्य मनस्तदुपहित-चिन्निष्ठत्वेन शुद्धचिन्निष्ठत्वासम्भवात्, निरूपकतासम्बन्धेन सामानाधिकरण्यं ग्राह्यमिति भावः। *नन्वेवं चैत्रो ब्रह्मेति* ॥ चैत्रदेहद्वयोपलक्षित आत्मा ब्रह्मेत्यर्थः। *ज्ञानस्यापीति* ॥ निरुक्तरूपाक्रान्तत्वात्। नच—स्वात्मनि ब्रह्माभेदज्ञानमेव तन्निवर्तकमिति—वाच्यम्; स्वात्मशब्देन स्वदेहद्वयोपलक्षितात्मनो विवक्षितत्वेऽप्यु-पलक्षणस्यापि वेदान्तजन्यब्रह्मात्मज्ञानेऽप्रकारतया तत्समानाकारचैत्रात्मज्ञानेऽज्ञाननिवर्तकतापत्तेर्दुर्वारत्वादिति भावः। *आस्ताम्=स्यात्। *अहन्त्वादीति* ॥ उपाध्यविषयकस्यापीत्यादिः। आदिना युष्मत्पदार्थतावच्छेदकावस्था-श्रयवत्त्वपरिग्रहः। *वाक्येति* ॥ "अहं ब्रह्मास्मि" "तत्त्वमसि" इत्यादिवाक्येत्यर्थः। *तथात्वात्=मूलाज्ञान-निवर्तकत्वात्। अत्र प्रमाणमाह—*अत एवेति* ॥ अहन्त्वादिधर्मोपस्थितेर्द्वारतयाऽपेक्षणादेवेत्यर्थः। *महावाक्य-शेषत्वमिति* ॥ अन्यथा तादृशावान्तरवाक्यानां वैयर्थ्यापत्तेरिति भावः। एवंच तेषां महावाक्यसापेक्षत्व-मुक्तम्। महावाक्यस्य तत्सापेक्षत्वमाह—*अवस्थाश्रयवत्त्वेनेति* ॥ *वाक्येनेति* ॥ अनुवादेनेति शेषः।

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कृतेऽवस्थात्रयवत्त्वादन्त्योपलक्षितशुद्धजीवस्य 'योऽयं विज्ञानमयः' इत्यादिवाक्येन बोधनं सम्भवति । *ननु*— 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले'ति सिद्धान्तविरोधेनाज्ञानोपहितं ब्रह्म न तद्विषयः, किंतु, शुद्धमिति—चेत्, *न* ; आश्रयत्वेत्यादेः प्रस्थानान्तरत्वात्, केवलपदस्याज्ञानकार्यानुपहितपरतया व्याख्यानसम्भवाच्च; 'पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः' इत्यनेन पश्चिमशब्दितकार्यत्वस्य पूर्वसिद्धाज्ञानानाश्रयत्वाविषयत्वहेतुतया निर्देशात् । *अथ*—वाचस्पतिमते ब्रह्मसाक्षात्काररूपमनोवृत्तेर्मनःसंप्रयोगजन्यत्वादुक्तवृत्त्युपहितस्य चोक्तवृत्त्युत्पत्तिपूर्वमसत्त्वात् तदा तत्रोक्तसंप्रयोगासम्भवेन विषयतासम्बन्धेनोक्तवृत्त्युत्पत्तावुक्तसंप्रयोगस्य हेतुत्वासम्भव इति—चेत्, *न* ; उक्तवृत्तिर्हि स्वोपहित इव मनःसंयोगोपहितेऽप्यात्मनि जायते, कारणस्य स्वाश्रयदेशे कार्यजनकत्वस्वाभाव्यात् ; तथाच मनःसंयोगोपहितवृत्तिलौकिकविषयतासम्बन्धेन मानसवृत्तौ मनःसंयोगस्य हेतुत्वे बाधकाभावः । यदि तु वृत्त्युपहित एव वृत्तिविषयत्वम्, नतु मनःसंयोगोपहिते ; तत्र तु वृत्तिविषयाभिन्नत्वमेव, तदा मनःसंयोगिनिष्ठं यत् स्वविषयाभिन्नत्वम्, तेन सम्बन्धेन मानसप्रत्यक्षे मनःसंयोगस्य हेतुत्वे न दोषः ।

## बिट्ठलेशीयटिप्पणी

*बोधनम्=अवस्थात्रयानुगतब्रह्मरूपत्वबोधनम् । अज्ञानस्य स्वोपहितब्रह्मविषयकत्वे संक्षेपशारीरकविरोधं परिहर्तुं शङ्कते—*नन्वाश्रयत्वेति* ॥ *प्रस्थानान्तरत्वात्=विवरणप्रस्थानानुरोधित्वात् । अस्माकं तु वाचस्पतिप्रस्थानानुरोधित्वात् । वाचस्पतिमतेऽपि तदविरोधमाह—*केवलपदस्येति* ॥ *अज्ञानकार्यानुपहितेति* ॥ एवं चाज्ञानस्य स्वोपहितविषयकत्वेऽपि न तद्विरोध इति भावः । उक्तकेवलपदार्थसङ्कोच उत्तरवाक्यानुरोधरूपां युक्तिमाह—*पूर्वसिद्धतमसो हि पश्चिम इति* ॥ अनाद्यज्ञानस्य *पश्चिमः=उत्तरोत्पन्नस्तत्परिणामो मनआदिरूपो नाश्रयत्व-विषयत्वयोरवच्छेदक इत्यर्थः । *कार्यत्वस्येति* ॥ हेतुतया निर्देशाद् इत्यन्वयः । केवलपदस्याज्ञानतत्कार्यानुपहितपरत्वेऽज्ञाने स्वाश्रयत्व-विषयत्वावच्छेदकत्वाभावे हेत्वकथनेन न्यूनत्वापत्तेरिति भावः । *नन्वेवमपि*—अज्ञानस्य वृत्तेश्च स्वोपहितविषयकत्वे विवरणविरोधो दुर्वारः, तैर्हि तयोः शुद्धविषयकत्वस्वीकारादिति चेत्, *सत्यम्* ; अस्माकं वाचस्पतिप्रस्थानानुरोधित्वात् । एवं तर्हि वाचस्पतिमतस्यापि भवतो विरोध इत्याशङ्कते—*अथेति* ॥ वेदान्तमहावाक्यजन्याया अपि वृत्तेः 'दशमस्त्वमसी'त्यादिशाब्दवृत्तेरिवेन्द्रियसन्निकर्षादिवशात् प्रत्यक्षयोग्यविषयिकायाः प्रत्यक्षत्वेनेन्द्रियसन्निकर्षजन्यत्वस्यावश्यकत्वादिति भावः । *उक्तवृत्त्युपहितस्य=वेदान्तजन्यब्रह्मसाक्षात्काररूपवृत्त्युपहितस्य, शुद्धविषयकतद्वृत्तिविषयत्वायोग्यत्वेत्यर्थः । *तदा=वृत्तिपूर्वं । *तत्र=अविद्यमान उक्तवृत्त्युपहिते । *उक्तसंप्रयोगेति* ॥ मनःसंयोगरूपसन्निकर्षेत्यर्थः । *विषयतासम्बन्धेनेति* ॥ तत्रेत्यनुषङ्गः । *हेतुत्वासम्भव इति* ॥ व्यभिचारादिति भावः । *उक्तवृत्तिः=मनःसन्निकर्ष-शब्दोभयजन्या वृत्तिः । स्वम्=उक्तवृत्तिः । *मनःसंयोगेति* ॥ कारणस्य=मनःसंयोगस्य । *स्वाश्रयदेशे=शुद्धस्य ब्रह्मणः स्वाश्रयत्वासंभवाद् मनःसंयोगोपहिते ब्रह्मणि । *उक्तकार्येति* ॥ उक्तवृत्तिरूपकार्येत्यर्थः । एवमप्युक्तव्यभिचारोऽस्त्येवेत्यत आह—*तथाचेति* ॥ वृत्त्युपहिते ब्रह्मणि व्यभिचारवारणाय मनःसंयोगोपहितवृत्तित्वं लौकिकविषयताया विशेषणम् । पूर्वोत्पन्नमनःसंयोगस्योक्तसाक्षात्कारोत्पत्तिक्षणेऽपि सत्त्वादुक्तविषयतायामुक्तवृत्तित्वनिर्वाहः । *वृत्त्युपहित एवेति* ॥ अज्ञानेन ज्ञानस्य सह स्वोपहितमात्रविषयकत्वरूपसमानविषयकत्वानुरोधाद् आत्मनो वृत्तिविषयत्वे वृत्तेरिव मनःसंयोगस्याप्युपाधित्वे तु स्वोत्तरसिद्धत्वेनाज्ञानविषयत्वे चानुपाधित्वे मानाभावादनुपपत्तेरिति भावः । *मनःसंयोगिनिष्ठं स्वविषयाभिन्नत्वम्, तेन संबन्धेनेति* ॥ मनःसंयोगरूपोपाधेर्मनोवृत्तिरूपोपाधेरुत्पत्तिकालेऽधिकरणे च मनसि सत्त्वादुक्तोपाधिद्वयस्यैकदेश-कालीनत्वेन तदुभयोपहितात्मनोरुपाधेरभेदाभावे मनःसंयोगोत्पत्तिद्वितीयक्षणावच्छेदेन मनःसंयोगिनः स्वविषयीभूतस्वोपहिताभिन्नत्वेनोक्तसंबन्धेनोक्तवृत्तिः स्वोत्पत्तिक्षणावच्छेदेन मनःसंयोगिनि स्वोपहित उत्पद्यते, मनःसंयोगश्च स्वोपहिते पूर्वमस्ति,

अद्वैतसिद्धिः

**एवं च सति शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न तत्र व्यभिचारः ; तुच्छ-शुद्धयोः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमात् ।**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*विषयत्वेऽपीति* ॥ 'केवलो निर्गुणः' इत्यादिश्रुत्या ब्रह्मणि परमार्थतो धर्मनिषेधात्, अन्यथोपहितब्रह्मतादात्म्यस्य शुद्धेऽवश्यं वाच्यत्वेन श्रुतिबाधापत्तेः, स्वप्रकाशेऽपि ब्रह्मणि कल्पिताज्ञाननिवृत्त्यर्थं वृत्तिविषयत्वस्य युक्तत्वाच्च,शुद्धमपि ब्रह्म वृत्तिविषयः । किञ्च न स्वप्रकाशे चिदंशेऽज्ञानम्, किंतु पूर्णानन्दांशे ; तथाच तस्य शुद्धस्यापि

न्यायामृतसौगन्ध्यम्

एतेन—वस्तुतस्तु—शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम् । अन्यथा शशविषाणं तुच्छमित्यादि-

सिद्धिव्याख्या

शब्दाजन्येति विशेषणानन्तर्भाव इत्यर्थः । *एवं च सतीति* ॥ विवक्षितस्य हेतुत्वे सतीत्यर्थः । *न तत्र व्यभिचार इति* ॥ तुच्छे ब्रह्मणि च न व्यभिचार इत्यर्थः । विवक्षितहेतोस्तत्राभावादिति भावः । हेत्वभावमेव दर्शयति—*तुच्छ-ब्रह्मणोरिति* ॥

विषयव्याप्त्यर्थं पक्षान्तरमाह—*किञ्चेति* ॥ *स्वप्रकाशेति* ॥ इदञ्च वेदान्तजन्यचरमवृत्तिविषये शुद्धब्रह्मणि

विट्ठलेशीयटिप्पणी

नापि मिथ्याविषयत्वम् ; पक्षे साध्यसिद्धिं विना तद्घटितहेतोरसिद्धत्वात् । नापि सविषयकत्वम् ; तुच्छवृत्तेरपि तत्सत्त्वोक्तेः, अन्यथा तुच्छ-तद्वृत्तिव्यवहारानुपपत्तेरिति भावः । *एवं च=शब्दाजन्यवृत्तिविषयत्वे च हेतौ सति । *तत्र=शुद्धे । ननु* 'साक्षी चेता' इत्यादिश्रुत्या शुद्धे ब्रह्मणि धर्मसामान्यनिषेधात् शुद्धं ब्रह्म कस्माद् वृत्तिविषय इति ? अत आह टीकायाम्—*केवलो निर्गुण इत्यादिश्रुत्येति* ॥ *परमार्थतः=पारमार्थिकत्वेन । *धर्मनिषेधात्=धर्माभावबोधनात् । अस्य 'युक्तत्वाच्चे'त्यस्य च पञ्चम्यन्तस्य शुद्धमपि वृत्तिविषय इत्यत्रान्वयः । एवं च शुद्ध आरोपितोक्तवृत्तिविषयत्वरूपधर्मोपगमेऽपि न तद्विरोध इति भावः । शुद्धस्य वेदान्तजवृत्तिविषयत्वानुपगमेऽप्युक्तश्रुतेरुक्तरीत्यार्थसंकोच आवश्यक इत्याह—*अन्यथेति* ॥ आरोपितस्यापि निषेध इत्यर्थः । *उपहितब्रह्मतादात्म्यस्य=मायोपहितब्रह्मरूपेश्वरतादात्म्यस्य । *शुद्धे=ब्रह्मणि । *अवश्यं वाच्यत्वेनेति* ॥ अन्यथाऽधिष्ठानाभावेन तस्यारोपितत्वाभावे सत्यत्वापत्तेः, प्रतिपन्नोपाधित्वघटितमिथ्यात्वानुपपत्तेश्चेति भावः । *श्रुतिबाधापत्तेरिति* ॥ शुद्ध उपहिततादात्म्यरूपधर्मोपगमे निर्धर्मकत्वबोधकोक्तश्रुतिबाधापत्तेरित्यर्थः । *ननु* शुद्धे ब्रह्मण्यस्तु मायोपहिततादात्म्यादिरूपमारोपितं धर्मान्तरम्, वृत्तिविषयत्वं त्वारोपितमपि माऽस्तु, शुद्धस्य स्वप्रकाशत्वेन प्रयोजनाभावादित्यत आह—*स्वप्रकाश इति* ॥ *युक्तत्वात्=अपेक्षणीयत्वात् । *ननु* स्वप्रकाशचैतन्यरूपे शुद्धे ब्रह्मणि कल्पिताज्ञानकृतावरणस्य सूर्ये तमःकृतावरणस्येवासम्भवः, इति किमर्थं वृत्तिविषयत्वं स्वीकार्यमिति ? अत आह—*किंचेति* ॥ *चिदंश इति* ॥ सदंश इवेति शेषः । यथा—*अहमस्मि नवेति* संशयस्य 'नाहमस्मीति' विपर्ययस्य चाभावात् सदंशे नाज्ञानम्, एवं'अहमात्मानं जानामि न वा' 'अहमात्मानं न जानामि' इति संशय-विपर्यययोरभावात् चैतन्यांशेऽपि नाज्ञानमिति भावः । *किं तु पूर्णानन्दांश इति* ॥ व्यापकानन्दांश इत्यर्थः । ब्रह्मांश इवेति शेषः । यथा 'अहं ब्रह्म न वा' 'नाहं ब्रह्म' इति संशय-विपर्ययाभ्यां ब्रह्मांशेऽज्ञानम्, तथा 'अहं पूर्णानन्दो न वा' 'नाहं पूर्णानन्दः' इति संशय-विपर्ययाभ्यां पूर्णानन्दांशेऽप्यज्ञानमस्तीति भावः ॥

*ननु*—सच्चिदानन्दब्रह्मस्वरूपोऽयमात्मा, तत्रांशपदार्थो न तावदवयवः ; निरवयवत्वात्, नापि धर्मः ; निर्धर्मकत्वात्, तथाचेत्युत्तरपङ्क्त्या शुद्धस्य वृत्तिविषयत्वोपसंहारासङ्गतेश्च, पूर्णानन्दत्वेनाज्ञानविषयताया अपि तथैवावश्यकत्वादिति—चेत्, *अत्रेदं प्रतिभाति*—अंशो विषयताविशेषपरः, यद्वशात् 'पूर्णानन्दं ब्रह्म न जानामि' इति पूर्णानन्दब्रह्मोपरागेणाज्ञानानुभव-व्यवहारौ 'पूर्णानन्दब्रह्माहमि'त्यनुभवो 'नाहं पूर्णानन्दब्रह्म' इति भ्रमश्च, तादृशो विषयताविशेषश्च शुद्ध एव पूर्णानन्दे ब्रह्मणि, परं तु तदज्ञानाविषयीभूतोपलक्षणीभूतकल्पितपूर्णानन्दब्रह्मत्वरूपधर्म-

### तरङ्गिणी

तद्विषयकवृत्त्युत्पत्तिः ; निर्विषयकवृत्तेरनुत्पादात्, एवं च चैतन्यस्य विषयत्वे तद्विषयकवृत्त्युत्पत्तिः, वृत्त्युत्पत्तौ च चैतन्यस्य वृत्त्यधीनविषयत्वमित्यन्योन्याश्रयः। तस्मात् शुद्धस्यैव चैतन्यस्य चरमवृत्तिविषयता। तस्य चामिथ्यात्वाद् व्यभिचार एवेति साधूक्तम्—'व्यभिचारानुद्धारादि'ति ॥ *नच स्वरूपेणेति* (४७२) ॥ विशिष्टाविषयकवृत्तिव्याप्यत्वमेवेत्यर्थः ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वृत्ति-विषयत्वमावश्यकम्। *तदुक्तम्*—'फलव्याप्यत्वमेवास्य शास्त्रकारैर्निराकृतम्। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते ॥' इति, इति भावः। *तुच्छ-शुद्धयोरित्यादि* ॥ 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पातञ्जलसूत्रात् शशविषाणादिशब्दैस्तुच्छव्यवहाराच्च तुच्छं शाब्दवृत्तेर्विषयः, उक्तरीत्या च शुद्धब्रह्मापि श्रुतिजन्यवृत्तिविषयः, शब्दान्यमानस्य तु तयोरप्रवृत्तेर्न तज्जन्यवृत्तिविषयतेति भावः। *ननु* उक्तशब्देनेव तुच्छं वृत्तिविषयः ; व्यवह्रियमाणत्वात्, तुच्छं न क्षणिकम् ; अकारणत्वात्, इत्याद्यनुमानेनापि

### विट्ठलेशीयटिप्पणी

प्रकारकः। तथाच प्रत्यक्षमणिदीधितावुक्तम्—'ज्ञानस्य विषयता एकैकविशेषे, प्रकार-संसर्गयोस्तु न विषयता ; परन्तु सा घटादौ द्रव्यत्वज्ञानोत्तर'मिदं द्रव्यमि'ति ज्ञानीया द्रव्यत्वप्रकारिका समवायसंसर्गिका च, द्रव्यादौ घटत्वज्ञानोत्तरा'यं घटः' इति ज्ञानीया घटत्वप्रकारिका समवायसंसर्गिका च। प्रकारत्व-संसर्गत्वे विषयतायाः सम्बन्धविशेषौ, नतु ज्ञानस्ये'ति ॥ ईदृशी च सच्चित्त्वप्रकारिका विषयता नाज्ञानस्यास्ति, अतस्तदुपरागेण 'सच्चितं न जानामि' इत्यनुभव-व्यवहारौ न स्तः ; 'सच्चिदहम्' इत्यनुभवः, 'नाहं सच्चित्' इति भ्रमाभावश्चास्ति। उक्तविषयताविशेष इव वेदान्तजन्यवृत्तिविषयताऽपि वृत्त्यविषयीभूतोपलक्षणीभूतकल्पितपूर्णानन्दब्रह्मत्वप्रकारिका शुद्ध एव पूर्णानन्दशाल्यज्ञाननिवर्तिका ; अस्ते ब्रह्मण्युक्तविषयताशालिवृत्तिसामग्री तु पूर्णानन्दादिपदशक्तिप्रयोज्या पूर्णानन्दब्रह्मत्वप्रकारकब्रह्मोपस्थितिः, अहंत्वादिधर्मप्रकारिका च जीवोपस्थितिः, शुद्धे ब्रह्मात्मस्वरूपे तात्पर्यज्ञानम्, 'नेह नाने'त्यादिवाक्यजन्यसकलधर्मबाधाग्रहश्चेत्येवमादिरूपा। *तदुक्तं ग्रन्थकृता*—अवस्थात्रयवत्त्वाहंत्वोपलक्षितशुद्धजीवस्य 'योऽयं विज्ञानमयः', इति वाक्ये बोधनसम्भवादिति, *तदाह—तथा [illegible] अज्ञानविषयताश्रयः पूर्णानन्दत्वोपलक्षिते शुद्धे सत्त्वे चेत्यर्थः। *तस्य=पूर्णानन्दत्वोपलक्षितस्य। *शुद्धस्य=पूर्णानन्दस्य ब्रह्मणः। *वृत्तिविषयत्वमिति* ॥ वेदान्तमहावाक्यजन्येत्यादिः। *आवश्यकमिति* ॥ अन्यथोक्तविषयताकाज्ञानसमानविषयकत्वमुक्तवृत्तेर्न स्यादिति भावः ॥ "यत्तदद्रेश्यमि"ति श्रुतिवाक्येन शुद्धे फलव्याप्यत्वं निषिध्यते, नतु वृत्तिविषयत्वमपीत्येवं संकोचेनोक्तश्रुतिव्याख्याने शुद्धस्याज्ञानविषयत्वे चाभियुक्तसंमतिमाह—*तदुक्तमिति* ॥ *फलव्याप्यत्वम्=वृत्तिप्रतिबिम्बितचैतन्यविषयत्वम्। *अस्य=शुद्धस्य। *शास्त्रकारैर्निराकृतम्* ॥ "स्वयंप्रकाशमानत्वान्नाभास उपयुज्यते" इत्युक्तेः। *ब्रह्मणि=ब्रह्मत्वोपलक्षिते शुद्धे ब्रह्मणि यदज्ञानम्, तन्नाशार्थं तादृशे ब्रह्मणि वृत्तिविषयत्वमिष्यत इत्यर्थः। तुच्छ-शुद्धयोः शब्दजन्यवृत्तिविषयत्वमुपपादयति—*शब्दज्ञानानुपातीति* ॥ तयोस्तदन्यवृत्त्यविषयत्वमुपपादयति—*शब्दान्यमानस्य त्विति*। *तयोरप्रवृत्तेरिति* ॥ शुद्धस्य ब्रह्मणो निर्धर्मकत्वेन हेतु-साध्यरूपधर्मसंबन्धासंभवात्, तुच्छस्याप्यसतः सद्भिर्हेत्वादिभिः संबन्धासंभवादिति भावः। तुच्छवृत्तिर्निर्विषयकेति मतेनेदम्। सविषयिकेति मते तत्र शब्दस्येवानुमानस्यापि प्रवृत्तिर्दुर्वारेत्याशङ्कया 'यद्वे'ति कल्पान्तरमवतारयति—*नन्विति* ॥ *तुच्छं वृत्तिविषय इति* ॥ सदसतोरपि विषयतारूपसंबन्धस्तुच्छत्र्यादिसाधुपदानामुन्मत्तोच्चरितासाधुशब्दानामिव निर्विषयकत्वापत्तिवारणायाङ्गीकार्य इति भावः। *व्यवह्रियमाणत्वात्=तुच्छादिपदविषयत्वात्। नहि पदविषयत्वं पदार्थीनवृत्तिविषयत्वं विना घटत इति भावः। *ननु* उक्तानुमानस्य तुच्छादिपदलिङ्गकत्वेन शब्दप्रयोज्यत्वात्, 'शब्दाजन्यवृत्तिविषयत्वमि'त्यत्र जन्यपदस्य प्रयोज्यपरत्वाद् न तुच्छे व्यभिचार इत्यत आह—*तुच्छं न क्षणिकमिति*। *अकारणत्वादिति* ॥ क्षणिकत्वसाधकहेतोरर्थक्रियाकारित्वस्य कारणतारूपत्वात् तद्विरहे क्षणि-

### अद्वैतसिद्धिः

यद्वा—सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम्, प्रकारश्च सोपाख्यः कश्चिद्धर्मः ; तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः। अभावत्वस्यापि सोपाख्यत्वादभावत्वप्रकारकज्ञानविषयीभूतेऽभावे भूतलाद्यनुयोगिके न भागासिद्धिः। उपाख्या चा'स्ती'तिधीविषयत्वादीत्यन्यत्।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तुच्छं शाप्यते, तत्राह—*यद्वेति* ॥ *कश्चिद्धर्म इति* ॥ ग्राह्य इति शेषः। तथाच सोपाख्यधर्म-

### न्यायामृतसौगन्ध्यम्

शब्दजन्यवृत्तिविषये तुच्छे व्यभिचारस्स्यात्। अतः शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न क्षतिः। तुच्छ-शुद्धयोः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमात् ॥ यद्वा सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम्, प्रकारश्च सोपाख्यः कश्चिद्धर्मः, तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः। अभावस्यापि सोपाख्यत्वात्, अभावत्वप्रकारकज्ञानविषयीभूतेऽभावे न भागासिद्धिः। उपाख्या चाऽस्तीति प्रतीतिविषयत्वादिकमिति—निरस्तम् ; तुच्छम्, न (१) क्षणिकम्,

### सौगन्ध्यविमर्शः

(१) तुच्छस्याकारणत्वात् तुच्छं न क्षणिकमिति नानुमानसम्भवः ; तुच्छस्य धर्मित्वाभावेन हेतोरपक्षधर्मत्वात्

शब्द-तन्मूलकप्रमाणान्तरान्यतराजन्यवृत्तिविषयत्वस्यैव शब्दाजन्यवृत्तिविषयत्वपदेन विवक्षणे तु न कोऽपि दोषः। यागादि-

### सिद्धिव्याख्या

व्यभिचारवारणायैव। *ननु*—'शशविषाणं तुच्छमि'त्यादिशब्दजन्यवृत्तेरपि तुच्छत्वप्रकारकतया तद्विषये तुच्छे व्यभिचारतादवस्थ्यमित्यत आह—*प्रकारश्चेति* ॥ सोपाख्यस्वरूपः कश्चिद्धर्म इत्यर्थः। *तेनेति* ॥ उक्तदृश्यत्वेन-त्यर्थः। *शुद्ध इति* ॥ वेदान्तजन्यनिष्प्रकारकज्ञानविषयीभूतशुद्ध इत्यर्थः। *न व्यभिचार इति* ॥ उक्तहेत्वभावादिति भावः। *नन्वेवमपि* अभावे भागासिद्धिः ; तस्याभावत्वप्रकारकज्ञानविषयत्वे विवक्षितज्ञानविषयत्वाभावात्, अत आह—*अभावत्वस्यापीति* ॥ *सोपाख्यत्वात्=अस्तीतिप्रतीतिविषयत्वसहितत्वात्। तथाचाभावत्वप्रकारकज्ञानमपि सोपाख्यधर्मप्रकारकमेवेति न तद्विषयेऽभावे भागासिद्धिरिति भावः।

### विट्ठलेशीयटिप्पणी

सत्त्वसाधकहेत्वभावेनाक्षणिकत्वं साध्यते। नच—व्याप्याभावो न व्यापकाभावसाधक इति—वाच्यम् ; सत्त्वक्षणिकत्वयोः समनियतत्वात्। *तुच्छं ज्ञाप्यत इति* ॥ इदं द्विविधमपि तुच्छज्ञानं बाधितविषयकत्वाद् भ्रम इति। भूतन्मते द्विविधो भ्रमः, मिथ्याविषयकोऽसद्विषयकश्चेति बोध्यम्। मूले—*सप्रकारकवृत्तिविषयत्वमिति* ॥ इदं प्रकारविशिष्ट एव ब्रह्मणि, न शुद्धे, निर्विकल्पकवृत्तिविषयत्वस्यैव तत्रोपगमात्, इति न शुद्धे व्यभिचार इति भावः। 'प्रकारश्च सोपाख्यः कश्चिद् धर्मः' इति मूलं प्रकारपदार्थकथनरूपमिति प्रतीयते, तच्च न युक्तम् ; सोपाख्यधर्मकत्वस्य वृत्तौ लाभेऽपि सोपाख्यधर्मे प्रकारत्वस्यालाभात्, इत्यतः पूरयति—*ग्राह्य इति शेष इति* ॥ प्रकार उक्तधर्मरूपो ग्राह्य इत्यर्थाद् उक्तधर्मत्वं प्रकारे विशेषणमिति लभ्यत इत्यभिप्रेत्य व्याचष्टे—*तथाचेति* ॥ मूले—*तेन=सोपाख्यधर्मप्रकारकत्वविशेषणेन। तत्र सप्रकारकत्वप्रयोजनमाह—*निष्प्रकारकेति* ॥ सोपाख्यत्वप्रयोजनमाह—*निरुपाख्येति* ॥ अभावत्वस्य निरुपाख्यत्वाभिमानमूलिकामभावे भागासिद्धिशङ्कां निरस्यति—*अभावत्वस्यापीति* ॥ *अभावे भूतलाद्यनुयोगिक इति* ॥ घटादिप्रतियोगिकेऽभाव इत्यर्थः। *न भागासिद्धिरिति* ॥ एवं च सिद्धान्तेऽभावो न तुच्छः, किंतु घटादिवद् दृश्यो मिथ्या च, परमते त्वभावस्तुच्छः, तद्धर्मभूताभावत्वादिकमपि तुच्छमिति बोध्यम्। *ननु* तदुभयसाधारणं किं सोपाख्यत्वम् ? अत आह—*उपाख्या चेति* ॥ *अस्तीतिधीविषयत्वेति* ॥ इदं च द्रव्याद्यभावादीनाम् ; 'द्रव्यादिकमस्ति' 'भूतले घटाभावः' इत्यस्तीतिप्रतीतिविषयत्वात्, न तुच्छस्य ; 'शशशृङ्गादिकमस्ती'ति प्रत्ययाभावात्। एतल्लक्षणे तथाभावत्वं

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निष्ठप्रकारताकवृत्तिविषयत्वं हेतुः। तुच्छेऽपि 'अस्ती'ति धीविषयत्ववादिनं माध्वं प्रति विषयत्वादीत्यत्रादि-पदमुक्तम्, सत्तादात्म्य-सत्तादात्म्यत्वान्यतरवत्त्वं तदर्थः। तुच्छनिष्ठस्य सर्वदेश-कालनिष्ठात्यन्ताभावप्रतियोगि-त्वादेस्तुच्छत्वमेव; अधिकरणस्वरूपत्वात्, तुच्छस्यातुच्छधर्मासम्भवात्, सदसतोः संसर्गाभावस्य बौद्धाधि-कारादावुक्तत्वात्। *ननु* तुच्छस्यातुच्छधर्मासंसर्गे कथमभावस्याभावत्वेनातुच्छेन संसर्गः? अभावत्वं हि 'घटाभावो नास्ति' 'घटो नास्ती'त्यादिधीसिद्धो भावसाधारणत्वादतुच्छोऽखण्डधर्मः, अभावस्तु तुच्छो बौद्धादिसम्मत इति—चेत्, अत्र ब्रूमः*—अभावत्वस्य तुच्छसंसर्गोऽभावत्वसाधकोक्तधीबलादेव सिद्धः,

### न्यायामृतसौगन्ध्यम्

अकरणत्वादित्याद्यनुमानेन तुच्छस्यापि वेद्यत्वात्। अनुभूतिः, स्वप्रकाशा, अनुभूतित्वादित्यादि-स्वप्रकाशादिसाधकैः, जीवात्म-परमात्मानः, न भिद्यन्ते, चेतनत्वादित्यादिजीवब्रह्माभेदसाधकैश्चानुमानै-र्ब्रह्मणोऽपि वेद्यत्वात्, 'सन् घटः,' 'अहमज्ञः' इत्यादिप्रत्यक्षेणापि वेद्यत्वाच्च॥ न चोपहितमेव प्रत्यक्ष-वेद्यम्; उपहितस्य भाने स्वरूपेणापि भानावश्यकत्वात्, अन्यथा विशिष्टे निश्चिते कदाचित् संशयादि स्यात्। न हि तद्विषयत्वं विना विशिष्टज्ञानेनैव संशयनिवृत्तिस्संभवति॥

यत्तु—सत्तादात्म्यत्व-सत्तादात्म्यान्यतरवत्त्वं सोपाख्यवृत्तिविषयत्वमिति न तुच्छे व्यभिचार इति, *तन्न*; स्वरूपेणैव कालत्रयाविद्यमाने शुक्तिरूप्यादौ सत्तादात्म्यवत्(१) तुच्छेऽपि सत्तादात्म्य-सम्भवात्॥ यत्तु—अस्तीति धीविषयत्वादिसमानाधिकरणत्वं वृत्तिविशेष्यत्वं हेतुरिति न तुच्छे व्यभिचार इति, *तन्न*; शशशृङ्गमस्तीति(२) शब्दाभासादिजन्यप्रतीतिविषयत्वस्य तुच्छेऽपि सम्भवात्॥

### सौगन्ध्यविमर्शः

धर्माणामपि स्वरूपतो यागत्वादिना प्रत्यक्षादिविषयत्वाद् न भानासिद्धिः। वस्तुतस्तु—यथाश्रुतेऽप्यनुभूतिः, स्वप्रकाशा, इत्याद्यनुमानानामुपहितविषयत्वमेव; तस्यैव प्रमान्तरविषयत्वात्, शुद्धस्वरूपे संशयादिनिरासस्तु स्वप्रकाशत्वात् पूर्वमेवोपवर्णितः। अथवा सत्तादात्म्यत्व-सत्तादात्म्यान्यतरवत्त्वं दृश्यत्वम्॥ (१) सत्तादात्म्यं प्रति सति कल्पितत्वमेव नियामकम्, नतु कालत्रया-विद्यमानत्वमात्रम्; तथाच शुक्तिरूप्यादीनामिव तुच्छस्य अकल्पितत्वाद् न सत्तादात्म्यसम्भव इत्यपि पूर्वमेव निवेदितम्॥ (२) अस्तीतिधीविषयत्वं नामासत्त्वापादकाज्ञानाविषयत्वप्रयोजकवृत्तिविशिष्टचिद्विषयत्वम्, न त्वरितपदसमभिव्याहृतवाक्यजन्य-ज्ञानविषयत्वमात्रम्। तथाच तुच्छविषयकस्यासत्त्वापादकाज्ञानस्यानङ्गीकारात् तत्र नोक्तविधं दृश्यत्वमिति न दोषः॥

### विट्ठलेशीयटिप्पणी

परमतेनातिव्याप्तिशङ्कयाऽऽदिपदमवतारयति—*तुच्छेऽपीति*॥ *माध्वं प्रतीति*॥ तेषां 'रजतमस्ती'ति भ्रमेऽलीकरजतस्यैव भानोपगमादिति भावः। *सत्तादात्म्येति*॥ अविद्याकाशादिविशिष्टब्रह्मणस्तदात्म्येऽपि [illegible]। सत्तादात्म्ये सत्तादात्म्यान्तरोपगमेऽनवस्थापत्तेस्तत्संग्रहवारणाय सत्तादात्म्यत्वनिवेशः। अत्र यदि सत्प्रतियोगिकं तादात्म्यमनुयोगितासम्बन्धेन निवेश्यते, तदोपाख्या सति ब्रह्मणि न स्यात्, एवं सदनुयोगिकतादात्म्यस्य प्रतियोगितासम्बन्धेन निवेशेऽपि। यथैकमेव सत्प्रपञ्चयोस्तादात्म्यम्; परस्पराध्यासरीत्या तादात्म्य-द्वयस्यावश्यकत्वात्। तस्मात् सत्प्रतियोगिकस्य सदनुयोगिकस्य वा तादात्म्यस्य प्रतियोग्यनुयोगिसाधारणस्वरूप-सम्बन्धेन निवेशः। अत एव तादात्म्यत्व-साधारण्यान्यतरत्वेन तद्वत्त्वनिवेशः। संयोगस्येव समवाय-सम्बन्धेन, तादात्म्यस्यापि स्वरूपसम्बन्धेन प्रतियोग्यनुयोग्युभयसाधारण्याश्रयता सम्भवतीति बोध्यम्। तुच्छनिष्ठ-भावरूपधर्मस्य सोपाख्यत्वे तुच्छे व्यभिचारशङ्कां निरुपाख्यतोपगमेन परिहरति—*तुच्छनिष्ठस्येति*॥ अधिकरणा-तिरिक्तत्वेऽप्याह—*तुच्छस्येति*॥ अत्राभियुक्तसंमतिमाह—*सदसतोरिति*॥ अत्र भट्टमतविरोधं शङ्कते—*नन्विति*॥ *अभावस्य=तुच्छस्य। अभावत्वस्यातुच्छत्वे मानमाह—*अभावत्वं हीति*॥ अभावस्य तुच्छत्वे तदाह—*अभावस्त्विति*॥ अभाव-तत्त्वयोस्तुच्छातुच्छत्ववत् संसर्गोऽपि मानसिद्धः, इति समाधत्ते—*अत्र ब्रूम इति*॥ *अभावत्वसाधकेति*॥ तत्र तत्संसर्गसिद्धिं विना तत्सिद्धेरसंभवादिति भावः। *उक्तधीति*॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्सिद्ध्यस्वीकारेऽभावत्वस्याप्यसिद्धिप्रसङ्गात्। अत एवाभावत्वविशिष्टरूपेणाभावस्यातुच्छत्वात् प्रतियोग्यनुयोगिसंसर्गोऽप्युपपद्यते, तत्र भूतले घटो नास्तीत्यादिप्रतीतेः, तद्भूतलघटः शशविषाणमित्यादिशब्दैः प्रतीयमानं तु तद्भूतलानुयोगिकघटप्रतियोगिकाभाव-शशानुयोगिकविषाणप्रतियोगिकाभावादेः स्वरूपमखण्डं तुच्छमेव ; घटशून्यतद्भूतलाविनिष्ठतया घटप्रतियोगिकतया च समानाधिकरणेनाभावत्वेन प्रतीयमानं यत्, तस्यैवालीकाखण्डात्मकेन तद्भूतलघटरूपेण प्रत्ययात्। अत एव तेनैव शब्दान्यप्रमाणाग्राह्यत्वम्, अभावत्वादिविशिष्टरूपेण तु प्रत्यक्षेणानुपलब्ध्या वा ग्राह्यत्वमिति दिक् ॥

### विट्ठलेशीयटिप्पणी

'घटाभावो नास्ति' 'घटो नास्तीति'धीत्यर्थः। उक्तधियोर्घटाभावेऽभावत्व-तत्संसर्गयोः साधकत्वादिति भावः। *ननु* अभावपदस्य नानार्थत्वाद् घटाद्यभावाभावत्वं भावभेदात्मकाभावरूपत्वात् तुच्छमेव, घटाद्यभावत्वं भावरूपस्वरूपसंबन्धविशेषरूपत्वाद् अतुच्छमेव, इति न तुच्छातुच्छसंसर्गस्वीकारप्रसङ्गः, इत्याशङ्क्य तुच्छाभावस्यातुच्छप्रतियोग्यनुयोगिसंसर्गानुपपत्त्या परिहरति—*तत्सिद्ध्यस्वीकार इति* ॥ *अत एवेति* ॥ अभावपदशक्त्यैक्ये लाघवाद् भावसाधारणातुच्छाभावत्वस्य तुच्छेऽभावे संसर्गस्वीकारादेवेत्यर्थः। *अभावत्वविशिष्टेति* ॥ अतुच्छेत्यादिः। *रूपेणेति* ॥ उक्तविशिष्टं तुच्छाभावादतिरिक्तं तस्य रूपमिति भावः। *अतुच्छत्वादिति* ॥ उपपद्यत इत्यत्रान्वयः ; अन्यथा तदनुपपत्तिरिति भावः। तदसिद्धौ तत्र तदनुपपत्तिर्न दोषः, इत्यतस्तत्साधकमाह—*तत्रेति* ॥ *नन्वेवम्* 'तद्भूतले घटो नास्ती'ति प्रत्ययेऽभावत्वादिविशिष्टरूपेण भासमानोऽभावः स्वरूपतोऽप्यतुच्छ एवास्तु ; उक्तप्रत्ययस्याभावत्वादिविशिष्टवस्तुविषयकत्वात्, केवलाभावस्वरूपविषयकस्य वस्तुशून्यप्रत्ययान्तरस्याभावात्, इत्यत आह—*तद्भूतलघट इति* ॥ *तद्भूतलम्=निर्घटं भूतलम्। तत्संबन्धी घटोऽप्रसिद्ध एव। अत्र दृष्टान्तसूचनायाह—*शशविषाणमिति* ॥ आदिशब्देन वन्ध्यापुत्रो गगनारविन्दमित्यादि। *शब्दैः प्रतीयमानं तु=शब्दजन्यवृत्तिविषयस्तु। अभावादेः स्वरूपमित्यत्रान्वयः। *तद्भूतलम्=घटशून्यं भूतलम्। *अखण्डम्=अभावत्व-घटप्रतियोगिकत्व-तद्भूतलानुयोगिकत्वाद्यविशेषितम्। *तुच्छमेवेति* ॥ *ननु* वस्त्वेव तत्, कथं तुच्छम् ? अत आह—*घटशून्येति* ॥ निष्ठतया प्रतियोगिकतया चेति तृतीयान्तार्थद्वयं सामानाधिकरण्येऽन्वेति। शशनिष्ठतया विषाणप्रतियोगिकतयेति चेत्यपि बोध्यम्। *प्रतीयमानमिति* ॥ 'तद्भूतले घटो नास्ति' 'शशविषाणं नास्ति' इत्यादिवाक्यजन्यप्रतीतिविषय इत्यर्थः। *तस्यैवेति* ॥ प्रत्ययादित्यन्वयः। *अलीकम्=असत्। *अखण्डम्=रूपान्तरशून्यं तदभिन्नेनेत्यर्थः। *तद्भूतलघटरूपेणेति* ॥ तद्भूतलघटेतिप्रालाप्येन। *प्रत्ययात्=विकल्पाख्यवृत्तौ भानात्। *ननु* एकस्यैवाभावस्य 'तद्भूतले घटो नास्तीति' प्रत्ययेऽभावत्वादिनाऽतुच्छस्य भानम्, 'तद्भूतले घटः' इति प्रत्यये तद्भूतलघटात्मकेन तुच्छेन रूपेण तुच्छस्य भानमिति न स्वीक्रियते, किंतु नञादिपदाभिलाप्यप्रत्ययेऽभाव एवातुच्छो भासते 'तद्भूतलघटे'त्यादिविकल्पाख्यप्रत्यये तुच्छाभावादन्यदेवालीकमखण्डमेकमेव किञ्चिद् भासते, इत्येव स्वीकार्यम् ; अन्यथैकस्यैवाप्रमाणशब्दमात्रग्राह्यत्वं शब्दान्यप्रत्यक्षादिप्रमाणग्राह्यत्वं चेति विरुद्धरूपभागौरवं च स्यात्, अत आह—*अत एवेति* ॥ एकस्यत्राभावस्य रूपभेदेन तुच्छत्वातुच्छत्वयोः स्वीकारादेवेत्यर्थः। *तेनैव=तुच्छत्वावच्छेदकेन तद्भूतलघटरूपेणैव। *अभावत्वादीति* ॥ अतुच्छेत्यादिः। *वेति* ॥ घटप्रमाविरहलिङ्गकानुमानेऽप्यपि बोध्यम्। इदं च मद्गुरुपरिष्कारमात्रम्। *वस्तुतस्तु*—तद्भूतलघटात्मकमेकं तुच्छम्, तेन रूपेण तद्भूतलानुयोगिकघटप्रतियोगिकाभावस्तुच्छः, स चाभावत्वादिनाऽतुच्छ इति कल्पने गौरवम्, उक्ताभावोऽतुच्छ एव, तद्भूतलघटादिकमेकैकमेव तुच्छमिति कल्पने लाघवम्। किंच यदि शशविषाणमित्यादिवाक्यैः शशाद्यधिकरणकविषाणादिप्रतियोगिकाभावो बोध्यते, तदा 'शशविषाणं नास्ती'त्यादिवाक्यैस्तेषां समानार्थकत्वं स्यात् ; 'शशशृङ्गं नास्तीति' 'शशे शृङ्गं नास्तीत्यर्थः' इति चिन्तामणावुक्तेः। 'पर्वते वह्निरस्ति' 'वह्न्यभावो नास्ती'ति वाक्यवत्,

न्यायामृतम्

दृश्यत्वं हेतुः, अत्र तु विशिष्टरूपेणैव दृश्यमिति—वाच्यम्; निर्विकल्पकाभावपक्षे घटादेरपि तत्सद्भावपक्षे नित्यातीन्द्रियस्यापि विशिष्टरूपेणैव दृश्यत्वेनासिद्धेः। न हि लिङ्गादिना निर्विकल्पकधीः; वेदान्तानां कल्पितविशिष्टपरत्वे तत्त्वावेदकत्वायोगाच्च, "तरति शोकमात्मविद्" इत्यादौ

तरङ्गिणी

*अत्र त्विति* ॥विशिष्टविषयवृत्तिव्याप्यमेवेत्यर्थः॥ *निर्विकल्पकेति* ॥ निर्विकल्पकाभावपक्षे विशिष्ट-विषयवृत्तेरभावाद् घटादौ सर्वत्र हेत्वसिद्धिः, निर्विकल्पकसद्भावपक्षे नित्यातीन्द्रियस्य विशिष्टमात्रविषयकानु-मित्यादिविषयत्वात् तत्र भागासिद्धिः॥ *नहीति* ॥ लिङ्गादिविशेषदर्शनस्य विशिष्टज्ञानसामग्रीत्वात् ततो नानुमितिरूपा निर्विकल्पकधीरित्यर्थः। *ननु* स्वाभिन्नेतरविशेषणप्रयुक्तविशिष्टविषयकवृत्ति-व्याप्यत्वमुक्तहेत्वर्थः, तथाच निर्विकल्पकाभावपक्षेऽपि घटादौ नासिद्धिः; 'घटोऽयमि'ति वृत्तिमादाय निरुक्तहेतोस्तत्र सत्त्वात्, इदन्तादेरपि स्वाभिन्नत्वात्, नित्यातीन्द्रियधर्मादि तत्तत्पदजन्यतत्तद्धर्मि-मात्रगोचरस्मृतिविषयत्वेन तत्रापि नासिद्धिः; ऐन्द्रियके घटादावतीन्द्रिये धर्मादौ च घटत्वादेर्धर्म-त्वादेश्च विशेषणस्य घटादिधर्म्याद्यभिन्नत्वात्, धर्म-धर्मिणोरभेदात्, स्वाभिन्नेतरद् यद्विशेषणं पटत्वादि, तत्प्रयुक्तं यद्विशिष्टं पटादि, तदविषयकं यद् विशिष्टं ज्ञानं 'घटोऽयमि'ति प्रत्यक्षम्, धर्मपदजन्या धर्म इति स्मृतिः, तद्विषयत्वाद् घटादेर्धर्मादेश्च न तत्र हेत्वसिद्धिः। ब्रह्मणस्तु स्वाभिन्नं यदानन्दादि, तदितरद् घटादि, तत्प्रयुक्तं विशिष्टं घटादिविशिष्टभूतलादि, तद्विषयक एव ज्ञाने भानम्; सर्वस्यापि ब्रह्मविषयकप्रत्यय-स्यान्यनिबन्धनविशिष्टविषयकत्वात्, एवं च ब्रह्मणि हेत्वभावादेव न व्यभिचार इति—चेत्, *मैवम्*; ब्रह्ममात्रविषयकवेदान्तजन्यनिरुक्तवृत्तिमादाय व्यभिचारतादवस्थ्यात्। *ननु* वेदान्तजन्या वृत्तिरपि विशिष्टविषयैव, इति न व्यभिचार इति—चेत्, *मैवम्*; तद्विशिष्टमकल्पितम्? कल्पितं वा? नाद्यः; ब्रह्मणोऽखण्डार्थत्वहानिप्रसङ्गात्, न द्वितीय इत्याह--*वेदान्तानामिति* ॥ कल्पितविशिष्ट-परत्वादित्यर्थः॥ *तरतीति* ॥ शोकरूपाज्ञानस्य तरणरूपनिवृत्तिं प्रति साधनत्वेनोक्ताया आत्मविदो न

न्यायामृतकण्टकोद्धारः

दृश्यमित्यत्र दूषणमाह—*वेदान्तानामिति* ॥ वेदान्तानां स्वरूपमात्रविषयकधीजनकत्वाभावे विशिष्ट-परत्वे च विशिष्टस्य बाध्यत्वस्वाभ्युपगमेन लक्षणास्वीकारवैयर्थ्यं स्यादित्यपि बोध्यम्। *तरतीति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यदि तुच्छेऽप्यतुच्छधर्मसंसर्ग इति कस्यचिदाग्रहः, तदाऽस्तीतिधीविषयत्वादिसमानाधिकरणं वृत्तिविशेष्यत्वं हेतुर्बोध्यम्॥

विठ्ठलेशोपाध्यायिटिप्पणी

अत एवाभावे न भागासिद्धिरिति वदता मूलाकृताऽप्यभावस्यातुच्छत्वमेव स्वीकृतम्। एवं चाभावस्यातुच्छत्वाद् तुच्छेनाभावत्वेन संसर्गे का विप्रतिपत्तिः? इत्याशयेनाह—*दिगिति*॥ *नन्वेवम्* तुच्छस्यातुच्छैस्तुच्छ-शशविषाणादि-पदैस्तद्धीमद्वृत्तिभिन्न संबन्धो न स्यात्, ततश्च तुच्छादिपद-जन्यवृत्तिरूपसोपाख्यधर्मप्रकारकवृत्तिविषयत्वात् तुच्छे व्यभिचारो दुर्वार इत्यत आह—*यदीति* ॥ तुच्छादिपद-तद्वृत्तीनामाश्रयत्वाभ्यादिभिर्निर्विषयकत्वस्वीकारात्—*यद्याग्रहः* इत्युक्तम्। *अस्तीति* ॥ धीविषयत्वादीत्यादिना सत्तादात्म्य-तत्त्वान्यतरत्वस्व-तुच्छान्यत्वपरिग्रहः। 'समानाधिकरणेति' वृत्तिविशेष्यत्वे विशेषणं तुच्छे व्यभिचारवारकम्। विशेष्यतायाः सप्रकारकज्ञानीयत्व-नियमात् सप्रकारत्वं परित्यक्तम्। विशेष्यतात्वेन निवेशे लाघवात्—*समानाधिकरणम्*। गतार्थस्तु मूले प्रकारतया-नुपात्तः, अत्र तु विशेष्यतायामिति तदुपादानात्। एवं च शुद्धेऽपि ब्रह्मणि न व्यभिचारः; तज्जिज्ञासुवेदान्तजनिर्वि-

न्यायामृतम्

मोक्षसाधनशुद्धरूपप्रमोक्तेश्च । किञ्च शुद्धज्ञानाभावे तदाच्छादकस्य मूलाज्ञानस्य निवृत्तिर्न स्यात् । ज्ञानस्याज्ञाननिवर्तकत्वे हि समानविषयत्वं तन्त्रम् । नच घटादिविषयज्ञानेष्वप्यन्याविषयत्वमेव तत्र तन्त्रम् ; गौरवात्, दीपेच्छादौ समानविषयत्वेनैव विरोधितमो-द्वेषादिनिवर्तकत्वदर्शनाच्च । 'घट-पटावि'ति ज्ञानेन घटाज्ञानस्य विशिष्टज्ञानेन च विशेषणाज्ञानस्य च निवृत्तिदर्शनाच्च । ब्रह्मज्ञानस्य निर्विषयत्वे ज्ञानत्वायोगस्य वक्ष्यमाणत्वाच्च ॥

अथ तदज्ञाननिवर्तकत्वे तदाकारत्वमेव तन्त्रम्, तच्च तद्विषयत्वाभावेऽपि करणसामर्थ्यादेव

तरङ्गिणी

तावदात्मविषयकभ्रमत्वं युक्तम् ; भ्रमस्याज्ञानानिवर्तकत्वात्, किन्तु सा प्रमैव ; प्रमात्वं च तस्याः कल्पित-विशिष्टाविषयत्वेनैव, तस्माद् वेदान्तानां कल्पितविशेषविनिर्मुक्तशुद्धब्रह्मज्ञानजनकत्वमेव, इति तत्र व्यभिचार इति भावः । 'मोक्षसाधने'ति प्रमाविशेषणम् ॥ *किञ्चेति* ॥ मौनं मौढ्यमित्यत्र मौढ्यशब्देन ब्रह्मज्ञान-प्रागभावाभाव आपादितः, इति नात्र पुनरुक्तिः ॥ *ज्ञानस्येति* ॥ नच—मूलाज्ञानमपि स्वोपहितज्ञेय-ब्रह्मविषयकमेवेति समानविषयता ज्ञानाज्ञानयोरिति—वाच्यम् ; अज्ञानस्य शुद्धचिदाश्रय-विषयकत्वसिद्धान्त-भङ्गस्यान्योन्याश्रयादेश्चोक्तत्वात् । किं चैतावताऽपि न ज्ञानाज्ञानयोः समानविषयत्वम् ; तथाहि—अज्ञानं हि स्वरूपसदज्ञानोपहितब्रह्मविषयम्, वृत्तिस्तु स्वरूपसद्वृत्त्युपहितब्रह्मविषया ; अन्यथा वृत्तेर्मिथ्या-भूतार्थविषयकत्वं त्वदभिमतं न स्यादिति । *ननु* न ज्ञानस्याज्ञानसमानविषयकत्वेनाज्ञाननिवर्तकता, किं त्वज्ञानविषयकज्ञानत्वेन ; घटादिज्ञाने तथैव कल्पनात् । एवं च ब्रह्मज्ञानमप्यज्ञानविषयब्रह्मान्याविषयकम्, इति भवति ब्रह्माज्ञाननिवर्तकमित्याशङ्क्य निराकरोति—*नचेति* ॥ *दीपेच्छादाविति* ॥ तथाच समानविषयकत्वेनैव ज्ञानस्याज्ञाननिवर्तकता, नतूक्तरूपेण ; तस्य गुरुतया तेन रूपेणाज्ञाननिवर्तकतायाः क्वाप्यदर्शनादित्यर्थः । उक्तरूपस्याव्याप्तिमप्याह—*घट-पटाविततीति* ॥ *ब्रह्मज्ञानस्येति* ॥ वेदान्त-जन्यवृत्त्यव्याप्यत्वे ब्रह्मणस्तज्ज्ञानस्य ब्रह्मेतराविषयकस्य ब्रह्माविषयकतया निर्विषयत्वापत्तौ घटवद् ज्ञानत्वानुप-पत्तिः, स्व-पराविषयकं ब्रह्मरूपं ज्ञानमसम्भवीति वक्ष्यमाणन्यायेन वृत्तेरपि तथात्वस्य वक्ष्यमाणप्रायत्वा-दित्यर्थः । केचित्तु—वक्ष्यमाणत्वादित्येतद्ग्रन्थस्वारस्याद् ब्रह्मरूपज्ञानपरतया तद्ग्रन्थम्—व्याचक्षते, तत्तु पूर्वोत्तरासङ्गतत्वादुपेक्षणीयम् ॥ *वक्ष्यमाणत्वादिति* ॥ जडत्वहेतुभङ्गे ॥

अज्ञानेन समानविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तन्निवर्तकत्वमस्तु, तावता नोक्तव्यभिचार इति शङ्कते—*अथेति* ॥ अन्यत्राज्ञानस्याज्ञानसमानविषयकत्वेन तन्निवर्तकत्वेऽपि ब्रह्मज्ञानस्य ब्रह्माकारत्वमात्रेण ब्रह्माज्ञान-निवर्तकत्वमस्त्वित्यर्थः ॥ *तच्चेति* ॥ शशशृङ्गादिज्ञानस्य शशशृङ्गादिसन्निकर्षाजन्यत्वाद् न तस्य तद्विषयत्व-

न्यायामृतकण्टकोद्धारः

मिथ्याज्ञानस्य मोक्षसाधनत्वाभावात्, अन्यथा 'अहं स्वप्नि'त्यादिज्ञानानामपि मोक्षहेतुत्वापत्तौ, श्रवणादि-विधिवैयर्थ्यापत्तेरिति भावः । *ननु* ब्रह्मज्ञानस्य ब्रह्मविषयकत्वेऽपि तदज्ञानस्याज्ञाननिवर्तकत्वमुपपद्यत एव ; ज्ञानस्याज्ञाननिवर्तकत्वे तदन्याविषयकत्वस्यैव तन्त्रत्वात् । नचैवम्—घटादिज्ञाने समानविषयकत्वं तन्त्रम्, ब्रह्मज्ञानेऽप्यन्याविषयकत्वम्, इति प्रयोजकद्वैविध्यकल्पने गौरवं स्यादिति—वाच्यम् ; घटादि-ज्ञानेऽप्यन्याविषयकत्वमेव तन्त्रमस्त्वित्याशङ्क्य निराकरोति—*न चेति* ॥ *गौरवादिति* ॥ 'तदन्या-विषयकत्वे'त्यत्र अन्याविषयकत्वे च निर्विषयकत्वापत्त्या ज्ञानत्वमेव न स्यादित्याह—*ब्रह्मज्ञानस्येति* ॥

विट्ठलेशीयटिप्पणी

कल्पितविषयतायास्तुरीयत्वेन विरोध्यताभावकत्वात्, निरुक्तविरोध्यता तु किञ्चिद्विशिष्ट उपहित एव वा ब्रह्मणि ; विशिष्टोपहितयोश्च शुद्धावसिद्धिकत्वाभावात्, मिथ्यात्वाच्च, इति न तत्र व्यभिचारः । *नन्वेवम्* घटत्वादिविशिष्टविषयक-

न्यायामृतम्

शशशृङ्गादिशब्दजन्यज्ञानस्यैव युक्तम्, दृश्यत्वश्रुत्वादिकमपि तद्विषयमिति—चेत्, स एवाकारो यस्येति वा ? तदाकार एवाकारो यस्येति वा ? तदाकार इवाकारो यस्येति वा ? नाद्यः ; वृत्त्यनाश्रितस्यात्मनो वृत्त्याकारत्वायोगात्, न द्वितीयः ; साकारवादापातात्, जडाद्याकारवृत्तावात्मीयस्य ज्ञानानन्दाद्यपरिच्छेदाकारस्याभावाच्च, सत्तयैकाकारत्वे च घटज्ञानस्याप्यात्माकारत्वापाताच्च, आत्मनो निराकारत्वाच्च । अत एव न तृतीयः ; ज्ञानानन्दादिना साम्यस्यासंभवात्, सत्तया साम्यस्य चातिप्रसक्तेः । संस्थानसाम्यस्य च घट-तद्वृत्त्योः कथंचित् संभवेऽप्यपरिच्छिन्न-परिच्छिन्नयोर्ब्रह्म-तद्वृत्त्योरयोगात् । (१) तस्मात् तद्विषयत्वमेव तदाकारत्वमिति वाच्यम्, अन्यथा घटादिज्ञाने तद्विषयत्वं तन्त्रम्, आत्मज्ञाने तु तदाकारत्वमित्यननुगमात्, इति सुस्थ आत्मनि व्यभिचारः । अनिर्वचनीयत्वादिकं मिथ्यात्वमिति पक्षे तु तुच्छे व्यभिचारश्च ; असद्वैलक्षण्यज्ञानार्थं तस्यापि ज्ञेयत्वात् । अथ प्राचां रीत्या माऽस्तु दृग्विषयत्वमात्रं दृश्यत्वम्, किं त्वाधुनिकरीत्या फलव्याप्यत्वमिति द्वितीयोऽस्त्विति चेत्, फलं हि मद्रीत्या व्यवहारो वा ? भट्टरीत्या

तरङ्गिणी

मित्यर्थः ॥ *स एवेति* ॥ आत्मैवाकारो ज्ञानस्येति वा ? आत्मातिरिक्त आत्माकार एव ज्ञानस्याकार इति वा ? आत्म-तदाकाराभ्यामन्य आत्माकारसदृश आकारो ज्ञानस्येति वा ? इत्यर्थः ॥ *वृत्त्यनाश्रितस्येति* ॥ आकारो ह्याकारिणमाश्रयते । नच ब्रह्म वृत्तिरूपमाकारिणमाश्रयति, अतो न ब्रह्म वृत्तेराकार इत्यर्थः ॥ *साकारवादापातादिति* ॥ ज्ञानस्येति शेषः ॥ *जडाद्याकारेति* ॥ जडानानन्दपरिच्छिन्नानृतरूपाकारयुक्ताया वृत्तेर्ब्रह्मसम्बन्धिज्ञानानन्दापरिच्छिन्नसत्यरूपाकारयुक्तत्वं न सम्भवतीत्यर्थः । *ननु* नासाधारणो ज्ञानानन्दादिरात्माकारो वृत्तेराकार इति ब्रूमः, अपितु साधारणसत्तादीति, तत्राह—*सत्तयेति* ॥ *ननु* साधारणासाधारणाकाराभ्यामतिरिक्तोऽन्य एव संस्थानविशेषादिरात्माकारो वृत्तेराकारः, इत्यत आह—*आत्मनो निराकारत्वाच्चेति* ॥ संस्थानाद्याकाररहितत्वाच्चेत्यर्थः । अत एवेत्युक्तमेव हेतुं विशदयति—*ज्ञानानन्दादिनेति* ॥ *तस्मादिति* ॥ ब्रह्मज्ञानस्यापीति शेषः । अन्यथा तदाकारत्वस्यासम्भवादित्यर्थः । *अनिर्वचनीयत्वादिकमिति* ॥ आदिपदेन ज्ञाननिवर्त्यत्वादिकम् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिरूपमिथ्यात्वस्य साध्यस्य तुच्छेऽपि सत्त्वात् तत्र न व्यभिचार इत्यर्थः ॥

तुच्छे साध्याभाववति हेतुमुपपादयति—*असद्वैलक्षण्येति* ॥ *दृग्विषयत्वमात्रमिति* ॥ वृत्ति-

न्यायामृतकण्टकोद्धारः

*तद्विषयम्* ॥ तदाकारविषयमित्यर्थः । असाधारणस्यात्माकारस्य वा वृत्त्याकारत्वमुच्यते ? उत साधारणस्य वा ? नाद्य इत्याह—*जडाद्याकारेति* ॥ न द्वितीय इत्याह—*सत्तयेति* ॥ आदिपदेन ज्ञानत्वेन ज्ञाननिवर्त्यत्वपरिग्रहः । हेतोरेवागमकत्वान्न व्यभिचार इत्यत्राह—*असद्वैलक्षण्येति* ॥ तथाचात्माकारवद् घटाकारवृत्त्याऽप्यात्माज्ञाननिवृत्तिः स्यादिति भावः ।

विठ्ठलेशोपाध्यायटिप्पणी

ज्ञानविषेयत्वाभावा ब्रह्मणीव शुद्धे घटेऽभावेन भागासिद्धिः, चिदिवादेः शुद्धादनतिरिक्तत्वोपगमे तु किञ्चिद्विशिष्टब्रह्मज्ञानविषेयत्वाभावा घट इव शुद्धे ब्रह्मणि सत्त्वेन व्यभिचार इति—चेत्, *अत्रोच्यते*—ब्रह्मांशे किञ्चित्प्रकारकत्वं

(१) *ननु* शशविषाणशब्दात् तदाकारं ज्ञानमुपजायत इति तावदनुभवसिद्धम्, नतु तत् सविषयकम् ; सकलसामर्थ्यविधुरस्य कर्मत्वापरपर्यायविषयत्वायोगादेव । प्रकृतेऽपि तथाऽस्त्विति चेत्, अत्र ब्रूमः ; शशविषाणशब्दादुपजायमानं ज्ञानं सविषयम् ? निर्विषयं वा ? निर्विषयत्वे ज्ञानमेव न स्यात्, घटवत् । सविषयत्वे कथमकर्मकं स्यात् ? तयोरैक्यात् । अथ कथं सकलसामर्थ्यविकलस्य शशविषाणस्य कर्मत्वम् ? इति चेत्, विषयत्वमपि कथम् ? *ननु* न विषयत्वं नाम वस्तुसामर्थ्यम्,

न्यायामृतम्

ज्ञातता वा ? स्वद्वीत्या वृत्तिप्रतिफलितं चैतन्यं वा ? तदभिव्यक्तं विषयाधिष्ठानचैतन्यं वा ? नाद्यः ; हा(आदा)नादेर्गगनादावभावात्, अभिलापस्य चात्मन्यपि भावात । न द्वितीयः ; ज्ञाततायाः मम घटादौ, परस्याप्यतीतादावभावात् । न तृतीय-चतुर्थौ ; अतीतादावसिद्धेः । तदपि स्वसत्ताकाले फलव्याप्यमिति चेत्, *न* ; नित्यातीन्द्रियेऽसिद्धेः । तदपि योगिनं प्रति फलव्याप्यमिति चेद्, *न* ; चित्सुखेन—"नच योगिप्रत्यक्षगम्यतयाऽपरोक्षत्वम् ; धर्मादीनां चोदनैकप्रमाणयोग्यत्वादि"त्युक्तत्वेन तद्विरोधात्, तुच्छमपि तुच्छत्वेन योगिनं प्रत्यपरोक्षमिति सुवचत्वाच्च । पक्षैकदेशे साक्षिवेद्याविद्यान्तःकरण-तद्धर्मसुखादौ दृष्टान्ते शुक्तिरूप्ये च फलव्याप्यत्वाभावाच्च ॥

तरङ्गिणी

व्याप्यत्वमित्यर्थः । *तदभिव्यक्तमिति* ॥ वृत्त्या वा वृत्तिप्रतिफलितचैतन्येन वाऽभिव्यक्तं घटादिविषयाधिष्ठानचैतन्यं फलम्, तदेव घटादेर्भासकमित्यर्थः । समुदितोऽभिलपनं प्रवृत्तिरादानात्मा व्यवहारः ? फलं वा ? यथासम्भवं वा ? आद्य आह—*हानादेरिति* ॥ एकदेशाभावात् समुदायो गगनादावसिद्ध इत्यर्थः । द्वितीय आह—*अभिलापस्य चेति* ॥ अभिज्ञाभिलापरूपव्यवहारव्याप्यत्वरूपं फलव्याप्यत्वं हेतुरात्मनि व्यभिचारीत्यर्थः ॥ *नित्यातीन्द्रिय इति* ॥ अपरोक्षैकरसचैतन्यरूपफलव्याप्यत्वे नित्यातीन्द्रियस्याप्यपरोक्षत्वं स्यात्, इत्यतो न तत्र हेतुरस्तीति भावः । नित्यातीन्द्रियस्याप्यपरोक्षत्वमस्तीति शङ्कते—*तदपीति*॥ तथाच नासिद्धिरिति भावः ॥ *योगिप्रत्यक्षगम्यतयेति* ॥ "यथाप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनादि"ति न्यायेन योगिनो योगप्रभावेण दूरादपि पश्यन्ति, शृण्वन्ति चेत्येव, न पुनश्चक्षुषाऽपि शृण्वन्ति, श्रोत्रेणापि पश्यन्ति, अतीन्द्रियमपि चेन्द्रियं कुर्वन्ति ; स्वभावातिक्रमापातादित्यर्थः॥ *पक्षैकदेश इति*॥ *ननु* साक्षिवेद्यान्तःकरणवृत्तेरनङ्गीकारेऽप्यविद्यावृत्तेः परैरङ्गीकारादविद्यावृत्तिप्रतिफलितचिदपि साध्यत्वात् फलम्, इत्यविद्यादिशुक्तिरूप्याद्यपि फलव्याप्यमेवेति चेत्, *न* तथाप्यविद्यावृत्त्यादावसिद्धिरेव ; अन्योन्याश्रयादेः, अविद्यावृत्तौ मानाभावाच्चेत्यर्थः ॥

न्यायामृतकण्टकोद्धारः

व्यवहारोऽप्यादानादिरूपो वा विवक्षितः ? अभिलापरूपो वा ? आद्य आह—*आदानादेरिति* ॥ तथाच भागासिद्धिः । द्वितीय आह—*अभिलापरूपस्येति* ॥ तथाचानैकान्त्यमिति भावः । *पक्षैकदेश इति* ॥ नच—अविद्यावृत्तिप्रतिफलितविषयत्वस्य तत्र सत्त्वाद् न भागासिद्ध्यादीति—वाच्यम् ; तत्रैवा-

---

किं नाम ? करणसामर्थ्याद् यदुल्लेखि ज्ञानमुपजायते, स तस्य विषय इत्युच्यत इति—चेत्, अथ ज्ञानं प्रति कर्मत्वमपि किमधिकं पश्यसि ? कर्तृकारकाद्यन्यत्वे सति ज्ञानजनकत्वमिति—चेत्, *न* ज्ञानजनकत्वमित्यत्र किं ज्ञानत्वावच्छिन्नज्ञानजनकत्वं विवक्षितम् ? अपरोक्षज्ञानजनकत्वं वा ? नाद्यः ; ज्ञानं प्रत्यर्थस्य व्यभिचारेण कस्मिन्नपि ज्ञाने जनकत्वासम्भवात् । न द्वितीयः ; यद्यप्यपरोक्षज्ञाने विषयस्य नियतपूर्ववृत्तित्वमस्ति, तथापि नानन्यथासिद्धिः । विषयस्येन्द्रियसन्निकर्षनिष्पादकत्वेनान्यथासिद्धत्वात् । नच—वर्तमानविषयकजन्यप्रत्यक्षत्वावच्छेदेनाव्यभिचारादनन्यथासिद्धेश्च कर्मणोऽपि हेतुत्वम् ; अन्यथा विषयसन्निकर्षनिष्पादकत्वेन करणस्याप्यनन्यथासिद्धतया जनकत्वं न स्यादिति—वाच्यम् ; वर्तमानविषयकानुमितित्वावच्छेदेनापि कर्मणो हेतुत्वापत्तेः, सामान्यरूपतया लघुभूतविद्यमानविषयकज्ञानत्वावच्छेदेनापि जनकत्वापत्तेश्च । तत्र विषयस्य व्याप्त्यादिलक्षणसन्निकर्षनिष्पादकत्वेनान्यथासिद्धत्वेऽत्रापि तथाऽस्तु । ननु—एवमिन्द्रियस्यापि विषयसन्निकर्षजनकत्वेनान्यथासिद्धतयाऽजनकत्वमस्त्वित्युक्तमिति—वाच्यम् ; या क्रिया, सा करणजन्या, इति क्रियायाः करणजन्यत्वनियमेन व्यापारवत एव च करणत्वेन सन्निकर्षजनकस्यापि चक्षुरादेर्ज्ञानजनकत्वं युक्तम्, इति न विषयस्य करणसमानयोगक्षेमवत्ता । *ननु* चक्षुरादेः करणस्य करणत्वसिद्ध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्वम्, एवमेव घटादेः कर्मत्वसिद्ध्यर्थं करणसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्वमस्तु ; अन्यथा करणत्ववत् कर्मत्वमपि न स्यादिति—चेत्, *न* ; नहि

### न्यायामृतम्

नापि साधारणमिति तृतीयः पक्षः ; ब्रह्मणि वृत्तिव्याप्यत्वरूपविशेषस्य सत्त्वेन

### अद्वैतसिद्धिः

एतेन वृत्तिव्याप्य-फलव्याप्ययोः साधारणं व्यवहारप्रयोजकविषयत्वरूपं दृश्यत्वमपि हेतुः ; ब्रह्मणि

### न्यायामृतकण्टकोद्धारः

सिद्धसाध्यापत्तेः । *ब्रह्मणीति* ॥ नच—ब्रह्मणि वृत्ति-फलव्याप्यत्वं नास्तीति—वाच्यम् ; उक्तरीत्या साधितत्वात् ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*प्रयोजकविषयत्वेति* ॥ प्रयोजकयोश्चित्तादात्म्य-वृत्तिविषयत्वयोरन्यतरेत्यर्थः । चित्तादात्म्ये वृत्तेराकारे च विषयतात्वस्यैकस्याभावेनोक्तान्यतरत्वरूपेणैव हेतुतेति भावः । तुच्छान्यविशेष्यकेऽस्तित्वप्रकारके व्यवहारे

### सिद्धिव्याख्या

*एतेनेति* ॥ वृत्तिव्याप्य-फलव्याप्यशब्दौ पूर्वमेव व्याकृतौ, तयोः *साधारणम्=अनुगतमित्यर्थः । *व्यवहारप्रयोजकविषयत्वं वृत्तिव्याप्यत्वफलव्याप्यत्वान्यतरत्वमित्यर्थः । एतच्छब्दार्थमाह—*ब्रह्मणीति* ॥ ब्रह्मणि व्यभिचारपरिहारोपायकथनेनेत्यर्थः । यदि ब्रह्मणि वृत्तिव्याप्यत्वरूपविशेष्यस्य सत्त्वम्, तदा सामान्यस्यापि सत्त्वाद्

### विट्ठलेशीयटिप्पणी

वृत्तिविशेषणमुपादाय ब्रह्मांशे किञ्चिद्प्रकारकसोपाख्यधर्मप्रकारकवृत्तिविषयत्वे सोपाख्यत्वसमानाधिकरणं यद् ब्रह्मांशे किञ्चित्प्रकारकवृत्तिविशेष्यत्वं तत्र वा तात्पर्यात् । *मूले*—'साधारणं वे'त्यनेन पूर्वोपेक्षितं दृश्यत्वपदार्थं परिष्करोति —*एतेनेति* ॥ ब्रह्म-तुच्छयोर्व्यभिचारवारणोपायकथनेनेत्यर्थः । *साधारणत्वम्=उभयवृत्तित्वम् । तत्रोभयपदार्थं प्रकृतमाह—*वृत्तिव्याप्य-फलव्याप्ययोरिति* ॥ *साधारणमिति* ॥ तदुभयवृत्तीति पदत्रिकार्थः । विशिष्टहेतुतावच्छेदकं दर्शयति—*व्यवहारेति* ॥ अस्तीतिव्यवहारेत्यर्थः । अत्र वृत्तिप्रतिबिम्बितचैतन्यविषयत्व-वृत्तिविषयत्वयोरेकजातीयत्वमभिप्रेत्य चिद्वृत्त्योरेकस्य ज्ञानत्वस्याभावेन ज्ञानीयत्वमपहाय व्यवहारप्रयोजकत्वसहितविषयतात्वेनानुगतरूपेण हेतुत्वोक्तेति यथाश्रुते प्रतीयते, तद् निष्कर्षयति—*प्रयोजकयोरिति* ॥ यथाश्रुतोपेक्षाबीजमाह—*चित इति* ॥ *अन्यतरत्वरूपेणैवेति* ॥ नच चित्तादात्म्यं व्यर्थम् ; साधारणपक्षपरिष्कारार्थं तत्सार्थक्यात् । न चैवमपि वृत्तिविषयत्वत्वावच्छिन्नातिरिक्तांशवैयर्थ्येन तद्घटितस्य हेतुत्वासंभवः ; चित्तादात्म्य-वृत्तिविषयत्वोभयमात्रविशेष्यकज्ञानं तद्व्यक्तित्वेन निवेश्य तद्विशेष्यत्वरूपान्यतरत्वेन हेतुत्वमुपगम्य वैयर्थ्यशङ्कायाः पूर्वं परिहृतत्वात् । व्यवहारप्रयोजकत्वं तूक्तोभयपरिचायकमात्रम् । इदं चित्तादात्म्य उपपादयति—*तुच्छान्यविशेष्यक इति* ॥ तुच्छे व्यभिचारशङ्कावारणाय स्वरूपकीर्तनमिदम् ; तुच्छेऽस्तित्वव्यवहाराभावेन कार्यतावच्छेदके तत्प्रवेशे तत्प्रयोजनाभावात् । नच—इदमेव कार्यतावच्छेदके प्रवेश्यताम्, न त्वस्तित्वप्रकारकत्वमिति—वाच्यम् ; यतस्तत्प्रकारकव्यवहारे तत्प्रकारकचिद् हेतुः,

---

करणत्वमिव कर्मत्वमपि व्यापारवत्त्वम् ; अतीतादिविषयकशाब्दादिज्ञानकर्मण्यव्याप्तेरिति । यथोक्तं तत्त्वोद्योतटीकायाम्—"यत्र शाब्दादौ ज्ञाने विनापि विषयसत्त्वेन करणसन्निकर्षोत्पत्तिः, तत्रासतोऽपि कर्मत्वे किमनुपपन्नम् ?" इति । *ननु* विनाऽपि विषयसत्त्वं सन्निकर्षोत्पत्तिरिति कथमुच्यते ? कथं वा शाब्दानुमितिरूपज्ञानस्थले सन्निकर्षापेक्षा ? इति चेन्, *न* ; नहि सन्निकर्षो विषयसत्त्वव्याप्यः ; सामान्यादेरतीतादिविषयप्रत्यासत्तित्वाभ्युपगमात्, न वा शब्दादिकमसन्निकृष्टकरणम् ; घटशब्दादिना पटादेः, धूमेन घटादेरपि बोधप्रसङ्गात् । नच—शक्तिव्याप्त्यादिकमेवातिप्रसङ्गभञ्जकमिति—वाच्यम् ; तस्यैव सन्निकर्षशब्दार्थत्वोपगमात् । *ननु* एवं पद्धत्यादिविरोधः ; तत्र प्रमातृ-प्रमेयव्यवच्छेदार्थं साधनग्रहणमित्युक्त्या प्रमेयापरपर्यायस्य विषयस्यापि जनकत्वाङ्गीकारात्—इति चेत्, *न* ; तस्य पररीत्याऽङ्गीकारवादत्वादित्यवसेयम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

चितस्तादात्म्यसम्बन्धेन हेतुत्वम्। चिद्विशेष्यकेऽस्तित्वस्य व्यवहारेऽसत्त्वापादकस्याज्ञानस्य विषयत्वसम्बन्धेन प्रतिबन्धकत्वम्। दृश्यविशेष्यकोक्तव्यवहारे विषयतावच्छेदकत्वसम्बन्धेन तस्य प्रतिबन्धकत्वम्। नच—तादात्म्यसम्बन्धेन चितश्चित्यसत्त्वात् तत्रोक्तव्यवहारस्योत्पत्त्यसम्भव इति—वाच्यम्; उक्तव्यवहारविषये शुद्धचित्युक्तव्यवहारकारणत्वाद्युपहितचितस्तादात्म्येन सत्त्वात्। न च—उक्तप्रतिबन्धकाभावेनैवोक्तव्यवहारजननसम्भवात् चितस्तत्र कारणत्वकल्पनं व्यर्थमिति—वाच्यम्; प्रतिबन्धकेन हि कारणे शक्तिस्तिरस्क्रियते, नतु तदभावः कारणम्; तथाचासाधारणं कारणं चिदेव। किंचोक्तप्रतिबन्धकाभावस्तुच्छेऽप्यस्तीति तत्राप्युक्तव्यवहारापत्त्या चित्तादात्म्यमवश्यं तत्प्रयोजकम्, तुच्छविषयकशब्दप्रयोगादिव्यवहारे तु विकल्परूपवृत्तिविषयत्वमिति भावः।

विट्ठलेशीयटिप्पणी

यथा घटत्वादिप्रकारकव्यवहारे घटत्वादिप्रकारिकैव चिद् हेतुः, इत्यस्तित्वप्रकारकव्यवहारेऽस्तित्वप्रकारिकैव चिद् हेतुः, इत्यस्तित्वाप्रकारकचितौऽस्तित्वप्रकारकव्यवहारो न स्यात्, इति तदुपपत्तये तदुपादानस्यावश्यकत्वात्। कार्यतावच्छेदकसम्बन्धश्चात्र विशेष्यतेति ज्ञेयम्। एवं च तुच्छे चित्तादात्म्यरूपकारणविरहाद् नास्तित्वप्रकारकव्यवहाररूपकार्योत्पत्तिरित्युक्तहेतुत्वकल्पनफलमिति बोध्यम्। वृत्तिविषयत्वे व्यवहारप्रयोजकत्वमुपपादयितुमाह—*चिद्विशेष्यक इति*॥ तुच्छेऽस्तित्वव्यवहारस्य चित्तादात्म्यरूपकारणाभावादेव वारणाद् न प्रतिबन्धकापेक्षा, इति चिद्विशेष्यकत्वमुक्तम्। चैतन्येऽसत्त्वापादकस्यासत्त्वारोपजनकस्याज्ञानस्य विषयत्वसत्त्वे कस्यापि व्यवहारस्यानुत्पत्त्याऽस्तित्वस्येत्युपलक्षणं जगत्कारणत्वादिधर्मस्य। *यद्वा*—यथाऽसति सत्त्वज्ञानं कदाऽपि नास्ति, तथा चिदात्मनि सत्त्वव्यवहारः सर्वदैवास्ति; 'अहमस्मि' 'ब्रह्मास्ती'ति प्रतीतेः सर्वदैव सत्त्वात्, इत्याशयेनास्तित्वस्येत्युक्तम्। उक्तव्यवहारप्रतिबन्धकत्वं चोक्ताज्ञानस्य सम्भवमात्रेणोक्तम्, अतः सच्चिदंशे नाज्ञानमिति पूर्वोक्त्या न विरोध इति ध्येयम्। दृश्यस्य नाज्ञानविषयत्वम्; जडे आवरणकृत्याभावात्, किंतु घटादिदृश्योपहितचैतन्यस्यैव, इति दृश्यस्याज्ञानविषयतावच्छेदकत्वमेव, इति तेनैव सम्बन्धेनाज्ञानस्य दृश्यधर्मिकोक्तव्यवहारे प्रतिबन्धकतामाह—*दृश्यविशेष्यकेति*॥ *उक्तव्यवहार इति*॥ अस्तित्वादिप्रकारकव्यवहार इत्यर्थः। *प्रतिबन्धकत्वमिति*॥ तथाचेदृशप्रतिबन्धकविघटकतयोक्ताज्ञानविरोधिसत्त्वप्रकारवृत्तिविषयत्वस्योक्तव्यवहारप्रयोजकत्वमिति भावः। तथापि व्यवहारे वृत्तिविषयत्वसाक्षात्प्रयोजकताया अनुपदं वक्ष्यमाणत्वाद् इदानीं प्रतिबन्धकविघटकतयैव तदुक्तम्। *चितश्चितीति*। स्वतादात्म्यस्य स्वस्मिन्नसम्भवादिति भावः। यद्यपि पूर्वमेवैतच्छङ्कापरिहाराय व्यवहारपूर्वकालोपहितेचित्तादात्म्यसम्भव उक्तः; तथाप्यत्र तथोक्त्या शुद्धचिति न व्यवहारोपपादनसम्भवः, इति प्रकारान्तरेणात्र समाधानमिति ध्वनयति—*उक्तव्यवहारविषये शुद्धचितीति*॥ *उपहितचित इति*॥ उपहित-शुद्धयोर्भेदेन तादात्म्यसम्भवादिति भावः॥ *व्यर्थमिति*॥ नच—उक्तप्रतिबन्धकनिवृत्त्यर्थं सत्त्वप्रकारकवृत्तिरावश्यिका, तदर्थं च चित्तादात्म्यमावश्यकम्; अन्यथा तुच्छे तत्प्रकारकप्रतीत्यापत्तेरिति—वाच्यम्; उक्तस्वतःसिद्धोक्तप्रतिबन्धकाभावस्थल उक्तरीत्या चित्तादात्म्यस्यानावश्यकत्वात्। अतिरिक्तशक्तिवादिमतेनाह—*प्रतिबन्धकेन हीति*॥ कारणनिष्ठशक्तिविघटकत्वमेव प्रतिबन्धकत्वम्, नतु कारणीभूताभावप्रतियोगित्वमिति भावः। *ननु* अतिरिक्तशक्त्यनङ्गीकारमत उक्तप्रतियोगित्वस्यैव प्रतिबन्धकतारूपत्वात् चित्तादात्म्यकारणं विनाऽपि प्रतिबन्धकाभावस्य कारणत्वनिर्वाहात् चित्तादात्म्यकारणत्वं व्यर्थमेवेत्यत आह—*किंचेति*॥ *तत्रापि=तुच्छेऽपि। *उक्तेति*॥ अस्तीतीत्यर्थः। *आपत्त्येति*॥ तद्वारणार्थमिति शेषः। *तत्प्रयोजकम्=अस्तीतिव्यवहारप्रयोजकम्। *ननु* तथापि शब्दप्रयोगरूपव्यवहारसामान्ये वृत्तिविषयत्वसामान्यस्य साक्षात्कारणत्वं किमर्थम्? अत आह—*तुच्छविषयकेति*॥ चित्तादात्म्यशून्येत्यादिः। *शब्दप्रयोगादीति*॥ प्रवृत्त्यादिव्यवहाराभावादिति भावः। आदिना तुच्छाभावप्रतीतौ प्रतियोगितया विषयत्वम्। *विकल्परूपेति*॥ अयं च विकल्पः पूर्वशब्दजन्य उत्तरशब्दहेतुरिति बोध्यम्।

न्यायामृतम्

(दृश्यत्वरूप)सामान्यस्यापि सत्त्वात्। *ननु* अस्तु तर्हि चतुर्थः ; अतीतादेरपि कदाचित् स्वाकार-वृत्तिप्रतिफलितचिद्विषयत्वात्, अविद्यादेरपि साक्षिविषयत्वात्। नित्यातीन्द्रियस्यापि ज्ञातत्वेनाज्ञातत्वेन वा साक्षिविषयत्वात्। दृग्रूपा(पस्या)त्मनस्तु तदविषयत्वादिति चेत्, *न* ; नित्यातीन्द्रियं

अद्वैतसिद्धिः

तुच्छे च व्यभिचारपरिहारोपायस्योक्तत्वात्। यद्वा—दृश्यत्वं चिद्विषयत्वम्, तच्च यथाकथंचित्

तरङ्गिणी

नित्यातीन्द्रियमिति* ॥ नित्यातीन्द्रियवद् ब्रह्मणोऽपि वाऽज्ञातत्वेन ज्ञातत्वेन वा साक्षिविषयत्वस्य त्वयाऽप्यङ्गीकार्यत्वाद् ब्रह्मणि व्यभिचार इत्यर्थः। *ननु* न चिद्रूपस्य शुद्धब्रह्मणश्चिद्विषयत्वम्; भेदा-

न्यायामृतकण्टकोद्धारः

*नित्यातीन्द्रियमिति* ॥ अनुभवेन चिद्विषयत्वं ब्रह्मणोऽङ्गीकर्तव्यम्। एवंविधानुभवेऽपि यदि ब्रह्मणश्चिद्विषयत्वं नाङ्गीक्रियते, तर्हि धर्मादावपि न स्यात्। तथाच व्यभिचारः। ब्रह्मणश्चिद्विषयत्वे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*यथाकथञ्चित् = साक्षात् परम्परासाधारणम्।

न्यायामृतसौगन्ध्यम्

*ननु*—वृत्तिव्याप्य-फलव्याप्ययोः साधारणम्, व्यवहारप्रयोजकविषयत्वरूपं दृश्यत्वम्। तच्च न

सिद्धिव्याख्या

व्यभिचार इति वक्तुं शक्यते। नच तदस्तीत्युक्तत्वादिति भावः। *ननु*—अतीतानागतयोश्चिद्विषयत्वाभावादुभयत्रा-सिद्धिरित्याशङ्क्याह—*तच्चेति*॥ *यथाकथञ्चिदिति*॥ अतीतादेरविद्यमानतादशायां चिदसम्बन्धित्वेऽपि विद्यमानता-दशायां चित्सम्बन्धित्वम्। यदा कदाचित् चित्सम्बन्धित्वं चिद्विषयत्वम्। तच्च तदुभयत्राप्यस्तीति नासिद्धिः। *तदुक्तम्*—"अतीतादेरपि कदाचित् स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वादि"ति ॥ अत एवाविद्यान्तःकरण-तद्धर्मा-दावपि नासिद्धिः ; तेषामपि साक्षिविषयत्वात्। नचैवमपि—नित्यातीन्द्रियेऽसिद्धिः, तस्यापरोक्षैकरसचैतन्य-सम्बन्धित्वेऽपरोक्षत्वापत्तेरिति—वाच्यम् ; कथञ्चिदित्यनेन तद्वारणात्। नित्यातीन्द्रियस्यापि ज्ञातत्वेनाज्ञात-त्वेन वा साक्षिविषयत्वादिति भावः। *ननु* तर्हि नित्यातीन्द्रियवद् ब्रह्मणोऽपि ज्ञातत्वेनाज्ञातत्वेन वा साक्षि-

विट्ठलेशीयटिप्पणी

एवं च चित्तादात्म्यरूपचिद्विषयत्व-वृत्त्याकाराख्यवृत्तिविषयत्वयोर्व्यवहारप्रयोजकत्वरूपपरिचायकसमन्वयः, निवेशस्तु तयोरन्यतरत्वेनेत्युक्तम्। *नन्वेवम्* ब्रह्मणि तुच्छे च व्यभिचारोऽत्राप्यस्तीत्यत आह मूले—*ब्रह्मणि तुच्छे चेति* ॥ *उपायस्येति* ॥ वृत्तौ शब्दाजन्यत्व-सप्रकारकत्वान्यतरविशेषणोपादानरूपस्येत्यर्थः। दृश्यत्वपदार्थविकल्पावसरे *कथंचित् तद्विषयत्वमित्यस्य* आवृतानावृतसाधारणचिद्विषयत्वं चित्तादात्म्यमित्यर्थः। तत्रानावृतचिद्विषयत्वस्य स्वावच्छिन्नस्याज्ञानविषयत्वस्य भङ्गविशिष्टचिद्विषयत्वरूपस्य पूर्वं व्याख्यातस्यातीन्द्रिये गुरुत्वादौ प्रातिभासिके रजतादौ चाभावाद् भागासिद्धिः, इत्यत आवृतानावृतसाधारणेत्युक्तम्। तथा सति घटाकारवृत्त्या भग्नावरणकघटावच्छिन्नचैतन्य-तादात्म्यस्य गुरुत्वादाविदमाकारवृत्त्या भग्नावरणकशुक्त्यवच्छिन्नचैतन्यतादात्म्यस्य प्रातिभासिकरजतादौ च सत्त्वाद् न भागासिद्धिरित्युक्तप्रायम्। इदानीं *तच्च यथाकथंचित् चित्सम्बन्धित्वरूपं हेतुरिति* मूले यत् परिष्कृतम्, तत्र *यथाकथंचित्पदं* यदि पूर्वोक्तार्थकम्, तदा तुच्छे चित्सामान्यतादात्म्याभावेन व्यभिचारस्याप्रसक्त्या 'तुच्छे च व्यभिचारः परिहरणीयः' इत्युत्तरमूलासङ्गतिः, इत्यतः प्रकारान्तरेण तत्पदं व्याचष्टे टीकायाम्—*साक्षात् परम्परासाधारण-मिति* ॥ तत्र प्रातिभासिकरजतादेर्यदि शुक्तीदमंशावच्छिन्नचैतन्य एवाध्यासः, तस्यैवाज्ञानविषयत्वात्, तदा

### अद्वैतसिद्धिः

चित्सम्बन्धित्वरूपं हेतुः, तच्च न चैतन्ये ; अभेदे भेदनान्तरीयकस्य संबन्धस्याभावात्, अतो न

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*चैतन्ये = शुद्धचिति ॥ *अभेदे = अत्यन्ताभेदे । भेदनान्तरीयकस्य* ॥ विनाशित्वादिरूपं यद् ब्रह्मवैलक्षण्यं तद्व्याप्यस्येत्यर्थः । *सम्बन्धस्येति* ॥ चितं प्रति सम्बन्धतावच्छेदकं यत् चिदवृत्तित्वविशिष्ट-तादात्म्यत्वम्, तद्विशिष्टस्येर्थः । *एतेन*—'आनन्दं ब्रह्मणो रूपम्' 'चिद् ब्रह्मणो रूपम्' इत्येवं कल्पितभेदस्य

### न्यायामृतसौगन्ध्यम्

चैतन्ये ; अभेदे भेदनान्तरीयकस्य सम्बन्धस्याभावात्, अतो न व्यभिचारः । तुच्छे च व्यभिचारः

### सिद्धिव्याख्या

विषयत्वसम्भवाद् ब्रह्मणि व्यभिचार इत्याशङ्क्योक्तम्—*तच्च न चैतन्य इति* ॥ चित्सम्बन्धित्वरूपचिद्विषयत्वं न चितीत्यर्थः । *अभेद इति* ॥ भेदरहिते चैतन्ये भेदघटितस्य सम्बन्धस्याभावादित्यर्थः । ननु—भेदघटितसम्बन्धा-

### विठ्ठलेशीयटिप्पणी

तन्नोक्तचैतन्यस्य तादात्म्यसम्बन्धसत्त्वाद् न परम्परासम्बन्धनिवेशप्रयोजनम् ; यदि तस्य स्वाधिकसत्ताके शुक्तित्वे-माज्ञानविषय इदन्त्वविशिष्ट एव तादात्म्येनाध्यासः, तदेदमवच्छिन्नचैतन्यस्य साक्षात्सम्बन्धासम्भवात् तदा तत्र भागासिद्धिवारणं स्वतादात्म्यापन्नेदंतादात्म्यरूपपरम्परासम्बन्धनिवेशप्रयोजनम् ; एवं च तुच्छे साक्षात् चितः सम्बन्धा-भावेऽपि स्वाश्रितवृत्तिविषयत्वरूपपरम्परासम्बन्धसत्त्वेन व्यभिचारं प्रसज्योक्तमूलस्यावतारणेन सङ्गमनं सङ्गच्छत इति बोध्यम् । *मूले—तच्चेति* ॥ शुद्धचित्सम्बन्धित्वं चेत्यर्थः । शुद्धचित्युपहितचित्सम्बन्धसम्भवाद् व्यभिचारवारणाय शुद्धचित एव हेतौ सम्बन्धप्रतियोगितया निवेशावश्यकत्वादिति भावः । उपहिते चित्सम्बन्ध-सम्भवादाह—*चैतन्ये शुद्धचितीति* ॥ भेदसहिष्णोरभेदस्यैव तादात्म्यरूपसम्बन्धत्वादाह—*अभेद इति* ॥ *अत्यन्ताभेद इति* ॥ शुद्धचिति शुद्धचित्प्रतियोगिकौपाधिकानौपाधिकभेदसाधारणभेदसामान्याभाववत्त्वेऽपि । 'भेद-नान्तरीयकस्ये'त्यत्र भेदो यद्यन्योन्याभावः, तदा तत्र प्रमाणाकाङ्क्षायां वैलक्षण्यं वक्तव्यम्, एवं नान्तरीयकपदस्य स्वकारणीभूतस्वोत्पत्त्यधिकरणदेश-कालनियतवृत्तिपरत्वेऽविद्या-चित्सम्बन्धासंग्रहः । किंच तुच्छे ब्रह्मान्योन्याभाव-सत्त्वात् चित्तादात्म्याभावप्रयोजकान्तरमन्वेषणीयं स्यात् । *वस्तुतस्तु*—'आनन्दो ब्रह्मणो रूपमि'त्यादिप्रतीत्या शुद्धचित्यपि शुद्धचिद्भेदस्य कल्पितस्य सत्त्वात् तत्र तत्सम्बन्धाभावस्यापि प्रयोजकलाभो वक्ष्यते ; कारणविरहस्य कार्यविरहप्रयोजकत्वाच्च, इत्यतो भेदपदं वैलक्षण्यपरतया नान्तरीयकपदं च व्याप्यपरतया व्याचष्टे—*भेदनान्तरीयक-स्येति* ॥ ब्रह्मवैलक्षण्यं यदि नाम ब्रह्मावर्तिधर्मवत्त्वम्, तदाऽसत्त्वमादाय तुच्छसंग्रहापत्त्योक्तदोषतादवस्थ्यम् ; अत एव न विशिष्यापारमार्थिकत्वं बाध्यत्वरूपं तद्वैलक्षण्यम्, इत्यभिप्रेत्याह—*विनाशित्वादिरूपमिति* ॥ अविद्याद्य-संग्राहकत्वाद् अन्यत्वमुपेक्षितम् । आदिना मिथ्यात्वपरिग्रहः । अनयोश्च तुच्छे विरहाद् नोक्तदोषतादवस्थ्यम्, ब्रह्मणि तु कल्पितस्यापि विनाशित्वादेः प्रतीत्यभावेनाभावाद् न ब्रह्मतादात्म्यमिति भावः । 'भेदनान्तरीयकस्ये'त्यत्र भेदपदस्य विनाशित्वादिपरत्वे ब्रह्मणि तदभावेऽपि कल्पितब्रह्मभेदवत् कल्पितब्रह्मतादात्म्यस्यापि सत्त्वाद् नान्तरीयक-पदार्थतद्व्याप्यत्वस्य ब्रह्मसम्बन्धे न भङ्गः, तदभावस्य तत्संबन्धाभावप्रयोजकत्वानुपपत्तिश्च, इत्यतः संबन्धपदं संबन्ध-तावच्छेदकावच्छिन्नपरतया व्याचष्टे—*संबन्धस्येतीति* ॥ चिन्निष्ठकल्पितचित्तादात्म्यादिसंबन्धसाधारणतादात्म्यत्वादि-मात्रस्य संबन्धतावच्छेदकत्वे उक्तदोषतादवस्थ्यम्, शुद्धब्रह्मण्युक्तकल्पितचित्संबन्धसत्त्वाद् व्यभिचारश्चेत्यतस्तदुभया-भूतं संबन्धतावच्छेदकविशेषणमाह—*चिदवृत्तित्वविशिष्टेति* ॥ *तादात्म्यत्वमिति* ॥ परम्पराविशेषणत्वं चेति शेषः । *एतेन=भेदनान्तरीयकपद-संबन्धपदयोरुक्तव्याख्यानेन । *'आनन्दो ब्रह्मणो रूपम्' 'चिद् ब्रह्मणो रूप-मिति* ॥ अत्राङ्गुलीचलितचक्षुर्जन्यप्रत्यक्षे द्विचन्द्रभ्रम इवानन्दब्रह्म-चिद्ब्रह्मपदार्थयोः—'आनन्दो ब्रह्म' 'चिद् ब्रह्मेति

न्यायामृतम्

पूर्वं न ज्ञातम्, इदानीं शब्देन ज्ञातमि'तिवत् 'शुद्धं ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमि'त्यनुभवेन ब्रह्मणि व्यभिचारात्, तद्व्यवहारजनने तद्विषयत्वस्य तन्त्रत्वेन स्वव्यवहारहेतोश्चितोऽप्यभिधानस्याभिधेयत्ववत् चिद्विषयत्वाच्च। कल्पितभेदेन बिम्ब-प्रतिबिम्बयोर्लिङ्ग-लिङ्गिभाववद् जीव-ब्रह्मणोर्ज्ञातृ-ज्ञेयभाववच्चात्मनोऽपि स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसंभवाच्च। अन्यथा तया तदज्ञाननिवृत्त्ययोगात्। तदाकारवृत्त्यैव च तन्निवृत्तौ घटादावपि तथात्वापातेनासिद्धेः,

तरङ्गिणी

भावादित्याशङ्क्य निराकरोति—*तद्व्यवहारजनन इति* ॥ तदविषयत्वे तद्विषयकव्यवहाराजनकत्वमेव प्रयोजकम्, नतु तदभिन्नत्वम्, अभिधेयत्वरूपाभिधानविषयेऽभिधाने व्यभिचारात्। तथाच भेदाभावरूपहेतौ तद्विषयकव्यवहाराजनकत्वमुपाधिरित्यर्थः। असिद्धिमप्याह—*कल्पितभेदेनेति* ॥ कल्पितभेदस्य सत्त्वाद् भेदाभावरूपहेतुरसिद्ध इत्यर्थः। *ननु* कल्पितभेदो न भेदकार्यक्षमः, इत्यत उक्तम्—*लिङ्ग-लिङ्गिभाववद् ज्ञातृ-ज्ञेयभाववच्चेति च* ॥ *ननु* विषय-विषयिणोः कल्पितभेदस्याप्यभावे कथं विषय-विषयिभाव इति ? अत उक्तम्—*स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसम्भवाच्चेति* ॥ वृत्तिप्रतिफलितचितः शुद्धात्मनः सकाशात् कल्पितभेदवत्त्वेन विषयत्वं सम्भवतीत्यर्थः। *यद्वा*—पूर्वोदाहृतानुभवबलात् चिद्रूपस्याप्यात्मनश्चिद्विषयत्वमज्ञातत्वादिना नित्यातीन्द्रियवत् परैरङ्गीकर्तव्यमित्येव न, अपितु घटादिवदात्मनः स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमपि स्वीकर्तव्यमेव। तथाच पूर्वोक्तस्य फलव्याप्यत्वस्य हेतोरपि शुद्धे ब्रह्मणि व्यभिचारश्चेत्यभिप्रायेण—*स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसम्भवाच्चेत्युक्तम्* ॥ अन्यथा चिद्विषयत्वेत्येवावक्ष्यत्। *ननु* आत्माकारवृत्तौ चितः प्रतिफलनेऽपि नात्मनः स्वाकारवृत्तिफलितचिद्विषयत्वमस्ति ; प्रयोजनाभावात्, इति नोक्तहेतोर्व्यभिचार इत्यत आह—*अन्यथेति* ॥ *तया=स्वाकारवृत्तिप्रतिफलितचिता। घटादाविवात्मन्यप्यस्त्येव स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वस्य प्रयोजनं स्वविषयकाज्ञाननिवृत्तिरित्यर्थः। *ननु* आत्मनश्चिद्विषयत्वं विनाऽप्यात्माकारवृत्तेरेवात्माज्ञाननिवर्तकत्वमस्त्वित्यत आह—*तदाकारवृत्त्यैव चेति* ॥ घटादेरपि स्वाज्ञाननिवर्तकस्वाकारवृत्तिविषयत्वमात्रमेव, नतु चिद्विषयत्वमित्यापातेनासिद्धिरित्यर्थः। *ननु* घटाकारवृत्तौ चित्प्रतिफलनं विना नाज्ञाननिवृत्तिः ; वृत्तिमात्रस्याज्ञानानिवर्तकत्वात्, आत्माकारवृत्तौ तु चित्प्रतिफलनं विनाऽपि वृत्तिमात्रेणात्मस्वरूपस्फुरणसहितेनाज्ञाननिवृत्त्युपपत्तिः, अतो नात्मनि व्यभिचारः, न वा घटादावसिद्धिः, इत्यत आह—*अज्ञानाविरोधीति* ॥ घटाकारवृत्तौ चित्प्रतिफलनं विनाऽपि वृत्तिमात्रेण घटस्वरूपस्फुरणसहितेनाज्ञाननिवृत्तिरित्यस्यापि वक्तुं सुवचत्वेनासिद्धिस्तदवस्थेत्यर्थः। घटो न स्फुरणरूपः, तस्मिन् सत्यप्यज्ञानदर्शनात्, इति यदि, तदाऽऽत्माऽपि न स्फुरणरूपः ; तस्मिन् सत्यप्यज्ञानदर्शनादिति तुल्यम्। केवल आत्मा स्फुरणरूपोऽपि नाज्ञानविरोधी, किन्तु वृत्तिसहित इति यदि, तदाऽस्फुरणरूपोऽपि घटः केवलो नाज्ञानविरोधी, किन्तु वृत्तिसहित इत्यपि तुल्यमित्यभि-

न्यायामृतकण्टकोद्धारः

हेत्वन्तरमाह—*तद्व्यवहारेति* ॥ ब्रह्म, चिद्विषयः, चिज्जन्यव्यवहारविषयत्वात्, घटवदित्यर्थः। स्वस्य स्वविषयत्वे दृष्टान्तः—*अभिधानस्याभिधेयत्ववदिति* ॥ *ननु* अभेदे कथं विषय-विषयिभाव इति ? अत आह—*कल्पितभेदेनेति*। *अन्यथेति* ॥ यद्यात्मनश्चिद्विषयत्वं नाङ्गीक्रियत इत्यर्थः। *तया=ब्रह्मवृत्त्या। *ननु* ब्रह्मणश्चिद्विषयत्वाभावेऽपि वृत्त्यैव तदज्ञाननिवृत्तौ बाधकाभावः, इत्यतो बाधकमस्तीत्याह—*तदाकारेति* ॥ *ननु* आत्मनः स्फुरणरूपत्वात् तत्र वृत्त्याऽज्ञाननिवृत्तिः, घटादेस्तदभावाद् न तया तदज्ञाननिवृत्तिः। नच—ब्रह्मणः स्फुरणरूपत्वेनैवाज्ञाननिवृत्तिरस्तु, किं वृत्त्येति—वाच्यम् ; तस्य सर्वदा

## न्यायामृतम्

अज्ञानाविरोधिस्फुरणरूपत्वस्य चात्मनीव घटादावपि सुवचत्वात्, अस्फुरणरूपेष्वतीन्द्रियकेष्वपि (१) वृत्तिविषयत्वमात्रेण व्यवहारादिसम्भवे तत्प्रतिफलितचैतन्यविषयत्वस्य, तदभिव्यक्तचैतन्यविषयत्वस्य वा कल्पनायोगाच्च, घटादावन्धकारनिवर्तकप्रभाया इवाज्ञानाविरोधिज्ञानस्याननुभवाच्च ;

## तरङ्गिणी

प्रायेणोक्तम्—*अज्ञानाविरोधिस्फुरणरूपत्वस्य चेति* ॥ तथाचासिद्धिभयेन घटाकारवृत्ताविवात्माकारवृत्तावपि चित्प्रतिफलनमवश्यमङ्गीकरणीयम् । एवं चात्माऽपि घटादिरिव स्वाकारवृत्तिप्रतिबिम्बितविषयः, इति शुद्धात्मनि निरुक्तहेतोर्व्यभिचार इत्यर्थः । एतावता घटादौ स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमभ्युपेत्य तन्न्यायेनैव शुद्धात्मनोऽपि स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमापाद्य शुद्धात्मनि व्यभिचार आपादितः, संप्रत्यात्मनीव घटादावपि स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वं नास्ति, तथाचासिद्धिरिति वक्तुं घटादौ स्वाकारेन्द्रियजन्यवृत्त्यतिरिक्तम्, स्वाकारवृत्तिप्रतिबिम्बितचैतन्यरूपं वा, तादृशवृत्त्यभिव्यक्तचैतन्यरूपं वा ज्ञानान्तरं नास्ति, प्रयोजनाभावादित्याह—*अस्फुरणरूपेष्वित्यादिना* ॥ तादृशवृत्तिरूपज्ञानातिरिक्तं तादृशचैतन्यरूपं ज्ञानं किं वृत्तिविषये घटादौ व्यवहारार्थं वा कल्प्यते ? अनुभवबलाद्वा ? श्रुतिबलाद्वा ? आपरोक्ष्यार्थं वा ? नाद्य इत्याह—*अफुरणरूपेष्विति* ॥ इन्द्रियजन्यान्तःकरणवृत्तावेव चित्प्रतिफलनम्, न त्वनुमित्यादिरूपान्तःकरणवृत्ताविति परसिद्धान्तः । तथाच यथाऽनुमित्यादिविषये वृत्तिप्रतिफलितचिद्विषयत्वाद्यभावेऽपि वन्ह्यादौ प्रवृत्तिरूपव्यवहारः, तथैन्द्रियकेष्वपीन्द्रियजन्यवृत्तिप्रतिफलितचिद्विषयत्वादिक विनाऽपि स्वाकारेन्द्रियजन्यवृत्तिमात्राद् घटादिषु व्यवहारोऽस्तु । एवञ्च वृत्तिप्रतिफलितचिद्विषयत्वादिकं घटादावसिद्धमित्यर्थः । *ननु* विज्ञानादिश्रुतेः स्फुरणरूपात्मादिवृत्तिमात्राद् मया व्यवहारस्याङ्गीकारेऽप्यनेवंविधे घटादौ न तद् युक्तम्, अत उक्तम्—*अस्फुरणेत्यादि* ॥ ऐन्द्रियवदतीन्द्रियस्याप्यस्फुरणरूपत्वाविशेषादित्यर्थः । अनुभवबलादिन्द्रियजन्यवृत्त्यतिरिक्तं निरुक्तचैतन्यरूपं ज्ञानं कल्प्यत इति द्वितीयपक्षं निराकरोति—*घटादाविति* ॥ घटादौ निरुक्तचैतन्यरूपज्ञानस्याननुभवात् । *ननु*—घटादावज्ञाननिवृत्तिः, सहेतुका ; निवृत्तित्वात् ; घटनिवृत्तिवदित्यनुमानेनेतरपरिशेषसहितेन निरुक्तचैतन्यरूपज्ञानमज्ञाननिवर्तकत्वेन घटादौ सिद्धमनुभूयत इति—चेत्, *न* ; विषयाकारेन्द्रियजन्यवृत्तिप्रतिबिम्बितचैतन्यरूपस्य विशिष्टस्याज्ञाननिवर्तकत्वं किं विशेष्यभूतचैतन्यस्याज्ञाननिवर्तकत्वेन वा ? विशेषणीभूततादृशवृत्तेरज्ञाननिवर्तकत्वेन वा ? मिलितस्योभयस्य तथात्वेन वा ? नाद्यः ; चैतन्यमात्रस्य त्वन्मतेऽज्ञानस्फोरकत्वेनाज्ञानाविरोधित्वात्, न द्वितीयः ; परिशेषासिद्धेः, न तृतीयः ; आवश्यकवृत्तेरेवाज्ञानविरोधित्वेनाज्ञाननिवर्तकत्वात्, तथाच घटादौ निरुक्तचैतन्यरूपज्ञानस्योक्तविधयाऽज्ञानविरोधित्वाभावाद् नोक्तानुमानेन तादृशचैतन्यरूपस्य ज्ञानस्यानुभव इति भावेनोक्तम्—*अज्ञानाविरोधीति* ॥

## न्यायामृतकण्टकोद्धारः

सत्वेनाज्ञानविरोधित्वाभावाद् न तेन ब्रह्माज्ञाननिवृत्तिः, अतो वृत्तौ तन्निवृत्तिरित्यत आह—*अज्ञानाविरोधीति* ॥ यदि ब्रह्मणि वृत्त्यैव तदज्ञाननिवृत्तिः, तदा घटादावपि वृत्त्यैवाज्ञाननिवृत्त्युपपत्तौ चैतन्यरूपज्ञानस्वीकारायोगः । किञ्च घटादिविषयकचैतन्यरूपज्ञानस्योररीकरणे व्यवहारो वा बलम् ? अनुभावो वा ? उत श्रुतिः ? विषयापरोक्ष्यं वा ? नाद्य इत्याह—*अस्फुरणरूपेष्विति* ॥ न द्वितीय इत्याह—*घटादाविति* ॥

---

(१) *ननु* घटाकारवृत्तौ चित्प्रतिफलनं विना नाज्ञाननिवृत्तिः ; घटाद्याकारवृत्तिमात्रस्याज्ञानानिवर्तकत्वात् । यथाहुः—

"तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् । सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेत् ॥" इति ।

न्यायामृतम्

अन्यथेच्छाद्यन्तःकरणवृत्तिप्रतिफलितं तद्व्यङ्ग्यं वेच्छादिकम्, परोक्षवृत्तिप्रतिफलितं तद्व्यङ्ग्यं वा परोक्षज्ञानम्, तमोनिवर्तकप्रभाप्रतिफलितं तद्व्यङ्ग्यं वा प्रभान्तरं च कल्प्यं स्यात्। "तमेव भान्तमि"ति श्रुत्यर्थस्तु प्रतिकर्मव्यवस्थाभङ्गे वक्ष्यते। चैतन्याविषयस्याप्यापरोक्ष्यं च

तरङ्गिणी

*अन्यथेति* ॥ अन्यथोपपन्ना ज्ञाननिवृत्तिरूपकार्यकम् अज्ञाननिवृत्तिरूपकार्याजनकमिन्द्रियजन्यवृत्तिव्यतिरिक्तं तत्प्रतिफलितचैतन्यरूपं वा तद्व्यङ्ग्यचैतन्यरूपं वा ज्ञानं यदि घटादौ कल्प्येत, तदाऽन्यथोपपन्नद्वेषेच्छादिनिवृत्तिकार्यकं द्वेषेच्छादिनिवृत्तिरूपकार्याजनकमिच्छाद्याकारान्तःकरणवृत्तिप्रतिफलितं तद्व्यङ्ग्यं वेच्छाद्वेषादिकं कल्प्यं स्यात्, तथाऽन्यथोपपन्नवन्ह्यादिप्रवृत्तिरूपकार्यकं वन्ह्यादिप्रवृत्तिरूपकार्याजनकं वन्ह्यादिपरोक्षवृत्तिप्रतिफलितं तद्व्यङ्ग्यं वा वन्ह्यादिविषयकपरोक्षवृत्त्यन्तरमभ्युपेयं स्यात्, तथाऽन्यथोपपन्नान्धकारनिवृत्तिकार्यमन्धकारनिवृत्तिरूपकार्याजनकं तमोनिवर्तकत्वेन प्रतीयमानप्रभाप्रतिफलितं तद्व्यङ्ग्यं वा प्रभान्तरं वा कल्प्यं स्यात्; द्वेषाविरोधीच्छा वा, इच्छाद्यविरोधिद्वेषादिकं वा वन्ह्यादिव्यवहाराहेतुर्वन्ह्यादिपरोक्षज्ञानं वा, अन्धकाराविरोधिप्रभा वा नास्ति; अननुभवात्, इति यदि, तदाऽज्ञानाविरोधिज्ञानमपि नास्ति; अननुभवात्। एवं च वृत्तिप्रतिफलितचिद्विषयत्वं न घटादीनाम्, इति तत्रासिद्धिर्दुरुद्धरेत्यर्थः। *ननु*—"तमेव भान्तमि"त्यादिश्रुतिबलात् तादृशचैतन्यरूपज्ञानसिद्धिरिति तृतीयं पक्षं निराकरोति—*तमेव भान्तमिति* ॥ आपरोक्ष्यार्थं निरुक्तचैतन्यरूपज्ञानकल्पनमिति चतुर्थपक्षेऽप्यापरोक्ष्यं किं परोक्षज्ञानभिन्नज्ञानत्वादिकं ज्ञानगतं वा? आहोस्वित् साक्षात्कृतत्वादिकमर्थगतं वा? नाद्य इत्याह—*चैतन्याविषयस्यापीति*॥ ज्ञानस्येति शेषः। चैतन्यम्, अविषयः अप्रतिबिम्बितं यस्मिन्, तस्य वृत्तिप्रतिबिम्बितचैतन्यभिन्नस्य, इन्द्रियजन्यवृत्तिमात्रस्येति यावत्। निरुक्तचैतन्यरूपज्ञानानङ्गीकारेऽपरोक्षज्ञानाभावापातेन परोक्षापरोक्षज्ञानविभागो न स्यात्, इति निरुक्तचैतन्यरूपज्ञानकल्पनमिति यत्, तदपि न; निरुक्तचैतन्यरूपज्ञानानङ्गीकारेऽपीन्द्रियजन्यवृत्तावेव साक्षात्कारत्वरूपविशेषेण परोक्षज्ञानभिन्नज्ञानत्वादिरूपापरोक्ष्यस्योपपत्तेः। न द्वितीय इत्याह—*चैतन्याविषयस्यापीति* ॥ घटादेरिति शेषः। चैतन्यं प्रत्यविषयः=चैतन्याविषयः, तस्य चैतन्याविषयस्यापि घटादेः साक्षात्कृतत्वरूपमापरोक्ष्यं वृत्तिगतेन साक्षात्कारत्वरूपविशेषेणैवोपपन्नमित्यन्वयः। विषयस्यापरोक्ष्यं परमते द्वेधा—बाह्येन्द्रियार्थसन्निकर्षाद् बाह्येन्द्रियद्वारा निःसृतान्तःकरणवृत्तिप्रतिबिम्बितचैतन्येन घटाधिष्ठानचैतन्यावरकाज्ञाननिवृत्तौ सत्यां घटाकारवृत्तिप्रतिबिम्बितचैतन्येनैव घटादिकं प्रकाश्यते। यथाहुः—"स्वच्छेऽन्तःकरणेऽज्ञानिप्रसृमरे नेत्रादिमार्गोद्गते तत्तद्ग्राह्यचयात्मना परिणते बिम्बीभवन्ती चितिरेकाऽप्यर्थ-मनोविशेषकवशाद् द्वैतं प्रपन्ना हरत्यज्ञानम्, प्रकटीकरोति विषयान्—ज्ञातं मयेदं त्विती"ति। अत एवातीन्द्रियस्थले निरुक्तचैतन्यरूप-

न्यायामृतकण्टकोद्धारः

*अन्यथेति* ॥ चैतन्यरूपज्ञानानुभवाभावेऽपि तदङ्गीकार इत्यर्थः। *इच्छाद्यन्तःकरणवृत्तिप्रतिफलितमिति* ॥ इच्छादिरूपा याऽन्तःकरणोपादानिका वृत्तिः, तत्प्रतिफलितमित्यर्थः। तृतीयं निराकरोति—*एवमिति* ॥ चतुर्थं परिहरति—*चैतन्याविषयस्येति* ॥ *ननु*—ज्ञानत्वस्य विषयगतज्ञातत्वप्रयोजकत्वे तस्येच्छादिसाधारणत्वादिच्छादिरूपवृत्तिविषयस्यापि ज्ञातत्वं किं

---

अतोऽन्तःकरणवृत्तिप्रतिफलितचिद्विषयत्वं घटादेर्वक्तव्यमिति चेत्, तर्ह्यात्मन्यपि वृत्तिमात्रस्याज्ञानानिवर्तकत्वादात्मनोऽप्यात्माकारवृत्तिप्रतिफलितचिद्विषयत्वं वाच्यमिति समम्। *ननु* आत्मनोऽन्तःकरणवृत्तिप्रतिफलितचिद्विषयत्वाभावेऽप्यात्मनः स्फुरणरूपत्वात् स्फुरणरूपात्माकारवृत्त्या तदज्ञाननिवृत्तिर्युक्तेति चेत्, तर्हि घटस्यापि स्फुरणरूपत्वात् स्फुरणरूपघटाकारवृत्त्यैवाज्ञाननिवृत्त्युपपत्तेरस्याप्यन्तःकरणवृत्तिप्रतिफलितचिद्विषयत्वं न स्यादिति समम्। *ननु* घटस्य स्फुरणरूपत्वे घटाज्ञानमेव न स्यादिति चेत्, तर्हि ब्रह्मणोऽपि स्फुरणरूपत्वे तदज्ञानमपि न स्यादिति समम्। *ननु* अज्ञानाविरोधि स्फुरणरूपं ब्रह्मेति

### न्यायामृतम्

**चैतन्याभिव्यञ्जकत्वार्थमावश्यकेनेन्द्रियजन्यत्वप्रयुक्तेन वृत्तिगतेन साक्षात्कारत्वरूपविशेषेणैवोपम् ; इच्छादिवृत्त्यनिष्ठेन परोक्षवृत्तिगतेन ज्ञानत्वरूपविशेषेण विषयस्य ज्ञातत्ववत् स्मृत्याद्यनिष्ठेनानुभवादि-**

### तरङ्गिणी

ज्ञानाभावादतीन्द्रियार्थाधिष्ठानचैतन्यावरकाज्ञाननिवृत्तिर्नास्ति, इत्यपरोक्षैकरसानावृतसंवित्तादात्म्येन स्फुरणविषयकत्वरूपमापरोक्ष्यं विषयस्य नास्ति, किन्तु केवलमर्थव्यवहारमात्रमिति । अस्मिन् पक्ष आध्यासिकसम्बन्धस्यातन्त्रत्वापातेनारुच्या द्वितीयः पक्षः । स यथा—निरुक्तवृत्तिप्रतिबिम्बितेन चैतन्येन घटाधिष्ठानचैतन्यावरकाज्ञाननिवृत्तौ सत्यां घटाद्यधिष्ठानचैतन्यस्यापरोक्षैकरसप्रमातृचैतन्येन सहैकोपाध्यवच्छेदेन तदभेदाभिव्यक्तौ तच्चैतन्यस्फुरणे सति तत्राध्यस्तस्य घटादेरप्यापरोक्ष्यमिति, तदुभयमपि न ; तादृशचैतन्यरूपज्ञाने प्रमाणाभावात्, वृत्त्यैवापरोक्ष्योपपत्तेः । अन्यथा तव मतेऽप्यपरोक्षवृत्तिवत् परोक्षवृत्तौ चित्प्रतिफलनं भवतु, तादृशवृत्त्या च स्वविषयधर्माद्यधिष्ठानचैतन्यावरकाज्ञाननिवृत्तिरपि भवतु, एवं चापरोक्षैकरसानावृतसंवित्तादात्म्येन स्फुरणविषयतयैव परोक्षवृत्तिविषयस्य धर्मादेरापरोक्ष्यमपि भवतु, तथा तद्विषयकपरोक्षवृत्तेरप्यपरोक्षैकरसचैतन्यविषयतयैवापरोक्ष्यमपि भवतु, इत्याद्यापादने कृत इन्द्रियजन्यत्वरूपविशेषाभावात्, परोक्षवृत्तौ त्विन्द्रियजन्यत्वरूपविशेषप्रयुक्तसाक्षात्कारत्वरूपजातिविशेषसद्भावात् चित्प्रतिफलनादि भवतीति समाधातव्यम् । तदेतद् निरुक्तचैतन्यरूपज्ञानानङ्गीकारे वृत्तिमात्राङ्गीकारेऽपि समानमित्यभिप्रायेणोक्तम्—*चैतन्याभिव्यञ्जकत्वार्थमावश्यकेनेति* ॥ *ननु* वृत्तिगतेन साक्षात्कारत्वरूपविशेषेण चैतन्याविषयस्यापि घटादेः साक्षात्कृतत्वरूपमापरोक्ष्यमुपपन्नमित्युक्तमयुक्तम्, कार्यगतानुगतधर्मस्यानुगतकारणप्रयोज्यत्वनियमेन तादृशकारणासंभवे तादृशो धर्मस्याप्यसिद्धेः, इत्यत उक्तम्—*इन्द्रियजन्यत्वप्रयुक्तेनेति* ॥ इन्द्रियत्वेनेन्द्रियजन्यत्वेनेत्यर्थः । अनुमितौ तु मनस्त्वेन मनइन्द्रियजन्यत्वम्, अतो न तत्र साक्षात्कारत्वप्रसङ्गः । नचैवं मनस्त्वेन मनोजन्यस्मृतेर्मानसत्ववदनुमितेरपि मानसत्वापत्तिरिति—वाच्यम् ; व्यापारवत्कारणनिरपेक्षमनोजन्यत्वेन मानसत्वमित्याहुः । साक्षात्कृतत्वरूपविषयापरोक्षे दृष्टान्तमाह—*इच्छादिवृत्त्यनिष्ठेनेति* ॥ चैतन्याविषयस्यापि विषयस्यापरोक्ष्यं साक्षात्कृतत्वरूपं ज्ञानगतेन साक्षात्कारत्वरूपविशेषेणैवोपपन्नमिति पूर्वेणैवान्वयः । *ननु* न वृत्तावपरोक्षत्वम् ; प्रमाणाभावात्, किंतु चैतन्यमेव तथा ; "यत्साक्षादपरोक्षाद् ब्रह्मे"तिश्रुतेः, इन्द्रियजन्यवृत्तौ तु चैतन्यरूपापरोक्षज्ञानसम्बन्धेनौपचारिकमपरोक्षत्वम्, अतस्तादृशचैतन्यरूपज्ञानानङ्गीकारे विषयस्य

### न्यायामृतकण्टकोद्धारः

**न स्यादिति ? अत उक्तम्—*इच्छादिवृत्त्यनिष्ठेनेति* ॥ इच्छाया ज्ञानत्वस्यैवाभावादिति भावः ।**

### विट्ठलेशीयटिप्पणी

**वाक्यतोऽत्यन्ताभिन्नत्वेन प्रमितयोर्ब्रह्मण इति षष्ठीरूपदोषवशात् तादात्म्यसंबन्धानां प्रयोज्यानामपि योग्यताभ्रमेण भानम् ; योग्यताभ्रमस्यैव शाब्दभ्रमे दोषत्वोक्तेः । यद्यपि षष्ठी तदधीनबोधे भेदद्वित्वसंबन्धसामान्यस्यैव बोधिका ;**

---

चेत्, तत्राह—अज्ञानेतीति सम्प्रदायः । किं च घटादौ स्वाकारेन्द्रियजन्यवृत्तिविषयत्वमात्रं विहाय तत्प्रतिबिम्बितचैतन्यरूपज्ञानविषयत्वं कस्मात् कल्प्यते ? किं घटादिव्यवहारार्थम् ? उतानुभवबलात् ? अथ श्रुतिबलात् ? यद्वा घटादौ विषये स्वतोऽपरोक्षाभावादपरोक्षचित्सम्बन्धेनैवापरोक्ष्यस्य वक्तव्यत्वाद् घटादिविषयस्यापरोक्ष्यसिद्ध्यर्थम् ? नाद्य इत्याह—*अस्फुरणरूपेष्वित्यादिना* ॥ इन्द्रियजन्यान्तःकरणवृत्तावेव चित्प्रतिफलनम्, न त्वनुमित्यादिरूपान्तःकरणवृत्ताविति हि परसिद्धान्तः । एवञ्च यथैवानुमित्यादिविषयेष्वतीन्द्रियेषु धर्मादिषु वृत्तिप्रतिफलितचिद्विषयत्वाभावेऽपि व्यवहारः, तथैन्द्रियकेष्वपि घटादिषु वृत्तिप्रतिफलितचिद्विषयत्वाभावेऽपि स्वाकारेन्द्रियजन्यवृत्तिविषयत्वमात्राद् व्यवहारोऽस्तु । एवं च व्यवहारान्यथानुपपत्त्या न वृत्तिप्रतिफलितचिद्विषयत्वं कल्प्यमित्यर्थः । *ननु* अतीन्द्रियार्थानां स्फुरणरूपत्वाद् वृत्तिप्रतिफलितचिद्विषयत्वाभावेऽपि व्यवहारो भविष्यतीति न दृष्टान्त इत्यत उक्तम्—*अस्फुरणरूपेष्विति* ॥

न्यायामृतम्

गतेन विशेषेण तद्विषयस्यानुभूतत्वानुमितत्वादिवच्च, अन्यथा (१) परोक्षत्वापरोक्षत्वे एकज्ञानत्वव्याप्ये न स्याताम् ॥

तरङ्गिणी

नापरोक्ष्यसिद्धिरित्यत आह—*अन्यथेति* ॥ इन्द्रियजन्यवृत्तौ स्वभावतोऽपरोक्षत्वानभ्युपगमे=चैतन्यविषयत्वप्रयुक्तौपचारिकापरोक्षत्वाभ्युपगमे। *परोक्षत्वम्=ज्ञानकरणकज्ञानत्वादिकम्* ॥ अपरोक्षत्वम्=परोक्षज्ञानभिन्नत्वादिकम्। इन्द्रियजन्यवृत्तावपरोक्षत्वं नास्तीति यदि, तदा चैतन्येऽपरोक्षत्वमेव, वृत्तौ तु परोक्षत्वमेव, इति परोक्षत्वापरोक्षत्वयोर्ज्ञानत्वव्याप्यत्वं न स्यादित्यर्थः। *ननु* वृत्तिचैतन्ययोरुभयोर्ज्ञानत्वमस्ति, इति तद्व्याप्यत्वं परोक्षत्वापरोक्षत्वयोर्भविष्यतीत्यत उक्तम्—*एकेति* ॥ परमते न वृत्तिचैतन्ययोरेकज्ञानत्वम्; चैतन्यस्य ज्ञप्तिरूपत्वात्, वृत्तेर्ज्ञप्तिकारणत्वात्, परोक्षत्वस्यौपचारिकज्ञानत्वव्याप्यत्वम्, अपरोक्षत्वस्य मुख्यज्ञानत्वव्याप्यत्वम्, उभयोस्तु नैकज्ञानत्वव्याप्यत्वं स्यात्, इन्द्रियजन्यवृत्तौ साक्षात्कारत्वनिबन्धनस्य स्वाभाविकापरोक्षत्वस्याभ्युपगमे तु परोक्षत्वापरोक्षत्वयोरेकवृत्तिनिष्ठज्ञानत्वेन व्याप्यत्वं संभवतीत्यर्थः। *ननु* तथापि नापरोक्षत्वस्य ज्ञानत्वव्याप्यत्वम्; वृत्तिनिष्ठज्ञानत्वाभाववति निरुक्तचैतन्यरूपज्ञानेऽप्यपरोक्षत्वस्य सत्त्वादिति—चेत्, *न*; इन्द्रियजन्यवृत्त्यतिरिक्ते तादृशचैतन्यरूपापरोक्षज्ञाने प्रमाणाभावादित्युक्तत्वात्, स्वमते त्वैन्द्रियवृत्तावतीन्द्रियविषयकवृत्तौ साक्षिरूपज्ञाने च मुख्यज्ञानत्वस्य सत्त्वात् परोक्षत्वापरोक्षत्वयोरेकज्ञानत्वव्याप्यत्वं सम्भवतीत्याशयः ॥

न्यायामृतकण्टकोद्धारः

एवमुत्तरत्रापि द्रष्टव्यम्। *अन्यथेति* ॥ यदि वृत्तावपरोक्षत्वं न स्यादित्यर्थः। *ननु* वृत्तौ परोक्षत्वम्, चिद्रूपे च ज्ञानेऽपरोक्षत्वम्, ज्ञानत्वं चोभयसाधारणम्। तथाच परोक्षत्वेऽपि वृत्तेः परोक्षत्वापरोक्षत्वयोरेकज्ञानव्याप्यत्वं स्यादिति—चेत्, *नैवं परस्याङ्गीकारः*; परेण हि चिद्रूपमेव ज्ञप्तिरूपं ज्ञानम्, वृत्तौ ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानत्वमित्यङ्गीकारेणोभयत्रैकविधज्ञानत्वानङ्गीकारात्। एवं च चिद्रूपं ज्ञानमपरोक्षमेव, वृत्तिरूपं ज्ञानं परोक्षमेव, इति कथमेकज्ञानत्वव्याप्यत्वं परोक्षत्वापरोक्षत्वयोः स्यात्? अत एवाह—*एकेति* ॥ नच—परोक्षत्वापरोक्षत्वयोरेकज्ञानत्वव्याप्यत्वमसिद्धमिति—वाच्यम्; ज्ञानं द्विविधम्—परोक्षमपरोक्षं चेति महर्षिभिर्विभजनेनैकविधज्ञानत्वव्याप्यत्वस्य सकलज्ञानसिद्धत्वादिति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादात्म्यस्य च चितश्चिति सत्त्वाद् व्यभिचारो दुर्वारः, अथ—प्रातीतिकान्यस्य चित्सम्बन्धस्य निवेशाद् न दोषः; उक्ततादात्म्यस्य प्रातीतिकत्वात्, इति—चेत्, *न*; साधनवैकल्यापत्तेः, इत्यादिकम्—अपास्तम्।

विट्ठलेशीयटिप्पणी

तथापि संबन्धानामन्तरङ्गत्वात् तादात्म्यस्यैव भानम्, एवं भेदस्य संबन्धान्वयितावच्छेदकतया संबन्धस्य भेदव्यापकत्वेन संभवदुपस्थितिकतया चिद्विषयत्वस्य भेदान्वयितावच्छेदकतया भेदव्यापकत्वेन संभवदुपस्थितिकतया चोक्तशाब्दभ्रमे भानं संभवति, इति तद्विषयीभूतभेद-तादात्म्ययोः प्रातिभासिकयोः स्वीकार आवश्यक इति भावः। तदाह—*इत्येवं कल्पितेति* ॥ शाब्दभ्रमविषयतया कल्पितेत्यर्थः। *तादात्म्यस्य चेति* ॥ चेन परम्पराविशेषस्येति बोध्यम्। *चितश्चितीति* (४९८) ॥ शुद्धचित इत्यर्थः। *साधनवैकल्यापत्तेरिति* ॥ दृष्टान्ते प्रातीतिकस्यैव चित्संबन्धस्य संभवात् चिदन्यतत्संबन्धस्यासंभवात् तदन्यचित्संबन्धरूपसाधनस्याभावादिति भावः। *इत्यादिकमिति* ॥ दृष्टिसृष्टिवादे साधनाप्रसिद्ध्यापत्तेरित्यादिपदार्थः। एवं नान्तरीयकपदस्योक्तयथाश्रुतार्थ उक्तदोषोऽप्यादिपदार्थः। *अपास्तमिति* ॥ यद्यपि प्रातीतिकः संबन्धः चितश्चित्यस्ति; तथापि तद्वारणाय हेतुभूतचित्संबन्धे चिद-

(१) अन्तःकरणवृत्तावपरोक्षत्वमनङ्गीकृत्य तस्याः परोक्षत्वमेवाङ्गीकृत्य तत्प्रतिफलितचैतन्य एवापरोक्षत्वम्, न

न्यायामृतम्

न पञ्चमः ; आत्मनोऽपि स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टव्यवहारे तदपेक्षानियमात् ।

अद्वैतसिद्धिः

व्यभिचारः । तुच्छे च व्यभिचारः परिहरणीयः । यद्वा—स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियति-

तरङ्गिणी

यथाश्रुते दोषमाह—*आत्मनोऽपीति* ॥ यस्मिन् कस्मिंश्चिदात्मगोचरव्यवहारे स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टविषयके स्वातिरिक्तसंविदो विशेषणविषयिकाया नियमेनापेक्षणादित्यर्थः । *ननु* स्वातिरिक्तसंविदपेक्षानिरूपितस्वव्यवहारत्वावच्छिन्नव्याप्यताकव्यवहारकत्वमुक्तलक्षणार्थः । आत्मव्यवहारे नित्यसिद्धे स्फुरणरूपे सुषुप्तिकालीने तादृशसंविदपेक्षाऽभावेन व्यभिचाराद् नात्मव्यवहारे तादृशसंविदपेक्षाव्याप्यत्वमस्ति । यद्यप्यात्मव्यवहारविशेषस्य तादृशसंविदपेक्षाव्याप्यत्वमस्ति ; तथापि

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ननु* चितस्स्वाश्रितवृत्तिविषयत्वरूपपरम्परासम्बन्धस्य तुच्छेऽपि सत्त्वाद् व्यभिचारः, तत्राह—*तुच्छेति* ॥ अस्तित्वप्रकारकधीविषयत्वादिसमानाधिकरणत्वेन हेतोर्विशेषणेनेति शेषः ।

न्यायामृतसौगन्ध्यम्

परिहरणीयः । यद्वा—स्वव्यवहारे ( स्वव्यवहारं प्रति स्वातिरिक्तसंविदपेक्षाया नियमो व्यापकत्वरूपो घटकतया यत्रेति व्युत्पत्त्या तादृशव्यापकताघटितस्य हेतुता स्व-स्वव्यवहारत्वावच्छिन्नव्यापकस्वातिरिक्तसंविदपेक्षाकत्वं विषयत्वम् ) स्वातिरिक्तसंविदपेक्षाकनियतिरूपदृश्यत्वं हेतुः ।

सिद्धिव्याख्या

भावेऽपि सम्बन्धित्वरूपविषयत्वे किं बाधकम् ? इति—शङ्क्यम् ; विषयत्वस्य स्वरूपसम्बन्धविशेषत्वेन सम्बन्धाभावे तद्विशेषरूपविषयत्वस्याप्ययोगादिति भावः । तुच्छस्यापि तद्विषयत्वे तत्र व्यभिचार इत्याशङ्कयाह—*तुच्छ इति* ॥ असतः स्वस्यैवाभावाद् न तत्र व्यभिचारः ।

विट्ठलेशीयटिप्पणी

वृत्तित्वं विशेषणं देयम् । तथाच भेदपदार्थविनाशित्वरूपव्यापकत्याभावाद् व्याप्यचिद्वृत्तित्वविशिष्टचित्संबन्धस्य चित्यसत्त्वाद् न व्यभिचारः । प्रातिभासिके च तत्सत्त्वाद् न साधनवैकल्यम् । एवं च संबन्धप्रतियोगिचिति शुद्धत्वं न देयम् । चिदन्यवृत्तित्वं तु न विशेषणम् ; चिति चिदन्यत्वस्य कल्पितत्य सत्त्वेनाव्यावर्तकत्वादिति भावः । *परम्परासंबन्धस्येति* ॥ इदमि रजताध्यासपक्षे रजते साधनवैकल्याय तन्निवेशस्यावश्यकत्वादिति भावः । तुच्छे व्यभिचारपरिहारोपयुक्तं विशेषणं स्मारयितुं पूरयति—*अस्तित्वेति* ॥ *शेष इति* ॥ इदमवच्छिन्नचैतन्ये रजताध्यास इति पक्षे साक्षात् चित्संबन्धनिवेशनेनापि तुच्छे व्यभिचारवारणं बोध्यम् ॥

*मूले—यद्वा स्वव्यवहार इति* ॥ स्वव्यवहारे स्वातिरिक्तसंविदोऽकारणत्वे तदपेक्षानियमासंभवात् कारणत्वे पर्यवसानात् स्वातिरिक्तसंविज्जन्यस्वव्यवहारकत्वमित्यर्थः । *ननु* वृत्ति-चैतन्यान्यतरस्य संवित्पदार्थत्वे ब्रह्मणोऽ-

---

वृत्तावित्यङ्गीकारे परोक्षत्वापरोक्षत्वयोर्ज्ञानत्वव्याप्यत्वं न स्यात् । चैतन्यनिष्ठापरोक्षत्वस्य चैतन्यनिष्ठज्ञानत्वव्याप्यत्वेऽपि वृत्तिनिष्ठापरोक्षत्वस्य ज्ञानत्वव्याप्यत्वाभावात्, वृत्तौ परोक्षत्वसद्भावेऽपि तत्र ज्ञानत्वाभावात् । भावव्युत्पत्त्या ज्ञप्तिरूपज्ञानत्वं चैतन्यस्यैव, वृत्तेस्तु ज्ञप्तिरूपचैतन्यव्यञ्जकतया ज्ञानकरणत्वमेव, न ज्ञानत्वमित्यङ्गीकारात् । तथा वृत्तिगतपरोक्षत्वस्य वृत्तिव्याप्यत्वमेव स्यात् । तथाच करण-भावव्युत्पत्तिभ्यां वृत्ति-चैतन्ययोरुभयोरपि ज्ञानत्वात् तन्मध्ये यद् भावव्युत्पत्त्या ज्ञप्तिरूपमेकं ज्ञानम्, तन्निष्ठं यद् ज्ञानत्वम्, तत् सर्वजनसिद्धं न स्यात् । अतः सर्वजनसिद्धैकज्ञानत्वव्याप्यत्वनिर्वाहाय वृत्तावपि ज्ञानत्वेऽङ्गीकार्ये, इन्द्रियजन्यतया चापरोक्षत्वे चाङ्गीकार्येऽपरोक्षज्ञानरूपवृत्तिविषयत्वमात्रेण विषय आपरोक्ष्योपपत्तौ तदर्थं वृत्तिप्रतिबिम्बितचैतन्यस्य तदभिव्यक्तचैतन्यस्य वा कल्पनाऽयोगात्, इति चिद्विषयत्वरूपहेतोः स्वरूपासिद्धिरिति भावः ॥ (श्रीनि०)

न्यायामृतम्

*ननु*—आत्मनि विशिष्टव्यवहारे विशेषणोपनायकमानापेक्षानियमेऽपि स्वरूपमात्रव्यवहारे तदनपेक्षेति—चेत्, *न*; घटादावपि तथेत्यसिद्धेः। *ननु*—घटादौ स्वरूपमात्रव्यवहार एव नास्ति, आत्मनि तु सुषुप्तावस्ति, इति—चेत्, *न*; 'एतावन्तं कालं सुखमहमस्वाप्समि'ति परामर्शेन तस्य विशिष्टत्वेनैव सिद्धेः। *ननु*—आत्मनि विशिष्टव्यवहारे तदपेक्षायामपि न विशेष्यांशे तदपेक्षा; स्वप्रकाशत्वात्, घटादौ तदंशेऽपीति—चेत्, *न*; नियतिपदवैयर्थ्यात्, आसंसारमज्ञानावृतस्य (१)शुद्धस्य स्वव्यवहारेऽनधिगतार्थबोधकवेदान्तजन्याज्ञाननिवर्तकवृत्त्यपेक्षानियमाच्च, वृत्त्यन्य-

तरङ्गिणी

सा व्याप्यताऽऽत्मव्यवहारत्वेन नावच्छिद्यते, किन्तु तत्तदात्मव्यवहारत्वेनैव, एवं च नातिव्याप्तिरिति शङ्कते—*नन्विति* ॥ *घटादावपीति* ॥ घटादिगोचरव्यवहारेऽपि निरुक्तव्याप्यता घटादिगोचरतत्तद्व्यवहारत्वेनैवावच्छिद्यते, नतु घटादिगोचरव्यवहारत्वसामान्येनेत्यर्थः। *ननु* घटादिव्यवहारनिष्ठा निरुक्तव्याप्यता सामान्येन घटादिव्यवहारत्वेनैवावच्छिद्यते; लाघवात्, व्यभिचाराभावाच्च, आत्मव्यवहारे तु सुषुप्तिकालीने स्फुरणरूपे व्यभिचाराद् निरुक्तव्याप्यतावच्छेदकत्वं गुरोरपि व्यवहारविशेषत्वस्यैव कल्प्यते। तथाच नासिद्धिर्घटादौ, न वाऽऽत्मनि व्यभिचार इति शङ्कते—*ननु* *घटादाविति* ॥ आत्मव्यवहारेऽपि सौषुप्तिके विशिष्टगोचरे विशेषणोपनायकमानापेक्षाया आवश्यकत्वेनात्मव्यवहारस्यापि निरुक्तसंविदपेक्षां प्रत्यव्यभिचारात् तत्रापि सामान्यस्यात्मव्यवहारत्वस्यैव तद्व्याप्यतावच्छेदकत्वात्, तथाचाऽऽत्मनि व्यभिचार इत्याह—*एतावन्तं कालमिति* ॥ सुषुप्तौ कालादिविशिष्ट एवात्मा व्यवह्रियत इत्यर्थः। *ननु* स्वव्यवहारे स्वांशावच्छेदेनापि स्वातिरिक्तसंविदपेक्षानियतिरिति विवक्षितो हेतुः, सुषुप्तिकालीन आत्मगोचरकालादिविशिष्टव्यवहारे तु कालादिविशेषणांश एव मानान्तरापेक्षा, न त्वात्मांशेऽपि; अतो नात्मनि व्यभिचार इति शङ्कते—*नन्वात्मनीति* ॥ *नियतिपदेति* ॥ आत्मविषयकाद्वितीयत्वादिविशिष्टव्यवहारेऽपि विशेषणांश एव तदपेक्षा, नत्वात्मांशेऽपि। अतो नियतिपदाभावेऽपि नात्मनि हेतुरस्ति, इति नियतिपदवैयर्थ्यमित्यर्थः। *ननु* स्वव्यवहारे स्वांशावच्छेदेन स्वातिरिक्तसंविदपेक्षावत्त्वमेव हेतुरस्तु, अतो न वैयर्थ्यम्, अत आह—*आसंसारमिति* ॥ अज्ञानावृतेऽज्ञाननिवृत्तिं विना व्यवहारस्यैवायोगादित्यर्थः। *ननु* अज्ञानावृतत्वकाल आत्मा मैव व्यवहरिष्ट, तदनावरणकाले तु स्वातिरिक्तसंविदं विनैव व्यवह्रियतामित्यत उक्तम्—*आसंसारमिति* ॥ *ननु* आसंसारमज्ञानावृतोऽप्यात्मा कदाचित् स्वयमेवावरणमज्ञानं निवर्तयिष्यति, अनन्तरमुक्तसंविदं विनैव व्यवह्रियतामित्यत उक्तम्—*शुद्धस्येति* ॥ शुद्धस्य केवलस्याज्ञानाविरोधित्वाद् न कदाचिदपि स्वाज्ञाननिवर्तकत्वमित्यर्थः। किञ्च यद्यात्मव्यवहारः स्वतः स्फुरणादेव, तर्हि वेदान्तानां प्रकाशमानार्थप्रकाशत्वेनानीदृशप्रामाण्यं न स्यात्, तदर्थं वेदान्तानामेवात्मव्यवहारहेत्वात्मज्ञानहेतुत्वं वाच्यमित्यभिप्रायेणोक्तम्—*अनधिगतार्थबोधकेति* ॥ *ननु* वृत्त्यन्यसंविदपेक्षानियतिमद्व्यवहारवत्त्वं विवक्षितम्, अस्ति च घटादौ तादृशचैतन्यरूपसंविद-

न्यायामृतकण्टकोद्धारः

*नियतिपदेति* ॥ विशेष्यांशे कदापि स्वातिरिक्तसंविदनपेक्षणादिति भावः। *ननु* यावत्स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिर्दृश्यत्वम्, ब्रह्मणश्च स्वप्रकाशत्वादिव्यवहारे यद्यपि वेदान्तजनितवृत्त्यपेक्षाऽस्ति, तथाप्य'हमेतावन्तं कालं सुखं सुप्तोऽस्मी'त्यादिव्यवहारे तदनपेक्षणेन यावत्स्वगोचरव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियत्यभावात्, घटादेः स्वव्यवहारमात्रे तदपेक्षानियमात्, इति न व्यभिचारासिद्धिः, इत्यत आह—*आसंसारमिति* ॥

(१) *ननु* आसंसारमज्ञानावृतोऽप्यात्मा कदाचित् स्वयमेवावरणमज्ञानं निवर्तयिष्यति, अनन्तरमुक्तसंविदं विनैव

न्यायामृतम्

संविदपेक्षायाश्च तव नित्यातीन्द्रिये मम घटादावप्यभावादित्युक्तत्वाच्च । नच घटादावपि वृत्त्याऽ-

तरङ्गिणी

पेक्षा, इति न तत्रासिद्धिः, चैतन्ये तु न तदपेक्षा, इति न व्यभिचारोऽपीत्यत आह—*वृत्त्यन्येति* ॥ *तवेति* ॥ घटादौ वृत्त्यन्यसंविदपेक्षामङ्गीकर्तुरपीत्यर्थः । तथाचासिद्धिरिति भावः । *ननु* आत्मव्यवहारे न वेदान्तजन्यसंविदन्तरापेक्षा, किंत्वात्माज्ञाननिवृत्तिमात्रे, आत्मव्यवहारस्तु स्वतःस्फुरणादेव, अतो नात्मनि व्यभिचारः, घटादौ त्वस्फुरणरूपतया व्यवहारेऽपि स्वातिरिक्तसंविदपेक्षाऽस्ति, इति नासिद्धिरित्याशङ्कां निराकरोति—*नच घटादावपीति* ॥ *ननु* उक्तम्—अस्फुरणतया घटादौ स्वव्यवहारेऽपि

न्यायामृतकण्टकोद्धारः

*इदमत्राकूतम्* 'स्वातिरिक्तसंविदि'त्यत्र संविच्छब्देन चैतन्यरूपा वा संविद् विवक्षिता ? वृत्तिरूपा वा ? नाद्यः ; अतीन्द्रियेष्वसिद्धितादवस्थ्यात्, न द्वितीयः ; शुद्धस्यापि स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरस्त्येव । नच—'एतावन्तं कालमहं सुप्तोऽस्मी'त्यादिव्यवहारे तदपेक्षा नेति—वाच्यम् ; यदि हि वेदान्तजन्यवृत्तिं विनैव तद्व्यवहारः, तदा वेदान्तानामधिगतार्थबोधकत्वेनानधिगतार्थावगमकत्वरूपं प्रामाण्यं न स्यात्, अत एवाह—*अनधिगतार्थबोधकेति* ॥ आसंसारमज्ञानावृतत्वेन शुद्धस्य वृत्तिं विना तद्व्यवहारायोगाच्च ॥

किञ्च शुद्धव्यवहारः किं शुद्धस्य वा भवेत् ? जीवस्य वा ? नाद्यः ; तस्य स्वविषयव्यवहारायोगात्, सर्वव्यवहारातीतत्वात्, कर्तृ-कर्मविरोधाच्च । नापरः ; जीवस्य वृत्त्यनपेक्षया शुद्धव्यवहार इदानीमपि शुद्धव्यवहारापत्तेः । सुषुप्तावस्तीति चेत् ; तदभावस्य मूल एवोक्तत्वात् । किञ्च वृत्तिः किमन्तःकरणवृत्तिः ? अविद्यावृत्तिर्वा ? नाद्यः ; सुखादिव्यवहारे तदपेक्षाभावाद् भागासिद्धेरपरिहारात् । नान्त्यः ; घटादिव्यवहारादावसिद्धेः । नच—वृत्तिसामान्यं संविच्छब्देन विवक्षितमिति—वाच्यम् ; सुखादिव्यवहारे तदसिद्धेरपरिहारात् । नच—तत्राप्यविद्यावृत्त्यपेक्षाऽस्तीति—वाच्यम् ; तथाप्यविद्यावृत्तौ भागासिद्धेः । तत्रापि तदपेक्षाऽस्तीति चेत्, एतदविद्यावृत्त्यपेक्षा वा ? अविद्यावृत्त्यन्तरापेक्षा वा ? नाद्यः ; आत्माश्रयात्, न द्वितीयः ; तस्यामप्यविद्यावृत्तौ वृत्त्यन्तरापेक्षा, एवं तत्र तत्रापीत्यनवस्थापत्तिः । किञ्चात्र कीदृशः शुद्धव्यवहारो विवक्षितः—स्वरूपमात्रव्यवहारो वा ० विशिष्टव्यवहारो वा ? नाद्यः ; तदभावस्य मूल एवोक्तत्वात्, द्वितीयेऽपि स्वप्रकाश इत्यादिरूपो वा ? 'अहमि'त्येवंरूपो वा ? नाद्यः ; स्वप्रकाश इत्यादिव्यवहारे वेदान्तजन्यवृत्त्यपेक्षानियमेनानैकान्तिकत्वापत्तेः, नापरः ; 'अहमि'त्येवंरूपव्यवहारेऽप्यविद्याकाराहंवृत्त्यपेक्षानियमेनानैकान्त्यात् ।

*ननु* घटादिविषयकाज्ञानस्य वृत्त्यैव निवृत्तावपि व्यवहारार्थं वृत्त्यन्यसंविदपेक्षाऽऽवश्यिका, ब्रह्मणस्तु स्फुरणरूपत्वात् व्यवहारार्थमपि न तदपेक्षेत्याशङ्क्य निषेधति—*नच घटादावपीति* ॥ अनुभवाभावेऽपि तदङ्गीकारे ब्रह्मण्यपि व्यवहारार्थं तदङ्गीकारापत्तेः, अज्ञानविरोधिस्फुरणरूपत्वस्य घटादावपि सुवचत्वा-

व्यवहियतामित्यतः—'शुद्धस्ये'त्युक्तम् । शुद्धस्य केवलस्याज्ञानस्फोरकत्वेनाज्ञानानिवर्तकत्वाद् न कदाचिदपि स्वाज्ञाननिवर्तकत्वम्, किं नाम ? वेदान्तजन्यचरमवृत्तेरेव ; अन्यथा वेदान्तजन्यचरमवृत्तेर्वैयर्थ्यापत्तेः । तस्या अज्ञाननिवर्तकत्वेनैव सार्थक्यादित्याशयेनोक्तम्—*वेदान्तजन्याज्ञाननिवर्तकवृत्तीति* ॥ किंच यद्यात्मव्यवहारः स्वतः स्फुरणादेव भवति, न तत्र स्वाज्ञावच्छेदेन स्वातिरेकिसंविदपेक्षेत्युच्यते, तर्हि वेदान्तानां प्रकाशमानार्थप्रकाशकत्वेनानधिगतार्थावगतिसाधनताऽभावेन प्रमाणलक्षणाभावादप्रामाण्यं स्यादित्याशयेनोक्तम् ॥ ( श्रीनि० )

न्यायामृतम्

ज्ञाने निवृत्ते व्यवहारार्थं संविदन्तरापेक्षाऽनुभूयते । *एतेन*—स्वव्यवहारे स्वातिरिक्तस्वावच्छिन्न-संवित्सापेक्षत्वं दृश्यत्वमिति—निरस्तम् ॥

अद्वैतसिद्धिः

रूपं दृश्यत्वं हेतुः ; संविच्छब्देन विषयाभिव्यक्तं वा वृत्त्यभिव्यक्तं वा चैतन्यमात्रमभिप्रेतम्, तथाच

तरङ्गिणी

स्वातिरिक्तसंविदपेक्षेति, *सत्यमुक्तम्* ; परन्तु तत्प्रत्युक्तमपि ; अज्ञानाविरोधिस्फुरणरूपत्वस्यात्मनीव घटादावपि सुवचत्वादित्यनेनेति भावः ॥ *एतेनेति* ॥ स्वातिरिक्तसंविन्निष्ठस्वव्यवहारहेतुतावच्छेदकरूपत्वं स्वव्यवहारे स्वावच्छिन्नसंवित्सापेक्षत्वम्, आत्मनस्तु न स्वातिरिक्तस्वव्यवहारहेतुसंविदं प्रति विषयतयाऽव-च्छेदकत्वम् ; आत्मविषयकवृत्तेरात्मविषयकत्वेन व्यवहारहेतुत्वात्, घटादेस्तु स्वव्यवहारहेतुसंविदं प्रति विषयतयाऽवच्छेदकत्वम् ; घटादिविषयकत्वेन घटसंविदो घटव्यवहारहेतुत्वादित्यर्थः । एतदपि घटादिविषय-संविदोऽप्यात्मविषयकवृत्तेरात्मविषयकत्वेनेव न घटविषयत्वेन घटादिव्यवहारहेतुता, अज्ञाननिवृत्तिमात्रार्थ-त्वादित्यादिना निरस्तमित्यन्वयः ॥

न्यायामृतकण्टकोद्धारः

वित्युक्तत्वाच्चेति भावः । *एतेनेति* ॥ स्वावच्छिन्नविषय-विषयिभावेन विषयस्यावर्त्यायाः संविद-स्तत्सापेक्षत्वमित्यर्थः ॥ अस्ति च घटादिव्यवहारे स्वव्यावर्त्याया घटादिविषयिण्याः संविदस्तत्सापेक्षत्वम्, ब्रह्मणश्च वृत्तिं प्रत्यविषयत्वेन विषय-विषयिभावेन तत्संविदो ब्रह्मव्यावर्त्यत्वाभावाद् न तद्व्यवहार उक्त-संवित्सापेक्षत्वम्, किन्तु तदाकारवृत्तेरेवापेक्षा, इति नासिद्धि-व्यभिचारावित्येतदेतेन निरस्तमित्यर्थः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*विषयाभिव्यक्तम्*=विषयावच्छेदेन भग्नावरणम्, विषयगतवृत्तिप्रतिबिम्बितं वा । *वृत्त्यभि-

न्यायामृतसौगन्ध्यम्

संविच्छब्देन च विषयाभिव्यक्तं वृत्त्यभिव्यक्तं वा शुद्धं वा चैतन्यमात्रमभिप्रेतम् । तथाच घटादौ

विट्ठलेशीयटिप्पणी

द्वितीयत्वादिविशिष्टव्यवहारेऽद्वितीयादिवाक्यजन्यवृत्तिरूपसंविदो ब्रह्मातिरिक्तायाः कारणत्वेनापेक्षणाद् ब्रह्मणः स्वपदार्थ-त्वात् तत्र व्यभिचार इत्यत आह—*संविच्छब्देन चेति* ॥ *चैतन्यमात्रमिति* ॥ मात्रपदेन वृत्तिरूपज्ञान-व्यवच्छेदः । वृत्तिभिन्नज्ञानमर्थः । तच्च चैतन्यरूपमिति बोध्यम् । तथाचोक्तव्यवहार उक्तवृत्तेरपेक्षणेऽपि संवित्पदार्थत्वा-भावात् तन्नाद्वितीयत्वादिप्रकारकाज्ञानरूपावरणस्य स्वपदार्थब्रह्मचैतन्यस्य संवित्पदार्थस्योक्तव्यवहारेऽपेक्षणेऽपि तस्य स्वातिरिक्तत्वाभावाद् न ब्रह्मणि स्वपदार्थे व्यभिचारः । नच—उक्तवृत्तिप्रतिबिम्बितस्य स्वपदार्थब्रह्मचैतन्यस्योक्त-वृत्त्युपाधिकस्य स्वपदार्थब्रह्मचैतन्यप्रतिबिम्बितस्य वा संवित्पदार्थस्य स्वातिरिक्तस्योक्तव्यवहारेऽपेक्षणादुक्तव्यभिचारो दुर्वार इति—वाच्यम् ; स्वपदेन शुद्धस्य ब्रह्मचैतन्यस्योपादाने तस्य स्वप्रकाशत्वेनोक्तवृत्तिप्रतिबिम्बानपेक्षणात्, उपहितस्योपादाने तदपेक्षणेऽपि तस्य मिथ्यात्वेनाव्यभिचारादिति भावः । *चैतन्यमात्रम्* चित्त्वेनानुगमनीयं चैतन्यत्रयं शुद्धं वा चैतन्यमात्रमित्यनेनाह—*विषयाभिव्यक्तमित्यादि*॥ तदसांकर्येण व्याख्यातुमुपक्रमते टीकायाम्—*विषयाभि-व्यक्तमिति* ॥ अत्राभिव्यक्तिः—आवरणभङ्गो वा प्रतिबिम्बो वोभावपि । 'विषयाभिव्यक्तम्' इति न तृतीयासमासः, किन्तु सप्तमीसमासः ; सा च नाधिकरणत्वे ; विषये जडे घटादावावरणासंभवेन तद्भङ्गासंभवात्, प्रतिबिम्बस्य च तैजसान्तःकरणपरिणामविशेषवृत्तिरूपस्वच्छोपाधिगतत्वात्, इत्यतोऽवच्छिन्नत्वार्थकसप्तमीसमासेनाद्यं स्वगतवृत्त्युपा-धिकस्वरूपपरम्परासम्बन्धेन स्वसंबन्धार्थकसप्तमीसमासेन द्वितीयं व्याचष्टे—*विषयावच्छेदेन भग्नावरणमिति*—*विषयगतवृत्तिप्रतिबिम्बितं वेति च* ॥ 'वृत्त्यभिव्यक्तमि'त्यत्र तु वृत्त्या भग्नावरणं वृत्तौ प्रतिबिम्बितं वेति

### अद्वैतसिद्धिः

घटादौ नित्यातीन्द्रिये साक्षिभास्ये च सर्वोऽपि व्यवहारः स्वातिरिक्तसंवित्सापेक्षः, इति नासिद्धिः ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यक्तम्=मनोऽवच्छेदेन भग्नावरणम्, वृत्तिप्रतिबिम्बितं वा । *चैतन्यमात्रम् = विषयाभिव्यक्तत्वाद्यविशेषिता चित् । तथाच विषयाभिव्यक्तादिचित्साधारणेन चित्त्वेनैव संवित्पदबोध्यतेति भावः । *सर्वोऽपीति* ॥ घटादावपरोक्षत्वरूपो व्यवहारो घटाद्यभिव्यक्तचित्सापेक्षः, नित्यातीन्द्रियेऽस्तित्वादिव्यवहारो नित्यातीन्द्रिय-विषयकवृत्त्यभिव्यक्तचित्सापेक्षः, सुखादावपरोक्षत्वादिव्यवहारः सुखाद्यभिव्यक्तत्वाविशेषितसुखाद्यवच्छिन्न-

### न्यायामृतसौगन्ध्यम्

नित्यातीन्द्रिये साक्षिभास्ये च सर्वोऽपि व्यवहारः स्वातिरिक्तसंवित्सापेक्षः, इति नासिद्धिः ।

### विट्ठलेशीयटिप्पणी

पक्षद्वयेऽपि पूर्वकल्पवैलक्षण्यायावच्छेदकं पूरयति—*मनोऽवच्छेदेनेति* ॥ आवरणभङ्गे प्रतिबिम्बे चान्वयः । *शुद्धं वा चैतन्यमात्रमिति* मूले पाठो दृश्यते, तत्र यद्यपि विषयाभिव्यक्तत्वादिपूर्वकल्पद्वयवैलक्षण्याय शुद्धपदस्य निर्धर्मकं मार्थः ; अन्तःकरणधर्मसुखादीनामन्तःकरणोपहितचैतन्यरूपसाक्षिवेद्यानां व्यवहारे शुद्धचैतन्यानपेक्षणात्, किन्तु विषयाभिव्यक्तत्वाद्यविशेषितं शुद्धपदार्थः ; चैतन्यमात्रपदस्य च वृत्तिभिन्नं ज्ञानं चैतन्यरूपमर्थ इति प्रतीयते, तथापि तत्र 'चैतन्यमात्रमि'त्यत्र मात्रपदेनैव पूर्वकल्पद्वयवैलक्षण्याय विषयाभिव्यक्तत्वाद्यविशेषितत्वस्य चैतन्यपदेन वृत्तिज्ञाना-बोधकेन वस्तुतो वृत्तिज्ञानान्यस्य चिद्रूपज्ञानस्यैव बोधनादभिमतार्थलाभसंभवेन शुद्धपदमधिकं स्यात्, इति तद्घटित-पाठाभिप्रायेण व्याचष्टे—*चैतन्यमात्रं विषयाभिव्यक्तत्वाद्यविशेषिता चिदिति* ॥ विषयाभिव्यक्तत्वादेः प्रत्येकमननु-गतत्वात्, उक्तान्यतमत्वस्यापि विषयाद्यननुगमेन तथात्वाद् उक्तत्रितयानुगमकवृत्तिव्यावृत्तं च संवित्पद-बोध्यतावच्छेदकं रूपमाह—*तथाचेति* ॥ *साधारणेनेति* ॥ वृत्तिव्यावृत्तेन चेति शेषः । उक्तानुगतरूपेणाप्युक्त-त्रितयनिवेशे प्रयोजनं क्रमेणाह मूले—*तथाचेति* ॥ 'घटादावि'त्यादिसप्तम्यन्तत्रयस्य प्रत्येकं व्यवहारेऽन्वयः । *सर्वोऽपीति* ॥ व्यवहारश्चेति वक्ष्यमाणाभिप्रायेण । अस्तित्वादिव्यवहारस्य गुरुत्वाद्यतीन्द्रियादाविव वृत्त्यभिव्यक्त-चैतन्येनापि संभवादाह—*अपरोक्षत्वरूप इति* ॥ अपरोक्षत्वस्येव रूपं यस्येति व्युत्पत्त्याऽपरोक्षादीत्यर्थः । आदिपदेन प्रत्यक्ष-तदन्यप्रमाणगम्यास्तित्वादिः प्रत्यक्षमात्रगम्यशुक्त्यादिरूपपरिमाणविशेषादिश्च ग्राह्यः । *घटाद्यभि-व्यक्तचित्सापेक्ष इति* ॥ स्वाकारवृत्तिप्रयोज्यस्वावच्छिन्नाज्ञानविषयत्वभङ्गविशिष्टा वा स्वाकारवृत्तिप्रतिबिम्बितत्व-विशिष्टा वा स्वाकारवृत्त्यवच्छिन्नचिदभिन्नस्वावच्छिन्ना वा चित् स्वापरोक्षज्ञानमेव, इति तदीयं तादात्म्यरूपं विषयत्वं विषयनिष्ठमपरोक्षत्वम्, इति तद्व्यवहारे तदपेक्षेति भावः । नित्यातीन्द्रिये कदाचिदपि स्वाकार-वृत्तिप्रयोज्य-स्वावच्छिन्नाज्ञानविषयत्वभङ्गादिविशिष्ट-चित्तादात्म्यरूपलौकिकापरोक्षज्ञानविषयत्वशून्येऽपरोक्षत्वव्यवहारा-भावादाह—*अस्तित्वादीति* ॥ *वृत्त्यभिव्यक्तचिदिति* ॥ मनोऽवच्छेदेनेत्यादिः । परोक्षवृत्तिर्हि मनोऽवच्छेदे-नैव प्रमातृचैतन्यप्रतिबिम्बं गृहीत्वा बाह्यं स्वविषयं प्रकाशयति, विषयस्य हि प्रमातृसंबन्धो वृत्तिद्वारकोऽस्ति, तावता चासत्त्वापादकाज्ञाननिवृत्तेः—'गुरुत्वादिकमस्ती'ति व्यवहारो जायते, नतु 'गुरुत्वमपरोक्षं भाती'ति व्यवहारः ; अभानापादकस्य बहिर्निर्गतप्रत्यक्षवृत्तिमात्रनिवर्त्यस्याज्ञानस्य बहिरनिर्गतपरोक्षवृत्त्याऽनिवृत्तेरुक्तचिद्रूपतत्कारणाभावा-दिति भावः । *मूले*—साक्षिभास्यत्वं व्यवहारस्य प्रयोजकत्वेनोक्तम्, तत्र बाह्यप्रत्यक्षघटादि-परोक्षगुरुत्वादिव्यवहारस्य ; तेषां साक्षिभास्यत्वाभावात्, नाप्यान्तरसुखादा'वस्ती'ति व्यवहारस्य ; वृत्त्यभिव्यक्तचैतन्येनापि संभवात्, किंतु अपरोक्षत्वव्यवहारस्य ; तत्रापरोक्षभास्यत्वासंभवात्, अज्ञातसुखाद्यभावेन तदवच्छिन्नचैतन्येऽज्ञानविषयत्व-तद्भङ्गयोर-भावेन सुखादिविषयकप्रत्यक्षवृत्तेरनुपगमपक्षाश्रयणेन च तद्घटितसुखाभिव्यक्तचिद्रूपप्रत्यक्षाप्रसिद्ध्या ततोऽप्यसंभवात्, इत्याशयेन साक्षिभास्यत्वस्य मूलोक्तं व्यवहारप्रयोज्यत्वं सुखादावपरोक्षत्वादिव्यवहारप्रयोजकत्वरूपतया सङ्गमयति —*सुखादावपरोक्षत्वादिव्यवहार इति* ॥ आदिना सुखादिगतवैचित्र्य-तत्संबन्ध-तदभावपरिग्रहः ; येनेन्द्रियेणेति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

चैतन्यापेक्षः, इति त्रिविधचित्साधारणरूपनिवेशफलं बोध्यम् । घटादेरसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपं स्फुरणं शुद्धचिद्रूपसंविदपेक्षम् ; शुद्धचिज्जन्यमनोवृत्त्योक्ताज्ञाननिवृत्तेः, विशिष्टचितः शुद्धचिति कल्पितत्वेन शुद्धचिदाश्रितत्वाच्च ।

विट्ठलेशीयटिप्पणी

न्यायात् । सुखाद्यभिव्यक्तत्वेति* ॥ आदिना सुखाकारपरोक्षवृत्त्यभिव्यक्तत्वलाभः । *अविशेषितेति* ॥ सुखाद्यवच्छिन्नचैतन्येऽन्वयः । अत्रैतद्विशेषणद्वयानुपादाने न तात्पर्यम् ; प्रथम-द्वितीययोः कल्पयोस्तृतीयाद् भेदानुपपत्तेः, किंतु सुख-तदाकारवृत्त्यभिव्यक्तत्वरूपविशेषणद्वयोपादाने । अत एव घटाभिव्यक्तत्ववत् सुखाभिव्यक्तत्वस्याप्रसिद्धावपि न क्षतिः । *सुखाद्यवच्छिन्नचैतन्यापेक्ष इति* ॥ सुखाद्यधिष्ठानभूतान्तःकरणावच्छिन्नं चैतन्यमन्तःकरणोपहितत्वेनापेक्षत इत्यर्थः । अत एव मूले *साक्षिभास्ये* इत्युक्तम्, तदर्थबोधकता चैतट्टीकाग्रन्थस्य सङ्गच्छते । *नन्वेवम्* 'चैतन्यमात्रमि'त्यनेन साक्षिचैतन्यत्वेनैव चैतन्यं विवक्षणीयम् ; लाघवात्, नतु विषय-तद्वृत्त्यभिव्यक्तचैतन्यत्वेन ; गौरवात्, इत्याशङ्क्य घटादेर्व्यवहारो नाम तत्संबन्धिकार्यमात्रमित्यस्य व्यवहारे यावत्त्वस्य च मूले वक्ष्यमाणत्वाद् घटादौ स्फुरणरूपव्यवहारमादाय दृश्यत्वोपपादनमुक्तविवक्षाप्रयोजनमित्याह—*घटादेरिति* ॥ अज्ञानस्यासत्त्वापादकप्रयोजकम्, तच्च परोक्षवृत्तेरपि संग्रहाय । घटादेर्य उक्ताज्ञानविषयत्वस्याभावस्तत्प्रयोजकं प्रत्यक्ष-परोक्षसाधारणं वृत्तिरूपं ज्ञानम्, तेन विशिष्टा या चित्, तद्रूपमित्यर्थः, उक्ताभावप्रयोजिका विशिष्टा = वृत्तिविशिष्टा या चित्, तद्रूपमिति वार्थः । *वस्तुतस्तु* उक्तप्रयोजिका वृत्तिसामग्री, तद्विशिष्टा चिद् इत्यर्थो वक्ष्यते । *शुद्धचिज्जन्येति* ॥ इयं च शुद्धचिद् जगत्कारणरूपा, इति तज्जन्यत्वं घटादिविषयकमनोवृत्तेरुपपद्यते । *अज्ञाननिवृत्तेरिति* ॥ उक्ताज्ञानाविषयत्वसंपत्त्या तदुपधायकत्वरूपं तत्प्रयोजकत्वम्, वृत्तेस्तद्विशिष्टचितो वा वृत्तिसामग्र्या वोपपद्यत इति भावः । *संविदपेक्षा* इति शब्देन संविज्जन्यत्वं विवक्षितमित्यभिप्रायेणेदम् । यदि च घटादिविषयकमनोवृत्तौ शुद्धं चैतन्यं न साक्षात् कारणम्, किन्त्वन्तःकरणावच्छिन्नमेव, शुद्धं त्वाकाशस्यैव साक्षात् कारणम्, इतरेषां परमाणुवद् मूलकारणं प्रयोजकमात्रमित्युच्यते, तदाऽपि संविदपेक्षानियतिशब्देन संवित्प्रयोज्यत्वमात्रविवक्षायां विशिष्टचितः शुद्धचिदपेक्षामुपपादयति—*विशिष्टचित इति* ॥ *आश्रितत्वादिति* ॥ स्वाधिष्ठानभूतस्वाश्रितं प्रत्याश्रयस्यापि प्रयोजकत्वं संभवति । एवं च घटादेर्यावद्व्यवहारान्तःपातिन उक्तस्फुरणरूपव्यवहारस्य शुद्धचैतन्यापेक्षाघटितदृश्यत्वोपपत्तये जगदुपादानशुद्धचिद्रूपसंवित्संग्रहाय साक्षिचैतन्यत्वाविवक्षया तद्वृत्त्यभिव्यक्तचैतन्यत्वेन चैतन्यनिवेश इति भावः । मायावच्छिन्नचैतन्यरूपेश्वरस्य जगत्कारणत्वमत उक्तघटादिस्फुरणरूपव्यवहारस्य मायोपहितचैतन्यरूपेश्वरसाक्षिसापेक्षत्वेन घटादौ दृश्यत्वोपपत्तेः साक्षिचैतन्यत्वेन निवेशेऽपि न दोषः, इति शुद्धचैतन्यस्य जगत्कारणत्वमतमाश्रितम् । यद्वा—*ननु* विवक्षणीययावत्त्वाश्रयस्य घटादिविषयकोक्तवृत्तिविशिष्टचिद्रूपस्फुरणरूपव्यवहारस्य घटादिरूपत्वातिरिक्तसंवित्पदार्थत्वेऽपि स्वस्मिन् स्वापेक्षाया असंभवेन स्वप्रकाशत्वेन तदन्यसंविदोऽप्यनपेक्षणेन च घटादौ दृश्यत्वानुपपत्तिरित्याशङ्क्य सुखाद्यपरोक्षत्वव्यवहारवदुक्तघटादिस्फुरणरूपव्यवहारस्यापि जीवसाक्षिरूपचैतन्यरूपप्रत्यक्षापेक्षामाह—*घटादेरिति* ॥ *शुद्धचिदिति* ॥ अत्र शुद्धपदस्य विषय-तद्वृत्त्यनभिव्यक्तार्थकत्वेनान्तःकरणोपहितान्यरूपजीवसाक्षी प्रत्यक्षरूपेयं चित् बोध्या । नच—उक्तस्फुरणस्य चिद्रूपतया स्वप्रकाशत्वाद् नोक्तसाक्ष्यपेक्षेति—वाच्यम् ; जडवृत्तिविशिष्टायाश्चितोऽपि जडत्वात्, अत एव वाऽस्वरसादाह—*विशिष्टचित इति* ॥ शेषं पूर्ववत् । व्यवहारपदस्य शब्दप्रयोगमात्रार्थकत्वे यावत्त्वविवक्षायामपि सर्वस्मिन्नपि ब्रह्मविषयकास्तित्वादिव्यवहारे स्वप्रयोजकत्वजन्यास्तित्वादिविशिष्टब्रह्मविषयकवृत्तिसमानविषयकवृत्तिविशिष्टचितो ब्रह्मातिरिक्तायाः प्रयोजकत्वात् "तत्त्वमसी"त्यादिवाक्यरूपशुद्धव्यवहारेऽपि परम्परया तात्पर्याविग्राहकविशिष्टचितः प्रयोजकत्वाद् ब्रह्मण्यपि दृश्यत्वापत्त्या व्यभिचारो दुर्वारः, इत्यतो व्याचष्टे

अद्वैतसिद्धिः

व्यवहारश्च स्फुरणाभिवदनादिसाधारणः। तत्र ब्रह्मणः स्फुरणरूपे व्यवहारे नित्यसिद्धे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*वदनादीति* ॥ आदिपदादिच्छाप्रवृत्त्यादिसंग्रहः। *ननु* घटादेरिव ब्रह्मणोऽपीच्छादावसत्त्वापादकाज्ञानशून्यचितो हेतुत्वात् तादृशचितश्च ब्रह्मातिरिक्तत्वाद् ब्रह्मणि व्यभिचारः, तत्राह—*तत्रेत्यादि* ॥

विट्ठलेशीयटिप्पणी

*मूले—व्यवहारश्चेति* ॥ 'स्फुरणाभिवदनादी'त्यत्र *स्फुरणम्=चिद्रूपं ज्ञानम्, *अभिवदनम्=शब्दप्रयोगः, आदिपदं व्याख्यातुं घटादीत्यादिपदव्यावृत्तये प्रतीकमाददाति—*वदनादीतीति* ॥ *इच्छेति* ॥ सा च ब्रह्मणि 'अहं ब्रह्म भूयासम्' 'ब्रह्मभावो मे भवतु' 'ब्रह्मप्राप्तिर्मे भूयात्' 'सच्चिदानन्दब्रह्मात्मसाक्षात्कारो मे जायताम्' इत्याद्याकारा बोध्या। प्रवृत्तिरपि तदनुकूलश्रवणादौ बोध्या। 'प्रवृत्त्यादी'त्यादिना तु श्रवणादिद्वारा तदनुकूलतद्विरुद्धदेहेन्द्रियादिप्रपञ्चविषयकभयनिवृत्तिपरिग्रहः। तत्र यावत्त्वविवक्षणेन व्यवहारपदार्थे इच्छाद्यन्तर्भावफलम्, ब्रह्मणि इच्छादेरापत्त्या व्यभिचारप्रसञ्जनेन तत्रेति ग्रन्थावतारः, स्फुरणस्य व्यवहारपदार्थेऽन्तर्भावफलं ब्रह्मण्युक्तव्यभिचारवारणमिति स्पष्टयिष्यति तद्ग्रन्थव्याख्यानेन। *ननु* तदर्थेच्छां प्रति तदर्थासत्त्वापादकाज्ञाननिवर्तकं तदर्थास्तित्वज्ञानं कारणम्, तथाच घटेच्छां प्रति घटास्तित्वज्ञानस्येव ब्रह्मेच्छां प्रति ब्रह्मास्तित्वज्ञानस्य हेतुत्वेऽपि तज्ज्ञानं ब्रह्मचैतन्यरूपमेव, न तु तदतिरिक्तम्; घटाद्याकारवृत्त्यवच्छिन्नचैतन्यरूपज्ञानस्यापि घटास्तित्वस्येव स्वसत्त्वस्यापि ग्राहकत्वात्, तस्य स्वप्रकाशत्वेन तद्ग्राहकान्तरानुपगमात्, एवञ्च ब्रह्मेच्छारूपतद्व्यवहारे ब्रह्मरूपस्यापेक्षाया एव ब्रह्मणि सत्त्वात् कथं व्यभिचार इति ? अत आह—*घटादेरिवेति* ॥ *असत्त्वापादकाज्ञानशून्यचित इति* ॥ उक्ताज्ञानाभावविशिष्टचित इत्यर्थः। परोक्षापरोक्षज्ञानयोरुभयोरपि स्वविषयकेच्छाजनकत्वात्, तदुभयसाधारण्याया'सत्त्वापादकत्वम'ज्ञानविशेषणम्। अभानापादकाज्ञानशून्यत्वं त्वपरोक्षज्ञानस्यैवेति बोध्यम्। *वस्तुतस्तु*—तदस्तित्वज्ञानत्वस्यैव तदिच्छाजनकतानवच्छेदकत्वात्, अत्राज्ञानाविषयत्वरूपतत्प्रयोज्यतन्नियताभावस्य प्रतियोगितावच्छेदकत्वं प्रयोजकान्तेनोक्तम्। घटादेः शुद्धब्रह्मचैतन्ये तादात्म्येनाध्यासेन चिद्रूपज्ञानविषयत्वसत्त्वेऽपि घटादीच्छानुदयेन घटाकारवृत्तिजन्यासत्त्वापादकाज्ञाननिवृत्तिसहितोक्तवृत्तिप्रतिबिम्बितचैतन्यत्वेन घटादीच्छाजनकत्वे गौरवेण तन्नियतोक्ताज्ञाननिवृत्तिविशिष्टचैतन्यत्वेनैव घटादीच्छां प्रति कारणत्वस्योपगन्तव्यत्वेन तदैकरूप्यानुरोधेन नास्तिकानां ब्रह्मेच्छानुदयेन च ब्रह्मेच्छां प्रति तदसत्त्वापादकाज्ञानाभावविशिष्टचैतन्यत्वेनैव कारणत्वं स्वीकार्यम्, नतु केवलचैतन्यत्वेन, तदस्तित्वविषयकवृत्तिविशिष्टचैतन्यत्वेन वा; अत एवास्तिकानां ब्रह्मास्तित्वसंशयाद्यभावेनोद्बुद्धतत्संस्कारस्य सर्वदा सत्त्वाद् ब्रह्मचैतन्ये तदसत्त्वापादकाज्ञानाभाववैशिष्ट्यस्यापि सार्वदिकत्वेन सर्वदैव ब्रह्मेच्छा संभवतीति भावः। तावता किम् ? अत आह—*तादृशचित इति* ॥ अत्र केचित् स्फुरणं नानुभूतार्थस्मरणम्, अपूर्वार्थप्रतिभारूपज्ञानविशेषो वा; ब्रह्मणि तयोर्नित्यसिद्धत्वाभावात्, किन्तु प्रत्यक्षं ज्ञानमेव। एवञ्च ब्रह्मणः स्फुरणं नाम येन केनचिद्रूपेण प्रत्यक्षत्वम्। तच्च वस्तुतो ब्रह्मरूपस्यात्मनश्चिद्रूपसाक्षिप्रत्यक्षरूपम्, ग्रन्थकृताऽनुपदं वक्ष्यमाणं विशिष्टचिद्रूपज्ञानसामान्यरूपं वा नित्यसिद्धम्। 'अहमस्मि न वा' 'नाहमस्मि' इति संशय-विपर्यययोरभावेन चिदात्मतदंशाज्ञानस्याज्ञाने तदंशविषयकत्वस्य वा कल्पनादित्याशयेन व्याचष्टे—*स्फुरणरूप इति* ॥ यद्यपि ब्रह्मरूपस्यात्मनोऽसत्त्वापादकाज्ञानविषयत्वाभावविशिष्टं साक्षिचैतन्यं चैतन्यमेव वा स्फुरणपदार्थभूतं प्रत्यक्षम्; तथाप्यज्ञाननिवृत्तिमात्रतात्पर्येण 'घटः स्फुरती'ति व्यवहाराभावात् स्वजन्याज्ञाननिवृत्तिसहितचैतन्यप्रतिबिम्बविशिष्टवृत्तितात्पर्येणैव तद्व्यवहाराच्च 'घटः स्फुरति' 'घटस्य स्फुरणमि'ति व्यवहारानुरोधेन, वक्ष्यमाणेन ज्ञानार्थकधातूनां सकर्मकत्वानुरोधेन चाह—*असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूप इति* ॥ घटादौ समानकालीनयोरपि प्रयोज्य-प्रयोजकभावाद् उक्ताज्ञानाविषयत्वस्य प्रयोजिका घटादिविषयिण्यपरोक्षवृत्तिः, तद्विशिष्टत्वं स्वगतप्रतिबिम्बप्रतियोगित्वसम्बन्धेन घटाद्यवच्छिन्नचैतन्यरूपप्रत्यक्षस्य, ब्रह्मात्मन्युक्ताज्ञानाविषयत्वप्रयोजकं तदन्तःकरणान्यानुपहितचित्त्वम्, तद्वैशिष्ट्यं त्वामुक्ति

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*स्फुरणरूपे=असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपे । *नित्यसिद्धे=अनादौ । पूर्णानन्दांश उक्ताज्ञाननिवृत्तेस्तदाकारवृत्त्यधीनत्वेन तदंश एव स्फुरणं सादि, नतु चिदंशे ; वृत्तिं विनाऽपि 'चिदस्ती'ति सर्वदा व्यवहारात्, शुद्धचितोऽज्ञानाविषयत्वे नित्यसिद्धे वृत्तेरप्रयोजकत्वेऽप्यज्ञानाविषयत्वविशिष्टचित एव तत्र क्षेमसाधारणप्रयोजकत्वात् शुद्धचितस्तद्विशिष्टत्वेन स्फुरणमिति भावः । *स्वातिरिक्तसंविदिति* ॥ उक्तस्फुरणस्य

## विट्ठलेशीयटिप्पणी

संसारदशासाधारणतत्तज्जीवसाक्षिचैतन्यरूपप्रत्यक्षस्य ; साक्षित्वोपाधेरन्तःकरणस्य संस्काररूपेणानादित्वात् । उक्तस्फुरणयोर्घटात्मनोस्तादात्म्यरूपं विषयत्वम् । एवञ्च वह्न्यादौ परोक्षवृत्तेरसत्त्वापादकाज्ञाननिवर्तकत्वेन 'वह्निरस्ती'त्यादिव्यवहारेऽपि बहिरनिर्गतायां सत्यां वह्न्याद्यवच्छिन्नचैतन्यप्रतिबिम्बासम्भवेनान्तःकरणावच्छिन्नचैतन्यप्रतिबिम्बसम्भवेऽपि तत्तादात्म्यरूपविषयत्वस्य बहिःस्थवह्न्यादावसम्भवेन 'वह्निर्भाति, 'स्फुरति' इत्यादिव्यवहारो न भवति । असत्त्वापादकाज्ञाननिवर्तकत्वं तु परोक्षवृत्तिवदपरोक्षवृत्तेरपि ; तत्र 'घटः स्फुरतीति' व्यवहारवदस्तीत्यपि व्यवहारादिति बोध्यम् । *ननु*—प्रत्यक्षस्य स्फुरणत्वेऽभानापादकत्वेनैवाज्ञाननिवेशोऽस्त्विति—चेत्, *उच्यते* ; आत्मनि सदंशस्फुरणस्यैव नित्यसिद्धत्वात् तद्विरोधित्वावच्छेदकासत्त्वापादकत्वेनाज्ञाननिवेशौचित्यमिति ज्ञेयमित्याहुः । ग्रन्थकारमते तु स्फुरणं ज्ञानसामान्यमेव, तत्राज्ञानाविषयत्वप्रयोजकं वृत्तिसामग्र्यादि, तद्विशिष्टचिद्रूपत्वे ज्ञानस्य ; सकर्मकत्वानुरोधात् । ब्रह्मज्ञाने तदुपपादनञ्च प्रकारान्तरेणेत्यग्रे व्यक्तीभविष्यति । *नित्यत्वम्=अनादित्वे सत्यनन्तत्वम् । तत्र विशिष्टचैतन्यस्य मिथ्यात्वेनान्तवत्त्वादिति विशेष्यं परित्यज्य व्याचष्टे—*नित्यसिद्धेऽनादाविति* ॥ *नन्वेवम्* पूर्णानन्दादिरूपेणापि ब्रह्मणः स्फुरणस्य नित्यसिद्धत्वे शास्त्रवैयर्थ्यम्, अत आह—*पूर्णानन्दांश इति* ॥ *उक्तेति* ॥ असत्त्वापादकेत्यर्थः । *तदाकारवृत्तीति* ॥ वेदान्तजन्ये[illegible] *अधीनत्वेनेति* ॥ 'नाहं पूर्णानन्दः' 'अहं पूर्णानन्दो न वे'ति संशय-विपर्यययोरनुभवादिति भावः । तर्हि कस्मिन्नंशे ब्रह्मणः स्फुरणमनादि ? तत्राह—*नत्विति* ॥ *चिदंश इति* ॥ शुद्ध इत्यादिः । स्फुरणं स्यादित्यनुषङ्गः । *वृत्तिं विनाऽपीति* ॥ शुद्धचिति वृत्तेरनभ्युपगमेन विषयतासम्बन्धावच्छिन्नवृत्तिविरहवत्त्वेऽपीत्यर्थः । चिदंश इत्यनुषङ्गः । *सर्वदा=सर्वकालावच्छेदेन । *चिदस्तीति* ॥ व्यवहारादित्यन्वयः । तत्प्रयोजकचित्स्फुरणस्य सर्वदाऽऽवश्यकत्वादिति शेषः । चिन्निष्ठाज्ञानविषयत्वाभावस्य चिद्विषयकवृत्ति-तत्सामग्रीप्रयो[illegible]त्व एव वृत्तिदशायां निरुक्तवृत्तिविशिष्टचिद्रूपं चित्स्फुरणम्, नान्यदेति तत् सादि स्यात् ; तदेव न ; व्यभिचारादिति भावः । *ननु* तन्निष्ठाज्ञानविषयत्वाभावप्रयोजकविशिष्टचित् तत्स्फुरणं न भवति ; तत्र शुद्धचिद्रूपब्रह्मण्यज्ञानविषयत्वाभावस्य नित्यसिद्धत्वेन शुद्धे वृत्तेरनभ्युपगमेन च तत्र वृत्तेरप्रयोजकत्वेन ब्रह्माज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपस्य ब्रह्मस्फुरणस्याप्रसिद्धेः, अत आह—*शुद्धचित इति* ॥ तद्रूपब्रह्मण इत्यर्थः । *नित्यसिद्ध इति* ॥ शुद्धत्वभङ्गप्रसङ्गादिति भावः । *वृत्तेरिति* ॥ शुद्धेऽनभ्युपगताया इति शेषः । तर्हि नित्यसिद्धे किं कथं प्रयोजकम्? तत्राह—*अज्ञानाविषयत्वविशिष्टचित इति* ॥ *तत्र=शुद्धचिन्निष्ठाज्ञानविषयत्वाभावे । *क्षेमसाधारणप्रयोजकत्वादिति* ॥ यथाऽनादावपि घटप्रागभावे दण्डविरहप्रयोज्यता, यथाच दुःखप्रागभावे प्रायश्चित्तप्रयोज्य[illegible]तरक्षणे सत्त्वे सति तदभावक्षणाव्यवहितोत्तरक्षणेऽसत्त्वरूपा, तथा शुद्धचिन्निष्ठेऽज्ञानविषयत्वाभावेऽपि स्ववि[illegible]ष्टचिन्निरूपिता या प्रयोज्यता तन्निरूपितप्रयोजकत्वादित्यर्थः । यद्यपि विशेष्ये विशेषणसम्बन्धस्य विशिष्टे प्रयोजकत्वं प्रसिद्धम्, नतु विशिष्टस्योक्तसम्बन्धे प्रयोजकत्वमिति विपरीतमपि, अप्रसिद्धेः, अन्योन्याश्रयापत्तेश्च ; तथापि स्वरूपसम्बन्धरूपप्रयोज्य-प्रयोजकभाव एव तथा, अयं तु पारिभाषिकः, इति नोक्तशङ्कावसर इति भावः । *ननु* अस्तु शुद्धचिद्रूपब्रह्मनिष्ठाज्ञानविषयत्वाभावेऽज्ञानाविषयत्वविशिष्टा चित् प्रयोजिका ; तथापि कथं तद्विशिष्टायाश्चितो ब्रह्मस्फुरणत्वम् ? अत आह—*शुद्धचित इति* ॥ *तद्विशिष्टत्वेनेति* ॥ अज्ञानाविषयत्वविशिष्टचिद्रूपं यत् चिन्निष्ठाज्ञानविषयत्वाभावप्रयोजकं तद्विशिष्टत्वेनेत्यर्थः । *स्फुरणम्=शुद्धचिद्रूपब्रह्मस्फुरणम् । उक्तस्फुरणे प्रविष्टानां सर्वेषामनादित्वादुक्तस्फुरण-

अद्वैतसिद्धिः

स्वातिरिक्तसंविदपेक्षा नास्ति, इति नियतिपदेन व्यभिचारवारणम् ; स्वगोचरयावद्व्यवहारे स्वातिरिक्तसंविदपेक्षायां पर्यवसानात् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शुद्धचिदपेक्षत्वेऽपि सा न ब्रह्मातिरिक्ता, उक्तस्फुरणेन क्षेमसाधारणजनकत्वेन ब्रह्मातिरिक्ताविद्याया अपेक्षणीयत्वेऽपि सा न संवित्, अत एव संवित्पदं सार्थकमिति भावः । *नियतिपदेनेति* ॥ नियमघटितार्थेनेति शेषः । स्वव्यवहारं प्रति स्वातिरिक्तसंविदपेक्षाया नियमो व्यापकत्वरूपो घटकतया यत्रेति व्युत्पत्त्या तादृशव्यापकताघटितस्य हेतुता ।

न्यायामृतसौगन्ध्यम्

व्यवहारश्च स्फुरणाभिवदनादिसाधारणः । तत्र ब्रह्मणः स्फुरणरूपव्यवहारे नित्यसिद्धे स्वातिरिक्तसंविदपेक्षा नास्ति, इति नियतिपदेन व्यभिचारवारणात्, स्वगोचरयावद्व्यवहारे स्वातिरिक्तसंविदपेक्षायां पर्यवसानादिति—चेत्, *न* ; वृत्तिव्याप्यत्वस्योक्तरीत्या(१) ब्रह्मादौ व्यभिचारात् । फलव्याप्यत्वस्य मम घटादावसिद्धेश्च ॥

सौगन्ध्यविमर्शः

(१) यथाच वृत्तिव्याप्यत्वस्य न ब्रह्मणि व्यभिचारः, तथा पूर्वमेवोपपादितम् । तथाचोभयसाधारणस्य व्यवहारप्रयोजकवृत्तिविषयत्वरूपस्य घटादावपि न भवन्मतरीत्याऽप्यसिद्धिः ; फलव्याप्यत्वेन रूपेण हेतोरविवक्षणात् । एतेन—वृत्तिव्याप्यत्वस्योक्तरीत्या ब्रह्मणि व्यभिचारात्, फलव्याप्यत्वस्य मम घटादावसिद्धेश्चेति—प्रत्युक्तम् ॥

विट्ठलेशीयटिप्पणी

स्याप्यनादित्वमिति भावः । स्वातिरिक्तपदप्रयोजनमाह—*उक्तस्फुरणस्येति* ॥ विशिष्टचिद्रूपस्येत्यर्थः । *शुद्धचिदपेक्षत्वेऽपीति* ॥ शुद्धचिति कल्पितस्य तदाश्रितत्वादिति भावः । संवित्पदप्रयोजनं वक्तुमाह—*उक्तस्फुरणेति* ॥ विशिष्टचिद्रूपेणेत्यर्थः । *जनकत्वेनेति* ॥ स्वघटकत्वेन चेति शेषः । *वस्तुतस्तु*—विशिष्टचितः शुद्धचिति कल्पितत्वेनाविद्यापरिणामत्वेनेत्यपि बोध्यम् । नियतिपदार्थस्य नियमस्य व्यवहारनिष्ठव्याप्यत्वरूपस्यापेक्षानिष्ठस्य व्यापकत्वरूपस्य वा पक्षे घटादावसत्त्वेन हेतुत्वासम्भवेऽप्रमाणत्वात् नियतिपदेनेत्यसङ्गतम्, अत आह—*नियमघटितार्थेनेति शेष इति* ॥ व्यवहारे स्वातिरिक्तसंविदपेक्षाया नियतिः=नियमो व्याप्यत्वरूप इति तत्पुरुषेण व्याख्याने घटादौ हेत्वसिद्धिः, अतो बहुव्रीहिणा व्याचष्टे—*स्वव्यवहारं प्रतीति* ॥ स्वव्यवहारनिरूपितेत्यर्थः । *अपेक्षाया इति* ॥ षष्ठ्यर्थो नियमान्वयि निष्ठत्वम् । *यत्रेति* ॥ इत्यत्वरूपान्यपदार्थनिष्ठत्वनिर्वाहकसम्बन्धमाह—*घटकतयेति* ॥ समानार्थस्य हेतुतामाह—*तादृशेति* ॥ स्वव्यवहारनिरूपितस्वातिरिक्तसंविदपेक्षानिष्ठेत्यर्थः । यद्यपि *स्वव्यवहारे=स्वव्यवहारनिष्ठा, स्वातिरिक्तसंविदपेक्षानिरूपिता । *नियतिः=व्याप्यत्वरूपा घटकतया यत्रेति व्युत्पत्तिरपि संभवति ; तथापि बहुव्रीहिघटकनियतिपदार्थव्याप्यत्वे तद्घटकस्वव्यवहारनिष्ठत्वान्वये सापेक्षत्वेनासामर्थ्यात् समासानुपपत्तिः, 'ग्रामे सुन्दरपुत्रो देवदत्तः' 'धूमे वह्निव्याप्यताप्रयोजिका वह्निविधेयते'तिवत्, इत्यतोऽपेक्षानिष्ठनियतिपदार्थव्यापकत्वान्वयि 'स्वव्यवहारे' इति सप्तम्यर्थनिरूपितत्वं स्वव्यवहारं प्रतीत्यनेन व्याख्यातम् । तथा सति व्यवहार इत्यस्य प्रतियोगिवाचकत्वात् सापेक्षत्वेऽपि समासः ; 'प्रतियोगिपदादन्यः' इत्युक्तेः, 'चैत्रस्य बहुपुत्रत्वम्' 'राजनगरे धूमस्य वह्निव्यापकताप्रयोजकिका वह्निविधेयते'तिवत् । *घटितस्य=घटितरूपइत्यत्वस्य । अत्रोक्तघटितत्वेन स्वव्यवहारनिरूपितस्वातिरिक्तसंवित्प्रयोज्यत्वरूपतदपेक्षानिष्ठस्वव्यवहारनिरूपितव्यापकताकत्वविशिष्टत्वत्वस्य, उक्तव्यापकताविशिष्टोक्तापेक्षायाः स्वाश्रयविषयत्वसंबन्धेनोक्तापेक्षानिष्ठव्यापकतानिरूपकत्वविशिष्टस्वव्यवहारस्य च विषयतासंबन्धेन हेतुत्वस्य स्वपदद्वयस्य व्यवहारातिरिक्तस्वप्रतियोगिनोरैक्यलाभ-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादृशघटितत्वं च स्वव्यवहारत्वावच्छिन्नव्यापकस्वातिरिक्तसंवित्सापेक्षत्वकत्वम् । यथाश्रुतं त्वसङ्गतम् ; नियमस्य हेतुत्वासम्भवात् । *स्वगोचरेति* ॥ स्वविषयकस्फुरणाद्यन्यतमत्वव्यापकं यत् स्वातिरिक्तचिदधीनत्वम्, तत्सम्बन्धित्वं पर्यवसितहेतुः । अधीनत्वं च क्षेमसाधारणजन्यगताखण्डधर्मविशेष इति भावः ॥

न्यायामृतसौगन्ध्यम्

यच्चेत्याद्यप्यशुद्धम् ; घटादिव्यवहारे चैतन्यापेक्षायां प्रमाऽसिद्धेः, ब्रह्म-घटयोः स्वं प्रति स्वस्फुरणा॰

विठ्ठलेशीयटिप्पणी

कत्वेन संभवेऽपि न क्षतिः ; व्यभिचारासिद्ध्योरभावात्, ब्रह्मातिरिक्तस्य स्वपदद्वयार्थत्वाच्चोक्तहेतूनां पक्षे घटादौ सत्त्वात्, ब्रह्मणश्च स्वपदद्वयेनोपादानासंभवेन तत्रासत्त्वात्, तथापि घटितत्वनिवेशे गौरवेण तत् परित्यज्य परिष्करोति—*तादृशघटितत्वं चेति* ॥ *स्वेति=स्वव्यवहारत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नव्याप्यतानिरूपितस्वरूपसंबन्धावच्छिन्नव्यापकताश्रयेति व्यापकान्तार्थः । *सापेक्षत्वम्=प्रयोज्यत्वम् । *यथाश्रुतम्=सत्पुरुषबललभ्यम् । *नियमस्य=व्यवहारनिष्ठव्याप्यत्वस्य, अपेक्षानिष्ठव्यापकत्वस्य वा । *हेतुत्वासंभवादिति* ॥ घटाद्यसिद्धेरिति भावः । व्यभिचारवारकनियतिपदघटितबहुव्रीहिपर्यवसितोक्तार्थौ मूले स्वगोचरेत्यादिना स्पष्टीकृतः । तत्र व्यवहारत्वं शब्दप्रयोगेच्छा-स्फुरणादिसाधारणमनुगतं दुर्वचम्, अतो व्याचष्टे—*स्वविषयकस्फुरणाद्यन्यतमत्वेति* ॥ आदिशब्देनेच्छा-प्रवृत्त्यादिसंग्रहः । वक्ष्यमाणलघुहेतुशीघ्रस्फूर्तये स्फुरणस्य साक्षादुपादानम् । उक्तान्यतमस्य तादात्म्येन व्याप्यत्वसंभवेऽपि संबन्धान्तरेण व्याप्यताभ्रमवारणाय तत्पर्यवसितान्यतमत्वव्यापकमित्युक्तम् । संविदपेक्षां व्याचष्टे—*चिदधीनत्वमिति* ॥ *तत्संबन्धित्वमिति* ॥ *ननु*—अत्र स्वत्वस्याननुगमात् तत्तद्व्यक्तित्वस्य हेतुत्वे पर्यवसानं स्यादिति—चेत्, *न* ; स्वातिरिक्तत्व-व्याप्यत्वोभयसंबन्धेन संवित्पदार्थचित एव हेतुत्वे तात्पर्यात् । तत्र पक्षस्य घटादेर्व्याप्यत्वं स्वविषयकस्फुरणाद्यन्यतमत्वस्वसंबन्धेन, चितो व्यापकत्वं स्वाधीनस्फुरणाद्यन्यतमत्वस्वसंबन्धेनेति । घटादेरपरोक्षत्वव्यवहारे घटाद्यभिव्यक्तचितः, स्फुरणे शुद्धचितः, इच्छादावसत्त्वापादकाज्ञानाविषयत्वविशिष्टचितः प्रयोजकत्वादेकस्याः कस्याश्चिदपि चितो न सर्वघटादिव्यवहारसाधारणनिरुक्तान्यतमत्वस्वसंबन्धेन घटादिव्यापकत्वम् । स्वावच्छिन्नभिन्नत्व-स्वावच्छिन्नव्याप्यत्वोभयसंबन्धेन चैतन्यत्वेनोक्तहेतुत्वे चो'क्तस्फुरणस्य शुद्धचिदपेक्षितत्वेऽपी'ति ग्रन्थासङ्गतिः ; चैतन्यत्वेन तदपेक्षाविरहात्, तथा तदपेक्षायां शुद्धत्वभङ्गात्, इति शुद्धचित एव हेतुत्वम् ; विशिष्टोपहितचैतन्येष्वपीच्छादिरूपतद्व्यवहाराणामसत्त्वापादकाज्ञानशून्यचैतन्यद्वारा शुद्धचित्प्रयोज्यत्वेन शुद्धचिद्भिन्नत्वेन च तदुपपत्तेः, शुद्धे ब्रह्मणि तु तत्स्फुरणस्यापि शुद्धचित्प्रयोज्यत्वेन व्याप्यत्वरूपैकसंबन्धसत्त्वेऽपि शुद्धचिद्भिन्नत्वरूपद्वितीयसंबन्धाभावेनोक्तसंबन्धद्वयेन हेत्वभावेन व्यभिचारवारणात् । नचैवम्—स्वभिन्नत्वरूपैकसंबन्धेनैव चितो हेतुत्वमस्त्विति—वाच्यम् ; उक्तोभयसंबन्धघटितचिद्रूपहेतुव्यापकताया मिथ्यात्वरूपसाध्यनिष्ठाया एव संबन्धघटितव्यापकतातो भिन्नत्वेन 'स्वव्यवहारे' इत्यादिनोक्तदृश्यत्वनिर्वचने वैयर्थ्याभावात्, ब्रह्मणि ब्रह्मेच्छारूपव्यवहारप्रयोजकासत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचितः स्वभिन्नत्वरूपैकसंबन्धेन सत्त्वेन व्यभिचारप्रसक्त्योक्तद्वितीयसंबन्धस्यापि सार्थक्याच्च । तथा सति ब्रह्मण्यपरोक्षव्यवहारेऽभानापादकाज्ञानाविषयत्वविशिष्टचित्प्रयोज्येऽसत्त्वापादकाज्ञानाविषयत्वविशिष्टचितोऽप्रयोजकत्वेन तद्घटितव्याप्यत्वरूपद्वितीयसंबन्धाभावेन व्यभिचारवारणसंभवात् । एवं च घटादितदाकारवृत्त्यवच्छिन्नचैतन्याद्भिन्ने तदप्रयोज्यत्वव्यवहारके शुद्धे ब्रह्मणि व्यभिचारवारणमपि व्याप्यत्वरूपद्वितीयसंबन्धफलम् । ब्रह्मविषयकव्यवहाराणां सर्वेषां साक्षात् परम्परया वा शुद्धचित्प्रयोज्यत्वेन ब्रह्मणि शुद्धचितो व्याप्यत्वरूपकसंबन्धसत्त्वेन प्रसक्तव्यभिचारवारणं स्वभिन्नत्वरूपापरसंबन्धनिवेशफलम् । उक्तोभयसंबन्धेनाविद्यारूपपदार्थस्य ब्रह्मणि सत्त्वेन व्यभिचारः, अतः संवित्पदेन चितो हेतुत्वमुक्तमिति ध्येयम् ॥

न्यायामृतम्

न षष्ठः ; घटादौ विशेष्यवत् फलव्याप्यत्वाभावरूपविशेषणस्याप्युक्तन्यायेन सत्त्वेनाविद्यादौ

अद्वैतसिद्धिः

अत एवास्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुः। स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्ता-

तरङ्गिणी

*घटादाविति* ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वम्। तत्र निरुपाख्येऽतिव्याप्ति-

न्यायामृतकण्टकोद्धारः

*न षष्ठ इति* ॥ फलव्याप्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वाभावरूपास्वप्रकाशत्व-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत्र* स्वातिरिक्तचिदधीनस्वस्फुरणकत्वं लघु हेतुर्बोध्यम्। *स्वापरोक्षत्व इति* ॥ *अपरोक्ष-

न्यायामृतसौगन्ध्यम्

भावस्य तुल्यत्वेनान्यं प्रति स्फुरणे तूभयोस्स्वातिरिक्तसंविदपेक्षणात्(१) स्वातिरिक्तसंविदपेक्षाभाव-

सौगन्ध्यविमर्शः

(१) स्वातिरिक्तसंविज्जन्यस्वविषयापरोक्षत्वादिव्यवहारकत्वमेव स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतित्वम्, न तु स्वकर्तृकव्यवहार इतरचैतन्यापेक्षाराहित्यत्वरूपं सौगन्ध्यकल्पितम्। तथाच ब्रह्म-घटयोः स्वं प्रति स्वस्फुरणाभावस्य तुल्यत्वे-

सिद्धिव्याख्या

*अत एव*=अव्यभिचारात्, हेतोस्तत्रासत्त्वाच्च। सतो हेतोरधिकरणस्य सत्त्वावश्यंभावेनासत्त्व-

विट्ठलेशीयटिप्पणी

अत्र व्यवहारपदार्थे इच्छाद्यन्तर्भावेण ब्रह्मणि व्यभिचारं प्रसज्य यावत्त्वं निवेश्य स्फुरणस्य तदन्तर्भावेण तद्वारणं *प्रक्षालनाद्धीति* न्यायविरुद्धम्, इति व्यवहारपदेन स्फुरणमात्रविवक्षयैव ब्रह्मणि व्यभिचारवारणादलं यावत्त्वविवक्षये-त्याह—*अत्रेति*। *स्वेति* ॥ स्वाधीनस्फुरणविषयत्व-स्वभिन्नत्वोभयसंबन्धेन चिदेवानुगतो लघुहेतुरित्यत्र तात्पर्यम्। घटाद्यवच्छिन्नचिद्भिन्ने ब्रह्मणि व्यभिचारवारणाय प्रथमः संबन्धः। शुद्धचिदधीनस्फुरणविषये ब्रह्मणि व्यभिचारवारणाय द्वितीय इति बोध्यम्। चरमकल्पं परिष्कर्तुमाह मूले—*अत एवेति* ॥ यतो ब्रह्मस्फुरणस्य ब्रह्मान्यचिदधीनत्वम्, घटादिव्यवहाराणां घटान्यचिदधीनत्वं च पूर्वं हेतुपरिष्कारायोक्तं साधु, अत एवेत्यर्थः। *हेतु-रिति* ॥ साधुरिति शेषः। *ननु* स्वप्रकाशत्वं पूर्वपक्षोक्तमवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम्, तत्र वेद्यत्वं फलव्याप्यत्वम्, तच्च शुक्तिरूप्येऽप्यस्ति, इति तद्भिन्नत्वरूपहेत्वसिद्ध्या दूषितम्, अतः प्रकारान्तरेण स्वातिरिक्त-प्रकाशानपेक्षप्रत्यक्षविषयत्वरूपं वाच्यम्, तदपि दीपादिसाधारणम्, अतस्तद्भिन्नत्वरूपहेतोर्दीपादावसिद्धिः, यदि प्रकाशपदं चैतन्यपरम्, तर्हि ब्रह्मण्यप्रसिद्धिः; ब्रह्मान्यचितोऽप्रसिद्धेः, इत्यत आह—*स्वप्रकाशत्वं हीति* ॥ *स्वेति*॥ स्वापरोक्षत्वं स्वातिरिक्तानपेक्षं यस्य तत्त्वमित्यर्थः। अत्र यस्य ज्ञेयत्वमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्ट-चिद्विषयत्वम्, तत्र ब्रह्मविषयकस्मृत्यनुमिति-शाब्दादिसामग्रीरूपोक्तप्रयोजकविशिष्टचिद्रूपपरोक्षज्ञान उक्तसामग्रीघटक-विशिष्टचिद्रूपज्ञानस्य प्रयोजकत्वेन शुद्धब्रह्मान्यविशिष्टचिदपेक्षायाः सत्त्वेन ब्रह्मणि स्वप्रकाशत्वाप्रसिद्धिः स्यात्, अतः 'ज्ञेयत्वे' इत्यनुक्त्वा 'स्वापरोक्षत्वे' इत्युक्तम्। तत्रापरोक्षत्वं यदीन्द्रियजन्यवृत्त्यवच्छिन्नचिद्विषयत्वम्, तदाऽऽत्मन्यव्याप्तिः, यदि साक्षिविषयत्वम्, तदा बाह्यघटादावव्याप्तिः। नच—तत्रेन्द्रियजन्यान्तःकरणपरिणामवृत्त्यवच्छिन्नचिद्विषयत्वादन्तः-करणोपहितचिद्रूपसाक्षिविषयत्वमस्त्येव, परिणाम-परिणामिनोरभेदेनान्तःकरण-तद्वृत्त्योरभेदादिति—वाच्यम्; एवं सति नित्यातीन्द्रिये गुरुत्वादावतिव्याप्तिः; हेतुज्ञानादिजन्यान्तःकरणवृत्त्यवच्छिन्नचैतन्यविषयत्वादिति। नच—ज्ञानाक-रणकज्ञानविषयत्वं प्रत्यक्षत्वमित्युक्तौ नायं दोष इति—वाच्यम्; घटादिप्रत्यक्षस्यापि विशेषणज्ञानादिनिष्ठफलोपधाय-कतारूपकारणताकत्वेनासंग्रहापत्तेः, 'दशमस्त्वमसी'त्यादिशाब्दादिप्रत्यक्षासंग्रहापत्तेश्च, इत्यत आह—*अपरोक्षत्व-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वम् = अज्ञानाविषयत्वप्रयोजकविशिष्टचित् । विषयनिष्ठं चेदं स्वप्रकाशत्वम् । *ननु*—नोक्तरूपमपरोक्षत्वम् ; गौरवात् , किंत्वज्ञानशून्यचिद्रूपम्, इति—चेत्, *न* ; साक्षात्करोतेः सकर्मकत्वानुरोधेनापरोक्षताया उक्तरूपत्वावश्यकत्वात् । धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वम् । फलप्रयोजकव्यापारघटितवाचकत्वं धातोः सकर्मकत्वमिति तार्किकादयः ।

### विठ्ठलेशीयटिप्पणी

मिति* ॥ *विषयनिष्ठमित्यादि* ॥ अत एव मूले—'स्वप्रकाशत्वं ही'त्यनेन विषयनिष्ठं तदुपक्रम्य स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वमिति विग्रहवाक्येन निरुच्य 'यत् साक्षादिति' श्रुत्या ब्रह्मणि तत्समन्वयं प्रदर्श्यान्यानधीनापरोक्षत्वमिति बहुव्रीहिसमासेन तत्पर्यवसितार्थ उक्तः सङ्गच्छते । *मूले—अन्येति* ॥ स्वान्येत्यर्थः । ज्ञाननिष्ठं तु स्वविषयानतिरिक्तत्वे तदनपेक्षाज्ञानाविषयताप्रयोजकविशिष्टचित्त्वं बोध्यम् । *अज्ञानाविषयत्वेति* ॥ अज्ञानविषयत्वसामान्याभावेत्यर्थः । तेन परोक्षज्ञानस्यासत्त्वापादकाज्ञाननिवर्तकत्वेऽपि न क्षतिः ; तस्याभानापादकाज्ञानानिवर्तकत्वात् । *प्रयोजकविशिष्टेति* ॥ प्रयोजकेन विशिष्टेत्यर्थः । *चिदिति* ॥ तादात्म्यसंबन्धेनेति शेषः । चित्तादात्म्यरूपविषयत्वमिति वाऽर्थः । प्रयोजकपदवैयर्थ्यं शङ्कते—*नन्विति* ॥ *साक्षात्करोतेरिति* ॥ 'घटं साक्षात्करोमि' इत्यादिव्यवहारादिति भावः । *ननु* व्यापारप्रयोज्यतद्व्यधिकरणफलाश्रयत्वं कर्मत्वम् , तादृशफलवाचकत्वं च सकर्मकत्वम् , तत्राश्रयत्वं कर्मप्रत्ययार्थः, फलमेव धात्वर्थः, व्यापारस्त्वाख्यातार्थः, एवं साक्षात्करोतेरज्ञानाविषया चिदेवार्थः, तत्प्रयोजकसामग्र्यादिकं त्वाख्यातार्थ इति मीमांसकमते प्रयोजकानिवेशेऽप्युपपत्तिरित्यत आह—*धात्वर्थतावच्छेदकेति* ॥ उक्तमतं तु न सम्यक् ; अन्यविषयकप्रत्यक्षसमानविषयकानुमित्यादिप्रतिबन्धक'गच्छती'त्यादिवाक्यजन्यव्यापारोपस्थित्योर्योग्यताज्ञानादिरूपकारणान्तरे वैशिष्ट्यनिवेशे विनिगमनाविरहेणोक्तसामग्र्यां त्रयाणां विशेष्य-विशेषणभावापत्तेः, धातोः फलावच्छिन्नव्यापारवाचकत्वमते त्वेकस्याः फलविशिष्टव्यापारोपस्थितेरेवोक्तकारणान्तरे प्रवेशेन विनिगमनात् प्रतिबन्धकताषट्कापत्त्या गौरवविरहशङ्काया अभावेन लाघवात् । नच—एकस्या अप्युपस्थितेः फलविषयतानिरूपितव्यापारविषयताकत्वेन, व्यापारविषयतानिरूपितफलविषयताकत्वेन वा प्रतिबन्धकसामग्र्यां कारणान्तरवैशिष्ट्यनिवेशे, तत्रैकस्मिन्नप्युक्तोभयरूपावच्छिन्ने द्वेधा कारणान्तरवैशिष्ट्यनिवेशे वा विनिगमनाविरहोऽस्त्येवेति—वाच्यम् ; तावताऽपि प्रतिबन्धकताचतुष्कस्यैवापत्त्या लाघवानपायात् । स्पष्टं चेदं व्युत्पत्तिवादे—विभक्तेः संख्याबोधकत्वमुक्त्वा तन्निराकृत्य प्रातिपदिकस्य संख्याविशिष्टार्थकत्वव्यवस्थापनपरे 'इदं पुनरिहावधेयमि'त्यादिग्रन्थे । तत्रैव च धातूनां प्रकर्षादिविशिष्टार्थकत्वम् , उपसर्गाणां तु द्योतकत्वमुक्तं भट्टाचार्यैः । अत एवानुभवत्यादीनां सकर्मकत्वम् । *एतेन*—धातोर्व्यापारमात्रवाचकत्वम् , कर्मप्रत्ययस्य च फलवाचकत्वमिति मतमपि—*निरस्तम्*, तत्रापि निराकृतं च । *फलप्रयोजकेति* ॥ प्रयोजकतासंबन्धेन फलावच्छिन्नेत्यर्थः । अकर्मकस्पन्दादिधातूनां केवलव्यापारैः निरूपणम् + ज्ञानं चासत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपम् , तत्र प्राधान्येन तद्वाचकत्वाभावाद् निरूपणस्य सकर्मकत्वानुपपत्तिः, अतो व्यापारघटितेत्युक्तम् । तेन प्रकृतेऽपि साक्षात्करोत्यादेरज्ञानाविषयत्वरूपफलप्रयोजकादिसामग्र्यादिविशिष्टचित्प्रतिपादकस्य प्राधान्येनोक्तसामग्र्याद्यप्रतिपादकत्वेऽपि सकर्मकत्वोपपत्तिः । *तार्किकादय इति*॥ आदिना वैयाकरणाः । *ननु* धातोः फलावच्छिन्नव्यापारवाचकत्वे 'गम्यते ग्रामः' इत्यादिकर्माख्यातादिस्थले ग्रामादिकर्मण्यन्वययोग्यस्य संयोगादेरितरविशेषणतयोपस्थितत्वेन विशेषणत्वेनान्यत्रान्वयस्य व्युत्पत्तिविरुद्धत्वेनासंभवाद् व्यापारावच्छिन्नसंयोगस्य च धातुतः शक्त्यन्तरं विनोपस्थित्यसंभवात्, संयोगादिफलस्य कर्माख्यातार्थतया आवश्यकत्वेन फलस्य द्वेधा प्रतीतिः, एवं सकर्मकाणां फलावच्छिन्नव्यापारवाचकत्वम्, अकर्मकाणां केवलव्यापारवाचकत्वमिति वैरूप्यं चेत्याशङ्क्य फलं व्यापारश्च पृथग् एकयैव शक्त्या धातुवाच्ये ; कर्त्राख्यातादौ व्यापारे फलं विशेषणम्, कर्माख्यातादौ च फले व्यापारो विशेषणम्, फलान्वय्याश्रयाश्रयिभावश्च कर्मप्रत्ययार्थः, इति नैयायिका-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्ववाच्यव्यापारस्य व्यधिकरणं यत् फलम्, तद्वाचकत्वं धातोः सकर्मकत्वम्। तथाच फलतत्प्रयोजकयोर्धातुवाच्याघटकत्वे धातोः सकर्मकत्वानुपपत्तिः। अत एव जानात्यर्थरूपस्य स्फुरणस्याप्युक्तरूपत्वमेव, न त्वसत्त्वापादकाज्ञानशून्यचिद्रूपत्वम्; जानातेः सकर्मकत्वानुपपत्तेः। तादृशप्रयोजकञ्च चिति घटादिप्रत्यक्षस्थले घटाद्याकारवृत्तिजनकसामग्री, सुखादिप्रत्यक्षस्थले सुखादिजनकसामग्री, तत्पूर्वभाविकालावच्छिन्नसुखादौ विद्यमानस्याज्ञानविषयत्वस्य सुखाद्युत्पत्तिक्षणावच्छेदेनाभावो हि तादृशसामग्रीप्रयुक्तः;

विट्ठलेशीयटिप्पणी

युक्तमतान्तरमाश्रित्याह—*स्ववाच्यव्यापारस्येति* ॥ *व्यधिकरणमिति* निद्राद्यनुकूलव्यापारार्थकस्वापादिधातूनां सकर्मकत्ववारणाय। *केचित्तु*—गत्यर्थतावच्छेदकसंयोगाश्रयस्य कर्तुः कर्मत्वे 'चैत्रेण स्वो गम्यते' इति प्रयोगापत्तिः, 'चैत्रः स्वं गच्छती'ति प्रयोगापत्तिश्च, इति तद्वारणाय व्यापारानधिकरणवृत्तिफलाश्रयताया एवाख्यातार्थकर्मत्वरूपलाभाय द्वितीयादेः फलान्वयाधेयतावद् व्यापारान्वयिपरसमवेतत्वमप्यर्थ इति लाभाय च तदिति—*वदन्ति*। *तद्वाचकत्वमिति* ॥ व्यापारस्याख्यातार्थत्वं फलस्य कर्मप्रत्ययार्थत्वं च व्युत्पत्तिवादे विस्तरेण निराकृतम्, इति तदुभयवाचकत्वमुक्तम्। कर्तृ-कर्माख्यातस्थलयोरुक्तपरस्परवैपरीत्येन विशेष्य-विशेषणभावार्थं च तदुभयस्मिन् पृथगेका शक्तिः, तेनोभयस्यैवोपस्थितिः, नत्वेकस्येति ध्येयम्। अत्र 'स्त्रियाः पादसंवाहनेन पतिः स्वपिति, वैद्यस्यौषधदानेन रोगी जीवती'त्यादौ स्वपि-जीव्योः सकर्मकत्वे 'पतिः स्वं स्वपिति 'रोगी स्वं जीवति' इति व्यवहारापत्तिवारणाय स्ववाच्यत्वं व्यापारविशेषणम्। 'स्वामिनः स्वापेन चौरो धनं प्राप्नोति' 'मृदादेर्भावेन कुलाला घटमुत्पादयन्ति' इत्यादौ स्वपि-भवत्योः सकर्मकत्वे 'स्वामी चोरं स्वपिति' 'मृद् घटं भवती'त्यादिव्यवहारापत्तिवारणाय फलवाचकत्वं स्वस्य धातोरुक्तमिति तत्त्वम्। प्रकृतमुपसंहरति—*तथाचेति* ॥ उक्तमतद्वयानुसरणेन चेत्यर्थः। *सकर्मकत्वानुपपत्तिरिति* ॥ अतः साक्षात्करोत्यादीनामुक्तार्थकत्वमिति शेषः। *ननु* 'घटं साक्षात्करोती'त्यादावज्ञानाविषयत्वं साक्षादिति निपातार्थः, प्रयोजकत्वेविशिष्टा चित् करोतीति धात्वर्थव्यापारान्वयिनी, तद्व्यधिकरणधातुनिपातान्यतरार्थफलशालित्वमेव कर्मत्वमस्तु, स्वनिपातान्यतरवाच्यफलस्य प्रयोजकस्तद्व्यधिकरणो यो व्यापारः, तद्वाचकत्वं च धातोः सकर्मत्वमित्यत आह—*अत एवेति* ॥ धातोः फल-व्यापारोभयवाचकत्वादेवेत्यर्थः। *जानात्यर्थरूपस्य स्फुरणस्येति* ॥ पश्यत्याद्यर्थस्य चाक्षुषादेरित्यपि बोध्यम्। *उक्तरूपत्वम्=असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपत्वम्। चाक्षुषादौ तु प्रयोजके चक्षुरादिप्रयोज्यत्वमधिकम्, अज्ञानेऽसत्त्वापादकत्वं च न्यूनम्। *जानातेः=जानात्यादेः। साक्षात्कारेऽप्यैकरूप्यानुरोधात् फलव्यापारोभयवाचकत्वमेव युक्तमिति भावः। *ननु* उक्तधात्वर्थघटकं प्रयोजकं विशिष्यैव निवेश्यम्, किमर्थं प्रयोजकत्वेन तदनुगमः? इत्याशङ्क्य विषयभेदेनाज्ञानाविषयत्वप्रयोजकभेदाद् उक्तधातुशक्यतावच्छेदकैक्यानुपपत्तिपरिहारार्थमिति ध्वनयितुमुक्तप्रयोजकभेदं दर्शयति—*तादृशप्रयोजकमिति* ॥ अज्ञानाविषयत्वप्रयोजकमित्यर्थः। *चिति=घटाद्यधिष्ठानचिति। तस्या एव बहिर्निर्गतान्तःकरणवृत्त्यवच्छिन्नचिदभिन्नत्वेन ज्ञानत्वात्। वृत्त्यवच्छिन्नचिदेव वा चित्पदार्थः। सुखादिप्रत्यक्षस्थले तु सुखाद्यधिष्ठानभूतान्तःकरणावच्छिन्नचिदेव; तस्या एवान्तःकरणोपहितत्वेन तज्ज्ञानत्वात्, तद्विषयकवृत्तेरनभ्युपगमात्। वृत्तिसमकालेऽज्ञानाविषयत्वे वृत्तेः प्रयोजकत्वासम्भवात्—*वृत्तिजनकसामग्रीत्युक्तम्* ॥ वृत्तिश्चेयमैन्द्रियिकी ग्राह्या। तस्या अज्ञानाविषयत्वप्रयोजकत्वं वृत्तिपूर्वक्षणावच्छेदेन। चिति तद्वैशिष्ट्यं च स्वाव्यवहितोत्तरक्षणावच्छिन्नम्। तत्र वृत्तिपूर्वक्षणे न घटादावपरोक्षत्वव्यवहारः। अव्यवहितत्वं क्षणद्वयादिसाधारणम्, तेन वृत्त्यवस्थानपर्यन्तं तद्व्यवहारः। सुखादिवृत्तेरनङ्गीकारात् *सुखादिजनकेत्युक्तम्* ॥ *ननु* घटादौ पूर्वकालावच्छेदेन विद्यमानस्याज्ञानविषयत्वस्योत्तरक्षणावच्छेदेनाभावो वृत्तिवद् वृत्तिसामग्रीप्रयुक्तः, सुखादौ तु नैवम्; तेषां स्वपूर्वकालेऽसत्त्वात्, इत्यत आह—*तत्पूर्वभाविकालावच्छिन्नसुखादाविति* ॥ अतीतानागतयोरपि परोक्षज्ञानविषयत्ववदज्ञानविषयत्वम्; सुखादिपूर्वकालस्य च सुखाद्यधिकरणत्वेऽपि तत्सूक्ष्मरूपसंस्काराधिकरणत्वेन तन्निष्ठाज्ञानविषयतावच्छेदकत्वमिति भावः। *अभावो हीति* ॥

तरङ्गिणी

वारणायापरोक्षेत्यादिविशेष्यम्—घटादावतिव्याप्तिवारणाय सत्यन्तं विशेषणम्। ब्रह्मणोऽपि वृत्तिवेद्यतयाऽव्याप्तिर्मा भूत्, इति फलव्याप्यत्वाभावो वेद्यत्वं विवक्षितम्। सुप्ति-प्रलयादावपरोक्षव्यवहाररहित आत्मन्यव्याप्तिवारणाय—*योग्यत्वं विशेषणम्* ॥ एवंरूपस्वप्रकाशत्वाभावोऽप्रकाशत्वम्, तच्च विशेष्यवति घटादौ विशेषणाभावाद् विशेषणवति नित्यातीन्द्रिये विशेष्याभावादिति परेषां मतम्। तत्र घटादौ चैतन्यरूपज्ञानविषयत्वस्याप्रामाणिकत्वेनापरोक्षव्यवहारयोग्यत्वरूपविशेष्यवत् फलाव्याप्यत्वरूपविशेषणमपि तत्र वर्तेत इत्येव स्यात्। एवञ्च विशेषण-विशेष्ययोर्घटादौ सत्त्वाद् विशिष्टाभावस्तत्र नास्तीत्यसिद्धिः। अविद्यान्तःकरण-शुक्तिरूप्यादौ फलाव्याप्यत्वरूपविशेषणवदपरोक्षव्यवहारयोग्यत्वरूपविशेष्यस्यापि सत्त्वाद् विशिष्टव्यतिरेकरूपो हेतुस्तत्रापि नास्तीत्यसिद्धिः। साधनविकलो दृष्टान्त इत्यर्थः। नित्यातीन्द्रिये विशेषणस्य सत्त्वेऽपि विशेष्याभावाद् विशिष्टा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

इदानीमज्ञानाविषयत्वं सुखादौ चन्दनयोगादिप्रयुक्तमित्यनुभवात्। विवेचितमिदं रत्नावल्याम्।

न्यायामृतसौगन्ध्यम्

**स्योभयत्र तुल्यत्वाच्च। अत एव—स्वातिरिक्तचित्प्रयुक्तस्फुरणकत्वं चित्सापेक्षस्फुरणस्वरूपकत्वमिति—निरस्तम्; (१)घटादावभावात्॥**

सौगन्ध्यविमर्शः

नान्यं प्रति स्फुरणे तूभयोः स्वातिरिक्तसंविदपेक्षणादित्याद्यनुक्तोपालम्भनम्; नहि घटाद्यपरोक्षत्वव्यवहारे स्वातिरिक्तवृत्त्यभिव्यक्तचैतन्यादिकमिव ब्रह्मव्यवहारे ब्रह्मातिरिक्तवृत्त्यभिव्यक्तचैतन्यापेक्षा, शुद्धब्रह्मणो व्यवहारस्यैवाप्रसिद्धत्वात्, स्वातिरिक्तचैतन्यस्याप्यप्रसिद्धत्वाद् न तत्रोक्तहेतुसमन्वय इति भावः। एतेन—स्वातिरिक्तसंविदपेक्षाऽभावस्योभयत्र तुल्यत्वाच्चेति—प्रत्युक्तम्॥ (१) घटादिस्फुरणमपि स्वातिरिक्तवृत्त्यभिव्यक्तचित्सापेक्षमेव, न हि घटादिस्फुरणं घटातिरिक्तेन ज्ञानेन विना भवति? इति कथं घटादौ स्वातिरिक्तचित्सापेक्षस्फुरणकत्वाभावः सौगन्ध्यापादितः सावसरः?

सिद्धिव्याख्या

व्याघातादित्यादिना व्यभिचारः परिहरणीय इति भावः। *ननु* चैतन्यस्य वस्तुतोऽभेदेऽपि कल्पितभेदवत्त्वेन

विट्ठलेशीयटिप्पणी

सुखादावित्यादावनुषङ्गः। *ननु* प्रत्यक्षनिश्चय-संशययोर्विरोधेन संशयसामग्र्याः प्रत्यक्षनिश्चयप्रतिबन्धकत्ववत्, ज्ञानाज्ञानयोर्विरोधनिर्वाहाय वृत्तिरूपज्ञानजनकसामग्र्या वृत्तिसमकालेऽज्ञानविषयत्वाभावे प्रयोजकत्वेऽपि ज्ञानान्यसुखसामग्र्याः कथं सुखाज्ञानविषयत्वप्रयोजकत्वमित्याशङ्क्य तत्रानुभवं प्रमाणयति—*इदानीमिति*॥ सुखोत्पत्तिक्षणावच्छेदेनेत्यर्थः। *चन्दनयोगादीति*॥ चन्दनसौरभघ्राणसन्निकर्षजन्यतत्प्रत्यक्षादिघटितसामग्रीवशादित्यर्थः। आदिना कान्ताचाक्षुष-सुशब्दश्रावण-मधुरादिरासन-मृदुशय्यास्पार्शन-स्वात्मनिष्ठज्ञानोत्कर्षादिमानसपरिग्रहः। घटादौ मुख्यं ज्ञानं चैतन्यमेव, वृत्तिस्तु तदवच्छेदकत्वाद् ज्ञानत्वेन व्यवह्रियते। एवं सुखादावपि वृत्तेरनभ्युपगमेन सुखाद्यवच्छिन्नचैतन्यस्यैव सुखादिज्ञानत्वाद् ज्ञानावच्छेदकत्वेन सुखादावपि ज्ञानत्वेन व्यवहारसम्भवाद् वृत्तिसामग्रीतुल्यत्वेन सुखादिसामग्र्या अज्ञानविषयत्वप्रयोजकत्वं युक्तमिति भावः। *ननु* सुखादौ वृत्तेरनभ्युपगमे स्मरणानुपपत्तिः, चैतन्यरूपतदनुभवस्य नित्यत्वेन तन्नाशरूपसंस्कारासम्भवादित्यत आह—*विवेचितमिति*॥ अनित्यसुखादिविषयविशिष्टचैतन्यस्यानित्यस्यैव तदनुभवत्वेन तन्नाशरूपसंस्कारसम्भवात् सुखादौ वृत्तेरनुपगमेऽपि स्मरणोपपत्तिरिति भावः। ब्रह्मणः सच्चिदंशेऽपरोक्षं तु 'चिदस्ति' 'अहमस्मी'ति सर्वदा व्यवहारात् तदंशनिष्ठे नित्यसिद्धेऽप्यज्ञानाविषयत्वे योग-क्षेमसाधारणप्रयोजिका तद्विशिष्टा या शुद्धचित्, तत्तादात्म्यरूपं तद्विषयत्वं चापरोक्षत्वम्, स्फुरणे त्वज्ञानेऽसत्त्वापादकत्वमधिकम्, घटादिपरोक्षस्थले त्वसत्त्वापादकाज्ञानाविषयत्वाप्रयोजकान्तःस्थितान्तःकरणवृत्तिजनिका या पक्षता-परामर्शादिघटिता सामग्री तद्विशिष्टान्तःकरणोपलक्षितचिदेवानुमित्यादिज्ञानं परोक्षम्, तद्विषयत्वं परोक्षत्वं घटादीनाम्। अतीतानागतसुखादीनामप्येवम्। स्वीयविद्यमानसुखादीनां तु परोक्षवृत्तिविषयाणामपि 'दशमस्त्वमसी'त्यादिवाक्यार्थानामिव प्रत्यक्षत्वमेव। एवं ब्रह्मणोऽपीति बोध्यम्। स्वातिरिक्तेत्यस्य *स्वान्य-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*स्वातिरिक्तेति* ॥ (५१४) स्वान्यचिदित्यर्थः । चिदंशनिष्ठस्यापरोक्षत्वस्य चिदंशान्याविद्याद्यपेक्षत्वात् चिदिति विशेष्योपादानम् । आनन्दांशस्य तु स्वान्यचिदंशाधीनापरोक्षताकत्वाद् न स्वप्रकाशत्वम् । नच— चिदंशेऽपरोक्षतालक्षणस्यासम्भवः ; तदन्यचिदप्रसिद्धेरिति—वाच्यम् ; स्वान्यत्वाभावविशिष्टस्वनिष्ठापरोक्षताऽपेक्षणीयचिद् यस्य, तत्त्वं स्वप्रकाशत्वम् । स्वापरोक्षतापेक्षणीयचिद् यदन्या न भवति, तत्त्वमिति

## विट्ठलेशीयटिप्पणी

चिदिति* चिन्निवेशेन व्याख्याने प्रयोजनमाह—*चिदंशनिष्ठस्येति* ॥ *अपरोक्षत्वस्य=निरुक्तविशिष्टचिद्रूपस्यामिथ्यात्वेनेति शेषः । *ननु* ब्रह्मणः स्वरूपभूतानन्दांशेऽपरोक्षत्वम्, 'आनन्दोऽस्मीति' सर्वदा व्यवहाराभावाद् आनन्दांशेऽज्ञानाविषयत्वप्रयोजकवेदान्तजन्यवृत्तिसामग्रीविशिष्टचित् ; तत्राश्रयत्वेनापेक्षणीयायाः शुद्धचितोऽपि ब्रह्मस्वरूपत्वाद् ब्रह्मस्वरूपानन्दाभिन्नत्वात् तदतिरिक्तत्वासम्भवाद् आनन्दांशस्यापि स्वप्रकाशत्वापत्तिरित्यत आह—*आनन्दांशस्य त्विति* ॥ *स्वान्यचिदंशेति* ॥ स्वपदेन ब्रह्मस्वरूपस्यानन्दस्य शुद्धोपादानासंभवात् कल्पितानन्दत्वेनैवोपादानाद् निरुक्तविशिष्टचिद्रूपतदपरोक्षत्व आश्रयत्वेनापेक्षणीयायां शुद्धचिति चित्त्वावच्छिन्नस्य स्वपदार्थानन्दत्ववद्भेदस्य सम्भवादानन्दांशस्य न स्वप्रकाशत्वमिति भावः । चिदंशस्य स्वप्रकाशत्वानुपपत्तिं शङ्कते—*नचेति* ॥ *अपरोक्षतालक्षणस्य=स्वप्रकाशत्वस्य । *तदन्यचिदप्रसिद्धेरिति* ॥ *स्वम्=चित्त्वोपलक्षितम्, तन्निष्ठाज्ञानाविषयत्वप्रयोजिका=अज्ञानाविषयत्वविशिष्टा चित्, तद्विशिष्टा चित् स्वपदार्थचित्त्वांशेऽपरोक्षत्वम्, तत्राश्रयत्वेनापेक्षणीया या शुद्धचित्, तत्र चित्त्वावच्छिन्नस्य स्वपदार्थचित्त्वोपलक्षितभेदस्यासम्भवात् चिदंशे स्वप्रकाशत्वासम्भवः । नच—तत्र चित्त्वावच्छेदेनानन्दत्ववद्भेदस्येवानन्दत्वावच्छेदेन चित्त्ववद्भेदस्यापि सम्भव इति—वाच्यम् ; 'स्वान्यचिदि'त्यनेन चित्त्वावच्छेदेनैव स्वपदार्थभेदस्य विवक्षितत्वादिति भावः । *एतेन*—स्वपदार्थचित्त्वावच्छिन्नभिन्नघटाद्यवच्छिन्ना तद्वृत्त्याद्यवच्छिन्ना वा चित् प्रसिद्धैव ; निरुक्तचिदंशेऽपरोक्षत्वरूपाया उक्तविशिष्टचितस्तदनपेक्षत्वाद् न चिदंशे स्वप्रकाशत्वानुपपत्तिरिति—*परास्तम्* ; घटाद्यवच्छिन्नचिति विशिष्टचित्त्वावच्छेदेन स्वपदार्थशुद्धचित्त्ववद्भेदस्याभ्युपगमसम्भवेऽपि शुद्धचित्त्वावच्छेदेन तदभ्युपगमासम्भवात्, तथैव च प्रकृतेऽपि विवक्षितत्वात्, इति चिदंशे न स्वप्रकाशत्वोपपत्तिः । घटाद्यंशे स्वपरोक्षत्वरूपोक्तविशिष्टचितो घटकतयाऽऽश्रयतया च घटान्यचित्सापेक्षत्वाद् न घटादीनां स्वप्रकाशत्वम्, इति तत्रास्वप्रकाशत्वरूपहेतूपपत्तिरिति प्रकृतसन्दर्भः । स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम्=स्वापरोक्षत्वापेक्षणीये स्वातिरिक्तत्वाभावपर्यवसितम्, स्वान्यचिदनपेक्षत्वं तु स्वापरोक्षत्वापेक्षणीयायां चिति स्वान्यत्वाभावपर्यवसितम्, इत्यभिप्रेत्याह—*स्वान्यत्वेति* ॥ *अपेक्षणीयचिदिति* ॥ स्वान्यत्वाभावविशिष्टा चासौ स्वनिष्ठापरोक्षतापेक्षणीया चेति कर्मधारयपूर्वपदकचिदुत्तरपदकबहुव्रीहिविग्रहवाक्यमिदम् । अपेक्षणीया चिदिति पाठे तु स्वापरोक्षतापेक्षणीया चासौ चित् चेति कर्मधारयोत्तरपदकविशिष्टान्तपूर्वपदकबहुव्रीहिः । स्वं ब्रह्म चिदंशः, तन्निष्ठविशिष्टचिद्रूपापरोक्षतायामाश्रयतयाऽपेक्षणीया शुद्धा चित् स्वपदार्थब्रह्मचिदंशरूपत्वात् तदन्यत्वाभावविशिष्टा, इति तादृशचित्त्वरूपं स्वप्रकाशत्वं ब्रह्मचिदंशे । ब्रह्मानन्दांशस्तु न तन्निष्ठनिरुक्तापरोक्षतापेक्षणीया शुद्धचित्, इति स्वपदार्थानन्दांशान्यत्ववत्त्वेन तच्छून्यत्वाभावाद् न स्वम् । एवं घटादिनिष्ठापरोक्षतापेक्षणीयचिति घटान्यत्वेन तच्छून्यत्वाभावेन घटादिकमपि न स्वम् । अत आनन्दांशघटादीनामुक्तचित्त्वरूपं स्वप्रकाशत्वं नेति बोध्यम् । नच—ब्रह्मानन्दांशस्याप्रकाशत्वे तस्य मिथ्यात्वापत्तिर्व्यभिचारो वेति—वाच्यम् ; स्वपदेनानन्दत्वेन विशिष्टस्योपहितस्य वोपादाने तदन्यत्वस्य चित्त्वावच्छिन्ने सत्त्वेनास्वप्रकाशत्वेऽपि मिथ्यात्वस्यापि सत्त्वेनाव्यभिचारात्, आनन्दत्वोपलक्षितस्य शुद्धस्योपादाने चित्त्वोपलक्षिते तदन्यत्वस्यासत्त्वेन स्वप्रकाशत्वस्यैव सत्त्वात् । वक्ष्यते चैतत् । कर्मधारयघटितबहुव्रीहौ वृत्तिद्वयादेकवृत्तौ लाघवात् त्रिपदवद्बहुव्रीहिविग्रहवाक्यमाह—*स्वापरोक्षतेति* ॥ *यदन्या नेति* ॥ यदन्यत्वावच्छिन्नताभाववतीत्यर्थः । तद्भिन्नभिन्नेत्यर्थे धर्मिनिवेशे गौरवात्, यद्रूपा यदत्यन्ताभिन्नेत्यर्थे तु यत्स्वपदाभ्यां शुद्धचिदंशो-

## अद्वैतसिद्धिः

नपेक्षत्वम्; "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः । तथाचान्यानधीनापरोक्षत्वं पर्यवस्यति; तन्निरूपित-भेदवत्त्वं हेतुः ।

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यावत् । स्वपद-यत्पदाभ्यां चैका व्यक्तिर्ग्राह्या । *साक्षादपरोक्षात् = उक्तस्वप्रकाशत्ववत् । *तन्निरूपित-भेदेति* ॥ तदवच्छिन्नानुयोगिताकभेदेत्यर्थः, प्रतियोग्यनुयोगिनोरिव प्रतियोगितावच्छेदकानुयोगितावच्छेदकयो-

## न्यायामृतसौगन्ध्यम्

*ननु*—अस्त्वस्वप्रकाशत्वमेव दृश्यत्वं हेतुः; स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्ता-

## विट्ठलेशीयटिप्पणी

पादाने शुद्धानन्दांशस्याप्युपादानसम्भवेन स्वप्रकाशत्वापत्तेः, शुद्धस्य कस्याप्युपादानासम्भवात् चिदंशस्यापि चित्त्वे-नैवोपादाने तद्विशिष्टात्यन्ताभेदस्य तदुपहितात्यन्ताभेदस्य चोक्तापेक्षणीयायां शुद्धचित्यसम्भवात् चिदंशस्यापि स्वप्रकाश-त्वानुपपत्तेः, तदुपलक्षितात्यन्ताभेदस्योपगमे आनन्दत्वोपलक्षितात्यन्ताभेदस्याप्युपगमसंभवादुक्तापत्तेर्दुर्वारत्वात् । *इदं तु बोध्यम्*—यद्यपि चिदन्यत्वाभावविशिष्टस्वनिष्ठापरोक्षताकत्वमेव स्वप्रकाशत्वं सुवचम्; चिदंशे चिदन्यत्वा-भावसत्त्वेन तन्निष्ठापरोक्षतायास्तद्विशिष्टत्वाभावेन तद्वारणस्य चानन्दांश-घटादिषु चिदन्यत्वस्यैव सत्त्वेन तदभावा-सत्त्वात् तन्निष्ठापरोक्षतायास्तद्विशिष्टत्वाभावेन तद्वारणस्य च संभवात् । एवं स्वान्यत्वाभाववच्चित्त्वं चिदन्यत्वाभाववत्त्वं चेत्यपि तत् सुवचम्; तथापि 'स्वेनैव प्रकाशते' 'अपरोक्षं भवति नान्येनेति' यौगिकस्वप्रकाशपदार्थनिरूपणानुरोधेन वक्ष्यमाणश्रुत्यनुरोधेन चोक्तनिरुक्त्यादर इति । *स्वपदाभ्याम्* प्रथमनिरुक्तौ । *स्वपद-यत्पदाभ्याम्* द्वितीयनिरुक्तौ । श्रुतौ *साक्षात्=स्वत एव, *अपरोक्षात्=अपरोक्षम्, *ब्रह्म=शुद्धचैतन्यमित्यर्थ इत्यभिप्रेत्याह—*साक्षादपरोक्षादिति* प्रतीकम् । उक्तस्वप्रकाशत्ववदिति व्याख्यानम् । समासार्थमाह *मूले—तथाचान्यानधीनेति* । स्वान्यत्वा-भाववच्चिदधीनापरोक्षताकत्वं तादृशापरोक्षताश्रयत्वमित्यर्थः । 'अस्वप्रकाशत्वमि'त्यत्र स्वप्रकाशपदेन नञ्समासो-त्तरं त्वप्रत्ययेन तस्य निरुक्तस्वप्रकाशत्वावच्छिन्नप्रतियोगिताकभेदार्थकत्वे गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे चित्त्वा-पेक्षया 'यद्यपी'त्यादिनोक्तपारिभाषिकस्वप्रकाशत्वपदार्थत्रिविधस्वप्रकाशत्वापेक्षया च मूलोक्तयौगिकस्वप्रकाशत्व-पदार्थस्य गुरुतया तदवच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्धिः, शुद्धे निर्धर्मके ब्रह्मणि भावरूपनिरुक्तस्वप्रकाशत्वधर्मस्या-भावेन तदवच्छिन्नप्रतियोगिताकभेदरूपाभावरूपधर्मस्य ब्रह्मरूपस्य सत्त्वाद् मिथ्यात्वानुमाने व्यभिचारश्च, इत्यतोऽस्व-प्रकाशत्वपदे निरुक्तार्थकस्वप्रकाशत्वपदेन नञः, नञर्थे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रतियोगितावच्छेदकस्यैव स्वावच्छिन्नानुयोगिताकत्वसम्बन्धेनानुयोगितावच्छेदकस्याप्यन्वयम्, भेदस्य प्रतियोगितासम्बन्धेन हेतुतां चाभ्युपगम्या-स्वप्रकाशत्वपदपर्यवसितार्थरूपं हेतुमाह—*तन्निरूपितभेदप्रतियोगित्वं हेतुरिति* ॥ तथाच गुरुधर्मस्यानुयोगिता-वच्छेदकत्वोपगमाद् नाप्रसिद्धिः । निर्धर्मके ब्रह्मण्युक्तप्रतियोगित्वरूपहेतोर्भावरूपधर्मस्य स्वरूपसम्बन्धेनाभावाद् न मिथ्यात्वानुमाने व्यभिचारोऽपीति भावः । तत्र नञर्थे समभिव्याहृतपदार्थस्य प्रतियोगिनोऽनुयोगितासम्बन्धेन, प्रतियोगितावच्छेदकस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन, अनुयोगितावच्छेदकस्य स्वावच्छिन्नानुयोगितावच्छेद-कत्वसम्बन्धेनान्वये वैरूप्यापत्तिवारणायोक्तसम्बन्धानां निरूपितत्वरूपतया निरूपितत्वेन संसर्गताबोधनाय 'तन्निरू-पिते'त्युक्तम् । तत् प्रकृते तात्पर्यविषयभासमानसम्बन्धार्थकतया व्याचष्टे टीकायाम्—तदवच्छिन्नानुयोगिता-केति* ॥ 'भेदेति' योग्यतासूचनाय । प्रतियोग्यनुयोगितावच्छेदकयोरभावनिरूपकत्वं विनाऽभावस्य तन्निरूपितत्वं न संभवतीत्यतस्तयोस्तन्निरूपकत्वमाह—*प्रतियोग्यनुयोगिनोरिवेति* ॥ 'सद्वयामभावो निरूप्यते' इत्यभियुक्तोक्तेः । *सद्वयाम्=प्रसिद्धाभ्यां प्रतियोग्यनुयोगिभ्याम् । *अभावो निरूप्यते=निरूपितत्वेन भासत इति तदर्थः । तेनाप्रसिद्ध-प्रतियोग्यनुयोगिकाभावनिरासः । न तावदभावप्रत्ययो भूतले घटो नेतिवत् तत्र शशविषाणं नेति च सिद्ध्यति । *ननु* उक्ताभियुक्तोक्त्या प्रतियोग्यनुयोगिनोरभावनिरूपकत्वमस्तु, तत्तावच्छेदकयोस्तु कुत इति ? अत आह—*करणी-

अद्वैतसिद्धिः

तच्च नित्यपरोक्षेऽन्याधीनापरोक्षे च घटादावस्ति, इति नासिद्धिः । नच—ब्रह्मणोऽपि

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

रपि निरूपकत्वसम्भवात् करणीभूतद्रव्यपरिच्छेदकतया भासमानस्य जात्यादेः करणत्वस्यैव निरूपकीभूतप्रतियोग्यनुयोगिपरिच्छेदकधर्मस्यापि निरूपकताया युक्तत्वात्, साक्षात् परम्परया वा सम्बन्धिमात्रस्य निरूपकशब्दार्थत्वाच । अत एवोत्पत्तिवादे प्रत्यक्षपरिच्छेदे मणिकारैरुक्तम्—'यदि प्रमाऽप्रमात्वसमानाधिकरणधर्मनिरूपितकार्यत्वप्रतियोगिककारणजन्या न स्यात्, अप्रमा स्यादि'ति । अत्र हि निरूपितपदस्यावच्छिन्नार्थकत्वेनावच्छेदकस्यापि निरूपकत्वं व्यवहृतम् । *नित्यपरोक्ष इति* ॥ अपरोक्षत्वरूपविशेष्याभावादिति शेषः । *घटादाविति* ॥ तदीयापरोक्षताया अन्यानधीनत्वाभावादिति शेषः ।

विट्ठलेशीयटिप्पणी

भूतद्रव्येति* । *परिच्छेदकतया=व्यावर्तकतया । व्यक्तिपदार्थवादे भासमानस्य *जात्यादेः* ॥ आदिना गुणादेः । *करणत्वस्यैवेति* ॥ मीमांसकमते आकृतिपदार्थवादे 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति' इत्यादावारुण्यादीनामेव सोमक्रये करणत्वरूपतृतीयार्थान्वयोपगमात् । *परिच्छेदकेति* ॥ व्यावर्तकतया भासमानेत्यर्थः । नैयायिकाभिमतजात्यादिविशिष्टव्यक्तिवादेऽप्याह—*साक्षात् परम्परया वेति* ॥ संबन्धिमात्रस्यावच्छेदकस्य वा निरूपकत्वं क्व दृष्टमिति ? अत आह—*अत एवेति* ॥ *प्रमेति* पक्षः । *धर्मः=प्रमात्वरूपः । *करणम्=गुणः । अत्र संबन्धिनोऽवच्छेदकस्य वा निरूपकत्वं कथमुक्तम् ? तत्राह—*अत्र हीति* ॥ *व्यवहृतमिति* ॥ अत एव च चक्रवर्तिलक्षणे "एवं च व्याप्तेरव्यभिचारिसंबन्धरूपताऽपि सङ्गच्छते" इति दीधितिपङ्क्तिव्याख्यानावसरे श्रीगदाधरभट्टाचार्यैरुक्तम्—"वह्निर्धूमस्य व्यभिचारी"त्ययुक्तम्; तथाच धूमत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिरूपको वह्निरित्यन्वयबोधः" इति । *अव्यभिचारिसंबन्धः* इत्यस्याव्यभिचारिहेतुनिष्ठं साध्यसामानाधिकरण्यमित्यर्थः । एवं च "साध्यतावच्छेदकनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपकहेतुनिष्ठसाध्यसामानाधिकरण्यमिति पर्यवसितमि"ति च । अत्र हेतुघटकस्य निरूपकत्वमुक्तम् । अत एव च हेत्वाभाससामान्यनिरुक्तौ "अनुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसंबन्धित्वेनानुमिति-तत्करणज्ञानपरमि"ति दीधितावुक्तम् । "संबन्धिपदं सम्बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाये"ति श्रीभट्टाचार्यैश्च तद् व्याख्यातम् । नित्यपरोक्षे हेतुसत्त्वं मूल उक्तम्, तत्र हेतुमाह—*अपरोक्षत्वरूपविशेष्याभावादिति* ॥ स्वप्रकाशत्वरूपानुयोगितावच्छेदकघटकेत्यादिः । तथाचोक्तस्वप्रकाशत्वस्य नित्यपरोक्षगुरुत्वादिव्यावृत्ततया तद्भेदानुयोगितावच्छेदकत्वसम्भव इति भावः । *ननु*—'विशेष्याभावादि'त्युक्तौ विशेषणमस्तीति वक्तव्यम्, तत्किं स्वान्यानधीनत्वम् ? उत स्वान्यचिदनधीनत्वम् ? आहोस्वित् स्वान्यत्वाभावविशिष्टचिदधीनत्वम् ? तत्र न प्रथम-द्वितीयौ ; गुरुत्वादेः स्वोपादानाविद्याचिदुभयाधीनत्वात् । नापि तृतीयः ; चिन्मात्रस्य स्वान्यत्वेन तदभावविशिष्टचितोऽप्रसिद्धेरिति—चेत्, *अत्रेदमाकूतम्*—सामानाधिकरण्यसम्बन्धेन किंचिद्विशिष्टाभावनिवेशस्थल एवमुक्ताशङ्कावसरः, प्रकृते त्वपरोक्षत्व उक्तानधीनान्तं स्वरूपसम्बन्धेन विशेषणम् । तत्रोक्तविशेष्यनिवेशे तद्विशेषणमप्यविशिष्टमेव, इति नोक्तशङ्कावसरः, परन्त्वनुयोगितावच्छेदकस्वप्रकाशत्वे विशेष्यभूतापरोक्षत्वमात्रनिवेशादेव नित्यपरोक्षे तदभावादुक्तहेतुसत्त्वम्, घटादौ तूक्तविशेष्यसत्त्वाद् न तत्सत्त्वनिर्वाहः, इति तन्निर्वाहायानधीनान्तम् । तत्र प्रथम-द्वितीययोर्घटनिष्ठापरोक्षत्वस्य पटादावभावाद् घटादिभेदे तदवच्छिन्नानुयोगिताकत्वनिर्वाहात् तत्र हेतुसत्त्वनिर्वाह इति । अत्रैवमक्षरयोजना—*तदीयापरोक्षताया इति* ॥ स्वप्रकाशत्वाघटकत्वादिति शेषः । तत्र हेतुर्यथाश्रुते 'अन्यानधीनत्वाभावादि'ति, निष्कर्षे तु स्वानन्यचितोऽप्रसिद्धेरिति बोध्यम् । सम्बन्धिमात्रस्य निरूपकत्वात् तन्निरूपितपदस्य तदाश्रयानुयोगिकार्थकत्वस्यापि सम्भवात् तदभिमानेन तस्य तदवच्छिन्नानुयोगिताकपर्यन्तार्थकत्वे प्रयोजनं व्यञ्जयितुं शङ्कते मूले—*नचेति* ॥ मायाप्रतिबिम्बं माया-

### अद्वैतसिद्धिः

ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात् तत्र व्यभिचारः, अकल्पितभेदस्य क्वाप्यसिद्धत्वादिति—वाच्यम्; तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात्, जीवत्वेश्वरत्वादिरूपस्यान्यधर्मस्य तन्निरूपकत्वात् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*धर्मानिरूपितत्वात् = धर्मानवच्छिन्नानुयोगिताकत्वात्। *जीवत्वेत्यादि* ॥ 'जीवो ब्रह्म न, ईशो ब्रह्म ने'त्याद्यनुभवसिद्धभेदस्य शुद्धचिद्रूपब्रह्मप्रतियोगिकत्वेऽपि जीवत्वाद्युपहितब्रह्मनिष्ठत्वेन तदनुयोगिता जीवत्वादिनैवावच्छिद्यते, नतु स्वप्रकाशत्वेनेत्यर्थः। *ननु*—'स्वप्रकाशं ब्रह्म' 'साक्षादपरोक्षाद् ब्रह्मे'त्यादिलौकिक-वैदिकसामानाधिकरण्यप्रत्ययात् स्वप्रकाशत्वविशिष्टेऽपि ब्रह्मभेद आवश्यकः; अन्यथा तत्र ब्रह्मतादात्म्यसम्बन्धानुप-

### न्यायामृतसौगन्ध्यम्

नपेक्षत्वम्, "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः। तथाचान्यानधीनापरोक्षत्वं पर्यवसितम्। तन्निरूपितभेदाश्रयत्वं हेतुः। तच्च नित्यापरोक्षेऽन्याधीनापरोक्षे घटादावस्ति, इति नासिद्धिः। नच—ब्रह्मणोऽपि ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात् तत्र व्यभिचारः, अकल्पितभेदस्य क्वाप्यसिद्धत्वादिति—वाच्यम्; तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात्, जीवेश्वरत्वादिरूपस्यान्यस्यैव धर्मस्य तन्निरूपकत्वात्।

### विट्ठलेशीयटिप्पणी

वच्छिन्नं वा चैतन्यमीश्वरः, अविद्यायामन्तःकरणे वा प्रतिबिम्बं तदवच्छिन्नं वा चैतन्यं जीवः, बिम्बभूतमनवच्छिन्नं शुद्धं चैतन्यं ब्रह्म। उक्तेश-जीवयोरुक्तब्रह्मभेदो वास्तवो न भवति, इति काल्पनिकेत्युक्तम्। मायाऽविद्यादिरूपोपाधीनां ब्रह्मभिन्नत्वात् सत्तादात्म्यापन्नतदुपहितेश-जीवयोर्ब्रह्मभेदो जपासंयुक्ते स्फटिके लौहित्यवत्, तप्तायोगोलके वह्निदग्धृत्ववच्चारोपित इत्यर्थः। *तत्र=उक्तभेदप्रतियोगिनि शुद्धचिद्रूपे ब्रह्मणि। नच—शुद्धे कथमुक्तभेदप्रतियोगित्वमिति—वाच्यम्; वास्तवस्यासम्भवेऽप्यध्यस्तस्य भेदस्यैव तत्र सम्भवात्, अनध्यस्तस्य क्वाप्यसत्त्वादित्यभिप्रायात्। उक्ताभिमाननिराकरणेन समाधत्ते—*तद्भेदस्येति* ॥ *अन्यानधीनेति* ॥ स्वानन्यचिदधीनेत्यर्थः। धर्माश्रयानुयोगिकत्वरूपं धर्मनिरूपितत्वमस्त्येव, इत्यतो व्याचष्टे—*धर्मानवच्छिन्नानुयोगिताकत्वादिति* ॥ उक्तदोषवारणाय विवक्षितोक्तधर्मावच्छिन्नानुयोगिताकत्वरूपविशेषणाभावादित्यर्थः। कस्य तर्हि तद्भेदानुयोगितावच्छेदकत्वम्? अत आह *मूले—जीवत्वेश्वरत्वादिरूपस्येति* ॥ *अन्यधर्मस्य=उक्तस्वप्रकाशत्वान्यधर्मस्येत्यर्थः। *तन्निरूपकत्वात्=शुद्धचिद्रूपब्रह्मभेदानुयोगितावच्छेदकत्वात्। *ननु* शुद्धचिद्रूपब्रह्मप्रतियोगिकभेद एवाप्रसिद्धः, यत्प्रतियोगित्वरूपो हेतुः शुद्धे ब्रह्मणि मिथ्यात्वव्यभिचरितः। *किंच* जीवेश्वरयोः स्वप्रकाशत्वस्य चित्त्वेन सत्त्वे जीवत्वादिनैव ब्रह्मभेदानुयोगिताऽवच्छिद्यते, नतु स्वप्रकाशत्वेनेति कुतः? इत्याशङ्क्य परिहरति—*जीवो ब्रह्म नेति* ॥ अत्र—ईशे ब्रह्मपदार्थत्वशङ्कां वारयितुमाह—*ईशो ब्रह्म नेति*॥ तत्र ब्रह्मपदस्य जीवार्थकत्वशङ्कावारणाय प्रथमानुभवः; तथा सति ब्रह्मपदस्य नानार्थत्वं स्यात्। नच लक्षणायां नायं दोषः; शक्त्योभयत्रैकरूप्येण निर्वाहे तदुपगमस्य वैरूप्यस्य चानुचितत्वात्। शुद्ध उक्तभेदप्रतियोगित्वं तूक्तानुभवबलादारोपितं शुद्धस्य वृत्तिविषयत्वाङ्गीकारेणोपपद्यत इति भावः। *निष्ठत्वेनेति* ॥ भासमानत्वादिति शेषः। *जीवत्वादिनैवेति* ॥ अनुयोगिनि प्रकारीभूतव्यावर्तकेनेत्यादिः। *नतु स्वप्रकाशत्वेनेति* ॥ 'स्वप्रकाशं ब्रह्म ने'त्यनुभवस्याभावेन स्वप्रकाशत्वस्यानुयोगिन्यभावेनाव्यावर्तकत्वादिति भावः। भेदानुभवाभावेऽप्यभेदानुभवादेव भेदसिद्ध्योक्तदोषो दुर्वारः, इत्याशङ्कते—*नन्विति* ॥ *साक्षादपरोक्षात्=उक्तप्रकाशत्ववत्। *स्वप्रकाशत्वविशिष्टे* ॥ स्वप्रकाशत्वोपहिते चेति शेषः। *अन्यथा=तत्र ब्रह्मभेदानङ्गीकारे। *तत्र=उक्ते विशिष्ट उपहिते च। *तादात्म्येति* ॥ भेदसमानाधिकरणाखण्डधर्मरूपतादात्म्यसम्बन्धासम्भवेनोक्तसामानाधिकरण्यप्रत्ययानुपपत्तेरित्यर्थः। स्वप्रकाशत्वविशिष्टानुयोगिकस्य

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पत्तेरिति—चेत्, *न* ; स्वप्रकाशत्वोपहिते तत्प्रतियोगिकभेदाभावेन मिथ्याभूते तत्र भागासिद्ध्यापत्तेः, स्वप्रकाशत्वोपहितानुयोगिकभेदस्य हेतावनिवेशेन स्वप्रकाशत्वोपलक्षितानुयोगिकभेदस्यैव निवेशात्, तादृशोपलक्षितशुद्धचैतन्यनिष्ठानुयोगितायाः उपलक्षणविधया स्वप्रकाशत्वस्यावच्छेदकत्वसम्भवेन 'तन्निरूपिते'त्यादिमूलस्यासङ्गत्यभावात् तादृशोपलक्षितशुद्धचैतन्ये शुद्धचिद्रूपब्रह्मप्रतियोगिकभेदाभावेनादोषात्। ननु—'ब्रह्मण-

न्यायामृतसौगन्ध्यम्

**तथाच स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वं हेतुरिति—चेत्, *न* ; घटादेर्जडत्वेन ब्रह्मणश्चिद्विषयत्वेन स्वं प्रत्यनपरोक्षताया (१)उभयोस्तुल्यत्वात्, अन्यं प्रत्यपरोक्षताया उभयोरप्यन्याधीनत्वाच्च, 'स्वप्रकाशं ब्रह्म(२)ने'ति स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगिनि शुद्धे ब्रह्मणि व्यभिचाराच्च।**

सौगन्ध्यविमर्शः

(१) घटादेर्जडत्वेन स्वापरोक्षत्वं न स्वाधीनम्, किन्तु स्वान्यचिदधीनम्, ब्रह्मणस्तु स्वाविषयत्वेऽप्यपरोक्षत्वं नान्यचिदधीनम्; तत्र घटादाविव चित्तादात्म्यासंभवात्, ततः कथं ब्रह्म-घटयोरुभयोरपि स्वापरोक्षत्वं प्रत्यन्यानपेक्षतया तुल्यत्वम्? तथाचान्यानपेक्षापरोक्षत्वस्य ब्रह्मण्येव सत्त्वाद् घटादावस्वप्रकाशत्वं न विरुद्धम्॥ (२) स्वप्रकाशत्वोपलक्षितभेदस्यैव चन्द्रिकोक्तरीत्या हेतुत्वविवक्षणेन तदुपहितभेदस्याविवक्षणेन च न 'स्वप्रकाशं न ब्रह्म' इति बोधमादाय ब्रह्मणि हेतुसमन्वयप्रसङ्गस्सौगन्ध्योक्तरीत्या। स्वप्रकाशत्वोपलक्षितस्यैव शुद्धत्वाद् 'ब्रह्म न ब्रह्मे'ति बोधस्यासम्भवात्, शुद्धस्य प्रतियोगित्वस्यानुयोगित्वस्य चासम्भवात्। यथाच ब्रह्मणि न ब्रह्मभेदप्रतीतिसम्भवः, तथा पूर्वमेव टिप्पण्यां विवेचितम्॥

विट्ठलेशीयटिप्पणी

**तदुपहितानुयोगिकत्वस्य वा भेदस्य हेतौ निवेश एवोक्तसामानाधिकरण्यप्रत्ययसिद्धं तादृशशुद्धब्रह्मभेदमादाय शुद्धे व्यभिचार आशङ्कनीयः, तन्निवेशस्तु दोषान्तरभयादपि नेत्याशयेन समाधत्ते—*स्वप्रकाशत्वोपहित इति*। *तत्प्रतियोगिकेति*॥ स्वप्रकाशत्वोपहितप्रतियोगिकेत्यर्थः। *भेदाभावेनेति*॥ तत्र तद्भेदप्रत्ययस्य सामानाधिकरण्यप्रत्ययस्य चाभावादिति भावः। *तत्र—स्वप्रकाशत्वोपहिते। *स्वप्रकाशत्वोपहितानुयोगिकभेदस्य हेतावनिवेशेनेति*॥ फलहेतौ तृतीया। इदमुपलक्षणम्—स्वप्रकाशत्वविशिष्टे स्वप्रकाशत्वविशिष्टप्रतियोगिकभेदाभावेन तत्र भागासिद्ध्यापत्तेर्हेतौ स्वप्रकाशत्वविशिष्टानुयोगिकभेदस्याप्यनिवेशेनेत्यस्य। तदाह—*स्वप्रकाशत्वोपलक्षितानुयोगिकभेदस्यैवेति*॥ तथाच स्वप्रकाशत्वोपलक्षिते तद्विशिष्ट-तदुपहितयोर्भेदसत्त्वाद् न भागासिद्धिरिति भावः। *ननु* अनुयोग्युपलक्षणस्यानुयोगितानवच्छेदकत्वेन तदवच्छेदकत्वार्थकतन्निरूपितेति मूलासंगतिः, अत आह—*तादृशोपलक्षितेति*॥ स्वप्रकाशत्वोपलक्षितेत्यर्थः। *उपलक्षणविधया स्वप्रकाशत्वस्यावच्छेदकत्वसम्भवेनेति*॥ येन रूपेण भासमानेऽनुयोगिनि यदवच्छिन्नानुयोगिताकत्वविशिष्टविशेषणतासम्बन्धेन भेदरूपविशेषणभानम्, तद् विशेषणविधयाऽनुयोगितावच्छेदकम्; यदाश्रयनिष्ठानुयोगिताकत्वविशिष्टविशेषणतासम्बन्धेन भेदभानम्, तद् उपाधिविधयाऽनुयोगितावच्छेदकम्; येन रूपेण भासमानेऽनुयोगिनि शुद्धविशेषणतासम्बन्धेन भेदभानम्, तद् उपलक्षणविधयानुयोगितावच्छेदकम्। तथाच स्वप्रकाशत्वावच्छिन्नशुद्धविशेषणतासम्बन्धावच्छिन्नाधिकरणताकभेदप्रतियोगित्वं हेतुः फलितः। तथाच तदुपहित-तद्विशिष्टनिष्ठशुद्धब्रह्मभेदाधिकरणत्वस्य स्वप्रकाशत्वावच्छिन्नत्वेऽपि विशिष्टविशेषणतासम्बन्धावच्छिन्नत्वेन शुद्धविशेषणतासम्बन्धानवच्छिन्नत्वात् तद्भेदव्युदासाद् न शुद्धे ब्रह्मणि व्यभिचारः, स्वप्रकाशत्वावच्छिन्नशुद्धविशेषणतासम्बन्धावच्छिन्नस्य शुद्धब्रह्मभेदाधिकरणत्वस्याप्रसिद्धेरित्याशयेनाह—*तादृशोपलक्षितशुद्धचैतन्य इति*। *भेदाभावेनेति*॥ स्वप्रकाशत्वोपलक्षिते शुद्धे शुद्ध-चिद्रूपब्रह्मभेदप्रत्यययोरभावादिति भावः। *अदोषात्*॥ ब्रह्मणि व्यभिचाराभावादित्यर्थः। *ननु*—ब्रह्मण आनन्दांशे स्वप्रकाशत्वस्याभावात् स्वप्रकाशत्वोपलक्षित आनन्दांशभिन्नत्वाद् आनन्दांशे व्यभिचार इति—चेत्, *न*; आनन्दत्वविशिष्ट एव स्वप्रकाशत्वाभावेनोक्तभेदप्रतियोगित्वसत्त्वेऽपि तस्य मिथ्यात्वेन व्यभिचाराभावात्, आनन्दत्वोपलक्षितस्यामिथ्या-**

अद्वैतसिद्धिः

एवं चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपदृश्यत्वमपि हेतुः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

श्चैतन्यम्' 'आनन्दं ब्रह्मणो रूपमि'त्यादिधीनियामकभेदमादाय दोष इति—वाच्यम् ; तादृशभेदस्य ज्ञानत्वानन्दत्वादिधर्मनिरूपितत्वात्, ब्रह्मनिष्ठज्ञानत्वादिधर्मस्य चिन्मात्ररूपत्वेऽप्युपलक्षणतया धर्मान्तरस्य तादृशभेदनिरूपकत्वात् । *एवं च*—यथाश्रुतमनादृत्य व्याख्यादरे च । *अवेद्यत्वे सतीत्यादि* ॥ अवेद्यत्वसमानाधि-

न्यायामृतसौगन्ध्यम्

नच—तत्र जीवेश्वरत्वादिधर्मोपहितप्रतियोगिकं भेदमत्रगाहते, नतु शुद्धब्रह्मप्रतियोगिकम् ; अभावप्रत्यक्षे शुद्धस्य प्रतियोगित्वेनाभाननियमादिति—वाच्यम् ; ईश्वरत्वविशिष्टप्रतियोगिकत्वेऽपि शुद्धप्रतियोगिकत्वे बाधकाभावात्, अभावप्रत्यक्षे शुद्धस्याभाननियमे मानाभावाच्च, 'स्वप्रकाशं ब्रह्म ने'त्यत्र प्रतियोगितावच्छेदकतयेश्वरत्वाद्यभानाच्च ॥ अत—एव तद्भेदस्येत्यपि—निरस्तम् ; (१)त्वदभिमतस्वप्रकाशत्वस्याप्युक्तरीत्याऽनन्याधीनापरोक्षत्वासिद्धेः ॥

अत एव—अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपदृश्यत्वं (२)हेतुरित्यपि—निरस्तम् । किञ्चा-

सौगन्ध्यविमर्शः

(१) अनन्याधीनापरोक्षस्वरूपत्वं स्वप्रकाशत्वम् । इदं च ब्रह्मण्येव वर्तते, न स्वप्रकाशत्वेऽपि, इति स्वप्रकाशस्वरूपधर्मस्यापि मिथ्याभूतस्योक्तस्वप्रकाशत्वभेदेऽपि न क्षतिः ॥

(२) अपरोक्षव्यवहारयोग्यत्वस्य ब्रह्म-घटत्वान्यतरपर्यवसितस्याभानापादकाज्ञानाविषयत्व-तदवच्छेदकत्वविशिष्टान्यतरत्वरूपापरोक्षव्यवहारयोग्यत्वस्य ब्रह्मण्यसत्त्वेन न ब्रह्मण्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपदृश्यत्वस्य व्यभिचारः ;

विट्ठलेशीयटिप्पणी

त्वेऽपि तद्भेदस्य स्वप्रकाशत्वोपलक्षितेऽभावेन तत्रोक्तभेदप्रतियोगित्वरूपहेतोरेवाभावेन व्यभिचाराभावात् । उक्तमपीदं दार्ढ्याय पुनरुक्तम् । *धीनियामकेति* ॥ षष्ठ्यर्थसंबन्धस्य भेदनियतत्वात् स्वप्रकाशत्वेनोपलक्षितेऽपि शुद्धब्रह्मभेद आरोपित आवश्यक इति भावः । *दोषः*=व्यभिचारः । *तादृशभेदस्य*=उक्तप्रतीतिव्यवहारविषयभेदस्य । *ज्ञानत्वानन्दत्वादीति* ॥ येन रूपेण भासमाने धर्मिणि यो भेदो भासते, तस्य तद्धर्मावच्छिन्नानुयोगिताकत्वं स्वीकार्यम् । उक्तप्रतीतौ ज्ञानत्वानन्दत्वादिकमेव धर्मितावच्छेदकम्, न स्वप्रकाशत्वम्, इति ब्रह्मभेदस्य ज्ञानत्वाद्यवच्छिन्नानुयोगिताकत्वमेव, न स्वप्रकाशत्वावच्छिन्नानुयोगिताकत्वम्, इति न तेन रूपेण हेतुघटकभेदप्रतियोगित्वं ब्रह्मणः, इति न तत्र व्यभिचार इति भावः । *ब्रह्मनिष्ठज्ञानत्वादिधर्मस्य*='ब्रह्मणश्चैतन्यम्' 'आनन्दं ब्रह्मणो रूपमि'ति प्रत्ययविषयस्येति शेषः । *चिन्मात्ररूपत्वेऽपीति* ॥ एवं च तत्र शुद्धचिद्रूपब्रह्मभेद एवासंभवीति भावः । *धर्मान्तरस्य*=षष्ठ्यर्थसंबन्धविशेष्यांशे वस्तुतो ब्रह्मस्वरूपे चैतन्यादिपदार्थे धर्मितावच्छेदकतया भासमानस्य ज्ञानत्वादेः । *तादृशभेदनिरूपकत्वात्*=उक्तप्रतीतिविषयभेदानुयोगितावच्छेदकत्वात् । 'नीलो घटः' 'राहोः शिरः' इतिवद् ज्ञानत्वाद्युपलक्षितेऽपि शुद्धचिद्रूपब्रह्मभेदः प्रतीतिबलात् स्वीकार्यः, न ज्ञानत्वाद्युपहित-विशिष्टयोः ; तदुपलक्षितविषयकतयाऽप्युक्तप्रतीत्युपपत्तेः । अत एव 'आनन्दं ब्रह्मणो रूपमि'ति रूपपदसङ्गतिः, नतु स्वप्रकाशत्वोपलक्षितेऽपि तादृशभेदः ; 'ब्रह्मणः स्वप्रकाशमि'ति प्रतीत्यभावादिति भावः । अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपस्यास्वप्रकाशत्वरूपदृश्यत्वस्य हेतुतायाः शुक्तिरूप्यादौ साधनावैकल्यदोषेण पूर्वपक्षे निरस्तत्वात् 'एवं चे'त्यादिना तस्येदानीं हेतुत्वव्यवस्थापनं कथं घटते ? एवम्—*एवं चेत्यस्य* पूर्वनिरुक्तास्वप्रकाशत्वस्य हेतुत्वे चेत्यर्थकत्व उपष्टम्भासङ्गतिः, निरुक्तार्थसाधुत्वस्य वक्ष्यमाणार्थसाधुत्वेऽप्रयोजकत्वादित्याशङ्क्य व्याचष्टे—*एवं चेति*॥ *यथाश्रुतमनादृत्येति* ॥ पूर्वनिरुक्तिवदिति शेषः । 'अवेद्यत्वे सती'त्येतदर्थस्याभावविशेषणत्वे नित्यपरोक्षगुरुत्वादौ हेतोः सिद्धावप्यपरोक्षघटादावसिद्धिः, शुक्तिरूप्यादौ साधनवैकल्यं च, इत्यतः प्रतियोगिविशेषणत्वं स्पष्टयति—*अवेद्यत्वसमानाधिकरणमिति* ॥ अत्र वेद्यत्वं यदि वृत्ति-

**न्यायामृतम्**

शुक्तिरूप्यादौ च विशेषणवद् विशेष्यस्यापि सत्त्वेन विशिष्टरूपस्वप्रकाशत्वव्यतिरेकरूपहेतो-

**अद्वैतसिद्धिः**

नच—फलव्याप्यत्वाभावविशिष्टं यदपरोक्षव्यवहारयोग्यत्वं तस्य ब्रह्मणीवाविद्यान्तःकरणादौ शुक्ति-

**तरङ्गिणी**

भावरूपहेतुरस्तीति 'पक्षैकदेशो' इत्युक्तम् ॥ *शुक्तिरूप्यादाविति* ॥ शुक्तिरूप्यादेर्व्यवहारकाल एव बाधितत्वात् तत्रापरोक्षव्यवहारयोग्यत्वमपि नास्तीत्यर्थः । शुक्तिरूप्यादेरापरोक्ष्याभावेऽपि 'रूप्यं साक्षात्करोमी'त्य-

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

करणं यदपरोक्षताव्यवहारयोग्यत्वम्, तदभावरूपमित्यर्थः । वेद्यत्वं स्वावच्छिन्नचिद्विषयकं यद् अभानापादकाज्ञानम्, तन्निवर्तकवृत्तिव्याप्यत्वरूपफलव्याप्यत्वम् । तच्च न ब्रह्मणि ; यत्रोक्तव्याप्यत्वं स्थाप्यम्, तस्यैव स्वपदार्थतया ब्रह्मावच्छिन्नचिदप्रसिद्धेः, नापि शुक्तिरूप्यादौ ; अतीततादशायां तस्यासत्त्वापादकाज्ञाननिवर्तकानुमित्यादिवृत्तिव्याप्यत्वेऽप्युक्ताज्ञाननिवर्तकवृत्त्यव्याप्यत्वात् । *ब्रह्मणीवेत्यादि* ॥ अपरोक्षता-

**विट्ठलेशीयटिप्पणी**

विषयत्वम्, तदा शुक्तिरूप्ये ब्रह्मणि च सत्त्वेन 'नचे'ति ग्रन्थासंगतिः ; यदि चाज्ञाननिवर्तकवृत्तिविषयत्वम्, तदा ब्रह्मणि तत्सत्त्वात् तदभावरूपविशेषणाभावाद् विशिष्टाभावरूपहेतुसत्त्वेन 'न चे'ति ग्रन्थासङ्गतिः । *एतेन*—मनोवृत्तिविषयत्वमपि—*निरस्तम्* ; यद्यभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वम्, तदा शुक्तिरूप्यादावसिद्ध्यादिशङ्कायाः सङ्गतावपि 'ब्रह्मणीवे'ति दृष्टान्तासङ्गतिः, तत्र व्यभिचारश्च, इत्यतः स्वावच्छिन्नचिद्विषयकत्वमुक्ताज्ञाने निवेश्य वेद्यत्वं व्याचष्टे—*वेद्यत्वमिति* ॥ *स्वेति* ॥ स्वं प्रत्यक्षयोग्यो घटादिः, तदवच्छिन्ना चित् तदधिष्ठानचित्, तद्विषयकं यदभानापादकं 'घटावच्छिन्नचिद् न भाति' 'न प्रकाशते' इत्यादिव्यवहारप्रयोजकमज्ञानम्, तन्निवर्तिका या ऐन्द्रियिकवृत्तिः, तद्व्याप्यत्वम् ; तद्विषयत्वाश्रयत्वमित्यर्थः । तच्च घटादिष्वस्ति । उत्तरपङ्क्ताविदमेव फलव्याप्यत्वम्, नतु वृत्तिप्रतिबिम्बितचिद्घटितम् ; वृत्तौ चित्प्रतिबिम्बभानाभावात्, इति सूचनाय *रूपफलव्याप्यत्वमित्युक्तम्* ॥ घटादीनां जडत्वात् तदावरणे प्रयोजनाभावात् तदवच्छिन्नचिद्विषयकत्वमुक्तम्, शुद्धचिद्विषयकत्वे तु शुद्धचिदाकारवृत्त्यैव निवर्त्यत्वापत्तेः—घटाद्यवच्छिन्नेति ॥ तथा सति घटाद्यवच्छिन्नचिद्विषयकैन्द्रियिकवृत्त्या तन्निवृत्तिसंभवः, समानविषयकयोरेव ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावात् । स्वावच्छिन्नचिद्विषयकत्वप्रयोजनमाह—*तच्च न ब्रह्मणीति* ॥ तथाच ब्रह्मण्यवेद्यत्वरूपविशेषणस्य निर्वक्ष्यमाणापरोक्षव्यवहारयोग्यत्वरूपविशेष्यस्य च सत्त्वेन नोक्तविशिष्टाभावरूपो हेतुः, इति न व्यभिचारः, 'ब्रह्मणीवे'ति दृष्टान्तसङ्गतिश्चेति भावः । *तस्यैवेति* ॥ न त्वज्ञानस्य ; तस्य स्वाविषयकत्वेन स्वविषयकत्वघटितस्वावच्छिन्नचिद्विषयकत्वासंभवात्, घटेऽपि वेद्यत्वाप्रसिद्ध्यापत्तेरित्येवकारार्थः । अभानापादकत्वप्रयोजनमाह—*नापि शुक्तिरूप्यादाविति* ॥ *ननु* शुक्तिरूप्याज्ञानस्यैवाप्रसिद्धिः, अत आह—*अतीततादशायामिति* ॥ *असत्त्वापादकाज्ञानेति* ॥ तन्निवर्तकानुमित्यादिवृत्त्यसत्त्वे शुक्तिरूप्यं नासीदिति व्यवहारात्, तत्सत्त्वे तु तदासीदिति व्यवहारादिति भावः । *उक्ताज्ञानेति* ॥ अभानापादकाज्ञानेत्यर्थः । तत्र तादृशाज्ञानस्यैवाभावात्, तस्य ज्ञातत्वानुपगमात् । अतीततादशायां ज्ञातस्यैव तस्यानुमानम्, तेन च ज्ञातस्यैव तस्यातीतसत्त्वव्यवहार इति भावः । *वृत्त्यव्याप्यत्वादिति* ॥ तथाच वक्ष्यमाणासिद्ध्यादिसङ्गतिरिति भावः । *मूले—नचेति* ॥ उक्ताभावरूपहेतुप्रतियोगिभूतमिति शेषः । *फलव्याप्यत्वाभावविशिष्टमिति* ॥ 'अवेद्यत्वे सती'ति सत्यन्तार्थभूताभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वाभावविशिष्टमित्यर्थः । असिद्धि-साधनवैकल्ययोरुभयोरुद्भावनाद् यावद्दोषोद्भावनस्याभिप्रेतत्वात्, व्यभिचारानुक्त्या न्यूनत्वशङ्कां परिहर्तुं व्यभिचाराभावबोधनाय 'ब्रह्मणीवे'ति दृष्टान्तोक्तिः । *ननु* विषयगतमपरोक्षव्यवहारयोग्यत्वमपरोक्षपदार्थतावच्छेदकधर्मवत्त्वम्, तच्च यद्यपि घटादावभानापादकाज्ञाना-

### न्यायामृतम्

पक्षैकदेशे दृष्टान्ते चाभावात् । अत्रोक्तं चित्सुखेन—"शुक्तिरूप्यादौ विशेषणमस्ति, नतु विशेष्यम् ; अध्यस्तत्वात्, अपरोक्षव्यवहारायोग्येऽपि तत्र तद्व्यवहारस्तु—अधिष्ठानभूतसाक्षिगतापरोक्ष्याध्यासाद् युक्तः । 'इदमि'ति व्यवहारयोग्येऽपि तस्मिन्नधिष्ठानगतेदन्त्वारोपात् ; 'इदमि'ति व्यवहारवत् । यद्यपि

### तरङ्गिणी

परोक्षव्यवहारं समर्थयते—*अपरोक्षव्यवहारायोग्येऽपीति* ॥ *साक्षिगतेति* ॥ इदमाकारवृत्तिनिवृत्ताज्ञानकार्यसाक्षिमेद इदमंशावच्छिन्नचैतन्यगतापरोक्ष्याध्यासादित्यर्थः। यथाश्रुते तु रूप्यस्य साक्षात् साक्षिचैतन्येऽनुत्पत्तेरसंगतिः स्यात् । *ननु* एवमपरोक्षव्यवहारयोग्यत्वाभावोऽस्वप्रकाशत्वं हेतुरस्तु, नच—घटादावसिद्धिरिति—वाच्यम् ; शुक्तिरूप्यादेरिव घटादेरप्यध्यस्तत्वेन तत्राप्यापरोक्ष्यविरहसत्त्वेनासिद्धेरभावादित्याशङ्क्य निराकरोति—*यद्यपीति* ॥ फलाव्याप्यत्वे सति सप्रकारकबाधायोग्यापरोक्षव्यवहारयोग्यत्वाभावो हेतुः । तत्र सत्यन्तं विना घटादावसिद्धिः स्यादिति भावः । मा भूत् तर्हि शुक्तिरूप्यादौ दृष्टान्ते साधनवैकल्यम्, पक्षीकृतेऽज्ञानान्तःकरणादावसिद्धिस्तु स्यादेवेत्याह—*सर्वेति* ॥ सर्वव्यावहारिकोपादानत्वमज्ञान-

### न्यायामृतकण्टकोद्धारः

मिति षष्ठो नेत्यर्थः । *पक्षैकदेशे दृष्टान्ते चाभावादिति* ॥ *अत्र कश्चित्* ॥ अनन्याधीनापरोक्षत्वं स्वप्रकाशत्वम्, तन्निरूपितभेदप्रतियोगित्वं हेतुः । तच्च नित्यपरोक्षेऽन्याधीनपरोक्षे घटादावस्ति, इति नासिद्धिः । यद्वा—अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वं हेतुः । नच—अविद्यान्तःकरणशुक्तिरूप्यादावपरोक्षव्यवहारयोग्यत्वसद्भावाद् भागासिद्धि-साधनवैकल्ये स्यातामिति—वाच्यम् ; अपरोक्षव्यवहारयोग्यत्वशब्देनाज्ञाननिवर्तकवृत्तिविषयत्वस्य विवक्षितत्वात्, अस्य चाविद्यादावभावात्—इत्याह—*तन्न* ; अनन्याधीनापरोक्षत्वभेदः काल्पनिको वा ? अकाल्पनिको वा ? नाद्यः ; 'शुद्धमनन्याधीनापरोक्षं ने'ति तार्किकादिकल्पनासम्भवेन कल्पिततादृशभेदवत्त्वस्य शुद्धेऽपि सम्भवेन व्यभिचारतादवस्थ्यात् । न द्वितीयः ; पक्षेऽसिद्धेः, अकाल्पनिकभेदस्य परेण कुत्राप्यनङ्गीकारात् ॥

*यदप्युक्तम्*—अज्ञाननिवर्तकवृत्तिविषयत्वमपरोक्षव्यवहारयोग्यत्वमिति, *तन्न* ; धर्मादावपि तादृशवृत्तिविषयत्वेन भागासिद्धेः । न च—परोक्षवृत्तिरज्ञाननिवर्तिकैव नेति—वाच्यम् ; परोक्षतोऽपि ज्ञाने 'न जानामी'ति व्यवहारापत्तेः, अन्यथाऽपरोक्षवृत्तेरप्यज्ञाननिवर्तकत्वं न स्यात्, 'अविद्यान्तःकरणादिकं पूर्वं न ज्ञातमिदानीं ज्ञातमि'ति व्यवहाराच्च । तस्माद् यत्किञ्चिदेतत् ॥ *ननु* अध्यस्तत्वाविशेषेण घटादेरिव रूप्यस्याप्यपरोक्षव्यवहारयोग्यत्वमस्तु ; तथाच साधनवैकल्यं तदवस्थमेव, इत्यत आह—*यद्यपीति* ॥

### विट्ठलेशीयटिप्पणी

विषयत्वप्रयोजकविशिष्टतादात्म्यम्, तथापि साक्षात्करोतेः सकर्मकत्वानुरोधेन तत्र प्रयोजकनिवेशेऽप्यपरोक्षव्यवहारयोग्यत्वमुक्ताज्ञानाविषयत्वविशिष्टचित्तादात्म्यरूपमेव ; स्थापनात्, नतूक्ताज्ञानाविषयत्वमात्रम् ; जडे घटादावावरणकृत्याभावेन सर्वदैव तत्सत्त्वादुक्तव्यवहारापत्तेः । तच्च न ब्रह्मणि ; स्वप्रकाशे तत्र वृत्त्याऽज्ञाननिवृत्तिमात्रेणापरोक्षव्यवहारसंभवेन तद्व्यवहार उक्तविशिष्टचित्तादात्म्यानपेक्षणात्, अतो यद्युक्ताज्ञानाविषयत्वमात्रं प्रकृतहेतावपरोक्षव्यवहारयोग्यत्वम्, तर्हि घटादौ विशेषणाभावेन हेतुसत्त्वेऽप्यविद्यादौ तदसंभवः । नच—अविद्यान्तःकरण-तद्धर्मसुखादि-शुक्तिरूप्यादिप्रातिभासिकानामज्ञानसत्त्वानुपगमेन तत्रोक्ताज्ञानाविषयत्वं सर्वदैवास्तीति—वाच्यम् ; प्रसङ्गाद्

न्यायामृतम्

घटादिरप्यध्यस्तः, तथापि तत्र सत्त्वमिवापरोक्ष्यं व्यावहारिकम् । रूप्यादौ तु प्रातिभासिकम्''—इति, *तन्न* ; सर्वव्यावहारिकोपादाने ब्रह्मज्ञानात् प्रागबाधिते श्रुत्यादिसिद्धे च व्यावहारिकेऽज्ञानेऽन्तःकरणादौ च योग्यत्वस्यापि व्यावहारिकत्वात् । न ह्यपरोक्ष्यैकरसेन साक्षिणा साक्षाद् वेद्येऽज्ञानादावापरोक्ष्यं प्रातिभासिकम्, वृत्तिद्वारा तद्वेद्ये घटादौ तु व्यावहारिकमिति युक्तम् ॥

तरङ्गिणी

विशेषणम्, नान्तःकरणादेः ॥ *व्यावहारिकत्वादिति* ॥ सप्रकारकबाधाबाध्यत्वादित्यर्थः । तत्र हेतुः—*ब्रह्मज्ञानात् प्रागबाधित इति* ॥ अस्य चासंजातबाधरूप्यादिसाधारणतया श्रुत्यादिसिद्धे चेति द्वितीयो हेतुः । नहि परमते प्रातिभासिकापरोक्ष्ययोग्यताधिकरणं रूप्यादि श्रुत्यादिसिद्धमित्यर्थः ॥ व्यावहारिकेऽपि नित्यातीन्द्रिये तादृशयोग्यत्वं न व्यावहारिकम्, तथापि व्यावहारिक इत्यस्य प्रत्यक्षप्रयोजकवत्तया व्यवहारविषय इत्यर्थः । पूर्वहेत्वोरप्येतदुपस्कर्तव्यम्, अतो न कश्चित् क्षुद्रोपद्रवः ॥ *नहीति* ॥ परेषां मत आपरोक्ष्यं नेन्द्रियजन्यवृत्तिविषयत्वम्, किं त्वपरोक्षैकरसानावृतसंवित्तादात्म्येन स्फुरणविषयत्वम् । तच्चाज्ञानादौ साक्षादस्ति ; तत्र प्रमाणवृत्तेरविद्यावृत्तेर्वाऽनपेक्षणात्, घटादौ तु प्रमाणवृत्तिद्वाराऽनावृतसंवित्तादात्म्येन स्फुरणविषयत्वम्, इति परम्परयाऽऽपरोक्ष्यम् । एवं च घटाद्यपेक्षयाऽप्यज्ञानान्तःकरणादावापरोक्ष्यमुत्कृष्टमस्ति, इत्यपरोक्षव्यवहारयोग्यत्वाभावस्तत्रासिद्ध इति भावः ॥ *तद्वेद्य इति* ॥ ज्ञातत्वेन साक्षिवेद्य इत्यर्थः । किंच रूप्यस्य प्रातिभासिकत्वेऽपि तद्गतमपरोक्षव्यवहारयोग्यत्वं सप्रकारकबाधायोग्यत्वमेव ; रूप्यापरोक्ष्यं नास्तीत्यप्रतीतेः ; तथाच साधनवैकल्यमेव । *ननु* फलव्याप्यत्वमेवास्वप्रकाशत्वम्, फलव्याप्यत्वं च न वृत्तिप्रतिबिम्बितचैतन्यविषयत्वं वा वृत्त्या वा तत्प्रतिबिम्बितचैतन्येन वाऽभिव्यक्तविषयाधिष्ठानचैतन्यं प्रति विषयत्वं वा, घटादौ वृत्तिरूपज्ञानविषयत्वातिरिक्ते निरुक्तचैतन्यरूपे ज्ञानविषयत्वे प्रमाणाभावादित्युक्तत्वात्, तथापि वृत्तिजन्यातिशययोगित्वं वा, वृत्तिप्रतिबिम्बितचैतन्यजन्यातिशययोगित्वं वा फलव्याप्यत्वम् । अतिशयश्च नावरणभङ्गः ; घटादावावरणाभावेन तद्भङ्गाभावात्, नापि व्यवहारः ; वृत्तिजन्य-

न्यायामृतकण्टकोद्धारः

*सर्वव्यावहारिकोपादान इति* ॥ अत्र सर्वव्यावहारिकोपादानत्वं ब्रह्मज्ञानात् पूर्वमबाधितत्वं श्रुत्यादिसिद्धत्वं चेति हेतुत्रयमज्ञानस्य व्यावहारिकत्वसाधकम् । अन्तःकरणादेस्तु व्यावहारिकत्वे ब्रह्मज्ञानात् प्रागबाधितत्वं श्रुत्यादिसिद्धत्वं चेति हेतुद्वयम् । तथाचैतैर्हेतुभिरज्ञानादेर्व्यावहारिकत्वस्य सिद्धत्वात् तद्गतापरोक्षत्वस्यापि व्यावहारिकत्वाद् भागासिद्धिः स्यादेवेत्यर्थः ॥

एतच्चाभ्युपेत्योक्तम् । *वस्तुतस्तु*—अज्ञानान्तःकरण-शुक्तिरूप्यादेः प्रातिभासिकत्वेऽपि तद्गतापरोक्षत्वं व्यावहारिकमेव । नच—प्रातिभासिकाज्ञानादिगतस्य कथं व्यावहारिकत्वम् ? तस्य धर्मत्वेन तुल्यसत्ताकत्वस्यावश्यकत्वादिति—वाच्यम् ; किमेवं वदतो यथा धर्मी तथा धर्मोऽपीति सामान्यव्याप्तिरभिप्रेता ? धर्मिणो व्यावहारिकत्वे धर्मस्यापि व्यावहारिकत्वम्, धर्मिणः पारमार्थिकत्वे धर्मस्यापि पारमार्थिकत्वम्, धर्मिणः प्रातिभासिकत्वे धर्मस्यापि प्रातिभासिकत्वमिति विशेषव्याप्तिर्वा ? नोभयमपि ; तथा सति शुक्तिरूप्यादेः प्रातिभासिकत्वेन तद्गतस्य त्वदुक्तत्रैकालिकनिषेधप्रतियोगित्वस्यापि प्रातिभासिकत्वापत्तेः, तथा सति शुक्तिरूप्यादेः पारमार्थिकत्वं स्यात्, ब्रह्मणः पारमार्थिकत्वेन तद्गतसत्यत्वादेरपि तथात्वापत्तेः, प्रपञ्चस्य व्यावहारिकत्वेन तद्गतप्रतिषेधस्यापि तत्त्वापत्तौ बाध्यत्वाभावेन जगतः सत्यत्वापत्तेश्च । किञ्च साक्षाद् विषयत्वस्य व्यावहारिकत्वे तन्मात्रत्वेन तस्य चाज्ञानान्तःकरण-शुक्तिरूप्यादौ सत्त्वाद् व्यावहारिकत्वमावश्यकम्, इति भागासिद्धि-साधनवैकल्ये स्यातामित्याह—*न हीति* ॥

न्यायामृतम्

शिष्टं स्वप्रकाशत्ववादे वक्ष्यते। किंचास्वप्रकाशत्वस्य पञ्चमप्रकाराविद्यानिवृत्तौ व्यभिचारः। *यत्तु*—प्रमाण-वस्त्वन्यतराधीनवृत्तिविषयत्वं दृश्यत्वम्, तुच्छस्य घटादिवत् प्रमाणाधीनवृत्तिविषयत्वस्य प्रातिभासिकवद् वस्त्वधीनवृत्तिविषयत्वस्य चाभावाद् न तत्र व्यभिचारः—इति, *तत्त्वतितुच्छम्*; प्रमाणाधीनवृत्तिविषयत्वस्यामिथ्यात्वेन व्याप्तेः, प्रमाणशब्देन ज्ञापकोक्तौ तु तुच्छे व्यभिचारः; तज्ज्ञानस्यापि ज्ञापकाधीनत्वात्, धीमात्रशरीररूप्यादिवृत्तौ वस्तुपरतन्त्रत्वस्याप्यभावाच्च। वस्तुपरतन्त-

तरङ्गिणी

व्यवहारवत्त्वस्यात्मन्यपि सम्भवेन व्यभिचारात्, घटादिषु चैतन्यरूपज्ञानानङ्गीकर्तृमते घटादिव्यवहारस्य घटादिविषयवृत्तिजन्यतया निरुक्तचैतन्यजन्यत्वेन स्वरूपासिद्ध्यापत्तेः, किन्तु भग्नावरणचित्सम्बन्धः। एतच्च चैतन्यस्य व्यापकतया सर्वमतेऽप्यस्तीति शङ्कां निराकरोति—*शिष्टमिति*॥ घटादौ वृत्त्या वा, तत्प्रतिबिम्बितचैतन्येन वा भग्नावरणचित्सम्बन्धे प्रमाणाभावात्। *ननु* आत्मनश्चिद्विषयत्वमनङ्गीकृत्य चित्कर्मत्वरूपास्वप्रकाशत्वं हेतूक्रियते, अत एवाज्ञानान्तःकरणादौ रूप्ये वाऽसिद्धिर्न भवति; साक्षिविषयत्वात्, नापि तुच्छे व्यभिचार इति—चेत्, *न*; विषयत्वातिरिक्तस्य कर्मत्वस्याभावेन परम्परया ज्ञातत्वादिना चिद्विषयत्वस्यात्मनि व्यभिचारात्। साक्षात् चित्कर्मत्वस्य घटादावप्यसत्त्वेनासिद्धिरित्यादि स्वप्रकाशवादे वक्ष्यत इत्यर्थः॥ *किं चास्वप्रकाशत्वस्येति*॥ यद्यपि फलव्याप्यत्वभिन्नानां पञ्चानामपि हेतूनामविद्यानिवृत्तौ व्यभिचारः; तथापि तेषां दूषितत्वेनासत्कल्पतया प्रस्तावितदूषणस्यास्वप्रकाशत्वस्यैव ग्रहणमित्यदोषः॥ "पञ्चमप्रकारे"ति चतुर्थप्रकारसदसद्वैलक्षण्यरूपसाध्याभावोपपादनाय॥ *प्रातिभासिकवदिति*॥ अविद्यान्तःकरणादेः प्रमाणाधीनवृत्तिविषयत्वाभावेऽपि वस्त्वधीनवृत्तिविषयत्वमस्ति, इति नासिद्धिरित्यर्थः॥ तज्ज्ञानस्यापीति*॥ अन्यथा तुच्छज्ञानत्वेनाभिमतस्याज्ञानत्वं वा, अनित्यज्ञानत्वं वा स्यादित्यर्थः॥ *धीमात्रेति*॥ रूप्यस्य धीमात्ररूपत्वेन रूप्यवृत्तेः स्वाभिन्नरूप्यानधीनत्वादित्यर्थः। *ननु* एतदयुक्तम्; दोष-संस्कार-संप्रयोगाद् द्वे अविद्यावृत्ती जन्येते—एका रजतरूपा, अपरा रजतधीरूपा। तथाच रजताधीनत्वं रजतवृत्तेः सम्भवत्येव। नच—द्वयोर्वृत्त्योः समकालत्वाद् न परस्परपरतन्त्रतेति—वाच्यम्; वस्तुव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वस्य वस्त्वधीनशब्देन विवक्षितत्वात्, एतस्य समानकालीनवृत्त्योरपि सत्त्वादिति—चेत्, *न*; व्यतिरेकशब्देन प्रागभावोक्तौ प्रागभावाप्रतियोगिप्रागभावाविद्यादावसम्भवः, अभावान्तरोक्तौ घटादिध्वंसरूप

न्यायामृतकण्टकोद्धारः

*ननु* स्वातिरिक्तसंविदनधीनसिद्धिकत्वरूपत्वं स्वप्रकाशत्वम्, तदभावश्चास्वप्रकाशत्वं हेतुः। पञ्चमो नित्यातीन्द्रिये शुक्तिरूप्यादौ च स्वातिरिक्तसंविदनधीनसिद्धिकत्वेन तदनधीनसिद्धिकत्वरूपस्वप्रकाशत्वाभावान्न भागासिद्धि-साधनवैकल्ये स्याताम्। नाप्यात्मन्यनैकान्त्यम्; तस्य स्वतः सिद्धत्वेन संविदधीनसिद्धिकत्वाभावादित्यत आह—*शिष्टमिति*॥ आत्मनः स्वातिरिक्तसंविदनधीनसिद्धिकत्वे सिद्ध्यभावापत्तेः। न च—स्वतः सिद्धिरिति—वाच्यम्; तस्यासत्त्वशुक्तिरूप्यादि वक्ष्यत इत्यर्थः। *पञ्चमप्रकारेति*॥ उपलक्षणमेतत्—पूर्वविकल्पितपक्षेष्वपि दूषणमेतदूह्यम्। नच—अज्ञानकालवृत्तित्वं हेतुविशेषणम्, अतो न व्यभिचार इति—वाच्यम्; पञ्चमप्रकाराविद्यानिवृत्तेर्ब्रह्मातिरिक्तवस्तुत्वेनाज्ञानकार्यत्वस्याभ्युपगमाभावेनाज्ञानकालवृत्तित्वस्यापि तत्र सत्त्वात्। *प्रमाणाधीनेति*॥ तथाच विरुद्धो हेतुरिति भावः। *धीमात्रशरीरेति*॥

*ननु* अत्र शुक्तीन्द्रियसन्निकर्षादिदमाकारान्तःकरणवृत्तिरुदेति। तस्यां च प्रतिफलितचैतन्यगोचरा शुक्तित्वाविद्या। सा च दोषवशात् क्षुब्धा सती रजत-तद्भासाकाराभ्यां परिणमते। तत्र रजताभासाकार-

## न्यायामृतम्

शब्देनासदविषयकत्वस्यासद्विलक्षणविषयकत्वस्य चोक्तौ मद्रीत्या दृष्टान्तस्य साधनवैकल्यात्, ब्रह्मणि व्यभिचारापरिहाराच्च। एवं च—

न धर्मादौ फलव्याप्तिर्वृत्तिव्याप्यत्वमात्मनि। अज्ञातत्वादिरूपेण चिद्वेद्यत्वं तु चित्यपि ॥
अन्यापेक्षाभिलापत्वम् अस्त्यौपनिषदात्मनि। त्वदुक्तास्वप्रभत्वं च रूप्ये नास्त्यस्ति चात्मनि ॥

## तरङ्गिणी

इत्याशयः ॥ *ब्रह्मणीति* ॥ प्रमाणाधीनवृत्तिविषयत्वस्योपपादनादित्यर्थः। *संगृह्णाति*—*नेति* ॥ *अन्यापेक्षेति* ॥ स्वातिरिक्तसंविदपेक्षानियतव्यवहारयोगित्वमित्यर्थः ॥ *अस्वप्रभत्वम्=अस्वप्रकाशत्वं रूप्ये नास्ति, अतः साधनवैकल्यम्, आत्मन्यस्तीति व्यभिचारः ॥

## न्यायामृतकण्टकोद्धारः

परिणामो ह्यविद्यावृत्तिः। तथाच वस्तुजन्यत्वरूपवस्तुपरतन्त्रत्वस्य सत्त्वात् कथं साधनवैकल्यमिति—चेत्, *अत्र वक्तव्यम्*; अत्र वस्तुशब्देन विषयीभूतं वा वस्तु विवक्ष्यते? जनकीभूतं वा? नाद्यः; विषयीभूतस्य प्रातिभासिकतया नियतपूर्ववर्तित्वरूपजनकत्वाभावेन साधनवैकल्यस्य तादवस्थ्यात्, नापरः; तुच्छेऽपि शब्दादिरूपजनकीभूतवस्तुजन्यवृत्तिविषयत्वेन व्यभिचारापरिहारात्, आत्मन्यपि व्यभिचाराच्चेति। उक्तमर्थं सङ्गृह्णाति—*एवञ्चेति* ॥

## न्यायामृतसौगन्ध्यम्

परोक्षत्वं जातिः? अपरोक्षज्ञानविषयत्वं वा? तृतीयप्रकाराभावात्, उभयथाऽप्यन्यानधीनापरोक्षत्व-भिन्नत्वाद् ब्रह्मणि व्यभिचारः ॥ किञ्चापरोक्षत्वस्य ब्रह्मातिरिक्तत्वेऽविद्यमानतयाऽनन्याधीनत्वासिद्धिः, ब्रह्मस्वरूपत्वे तु तादृशभेदानुयोगितयाऽपरोक्षत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वस्य घटादावसिद्धिः, अपरोक्षानुयोगिकभेदप्रतियोगित्वोक्तौ कल्पितभेदेश्वरादिनिष्ठभेदप्रतियोगित्वेन ब्रह्मणि व्यभिचारः। फलव्याप्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वाभावस्य मम घटादावसिद्धेः ॥

## सौगन्ध्यविमर्शः

ब्रह्मणो विशेषण-विशेष्योभयस्य सर्वदा सत्त्वेनोभयाभावात्। अधिकं विट्ठलेशीये व्यक्तम्। एतेन—किंचापरोक्षत्वं जातिः, अपरोक्षज्ञानविषयत्वं वा, तृतीयप्रकाराभावात्, इत्यादि सौगन्ध्योक्तं—परास्तम्; अभानापादकाज्ञानाविषयत्वस्यैव स्वप्रकाशत्व-घटकापरोक्षत्वरूपत्वेनादोषात्। न हि ब्रह्मणोऽज्ञानाविषयत्वं स्वान्यचिदधीनम्। अनन्याधीनत्वपदेन हि स्वातिरिक्त-चिदनधीनत्वमेव विवक्ष्यते। यत्तु—अपरोक्षत्वस्य ब्रह्मातिरिक्तत्वेऽविद्यमानतयाऽन्यानधीनत्वासिद्धिः, ब्रह्मस्वरूपत्वे तु तादृशभेदानुयोगितयाऽपरोक्षत्वावच्छिन्नानुयोगिकभेदप्रतियोगित्वस्य घटादावसिद्धिरिति सौगन्ध्योक्तम्, तत्रेदमेव वक्तव्यम्;—यत् 'स्वप्रकाशं घटो ने'त्यादिप्रतीतिबलात् स्वप्रकाशानुयोगिकभेदस्य घटादौ सत्त्वेन हेतुसमन्वयः, 'स्वप्रकाशं ब्रह्म ने'ति प्रतीत्य-भावाद् न स्वप्रकाशानुयोगिकभेदो ब्रह्मणि वर्तते। 'जीवो ब्रह्म ने'त्यादिप्रतीतिसिद्धस्तु भेदो जीवाद्यनुयोगिको न स्वप्रकाशा-द्यनुयोगिकः, इति नापरोक्षत्वस्य ब्रह्मस्वरूपत्वे हानिलेशोऽपि। ब्रह्मातिरिक्तत्वेऽपि तु घटादीनामिवापरोक्षत्वस्यापि स्वान्यचिद-धीनत्वाद् नान्यानधीनत्वं वर्तते, इति स्वशब्देनापरोक्षत्वस्य ग्रहणदशायामन्यानधीनत्वाभावेऽपि न दोषः; स्वान्यपदेन स्वाश्रयान्यविवक्षणेन स्वाश्रयान्यानपेक्षत्वस्यैव विवक्षणाद् ब्रह्मनिष्ठापरोक्षत्वस्य स्वाश्रयब्रह्मातिरिक्तानपेक्षणात्, घटादिनिष्ठा-परोक्षत्वस्य स्वाश्रयघटाद्यतिरिक्तब्रह्मापेक्षणाच्च न दोषः। घटादीनां फलव्याप्यत्वमग्र एव स्थापयिष्यत इति सिद्धान्तेवोक्तम्। प्रतिकर्मव्यवस्थायां चैतद् व्यक्तीभविष्यति। तथाच घटादीनां फलव्याप्यत्वानङ्गीकार इति हठवाद एवायम्। अस्तु वाऽयं हठवादोऽपि योग्य इति, तावताऽप्यपरविधेन दृश्यत्वेनोभयानुमतं साधितं त्वनपोह्यमेव, इति न किञ्चिदनुपपन्नम् ॥

अद्वैतसिद्धिः

रूप्यादौ च सत्त्वेनासिद्धिसाधनवैकल्ये इति—वाच्यम् ; अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्यापरोक्ष-

तरङ्गिणी

( सि० ) *अत्र वदन्ति*—अस्वप्रकाशत्वरूपं दृश्यत्वं हेतुः । अस्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम् । "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः । तथाचान्यानधीनापरोक्षत्वं पर्यवसितम्, तन्निरूपितभेदप्रतियोगित्वं हेतुः । तच्च नित्यापरोक्षेऽन्याधीनापरोक्षे च घटादावस्ति, इति नासिद्धिः । नच—ब्रह्मणोऽपि ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात् तत्र व्यभिचारः ; अकल्पितभेदस्य क्वाप्यसिद्धत्वादिति—वाच्यम् ; तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात्, जीवत्वेश्वरत्वादिरूपस्यान्यस्यैव धर्मस्य तन्निरूपकत्वात्, एवं चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वमपि हेतुः । नच—फलव्याप्यत्वाभावविशिष्टं यदपरोक्षव्यवहारयोग्यत्वम्, तस्य ब्रह्मणीवाविद्यान्तःकरणादौ शुक्ति-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यवहारयोग्यत्वम्=अभानापादकाज्ञानाविषयत्वं तद्विशिष्टचित्तादात्म्यं चेत्यन्यतरवत्त्वम्, तत्राद्यस्य ब्रह्मणीव द्वितीयस्याविद्यादौ सत्त्वादसिद्ध्यादिकमित्याशयः । नोक्तान्यतरवत्त्वमपरोक्षताव्यवहारयोग्यता, किं त्वज्ञानसामान्यविरोधिमनोवृत्तिविषयतायोग्यत्वम्, अतो नोक्तदोष इत्याह—*अज्ञाननिवर्तकेत्यादि* ॥

विट्ठलेशीयटिप्पणी

अपरोक्षव्यवहारयोग्यत्वनिर्वचनस्यापि विवक्षितत्वेन घटाद्यभानापादकाज्ञानाविषयेऽपि घटाद्यवच्छिन्नचैतन्ये घटाद्यभानापादकाज्ञानाविषयत्वलक्षणेनापरोक्षव्यवहारापत्तेः स्वाभानापादकाज्ञानाविषयीभूतस्व-स्वावच्छिन्नचैतन्यान्यतरकत्वस्यैव स्वस्मिन् अपरोक्षव्यवहारयोग्यत्वरूपत्वेनोपगन्तव्यत्वेनाविद्यादीनामभानाभावेन तत्रोक्तयोग्यत्वाभावात् तत्रापि हेत्वसिद्ध्यसङ्गतिः, इत्यत आह—*अपरोक्षव्यवहारयोग्यत्वमिति* ॥ *अभानापादकाज्ञानाविषयत्वमिति* ॥ स्वाभानापादकाज्ञानाविषयो यत् स्वम्, तत्त्वमित्यर्थः । स्वम्=ब्रह्मचैतन्यम् । *तद्विशिष्टचित्तादात्म्यमिति* ॥ स्वाभानापादकाज्ञानाविषयत्वविशिष्टा या स्वपदार्थरूपा चित्, तत्तादात्म्यमित्यर्थः । स्वं घटाद्यधिष्ठानचित्, तत्तादात्म्यं च घटादौ ; तादृशशुद्धचित्तादात्म्यमविद्यान्तःकरणादीनाम् ; शुद्धचैतन्य एव तदध्यासात्, तादृशशुक्त्यवच्छिन्नतदधिष्ठानचित्तादात्म्यं च शुक्तिरूप्यादौ । नचैवं तादृशघटावच्छिन्नचित्तादात्म्यमादाय गुरुत्वादावप्यपरोक्षव्यवहारप्रसङ्गः ; अयोग्यान्यत्वस्यापि निरुक्तान्यतरवत्त्वे सामानाधिकरण्यसंबन्धेन विशेषणत्वादिति । उक्तरीत्या विशेषाभावनिवेशाभिप्रायेणैवाभानापादकत्वमज्ञानविशेषणमुपात्तम् ; अन्यथा यदा यत्राभानापादकाज्ञाननिवृत्तिः, तदा तत्रासत्त्वापादकाज्ञानस्यापि निवृत्त्यवश्यंभावादज्ञानविषयत्वसामान्याभावस्यैवोक्तयोग्यताघटकत्वौचित्यात्—इति व्याचक्षते । *केचित्तु*—अभानापादकाज्ञानविषयत्वसामान्याभाव एवोक्तयोग्यतायां प्रवेश्यः, अभानापादकत्वनिवेशस्तु तद्घटितसामान्यधर्मावच्छिन्नाभावान्तरस्यैवोक्तयोग्यत्वघटकत्वसूचनाय । तेन तत्प्रसिद्धन्द्विपरोक्षव्यवहारयोग्यत्वमसत्त्वापादकाज्ञानाविषयत्वघटितमिति लभ्यते । नचैवं—अविद्याद्यभानापादकाज्ञानाप्रसिद्धावपि ब्रह्म-घटाद्यभानापादकाज्ञानविषयत्वस्य प्रसिद्धस्याभावोऽविद्यादावप्यस्ति, इति तद्विशिष्टचित्तादात्म्यनिवेशो व्यर्थ इति—वाच्यम् ; ध्वंस-प्रागभावयोः प्रतियोगिसमवायिदेशवृत्तित्वनियमवत् कदाचिदज्ञानविषयत्ववत्, कदाचित् तदभाववत्त्वमिति नियमाभ्युपगमेनाविद्यादावज्ञानविषयत्वासंभवादुक्ततादात्म्यघटितान्यतरवत्त्वस्यावश्यकत्वात् । अविद्यादावुक्तचित्तादात्म्येन तद्व्यवहारोपपादनं गुरुत्वादौ तद्वारणं च पूर्वोक्तरीत्यैवेत्यपि—*विभुवन्ति* ॥ *इत्याशय इति* ॥ 'नचे'ति शङ्काग्रन्थेऽध्याहारः शेषः । समाधातुमभिप्रायमाह—*नोक्तान्यतरवत्त्वमिति* ॥ अभानापादकत्वनिवेशे उक्तनियमाभ्युपगमे, उक्तान्यतरनिवेशे च गौरवादिति भावः । तदाह—*किं त्वज्ञानसामान्यविरोधीति* ॥ अज्ञानसामान्यनिवर्तकेत्यर्थः । अतीतत्वादिदशायां शुक्तिरूप्यादावसत्त्वापादकाज्ञाननिवर्तकानुमानिकमनोवृत्तिविषयत्वेन हेत्वसिद्धिवारणाय सामान्यपदम् । तथाचोक्तानुमानिकवृत्तेरभानापादकाज्ञानानिवर्तकत्वात् तत्र हेतुसिद्धिरिति

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

उक्तविषयताया अव्याप्यवृत्तित्वेन तदभावस्य ब्रह्मण्यपि सत्त्वात् तदीययोग्यत्वस्येत्युक्तम् । तादृशयोग्यत्वं चाभानापादकाज्ञानविषयत्व-तदवच्छेदकत्वविशिष्टयोरन्यतरत्वम् । उक्तविषयत्वं ब्रह्मण्येव, उक्तविषयतावच्छेदकत्वं घटादावेव, न त्वविद्यादौ । अतीतत्वादिदशायामपि शुक्तिरूप्यादेर्नाभानापादकाज्ञानविषयतावच्छेदकत्वम्, साक्ष्यसम्बन्धादेव तदा तदभानोपपत्तेः । नच—उक्तविषयता-तदवच्छेदकत्वयोरव्याप्यवृत्तित्वेन तत्स्वरूपोक्तान्यतरत्वस्याप्यव्याप्यवृत्तित्वात् तदभावो ब्रह्मण्यपीति—वाच्यम् ; ब्रह्म-घटान्यतरत्वपर्यवसितस्योक्तान्यतरत्वस्य निवेशात् ॥

### विट्ठलेशीयटिप्पणी

बोध्यम् । *मनोवृत्तीति* ॥ सा च घटादाविन्द्रियजन्या, ब्रह्मणि तु वेदान्तजन्याऽखण्डा, अविद्यादौ तु न काऽपि ; तत्रोक्तनियमानभ्युपगमेन तेषामज्ञातत्वानुपगमेन च स्वत एवाज्ञानविषयत्वसामान्याभावाभ्युपगमेन तत्प्रयोजकमनोवृत्तिकल्पने प्रयोजनाभावात्, क्वचिदविद्यावृत्तेरुपगमेऽपि तस्या अज्ञाननिवर्तकत्वाभावात् । नचैवं मनःपदं व्यर्थम् ; 'अज्ञानसामान्यविरोधी'त्यस्याज्ञानविषयत्वसामान्याभावव्याप्येत्यर्थकत्वेऽविद्या-शुक्तिरूप्यादि-विषयकाविद्यावृत्तेरुक्ताभावव्याप्यत्वेनाविद्या-शुक्तिरूप्यादौ हेत्वसिद्धिवारकतया तत्सार्थक्यात् । अत एवाज्ञानविषयत्वाभावातिरिक्तसकलांशसार्थक्यमपीति बोध्यम् । योग्यत्वनिवेशप्रयोजनमाह—*उक्तविषयताया इति* ॥ अज्ञानसामान्यविरोधिमनोवृत्तिविषयत्वयोग्यत्वम्, अज्ञानविषयत्वं मनोवृत्तिसामग्री चेत्युभयम्, तच्च ब्रह्मण्येव ; तत्राज्ञानविषयतायाः सत्त्वात्, तन्निवर्तकौपनिषदमनोवृत्तेरपेक्षणात् तत्सामग्र्याश्च सत्त्वात्, नतु जडे घटादौ ; अज्ञानविषतायास्तत्रासत्त्वेन तद्विषयकैन्द्रियमनोवृत्तेस्तन्निवर्तकत्वाभावात् । यद्यज्ञानविषयताया घटावच्छिन्नचैतन्यनिष्ठाया अवच्छेदकत्वरूपाज्ञानीयविषयताविशेषस्य घटादावपि सत्त्वात् तन्निवर्तकत्वं तद्वृत्तेः संभवतीत्युच्यते, तदानीमतीतत्वादिदशायां शुक्तिरूप्यादावपि स्वावच्छिन्नचैतन्यनिष्ठासत्त्वापादकाज्ञानविषयतावच्छेदकत्वरूपतदीयविषयताविशेषस्य तदा तदसत्त्वव्यवहारानुरोधेन सत्त्वात् तन्निवर्तकानुमानिकमनोवृत्तेश्च संभवेन तत्राप्युक्तयोग्यत्वापत्त्या हेतोरसिद्धिरित्यत आह—*तादृशयोग्यत्वं चेति* ॥ *विशिष्टयोरन्यतरत्वमिति* ॥ उक्तविषयत्व-तदवच्छेदकत्वयोरन्यतरवत्त्वापेक्षया लाघवात् ; घटत्व-पटत्वान्यतरवत्त्वापेक्षया घट-पटान्यतरत्वे लाघववत् । मनोवृत्तिसामग्र्या ब्रह्म-घटाद्योः प्रायशः सत्त्वादनिवेशः । योग्यतायां कदाचित् तदसत्त्वेऽपि तत्रापरोक्षव्यवहार इष्यत एवेति भावः । *ब्रह्मण्येवेति* ॥ अतो घटादिसंग्रहाय तदवच्छेदकत्वमुक्तमिति भावः । *घटादावेवेति* ॥ अतो ब्रह्मसंग्रहायाज्ञानविषयत्वमुक्तमिति भावः । अभानापादकत्वप्रयोजनमाह—*न त्वविद्यादाविति* ॥ उक्तविषयतावच्छेदकत्वमित्यनुषङ्गः । उक्तविषयत्वं त्वविद्यादौ जडत्वादेवानभ्युपगतम् । *शुक्तिरूप्यादेरिति* ॥ असत्त्वापादकाज्ञानविषयतावच्छेदकत्वेऽपीति शेषः । तर्हि तदा तज्ज्ञानं कुतो न ? इति शङ्कायामाह—*साक्ष्यसंबन्धादेवेति* ॥ *तदा=अतीतत्वादिदशायाम् । *तदभानोपपत्तेः=शुक्तिरूप्याद्यभानोपपत्तेः । *अव्याप्यवृत्तित्वेनेति* ॥ तन्निवर्तकवृत्तिकालेऽसत्त्वेनेति भावः । *ब्रह्मण्यपीति* ॥ तथाच व्यभिचार इति भावः । घटादौ तु वृत्तिकाले निरुक्तान्यतरत्वरूपविशेष्याभावाद् वृत्तिविषयताघटितवेद्यत्वसत्त्वेनावेद्यत्वरूपासत्त्वाच्च विशिष्टाभावरूपहेतुसत्त्वाद् नासिद्धिः । वृत्तिरहितकाले उक्तविशेष्य-विशेषणोभयसत्त्वेऽपि न क्षतिः ; कादाचित्कविशेषणेन धूमगन्धादिना वह्निपृथिवीत्वानुमानवत् कादाचित्कोक्तविशिष्टाभावेनापि मिथ्यात्वानुमितिसंभवादिति भावः । *ब्रह्म-घटान्यतरत्वपर्यवसितस्येति* ॥ ब्रह्म-घटान्यतरत्वरूपस्येत्यर्थः । *उक्तान्यतरत्वस्येति* ॥ अभानापादकाज्ञानविषयत्वावच्छिन्नभिन्नत्वे सति, तदवच्छेदकतावच्छिन्नभिन्नं यत्, तद्भिन्नत्वमुक्तविषयतावच्छेदकत्वान्यतररूपम्, तन्नियतमतिरिक्तभेदरूपं वाऽव्याप्यवृत्ति नोक्तान्यतरत्वम्, किंतूक्ताज्ञानविषयताव्याप्यव्याप्यवृत्तिधर्मावच्छिन्नभिन्नत्वे सति तदवच्छेदकत्वव्याप्यव्याप्यवृत्तिधर्मावच्छिन्नभिन्नं यत्, तद्भिन्नत्वं ब्रह्मत्वघटत्वादिरूपं तन्नियतातिरिक्तभेदरूपं व्याप्यवृत्त्येवेति । ब्रह्मणि निरुक्तावेद्यत्वरूपविशेषणोक्तान्यतरत्वरूपविशेष्योभयस्य सार्वदिकत्वेन तद्विरुद्धोक्तविशिष्टाभावस्य कदाऽप्यसत्त्वाद् न व्यभिचारः, घटादौ तूक्तान्यतरत्वरूपविशेष्य-

अद्वैतसिद्धिः

व्यवहारयोग्यत्वपदेन विवक्षितत्वात्, तस्य चाविद्यादौ शुक्तिरूप्यादौ चासत्त्वाद् नासिद्धि-साधनवैकल्ये । यथाच घटादेः फलव्याप्यत्वम्, तथाऽग्रे वक्ष्यामः । अविद्यानिवृत्तेः पञ्चमप्रकारत्वपक्षे तत्र व्यभिचार-वारणायाज्ञानकालवृत्तित्वं हेतुविशेषणं देयम् ॥

तरङ्गिणी

रूप्यादौ च सत्त्वेनासिद्धि-साधनवैकल्ये इति—वाच्यम्; अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्यापरोक्ष-व्यवहारयोग्यत्वपदेन विवक्षितत्वात्, तस्य चाविद्यादौ शुक्तिरूप्यादौ चासत्त्वाद् नासिद्धि-साधनवैकल्ये । यथाच घटादेः फलव्याप्यत्वम्, तथाऽग्रे वक्ष्यते । अविद्यानिवृत्तेः पञ्चमप्रकारत्वाभ्युपगमपक्षे तत्र व्यभिचार-वारणायाज्ञानकालवृत्तित्वं हेतुविशेषणं देयम् । (५३३) तेनैव तुच्छेऽपि न व्यभिचारः । सद्विविक्तत्वे तु साध्ये तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च न व्यभिचारगन्धोऽपि"—इति, *अत्र ब्रूमः*; अपरोक्षत्वस्य ब्रह्मातिरिक्तत्वेऽ-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अज्ञानकालवृत्तित्वमिति* ॥ अज्ञानाप्रयुक्तं सद् यद् जन्यम्, तदन्यत्वे सति कालसम्बन्धित्व-मित्यर्थः । उक्तकालसम्बन्धित्वं ब्रह्मण्यपीति दृश्यत्वमुपात्तम् । सत्यन्तस्य तुच्छेऽपि सत्त्वात् कालसम्बन्धित्व-मुक्तम् । तावन्मात्रस्य पञ्चमप्रकारेऽपि सत्त्वात् सत्यन्तमुक्तम् ।

विट्ठलेशीयटिप्पणी

सत्त्वेऽप्यैन्द्रियिकवृत्तिकाले निरुक्तवेद्यत्वसत्त्वेनावेद्यत्वरूपविशेषणाभावेन कादाचित्कविशिष्टाभावरूपहेतुसत्त्वाद् नासिद्धिः, अविद्यादौ निरुक्तावेद्यत्वरूपविशेषणसत्त्वेऽपि ब्रह्म-घटान्यतरत्वपर्यवसितस्य निरुक्तविशेष्यस्याभावाद् विशिष्टाभावो व्याप्यवृत्तिरेवास्तीति नासिद्धिशङ्काऽपीति भावः ॥

*श्रीमदप्पय्यदीक्षितकृतसिद्धान्तलेशसंग्रह आनन्दबोधाचार्यमतमुक्तम्*—आत्मन्येवाविद्यानिवृत्तिः, सा च न सती; अद्वैतहानेः, नाप्यसती; ज्ञानसाध्यत्वायोगात्, नापि सदसद्रूपा; विरोधात्, नाप्यनिर्वाच्या; अनिर्वाच्य-सादेरज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्तिप्रसङ्गात्, ज्ञाननिवर्त्यत्वापत्तेश्च, किंतूक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारा—*इति* ॥ तन्मतेऽज्ञाननिवृत्तिकालेऽज्ञानस्यासत्त्वेन तदविषयत्वेन [तन्निवर्तकवृत्तिविषयत्वाभावेनो-क्ताविद्यानिवृत्तावेद्यत्वरूपविशेषणसत्त्वेऽप्यज्ञाननिवर्तकवृत्तिविषयत्वरूपयथाश्रुतस्याविद्याविषय-तदवच्छेदकान्यतरत्वस्य ब्रह्मघटान्यतरत्वपर्यवसितस्य तन्निष्कर्षणीयस्य च विशेष्यस्यासत्त्वेनोक्तविशिष्टाभावरूपदृश्यत्वहेतोः सत्त्वेन मिथ्यात्वरूप-साध्याभावेन व्यभिचारः, इत्याशङ्कां परिहरति मूले—*अविद्यानिवृत्तेः पञ्चमप्रकारत्वपक्ष इति* ॥ *ननु* चैत्रीयाज्ञान-निवृत्तेर्मैत्रीयाज्ञानकालवृत्तित्वाद् न तद्विशेषणेनोक्तव्यभिचारवारणसंभवः, नच स्वप्रतियोगिकत्वस्वकालवृत्तित्वोभय-संबन्धेनाज्ञानविशिष्टत्वं तदर्थः; दृष्टान्त-पक्षयोरसत्त्वात्, नापि स्वप्रयुक्तत्व-स्वकालवृत्तित्वोभयसंबन्धेन; अविद्यायामसिद्धेः, इत्यतो व्याचष्टे—*अज्ञानकालवृत्तित्वमिति* ॥ अनेनाज्ञानकालमात्रवृत्तित्वं विवक्षितम् । तेना-ज्ञानान्यकालावृत्तित्वे सत्यज्ञानकालवृत्तित्वम् । तथाच यदि स्वानधिकरणकालवृत्तित्वसंबन्धेनाज्ञानविशिष्टान्यत्वे सति स्वाधिकरणकालवृत्तित्वम्, तदा स्वपूर्वक्षणनिष्ठतादृशाज्ञानाधिकरणकालवृत्तौ घटादावसिद्धिः, यदि स्वान-धिकरणकालवृत्तित्वसंबन्धेनाज्ञानविशिष्टान्यत्वे सति स्वाधिकरणकालवृत्तित्वं घटोत्तरनिवर्त्याज्ञाननिष्ठमादाय घटादौ हेतु-त्वम्, तदा चैत्राज्ञाननिवृत्तौ मैत्राज्ञानस्योभयसंबन्धेन सत्त्वाद् व्यभिचारतादवस्थ्यम्, इति तेनाज्ञानप्रयुक्तमात्रवृत्ति-धर्मवत्त्वम्, तेन चाज्ञानप्रयुक्तं यज्जन्यम्, तद्भिन्नत्वे सति कालवृत्तित्वं विवक्षणीयमित्याह—*अज्ञानाप्रयुक्तमिति* ॥ घटाद्यसिद्धिवारणायेदम् । अविद्यायामसिद्धिवारणाय—*जन्यमिति* ॥ अविद्यानिवृत्तेरविद्यापरिणामत्वानभ्युपगमेन अप्रयुक्तत्वाद् जन्यत्वाच्च तत्र तदवच्छिन्नभेदाभावाद् न व्यभिचारः । *उक्तकालसंबन्धित्वम्=अज्ञानाप्रयुक्तजन्य-भिन्नत्वविशिष्टकालवृत्तित्वम् । *सत्यन्तस्य=अज्ञानाप्रयुक्तजन्यभिन्नत्वस्य । *तुच्छेऽपीति* ॥ अवेद्यत्वे सत्यपरोक्ष-व्यवहारयोग्यत्वाभावेन दृश्यत्वरूपविशेष्यांशसत्त्वीति शेषः । *तावन्मात्रस्य=कालसंबन्धित्वमात्रस्य । *पञ्चम-प्रकारे=सत्त्वेनाभ्युपगम्यमानाविद्यानिवृत्तौ । *सत्यन्तम्=अज्ञानप्रयुक्तजन्यभिन्नत्वम् । *ननु* सति अज्ञानरूपप्रति-

## तरङ्गिणी

विद्याधीनतयाऽन्यानधीनत्वस्यासम्भवदुक्तिकत्वात्, ब्रह्मस्वरूपत्वे तु तादृशभेदप्रतियोगितानवच्छेदकत्वेन घटादावसिद्धिः। अपरोक्षप्रतियोगिकभेदोक्तौ तादृशजीवप्रतियोगिकभेदवत्त्वाद् ब्रह्मणि व्यभिचारः, कल्पित भेदमादाय ब्रह्मस्वरूपस्याप्यपरोक्षत्वस्यावच्छेदकत्वे पञ्चमप्रकाराविद्यानिवृत्तौ तुच्छे च व्यभिचारः, तदुभय-व्यावृत्त्यर्थमज्ञानकालवृत्तित्वविशेषणोक्तावविद्यानिवृत्त्युत्तरकालीने जीवन्मुक्त्यवस्थोत्पन्ने भोगादावसिद्धिः, अविद्यालेशसमकालीनत्वोक्तौ घटादावसिद्धिः, अन्यतरसमकालीनत्वोक्तावप्रयोजकम्, प्रत्येकमुक्तिपक्षे पञ्चमप्रकाराविद्यानिवृत्तौ व्यभिचारः; युगपत् सर्वमुक्तेश्च वामदेवादिमुक्तिप्रतिपादकागमविरोधेनाप्रामाणिकत्वस्य त्वदीयैरपि कैश्चिदभिहितत्वादिति दिक्। *वस्तुतस्तु*—अपरोक्षत्वमपरोक्षत्वजातिमत्त्वं वाऽपरोक्षज्ञानविषयत्वं वा स्यात्; तृतीयप्रकाराभावात्, उभयथाऽप्यन्यानधीनापरोक्षभिन्नत्वाद् ब्रह्मणि व्यभिचारः। द्वितीयपक्षेऽन्यानधीनापरोक्षरूपचैतन्यविषयत्वाद् घटादावसिद्धिरित्यादि बोध्यम्। सद्विविक्तत्वे साध्येऽपि यथायथमेत एव दोषा बोध्याः। वृत्तिमात्रस्याज्ञानानिवर्तकतया तन्मते घटादाविव ब्रह्मण्यप्यज्ञाननिवृत्त्यर्थं वृत्तिप्रतिबिम्बितचैतन्यस्यावश्यकत्वेन फलव्याप्यत्वात्, विशेषणाभावप्रयुक्तविशिष्टाभावस्य घटादाविव, चित्प्रतिफलनानङ्गीकारे वृत्तेरज्ञानानिवर्तकत्वात्, अतीन्द्रियादाविव विशेष्याभावप्रयुक्तविशिष्टाभावस्यात्मन्यपि सत्त्वेन व्यभिचारस्य दुरुद्धरत्वात्, °वृत्तिव्यतिरिक्तस्य चैतन्यरूपज्ञानस्य घटादिभासकस्य मयाऽनङ्गीकारेणान्यतरासिद्धेश्च। घटादौ फलव्याप्यत्वाभावस्योक्तत्व-वक्ष्यमाणत्वाभ्यां तव मतेऽप्यसिद्धेरापाद्यमानत्वाच्च। तस्माद् नैतदपि समाधानं युक्तम्, इति सर्वमवदातम्॥

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि।
न्यायामृततरङ्गिण्यां दृश्यत्वं दृश्यतां बुधैः॥

---

## सिद्धिव्याख्या

भेदनान्तरीयकसम्बन्धस्यापि सम्भवाद् विषयत्वं सम्भविष्यति। नच—काल्पनिकभेदो न भेदकार्यविषय-विषयिभावनिर्वाहक्षम इति—वाच्यम्; कल्पितभेदस्य बिम्ब-प्रतिबिम्बयोरङ्गाङ्गिभावनिर्वाहकत्ववद् जीव-ब्रह्मणोर्ज्ञातृ-ज्ञेयभावनिर्वाहकत्ववच्चात्मनोऽपि चिद्रूपस्य चिद्विषयकत्वनिर्वाहकत्वसम्भवात्। नच—विषय-विषयिणोः कल्पितभेदोऽपि नास्तीति—शङ्कनीयम्; वृत्तिप्रतिफलितायाश्चितः शुद्धात्मनः सकाशात् कल्पितभेदसत्त्वात्। नच—आत्माकारवृत्तौ चितः प्रतिफलनेऽपि नात्मनः स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमस्ति, प्रयोजनाभावात्, अतो नोक्तहेतोर्व्यभिचार इति—वाच्यम्; घटादाविवात्मन्यपि स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वस्य स्वविषयकाज्ञाननिवृत्त्या सप्रयोजनत्वात्। नच—आत्मनश्चिद्विषयत्वं विनाऽप्यात्माकारवृत्तेरेवात्माज्ञाननिवर्तकत्वमस्त्विति—शङ्क्यम्; तथात्वे घटादेरपि स्वाज्ञाननिवर्तकत्वाकारवृत्तिविषयत्वमात्रमेव, नतु तद्विषयत्वमित्यापातेन घटादावसिद्ध्यापातादिति॥

---

### अद्वैतसिद्धिः

तेनैव तुच्छेऽपि न व्यभिचारः। एवमेव सर्वेषु हेतुषु व्यभिचारपरिहाराय यतनीयम्। सद्विविक्तत्वमात्रे तु साध्ये तुच्छे, पञ्चमप्रकाराविद्यानिवृत्तौ च न व्यभिचारगन्धोऽपीति सर्वमवदातम्॥

---

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अज्ञानाप्रयुक्तत्व तु--अज्ञान-तल्लेशान्यतरतादात्म्यानापन्नत्वम्, तेनाज्ञाननिवृत्तौ प्रतियोगिविधयाऽज्ञानस्य प्रयोजकत्वेऽपि न क्षतिः। जीवन्मुक्तभोगादिकमज्ञानानात्मकमपि तल्लेशात्मकम्॥

---

### विट्ठलेशीयटिप्पणी

योगिनि तन्निवृत्तिः, असति तु न, इत्यज्ञाननिवृत्तेरज्ञानप्रयुक्तत्वात् तत्र व्यभिचारो दुर्वार इत्यत आह—*अज्ञानाप्रयुक्तत्वमिति*॥ *अज्ञान-तल्लेशान्यतरतादात्म्यानापन्नत्वमिति*॥ *अज्ञानम्=मूलाविद्या, *तल्लेशः=तत्संस्कारः, तत्तादात्म्यानापन्नम्=तत्परिणामभिन्नम्; तद्भिन्नत्वमित्यर्थः। अज्ञानतादात्म्यापन्नं तत्परिणामभूतं घट-शुक्तिरूप्यादि, तल्लेशश्च, तल्लेशतादात्म्यापन्नं जीवन्मुक्तभोगः, तद्भिन्नमप्यनाद्यविद्यादि न जन्यम्, तादृशी त्वविद्यानिवृत्तिरेव पञ्चमप्रकारा; तस्या अविद्या-तल्लेशपरिणामत्वानुपगमात्, इति तत्राज्ञान-तल्लेशान्यतरपरिणामान्यजन्यत्वसत्त्वेन तदवच्छिन्नभेदाभावाद् न व्यभिचार इति भावः। उक्तव्याख्याबीजमाह—*तेनेति*॥ तल्लेशनिवेशप्रयोजनमाह—*जीवन्मुक्तभोगादिकमिति*॥ *अज्ञानानात्मकम्=स्थूलरूपाज्ञानपरिणामभिन्नम्। *तल्लेशात्मकम्=सूक्ष्मरूपपरिणामरूपम्। एवं चोक्तान्यतरतादात्म्यानापन्नं जन्यं पञ्चमप्रकाराविद्यानिवृत्तिरेव, तद्भिन्नत्वस्य जीवन्मुक्तभोगादौ सत्त्वाद् हेतुसत्त्वरूपेष्टसिद्धिः। *ननु* अज्ञाननिवृत्तौ व्यभिचारवारणाय तद्भिन्नत्वमेवास्तु, किमज्ञानकालवृत्तित्वनिवेशेनेति? अत आह मूले—*तेनैव तुच्छेऽपि न व्यभिचार इति*॥ *एतेन*—तुच्छे व्यभिचारवारणाय तद्भिन्नत्वमेवास्तु, किमज्ञानकालवृत्तित्वनिवेशेन? इत्यपि—*परास्तम्*॥ *ननु*—अज्ञाननिवृत्तेरज्ञानाप्रयुक्तजन्यत्वेन गुरुरूपेण भेदः किमिति निवेश्यते? लघुनाऽज्ञाननिवृत्तित्वेनैव स निवेश्यतामिति—चेत्, *उच्यते*; तथा सति जीवन्मुक्तीयस्थूलाज्ञाननिवृत्तौ मिथ्याभूतायां भागासिद्धिः, इति पञ्चमप्रकाराविद्यानिवृत्तित्वेन तद्भेदो निवेश्यः, स च सदन्यत्वे सति, असदन्यत्वे सति, सदसद्विलक्षणान्यत्वे च सति, तल्लेशपरिणामान्यत्वे च सति, जन्यत्वरूपनिवेशितभेदप्रतियोगितावच्छेदकापेक्षया गुरु, इति ग्रन्थकारोक्तावेव लाघवादिति॥

---

## इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योः दृश्यत्वहेतुविचारः॥

---

# अथ जडत्वहेतुविचारः

——: ० :——

**न्यायामृतम्**

जडत्वमप्यज्ञातृत्वं वा ? अज्ञानत्वं वा ? अस्वप्रकाशत्वं वा ? अनात्मत्वं वा ? पराभिप्रेतं वा ? नाद्यः ; त्वन्मते पक्षनिक्षिप्तस्याहमर्थस्यैव ज्ञातृत्वात्, शुद्धात्मनोऽप्यज्ञातृत्वाच्च । शुद्धेऽपि कल्पितं ज्ञातृत्वमस्तीति चेत्, न ; कल्पितेन हेत्वभावेन व्यभिचारापरिहारात् । कल्पितस्य ज्ञातृत्वस्याभावो

**अद्वैतसिद्धिः**

जडत्वमपि हेतुः । *ननु*—किमिदं जडत्वम् ? अज्ञातृत्वं वा ? अज्ञानत्वं वा ? अनात्मत्वं वा ? नाद्यः ; त्वन्मते पक्षनिक्षिप्तस्यैवाहमर्थस्य ज्ञातृत्वात् तत्रासिद्धेः, शुद्धात्मनोऽज्ञातृत्वेन तत्र व्यभिचाराच्च । नापि द्वितीयः ; वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वेन केवलाया वृत्तेः केवलस्य चैतन्यस्य चाज्ञानत्वेन वृत्तावसिद्धिपरिहारेऽपि चैतन्ये व्यभिचारतादवस्थ्यात् । नापि तृतीयः ; आत्मत्वस्यैव निरूपयितुमशक्य-

**तरङ्गिणी**

*त्वन्मत इति* ॥ तथाच तत्रासिद्धिरिति भावः ॥ *शुद्धात्मन इति* ॥ तथाच तत्र व्यभिचार इति भावः ॥ *शुद्धेऽपीति* ॥ तथाच शुद्धात्मनि हेतोरगमनाद् न व्यभिचार इत्यर्थः ॥ *कल्पितेनेति* ॥ अयोगोलकादौ कल्पितेन वन्ह्यभावेन वह्नेरपि धूमाव्यभिचारः स्यादित्यर्थः । अहमर्थे हेत्वसिद्धिर्नेति शङ्कते—*कल्पितस्येति* ॥

**न्यायामृतकण्टकोद्धारः**

अथ जडत्वहेतुं खण्डयितुं विकल्पयति—*जडत्वमिति* ॥ *त्वन्मत इति* ॥ परेण कर्तृत्वादिधर्माणामहंकारनिष्ठानामात्मन्यध्यस्तत्वाङ्गीकारात्, यथा जपाकुसुमगतं लौहित्यं स्फटिके प्रतिभासते, तद्वदिति भावः । *शुद्ध इति* ॥ तथाच तत्र व्यभिचार इति भावः । *व्यभिचारापरिहारादिति* ॥

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*अज्ञातृत्वम्=ज्ञातृभिन्नत्वम्* । *अज्ञानत्वम्=ज्ञानभिन्नत्वम्* । *अनात्मत्वम्=आत्मभिन्नत्वम्* । *पक्षनिक्षिप्तस्य* = मिथ्यात्वं येष्वनुमेयम्, तदन्तर्गतस्य । *अहमर्थस्य=स्थूलमनोविशिष्टस्य* । *ननु* नाहमर्थो ज्ञाता ; सुषुप्तौ तदभावेऽप्यविद्यावृत्त्यात्मकस्य सुखादिज्ञानस्य साक्षिणि दर्शनात्, तत्राह—*शुद्धेत्यादि* ॥ अविद्याविशिष्टस्वरूपेण सुषुप्ति-स्वप्नयोः, अहङ्कारविशिष्टरूपेण जाग्रति ज्ञातृत्वेऽपि केवलात्मनोऽज्ञातृत्वेन तत्र व्यभिचार इति भावः । *वृत्त्युपरक्तेति* ॥ यदाकारवृत्त्युपरक्तं चैतन्यं यत्, तत् तद्विषयकज्ञानमित्यर्थः । सुखादावपि वृत्तिः स्वीक्रियते ; अन्यथा सुखाद्यवच्छिन्नचितः सुखादिज्ञानत्वे सुखादौ संस्कारासम्भवात्, ज्ञानसूक्ष्मावस्थाया एव संस्कारत्वात्, कार्यस्यैव सूक्ष्मावस्थास्वीकारात् ।

**विट्ठलेशीयटिप्पणी**

वृत्त्युपरक्तचैतन्यस्य घटादिज्ञानत्वे घटीयरूपाद्याकारवृत्त्युपरक्तचैतन्यस्य घटीयपरिमाणादिज्ञानत्वं स्यात्, अतो व्याचष्टे—*यदाकारेति* ॥ यद् यदाकारवृत्त्युपरक्तं चैतन्यम्, तत् तद्विषयकं ज्ञानमित्यर्थः । इदं चैतन्यं मनोऽवच्छिन्नम्, नतु विषयावच्छिन्नम् ; परोक्षज्ञानासंग्रहापत्तेः । सुखादेः साक्षादन्तःकरणावच्छिन्नचित्संबन्धेनैव भानसंभवात् तद्विषयकवृत्तिस्वीकारे प्रयोजनाभावात् तज्ज्ञानाप्रसिद्धिः, अत आह—*सुखादावपीति* ॥ *वृत्तिः स्वीक्रियत इति* । तदुपरक्तचैतन्यं च तज्ज्ञानमिति भावः । *अन्यथा = सुखादिवृत्तेरस्वीकारे* । नैयायिकानामिव संस्कारः संभवत्येवेत्यत आह—*ज्ञानसूक्ष्मावस्थाया इति* ॥ *स्वीकारादिति* ॥ सुखाद्यवच्छिन्नचितश्च नित्यत्वेनाकार्यत्वात् सूक्ष्मावस्थारूप-

न्यायामृतम्

हेतुरिति चेत्, न ; 'गौरोऽहं जानामी'ति कल्पितज्ञातृत्ववति देहादौ तदभावासिद्धेः। धर्मिसमसत्त्वस्य ज्ञातृत्वस्याभावो हेतुरिति चेत्, न ; तादृशज्ञातृत्ववत्यन्तःकरणे तदभावासिद्धेः, शुद्धे तादृशज्ञातृत्वाभावाच्च। न द्वितीयः ; वृत्तिज्ञाने भागासिद्धेः। यदि च 'सांख्यवेदान्तिनां तु करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानमि'ति विवरणोक्तेर्वृत्तिरज्ञप्तिः, तर्हि परोक्षवृत्त्या स्वविषयेऽज्ञाननिवृत्तिव्यवहारस्मृतयो न स्युः ; तासां ज्ञप्तिकार्यत्वात्, 'धर्माधर्मादिकं च जानामी'त्यनुभवश्च न स्यात्। किंचात्मनि व्यभिचारः। तथाहि—आत्मरूपं ज्ञानं स्वविषयम्? परविषयं वा? नाद्यः ; स्ववृत्तिविरोधेन परैरस्वीकारात्। *ननु* स्वकर्मकत्वाभावेऽपि स्वव्यवहारजननयोग्यत्वरूपं स्वविषयत्वमस्ति, तत्स्वभावस्यापि स्फुरणस्य तद्व्यवहारजनकतया तद्विषयत्वमिति चित्सुखोक्तेरिति चेत्, न ;

तरङ्गिणी

गौरोऽहमिति* ॥ अहमर्थनिष्ठस्य ज्ञातृत्वस्य गौरे देहे कल्पितत्वादित्यर्थः। देहादौ हेतुसिद्धिं शङ्कते—*धर्मिसमसत्त्वस्येति*॥ *तादृशेति*॥ व्यावहारिकेत्यर्थः ॥ *शुद्ध इति*॥ शुद्धे तात्त्विकस्य धर्मिसमसत्ताकस्य ज्ञातृत्वस्याभावात् तत्र व्यभिचार इत्यर्थः ॥ *वृत्तिज्ञान इति* ॥ ज्ञाने ज्ञानत्वस्यावश्यकत्वादित्यर्थः। *ननु* हेतूकृतमज्ञानत्वमज्ञप्तित्वम्, तच्च वृत्तिरूपे ज्ञानेऽस्ति, इति नासिद्धिरिति शङ्कते—*यदि चेति* ॥ सांख्यरूपाः वेदान्तिनः = सांख्यवेदान्तिनः। बुद्धिवृत्तेर्ज्ञानभिन्नत्वमुपपाद्य तत्र ज्ञानशब्दप्रवादसमर्थनपरो विवरणग्रन्थः। अज्ञप्तित्वमपि वृत्तिरूपे ज्ञाने नास्तीत्यसिद्धिरेवेत्याह—*तर्हीति*॥ अपरोक्षवृत्तौ चैतन्यप्रतिबिम्बनियमात् तस्य च ज्ञप्तित्वादज्ञाननिवृत्त्यादि भविष्यति, इत्यत उक्तम्—*परोक्षवृत्त्येति*॥ परोक्षवृत्तौ चैतन्यप्रतिफलनादेस्त्वन्मतेऽप्यभावादज्ञाननिवृत्त्यादेर्ज्ञप्तिकार्यस्य ततो दर्शनात् परोक्षवृत्तेरपि ज्ञप्तित्वमवश्यमभ्युपेयम्, अतोऽसिद्धिरित्यर्थः ॥ *तासामिति* ॥ ज्ञप्तिकारणाद् ज्ञप्तिकार्यं न दृष्टमिति भावः॥ *धर्माधर्मादिकमिति*॥ धर्मादिवृत्तौ परोक्षरूपायां ज्ञप्तित्वरहितायां ज्ञप्तित्वमवगाहमानोऽनुभवः प्रमा न स्यादिति शेषः॥ *किंचात्मनीति*॥ त्वदभिप्रेत आत्मरूपे ज्ञाने ज्ञानत्वाभावस्याऽऽपाद्यमानत्वेन तत्राज्ञानत्वरूपहेतोः सत्त्वेन व्यभिचारः। आत्मनि ज्ञानत्वाभावं वक्तुं ज्ञानत्वव्यापकसविषयत्वाभावमाह—*तथाहीत्यादिना* ॥ *आत्मरूपं ज्ञानमिति* ॥ ज्ञप्तिरित्यर्थः॥ *स्ववृत्तिविरोधेनेति* ॥ क्रिया हि स्वविषये कर्मणि कर्तरि वा केनचित् सम्बन्धविशेषेणेतरव्यावृत्तेन वर्तते, तत्र सकर्मकक्रिया कर्मणि ; यथा छिदिक्रिया छेद्ये, गतिक्रियाऽपि गम्ये केनापि सम्बन्धेन वर्तत एव, अकर्मकक्रिया तु कर्तरि—यथा शयनासनादिक्रिया देवदत्ते। तदत्र स्वरूपभूतज्ञानक्रियां प्रति ब्रह्म यदि विषयः स्यात्, तदा कर्म-कर्त्रोरन्यतरत् स्यात्। ततश्च स्वरूपभूतज्ञानं ब्रह्मस्वरूपभूते ज्ञाने वर्तेत, तच्च विरुद्धम् ; नहि छिदा छिदायां वर्तते, शयनं वा शयने। एवं स्ववृत्तिविरोधेन ब्रह्मस्वरूपज्ञप्तेः स्वविषयत्वं परैर्नाङ्गीकृतमित्यर्थः। *ननु* ब्रह्मस्वरूपज्ञानं प्रति ब्रह्मणो विषयत्वेऽपि न ज्ञानं प्रति ब्रह्मणः कर्तृ-कर्मत्वान्यतरत्वापत्तिः ; कर्तृ-कर्मत्वातिरिक्तस्य तज्जन्यव्यवहारयोग्यत्वरूपस्य विषयत्वस्य स्वरूपभूतज्ञानं प्रति ब्रह्मणः सत्त्वात्। तथाच न स्ववृत्तिविरोध इति शङ्कते—*ननु स्वकर्मत्वाभावेऽपीति* ॥ अत्र परः स्वाचार्यसम्मतिमाह—*तत्स्वभावस्यापीति* ॥ तत्र ब्रह्मस्वरूपज्ञानस्य ज्ञप्तिकर्मत्वाभावेऽपि ज्ञप्तिजन्यव्यवहारयोग्यत्वरूपं ज्ञप्तिविषयत्वमस्त्येव। तथाच ब्रह्मरूपं ज्ञानं स्वविषयमेव, इति न ज्ञानत्वव्यापकसविषयत्व-

न्यायामृतकण्टकोद्धारः

पर्वतो वह्निमान् द्रव्यत्वादित्यत्रापि व्यभिचारपरिहारसम्भवादिति भावः। *गौरोऽहमिति* ॥ तथाच भागासिद्धिरिति भावः। *यदि चेति* ॥ सांख्यानां करणव्युत्पत्त्या बुद्धिर्ज्ञानम्, वेदान्तिनां ज्ञायतेऽनेनेति व्युत्पत्त्या वृत्तिर्ज्ञानमित्यन्वयः। *ननु* आत्मनि कथं व्यभिचारः? तस्य "सत्यं ज्ञानमि"ति श्रुत्या ज्ञानरूपत्वादित्यत आह—*तथाहीति* ॥ *स्ववृत्तीति* ॥ क्रियायाः स्वविषयत्वादर्शनेनात्म-

## अद्वैतसिद्धिः

त्वात् । तद्धि न जातिविशेषः ; त्वयाऽऽत्मन एकत्वाभ्युपगमात्, विशिष्टात्मनां भेदेऽपि तेषां पक्षकुक्षिनिक्षिप्तत्वात् । नाप्यानन्दरूपत्वम् ; वैषयिकानन्दे तद्व्यतिरेकस्य हेतोरसिद्धेः, तस्याप्यात्मत्वेऽज्ञानपक्षोक्तदोषः प्रसञ्जनीय इति—चेत्,

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नच—उक्तचिद्रूपेण चितोऽपि जन्यत्वेन तत्सूक्ष्मावस्थासम्भव इति—वाच्यम् ; तादृशावस्थाया हि संस्कारविधया स्मृतिकारणत्वं सुखादिविषयकत्वेन वाच्यम्, सुखादिविषयकत्वं च तस्यां सुखादितादात्म्यापन्नचित्परिणामरूपायां सुखादितादात्म्यम्, विद्यमानसुखादिवृत्तेः स्वीकारे तु नोक्तकारणत्वं कल्प्यते, तत्र तेन कारणत्वं कल्पनीयम्, वृत्तिसंस्कारस्यानुमित्यादिवृत्तिसंस्कारसाधारणेनाकाराख्यगौणविषयतासम्बन्धेन सुखादिविशिष्टसंस्कारत्वेन कारणतायाः क्लृप्तत्वेन तयैव विद्यमानसुखादिस्मृतिनिर्वाहादिति भावः । *विशिष्टात्मनाम् = जीवानाम् । *भेदे = नानात्वे । *निक्षिप्तत्वादिति* ॥ तथाच तेष्वसिद्धिः । *वैषयिकानन्दे = चन्दनादिसंयोगजन्यमनोवृत्त्यवच्छिन्नचिति । *तद्व्यतिरेकस्य = आनन्दभेदस्य । *तस्य = वैषयिकानन्दस्य । *आत्मत्वे = आत्मस्वरूपत्वस्वीकारे । *अज्ञानपक्षेत्यादि* ॥ केवलचितोऽनानन्दत्वेन तत्र

## विट्ठलेशीयटिप्पणी

संस्कारासंभवादिति भावः । *उक्तचिद्रूपेणेति* ॥ सुखादिविशिष्टचित्त्वेनेत्यर्थः । *विद्यमानसुखादिवृत्तेरिति* ॥ सुखादिसमानकालीनायाः साक्षिचैतन्यरूपप्रत्यक्षोपरञ्जकवृत्तेः । *उक्तकारणत्वम् = सुखादितादात्म्येन सुखादितादात्म्यापन्नचित्परिणामरूपसंस्कारकत्वम् । *तत्र=सुखादितादात्म्यापन्नचित्परिणामरूपे संस्कारे । *तेन=सुखादितादात्म्येन रूपेण । *कल्पनीयमिति* ॥ अतिरिक्तमित्यादिः । *वृत्तिसंस्कारस्य=उक्तवृत्तिसूक्ष्मावस्थारूपसंस्कारस्य । *अनुमित्यादिवृत्तीति*॥ सुखाद्यतीतत्वानागतत्वदशायां तत्सुखादिमत्पुरुषीयानुमित्यादिवृत्तीत्यर्थः । तत्सुखादिसमकालमेव पुरुषान्तरीयानुमित्यादिवृत्तीत्यपि तदर्थः । *सुखादिविशिष्टेति* ॥ सुखादिमदित्यर्थः । तेन सुखाद्यसमानकालसंस्कारस्य सुखादिविशिष्टत्वाभावेऽपि न क्षतिः । *तयैवेति* ॥ क्लृप्तोक्तकारणतयैव । *विद्यमानसुखादिस्मृतीति*॥ सुखादिसमकालतद्वृत्त्युपरक्तसाक्षिप्रत्यक्षविषयीभूतसुखादिस्मृतीत्यर्थः । *निर्वाहादिति* ॥ *ननु*—सुखाद्युपरक्तवृत्त्यवच्छिन्नचैतन्यरूपज्ञानावच्छेदकवृत्तिसूक्ष्मावस्थाया इव सुखाद्यवच्छिन्नचिद्रूपज्ञानावच्छेदकसुखादिसूक्ष्मावस्थाया अपि सुखादिसंस्कारत्वसंभव इति—चेत्, *न* ; सुखादेराकाराख्यविषयत्वस्य सुखादाविव तत्सूक्ष्मावस्थायामसंभवात्, वृत्ताविव तत्सूक्ष्मावस्थायां संभवादिति भावः । विशिष्टात्मपदेन घटादिविशिष्टचैतन्यस्य न परिग्रहः, तत्रात्मत्वव्यवहाराभावादिति मनसि निधायाह—*जीवानामिति* ॥ तत्तदन्तःकरणविशिष्टचैतन्यानामित्यर्थः । आश्रयाणामन्योन्याभावरूपभेदस्य जातिमत्त्वेऽप्रयोजकत्वादाह—*नानात्व इति* ॥ एकत्वान्यसंख्यापर्याप्त्यधिकरणत्व इत्यर्थः, नतु जीवनिष्ठभेदप्रतियोगित्वविशिष्टजीवत्व इत्यर्थः । तथा सति *भेदे=परस्परभेद इत्येव व्याख्यास्यत । तथाच जीवेष्वात्मत्वजातिसंभव इति भावः । *तथाच=जीवानां पक्षकुक्षिनिक्षिप्तत्वपदार्थपक्षतावच्छेदकाश्रयत्वे च । *तेषु=जीवात्मसु अनात्मत्वहेतोरसिद्धिः । वैषयिकत्वम्=विषयसंपर्कजन्यत्वं विशेष्ये चिद्रूपानन्दांशे न संभवतीत्यत आह—*चन्दनादीति* ॥ 'तद्व्यतिरेकस्ये'त्यस्यानन्दत्वाभावस्येत्यर्थ आत्मभिन्नत्वस्यैव हेतुत्वोपक्रमादसङ्गतिः, अत आह—*आनन्दभेदस्येति* ॥ 'तस्याप्यात्मत्वे' इत्यस्य वैषयिकस्यात्मत्व इत्यर्थेऽनात्मत्वासिद्धेरपरिहारादनुपपत्तिः, अतो व्याचष्टे—*आत्मस्वरूपत्व इति* ॥ आत्मनः स्वरूपं सत्यम्, तत्त्व इत्यर्थः । तथाच तत्र मिथ्यात्वरूपसाध्याभावात् तत्रोक्तहेत्वसिद्धिर्न दोषाय ; पक्षतावच्छेदकस्यापि तद्व्यावृत्तस्यैवोपगन्तव्यत्वात् । *यद्वा आत्मत्वे=चिदात्मरूपत्वे । चिद्भिन्नत्वघटितपक्षतावच्छेदकानाक्रान्तत्व इति यावत् । तत्र च हेत्वसिद्धिर्न दोष इति प्रसिद्धम् । 'अज्ञानपक्षोक्तदोषः' इत्यस्याज्ञानत्वस्य हेतुत्वपक्ष उक्तदोष इत्यर्थः । तं स्पष्टयति—*केवलचित इति* ॥ *अनानन्दत्वेनेति* ॥

## अद्वैतसिद्धिः

*मैवम्* ; द्वितीय-तृतीयपक्षयोर्दोषाभावात् । तथाहि—'अज्ञानत्वं जडत्वमि'ति पक्षे

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यभिचारः । केवलचिति व्यभिचारोक्त्या सत्यत्वसूचनेन वैषयिकानन्दादेः केवलचिदन्यस्यानात्मत्वसूचनेना-सिद्धितादवस्थ्यं सूचितम् । *मैवमिति* ॥ एवंशब्दानुक्तौ प्रथमपक्षदूषणस्यापि निषेधापत्तेः । एवंशब्देन द्वितीय-तृतीयपक्षयोर्दूषणे निषेध्यत्वमुक्तम् । नच—प्रथमपक्षेऽपि ज्ञातृत्वोपलक्षितचिद्भेदस्य हेतुत्वसम्भवात् तत्त्यागो नोचित इति—वाच्यम् ; यथाहि वक्ष्यमाणरीत्या ज्ञानपदजन्यधीमुख्यविशेष्यत्वरूपेण ज्ञानपदवाच्यस्य निवेशेन तद्भेदो हेतुः सम्भवति, तथा ज्ञातृपदजन्यधीमुख्यविशेष्यत्वेन ज्ञातृपदमुख्यार्थनिवेशेन तद्भेदो हेतुर्न सम्भवति ; ज्ञानानुकूलव्यापारवत्त्वेन चित इव मनसोऽपि ज्ञातृपदजन्यधीमुख्यविशेष्यत्वेनोक्तभेदस्य मनस्यसिद्धत्वात् । ज्ञानपदस्य तु वाच्यं वृत्त्यवच्छिन्नम्, असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टं वा चैतन्यम्, नतु चैतन्यविशिष्टवृत्त्यादिरूपम् ; विशेष्यत्वेनैव चितो ज्ञानपदात् प्रतीतेः । अत एव "सत्यं ज्ञान-मि"त्यादिश्रुतौ ज्ञानपदशक्त्यैव केवलचिद्बोध इति वक्ष्यते मूले । नहि वाच्यविशेषणस्य शक्त्या विशेष्यतया बोधो व्युत्पत्तिसिद्धः, 'पशुरपशुरि'त्यादितः पश्वादिभिन्नत्वेन पशुत्वादेर्बोधापत्तेः । वृत्त्यवच्छिन्नत्वं च वृत्ति-सुखादिनिष्ठप्रतिबिम्बप्रयोजकं यद् मनो-मायान्यतरावच्छिन्नचैतन्यम्, तदात्मकत्वम् , सुखादौ वृत्त्यभावेऽपि

### विट्ठलेशीयटिप्पणी

वैषयिकानन्दस्यैवानन्दरूपत्वेऽयं दोषः, स्वरूपानन्दस्याप्यानन्दरूपत्वे केवलचित्यनानन्दत्वाभावेन व्यभिचारा-भावादस्मिन् पक्षे दोषं पूरयति—*केवलचितीति* ॥ *व्यभिचारोक्त्या = मिथ्यात्वरूपसाध्याभावोक्त्या । *सत्यत्वसूचनेन=तद्रूपस्य तन्नियतस्याबाध्यत्वरूपस्य वा सत्यत्वस्य सूचनेनेत्यर्थः । *अनात्मत्वेति* ॥ असत्यत्वे-त्यर्थः । मिथ्यात्वेति यावत् । *सूचनेनेति* ॥ शुद्ध-विशिष्टयोरुभयोरपि सत्यत्वे द्वैतापत्तेः । *असिद्धि-तादवस्थ्यमिति* ॥ वैषयिकानन्दे केवलचिदन्यत्वघटितपक्षतावच्छेदकवति साधनीयस्य मिथ्यात्वस्य साधकहेतो-र्वैषयिकानन्दरूपात्मभेदस्यासत्त्वादिति भावः । *मूले—'सर्वेषु पक्षेष्वि'ति वक्तव्ये द्वितीय-तृतीयपक्षयोरित्युक्त्या प्रथमपक्षपरित्यागे बीजं वक्तुम्—'इति चेन्ने'ति=वक्तव्ये 'मैवमि'त्येवंकारः प्रयुक्तः, तत्प्रयोजनमाह—*एवं शब्दानुक्ता-विति* ॥ *द्वितीय-तृतीयपक्षयोरिति* ॥ प्रथमपक्षस्यातिविप्रकृष्टत्वादयोग्यत्वेन चैवंशब्देन परामर्शासंभवादिति भावः । यथाश्रुतौ द्वितीय-तृतीयावपि पक्षौ दुष्टावेव, परिष्कारेण तु प्रथमोऽपि निर्दोषत्वेन समर्थयितुं शक्य इति शङ्कते—*नच प्रथमपक्षेऽपीति* ॥ द्वितीयादिपक्षपरिष्कारप्रकारः प्रथमपक्षे न संभवतीति समाधत्ते—*यथाहीति* ॥ *ज्ञानानुकूलव्यापारवत्त्वेनेति* ॥ वक्ष्यमाणस्य ज्ञानस्य शुद्धचिद्रूपत्वेऽपि तस्य वक्ष्यमाण-ज्ञानपदार्थतावच्छेदकरूपेण जन्यत्वात् तदनुकूलव्यापारप्रसिद्धिः । *चित इव मनसोऽपीति* ॥ मनोऽ-वच्छिन्नं चैतन्यं हि प्रमातृ, तत्र मनसि तादृशव्यापारो वृत्तिरूपेण परिणामो यास्तवः, तदुपाधिकचैतन्ये स्वयास्तवः । *यद्वा=चिन्मनसोस्तादात्म्यरूपः संबन्ध एव निर्वक्ष्यमाणज्ञानप्रयोजको व्यापार इति बोध्यम् । ज्ञातृपदवद् ज्ञानपदं नानार्थं नेत्याह—*ज्ञानपदस्येति* ॥ 'वृत्त्यादि' इत्यादिना चैतन्यनिष्ठोक्तप्रयोजकपरिग्रहः । ज्ञानपदेन विशेषणांशत्यागेनेव विशेष्यांशत्यागेनार्थोपस्थितिस्तु न संभवतीत्याह—*नहीति* ॥ निर्विशेषिते घटत्वे पदार्थान्तरान्वयासंभवात् 'घटो न घटः' इत्युपेक्ष्याह—*पशुरपशुरिति* ॥ पशुत्वं तु लोम-लाङ्गूलवत्त्वं सविशेषितमेव तत्पदार्थतावच्छेदकमिति भावः । वृत्त्यवच्छिन्नचैतन्यस्य ज्ञानत्वघटने फल-व्यापारोभयांशघटनायाऽऽह—*वृत्त्यवच्छिन्नत्वमिति* ॥ चैतन्यस्येति शेषः । तदात्मकत्वेऽस्यान्वयः । प्रयोजकत्वं बिम्बविधया ॥ *मनो-मायान्यतरावच्छिन्नचैतन्यमिति* ॥ तत्र मनोऽवच्छिन्नं चैतन्यं जीवः, मायावच्छिन्नं त्वीश्वरः ; तदुभय-निवेशात् क्रमेण 'जीवो जानाति' 'ईशो जानाती'ति व्यवहारद्वयनिर्वाहः । इदं परोक्षे ज्ञाने वृत्तेर्बहिरनिर्गमाद्

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तस्यैव स्वच्छत्वेन प्रतिबिम्बवत्त्वम्। तत्र वृत्तेश्चिदुपरागार्थत्वपक्षे स्वाश्रयवृत्तिविषयत्वसम्बन्धेन चित्प्रतिबिम्बविशिष्टत्वरूपं ज्ञानक्रियायाः फलमादाय घटादिविषयस्य तत्कर्मता। *वस्तुतस्तु*—प्रतिबिम्बप्रयोजकत्वरूपेणैव वृत्त्यादिनिष्ठप्रतिबिम्बप्रयोजकस्य जानातिवाच्ये निवेशः, न तु वृत्ति-सुखादेरपि निवेशः। तथाच घटादेरपि वृत्त्युपहितरूपेण साक्षात्सम्बन्धेनैव जलाद्युपहितरूपेण पाषाणादेरिव प्रतिबिम्बवत्त्वसम्भवः।

## विट्ठलेशीयटिप्पणी

विषयावच्छिन्नचित्तादात्म्यानापन्नं घटकम्, अपरोक्षे तु तत्तादात्म्यापन्नम्; तत्र बाह्ये घटादौ तन्निर्गमापेक्षा, आभ्यन्तरे सुखादौ तु न तत्र वृत्तिरपीति मतं प्रकृतेऽङ्गीकृतमिति ध्येयम्। जडमनो-मायाविशिष्टयोर्ज्ञानत्वासंभवात् तन्मात्मकस्य तादात्म्येन तदुपहितचैतन्यस्य ज्ञानत्वमुक्तम्। इमौ च जीवसाक्षी, ईश्वरसाक्षी चेत्येतौ; तद्रूपज्ञानवत्त्वं चोक्तजीवेश्वरयोस्तादात्म्येनास्ति, इत्युक्तव्यवहारद्वयनिर्वाहः। *ननु* तैजसान्तःकरणपरिणामरूपाया ज्ञानपदव्यपदेश्यवृत्तेरेव स्वच्छद्रव्यत्वेन प्रतिबिम्बयोग्यत्वेन सुखादेरतथात्वेन कथं प्रतिबिम्बवत्त्वम्? नहि सुखाकारवृत्तौ ज्ञानरूपायां तत्संभवः; सुखादेः साक्षिसंबन्धसत्त्वेन भानसंभवेन द्वितीयक्षणे वृत्त्युपगमे प्रथमक्षणे सुखादेरभानप्रसङ्गेन च तद्वृत्तेः प्रयोजनाभावेनानुपगमात्, इत्यत आह—*सुखादौ वृत्तेरभावेऽपीति* ॥ *तस्यैव=सुखादेरेव। *स्वच्छत्वेनेति* ॥ ज्ञानरूपवृत्तेरिव सुखादेरपि तैजसान्तःकरणपरिणामविशेषत्वेनेति भावः। *ननु* मनो-मायान्यतरपरिणामरूपवृत्त्यवच्छिन्नचैतन्यात्मकचैतन्यमेव ज्ञानपदार्थोऽस्तु, वृत्त्यादिनिष्ठप्रतिबिम्बप्रयोजकत्वेन मनो-मायावच्छिन्नचिन्निवेशः कुतः? तत्राह—*तत्रेति* ॥ वृत्तेरावरणभङ्गार्थत्वपक्षेऽज्ञानाविषयत्वरूपफलस्यैव ज्ञानक्रियाकर्मत्वनिर्वाहकत्वादाह—*वृत्तेश्चिदुपरागार्थत्वपक्ष इति* ॥ *चितः=प्रतिबिम्बचितः, तद्द्वारा मनो-मायान्यतरावच्छिन्नबिम्बचितः, *उपरागः=संबन्धः, तदर्थत्वपक्ष इत्यर्थः। स्वाश्रयेत्याद्ये*। *द्वितीये तु* स्वप्रतिबिम्बाश्रयेति बोध्यम्। चित्प्रतिबिम्बविशिष्टत्वेति *प्रथमे, द्वितीये तु* चिद्विशिष्टत्वेति बोध्यम्। मनो-मायान्यतरावच्छिन्नचैतन्यस्य बिम्बविधया वृत्त्यादिगतस्वप्रतिबिम्बप्रयोजकत्वात् तदात्मकशुद्धचिद्रूपज्ञाधात्वर्थक्रियाया अपि तत्प्रयोजकत्वाद् उक्तसंबन्धेनोक्तफलाश्रयत्वाद् उक्तज्ञानक्रियाकर्मत्वं घटादेस्तज्ज्ञानविषयस्य निर्वहति, मनो-मायान्यतरपरिणामरूपवृत्त्यवच्छिन्नचिदात्मकचितो ज्ञानत्वे तु मनो-माययोर्वृत्तिप्रयोजकयोर्वृत्तिनिष्ठप्रतिबिम्बप्रयोजकत्वाभावेन वृत्तिफलत्वासंभवात् चैतन्यं प्रत्यवच्छेदकवृत्तेरपि पूर्वसिद्धतया चैतन्यफलत्वाभावेन सकर्मकत्वासंभवः। स्वप्रयोज्यवृत्तिविषयत्वसंबन्धेन स्वात्मकमनो-मायान्यतरावच्छिन्नचैतन्यवत्त्वं सकर्मकत्वमित्यपि न संभवति; धात्वर्थघटकफलं प्रति प्रयोजकत्वेन तद्व्यधिकरणव्यापारस्य धात्वर्थतायाः सकर्मकत्वे तन्त्रत्वात्। न च—इह मनो-मायान्यतरावच्छिन्नचैतन्यं प्रत्याश्रयत्वेन प्रयोजकत्वं व्यापाररूपस्य शुद्धचिद्रूपस्य ज्ञाधात्वर्थस्यास्त्येवेति—वाच्यम्, प्राचीनैर्वृत्त्यादिनिष्ठप्रतिबिम्बस्यैव वृत्तिप्रयोज्यावरणभङ्गस्यैव वा ज्ञाधात्वर्थव्यापारं प्रति फलत्वेन धात्वर्थघटकत्वोपगमाद् उक्तरीत्या ज्ञाधात्वर्थे प्रतिबिम्बस्य घटकत्वोपगमात्। *एतेन*—वृत्तिप्रयोजकमनो-मायान्यतरावच्छिन्नचैतन्यात्मकचितो ज्ञाधात्वर्थत्वोपगमेन सकर्मकत्वोपपादनमपि—*निरस्तम्*॥ *ननु* वृत्ति-सुखादीनामननुगतत्वात् तन्निष्ठत्वेन प्रतिबिम्बप्रवेशे शक्त्यैक्यासंभवः, इति वृत्ति-सुखयोरन्यतरत्वादिनानुगमो वाच्यः, तत्र च विशेष्य-विशेषणभावे विनिगमनाविरहानुक्तदोषो दुर्वार इत्यत आह—*वस्तुतस्त्विति*॥ *नत्विति*॥ 'वृत्त्यादिनिष्ठे'ति पूर्वोक्तपरम्परासंबन्धनिवेशेन लक्षणसमन्वयसूचनाय स्वरूपकीर्तनमिति भावः। एवं सति लाघवान्तरमप्याह—*तथाचेति* ॥ घटादेरित्यादिषष्ठ्यर्थः प्रतिबिम्बान्वयिनिष्ठत्वम्। *साक्षात्संबन्धेन=आश्रयत्वरूपेण। आदर्शाद्युपाधौ मुखादिप्रतिबिम्बः प्रातिभासिक उत्पद्यत इति मतेनेदम्। ग्रीवास्थमुखादौ स्वाभिमुखत्वादर्शादिनिष्ठत्वारोप इति मते स्वाश्रयत्वेन प्रतीयमानत्वरूपपरम्परासंबन्धनिवेशापत्त्या लाघवाभावात्। *प्रतिबिम्बेति* ॥ मनो-मायान्यतरावच्छिन्नचित्प्रतिबिम्बेत्यर्थः। *ननु* ईशस्य जगदुपादानत्वेन मनस्तदवच्छिन्नचैतन्योपादानतया तत्तादात्म्यस्येश्वरे संभवाद् मायानिवेशो व्यर्थ इत्याशङ्क्य, ईशस्य जगदनुपादानत्वपक्षे तत् सार्थकयति

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

'ईशो जानाती'त्यत्रेशस्य जगदनुपादानत्वपक्षे मनोऽवच्छिन्नचित्तादात्म्याभावाद् 'माया' निवेशः। साक्षिणः शुद्धचिद्रूपस्यैवाधिष्ठानत्वेन ज्ञानत्वाद् उक्तान्यतरावच्छिन्नचिदात्मकचितो ज्ञानत्वमुक्तम्। ननु— मनोऽवच्छिन्नचित्तादात्म्यविशिष्टसाक्षिचित ईश्वरज्ञानरूपायां मायावच्छिन्नचित्यपि तादात्म्येन सत्त्वाद् 'ईशो जानाती'ति व्यवहारसम्भवाद् मायानिवेशो व्यर्थ इति—वाच्यम्; तथा सति 'घटावच्छिन्नचिद् जानाती'ति धीरपि स्यात्। *अथ*—मनोऽवच्छिन्नचित्तादात्म्यविशिष्टसाक्षिचितो मनोऽवच्छिन्नचित्येव सत्त्वाद् नोक्ता धीरिति —चेत्, *न*; 'ईशो जानाती'तिधीरपि न स्यात्, इति मायानिवेश आवश्यकः॥

**विट्ठलेशीयटिप्पणी**

—*ईशो जानातीति*॥ *पक्ष इति*॥ शुद्धचैतन्यं वा जीवचैतन्यं वा जगदुपादानमिति पक्ष इत्यर्थः। इदं पक्षत्रयमपि सिद्धान्तलेशसंग्रह उपपादितं तत एवावधातव्यम्। *इदमुपलक्षणम्*—ईशस्य जगदुपादानत्वपक्षेऽपि सृष्टेः पूर्वमीश्वरस्य सर्वज्ञत्वप्रतिपादकश्रुतिविरोधः, आकाशादिसृष्ट्युत्तरमपि मनःसृष्टेः पूर्वं ज्ञातृत्वानुपपत्तिः, मनःसृष्ट्युत्तरमपि मनोऽवच्छिन्नचैतन्यस्य स्थूलदेहेन्द्रियादिसंघातदशायां घटादिविषयकमनोवृत्तिदशायामेव स्वप्रतिबिम्बप्रयोजकतयोक्तदशान्यदशायां घटादिज्ञातृत्वानुपपत्तिः, उक्तदशायामपीश्वरस्य जीवज्ञानेनैव ज्ञातृत्वस्य स्वीकारापत्त्या साक्षाद् ज्ञातृत्वानुपपत्तिः, स्वोपाधिपरिणामवृत्त्यवच्छिन्नचैतन्यस्यैव स्वज्ञानत्वेन मनोऽवच्छिन्नचैतन्यस्यैवेश्वरज्ञानत्व ईश्वरस्य पारिभाषिकं ज्ञातृत्वं स्यात्। *किंच* तदा सकलजीवाज्ञातपदार्थज्ञानस्येश्वरेऽसंभवेन सर्वज्ञत्वानुपपत्तिः, इति मायावच्छिन्नचैतन्यनिवेशः। तथाच सर्वविषयकमायापरिणामवृत्त्यादिगतस्वप्रतिबिम्बप्रयोजकत्वस्य मायावच्छिन्नचैतन्ये सर्वदा संभवात् सर्वदा सर्वज्ञत्वोपपत्तिरिति ध्येयम्। *ननु* उक्तान्यतरावच्छिन्नचैतन्यस्यैव ज्ञानत्वमस्तु, किं तत्तादात्म्यापन्नचिदन्तरस्य ज्ञानत्वोक्त्येति? अत आह—*साक्षिण इति*॥ स्वप्रकाशस्येत्यर्थः। इदं ज्ञानत्वसंभवाय। 'शुद्धचिद्रूपस्यैवे'त्येवकारेण जडावच्छिन्नचितो जडत्वेन ज्ञानत्वासंभवः सूचितः। मिथ्याभूतमनो-मायाद्यवच्छिन्नस्य मिथ्यात्वेन तदाश्रयत्वेनावश्यापेक्षणीयतत्तादात्म्यरूपतत्संबन्धसूचनाय—'अधिष्ठानत्वेने'त्युक्तम्। ईश्वरज्ञातृत्वं पारिभाषिकमभ्युपगम्याशङ्कते—*नन्वेति*॥ *मायावच्छिन्नचित्यपीति*॥ मनोवच्छिन्नचित इवेति शेषः। शुद्धस्य साक्षिचैतन्यस्य मनोऽवच्छिन्नचित इव मायावच्छिन्नचितोऽप्यधिष्ठानत्वादिति भावः। *तादात्म्येनेति*॥ अधिष्ठानेऽध्यस्तस्येवाध्यस्तेऽप्यधिष्ठानस्य तादात्म्योपगमादिति भावः। *तथा सति*=एकाध्यस्ततादात्म्यविशिष्टाधिष्ठानतादात्म्यस्याध्यस्तान्तरेऽपि स्वीकारे। *घटावच्छिन्नचिदिति*॥ अस्या अपि मनोऽवच्छिन्नचित्तादात्म्यविशिष्टसाक्षिणि तादात्म्येनाध्यासाद् अस्याप्युक्तविशिष्टसाक्षिज्ञानतादात्म्यसंभवादिति भावः। *अथेति*॥ घटादिरूपैकाध्यस्ततादात्म्यविशिष्टप्रतियोगिताकतादात्म्यं घटादेरेव, उक्तविशिष्ट एव तदध्यासात्, न पटादेः; तत्र तदध्यासाभावादिति नियमादिति भावः। नच—स्वावच्छिन्न इव स्वोपादानकपालावच्छिन्नचैतन्येऽपि तादात्म्येन घटादेरध्यासाद् घटादौ कपालादितादात्म्यविशिष्टचित्तादात्म्यस्योपगन्तव्यत्वाद् न व्यभिचार इति—वाच्यम्; स्वान्यस्वानुपादानवस्तुतादात्म्यविशिष्टप्रतियोगिकतादात्म्यं स्वस्य न, इति स्व-स्वोपादानान्यतरतादात्म्यविशिष्टप्रतियोगिकतादात्म्यं स्वस्यैवेति च नियमात्। *न स्यादिति*॥ *ननु*—स्वोपादानकपालादिविशिष्टचिति घटादेरध्यासे परस्पराध्यासानुरोधात् 'कपालं घटः' इतिवत्, 'घटः कपालम्' इति प्रत्ययवच्च घटादिविशिष्टचित्यपि कपालादेरध्यासात् कपालादावपि घटादिविशिष्टचित्प्रतियोगिकतादात्म्यं संभवति। एवं च जगदुपादानमायावच्छिन्नचैतन्यरूप ईश्वरे मनसोऽध्यासाद् मनोऽवच्छिन्नचैतन्ये तदवच्छिन्नसाक्षिणि तदध्यासात् तेनैव तदवगमाच्च मनोऽवच्छिन्नचैतन्यविशिष्टचित्प्रतियोगिकं तादात्म्यं मायावच्छिन्नचैतन्ये दुर्वारम्, इति कथमीशो जानातीति धीर्न स्यात? इति—चेत्, एवं सति मनोऽवच्छिन्नचिति तदवच्छिन्नसाक्षिणि च सुखादेरध्यसात् तेनैव तदवगमाच्च मनोऽवच्छिन्नचित्तादात्म्यविशिष्टसाक्षितादात्म्यवत्त्वेन 'सुखादि जानाती'ति प्रत्ययो दुर्वारः, इति जानातीति व्यवहारे मनोऽवच्छिन्नचित्तादात्म्यविशिष्टसाक्षितादात्म्यस्य मनोऽवच्छिन्नचिद्रूपजीवानुयोगिकस्यैव भानस्योपगन्तव्यत्वेन—'ईशो जानाती'ति व्यवहार-

न्यायामृतम्

घटादावप्येतदन्यस्य ज्ञप्तिकर्मत्वस्याभावात् । नहि घटादावपि तदाकारवृत्तिः, तत्प्रतिबिम्बितचैतन्यं

तरङ्गिणी

व्यावृत्तिर्ब्रह्मस्वरूपज्ञाने, इति न तत्र व्यभिचार इति भावः ॥ *घटादावपीति* ॥ घटादौ ज्ञप्तिकर्मत्व-ज्ञप्तिविषयत्वयोरेकत्वाद् ब्रह्मणो ज्ञप्तिकर्मत्वमनभ्युपेत्य ज्ञप्तिविषयत्वाङ्गीकारो विरुद्ध इत्यर्थः । कर्मत्व-विषयत्वयोर्भेदमाशङ्क्य निराकरोति—*नेति* ॥ घटाद्याकारवृत्तिं प्रति कर्त्रादिभिन्नकारकविशेषत्वं वा, घटाद्या-

न्यायामृतकण्टकोद्धारः

रूपज्ञानस्य स्वविषयत्वासम्भवादस्वीकार इत्यर्थः । *घटादावपीति* ॥ घटादौ ज्ञप्तिकर्मत्व-ज्ञप्तिविषयत्वयोरेकत्वेन ब्रह्मणि ज्ञप्तिकर्मत्वमनभ्युपेत्य ज्ञप्तिविषयत्वाङ्गीकारो विरुद्ध इत्याशयः । कर्म-विषयत्वयोर्भेदमाशङ्क्य परिहरति—*नहीत्यादि* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वृत्तेरावरणभङ्गार्थत्वपक्षे त्वसत्त्वापादकाज्ञानाविषयत्वरूपतत्फलमादाय तस्य तत्कर्मता, इति तादृशं फलं प्रतिबिम्बस्थले निवेश्यम् । अतः पक्षभेदेनोक्तफलघटितं ज्ञाधातुवाच्यं बोध्यम् । 'घटं जानामी'त्यादौ घटाद्यवच्छिन्नस्याज्ञानविषयत्वाभावस्य धीः, 'ब्रह्म जानामी'त्यादौ च ब्रह्मनिष्ठस्याज्ञानविषयत्वाभावस्य धीः । नच—अज्ञानविषयत्वसामान्याभावघटितस्य वाच्यत्व उक्तविशेषाभावबोधनानुपपत्तिरिति—वाच्यम् , अज्ञान-

विट्ठलेशीयटिप्पणी

निर्वाहाय मायावच्छिन्नचित्तादात्म्यविशिष्टसाक्षिज्ञानतादात्म्यस्य मायावच्छिन्नचिदनुयोगिकस्यापि 'जानाती'ति व्यवहारविषयत्वोपगमस्यावश्यकत्वाद् मायावच्छिन्नचैतन्यघटितान्यतरनिवेश इति गृहाण । चित्प्रतिबिम्बानङ्गीकारपक्ष आह—*वृत्तेरिति* ॥ *फलमादाय=फलाश्रयतया । *तस्य=घटादेः ॥ *तत्कर्मता=ज्ञाधात्वर्थकर्मता । *तादृशफलम्=असत्त्वापादकाज्ञानविषयत्वाभावरूपं फलम् । *स्थले=स्थाने ॥ *निवेश्यमिति* ॥ तथाचोक्ताज्ञानाविषयत्वं प्रति वृत्त्यादिविशिष्टत्वेन प्रयोजकं यद् मनो-मायान्यतरावच्छिन्नचैतन्यम्, तदभिन्ना या शुद्धचित्, सा जानातिधात्वर्थ इति भावः । *ननु=चित्प्रतिबिम्बाङ्गीकारे घटस्य ज्ञानकर्मत्वं स्वाश्रयवृत्तिविषयत्वसंबन्धेन चित्प्रतिबिम्बवत्त्वम्, तच्च ब्रह्मणोऽपि संभवति; चिद्रूपस्य ब्रह्मणः स्वप्रकाशतया भाने वृत्तिगतप्रतिबिम्बप्रयोज्यभानकत्वरूपफलव्याप्यत्वरूपसंबन्धेन प्रतिबिम्बवत्त्वेन ब्रह्मण इति वक्तुं शक्यम्, चित्प्रतिबिम्बानङ्गीकारेण वृत्तेरावरणभङ्गार्थत्वपक्षे त्वावरणभङ्गस्य घट-ब्रह्मणोस्तुल्यत्वाद् ज्ञानकर्मत्वे को विशेष इति ? अत आह—*घटं जानामीत्यादाविति* ॥ *घटावच्छिन्नस्येति* ॥ घटादेर्जडत्वेनावरणायोग्यतया तदवच्छेदेन तदधिष्ठानचैतन्यावारकस्याज्ञानस्य घटाद्याकारवृत्तिप्रयोज्याभावोऽपि तदवच्छेदेनैव ; उक्तचैतन्यैक्येऽप्येकजडविषयावच्छेदेनैव ज्ञानप्रयोजकाज्ञान-तदभावयोर्विरोधात्, अन्यथा घट-पटाधिष्ठानचैतन्यस्यैक्येन घटाकारवृत्तिप्रयोज्याया घटावच्छिन्नाज्ञानस्य निवृत्तेः पटाधिष्ठानचैतन्येऽपि सत्त्वेन घटवृत्तिदशायां पटभानापत्तेः । *ब्रह्मनिष्ठस्येति* ॥ "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला" इत्युक्तेः शुद्धब्रह्मचैतन्येऽपि निरवच्छिन्नवृत्तिकस्य मूलाज्ञानस्य वेदान्तजन्यशुद्धविषयकवृत्तिप्रयोज्यनिवृत्तिरपि शुद्धब्रह्मनिष्ठा निरवच्छिन्नैवेति भावः । *ननु*—'घटं जानामी'त्यादौ घटावच्छिन्नस्याज्ञानविषयत्वाभावस्य धीरित्युक्तम्, तत् किं परोक्षज्ञानमभिप्रेत्य ? अपरोक्षं वा ? *आद्ये वृत्तेर्बहिरनिर्गमनेन घटादिविषयावच्छेदेनाज्ञाननिवृत्त्ययोगः, अत एव संवित्पदार्थे—*वृत्त्यभिव्यक्तमिति=नित्यातीन्द्रियार्थं मनोऽवच्छेदेन भग्नावरणमिति व्याख्यातं टीकायाम् । अन्त्येऽसत्त्वापादकत्वमज्ञानविशेषणं व्यर्थम् ; अपरोक्षवृत्त्याऽभानापादकाज्ञानस्यापि निवृत्तेरिति—चेत्, *अत्र ब्रूमः* ; साक्षात्करोत्यर्थेऽभानापादकत्वेनाज्ञानस्य निवेशेऽपि परोक्षापरोक्षसाधारणज्ञानत्वावच्छिन्नार्थकज्ञादिधात्वर्थेऽसत्त्वापादकत्वेनैव निवेशः । 'घटं जानामि' इत्यादौ घटादिविषयावच्छेदेनाज्ञाननिवृत्त्युक्तिस्तु ज्ञानत्वेनापरोक्षज्ञानतात्पर्यकवाक्याभिप्रायेण ; तत्रासत्त्वाभानापादकोभयविधाज्ञानस्यापि निवृत्तेरिति ॥

*ननु* घट-पटादिविषयभेदेनाज्ञानं भिन्नम् ? उतैकम् ? *अन्त्ये घटविषयकवृत्त्या तन्निवृत्तौ पटस्यापि

न्यायामृतम्

वा ज्ञप्तिः, तां च प्रति कर्मत्वं तत्कारकविशेषत्वं वा, तज्जन्यावरणाभिभवरूपातिशययोगित्वं वेति युक्तम् ; ज्ञातैकसति सुखादौ शुक्तिरूप्यादौ चोक्तरूपज्ञप्तिकर्मत्वाभावापातात् । ब्रह्मणोऽपि चरमवृत्तिविषयस्योक्तरूपां ज्ञप्तिं प्रत्युक्तरूपकर्मत्वापाताच्च, किंतु वृत्त्यभिव्यक्तं घटाद्यधिष्ठानचैतन्यं तज्ज्ञप्तिः । नच तस्य घटादावपि व्यवहारादन्यत् कृत्यमस्ति ; इयांस्तु भेदः—घटादिः स्वान्यज्ञप्तिकर्म, चैतन्यं तु स्वस्वरूपज्ञप्तिकर्मेति । न द्वितीयः ; मोक्षे पराभावात् , त्वन्मते च वर्तमानस्यैव

तरङ्गिणी

कारवृत्तिजन्यावरणाभिभवातिशययोगित्वं वा, घटाद्याकारवृत्तिप्रतिबिम्बितचैतन्यं प्रति कारकविशेषत्वं वा, घटाद्याकारवृत्तिप्रतिबिम्बितचैतन्यजन्यावरणाभिभवरूपातिशययोगित्वं वा घटादीनां कर्मत्वम् , विषयत्वं तु तज्जन्यव्यवहारयोग्यत्वरूपं निरुक्तकर्मत्वाद् भिन्नमेवेत्यर्थः । निराकरणहेतुमाह—ज्ञातैकसतीति* ॥ कर्मत्वेन संप्रतिपन्ने सुखादौ निरुक्तकर्मत्वमव्याप्तमित्यर्थः । प्रत्यक्षयोग्यत्वे सति स्वाधिकरणकालवृत्तिप्रागभावप्रतियोगिप्रत्यक्षविषयभिन्नत्वं ज्ञातैकसत्त्वम् । तथाच ज्ञप्त्यपेक्षया पूर्वभावित्वाभावात् सुखादेर्न ज्ञप्तिकारकत्वरूपं तत्कर्मत्वम् । ज्ञातैकसत्त्वात् स्वत एवावरणाभावेन ज्ञप्तिजन्यावरणाभिभवरूपातिशययोगित्वरूपमपि कर्मत्वं सुखादेर्नास्तीत्यव्याप्तिरित्यर्थः । उक्तकर्मलक्षणयोरतिव्याप्तिमप्याह—*ब्रह्मणोऽपीति* ॥ चरमवृत्तेर्ब्रह्माकारतया तां प्रति ब्रह्मणः कारकत्वात् तज्जन्यावरणाभिभवरूपातिशययोगित्वाच्च चरमवृत्तेर्घटाद्याकारवृत्तिवत् चित्प्रतिफलनयुक्तत्वेन ब्रह्माकारवृत्तिप्रतिफलितचैतन्यं प्रति ब्रह्मणोऽपि कारकत्वात् तादृशचैतन्यजन्यावरणाभिभवरूपातिशययोगित्वाच्च ब्रह्मण्यतिव्याप्तिरित्यर्थः । विषयत्वातिरिक्तं कर्मत्वं निरस्य कर्मत्वरूपमेव विषयत्वं घटादावित्याह—*किंत्विति* ॥ एवं घट-चैतन्ययोर्ज्ञप्तिकर्मत्वेऽप्यान्तरालिकं भेदमाह—*इयांस्त्विति* ॥ तथाच चैतन्यस्य स्वकर्मत्वमनङ्गीकुर्वद्भिः स्वविषयत्वमपि नाङ्गीकृतमेवेत्यर्थः । ब्रह्मरूपं ज्ञानं परविषयमिति द्वितीयपक्षं निराकरोति—*न द्वितीय इति* ॥ *मोक्ष इति* ॥ तथाच मोक्षकाले साक्षिणो निर्विषयत्वं स्यादित्यर्थः । मोक्षकालेऽपि साक्षिणोऽतीतविषयत्वं भविष्यतीत्याशङ्क्य, तत् किमतीतं साक्षाद् मोक्षकाले साक्षिणो विषयः ? ज्ञानोपरागेण वा ? इत्याशङ्क्य, न द्वितीयः ; असम्भवात् , इत्यभिप्रेत्य प्रथमपक्षं दूषयति—*त्वन्मते चेति* ॥ *वर्तमानस्येति* ॥ योग्यस्येति शेषः । अतीतसुखादेर्न साक्षात् साक्षिविषयत्वमिति भावः ।

न्यायामृतकण्टकोद्धारः

*किन्त्विति* ॥ यद्यप्यत्र 'ज्ञातैकसती'त्यादिनोक्तदोषतादवस्थ्यम् ; तथापि प्रतिबिम्बितचैतन्यस्य ज्ञप्तित्वे तस्याध्यासानधिष्ठानत्वेनाध्यासिकसम्बन्धस्यातन्त्रत्वापत्त्या तत्परिहारेण वृत्त्यभिव्यक्ताधिष्ठानचैतन्यमेव ज्ञप्तिरित्युक्तमिति मन्तव्यम् ।

*यत्तु*—पूर्वं स्वकर्मत्वाभावमङ्गीकृत्य व्यवहारजननयोग्यत्वरूपतदनङ्गीकारे विरोध इत्यर्थः—इति, *तन्न* ; कारकत्वरूपकर्मत्वाभावमङ्गीकृत्य व्यवहारजननयोग्यत्वरूपकर्मत्वाङ्गीकारेण विरोधाभावात् , कारकत्वरूपमेव यदि कर्मत्वं पुनरङ्गीक्रियेत, तदा हि विरोधावकाश इति । *तां च प्रतीति* ॥ यद्यपि चैतन्यरूपज्ञप्तिं प्रति कारणत्वं न सम्भवति ; तस्या नित्यत्वात् , नापि तदावरणाभिभवातिशययोगित्वम् ; तस्य वृत्तिसाध्यत्वात् ; तथापि चैतन्यप्रतिफलनोपाधौ वृत्तौ तदुभयसत्त्वेन तत्प्रतिफलितचैतन्ये तदुपचारेण तथोक्तमिति भावः ॥ *ब्रह्मणोऽपीति* ॥ नच—इष्टापत्तिरिति—वाच्यम् ; त्वया चरमवृत्तेरकर्मत्वाङ्गीकारेणापसिद्धान्तात् । नच—कारकत्वरूपकर्मत्वाभावेऽङ्गीकृत उक्तरूपकर्मत्वमङ्गीकृतमेव, इति कथमपसिद्धान्तः ? इति—वाच्यम् ; तस्य निर्विशेषत्वेनावरणाभिभवरूपातिशयवत्त्वस्याङ्गीकर्तुमनुचितत्वेनापसिद्धान्तस्य वज्रलेपत्वात् । *मोक्षे पराभावादिति* ॥ आत्मातिरिक्तपराभावा-

न्यायामृतम्

साक्षात् साक्षिविषयत्वात्, 'वह्निरासीदि'त्याद्यनुमिताविव साक्षिज्ञाने मोक्ष-सुषुप्त्योरतीतविषयोल्लेखरूपोपप्लवापाताच्च, निर्विषयत्वे तु ज्ञानत्वमेव न स्यात् ॥

अद्वैतसिद्धिः

नात्मनि व्यभिचारः ; अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायात् । नच—

तरङ्गिणी

साक्षिणोऽतीतविषयत्वे दूषणान्तरमाह—*वह्निरासीदिति* ॥ मोक्षे सुषुप्तौ च विद्यमाने साक्षिज्ञानेऽतीतविषयोल्लेखरूपः संसारः स्यात् । तथाच मोक्ष-सुषुप्त्योर्निष्प्रपञ्चता न स्यात् । अतो ज्ञानत्वव्यापकसविषयत्वरहितत्वाद् न ज्ञानमात्मा, इति तत्राज्ञानत्वहेतोर्व्यभिचार इत्यर्थः । *ननु* न ज्ञानत्वस्य व्यापकं सविषयत्वम्, येन तद्व्यावृत्त्या ज्ञानत्वं व्यावर्तेत, किं तर्हि ? निर्विषयमप्यात्मस्वरूपं ज्ञानमस्ति, इति द्वितीयपक्षं दूषयति—*निर्विषयत्व इति* ॥ *अयमभिप्रायः*—न ज्ञानत्वस्य व्यापकं सविषयत्वं नेति । 'इदं जानामी'ति-ज्ञानानुभवेन विषयाङ्कितस्यैव ज्ञानस्य सिद्धेः सविषयत्वस्य ज्ञानत्वव्यापकत्वावधारणादात्मस्वरूपस्य निर्विषयत्वे ज्ञानत्वमेव न स्यादिति । यद्यपि ज्ञानत्वव्यापकसविषयत्वाभावोपादानेनैवाज्ञानत्वमात्मनः सिद्ध्यति ; तथापि यदि ज्ञानत्वव्यापकं सविषयत्वं न भवतीति परो वैयात्याद् वदेत्, तदा तं प्रति सविषयत्वस्य ज्ञानत्व-

न्यायामृतकण्टकोद्धारः

वित्यर्थः । पराभावेऽपि परविषयत्वं किं न स्यादिति ? अत आह—*वह्निरासीदिति* ॥ अन्त्यपक्षं निराकरोति—*निर्विषयत्व इति* ॥ एवं च ब्रह्म, न ज्ञानम्, निर्विषयत्वादिति फलितानुमानेऽतीतादिज्ञाने

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयत्वेऽभावादौ च खण्डशक्तिस्वीकारात् ]] प्रतिकर्मव्यवस्थायामधिकं वक्ष्यते । *अर्थोपलक्षितप्रकाशस्येति* ॥ वृत्त्यादिदृश्योपलक्षितचित इत्यर्थः । *ज्ञानत्वेन = 'अज्ञानत्वेने'ति हेतुप्रविष्टज्ञानपदलक्ष्यचित्स्वरूपत्वेन । *मोक्षदशायामिति* ॥ मोक्षो दशा स्वरूपं यस्याः, तस्याम् ; शुद्धचितीत्यर्थः । *तदनपायात् =

विठ्ठलेशीयटिप्पणी

भानप्रसङ्गः, ब्रह्माज्ञानस्यापि निवृत्तौ मुक्तिप्रसङ्गश्च, *आद्ये स्वसमानविषयकज्ञाननिवर्त्यत्वस्यैव भिन्नाज्ञानेषु कल्पनीयतया ब्रह्मज्ञानेन घटाद्यज्ञानानिवृत्तिप्रसङ्गः, एवं घटादीनां सर्वदा भानाभावेन प्रत्येकं तदज्ञानानामपि भेदेनैकया वृत्त्या सकलतन्निवृत्तौ वृत्त्युत्तरं सर्वदा तद्भानप्रसङ्गः, एकैकतन्निवृत्तावेकावरणभङ्गेऽप्यावरणान्तरसत्त्वाद् घटाद्यभानप्रसङ्गः, इत्याद्याशङ्कायामाह—*प्रतिकर्मव्यवस्थायामधिकं वक्ष्यत इति* ॥ मूले—"अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेने"त्यत्र "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यादाविवार्थशब्दस्य रूपरसादि-घटादिविषयमात्रपरत्वे पूर्वपक्षे वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वेनोक्तज्ञानभिन्नत्वरूपहेतोः सत्त्वेन शुद्धवृत्तावसिद्धिपरिहारस्येव शुद्धचैतन्ये व्यभिचारस्योक्तेः, रूप-घटादिविषयोपरक्तचितः क्वापि ज्ञानत्वानुक्तेश्चासङ्गतिः, अतोऽर्थपदस्य योगेन दृश्यपरत्वमाश्रित्य व्याचष्टे—*वृत्त्यादिदृश्योपलक्षितचित इति* ॥ आदिपदेन स्वाकारवृत्तिं विना साक्षिग्राह्याणि सुखादीनि, अज्ञानाविषयत्वप्रयोजकानि वा पक्षभेदेन ग्राह्याणि । वृत्त्यादिना विशिष्टस्योपहितस्य वा ज्ञानत्वे शुद्धचिति तद्भेदसत्त्वेन व्यभिचारः, इत्यु'पलक्षितस्ये'त्युक्तम् ॥ 'ज्ञानत्वेने'त्यस्य ज्ञानपदवाच्यत्वेनेत्यर्थकत्वे वृत्त्यादिविशिष्टस्यैव तत्त्वेन तदुपलक्षितस्य तत्त्वाभावेनासङ्गतिः, अतो व्याचष्टे—*अज्ञानत्वरूपहेतुप्रविष्टेति* ॥ *ज्ञानपदलक्ष्येति* ॥ ज्ञानपदजन्यधीमुख्यविशेष्यत्वरूपेणेत्यादिः । 'मोक्षदशायामपी'त्यपिशब्देन संसारदशायामपि वृत्त्याद्युपलक्षितचित उक्तज्ञानत्वलाभेन मोक्षदशायामपीत्यधिकम्, 'शुद्धचिती'त्यस्यानुक्त्या न्यूनता च, इत्यतो व्याचष्टे—*मोक्षो दशेति* ॥ 'तदनपायादि'त्यत्र तत्पदस्य योग्यतावशाद् व्यवहितमप्युपक्रान्त'ज्ञानत्वे'ति ज्ञानत्वपदार्थ-

## गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादृशचित्स्वरूपत्वानपायात्। तथाच वृत्त्यवच्छिन्नस्याज्ञानविशेषाविषयत्वप्रयोजकविशिष्टस्य वा चैतन्यस्य ज्ञानपदवाच्यत्वेऽपि ज्ञानपदजन्यतद्धीविषयत्वरूपेण शुद्धचित एव भेदः प्रकृते हेतुरिति भावः। *अत्र* 'शुद्धचिती'त्यनुक्त्वा मोक्षस्वरूपत्वेन शुद्धचितो निर्देशाद् "विद्वान्नामरूपाद् विमुक्तः" इत्यादिश्रुतिसिद्धशुद्धचिद्रूपस्य प्रत्याख्यातुमशक्यतया तद्भेदस्य हेतुत्वसम्भव इति सूचितम्॥

## न्यायामृतसौगन्ध्यम्

*ननु*—अस्तु जडत्वं हेतुः ; तच्च ज्ञानभिन्नत्वम्, न चात्मनि व्यभिचारः ; अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन, मोक्षदशायां तदनपायादिति—चेत्, *न* ; मोक्षान्वयिशुद्धस्वरूपस्य कदाप्यर्थवैशिष्ट्याभावेनार्थोपलक्षितत्वासंभवात् (१)॥

## सौगन्ध्यविमर्शः

(१) मोक्षावस्थायिशुद्धचैतन्यस्यैवाद्वैतमते प्रपञ्चोपादानत्वेन तस्य व्यवहारदशायामर्थवैशिष्ट्यमनपोह्यमेव।

## विट्ठलेशीयटिप्पणी

परतामाह—*तादृशचित्स्वरूपत्वेति*॥ ज्ञानपदवाच्यवृत्त्यादिविशिष्टभेदस्य हेतुत्वे शुद्धचिति व्यभिचारस्य दुर्वारत्वात्। 'ज्ञानत्वेने'त्यस्योक्तव्याख्यानलभ्यतद्धारकहेतुं स्पष्टयति—*तथाचेति*॥ *वृत्त्यवच्छिन्नस्येति*॥ उक्तार्थकम्=प्रयोजकवृत्त्यादिसामग्रीयुक्तम्। *तद्धीति*॥ उक्तविशिष्टवाच्यविषयकधीत्यर्थः। *विषयत्वेति*॥ मुख्यविशेष्यत्वेत्यर्थः। उक्तधीनिष्ठवृत्तित्वादिविशेष्यवृत्तिवारणाय मुख्यत्वनिवेशः। उक्तविशेष्यत्वस्य शुद्धचित्यभ्युपगमाद्ध न तदवच्छिन्नभेदः, इति न व्यभिचार इति भावः। मोक्षदशापदेन शुद्धचिद्बोधेन *स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे* इति न्यायविरोधमूलकस्य रूढितोऽधिकप्रयोजनादिति स्वारसिकलक्षणायां वैयञ्जनिकार्थप्रतीतिरूपप्रयोजनवत्तानियमस्य भङ्गप्रसङ्गः। एवं संसारदशायां शुद्धचित्प्रसिद्धिः ? मोक्षदशायां वा ? नाद्यः ; एकवृत्तिविनाशेऽपि वृत्त्यन्तरस्य सत्त्वेन तद्विशिष्टायास्तदुपहितायाश्च चितस्तदुपलक्षितत्वासम्भवेन शुद्धत्वासम्भवात्, वियदादिदृश्यान्तरैर्विशिष्टतयोपहिततयापि वा चितः शुद्धत्वासम्भवः। अत एव नान्त्यः ; नच—एकैकमुक्तिपक्षे तत्तन्मुक्तं प्रति सर्वदृश्यनाशोऽस्त्येवेति—वाच्यम् ; तत्र प्रमाणाभावात्, इत्याशङ्क्याह—*अत्रेति*॥ *विद्वान्=परमब्रह्मात्मसाक्षात्कारवान् नरः। *नामरूपात्=शब्द-तदितरदृश्यसामान्यात्। *विमुक्तः=अत्यन्ताभाववान्। प्रतियोगित्वं पञ्चम्यर्थः। *श्रुतिसिद्धेति*॥

अत्रोद्देश्यतावच्छेदकोक्तसाक्षात्कारप्रयोज्यत्वं तदुत्तरकालावच्छिन्नत्वनियतं विधेय उक्ताभाववत्त्वे भासते, युज्यते च ; उक्तश्रुत्या, शुक्तिरजतस्थले दृष्टत्वेन च विद्यावत्क्षणस्याविद्या-तत्प्रयुक्तसर्वदृश्यात्यन्ताभाववत्त्वनियमेन विद्योत्तरक्षणावच्छेदेनात्मन्युक्तात्यन्ताभाववत्त्वनियमात्। नच—एकस्य विद्योत्तरक्षणेऽपि वियदादिदृश्यसत्त्वात् कथं तदभावत्त्वमिति—वाच्यम् ; यथाहि तत्तत्पुरुषीयतूलाज्ञानकल्पितशुक्तिरजतादिप्रातिभासिकं प्रतिपुरुषं भिन्नम्, अत एकपुरुषस्य शुक्तिरूपाधिष्ठानसाक्षात्कारेण तं प्रति रजतनिवृत्तावपि तद्भिन्नपुरुषस्य न रजतप्रत्ययः, प्रत्यभिज्ञा तु सादृश्यनिबन्धना, तथा तत्तत्पुरुषीयमूलाज्ञानकल्पितं वियदादि व्यावहारिकमपि प्रतिपुरुषं भिन्नम्, अत एकस्यात्मरूपाधिष्ठानतत्त्वसाक्षात्कारेण तं प्रति वियदादिसर्वदृश्यनिवृत्तावपि पुरुषान्तरस्य वियदादिप्रत्ययोपपत्तिः। अज्ञानं च पुरुषभेदेन भिद्यत इत्येव पक्षः सूपपादः। एवं च तत्पुरुषीयमूलाज्ञानकल्पिततदीयदेहेन्द्रियादितदीयवियदादिप्रपञ्चविशिष्टस्य तदुपहितस्य वा चिद्रूपस्यात्मनस्तत्त्वसाक्षात्कारेण तदीयमूलाज्ञानतत्कल्पिततदीयदेहेन्द्रियादितदीयवियदादिप्रपञ्चनिवृत्तावुक्तप्रपञ्चोपलक्षितश्चिदात्मा शुद्धो भवति, स च मुक्त इत्युच्यते, मोक्ष इत्यपि ; तस्य सत्यानुभवानन्दब्रह्मात्मस्वरूपत्वात्। इदं सर्वमुपनिषत्प्रमाणसिद्धम्। "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दं ब्रह्मणो रूपम्" "यत् साक्षादपरोक्षाद् ब्रह्म" "तत्त्वमसि" "अहं ब्रह्मास्मि" "ब्रह्म वेद ब्रह्मैव भवति" "विद्वान् नामरूपाद् विमुक्तः" इत्यादिश्रुतयः प्रसिद्धा एव, इति न तत्र विवादावसरः, इत्येतादृश-

न्यायामृतम्

तद्धि विषयानुल्लेखित्वम्, न तूल्लिखितस्य विषयस्यावर्तमानत्वम्, अत्यन्तासत्त्वं वा, येनातीतादिज्ञाने तुच्छज्ञाने च व्यभिचारः स्यात्। नच कदाचित् सविषयत्वमात्रेण ज्ञानत्वम्; सप्रतियोगिकेऽभावादौ सप्रतियोगिकत्ववत् सविषयक इच्छादौ घटादिज्ञाने च सविषयकत्वादेः स्वभावत्वदर्शनात्,

अद्वैतसिद्धिः

अभावे सप्रतियोगिकत्ववदिच्छा-ज्ञानादिष्वपि सविषयकत्वस्य स्वाभाविकत्वाद् इच्छायामिव ज्ञानेऽपि

तरङ्गिणी

व्यापकत्वोपपादनाय द्वितीयविकल्पोपन्यास इत्याशयः। *ननु* आत्मा, न ज्ञानम्, निर्विषयत्वात्, घटवत्, इत्यनुमाने त्वदभिप्रेते निर्विषयत्वं किमवर्तमानविषयत्वं वा? अत्यन्तासद्विषयत्वं वा? आद्येऽतीतज्ञाने व्यभिचारः, द्वितीये तुच्छज्ञाने व्यभिचारः, इत्याशङ्कां निराकुर्वन् हेतुस्वरूपमाह—*तद्धीति* ॥ निर्विषयत्वहेतोः स्वरूपासिद्धिं शङ्कते—*नचेति* ॥ अर्थोपलक्षितस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायादित्यर्थः॥ *सप्रतियोगिक इति* ॥ उक्तानुमाने हेतूक्तं निर्विषयत्वं सविषयत्वस्वभावशून्यत्वम्, तच्चात्मनि कदाचिद् विषयसम्बन्धेऽप्यस्ति, इति नासिद्धिरित्यभिप्रेत्य। *ननु* उक्तसाध्य-हेत्वोर्व्यतिरेकसहचारग्रहस्थलाभावाद् न व्याप्तिग्रहः, इत्याशङ्क्य व्यतिरेकसहचारग्रहस्थलमुक्तम्—*घटादिज्ञान इति* ॥ *ननु*—तत्स्वरूपानन्तर्गतस्य विषयस्य कथं तत्स्वभावनिरूपकत्वम्? इत्याशङ्क्योक्तम्—*सप्रतियोगिकेऽभावादौ—सविषयक इच्छादाविति* ॥ एवं च यथाऽभावादौ सप्रतियोगिकत्वं स्वाभाविकम्, इच्छादौ घटादिज्ञाने च सविषयकत्वं स्वाभाविकम्, तथा ब्रह्मरूपज्ञानेऽपि सविषयकत्वं स्वाभाविकं वाच्यम्। तच्च न सम्भवति; मोक्ष आत्मरूपज्ञानस्य सविषयकत्वाभावादित्यर्थः॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पुनस्तमेवार्थं युक्त्या दृढीकर्तुमाक्षिपति—*नचाभाव इत्यादिना* ॥ *स्वाभाविकत्वात्=अनारोपि-

न्यायामृतसौगन्ध्यम्

किञ्चाभावे सप्रतियोगिकत्ववद् ज्ञानेऽपि सविषयकत्वं स्वाभाविकम्, ज्ञानसमसत्ताकं (१)

सौगन्ध्यविमर्शः

(२) *अत्रेदमालोचनीयम्*—वृत्तिज्ञानस्य सविषयकत्वं स्वाभाविकं मन्यते? उत स्वरूपज्ञानस्य? द्वितीयेऽपि किं वृत्तिज्ञान-स्वरूपज्ञानयोरेकरूपत्वं नियतम्? उत न? आद्ये इष्टापत्तिः। वस्तुतस्तु—वृत्तिज्ञानस्यापि भ्रमस्थले विकल्पस्थले चासत्ख्यातिवादिभिः परैः सविषयकत्वस्वाभाविकत्वस्य तज्ज्ञानसमसत्त्वस्यास्वीकाराद् न परमतरीत्याप्येतदुपपत्तिः। द्वितीये तु

विट्ठलेशीयटिप्पणी

वैयञ्जनिकार्थप्रतीत्यर्थं मोक्षदशापदेन स्वारसिकलक्षणया शुद्धचिद्बोधनमिति भावः। *शुद्धचिद्रूपस्येति* ॥ आत्मन इति शेषः। *प्रत्याख्यातुमशक्यतयेति* ॥ अत एव तव तत्र व्यभिचारोद्भावनमप्युपपद्यते; अन्यथा विशिष्टस्योपहितस्य वा तस्य सिद्धान्तेऽपि मिथ्यात्वात् शुद्धस्य सत्यस्य चिदात्मनोऽप्रसिद्धौ क्व तव व्यभिचारोद्भावनं सङ्गतं स्यादिति भावः॥ "विद्वान् नाम-रूपाद् विमुक्तः" इति श्रुतिसिद्धत्वात् शुद्धचिद्रूपत्वार्थस्य 'नचाभावे' इत्यादिना मूले तद्व्यवस्थापनं व्यर्थम्, इत्याशङ्क्य "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" इति न्यायेन परिहरति—*पुनरिति* ॥ *तमेव=उक्तश्रुतिसिद्धमेव। *अर्थम्=शुद्धचिद्रूपम्। *युक्त्या=विषयसम्बन्धस्य मिथ्यात्वव्यवस्थापनेन। *आक्षिपतीति* ॥ चिद्रूपस्य ब्रह्मणः शुद्धत्वं निर्धर्मकत्वम्, तच्च तत्र श्रूयमाणानां वियदादिप्रपञ्च-तत्कारणत्वादिधर्माणां 'नेह नाने'त्यादिप्रमाणेन मिथ्यात्वेनाभावसम्भवेऽपि ज्ञानत्वेनावश्यकस्य सविषयकत्वस्य पारमार्थिकत्वेनाभावासम्भवाद् न सम्भवतीत्यभिप्रायेणेति भावः। स्वाभाविकत्वपदस्य स्वभावाश्रितत्व-तज्जन्यत्वपरत्वे ब्रह्माश्रितजन्यानां वियदादीनामिव पारमार्थिकत्वापत्त्यसम्भवात्, जपाकुसुमस्य लौहित्यं स्वाभाविकम्, स्फटिकस्य त्वौपाधिकमित्यत्रौपाधिकपदार्थारोपितप्रतिद्वन्द्व्यनारोपितार्थकतया स्वाभाविकपदं व्याचष्टे—*अनारोपितत्वादिति* ॥ *ननु*

### अद्वैतसिद्धिः

तस्य समानसत्ताकत्वमिति—वाच्यम् ; ज्ञानस्य हि सविषयत्वं विषयसंबन्धः, स च न तात्त्विकः ; किं त्वाध्यासिकः ; वक्ष्यमाणरीत्या तात्त्विकसम्बन्धस्य निरूपयितुमशक्यत्वात्, अतो न तस्य स्वाभाविकत्वम् ; नहि शुक्तौ रूप्यं स्वाभाविकम् ॥

### तरङ्गिणी

*अत्र वदन्ति*—(सि०) ज्ञानस्य सविषयत्वं विषयसम्बन्धः। स च न तात्त्विकः, किं त्वाध्यासिकः ; तात्त्विकसम्बन्धस्य निरूपयितुमशक्यत्वात्, अतो न तस्य स्वाभाविकत्वम्। नहि शुक्तौ रूप्यं तात्त्विकम्।

### न्यायामृतकण्टकोद्धारः

व्यभिचारं परिहरति—*तद्वीति*॥ *सविषयकत्वादेरिति*॥ *अत्र कश्चित्*॥ ज्ञानस्य सविषयत्वं हि विषयसम्बन्धः। स च न तात्त्विकः, किन्त्वाध्यासिकः ; तात्त्विकसम्बन्धस्य निरूपयितु-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वात्। यथा गगने नैल्यमारोपितम्, न तथा ज्ञाने सविषयकत्वमारोपितम् ; अतो ज्ञानसमानसत्ताकं तत् ; तथाच सर्वद्वयोच्छेदे मोक्षे ज्ञानत्वोपलक्षितस्वरूपत्वासम्भवात् तद्भेदस्य हेतुत्वासम्भव इति भावः ॥

### न्यायामृतसौगन्ध्यम्

च ; वृत्त्यात्मके ज्ञाने तथैव दृष्टम्। *एतेन*—ज्ञानस्य सविषयकत्वं विषयसम्बन्धः, स च न तात्त्विकः, किन्त्वाध्यासिकः ; तात्त्विकसम्बन्धस्य निरूपयितुमशक्यत्वात्, अतो न तस्य स्वाभाविकत्वमिति—*निरस्तम्* ; जगति मिथ्यात्वसिद्धेः प्रागाध्यासिकसम्बन्धासिद्ध्या हेतोस्साध्यसमत्वात् ॥

### सौगन्ध्यविमर्शः

वृत्तिज्ञान-स्वरूपज्ञानयोरेकरूपत्वानङ्गीकारात् परमार्थतो वृत्तेर्मुख्यज्ञानत्वाभावाच्च न वृत्तिज्ञानदृष्टान्तेन स्वरूपज्ञानस्यापि सविषयकत्वस्वाभाविकत्वाद्यापत्तिसंभवः ॥

### विट्ठलेशीयटिप्पणी

चिद्रूपज्ञाने सविषयकत्वं गगने नैल्यवदारोपितमेवास्तु, इत्यत आह—*यथेति*॥ आकाशसमीपे नैल्यस्याननुभवात्, पृथिव्या एव नैल्यकारणत्वेन कारणाभावेन बाधाच्च दूरत्वदोषात् प्रतीयमानं नैल्यं तलत्व-कटाहत्ववदारोपितम्, न तथा सविषयकत्वं चिद्रूपज्ञाने आरोपितम् ; तस्याबाधात्, ज्ञानत्वव्यापकत्वेन सर्वैरुपगमादिति भावः। *अतः=चिद्रूपज्ञाननिष्ठसविषयकत्वस्यानारोपितत्वात्*। *समानसत्ताकमिति*॥ यद् यत्रानारोपितम्, तत् तत्समानसत्ताकम्। तथाच चिद्रूपज्ञाननिष्ठं सविषयकत्वं चित्समसत्ताकम् ; अनारोपितत्वात्, यथाऽभावे सप्रतियोगिकत्वम्, इच्छायां सविषयकत्वं चेति सामान्यमुखव्याप्तेः, चिद्रूपज्ञानम्, स्वसमसत्ताकसविषयकत्ववत्, अनारोपितसविषयकत्वात्, इच्छावदिति विशेषव्याप्तेश्चेति भावः। विशेषव्याप्त्यभिप्रायेणैवेच्छायामिवेति दृष्टान्तान्तरोपादानम्। *ननु* चैतन्यरूपज्ञाने स्वसमसत्ताकस्य पारमार्थिकस्य सविषयकत्वस्योपगमे का क्षतिरिति ? अत आह—*तथाचेति*॥ *सर्वद्वयोच्छेदे=सर्वद्वयस्यैवोच्छेदः*, नतु पारमार्थिकस्य यत्र, तत्र ; उक्तोच्छेदोपलक्षिते मोक्षे चिदानन्दे। *ज्ञानत्वोपलक्षितेति*॥ सविषयकत्वोपलक्षितेत्यर्थः। *स्वरूपत्वासंभवादिति*॥ सविषयकत्वस्य पारमार्थिकत्वेन ज्ञानेन तदुच्छेदासंभवात् तदभावघटिततदुपलक्षितस्वरूपत्वासंभवादित्यर्थः। तथाच चैतन्यरूपज्ञानस्य मोक्षदशायामपि सत्यविषयसंबन्धरूपधर्मविशिष्टत्वाद् निर्धर्मकस्वरूपशुद्धत्वस्याप्रसिद्धिः, इति तद्भेदस्य हेतुत्वासंभव इति भावः। इदमुपलक्षणम्—चिन्निष्ठविषयसंबन्धस्य तात्त्विकत्वेऽद्वैतहानिः, दृश्यत्वादिहेतोस्तत्र व्यभिचारश्चेति ॥

मूले—*वक्ष्यमाणरीत्येति*॥ मिथ्यात्वानुमानेऽप्रयोजकत्वशङ्कानिराकरणावसरे। *अतः=तात्त्विकसंबन्धस्य निरूपयितुमशक्यत्वात्*। आध्यासिकत्वेऽप्यनौपाधिकत्वरूपं स्वाभाविकत्वं कुतो न ? इत्याशङ्क्याह—*नहीति*॥ शुक्तौ भासमानं रूप्यम्, *स्वाभाविकम्=अनारोपितम्*। एवं चात्मान्यस्मिन् अन्यावभासत्वरूपारोपितत्वात् तदभावरूपं

अद्वैतसिद्धिः

**एवं च ज्ञानोपाधिकस्यैव सविषयत्वस्येच्छादिष्वभ्युपगमाद् नतरां तत्र तस्य स्वाभाविकत्वम्।**

तरङ्गिणी

एवं च ज्ञानोपाधिकस्यैव सविषयत्वस्येच्छादिष्वभ्युपगमाद् नतरां तस्य स्वाभाविकत्वम्। नच—ज्ञानवद् विषय-

न्यायामृतकण्टकोद्धारः

**मशक्यत्वात्, अतो न तस्य स्वाभाविकत्वम्। न हि शुक्तौ रूप्यं स्वाभाविकम्। अत एव**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ज्ञानोपाधिकस्य = ज्ञानीयस्य। जनकज्ञानीयविषयत्वमिच्छादेर्विषयेषु सम्बन्धः। ज्ञान-विषययो-स्तादात्म्येष्वेव विषयतात्वस्य क्लृप्ततया ज्ञानीयतादात्म्यमेव सः। यद्यपि स्वजनकज्ञानीयतादात्म्यत्वेन तादात्म्यस्य नेच्छाया विषये सम्बन्धत्वम्; समूहालम्बनज्ञानविषये सर्वत्रेच्छाया विषयत्वप्रसङ्गात्, तथापि स्वजनकतावच्छेदकं ज्ञानीयविषयत्वमिच्छायाः सम्बन्धः; घटत्वप्रकारकघटविशेष्यकज्ञानत्वेन तादृश-ज्ञानविशिष्टेच्छां प्रति हेतुत्वस्वीकारात्। *अथवा*—ज्ञानोपाधिकस्य = ज्ञानीयोपाध्यविद्याप्रयुक्तस्य। ज्ञान इवेच्छादावपि विषयसम्बन्धस्य दुर्वचत्वात् सर्वत्राकाराख्यो विषयसम्बन्ध आविद्यक इति भावः। सुतरा-मिति॥ ज्ञानस्वरूपस्य सत्यत्वात् तद्गतो विषयसम्बन्धः कथञ्चित् सत्य उच्येत, इच्छादिस्वरूपस्य तु

विट्ठलेशीयटिप्पणी

स्वाभाविकत्वं यथा न, तथा चिद्रूपज्ञाननिष्ठविषयसंबन्धस्यापीति भावः। *एतेन*—अनौपाधिकत्वमेव प्रकृते धर्मिसमसत्ताकत्वसाधकमस्तु, इत्यपि—*अपास्तम्*; शुक्तिरूप्ये व्यभिचारादिति ध्येयम्। अत्र दृष्टान्तासिद्धि-मप्याह—*एवं चेति*॥ *स्वाभाविकत्वमिति*॥ अनौपाधिकत्वरूपम्, अनारोपितत्वरूपं चेति शेषः। *ननु* सविषयकत्वस्य ज्ञानोपाधिकत्वं बहुव्रीहिबलात्, तत्संबन्धेन ज्ञाननिष्ठत्वे सति ज्ञानसंबन्धप्रयोज्यज्ञानसंबन्धिविशेष्य-कतत्संबन्धसंसर्गकारोपविषयत्वम्; तथाचेच्छायां सविषयकत्वव्यवहारस्य स्फटिके लौहित्यव्यवहारस्येवाप्रामाणिक-त्वापत्तिः, अतो व्याचष्टे—*ज्ञानीयस्येति*॥ *जनकेति*॥ स्वजनकेत्यर्थः। ज्ञान-विषययोरिवेच्छा-विषययो-स्तादात्म्यादिसंबन्धोऽपि विषयताऽस्तु, तत्राह—*ज्ञान-विषययोरिति*॥ *ज्ञानीयतादात्म्यमिति*॥ स्वजनकेत्यादिः। *सः=इच्छाया विषयेषु संबन्धः। *समूहालम्बनेति*॥ 'घट इष्टसाधनम्, पटश्च द्रव्यम्' इत्याकारकेत्यादिः। *इच्छाया इति*॥ 'घटो मे जायताम्' इत्याकाराया इत्यादिः। *सर्वत्र=पटादावपि। *स्वजनकतावच्छेदकमिति*॥ तथाच स्वविषयत्वावच्छिन्नज्ञानजन्यतारूपपरम्परासंबन्धेनेच्छायां सविषयत्वव्यवहारस्य स्फटिके स्वसमवायिसंयोगेन लौहित्यव्यवहारस्येव व्यावहारिकप्रामाण्योपपत्तिरिति भावः। इच्छात्वेन घट-पटादीच्छां प्रति घट-पटादिज्ञानानां हेतुत्वे पटविषयताऽपि कुतो न घटेच्छाजनकतावच्छेदिकेति? अत आह—*घटत्वप्रकारकघटविशेष्यकज्ञानत्वेनेति*॥ *तादृशज्ञानविशिष्टेति*॥ इच्छाया निर्विषयकत्वेन व्यावर्तकधर्मान्तराभावात् स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्व-स्वसामानाधिकरण्योभयसंबन्धेनोक्तज्ञानविशिष्टत्वमेव कार्यतावच्छेदकमिति भावः। अत्यन्ताजन्यव्यावृत्तये—*इच्छा-मिति*॥ मूले—*तत्र=इच्छायाम्। *तस्य=सविषयकत्वस्य। *नतरां स्वाभाविकत्वम्=साक्षात्संबन्धेनानारो-पितत्वम्; तेन संबन्धेन तत्र तदारोपस्यैवोपगमात्। उक्तपरम्परासंबन्धेन तत्र तस्य सत्त्वे वाऽनारोपितेन संबन्धेन स्वधर्मिभूतेच्छासमसत्ताकमेव तत्, इति न व्यभिचारः; ज्ञानविषयस्य तत्तादात्म्यरूपविषयत्वस्येच्छायाश्च व्यावहारिकत्वाद् *नतराम्*॥ तत्र तदर्थं दर्शयितुमाह—*अथवेति*॥ ज्ञानस्योपाधिः प्रयोजकमिति षष्ठी-तत्पुरुष-तद्धिताभ्यां व्याचष्टे—*ज्ञानीयोपाध्यविद्याप्रयुक्तस्येति*॥ अन्तःकरणवृत्तिविशेषरूपेच्छाया बाह्यानागत-विषयेण तादात्म्यासंभवात्। अत एव तत्राकाराख्य इत्युक्तम्। *आविद्यक इति*॥ भ्रमभिन्नत्वात्। तदर्थमाह—*सुतरामितीति*॥ *ज्ञानस्वरूपस्य=ब्रह्मचैतन्यरूपस्य। *कथंचित्=धर्मिगतसत्यत्वारोपेण तस्याध्यासिकत्वात्।

### अद्वैतसिद्धिः

नच—एवं ज्ञानवद् विषयसंबन्धं विनाऽपि कदाचिदिच्छायाः सत्त्वापत्तिरिति—वाच्यम्; सविषयत्व-प्रयोजकोपाध्यपेक्षयाऽधिकसत्ताकत्वस्य तत्र प्रयोजकत्वात्, इच्छायाश्च तत्समानसत्ताकत्वात् ॥

### तरङ्गिणी

सम्बन्धं विनाऽपि कदाचिदिच्छायाः सत्त्वापत्तिरिति—वाच्यम्; सविषयत्वप्रयोजकोपाध्यपेक्षयाऽधिक-सत्ताकत्वस्य तत्र प्रयोजकत्वात्, इच्छायाश्च तत्समानसत्ताकत्वात्। एवं च सविषयकत्वस्वभावत्वं न ज्ञानत्वव्यापकम्; अतस्तन्निवृत्त्याऽऽत्मनि ज्ञानत्वनिवृत्तिर्न, इति नाज्ञानत्वस्य हेतोरात्मनि व्यभिचारः—इति, *अत्र ब्रूमः*; यदि ज्ञानस्य विषयेणाध्यासिक एव सम्बन्धः, तर्हि चरमवृत्तौ नात्मा विषयः स्यात्। नच—वृत्तिप्रतिबिम्बितचैतन्यरूपज्ञानस्य विषयेणाध्यासिकः सम्बन्ध इति—वाच्यम्; चरमवृत्तावपि शुद्धात्म-गोचराज्ञाननिवृत्त्यर्थं चित्प्रतिफलनस्यावश्यकत्वात्, वृत्तिमात्रस्य तत्राज्ञाननिवर्तकत्वे घटादावपि तथात्वापातेन तत्रापि चित्प्रतिफलनाभावापत्त्या घटादेर्वृत्तिव्याप्यत्वमेव स्यात्, न फलव्याप्यत्वम्। नचैवमात्मनोऽपि फलव्याप्यत्वापत्तौ मिथ्यात्वापत्तिरिति—वाच्यम्; त्यज तर्हि मिथ्यात्वे फलव्याप्यत्वस्य हेतुत्वम्, परोक्षवृत्ते-रतीन्द्रियार्थविषयकत्वं च न स्यात्; परोक्षवृत्तावतीन्द्रियस्याध्यासाभावात्। तस्माद् न ज्ञानस्याध्यासरूपः सम्बन्धः, इति स्वाभाविकमेव ज्ञाने सविषयत्वम्। एवमिच्छायामपि स्वाभाविकमेव सविषयत्वम्, 'घटं जानामी'तिवत्—'घटमिच्छामी'त्यत्रोपाधिं विना सविषयत्वानुभवात्। तस्मात् साधूक्तम्—'ज्ञाने सविषयत्वादेः स्वभावत्वदर्शनादि'ति ॥

### न्यायामृतकण्टकोद्धारः

ज्ञानौपाधिकमेव सविषयत्वमिच्छादिषु, इति तत्रापि न स्वाभाविकत्वम्—*इत्याह*; *तन्न* सविषयत्वं हि विषयोल्लेखित्वम्, न तु विषयाध्यासाधिष्ठानत्वम्; तथात्वे चरमवृत्तेः सविषयत्वं न स्यात्, चरमवृत्तौ चैतन्यारोपाधिष्ठानात्वभावात्, दृश्यत्वादीनामसिद्धिश्च स्यात्, अध्यासरूपसविषयत्वासिद्धेः। तस्मात् अध्यासातिरिक्तं स्वभावविशेषरूपं सविषयत्वमङ्गीकर्तव्यम्, इति कथं न सविषयत्वं स्वाभाविकम्? एतेन—इच्छादिष्वपि स्वाभाविकमेव सविषयत्वम्, न ज्ञानोपाधिकम्; उपाध्यननुसन्धाने ज्ञानवदेव सविषयत्वस्य प्रतीतेः। किंचैवं वस्तुतोऽपि निर्विषयत्वेऽपीच्छायाः सविषयकज्ञानजन्यत्वेन सविषयत्वे ज्ञानस्यापि वस्तुतो निर्विषयकत्वेऽपि सविषयकेच्छाजन्यत्वेन सविषयत्वोपपत्तौ स्वाभाविकं तन्न स्यादिति ॥

### चिद्रूलेखीयटिप्पणी

*तस्य=ज्ञाननिष्ठविषयसंबन्धरूपसविषयकत्वस्य। *न स्वाभाविकत्वम्=नानारोपितत्वम्। एवं चास्य हेतोरभावादेव न पारमार्थिकत्वपर्यवसितचिद्रूपज्ञानसमसत्ताकत्वसिद्ध्यापत्तिः, इति चिद्रूपज्ञानस्य मोक्षदशायां सविषयकत्वोपलक्षित-स्वरूपस्यसंभवात् तत्रेदस्य हेतुत्वसंभव इति भावः ॥

*अत्र केचित्*—ज्ञाने साक्षात्संबन्धेन हि तस्यारोपितत्वात् स्वाभाविकत्वं न, इच्छायां तत्साक्षात्संबन्धेन तत्प्रतीतेरेवानुपगमाद् नतरां स्वाभाविकत्वम्। तच्च तेन संबन्धेनानारोपितत्वे सति प्रतीयमानत्वम्; यथा शुक्तौ शुक्लरूपस्य। तत्र रजते तद्वारणाय सत्यन्तम्, तत्र शशशृङ्गे तद्वारणाय विशेष्यमिति तदर्थम्—*वर्णयन्ति* ॥ मूले—*एवं ज्ञानवदिति* ॥ चिद्रूपज्ञानस्य मोक्षदशायां यथाऽऽरोपितविषयसंबन्धं विना सत्त्वम्, तथेत्यर्थः। *कदाचित्=विषयबाधदशायाम्। इच्छायां विषयसंबन्धस्यारोपितत्व इत्यादिः। *सविषयकत्व प्रयोजकोपाधिः=*विषयः=वृत्तिविषयः तदपेक्षयाऽधिकसत्ताकत्वं चिद्रूपज्ञानस्यैव, इति तस्यैव विषसंबन्धं विना सत्त्वम्, न त्वन्तःकरणवृत्तिविशेषरूपेच्छायाः, इति न विषयसंबन्धं विना तस्य सत्त्वमिति भावः। प्रकाशसामान्या-

न्यायामृतम्

परमपुरुषार्थे मोक्ष आनन्दाप्रकाशापाताच्च, अर्थप्रकाशत्वरूपज्ञानस्वभावाभावेऽपि ज्ञानत्वे घटादेरपि ज्ञानत्वापाताच्च, अर्थाप्रकाशात्मकजडव्यावृत्तेरप्यर्थप्रकाशात्मकत्वं विनाऽयोगाच्च ॥

अद्वैतसिद्धिः

नच—त्वया मोक्षावस्थायामात्मनो निर्विषयत्वाङ्गीकाराद् आनन्दाप्रकाशे तदपुमर्थत्वं स्यादिति—

तरङ्गिणी

मोक्षे विषयानुल्लेखे ब्रह्मस्वरूपज्ञानस्वभावहान्यापत्त्या ज्ञानत्वाभावमुक्त्वा दोषान्तरमाह—*परमपुरुषार्थ इति* ॥ त्वया मोक्षावस्थायामात्मनो निर्विषयत्वाङ्गीकारादानन्दाप्रकाशे तदपुमर्थत्वं स्यादित्यर्थः। नच—तदाऽप्यानन्द एव प्रकाशः, न त्वानन्दस्य प्रकाश इति वाच्यम्, सुखरूपताया अपुरुषार्थत्वात्, प्रकाशमानसुखवत्ताया एव पुरुषार्थत्वात्। *ननु* अर्थोपलक्षितप्रकाशत्वं मोक्षेऽप्यस्त्येव, इति न ज्ञानत्वहानिरित्यत आह—*अर्थप्रकाशत्वेति* ॥ मोक्षे ज्ञानोपलक्षणस्याप्यर्थस्य यदि प्रकाशोऽस्ति, तदा तदुल्लेखरूपोपप्लवापत्तिः। यदि न प्रकाशः, तदाऽर्थप्रकाशत्वरूपज्ञानस्वभावाभावाद् घटादिवद् ज्ञानत्वं न स्यादित्यर्थः। *ननु* नार्थप्रकाशात्मकत्वं ज्ञानस्वभावः, किंतु जडव्यावृत्तिरेव, सा चास्ति मोक्षेऽप्यात्मनि, नतु घटादावित्यत आह—*अर्थाप्रकाशात्मकेति* ॥ अर्थाप्रकाशात्मकं यज्जडम्, तस्माद् व्यावृत्तिरपि ज्ञानस्यार्थप्रकाशात्मकत्वरूपजडवैधर्म्यादेवेत्यर्थः। ज्ञेयाभावादात्मा न ज्ञानमित्युक्त्वा ज्ञात्रभावादपि स न

न्यायामृतकण्टकोद्धारः

*परमेति* ॥ तथाच मोक्षस्य पुरुषार्थत्वं न स्यादिति भावः। नच—तदाऽऽनन्दस्य प्रकाशाभावेऽप्यानन्दस्य प्रकाशस्वरूपत्वाद् मोक्षस्य पुरुषार्थत्वमिति—वाच्यम्; कामनया हि पुरुषार्थत्वम्। सा च सुखी स्यामिति, नतु सुखं स्यामिति। सुखित्वं च सुखानुभववत्त्वम्। तथाच मोक्षावस्थायामात्मरूपज्ञानस्य निर्विषयत्व आनन्दाप्रकाशादपुरुषार्थत्वमिति। *घटादेरपीति* ॥ औपाधिकार्थप्रकाशत्वस्य घटादावपि वक्तुं शक्यत्वादिति भावः। *अर्थाप्रकाशेति* ॥ स्वाभाविकार्थप्रकाशात्मकत्वं विनेत्यर्थः। ज्ञातृ-ज्ञेयनिरूप्यस्वभावत्वाच्चेति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मिथ्यात्वात् तद्वतः स कथमपि न सत्यो वक्तुं शक्य इति भावः। *आनन्दाप्रकाशे = आनन्दसम्बन्धिनः

न्यायामृतसौगन्ध्यम्

किञ्च त्वया मोक्षावस्थायामात्मनो निर्विषयत्वाङ्गीकारात् आनन्दाप्रकाशे तत्पुमर्थत्वं न स्यात्। एतेन—'आनन्दस्य प्रकाशः' इत्युक्तौ आनन्दसम्बन्धिप्रकाशाभावो मोक्षे ममेष्टः। पुमर्थत्वमपि पूर्णानन्दावरणविरोधिवृत्तिविशिष्टत्वरूपेणैव, तदपि तदा नास्त्येव, किन्तु तादृशवृत्तिकाल एव; तावतैव तदुद्देशेन श्रवणादौ प्रवृत्तिसंभव इति—निरस्तम्; वृत्तिविशिष्टरूपस्य मिथ्यात्वेन परमपुमर्थत्वाभावेन तदुद्देशेन श्रवणादिप्रवृत्त्यसंभवात् ॥

सौगन्ध्यविमर्शः

अयं भावः—प्रमाणजन्यं दोषजन्यं वा ज्ञानमेव सविषयकमिति नियमः, न तु स्वरूपज्ञानमपि। स्वरूपज्ञानस्य सविषयकत्वमज्ञानाधीनमेव, ततश्च कल्पितमेव सविषयकत्वम्; तस्य वस्तुगत्या निर्विषयकत्वात्। यथाचाभावस्याप्यभावत्वविशिष्टस्यैव सप्रतियोगिकत्वम्, नत्वभावत्वोपलक्षितस्य, तथा पूर्वमेव विवेचितम्, इति 'अभावे सप्रतियोगिकत्ववदि'ति दृष्टान्तोऽपि

विट्ठलेशीयटिप्पणी

भाव आनन्दाप्रकाशासंभवादाह—*आनन्दसंबन्धिन इति* ॥ *ननु* मोक्षदशायामानन्दो यथात्मचैतन्यरूप-

अद्वैतसिद्धिः

**वाच्यम् ; तदा आनन्द एव प्रकाशः नत्वानन्दस्य प्रकाशत्वम्, अर्थोपलक्षितप्रकाशत्वं वा तदाऽस्त्येव,**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रकाशस्याभावे । *न त्वानन्दस्येति* ॥ तथाच मोक्ष आनन्दसम्बन्धिप्रकाशाभाव इष्टः । पुमर्थत्वमपि पूर्णानन्दावरणविरोधिवृत्तिविशिष्टस्वरूपेणैव । तदपि तदा नास्त्येव, किन्तु तादृशवृत्तिकाल एव ; तावतैव तदुद्देशेन श्रवणादौ प्रवृत्तिसम्भवः । नच—तदेत्युक्तिरसंगता, परममुक्तात्मनि कालासम्बन्धादिति—वाच्यम् ; इदानीं कल्पितेन कालेन 'तदे'ति व्यवहारादिति भावः । *ननु* तथापि परममुक्तात्मनि ज्ञानत्वाभावेना-ज्ञानत्वहेतोर्व्यभिचारः, तत्राह—*प्रकाशत्वमिति* ॥ ज्ञानत्वोपलक्षितस्वरूपत्वमित्यर्थः । तादृशात्मनो ज्ञानत्वोपलक्षितत्वमावश्यकम् ; व्यवहारकाले तस्यैव सर्वदृश्यभासकत्वेन सर्वज्ञेयोपलक्षितत्वात्, इत्याशयेनाह—*अर्थोपलक्षितप्रकाशत्वं वेति* । सर्वज्ञेयोपलक्षितत्वं वेत्यर्थः । *ज्ञानत्वेति* ॥ ज्ञानत्वोपलक्षितस्वरूपत्वेत्यर्थः । तादृशात्मा ज्ञानत्वोपलक्षित इति यावत् । तथाच तद्भेदस्य हेतोस्तत्राभावाद् न व्यभिचार इति

न्यायामृतसौगन्ध्यम्

**नच—तदाऽऽनन्द एव प्रकाशः, नत्वानन्दस्य प्रकाश इति—वाच्यम् ; प्रकाशस्य पुमर्थत्वे दुःख-प्रकाशोऽपि(१) पुमर्थस्स्यात् । किञ्च ज्ञातुरभावात् तदा तद् न ज्ञानम् ; न हि भोक्तृहीना भुजिक्रिया भवति ॥**

सौगन्ध्यविमर्शः

न विरुद्धः । पुरुषार्थत्वं हि सुख इव सुखसाधनेऽपि भवति, इति पूर्णानन्दावरणविरोधिवृत्तिविशिष्टत्वेन पुमर्थत्वमपि न विरुद्धमित्यादि न्यायरत्नावल्यां विस्तृतम् । तथाच वृत्तिविशिष्टत्वेन मिथ्यात्वेऽपि न पुमर्थत्वहानिः ॥

(१) प्रकाशस्य पुमर्थत्वमानन्दाभेदेनैव, इति न दुःखप्रकाशस्यापि पुमर्थत्वापत्तिः । एतेन—सज्ञातृकत्वमपि—व्याख्यातम् ; धर्मभूतज्ञानविषयत्वात् तस्य । तथाचानादित्वात् स्वरूपज्ञानस्य न ज्ञेयादिजन्यत्वं तन्निरूप्यत्वं वेति निष्कर्षः । अनादीनां जात्यादीनां विनाऽपि व्यक्त्यादि कदाचित् प्रतीतिदर्शनात् । व्यक्तं चैतद् लघुचन्द्रिकायामेव । वस्तुतस्तु—क्रियारूपप्रमाणतन्त्रज्ञानस्य सादेरेव सज्ञेयत्वादिस्वभाव इति वर्णनेन स्वरूपज्ञानस्य सज्ञेयत्वाद्यभावेऽनादित्वं न प्रयोजकतया विवक्षितम्, किन्तु वृत्तिज्ञानादिवैलक्षण्यमेव, इति जातेरनादेरपि व्यक्त्यपेक्षादिवर्णनमनवसरमेव ॥

विट्ठलेशीयटिप्पणी

**प्रकाशः, तदा तस्य सार्वदिकत्वात् तत्र श्रवणाद्युपायवैयर्थ्यम्, अत आह—*पुमर्थत्वमपीति* ॥ *वृत्तिविशिष्टत्वेनेति* ॥ तथाचैतत्संपादनायैव श्रवणादीति भावः । *नन्वेवम्* मोक्षस्य पुरुषार्थत्वं न स्यात् ; उक्तवृत्तेस्तदा विरहात्, इत्याशङ्कामिष्टापत्त्या परिहरति—*तदपि तदा नास्त्येवेति* ॥ *नन्वेवम्* क्षणिकपुरुषार्थोद्देशेन कथं तत्साधन-श्रवणादौ प्रवृत्तिः ? अत आह—*तावतैवेति* ॥ पूर्णानन्दांशावरणनिवर्तकवृत्तेरावरणनिवर्तनेनात्मनः स्वतः पुरुषार्थस्वरूपपूर्णानन्दरूपतासंपादकत्वेनेति भावः । *तदुद्देशेन=उक्तवृत्त्युद्देशेन । *परममुक्तेति* ॥ विदेहमुक्तेत्यर्थः । *ज्ञानत्वाभावेनेति* ॥ विषय-तदाकारवृत्त्योरभावेन तद्घटितज्ञानत्वविशिष्टत्वाभावादित्यर्थः । अत एव प्रकाशत्वं व्याचष्टे—*ज्ञानत्वोपलक्षितस्वरूपत्वमिति* ॥ *मूले*—अर्थपदं दृश्यज्ञेयपदसमानार्थम्, तत्रार्थोपलक्षितप्रकाशत्वस्य ज्ञानस्वरूपहेत्वप्रविष्टतया तत्कथनस्यानुपयोगः, इत्याशङ्क्योक्तप्रकाशत्वोपपादकतया तत् सार्थकयति—*तादृशात्मन इति* ॥ परममुक्तात्मन इत्यर्थः । *ज्ञानत्वोपलक्षितत्वस्वरूपमिति* ॥ भासकतासंबन्धेन ज्ञेयोपलक्षितत्वमित्यर्थः । पूर्वं कदाचित् सद्भूत एवोत्तरं तदभावदशायां तदुपलक्षितत्वमित्याशयेनाह—*व्यवहारकाल इति* ॥ *सर्वज्ञेयोपलक्षित-त्वादिति* ॥ भासकताप्रयोजकतादात्म्यरूपविषयतासंबन्धेनेत्यादिः । उक्तसंबन्धेन ज्ञेयोपलक्षितस्यैव ज्ञानस्वरूपत्वात् . प्रकाशत्वपदार्थज्ञानत्वाविवक्षयाह—*सर्वज्ञेयोपलक्षितत्वं वेत्यर्थ इति* ॥ ज्ञानत्वस्यापि ज्ञाने ज्ञानत्वेन सधर्म-कत्वापत्तिः, अत आह—*ज्ञानत्वोपलक्षितस्वरूपत्वेत्यर्थ इति* ॥ उक्तस्वरूपत्वेनैव तर्हि सधर्मकत्वात् तद्भेदः शुद्धे व्यभिचारी स्यात्, तत्राह—*तादृशात्मेति* ॥ परममुक्तात्मेत्यर्थः । *ननु* उक्तोपलक्षितस्वरूपधर्मावच्छिन्न-भेदोऽपि शुद्धस्यैवेत्यत आह—*तथाचेति* ॥ *तद्भेदस्येति* ॥ ज्ञानत्वोपलक्षितो यः, तद्भेदस्येत्यर्थः । अयं च**

न्यायामृतम्

एवं ज्ञात्रभावादपि न ज्ञानम् । नहि भोज्य-भोक्तृरहिता भुक्तिरस्ति । यदि च ज्ञानस्यानादित्वात् तदनपेक्षा, तर्ह्यनादेः प्रागभावादेः प्रतियोगिनि, जातिरूपस्य धर्मस्य व्यक्तिरूपे धर्मिणि, जीव-ब्रह्मविभागस्य

अद्वैतसिद्धिः

इति न ज्ञानत्वहानिरित्युक्तम् । *ननु*—तथापि ज्ञातुरभावात् तदा तद् न ज्ञानम् ; नहि भोक्तृहीना

तरङ्गिणी

ज्ञानमित्याह—*एवमिति* ॥ *ननु* आत्मरूपस्य ज्ञानस्यानादित्वेनाक्रियात्वाद् न ज्ञेय-ज्ञात्रपेक्षाऽस्तीत्याशङ्क्य निराकरोति—*यदि चेति* ॥ *ननु* सादेरप्यतीतादिज्ञानस्य न स्वोत्पत्त्यर्थं ज्ञात्राद्यपेक्षा, किं पुनरनादेरात्मरूपज्ञानस्य तदनपेक्षेति वक्तव्यम् ? अनादीश्वरज्ञाने ज्ञात्राद्यनपेक्षाया दृष्टत्वाच्च, इत्याशङ्क्य परिहरति—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावः । *ज्ञातुरभावादिति* ॥ तदा ज्ञातुरभावादित्यर्थः । *तत्=मुक्तात्मरूपम् । *ज्ञानम्=ज्ञानत्वोपलक्षितस्वरूपम् । *नहीत्यादि* ॥ कर्तृत्वस्य सकलकारकप्रयोजकत्वरूपस्वातन्त्र्यविशिष्टकारकत्वरूपत्वात्, कारकत्वस्य च क्रियानिमित्तत्वरूपत्वात् कर्तृनिरपेक्षं क्रियास्वरूपं न सम्भवतीति भावः ॥

विठ्ठलेशीयटिप्पणी

ब्रह्मत्वरूपः, अतः स्वरूपतो भावार्हशुद्धब्रह्मनिष्ठनिरवच्छिन्नप्रतियोगिताको भेदः शुद्धे न संभवति ; अन्योन्याभावप्रतियोगितायाः केषांचिन्मते संबन्धानवच्छिन्नत्ववत् शुद्धभेदीयप्रतियोगिताया धर्मानवच्छिन्नत्वस्याप्युपगमसंभवात् । *यद्वा*—ज्ञानत्वोपलक्षितत्वं स्वोत्तरज्ञानत्वासंबन्ध्यनुयोगिकः स्वपूर्वज्ञानत्वसंबन्ध्यनुयोगिको यो ज्ञानत्वाभावः, तद्वत्त्वम् ; शुद्धेऽधिकरणातिरिक्तभावरूपधर्मस्यानुपगमेऽपि स्वाधिकरणरूपोक्ताभावरूपधर्मोपगमात्, तदवच्छिन्नप्रतियोगिताकभेदश्च शुद्धे नास्ति, इति न व्यभिचार इति भावः । संसारदशायां ज्ञातुः सत्त्वात् 'तदेति' पूर्वं योजयति—*तदेति* ॥ मुक्तिदशायामित्यर्थः । *ज्ञातुः=ज्ञानकर्तुः । संसार्यात्मनो ज्ञानत्वादाह—*तन्मुक्तात्मरूपमिति* ॥ ज्ञानत्वविशिष्टत्वाभावस्येष्टत्वादाह—*ज्ञानत्वोपलक्षितस्वरूपमिति* ॥ *अयं भावः*—ज्ञाधातोः क्रियावाचकत्वं विना धातुत्वासंभवात् तदर्थस्य ज्ञानस्य क्रियात्वं वाच्यम्, 'तच्च साध्यत्वेन प्रतीयमानत्वम्, साध्यत्वं चोत्पाद्यत्वम्' इति भूवादिसूत्रे शाब्दिकसिद्धान्तः । तथाच नित्य आत्मा कदाऽपि न ज्ञाधात्वर्थक्रियारूपः, अपितु तदतिरिक्त एव जन्यः कश्चित्, तस्य चोत्पादकरूपकर्त्रपेक्षाऽवश्यं वाच्या ; क्रियात्वात्, भुजिक्रियावत्, इति तद्व्यतिरेकमुखेनाह मूले—*नहि भोक्तृहीना भुजिक्रिया भवतीति* ॥ *ननु* कर्तृत्वं न क्रियोत्पादकत्वगर्भम् ; सत्ता-स्थित्यादिकर्तरि तदभावात्, किंतु क्रियाश्रयत्वम्, तच्च मुक्तात्मनो ज्ञानक्रियारूपत्वेऽपि तन्निरूपितं कर्तृत्वं कथञ्चित् कालादेः स्वस्यैव वा सम्भवति, इत्याश्रयत्वेन कर्त्रपेक्षत्वस्य तत्र सत्त्वाद् न तस्य क्रियात्वानुपपत्तिरित्यत आह—*कर्तृत्वस्येति* ॥ *सकलकारकप्रयोजकत्वेति* ॥ स्वेतरस्वसमभिव्याहृतसकलकारकनिष्ठप्रकृतक्रियानुकूलव्यापारप्रयोजकव्यापारवत्त्वेत्यर्थः । इदं च 'चैत्रः कुठारेण काष्ठं छिनत्ति' इत्यादौ कुठारादिवारणाय । *कारकत्वरूपत्वादिति* ॥ एतच्च 'चैत्रस्य पुत्रो गच्छती'त्यादौ चैत्रस्य वारणाय । *ननु* कारकत्वं संज्ञाविशेषः, "ध्रुवमपाये" इति योगं विभज्य अपाये ध्रुवं कारकसंज्ञम्, ततः 'अपादानम्' उक्तकारकमपादानसंज्ञम्, इत्याद्यर्थाश्रयणात् । एवं च *स्वतन्त्रः=प्रधानीभूतधातूपात्तव्यापाराश्रयः कारकसंज्ञः स्यात्, इत्यर्थं क्रियाया आश्रयत्वेनैव कर्तुरपेक्षा, नतु जनकत्वेन, इति नित्यमुक्तात्मनो ज्ञानक्रियारूपत्वं कुतो नेति ? अत आह—*कारकत्वस्येति*॥ क्रियानिमित्तत्वेनेति*॥ क्रियानिमित्तकारणत्वेनेत्यर्थः । "कारके" इत्यत्र 'क्रियां जनयति' इति कारकम्; प्रथमार्थे सप्तमी । *यद्वा*—'करोति कर्तृ-कर्मव्यपदेशानि'ति व्युत्पत्त्या क्रियैव कारकम् ; "यावद् ब्रूयात् क्रियायामिति, तावद् ब्रूयात् कारके" इति भाष्यात् । विषयत्वे सप्तमी, विषयत्वं च जनकत्वेन, इति 'अपाये ध्रुवं क्रियाजनकम्, अपादानम्, *स्वतन्त्रः=प्रधानक्रियाश्रयः क्रियाजनकः कर्ता' इत्यर्थाश्रयणादिति भावः । *कर्तृनिरपेक्षं क्रियास्वरूपं न सम्भवतीति* ॥ एवं च

न्यायामृतम्

च धर्मि-प्रतियोगिनोः, वेदरूपस्य शब्दस्य च वक्तृ-वाच्ययोः, अज्ञानस्य चाश्रय-विषययोः, ब्रह्मसत्तायाश्च कर्तर्यपेक्षा न स्यात्। तथाच—'अस्ति ब्रह्मे'त्यादौ कर्तरि लकारो न स्यात्।

अद्वैतसिद्धिः

भुजिक्रिया भवति। नच—अनादित्वेन क्रियारूपत्वाभावाद् अनपेक्षत्वमिति—वाच्यम्; अनादेः प्रागभावस्य प्रतियोगिनि, जातेर्व्यक्तौ, जीव-ब्रह्मविभागस्य धर्मि-प्रतियोगिनोः, अज्ञानस्य चाश्रय-विषययोः, ब्रह्मसत्तायाश्च कर्तर्यपेक्षादर्शनात्; अन्यथा 'अस्ति ब्रह्मे'त्यादौ कर्तरि लकारो न स्यात्।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*नचेति* ॥ ज्ञानत्वविशिष्टस्य सादित्वेऽपि ज्ञानत्वोपलक्षितस्येति शेषः। *क्रियारूपत्वेति* ॥

न्यायामृतसौगन्ध्यम्

नच—अनादित्वेन क्रियारूपत्वाभावादनपेक्षत्वमिति—वाच्यम्; अनादेः प्रागभावस्य प्रतियोगिनि, जातेर्व्यक्तौ, जीव-ब्रह्मविभागस्य धर्मि-प्रतियोगिनोः, अज्ञानस्याश्रय-विषययोः, ब्रह्मसत्तायाश्च कर्तर्यपेक्षा-दर्शनात्। अन्यथा 'अस्ति ब्रह्म' इत्यादौ कर्तरि लकारो न स्यात्॥

विठ्ठलेशीयटिप्पणी

ज्ञानं शुद्धात्मरूपं न, किंतु तदतिरिक्तमेव, इत्यज्ञानस्य हेतोस्तत्र व्यभिचारो दुर्वार इति भावः। नित्योऽपि चिदात्मा विषयभासकताविशिष्टः सन् ज्ञानमित्युच्यते, अत उक्तवैशिष्ट्यावच्छेदेन कर्त्रादिकारकजन्यो धात्वर्थक्रियारूपः; तदुपलक्षितस्तु न क्रियारूपः, नापि कर्त्रादिजन्य इत्याशयेन शङ्कते मूले—*नचेति* ॥ उक्ताशयस्फुटीकाराय शेषं पूरयति टीकायाम्—*ज्ञानत्वविशिष्टस्येति* ॥ संसारदशायां विषय-तदाकारवृत्तिविशिष्टस्येत्यर्थः। *सादित्वेऽपि=कर्त्रादिकारकजन्यक्रियारूपत्वेऽपि। *ज्ञानत्वोपलक्षितस्येति* ॥ मुक्तात्मन इति पूरणीयम्। *अनादित्वेन=नित्यत्वेन। नित्यत्वेऽपि धात्वर्थत्वेन साम्यात्, क्रियात्वेन व्यवहारविषयकत्वरूपं क्रियारूपत्वं न सम्भवतीत्यत आह—*कारकनिमित्तकक्रियात्वरूपत्वेति* ॥ कारकजन्यक्रियारूपत्वेत्यर्थः। *मूले—अनपेक्षत्वम्=कर्त्रजन्यत्वम्। एवं च मुक्तिदशायामन्तःकरणाद्यवच्छिन्नात्मरूपकर्तृविरहेऽपि मुक्तात्मनो ज्ञानत्वोपलक्षितरूपत्वं नानुपपन्नमिति भावः। यद्यपि ज्ञाधात्वर्थो ज्ञानम्, तच्चात्मचैतन्यमेव, तस्य च ज्ञानत्वविशिष्टस्योत्पत्तौ कर्तृसापेक्षत्वेऽपि ज्ञानत्वोपलक्षितस्य शुद्धस्योत्पत्तौ न कर्तृसापेक्षत्वम्; तथापि ज्ञप्तौ कर्तृसापेक्षत्वमस्त्येव, नित्यस्यापि हि धातुतः प्रतीतिरुत्पाद्यत्वेनैव जायते; अत एव "क्रियावाचको धातुः, क्रियात्वं च साध्यत्वेन प्रतीयमानत्वम्, साध्यत्वं चोत्पाद्यत्वमेवेति" शाब्दिकाः। अत एव 'ब्रह्मास्ती'त्यादौ ब्रह्मसत्ताया नित्याया अपि कर्तृसापेक्षत्वेन कर्तृलकारोपपत्तिरित्याशयेनाह मूले—*अनादेरिति* ॥ अस्य 'प्रागभावस्ये'त्यादिपञ्चषष्ठ्यन्तैरन्वयः। प्रतियोगित्यादिपञ्चसप्तम्यन्तानामपेक्षायामन्वयः। तदपेक्षा च तज्ज्ञानं विना प्रत्यक्षाविषयत्वम्, तज्ज्ञानाधीनप्रत्यक्षविषयत्वरूपम्, तत्संबन्धवत्त्वेनैव प्रत्यक्षविषयत्वरूपं वा। प्रागभावादेरनुमित्यादेः प्रतियोग्यादिज्ञानं विनाऽपि सत्त्वात्—प्रत्यक्षमिवेशः। अत एव 'भ्रमभिन्नजातिप्रत्यक्षत्वस्ये'ति वक्ष्यते ग्रन्थकृताऽनुपदमेव। *विभागस्य=भेदस्य। 'इह कपाले घटो भविष्यति' 'अयं घटः,' 'नाहमीश्वरः' 'घटमहं जानामि' इति प्रत्यक्षेषु प्रागभावादीनां प्रतियोग्यादिसंसृष्टतयैव भानात् कथंचित् प्रतियोग्यादिज्ञानजन्यत्वात्, 'इह भविष्यति' 'घटत्वं न जानामि' इत्यादिप्रत्यक्षानुदयात्। 'ब्रह्मास्तीति' ब्रह्मसत्ताप्रत्यक्षं तु प्रतिवादिनामेव प्रसिद्धम्। प्रकृतोपयुक्तश्चायं दृष्टान्त इति। तत्र हेतुं स्वयमाह--*अन्यथेति*॥ नित्याया ब्रह्मसत्ताया ज्ञानेऽपि कर्त्रनपेक्षायामित्यर्थः। *अस्ति ब्रह्मेति* ॥ असधातोः सत्ताया ब्रह्मरूपतया नित्याया अप्युत्पाद्यत्वरूपसाध्यत्वेन प्रतीतेरुत्पादकाकाङ्क्षायां कर्तृपदार्थस्वतन्त्रकारकरूपोत्पादकाभिधायको लकारः प्रयोज्यः; अन्यथा 'ब्रह्म सत्यम्' इत्यत्रेव कर्त्रभिधायको न प्रयुज्येत। इत्थं च शाब्दे ब्रह्मसत्ताया ज्ञानेऽपि कर्मापेक्षा सिद्ध्यति, प्रत्यक्षे तु यस्मात् शब्दात् तुच्छोऽर्थः प्रतीयते, तदुल्लिखितप्रत्ययस्य तदर्थविषयकत्वमिति नियमाद् ब्रह्मरूपाऽपि

अद्वैतसिद्धिः

एवं चातीतादिज्ञानस्येश्वरज्ञानस्य चोत्पत्त्यर्थमर्थानपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृ-ज्ञेय-निरूप्यत्वं स्वभावः, अन्यथा 'इदमहं जानामी'त्यनुभवो न स्यात्, 'ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादि'ति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कारकनिमित्तकक्रियारूपत्वेत्यर्थः । *अर्थानपेक्षत्वे=स्वविषयानपेक्षत्वे । *तन्निरूप्यत्वेति* ॥ स्वविषय-विशिष्टरूपेणैव प्रकाशमानत्वेत्यर्थः । *ज्ञातृ-ज्ञेयनिरूप्यत्वम्=ज्ञातृ-ज्ञेयविशिष्टरूपेणैव प्रकाशमानत्वम् । तथाच ज्ञेय-ज्ञातृविशेषितशुद्धचिद्रूपेणाप्यसंप्रज्ञातसमाधौ मोक्षे चात्मनः प्रकाशमानत्वाद् न ज्ञानत्वोपलक्षितस्वरूपत्वमिति

विट्ठलेशीयटिप्पणी

सत्ता 'ब्रह्म' 'अस्ती'ति भिन्नपदप्रतिपाद्यत्वाद् भिन्ना, इति ब्रह्माश्रयिका ब्रह्मकर्तृकक्रियारूपा च भवति । नचैवम्—अन्योन्याश्रयः—भेदे सति भिन्नपदप्रतिपाद्यता, तस्यां सत्यां भेदकल्पनात्—इतीति—वाच्यम्; 'इदानीन्तनव्यवहारप्रयोजकभेदकल्पने तत्पूर्वव्यवहारस्य, तत्प्रयोजकभेदकल्पने तत्पूर्वव्यवहारस्ये'त्येवमाश्रयेण तदभावात्, व्यवहारस्यानादित्वात् । एवं च 'ज्ञानत्वादि'ति हेतुवाक्यघटकनिरर्थकल्युडन्तज्ञाधातुनाऽऽत्मचैतन्यरूपज्ञानस्य हेतुघटकप्रतियोगितया प्रतिपादन उत्पाद्यत्वेनैव प्रतिपादनसम्भवादुत्पाद्यत्वप्रयोजकोपाधेर्विषय-तदाकारवृत्त्यादिरूपज्ञानत्वस्योत्पादककर्तृकारकस्य चाकाङ्क्षाया नियतत्वादुभयविशिष्टस्यैव चिदात्मनो ज्ञानपदात् प्रतीतिर्वाच्या । तथाचोक्तज्ञानत्वोपलक्षितस्य परममुक्तात्मनो हेतुघटकप्रतियोगितया भानासम्भवाद् उक्तपदार्थभिन्नत्वरूपहेतोस्तत्र व्यभिचारो दुरुद्धर इति भावः । *ननु* स्वोत्पत्त्यर्थमनपेक्षितस्य स्वज्ञप्तावपेक्षा क्व दृष्टेति ? अत आह—*एवं चेति* ॥ *अतीतादिज्ञानस्येति*॥ आदिनाऽनागतग्रहणम् । *ईश्वरज्ञानस्येति* ॥ तदुपाधिमायापरिणामवृत्त्यवच्छिन्नचैतन्यरूपस्य मायान्तःकरणरूपोपादानस्य तदवच्छिन्नचैतन्यस्य चार्थस्यापेक्षणाद् व्याचष्टे—*अर्थानपेक्षत्व इति* ॥ 'तन्निरूप्यत्वे'त्यत्र तत्पदेन गुणभूतार्थपरामर्शकताम्, कार्यत्वादौ करणत्वादेरिव ज्ञाने विषयनिरूप्यत्वाभावात् प्रकृतानुपयोगाच्च निरूप्यत्वपदस्य विशिष्टस्वरूपेण प्रकारभानत्वपरतां च 'विषयनिरूप्यं हि ज्ञानम्, अतो ज्ञानविनिवेद्यो विषयः' इति प्रत्यक्षमणिवदाह—*स्वविषयेति*॥ *विशिष्टरूपेणेति* ॥ विशिष्टत्वेनेत्यर्थः । 'अतीतं घटं जानामि'इत्येव प्रतीतेः, 'जानामि' इत्यप्रतीतेः । ज्ञानोत्पत्तये विषयानपेक्षतासूचनाय—'अतीतमि'ति ॥ वर्तमानविषयस्य जीवज्ञानोत्पत्तौ कारणत्वेनापेक्षणात्, ईश्वरज्ञाने तु वर्तमानविषयस्यापि न कारणत्वम्; तस्यानादित्वात्, "संबद्धं वर्तमानं च गृह्यते चक्षुरादिने"त्युक्तेः, ऐन्द्रियिकलौकिकप्रत्यक्ष एव विषयस्य कारणत्वाच्च । एवं च "तदैक्षत, बहु स्यां प्रजायेयेति" श्रुत्या स्रष्टव्यविषयविशेषितमेवेक्षणरूपमीश्वरज्ञानमनूद्यते, वेदकर्तुरीश्वरस्य तादृशानुवादमूलभूतमीक्षणं ज्ञानं प्रत्यक्षमेव ; विषयाविशेषितरूपेणापि ज्ञानप्रकाशमानत्वे शुद्धस्य हेतुघटकत्वमनपवादमेवेत्येवकारान्तर्भावः । *प्रकाशमानत्वम्=प्रत्यक्षविषयत्वम् । अयम्, ज्ञानवान्, इच्छायाः, इत्यनुमानादिना विषयाविशेषितरूपेणापि ज्ञानावगाहनात् । एतावतोक्तम्—'अज्ञानत्वादि'त्यत्र ज्ञाधातुनोत्पाद्यत्वेन प्रतीयमानस्य ज्ञानस्योत्पादककर्तृकारकाकाङ्क्षां कर्त्रपेक्षत्वं कर्तृनिरूप्यत्वरूपतया, विषयनिरूप्यत्वदृष्टान्तस्मारणेन चोपसंहरति—*ज्ञानस्येत्यादिना—स्वभाव इत्यन्तेन* ॥ उक्ताकाङ्क्षावशात् कर्तृसंबन्धज्ञानभानं शाब्द एव, 'यस्मात् शब्दादि'ति नियमादित्युक्तम्, प्रत्यक्षेपु तत्रानुभवं प्रमाणयति—*अन्यथेति* ॥ 'ज्ञातृ-ज्ञेयनिरूप्यत्वमि'त्यत्र ज्ञातुर्ज्ञेयस्येव निरूप्यत्वम्, ज्ञाता ज्ञेयमेव, तन्निरूप्यत्वमिति चार्थः । अतो न ज्ञेयपदं पुनरुक्तम् । निरूप्यत्वं तूक्तरूपमेवेत्याह—*विशिष्टरूपेणैवेति* ॥ एवकारेण नियतार्थकस्वभावपदार्थ उक्तप्रयोजनमुक्तम् । *ननु* असंप्रज्ञातसमाधौ मोक्षे चात्मनः शुद्धस्यैव प्रकाशमानत्वात् तत्कालीनात्मनो ज्ञातृत्वोपलक्षितस्वरूपत्वाद् न तत्र व्यभिचार इत्यत आह—*तथाचेति* ॥ ज्ञेय-ज्ञातृविशेषितेति पाठः । *शुद्धचिद्रूपेणापि=अनावृतचिद्रूपेणापि । एतेन विशेषित-शुद्धयोर्न विरोधः । तृतीयार्थोऽभेदः । अपिना ज्ञातृ-ज्ञेयाविशेषितस्यापि भानं सूचितम् । *प्रकाशमानत्वात्=प्रकाशभेदात् । *न ज्ञानत्वोपलक्षितस्वरूपत्वमिति* ॥ ज्ञातृ-ज्ञेयविशेषितचित्प्रकाशकाले ज्ञानत्वेनैव प्रकाशाद् ज्ञानत्वविशिष्टत्वेन, तदुपलक्षितत्वाभावादिति भावः । असंप्रज्ञातसमाधि-

**न्यायामृतम्**

अतीतादिज्ञानस्येश्वरज्ञानस्य चोत्पत्त्यर्थं विषयाद्यनपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृ-ज्ञेयनिरूप्यत्वस्वभावत्वाच्च । 'इदमहं जानामी'ति ह्यनुभवः । उक्तं हि विवरणे—"ज्ञातुरर्थ-प्रकाशस्य ज्ञानत्वादि"ति । तथाच—

"ज्ञातृ-ज्ञेयविहीनं ते ब्रह्म ज्ञानात्मकं यदि । भोक्तृ-भोज्यविहीनाऽपि भवेत् तर्हि भुजिक्रिया" ।

**अद्वैतसिद्धिः**

विवरणविरोधश्च स्यादिति—चेत्, न ; जातेर्व्यक्तिनिरूप्यत्वेऽपि कदाचित् तदसंबन्धवदुपपत्तेः,

**तरङ्गिणी**

*अतीतादीति* ॥ नोत्पत्त्यर्थं ज्ञानाद्यपेक्षामाचक्ष्महे, किन्तु ज्ञाननिरूपणार्थम्, तच्चातीतादिज्ञान ईश्वरज्ञाने चास्ति, इति न कोऽपि दोषः । ज्ञानस्य ज्ञेयादिनिरूप्यत्वेऽनुभवं प्रमाणयति—*इदमहमिति* ॥ इदमिति ज्ञेयस्य 'अहमि'ति ज्ञातुरुल्लेखः ॥ *ज्ञातुरिति* ॥ ज्ञातुर्योऽर्थप्रकाशः, तज्ज्ञानमित्यर्थः ॥ *संग्रहाति— *तथाचेति* ॥ अत्र वदन्ति—( सि० ) जातेर्व्यक्तिनिरूप्यत्वेऽपि कदाचित् तदसम्बन्धवदुपपत्तिः ; सम्बन्ध-प्रयोजकोपाध्यपेक्षयाऽधिकसत्ताकत्वात् ।

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

भावः । *विवरणविरोध इति*॥ वृत्त्यवच्छिन्नस्यासत्त्वावरणयत्किंचिदज्ञानाविषयत्वप्रयोजकविशिष्टस्य वा चैतन्यस्य ज्ञानपदार्थस्य ज्ञातृ-ज्ञेयाद्यघटितत्वेऽपि ज्ञातृ-ज्ञेयनिरूप्यं ज्ञानस्वरूपमिति ज्ञापनाय ज्ञातुरर्थेत्युक्तं विवरण इति भावः । *जातेः=शुद्धजातेः । *व्यक्तिनिरूप्यत्वेऽपि=कदाचिद् व्यक्तिसंसृष्टरूपेणैव प्रकाशमानत्वेऽपि । शुद्धजातिप्रकाशस्य व्यक्तिप्रकाशव्याप्यत्वेऽपीति यावत् । *कदाचित् तदसम्बन्धवत्=गोत्वादेरश्वादौ संसर्गा-रोपकाले गोत्वादौ गवादिव्यक्तेर्निरूप्यत्वरूपसम्बन्धाभाववत् । *उपपत्तेः=ज्ञानत्वोपलक्षितस्य कदाचिद्

**न्यायामृतसौगन्ध्यम्**

एवं चातीतज्ञानस्येश्वरज्ञानस्य चोत्पत्त्यर्थमर्थानपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञातृ-ज्ञेयनिरूप्यत्वं स्वभावः ; अन्यथा 'इदमहं जानामी'त्यनुभवो न स्यात्, "ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादि"ति विवरणविरोधश्च स्यात् ॥

*ननु* जातेर्व्यक्तिनिरूप्यत्वेऽपि कदाचित् तदसम्बन्धवदुपपत्तिः, सम्बन्धप्रयोजकोपाध्य-पेक्षयाऽधिकसत्ताकत्वादिति—चेत्, *न* ; जातिभाने व्यक्त्युल्लेखावश्यकत्ववद् ज्ञानभानेन ज्ञेयोल्लेखा-

**विट्ठलेशीयटिप्पणी**

मोक्षदशायां ज्ञातृ-ज्ञेयविशिष्टत्वेनापि सत्यस्य चिदात्मनो भानमित्यभिमानेनेयमाशङ्का । उक्ताभिमाननिरासश्च स्फुटीकरिष्यते ॥ *ननु* ज्ञानपदार्थतावच्छेदकावच्छिन्नस्य ज्ञातृ-ज्ञेयघटितत्वे तन्निरूप्यत्वमुचितम्, नतु स तथेत्या-शङ्कायां मूले विवरणविरोध उक्तः, इति विवरणस्थ'ज्ञातुरर्थे'तिपदप्रयोजनव्याजेन स्फुटयति—*वृत्त्यवच्छिन्नस्येति* ॥ *असत्त्वावरणेति* ॥ असत्त्वापादकेत्यर्थः । सत्त्वावरणेति नञ्रहितः सुपाठः । एकेन शुक्त्यादिज्ञानेनैकस्यैव शुक्त्याद्यावरकाज्ञानस्य तत्कार्यरजतादेश्च निवृत्तिः, तज्ज्ञानव्यक्तिनाशे तज्ज्ञानान्तरेण पुनः शुक्त्याद्यावरणमिति मताभिमानाभिप्रायेण—*यत्किंचिदज्ञानेत्युक्तम्*॥ *ज्ञातृ-ज्ञेयनिरूप्यमिति*॥ अस्य ज्ञातृ-ज्ञेयाभ्यां निरूप्यं निर्वचनीय-मिति नार्थः ; 'अन्यथे'त्यनेन ज्ञातृ-ज्ञेयविशिष्टत्वेन प्रकाशमानत्वानुपगम एव विवरणविरोधस्य वक्तव्यत्वात्, किन्तु ज्ञातृ-ज्ञेयसंबन्धविशिष्टं सद् यत् प्रकाशते=प्रत्यक्षविषयो भवतीत्यर्थः । 'जातिर्नित्या' 'घटत्वं प्रमेयम्' इत्यादि-ज्ञानविषयजातेर्व्यक्तिनिरूप्यत्वाभावाद् व्याचष्टे—*जातेः=शुद्धजातेरिति* ॥ यथाश्रुतेऽसङ्गतेर्वक्ष्यमाणत्वात् *कदाचि-त्पदमानुपूर्व्या व्याचष्टे—*कदाचिदिति* ॥ 'अयं गौरि'ति प्रमाकाल इत्यर्थः । *शुद्धेति* ॥ कदाचिदित्यनुषज्यते । व्याप्यत्वं तादात्म्येन । *प्रकाशपदे प्रकाशत्वपरे । दार्ष्टान्तिकं पूरयन् प्रकृतोपपत्तिपरतयोपपत्तिपदं व्याचष्टे—*ज्ञानत्वोपलक्षितस्येति* ॥ *कदाचित्=संसारदशायाम् ; ज्ञानत्वेन प्रत्यक्षकाले । *कदाचित्=असंप्रज्ञातसमाधि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयाद्यनिरूप्यत्वोपपत्तेः । तथाच भ्रमभिन्नजातिप्रत्यक्षत्वस्य व्यक्तिप्रत्यक्षत्वव्याप्यत्ववद् ज्ञानत्वविशिष्टप्रकाशत्वस्य विषयादिप्रकाशत्वव्याप्यत्वम्, नतु ज्ञानत्वोपलक्षितप्रकाशत्वस्य ; तादृशप्रत्यक्षीयजातिविषयताया व्यक्तिविषयतानिरूपितत्वनियमवद् ज्ञानत्वविशिष्टविषयताया विषयवैशिष्ट्यविषयतानिरूपितत्वनियम इति भावः । शुद्धज्ञानस्वरूपस्य विषयाद्यविशेषितरूपेण भाने शुद्धजातेर्व्यक्त्यविशेषितरूपेण भानं सुसदृशो दृष्टान्तः, इति स एवोक्तः । प्रागभावादेस्तु प्रागभावत्वादिविशिष्टरूपेणैव ज्ञानम्, नतु तदविशिष्टशुद्धरूपेण । अत एव सुषुप्तौ 'न किंचिदवेदिषमि'ति सविषयकत्वाज्ञानत्वरूपाभ्यामेवाज्ञानस्य भानम्, नतु शुद्धरूपेणेति भावः । *ननु*—नाश्वादौ गोत्वादेर्भ्रमप्रत्यक्षमस्ति, किन्तु गवादेस्तादात्म्यारोप एव । तथाच नोक्तदृष्टान्तसम्भव इति—चेत्, *न* ; पटे घटत्वप्रकारके 'घटः' इत्याकारके 'शीतगङ्गास्पर्शो भवति'त्याकारकविषयान्तरजिज्ञासादिरूपे प्रतिबन्धके सति जायमाने प्रत्यक्षे घटादिभानासम्भवात् ।

विट्ठलेशीयटिप्पणी

मोक्षदशायाम् ; शुद्धात्मस्वरूपप्रकाशकाले । *विषयाद्यनिरूप्यत्वोपपत्तेरिति* ॥ शङ्कायां तदुक्तिस्तु सिद्धान्तबोधमूलकाभिमानेनैवेति भावः । एवं च संसारदशायामात्मनि ज्ञानत्वादिविशिष्टे ज्ञानत्वोपलक्षितशुद्धात्मभेदरूपहेतुसत्त्वेऽपि न व्यभिचार इति पर्यवसितम् । कादाचित्कत्वमननुगतत्वात् परित्यज्य दृष्टान्त-दार्ष्टान्तिकयोर्नियममाह—*तथाचेति* ॥ अश्वादौ गोत्वादिभ्रमप्रत्यक्षे व्यभिचारवारणायाह—*भ्रमभिन्नेति* ॥ *जातीति* ॥ शुद्धजातीत्यर्थः । *ज्ञानत्वविशिष्टेति* ॥ तद्विषयकेत्यर्थः । ज्ञानत्वेन ज्ञानभानस्य विषयादिवैशिष्ट्यभाने प्रयोजकत्वादिति भावः । *प्रकाशत्वपदानि प्रत्यक्षत्वपराणि । *न त्विति* ॥ मोक्षकालीनशुद्धात्मप्रत्यक्षे व्यभिचारादिति भावः । *ननु* जातिप्रत्यक्षे विशृङ्खलव्यक्तिविषयकत्वस्य ज्ञानत्वविशिष्टप्रत्यक्षे विशृङ्खलविषयादिविषयकत्वस्याभ्युपगमे चोक्तनियमनिर्वाहात्, व्यक्त्यंशे जातिभानं ज्ञानत्वविशिष्टांशे विषयभानं च नोक्तनियमेन सिद्ध्यति, इत्यत आह—*तादृशेति* ॥ भ्रमभिन्नेत्यर्थः । *जातीति* ॥ शुद्धेत्यर्थः । *ज्ञानत्वविशिष्टविषयताया इति* ॥ प्रत्यक्षीयेत्यादिः । एवं चाश्वे गोत्वभ्रमे गोव्यक्तेरभानेऽप्युक्तनियमाभङ्गवत्, मोक्षे शुद्धचिदात्मस्वरूपे तत्प्रत्यक्षे ज्ञानत्वाभानेन कर्तृ-विषयवैशिष्ट्याभानेऽप्युक्तनियमाभङ्गात् चिदात्मरूपस्य ज्ञाधात्वर्थज्ञानस्य नित्यस्योत्पत्ताविव ज्ञप्तावपि कर्तृ-विषयापेक्षा नास्ति । न च—ज्ञाधातुमोत्पाद्यत्वेन तद्भानात् कर्त्राकाङ्क्षावशात् तद्भानमावश्यकमिति—वाच्यम् ; ज्ञाधात्वर्थतावच्छेदकज्ञानत्वेन धातुमात्राधीनबोध एवोत्पाद्यत्वेन भाननियमात् । तत्र भानस्योत्पाद्यत्वेन बोधे कर्तुः, ज्ञानत्वेन बोधे च विषयस्याकाङ्क्षानियमेन भाननियमात् । 'अज्ञानत्वादि'त्यत्र ज्ञानवान्, गुणवान् वा इच्छायाः, इत्यत्रेव ल्युडन्तेन तु भावज्ञानपदेन लक्षणया ज्ञानत्वोपलक्षितशुद्धात्मबोधे ज्ञानस्योत्पाद्यत्वाभानेन कर्तृ-विषयवैशिष्ट्याभानेन सत्ये शुद्धात्मनि ज्ञानत्वोपलक्षितत्वसत्त्वेन तद्भिन्नरूपितभेदरूपहेतोरभावाद् न व्यभिचार इति भावः । प्रकृते शुद्धात्मभाने शुद्धजातिभानमेव दृष्टान्ततयोक्तम्, नतु शुद्धप्रागभावभानशुद्धाज्ञानभाने अपीति कुत इति ? अत आह—*शुद्धज्ञानस्वरूपस्येति* ॥ 'प्रागभावादेरि'त्यादिना प्रतियोगिनः संग्रहः । *न त्विति* ॥ कदाऽपीति शेषः । *गवादेरिति* ॥ गोत्वेन भासमानस्येत्यादिः । *प्रतिबन्धक इति* ॥ तादृशाकारज्ञानेच्छा तदन्याकारज्ञाने प्रतिबन्धिका, तस्याश्चोत्कटत्वम्, अतस्तत्रैकज्ञानेच्छायां सत्यामप्यपरज्ञानोत्पादानुभवः । अत एव कामिनीजिज्ञासैव जिज्ञासारूपप्रतिबन्धकेषूदाह्रियते ; कामिनीविषयकत्वस्यौत्कट्यप्रयोजकत्वात् । अत उक्तेच्छायां शैत्यविशिष्टगङ्गाविषयकस्पार्शनज्ञानत्वावच्छिन्नविषयकत्वमुक्तम् ; निदाघतप्तस्य तादृशेच्छाया उत्कटत्वात् । शीतगङ्गाजलहरणसाधनस्य घटस्य स्वसन्निधानाभावेऽपि स्वसन्निहितपटे घटत्वेन गृह्यमाणे, तं जलाहरणसाधनत्वेन गृहीत्वा तदर्थं तदुपादानाय घटत्वेन पटप्रत्यक्षत्वावच्छिन्नविषयकत्वमप्युक्तेच्छाया उत्कटत्वप्रयुक्तमेव । अत एवोत्कटकामिनीलाभेच्छयाऽस्पष्टने तत्साधनमनुधनत्वबुद्धित्वावच्छिन्नतद्विषयेच्छयैवानुभूयत इति ध्येयम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यथाश्रुतं तु 'तदसम्बन्धवदि'त्यसङ्गतम् ; विषयादिनिरूप्यत्वनियमपुरस्कारेण कृतस्य पूर्वपक्षस्य दृष्टान्तेनानुद्धारात् । नच—यथोक्तव्याख्यानेऽपि दृष्टान्तासम्भवः, शुद्धजातेः कदाचिद् व्यक्तिनिरूप्यत्ववद् ज्ञानत्वोपलक्षितस्य कदाचिदपि विषयादिनिरूप्यत्वस्याभावात्, ज्ञानत्वविशिष्टस्यैव कदाचिद् विषयादिनिरूप्यत्वा-दिति—वाच्यम् ; ज्ञानत्व-तदुपलक्षितव्यक्त्योः सविकल्पकैकवेद्यत्वमते ज्ञानत्वविशिष्टस्यै विषयादिनिरूप्यत्वेऽपि तयोस्तदस्वीकारमते ज्ञानत्वांशे निर्विकल्पकस्य विषयांशे सविकल्पकस्य ज्ञानत्वोपलक्षितविशेष्यकप्रत्यक्षस्य स्वीकारेण ज्ञानत्वोपलक्षितस्य विषयादिनिरूप्यत्वसम्भवात् । तस्मात् कदाचित्पदावृत्त्या यथोक्तव्याख्यान-मतिरम्यम् ।

न्यायामृतसौगन्ध्यम्

बध्यकत्वात्, सत्ताभेदस्याद्याप्यसिद्धेश्च । अत एव—ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वं च न स्वाभाविकम् ; निर्वक्तुमशक्यत्वात्, इति—निरस्तम् ॥

यदा यत्र हि तादात्म्येन ज्ञानम्, तदा तत्र विषयतासम्बन्धेन विषय इति ज्ञेयादिव्याप्यत्वमेव हि सज्ञेयत्वम्, अतीतानागतविषयकेश्वरज्ञानेऽपि विषयोल्लेखस्य सत्त्वात् ॥ "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानी"ति भगवदुक्तेः । नचा'स्ति ब्रह्मे'ति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्व-

विट्ठलेशीयटिप्पणी

कदाचित्पदमावर्त्य तस्य व्यक्तिनिरूप्यत्वेऽन्वयं कृत्वा 'जाते'रिति युक्तिर्व्याख्याता, अन्यथा त्वसङ्गति-माह—*यथाश्रुतमिति* ॥ *विषयादीति* ॥ ज्ञानस्येत्यादिः । आदिना ज्ञाता । *नियमपुरस्कारेण=नियमा-वलम्बनेन । पूर्वपक्षदशायामप्यात्मरूपज्ञानस्य शुद्धस्य भानासंभवरूपस्येत्यादिः । *दृष्टान्तेन=दृष्टान्तमात्रेण । मात्रपदेनोक्तनियमसंकोचव्यवच्छेदः, उक्तनियमसंकोचं विनेत्यर्थः । जातेरपि व्यक्तिनिरूप्यत्वनियमसंकोचं विना कदाचिद् व्यक्त्यनिरूप्यत्वासंभवाद् दृष्टान्तस्याप्यसंभव इति बोध्यम् । तदाह—*नच यथोक्तव्याख्यानेऽपि दृष्टान्तासंभव इति* ॥ *सविकल्पकैकवेद्यत्वेति* ॥ निर्विकल्पकमात्रावेद्यत्वेत्यर्थः । *तयोः=ज्ञानत्व-तदुप-लक्षितव्यक्त्योः । *तदस्वीकारमत इति* ॥ निर्विकल्पकमात्रावेद्यत्वास्वीकारमत इत्यर्थः । निर्विकल्पक-सविकल्पकोभयात्मकं नरसिंहाकारं ज्ञानमुपगम्य तद्वेद्यत्वमत इति यावत् । *ज्ञानत्वांशे निर्विकल्पकस्येति* ॥ ज्ञानत्वरूपविशेषणज्ञानाभावादिति भावः । *विषयांशे सविकल्पकस्येति* ॥ विषयस्य विशेषणज्ञानस्य व्यव-सायरूपस्य सत्त्वादिति भावः । *संभवादिति* ॥ ज्ञानत्वविशिष्टविषयत्वस्य विषयवैशिष्ट्यविषयतानिरूपितत्व-नियमेऽपि विषयवैशिष्ट्यविषयतानिरूपितत्वरूपव्यापकस्य ज्ञानत्वोपलक्षितविषयतारूपाधिकदेशवृत्तित्वे बाधकाभावादिति भावः । ज्ञानत्वांशे निर्विकल्पकत्वानुसरणं तु सामग्रीवशात् । तेन ज्ञानत्वविशिष्टविषयकप्रत्यक्षीयज्ञाननिष्ठविषय-ताया विषयवैशिष्ट्यविषयतानिरूपितत्वं न ; तत्र ज्ञानत्वस्योपनिषदामद्वितीयात्मज्ञाने तात्पर्येणाभावेनोक्तनियमा-भङ्गात्, तात्पर्याभावादेव च तत्त्वज्ञाने मात्मरूपज्ञानांशे विषयवैशिष्ट्यभानमपि ; सर्वविषयाणां 'नेह नाना' इति श्रुत्या बाध्यत्वाच्च । विश्रृङ्खलतया स्वातन्त्र्येणापि वा तत्त्वज्ञाने न कस्यचिद् ब्रह्मान्यस्य भानम् ; तत्र तात्पर्याभावात्, अद्वितीये ब्रह्मात्मन्येव वेदान्तानां तात्पर्यात्, इति मनसिकृत्योपसंहरति—*तस्मादिति* ॥ *कदाचित्पदावृत्त्येति* ॥ कदाचित्पदस्यावृत्त्येत्यर्थः । *अतिरम्यमिति* ॥ दृष्टान्ते, प्रमान्यप्रत्यक्षीयजातिविषयत्वे व्यक्तिविषयतानिरूपित-त्वस्योक्तप्रमीयतद्विषयत्वे च तदभावस्य, दार्ष्टान्तिके च कदाचिदुक्तनिर्विकल्पक-सविकल्पकप्रत्यक्षकाले तदीयज्ञान-त्वोपलक्षितात्मविषयत्वे विषयवैशिष्ट्यविषयतानिरूपितत्वस्य कदाचिद् मुक्तात्मतत्त्वसाक्षात्कारकाले तदीयोक्तात्म-विषयत्वे विषयवैशिष्ट्यविषयतानिरूपितत्वस्य च सत्त्वादिति भावः । *ननु* मुक्तात्मज्ञानीयात्मविषयत्वस्य

### अद्वैतसिद्धिः

संबन्धप्रयोजकोपाध्यपेक्षयाऽधिकसत्ताकत्वात् । अत एव ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वं च न स्वाभाविकम् । तथाहि—सज्ञेयत्वं तावद् ज्ञेयजन्यत्वं वा ? ज्ञेयव्याप्यत्वं वा ? नाद्यः ; परोक्षज्ञान ईश्वरज्ञाने चाभावात्,

### तरङ्गिणी

अत एव ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वं च न स्वाभाविकम् । *तथाहि*—सज्ञेयत्वं

### न्यायामृतकण्टकोद्धारः

*ननु* किमिदं सज्ञेयत्वम्—ज्ञेयजन्यत्वं वा ? ज्ञेयव्याप्यत्वं वा ? नाद्यः ; परोक्षज्ञान

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत एव = मोक्षे ज्ञेयसामान्यस्य ज्ञातुश्चाप्रकाशेऽपि ज्ञानत्वोपलक्षितस्य प्रकाशादेव । *ज्ञानस्य= ज्ञानत्वोपलक्षितस्य । *स्वाभाविकम् = अनारोपितम् । *ईश्वरज्ञाने चेति* ॥ परमत ईश्वरज्ञानस्याजन्यत्वात्, मन्मतेऽपीन्द्रियसंनिकर्षस्येव विषयस्यापि तत्राहेतुत्वात् तदभावो बोध्यः ।

### न्यायामृतसौगन्ध्यम्

माह ; नित्यत्वेन तदसंभवात्, किन्तु साधुत्वार्थ इति—वाच्यम् ; क्षेमसाधारणसाध्यताया(१) नित्यसत्तायां(२) संभवात् ॥

### सौगन्ध्यविमर्शः

(२) नित्यसत्तायाः क्षेमसाधारणसाध्यत्वेऽपि न धात्वर्थत्वसंभवः ; ध्वंसोऽस्तीत्यादिव्यवहारानुसारेण ब्रह्मस्वरूपायाः

### विट्ठलेशीयटिप्पणी

ज्ञातृ-ज्ञेयवैशिष्ट्यविषयानिरूपितत्वं कुतो नेति ? अत आह—मूले *संबन्धेति* ॥ मुक्तात्मनो ज्ञातृ-ज्ञेययोः संबन्धप्रयोजकोपाधिर्वृत्त्यादिः, तदपेक्षया=तदीयव्यावहारिकसत्त्वापेक्षयाऽधिका पारमार्थिकी या सत्ता, तद्वत्त्वादित्यर्थः । 'नेह नाने'ति श्रुति-मिथ्यात्वानुमानाभ्यामात्मनि तदितरसकलप्रपञ्चस्य बाधादिति भावः । *नन्वेवम्* कदाचिद् मुक्तात्मनि ज्ञानत्वोपलक्षिते ज्ञातृ-ज्ञेयसंबन्धप्रतीतेर्जायमानाया भ्रमत्वं स्यादित्याशङ्कामिष्टापत्त्या परिहरति —*अत एवेति* ॥ 'अत एवे'त्यस्य ज्ञातृ-ज्ञेयसंबन्धप्रयोजकोपाध्यपेक्षया ज्ञानस्याधिकसत्ताकत्वादित्यर्थः । तेन च ज्ञातृ-ज्ञेय-ज्ञानत्वानां चाधिकत्वलाभः । तल्लब्धफलितार्थपरतया व्याचष्टे—*अत एवेति* ॥ *मोक्षे=तत्काले । *ज्ञेयसामान्यस्य=ज्ञानत्वघटितस्य । *ज्ञातुः=अन्तःकरणावच्छिन्नचैतन्यस्य । *अप्रकाशे* ॥ उक्तरीत्या बाधादिति भावः । *ज्ञानत्वोपलक्षितस्य=शुद्धात्मस्वरूपात्मकप्रत्यक्षादेरित्यर्थः । ज्ञानत्वविशिष्टस्य विषयसंबन्धः स्वाभाविक एव, इत्यतो व्याचष्टे—*ज्ञानत्वोपलक्षितस्येति* ॥ *न स्वाभाविकमिति* ॥ अत्र प्रतियोगिपदं व्याचष्टे—*अनारोपितमिति* ॥ ज्ञेयोपलक्षितत्वरूपसज्ञेयत्वस्य स्वाभाविकत्वसंभवादाह—मूले—*तथाहीति* ॥ "संबद्धं वर्तमानं च गृह्यते चक्षुरादिने"त्युक्तेर्जीवलौकिकप्रत्यक्षस्यैव विषयजन्यत्वमित्याश्रित्याह—*परोक्षज्ञान इति* ॥ अत्र परोक्षत्वं न लौकिकसन्निकर्षाजन्यत्वम् ; ईश्वरज्ञानस्य पृथगुपादानात्, किंतु स्वविशेषणान्यविषयकज्ञानत्वावच्छिन्नजन्यत्वमित्यभिप्रेत्याह—*ईश्वरज्ञान इति* ॥ तत्र परोक्षज्ञानस्य सर्वमते जन्यत्वेऽपि न विषयजन्यत्वम् ; अतीतानागतविषयकत्वेन व्यभिचारात् । ईश्वरज्ञानस्य तत्त्वे हेत्वन्तरमप्याह टीकायाम्—*परमत इति* ॥ *ननु* स्वमते तस्य जन्यत्वाद् वर्तमानविषयजन्यत्वमस्तु, इत्यत आह—*मन्मत इति* ॥ *इन्द्रियसन्निकर्षस्येवेति* ॥ "पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुतेस्तस्यानिन्द्रियत्वादिति भावः । *विषयस्यापीति* ॥ वर्तमानेत्यादिः । *तत्र=ईश्वरज्ञाने । *अहेतुत्वादिति* ॥ लौकिकेन्द्रियसन्निकर्षजन्यज्ञान एव वर्तमानविषयस्य हेतुत्वादिति भावः । *तदभावः=विषयजन्यत्वाभावः । अतीतानागतघटादिविषयस्य स्वज्ञानकालेऽभावेऽपि वर्तमानघट-पटादिरूपार्थान्तरसत्त्वेन तेन तस्य

---

स्वस्वव्याप्येतरासु यावतीषु व्यक्तिषु सतीषु यदधिकरणक्षणाव्यवहितोत्तरक्षणे सत्त्वम्, तावतीषु सतीष्वेव तदनधिकरण-

अद्वैतसिद्धिः

नापि द्वितीयः ; 'यदा ज्ञानम्, तदाऽर्थः' इति कालिकव्याप्तौ पूर्ववद् व्यभिचारात्, दैशिकव्याप्तिस्तु दूरनिरस्तैव। नच—यदा 'अपरोक्षज्ञानम्, तदाऽर्थः' इति कालिकव्याप्तौ नास्ति व्यभिचारः, आत्मा च 'यत् साक्षाद् अपरोक्षाद् ब्रह्मे'ति श्रुतेरपरोक्षज्ञानरूपः, इति सोऽप्यर्थव्याप्त इति—वाच्यम् ; ईश्वरज्ञाने

तरङ्गिणी

तावद् ज्ञेयजन्यत्वं वा ? ज्ञेयव्याप्यत्वं वा ? नाद्यः ; परोक्षज्ञान ईश्वरज्ञाने चाभावात्, नापि द्वितीयः ; यदा ज्ञानम्, तदाऽर्थ इति पूर्ववत् कालिकव्याप्तौ व्यभिचारात्। दैशिकव्याप्तिस्तु दूरनिरस्तैव। नच—यदाऽपरोक्षज्ञानम्, तदाऽर्थ इति कालिकव्याप्तौ नास्ति व्यभिचारः। आत्मा च "यत् साक्षाद-

न्यायामृतकण्टकोद्धारः

ईश्वरज्ञाने चाभावात्, नाप्यपरः ; व्याप्तिः कालिकी ? "दैशिकी वा ? नाद्यः ; यदा ज्ञानम्, तदाऽर्थ इति कालिकव्याप्तौ पूर्ववद् व्यभिचारात्। न द्वितीयः ; असम्भवात्। नच—यदाऽपरोक्षज्ञानम्, तदाऽर्थ इति कालिकव्याप्तौ नास्ति व्यभिचार इति—वाच्यम् ; ईश्वर-योगिज्ञाने

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*यदा ज्ञानमित्यादि*॥ यदा यस्यार्थस्य ज्ञानम्, तदा सोऽर्थ इत्यर्थः। *पूर्ववत् = परोक्षज्ञाने ज्ञेयजन्यत्वाभावात्। *दूरेति*॥ ज्ञातरि ज्ञानवत्यर्थाभावात्। *यदाऽपरोक्षेत्यादि*॥ पूर्ववद् यस्यार्थस्येत्यादि बोध्यम्। *योगिज्ञान इति* परमतमाश्रित्य, स्वमते तु तस्य नापरोक्षत्वमिति वक्ष्यते। यद्यपि ज्ञानस्योत्पत्तिद्वितीयक्षणेऽर्थ-

सौगन्ध्यविमर्शः

परजातिरूपाया वा धात्वर्थत्वाभावात्, कालसम्बन्धित्वस्यैवासधात्वर्थत्वेन व्यवहारदशायाम्—'ब्रह्मास्ती'ति व्यवहारस्यानुपपत्त्यभावः। एतदभिप्रायेणैव—"अस्त्यादावपी"ति वार्तिकम्॥

विट्ठलेशीयटिप्पणी

सज्ज्ञेयत्वव्यवहारः, नच वक्ष्यमाणो व्यभिचारः, अत आह—*यदा यस्येति*॥ 'पूर्ववद् व्यभिचारादि'त्युक्तं व्याचष्टे—*पूर्ववदिति*॥ *परोक्षज्ञान इति*॥ ईश्वरज्ञाने चेति बोध्यम्। *ज्ञेयजन्यत्वाभावादिति*॥ लौकिकेन्द्रियसन्निकर्षाजन्यत्वादित्यर्थः। *मूले*—'व्यभिचारादि'त्यस्य वर्तमानेऽतीतघटादिपरोक्षादिज्ञानेऽतीतघटादेर्व्यभिचारादित्यर्थः। *दूरेतीति* प्रतीकोत्तरं बाह्यार्थप्रत्यक्षेऽपि व्यभिचारादिति पाठोऽपेक्षितः। ज्ञातृपदस्य ज्ञानोपलक्षितशुद्धात्मपरत्वे तत्र ज्ञानरूपव्याप्यस्यैवाभावाद् न व्यभिचारः, अत आह—*ज्ञानवतीति*॥ बाह्यार्थज्ञानवतीत्यर्थः। *अर्थाभावात्=बाह्यार्थाभावात्। *एतेन*—सुखादिप्रत्यक्षे सुखादिव्यभिचाराभावेऽपि न क्षतिः। घटाद्यपरोक्षज्ञानकाले पटादिरूपार्थान्तरसत्त्वेऽपि न तेन तस्य सज्ज्ञेयत्वव्यवहारः, अतो व्याचष्टे—*पूर्ववदिति*॥ *इत्यादि बोध्यमिति*॥ यदा यस्यार्थस्यापरोक्षज्ञानम्, तदा सोऽर्थ इति बोध्यमित्यर्थः। उक्तव्याप्तिस्वीकारे प्रकृते का क्षतिः ? इत्याशङ्क्य मोक्षकालीनस्य शुद्धात्मनः स्वाभाविकविषयसंबन्धस्वीकारापत्तिमाह—मूले—*आत्मा चेति*॥ मोक्षकालीनः शुद्धात्मा चेत्यर्थः। *अपरोक्षज्ञानरूपः=सकलविषयकापरोक्षज्ञानरूपः। *सोऽप्यर्थव्याप्त इति*॥ तत्याप्यर्थव्याप्तिरावश्यिकेत्यर्थः। तथाच चैत्रात्मनो मोक्षकालेऽतीतानागतविषयाणामभावाद् व्यभिचारादुक्तव्याप्तिभङ्गः। वर्तमानविषयैः स्वाभाविकसज्ज्ञेयत्वापत्तिश्चेति भावः। स्वात्मकविषयेण सज्ज्ञेयत्वापत्तिस्तु न ; भेदनिबन्धनस्य तादात्म्यरूपविषयत्वस्यात्यन्ताभेदेऽसंभवात्। *ईश्वरज्ञाने*॥ इदं चापरोक्षम्, "स एतदैक्षत" "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादावपरोक्षार्थकधातुभिरेव तस्योल्लेखात्। *परे=नैयायिकाः। *वक्ष्यत इति*॥ योगजधर्मस्येन्द्रियसन्निकर्षत्वानङ्गीकारादिति भावः। एवं सामान्यलक्षणाजन्यज्ञानेऽपि व्यभिचारात् तदभावो बोध्यः।

---

क्षणाव्यवहितोत्तरक्षणे तत्त्वाभावरूपं क्षेमसाधारणं साध्यत्वं बोध्यम्, मङ्गलादिव विघ्नप्रागभावादौ। ब्रह्मणस्तु स्वसत्तायां

अद्वैतसिद्धिः

योगिज्ञाने च व्यभिचारात्। 'यदैन्द्रियकं ज्ञानम्, तदाऽर्थः' इति तु व्याप्तिः सर्वसंमता। नचात्मरूपे ज्ञाने ऐन्द्रियकत्वमस्तीति न तया विरोधः। *ननु*—'यदाऽपरोक्षं ज्ञानम्, तदाऽर्थः' इति व्याप्त्य-

तरङ्गिणी

परोक्षाद् ब्रह्मे''ति श्रुतेरपरोक्षज्ञानरूपः, इति सोऽप्यर्थव्याप्त इति—वाच्यम्; अतीतादिज्ञान ईश्वरज्ञाने च व्यभिचारात्। यदैन्द्रियकं ज्ञानम्, तदाऽर्थ इति तु व्याप्तिः सर्वसम्मता। नचात्मरूपज्ञान ऐन्द्रियकत्वमस्ति,

न्यायामृतकण्टकोद्धारः

व्यभिचारात्। यदैन्द्रियकं ज्ञानम्, तदाऽर्थ इति तु व्याप्तिः सर्वसम्मता। नचात्मरूपज्ञानमैन्द्रियकम्, इति कथं सज्ञेयत्वं स्वाभाविकम्? एवं सज्ञातृत्वमपि—किं ज्ञातृव्याप्यत्वं वा? ज्ञातृजन्यत्वं वा? नाद्यः; ईश्वरज्ञाने व्यभिचारात्, न द्वितीयः; अप्रयोजकत्वादिति—चेत् *न*; अस्तु सज्ञेयत्वं

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सत्त्वानियमाद् अयोगिजीवज्ञानेऽपि व्यभिचारसम्भवः; तथापि स्वोत्पत्त्यव्यवहितपूर्वस्वसमानाधिकरणकालिक-सम्बन्धेन यदाऽपरोक्षज्ञानम्, तदाऽर्थः, इत्युक्तावयोगिजीवज्ञाने व्यभिचाराभावात्—'योगी'त्युक्तम्। नच—ज्ञानत्वोपलक्षितस्य चैतन्यस्य तादृशसम्बन्धाप्रसिद्ध्या सिद्धान्तिनस्तादृशव्याप्तिर्न क्षतिकरीति—वाच्यम्; तादृश-व्याप्त्यनिर्वाहस्यैव सिद्धान्तिनं प्रति दोषत्वात्। *ऐन्द्रियकम्=यस्यार्थस्येन्द्रियसन्निकर्षेण जन्यं ज्ञानमुक्तसम्बन्धेन यदा, तदा सोऽर्थ इत्यर्थः। *ननु यदेत्यादि* ॥ अपरोक्षज्ञानस्य वृत्तिरूपस्य द्रव्य-गुणादिविषयेषु संयोग-

विट्ठलेशीयटिप्पणी

*अर्थसत्त्वानियमादिति* ॥ ज्ञानानुव्यवसायद्वितीयक्षणे ज्ञानस्य नाशादिति भावः। *पूर्वत्वसमानाधि-करणेति* ॥ पूर्वत्ववदनुयोगिकेत्यर्थः। तादृशश्च कालिकसंबन्धोऽनुव्यवसायस्य; तदुत्पत्तिक्षणपूर्वक्षणे ज्ञानसत्त्वाद् व्यवसायस्यापि सः, इति नोक्तव्यभिचार इति भावः। *योगीत्युक्तमिति* ॥ योगिज्ञाने त्वतीतानागतविषयव्यभिचारः स्फुट एव। *चैतन्यस्येति* ॥ नित्यस्येति शेषः। *तादृशेति* ॥ स्वोत्पत्तिघटितेत्यर्थः। *न क्षतिकरीति* ॥ व्याप्यताघटकसंबन्धेन शुद्धात्मचैतन्यरूपव्याप्यवत्यतीतानागतविषयरूपव्यापकाभावे व्यभिचारेणोक्तव्याप्तिभङ्गापत्तिरूपा वर्तमानविषयस्य व्याप्यत्वरूपस्वाभाविकसंबन्धापत्त्या शुद्धत्वहानिश्चेति क्षतिर्वाच्या, सा च न; उक्तसंबन्धाप्रसिद्ध्या व्याप्यवत्ताया एवाप्रसिद्धेरिति भावः। *तादृशव्याप्त्यनिर्वाहस्येति* ॥ संयोगेन रूपादौ व्याप्यत्वापत्ति-वारणाय व्याप्यताघटकसंबन्धेन व्याप्यवत्तायाः, व्याप्ये तत्संबन्धावच्छिन्नाधेयतायाश्च निवेशावश्यकतयोक्तसंबन्धेन शुद्धात्मरूपे ज्ञानेऽतीतादिव्याप्त्यनिर्वाह इति भावः। वर्तमानविषयस्य तु तत्र तेन संबन्धेन व्याप्त्यनिर्वाहात् तेन सज्ञेयत्वस्य स्वाभाविकस्य नापत्तिः। परमते मनोरूपेन्द्रियजन्यत्वस्य परोक्षेऽपि सत्त्वात् 'सन्निकर्षेणे'त्युक्तम् ॥ लौकिकसन्निकर्षेणेत्यर्थः। *मूले—व्याप्त्यनभ्युपगम इति* ॥ ईश्वरज्ञानादौ व्याभिचारेणेत्यादिः। *ननु* उक्तव्या-प्त्यभ्युपगमे 'इदं रजतम्' इत्यपरोक्षभ्रमकाले ब्रह्माण्डे यत्र कुत्रापि सतो रजतस्यान्यथाख्यातिस्वीकारेऽप्युक्तव्याप्तेर-भङ्गेनानिर्वचनीयरजतसिद्धेरसंभवः, अनुव्यवसायद्वितीयक्षणे व्यवसायाभावेन व्याभिचारश्च, इत्याशङ्क्य, स्वोत्पत्तिविशिष्ट-कालिकसंबन्धेन स्वाधिकरण <u>वृत्तिपूर्ति</u> विना सा न संभवति, इत्यतस्तामाह—*अपरोक्षज्ञानस्येति*॥ शुद्धचैतन्यरूपस्या-परोक्षज्ञानचिद्रूपस्य नित्यत्वाद् वृत्त्यवच्छिन्नचिद्रूपस्य तस्य वृत्त्युपाधिकोत्पत्तिकत्वाद् मुख्योत्पत्तिसंभवाय—*वृत्ति-रूपस्येत्युक्तम् ॥ *द्रव्य-गुणादिविषयेष्विति* ॥ स्वमते ब्रह्मभिन्नानामेषां जन्यत्वात् तत्र वक्ष्यमाणकालिकसंबन्धसंभवः,

---

ब्रह्मासम्बन्धिक्षणाप्रसिद्धेर्न तत् संभवति, स्वस्मिन् स्वप्रयुक्तत्वासंभवाच्च, 'सत्ताऽस्ती'त्यादौ चापि तथा वाच्यत्वाच्च। तथाच—'अस्ति ब्रह्मे'त्यत्राखण्डार्थत्वमव्याहतं सत्यज्ञानादिवत्। अत्र प्रागभावपरिरक्षणमेव क्षेम इति स्वीक्रियते। अत एव मङ्गलेन विघ्नप्रागभावपरिरक्षणं क्रियते; तद्वत् स्वाभिन्ना सत्ताऽपि ब्रह्मणा पाल्यत इति दिक् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

संयुक्तसमवायादिसम्बन्धेनावच्छेदकतासम्बन्धेन वोत्पत्तिस्वीकाराद् भवन्मते यदा स्वोत्पत्तिविशिष्टकालिकसम्बन्धेन यदर्थस्यापरोक्षज्ञानम्, तदा सोऽर्थः, इति व्याप्तिर्वाच्या ; अत एव भवन्मते 'इदं रजतमि'त्यादिभ्रमस्थलेऽनिर्वाच्यरजतादेः शुक्त्याद्यवच्छिन्नचैतन्य उत्पत्तिः स्वीक्रियते ; तां विना संयोगादिसम्बन्धेनावच्छेदकतासम्बन्धेन वा रजतादौ तदाकाराविद्यावृत्तेरुत्पत्त्यसम्भवेन शुक्त्याद्यवच्छेदेन जायमानाविद्यावृत्तिरूपापरोक्षज्ञानस्य रजतादेः संयोगेनावच्छेदकतारूपेण वा सम्बन्धेनासम्बन्धित्वाद् भ्रमस्थले रजतादिसम्बन्ध्यपरोक्षज्ञानाप्रसिद्धया तस्य रजतादिव्याप्यत्वासम्भवात्। नहि रजतादेरपरोक्षज्ञानेनान्यः सम्बन्धोऽस्ति ; विषयतायाश्चिचैत्ययोरेव स्वीकारात्, आकाराख्यमुख्यविषयताया नव्यैरेव स्वीकाराच्च। रजतादेस्तादृशोत्पत्तौ स्वीकृतायां त्वाकाराख्यविषयतासम्बन्धेनाविद्यावृत्तिं प्रति स्वपरिणामनिष्ठेन यत्किंचिज्ज्ञानीयविषयतासम्बन्धेनाविद्याया हेतुत्वात् तेन सम्बन्धेन रजतादौ तदुत्पत्तिपूर्वमविद्यायाः सत्त्वाद् आकाराख्यविषयता-

विट्ठलेशीयटिप्पणी

विषयतासंबन्धस्य भात्रेऽपि परोक्षज्ञानसाधारण्यात् संयोगादिसंबन्धोक्तिः। अनुगममाह—*अवच्छेदकतासंबन्धेनेति*॥ घटाद्यवच्छिन्नचैतन्य उत्पद्यमानाया वृत्तेरवच्छेदकतासंबन्धेन घटादिषूत्पत्तिसंभवः। *वस्तुतस्तु*—वृत्तिनिष्ठाया आद्यक्षणसंबन्धरूपोत्पत्तेर्वृत्तिप्रतियोगिकसंयोगादिसंबन्धावच्छिन्नत्वासंभवात् 'संयोगादिने'त्यस्य स्वाश्रयसंयोगादिरूपपरम्परासंबन्धेनेत्यर्थः। 'अवच्छेदकतासंबन्धेने'त्यस्यावच्छेद्यवृत्तेः संयोगादिसंबन्धेन संबद्धघटादीनां संयोगादिसंबन्धावच्छिन्नावच्छेदकतासंभवात् तत्संबन्धेनेत्यर्थः। *स्वोत्पत्तिविशिष्टेति*॥ उक्तसंबन्धेन स्वाश्रयानुयोगिकत्वसंबन्धेनेत्यादिः। एतदर्थमेव स्वीकारादित्यन्तोक्तिः। अनुव्यवसायद्वितीयक्षणोत्पन्नसुखादौ केवलकालिकसंबन्धेनोक्तसंबन्धेनानुव्यवसायोत्पत्त्युपलक्षितकालिकसंबन्धेन वाऽनुव्यवसायवति कालिकसंबन्धेन व्यवसायाभावेन व्यभिचारः, इत्युत्पत्तिविशिष्टेत्युक्तम्। *यदर्थस्य=घटाद्यर्थस्य। *सोऽर्थः=घटादिरूपोऽर्थः। यथा घटादिरूपोऽर्थ इति शेषः। घटाद्याकारा चक्षुरादिद्वारा बहिर्निस्सृतान्तःकरणवृत्तिर्हि घटादौ चक्षुरादिसन्निकर्षेण तदुत्तरक्षण उत्पद्यमाना तदुत्तरक्षणरूपावान्तरकालावच्छिन्ने घटादिविषयरूपे काले संयोगसंबन्ध-कालिकसंबन्धाभ्यां संबध्यते ; वृत्तेरुपादानतया स्वाभिन्नान्तःकरणसंयोगिन्युत्पत्तिक्षणेऽपि संयोगसंभवात्, नतु तदविषये घटादौ ; इन्द्रियसन्निकर्षरूपकारणाभावात्, स्वतो नित्यस्यापि चिदात्मनोऽन्तःकरणावच्छिन्नस्योत्तरक्षणावच्छिन्नस्य वा जन्यत्वेन कालिकसंबन्धानुयोगित्वसंभवाच्च। अत एव यदा सुखाद्यपरोक्षम्, तदा सुखादीति व्याप्तिनिर्वाहः। एवं च व्यवसायेऽनुव्यवसायस्य स्वोत्पत्तिक्षणावच्छेदेन स्वाश्रयसमवायिसमवायवदनुयोगिकत्वसंबन्धेन स्वोत्पत्तिविशिष्टकालिकसंबन्धेन सत्त्वाद् अनुव्यवसायस्य च कालिकसंबन्धेन सत्त्वाद् द्वितीयक्षणोत्पन्नसुखादौ चोभयोरप्युक्तसंबन्धेनासत्त्वाद् न व्यभिचारः। एतद्व्याप्त्यभ्युपगमेऽनिर्वचनीयरजतसिद्धिमाह—*अत एवेति*॥ *ताम्=अनिर्वचनीयरजतसिद्धिम्। *रजतादौ=देशान्तरस्थरजतादौ। *तदाकारेति*॥ रजताकारेत्यर्थः। *अविद्यावृत्तेरिति*॥ शुक्त्यवच्छिन्नचिन्निष्ठायाः पुरोवृत्तीदमाकारवृत्तितादात्म्यापन्नायाः शुक्तित्वप्रकारकाविद्यावृत्तेरित्यर्थः। तत्संयोगस्य देशान्तरस्थरजतादावसंभवादिति भावः। एवं चोक्ताविद्यावृत्तेः क्वचिदपि संयोगासंभवात् तद्घटितसंबन्धेनोक्तव्याप्तेरनिर्वाहः ; पूर्वानुभूतप्रदेशान्तरस्थातीतरजतस्य तत्र भाने कालिकसंबन्धेन तत्र तस्याभावेन व्यभिचारात्। नचाविद्यावृत्तेरपरोक्षत्वासंभवः ; दोषविशेषजन्यत्वेनेदमाकारवृत्तितादात्म्यापन्नत्वेन, 'रजतं पश्यामी'त्यनुभवेन च तत्सत्त्वादिति पर्यवसितम्। *ननु*इन्द्रियसन्निकर्षरूपकारणबलादुत्पद्यमानायास्तदाकारवृत्तेस्तत्र संयोगादिसंबन्धेनोत्पत्तिसंभवः ; तदविद्यापरिणामरजतसमकालोत्पन्नतदाकारतदविद्यापरिणामवृत्तौ तत्पूर्वमविद्यमानरजत इन्द्रियसन्निकर्षस्यासत्त्वेनान्तःकरणवृत्तिमात्रकरणत्वेन चाकारणत्वात्, कारणान्तरस्याप्यभावात् तस्या एवासंभवात् कथं तद्रजते तस्याः संयोगादिसंबन्धेनोत्पत्तिसंभवः ? 'द्रव्य-गुणादिविषयेष्वि'त्युक्तेः, इत्यत आह—*रजतादेरिति*॥ *यत्किंचिज्ज्ञानीयेति*॥ ईश्वरज्ञानसाधारणेत्यर्थः। तस्य सकलविषयकत्वेन आविरजतविषय-

अद्वैतसिद्धिः

नभ्युपगमे 'इदं रजतमि'त्यपरोक्षज्ञानान्यथानुपपत्त्याऽनिर्वचनीयरजतसिद्धिर्न स्यात्, अर्थं विनाऽप्यपरोक्षत्वोपपत्तेरिति—चेत्, न; 'इदं रजतमहं जानामी'त्यनुसन्धीयमानं यद् ज्ञानविषयत्वम्, तस्याश्रयान्तरानुपपत्त्याऽनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् ॥

तरङ्गिणी

इति न तया विरोधः। *ननु* यदाऽपरोक्षज्ञानम्, तदाऽर्थ इति व्याप्त्यनभ्युपगमे 'इदं रजतमि'त्यपरोक्षज्ञानान्यथानुपपत्त्याऽनिर्वचनीयरजतसिद्धिर्न स्यात्; अर्थं विनाऽप्यपरोक्षत्वोपपत्तेरिति—चेत्, *न*; 'इदं रजतमहं जानामी'त्यनुसन्धीयमानं यद् ज्ञानविषयत्वम्, तस्याश्रयान्तरानुपपत्त्याऽनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् ॥

न्यायामृतकण्टकोद्धारः

ज्ञेयव्याप्यत्वम्, तद्धि यत्किञ्चित्स्वविषयव्याप्यत्वम्। व्याप्तिश्च कालिकी विवक्षिता। नचातीततुच्छादिज्ञानादौ व्यभिचारः; तत्राप्यतीतत्वासत्त्वरूपविषयसत्त्वसम्भवात्॥ नच यावद्विषयव्याप्तिर्विवक्षिता, किन्तु यत्किञ्चिद्विषयव्याप्तिः। तथाच विशेषण-विशेष्यकालान्यतरसत्त्वमात्रेण व्यभिचारवारणसम्भवात् सज्ञातृत्वं स्वज्ञातृव्याप्यत्वमेव। नचोभयत्राप्रयोजकत्वम्; निरुपाधिकसहचारभङ्गरूपतर्कस्य विद्यमानत्वात्। *वस्तुतस्तु—सज्ञातृत्वं सज्ञेयत्वं च ज्ञातृ-ज्ञेयनिरूप्यत्वम्। तद्धि केनचिद् ज्ञेय-ज्ञातृविशिष्टतयाऽनुभूयमानत्वम्। तद्धि ज्ञानस्य स्वभाव एव; 'अस्यात्र ज्ञानमि'ति व्यवहारात्। तथाच ज्ञातृ-ज्ञेयनिरूप्यत्वस्य

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सम्बन्धेनाविद्यावृत्त्युत्पत्तिसम्भव इति भावः। *इत्यनुसन्धीयमानम् = इदमवच्छिन्नचित्तादात्म्यविशिष्टरजतनिष्ठतया ज्ञायमानम् ॥

विट्ठलेशीयटिप्पणी

कत्वात्। स्पष्टा चेयं रीतिः सामान्यलक्षणाग्रन्थे गादाधर्याम्। *अविद्यावृत्त्युत्पत्तिसंभव इति* ॥ तथाच तस्याः संयोगादिसंबन्धेन तत्ररजतादावुत्पत्तिसंभवात् तद्घटितोक्तव्याप्तिनिर्वाहः। इन्द्रियसन्निकर्षस्येव वृत्तिविषयताप्रयोजकस्याविद्यारूपकारणस्यैव वृत्तिसंयोगादावपि प्रयोजकत्वादिति भावः। *मूले—अपरोक्षज्ञानान्यथाऽनुपपत्त्या=रजतापरोक्षज्ञानस्य तत्कालीन-तद्देशीयरजतरूपव्यापकं विनाऽसंभवेन। *अर्थं विनाऽपि=तत्कालीन-तद्देशीयरजतरूपार्थं विनाऽपि। *अपरोक्षत्वोपपत्त्येति* ॥ तत्कालीनरजतज्ञानस्यापरोक्षत्वस्वीकारेऽप्युक्तव्याप्तेरनभ्युपगतत्वेन भङ्गापत्तेरभावेनेत्यर्थः। *मूले*—'इदं रजतं जानामी'त्यत्रेदं-रजतयोः पृथग् ज्ञानेऽन्वये 'इदं जानामि' 'रजतं च जानामी'त्यर्थे गुरुमतसिद्धानुभव-स्मरणात्मकज्ञानद्वयरूपभ्रमानुसन्धाने पर्यवसानात् तद्विषयिस्मरणरूपज्ञानविषयत्वस्य पूर्वानुभूतापणादिस्थरजतेनोपपत्तिसंभवात् 'तदनुपपत्त्याऽनिर्वचनीयरजतसिद्धिरि'त्यसङ्गतम्, अतस्तादात्म्यसंबन्धेनेदंपदार्थपुरोवृत्तिविशिष्टरजतान्वितद्वितीयार्थविषयत्वस्य ज्ञानेऽन्वयो वाच्यः। एवमनुसन्धानं न स्मरणम्; ज्ञानाव्यवहितोत्तरक्षणिकत्वेन तत्संस्काराभावात्, किं त्वनुव्यवसायः, ज्ञानस्वप्रकाशत्वमते व्यवसायो वेत्यभिप्रेत्य व्याचष्टे—*इत्यनुसन्धीयमानमिति* ॥ *इदमवच्छिन्नेति* ॥ पुरोवृत्त्यवच्छिन्नेत्यर्थः। *चिदिति* ॥ घटादिपदानां सिद्धान्ते घटाद्यवच्छिन्नचित्परत्वादिति भावः। *तादात्म्यविशिष्टेति* ॥ तादात्म्येनोक्तचिद्विशिष्टेति समुदायार्थः। *रजतनिष्ठतया = आधेयतासंबन्धेन रजतविशिष्टतया। *ज्ञायमानम् = अनुव्यवसायस्य स्वप्रकाशव्यवसायस्य वोक्तभ्रमसमानकालीनज्ञानस्य विषयः। *मूले—*ज्ञानविषयत्वम्='इदं रजतमि'ति भ्रमविषयत्वम्। *तस्य=पुरोवृत्तितादात्म्यापन्नरजतनिष्ठतया ज्ञायमानस्योक्तभ्रमविषयत्वस्य। *आश्रयान्तरानुपपत्त्या=कल्प्यपुरोवृत्तितादात्म्यापन्नानिर्वचनीयरजतान्यपूर्वानुभूतहट्टादिस्थरजतस्याश्रयत्वासंभवेन। *अनीर्वचनीयेति* ॥ पुरोवृत्तितादात्म्यापन्नेत्यादिः ॥

अद्वैतसिद्धिः

अत एव परोक्षभ्रमेऽप्यनिर्वचनीयार्थसिद्धिः। जन्यापरोक्षत्वेन वाऽर्थव्याप्यता; आर्षज्ञानस्यापरोक्षत्वानभ्युपगमात्। तथाच नानिर्वचनीयरजतसिद्ध्यनुपपत्तिः। एवं सज्ञातृकत्वमपि किं ज्ञातृजन्यत्वम्? ज्ञातृव्याप्यत्वम्? ज्ञातृसमवेतत्वं वा? आद्य ईश्वरज्ञाने व्यभिचारः; ज्ञान-

तरङ्गिणी

अत एव परोक्षभ्रमेऽप्यनिर्वचनीयार्थसिद्धिः। जन्यापरोक्षत्वेन वाऽर्थव्याप्यता; आर्षज्ञानस्यापरोक्षतानभ्युपगमात्। तथाच नानिर्वचनीयरजतसिद्ध्यनुपपत्तिः। एवं सज्ञातृकत्वमपि किं ज्ञातृजन्यत्वं वा? ज्ञातृव्याप्यत्वं वा? ज्ञातृसमवेतत्वं वा? आद्य ईश्वरज्ञाने व्यभिचारः; ज्ञाननित्यत्वस्य साधयिष्यमाणत्वाच्च। द्वितीयेऽप्य-

न्यायामृतकण्टकोद्धारः

ज्ञानस्वभावत्वे मोक्षावस्थायां तदभावे ज्ञानत्वाभाव इति साधूक्तम्—*ज्ञातृ-ज्ञेयविहीनं ज्ञानं न सिद्ध्यतीति*॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तथाच यादृशं रजतं भ्रमेण विषयीक्रियते, तादृशमेव तत् सिद्ध्यति; ज्ञानस्य स्वविषयशूरत्वात्, व्यवहारकाल एव तद्बाधाद् व्यावहारिकत्वं परं तस्य न स्वीक्रियते, किन्तु प्रातीतिकत्वम्। तादृशस्य तस्य भ्रमेणासिद्धौ घटादेरपि रूपादिमतः सिद्धिर्न स्यात्; तज्ज्ञानस्याप्यद्वैतश्रुत्यादिना बाधात्। *यद्वा*—*इत्यनुसन्धीयमानम्=इदंचित्तादात्म्यरूपविषयतावच्छिन्नं यद् रजतचित्तादात्म्यरूपविषयत्वम्, तदाश्रयत्वेन ज्ञायमानम्। तथाच देशान्तरस्थस्य रजतादेर्भ्रमे भाने तदीयचित्तादात्म्यस्येदंचित्तादात्म्यावच्छिन्नत्वासम्भवेन शुक्त्याद्यवच्छिन्नचिति रजताद्युत्पत्तिः स्वीक्रियत इति भावः। अपरोक्षज्ञानस्यार्थव्याप्तता नानिर्वाच्यरजताद्युत्पत्तिसाधिका; परोक्षभ्रमे तदभावात्, अतोऽस्मदुक्तयुक्तिरेव भ्रममात्रे तत्साधिकेत्याशयेनाह—*अत एवेत्यादि*॥ भवदुक्तयुक्तिर्जन्यापरोक्षज्ञानान्तर्भावेणैव व्याप्तिसाधिका। सा च नास्मदनिष्टा; वृत्त्यवच्छिन्नचिद्रूपस्य जन्यत्वेनार्थव्याप्यताया उक्तरीत्या मयाऽपि स्वीकारात्, तावताऽप्यपरोक्षज्ञानत्वोपलक्षितस्य नोक्तव्याप्यतासिद्धिरित्याशयेनाह—*जन्येति*॥ ईश्वरज्ञानं तु यद् अपरोक्षं विद्यमानमात्रविषयकम्, तद् उक्तसम्बन्धेनार्थव्याप्यमेव। *यत्तु* भाविविषयकमनुमितिरूपमतीतविषयकं वा स्मृतिरूपं च विवरणोक्तम्, तस्यार्थाव्याप्यत्वेऽपि नोक्तव्याप्तिहानिरिति भावः। *ननु* तथापि योगजधर्मजन्यापरोक्षज्ञानस्यार्थाव्याप्यत्वाद् नोक्तव्याप्तिः, तत्राह—*आर्षज्ञानस्येति*॥ योगजधर्मजन्यज्ञानस्येत्यर्थः। *अनभ्युपगमादिति*॥ अनावृतसाक्षितादात्म्यविशिष्टविषयकत्वं ज्ञानस्यापरोक्षत्वम्, आर्षज्ञानस्यानावृतत्वसम्पादकत्वेऽपि तद्विषयेऽतीतानागते तत्काले साक्षितादात्म्याभावात् तदंशे तस्य नापरोक्षता, विद्यमानविषयांशे त्वपरोक्षं तद् ज्ञानं तादृशार्थव्याप्यमेवेति भावः। *सिद्ध्यनुपपत्तिः=उक्तव्याप्त्या या सिद्धिः, तदनुपपत्तिः। *ज्ञातृव्याप्यत्वम्=यत्र यद् ज्ञानम्, तत्र समवेतत्वसम्बन्धेन ज्ञातेति व्याप्तिः। *ईश्वरज्ञान इति*॥ तस्य नित्यतावादिमतेनेदम्। वाचस्पतिमते सिद्धान्तेऽपि मायावृत्तिरूपेश्वरज्ञानाभावात्, तन्मतेनापीदम्। नच—तन्मतेऽपि विषयावच्छिन्नचिद्रूपेण ज्ञातृजन्यतेति—वाच्यम्; अविद्याद्यनादिविषयस्यानादित्वेन जन्यत्वाभावेन तदवच्छिन्नचितो

विट्ठलेशीयटिप्पणी

एवं मूलोक्तामनिर्वचनीयरजतसिद्धिं स्फुटयति—*तथाचेति*॥ *यादृशम्=पुरोवृत्तिशुक्तितादात्म्यापन्नम्। *भ्रमेण='इदं रजतमि'ति भ्रमेण। *विषयीक्रियते*॥ 'इदं रजतं जानामी'त्यनुभवबलादिति शेषः। उक्तभ्रमविषयताश्रयत्वेन भ्रमप्रत्यक्षेण गृह्यत इति समुदायार्थः। *तादृशम्=पुरोवृत्तिशुक्तितादात्म्यापन्नमेव। *ननु*—अबाधितप्रमानुभव एव विषयसाधकः, ननु बाधितो भ्रम इत्यत—ज्ञानस्येति॥

***एतावत्येव मातृका***

अद्वैतसिद्धिः

नित्यत्वस्य साधयिष्यमाणत्वाच्च । द्वितीयेऽप्यप्रयोजकता । न तृतीयः ; ज्ञात्रजन्यत्ववद् ज्ञात्र-समवेतत्वस्यापि संभवात्, ज्ञानस्य गुणत्व-क्रियात्वयोरनभ्युपगमेन द्रव्यांश्रयत्वानुमानायोगात्, कदाचिद् ज्ञातृ-ज्ञेयसंबन्धेनैवानुभवस्य विवरणवाक्यस्य चोपपत्तेः । 'अस्ति ब्रह्मे'ति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्वमाह ; नित्यत्वेन तदसंभवात्, किंतु साधुत्वार्थ इति द्रष्टव्यम् ॥

तरङ्गिणी

प्रयोजकता ; न तृतीयः ; ज्ञात्रजन्यत्ववद् ज्ञात्रसमवेतत्वस्यापि सम्भवात्, ज्ञानस्य गुणत्व-क्रियात्वयोरनभ्युपगमेन द्रव्याश्रयत्वानुमानायोगात् । 'अस्ति ब्रह्मे'ति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्वमाह ; नित्यत्वेन तदसम्भवात्, किन्तु साधुत्वार्थः—इति, *अत्र ब्रूमः* ; व्यक्तिं विनाऽपि जातेः प्रलये सत्त्वेऽपि व्यक्त्युपरक्त-बुद्धिविषयत्वं तदाऽप्यक्षतमेव ; ईश्वरादिज्ञानस्यैव तदा तादृशत्वात् । सज्ञेयत्वमपि न ज्ञेयजन्यत्व-व्याप्य-त्वादि, किन्तु ज्ञेयोपरक्तबुद्धिविषयत्वादिकम्, ज्ञेयानुपरक्तापरोक्षाविषयत्वं वा, इति न कोऽपि दोषः ; अन्यथाऽभाव-सादृश्यादेरपि सप्रतियोगिकत्व-ससम्बन्धिकत्वानुपपत्तिः । किंचैवमैक्यस्यापि जीवप्रतियोगिकत्वं न स्यात् ; तद्धि जीवजन्यत्वं वा ? जीवव्याप्यत्वं वा ? नाद्यः ; ऐक्यस्य ब्रह्ममात्रत्वेन जीवाजन्यत्वात्, न द्वितीयः ; यदैक्यम्, तदा जीव इति कालिकव्याप्तेः सर्वमुक्तौ व्यभिचारात् । यत्रैक्यम्, तत्र जीव इति दैशिकव्याप्तेर्जीव एव व्यभिचारात् । तथाच ब्रह्मणि विद्यमानमैक्यं न जीवप्रतियोगिकम्, इति साधु समर्थितो जीवब्रह्माद्वैतवादः !!! एवं सज्ञातृत्वमपि ज्ञात्रुपरक्तबुद्धिविषयत्वं वा, ज्ञात्रनुपरक्तापरोक्षाविषयत्वं वा, इति न कश्चिद् दोषः । नचा'स्ति ब्रह्मे'त्यत्र लकारस्य साधुत्वार्थकत्वम् ; योग-क्षेमसाधारणक्रियासिद्धिं प्रति स्वातन्त्र्य-रूपकर्तृत्वस्य तत्रापि सत्त्वेनार्थसाधुत्वसम्भवे शब्दसाधुत्वस्यानादरणीयत्वात् । तस्मात् साधूक्तम्—"ज्ञानस्य ज्ञातृ-ज्ञेयनिरूप्यस्वभावत्वादि"ति ॥

न्यायामृतकण्टकोद्धारः

*एतेन*—'अस्ति ब्रह्मे'त्यादौ साधुत्वार्थो लकार इति—*प्रत्युक्तम्* ; सत्तायाः कर्तृनिरूप्यत्व-सम्भवात् ॥ यत्तु ज्ञानस्य सज्ञेयत्वं नाम ज्ञेयानुपरक्तबुद्ध्यविषयत्वम्, सज्ञातृत्वं च ज्ञात्रनुपरक्तबुद्ध्यविषय-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

जन्यत्वाभावात् । *ज्ञाननित्यत्वस्येति* ॥ ज्ञानत्वोपलक्षितस्य नित्यत्वस्येत्यर्थः । ज्ञानत्वविशिष्टस्य तु ज्ञातृ-जन्यत्वमिष्टमेव ; विवरणमत ईशस्य मायावृत्त्यवच्छिन्नचिद्रूपज्ञानस्य तत्सम्भवात् । द्वितीयेऽपीत्यादिकं ज्ञानत्वोप-लक्षिताभिप्रायकम् । *ब्रह्मसत्ताम्=ब्रह्मणः सत्ताम्* । *नित्यत्वेन=ब्रह्मसत्ताया अनादित्वेन* । *साधुत्वार्थ इति* ॥ यथा मणिकारादिमते 'चैत्रो जानाती'त्यादौ ज्ञानकर्तृत्वादेरननुभवात्, ज्ञानाश्रयत्वादिलक्षणायां गौरवाच्चावच्छेदकतासम्बन्धेन ज्ञानप्रकारकधीस्वीकाराद् आख्यातं न कर्तृत्वमाह, किन्तु साधुत्वमात्रार्थम् ; तथा प्रकृते ब्रह्मसत्ताया अनादित्वेन तत्कर्तृत्वबोधासम्भवात्, 'घटोऽस्ती'त्यादावपि क्रियाऽभावेन कारकान्वय-बोधासम्भवाद् आश्रयत्वस्यैवाख्यातेन बोधाच्च ब्रह्मास्तिपदाभ्यामखण्डब्रह्मबोधस्वीकारेणाख्यातं साधुत्वमात्रार्थम् ; कल्पितभेदेन ब्रह्मणः स्वात्मकसत्ताश्रयत्वसम्भवेऽपि निर्धर्मितावच्छेदकशाब्दबुद्ध्यसम्भवेनाश्रयत्वस्याप्या-ख्यातेनाबोधात् । ब्रह्मपदस्योत्कृष्टार्थकत्वे तु तत्राश्रयत्वप्रकारकधीरिष्टैव । *ननु*—यथाऽभानापादका-ज्ञानविरोधिचिद् भानम्, अनानन्दापादकाज्ञानविरोधिचिद् आनन्दः ; तथाऽसत्त्वापादकाज्ञानविरोधिचित् सत्ता । तथाच वैयाकरणमते धात्वर्थमुख्यविशेष्यकशाब्दधीस्वीकारात् सत्तामुख्यविशेष्यकब्रह्मकर्तृकत्व-

न्यायामृतसौगन्ध्यम्

किञ्च वैयाकरणरीत्या धात्वर्थविशेष्यकबोधस्वीकारात् सत्तामुख्यविशेष्यकब्रह्मकर्तृकत्व-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रकारकबोधः प्रकृते स्यात्, ब्रह्मनिष्ठोक्तसत्तायाश्च यद्यप्यनादित्वम्, चिदंशे तादृशाज्ञानास्वीकारात्; तथापि तस्याः क्षेमसाधारणसाध्यत्वस्याखण्डधर्मरूपप्रयुक्तत्वस्य सम्भवात्, तस्य च ब्रह्मरूपकर्तृनिरूपितत्वसम्भवादिति—चेत्, *न*; क्रियात्वाभावेन कारकान्वयासम्भवस्योक्तत्वात्। सिद्धकर्तृकत्वं हि यत्र नियमेन सम्भवति, तत्रैव धात्वर्थस्य क्रियारूपत्वं वैयाकरणैः, धात्वर्थविशिष्टाख्यातार्थस्य मीमांसकैश्च स्वीक्रियते। तच्च 'गच्छती'त्यादौ, नह्यसिद्धकर्तारमादाय तत्प्रयोगः सम्भवति। भवत्यस्त्यादौ च न तन्नियमः; 'आकाशमस्ती'तिवदुत्पद्यमानमस्तीत्यादिप्रयोगात्। *तदुक्तं भट्टवार्तिके*—

'सिद्धकर्तृक्रियायोगादाख्यातप्रत्यये सति। सामानाधिकरण्येन करोत्यर्थोऽवगम्यते॥' इति।

सिद्धकर्तृयोगस्यावश्यकत्वे हेतुः—*सामानाधिकरण्येनेति*॥ सिद्धकर्तृनिष्ठस्यैव कर्तृत्वस्य भावनायां सामानाधिकरण्यसम्भवेनेत्यर्थः; स्वयमसिद्धस्य कर्तृत्वासम्भवात्। 'अस्तीत्या'दौ भावनाप्रत्ययाभावः सर्वेषामपि तुल्यः, इत्यसिद्धनिष्ठस्य कर्तृत्वस्य भावनायां सामानाधिकरण्यासम्भवेन क्रियाया अप्रत्यये सर्वेषां मते कर्तृकारकाप्रत्ययोऽपि तुल्य इत्यर्थः। नच—'भूतले घटोऽस्ती'त्यादौ भावनां विनाऽप्याधारकारकस्येव कर्तुः प्रत्ययोऽस्तु, इति—वाच्यम्; क्रियाया एव कारकान्वयित्वेन तदभावे सप्तम्याः सम्बन्धमात्रबोधकत्वात्। *अथ*—'घटो भवती'त्यादौ घटं भावयतीत्यर्थे, भवनेनाक्षिप्तभावनाया आख्यातेन बोधात्। भूधातुनैव कपालभवनस्य करणत्वेन कपालावयवभवनस्येतिकर्तव्यतात्वेन लक्षणया बोधनाद् अंशत्रयविशिष्टभावनाधीः। तथाच भावनाप्रत्ययेनाध्याहृतचैत्रादिपदात् कर्तृप्रत्ययसम्भवः। *उक्तश्चायमपि पक्षो भट्टवार्तिके*—'अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावने'ति, इति—*चेत्*, आस्तामेवम्, सत्तारूपक्रियायाः कर्तृत्वानन्वये प्रकृतार्थे हानिस्तु नैवास्ति, इति सिद्ध उक्तसत्ता ब्रह्माश्रितेति बोधः। *किंच* प्राचीनसिद्धान्ते नोक्तरूपा सत्ता, किन्तु शुद्धचिदेव। यथाह्येकस्या एव चितः कल्पितभेदेनांशत्रयम्—सत्ता, स्फुरणम्, आनन्दश्च। *तदुक्तं वृद्धैः*—

'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥' इति।

न्यायामृतसौगन्ध्यम्

**प्रकारकबोधः प्रकृते स्यात्, ब्रह्मनिष्ठोक्तसत्तायाश्च यद्यप्यनादित्वम्; तथापि क्षेमसाधारणसाध्यत्वस्याखण्डधर्मरूपप्रयुक्तत्वस्य संभवात्, तस्य च ब्रह्मरूपकर्तृनिरूपितत्वसंभवात्।**

***यत्तु*—क्रियाभावे न कारकान्वयसंभवः, सिद्धकर्तृकत्वं हि यत्र नियमेन संभवति, तत्रैव धात्वर्थस्य क्रियारूपत्वं वैयाकरणैः, धात्वर्थविशिष्टाख्यातार्थस्य मीमांसकैश्च स्वीक्रियते; तच्च 'गच्छती'त्यादौ, यत्र नासिद्धं कर्तारमादाय तत्प्रयोगः संभवति। नचास्त्यादौ सिद्धकर्तृकत्वनियमोऽस्ति—इति, *तन्न*; वैयाकरणैरस्त्यर्थस्य क्रियात्वव्यवस्थापनात्(१)। तथाहि—धातूपात्तव्यापाराश्रयो हि कर्ता, 'अस्ति' इत्यादौ तादृशव्यापाराभावात् कथमुपपत्तिरित्याशङ्क्य,**

**"अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना। अन्यत्राशेषभावात्तु सा तथा न प्रकाशते॥"**

सौगन्ध्यविमर्शः

(१) सौगन्ध्यकारा हि मीमांसकदृष्ट्याऽद्वैतिनां 'चिदेव सत्ते'ति सिद्धान्तदृष्ट्या च यद्यपि 'ब्रह्मास्ती'त्यादिप्रयोग उपपन्नः; तथापि वैयाकरणदृष्ट्या तदुपपत्तिर्न सम्भवतीति वदन्ति। अस्त्यर्थस्य क्रियात्वं वैयाकरणाभिमतं न वयमपि वारयामः, ब्रह्मरूपायास्तु सत्ताया असधात्वर्थत्वानङ्गीकारः; असस्वापादकाज्ञानाविषयत्वस्यैवासधात्वर्थत्वात्। सूचितं चैतद् लघुचन्द्रिकायाम्—'तत्र सत्तांशस्य व्यवहारे' इत्यादिना। वस्तुतस्तु—नासधातुप्रयोगस्थले भावनाप्रतीतिः; भावनायाः करोत्यर्थव्यापाररूपायाः सकर्मकत्वेनासधात्वर्थत्वाभावात्, अन्यथा किं करोति? इति प्रश्नेऽस्तीति समाधानापत्तेः। इष्टापत्तिस्तु

न्यायामृतम्

किंचात्मा ज्ञानं चेत्, प्रमा ? भ्रमो वा ? नाद्यः ; तद्वेद्यस्याविद्यादेस्तात्त्विकत्वापातात्, नान्त्यः ; दोषाजन्यत्वात् । *ननु*—अन्तःकरणवृत्तिप्रतिबिम्बितस्स प्रमा, अविद्यावृत्तिप्रतिबिम्बितस्तु भ्रम इति—चेत्, *न* ; स्वभावप्रश्नं प्रत्यस्यानुत्तरत्वात्, स्वभावतो रूपद्वयहीनश्चेत्, स्वभावतो

अद्वैतसिद्धिः

*ननु*—प्रमा-भ्रमभिन्नं न ज्ञानम्, नचात्मस्वरूपं ज्ञानं प्रमा ; तद्विषयस्याविद्यादेस्तात्त्विकत्वा-

तरङ्गिणी

ज्ञान-विशेषाभ्यां बहिर्भूतत्वादपि नात्मा ज्ञानमित्याह—*किंचात्मेति* ॥ *तद्वेद्यस्येति* ॥ प्रमायाः सदर्थकत्वनियमादित्यर्थः ॥ *दोषाजन्यत्वादिति* ॥ रूपप्रागभावकाले पृथिवीत्वलिङ्गकरूपानुमितिरयथार्थपरामर्शरूपदोषाजन्यापि पक्षतावच्छेदकावच्छेदेन साध्याभाववति लिङ्गज्ञानरूपदोषजन्यैव । विसंवादिशुकवाक्यजन्यज्ञानमयथार्थवक्तृवाक्यार्थज्ञानरूपदोषाजन्यमप्ययथार्थयोग्यताज्ञानरूपदोषजन्यम्, इति न भ्रमस्य दोषजन्यत्वव्यभिचार इत्यर्थः ॥ *स्वभावतो रूपद्वयहीनश्चेदिति* ॥

न्यायामृतकण्टकोद्धारः

त्वम्—इति, *तन्न* ; ज्ञानपदजन्यबोधस्य ज्ञात्रनुपरक्तबुद्ध्यविषयत्व-ज्ञेयानुपरक्तबुद्ध्यविषयत्वयोरभावेऽपि न सज्ञेयत्वानापत्तेरिति । *किञ्चात्मा ज्ञानं चेदिति* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तत्र सत्तांशस्य व्यवहारेऽसत्त्वापादकाज्ञानं प्रतिबन्धकम्, स्फुरणांशस्याभानापादकमज्ञानम्, आनन्दांशस्यानानन्दापादकाज्ञानम्, सत्तांश एव ज्ञानांशः, तस्य त्रितयस्याखण्डस्यैव 'अस्ति-स्फुरत्या-नन्दतिवाच्यत्वेन 'घटोऽस्ती'त्यादौ शुद्धचित्प्रकारको बोधः । 'घटं जानामी'त्यादौ च ज्ञाने घटादेर्नावान्तरबोधः ; निर्धर्मितावच्छेदकबोधासम्भवात्, किन्तु 'विशेष्ये विशेषणम्, तत्रापि विशेषणान्तरमि'ति न्यायेन घटज्ञानप्रकारकधीः । 'घटस्य ज्ञानमि'त्यादौ तु ज्ञानपदं षष्ठ्या ज्ञानीयविषयितालक्षकत्वे तात्पर्यग्राहकम्, नतु ज्ञानांशबोधकम् ; निर्धर्मितावच्छेदकबोधासम्भवात् । एवञ्च 'ब्रह्मास्ती'त्यादौ ब्रह्मणि सत्ताश्रयत्वबोधे निर्धर्मितावच्छेदकबोधापत्त्या, वैयाकरणरीत्या सत्तायां ब्रह्माश्रयकत्वबोधेऽपि तदापत्त्या, सत्तायां ब्रह्मकर्तृकत्वबोधे बाधस्याप्यापत्त्या, "सत्यं ज्ञानमि"त्यादिवाक्यवदखण्डार्थकत्वात्—'एको द्वावि'त्यादौ सर्वमतेष्विव प्रत्ययः साधुत्वार्थ इति भावः ॥

*प्रमा=त्रिकालाबाध्यविषयकत्वघटितप्रमात्वाश्रयः । *दोषेति* । सिद्धान्ते प्रमात्वस्य स्वतस्त्व-

न्यायामृतसौगन्ध्यम्

इत्युक्तम् । *अयमर्थः*—अस्त्यादौ='असभुवी'त्यादौ, *धर्म्यंशे=धर्मिभागे, *भाव्ये=भाव्यत्वेन विवक्षिते, *अस्त्येव=प्रतीयत एव । स ततो गतो न वेति प्रश्ने 'महता यत्नेन तिष्ठती'ति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव, उत्पत्त्यादिबोधने तु सुतराम् ; "रोहितो लोहितादासीत् सिन्धुस्तस्य सुतोऽभवदि"त्यादिदर्शनात् । किञ्चात्र भावनाविरहे लडादिव्यवस्था न स्यात् ; तस्या एव वर्तमानत्वादिविवक्षायां तद्विधानात् ॥

*नन्वेवम्*—'अस्ती'त्यत्र स्पष्टं कुतो न बुध्यत इति ? अत आह—*अन्यत्रेति* ॥ अशेषभावनायाः फलसमानाधिकरणत्वाद् भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोष इति भावः । *नन्वेवम्*—किं करोति ? इति प्रश्ने 'पचती'त्युत्तरस्थानेऽस्तीत्युत्तरमपि स्यादिति—चेत्, *इष्टापत्तिः* ; आसन्नविनाशकं कञ्चिदुद्दिश्य 'किं करोती'ति प्रश्नेऽ'स्ती'त्युत्तरस्य सर्वसंमतत्वात्, इतरत्र तु सुस्थतया निश्चिते किं करोति ? इति प्रश्नः पच्यादिविशेषगोचर एवेत्येव धारणादस्तीति नोत्तरमिति । *ननु*—

अद्वैतसिद्धिः

पातात्, नचाप्रमा ; दोषजन्यत्वापातादिति—चेत्, *न* ; तार्किकसिद्धेश्वरज्ञानवद् घटादिनिर्विकल्पकवच्च स्वभावत उभयवैलक्षण्येनाप्युपपत्तेः, तत्रापीश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य, भ्रमत्वे दोषजन्यत्वस्य

तरङ्गिणी

अत्र वदन्ति—(सि०) तार्किकेश्वरज्ञानवद् घटादिनिर्विकल्पकवच्च स्वभावत उभयवैलक्षण्येनाप्युपपत्तिः ; तत्रापीश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य, भ्रमत्वे दोषजन्यत्वस्य चापत्तेः, निष्प्रकारके च निर्विकल्पके तद्वति तत्प्रकारकत्वस्य, तदभाववति तत्प्रकारकत्वस्य चानुपपत्तेः, जन्यसविकल्पकत्वेन भ्रम-प्रमाऽन्यतरत्वनियमे चास्माकं क्षत्यभावात्, विलक्षणवृत्तिद्वयोपरागेण स्वभावतो भ्रम-प्रमाविलक्षणस्याप्यात्मज्ञानस्य तदुभयरूपेण व्यवहारोपपत्तेः—इति, *अत्र ब्रूमः* ; न तावत् तार्किकमते गुणजन्यतानवच्छेदकमपि प्रमात्वं गुणजन्य-

न्यायामृतकण्टकोद्धारः

*ननु* तार्किकसिद्धेश्वरज्ञानवद् घटादिनिर्विकल्पकवच्च स्वभावत उभयवैलक्षण्येनाप्युपपत्तिः, तत्रापीश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य, भ्रमत्वे दोषजन्यत्वस्य चापत्तेः। निष्प्रकारके च निर्विकल्पके तद्वति तत्प्रकारकत्वस्य तदभाववति तत्प्रकारकत्वस्य चानुपपत्तेः, जन्यसविकल्पकत्वेन भ्रम-प्रमान्यतरत्वनियमे चास्माकं क्षत्यभावात्, विलक्षणवृत्तिद्वयोपरागेण च स्वभावतो भ्रम-प्रमाविलक्षणस्याप्यात्मज्ञानस्य तदुभयरूपेण व्यवहारोपपत्तेरिति—चेत्, *नैवम्* ; दृष्टान्त-दार्ष्टान्तिकयोर्महद्-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्वीकारेण गुणजन्यतानवच्छेदकत्वेन प्रमाया गुणजन्यत्वं नापादितम्, भ्रमस्य तु दोषजन्यत्वं सिद्धान्ते स्वीक्रियते। ज्ञानसामान्यसामग्र्या प्रमात्वविशिष्टमेव स्वकार्यतावच्छेदकावच्छिन्नं जन्यत इत्युत्सर्गः, दोषसहकृतया तु तया भ्रमत्वविशिष्टमित्यपवाद इति हि सिद्धान्तः। *स्वभावतः=वृत्त्यनुपरक्तचित्स्वभावेन। *उभयवैलक्षण्येनेति*॥ प्रमात्व-भ्रमत्वशून्यत्वेनेत्यर्थः। 'वैलक्षण्येनापी'त्यपिशब्देनेदं सूचितम्। घटाद्याकारवृत्ताविव घटाद्यवच्छिन्नचिति व्यावहारिकप्रमात्वं सम्भवति, गुणजन्यता तु सिद्धान्ते नास्त्येव, तेनाविद्याद्यवच्छिन्नचिद्रूपेण चितोऽनादित्वेऽपि न क्षतिः। *वस्तुतस्तु—अविद्यादेरज्ञातत्वाभावेनैव तदवच्छिन्ना चिद् न प्रमा। ब्रह्मसाक्षात्कारोत्तरं तत्र भ्रमत्वसिद्धावपि न क्षतिः ; अविद्या-काम-कर्मरूपदोषजन्यत्वस्य क्षेमसाधारणस्य सम्भवात्। शुक्तिरूप्याद्यवच्छिन्नचिद्रूपेण तु चिद् आगन्तुकदोषजन्येति। *ननु*—तार्किकमत ईशज्ञानं प्रमैव, यदि हि प्रमात्वं सर्वप्रमासाधारणं गुणजन्यतावच्छेदकं तार्किकमते स्यात्, तदा तस्य नित्यसाधारणतावारणाय जन्यत्वघटितत्वमुच्येत ; तत्तु न सम्भवति ; प्रमामात्रे गुणस्यानुगतस्य कारणत्वासम्भवात्। उक्तञ्च मणौ—'प्रमामात्रे नानुगतो गुणः, किन्तु तत्तत्प्रमायां भूयोऽवयवेन्द्रियसन्निकर्ष-यथार्थलिङ्ग-सादृश्य-वाक्यार्थज्ञानानां यथायथं गुणत्वमि'ति, तत्राह—*तत्रापीति*॥ तार्किकमतेऽपीत्यर्थः। यथा मन्मत आत्मरूपज्ञानस्य प्रमात्वादिस्वीकारे दूषणमुक्तम्, तथा तन्मत ईशज्ञानस्य

न्यायामृतसौगन्ध्यम्

भावनायाः फलनियतत्वात्, फलाश्रयस्य कर्मत्वात्, सर्वेषां कर्मवाचकत्वे सकर्मकत्वापत्तिरित्यत आह—

"फल-व्यापारयोरेकनिष्ठतायामकर्मकः। धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः॥"—इति॥

*एकनिष्ठतायाम्=एकमात्रनिष्ठतायाम् ; भिन्नाधिकरणावृत्तितायामिति यावत्। तेन गम्यादौ फलस्य कर्तृनिष्ठत्वेऽपि नातिव्याप्तिः। "अकर्मको यथा स्वापिः"। *तयोः फल-व्यापारयोः, आश्रयभेदे सकर्मक इत्यर्थः॥

किञ्च प्रमा-भ्रमभिन्नं न ज्ञानम्। नचात्मरूपं ज्ञानं प्रमा ; तद्विषयस्याविद्यादेस्तात्त्विकत्वापातात्। नचाप्रमा ; दोषजन्यत्वापातात्, उभयविलक्षणञ्चेत्, ज्ञानमेव न स्यात्। नच—तार्किकेश्वरज्ञानवद् निर्विकल्पकवच्च स्वभावाद् उभयवैलक्षण्यमिति—वाच्यम् ; तार्किकेश्वरज्ञानस्य हि यथा प्रमात्वम्,

तरङ्गिणी

त्वप्रयुक्तम् , येनेश्वरज्ञाने प्रमात्वप्रयोजकस्य गुणजन्यत्वस्याभावात् प्रमात्वं न स्यात् , किन्तु तत्तत्प्रमात्वमेव । अत एव—"प्रमामात्रे नानुगतो गुणः" इति मणिकृतोक्तम् । तथाच गुणाजन्यमपीश्वरज्ञानं दोषाजन्यत्वात् प्रमैव, इति न तस्योभयबहिर्भावः । अत एव संवादिशुकवाक्यजन्यज्ञाने भगवद्यथार्थवाक्यार्थज्ञानस्य गुणत्वमुक्तं नैयायिकैः । अत एव च नित्यसाक्षात्कारिप्रमाया आश्रयत्वेनेश्वरः प्रत्यक्षप्रमाणमित्युक्तमुदयनाचार्यैः । अत एवेश्वरप्रमाया अनुगतत्वात् तद्विषयत्वरूपं प्रमेयत्वमनुगतमित्याहुर्मणिकृतः । तद्वति तत्प्रकारकज्ञानत्वेऽपि "*ननु* नेदं प्रामाण्यम् ; स्मृत्यामतिव्याप्तेः, निर्विकल्पकाव्याप्तेः, इत्याशङ्क्य, निष्कम्पप्रवृत्त्यौपयिकमिदं पारिभाषिकं प्रामाण्यम्, नतु मुख्यमिति समाहितं तार्किकैः । अतो निर्विकल्पकमपि यथार्थानुभवत्वादिमुख्यप्रमात्वलक्षणयोगात् प्रमैव, इति न तस्याप्युभयबहिर्भावः । तस्मादीश्वरज्ञानवद् निर्विकल्पकवद् आत्मरूपज्ञानमप्युभयबहिर्भूतमेवेत्युक्तिरेव प्रमाणबहिर्भूता, इति साधूक्तम्—"स्वभावतो रूपद्वयहीनश्चेत्, स्वभावतो ज्ञानमेव न स्यादि"ति ॥

न्यायामृतकण्टकोद्धारः

**ईश्वस्यात् । तथाहि—तार्किकमते प्रामाण्यस्य परतस्त्वेन प्रमाया गुणजन्यत्वनियमात् , ईश्वरज्ञानस्य गुणाजन्यत्वेन प्रमात्वासम्भवेऽप्यावयोर्मते प्रामाण्यस्य स्वतस्त्वेनात्मरूपज्ञानस्य गुणाजन्यत्वेऽपि प्रमात्वोपपत्तेः, निर्विकल्पकस्य च स्वरूपेणानङ्गीकारात् । किञ्च प्रमामात्रेऽनुगतकारणाभावेन प्रमात्वस्य न्यायमतेऽपि कार्यतानवच्छेदकत्वेन गुणजन्यत्वविरहेण प्रमात्वविरहस्य वक्तुमशक्यत्वात् । विशेष्यावृत्त्यप्रकारकत्व-भ्रमभिन्नज्ञानत्वादिरूपप्रमात्वस्येश्वर-निर्विकल्पकज्ञानयोः सम्भवाच्च । *अत एवोक्तमुदयनेन*—"प्रमाश्रयत्वेनेश्वरः प्रमाणमि"ति ॥**

गौडब्रह्मानन्दी ( कुसुमचन्द्रिका )

तत्स्वीकारे गुणजन्यत्वाद्यापत्तिरित्यर्थः । यद्यपीह प्रत्यक्षानुमित्यादिसाधारणं घटप्रमात्वं नानुगतगुणजन्यतावच्छेदकम् ; तथापि घटीयप्रत्यक्षप्रमात्वं भूयोऽवयवेन्द्रियसन्निकर्षजन्यतावच्छेदकं वाच्यमेव । तस्य च नित्येश्वरधीसाधारणस्य जन्यतावच्छेदकत्वासम्भवेन जन्यत्वघटितत्वमावश्यकम् । अत एव—"तद्वति तत्प्रकारकज्ञानत्वरूपं प्रमालक्षणमुक्त्वा 'तत्प्रकारकत्वं तद्वैशिष्ट्यविषयकत्वम्, तज्ज्ञानजन्यत्वं वा ; ईश्वरस्य तद्वैशिष्ट्यविषयकं ज्ञानं न तु तत्प्रकारकम्, निर्विकल्पकं च प्रमाऽप्रमाबहिर्भूतम्, व्यवहारानङ्गत्वात्'—*इत्युक्तं मणौ* ॥ *व्यवहारानङ्गत्वात् = गुणजन्यतावच्छेदकप्रमात्वविशिष्टतया, विप्रतिपत्तिः=व्यवहारः, तदविषयत्वाद् ईश्वरज्ञानं निर्विकल्पकं च प्रमाऽप्रमाबहिर्भूतमित्यर्थः । किंच 'प्रमामात्रे नानुगतो गुणः' इत्यादिमणिवाक्यं प्रत्यक्षानुमित्यादिसाधारणघटादिप्रमात्वं न गुणजन्यतावच्छेदकमित्येतत्परम् । *दीधितौ हि तत् तथैव व्याख्यातम्*—प्रत्यक्षादिप्रमासु गुणविशेषाणां हेतुत्वे सिद्धे घटप्रमात्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्त्वेन घटप्रमात्वावच्छिन्नं प्रति कारणता सम्भवति, नतु भूयोघटावयवेन्द्रियसन्निकर्षत्वादिरूपेण ; अननुगमात्, इत्यभिप्रायकं 'प्रमामात्रे' इत्यादि वाक्यम्, *वस्तुतो* घटप्रमासामान्ये घटप्रकारकमीश्वरज्ञानं हेतुः, घटाभावभ्रमसामान्ये दोषोऽपि तत्रैव, विशेषणसंसृष्टासंसृष्टविशेष्यज्ञाने वा गुण-दोषौ । लौकिकसन्निकर्षवत् सामान्यलक्षणाऽपि निर्विकल्पकहेतुः, अप्रसिद्धसाध्यकानुमितिस्वीकारे तु विशेष्यसंसृष्टासंसृष्टविशेषणज्ञाने गुण-दोषौ, इत्यादि । *उत्पत्तिवादे मिश्रैरप्युक्तम्—'कार्ये प्रमासामान्य ईश्वरीयज्ञानं गुणः'—इति । यत्तु—समीचीनो ह्यनुभवः प्रमा, नतु तत्रानित्यत्वं विशेषणम् ; व्यर्थत्वात् ; तत्करणं प्रमाणम् । नच—एवम्—'आप्तप्रामाण्यादि'ति गौतमसूत्रविरोधः ; तेन हि आप्तस्येश्वरस्य

सौगन्ध्यविमर्शः

यदि भवदिष्टाभिप्रायेण, तर्हि तु शान्तं पापम्, यदि वैयाकरणरीत्या, तर्हि तु नेदं तदिष्टम् । आसन्नमरणे किं करोति ? इति प्रश्ने 'अस्ती'त्युत्तरं तु असधातुना जीवत्यर्थविवक्षयैव ; इति न कोऽपि दोषः ॥

न्यायामृतम्

ज्ञानमपि न स्यात् । न तृतीयः ; निरस्तत्वात् । चतुर्थेऽपि न तावदात्मत्वं जातिविशेषः ; आत्मन एकत्वात्, विशिष्टात्मनां भेदेऽपि तेषां पक्षनिक्षिप्तत्वात्, नापि ज्ञातृत्वं वा, ज्ञानत्वं वा, स्वप्रकाशत्वं

अद्वैतसिद्धिः

चापत्तेः, निष्प्रकारके च निर्विकल्पके तद्वति तत्प्रकारकत्वस्य, तदभाववति तत्प्रकारकत्वस्य चानुपपत्तेः, जन्यसविकल्पकत्वेन भ्रम-प्रमान्यतरत्वनियमे चास्माकं क्षत्यभावात्, विलक्षणवृत्तिद्वयोपरागेण च स्वभावतो भ्रम-प्रमाविलक्षणस्याप्यात्मज्ञानस्य तदुभयरूपेण व्यवहारोपपत्तेः । नच—ज्ञानपदवाच्य-भिन्नत्वविवक्षायामुपाधेरपि ज्ञानपदवाच्यत्वात् तत्रासिद्धिः, ज्ञानपदलक्ष्यभिन्नत्वविवक्षायां तु घटादेरपि

तरङ्गिणी

*निरस्तत्वादिति* ॥ अस्वप्रकाशत्वं दृश्यत्वमित्यत्रेति शेषः ॥ *आत्मन एकत्वादिति ॥ तथाचात्मत्वरूपजातिशून्यत्वादित्यस्य हेतोरात्मनि व्यभिचार इत्यर्थः ॥ विशिष्टात्मनामिति* ॥ तथात्र विशिष्टात्मनि निरुक्तहेतुरसिद्ध इति भावः ॥ *नापि ज्ञातृत्वं चेति* ॥ आद्यस्याऽमर्थेऽसिद्धिः, द्वितीयस्य वृत्तिज्ञाने, तृतीयस्य घटादावविद्यादावसिद्धिः, शुक्तिरूप्ये साधनवैकल्यं चेत्यादिना निरस्तत्वादित्यर्थः ॥

न्यायामृतकण्टकोद्धारः

यच्च—जन्यसविकल्पकत्वेनेत्यादि, *तन्न* ; तादृशनियमस्यास्माभिरनङ्गीकरणात् । तथाच मूलोक्त-ज्ञानत्वाभावापादनं साध्विति ॥

*ज्ञानत्वं चेति*॥ *ननु* ज्ञानत्वमेवात्मत्वम्, तद्भिन्नत्वं हेतुः । नच—ज्ञानपदवाच्यभिन्नत्वविवक्षाया-मुपाधेरपि ज्ञानपदवाच्यत्वात् तत्रासिद्धिः, ज्ञानपदलक्ष्यभिन्नत्वविवक्षायां तु घटादेरपि ज्ञानपदलक्ष्यत्वात् तत्राप्यसिद्धिरिति—वाच्यम्; ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वस्य विवक्षायामुक्तदोषाभावात् । एव-मानन्दभिन्नत्वरूपमनात्मत्वमुपपाद्यमिति—चेत्, *मैवं भाषिष्ठाः* ; लक्षणया ज्ञानपदजन्यप्रतीति-विशेष्यत्वस्य घटादावपि सत्त्वेनासिद्ध्यपरिहारात्, 'वचनवृत्त्ये'ति विवक्षायामात्मन्यपि तादृश-प्रतीतिविशेष्यत्वाभावेन व्यभिचारापत्तेरित्येव ॥ आनन्दभिन्नत्वरूपमनात्मत्वमप्युक्तदोषदुष्टम्, इति

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रामाण्यमावेदितम्, नतु प्रमातृत्वम्, प्रमातृत्वसत्त्वे तदेवोक्तं स्यादिति—वाच्यम् ; 'प्रमासमवायात् प्रमातृत्वस्यैव प्रमाया अयोगव्यवच्छेदेन प्रमाणत्वस्यापि सम्भवात्'—#इति कुसुमाञ्जलावुक्तम्, तद् गुणजन्यतावच्छेदकत्वरूपपरतस्त्वायोग्यं चतुर्विधत्वेन विभज्यमाने प्रमाणे घटकं यत् प्रमात्वम्, तदभि-प्रायकम् ; तत्रैवानित्यत्वप्रवेशवैयर्थ्यस्य सङ्गतत्वात् । यदपि—निर्विकल्पकमपि प्रमा, विशेष्यावृत्त्य-प्रकारकत्वरूपं प्रमात्वं निर्विकल्पकेऽप्यस्ति, इति कथं तत् प्रमाबहिर्भूतम् ? इति, तन्न ; 'विशेष्यावृत्ती'त्यादेः स्वतो ग्राह्यत्वविप्रतिपत्तिरूपव्यवहारानङ्गत्वेन तद्विशिष्टस्यापि निर्विकल्पकस्य तादृशव्यवहाराङ्ग'तद्वती'त्यादि-प्रमात्वप्रत्याख्याने बाधकाभावात्, तदिदमुक्तम्—*निष्प्रकारके चेत्यादि* ॥ *विलक्षणेत्यादि* ॥ *स्वभावतः=वृत्त्यनुपरक्तचिद्रूपेण । प्रमा-भ्रमविलक्षणस्यापि *वृत्तिद्वयोपरागेण=प्रमा-भ्रमरूपविलक्षणवृत्त्युपरक्त-रूपेण *तदुभयरूपेण=प्रमात्व-भ्रमत्वोभयरूपेण व्यवहारोपपत्तेरित्यर्थः । *ज्ञानपदवाच्येति* ॥ ज्ञाधातु-

न्यायामृतसौगन्ध्यम्

तथोपपादितं सौरभे । निर्विकल्पकज्ञानमपि प्रमा ; विशेष्यावृत्त्यप्रकारकज्ञानत्वरूपं प्रमात्वं हि निर्विकल्पक ईश्वरज्ञाने चास्ति ॥

*यत्त*—'विशेष्यावृत्ती'त्यादेः स्वतो ग्राह्यत्वविप्रतिपत्तिरूपव्यवहारानङ्गत्वेन तद्विशिष्टस्यापि निर्वि-कल्पकस्य 'तद्वती'त्यादिप्रमात्वप्रत्याख्याने न बाधकमस्तीति, *तन्न*; त्वदभिमतब्रह्मरूपज्ञानस्य विशेष्या-

न्यायामृतम्

वा ; निरस्तत्वात्, नाप्यनानन्दत्वम् ; जन्मादिमत्यनात्मनि वैषयिकानन्देऽनानन्दत्वासिद्धेः, तस्याप्यात्मत्वे 'नीरपानजात् क्षीरपानजं सुखमधिकमि'त्यनुभवेन "सैषाऽऽनन्दस्य मीमांसा भवती"त्यादिश्रुत्या साधनतारतम्यादियुक्त्या च सिद्धमानन्दतारतम्यं च न स्यात्, अखण्डे स्वरूपानन्देऽभिव्यक्तितारतम्यस्याप्ययोगात्, विरोधिनो दुःखस्य सर्वात्मनाऽभावेऽपि सुखे तारतम्यानुभवाच्च, अन्तःकरणवृत्तिरूपज्ञानवद् अन्तःकरणवृत्तिरूपसुखाभावे—'अहं सुखी'त्यनुभवायोगाच्च, अनानन्दत्वस्य मिथ्यात्वं प्रत्यप्रयोजकत्वाच्च ।

तरङ्गिणी

*जन्मादिमतीति* ॥ जन्मादिमत्त्वमनात्मत्वं च वैषयिकानन्दस्य पक्षत्वोपपादनाय । *ननु* नात्मस्वरूपातिरिक्तो वैषयिकानन्दोऽस्ति ; "विषयसम्बन्धेनाप्यात्मस्वरूपानन्द एवाभिव्यज्यते" इति विवरणोक्तेः, इत्यत आह—*तस्यापीति* ॥ तथाच वैषयिकानन्दस्य विपक्षत्वात् तत्र हेत्वसिद्धिर्न दोष इति भावः ॥ *नीरपानजादिति* ॥ तथाच तारतम्यवत्त्वाद् वैषयिकानन्दस्य शब्दादिवद् नात्मरूपतेति भावः । *ननु* वैषयिकानन्दे तारतम्यमसिद्धमित्याशङ्क्यानुभवेन श्रुत्या युक्त्या च सिद्धमित्युक्तम् । आनन्दतारतम्यश्रुतिरपि परमते वैषयिकानन्दपरेति श्रुतिग्रहणम् । अग्निहोत्र-वाजपेयजन्यसुखम्, तारतम्यवत्, उत्कृष्टापकृष्टसाधनजन्यत्वात् ; तादृशपाकजरूपवत्, अन्यथा बह्वायाससाध्ये वाजपेयादौ फलभूमानं विनाऽननुष्ठानमापद्येत । तदुक्तमर्थवादपादे वार्तिककृता—"कर्मणामल्प-महतां फलानां च स्वगोचरे । प्रवृत्तिस्थानसामान्यादविशेषेऽपि चोदिते ॥" इति । *ननु* नानन्दे तारतम्यम्, किंत्वभिव्यक्तितारतम्यमेवानन्द उपचर्यते, उक्तानुभवादिकमपि तदभिव्यक्तितारतम्येनान्यथासिद्धम्, इत्यत आह—*अखण्ड इति* ॥ अखण्डैकरसेऽभिव्यक्त्यनभिव्यक्त्योरयोगात्, तथात्वे सखण्डत्वापत्तिरित्यर्थः । *ननु* नानन्दे स्वरूपकृतं वा तदभिव्यक्तिकृतं वा तारतम्यम्, किंतु विरोधिनो दुःखस्याल्पत्व उत्कृष्टानन्दः, तस्याल्पतरत्व उत्कृष्टतर आनन्दः, तस्याल्पतमत्व उत्कृष्टतम आनन्दः, इति स्वरूपानन्देऽपि तारतम्यविरोधिदुःखनिबन्धनं युज्यत इत्यत आह—*विरोधिन इति* ॥ विरोधिनो दुःखस्य सर्वात्मना निवृत्तावप्यानन्दे तारतम्यानुभवात् स्वरूपानन्दे च तदयोगात् तदतिरिक्तो वैषयिकानन्दोऽस्तीति वक्तव्यम् । तथाच तत्रानानन्दत्वहेतुरसिद्ध इत्यर्थः । वैषयिकानन्दस्य स्वरूपानन्दाद् भेदेनानुभूयमानत्वादपि तदतिरिक्तो वैषयिकानन्दोऽस्तीति वक्तव्यमित्याह—*अन्तःकरणेति* ॥ यथा स्वरूपज्ञानातिरिक्तमन्तःकरणवृत्तिरूपं ज्ञानं 'जानामी'त्यनुभवविषयोऽङ्गीक्रियते, तथा 'अहं सुखी'त्यनुभवबलेन स्वरूपानन्दातिरिक्तं वैषयिकं सुखमप्यङ्गीकार्यम् । *अन्तःकरणवृत्तिरूपसुखाभावे=अन्तःकरणवृत्तिरूपसुखानङ्गीकारे । *अहं सुखीत्यनुभवायोगादिति* ॥ स्वस्मिन् स्ववत्ताया बाधितत्वादित्यर्थः । तथाच वैषयिकानन्दे हेतोरसिद्धिरिति भावः ॥ *अनानन्दत्वस्येति* ॥

न्यायामृतकण्टकोद्धारः

यत्किञ्चिदिति । *जन्मादिमतीति* ॥ नच—आनन्दस्यानात्मत्वे जन्मादिमत्त्वं न हेतुः, आनन्दोपाधिमात्रस्यैवोत्पत्ति-विनाशप्रतियोगित्वेनानन्दस्य जन्मादिमत्त्वाभावादसिद्धो हेतुरिति—वाच्यम् ; उपाध्यनुसन्धानाभावेऽप्यानन्दस्यैवोत्पत्ति-विनाशप्रतियोगित्वस्य सर्वानुभवसिद्धत्वादिति ॥

*यच्च*—धर्मिसमसत्ताकज्ञानभिन्नत्वं हेतुः, तेन ब्रह्मणि न व्यभिचारः—इत्युक्तम्, *तन्न* ; दृष्टान्ते साधनवैकल्यापत्तेरिति ॥ *ननु* आनन्दे स्वरूपतस्तारतम्याभावेऽपि क्वचिद् अल्प आनन्दः, क्वचिद् बहुः, इति तारतम्यानुभवस्त्वभिव्यक्तिमात्रेण भविष्यतीत्यत आह—*अखण्ड इति* ॥ *ननु* दुःखाभावतारतम्येनैव सुखतारतम्यव्यवहार इत्यत आह—*विरोधिनो दुःखस्येति* ॥ *अनानन्दत्वस्येति* ॥ पञ्चमप्रकाराविद्यानिवृत्तौ तुच्छे चैवं व्यभिचारश्चेत्यपि बोध्यम् ॥ नच—अज्ञानकाल-

### न्यायामृतम्

नाप्यहंत्वम् ; तदभावस्याहंकारेऽसिद्धेः, आत्मनि व्यभिचाराच्च । नापि प्रत्यक्त्वम् ; उक्तादन्यस्य तस्याभावात्। नाप्यपरिच्छिन्नत्वम् ; निरसिष्यमाणत्वात् । नाप्यबाध्यत्वम् ; हेतोः साध्यावैशिष्ट्यात् । नाप्यात्मशब्दवाच्यत्वम् ; अवाच्य आत्मनि हेतोर्व्यभिचारात्, आत्मशब्दवाच्ये देहादावसिद्धेश्च । नापि तल्लक्ष्यत्वम्, तत्प्रतिपाद्यत्वमात्रं वा ; इन्द्रियादावात्मशब्दलक्ष्ये हेतोर्भागासिद्धेः । नापि पराभिप्रेतम् ; मया ज्ञातृत्वमात्मत्वमित्यङ्गीकारात् । तस्माद् न चतुर्थः । नापि पञ्चमः ; मयाऽज्ञातृत्वं जडत्वमित्यङ्गीकारात् । *एतेन*—तत्त्वशुद्ध्युक्तोऽचेतनत्वहेतुरपि—*निरस्त इति* ॥

---

### तरङ्गिणी

आनन्दभिन्नत्वस्येत्यर्थः ॥ *आत्मनीति* ॥ अहंकारवृत्त्यहंत्वस्याभाव आत्मन्यस्ति, इति तत्र व्यभिचार इत्यर्थः ॥ *उक्तादन्यस्येति* ॥ आत्मत्वानन्दत्वाहंत्वादेः सकाशादन्यस्य प्रत्यक्त्वस्याभावादित्यर्थः ॥ *निरसिष्यमाणत्वादिति* ॥ देश-कालादावसिद्धयेति शेषः ॥ *अवाच्य इति* ॥ आत्मशब्दवाच्यत्वाभावोऽनात्मत्वमात्मन्यप्यस्तीत्यर्थः ॥ *आत्मशब्दवाच्य इति* ॥ "किमात्मनाऽनेन जहाति योऽन्ततः" इत्यादिषु देहेऽप्यात्मशब्दप्रयोगादित्यर्थः । *ननु* देहादिविशिष्टस्यैवात्मशब्दवाच्यता, देहमात्रे तु लक्षणयाऽपि प्रयोगसम्भवः । तथाचात्मपदजन्यप्रतीतिविशेष्यभिन्नत्वस्यानात्मत्वस्य विवक्षितत्वात् तस्य च देहादावपि सत्त्वाद् नासिद्धिरिति—चेत्, *तथापि* लाक्षणिकस्याप्यनुभावकत्वाद् लक्षणयाऽऽत्मपदजन्यप्रतीतिविशेष्ये देहादावसिद्धितादवस्थ्यात् ॥ *इन्द्रियादाविति* ॥ लक्षणयेन्द्रियादिष्वात्मशब्दप्रयोगसम्भवादित्यर्थः ॥ किंचात्मभिन्नत्वादेः काल्पनिकस्य ब्रह्मण्यपि सत्त्वाद् व्यभिचारः, तात्त्विकभेदस्य चाप्रसिद्धिः । नच—धर्मिसमसत्ताकतद्भेदो हेतुरिति—वाच्यम् ; रूप्ये साधनवैकल्यात्, तत्रात्मभेदस्य व्यावहारिकत्वादिति ॥ *मयेति* ॥ ज्ञातृत्वाभाव आत्मनि व्यभिचारी, अहमर्थेऽसिद्धश्चेति भावः । अनात्मत्वपक्षदूषणमुपसंहरति—*तस्मादिति* ॥ *मयाऽज्ञातृत्वमिति* ॥ तथाचात्मनि व्यभिचारः, अहमर्थेऽसिद्धिश्चेति भावः । किंचाज्ञानत्वादीनां चतुर्णां तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च व्यभिचारः । नच—अज्ञानकालवृत्तित्वं हेतुविशेषणम्, अतो नोक्तो व्यभिचार इति—वाच्यत् ; प्रत्येकमुक्तिपक्षेऽस्याप्यविद्यानिवृत्तौ सत्त्वात्, युगपत् सर्वमुक्तेश्च वामदेवादिमुक्तिप्रतिपादकागमविरोधेनाप्रामाणिकत्वस्य परैरपि कैश्चिदभिहितत्वात्, मिथ्यात्वं प्रत्यप्रयोजकत्वाच्चेति सर्वं मनोहरम् ॥

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि । न्यायामृततरङ्गिण्यां जडताभङ्ग ईक्ष्यताम् ॥

---

### न्यायामृतकण्टकोद्धारः

वृत्तित्वे सतीति विशेषणं देयमिति—वाच्यम् ; पञ्चमप्रकाराविद्यानिवृत्तेरज्ञानकार्यत्वेन तत्राज्ञानकालवृत्तित्वस्यावश्यकत्वात् साध्यावैशिष्ट्यादिति । नच—ज्ञानत्वेन ज्ञाननिवर्त्यत्वरूपपक्षे न साध्यावैशिष्ट्यमिति—वाच्यम् ; साध्यावैशिष्ट्यशब्देन सन्दिग्धसाध्यत्वस्योक्तत्वात् ॥

---

**अद्वैतसिद्धिः**

ज्ञानपदलक्ष्यत्वात् तत्राप्यसिद्धिरिति—वाच्यम् ; ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वविवक्षायामुक्तदोषाभावात् । एवमानन्दभिन्नत्वरूपमनात्मत्वमुपपाद्यम् ; वैषयिकानन्दस्यापि ब्रह्मरूपत्वात्, तदुपाधिमात्रस्यैवोत्पत्ति-विनाशप्रतियोगित्वात् । नच—ज्ञानभिन्नत्वस्यानन्दभिन्नत्वस्य च काल्पनिकस्य ब्रह्मणि सत्त्वात् तत्र व्यभिचार इति—वाच्यम् ; धर्मिसमानसत्ताकतद्भेदस्य हेतुत्वात् । अनौपाधिकत्वेन वा भेदो विशेषणीयः, तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च व्यभिचारपरिहारः पूर्ववत् । एवम्—अस्वप्रकाशत्वं वा जडत्वम्, तच्च पूर्वमेवोपपादितमिति शिवम् ॥

---

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

वाच्येत्यर्थः । ज्ञानपदस्य ज्ञानावाचकत्वात् । *ज्ञानपदजन्येत्यादि* ॥ तादृशविशेष्यमात्रवृत्तिना तत्तद्धीविषयत्वेनावच्छिन्नप्रतियोगिताको भेदो विवक्षित इत्यर्थः । तेनोक्तविशेष्यत्वस्य तत्तद्धीविषयत्वापेक्षया गुरुत्वेऽपि नाप्रसिद्धिः । नच—उक्तविशेष्यत्वस्य घटादिसमूहालम्बनीयस्य पटादिसाधारण्येनासिद्धिः ; एवमुपहितस्य ब्रह्मण एव शक्त्या ज्ञानपदबोध्यत्वात् शुद्धब्रह्मणि व्यभिचार इति वाच्यम् ; तद्धीपदेन तादृशविशेष्यत्वोपलक्षितशुद्धब्रह्ममात्रधियो निवेशात् । *ननु*—ब्रह्मणो वृत्त्यवच्छिन्नचिद्रूपानन्दपदार्थभिन्नत्वात् तत्र व्यभिचारः, तत्राह—*वैषयिकानन्दस्येति* ॥ विषयसेवाजन्यवृत्त्यवच्छिन्नचिद्रूपानन्दत्वोपलक्षितस्येत्यर्थः । तथाच तद्भेद एव हेतुः, अतो न ब्रह्मणि व्यभिचार इति भावः । *ज्ञानभिन्नत्वस्य = 'ज्ञानं ब्रह्मे'तिवाक्यजन्यतद्धीविषयान्यत्वस्य । *आनन्दभिन्नत्वस्य='आनन्दो ब्रह्मे'त्यादिवाक्यजन्यतद्धीविषयान्यत्वस्य । *ब्रह्मणीति* ॥ 'आनन्दं ब्रह्मणो रूपमि'त्यादिवाक्यजधीसिद्धो भेदो ब्रह्मण्यपीति भावः । *धर्मीति* । यत्र भेदः स्थापनीयः स धर्मी, ब्रह्मसमसत्ताकभेदाप्रसिद्धेर्ब्रह्मणि भेदः स्थापयितुमशक्यः ; स्वसमसत्ताकभेदवत्त्वस्य हेतुत्वादिति पर्यवसितार्थः । *ननु* भेदस्याद्यापि मिथ्यात्वानिश्चयाद् ब्रह्मसमसत्ताकभेदो ब्रह्मण्यपि निश्चेतुं शक्य इति—चेत्, *न* ; प्रपञ्चे मिथ्यात्वसन्देहेन भेदे ब्रह्मसमसत्ताकत्वानिश्चयात् । लाघवादाह—*अनौपाधिकत्वेनेति* ॥ अभेदज्ञाने सत्यपीच्छादिरूपोपाधिना प्रतीयमानात्वात्, 'आनन्दं ब्रह्मणो रूपमि'त्यादिभेदः, औपाधिकः, 'अयं घटो न घटः' इत्यादिभेदवदाहार्यमनोवृत्तिविषयत्वात् । तथाच तादृशभेदान्यभेदो हेतौ निवेश्यत इति भावः । *वस्तुतस्तु*—उपाधिं प्रतियोगिनमर्हतीत्यौपाधिकः, स्वप्रतियोगिवृत्तिः, तदन्योऽनौपाधिकः, ब्रह्मवृत्तिरिति यावत् ; तेनौपाधिकत्वस्यानुगतस्य दुर्वचत्वेऽपि न क्षतिः, नवा ज्ञानानन्द-सत्तांशानामनौपाधिककल्पितभेदसत्त्वेऽपि क्षतिः ॥

---

### न्यायामृतसौगन्ध्यम्

वृत्त्यप्रकारकज्ञानत्वे तद्विषयस्याविद्यादेस्तात्त्विकत्वापत्तिः, तत्प्रकारकत्वे दोषजन्यत्वं स्यादिति विकल्पेन त्वन्मतभङ्गस्य सिद्धत्वेन विप्रतिपत्त्यङ्गानङ्गत्वविचारस्य (१) प्रकृतेऽनुपयुक्तत्वात्। किञ्च ब्रह्मत्वं भ्रमत्व-समानाधिकरणम्? तदभावविशिष्टज्ञानत्वसमानाधिकरणं वा? नोभयमपि; उक्तदोषात्, उभय-विलक्षणत्वे घटादिवद् ज्ञानमेव न स्यादित्यपि बोध्यम्। नच—ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वमेव जडत्वमिति—वाच्यम्; वृत्त्यात्मकज्ञाने भागासिद्धेः॥

---

### सौगन्ध्यविमर्शः

(१) अयं भावः—द्विविधं प्रमात्वम्—तद्वति तत्प्रकारकज्ञानत्वम्, विशेष्यावृत्त्यप्रकारकत्वं च। आद्यं निर्विकल्पक-व्यावृत्तम्, द्वितीयं सविकल्पक-निर्विकल्पकसाधारणम्। तत्र निर्विकल्पकस्य प्रथमप्रमात्वानङ्गीकारेऽपि यथा ज्ञानत्वम्, एवं ब्रह्मरूपज्ञानस्य द्विविधप्रमात्वस्याप्यनङ्गीकारेऽपि न हानिरित्येव चन्द्रिकाशयः, न तु निर्विकल्पवद् ब्रह्मरूपस्य ज्ञानस्यापि विशेष्यावृत्त्यप्रकारकत्वरूपं प्रमात्वं स्वीक्रियत इति। तथाच कथमविद्यादितात्त्विकत्वापत्तिस्सौगन्ध्यापादिता सम्भवदुक्तिका? ब्रह्मरूपज्ञानविषयत्वं हि ब्रह्मतादात्म्यापन्नत्वम्, ब्रह्मणि कल्पितत्वमेव, इति तद्विषयत्वमतात्त्विकत्वमेवाविद्यादेर्गमयितुमर्हति॥

## इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्धयोः जडत्वहेतुविचारः॥



# अथ परिच्छिन्नत्वहेतुविचारः

——: ० :——

न्यायामृतम्

परिच्छिन्नत्वमपि देशतः ? कालतः ? वस्तुतो वा ? नाद्य-द्वितीयौ ; देश-कालाज्ञानेषु

अद्वैतसिद्धिः

परिच्छिन्नत्वमपि हेतुः । तच्च देशतः कालतो वस्तुतश्चेति त्रिविधम् । तत्र *देशतः परिच्छिन्नत्वम् = अत्यन्ताभावप्रतियोगित्वम् । *कालतः परिच्छिन्नत्वम् = ध्वंसप्रतियोगित्वम् । *वस्तुतः परिच्छिन्नत्वम् = अन्योन्याभावप्रतियोगित्वम् ॥

तरङ्गिणी

अत्यन्ताभावप्रतियोगित्वमित्यर्थः ॥ *कालत इति* ॥ प्रध्वंसप्रतियोगित्वमित्यर्थः ॥ *वस्तुत इति* ॥ अन्योन्याभाववत्त्वमित्यर्थः । अत्यन्ताभावप्रतियोगित्वरूपं देशपरिच्छिन्नत्वं समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वं चेदात्मनि व्यभिचारि ; तस्य क्वाप्यसमवेतत्वात् , सर्वसम्बन्धित्वाभावविवक्षायां सर्वसम्बन्धशून्ये परमात्मनि व्यभिचारः, संयोगसम्बन्धेनात्यन्ताभावप्रतियोगित्वाभिप्राये त्वाकाशादावसिद्धिः । एवं कालतः परिच्छेदेऽप्यसिद्धिरित्याह—*देश-कालाज्ञानेष्विति* ॥ त्वदभिप्रेत इति निषेधेन संबध्यते ।

न्यायामृतकण्टकोद्धारः

*देशेति* ॥ वियदादे रूप्यादेश्च निषेध इत्यन्वयः । *ननु* देशस्य 'देशो नष्टः' इति कालस्याप्य'तीतः कालः' इत्यादिप्रतीत्या परिच्छिन्नत्वावगमात् कथमसिद्धिरिति ? अत आह—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*देशत इत्यादि* ॥ क्वचिद् देश एव विद्यमानत्वम् = *देशतः परिच्छेदः* ॥ क्वचित् काल एव विद्यमानत्वम्=*कालपरिच्छेदः*॥ केनचिदेव वस्तुना तादात्म्यापन्नत्वम्=*वस्तुपरिच्छेदः* ॥ यथा ह्यारुण्यादिगुणेन क्रयसाधनगवादिकं परिच्छिन्नमिति व्यवहारः ; आरुण्यादेस्तादृशगवादेस्तदन्यस्माद् व्यावर्तकत्वात्, तथा तत्तद्देशो घटादेराधारविधया तदन्याधारविशेषिताद् व्यावर्तकः, इति घटादि तत्परिच्छिन्नमिति व्यवह्रियते । एवं तत्तत्कालोऽपि कालान्तरावच्छिन्नादाधारविधया घटादेर्व्यावर्तकः, इति स तत्परिच्छिन्नो व्यवह्रियते । एवमेतद्वस्तु तादात्म्येन घटादेर्विशेषणं सदितरवस्त्वात्मकाद् व्यावर्तकम्, इति तत् तत्परिच्छिन्नमित्युच्यते । एवम्—'अयं घट एतद्देशपरिच्छिन्नः' इत्यादिवाक्यस्यैतद्घट एतद्देशेन देशान्तरावच्छिन्नेभ्यो व्यावर्तित इत्यर्थः । एवम्—'एतत्कालपरिच्छिन्नः' इत्यादावपि । देशान्तरवृत्त्यत्यन्ताभावप्रतियोगित्वम्, कालान्तरवृत्तिध्वंसप्रतियोगित्वम्, वस्त्वन्तरनिष्ठभेदप्रतियोगित्वं चार्थाद् लभ्यते ; तादृशशब्दात् तदप्रतीतेः । *वस्तुतस्तु देशस्याधारविधया परिच्छेदकत्वमन्ययोगव्यवच्छेदकतया विशेषणत्वं परिच्छेद्यघटादेर्देशान्तरवृत्त्यत्यन्ताभावप्रतियोगित्वपर्यवसितम्, एतत्कालस्य ध्वंसानधिकरणतया विशेषणत्वं कालान्तरध्वंसाधिकरणत्वपर्यवसितम्, इति परिच्छिन्नशब्दादेव देशान्तरवृत्त्यत्यन्ताभावादिप्रतियोगित्वलाभः । तत्रापि देशान्तरादिघटितस्य हेतुत्वे तस्य सर्वदृश्याननुगतत्वाद् अत्यन्ताभावप्रतियोगित्वादिभिन्नांशवैयर्थ्याच्चोक्तप्रतियोगित्वादेरेव हेतुत्वमित्याशयेनाह—*तत्रेत्यादि* ॥ 'आकाशादावि'त्यादिपदेनेश्वरादिसंग्रहः । 'सर्वमूर्तेष्वाकाशमि'त्यादिप्रतीतेः, श्रुति-

न्यायामृतसौगन्ध्यम्

*ननु* परिच्छिन्नत्वमपि हेतुः, तच्च देशतः कालतो वस्तुतश्चेति त्रिविधम्—*देशतः परिच्छिन्नत्वम्=अत्यन्ताभावप्रतियोगित्वम्, *कालतः परिच्छिन्नत्वम्=ध्वंसप्रतियोगित्वम्, *वस्तुतः परिच्छिन्नत्वम्=

न्यायामृतम्

त्वदभिप्रेते वियदादे रूप्यादेश्च प्रतिपन्नोपाधिस्थनिषेधे चासिद्धेः; अवकाशरूपदेशस्य चापरिच्छिन्नत्वेनैव धर्मिग्राहिणा साक्षिणा "आकाशवत् सर्वगतश्च नित्यः" 'सदेव सोम्येदमग्रे' "दृष्ट्वैव तं

तरङ्गिणी

आकाशादिषु हेत्वभावमुपपादयति--*अवकाशरूपेति* ॥ *इदमग्रे* ॥ अस्याग्रे इत्यनेन सर्वजगत्सृष्टेः पूर्वं "यदा सर्वे प्रलीयन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतः" इत्यविद्या-तत्कार्यनिवृत्तिरूप-

न्यायामृतकण्टकोद्धारः

*अवकाशरूपदेशस्येति* ॥ देशनाशप्रतीतेस्तदुपाधिविषयकत्वात्, कालनाशप्रतीतेश्च क्षणादिविषयकत्वादवकाशरूपदेश-खण्डकालविषयत्वादिति भावः। *अपरिच्छिन्नत्वेनैवेति* ॥ देशतः कालतश्चेति शेषः। यस्तु कालावकाशसिद्धिं साक्षिणा नाङ्गीकरोति, तस्य कालावकाशसिद्धिरेव न स्यात्। केचिदिह 'विहङ्गमः पतती'ति चक्षुर्व्यापारानन्तरं प्रतिभासनादाकाशादेश्चाक्षुषतामास्थिषत, *तदनुपपन्नम्*; रूपरहितद्रव्यत्वेन चाक्षुषतासामग्रीवैकल्यात्। अन्यथाऽऽत्म-पवनयोरपि तत्प्रसङ्गात्, तथाप्यनुमानवेद्यमाकाशमस्त्विति चेत्, न; लिङ्गाभावात् ॥

*ननु*—शब्दस्तावत्, प्रत्यक्षः, स च गुणः, सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्; रूपवत्, गुणश्च द्रव्याश्रित इति सामान्यतो द्रव्यसिद्धौ—शब्दः, न स्पर्शवद्विशेषगुणः; प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, सुखवत्, नाप्यात्मगुणः; बाह्येन्द्रियग्राह्यत्वात्, रूपवत्, नापि दिक्कालमनसाम्; प्रत्यक्षत्वात्, विशेषगुणत्वाच्चेति प्रसक्तप्रतिषेधे सति परिशेषादतिरिक्तं द्रव्यं सिद्ध्यति। एवं च शब्दः, अष्टद्रव्यातिरिक्तद्रव्याश्रितः; तद्वृत्तौ बाधकोपपन्नत्वे सति गुणत्वात्, रूपवदित्यनुमानादेव आकाशसिद्धिसम्भवेन लिङ्गाभावोऽसिद्ध इति—चेत्, *मैवम्*; जातिबधिराणामाकाशप्रतिभासानुपपत्तिप्रसङ्गात्। ततश्चेह लोको नास्तीति प्रतीतिर्न स्यात्। परिशेषानुमानं त्वष्टद्रव्यातिरिक्तद्रव्याप्रसिद्धेरप्रसिद्धविशेषणम्, प्रसिद्धौ चानुमानवैयर्थ्यम्, अष्टद्रव्यातिरिक्ताश्रित इत्येव साधने गुणादिवृत्तिसामान्यादपि व्यावृत्तत्वेन हेतोरसाधारण्यं स्यात्। अस्तु वा शब्दगुणकाकाशसिद्धिरनुमानात्, तथाप्यव्याकृताकाशसिद्धिः साक्षिणैव; तत्साधकलिङ्गाभावात्। जातिबधिराणामप्याकाशप्रतीतेर्नागमोऽपि तत्र मानमिति ॥

*ननु* तथापि कालसिद्धिः कथम्? साक्षिणेति चेत्, न; सुषुप्तौ हीन्द्रियाणामुपरतत्वाद् न बाह्यप्रत्यक्षानुमानागमानां प्रवृत्तिरस्ति, तदाऽपि कालप्रतिभासः—'एतावन्तं कालं सुखं सुप्तोऽस्मी'त्युत्थितस्य परामर्शनात्। न ह्यननुभूतस्य परामर्शो युज्यते। अतः परिशेषात् साक्षिवेद्य एवेति गम्यते। *अत्रायं प्रयोगः*—कालः, बाह्यप्रत्यक्षाद्यतिरिक्तप्रमाणवेद्यः, असत्स्वपि तेषु प्रतीयमानत्वात्, यद् यस्मिन् असति प्रतीयते, तत् ततोऽतिरिक्तप्रमाणवेद्यम्; यथाऽसति चक्षुषि प्रतीयमानो गन्धस्तदतिरिक्तप्रमाणवेद्य इति ॥ *ननु*—साक्षिवेद्यत्वेऽपि साक्षीतरप्रमाणवेद्यत्वं किं न स्यात्? इति—चेत्, न तावत् प्रत्यक्षवेद्यः काल इत्युक्तम्, जातिबधिराणामपि प्रतिभासाद् नागमवेद्योऽपि, अनुमानमपि कालमेव पक्षीकृत्य प्रवर्तेत? अन्यद्वा? *नाद्यः*; कालस्यासिद्धावाश्रयासिद्ध्या, सिद्धौ सिद्धसाधनत्वेन पक्षीकर्तुमशक्यत्वात्, *न द्वितीयः*; कालप्रतीतिमन्तरेण व्याप्तिस्मरण-पक्षधर्मताज्ञानयोरयोगात्। तथाहि—स्मृत्यनुभवरूपा हि व्याप्त्याद्यादिप्रतीतयो न केवलमर्थमवगाहन्ते, अपितु कालकलितमेव।

न्यायामृतम्

मुच्यते'' ''अथ मर्त्योऽमृतो भवति'' ''यत्र त्वस्य सर्वमात्मैवाभूदि''त्यादिश्रुत्या ''सदा सर्वत्र कार्यदर्शनादि''ति युक्त्या च सिद्धेः, ''आकाशः संभूतः'' इत्यादिश्रुतेश्च भूताकाशविषयत्वात्, उक्तं चाकाशद्वैतमन्यत्र ॥

अद्वैतसिद्धिः

*ननु*—समवायसंबन्धेनात्यन्ताभावप्रतियोगित्वमात्मनि व्यभिचारि ; तस्याप्याकाशादिवत् क्वाप्यसमवेतत्वात्, संयोगसंबन्धेनात्यन्ताभावप्रतियोगित्वमाकाशादावसिद्धम् ; तस्य यावन्मूर्तसंयोगित्व-

तरङ्गिणी

मोक्षेऽपि देश-कालयोः सत्त्वेनापरिच्छेदसिद्धेरित्यर्थः । *ननु* आकाशे न कालपरिच्छेदराहित्यम् ; ''तस्माद्वा एतस्मादात्मन आकाशः संभूतः'' इति श्रुतिसिद्धजन्यत्वेन ध्वंसप्रतियोगित्वरूपकालपरिच्छिन्नत्वस्याकाशेऽनुमितत्वात्, ''आकाशवत् सर्वगतश्च नित्यः'' इत्यत्र चात्मनिदर्शनत्वं स्वसमानकालीनसर्वगतत्वेनाभूतसंप्लवस्थायित्वेन चोपपन्नमित्यत आह—'*आकाशः संभूतः' इत्यादिश्रुतेश्चेति* ॥ वियदधिकरणसिद्धोत्पत्तिकभूताकाशपरतया संभूतश्रुतेः सावकाशतया निश्चितार्थकात्मनिदर्शनश्रुत्या तत्परतयाऽऽकाशस्य कालापरिच्छेदरूपनित्यत्वसिद्धिरित्यर्थः । *ननु* भूताकाशातिरिक्तस्याकाशस्याभावात् कथं श्रुत्योर्विरोधपरिहार इति ? अत आह—*उक्तं चेति* ॥ भूताकाशोऽव्याकृताकाशश्चेत्याकाशद्वैतम् ॥

न्यायामृतकण्टकोद्धारः

'तदि'ति हि स्मृतिरुत्पद्यते । तत्ता च पूर्वकालसम्बन्धितैव । एवमनुभवोऽपि चक्षुरादिजन्यस्तावत्—'एतदि'ति जायते, अनुमानादिजन्योऽप्य'भूदि'ति वा, 'भविष्यती'ति वा जायते । एतत्त्वादिकं च न वर्तमानादिकालसम्बन्धित्वातिरिक्तं किञ्चित् । तथाच व्याप्त्यादिविषया अपि प्रतीतयो न कालाविशेषितं स्वार्थं गोचरयितुं शक्नुवन्ति, इति कालसिद्धिः साक्षिणैवेत्यर्थः । विस्तरस्तु सुधायां द्रष्टव्यः । *आकाशवदिति* ॥ ब्रह्मणो नित्यत्वे ह्याकाशनित्यत्वस्य दृष्टान्तीकरणाद् निर्णीतस्यैव दृष्टान्तीकरणाद् आकाशनित्यत्वं सिद्धमिति भावः । *अग्रे=प्रलये* ॥ तथाच प्रलयेऽपि कालावस्थित्युक्तेर्नित्यत्वं कालस्येति भावः । 'मुच्यते' 'भवती'ति लट्प्रयोगेण मोक्षेऽविद्यायां विलीनायां कालसत्त्वावगमाद् नित्यत्वमिति भावः । *यत्रेति* ॥ *अभूदिति* ॥ मोक्षकाले कालसत्त्वोक्तेर्नित्यत्वमिति भावः । *सदा सर्वत्रेति* ॥ देशकार्यं त्ववकाशदातृत्वादिकम्, कालकार्यं तु व्यवहारादिकमिति द्रष्टव्यम् । *ननु* आकाशस्य नित्यत्वे—''आत्मन आकाशः सम्भूतः'' इत्यनित्यत्वप्रतिपादकश्रुतिविरोधः स्यादित्यत आह—*आकाश इति* ॥ ''आकाशवदि''ति श्रुतेरव्याकृताकाशविषयत्वाद् न विरोध इति भावः । *ननु* आकाशद्वैविध्ये मानाभावेन श्रुत्योः कथं विरोधपरिहार इति ? अत आह—*उक्तं चाकाशद्वैतमन्यत्रेति* ॥ नचाकाशद्वित्वे मानाभावः ; भूताकाशातिरिक्ताया देश-कालपरिच्छिन्नायास्तार्किकाभिमतदिश इवास्मन्मतेऽव्याकृताकाशत्वात् । प्राच्यादयो दिग्विशेषास्तु तद्भागाः । उक्तं हि टीकाकारैः—''अवकाशमात्रं हि दिगुच्यते, अवकाशभागा एव दिग्विशेषाः''—इति । किञ्च प्रदेशरूप आकाशो नीरूपः साक्षिसिद्धश्च ; अन्यथाऽयकाशे सन्देहेनान्धकारे हस्तचालनादिकं न स्यात् । नच मूर्तविशेषाभाव इव तदाश्रये देशे कश्चित् सन्दिग्धः, भूताकाशं तु 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव चे'त्यादिश्रुत्या हि रूपि प्रत्यक्षं च । किञ्च भूताकाशं सर्वं पञ्चभिराविष्टम्—''भूतैरीश्वरबुद्धिजैः'' ''पञ्चभूतात्मके देहे'' इत्यादिस्मृतिभिर्देहाकारेण विकारि, अवकाशस्तु कूटस्थनित्यत्वेन साक्षिसिद्धः । नच सर्वाधारभूतौ देश-कालौ किञ्चिद् द्रव्यात्मना विकुरुतः । कथं वाऽवकाशस्य पञ्चीकरणम् ? किञ्चावकाशः

न्यायामृतम्

'अत्र देशो नास्ति' 'इदानीं कालो नास्ती'त्यस्य व्याहतत्वाच्च ॥

अद्वैतसिद्धिः

नियमात्, अमूर्तनिष्ठात्यन्ताभावप्रतियोगित्वाभिप्राये स्वात्मनि व्यभिचारस्तदवस्थः, सर्वसंबन्धित्वाभावविवक्षायामपि सर्वसंबन्धशून्ये परमात्मनि व्यभिचारः, अज्ञाने सर्वसंबन्धिन्यसिद्धिश्च ; ध्वंस-

तरङ्गिणी

*ननु* प्रतियोगिसमानसत्ताकात्यन्ताभावप्रतियोगित्वं हेतुः, अतो नात्मनि व्यभिचारः ; अज्ञानाकाशादौ च स्वसमानसत्ताकात्यन्ताभावप्रतियोगित्वसत्त्वेनासिद्ध्यभावात्, अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे स्वान्यूनसत्ताकेति विशेषणं देयम् । अत एव प्रातिभासिकशुक्तिरूप्यादेर्व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यम्, सद्विविक्तत्वादिमिथ्यात्वप्रकाराणां चैवंरूपत्वाभावाद् न साध्याविशिष्टतेत्यत आह—*अत्र देश इति* ॥ देश-कालयोः सर्वदेश-कालसंसृष्टत्वेन प्रतियोगिसंसर्गवति

न्यायामृतकण्टकोद्धारः

"अनादिर्वाऽयमाकाशः" इत्यादिश्रुतिभिरवकाशोपादान-प्रागभावयोर्बुद्ध्यनारोहादियुक्तिभिश्चानादिः । नहि पूर्वमवकाशो नासीत्, किन्तु सर्वत्र वा क्वचिद्वा घनीभाव एवासीदि'ति धीर्युक्ता ; 'सर्वत्रे'त्यादिनैवावकाशनिर्देशात् । श्रुतं तु—"आत्मन आकाशस्सम्भूतः" इत्यादिप्रकरणानुगृहीतश्रुतिभिः, "तामसाच्च विकुर्वाणाद् भगवद्वीर्यचोदितात् । शब्दमात्रमभून् तस्माद् नभः श्रोत्रं तु शब्दजमि"त्यादिस्मृतिभिश्च तामसाहङ्कारकार्यम् । किञ्च—"एतदण्डं विशेषाख्यक्रमाद्वृद्धैर्दशोत्तरैः । तोयादिभिः परिवृतमि"त्यादिस्मृतिभिरेकमविभु, अन्यस्तु विभुः—"आकाशवत् सर्वगतश्च नित्यः ; "स यथाऽनन्तोऽयमाकाशः" इत्यादिश्रुतेः । *अत्र देशो नास्तीति* ॥ 'इदानीं कालो नास्तीत्यादिवद् व्याहतम् ; 'अत्रे'त्यनेनैव देशनिर्देशात् । एवं ब्रह्म वाऽन्यद्वा देशं विना कुत्रचिदस्तीत्येतद् व्याहतम् । अत एव "स एवाधस्तात् स एवोपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः" इत्यादिश्रुतिः, "व्याप्तं त्वयैकेन दिशश्च सर्वाः" इत्यादिस्मृतिश्च ब्रह्मणो विभुस्वदेशसम्बन्धेनैव विभुत्वमाहेत्यादियुक्तिश्च ' मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च । भागशो भागशस्त्वेनमनुगच्छन्ति सर्वशः ॥" इत्यादिस्मृतिभिर्भूताकाशादि योग्यभागवत्, अवकाशस्तु न गत्यादियोग्यभागवान् । नहि प्रदेशविशेष एतद्देशं त्यक्त्वा प्रदेशान्तरं गच्छति । किञ्च—"आकाशे नीलिमोदेति न प्रदेशे कथञ्चने"ति श्रुत्यैवाकाशद्वित्वं कण्ठोक्तम् । तस्मादाकाशद्वित्वं प्रामाणिकमेव, इति चन्द्रिकायामुक्तत्वाद् युक्तः श्रुत्योरविरोध इति भावः । व्याहत्याऽपि देश-कालयोर्नित्यत्वमङ्गीकर्तव्यमित्याह—*अत्र देशो नास्तीति* ॥ देश-कालयोः सर्वगतत्वे नित्यत्वे च स्वाश्रितत्वापत्त्याऽऽ-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नियामकसंयोगेनापि सर्वमूर्तेष्वाकाशस्यात्यन्ताभावविरहात्, तत्सम्बन्धावच्छिन्नमत्यन्ताभावप्रतियोगित्वमप्याकाशादावसिद्धमिति भावः । *अभिप्राय इति* ॥ संयोगावच्छिन्नप्रतियोगितात्वेनैव हेतुता, तादृशप्रतियोगिता चामूर्तनिष्ठात्यन्ताभावीयाऽऽकाशादावप्यस्तीत्यभिप्राय इत्यर्थः । *व्यभिचार इति* ॥ तथाच तद्वारणाय मूर्तनिष्ठात्यन्ताभावनिवेश आकाशादावसिद्धितादवस्थ्यमिति भावः । *सर्वसम्बन्धशून्य इति* ॥ उपहितात्मन एवोपादानत्वात् साक्षित्वाच्च शुद्धे सर्वासम्बन्धिनि । *सर्वसम्बन्धिनि = स्वोपहितचिद्भास्यत्व-

न्यायामृतसौगन्ध्यम्

अन्योन्याभावप्रतियोगित्वमिति—चेत्, *न* ; सर्वासङ्गब्रह्मण्यत्यन्ताभावप्रतियोगित्वरूपपरिच्छिन्नत्वस्य सत्त्वेन व्यभिचारात्, अनृतादिनिष्ठान्योन्याभावप्रतियोगित्वरूपपरिच्छिन्नत्वस्यापि सत्त्वाच्च । नचात्यन्ताभावान्योन्याभावयोः प्रतियोग्यन्यूनसत्ताकत्वेन विशेषणाद् न व्यभिचारः, ब्रह्मणोऽभावस्य ततो

न्यायामृतम्

च विनाऽस्तीत्यस्यापि व्याहतत्वाच्च, देश-कालयोः स्वोपाधौ निषेधे विरोधेनाविरोधाय निषेधोपाधितया देश-कालान्तरयोरावश्यकत्वाच्च। 'देशस्सर्वत्रास्ति' 'कालस्सदाऽस्ति' 'पूर्वः कालः' इत्याद्यबाधितप्रतीत्या तयोः स्वनिर्वाहकतया प्रमेयत्वादिवत् स्वसंबन्धसंभवाच्च, अज्ञानस्य च सर्वदेश-कालोपादानत्वेन सर्वगतं ब्रह्म प्रति विषयसंबन्ध्यावरणत्वेन च देशादिपरिच्छेदायोगात्। प्रतिपन्नोपाधौ निषेधस्य च कुत्रचित् कदाचिदभावे तत्र तदा प्रतियोगिनः सत्त्वापातात्। तथाच—

तरङ्गिणी

तदत्यन्ताभावासंसर्गादसिद्धिरेव ; अन्यथा 'अत्रेदानीं'शब्दाभ्यां देश-कालौ निर्दिश्य पुनस्तयोर्निषेधे व्याघातः स्यादित्यर्थः। किंच ब्रह्मणो देश-कालाभ्यामपरिच्छिन्नतयैव तयोस्ताभ्यामपरिच्छेदसिद्धिरित्याह—*ब्रह्म कुत्रचिदिति* ॥ 'कुत्र चित् कदाचि'च्छब्दाभ्यां देश-कालौ निर्दिश्य पुनस्तौ विना 'ब्रह्मास्ती'त्यभिधाने व्याघातापत्त्या 'ब्रह्म सर्वदेशे सर्वकालसंसृष्टमेव, सर्वकाले सर्वदेशसंसृष्टमेव' इति ब्रह्मणोऽपरिच्छेदे निरूप्यमाणे देश-कालयोरपि देश-कालाभ्यामपरिच्छेदसिद्धिरिति भावः। देश-कालयोः परिच्छेदनिरूपणायापि देश-कालयोरपरिच्छेदसिद्धिरित्याह—*देश-कालयोरिति* ॥ यदुपाधौ देश-कालौ वर्तेते, तदुपाधौ तयोर्व्यावहारिकनिषेधे विरोधापत्त्या देश-कालयोर्निषेधोपाधिभूतावन्यौ देश-कालौ वक्तव्यौ, तयोरपि देश-कालपरिच्छेदवत्त्वे पूर्ववद् देश-कालान्तराद्यपेक्षाया आवश्यकत्वेनानवस्थापत्त्या कयोश्चिद् देश-कालयोर्देश-कालापरिच्छेदेऽङ्गीकर्तव्ये प्रथमयोरेव तदपरिच्छेद आवश्यक इत्यर्थः। *ननु* सत्यं यदुपाधौ देश-कालौ वर्तेते, तदुपाधौ न तयोर्व्यावहारिको निषेध इति, किंतु स्वस्वरूपदेश-कालयोः स्वयं देश-कालौ न वर्तेते ; आत्माश्रयदोषात्, अतः स्वस्वरूपयोरेव देश-कालयोर्निषेधो भविष्यतीत्याशङ्क्याह—*देशः सर्वत्रास्तीति* ॥ नात्माश्रयदोषेण देश-कालयोः स्वस्वरूपेऽवृत्तिः ; प्रमेयत्वादिवदभेदेन सम्बन्धेन स्वस्मिन्नपि वृत्तेः प्रामाणिकत्वादित्यर्थः। तथाच देश-कालयोः परिच्छिन्नत्वमसिद्धमिति भावः। अज्ञाने हेत्वसिद्धिमुपपादयति—*अज्ञानस्येति* ॥ यद्देश-कालयोरज्ञानं न स्यात्, तद्देश-कालस्वरूपमेव न तिष्ठेत् ; तव मते देश-कालयोरप्यभावापत्तिः, अतो न कस्मिंश्चिद् देशे काले वाऽज्ञानस्य परिच्छेदः सम्भवति ; व्याघातापत्तेरित्यभिप्रायेणोक्तम्—*सर्वदेश-कालोपादानत्वेनेति* ॥ आवरणं हि पटादिकमाव्रियमाणपुरुषाद् अन्यूनदेशादि दृष्टम्, अतो देशाद्यपरिच्छिन्नं ब्रह्म प्रति देशाद्यपरिच्छिन्नब्रह्मविषयकावरणमज्ञानमप्याव्रियमाणब्रह्मान्यूनदेशं वाच्यम्, इत्यज्ञानस्य देश-कालाद्यपरिच्छेदसिद्धिरित्यभिप्रायेणोक्तम्—*सर्वगतं ब्रह्म प्रतीत्यादि* ॥ सूर्यन्यूनदेशं सूर्यावरकच्छत्रादि व्यावर्तयितुं 'विषयसम्बन्धी'त्युक्तम्। पराभिप्रेतस्य प्रतिपन्नोपाधिस्थनिषेधस्यापरिच्छिन्नत्वमुपपादयति—*प्रतिपन्नोपाधाविति* ॥ यद्देशे प्रतियोगिनिषेधोऽत्यन्ताभावरूपो नास्ति, तद्देशे प्रतियोगिनः सत्त्वम्, यथा तन्तुदेशे पटस्य, यत्काले प्रतियोगिनिषेध उक्तरूपो नास्ति, तत्काले प्रतियोगिनः सत्त्वम् ; यथा प्रतियोगिनो गन्धात्यन्ताभावस्य निषेधो गन्धरूपः प्रलये नास्ति, अतः प्रलये गन्धात्यन्ताभावरूपो गन्धस्य प्रतियोगी वर्तते। तस्माद् देश-कालप्रतिपन्नोपाधिस्थनिषेधेष्वपरिच्छिन्नेषु परिच्छिन्नत्वहेतोरसिद्धिरिति ॥

न्यायामृतकण्टकोद्धारः

त्माश्रयः, इत्यत आह—*देशः सर्वत्रास्तीति* ॥ यथा 'प्रमेयत्वे प्रमेयत्वमि'ति प्रतीत्या प्रमेयत्वे प्रमेयत्वमङ्गीक्रियते, तथा 'कालः सर्वदाऽस्ति' 'देशः सर्वत्रास्ती'ति प्रतीत्या तयोः स्वनिर्वाहकत्वादिति भावः। अज्ञानस्य देश-कालापरिच्छिन्नत्वमुपपादयति—*अज्ञानस्य चेति* ॥ प्रतिषेधस्यापरिच्छिन्नत्वमुपपादयति—*प्रतिपन्नेति* ॥

न्यायामृतम्

कालादिर्न परिच्छिन्न अग्र आसीदथामृतः ।
इत्यादिश्रुतिभिर्नो चेद् दुर्वारा व्याहतिर्भवेत् ॥

किंच कालादिपरिच्छिन्नत्वं न तावदेककालादिमात्रे सत्त्वम् ; रूप्यादौ ममासिद्धेः, तेन त्रैकालिकनिषेधसाधने विरोधाच्च । नापि तथाधीमात्रम् ; मात्रशब्देनैककालादिमात्रे सत्त्वरूपार्थाभावोक्तौ भ्रमोक्तौ च प्रपञ्चे ममासिद्धेः, प्रमा-भ्रमसाधारणधीत्वसामान्योक्तावात्मन्यपि तादृशभ्रमसंभवेन व्यभिचारात्, व्यावहारिकप्रमोक्तौ रूप्यादावभावात् । नापि कालान्तरादावसत्त्वम् ; तेन (१)स्वकालादावप्यसत्त्वसाधने प्रमाणविरोधस्याविशिष्टतया स्वकालादौ सत्त्वेन कालान्तरादौ सत्त्वसाधनापातात्, रूपान्तरेणासतो ब्रह्मणः स्वरूपेणाप्यसत्त्वापाताच्च, रूप्यादेर्वियदादेश्च स्वकालेऽप्यसद्विलक्षणस्वरूपाभावापाताच्च ॥

तरङ्गिणी

संगृह्णाति—*कालादिरिति* ॥ *इत्यादीति* ॥ आदिशब्देन "यत्र त्वस्य सर्वमात्मैवाभूत्" "अथ सोऽभयं गतो भवती"ति मोक्षे 'यत्राथ'शब्दाभ्यां देश-कालसत्त्वप्रतिपादकश्रुतिसंग्रहः ॥

*किंचेति* ॥ कालादिपरिच्छिन्नत्वं किमेकस्मिन् देशमात्रे कालमात्रे च सत्त्वं वा ? एकस्मिन् देशमात्रे कालमात्रे च सत्त्वरहितत्वे सत्येकस्मिन् देशमात्रे कालमात्रे च सत्त्वेन ज्ञानविषयत्वं वा ? एकस्मिन् देशमात्रे कालमात्रे च सत्त्वेन भ्रमविषयत्वं वा ? एकस्मिन् देशमात्रे कालमात्रे च सत्त्वेन ज्ञानविषयत्वं वा ? एकस्मिन् देशमात्रे कालमात्रे च सत्त्वेन व्यावहारिकप्रमाविषयत्वं वा ? स्वदेश-कालेतरकालयोरसत्त्वं वा ? इति विकल्पानभिसन्धायाद्यमपवदति—*न तावदिति* ॥ एककालादिमात्रे सत्त्वम्, नतु द्वयोस्त्रिषु कालादिषु सत्त्वमित्यर्थः ॥ *रूप्यादाविति* ॥ ममात्यन्तासद्रूप्यवादिनो मते रूप्यस्यैकस्मिन्नपि कालादावसत्त्वादित्यर्थः ॥ *तेनेति* ॥ एकस्मिन् देशे काले च सत्त्वेन सर्वदेशेऽपि कालत्रयेऽपि निषेधे साध्यमाने यद्देशे काले वा यस्य सत्त्वमस्ति, तद्देश-कालयोरपि तस्यासत्त्वं साधितं स्यात् । तथाच तद्देशे काले च सत्त्वेन तद्देशे कालेऽसत्त्वसाधने विरोध इत्यर्थः । द्वितीय-तृतीयौ दूषयति—*प्रपञ्च इति* ॥ मया प्रपञ्चे सत्त्वाभावानङ्गीकारात्, सत्त्वेन भ्रमानङ्गीकाराच्चेत्यर्थः । चतुर्थमुक्त्वा दूषयति—*प्रमा-भ्रमेति* ॥ पञ्चममुक्त्वा दूषयति—*व्यावहारिकेति* ॥ षष्ठमपवदति—*नापीति* ॥ दूषयति—*तेनेति* ॥ तथाचागृह्यमाणविशेषदशायामाभाससाम्यम्, विशेषग्रहे तु बाध इत्यर्थः ॥ *रूपान्तरेणेति* ॥ तथाचाभासान्तरसाम्यरूपमप्रयोजकत्वमित्यर्थः । *रूप्यादेरिति* ॥ रूप्यादेर्वियदादेश्चान्यकाले स्वरूपोपमर्दसत्त्वेन स्वकालेऽपि स्वरूपोपमर्दः स्यात्, नचेष्टापत्तिः ; तथा सति कालत्रयेऽपि रूप्यादि-वियदादिस्वरूपोपमर्देनासत्त्वापत्त्याऽसद्विलक्षणस्वरूपाभावापातादित्यर्थः । तथाचासद्विलक्षणस्वरूपानुपमर्देन पारमार्थिकत्वाकारेण निषेध इति त्वत्सिद्धान्तविरोधः स्यादिति भावः ॥

न्यायामृतकण्टकोद्धारः

*तथेति* ॥ एककालादिसत्त्वं नेत्यर्थः । *तादृशेति* ॥ एककालादिमात्रसत्त्वभ्रमसम्भवेनेत्यर्थः । *स्वकालादाविति* ॥ मिथ्यात्वस्य स्वकालाद्यावप्यसत्त्वरूपत्वादित्यर्थः । एककालासतः कालान्तरासत्त्वमिव रूपान्तरेणासतो रूपान्तरेणासत्त्वसाधने विशेषाभावात् तदपि स्यादित्याह—*रूपान्तरेणेति* ॥ *रूप्यादेरिति* ॥ कालान्तरे सद्विलक्षणस्वरूपाभावादिति भावः ।

(१) अयमर्थः—वेदान्तानां लक्षणया ब्रह्ममात्रप्रतिपादकत्वरूपाखण्डार्थत्वाङ्गीकारेणाभावाप्रतिपादकत्वात् तदसिद्धिरेव स्यात् । *ननु* स्वातन्त्र्येणाभावाप्रतिपादकत्वेऽपि ब्रह्मविशेषणत्वेन तत्प्रतिपादकत्वं भविष्यतीति—चेत्, न ; तथापि निर्विशेषार्थनिष्ठत्वरूपाखण्डार्थत्वहानिरेव, इति न वेदान्तेन तत्सिद्धिरिति । ( श्रीनि० )

अद्वैतसिद्धिः

प्रतियोगित्वमप्याकाशादावसिद्धम्, तेषां परैर्नित्यत्वाभ्युपगमात्, अन्योन्याभावप्रतियोगित्वं चात्मनि व्यभिचारि; तस्य जडनिष्ठान्योन्याभावप्रतियोगित्वात्, अन्यथा जडत्वापत्तेरिति—चेत्, *न*; अत्यन्ताभावेऽन्योन्याभावे च धर्मिसमसत्ताकत्वविशेषणेनात्मनि व्यभिचारपरिहारात्, अज्ञानाकाशादौ च स्वसमानसत्ताकात्यन्ताभावान्योन्याभावप्रतियोगित्वसत्त्वेनासिद्ध्यभावात्। अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे 'स्वान्यूनसत्ताके'ति विशेषणं देयम्। अत एव प्रातिभासिकशुक्तिरूप्यादेर्व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यम्। निरुक्तमिथ्यात्वप्रकाराणामेवंरूपत्वाभावाद् न साध्याविशिष्टता। ध्वंसप्रतियोगित्वं चाकाशादौ नासिद्धम्; "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति श्रुतिसिद्धजन्यत्वेनानुमितत्वात्, "आकाशवत् सर्वगतश्च नित्यः" इत्यत्र चात्मनिदर्शनत्वं स्वसमानकालीनसर्वगतत्वेन, आभूतसंप्लवस्थायित्वेन चेति द्रष्टव्यम्। "अतोऽन्यदार्तमि"ति श्रुत्याऽनात्ममात्रस्यैव विनाशित्वप्रतिपादनात्॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सम्बन्धेन सर्वसम्बन्धिनि। *धर्मीति*॥ स्वाश्रयेत्यर्थः। स्वपदं हेतुपरम्। *ननु* आत्म-घटान्यतरत्वरूपेण यो भेदः, तत्प्रतियोगित्वस्य स्वाश्रयो घटोऽपि, तत्समसत्ताकभेदप्रतियोगित्वमात्मन्यपीत्यत आह—*अज्ञानेत्यादि*॥ स्वसमानेति*॥ यत्र हेतुः स्थापनीयः, स स्वपदार्थः। तथाचात्मनि हेतोः स्थापने तस्यैव स्वपदेन धार्यत्वात् तत्समानसत्ताकाप्रसिद्धिः। अतोऽनात्मैव स्वपदार्थ इति भावः। *सत्ताकेतीति*॥ सत्ताकेत्येव। *वस्तुतस्तु*—लाघवादात्मावृत्तित्वविशिष्टप्रतियोगितासम्बन्धेनात्यन्ताभावो भेदो वा हेतुर्बोध्यः। *ननु*—आकाशादावत्यन्ताभावप्रतियोगित्वस्यासिद्धिः; प्रत्यक्षेणानुमानादिना वा तत्र तदसिद्धेरुक्तत्वात्, अथ—दृश्यत्वादिहेतुना स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वानुमानात् तत्सिद्धिरिति—चेत्, तर्हि मिथ्यात्वं सिद्धमेव, इति साध्याविशेषः; हेतुसिद्धेरेव साध्यसिद्धित्वात्; तत्राह—*निरुक्तेति*॥ सदसद्विलक्षणत्वादीत्यर्थः। *एवंरूपत्वेति*॥ अत्यन्ताभावप्रतियोगितारूपत्वेत्यर्थः। तथाच प्रकृतहेतुसिद्धेः स्वसमानाधिकरणेत्यादिमिथ्यात्वसिद्धिरूपत्वेऽपि सदसद्विलक्षणत्वादिरूपमिथ्यात्वसिद्धित्वाभावात् तादृशमिथ्यात्वमेव प्रकृतहेतुनाऽनुमेयम्, इति नोक्तदोष इति भावः। *जन्यत्वेनेति*॥ जन्यमात्रस्य प्रलये संस्काररूपनाशोत्पादाद् जन्यत्वेन नाशप्रतियोगित्वानुमानम्। *ननु*—"आकाशवत् सर्वगतश्च नित्यः" इति श्रुतौ सर्वगतपदमाकाशस्य सर्वमूर्तसंयोगित्वबोधकम्, तथाच प्रलयकालीनसंस्कारादिसंयोगित्वादिप्राप्त्या विनाशित्वं कथम्? तत्राह—*आकाशवदित्यादि*॥ *सर्वगतत्वेन=सर्वमूर्तसंयोगित्वेन। *आभूतसंप्लवस्थायित्वेन = सृष्टिकालाविनाशित्वेन। प्रलये संयोगस्यासिद्धेः संस्काररूपसूक्ष्मावस्थायाः संयोगादिमत्त्वे मानाभावाच्चोक्तार्थकत्वं सर्वगतपदस्य युक्तमिति भावः॥

न्यायामृतसौगन्ध्यम्

न्यूनसत्ताकत्वात्, शुक्तिरूप्याकाशाद्यभावस्य च तादृशत्वादिति—वाच्यम्; ब्रह्मेतरस्य मिथ्यात्वसिद्धौ हि तदभावस्य ततो न्यूनसत्ताकत्वेन व्यभिचाराभावेन हेतोरव्यभिचारित्वसिद्धिः, तत्सिद्धौ च ब्रह्मेतरस्य मिथ्यात्वसिद्धिरित्यन्योन्याश्रयात्। ध्वंसप्रतियोगित्वं चाकाशादावसिद्धम्, "आकाशवत् सर्वगतश्च नित्यः" इति श्रुत्या तस्य नित्यत्वोक्तेः। नच—स्वसमानकालीनसर्वगतत्वेनाभूतसंप्लवस्थायित्वेन वा दृष्टान्त इति—वाच्यम्; श्रुतौ नित्यपदास्वारस्यापत्तेः। नच—"आत्मन आकाशः संभूतः" इति तस्योत्पन्नत्वेन ध्वंसोऽप्यावश्यक इति—वाच्यम्; भूताकाशस्योत्पत्ति-विनाशवत्त्वेऽपि 'अवकाशः' इति व्यवह्रियमाणस्य दिगित्यपरपर्यायस्य महाकाशस्योत्पत्त्याद्यभावात्। मूर्त्या हि तस्य नाशादिः स्यात्,

न्यायामृतम्

*एतेन*—यत् सत्, तत् सदा सर्वत्र सदेव, नहि रूपं कदाचित् कुत्रचिद् गन्धो भवति। तथाच यत् कदाचित् कुत्रचिदसत्, तत् सदा सर्वत्रासदेवेति वाचस्पतीयं शून्यवाद्युक्त-युक्त्युद्गिरणम्—*निरस्तम्* ॥ *ननु* देशपरिच्छिन्नत्वं सर्वमूर्तासंयोगत्वं वा, महत्त्वानधिकरण-परिमाणाधिकरणत्वं वेति—चेत्, *न*; आद्ययोरसङ्गे निर्गुणे च ब्रह्मण्यपि भावात्, अन्त्यस्य गुणादावप्यभावात्, कालपरिच्छिन्नत्वमन्योन्याभावादौ प्रतिवाद्यसिद्धं च। न तृतीयः; तद्धि भिन्नत्वम्, तस्य च तात्त्विकस्य प्रपञ्चेऽप्यभावात्, 'आत्मन्यप्यनृतव्यावृत्तिस्तात्त्विकी'ति वक्ष्यमाणत्वाच्च, कल्पितस्य त्वात्मन्यपि भावात्, धर्मिसमसत्त्वस्य रूप्येऽपि ममाभावात्, भिन्नत्वमात्रस्य चाध्यस्ताद्भेदेन सत्त्वेऽप्युपपत्तेः, सत्याद्भेदस्य चासिद्धेः ॥

तरङ्गिणी

*एतेनेति* ॥ स्वदेश-कालेतरदेश-कालयोरसत्त्वेन स्वदेश-कालयोरप्यसत्त्वसाधने विरोधापातेनेत्यर्थः ॥ *निरस्तमिति* ॥ स्वासत्त्वग्राहकेण प्रमाणेन देश-कालयोः स्वसत्त्वग्राहकेणापि विरोधस्याविशिष्टतया यत् कदाचित् कुत्रचिदसत्, तत् सदा सर्वत्रासदेव, इति वियदादेः स्वोपाधावप्यसत्त्वसाधने यत् कदाचित् कुत्रचित् सत्, तत् सर्वत्र सदा सदेव, इति स्वोपाध्यतिरिक्तदेशादावपि वियदादेः सत्त्वं स्यादिति दोष उक्तप्रायत्वाद् नोक्तः ॥ *आद्ययोरिति* ॥ असङ्गत्वात् सर्वमूर्तासंयोगित्वम्, निर्गुणत्वाद् महापरिमाणानधिकरणत्वं च ब्रह्मणि व्यभिचारीत्यर्थः ॥ अन्त्यस्येति* ॥ गुण-कर्मादीनां निर्गुणत्वेन तादृशपरिमाणानधिकरणत्वाद् गुणादिषु हेतुसिद्धिरित्यर्थः ॥ *कालपरिच्छिन्नत्वमिति* ॥ प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वं वा, एकैकप्रतियोगित्वं वा कालपरिच्छिन्नत्वम्। तच्च नित्येष्वन्योन्याभावादिषु जगत्सत्यत्ववादिनोऽसिद्ध-मित्यर्थः। परिच्छिन्नत्वहेतौ कृतेषु त्रिषु विकल्पेष्वाद्यौ विकल्पौ निरस्य, वस्तुतः परिच्छेद इति तृतीयं विकल्पं दूषयितुमुपक्रमते—*न तृतीय इति* ॥ *तद्धीति* ॥ भेदवत्त्वमित्यर्थः। 'भेदवत्त्वं वस्तुतः परिच्छेदः' इत्यत्र किं तात्त्विकभेदवत्त्वम्? कल्पितभेदवत्त्वं वा? धर्मिसमसत्त्वभेदवत्त्वं वा? भेदवत्त्वमात्रं वा? सत्यप्रतियोगिकभेदवत्त्वं वा? इति विकल्पानभिप्रेत्याद्यं दूषयति—*तस्येति* ॥ भेदस्येत्यर्थः। तथाचासिद्धिरित्यर्थः ॥ *आत्मन्यपीति* ॥ तथाचात्मनि व्यभिचार इत्यर्थः। द्वितीयं दूषयति—*कल्पितस्येति* ॥ तथाच व्यभिचार इत्यर्थः। तृतीयं दूषयति—*धर्मीति* ॥ *ननु*—रूप्यस्य प्रातिभासिकत्वेऽपि तत्र घटादिभेदस्य व्यावहारिकत्वेऽपि स्वप्रतियोगिकभेदभ्रममादाय धर्मिसमसत्ताका-निर्वचनीयभेदवत्त्वं रूप्येऽप्यस्ति, इति न तत्र साधनवैकल्यमिति—चेत्, *न*; रूप्यस्याविद्यावृत्तिरूपस्य साक्षिगोचरतया विशेषदर्शनस्य सत्त्वेन तस्मिन् स्वप्रतियोगिकभेदभ्रमस्यासंभवदुक्तिकत्वादिति भावः। धर्मिसमसत्त्वस्येति बहुव्रीहिः। तस्येत्यनुषक्तेन संबध्यते। चतुर्थं दूषयति—*भिन्नत्वमात्रस्य चेति* ॥ भेदवत्त्वमात्रस्य हेतोः पक्षेऽध्यस्तप्रतियोगिकभेदसत्त्वेनाप्युपपन्नतया सदसद्भेदरूपसाध्यं विनाऽनुपपत्त्यभावेन सदसद्भेदरूपसाध्यं प्रत्यप्रयोजकत्वादध्यस्तप्रतियोगिकभेदवत्त्वसिद्धौ च सत्यत्वमेव सिद्ध्यतीत्यर्थः। भेदवत्त्व-मात्रं कल्पितभेदवत्यात्मन्यनैकान्तिकं चेत्यपि बोध्यम्। पञ्चमं दूषयति—*सत्याद्भेदस्य चेति* ॥ *ननु*

न्यायामृतकण्टकोद्धारः

*एतेनेति* ॥ रूपान्तरेणासत्त्वेन रूपेणाप्यसत्त्वापत्त्येत्यर्थः। यथाकथञ्चिदसतः सर्वथा सत्त्वाङ्गीकारादिति भावः। *आद्ययोरिति* ॥ असङ्गत्वात् सकलमूर्तासंयोगित्वरूपं परिच्छिन्नत्वम्, निर्गुणत्वाच्च महापरिमाणानधिकरणत्वरूपं देशपरिच्छिन्नत्वं ब्रह्मण्यस्तीत्यर्थः ॥ *अन्त्यस्येति* ॥ परिमाणस्य गुणत्वेन गुणानङ्गीकारादित्यर्थः। *अन्योन्याभावादाविति* ॥ नित्यान्योन्याभावादा-वित्यर्थः। *आत्मनीति* ॥ अखण्डार्थवाद इति शेषः। *धर्मिसमसत्त्वस्येति* ॥ नच—घटादि-

तरङ्गिणी

स्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वाद् न ब्रह्मणि तुच्छे वा व्यभिचारः, न वा प्रपञ्चेऽसिद्धिरिति—चेत्, *मैवम्* ; रूप्यप्रतियोगिकघटादिनिष्ठभेदस्य व्यावहारिकतया स्वसमानसत्ताकभेदप्रतियोगिकत्वं रूप्येऽसिद्धमिति साधनवैकल्यम्। नच—रूप्यस्य प्रातिभासिकरूप्यान्तरनिष्ठभेदप्रतियोगित्वमादाय तत्र हेतुः स्यादिति—वाच्यम् ; तद्भेदस्यापि व्यावहारिकत्वात्, अन्यथा तुच्छान्तरनिष्ठो यस्तुच्छभेदः प्रतीयते, तत्प्रतियोगित्वेन तुच्छे व्यभिचारापत्तेः, अविद्यावृत्तिरूपस्य साक्षिसिद्धस्य रूप्यस्य स्वप्रतियोगिकभेदवत्त्वेन ज्ञानमसम्भवि, येन तादृशानिर्वचनीयभेदप्रतियोगित्वमादाय रूप्ये हेतुसत्त्वं स्यादिति ॥

न्यायामृतकण्टकोद्धारः

प्रतियोगिकरूप्यधर्मिकभेदस्य प्रातिभासिकत्वेऽपि रूप्यप्रतियोगिकघटादिधर्मिकभेदस्य व्यावहारिकस्य घटादिप्रतियोगिकरूप्यधर्मिकभ्रमे धर्मिसमसत्ताकानिर्वचनीयभेदवत्त्वस्य रूप्येऽपि सत्त्वेन न साधनवैकल्यमिति—वाच्यम् ; साक्षिवेद्ये रूप्यादौ विशेषदर्शनसत्त्वेनाज्ञानमूलकभ्रमासम्भवात्। *अत्र कश्चित्*—अत्यन्ताभावप्रतियोगित्वम् = देशपरिच्छिन्नत्वम्, ध्वंसप्रतियोगित्वम् = कालपरिच्छिन्नत्वम्, अन्योन्याभावप्रतियोगित्वम् = वस्तुपरिच्छिन्नत्वम्। नच—आत्मनोऽपि जडनिष्ठात्यन्ताभावान्योन्याभावप्रतियोगित्वेन व्यभिचारः, ध्वंसप्रतियोगित्वस्य च कालाकाशादावभावेनासिद्धिरिति—वाच्यम् ; अत्यन्ताभावेऽन्योन्याभावे च प्रतियोगिसमसत्त्वं विशेषणं देयम्। एवं च न ब्रह्मणस्तादृशाभावप्रतियोगित्वम्, इति न व्यभिचारः ; आत्मप्रतियोगिकजडनिष्ठभेदस्य प्रतियोगिभूतब्रह्मसमसत्ताकत्वाभावात्, नाप्यसिद्धिः ; "अतोऽन्यदार्तमि"ति श्रुत्या ब्रह्मातिरिक्तस्य सर्वस्य ध्वंसप्रतियोगित्वावगमात्—इत्याह, *तन्न* ; अत्यन्ताभावप्रतियोगित्वं हि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वम्? सार्वत्रिक-त्रैकालिकनिषेधप्रतियोगित्वं वा? *नाद्यः* ; किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वस्यान्यत्र सत्त्वेनाप्युपपत्त्याऽर्थान्तरात्, *न द्वितीयः* ; तस्य साध्यमानमिथ्यात्वानतिरेकेण साध्याविशिष्ट्यात्। नच—अनिर्वचनीयत्वादिसाध्यान्तरस्य हेतुत्वाद् न साध्याविशिष्ट्यमिति—वाच्यम् ; तथाप्यसिद्ध्यनिस्तारात्। नच—दृश्यत्वादिहेतुभिरेतादृशहेतुसिद्धिरिति—वाच्यम् ; दृश्यत्वादीनां निरस्तत्वात्। किञ्चात्यन्ताभावप्रतियोगित्वमात्मनोऽप्यस्ति, इति तत्र व्यभिचारः। नच—प्रतियोगिसमसत्ताकात्यन्ताभावप्रतियोगित्वाभावाद् नात्मनि व्यभिचार इति—वाच्यम् ; प्रतियोगिभूतब्रह्मणोऽन्या सत्ता, अत्यन्ताभावस्य चान्या सत्ता, इत्यस्यार्थस्य प्रपञ्चमिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्, तार्किकमते व्यभिचारश्च। किञ्च शुक्तिरजतादौ प्रतियोगिसमसत्ताकात्यन्ताभावप्रतियोगित्वाभावेन साधनवैकल्यम्। नहि शुक्तिरजतात्यन्ताभावः प्रातिभासिकः। नच—प्रतियोगिनः प्रातिभासिकत्वात् तदभावः प्रातिभासिक इति—वाच्यम् ; प्रतियोगि-तदभावयोरेकसत्ताकत्वनियमाभावात्, अन्यथा ब्रह्मप्रतियोगिकान्योन्याभावस्यापि

न्यायामृतसौगन्ध्यम्

सा चायुक्ता। यत्तु—ब्रह्मावृत्तित्वविशिष्टप्रतियोगिताकत्वेनात्यन्ताभावोऽन्योन्याभावो वा विशेष्यः, इति न ब्रह्मणि व्यभिचारः—इति, *तन्न*, ब्रह्मावृत्तित्वविशिष्टप्रतियोगिताकत्वविशिष्टात्यन्ताभावान्योन्याभावप्रतियोगित्वेन ब्रह्मणोऽपि मिथ्यात्वापत्त्याऽऽभाससाम्याच्च ॥

सौगन्ध्यविमर्शः

अत्यन्ताभावपारमार्थिकतापक्षे तु ब्रह्मणोऽत्यन्ताभावरूपत्वमेव, नतु तत्प्रतियोगित्वम् ; अभावत्वोपलक्षितस्य सप्रतियोगिकत्वाभावस्य पूर्वमेवोक्तत्वात् ॥

न्यायामृतम्

*एतेन*—यदुक्तं प्रमाणमालायाम्—"विवादाध्यासिताः, स्वानुगतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वात्, यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वा इदमंशे, सदर्थे च ब्रह्मण्यनुगच्छति पटादिकं विभज्यते—'सन् घटः' 'सन् पटः' इति प्रतीते"रिति—*निरस्तम्* ॥ विभक्तत्वं हि न तावद् विभिन्नत्वम्, कादाचित्कत्वं वा ; क्वाचित्कत्वं वा ; निरस्तत्वात् । नापि बाधकदशायां निषिध्यमानत्वम् ; साध्याविशिष्ट्यात् । नापि कदाचिदेव प्रकाशमानत्वम् ; सुख-दुःखादिभोगेऽसिद्धेः, अप्रयोजकत्वाच्च । युक्तो हि सतोऽपि प्रकाशसामग्र्याः कादाचित्कत्वेन कदाचिदेवेच्छादिवत् प्रकाशोऽपि । नाप्यननुगतत्वम् ; अननुगतानां घट-पटादीनां चलनादौ रूपादौ द्रव्यत्वादौ

तरङ्गिणी

*स्वानुगतेति* ॥ स्वान् प्रत्यनुगतं प्रतिभासस्वरूपं यद् वस्तु, तत्र कल्पिता इत्यर्थः । अत्र 'प्रतिभासे' इत्येतद् धर्मिज्ञानरूपभ्रमकारणस्य सत्त्वाद् भ्रमोपपत्तिरित्येवमर्थम्, नतु साध्यान्तर्गतम् । अत एव तदनन्तर्भावेणैव 'यथा सर्पे'त्याद्युदाहरणवाक्यम् । 'अनुगते'त्येतदप्यननुगतस्यानुगतेऽध्यासो युक्त इति प्रतिपादयितुम् । *यथा सर्पमालादिकमिति* ॥ विभक्तमिति शेषः । अतो नोदाहरणे साधनानुक्तिः ॥ *सदर्थे चेति* ॥ एतच्चोपनयवाक्यम् । तत्र विभक्तत्वस्य हेतोरनुगतरूपावधिसापेक्षत्वादनुगतस्य ब्रह्मणो निर्देशः, इति नाधिक्यं दोषः । उपनयान्तैश्चतुर्भिरवयवैरनुमितिहेतुज्ञाननिष्पत्तेर्निगमनमनावश्यकमिति पक्षमाश्रित्य निगमनानुक्तिः, अतो न न्यूनताऽपीत्यर्थः ॥ *निरस्तत्वादिति* ॥ आद्यस्य वस्तुपरिच्छिन्नत्वरूपहेतुनिरासेन, द्वितीय-तृतीययोः कालपरिच्छिन्नत्व-देशपरिच्छिन्नत्वहेतुनिरासेनेत्यर्थः । *सुख-दुःखादीति* ॥ सुखादेः सर्वदा प्रकाशमानत्वादित्यर्थः ॥ *युक्तो हीति* ॥ तथाच कादाचित्कप्रकाशरूपकार्येण प्रकाशसामग्र्याः कादाचित्कत्वमेव सिद्ध्यति, नतु प्रकाशमानस्याप्यसत्यत्वम् ; बीजाभावादित्यर्थः । अननुगतान् घटादीन्

न्यायामृतकण्टकोद्धारः

पारमार्थिकत्वापत्तेः । नापि ध्वंसप्रतियोगित्वं कालपरिच्छिन्नत्वमिति द्वितीयः ; कालाकाशाद्यसिद्धेः । नच—"अतोऽन्यदार्तमि"मि श्रुत्या तत्सिद्धिरिति—वाच्यम् ; तस्य ब्रह्मान्यस्य पारतन्त्र्यपरत्वेनाप्युपपत्तेरुक्तार्थासाधकत्वात्, कालाकाशाद्यभावे व्याहतेर्मूल एवोक्तत्वाच्च, परोक्तत्रैकालिकनिषेधप्रतियोगित्वस्यापि पक्षान्तःपातित्वेन तस्य ध्वंसप्रतियोगित्वे यदैव निषेधाभावः, तदैव प्रतियोगिसत्यत्वापत्तेश्च । नाप्यन्योन्याभावप्रतियोगित्वं वस्तुपरिच्छिन्नत्वमिति तृतीयः ; ब्रह्मणि व्यभिचारात्, अस्याश्च व्यवस्थाया मिथ्यात्वसिद्ध्युत्तरकालीनत्वाच्च, शुक्तिरूप्यादौ साधनवैकल्याच्च । तस्मात् परिच्छिन्नत्वं निर्वक्तुमशक्यमिति स्थितम् ॥

उक्तदूषणमन्यत्राप्यतिदिशति—*एतेनेति* ॥ *स्वानुगतप्रतिभासे वस्तुनीति* ॥ स्वानुगतो यः प्रतिभासः, तद्रूपवस्तुनीत्यर्थः । *कादाचित्कत्वमिति* ॥ ध्वंसप्रतियोगित्वमित्यर्थः । *क्वाचित्कत्वमिति* ॥ अत्यन्ताभावप्रतियोगित्वमित्यर्थः । *निरस्तत्वादिति* ॥ भागासिद्ध्यादिनेति शेषः । *नापीति* ॥ भ्रमदशायामनिषिध्यमानत्वेनासिद्धिवारणाय 'बाधकदशायामि'ति विशेषणम् । *साध्येति* ॥ नच—मिथ्यात्वान्तरस्य साध्यत्वाद् न साध्याविशिष्ट्यमिति—वाच्यम् ; तथापि सन्दिग्धासिद्ध्यनिस्तारादिति भावः । *सुख-दुःखेति* ॥ "तत्प्रकाशस्य साक्षिरूपत्वेन तस्य यावत्स्वसत्त्वं प्रकाशमानत्वादिति भावः । अप्रयोजकत्वं विशदयति—*युक्तो हीति* ॥ अननुगतं स्वानुगते कल्पितमिति व्याप्तौ व्यभिचारमाह—*अननुगतानामिति* ॥ *ननु* चलनाद्यप्यनुगतत्वमेव नास्तीत्यत आह—

अद्वैतसिद्धिः

*अत एव*—'घटादयः, स्वानुगतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वात्; यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते, 'एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते—'सन् घटः' 'सन् पटः' इत्यानन्दबोधोक्तमपि—*साधु*। विभक्तशब्देन स्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तु-परिच्छेदस्य विवक्षितत्वाद् न ब्रह्म-तुच्छयोर्व्यभिचारः।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*स्वानुगतप्रतिभासे = स्वतादात्म्येन स्वरूपतो भानयोग्ये। स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतावतीति यावत्। सप्तम्या व्यापकत्वमर्थः। व्यापकतानिरूपकत्वं च तादात्म्येन। तथाच यद्यद् उक्तप्रकारताविशिष्टम्, तत्र तत्र कल्पिता इत्यर्थः। *कल्पितत्वम् = ज्ञाननिवर्त्यत्वम्, स्वाभाववति ज्ञेयत्वं वा। तथाचोक्तप्रकारताव्यापकस्वनिवर्तकधीविषयताकत्वम्, उक्तप्रकारताव्यापकस्वात्यन्ताभावकत्वं वा पर्यवसितार्थः। उक्तप्रकारतासामानाधिकरण्यमात्रस्य विषयतादौ निवेशे पटादेः स्वतादात्म्यभ्रमविषयघटत्वादौ कल्पितत्वमादाय परैरर्थान्तरं वाच्यम्, अतो व्यापकत्वमुक्तम्। स्वमते हि पटादेरुक्तभ्रमे नारोपितत्वम्, किंतु तत्तादात्म्यस्य, इति तन्निवर्तकधीविषयत्वमेव घटत्वादेः, नतु पटादिनिवर्तकधीविषयत्वम्, इति स्वानभिमतं तत्, परानभिमतमपि; परस्य तार्किकादेरन्यथाख्यातिस्वीकारेण पटादिनिवर्तकधीविषयत्वस्य घटत्वादिजातावनङ्गीकारात्। अत उभयवाद्यसंमतसिद्ध्याऽर्थान्तरं स्यात्, व्यापकत्वानिवेशे तु तादृशप्रकारतायाः सद्रूपेऽपि सत्त्वात् तस्य स्वनिवर्तकधीविषयत्वासिद्ध्या मदिष्टसिद्धिः। नच—स्वमते बाधः; घटत्वादेर्व्यावहारिकपटादिनिवर्तकबुद्ध्यविषयत्वादिति—वाच्यम्; जातिमात्रस्य सद्रूपताया मूल एव वक्ष्यमाणत्वात्। तादृशप्रकारतावति द्रव्य-गुणादौ स्वनिवर्तकधीविषयत्वाभावात् 'अनवच्छिन्ने'ति प्रकारतायामुक्तम्। प्रतियोगिता-विषयतादेरनवच्छिन्नप्रकारतास्वीकारे तत्र स्वतादात्म्यभ्रमीयतादात्म्यविषयतानिरूपितानवच्छिन्नप्रकारतावति स्वनिवर्तकधीविषयत्वाभावेन व्यभिचाराद् निरूपितान्तस्थले *स्वतादात्म्यसमानाधिकरणेति* वाच्यम्। तथाच 'प्रतियोगी घटः' इत्यत्र प्रतियोगितादेर्विशेषणतासम्बन्धेनैव स्वनिष्ठत्वात् स्वतादात्म्याभावाद् न व्यभिचारः। एवञ्च सामानाधिकरण्यमपि व्यापकत्वस्थाने वक्तुं शक्यम्, द्वितीयसाध्ये तु न प्रकारतायामनवच्छिन्नत्वं देयम्, द्रव्यादौ जातौ च सर्वत्र स्वाभावस्य सिसाधयिषितत्वात्। यथेत्यादेरुदाहरणे तात्पर्यम्। यद्यद् विभज्यते, तत् स्वानुगतप्रतिभासे कल्पितम्, यथा रज्जुसर्पादिकमित्यर्थः। एवमित्यादेरुपनय-निगमनयोस्तात्पर्यम्। प्रथमसाध्याभिप्रायेण शङ्कते—

न्यायामृतसौगन्ध्यम्

**अत एव—घटादयः (१)स्वानुगते वस्तुनि कल्पिताः, विभक्तत्वात्; यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते, एवं ब्रह्मण्यनुगते घटादिकं विभज्यते; 'सन् घटः' 'सन् पटः' इत्यानन्दबोधोक्तमपि—साधु; विभक्तशब्देन समानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वादिति—*निरस्तम्*; 'नीलो घटः' 'नीलः पटः' 'घटो ध्वस्तः' 'पटो ध्वस्तः' इति नैल्य-ध्वंसादौ घटादीनामध्यासापत्तेः, 'खण्डो गौर्मुण्डो गौरि'त्यादौ गोत्वेऽध्यासाभावेन व्यभिचाराच्च,**

सौगन्ध्यविमर्शः

(१) अखण्डैकरसस्याप्यनाद्यविद्यासम्बन्धप्रयुक्तकल्पितसदादिभेदाङ्गीकारसंभवात् सदाद्यात्मनाऽऽवरणं न विरुद्धम्; सद्रूपं हि ब्रह्म घटाद्यात्मना भासमानतादशायां मूलाज्ञानाविषयोऽपि कालान्तरे यावदखण्डसाक्षात्कारं मूलाज्ञानेनावृतमेव। व्यक्तं हि सिद्धान्तलेशसंग्रहे—घटादिज्ञानेन मुक्त्यापत्तिशङ्का-परिहारादिकम्, इति न सद्योमोक्षादिप्रसङ्गोऽद्वैतप्रक्रियाविदुषा। प्रमाणान्तराप्राप्तत्वाम्नानं तु शुद्धस्वरूपेणाखण्डरूपेण वा, नतु सदादिरूपेणापि, इति "नावेदविदि"ति वचनाविरोधः॥

न्यायामृतम्

ध्वंसादावनात्मत्वादौ च, खपुष्प-नृशृङ्गादीनां चासति, आत्मनश्च सदर्थेऽनध्यासात्। अस्ति हि 'घटश्चलति' 'पटश्चलति' 'घटो रूपी' 'पटो रूपी' 'घटो द्रव्यम्' 'पटो द्रव्यम्' 'घटो ध्वस्तः' 'पटो ध्वस्तः' 'अनात्मा घटः' 'अनात्मा पटः' 'खपुष्पमसत्' 'नृशृङ्गमसत्' 'आत्मा सन्नि'त्यादिधीः ॥ दृश्यते चैकत्रानेकेषामिवैकस्यापि रूप्यस्यानेकेषु शुक्ति-वङ्गादिष्वध्यासः। एवं च सदर्थस्यैव घटादिष्वारोपः किं न स्यात् ?

*एतेन*—विवादाध्यासितम्, सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्; प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवदिति ब्रह्मसिद्ध्युक्तम्—*निरस्तम्*; 'खण्डो गौर्मुण्डो गौरि'ति प्रत्येकं गोत्वानुविद्धस्यापि खण्डादेस्तत्रानध्यासात् ॥

तरङ्गिणी

प्रति चलनादीनामनात्मान्तानामनुगमम्, खपुष्प-नृशृङ्गादीन् प्रत्यसतोऽनुगमम्, आत्मानं प्रति सदर्थस्यानुगमं प्रतीत्या दर्शयति—*अस्ति हीति* ॥ एकस्याप्यनेकेष्वारोपो दृष्टः, इत्येकस्यापि ब्रह्मणोऽनेकेषु वियदादिष्वारोपः स्यादित्याह—*दृश्यत इति* ॥ *एतेनेति* ॥ 'घटश्चलति' 'पटश्चलति' 'घटो रूपी' 'पटो रूपी'त्यादिचलन-रूपाद्यनुविद्धतया प्रतीयमानस्यापि घट-पटादेश्चलनादिष्वारोपादर्शनेनेत्यर्थः ॥ *कल्पितमिति* ॥ स्वाभाववति प्रतीयत इत्यर्थः ॥ *तदनुविद्धत्वेनेति* ॥ सूत्रे स्यूतानां नानामणीनां सूत्रानुविद्धतया यथा प्रतीतिः, तथा 'घटः सन्' 'पटः सन्नि'ति सदर्थानुविद्धतया प्रतीयमानत्वादित्यर्थः। दूरात् तरवोऽपि निरन्तरा वनाकारानुविद्धाः प्रतिभासन्ते। नच ते तत्र कल्पिताः, इति 'प्रत्येकमि'त्युक्तं प्रमाणमालायाम्। वयं तु 'सन् ब्रह्मे'ति सदनुविद्धत्वेन प्रतीयमाने ब्रह्मणि व्यभिचारवारणाय 'प्रत्येकमि'ति। समासवृत्त्यन्तर्गतवीप्सात्रलेनानेकेषां तदनुविद्धतया प्रतीयमानत्वं हेत्वर्थो लभ्यते, सद्ब्रह्मणोश्च नानेकत्वम्। नचैवम्—अनेकत्वमात्रस्यैव कल्पितत्वव्याप्यतया शेषवैयर्थ्यमिति—वाच्यम्; प्रतीतिविशेषविषयत्वस्य हेतुत्वेन तत्र वैयर्थ्यशङ्काऽभावात्। *अत एव*—"विज्ञानमानन्दं ब्रह्मे'ति ब्रह्मानुविद्धत्वेन प्रतीयमानानां विज्ञानादीनां न ब्रह्मणि कल्पितत्वमिति व्यभिचारः—*निरस्तः*; विज्ञानादीनां ब्रह्माभिन्नत्वेन निरुक्तहेतोस्तत्रासत्त्वात्। यद्वा—सद्रूपब्रह्माभिन्नत्वमेव सद्रूपे कल्पितत्वम्, इति न कोऽपि दोष इति ब्रूमः ॥ *प्रत्येकं चन्द्रानुविद्धेति* ॥ जलतरङ्गस्थचन्द्रस्य गगनस्थितचन्द्रानुवेधो नाम=तस्मिन् दृश्यमाने सति दृश्यमानत्वमित्यादि बोध्यम्। एतेनेत्यतिदिष्टदोषे सत्येव दोषान्तरमाह—*खण्डो गौरिति* ॥

न्यायामृतकण्टकोद्धारः

*अस्ति हीति* ॥ अननुगतस्यानुगतेऽध्यास इति चेत्, तस्यनुगतस्याप्यननुगतेऽध्यासदर्शनात् सदर्थस्यैव पटादिष्वध्यासः स्यादित्याह—*दृश्यते चेति* ॥ नच—एवं गौरवम्; अनेकेषामधिष्ठानत्वाभ्युपगमात्, इति—वाच्यम्; दर्शनानुरोधेन गौरवस्य प्रामाणिकत्वात्। नच—स्वसमानसत्ताकभेदप्रतियोगित्वं विभक्तत्वम्, नच व्यभिचारः; तुच्छ-ब्रह्मप्रतियोगिकभेदस्य स्वसमानसत्ताकत्वाभावादिति—वाच्यम्; मन्मते व्यभिचारस्यापरिहारात्, दृष्टान्तस्य साधनविकलत्वाच्च। *सद्रूपे कल्पितमिति* ॥ अत्र कल्पितत्वं स्वाभाववति प्रतीयमानत्वम्, स्वरूपज्ञाननिवर्त्यत्वं वा। *प्रत्येकं तदनुविद्धत्वेनेति* ॥ अत्र 'प्रत्येकमि'ति विशेषणं सदनुविद्धत्वेन प्रतीयमाने ब्रह्मणि व्यभिचारपरिहाराय। तदर्थश्च—अनेकेषां सदनुविद्धत्वेन प्रतीयमानत्वम्। सदर्थब्रह्मणश्चानेकत्वाभावाद् न तत्र व्यभिचारः। यद् यदनुविद्धत्वेन प्रतीयते, तत् तत्र कल्पितमिति सामान्यव्याप्तेर्व्यभिचारमाह—*खण्डो गौरिति* ॥

न्यायामृतम्

किंच रूपादिहीनमासंसारमज्ञानावृतं शब्दैकगम्यं ब्रह्म 'सन् घटः' 'सन् शब्दः' इत्यादिचाक्षुषादिज्ञाने न भाति, किंत्व'नित्यो घटः' इत्यादावनित्यत्वादिकमिव सत्त्वमपि घटगतमेव। नच—स्वरूपेणाप्रत्यक्षस्यापि राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेन प्रत्यक्षतेति—युक्तम्; शब्दाद्यवच्छिन्नस्य गगनादेः श्रावणादित्वापातात्, राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य शुक्लभास्वरचन्द्रसंबन्धाच्चाक्षुषता युक्तेति ॥

---

अद्वैतसिद्धिः

नच—'खण्डो गौर्मुण्डो गौरि'त्येवमादिस्वानुगतप्रतिभासे गोत्वादौ व्यक्तीनामकल्पितत्वाद् व्यभिचार इति—वाच्यम्; सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि

तरङ्गिणी

तथाचोक्तहेतोः स्वानुगतप्रतिभासे गोत्वादौ व्यक्तीनामकल्पितत्वात् खण्डादौ व्यभिचार इत्यर्थः। उक्तहेतोः स्वरूपासिद्धिमप्याह—*किञ्चेति* ॥ रूपादिहीनमिति प्रत्येकं हेतुत्रयम्। चाक्षुषत्वादिप्रयोजकहीनमित्याद्यहेत्वर्थः। तेन रूप-रूपत्व-रूपाभावादिषु न व्यभिचारः। आवृतस्यापि मेघादिना सूर्यस्यावरणापगमदशायां चाक्षुषत्वेन व्यभिचारो मा भूत्, इति द्वितीयहेतावा'संसारमि'ति विशेषणम्। नचात्र दृष्टान्तासिद्धिः; तुषाद्यावृतविनष्टबीजादेरेव दृष्टान्तस्य सुलभत्वात्, व्यतिरेकव्याप्तौ वा घटादिर्दृष्टान्तः ॥ किंत्विति* ॥ तथाच 'सन् घटः'-इत्यत्र ब्रह्मभिन्नस्य घटादिनिष्ठस्य सत्त्वस्यानित्यत्व-घटत्वादिना समानस्य प्रतिभासनाद् न ब्रह्मरूपसदर्थानुवेधेन घटादिप्रतिभासः, इति हेतोरसिद्धिरित्यर्थः। रूपादिराहित्याद्युक्तहेतुत्रययुक्तस्यापि ब्रह्मणश्चाक्षुषज्ञाने भानमस्तु; तथा व्यञ्जकविशेषसमवधानात्, चन्द्रसंनिधौ राहोरिव, इत्याशङ्क्य निराकरोति—*न चेति* ॥ स्वरूपयोग्यस्य सहकारिसमवधाने फलोपधानम्, नतु स्वरूपायोग्यस्य सहकारिशतेनापि। योग्यता च तादृशचाक्षुषत्वरूपविशेषवत्त्वमेव, इति तद्रहितं ब्रह्म न चाक्षुषज्ञानयोग्यम्; अतो न सहकारिसमवधानेऽपि चाक्षुषज्ञाने भासत इत्यभिप्रेत्य योग्यतानादरणे दोषमाह—*शब्दाद्यवच्छिन्नस्येति* ॥ राहोस्तु योग्यताऽस्तीत्याह—*नीलस्येति* ॥ अत्र वदन्ति ("सि०) गोत्वादिसामान्यानभ्यस्ते खण्डादौ न तावद् व्यभिचारः; सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमाद् व्यक्ति-

न्यायामृतकण्टकोद्धारः

*रूपादिहीनमिति* ॥ अत्र रूपादिहीनत्वम्, आसंसारमज्ञानावृतत्वम्, शब्दैकसमधिगम्यत्वं चेति चाक्षुषज्ञानाद्यविषयत्वे हेतुत्रयमुक्तम् ॥

*अत्र कश्चित्*—गोत्वाद्यनुविद्धतया प्रतीयमाने खण्डादौ न व्यभिचारः; सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमाद्

गौडब्रह्मानन्दी (लघुचन्द्रिका)

*नचेत्यादि* ॥ गोत्वादिकमनपेक्ष्य कार्यप्रयोजकतायां दृष्टान्तमाह—*गोत्वाद्यभ्युपगमेऽपीत्यादि* ॥

न्यायामृतसौगन्ध्यम्

नच—सामान्यातिरिक्तं गोत्वादिकं नाङ्गीक्रियते, तदङ्गीकारेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमेन व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा व्यञ्जकत्ववद् व्यक्तिविशेष-

अद्वैतसिद्धिः

गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमाद् व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववद् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तद्व्यवहारजनकत्वोपपत्तेः ॥

तरङ्गिणी

विशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववद् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तद्व्यवहारजनकत्वोपपत्तेः ।

न्यायामृतकण्टकोद्धारः

व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववद् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तद्व्यवहारजनकत्वोपपत्तेः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*व्यक्तिविशेषाणामिति* ॥ जातिनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति स्वविषयसमवेतत्वसम्बन्धेन प्रत्यक्षस्य कारणत्वाद् जातिप्रत्यक्षप्रयोजकस्योक्तसम्बन्धस्य घटकतया व्यक्तीनामुक्तप्रत्यक्षे प्रयोजकत्वाद् जातिव्यञ्जकत्वमिति भावः । *अननुगतानाम्*=गोत्वाद्यविशेषितानाम् । *ननु*—गोत्वादिप्रत्यक्षे सास्नाद्यवच्छिन्नेन्द्रियसंयोगवत्समवायादेर्विशिष्य हेतुताया आवश्यकत्वाद् उक्तहेतुत्वे मानाभावः, तत्राह—*सास्नादीति* ॥ *अनुगतानाम्* = विशेषितानाम् । सास्नाद्यवच्छिन्नचक्षुःसंयोगवत्समवायादिनिष्ठकारणतावच्छेदकघटकतया व्यक्तीनां गोत्वादिव्यञ्जकत्वमिति भावः । *व्यक्तिविशेषविशिष्टत्वेन* = गवादितत्तद्व्यक्तिसंसृष्टरूपेण । *तद्व्यवहारेति* ॥ 'गौरि'त्यादिव्यवहारेत्यर्थः । गोत्वजातिमत्त्वेन पराभिमताः यावत्यो व्यक्तयः, तावदन्यतमोपरक्तसद्रूपं 'गौरि'त्याकारव्यवहारे कारणम्, एवं 'घटः' इत्यादिव्यवहारेऽपि बोध्यम् । *नन्वेवम्*—गवादिपदानां तत्तद्व्यक्तिविशिष्टसद्रूपे सद्रूपविशिष्टतत्तद्व्यक्तिषु वा शक्तिर्वाच्या, तथाच तेषां नानार्थकत्वापत्तिः ; एवं गवादेः कारणत्वादिकमपि तत्तद्व्यक्तिघटितावच्छेदकभेदेनानन्तं स्यादिति—चेत्, *न* ; सर्वगोव्यक्तिष्वेकस्या एव शक्तेः सम्भवेन नानार्थकत्वाभावात् । नच—अनुगतमेकमवच्छेदकं विना तावद्व्यक्तिनिष्ठा कथमेका शक्यतेति—वाच्यम् ; तावद्व्यक्तिधीजननानुकूला शक्तिर्गोपदे स्वीक्रियते । सा चाखण्डकारणतारूपा, उक्तधीनिष्ठा कार्यताऽप्यखण्डा, तयोश्चावच्छिन्नत्वे मानाभावाद् न कोऽपि धर्मस्तदीयाखण्डावच्छेदकताश्रयः । अत एव शक्तिग्रहनिष्ठकारणत्वमप्येकमेव । 'सद्रूपविशिष्टतद्व्यक्तिवाचकं गौरिति पदमि'त्याकारकेषु शक्तिज्ञानेष्वेकस्या एव कारणताया अनवच्छिन्नायाः 'सद्रूपविशिष्टतद्व्यक्तिरि'त्याकारकशाब्दबोधं प्रति स्वीकारात्, गोत्वजात्याश्रयत्वेन पराभिमतव्यक्तीनामन्यतमस्यैव तद्व्यक्तिशब्देन कारण-कार्यकोट्योर्निवेशात् । अत एव घटव्यक्तिं तद्व्यक्तित्वेनावगाहमानाद् उक्ताकारशक्तिज्ञानाद् न गोव्यक्तीनां शाब्दबोधः ; तत्र तत्कारणत्वस्यास्वीकारात् । नच—तथाप्येकां गोव्यक्तिमवगाहमानात् शक्तिग्रहादन्यगोव्यक्तिशाब्दधीः स्यादिति—वाच्यम् ; इष्टत्वात्, गोत्वादिजातिस्वीकारेऽपि गोत्वेनैकगोव्यक्ति-

न्यायामृतसौगन्ध्यम्

विशिष्टत्वेन सत्सामान्यस्यैव तत्तद्व्यवहारजनकत्वोपपत्तिरिति—वाच्यम् ; विशिष्टस्य दृश्यस्य मिथ्याभूतस्य सत्सामान्यस्य घटादिसमसत्ताकत्वेन तदधिष्ठानत्वासम्भवात् । *एतेन*—गोत्वजातिमत्त्वेन पराभिमता यावत्यो व्यक्तयः, तावदन्यतमोपरक्तं सद्रूपं 'गौरि'त्यादिव्यवहारे कारणम्, एवं 'घटः' इत्यादिव्यवहारेऽपि बोध्यमिति—*निरस्तम्* ; उक्तान्यतमविशिष्टस्य दृश्यस्य मिथ्यात्वेन व्यक्त्यधिष्ठानत्वासंभवात्, तत्तद्व्यक्तिविशिष्टस्य नानात्वेन सर्वव्यक्त्यनुगतत्वासंभवात्, व्यक्तीनामुपलक्षणत्वे तदुपलक्षितसत्त्वस्य सर्वत्र सत्त्वेन 'इयं गौः' 'अयमश्वः' इत्यादिपरस्पराव्यावृत्तव्यवहारानापत्तेः ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयकशक्तिज्ञानाद् गोत्वेन गोव्यक्त्यन्तरशाब्दबोधस्य मीमांसकादिभिः स्वीकारात्। *ननु*— कारणत्वादे-रखण्डत्वस्वीकारेऽप्यन्वय-व्यतिरेकज्ञानस्यैव तद्ग्राहकत्वं वाच्यम्, उक्तज्ञानं च नानुगतैकरूपं विना, इति तादृशं गोत्वादिकमवश्यं वाच्यमिति—चेत्, *न*; तृणारणि-मण्यादिस्थल इवोपस्थितानां त्रि-चतुरादिव्यक्तीनां प्रत्येकान्वय-व्यतिरेकज्ञानेन कारणता तास्वेव प्रथमतो गृह्यते, पश्चाद् व्यक्त्यन्तरादपि कार्योत्पत्तिदर्शनात् तत्रापि तस्याः सम्बन्धोऽस्तीति कल्प्यते, नतु सर्वकारणव्यक्तीनामन्वय-व्यतिरेकधीस्तद्ग्राहिका। नहि तृणारणि-मणिभ्य एव वह्निरुत्पद्यत इति नियन्तुं शक्यम्; तैल-घृत-मांस-वसादिभ्योऽपि तदुत्पत्तिदर्शनात्। नच तावतां प्रथममुपस्थितिरस्ति, येन प्रथमत एव प्रत्येकमन्वय-व्यतिरेकधीसम्भवः। *यत्तु*—कारणत्वादेरवच्छिन्नत्वे-नैवानुभवः—इति, *तन्न*; 'धूमो वह्निव्याप्यः' इत्याद्यनुभवे धूमत्वादौ व्याप्यतावच्छेदकत्वाभानस्य दीधितिकाराद्युक्तत्वेन तद्वदेव 'दण्डो घटकारणमि'त्याद्यनुभवे दण्डत्वादेः कारणतावच्छेदकत्वाभानात्। *अथवा*—तावद्व्यक्तीनां यावन्ति सद्रूपेण सह तादात्म्यानि, तावदन्यतमत्वविशिष्टसम्बन्धेन सद्रूपविशिष्टं गौरिति व्यवहारविषयः, तेन सम्बन्धेन सद्रूपं तत्तत्कारणतादेरवच्छेदकम्। नच—गौरवाद् दुर्ज्ञेयत्वा-च्चोक्तान्यतमत्वस्य तथात्वासम्भवाद् गोत्वादेः कल्पनमेव युक्तमिति—वाच्यम्; अखण्डस्योक्तान्यतमत्वस्य स्वरूपत एव निवेशेनोक्तदोषाभावात्, क्लृप्तेनैव तेन निर्वाहे गोत्वादिकल्पनस्यायुक्तत्वात्। नचैवम्—गोव्यक्तीनामन्यतमत्वेनैव गवादेः कारणत्वादिकमास्ताम्, किं सद्रूपस्य तत्कल्पनया? इति—वाच्यम्; गोत्वादि-जातिस्वीकारेऽपि तादृशान्यतमत्वस्य कारणताद्यवच्छेदकत्ववारणाय तस्यावाभ्यामन्यथासिद्धिनिरूपकत्व-स्वीकारात्। अत एव सद्रूपास्वीकर्तृबौद्धैरुक्तान्यतमत्वस्यान्यापोहनात्मकस्य गवादिपदवाच्यत्वादिकं स्वीक्रियते। तदेतत् पक्षद्वयमपि भगवतो भर्तृहरेरुक्तिमनुगच्छति ॥

*उक्तं हि तेन*—"सम्बन्धभेदात् सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते, तस्यां सर्वे शब्दा व्यवस्थिताः ॥" तथा—"सा जातिः, सा महासत्ता, तामाहुस्त्व-तलादयः ॥" इति। *तामाहुरिति* ॥ 'गोत्वमि'त्यादौ सद्रूपमेव त्वादिभावप्रत्ययार्थः। तत्र तादात्म्यसम्बन्धेन प्रकृत्यर्थ-स्यान्वय इत्यर्थः। नच—सद्रूपमात्रस्य त्वादिप्रत्ययशक्यत्वे तत्र प्रकृत्यर्थस्य भाने निर्धर्मितावच्छेदकबोधापत्तिरिति—वाच्यम्; सद्रूपेण सदन्याप्रकारकधीप्रकारत्वस्वरूपेण तच्छक्यत्वात्। *सम्बन्ध-भेदादिति* ॥ तत्तद्गवादिव्यक्त्युपहितत्वरूपस्य तावद्व्यक्तितादात्म्यानामन्यतमत्वविशिष्टरूपस्य वा सम्बन्धस्य भेदादित्यर्थः। नच—प्रकृत्यर्थोपलक्षितसद्रूपस्य सर्वत्र सत्त्वाद् 'गोत्वमश्ववृत्ती'त्यादिव्यवहारः स्यादिति—वाच्यम्; प्रकृत्यर्थविशिष्टसत्ताया एवानन्वयात्। *अत्रेदं बोध्यम्*—गोत्वादिजातीनां सद्रूपता-नङ्गीकारेऽपि प्रकृतानुमाने न व्यभिचारः; गवादिव्यक्तीनां गोत्वादिजात्यवच्छिन्नचिति कल्पितत्वे-नोक्तजातावपि कल्पितत्वात्, यथाहि पूर्णानन्दरूपेऽधिष्ठाने जायमानप्रपञ्चस्य सद्रूपं साधारण आधारः, तथा गवाद्यवयवो गोत्वादिजातिश्चासाधारणाधारः, इति तत्रापि गवादयः कल्पिताः। नचैवम्—कल्पितपदस्य तज्ज्ञाननिवर्त्यार्थकत्वपक्षे व्यभिचार इति—वाच्यम्; ब्रह्मसिद्धिकारोक्तानुमान एव तत्पक्षस्वीकारात्। अत एव 'रज्ज्वा इदमंशे विभज्यते' इति मूलम्। नहीदमंशज्ञानेन सर्पादिनिवृत्तिः—*इति* ॥ आचार्यैस्तु यद् जातीनां सद्रूपत्वं विवरणाद्युक्तं व्यवस्थापितम्, तत्रायं भावः—जातीनां सद्रूपत्वम्, अविद्याशक्ति-

न्यायामृतसौगन्ध्यम्

*एतेन*—गोत्वादिजातीनां सद्रूपत्वानङ्गीकारेऽपि प्रकृतानुमाने न व्यभिचारः; गवादिव्यक्तीनां गोत्वादिजात्यवच्छिन्नचिति कल्पितत्वेनोक्तजातावपि कल्पितत्वादिति—*निरस्तम्*; जात्यवच्छिन्नस्य मिथ्याभूतस्य व्यक्तिसमसत्ताकस्य व्यक्त्यधिष्ठानत्वासंभवात् ॥

अद्वैतसिद्धिः

*अत एव*—'घटादिकम्, सद्रूपे कल्पितम्, प्रत्येकं सदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत्'—इति ब्रह्मसिद्धिकारोक्तमपि—*साधु* ॥

*ननु*—सदर्थस्य ब्रह्मणो रूपादिहीनस्याऽऽसंसारमज्ञानावृतस्य शब्दैकगम्यस्य कथं 'घटः सन्' इत्यादिबुद्धिविषयता स्यात्? तथाच 'घटोऽनित्यः' इत्यनेन घटगतानित्यतेव 'घटः सन्'

तरङ्गिणी

यदपि चोक्तमासंसारमज्ञानावृतमित्यादि, तदपि न; यतः सदात्मना न ब्रह्मणो मूलाज्ञानेनावृत-

न्यायामृतकण्टकोद्धारः

यदपि—रूपादिहीनेत्यादि, तदप्ययुक्तम्; 'सन् घटः' इत्यादिचाक्षुषज्ञाने ब्रह्मस्फुरणे बाधकाभावात्। नच—रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिरिति—वाच्यम्; प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात्, ब्रह्मणश्च, मीमांसकमते कालस्य सर्वेन्द्रियग्राह्यत्ववत्, परमते सत्तायाः सर्वेन्द्रियग्राह्यत्ववच्च सर्वेन्द्रियग्राह्यत्वाद् न रूपादिहीनत्वे चाक्षुषत्वाद्यनुपपत्तिः। नच—आसंसारमज्ञानावृतत्वात् कथं चाक्षुषादिज्ञानविषयत्वम्? इति—वाच्यम्; सद्रूपब्रह्मणो मूलाज्ञानावृतत्वानङ्गीकारात्, घटाद्यवच्छिन्नाज्ञानावृतत्वाङ्गीकारात्। तथाच चाक्षुषादिज्ञानेनाज्ञाननिवृत्तौ सत्यां सद्रूपप्रकाशोपपत्तिः।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विशेषरूपत्वं वेति पक्षद्वयमस्मदीयैः कैयटादिभिश्चाचार्यैरुक्तम्। तत्राद्यपक्षस्य दुष्टत्वात् प्रकृतानुमाने व्यभिचार इति यत् परैरुक्तम्, तदसङ्गतम्; तस्योक्तयुक्तिभिरदुष्टत्वात्। द्वितीयपक्षे व्यभिचाराभावस्तु स्फुट एव। नच—तादृशाविद्याया घटाद्यवच्छिन्नचिद्विषयकत्वे घटादिधीकाले तन्निवृत्त्यापत्तिः, ब्रह्मविषयकत्वे घटत्व-पटत्वादिनानाजात्यसम्भवः, न ह्येकपुरुषं प्रति भासमाना ब्रह्माविद्या नानेति सिद्धान्त इति—वाच्यम्; अनन्ता हि मूलाज्ञानीयाः कार्यजननानुकूला विक्षेपनामकशक्तयो निर्विषयिकाः; आवरणशक्तेरेव सविषयकत्वात्। तथाच घटव्यक्तिभिरवच्छिन्ना जलाहरणादिकार्यानुकूला तादृशशक्तिर्घटत्वम्। एवं पटत्वादिकमपि, इति न कोऽपि दोष—इति ॥

*अत एव=उक्तपरिच्छेदानां हेतुत्वसंभवादेव। *सद्रूपे कल्पितम्=सद्रूपज्ञाननिवर्त्यम्। *सदनुविद्धत्वेन=सद्रूपतादात्म्येन। 'प्रतीयमानत्वादि'त्यत्र 'प्रत्येकमि'त्यस्यान्वयः। तथाच घटादीनां सर्वेषां सत्तादात्म्येन प्रतीयमानत्वाद् घटादिकं सर्वं सद्रूपज्ञाननिवर्त्यमित्यर्थः। तादृशप्रतीयमानत्वं च तद्योग्यतारूपं ग्राह्यम्, तच्च सदवृत्तित्वविशिष्टं भेदप्रतियोगित्वम्। *प्रत्येकं चन्द्रेत्यादि* ॥ चन्द्रतादात्म्यधीविषयतायोग्या जलतरङ्गस्थचन्द्रा इवेत्यर्थः। तादृशयोग्यत्वं चोक्तभेदप्रतियोगित्वमेव; 'चन्द्रोऽयं तरङ्गस्थः सन्नि'ति सत्तादात्म्यमादायैव चन्द्रतादात्म्यप्रतीतेः। अत्र यद्यद् उक्तप्रतियोगित्ववत्, तत्तत् सद्रूपधीनिवर्त्यम्, यथा तरङ्गचन्द्र इत्युदाहरणार्थे तात्पर्यम्। *कथमिति* ॥ तथाच प्रथमानुमाने 'स्वानुगतप्रतिभासे सद्रूपे कल्पितं घटादि' इत्युक्तिरसङ्गता, द्वितीयानुमानेऽपि सत्तादात्म्यधीयोग्यतात्वेनोक्तप्रतियोगित्वस्य निवेशो न युक्तः; तस्माद् 'घटः सन्नि'त्यत्र भासमानं घटगतमेव सत्त्वं त्रिकालाबाध्यत्वम्, नतु

न्यायामृतसौगन्ध्यम्

*अत एव*—घटादिकम्, सद्रूपे कल्पितम्, प्रत्येकं सदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवदिति ब्रह्मसिद्धिकारोक्तमपि—*निरस्तम्*; ब्रह्मणो रूपादिहीनस्यासंसारमज्ञानावृतस्य शब्दैकगम्यस्य 'घटः सन्नि'त्यादिबुद्धिविषयत्वानुपपत्तेः; अन्यथा शब्दाजन्यसप्रकारकवृत्तिविषयत्वरूपदृश्यत्वापत्त्या मिथ्यात्वापत्तेः ॥

### अद्वैतसिद्धिः

इत्यनेनापि घटगतमेव सत्त्वं गृह्यते। नच—स्वरूपेणाप्रत्यक्षस्य राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेनैव प्रत्यक्षतेति—वाच्यम्; शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वाद्यापातात्, राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य योग्यस्य शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषता युक्तेति—चेत्, *न*; यतः सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वम्; किन्तु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव, तथाच चक्षुरादिजन्यवृत्त्या तदावरणभङ्गे सति 'सन् घटः' इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात्। नच—रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिर्बाधिकेति—वाच्यम्; प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात्, सर्वेन्द्रियग्राह्यं तु सद्रूपं ब्रह्म, नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः; सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च॥

### तरङ्गिणी

त्वम्, किंतु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव। तथाच चक्षुरादिजन्यवृत्त्या तदज्ञाने निवृत्ते तदावरणभङ्गे सति 'सन् घटः' इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावः। नच—रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिर्बाधिकेति—वाच्यम्; प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात्। सर्वेन्द्रियग्राह्यं तु सद्रूपं ब्रह्म ? नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः; सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्॥

### न्यायामृतकण्टकोद्धारः

नच—शब्दैकगम्यताविरोधः; आनन्दरूपस्यैव तथात्वेन सद्रूपस्य तदभावात्। नचैवम्—आकाशस्य शब्दावच्छिन्नस्य प्रत्यक्षत्वापात इति वाच्यम्; तस्यायोग्यत्वेन तदभावोपपत्तेः॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्रिकालाबाध्यत्वोपलक्षिताधिष्ठानसद्रूपस्य घटे कल्पितं तादात्म्यमिति भावः। *अवच्छेदेनैवेति*॥ तथाचानवच्छिन्नरूपेणैव सद्रूपमावृतमिति भावः। *आपातादिति*॥ तथाच शुद्धस्यावृतत्वे विशिष्टस्यापि तदावश्यकम्; अत एव विशिष्टरूपेणापि गुरुत्वादिकमावृतमिति भावः। *सदात्मनेति*॥ सद्भानानन्दांशानां मध्य आनन्दांशरूपेणैव ब्रह्म मूलाज्ञानेनावृतम्; 'पूर्णानन्दो मे न भाती'ति प्रत्ययात्, 'सद्भानरूपे भातः' इति प्रत्ययाच्च। *ननु* तर्हि सद्भानांशयोरनावृतत्वाद् घटाकारवृत्त्यभावकालेऽपि 'घटः सन्' 'घटो भाती'ति धीः स्यात्, तत्राह—*किंत्वित्यादि*॥ *शक्त्यज्ञानेन=मूलाज्ञानावस्थारूपाज्ञानेन। *ननु* एकाज्ञानपक्षे शक्त्यज्ञानास्वीकारेण मूलाज्ञानेनैव सद्भानांशाभ्यामावृतत्वं ब्रह्मणो वाच्यम्, तत्राह—*तथाचेति*॥ तथा स्वीकारेऽपीत्यर्थः। मूलाज्ञानेनैव सद्भानात्मना ब्रह्मण आवृतत्वस्वीकारपक्षेऽपीति यावत्। अपिशब्दात् पूर्वकल्पसंग्रहः। *तदावरणेति*॥ घटाद्यवच्छिन्नावरणेत्यर्थः। *भङ्गे= अभिभवे। यद्येकमेवाज्ञानम्, तदा तद्विषयताया घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेनाभिभवाद् घटाद्यवच्छेदेन सद्भानांशयोर्व्यवहारः, तस्याभिभवस्तु तत्तदाकारवृत्त्यभाववैशिष्ट्यविघटनेन 'सन् घटो भाती'त्यादिव्यवहारे प्रतिबन्धाक्षमत्वम्। तादृशव्यवहारं प्रति हि घटाद्याकारवृत्त्यभावविशिष्टाया एव मूलाज्ञानविषयतायाः प्रतिबन्धकत्वम्। यदि तु मूलाज्ञानस्यावस्थारूपाणि घटाद्यवच्छिन्नान्यनन्तान्यज्ञानानि स्वीक्रियन्ते, तदा घटाद्याकारवृत्त्या तदुच्छेदेन तथा व्यवहार इति भावः। *प्रतिनियतेन्द्रियग्राह्येष्विति*॥ सर्वेन्द्रियाग्राह्येष्वित्यर्थः। *हीनत्वेऽपीति*॥ *ननु*—सद्रूपस्य चाक्षुषाविषयत्वमेवास्ताम्, नच—तथा सति सद्रूपावरणानाश उक्तव्यवहारानुपपत्तिरिति—वाच्यम्; घटादिविषयकवृत्त्यैव घटाद्यवच्छेदेन सद्रूपावरणाभिभवसम्भवादिति—चेत्, *न*; आवरणाभिभवाय कल्प्याया वृत्तेर्विषयत्वस्यावारकाज्ञानविषये सद्रूप एव कल्पनौचित्यात्, अज्ञानस्येव वृत्तेरपि घटाद्यवच्छिन्नविषयताकत्वात्। *ननु* सद्रूपस्य सर्वेन्द्रियग्राह्यत्वं विप्रतिपन्नम्, तत्राह—*सत्ताया इत्यादि*॥ *परैः=मीमांसकादिभिः॥ प्राभाकरमते हि ज्ञान-

अद्वैतसिद्धिः

तदुक्तं वार्तिककृद्भिः—"अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः। अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता ॥" इति। कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्। नच—शब्दावच्छिन्नस्याकाशस्यापि श्रावणत्वं स्यादिति—वाच्यम्; स्वभावतो योग्यस्य हि केनचिद् निमित्तेन प्रतिरुद्धयोग्यताकस्यावच्छेदकादिना योग्यता संपाद्यते, यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोश्चन्द्रसंबन्धेन। एवं चावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्य-

तरङ्गिणी

तदुक्तं वार्तिककृद्भिः—"अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः। अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणते"ति। कालस्य च रूपादिहीनस्य सर्वेन्द्रियग्राह्यत्वं मीमांसकादिभिरभ्युपगतम्। नच—शब्दावच्छिन्नाकाशस्यापि श्रावणत्वापत्तिरिति—वाच्यम्; स्वभावतो योग्यस्य हि केनचिद् निमित्तेन प्रतिरुद्धयोग्यताकस्यावच्छेदकादिना योग्यता संपाद्यते; यथा दूरस्थत्वदोषेण प्रतिरुद्धयोग्यताकस्य राहोश्चन्द्रसम्बन्धेन। एवं चावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यं भवति, नभस्तु स्वभावायोग्यमेव, न प्रतिरुद्ध-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयत्वमेव सत्ता, नान्या जात्यादिरूपा; गुणादौ जात्यस्वीकारात्। सा च सर्वेन्द्रियजन्यधीविषयः; ज्ञानमात्रस्य घटादिविषयकत्वरूपेण स्वविषयिताशालित्वस्वीकारेण 'घटो मया ज्ञातः' इत्याकारकत्वस्यापि स्वीकारात्। न्याय-वैशेषिकादिमतेऽपि सत्ताजातिः सर्वेन्द्रियजन्यधीविषयः; संनिकृष्टतया सत्ताया भाने सामग्रीसत्त्वात्। तथाच तस्याः सर्वेन्द्रियग्राह्यत्वं न कस्यापि विप्रतिपन्नमिति भावः। अपिशब्दसमुच्चितं सत्तायाः स्वकीयाचार्यसंमतं सर्वेन्द्रियग्राह्यत्वं प्रकटयति—*तदुक्तमिति* ॥ *अतः=अनुभवान्यस्याज्ञातत्वाभावेन प्रमाणाविषयत्वात्। *अनुभवः=सद्रूप आत्मैव, विषयः; तत्र हेतुः—*अज्ञातलक्षण इति* ॥ जडस्याज्ञातत्वाभावेन न विषयत्वम्, किन्तु विषयीभूतसद्रूपावच्छेदकत्वम्। *अक्षादीनाम्=इन्द्रियादिजन्यमनोवृत्तीनां दोषजन्याविद्यावृत्तीनां च। *स्वतः सिद्धः=अनारोपितः। तस्याविषयत्वे प्रमाणानां प्रमाणता न स्यात्; अज्ञाताबाधितविषयकत्वस्यैव प्रमाणतारूपत्वात्, इत्याह—*यत्रेति* ॥ भ्रमस्यापि बाधात् पूर्वं प्रमात्वं सद्रूपमादायैव। इदमंशावच्छिन्नसद्रूपताद्दशविषयकत्वरूपस्य हीदमंशधीनिष्ठप्रमात्वस्य संसर्गो भ्रमे समारोप्यते। *ननु* ज्ञानविषयत्वरूपा सत्ता प्राचीनप्राभाकराणां मते न सर्वेन्द्रियग्राह्या, ज्ञानस्य स्वविषयत्वाभावेऽपि तादात्म्येन स्वस्यैव स्वस्मिन् स्वव्यवहारप्रयोजकत्वम्, अत एव ज्ञाताऽपि न ज्ञानविषयः; ज्ञानसमवायस्यैव तद्व्यवहारप्रयोजकत्वादिति हि तैः स्वीक्रियते, मणिकाराद्युक्तनव्यप्राभाकरमत एव हि ज्ञानं स्व-स्वाश्रयविषयकमुच्यते। तथाच कथं सत्तायास्तथात्वं सर्वसंमतम्? तत्राह—*कालस्य चेति* ॥ 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।' इति मीमांसकोक्तेर्ज्ञानं सर्वं किञ्चित्कालावच्छिन्नमेव स्वविषयं गृह्णाति? तत्र स्वाधिकरणक्षणावच्छिन्नत्वेन गृह्णातीत्युत्सर्गः। अत एव धारावाहिकज्ञानस्थले ज्ञानानां स्वस्वाधिकरणक्षणविशिष्टतया स्व स्वविषयग्राहित्वेनाज्ञातज्ञापकत्वमि'ति मीमांसकाः, तस्य बाधे तु सम्भवत्क्षणान्तरावच्छिन्नत्वेन; यथा पाकरक्ते घटे 'श्यामोऽयमि'ति धीः पाकपूर्वक्षणावच्छिन्नत्वेन श्यामत्वं गृह्णाति, स्मृतिः स्वकारणधीगृहीतकालावच्छिन्नं स्वविषयम्। 'आदिभिरि'त्यादिपदात् तार्किकादिमते प्रत्यक्षे सन्निकर्षसत्त्वात् सत्ताजातिर्भात्येव, अनुमित्यादिज्ञानेऽपि सत्ताविशिष्टतया नियमतो वह्न्याद्यनुभवात् तद्भाननियमो वाच्यः। अत एव 'पर्वतादौ वह्न्यादिकं सद् न वे'त्यादिसंशयानामनुमित्यादिस्थलेऽनुत्पादः। *ननु* —आस्तामनुभवसिद्धौ सत्तायाः सर्वधीविषयत्वम्, कथं तु तदुपपद्यते? केवलवह्निव्याप्त्यादिज्ञानात् सत्ताविशिष्टवह्न्याद्यनुमित्यादेरसम्भवादिति—चेत्, *न*; व्याप्त्यादिज्ञानेऽपि सद्वह्न्यादिभानाभ्युपगमात्, 'वह्निर्न सन्नि'त्यादिधीकालेऽपि सत्ता-वह्नित्वयोरेकत्र द्वयमिति रीत्या

अद्वैतसिद्धिः

वच्छेदेन योग्यं भवति, नभस्तु स्वभावायोग्यमेव; न प्रतिरुद्धयोग्यताकम्, येन शब्दावच्छेदेन योग्यं भवेत्। यद्वा—द्रव्यग्रहे चक्षुषो रूपापेक्षा, नत्वन्यग्रहे, ब्रह्म तु न द्रव्यम्; "अस्थूलमनण्वह्रस्वमदीर्घमि"ति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्, अतो नानुपपत्तिः। अस्तु वा द्रव्यम्; तथाप्यध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव

तरङ्गिणी

योग्यताकम्, येन शब्दावच्छेदेन योग्यं भवेत्। यद्वा—द्रव्यग्रहे चक्षुषो रूपापेक्षा, न त्वन्यग्रहे, ब्रह्म तु न द्रव्यम्; "अस्थूलमनण्वह्रस्वमदीर्घमि"ति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्, अतो नानुपपत्तिः। अस्तु वा द्रव्यम्, तथाप्यध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव

न्यायामृतकण्टकोद्धारः

**यद्वा—द्रव्यग्रहे चक्षुषो रूपापेक्षा, न त्वन्यग्रहे, ब्रह्म तु न द्रव्यम्; "अस्थूलमनण्वह्रस्वमदीर्घमि"ति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्; अतो नानुपपत्तिः। अस्तु वा द्रव्यम्, तथाप्यध्य-**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रकारत्वसम्भवात्, सत्तायामवृत्तित्वज्ञानकाले सत्ताप्रकारकज्ञानानुत्पादेऽपि वह्निविशिष्टसत्ताप्रकारकानुमित्यादिसम्भवात्, तादृशानुमित्यादौ वह्न्यादेर्विशेषणत्वेन पर्वतादौ प्रकारत्वसम्भवात्, व्याप्तिज्ञानेऽपि सत्ताव्याप्तेर्भानस्वीकारात्। आस्तां वा तत्र वह्नौ सत्ताया अभानाद् वह्नेरप्यभानम्; सत्ताभासकसामग्रीसहिताया एव सामग्र्याः सद्वह्न्यादिभासकत्वस्वीकारात्, नव्यप्राभाकरमते विषयभासकसामग्र्या एव ज्ञानग्राहकत्वस्येव मीमांसकमते कालिकग्राहकसामग्र्याः कालग्राहकत्वस्येव च सत्ताश्रयग्राहकसामग्र्याः सत्ताग्राहकत्वसम्भवाच्चेति भावः। *आवरणेन=घटाद्यवच्छिन्नावरणेन। *प्रतिरुद्धेति* ॥ घटाद्यवच्छेदेन प्रतिरुद्धेत्यर्थः। *ब्रह्म=सद्रूपम्। घटाद्याकारवृत्त्येति शेषः। *स्वभावायोग्यम्=इन्द्रियेण ग्रहीतुमशक्यम्। श्रोत्रस्य हि शब्द-शब्दत्वादिप्रत्यक्षं प्रत्येव शक्तिः, नतु नभोग्रहेऽपि, चक्षुस्त्वग्भ्यां तु द्रव्यप्रत्यक्षजनने रूप-स्पर्शापेक्षणाद् नीरूपस्पर्शस्य नभसो न ताभ्यां प्रत्यक्षमिति भावः। *नन्वेवम्* ताभ्यां सद्रूपं द्रव्यमपि ग्रहीतुमशक्यम्; रूप-स्पर्शाभावात्, तत्राह—*यद्वेति* ॥ *रूपापेक्षा=समवायेन रूपं कारणम्। *ननु* परिमाणवत्यपि ब्रह्माणि परमार्थतस्तत्प्रतिषेधाद् ब्रह्म द्रव्यमेव, तत्राह—*अस्तु वेति* ॥ *अध्यस्तद्रव्यत्ववति=अध्यस्तेन सम्बन्धेन द्रव्यत्ववति। *धर्म्यन्यूनसत्ताकद्रव्यत्ववति=धर्म्यन्यूनसत्ताकसम्बन्धेन द्रव्यत्ववति। *यथाश्रुते*

न्यायामृतसौगन्ध्यम्

***ननु* सदात्मना ब्रह्मणो मूलाज्ञानेन नावृतत्वम्, किन्तु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव। तथाच चक्षुरादिजन्यवृत्त्या तदावरणभङ्गे सति 'सन् घटः' इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावः; प्रतिनियतेन्द्रियग्राह्य एव रूपाद्यपेक्षा, सर्वेन्द्रियग्राह्यं तु सद्रूपं ब्रह्म, नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः; सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्, कालस्य च रूपादिहीनस्य मीमांसकैरपि सर्वेन्द्रियग्राह्यत्वमभ्युपगतम् ॥**

**यद्वा—द्रव्यग्रहे चक्षुषो रूपापेक्षा, ब्रह्म तु न द्रव्यम्, "अस्थूलमनण्वह्रस्वमदीर्घमि"त्यादिश्रुत्या चतुर्विधपरिमाणनिषेधाद् द्रव्यत्वनिषेधः। अस्तु वा द्रव्यम्, तथाप्यध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षू रूपमपेक्षते, ब्रह्माणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकम्, इति न तद्ग्रहे रूपाद्यपेक्षेति—चेत्, *न*; (१)अखण्डैकरसस्य ब्रह्मणः सदानन्दादिभेदाभावेन सतो**

(१) अत्र योजनीयो विमर्शः ५८३ तमे पृष्ठे मुद्रापितः।

तरङ्गिणी

चक्षू रूपमपेक्षते, ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षन्यूनसत्ताकमेव, इति न तद्ग्रहे रूपाद्यपेक्षा—इति ; *अत्र ब्रूमः* ; 'खण्डो गौर्मुण्डो गौरि'त्यनुगतव्यवहारस्यैव बाधकाभावे सति गोत्वसामान्ये प्रमाणस्य सत्त्वेन तदभ्युपगमस्य निर्बीजत्वात् । नच—व्यक्तिविशेषविशिष्टत्वेन सत्तासामान्यस्यैव तद्व्यवहारजनकत्वमिति—वाच्यम् ; व्यक्तिविशेषाणां गोत्वादिपरिचितानां सत्तासामान्यविशेषकत्वे घट्टकुटीप्रभातवृत्तान्तः, तदपरिचितत्वेऽतिप्रसङ्गः । *यच्चोक्तम्*—सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वमिति, *तदपि न* ; तव मते सदात्मन आनन्दात्मनोऽखण्डरसत्वेन सदात्मन आवरणापगम आनन्दात्मनोऽप्यावरणापगमस्यावश्यकतया सत्प्रकाशवदानन्दप्रकाशस्याप्यावश्यकत्वात् । नच—सदाकारानन्दाकारयोः परमते विशेषोऽस्ति ; अखण्डत्वभङ्गापातात् । *यच्चोक्तम्*—प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमः, ब्रह्म तु सर्वेन्द्रियग्राह्यम्—इति, *तदपि न* ; अत्यन्तमव्यक्तस्वभावस्य ब्रह्मणश्चक्षुरादिसर्वेन्द्रियग्राह्यत्वे मानाभावात्, प्रत्युत "नावेदविद् मनुते तं बृहन्तम्" "यो वेद निहितं गुहायाम्" "गुहां प्रविष्टौ परमे परार्धे" "गुहाहितं गुह्यं गूढमप्सु" "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिभिरिन्द्रियाविषयत्वस्यैव सिद्धत्वात्, "हृदयं ब्रह्मेति शार्कराक्ष्या उपासते" इत्यैतरेये सूक्ष्मार्थदर्शिभिरेव ब्रह्मणो ज्ञेयत्वस्य भवदीयैर्भाषितत्वाच्च । अत एव "विमेकर्णा विपतयो विचक्षु"रिति कर्णादिविदूरत्वं ब्रह्मणोऽभिहितं ज्योतिःसूत्रे । सत्तादृष्टान्तोऽप्ययुक्तः ; तस्या इन्द्रिययोग्यव्यक्तिवृत्तिजातित्वेन व्यक्तिग्राहकसामग्रीग्राह्यत्वात् । ब्रह्म तु न द्रव्यादिवृत्तिजात्यादि । वार्तिकश्लोकोऽप्ययुक्तः ; नहि ब्रह्मण्यक्षादीनां प्रामाण्यं स्वतः सम्भवति ; "तं त्वौपनिषदं पुरुषं पृच्छामी"त्युपनिषदेकगम्यत्वाद् ब्रह्मणः । "अथ परा यया

न्यायामृतकण्टकोद्धारः

सद्द्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षू रूपमपेक्षते, ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेव, इति न तद्ग्रहे रूपाद्यपेक्षा—इत्याह—*तन्न* ;

यदुक्तम्—सत्सामान्येत्यादि, तदयुक्तम् ; तथात्वेऽनुगतसत्तासामान्यमपि नाङ्गीक्रियेत । यदि चानुगतव्यवहारानुरोधेन तत्स्वीकारः, तर्हि प्रकृतेऽपि तुल्यम् । नच—प्रकृते व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव गोत्वादिव्यवहारजनकत्वमिति—वाच्यम् ; तर्हि तत्रापि सत्ताव्यञ्जकव्यक्तिविशेषस्यैव तद्व्यवहारजनकत्वमस्तु । नच—गोत्वादिव्यञ्जकव्यक्तिविशेषस्य सास्नावत्त्वोपाध्यनुगतत्वेन व्यवहारजनकत्वेऽपि सत्ताव्यञ्जकव्यक्तिविशेषस्याननुगतत्वेन तदजनकत्वमिति—वाच्यम् ; अत्रापि तादृगुपाधेर्वक्तुं शक्यत्वात् । यदपि च 'सन् घटः' इत्यत्रेत्यादि, तदपि न ; रूपादिहीनस्य चाक्षुषतानुपपत्तेः । नच—प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षा, ब्रह्म तु सर्वेन्द्रियग्राह्यमिति—वाच्यम् ; ब्रह्मणोऽव्यक्तत्वेन चक्षुरादिविदूरत्वस्य "न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः" "यच्चक्षुषा न पश्यति" "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिसिद्धत्वेन सर्वेन्द्रियग्राह्यत्वस्याप्रामाणिकत्वात् । नच—कालवदुपपत्तिरिति—वाच्यम् ; कालस्य साक्षिवेद्यत्वेनोपनीतभानाभ्युपगमात्, ज्ञानानुपनीतग्रहण एव रूपाद्यपेक्षणात् । नच—सत्तावदुपपत्तिरिति—वाच्यम् ; स्वरूपसत्तातिरिक्तसत्ताजात्या अनभ्युपगमेन दृष्टान्तानुपपत्तेः । स्वरूपयोग्यत्वेनैव सत्तायोग्यत्वात् ॥ यच्च—सद्रूपब्रह्मण इत्यादि, तदपि न ; तथा सति सद्यो मोक्षापत्तेः । नच—मूलाज्ञानस्यानिवृत्तत्वाद् न मोक्ष इति—वाच्यम् ; तस्याव्रियमाणाभावेनाङ्गीकारवैयर्थ्यात् । नच—सद्रूपमेव तदाव्रियमाणमिति—वाच्यम् ; तथा सति सद्रूपभानानुपपत्तेः । नाप्यानन्दरूपब्रह्मणोऽखण्डत्वेन ; रूपद्वयाभावात् । तथाच सद्रूपस्यैव मूलाज्ञानाव्रियमाणत्वाद् न चाक्षुषज्ञानविषयता । अत एव सद्रूपस्य चाक्षुषादिज्ञानविषयत्वेऽप्यानन्दरूपस्य तदविषयत्वाद् नौपनिषदत्वविरोध इत्यपि न ; सद्रूपानन्दयोर्भेदासिद्धेः, आनन्दवत् सत्त्वस्याप्यसाधारणरूपत्वाच्च ; अन्यथा स्वासाधारणरूपेण

**अद्वैतसिद्धिः**

चक्षू रूपमपेक्षते । ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेव, इति न तद्ग्रहे रूपाद्यपेक्षा ॥

**तरङ्गिणी**

तदक्षरमधिगम्यते" इति ब्रह्मावबोधकत्वेनोपनिषदां परविद्यात्वस्य लक्षणत्वेनोक्तेश्च, अन्यथा प्रत्यक्षादिषु परविद्यालक्षणस्यातिव्याप्त्यापत्तेः। तस्माद् न ब्रह्मणः सर्वेन्द्रियग्राह्यता। कालस्यापि विनोपनयं न सर्वेन्द्रियग्राह्यता ॥

*वस्तुतस्तु*—कालः साक्षिग्राह्यः। यच्चोक्तम्—अयोग्य आकाशः, इति न तस्य शब्दावच्छिन्नस्य प्रत्यक्षत्वम्, ब्रह्म तु योग्यम्, इति घटावच्छिन्नस्य ब्रह्मणः प्रत्यक्षत्वम्, इति तस्य योग्यतावच्छेदकरूपादिमत्त्वस्योभयत्रानवधारणेऽपि ब्रह्मणो योग्यत्वं यथाऽवधृतम्, नाकाशस्येति, सेयं योगसिद्धिरकारणपक्षपाता। *यच्चोक्तम्*—द्रव्यग्रहे चक्षुषो रूपापेक्षा, ब्रह्म तु न द्रव्यम्; अस्थूलश्रुत्या घटादिसाधारणस्थौल्यादिनिषेधः, न तु परिमाणमात्रनिषेधः; "महान्तं विभुमात्मानम्" "स वा एष महानज आत्मा" "अणोरणीयान् महतो महीयान्" "ततो ज्यायांश्च पूरुषः" "एष आत्माऽन्तर्हृदये ज्यायान्" "एभ्यस्त्रिभ्यो लोकेभ्यः सर्वमावृत्य तिष्ठति" "सर्वं समाप्नोषि ततोऽसि सर्वः" "आकाशवत् सर्वगतश्च नित्यः" "सर्वत्र प्रसिद्धोपदेशात्" इत्यादिश्रुति-स्मृति-सूत्रैः, ब्रह्म,परिमाणवत्, परिमाणवदुपादानत्वात्, इत्यादियुक्त्या च ब्रह्मणि परिमाणसिद्धेः; अन्यथा अस्थूलादिवाक्यशेषे "न तदश्नाति कश्चने"ति सर्वाऽव्यापनीयत्वोक्त्या लब्धेन महापरिमाणवत्त्वेन विरोधात्, अद्रव्यस्याम्बरादिधारकत्वानुपपत्तेश्च। नच द्रव्यत्वे ज्ञानानन्दाद्यात्मताविरोधः; ज्ञानादेरपि द्रव्यत्वे बाधकाभावात्। *यच्चोक्तम्*—धर्म्यन्यूनसत्ताकद्रव्यत्ववत्त्यैव चक्षू रूपमपेक्षते, ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेवेति, *तन्न*; कल्पितत्वसिद्धौ जगतः, ब्रह्मणि द्रव्यत्वस्य धर्म्यन्यूनसत्ताकत्वासिद्धेरिति। तस्मात् साधूक्तम्—"रूपादिहीनमासंसारमज्ञानावृतं ब्रह्म चाक्षुषादिज्ञाने न भाती"ति ॥

व्यासाद्रिसुततर्काम्बुपूरैः पक्षयुगं युजि। न्यायामृततरङ्गिण्यां परिच्छेदच्छिदेक्ष्यताम् ॥

---

**न्यायामृतकण्टकोद्धारः**

तस्यापि प्रत्यक्षाद्यवेद्यत्वस्य वक्तुं शक्यत्वाच्च। नच—सत्त्वं नासाधारणस्वरूपमिति—वाच्यम्; "सत्यं ज्ञानमि"त्यनेनानन्दवत् तस्यापि लक्षणत्वेन श्रुतत्वात् ॥ यच्च—यद्वा द्रव्यग्रह इत्यादि, तदपि न; "नित्यं विभुं सर्वगतम्" "स एवाधस्तात्" "सर्वव्यापी" "यावद् ब्रह्म विदितम्" "पुरुषेणेदं व्याप्तम्" "व्यतृणादाकरीषत्" "यस्मात् परं नापरमस्ति किञ्चिद् यस्माद् नाणीयो न ज्यायोऽस्ति कश्चित्" "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" "येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च" "यत् तत् सूक्ष्मं परमं वेदितव्यं नित्यम्" "अणोरणीयान् महतो महीयान्" "पृथिव्या ज्यायानन्तरिक्षाद् ज्यायान्" "महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" "आकाशवत् सर्वगतश्च नित्यः" "अहमात्मा गुडाकेश सर्वभूताशये स्थितः" "व्याप्तं त्वयैकेन दिशश्च सर्वाः व्याप्तो मेरोरसि पार्थ" इत्यादिश्रुति-स्मृतिभिः परिमाणस्यावगतत्वेन ब्रह्मणो द्रव्यत्वात्, "आनन्दं ब्रह्मणो विद्वानि"त्यादिश्रुत्या गुणवत्त्वाच्च। नच—"सत्यं ज्ञानमि"ति गुणरूपत्वं श्रुतमिति—वाच्यम्; गुण-गुणिनोरभेदेन गुणरूपत्वाविरोधात्। नच—अभेदे कथं गुण-गुणिभाव इति—वाच्यम्; प्रमाणबलेन सम्भवात् ॥ यदपि च—अस्तु वेत्यादि, तदपि न; अस्या व्यावस्थाया मिथ्यात्वसिद्ध्युत्तरकालीनत्वादन्योन्याश्रयात्। यच्चोक्तम्—शब्दावच्छिन्नस्य गगनस्य न श्रौत्रत्वम्; अयोग्यत्वादिति, तन्न; आत्मनोऽयोग्यत्वस्यासम्प्रतिपत्तेः, सत्त्वादेश्च घटगतानित्यत्ववत् तद्गतस्यैव भानोपपत्तेः। तस्मात् सदनुविद्धतया भासमानत्वमसिद्धम् ॥

---

अद्वैतसिद्धिः

कल्पितत्वं च स्वाभाववति प्रतीयमानत्वं वा, स्वरूपज्ञाननिवर्त्यत्वं वेत्यन्यदेतत्। तस्मात् परिच्छिन्नत्वमपि भवति हेतुरिति सिद्धम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

कर्मधारयाद् मतुपोऽसाधुत्वम्, द्रव्यनिष्ठद्रव्यत्वस्य गुणादौ संसर्गाध्यासेऽपि तादृशगुणचाक्षुषे रूपानपेक्षणाद् असङ्गतिश्च। स्वसमसत्ताकसम्बन्धेन द्रव्यत्ववतीति फलितार्थः। *चक्षुः=चक्षुरादि। *रूपम्=रूपादि। *वस्तुतस्तु*—ब्रह्मणश्चाक्षुषादिप्रत्ययाविषयत्वेऽपि नास्माकं क्षतिः; घटादिविषयकवृत्त्याऽपि घटाद्यवच्छेदेन सद्रूपस्यावरणाभिभवात्, घटादौ सद्रूपतादात्म्यभानसम्भवेन प्रकृतानुमानेऽनुपपत्त्यभावात्, अज्ञाताविषयकत्वेऽपि घटाद्याकारवृत्तेरज्ञाततावच्छेदकविषयकत्वेन प्रमात्वसम्भवात्, तात्त्विकप्रमात्वमेवाज्ञातविषयघटितं ब्रह्माकारवृत्ताविति वक्तुं शक्यत्वात्, परन्तु ब्रह्मणश्चाक्षुषादिविषयत्वे न काऽप्यनुपपत्तिरित्याशयेन 'नानुपपत्तिरि'ति पूर्वमुक्तम्। ब्रह्मणः परिमाणादिमत्त्वे च न मानम्। *उक्तञ्च पदार्थखण्डने शिरोमणिना*—"ईश्वरस्य परिमाणवत्त्वे मानाभावः; द्रव्यत्वस्य त्रुटित्वादेरिव परिमाणासाधकत्वात्"—इति। *तदीयटीकायां च सार्वभौमैरुक्तम्*—"एवमीशस्य च द्रव्यत्वे संयोगादौ च मानाभावः; आत्ममनःसंयोगादेर्ज्ञानादिहेतुत्वेऽपि न मानमि"त्यादि। *कल्पितत्वम्=उक्तसाध्ययोः प्रविष्टकल्पितशब्दार्थः ॥

न्यायामृतसौगन्ध्यम्

मूलाज्ञानेनानावरणेनानन्दस्याप्यनावरणापत्त्याऽज्ञानस्याकिञ्चित्करत्वापत्तेः, सद्यो मोक्षापत्तेश्च, "नावेद विन्मनुते तं बृहन्तमि"त्यादिश्रुतिभिः प्रत्यक्षाद्यगम्यत्वोक्त्या सर्वेन्द्रियग्राह्यत्वासंभवात्; अन्यथा दृश्यत्वं मिथ्यात्वं च स्यात्। सत्ताया योग्यव्यक्तिवृत्तित्वेनैव ह्येन्द्रियग्राह्यत्वम्। नच ब्रह्मणस्तत् संभवति; कालस्याप्युपनयं विनेन्द्रियग्राह्यत्वमनुपपन्नमेव ॥

*यदुक्तम्*—अस्थूलादिश्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वनिषेधः—इति, *तन्न*; (१)अस्थूलश्रुत्या हि घटादिसाधारणस्थौल्यादिनिषेधः, नतु परिमाणमात्रनिषेधः; "महान्तं विभुमात्मानम्" "स वा एष महानज आत्मा" "अणोरणीयानि"त्यादिश्रुत्या ब्रह्मणः परिमाणसिद्धेः। *यच्चोक्तम्*—धर्म्यन्यूनेत्यादि, *तन्न*; जगतः कल्पितत्वासिद्धौ ब्रह्मणि द्रव्यत्वस्य धर्मिन्यूनसत्ताकत्वासिद्धेः(२) ॥

सौगन्ध्यविमर्शः

(१) अस्थूलादिवाक्येन परिमाणनिषेधः, "महान्तं विभुमात्मानम्" इति परिमाणविधिश्चेत्युभयं स्वरूपतोऽपरिमाणत्वम्, औपाधिकं व्यापकत्वाणुत्वादिकमित्यद्वैतप्रक्रियापाक्ष एवोपपद्यते, नास्थूलादिवाक्येन घटादिसाधारणपरिमाणादिमात्रनिषेध इति द्वैतप्रक्रियापक्षे। नहि परिमाणस्वरूपं ह्रस्व-महत्परममहदन्यतमरूपं घटादिगतं ब्रह्मगताद्विलक्षणमित्यत्र प्रमाणमस्ति ॥

(२) जगदुत्पत्तिप्रतिपादकानामागमानां ब्रह्मणि जगत्कल्पनापरतयैवोपपत्तिः, नान्यथा। ब्रह्म हि न केवलं निमित्तकारणं द्वैतवाद्यभिमतं भवितुमर्हति; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात्, "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्" "न विलक्षणत्वादस्य तथात्वं च शब्दादि"त्यादिसूत्राणां द्वैतमते वैयर्थ्यम्। किञ्चाभिन्ननिमित्तोपादानमेव ब्रह्म, इति ब्रह्मणि द्रव्यत्वसाधकं प्रमाणं कल्पितत्वेनैव तत्र द्रव्यत्वं गोचरयति, इति धर्मिन्यूनसत्ताकत्वग्रहस्य प्रामाणिकत्वे तदभावे धर्म्यन्यूनसत्ताकत्वसिद्धिः; इति कथमन्योन्याश्रयादिकम्?

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योः परिच्छिन्नत्वहेतुविचारः ॥

# अथांशित्वहेतुविचारः

——:०:——

**न्यायामृतम्**

अंशित्वादिहेतुष्वपि मतद्वयेऽपि कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनम्,

**अद्वैतसिद्धिः**

चित्सुखाचार्यैस्तु—'अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वात्, इतरांशिवत्—इत्युक्तम्। तत्र तन्तुपदमुपादानपरम्, तेन स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः। नच—कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनम्, अनाश्रितत्वेनान्याश्रितत्वेन वोपपत्त्याऽर्थान्तरं चेति—वाच्यम्; अभेदे कार्य-कारणभावव्याहत्या कथंचिदपि भेदस्यावश्याभ्युपेयत्वात्। नच "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यधिकरणविरोधः; उपादानव्यतिरेकेणोपादेयं नास्तीत्यस्यैव

**तरङ्गिणी**

*कार्यस्य कारणाभेदेनेति* ॥ अत्र वदन्ति—(सि०) अभेदे कार्य-कारणभावव्याहत्या कथञ्चिदपि भेदोऽवश्यमभ्युपेयः। नच "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यधिकरणविरोधः; उपादानव्यतिरेकेणोपादेयं

**न्यायामृतकण्टकोद्धारः**

*अंशित्वादिहेतुष्विति* ॥ *ननु*—स्वमते कार्य-कारणयोरभेदेऽपि कथञ्चिद् भेदस्यापि विद्यमानत्वात् तेन चाधाराधेयभावोपपत्तेरङ्गीकृतत्वात् कथं सिद्धसाधनम्? इति—चेत्, *अयमत्राशयः*—एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं समवायेन? संयोगेन वा? साधारणं वा? नाद्यः; समवायानङ्गीकारेण समवायेनैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्यासिद्धत्वात्, न द्वितीयः; कार्य-कारणयोः संयोगानङ्गीकारेण सिद्धसाधनत्वात्, न तृतीयः; सम्बन्धद्वयपुरस्कारेणैवाधेयत्वेन तद्भाव आधेयत्वाभावात्,

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*अंशित्वात् = कार्यत्वात्। *ननु* पटे तन्त्ववच्छिन्नचिदेवोपादानम्, नतु तन्तुरिति मते सिद्धसाधनम्; तादात्म्यसम्बन्धेन तन्तौ पटस्यात्यन्ताभावसत्त्वात्, किंच पटान्तरे तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वानुमानसाधारण्या एकोक्तेरलाभश्च, तत्राह—*तत्रेति* ॥ एतत्पदं तु पक्षीभूतव्यक्तिपरमित्याशयेन तत्स्थाने स्वपदमाह—*स्वेति* ॥ *सिद्धसाधनमिति* ॥ यथा तत्पटे तस्यात्यन्ताभावः स्वीक्रियते; तदधिकरणत्वस्यैव तदत्यन्ताभावविरुद्धत्वेन तत्तादात्म्यस्य तदत्यन्ताभावाविरुद्धत्वात्; तथा तदभिन्नतन्तावपीति भावः। *अनाश्रितत्वेनेति* ॥ तत्पटस्येत्यादिः। *अन्येति* ॥ तत्तन्तुभिन्नेत्यर्थः। *उपपत्त्या = स्वात्यन्ताभावसामानाधिकरण्योपपत्त्या। यैस्तन्तु-पटयोस्तादात्म्यमुच्यते, तेषां परिणामवादिनां सिद्धसाधनम्, यैस्त्वाधाराधेयभावः, तेषामारम्भवादिनामर्थान्तरम्। एतदनुमानबलादनाश्रितत्वादिसिद्धिः; अन्यथा तत्पटाश्रयत्व-तत्पटाभावयोस्तत्तन्तौ विरोधात्। नहि तावता मिथ्यात्वरूपोद्देश्यसिद्धिः; तदनधिकरणे तदत्यन्ताभावस्य सर्वसंमतत्वादिति भावः। *अभेदे = अत्यन्ताभेदे। *कथञ्चित् = स्वकीयधर्मि-प्रतियोगिनोर्यस्तादात्म्यरूपः सम्बन्धः, तत्समसत्ताकस्य। *भेदस्येति* ॥ परिणामवादिभिरिति शेषः। तथाचासंबद्धयोः कार्य-कारण-

**न्यायामृतसौगन्ध्यम्**

*ननु* अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वात्, इतरांशिवदित्युक्तम्, तत्र तन्तुपदमुपादानपरम्, तेन स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वं लक्षणमिति मिथ्यात्वसिद्धिरिति—चेत्, *न*; कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनात्, अनाश्रितत्वेनान्याश्रितत्वेन

तरङ्गिणी

नास्तीत्यस्यैव तदर्थत्वा''दिति, *तन्न* ; कथञ्चिद्भेदो नाम यदि मिथ्या भेदः, तदाऽभेद एव सत्यः । अधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वं हि मिथ्यात्वम् ; अधिष्ठानज्ञानबाध्यात्यन्ताभावप्रतियोगित्वस्य सत्यत्वेऽपि सम्भवात्, भेदात्यन्ताभावश्चाभेद इति भेदस्य मिथ्यात्वे कथं नाभेदः सत्यः स्यात् ? व्यवहारतोऽपि कार्य-कारणयोरभेदाच्च ॥

न्यायामृतकण्टकोद्धारः

'प्रकारान्तरेणाधेयत्वाभावादि'त्यभिधानेन सिद्धसाधनत्वाभिधानादिति । *यत्तु*—कथञ्चिद् भेदो नाम यदि मिथ्या भेदः, तदाऽभेद एव सत्यः । अधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् ; अधिष्ठानज्ञानबाध्यात्यन्ताभावप्रतियोगित्वस्य सत्यत्वेऽपि सम्भवात् । भेदात्यन्ताभावश्चाभेद इति कथं नाभेदः सत्यः स्यात् ? व्यवहारतोऽपि कार्य-कारणयोरभेदाच्चेति, *तन्न* ; सिद्धसाधनता हि प्रतिवादिना देया, तथाच सिद्धसाधनतादातुः प्रतिवादिनो मते भेदस्य सत्यस्यैव विद्यमानत्वात् समादायाश्रयाश्रितभावसम्भवात्

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वासम्भवेन तन्तु-पटयोस्तादात्म्यसम्बन्धोऽवश्यं वाच्यः ; स च भिन्नयोरेव, इति भेदोऽप्यावश्यकः । एवं च ययोर्यः सम्बन्धः, तयोरेकत्र परस्य तेन सम्बन्धेनात्यन्ताभावस्यासम्भवात् तादात्म्यसम्बन्धेन तन्तु-पटयोर्न परस्परात्यन्ताभाववत्त्वं परिणामवादिभिर्वक्तुं शक्यम् । ततश्च तन्तुनिष्ठस्यात्यन्ताभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वं तत्पटे न तेषां सिद्धम् । नच—अत्यन्ताभावप्रतियोगितायास्तादात्म्यसम्बन्धावच्छिन्नत्वस्यासंभवः, संभवे वा भेदप्रतियोगिताया ऐक्यसम्बन्धावच्छिन्नत्वमेव वाच्यम् ; तादात्म्यवतोरपि भेदसत्त्वेन तत्प्रतियोगितायास्तादात्म्यसम्बन्धावच्छिन्नत्वासम्भवात् तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्य भेदलक्षणत्वासम्भवेनैक्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्यैव तल्लक्षणत्वात् ; तच्चानिष्टम्, ऐक्यस्य सम्बन्धत्वे 'घटः कलशः' इत्यादिप्रत्ययापत्तेरिति—वाच्यम् ; भेदप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वस्वीकारेण सम्बन्धानवच्छिन्नकिंचिद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वस्यैव भेदलक्षणत्वात् । ध्वंस-प्रागभावयोर्हि प्रतियोगिता सम्बन्धेनेव धर्मेणाऽपि नावच्छिद्यते । नच—तथाऽपि प्रतियोग्याश्रयत्वेनैवात्यन्ताभावस्य विरोधात् तन्तौ पटात्यन्ताभावः परिणामवादिनां सिद्ध इति—वाच्यम् ; प्रतियोगितावच्छेदको यः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकः सम्बन्धः, तदनुयोगित्वेनैव सममत्यन्ताभावस्य विरोधात् । अत एव धनानधिकरणे धनस्वामिनि पुरुषे 'अयं स्वामित्वसम्बन्धेन धनाभाववानि'ति धीर्न प्रमा ; मण्यादिवृत्तितृणादौ च न दाहाद्युत्पत्तिः ; तत्र संयोगेन मण्याद्यभावस्यासत्त्वात् । 'बदरे कुण्डं ने'त्यादिधीस्तु वृत्तिनियामकसंयोगेन कुण्डादेरभावं गाहते । *अत एव च*—'पृथिवीत्वादिकं प्रति संयोगेन गगनादेर्व्यापकत्वं गगनाद्यभाववतोऽपि पृथिव्यादेः संयोगेन गगनादिसम्बन्धित्वेन प्रतियोगिव्यधिकरणगगनाद्यभावविरहादि'त्यर्थके दीधितिवाक्य उत्पत्तिकालावच्छेदेन पृथिव्यादौ संयोगेन समवायेन वा गगनादेरभावो विद्यमानोऽपि स न प्रतियोगिव्यधिकरण इत्यर्थ इति—*व्याचक्षते* ॥

न्यायामृतसौगन्ध्यम्

वोपपत्त्याऽर्थान्तराच्च । नच—अभेदे कार्य-कारणभावव्याहत्या कथंचिदपि भेदोऽवश्याभ्युपेयः, कथञ्चिद्भेदो हि मिथ्या भेदः स्यादिति—वाच्यम् ; मिथ्यात्वं हि स्वसमानाधिकरणस्वाधिकसत्ताकात्यन्ताभावप्रतियोगित्वम् । तथाच भेदाभावस्याभेदस्य सत्यत्वं स्यादेव । तच्च तेऽनिष्टम् ॥

*यत्तु*—स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमित्युक्तम्, अभेदस्य सत्यत्वासंभवात्, तत्संभवे वा कथं तेन कार्य-कारणत्वम् ? इति, *तन्न* ; भेदाभेदयोः समसत्ताकयो-

### न्यायामृतम्

अनाश्रितत्वेनान्याश्रितत्वेन वोपपत्त्याऽर्थान्तरं च। यदि च प्रत्यक्षबाधादेतत्तन्त्वारब्धस्य पक्षत्वेन पक्षधर्मताबलाद्वा नानाश्रितत्वादिकम्, तर्हि तत एवैतत्तन्तुष्वपि नासत्त्वम्। अपिचात्यन्ताभावः प्रामाणिकः? अप्रामाणिको वा? आद्येऽद्वैतहानिः, अन्त्ये सिद्धसाधनम्। *एतेन*—अत्यन्ताभावमात्रं साध्यमिति—निरस्तम्; अत्यन्ताभावो व्यावहारिक इति तु निरस्तम्॥

### अद्वैतसिद्धिः

तदर्थत्वात्। बाधात् तन्मात्राश्रितत्वेन पक्षविशेषणाद्वा नार्थान्तरम्। नच प्रकृतेऽपि बाधः; तस्योद्धरिष्यमाणत्वात्। नचात्यन्ताभावस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पावकाशः; तस्य प्रागेव निरस्त-

### तरङ्गिणी

*तर्हि तत एवेति*॥ प्रत्यक्षबाधादेवेत्यर्थः। उक्तमप्यधिकविवक्षयाऽऽह—*अपि चेति*॥ *प्रामाणिकः=पारमार्थिक इत्यर्थः। यथाश्रुते त्वन्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपप्रमाविषयत्वेन प्रामाणिकस्यापि घटादेः परैर्बाध्यत्वाङ्गीकारादद्वैतहान्यापादनामंगतेः। *अप्रामाणिकः*॥ प्रातिभासिक इत्यर्थः॥ *एतेनेति*॥ प्रामाणिकत्वाद्यविशेषितात्यन्ताभावमात्रं साध्यनिविष्टमित्यपि सिद्धसाधनादिदोषादेव निरस्तमित्यर्थः॥ *अत्यन्ताभावो व्यावहारिक इतीति*॥ जगदत्यन्ताभावस्य प्रामाणिकत्वेऽपि बाध्यतया जगत्तात्त्विकसत्ताऽविरोधित्वेनार्थान्तरतापत्तेरित्यादिना द्वितीयमिथ्यात्वलक्षणदूषणे निरस्तमित्यर्थः।

### न्यायामृतकण्टकोद्धारः

सिद्धसाधनोद्भावनस्याशक्यत्वात्। *अनाश्रितत्वेनेति*॥ नच—एतत्तन्तुमात्राश्रितत्वेनेति पक्षविशेषणाद्नार्थान्तरमिति—वाच्यम्। पक्षतावच्छेदक-साध्ययोर्विरोधेनानुमित्यनुदयात्। *तत* *एवेति*॥ प्रत्यक्षबाधादेवेत्यर्थः। *अपिचेति*॥ अत्रत्यपरयुक्तिखण्डनं पूर्वमेव कृतमिति तत्रैवानुसन्धेयम्। *ननु*—अत्यन्ताभावो व्यावहारिकोऽङ्गीक्रियते, अतो नोक्तदोषः, इत्यत आह—*अत्यन्ताभाव इति*॥ *निरस्तम्*॥ बाध्यत्वलक्षण इति शेषः। *ननु* अत्यन्ताभावः प्रामाणिक एव, नचाद्वैतहानिः; अभावद्वैताङ्गीकारा-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*बाधात्=अनाश्रितत्वबाधात्। कारणानाश्रितत्वस्वीकारेऽपि पटादेर्भूतलाद्याश्रितत्वादिति शेषः। *तन्मात्राश्रितत्वेन=स्वोपादानादन्यस्मिन् स्वोपादानजन्यतावच्छेदकसम्बन्धेनासम्बन्धित्वेन। *प्रामाणिकत्वेति*॥ तात्त्विकत्वेत्यर्थः। *प्रागेवेति*॥ तात्त्विको व्यावहारिको वेत्यादिनेति शेषः। *ननु* 'तन्तुषु दशायां न पटः' इति प्रत्ययात् पटस्य तादात्म्यादिसम्बन्धेन तन्ताव्याप्यवृत्तित्वम्, तत्राह—

### न्यायामृतसौगन्ध्यम्

विरोधेन सत्ताभेदस्यावश्यकत्वात्(१)। तथाच भेदस्य व्यावहारिकत्वे तदभावस्याभेदस्य प्रातिभासिकत्वेन न्यूनसत्ताकत्वेन भेदे मिथ्यात्वलक्षणासिद्धेः, भेदस्य प्रातिभासिकत्वे त्वभेदो व्यावहारिकः स्यात्। तथाच व्यावहारिकाभिन्नेऽत्यन्ताभावस्य प्रातिभासिकस्य सर्वसंमतत्वाद् 'घटवद् घटाभाववदि'त्याचार्याशयात् कार्य-कारणयोर्भेदसहिष्णुतादात्म्यस्वीकारेण(२) तन्तुषु पटानाश्रितत्वस्य कार्य-कारणभावस्य चोपपत्तिः।

### सौगन्ध्यविमर्शः

(१) समसत्ताकयोरपि भावाभावयोरविरोधस्य स्वाप्नगज-तदभावदृष्टान्तेन वर्णितत्वात्, भिन्नसत्ताकत्वेऽपि भेदाभावस्य पारमार्थिकत्वस्यैव स्वीकाराच्च न विरोधः॥

(२) तादात्म्यस्यापि वृत्तिनियामकत्वस्य पूर्वमुपपादनात् पटस्य तन्त्वनाश्रितत्वसिद्धिर्न भवति।

न्यायामृतम्

*ननु*—अभावरूपा धर्मा नाद्वैतं घ्नन्तीति मण्डनोक्तेरभावद्वैतं स्वीकृतमिति—चेत्, *न*; अभावेऽभावत्वादेस्तदाश्रये चाभावाश्रयत्वादेर्भावस्यावश्यकत्वात्, अभावरूपप्रवृत्तिनिमित्तसम्भवेन ब्रह्मणोऽद्वितीयादिशब्दवाच्यत्वापातात्, (१)अखण्डार्थेन वेदान्तेन ब्रह्माभावयोर्द्वयोरसिद्धेश्च। अन्यस्य च तत्त्वावेदकस्याभावात्। (२)श्रौताद्वितीयपदस्याभावरूपद्वितीयनिषेध इव भावरूपद्वितीयनिषेधेऽपि

तरङ्गिणी

अत्यन्ताभावस्य प्रामाणिकत्वपक्षमाश्रित्य शङ्कते—*अभावरूपा इति* ॥ अभावस्य द्वितीयस्याङ्गीकारे द्वितीयो भावोऽप्यवर्जनीय इत्याह—*अभावत्वादेरिति* ॥ अभावस्य तात्त्विकत्वाङ्गीकारः परमते विरुद्ध इत्याह—*अभावरूपेति* ॥ साधिकरणस्य तात्त्विकस्य ब्रह्मारोपितजगदभावस्य ब्रह्मैवाधिकरणम्, इत्यद्वितीयशब्दप्रवृत्तिनिमित्तस्य द्वितीयाभावस्य ब्रह्मणि तत्त्वतः सम्भवेनाद्वितीयपदवाच्यता ब्रह्मणि स्यादित्यर्थः। तात्त्विकाभावे प्रमाणाभावश्चेत्याह—*अखण्डेति* ॥ *श्रौतेति* ॥ "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्यादौ तात्त्विकं द्वितीयाभावं बोधयताऽद्वितीयपदेन पुनरभावनिषेधे स्वविरोधो यथा, तथा द्वितीयस्य भावस्यापि निषेधे "अग्र आसीदि"त्यादिकालसत्त्वप्रतिपादकेन स्ववाक्यान्तर्गतपदेन विरोधाविशेषात्

न्यायामृतकण्टकोद्धारः

द्विति शङ्कते—*नन्विति* ॥ *अभावेऽभावत्वादेरिति* ॥ तथाच भावरूपमपि द्वितीयं सत्यमङ्गीकर्तव्यमिति भावः। *ननु*—अभावत्वादेस्तदाश्रयत्वादेश्चाश्रयस्वरूपत्वेन नातिरिक्ताभावसत्यत्वापत्तिः, अस्तु वा अभावत्वादिकमभावातिरिक्तम्, नचैवमभावस्वरूपस्य मिथ्यात्वापातः; ब्रह्मणि सत्तासामान्याभावेऽपि सद्रूपत्ववदभावत्वादेर्मिथ्यात्वेऽप्यभावस्य सत्यत्वसंभवादिति—चेत्, *न*; अभावत्वादेर्विधिमुखवेद्यत्वेन निषेधमुखवेद्याभावरूपत्वासंभवात्, सत्तासामान्यस्यैव मयाऽनङ्गीकारेण तदभावेऽपि त्रिकालाबाध्यत्वरूपसत्त्वस्य सत्त्वेन ब्रह्मणः सद्रूपत्वसंभवेऽपि भावत्वादेर्मिथ्यात्वे भावस्य सत्यत्वासंभवात्। धर्मिसत्त्वोपपादकस्य धर्मस्य मिथ्यात्वे हि धर्मिणोऽपि मिथ्यात्वं संभवति। यथाहि घटत्वादेर्मिथ्यात्वे घटस्यापि मिथ्यात्वमिति। *अभावरूपेति* ॥ नच—अद्वितीयादिपदानां समासपदत्वात् समस्तपदानाञ्च वाक्यरूपत्वाद् वाक्ये च शक्तिग्रहानपेक्षत्वेन शक्यतावच्छेदकापेक्षाया अभावेन कथं वाच्यत्वापादनम्? इति—वाच्यम्; ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च समासप्रयोजनमित्युक्तत्वेन समासपदस्यापि पदत्वात्, पदे च शक्तिग्रहापेक्षत्वेन शक्यतावच्छेदकावश्यकत्वेन तस्य च प्रकृते भावरूपस्यासंभवेऽप्यभावरूपस्य संभवेन तदापादनसंभवादिति भावः ॥

किञ्च भावाद्वैतमभ्युपगच्छतस्तवाभावसिद्धिः किं वेदान्तेनाभिप्रेता? तदन्येन वा? नाद्य इत्याह—*अखण्डार्थेनेति* ॥ सकलस्यापि वेदान्तस्य ब्रह्मैकपरतायाः परेणाङ्गीकारेणेत्यर्थः। नापर इत्याह—*अन्यस्य चेति* ॥ अभावरूपद्वैतोररीकरणयुक्तेर्द्वैताङ्गीकारेऽपि साम्यमाह—*श्रौतेति* ॥ किञ्चाभाव-

(१) अयमत्र कक्षाक्रमः—ब्रह्मान्यतिरिक्तं द्वितीयाभावं प्रामाणिकमङ्गीकुर्वता त्वया ब्रह्मान्यतिरिक्तस्य सर्वस्याभावबोधिकायाः "एकमेवाद्वितीयमि"त्यादिश्रुतेरभावव्यतिरिक्तद्वितीयाभावमात्रनिषेधपरत्वेन संकोचः कार्यः, नत्वभावरूपद्वितीयनिषेधपरत्वेनेत्युच्यते, तत्र वदामः; 'अद्वितीयमि'त्यत्र ब्रह्मान्यतिरिक्तं भावरूपं द्वितीयमस्ति, अभावरूपं द्वितीयमेव नास्तीत्यपि संकोचः क्रियताम्; विशेषहेत्वभावात्। *ननु* अस्ति विशेषहेतुः; तात्त्विकद्वितीयाभावं बोधयताऽद्वितीयपदेन पुनरभावनिषेधे स्वविरोधः, "यत्तदद्रेश्य"मिति मानान्तरेण च विरोधः; तत्राभावरूपधर्मप्रतिपादनात्, अतो भावरूपद्वितीयनिषेधपरत्वेनैव संकोचः कर्तव्य इति—चेत्, तर्हि भावरूपद्वितीयमात्रनिषेधेऽपि—'अग्र आसीदि'त्यादिकालसत्त्वप्रतिपादकेन स्ववाक्यान्तर्गतपदेन विरोधः, 'सन् घटः' इत्यादिप्रत्यक्षरूपमानान्तरेण च विरोधः समान एव, इति भावरूपं पदार्थमङ्गीकृत्य भावरूपपदार्थ एव स्वतन्त्राभावनिषेधपरत्वेनैव संकोचः क्रियतामिति। (श्रीनि०) (२) सर्वस्यापि भावस्य त्वया सत्त्वेन वा भावत्वेन वाऽन्येन वा

न्यायामृतम्

मानान्तरेणा'भ्रे' इति स्वपदेन च विरोधाविशेषे भावरूपद्वितीयनिषेधपरत्वेनैव संकोचः, न त्वभावरूपद्वितीयनिषेधपरत्वेनेत्यत्र हेत्वभावाच्च, भावस्यापि स्वाभावाभावत्वाच्च, अभेदस्याप्यन्योन्याभावप्रतियोगित्वेन तत्सत्यत्वासिद्धेश्च, भेदस्याप्यन्योन्याभावत्वेन तत्सत्यत्वापत्तेश्च, प्रध्वंसादेः प्रतियोगिना सह विरोधाय स्वतुल्यसत्त्वप्रतियोगिसापेक्षत्वाच्च, (१)भावत्वानिर्वचने भावस्येवाभावत्वानिर्वचनेऽभावस्यापि सत्त्वासिद्धेरभावे सत्त्वार्थं तवाप्यभावत्वादिनिर्वचनप्रयासापाताच्च, अभावे दृश्यत्वादेर्व्यभिचारस्य चाभाववद् भावस्यापि सत्यत्वेऽपि दृश्यत्वोपपत्तशाऽप्रयोजकत्वस्य चापाताच्च, अभावस्य प्रतियोगिघटितत्वेन भावादपि विशिष्याद्वैतविरोधित्वाच्च । किंचात्यन्ताभावप्रतियोगित्वं स्वरूपेण वा ? पारमार्थिकत्वेन वा ? नोभयमपि ; निरस्तत्वात् । अन्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना

तरङ्गिणी

स्वतन्त्रभावनिषेधपरत्वेनापि संकोच आवश्यक इत्यर्थः ॥ *भावस्यापीति* ॥ अभावद्वैताङ्गीकारे भावो द्वितीयोऽङ्गीकृतः स्यादित्यर्थः । *ननु* अभावस्याभावाभावात् तस्य तात्त्विकत्वमित्यत आह—*अभेदस्येति* ॥ भेदनिष्ठान्योन्याभावप्रतियोगित्वेनेत्यर्थः । अन्यथा तव भेददूषणानुपपत्तेरिति भावः ॥ *प्रतियोगिघटितत्वेनेति* ॥ प्रतियोगिनिरूप्यत्वेनेत्यर्थः ॥ *निरस्तत्वादिति* ॥ न स्वरूपेण ; अनङ्गीकारात्, न पारमार्थिकत्वेन ; ब्रह्मवत् स्वरूपसत्त्वेनाप्युपपत्त्याऽर्थान्तरादित्यर्थः । एतच्च मिथ्यात्वनिरुक्तिदूषणप्रस्ताव उक्तमप्यनुमानदूषणावसरे पुनरुच्यते ; अतो न पौनरुक्त्यम् ॥ *अन्यासमवेतस्येति* ॥ एतत्तन्तुनिष्ठात्यन्ताभाव-

न्यायामृतकण्टकोद्धारः

द्वैताङ्गीकारे यथाकथञ्चिद्भावरूपत्वं वा प्रयोजकम् ? भावप्रतियोगित्वं वा ? आद्ये दोषमाह—*भावस्यापीति* ॥ द्वितीयेऽपि दोषमाह—*अभेदस्यापीति* ॥ नच—अभावप्रतियोगित्वेऽपि सत्यत्वासिद्धिः कुतः ? इति—वाच्यम् ; अभावप्रतियोगित्वस्य भावत्वनियतत्वेनाभावस्य सत्यत्वाङ्गीकारेऽभेदस्य भावत्वेन सत्यत्वासिद्धेः । नच—अभावप्रतियोगित्वस्य भावत्वसमनियतत्वेऽभावे व्यभिचार इति—वाच्यम् ; अभावप्रतियोगिकाभावाभावादिति मतेनाभिधानादिति भावः । दूषणान्तरमाह—*भेदस्यापीति* ॥ किञ्चाभावसत्यत्वाङ्गीकारे ध्वंसस्याप्यभावत्वेन सत्यत्वात् तस्य च प्रतियोगिना सह विरोधार्थं प्रतियोगिनोऽपि सत्यत्वमङ्गीकर्तव्यम्, समसत्ताकयोरेव प्रतियोगि-ध्वंसयोरेककालत्वविरोधात् । तथाच भावस्यापि सत्यत्वमापतितमित्याह—*प्रध्वंसादेरिति* ॥ *प्रतियोगिघटितत्वेनेति* ॥ प्रतियोगिनिरूप्यत्वेनेत्यर्थः । निरूपकासत्यत्वे निरूप्यसत्यत्वं नोपपद्यत इति हि परेणाङ्गीकृतम् ; अन्यथा मिथ्याभूतपरोपाधिघटितानां सार्वज्ञ्यादीनां मिथ्यात्वं न स्यात्, सार्वज्ञ्यादेर्मिथ्यात्वे हि परोपाधिकत्वमेव तन्त्रम्, इति तदभ्युपगमेनैव तव दूषणमिति भावः ॥ *अन्यासमवेतस्येति* ॥

---

केनापि प्रकारेण निर्वक्तुमशक्यत्वादेर्ब्रह्मानिर्वचनीयत्वं स्वीकृतम् ; सत्यत्वे केनापि प्रकारेण निर्वक्तव्यत्वापत्तेः, तच्चाशक्यम्, एवमेवाभावेऽभावत्वानिर्वचने तस्यानिर्वचनीयत्वप्राप्त्या पारमार्थिकसत्यत्वासम्भवेन तदर्थमभावत्वादिनिर्वचने महाप्रयासस्तव स्यात्। तच्च त्वया निर्वक्तुमशक्यम्। अतस्तस्याप्यनिर्वचनीयत्वापातेन सत्यत्वं न स्यादिति भावः। अभावत्वप्रकारकप्रमां प्रति विशेष्यत्वमभावत्वमित्यस्यात्माश्रयदुष्टत्वात्, प्रतियोगिज्ञानाधीनज्ञानविषयत्वादेस्तार्किकरीत्या समवाये, अस्मद्रीत्या सादृश्ये चातिव्याप्तत्वादित्यादि द्रष्टव्यम्। (श्रीनि०) (१) अयमाशयः—स्यादेवम्—यद्यत्रानुकूलतर्कः स्यात्, स च 'नही'ति वक्ष्यमाणरीत्या नास्त्येव। तथाचैवमनुकूलतर्काभावे तु पक्षे साध्यानिश्चयेन व्यभिचाराभावेनोपाध्यभाववति पक्षे साध्याभावसद्भावादुपाधित्वं युक्तमेव। *ननु* अनुकूलतर्काभावदशायां पक्ष एवोभयव्यतिरेकसद्भावात् कथं व्यतिरेकहीनस्यापीत्युक्तमिति—चेत्, न; पक्षादन्यत्र व्यतिरेकहीनस्यापीति व्याख्यानात्, तन्तुरूपादीनां च पक्षतुल्यत्वात्। एवं च यत्रैतत्तन्त्वनारब्धत्वाभावः, एतत्तन्त्वारब्धत्वमिति

अद्वैतसिद्धिः

त्वात्। नच—कस्यचित् पटस्य संयोगवृत्त्यैतत्तन्तुषु सत्त्वेन तत्र व्यभिचार इति—वाच्यम्; तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतस्तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारेण पक्षसमत्वात्। नचाव्याप्यवृत्तित्वेनार्थान्तरम्; पट-तदभावयोरेकाधिकरणवृत्तौ विरोधस्य जगति दत्तजलाञ्जलित्वप्रसङ्गात्, संयोग-तदभावयोरप्येकाधिकरणवृत्तित्वानभ्युपगमात्॥

अभ्युपगमे वा—एतत्तन्तुत्वावच्छिन्नवृत्तित्वमत्यन्ताभावस्य विशेषणं देयम्; एवमेतत्कालीनत्वमपि। तेन कालान्तरीयाभावमादाय नार्थान्तरम्। नचेह तन्तुषु पट इति प्रत्यक्षबाधः; तस्य भ्रमसाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दिततत्वेनाबाधकत्वात्। बाधोद्धारे च विस्तरेणैतद् वक्ष्यामः।

न्यायामृतकण्टकोद्धारः

*अत्र कश्चित्*—विरुद्धत्वं हि प्रकृतसाध्याभावव्याप्यत्वम्। नचांशित्वमेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावव्याप्यम्; तं विनाऽप्यंशित्वसम्भवेनाप्रयोजकत्वात्। नच—एतदंशित्व एतन्निष्ठात्यन्ताभावाप्रतियोगित्वं प्रयोजकमिति—वाच्यम्; केवलान्वयिधर्मस्यातदंशित्वापत्तेः, किन्तु एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वमेवैतदंशित्वे प्रयोजकम्। तच्चैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे विद्यमानेऽपि सम्भवति, इति कथं विरुद्धत्वम्? इत्याह, *तन्न*; एवमत्राभिप्रेतम्—पट एतत्तन्तुनिष्ठाभावप्रतियोगी न स्यात्; प्रागभावात्यन्ताभावयोरेकदेशस्थत्वविरोधात्। नच—संयोगात्यन्ताभावः प्रागभावसमानदेश इति—वाच्यम्, संयोगस्याव्याप्यवृत्तितानभ्युपगमात्, अत्यन्ताभाव-प्रागभावयोः समानदेशत्वे प्रागाभाव-प्रतियोगिनोरपि समानकालत्वं स्यात्; विरोधाविशेषात्। तथाचैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वैतत्तन्तुनिष्ठप्रागभावयोरेकत्र विरोधेनैतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वरूपप्रयोजक-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*संयोगेति* ॥ *अनभ्युपगमादिति* ॥ तथाच 'अग्रे वृक्षे संयोगो नतु मूले' इति धीः वृक्षनिष्ठाग्र-मूलवृत्तिसंयोग-तदभावावगाहते, नतु वृक्षनिष्ठौ तौ, इति नैकस्याप्यव्याप्यवृत्तित्वमिति भावः। *नन्वेवम्* मूलादावपि न संयोगादिसत्त्वं स्यात्। 'भूतल उपरिभागे संयोगो न त्वन्यभागे' 'उपरिभागे तद्दिशि संयोगो न त्वन्यदिशि' इत्यादिप्रत्ययात्; तस्माद् मूलादेरवच्छेदकत्वावगाहनाद् वृक्षादेरधिकरणत्वावगाहनात् संयोगादेर्मूलाद्यवच्छिन्नवृक्षादिनिष्ठाधिकरणता नापलप्या, तत्राह—*अभ्युपगमे वेति* ॥ *एतत्तन्तुत्वावच्छिन्नवृत्तित्वम्*=तत्पटानवच्छेदकावच्छिन्नवृत्तिकान्यत्वम्। तेन मिथ्यात्वघटकात्यन्ताभावस्यावच्छिन्नवृत्तिकत्वास्वीकारेऽपि न क्षतिः। 'अनवच्छेदके'त्यत्र देश-कालसाधारणमवच्छेदकत्वं

न्यायामृतसौगन्ध्यम्

किञ्च 'इह तन्तुषु पटः' इति प्रत्यक्षबाधः। नच—चन्द्रप्रादेशिकप्रत्यक्षवदप्रामाण्यशङ्काकलङ्कितत्वेन भ्रमसाधारणतया न बाधकत्वमिति—वाच्यम्; 'सन् घटः' इति प्रत्यक्षस्य फलपर्यन्तं परीक्षितत्वेनापरीक्षितचन्द्रप्रादेशिकप्रत्यक्षसाधारण्यासंभवात्(१)। किञ्चान्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तम्,

सौगन्ध्यविमर्शः

(१) घटादिषु प्रेक्षापूर्वकप्रवृत्तिदर्शनेऽपि व्यावहारिकसत्यत्वस्वीकारेणैव तदुपपत्तेर्भाविबाधाविरोधेन न मिथ्यात्वविरोधि सत्त्वप्रत्यक्षमित्युत्तरत्र स्फुटीभविष्यति ॥

---

यावत्, तच्चैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावः, एतत्तन्तुषु सत्त्वमिति यावत्, इत्येवमुपाधि-साध्यव्यतिरेकयोः पक्षे सद्भावेऽपि तन्तुरूपादीनां पक्षतुल्यतया पक्षादन्यत्र कुत्राप्यभावेनोपाधित्वमुपपद्यत एवेति ॥ (श्रीनि०)

अद्वैतसिद्धिः

नच—एवमन्यासमवेतस्यांशित्वमेतत्समवेतत्वं विना न युक्तम्, इति विरुद्धो हेतुरिति—वाच्यम्; एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽप्येतत्तन्तुसमवेतत्वस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात्। एतन्निष्ठात्यन्ताभावाप्रतियोगित्वं ह्येतत्समवेतत्वे प्रयोजकं न भवति; परमते केवलान्वयिधर्ममात्रस्यैतत्समवेतत्वापत्तेः, किं त्वेतन्निष्ठप्रागभावप्रतियोगित्वादिकम्। तच्चैतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्धमित्युपपादितमधस्तात्। एतत्समवेतत्वं चैतदुपादानकत्वम्, नतु नित्यसंबन्धशालित्वम्; तस्यानभ्युपगमात्॥

तरङ्गिणी

प्रतियोगित्वव्यापकैतत्तन्त्वसमवेतत्वाभावरूपैतत्तन्तुसमवेतत्वं विनाऽनुपपन्नमिति साध्यव्यापकविरुद्ध इत्यर्थः॥ *अत्र वदन्ति*—(सि०) एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽप्येतत्तन्तुसमवेतत्वस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात्। एतन्निष्ठात्यन्ताभावाप्रतियोगित्वं ह्येतत्समवेतत्वे प्रयोजकं न भवति; परमते केवलान्वयिधर्ममात्रस्यैतत्समवेतत्वापत्तेः, किं त्वेतन्निष्ठप्रागभावप्रतियोगित्वादिकम्। तच्चैतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽप्यविरुद्धम्—इति, *तन्न*; तदत्यन्ताभाववति तत्प्रागभावस्यापि विरुद्धत्वेनैतन्निष्ठप्रागभावप्रतियोगित्वस्याप्येतत्पटेऽसत्त्वात्, अन्यथा रूपात्यन्ताभाववति वाय्वादौ रूपप्रागभावस्यापि प्रसङ्गेन व्यावहारिक्यपि व्यवस्था न स्यात्। यच्चोक्तम्—केवलान्वयीत्यादि, तदपि न; न ह्येतत्समवेतत्वं नामैतन्नित्यसम्बन्धवत्त्वम्, किन्तु यावदेतत्स्वसत्त्वमेतत्संबन्धवत्त्वमात्रम्। तच्च केवलान्वयिनोऽप्येतत्तन्तुना सह विद्यत

न्यायामृतकण्टकोद्धारः

निवृत्तावेतत्तन्त्वारब्धत्वरूपमेतदंशित्वरूपं प्रयोज्यमपि निवर्तेत। तथाचान्यारब्धत्वाभाव एतदनारब्धत्वे चांशित्वं न स्यादिति प्रतिकूलतर्कसम्भवात् साध्याभावव्याप्यत्वसम्भवेन विरुद्धत्वं दुर्वारम्,—इति साधूक्तम्—'विरुद्धश्चे'ति॥ *यद्वा*—यो यदंशः, स तन्निष्ठात्यन्ताभावप्रतियोगी नेति सामान्यतः साध्याभावव्याप्यत्वसम्भवः। नच—अप्रयोजकत्वमिति—वाच्यम्; यदन्वय-व्यतिरेकप्रयुक्तान्वय-व्यतिरेकौ यस्य स्तः, तस्य तत् प्रयोजकम्, यथाहि वह्न्यन्वय-व्यतिरेकप्रयुक्तान्वय-व्यतिरेकवति धूमे वह्निः प्रयोजकः, तथेहाप्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्व एवैतदंशित्वम्; तदभावे तदभावः, इति तस्य तत्र प्रयोजकत्वात् न दोषः। *वस्तुतस्तु*—एतदंशित्वं हि—एतत्तन्तुसमवेतत्वेन वा? अन्यसमवेतत्वेन वा? इति द्वेधा

गौडब्रह्मानन्दी (लघुचन्द्रिका)

निवेश्यमित्याशयेनाह—*एवमिति*॥ *प्रयोजकम्*=समव्यापकम्, नतु व्याप्यमात्रं व्यापकमात्रं वा; आद्ये तदुक्तेर्व्यर्थत्वात्, द्वितीये केवलान्वयिनि वक्ष्यमाणापत्त्यसम्भवात्। *केवलान्वयीति*। उपलक्षणमेतत्—केवलव्यापकमपि न भवति; तत्त्वग्राहकतर्काभावात्। *ननु* प्रागभावप्रतियोगित्वमपि न व्यापकम्; तत्तन्तुसमवेतद्रव्यत्वादौ तदभावात्, तत्राह—*एतत्समवेतत्वमिति*॥

*एतत्तन्तुनिष्ठेत्यादि*॥ उक्तसाध्याभाववान्, तत्पटोपादानोपादानकत्वादित्यर्थः। यथाश्रुते तत्पटस्याव्याप्यवृत्तित्वेन बाधः। तत्संयोगजन्यत्वरूपस्य तदारब्धत्वस्य परिणामवादादिष्वसिद्धिश्च। *प्रतियोगित्वम्*=प्रतियोगितात्वम्। *प्रतियोगि*=प्रतियोगितावच्छेदकम्। उद्देश्यतावच्छेदके विधेयावच्छेदकत्वस्य व्युत्पत्तिलभ्यत्वाद्वोक्तार्थलाभः॥

न्यायामृतसौगन्ध्यम्

इति विरुद्धो हेतुः। नच—एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽप्येतत्तन्तुसमवेतत्वस्य संभवेनाविरोधः, एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वं ह्येतत्समवेतत्वे न प्रयोजकम्, परमते केवलान्वयिधर्ममात्र-

न्यायामृतम्

न युक्तमिति विरुद्धश्च। कस्यचित् पटस्य संयोगवृत्त्यैतत्तन्तुषु सत्त्वादनैकान्तिकश्च। समवायवृत्त्यै-

तरङ्गिणी

एव ॥ *कस्यचित् पटस्येति*॥ *अत्राहुः*—(सि०) तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वाणस्य तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारेण पक्षसमत्वाद् न व्यभिचारः—इति, तन्न; प्रतियोगिकालेऽत्यन्ताभावसंसर्गस्य विरुद्धत्वेन व्यभिचारस्य सत्त्वात्। *ननु* समवायसम्बन्धेनैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं साध्यम्। तच्चैतत्तन्तुसंयोगिनि पटेऽप्यस्तीति न व्यभिचार इत्यत आह—*समवायवृत्त्येति* ॥ तथा सति समवायानभ्युपगमपक्षे निरुक्तसाध्यस्यैतत्पटेऽपि सत्त्वेन सिद्धसाधनमर्थान्तरं वा स्यादित्यर्थः ॥

न्यायामृतकण्टकोद्धारः

वक्तव्यम्। तत्र प्रत्यक्षाबाधादेतत्पटस्यान्यासमवेतत्वे सिद्धे, एतदंशित्वमेतत्समवेतत्वं विना न सिद्ध्यति, अत एवाह—*अन्यासमवेतस्येति* ॥ तथाचैतत्पटस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे साध्य एतदंशित्वं विरुद्धमिति। *कस्यचिदिति* ॥ नच—तत्समवायेन तन्निष्ठात्यन्ताभावमङ्गीकुर्वतः संयोगेनापि तन्निष्ठाभावप्रतियोगित्वमिष्टमेवेति कथं व्यभिचारः? इति—वाच्यम्, मद्रीत्या व्यभिचारात्। नच—पक्षसमत्वाद् न व्यभिचार इति—वाच्यम्; बीजाभावात्। नच—पक्षसमव्यभिचारस्य दोषत्वे पक्षीयव्यभिचारस्यापि दोषत्वापत्त्याऽनुमानमात्रोच्छेद एव बीजमिति—वाच्यम्; तावता पक्षतावच्छेदकाक्रान्ते मा भवतु दोषो व्यभिचारः, तदनाक्रान्ते तु स्यादेव दोषः ॥ अस्तु वा पक्षीयव्यभिचारस्यापि दोषत्वम्। नचानुमानमात्रोच्छेदः; अनुकूलतर्कादिना तन्निरासेऽनुमानसम्भवात्। *यत्तु*—प्रतियोगिकाले तदत्यन्ताभावसंसर्गो विरुद्धः, इति व्यभिचारसम्भव इति, *तन्न*; समवायेन तन्निष्ठात्यन्ताभावमभ्युपगच्छतः प्रतियोगिकाले तदत्यन्ताभावसंसर्गोऽप्यविरुद्ध एवेति व्यभिचारोद्धारनायोगादिति ॥ *ननु* समवायेन तदत्यन्ताभावः साध्यः, पटान्तरस्य च संयोगेनैतत्तन्तुनिष्ठत्वेनैतन्निष्ठात्यन्ताभावप्रतियोगित्वाभावेऽपि समवायेन तन्निष्ठात्यन्ताभावप्रतियोगित्वसत्त्वेन साध्याभावाभावाद् न व्यभिचारः, इत्यत आह—*समवायवृत्त्येति* ॥ संयोगेन विद्यमानस्य पटान्तरस्य समवायेन निषेधो हि समवायरूपविशेषणभावनिषेधपरत्वेनापि पर्यवस्यति। तथाच कार्य-कारणयोरभेदाङ्गीकारे समवायस्याप्र-

न्यायामृतसौगन्ध्यम्

स्यैतत्समवेतत्वापत्तेरिति—वाच्यम्; समवेतत्वं हि न नियतसंबन्धेन संबन्धित्वम्, किन्तु संसृष्टत्वमात्रम् (१)। तच्च केवलान्वयिनां तन्तुष्वस्त्येव; (२)अत्यन्ताभाववत्यपि प्रागभावाङ्गीकारे वाय्वादौ रूपप्रागभावापत्तेः।

*यत्तु* अत्यन्ताभाव-प्रागभावयोर्विरोधस्तु दीधितावेव निरस्तः; 'घटे रक्तं रूपं नास्ती'ति प्रत्ययात्, तस्य प्रागभावादिविषयकत्वे रक्तताप्रागभावादिमति रक्तेऽपि तत्प्रसङ्गात्, वाय्वादौ रूपादिप्रागभावापत्तिरयुक्ता; अत्यन्ताभावस्य प्रागभावाव्याप्यत्वात्—इति, *तन्न*; त्रैकालिकसंसर्गकस्य कालत्रयप्रतियोगिसत्तासहमानस्यात्यन्ताभावेन सह विरोधोक्तेः, घटे रक्तस्य त्रैकालिकसंसर्गक-

सौगन्ध्यविमर्शः

(१) अत्यन्ताभावप्रतियोगित्वेऽपि कल्पितेन सम्बन्धेन संसृष्टत्वसंभवात् संसृष्टत्वमात्रं नात्यन्ताभावाप्रतियोगित्वप्रयुक्तमिति न दोषः। (२) आरम्भवादिनो नैयायिकाः कपालादौ घटात्यन्ताभावं घटप्रागभावं चोरीकुर्वन्ति, इत्यत्यन्ताभाववति प्रागभावाङ्गीकारो न तन्मतविरुद्धः। परिणामवादिनां विवर्तवादिनां च दृष्ट्या तु प्राक्कालीन उत्तरकालीनो वाऽभावः प्रागभाव-ध्वंसादिरूपः कारणस्वरूपत्वातिरिक्तो नास्ति कश्चन पदार्थः, इति स्वरूपेणात्यन्ताभावः कारणात्मनाऽवस्थानं च न विरुद्धम्, इति कथं विरोधः?

न्यायामृतम्

तत्तन्तुध्वंसस्त्वं तु विशेषणासत्त्वेनापि युक्तम्, 'इह तन्तुषु पटः' इति प्रत्यक्षबाधितश्च। अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्; व्यतिरेकेण पटान्तरवदि'ति सत्प्रतिपक्षश्च। नचाप्रसिद्धविशेषणता; एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, किंचिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात्, प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेः॥

अद्वैतसिद्धिः

*ननु*—अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्; व्यतिरेकेण पटान्तरवदिति प्रतिरोधः। नचाप्रसिद्धविशेषणत्वम्; एतन्निष्ठात्यन्ताभावप्रतियोगित्वम्, किंचिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात्, प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेः॥

तरङ्गिणी

*इह तन्तुष्विति*॥ *अत्राहुः*—(सि०) 'इह तन्तुषु पटः' इति प्रत्यक्षं भ्रमसाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितत्वेनाबाधकम्—इति, *तन्न*; फलपर्यन्तार्थक्रियालक्षणपरीक्षापरीक्षितप्रत्यक्षबाधस्योक्तत्वात्, चन्द्रप्रादेशिकत्वप्रत्यक्षे चाप्रामाण्यशङ्कैव, नतु परीक्षिततेति वैषम्यम्। वक्ष्यते चैतत् प्रत्यक्षबाधे॥ *नचेति*॥ साध्यरूपविशेषणप्रसिद्धिर्नेत्यर्थः। एतत्तन्तुगतरूपादेः पक्षत्वाभिप्रायेणेदम्॥ *संसर्गाभावेति*॥ अभिधेयत्वादिव्याप्ये प्रमेयत्वादौ व्यभिचारवारणाय 'संसर्गाभावप्रतियोगित्वे'ति। प्रमेयत्वादेस्तु घटादौ संसर्गाभावप्रतियोगित्वसामानाधिकरण्येऽपि संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिधर्मेऽपि सत्त्वेन संसर्गाभावप्रतियोगित्वाव्याप्यत्वेनाव्यभिचारात्। 'संसर्गाभावप्रतियोगित्वादि'त्युक्तावसिद्धिः; पक्षीकृत एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे संसर्गाभावप्रतियोगित्वस्य हेतोराधाराधेयभावेनानिश्चयात्, प्रागभाव-प्रध्वंसाभावप्रतियोगित्वमादाय पक्षे संसर्गाभावप्रतियोगित्वं न सम्भवति; अत्यन्ताभावप्रतियोगित्वस्य च साध्यत्वात्, तदादायापि पक्षे न हेतोर्निश्चयः, पक्षीकृतोपाधेर्हेतूकृतोपाधेश्चैकस्मिन्नुपधेये वृत्तावपि गन्धवत्त्व-रूपवत्त्ववत् तयोर्भेदेनाभेदसम्बन्धेनापि संसर्गाभावप्रतियोगित्वस्य पक्षावृत्तेः। व्याप्यत्वोक्तौ तु नासिद्धिः; पक्षीकृतेऽपि संसर्गाभावप्रतियोगित्वव्याप्यत्वसत्त्वात्, अन्योन्याभावप्रतियोगित्वमादायाभावत्वप्रतियोगित्वव्याप्ये प्रमेयत्वादौ व्यभिचारवारणाय—'संसर्गे'ति। *ननु* साध्यप्रसिद्ध्युपपादकानुमानेनैव सत्प्रतिपक्षसिद्धेर्व्यर्थं पूर्वानुमानमित्यत आह—*सामान्यत इति*॥ विशिष्य

न्यायामृतकण्टकोद्धारः

नङ्गीकारेण तादृशनिषेधस्यामिथ्यात्वेनाप्युपपत्तावर्थान्तरमिति भावः। *इह तन्तुष्विति*॥ नच—प्रत्यक्षभ्रमसाधारणस्य चन्द्रप्रादेशिकप्रत्यक्षत्ववदप्रामाण्यशङ्कास्कन्दितत्वाद् न बाधकत्वमिति—वाच्यम्,

न्यायामृतसौगन्ध्यम्

रूपात्यन्ताभावस्याभावात्, गुणादिवृत्तित्वविशिष्टस्योत्कलत्तणस्य रक्तात्यन्ताभावस्य रक्तादिप्रागभावविरोधित्वात्। त्रैकालिकात्यन्ताभाववत्यपि चेत् प्रागभावः स्वीक्रियते, तर्हि विरोधिनोऽभावात् तदापत्तिरिति ग्रन्थतात्पर्यात्।

किञ्चायं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्; व्यतिरेके पटान्तरवदिति प्रतिरोधः। नचाप्रसिद्धविशेषणत्वम्; एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, किंचिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात्, प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेः।

अद्वैतसिद्धिः

नच—आकाशात्यन्ताभावस्य घटादौ संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहात् तस्य च केवलान्वयित्वेन किंचिन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् तत्र व्यभिचार इति—वाच्यम्; संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिनि धर्मे सत्त्वेनाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वाव्याप्यत्वेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'किंचिन्निष्ठे'त्याद्यनुमानं न सम्भवदुक्तिकम्; संसर्गाभावप्रतियोगित्वस्यैव तादात्म्येन हेतुत्वसम्भवेन व्याप्यत्वांशवैयर्थ्यात्। किञ्च व्याप्यत्वं यदि केनचिद्रूपेणोच्यते, तदाऽऽकाशाभावस्यापि घटादिवृत्तित्वविशिष्टरूपेण तदस्त्येवेति व्यभिचारः। नच—व्याप्यतावच्छेदकोक्तरूपेण साध्यस्यापि तत्र सत्त्वाद् न व्यभिचार इति—वाच्यम्; तथा सति 'नचाकाशात्यन्ताभावस्ये'त्यादिशङ्काग्रन्थस्य निरालम्बनत्वेन भ्रान्तशङ्कापरत्वापत्तेः। नच—संसर्गाभावप्रतियोगित्वव्याप्यत्वं येन केनचिद्रूपेण, अत्यन्ताभावप्रतियोगित्वं तूभयावृत्तिधर्मेणेत्यभिप्रेत्याशङ्का, उत्तरं तूभयावृत्तिधर्मेणैव व्याप्यत्वमपि निवेश्यमित्यभिप्रायणेति नोक्तदोष इति—वाच्यम्; तथा सत्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपपक्ष उभयावृत्तिना तत्प्रतियोगिताव्यक्तित्वेनात्यन्ताभावे सिद्धेऽप्यस्मदीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावानुमानासिद्धया सत्प्रतिपक्षासिद्धेः। अथोक्तमूलवाक्यमुपेक्ष्य येन रूपेण व्याप्यत्वम्, तेनैवात्यन्ताभावप्रतियोगित्वमप्युच्येत, तथापि तद्व्यक्तित्वेनात्यन्ताभावसिद्धिः। अथ येन येन व्याप्यत्वम्, तेन तेनोक्तप्रतियोगित्वमित्युच्यते, तथापि 'येन येने'ति वीप्सालब्धयावद्रूपमध्येऽत्यन्ताभावप्रतियोगितात्व-संसर्गाभावप्रतियोगितात्वयोरपि पतितत्वेन ताभ्यामेव तदुक्तिर्युक्ता। अत्यन्ताभावप्रतियोगितात्वेन तदुक्तौ साधनवैकल्यम्, संसर्गाभावप्रतियोगितात्वेन तदुक्तौ स्वव्यापकसाध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपव्याप्तिरूपे साधने संसर्गाभावप्रतियोगितात्वस्य प्रविष्टत्वेन तस्यैव हेतुतावच्छेदकत्वसम्भवेनेतरांशवैयर्थ्यम्। अत्यन्ताभावप्रतियोगितात्वस्योक्तव्याप्तौ प्रविष्टत्वेन तस्यैव हेतुतावच्छेदकत्वसंभवेनेतरांशवैयर्थ्यं च। नच—अस्तु तथैवेति—वाच्यम्; अप्रयोजकत्वात्, तथापि तदभ्युपेत्य दूषणान्तर-

न्यायामृतसौगन्ध्यम्

नच—आकाशात्यन्ताभावस्य घटादौ संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहात् तस्य च केवलान्वयित्वेन किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् तत्र व्यभिचार इति—वाच्यम्; संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिधर्मे सत्त्वेनाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वाव्याप्यत्वेन(१)व्यभिचाराभावात्॥

*यत्तु* 'किञ्चिन्निष्ठे'त्याद्यनुमानं न संभवदुक्तिकम्, संसर्गाभावप्रतियोगित्वस्यैव तादात्म्येन हेतुत्वसंभवेन व्याप्यत्वांशवैयर्थ्यात्—इति, *तन्न*; धर्मिभेदेन धर्मप्रागभाववद्वैयर्थ्यात्। *ननु* यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तावेतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेन प्रतिरोधस्य हीनबलत्वम्; एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वादिति—चेत्, *न*; सत्प्रतिपक्षे सत्प्रतिपक्षान्तरस्यादोषत्वेन त्वदुक्तोपाध्युद्भावनस्य वैयर्थ्यात्, त्वदुक्तोपाध्यभावेन साध्याभावसाधन एतत्तन्त्वमारब्धत्वस्योपाधित्वात्, संयोगस्याव्याप्यवृत्तित्वे

सौगन्ध्यविमर्शः

(१) सर्वस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन केवलान्वयिधर्माप्रसिद्धया प्रमेयत्वादीनामपि घटादितुल्ययोगक्षेमत्वेन संसर्गाभावप्रतियोगित्वं वर्तत एव, इति कथं संसर्गाभावप्रतियोगित्वानधिकरण आकाशाभावः ? तथाचाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वव्याप्यत्वाद् व्यभिचारस्तदवस्थ एव ॥

## न्यायामृतम्

एतत्तन्त्वनारब्धत्वं चोपाधिः। नचैतत्तन्त्वारब्धसंयोगे साध्याव्यापकत्वम्; आवयोस्संयोगः स्वात्यन्ताभावासमानाधिकरण इति संमतेः। द्रव्यत्वावच्छिन्नसाध्यव्यापकत्वोपपत्तेश्चोपाधिरेव प्रयोजकः; साध्यवति ब्रह्मण्युपाधिवद् हेतोरभावात् ॥

## अद्वैतसिद्धिः

व्यभिचाराभावादिति—चेत्, *न*; यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्त्यैतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेन प्रतिरोधस्य हीनबलत्वात्, एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात्, दृश्यत्वाद्यनुपपत्तिरूपप्रतिकूलतर्कपराहतेर्वक्ष्यमाणत्वाच्च।

## तरङ्गिणी

सत्प्रतिपक्षार्थं तदनुमानमित्यर्थः ॥ *अत्र वदन्ति*—(सि०). न सत्प्रतिपक्षः संभवति; यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्त्यैतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेन प्रतिरोधस्य हीनबलत्वात्। एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात्, दृश्यत्वाद्यनुपपत्तिरूपप्रतिकूलतर्कपराहतेर्वक्ष्यमाणत्वाच्च—इति, *अत्र ब्रूमः*; एवं हि पृथिवी, इतरभिन्ना, पृथिवीत्वात्, इत्यत्र पाकजरूपाभावादिकमुपाधिः स्यात्। पृथिवीत्वाभावव्यापकस्य पाकजरूपाभावस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्यमाने तदभेदाव्यापकत्वादिति तत्रापि शक्यं वक्तुम्। तस्माद् नैतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिः, संयोगादिना दृश्यत्वोपपत्तेर्वक्ष्यमाणत्वाद् न प्रतिकूलतर्कपराहतिरिति सुस्थः सत्प्रतिपक्षः ॥ *उपाधिरेवेति* ॥ यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वनारब्धत्वम्; यथाऽऽकाशादौ। यत्रैतत्तन्त्वारब्धत्वम्, तत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावः; यथैतत्तन्त्वारब्धगुणादावित्यन्वयसहचारग्रहादिभिः साध्योपाध्योर्व्याप्य-व्यापकभावनिश्चयाद् उक्तसाध्यं प्रत्युक्तोपाधिरेव प्रयोजकः, नतु हेतुः। तस्य साध्यवति ब्रह्मण्यविद्यमानस्य साध्याव्यापकत्वेन साध्यं प्रत्यप्रयोजकत्वादित्यर्थः। *ननु* धूमादिरप्येवमेवाप्रयोजकः स्यादिति—चेत्, *सत्यम्*; तत्र कार्य-कारणभावतर्केण व्याप्तिग्रहात्, प्रकृते तथा तर्काभावादिति वक्ष्यते। *ननु* नासावुपाधिः, तथाहि—एतत्पटस्यैवैतत्तन्त्वारब्धरूपादेरप्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं परस्य

## गौडब्रह्मानन्दी (लघुचन्द्रिका)

माह—*यत्रैतदिति* ॥ प्रागभावास्वीकारपक्ष एतदुपादानकान्यत्वमेवोपाधिः। तादृशप्रतियोगित्वेन संदिह्यमाने पक्षे यद्युपाधिनिश्चयः स्यात्, तदा तादृशप्रतियोगित्वरूपसाधनव्यापकत्वमुपाधौ निश्चीयेत, स तु नास्तीत्याशयेन 'पक्षावृत्तेरि'त्युक्तम्। पक्षावृत्तित्वेन निश्चितस्येत्यर्थः। *सन्दिह्यमानेत्यादि* ॥ संदिह्यमानं

## न्यायामृतसौगन्ध्यम्

द्रव्यत्वावच्छिन्नसाध्यव्यापकत्वात्, अनुकूलतर्काणां वक्ष्यमाणत्वेन (१)संदिग्धोऽपीहोपाधिः संभवति ॥ किञ्चैवं पृथिवी, इतरेभ्यो भिद्यते, पृथिवीत्वादित्यादौ पाकजरूपाभावादिरप्युपाधिः स्यादिति व्यतिरेक्युच्छेदः स्यात्। पृथिवी, इतरेभ्यो भिद्यते, पृथिवीत्वात्, इत्यादावपि यत्र पृथवीतरत्वं, तत्र पृथिवीत्वाभाव इत्यादिव्याप्तिग्रहे पाकजरूपाभावस्य पृथिवीत्वाभावव्यापकस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्यमानपृथिवीतरत्वव्यापकत्वाभावात् ॥

## सौगन्ध्यविमर्शः

(१) "दृश्यत्वाद्यनुपपत्तिरूपप्रतिकूलतर्कपराहतेर्वक्ष्यमाणत्वाच्चे"ति सिद्धिवाक्येनैवात्र सन्दिग्धोपाधेर्न दूषणत्वमित्यादिकं निरूपितमिति मन्तव्यम् ॥

तरङ्गिणी

सिसाधयिषितम् ; "अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः। अंशित्वादितरांशीव दिगेवैषा गुणादिष्वि"ति तत्त्वप्रदीपोक्तेः। तथाचोपाधिव्यतिरेकवत्येतत्तन्त्वारब्धरूपादौ साध्यव्यतिरेकानिश्चयेनोक्तोपाधेः साध्याभावाविनाभाव्यभावप्रतियोगित्वाभावादित्यत आह—*अनुकूलेति* ॥ यद्वा—प्रयोजको धर्म उपाधिः। प्रयोजकत्वं च न न्यूनाधिकवृत्तेः ; तस्मिन् सत्यभवतस्तेन विनाऽपि भवतस्तदप्रयोजकत्वात्, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यविरहिणि प्रमेयत्वादौ विद्यमानस्यैतत्तन्त्वनारब्धत्वस्योपाधेस्तेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यद् उक्तं प्रतियोगित्वम्, तद्व्यापकत्वानिश्चयादित्यर्थः। तथाचैतदारब्धत्वाभावव्यापकस्योपाधेर्व्यभिचारित्वेन हेतुनैतदारब्धत्वाभावव्यभिचारित्वमेतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽनुमेयम्। अत एतदनारब्धत्वे तादृशप्रतियोगित्वव्यापकतानिश्चयो न सम्भवतीति भावः। नच—उक्तोपाध्यभाववति तादृशप्रतियोगित्वस्य

न्यायामृतकण्टकोद्धारः

सत्यः पटो भवत्येवेत्यर्थसत्तानिश्चयत्वेनाप्रामाण्यशङ्कानास्कन्दितत्वात्, निष्कम्पप्रवृत्तिजनकत्वाच्च, स्वत एव प्रामाण्यावधारणाच्च, बाधकाभावस्याग्रे वक्ष्यमाणत्वाच्च। चन्द्रप्रादेशत्वादिकं तु दूरस्थत्वादिदोषयुक्तत्वादप्रामाण्यशङ्कास्कन्दितम्, नचाज्ञानमेवेह दोषः ; तस्य मिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्। तस्मात् सुस्थो बाधः। *सत्प्रतिपक्षश्चेति* (६०३) ॥ *ननु* अत्र दृष्टान्ताभावेनान्वयव्याप्तेरभावाद् व्यतिरेकव्याप्तिर्वाच्या, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं यत्र, तत्रैतत्तन्त्वारब्धत्वाभाव इति। तत्रैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वम्, अस्ति च साध्यव्यापकता—यत्रैतत्तन्त्वारब्धत्वाभावः, तत्रैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वं पटान्तरादौ ; पक्षे सन्दिग्धं व्याप्यम्, उपाधिव्यतिरेकश्च निश्चितः। तथाच सन्दिग्धोपाधित्वेन प्रतिरोधस्य हीनबलत्वात् सत्प्रतिपक्षत्वमिति—वाच्यम् ; स्थापनानुमानेऽप्यस्योपाधेः सम्भवात्। यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वम् ; पटान्तरे दृष्टत्वात्, यत्र पटत्वमंशित्वं वा, तत्र नोपाधिः ; पक्षे व्यभिचारात्। इयांश्च भेदः—प्रतिपक्षे सन्दिग्ध उपाधिः, स्थापनायां तु निश्चित इति। तथाच तुल्यबलत्वात् सुस्थः प्रतिपक्षः ॥ नच—स्थापनायां नोपाधेः साध्यव्यापकता ; अनुकूलतर्काभावात्, इति—वाच्यम् ; प्रतिपक्षेऽपि व्यतिरेकव्याप्तौ तुल्यत्वात्। निरुपाधिकसहचार एवानुकूलतर्क इति तु तुल्यम्। नच—संयोगादौ साध्याव्यापकतेति—वाच्यम् ; संयोगस्याव्याप्यवृत्तित्वानभ्युपगमात्, पक्षधर्मावच्छिन्नसाध्यव्यापकत्वसम्भवाच्च। अत एव प्रतिपक्षानुमाने व्यतिरेकव्याप्तौ संयोगादौ व्यभिचारोऽप्यपास्तः। तस्मात् साधूक्ता सत्प्रतिपक्षता। *संसर्गाभावप्रतियोगित्वव्याप्यत्वादिति* (६०३) ॥ व्याप्यत्वादित्युक्ते प्रमेयत्वे व्यभिचारः, अतः—*अभावप्रतियोगित्वेति*। तावत्युक्तेऽप्यन्योन्याभावप्रतियोगित्वव्याप्यत्वसत्त्वेन तत्रैव व्यभिचारः, तदर्थं 'संसर्गे'ति विशेषणम्। केवलान्वयिनः संसर्गाभावाभावाद् न व्यभिचारः। संसर्गाभावप्रतियोगित्वमात्रोक्तावसिद्धिः स्यात्, अतो 'व्याप्यत्वे'ति। नच—अत्र ध्वंसप्रतियोगित्वव्याप्यत्वमेव हेतुरस्तु, केवलान्वयिनि धर्मे न व्यभिचारः, नाप्यसिद्धिरिति—वाच्यम् ; प्रागभावप्रतियोगिनि ध्वंसे ध्वंसप्रतियोगित्वाभावात् साधनवैकल्यं स्यात्। किञ्चासिद्धिरपि तदवस्था ; एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिनि घटत्वे ध्वंसप्रतियोगित्वाभावात्, अत एव न प्रागभावप्रतियोगित्वव्याप्यत्वं हेतुः। *एतत्तन्त्विति* ॥ *ननु* नायमुपाधिः ; स्वव्यतिरेकेण साध्यव्यतिरेकसाधने सोपाधिकत्वादिति चेत्, न ; तस्यैवोपाधेः स्थापनायामपि प्रतिपादितत्वादिति दिक् ॥

**व्यायामृतम्**

अनुकूलतर्काभावे च व्यतिरेकहीनस्याप्युपाधित्वाच्च। नह्यंशित्वं साध्यं विना न युक्तम्; उक्तहेतुनैवैतत्पटार्थक्रियाकारित्वाद्यभावस्यापि सुसाधत्वात्, आभाससाम्यं च॥

**अद्वैतसिद्धिः**

अत एवैतत्तन्त्वनारब्धत्वमपि नोपाधिः; उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने सोपाधिकत्वस्योक्तत्वात्, अव्याप्यवृत्तिसंयोगाभ्युपगमे तत्र व्यभिचाराच्च। अत एव यत्नैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वनारब्धत्वमिति न साध्यव्यापकताग्रहोऽपि; तत्रैव व्यभिचारादिति सर्वमनवद्यम्॥

**तरङ्गिणी**

विनाऽपि भवत उक्तसाध्यं प्रत्यप्रयोजकत्वात् नोपाधित्वम्, अत आह—*अनुकूलेति*॥ वाद्युपन्यस्तसाध्यनिरूपितव्याप्तिग्राहककार्य-कारणभावाद्यनुकूलतर्काभावे व्यतिरेकहीनस्यापि साध्यव्यतिरेकव्यापकव्यतिरेकाप्रतियोगिनः साध्यव्याप्यस्याप्युपाधित्वमार्द्रेन्धनादिवदक्षतमेवेत्यर्थः। वादिहेतावनुकूलतर्काभावमेवाह—*नहीति*॥ *यत्तु* एतत्तन्त्वनारब्धत्वं नोपाधिः; उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने व्यतिरेकव्याप्तावेतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वात्—इति, *तन्न*; व्यतिरेक्युच्छेदापत्तेर्नैवंविधस्योपाधित्वमित्युक्तत्वात्॥ *आभाससाम्यमिति*॥ अप्रयोजकत्वमित्यर्थः। आभाससाम्यस्यादोषत्वात्॥

**व्यायामृतकण्टकोद्धारः**

*ननु* अस्योपाधेर्व्यतिरेकव्याप्त्यभावात् कथमुपाधित्वम्? अत आह—*अनुकूलतर्काभावे चेति*॥ नच—व्यतिरेकशून्यस्यानुकूलतर्काभावे सोपाधित्वमदृष्टचरमिति—वाच्यम्; तेजोमात्रं

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

संशयात् तादृशप्रतियोगित्व उक्तव्यभिचारित्वरूपहेतोर्निश्चय इति—वाच्यम्; एतत्तन्तुपदस्य तत्पटोपादानपरतया तत्पटोपादानीभूतं यत् तन्त्ववच्छिन्नचैतन्यम्, तन्निष्ठप्रागभावाप्रतियोगित्वरूपोपाध्यभाववति तादृशचैतन्यारोपितसर्पादौ स्वोपादानवृत्तित्वावच्छेदकावच्छिन्नात्यन्ताभावप्रतियोगित्वनिश्चयस्य परेणापि वाच्यतयोक्तव्यभिचारित्वरूपहेतोर्निश्चयानपायात्, तादृशव्यभिचारित्वस्यानिश्चयेऽपि तत्संशयाहितेनैतदारब्धत्वाभावव्यभिचारित्वसंशयेनोक्तव्यापकतानिश्चयप्रतिबन्धसंभवाच्च। *उक्तत्वादिति*॥ उपाध्यभावे साध्याभावस्य व्यतिरेकव्याप्तेरेव वाच्यतया तत्रैतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधेरुक्तत्वादित्यर्थः। *तत्र व्यभिचारादिति*॥ दशावच्छिन्नसंयोगादौ तत्पटावच्छेदकावच्छिन्नात्यन्ताभावप्रतियोगित्वरूपस्य साध्याभावस्य एतत्तन्त्वारब्धत्वरूपस्य हेतोश्च सत्त्वाद् व्यभिचार इति भावः। अत्यन्ताभावे तत्पटावच्छेदकावच्छिन्नवृत्तिकत्वं विशेषणं देयमित्यभिप्रत्येदम्। यदि तूक्तरीत्या तत्पटानवच्छेदकानवच्छिन्नत्वं विशेषणं दीयते, तदा तत्पटावच्छेदकावच्छिन्ने संयोग-ध्वंसादौ व्यभिचारो बोध्यः। ध्वंसस्यापि परिणामवादे सूक्ष्मावस्थारूपपरिणामत्वेन एतत्तन्त्वारब्धत्वात्। नच—स्वावच्छेदकावच्छिन्नसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्यैव साध्यतया संयोगादौ तादृशप्रतियोगित्वस्थापनकाले व्युत्पत्तिस्वाभाव्येन तस्यैव स्वपदेन धार्यतया नोक्तव्यभिचार इति—वाच्यम्; प्रकृतानुमानस्य नव्यमत एव स्वीकारात्। तत्र स्वत्वस्याननुगतत्वेन तत्पटावच्छेदकत्वेनैव साध्ये निवेशात्, साध्योपाध्योरेतत्तन्तुपदस्य तत्पटोपादानपरतया तत्तन्त्ववच्छिन्नचिदुपादानकसर्पादौ स्वावच्छेदकावच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वस्य तदुपादानकत्वरूपतदारब्धत्वस्य च सत्त्वाच्च। अत एव स्वानवच्छेदकानवच्छिन्नवृत्तिकत्वनिवेशेऽपि तत्र व्यभिचारः; तस्य परेणापि मिथ्यात्वस्वीकारेण तदत्यन्ताभावस्यावच्छिन्नवृत्तिकत्वाभावात्। तत्संयोगजन्यत्वरूपं तदारब्धत्वं तु पक्षेऽपि मन्मते नास्त्येवेति भावः॥

न्यायामृतम्

यत्तु—विमतम्, ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात्, इति विद्यासागरीयं बौद्धोक्तसहोपलम्भयुक्त्युद्गिरणम्। तत्र ज्ञानाद्भेदेनानुपलभ्यमानत्वं वा हेतुः? ज्ञानविरहप्रयुक्तोपलब्धिविरहवत्त्वं वा? आद्येऽसिद्धिः। 'घटस्य ज्ञानमि'ति हि धीः, नतु 'घटो ज्ञानमि'ति। नान्त्यः; ज्ञानस्योपलब्धित्वेन तद्विरहस्य तद्विरहाप्रयुक्तत्वात्, उपलब्धिसामग्रीविरहप्रयुक्तत्वाच्च॥

*यत्तु*—विमतम्, मिथ्या, धीकाल एवान्यथा प्रमितत्वात्; चित्रनिम्नोन्नतादिवत्, भारूपवस्तुसंलग्नत्वात्; सवितृच्छिद्रवत्। न चासिद्धिः; इदानीमेव "इदं सर्वं यदयमात्मे"तिश्रुत्याऽशेषानात्मन आत्मत्वप्रमितेः, 'घटादिकं स्फुरती'तिभारूपवस्तुसंलग्नत्वाच्चेति—कौमुद्युक्तम्, तत्राद्येऽन्यथेत्यस्य [illegible]त्मत्वेनेत्यर्थः, तदा सदात्मत्वेन प्रमितत्वस्यामिथ्यात्वव्याप्तत्वाद् विरुद्धो हेतुः। यदि प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वेनेति, तर्ह्यसिद्धिः, व्यर्थविशेषणता च, द्वितीयस्तु सविताद-

अद्वैतसिद्धिः

एवं च—'विमतम्, ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात्, स्वाप्नादिवदि'ति विद्यासागरोक्तमपि—साधु; ज्ञानव्यतिरेकेणासत्त्वमुक्तमिथ्यात्वान्यतमत्वं साध्यम्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वं चिदाभासे सत्येवोपलभ्यमानत्वं हेतुः, इति न किंचिदनुपपन्नम्॥

तरङ्गिणी

*यत्त्विति*॥ स्वाप्नो दृष्टान्तः॥ *सहोपलम्भेति*॥ *सहोपलम्भः=सहोपलम्भनियमः। एतच्च प्रपञ्चितं बौद्धाधिकारे—"ग्राह्य-ग्राहकयोरभेदे साध्ये सहोपलम्भनियमो हेतुत्वेनोपादीयते" इति। एतच्च व्याख्यातं शिरोमणिना—"सहोपलम्भनियमः=नियमेनैकवित्तिवेद्यत्वम्, तदविषयकज्ञानाविषयत्वं वा, तेषां मते ज्ञानस्य स्वप्रकाशत्वात्, ज्ञान-ज्ञेययोरभेदे च ज्ञान-ज्ञेयग्राहकाभ्यां ज्ञेय-ज्ञानयोरपि ग्रहणात् नासिद्धिरि"ति॥ *उपलब्धीति*॥ तथाचासिद्धिरित्यर्थः॥ *यत्तु*—ज्ञानव्यतिरेकेणानुपलभ्यमानत्वं नाम चिदाभासे सत्येवोपलभ्यमानत्वं हेतुरिति, *तन्न*, घटादौ वृत्त्यतिरिक्तचिदाभासरूपज्ञानाभावस्य रूपादिरहितात्मनश्चाक्षुषादिज्ञाने प्रतिभासासम्भवस्य चोक्तत्वेन चिदाभासे सत्येवोपलब्ध्या हेतोरसिद्धेः॥ *चित्रेति*॥ चित्रपटविशेषोऽन्यथा प्रतीयते, निम्नमपि निम्नतरापेक्षयोन्नतत्वेन, उन्नतमप्युन्नततरापेक्षया निम्नत्वेनेत्यन्यथा प्रतीयत इत्यर्थः॥ *इदानीमेवेति*॥ "ब्रह्म तं परादाद् योऽन्यत्रात्मनो ब्रह्म वेदे"ति विप्र-क्षत्रप्रभृतीनामात्मव्यतिरेकविदं निन्दित्वा "इदं सर्वं यदयमात्मे"त्यादिश्रुत्याऽशेषाणामनात्मनामात्मतयोक्तत्वादित्यर्थः॥ *घटादिकमिति*॥ स्फुरणस्य भारूपतया ब्रह्मत्वेन तत्संलग्नतया घटादेः प्रतीतेरित्यर्थः॥ *व्यर्थविशेषणतेति*॥ धीकाल एवेत्यस्येत्यर्थः॥

न्यायामृतकण्टकोद्धारः

पक्षीकृत्योष्णत्वे साध्येऽतेजस्त्वस्य तादृशस्योपाधित्वाङ्गीकारात्। नच—उपाधिव्यतिरेकेण साध्यव्यतिरेके साधनीये संयोगादौ सन्दिग्धव्यभिचार इति—वाच्यम्; अनुकूलतर्केण व्यभिचारसंशयनिरासादिति। स च प्रागेव दर्शितः। विद्यासागरीयमनुमानं निराचष्टे—*यत्त्विति*॥ *ज्ञानस्येति*॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*चिदाभास इत्यादि*॥ चिदाभासं स्वावच्छिन्नचितं विनाऽनुपलभ्यमानत्वम्=तादृशचितमनपेक्ष्यैव यत् प्रकाशते, तदन्यत्वम्; स्वप्रकाशान्यत्वमिति यावत्। *ननु*—विमतम्, मिथ्या, धीकाल एवान्यथा प्रमितत्वात्, चित्रनिम्नोन्नतादिवत्, भारूपवस्तुसंलग्नत्वात्, सवितृच्छिद्रादिवत्। नचासिद्धिः; धीकाल एव 'इदं सर्वं यदयमात्मे'त्यादिश्रुत्या सर्वानात्मन आत्मत्वेन प्रमितत्वात्, 'घटादि स्फुरती'ति भारूपसंलग्नत्वाच्चेति कौमुदीकाराः। तत्रान्यथेत्यस्य 'आत्मत्वेने'त्यर्थकत्वे सद्रूपात्मत्वेन प्रतीतत्वस्यामिथ्यात्वव्याप्यत्वेन विरुद्धो हेतुः, 'प्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रतियोगित्वेने'त्यर्थकत्वे त्वसिद्धिः, व्यर्थविशेषणता च, द्वितीयहेतुः

न्यायामृतम्

ऽत्मनि चानैकान्तिकः ; तस्यापि 'सविता प्रकाशते' 'आत्मा स्फुरती'ति भारूपसंलग्नत्वादिति दिक् । *एतेन*—नवीनानामनुमानानि निरस्तानि ; आद्ये सिद्धसाधनदोषात्, द्वितीयेऽव्याप्यवृत्तित्वानधिकरणशब्देनावयवावृत्तित्वोक्ताववयव्यादेरपक्षत्वापातात्, स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोक्तौ च तदप्रतियोगिनि तत्प्रतियोगित्वस्य बाधितत्वात्, अनात्मत्वस्य निरस्तत्वाच्च । तृतीये स्वरूपेणात्यन्ताभावप्रतियोगित्वे साध्येऽत्यन्तासत्त्वापातात्, धर्मावच्छेदेन तत्प्रतियोगित्वे साध्येऽर्थान्तरत्वात्, नित्यद्रव्याणामपि काले सत्त्वेन दृष्टान्तस्य साध्यवैकल्याच्च । चतुर्थे न व्यावहारिकप्रतियोगिक इत्यपि सुसाधत्वेनाभाससाम्यात्, वक्ष्यमाणदूषणगणग्रासाच्च ॥

इत्यंशित्वादिहेतुभङ्गः ।

---

तरङ्गिणी

*आद्य इति* ॥ कार्यकारणयोरभेदेन=कार्यस्य कारणानाश्रितत्वादित्यर्थः ॥ *अवयव्यादेरिति* ॥ अवयविनोऽवयववृत्तित्वानधिकरणत्वाभावादित्यर्थः ॥ *बाधितत्वादिति* ॥ पक्षतावच्छेदकावच्छिन्ने पक्षे साध्यानुमितेरसम्भवादित्यर्थः ॥ *अनात्मत्वस्येति* ॥ जडत्वभङ्ग इति शेषः ॥ तृतीय इति* ॥ केवलान्वय्यत्यन्ताभावप्रतियोगित्वे साध्ये धर्मावच्छेदेन पारमार्थिकत्वेनार्थान्तरत्वात्, ब्रह्मवत् स्वरूपसत्तयाऽप्युपपत्तेः ॥ *नित्यद्रव्याणामपीति* ॥ 'इदानीमाकाशः' इति प्रतीतेरबाधितायाः सत्त्वादित्यर्थः ॥

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि । न्यायामृततरङ्गिण्यामंशादेर्भङ्ग ईक्ष्यताम् ॥

इत्यंशित्वादिहेतुभङ्गः ॥

---

न्यायामृतकण्टकोद्धारः

तथाचात्राप्यसिद्धिरिति भावः । *ननु* ज्ञानव्यतिरेकेणासत्त्वमुक्तमिथ्यात्वान्यतरत्वं विवक्षितम् ; ज्ञानव्यतिरेकेणालक्ष्यमाणत्वं च चिदाभासे सत्येवोपलक्ष्यमाणत्वमिति, अत उक्तदोषो नेति चेत् ; न ; उक्तमिथ्यात्वानां प्रागेव दूषितत्वात् । चिदाभासे सत्येवोपलभ्यमानत्वं घटादावसिद्धम् ; 'घटोऽयमि'त्याद्यनुभवे चिदाभासासम्भवस्योक्तत्वात् । *विरुद्ध इति* ॥ नच—अनात्मन आत्मत्वेन प्रमितत्वं विवक्षितम्, एवं सति कथं विरुद्धत्वम् ? इति वाच्यम् ; दृष्टान्तस्य साधनवैकल्यापत्तेः । *व्यर्थेति* ॥ 'धीकाले' इत्यस्य वैयर्थ्यमित्यर्थः । *सविभ्रमावाविति* ॥ एतत्त्वानभ्युपगमेनेदम्, तदभ्युपगमे त्वाह—*आत्मनि चेति* ॥ उक्तदूषणातिदेशेन नवीनानुमानानि दूषयति—*एतेनेति* ॥ *आद्य इति* ॥ एतत्पटात्यन्ताभावः, एतत्तन्तुनिष्ठः, एतत्पटानाधाभावत्वादित्यत्रेत्यर्थः । *द्वितीय इति* ॥ अव्याप्यवृत्तित्वानधिकरणं विप्रतिपत्त्युक्तविशेषणत्रयोपेतम्, स्वसमानाधिकरणात्यन्ताभावप्रतियोगि, अनात्मत्वादित्यत्रेत्यर्थः । नच—तदप्रतियोगित्वं कल्पितम्, प्रतियोगित्वं पारमार्थिकमिति न नाद्य इति—वाच्यम् ; अस्या व्यवस्थाया मिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्, उक्तदूषणदूषितत्वाच्च । *तृतीय इति* ॥ विमतं नित्यद्रव्यान्यत्, केवलान्वय्यत्यन्ताभावप्रतियोगि, पदार्थत्वादित्यत्रेत्यर्थः । *चतुर्थ इति* ॥ आत्मत्वावच्छिन्नधर्मिताको भेदः, न पारमार्थिकप्रतियोगिकः, अनात्ममात्रप्रतियोगिकत्वादित्यत्रेत्यर्थः ॥

इत्यंशित्वादिहेतुभङ्गः ।

---

अद्वैतसिद्धिः

एवमन्येषामपि प्रयोगा यथायोगमुपपादनीया इति शिवम् ॥ इत्यंशित्वादिहेतूपपत्तिः ।

---

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सवितात्मनोर्व्यभिचारी, 'सविता प्रकाशते' 'आत्मा स्फुरती'ति तयोर्भासंलग्नत्वात्, तत्राह—*एवमिति* ॥ 'अन्यथाप्रमितत्वादि'त्यस्य प्रपञ्चविलक्षणरूपेण यत् प्रमितम्, तत्तादात्म्यादित्यर्थः । तच्च कल्पितं ब्रह्मण्यपीति 'धीकाले' इत्युक्तम् । स्वधीकाल इत्यर्थः । ब्रह्मधीकाले च ब्रह्मणि तद् नास्ति ; तस्याः स्वेतरकल्पितनाशकत्वात् । स्वधीसमुत्पत्तिद्वितीयक्षणो वा स्वधीकालपदार्थः । तथाच ब्रह्मधीसमुत्पत्तिद्वितीयक्षणाप्रसिद्धेर्न ब्रह्मणि तदस्ति । ब्रह्मावृत्तिवित्तादात्म्यं पर्यवसितम् । *भारूपसंलग्नत्वम्=स्वप्रकाशस्वरूपावृत्तिधर्मवत्त्वम्, सवितरि तु न व्यभिचारः ; तस्यापि पक्षत्वात् । *ननु*—'यत्रैतत्तन्तुनिष्ठे'त्यादिकं यदुक्तम्, तदयुक्तम् ; तथा सति व्यतिरेकिमात्रोच्छेदापत्तेः, पृथिवी, इतरेभ्यो भिद्यते, पृथिवीत्वादि'त्यादावपि 'यत् पृथिवीतरत्, तत्र पृथिवीत्वाभावः' इत्यादिव्याप्तिग्रहे पाकजरूपाभावस्य पृथिवीत्वाभावव्यापकस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्यमानपृथिवीतरत्वव्यापकत्वाभावादिति—*चेत्*, *न* ; साध्यासमानाधिकरणधर्मवद् यत् साधनवत्, तन्निष्ठाभावप्रतियोगितावच्छेदकः साध्यसमानाधिकरणवृत्तिर्यो धर्मस्तद्वत्त्वरूपस्य दीधितिकाराद्युक्तस्योपाधिलक्षणस्य पाकजरूपाभावे विरहात्, पृथिवीतरतादात्म्येन निश्चिते जलादौ पृथिवीत्वाभावरूपसाध्यासमानाधिकरणधर्मस्याभावात् पाकजरूपाभावरूपोपाधिव्यभिचारित्वस्य पृथिवीतररूपसाधने निश्चयाभावेन तेन हेतुना तत्र पृथिवीत्वाभावरूपसाध्यव्यभिचारित्वानुमानासम्भवात्, सत्प्रतिपक्षोन्नायकतया दूषकत्वस्य तत्रासम्भवाच्च । नच—तथापि संदिग्धोपाधित्वेन दूषकत्वं तत्रापि स्यादिति—वाच्यम् ; साध्योपाध्योर्व्याप्तिग्राहकतर्कसत्त्वात् । *उक्तं हि मणौ*—'यत्र साध्य-हेत्वोः साध्योपाध्योश्च व्याप्तिग्राहकसाम्याद् नैकत्रापि व्याप्तिनिश्चयः, तत्रैव संदिग्धोपाधित्वमि'ति । उक्तोपाधौ तूक्तलक्षणमस्त्येव ; उक्तप्रतियोगित्वरूपसाधनवत्त्वेनोभयवादिनिश्चिते तत्तन्त्ववच्छिन्नचिदुपादानकसर्पादौ तत्पटोपादानोपादानकत्वाभावरूपसाध्यसमानाधिकरणधर्मनिश्चयात् । नन्वेवम्—उक्तसर्पादावुभयोर्वादिनोर्निरुक्तसाधननिश्चयसम्भवेन साधनाव्यापकत्वसौलभ्यात् 'पक्षावृत्तेः पक्षवृत्तितया संदिह्यमाने'त्याद्युक्तिर्मूले व्यर्थेति—वाच्यम् ; यद्युक्तसर्पादेर्नोपस्थितिः, तदाऽपि 'तत्रैतत्तन्त्वि'त्यादि-

न्यायामृतसौगन्ध्यम्

*यत्तु*—साध्यासमानाधिकरणधर्मस्याधिकरणं यत् साधनवत्, तन्निष्ठाभावप्रतियोगितावच्छेदकः, साध्यसमानाधिकरणावृत्तिर्यो धर्मः, तद्वत्त्वरूपस्य दीधितिकाराद्युक्तस्योपाधिलक्षणस्य पाकजरूपाभावे विरहात्, पृथिवीतरतादात्म्येन निश्चिते जलादौ पृथिवीत्वाभावरूपसाध्यासमानाधिकरणधर्मस्याभावात् पाकजरूपाभावरूपोपाधिव्यभिचारित्वस्य पृथिवीतररूपसाधने निश्चयाभावेन तेन हेतुना तत्र पृथिवीत्वाभावरूपोपाध्यव्यभिचारित्वेनानुमानासंभवात्, सत्प्रतिपक्षोन्नायकतया दूषकत्वस्य तथाऽसंभवाच्चेति, *तन्न* ; अत्रानुकूलतर्काणां स्थापनायां प्रतिकूलतर्काणां च वक्ष्यमाणत्वेन सत्प्रतिपक्षोन्नायकतया हि संदिग्धोपाधित्वं संभवति । यद्वा—प्रत्यक्षेण पक्षे साध्यस्य बाधात् पक्षातिरिक्ते साध्यव्यापकत्वेन निश्चितोपाधित्वम् । किञ्च दीधित्युक्तलक्षणस्य प्रागभावाप्रतियोगित्वरूपोपाधौ नास्ति संभवः ; पक्षातिरिक्ते साध्यसाधनयोर्व्याप्तिनिश्चयात्, पक्षे साध्यसंदेहेनोपाधिव्यतिरेकस्य साध्यव्यतिरेकव्याप्यत्वानिश्चयात्, सत्प्रतिपक्षोन्नायकस्याप्यसंभवात् । एतत्तुल्यत्वं च पाकजरूपाभावेऽप्यस्ति ॥

यत्तूक्तोपाधौ तल्लक्षणमस्त्येव ; उक्तप्रतियोगित्वरूपसाधनवत्त्वेनोभयवादिनिश्चिते तन्त्ववच्छिन्नचिदुपादानकसर्पादौ तत्पटोपादानोपादानकत्वाभावरूपसाध्यस्यासमानाधिकरणधर्मनिश्चय इति, *तन्न* ;

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्याप्तिग्राहकतर्काभावाद् उक्तोपाधेः संदिग्धोपाधित्वमित्याशयेन तथोक्तेः सार्थक्यात् । *ननु*—मिथ्यात्वघटकेऽत्यन्ताभावे तात्त्विकत्वस्वीकारेऽद्वैतश्रुतिविरोधः, नच—ब्रह्मस्वरूपत्वस्य तत्र स्वीकाराद् न स इति—वाच्यम् ; मण्डनमते भावाद्वैतस्वीकारेणैव तत्परिहारात्, उक्तस्वीकारे च श्रुतिसंकोचेन विरोधस्य स्फुटत्वात्, *किंच* अभावस्य सत्यत्वे तत्राभावत्वस्य ब्रह्मणि चाभावसंबन्धस्यावश्यवाच्यत्वाद् भावाद्वैतमपि दुर्लभमिति—*चेत्*, *न* ; अभावत्वस्याभावाश्रयत्वादेश्च स्वाश्रयरूपत्वात् । नच—द्वितीयाभावस्य तात्त्विकत्वं तत्त्वावेदकप्रमाणवेद्यत्वाद् वाच्यम्, तादृशप्रमाणं च श्रुतिरेवेति वाच्यम् ; तथाचानुपपत्तिः, "एकमेवाद्वितीयमि"त्यादिवाक्यस्याखण्डार्थकत्वेनाभावसम्बन्धाप्रमापकत्वादिति—वाच्यम् ; मिथ्यात्वानुमाने स्वसमानाधिकरणस्य स्वाधिकसत्ताकात्यन्ताभावस्य मण्डनमते साध्ये निवेशेन तस्यैव तत्त्वावेदकत्वात् । तात्त्विकद्वैताभावविषयकत्वादेव हि तस्य द्वैतग्राहकप्रत्यक्षादिबाधकत्वमिति मण्डनाभिप्रायः । *किंच* तत्त्वज्ञानोद्देशेन मुमुक्षूणां प्रवृत्तेस्तत्त्वज्ञानकार्योऽविद्याध्वंसस्तात्त्विको वाच्यः, तस्य मिथ्यात्वे तत्त्वधीबाध्यत्वेन तत्कार्यत्वानुपपत्तेः । एवञ्च मिथ्यात्वघटकोऽत्यन्ताभावोऽविद्याध्वंसश्च मण्डनमते तात्त्विकः, न त्वभावान्तरम् ;

### न्यायामृतसौगन्ध्यम्

सर्पस्योपादानं हि विवर्ताधिष्ठानरूपं तन्त्ववच्छिन्नं चैतन्यम्, परिणाम्युपादानं चाज्ञानम् ; तन्तूनां तदनुपादानत्वात् । नहि त्वदभिमतव्यावहारिक-प्रातिभासिकसर्पाद्युपादानमेकम्, तथाचैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिनि सर्पे एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वरूपोक्तोपाधेरपि सत्त्वेन साधनाव्यापकत्वं (१) नास्त्येव । किञ्च समवायादिसंबन्धेनैतत्तन्तुनिष्ठो यः पटः, तत्तन्तुनैव तेन संबन्धेन तत्र तदभावस्त्वया साध्यः । तथाच एतत्तन्त्वनारब्धे सर्पादौ तादृशप्रतियोगित्वस्यासम्प्रतिपत्त्वात् (२) तन्त्वाद्यवच्छिन्ने चैतन्ये पटस्यासमवायाङ्गीकारः । किञ्चाभावस्य तात्त्विकत्वे मिथ्यात्वे च दोष उक्तः ॥

*ननु* अभावरूपा धर्मा अद्वैतं न निघ्नन्ती'ति मण्डनोक्तेस्तात्त्विक एवायमभाव इति—चेत्,

### सौगन्ध्यविमर्शः

(१) यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्त्यैवैतन्निष्ठप्रागभावाप्रतियोगित्वस्य, प्रागभावानङ्गीकारे त्वेतदुपादानकान्यत्वस्योपाधित्वमिति सिद्धि-लघुचन्द्रिकयोरुक्तम्, अत्र व्यापकैतत्तन्त्वारब्धत्वाभावव्यापकत्वं त्वेतदुपादानकान्येषु वर्तते, एतत्तन्तुनिष्ठात्यन्ताभावरूपव्याप्यव्यापकत्वं त्वेतदुपादानकान्यत्वे नास्तीति वक्तव्यम् । तत्र यदि पक्ष एव साधनाव्यापकत्वं मन्यते, तर्हि सन्दिग्धोपाधिः । तत्र चानुकूलतर्कापेक्षा वर्तत इत्यादिकं निरूपितम् । सन्दिग्धोपाधेर्न दूषणत्वमिति मताभिप्रायेण निश्चितोपाधित्वमपि साधयितुं चन्द्रिकाकाराः—एतत्तन्तूपादानकसर्पे साधनाव्यापकत्वं प्रतिपादयन्ति । तत्र सौरभकाराः—तन्तुरूपादौ तन्त्वारब्धत्वाद्युपाध्यभावेन साध्यव्यतिरेकानिश्चयाद् एतत्तन्त्वनारब्धत्वस्य नोपाधित्वमिति वदन्ति, तन्तुरूपादेरपि पक्षसमत्वेन पटान्तरस्यैव सपक्षत्वाद् उपाध्यभावेन साध्यव्यतिरेकनिश्चयो नानुपपन्नः ; अनुकूलतर्कसत्त्वात्तु सन्दिग्धोपाधित्वमपि दूषणमेवेति पूर्वमेवोक्तम् । एतत्तन्त्ववच्छिन्नचैतन्योपादानकसर्पादौ तु सत्प्रतिपक्षानुमानस्य द्वैताभिमतस्य व्यभिचारः संभवत्येव ॥

(२) सत्यमद्वैतमते चैतन्यं विवर्तोपादानम्, अज्ञानं परिणामिकारणम्, तन्त्वादीनां तु न मुख्यं किमपि कारणत्वम् ; तथापि चैतन्यावच्छेदकत्वेन तन्तूनामपि व्यवहारदशायां विवर्तोपादानत्वम्, तन्त्वात्मना परिणताया अविद्याया एव परिणामिकारणत्वेन तन्तूनामपि परिणामिकारणत्वमित्यङ्गीकारेणैव—अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी नेति प्रयोगः ; अन्यथा पटादीनां तन्त्वादिषु प्रसक्तेरेवाभावाद् अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी नेति भवतां सत्प्रतिपक्षानुमानमत्यन्तमेव बाधितं स्यात् । तथाच चैतन्यादेरिव तदवच्छेदकतन्त्वादीनामपि कारणत्वावलम्बेनैवांशित्वानुमानं वक्तव्यम्, इति कथमेतत्तन्तूपादानकसर्पादौ न साधनाव्याप्यकत्वम् ?

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

अभावत्वस्यातिरिक्तत्वस्वीकारे तदपि मिथ्या ; प्रतियोगिताया इवानुयोगिताविशेषरूपस्य तस्य मिथ्यात्वसम्भवात्, दृश्यत्वादिकं चोक्ताभावव्यावृत्तमेव मिथ्यात्वे हेतुरिति न व्यभिचारः । तस्माद् मण्डनमतमप्यदोषम् ॥

इत्यंशित्वादिहेतुनिरुक्तिः ।

न्यायामृतसौगन्ध्यम्

*न* ; अभावेऽभावत्वादेस्तदाश्रये चाभावाश्रयत्वादेर्भावस्य चावश्यकत्वात्, श्रौताद्वितीयपदस्याभावरूपद्वितीयनिषेध इव भावरूपद्वितीयनिषेधेऽपि मानान्तरेणा'ग्रे' इति 'स्व'पदेन च विरोधाविशेषे भावरूपद्वितीयनिषेधपरत्वेनैव संकोचः, न त्वभावरूपद्वितीयनिषेधपरत्वमित्यत्र मानाभावात् ॥

यत्तु—अभावत्वाश्रयत्वादेश्च स्वाश्रयरूपत्वमेवेति, *तन्न* ; विधेयतावच्छेदक-विधेययोरभावत्वाभावयोरुद्देश्यतावच्छेदकोद्देश्ययोराश्रयत्वाश्रययोश्चाभेदासंभवादिति (२) ॥

इत्यंशित्वादिहेतुभङ्गः ।

सौगन्ध्यविमर्शः

*परमार्थतस्तु*—मूलाज्ञानं व्यावहारिकप्रपञ्चोपादानं शुद्धचैतन्याश्रयम्, प्रातिभासिकोपादानं तूलाज्ञानं त्ववच्छिन्नचैतन्याश्रयविषयकमेवेति, केवलस्य चैतन्यस्य न प्रातिभासिकोपादानत्वम्, किन्त्वनवच्छिन्नस्यैव, इति तन्तूनामपि कारणत्वमनपोढमेव । अत एव 'इदं रजतम्' 'अयं सर्पः' इत्यादिज्ञानानाम्—'इदं शुक्तिः' 'इयं रज्जुरि'त्यादिबाधकज्ञानबाध्यत्वम्, विवर्तोपादानतत्त्वसाक्षात्कारस्यैव भ्रमनिवर्तकत्वात् ॥

अभावत्वोपलक्षिततत्वेनैवाभावस्य तात्त्विकत्वम्, नतु विशिष्टत्वेनेति पूर्वमेवोक्तत्वाद् अभावत्वोपलक्षितब्रह्मातिरेकेणाभावाश्रयाप्रसिद्ध्याऽभावत्वाश्रयत्वरूपत्वेऽपि प्रकृते बाधकाभावः ॥

यद्यपि पटोपादानं शुद्धचैतन्यमेव, नावच्छिन्नचैतन्यम्, तथाप्यवच्छिन्न-शुद्धयोरपि तादात्म्याद् अवस्थाऽज्ञानविषयावच्छिन्नचैतन्यस्यापि पटोपादानपदेन ग्रहणमिति न विरोधः ॥

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैतसिद्ध्योः सामान्यतो विशेषतश्च मिथ्यात्वानुमान-साध्य-हेतुस्वरूपविचारः ।



# अथ दृश्यत्वाद्यनुमानसोपाधिकत्वविचारः

———***———

**न्यायामृतम्**

सोपाधिकाश्च दृश्यत्वादयः ; (१)स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वस्य, तदबाध्यबाधकं प्रति

**अद्वैतसिद्धिः**

*ननु*——दृश्यत्वादिहेतवः सोपाधिकाः । तथाहि—स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वम् ,

**तरङ्गिणी**

*स्वबाधकाभिमतेति* ॥ दिदर्शयिषितोपाधिकमधिकरणं स्वशब्दार्थः । शुक्तिरूप्यादौ साध्यवति शुक्तिरूप्यादिबाधकत्वेनाभिमतेन 'नेदं रजतमि'ति ज्ञानेनाबाध्यो यो दोषः=सादृश्यादिः, तत्प्रयुक्तभानत्वस्य, तथोक्तविधया स्वबाधकाभिमताबाध्यबाधकं 'नेदं रजतमि'ति ज्ञानं प्रति निषेध्यत्वेन विषयत्वस्य सत्त्वात् सपक्षे रूप्यादावुपाध्योः साध्यव्यापकता । हेतुमति पक्षे पररीत्याऽविद्यारूपदोषप्रयुक्तभानत्वस्य, तथा "नेति नेती"ति वेदान्तवाक्यजन्यं बाधकज्ञानं प्रति निषेध्यत्वेन विषयत्वस्य च सत्त्वात् साधनव्याप्तिर्मा भूत्, इति 'स्वबाधकाभिमताबाध्ये'ति प्रथमोपाधौ दोषविशेषणम् । द्वितीयोपाधौ बाधकज्ञानविशेषणम् । एवं चाविद्यारूपो दोषो वियदादिबाधकाभिमतया चरमवृत्त्या बाध्य एव, इति स्वबाधकाभिमताबाध्यत्वरूपविशेषणाभावाद् विशिष्ट-रूपोपाधिर्नास्त्येव, मम मते तु विशेष्याभावाद् विशिष्टरूपोपाधिर्नास्ति, इति भवति पक्षे साध्याव्यापकः । एवं

**न्यायामृतकण्टकोद्धारः**

*स्वबाधकाभिमतेति* ॥ स्वस्यारोप्यस्य यद् बाधकत्वेनाभिमतम् , तद्बाध्यो यो दोषः, तत्प्रयुक्तं भानं यस्य, तस्य भावस्तत्त्वम् , तस्येत्यर्थः । तद्बाध्यस्येत्यत्र तच्छब्देन स्वबाधकाभिमतपरामर्शः । भवति चेदमुपाधिद्वयं शुक्तिरजतादौ ; तत्र मिथ्यात्वसाध्यस्य सत्त्वात् । स्वम्=रूप्यम् , तद्बाधकत्वेनाभिमतम्= 'नेदं रजतमि'ति ज्ञानम् , तेनाबाध्यो यः सादृश्यादिदोषः, तत्प्रयुक्तभानत्वस्य, स्वबाधकाभिमतेन 'नेदं रजत-मि'ति ज्ञानेनाबाध्यं 'नेदं रजतमि'ति ज्ञानमेव, तत् प्रति निषेध्यत्वेन विषयत्वस्य च सत्त्वात् । न भवति च साधनव्यापकम् ; साधनवति=पक्षे स्वम्=घटादिकम् , तद्बाधकत्वेनाभिमता ब्रह्मप्रमा, तद्बाध्यदोषप्रयुक्त-भानत्वस्य तद्बाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वस्य चाभावात् , किन्तु तज्ज्ञानस्य तद्बाध्याविद्यारूप-दोषप्रयुक्तत्वात् , तद्बाधकीभूतप्रमाया अपि ब्रह्मप्रमयैव बाध्यत्वेनाबाध्यबाधकाभावाच्च । नच दोष-

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

*स्वबाधकेत्यादि* ॥ यत्रोपाधिः स्थाप्यः, स स्वपदार्थः, शुक्तिरूप्यादिः, तद्बाधकत्वेनाभिमतं 'इयं शुक्ति'रित्यादिज्ञानम् , तदबाध्यदोषप्रयुक्तं भानं शुक्तिरूप्यादेर्यस्य, तत्त्वं तत्रैव साध्यव्यापकम् । वियदादेस्तु स्वबाधकाबाध्यदोषाप्रसिद्ध्या शुक्तिरूप्यादावेव प्रसिद्धं तद् वियदादिनिष्ठं साधनाव्यापकं बोध्यम् । पूर्वपक्षिणा माध्वेन शुक्तिरूप्यादेरलीकत्वस्वीकारात् तद्बाधकं न स्वीक्रियते, अतोऽभिमतेत्युक्तम् । स्वबाधकत्वेन सिद्धान्त्यभि-मतेत्यर्थः । तथाच सिद्धान्तिना तद्बाधकस्वीकारात् तं प्रत्युक्तोपाधिर्वक्तुं शक्यते, तस्योपाधिज्ञानात् कार्य-

**न्यायामृतसौगन्ध्यम्**

सोपाधिकाश्च दृश्यत्वादयः ; स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वम्, स्वबाधकाबाध्यबाधकं प्रति

---

(१) स्वशब्देन शुक्तिरूप्यम्, तद्बाधकत्वेनाभिमतं यद् 'नेदं रजतमि'ति ज्ञानम्, तदबाध्यो यो दोषः काचादिः, तज्जन्यभ्रम-रूपज्ञानविषयत्वेन तत्प्रयुक्तभानत्वस्य सत्त्वाद् रजत उपाधिरस्ति, दृश्यत्ववति पक्षे चोपाधिर्नास्ति । तथाहि—स्वशब्देन प्रपञ्चः,

### न्यायामृतम्

निषेध्यत्वेन विषयत्वस्य वा पक्षाद् व्यावृत्तस्य समव्याप्तिमतो व्यतिरेकव्याप्तिमतश्चोपाधित्वात् ।

### अद्वैतसिद्धिः

स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं वा विपक्षव्यावृत्तं समव्याप्तम्, अत एव व्यतिरेक-

### तरङ्गिणी

द्वितीयोपाधावपि योजनीयम्, साधनाव्यापकत्वमाह—*पक्षादिति* ॥ 'विपक्षाद् व्यावृत्तस्ये'ति पाठेऽनेन साध्याभाववदवृत्तित्वरूपसाध्यव्याप्यत्वोक्तिः ॥ *व्यतिरेकव्याप्तिमत इति* ॥ साध्यव्यतिरेकनिरूपित-व्याप्तिमद्व्यतिरेकप्रतियोगिन इत्यर्थः । अनेन साध्याभावव्याप्याभावप्रतियोगित्वरूपसाध्यव्यापकत्वोक्तिः ॥ एवञ्च समव्याप्तिर्लभ्यत इत्यभिसन्धायोक्तम्—*समव्याप्तिमत इति* ॥ *यद्वा*—समव्याप्तिमत्त्वाद् व्यतिरेकव्याप्तिमत इत्यर्थः ॥ वस्तुतस्तु—पक्षाद् व्यावृत्तस्येत्येव युक्तः पाठः । अत एव पक्षेतरत्वशङ्कायां

### न्यायामृतकण्टकोद्धारः

प्रयुक्तभानत्वं बाधकज्ञानं प्रति निषेध्यत्वेन विषयत्वं वोपाधिरस्तु, इतरद् व्यर्थमिति—वाच्यम्; परमता-नुसारेण साधनाव्यापकत्वार्थत्वात्, अविशेषितयोस्तयोः पक्षे सत्त्वेन साधनव्यापकत्वात् । नन्व—देहात्मैक्ये साध्याव्यापकत्वम्; अस्ति च तत्र मिथ्यात्वम्, नास्ति चोपाधिः; तस्य ब्रह्मज्ञानमात्रबाध्यत्वेन स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वाभावात्, सर्वस्य ब्रह्मज्ञानबाध्यत्वादिति—वाच्यम्; देहात्मैक्य-भ्रमस्यैवाभावात् । 'मम देहः' इति हि सर्वेषां प्रमैव, नतु 'देहोऽहमि'ति भ्रमः कस्यापि; गौरोऽहमित्यादि तु 'सिंहो देवदत्तः' इतिवदुपचारमात्रम् । उपचारे बीजं त्वेकदेशस्थत्वं स्फुटतरविवेकाभावश्चेत्यादि ।

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

सम्भवादिति भावः । *स्वबाधकाबाध्यबाधकमिति* ॥ स्वं शुक्तिरूप्यादि, तद्बाधकं शुक्तिज्ञानादि, तदबाध्यं बाधकम्='नात्र रूप्य'मित्यादिज्ञानम्, तादृशबाधकं प्रति निषेध्यत्वेन विषयः=शुक्तिरूप्यादिः । स्वबाधका-बाध्यविषयत्वं वियदादावप्यस्ति; तादृशचिद्विषयत्वस्य तत्र सत्त्वात्, अतो 'बाधकं प्रति निषेध्यत्वेने'ति ॥ तथाच स्वबाधकाबाध्यस्वाभावधीर्यस्य, तत्त्वं पर्यवसितार्थः । आकाशादिबाधकब्रह्मज्ञानबाध्यत्वाद् आकाशा-दावुक्तोपाध्यभावेनोक्तोपाधेः साधनाव्यापकता । *विपक्षेत्यादि* ॥ *विपक्षात्=ब्रह्मणः*, तुच्छाच्च व्यावृत्तम्, अतः समव्याप्तमित्यर्थः । उदयनादिमते समव्याप्तस्यैवोपाधित्वादिदमुक्तम् । *अत एव=

---

तद्बाधकत्वेनाभिमतं यद् वेदान्तजन्यचरमवृत्तिरूपं ज्ञानम्, तदबाध्यदोषप्रयुक्तभानत्वं नास्ति; जगद्भ्रमनिमित्ते मायाऽविद्यादि-रूपे दोषे स्वबाधकाभिमतबाध्यत्वस्यैव सत्त्वेन विशेषणाभावप्रयुक्तविशिष्टाभावस्यैव सत्त्वात् साधनाव्यापकत्वम्, इति भवत्युपाधिः । दोषप्रयुक्तभानत्वमात्रोक्तौ साधनव्यापकता स्यात्, अतः 'स्वबाधकाभिमताबाध्ये'ति दोषविशेषणम् ॥ *तदबाध्येति* ॥ स्वबाधकाभिमताबाध्येत्यर्थः । तथाच मिथ्यात्ववति रूप्य उपाधिरस्ति । तथाहि—स्वबाधकाभिमतं यद् 'नेदं रूप्यमि'ति ज्ञानम्, तदबाध्यं यद्बाधकज्ञानम्, स्वयमेव; स्वेनैव स्वस्याबाध्यत्वात्, तत् प्रति निषेध्यत्वेन विषयत्वमस्ति, साधनवति च पक्षे नास्ति । स्वबाधकाभिमतं यद् बाधकज्ञानं चरमवृत्तिरूपम्, तद्बाध्यबाधकं प्रत्येव निषेध्यत्वेन विषयत्वमस्ति, नतु तदबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वम् । जगद्बाधकस्य वेदान्तजन्यचरमवृत्तिरूपज्ञानस्य कतकरजोवद् वेणुसंघर्षजाग्निवच्च स्वेनैव बाध्यत्वात् । यथोक्तम्—"वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद् वनम् । एवं गुणव्यत्ययजो वेदः शाम्यति तद्यथा ॥" इति । वेदो वृत्तिज्ञान-मित्यर्थः । एवं च पक्षे स्वबाधकाभिमताबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं नास्तीति विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वात् साधनाव्यापकत्वमित्यर्थः । पक्षे साधनाव्यापकतालाभाय 'स्वबाधकाभिमताबाध्ये'ति बाधकज्ञानविशेषणोपादानम् ॥

न्यायामृतम्

नच (१)पर्वतावयववृत्त्यन्यत्वापर्वतीयवह्निसामग्रीयुक्तत्वादेरिव पक्षमात्रव्यावर्तकविशेषणवत्त्वात् पक्षे-

अद्वैतसिद्धिः

व्याप्तिमदुपाधिरिति—चेत्, *न* ; ब्रह्मज्ञानमात्रबाध्ये देहात्मैक्ये मिथ्याभूते साध्याव्यापकत्वात्, पर्वतावयववृत्त्यन्यत्वादिवत् साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वाच्च। नच

तरङ्गिणी

तां निराकरोति—*नचेति* ॥ *पक्षमात्रव्यावर्तकविशेषणवत्त्वम्=तादृशविशेषणघटितत्वम्, नतु तादृश-विशेषणं प्रति विशेष्यत्वम् ॥

तथाहि—उपाधित्वेन प्रेक्ष्यमाणे विशिष्टे प्रविष्टस्यान्यत्वरूपस्य पर्वत-तदितरसाधारणस्य विशेष्यस्य यद् विशेषणं पर्वतावयववृत्ति, तेनान्यत्वरूपं विशेष्यं पक्षमात्राद् व्यावर्त्यते ; पर्वतावयववृत्त्यन्यत्वस्य पर्वतेऽसत्त्वात्, अतः पर्वतावयववृत्तीति विशेषणं पक्षमात्रव्यावर्तकम्। तथाविधविशेषणवानन्यत्वरूपो धर्मः। एवं वह्निसामग्रीयुक्तत्वस्य विशेष्यस्य पर्वततदितरसाधारणस्य यद्विशेषणम्—'अपर्वतीये'ति, तेन वह्निसामग्रीयुक्तत्वं विशेष्यं पक्षमात्राद् व्यावर्त्यते, इति पर्वतावयववृत्त्यन्यत्वमपर्वतीयवह्निसामग्रीयुक्तत्वं च पक्षमात्रव्यावर्तक-विशेषणवदित्यर्थः। यथाश्रुतेऽन्यविशिष्टोपाधिं प्रति पक्षमात्रव्यावर्तकविशेषणाभावेनासंगतिः स्यात्।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

समव्याप्तत्वादेव। *व्यतिरेकव्याप्तिमदिति* ॥ ययोर्व्यतिरेकव्याप्तिः, तयोरेव व्याप्यवृत्तिव्यतिरेकिणोरन्वयव्याप्तिः, अत एव पक्षेतरत्वं नोपाधिः ; व्यर्थविशेषणत्वेन व्याप्त्यभावादिति मते साध्यान्वय-व्यतिरेकोन्नायकस्वान्वय-व्यतिरेकवत्त्वरूपसाध्यप्रयोजकत्वघटितमुपाधित्वम्, अत एव पक्षेतरत्वे न तदिति मते चोपाधित्वसम्पादनायेदमुक्तम्। साध्याभावव्याप्यस्वाभावकत्वमिति तदर्थः। *साधनवदित्यादि* ॥ पर्वतावयववृत्तित्वस्य विशेषणस्य पर्वतावयवरूपादितो विपक्षाद् व्यावर्तकत्वमस्ति, एवं 'स्वबाधके'त्यादिविशेषणस्यापि वासनादिदोषप्रयुक्तविकल्पविषयादलीकाद् व्यावर्तकत्वमस्तीत्यतः–*साधनवदित्युक्तम्* ॥ तथाच साधनवत्पक्षव्यावर्तकं यत् साधनवद्विपक्षाव्यावर्तकं विशेषणम्, तद्वत्त्वेनेत्यर्थः। साधनवद्विपक्षनिष्ठभेदप्रतियोगितावच्छेदकताया यन्निष्ठाया अनवच्छेदकं यद् विशेषणम्, तत्र तत् साधनवद्विपक्षाव्यावर्तकम्। अन्यत्वादिनिष्ठाया उक्तावच्छेदकताया अनवच्छेदकं पर्वतावयववृत्त्यादिकम् ; 'पर्वतो धूमवान् वह्नेरि'त्यादौ साधनवद्विपक्षेऽयःपिण्डादौ पर्वतावयववृत्त्यन्यत्वादिमतो भेदासत्त्वात्। यद्यपि 'स्वबाधके'त्याद्युपाधौ प्रकृतसाधनवान् विपक्षोऽप्रसिद्धः ; तथापि यद्विशेषणघटितस्य यस्योपाधेराश्रयाद् भिन्ने यावद्धर्मिणि प्रकृतसाधनवत्त्व-विपक्षत्वोभयाभावोऽस्ति, तत् तत्र साधनवद्विपक्षाव्यावर्तकमिति बोध्यम्। आर्द्रेन्धनस्य तु आर्द्रत्वविशेषणं साधनवद्विपक्षव्यावर्तकम्, इति तदुपाधिः। *पक्षेतरत्वतुल्यत्वादिति* ॥ यथा साधनवत्पक्षमात्र-

न्यायामृतसौगन्ध्यम्

निषेध्यत्वेन विषयत्वं चेत्युपाधिसंभवात्। नच—ब्रह्मज्ञानमात्रबाध्ये देहात्मैक्ये मिथ्याभूते साध्याऽव्यापकत्वमिति—वाच्यम् ; तस्य देहात्मज्ञानबाध्यत्वेन ब्रह्मज्ञानमात्रबाध्यत्वासिद्धेः। नच—पर्वतावयववृत्त्यन्यत्वादिवत् साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वमिति—वाच्यम् ; यदि शुक्तिभानविषयो न स्यात्, तर्हि मिथ्या न स्यात्, इति विपक्षबाधकसत्त्वेन पक्षेतरत्वतुल्यत्वाभावात्, प्रत्यक्षादिना बाधस्य वक्ष्यमाणत्वेन बाधोन्नीतत्वाच्च ॥

(१) *पर्वतेति* ॥ अन्यत्वस्य केवलान्वयित्वेन साधनव्यापकत्वात् साधनाव्यापकत्वार्थम्—'पर्वतावयववृत्ती'-त्युक्तम्। *ननु* अथापि साधनव्यापकत्वमेव ; पर्वते पर्वतावयववृत्तिरूपावन्यत्वसद्भावादिति—चेत्, *न* ; अन्योन्याभावस्य

न्यायामृतम्

**तरत्वम्; वह्निना धूमे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वादेरिव वक्ष्यमाणानुकूलतर्कैस्साध्यव्यापकत्वनिश्चयात्, बाधिते पक्षेतरत्वस्याप्युपाधित्वाच्च, इह च वक्ष्यमाणप्रत्यक्षादिबाधात् ॥**

तरङ्गिणी

यद्यप्यत्र पर्वतावयववृत्त्यन्यत्वस्य पर्वतावयववृत्तिरूपादिव्यावर्तकत्वाद् न पक्षमात्रव्यावर्तकत्वम्, एवम्—'अपर्वतीये'त्यस्यापि पर्वतीयवह्निसामग्रीयुक्तपर्वतीयवृक्षादिव्यावर्तकतया न पक्षमात्रव्यावर्तकत्वम्; तथापि साध्यव्यापकताग्राहकानुकूलतर्कादिराहित्याद् यथा पर्वतावयववृत्त्यन्यत्वादेर्नोपाधित्वम्, तथा प्रकृतयोरपि नोपाधित्वम्; साध्यव्यापकताग्राहकतर्कादेरभावादिति शङ्कितुरभिप्रायः। अत एव 'वक्ष्यमाणानुकूलतर्कैः साध्यव्यापकत्वनिश्चयादि'त्यनुकूलतर्केण साध्यव्यापकत्वनिश्चयं वक्ष्यतीत्याशयः। यद्यपि प्रकृतयोः 'स्वबाधकाभिमताबाध्ये'त्याद्युपाध्योरनुपाधितायां पर्वतेतरत्वादिकमेव निदर्शनीयम्; तथापि पर्वतेतरत्वादेरनुपाधितायां न पक्षमात्रव्यावर्तकविशेषणवत्त्वं प्रयोजकम्, किन्तु पर्वतेतरत्वस्य पक्षमात्रवृत्तिव्यतिरेकप्रतियोगितया पर्वतेतरत्वव्यतिरेकेण साध्याभावसाधनेऽसाधारण्यात् पर्वतेतरत्वस्य नोपाधित्वम्, प्रकृतयोः 'स्वबाधकाभिमताबाध्ये'त्याद्युपाध्योस्तु न पक्षमात्रवृत्तिव्यतिरेकप्रतियोगित्वम्, विशिष्टोपाधेर्व्यतिरेकस्य साध्याभाववति ब्रह्मण्यपि सत्त्वेनोपाधिव्यतिरेकेण मिथ्यात्वरूपसाध्याभावे साध्यमाने ब्रह्मण एव सपक्षत्वसंभवादिति यदि कश्चिद् ब्रूयात्, तदा स्वव्यतिरेकेण साध्यव्यतिरेकसाधने पर्वतावयववृत्तिरूपादिनिष्ठव्यतिरेकप्रतियोगित्वेन लब्धोदाहरणस्यापि पर्वतावयववृत्त्यन्यत्वादेर्यथा नोपाधित्वम्, तथा प्रकृतयोरपीत्यभिसन्धाय पूर्वपक्षिणा पर्वतावयववृत्त्यन्यत्वादिकं निदर्शितमित्यवधातव्यम् ॥ *पक्षेतरत्वमिति* ॥ पक्षेतरत्वतुल्यत्वमित्यर्थः। तत्तुल्यत्वं चानुकूलतर्करहितत्वेन ॥ प्रकृतोपाध्योः पक्षेतरत्वतुल्यत्वं परिहर्तुमनुकूलतर्कैः साध्यव्यापकताऽस्तीत्याह—*वह्निनेति* ॥

अयमर्थः—यथेश्वरानुमाने जन्यत्वरूपसाधनविशेषितं शरीरजन्यत्वं नोपाधिः, वह्निना धूमे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं साधनविशेषितमप्युपाधिः; एवं च साधनविशेषितस्योपाधित्वानुपाधित्वयोः साध्यव्यापकताग्राहकानुकूलतर्कसद्भावासद्भावौ बीजम्, तथा पर्वतेतरत्वस्य पक्षमात्रव्यावर्तकविशेषणवतो नोपाधित्वम्, प्रकृतयोः 'स्वबाधकाभिमताबाध्ये'त्युपाध्योः पक्षमात्रव्यावर्तकविशेषणवतोरप्युपाधित्वम्, इत्यत्र साध्यव्यापकताग्राहकानुकूलतर्कविरहाविरहौ हेतू इति ॥ यद्वा—साधनशून्यं सर्वं पक्षीकृत्य बाधाप्रतिसन्धानदशायां वह्निना धूमे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं पक्षमात्रव्यावर्तकविशेषणवदपि साध्यव्यापकताग्राहकानुकूलतर्कसद्भावाद् यथोपाधिः, तथा प्रकृतयोरप्युपाधित्वमित्यर्थः। यथाश्रुताभिप्रायेणाह—*बाधित इति* ॥ बाधेन पक्षस्यैव विपक्षतया पक्षमात्रव्यावर्तकविशेषणवत्त्वमसिद्धमिति भावः। नच ब्रह्मज्ञानमात्रबाध्ये

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यावर्तकविशेषणवत्त्वात् पक्षेतरत्वादिकं नोपाधिः, न वोपाधित्वेन कथायामुद्भाव्यते, तथा पर्वतावयववृत्त्यन्यत्वादिकं स्वबाधकेत्यादिकं च; तर्काभावेन पक्षे व्यभिचारसंशयेन प्रतिबन्धेन साध्यव्यापकत्वानिश्चयात्। *उक्तं हि मणौ*—'नहि पक्षेतरत्वे स्वव्याघातकत्वेनानुपाधावुपाधिलक्षणस्यातिव्याप्तिः; तत्रानुकूलतर्काभावेन

---

प्रतियोगितावच्छेदकव्यधिकरणत्वेन पर्वतावयववृत्तित्वरूपप्रतियोगितावच्छेदकवति पर्वते तदन्यत्वप्रतीतेर्विरुद्धत्वेन साधनाव्यापकत्वमेवेत्यवधेयम्। वह्निसामग्रीयुक्तत्वस्यापि सत्त्वाद् व्यापकत्वात् साधनाव्यापकत्वलाभाय—'अपर्वतीये'त्युक्तम्। *ननु* 'पर्वतावयववृत्ती'त्यस्य न पक्षमात्रव्यावर्तकत्वम्; पर्वतावयवगतरूपादिव्यावर्तकत्वात्। तथाच कथं पर्वतावयववृत्त्यन्यत्वस्य पर्वतेतरत्वमिति—चेत्, *सत्यम्*; पक्षमात्रव्यावर्तकविशेषणवत्त्वादित्यापाततः। वस्तुतस्तु हेतु-साध्ययोर्व्याप्तिग्राहकानुकूलतर्कसद्भावेन साध्यस्य पक्षे निश्चितत्वादुपाधेः साध्यव्यापकताग्राहकानुकूलतर्काभावे पक्ष एव साध्यव्यापकताभङ्गात् पर्वतावयववृत्त्यन्यत्वादेर्नोपाधित्वं यथा, तथा प्रकृतयोरप्युपाध्योर्मिथ्यात्वव्यापकताग्राहकानुकूलतर्काभावाद् नोपाधित्वमिति शङ्कितुरभिप्रायः। अत एव 'वक्ष्यमाणानुकूलतर्कैः साध्यव्यापकतानिश्चयादि'त्यनुकूलतर्केण साध्यव्यापकतानिश्चयं वक्ष्यतीति द्रष्टव्यम् ॥

अद्वैतसिद्धिः

बाधोन्नीतत्वात् सोऽप्युपाधिः; बाधस्याग्रे निरसिष्यमाणत्वात्। अपिच यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वम्, तस्यैव साध्यव्यापकत्वम्; इतरांशेऽनुकूलतर्काप्रसरात्। तथाच 'क्षित्यादिकम्,

तरङ्गिणी

देहात्मैक्ये मिथ्याभूते साध्याव्याप्तिः; तस्य ब्रह्मज्ञानमात्रबाध्यत्वासिद्धेः, 'मम देहः' इति देहाद् भेदस्य सर्वैरनुभूयमानत्वेन देहात्मैक्याध्यासासम्भवस्य वक्ष्यमाणत्वेन मिथ्याभूतदेहात्मैक्यासिद्धेः॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

व्यापकत्वानिश्चयात्। बाधोन्नीते च तर्कोऽस्त्येव। एवं पर्वतावयववृत्त्यन्यत्वादिकं नोपाधिः; पक्षमात्रव्यावर्तकविशेषणवत्त्वात्' इति। *उक्तञ्च तत्र दीधितौ*—'तर्कादिना व्यापकत्वनिश्चये तु पक्षेतरत्वमपि बाधोन्नीतपक्षेतरत्ववद् निश्चितोपाधिः, पक्षमात्रव्यावर्तकविशेषणवत्त्वं तु नानुपाधितायां बीजम्; परिभाषामात्रत्वात्, किंतूक्तविशेषणस्थलेऽनुकूलतर्काभावेन व्यापकत्वानिश्चयः—*इति*॥ तथा बाधानुन्नीतः पक्षेतरो नोपाधित्वेन कथायामुद्भाव्यः; कथकसम्प्रदायानुरोधात्'—इति। *वस्तुतस्तु*—तादृशसम्प्रदायो युक्त्यभावाद् हेयः। *अत एव दीधितावेवोक्तम्*—'तादृशसम्प्रदायमननुरुन्धानस्य शपथनिराकरणीयतापत्तेरि'ति। *ईश्वरवादे च मणावुक्तम्*—'पक्षेतरत्वादौ विपक्षबाधकतर्काभावाद् न साध्यव्यापकतानिश्चय इत्येवानुपाधित्वे बीजमि'ति। अत एव 'स्वबाधके'त्यादेः संदिग्धोपाधित्वमपि नास्ति। दृश्यत्वादिहेतोः साध्ये व्यापकताग्राहकतर्कसत्त्वात्, उक्तोपाधेः साध्यव्यापकताग्राहकतर्कासत्त्वात्। *उक्तं हि मणौ*—'यत्रोपाधि-साध्ययोः साध्य-हेत्वोश्च व्याप्तिग्राहकसाम्याद् नैकत्र व्याप्तिनिश्चयः, तत्रैव संदिग्धोपाधित्वम्; व्यभिचारसंशयाधायकत्वात्। यत्र त्वेकत्र तर्कावतारः, तत्र हेतुत्वमुपाधित्वं वा निश्चितमि'ति। अत्र विपक्षव्यावर्तकत्वेऽपि साधनवद्विपक्षाव्यावर्तकत्वं प्रकृतोपाध्योरस्ति; पर्वतावयववृत्त्यन्यत्वादावप्यस्ति, इति स एव दृष्टान्तीकृतः, नतु पर्वतेतरत्वादिकम्; तत्र तदभावात्। तथाच पक्षेतरतुल्यत्वेन पर्वतावयववृत्त्यन्यत्वादेर्यथोक्तमणिवाक्येऽनुपाधित्वमुक्तम्, तथा तत्सदृशयोः 'स्वबाधके'त्याद्युपाध्योरिति भावः। *बाधोन्नीतत्वादिति*॥ पक्षे साध्याभावनिश्चयरूपेण बाधेन निर्णीतसाध्यव्यापकताकत्वादित्यर्थः। यथा 'वह्निरनुष्णः कृतकत्वादि'त्यादौ पक्षस्य साध्याभाववत्त्वेन निश्चितत्वरूपाद् विपक्षत्वाद् विपक्षाव्यावर्तकविशेषणशून्यत्वेन वह्नीतरत्वमुपाधिः, तथा स्वबाधकेत्यादिकमपीति भावः। *यदिति*॥ यदवच्छिन्नप्रतियोगिताकेत्यर्थः। *साधकत्वम्=व्याप्यत्वम्। *तस्य=तद्विशिष्टस्य। *व्यापकत्वम्=व्यापकत्वधीः। *तथाचेत्यादि*॥ 'शरीरजन्यत्वं यदि कर्तृजन्यत्वव्यापकं न स्यात्, तदा कर्तृजन्यत्वाभावव्याप्याभावप्रतियोगि न स्यादि'ति तर्को नावतरति, 'लाघवेन जन्यत्वसामान्याभावत्वेनैव व्याप्यतासम्भवेन शरीरविशेषणवैयर्थ्यादिष्टापत्तित्वादि'ति यथा *मण्यादावुक्तम्*; तथा 'स्वबाधकेत्यादिकं न मिथ्यात्वव्यापकम्; यदि तत्त्वव्यापकं न स्यात्, तदा तदभावव्याप्यस्वाभावकं न स्यादि'त्यापत्तेरिष्टत्वाद् लाघवाद् दोषप्रयुक्तभानत्वेनैव व्याप्यतासम्भवेन स्वबाधकेत्यादिवैयर्थ्यादित्यर्थः। यत्र तु विशिष्टप्रतियोगिकाभावत्वेनैव व्याप्यता; व्यर्थविशेषणत्वाद्यभावात्, तत्र विशिष्टरूपेणापि व्यापकत्वम्, तर्कप्रसरात्। *उक्तं हि मणावीश्वरवादे*—'धूमविशेषादौ चन्दनजन्यत्वादेः कारणत्वाद् विपक्षबाधकेन विशिष्टस्य व्यापकत्वाद् विशिष्टप्रतियोगिकाभावत्वेनैव हेत्वभावव्याप्यता; यत्र तु विपक्षे बाधकं नास्ति, तत्र विशिष्टव्यापकता नास्ती'त्यादि। नच—शरीरजन्यत्वाभावे जन्यत्वसामान्याभावत्वस्यासत्त्वात् तत्र शरीरांशस्य तेन न वैयर्थ्यम्; धूमत्वेनेव धूमप्रागभावत्वादेः, स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वस्य व्यर्थविशेषणतारूपत्वादिति—वाच्यम्; विशेष्य-विशेषणाभावयोरेव विशिष्टा-

न्यायामृतसौगन्ध्यम्

*ननु* यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वम्, स एवोपाधिः; इतरांशेऽनुकूलतर्काप्रसरात्,

अद्वैतसिद्धिः

न कर्तृजन्यम्, शरीराजन्यत्वादि'त्यत्र यथा शरीरविशेषणवैयर्थ्याद् न शरीरजन्यत्वं कर्तृजन्यत्वव्यापकम्, एवं वियदादिकम्, न मिथ्या, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वरहितत्वादिति साध्यव्यतिरेक-साधने स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं न मिथ्यात्व-व्यापकम्, दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकम्, तच्च साधनव्यापकमपि, इति नोपाधिः। दृश्यत्वादिनैव मिथ्यात्ववत् तस्यापि साधनात्। एवं द्वितीयोपाधावपि 'स्वबाधकाबाध्यबाधकं प्रती'ति विशेषणं व्यतिरेकसाधने व्यर्थम्। विशेष्यभागस्तु साध्य-साधनयोर्व्यापकः, इति नोपाधिः॥

तरङ्गिणी

*ननु*—यद्व्यतिरेकस्य साध्यव्यतिरेकसाधनत्वम्, तस्यैव साध्यव्यापकत्वम्; इतरांशेऽनुकूल-तर्काप्रसरात्। तथाच क्षित्यादिकम्, कर्तृजन्यं न भवति, शरीराजन्यत्वात्, इत्यत्र यथा शरीरविशेषणवैयर्थ्याद् न शरीरजन्यत्वं कर्तृजन्यत्वव्यापकम्. एवं वियदादिकम्, न मिथ्या, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्व-व्यतिरेकात्, इत्यत्र स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं न मिथ्यात्व-व्यापकम्, दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकम्, तच साधनव्यापकमपि, इति नोपाधिः; दृश्यत्वादिनैव मिथ्यात्ववत् तस्यापि साधनात्। एवं द्वितीयोपाधावपि 'स्वबाधकं प्रती'ति विशेषणं व्यतिरेकसाधने व्यर्थम्; विशेष्यभागस्तु साध्य-साधनयोर्व्यापकः, इति नोपाधिः, *मैवम्*; विशेष्यव्यतिरेकाद् विशिष्टव्यतिरेकस्य भिन्नत्वेन तत्र वैयर्थ्यासंभवात्। तथाहि—एकस्मिन् धर्मिणि व्याप्यतावच्छेदकत्वेन प्रसक्तयोर्द्वयोर्धर्मयोर्लघुनैव तत्र व्याप्तिर्गृह्यते, नतु गुरुणा; यथा नीलधूमे धूमत्व-नीलधूमत्वयोर्मध्ये धूमत्वेन। नचेह विशिष्टाभावनिष्ठां व्याप्तिं परिच्छेत्तुं विशेष्याभावत्वं प्रसक्तम्, विशिष्टाभावे विशेष्याभावत्वस्यासत्त्वात्, किन्तु विशिष्टाभावत्वमेव। एवं च विशिष्टोपाधेरस्त्येव साध्याव्यापकता। नच—ईश्वरानुमानेऽप्युक्तविधया शरीरजन्यत्वमुपाधिः स्यादिति—वाच्यम्; श्रुतिबलेन क्षित्यादिकर्तुरीश्वरस्य सिद्धौ पक्ष एव तस्य साध्याव्यापकत्वादनु-पाधित्वम्; तस्माद् युक्तावुपाधी॥ *ननु*—प्रथमोपाधौ 'स्वबाधकाभिमताबाध्ये'ति विशेषणं साध्येन समव्याप्त्यर्थम्, नतु पक्षमात्रव्यावृत्त्यर्थम्; अतस्तत्र शङ्का-परिहारावसंगतौ। *तथाहि*—सर्वप्रत्यय-वेद्यत्वेनाविद्यारूपदोषजन्ये घटादिगोचरे चरमवृत्तिरूपे वा ज्ञाने ब्रह्मणो विषयत्वेनोपाधिमति तस्मिन् साध्यस्याभावेन व्यभिचारात्, तद्विशेषणे तु विशिष्टस्योपाधेर्ब्रह्मण्यप्यसत्त्वाद् न तत्र साध्याव्याप्तिरिति—चेत्, स्वयंप्रकाशे तस्मिन् दोषप्रयुक्तभानाभावात्, इति पररीत्या स्वरीत्या चोपाधेरसाध्यव्याप्यत्वमस्त्येव, इति न तदर्थं विशेषणम्, किंतु पक्षमात्रव्यावृत्त्यर्थम्; अतस्तत्रापि शङ्का-परिहारौ युक्तौ। पक्षमात्रव्यावर्तक-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भावत्वात्, येन विशेषणेन विनापि व्याप्तिर्गृह्यते, तदेव व्यर्थविशेषणमिति स्वीकाराच्च। *उक्तं हि मणौ*—उक्तस्थले-'शरीराजन्यत्वे व्यर्थविशेषणत्वम्; लाघवेनाजन्यत्वस्यैव व्याप्यत्वात्, येन विशेषणेन विना व्याप्तिर्न गृह्यते, तस्यैव व्याप्यतावच्छेदकत्वनियमात्। अत एव घ्राणम्, पार्थिवम्, रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, इत्यादौ 'रूपादिषु मध्ये' इत्यसिद्धिमात्रवारकमपि न व्यर्थम्; तेन विना व्याप्त्यग्रहादि'ति। किंच 'तर्काप्रसरादि'त्यनेन व्यापकताग्राहकतर्कमात्रमुपाधित्वे बीजमित्युक्तम्, पूर्वोक्तमणिवाक्येऽपि तथोक्तम्, तथाच व्यर्थविशेषणत्वाभावेऽपि शरीराजन्यत्वं यथा नोपाधिः; तादृशतर्काभावात्, तथा 'स्वबाधके'-

न्यायामृतसौगन्ध्यम्

तथाच वियदादिकम्, न मिथ्या, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वाभावात्, इति साध्यव्यतिरेक-साधने स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं न मिथ्यात्व-व्यापकम्, दोषप्रयुक्तभानत्वं तु भवति तद्व्यापकम्, तच्च साधनव्यापकम्, इति नोपाधिः। एवमुपाध्यन्तरे

न्यायामृतम्

*यद्वा*—यथाऽनुकूलतर्काभावाद् मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वम्, तस्मिन् साध्ये श्यामत्वमुपाधिः, तथेहापि बाध्यत्वादिरूपे मिथ्यात्वे साध्ये विपरीतप्रमाविषयत्व-दोषप्रयुक्त-भानत्वादिकम्, तस्मिन् साध्ये मिथ्यात्वमुपाधिरस्तु, युगपदुभयसाधने त्वर्थान्तरम्; मिथ्यात्व एव विमतिपत्तेः, बाधो भ्रान्तिपूर्वकः, विपरीतप्रमा तु नेति तयोर्भेदः ॥

तरङ्गिणी

विशेषणवत्त्वशङ्कायां अप्यविषयमुपाधिमाह—*यद्वेति* ॥ *ननु* विपरीतप्रमाविषयत्वादेरुपाधेर्न साधनवतः पक्षाद् व्यावृत्तिः, साध्यवति पक्ष उपाधेरपि साध्यमानत्वादित्याशङ्कां परिहर्तुं 'यथे'त्याद्युक्तम् ॥ *युगपदिति* ॥ तथाचान्योन्यस्यासाध्यमानत्वाद् नान्योन्यसाधनेऽन्योन्यस्योपाधित्वमिति भावः ॥ *अर्थान्तरमिति* ॥ यद्यप्युभयसाधनेऽप्येकस्योपाधित्वमवर्जनीयमेव ; मित्रातनयत्वेन शाकपाकजत्वे साध्ये श्यामत्वस्येव सन्दिग्ध-साधनाव्यापकत्वसम्भवात्, तथापि दूषणान्तरे तात्पर्यम् ॥

*ननु* अत्र बाधकप्रमां प्रति निषेध्यत्वेन विषयत्वमेवोपाधिर्वक्तव्यः ; तस्यैव पूर्वोक्तविशिष्टोपाधौ विशेष्यभूतत्वात्, यथा 'स्वबाधकाभिमते'त्यादिविशिष्टोपाधिनिविष्टं विशेष्यं दोषप्रयुक्तभानत्वमुपाधित्वेनोक्तम्, विपरीतप्रमाविषयत्वं त्वप्रकृतं किमर्थमुपाधित्वेनोक्तम्? नच—बाध्यत्वरूपसाध्येन सह बाधकं प्रति निषेध्य-त्वेन विषयत्वस्योपाधेरवैशिष्ट्यं स्यात्, अत उपाध्यन्तरमुक्तमिति—वाच्यम्; विपरीतप्रमाविषयत्वस्यापि बाध्यत्वरूपसाध्येनाभेदादित्याशङ्कायामाह—*बाध इति* ॥ आरोपपूर्वकस्वात्यन्ताभावप्रमां प्रति निषेध्यत्वेन

न्यायामृतकण्टकोद्धारः

अस्तु वा देहात्म्यैक्यभ्रमः, देहात्मविवेकेनैव स निवर्त्यते, इति तत्राप्युपाधिद्वयसत्त्वात्। नच—यद्व्यति-रेकस्य साध्यव्यतिरेकसाधकत्वम्, स उपाधिः ; इतरांशेऽनुकूलतर्काप्रसरात्। प्रकृते चोपाधिव्यतिरेकेण साध्यव्यतिरेकसाधने व्यर्थविशेषणत्वम्। यथा क्षित्यादिकम्, कर्तृजन्यं न, शरीराजन्यत्वादित्यत्र शरीरविशेषणवैयर्थ्यम्। नच—शरीरजन्यत्वं कर्तृजन्यत्वव्यापकम्, तस्मात् कथमुपाधित्वम्? इति वाच्यम् ; अत्र हि विशिष्टव्यतिरेको हेतुः। वियदादिकम्, न मिथ्या, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभान-रहितत्वात्, इति विशिष्टाभावेन वैयर्थ्यम्। किञ्चानुकूलतर्केण विशिष्टस्य साध्यव्यापकत्वे गृहीते व्यापक-निवृत्त्या व्याप्यनिवृत्तिसाधनं सुशकम्, अत एव शरीरजन्यत्वमुपाधिरित्यन्यत्रोक्तम्। एवं द्वितीयो-पाधावपि समाधानं द्रष्टव्यम्। उक्तसमाधानपर्यालोचनप्रयासात् कल्पान्तरमाह—*यद्वेति* ॥ *ननु* बाध्यत्व-विपरीतप्रमाविषयत्वयोरैक्यात् कथमुपाधित्वमिति? अत आह—*बाध इति* ॥ यथाच न

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्यादिकमित्यत्र प्रकृतग्रन्थतात्पर्यम्। व्यतिरेके व्यर्थत्वं तु तादृशतर्काप्रसरबीजोपलक्षणत्वेनोक्तम्। *ननु* यथा मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वम्, तस्मिन् साध्ये श्यामत्वमुपाधिः ; तथा दृश्यत्वादिना मिथ्यात्वे साध्ये दोषप्रयुक्तभानत्वम्, तस्मिन् साध्ये मिथ्यात्वमुपाधिरस्तु, युगपदुभयसाधने त्वप्राप्त-कालत्वम्, मिथ्यात्व एव केवले विप्रतिपत्तेः, तत्राह—*दृश्यत्वादिनेति* । युगपदुभयसाधनेऽपि नाप्राप्त-कालत्वम्, मिथ्यात्वत्वावच्छिन्नविधेयताकानुमितेरेव प्राप्तकालत्वात्, समूहालम्बनानुमितेरपि तथात्वात्। *अथ* यथा 'पर्वतावयववृत्ती'ति विशेषणकृता पर्वतावयवरूपादेर्व्यावृत्तिर्नोपाधितायामुपयुज्यते, किन्तु पक्षव्यावृत्तिरेव ; साधनाव्यापकत्वसम्पादकत्वात्, अत एव उपाधित्वौपयिकी या विपक्षव्यावृत्तिः, तद-सम्पादकत्वादुक्तविशेषणस्य पक्षमात्रव्यावर्तकत्वं *मण्यादावुक्तम्*, *स्पष्टं चेदं दीधित्यादौ* ; तथा

### न्यायामृतम्

*यद्वा*—अधिष्ठानाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः ; ब्रह्मणोऽपि बौद्धकल्पितदोषवद्धेदजन्यज्ञानविषयत्वात् समव्याप्त्यर्थम्—'अधिष्ठानसमसत्ताके'ति विशेषणम्, येन पक्षेतरत्वं स्यात् ॥

### अद्वैतसिद्धिः

*अत एव*—अधिष्ठानत्वाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः । अत्र च ब्रह्मणोऽपि बौद्धकल्पितदोषवद्धेतुजन्यक्षणिकत्वादिज्ञानविषयत्वात् समव्याप्तिसिद्ध्यर्थम्—'अधिष्ठानसमसत्ताके'ति विशेषणम्, नतु पक्षमात्रव्यावृत्त्यर्थम्, अतो न पक्षेतरत्वतुल्यतेति—*अपास्तम्* ; ब्रह्मणीव ब्रह्मणि कल्पिते क्षणिकत्वादावपि मिथ्याभूते धर्मेऽधिष्ठानसमसत्ताकदोषवद्धेतुजन्यज्ञानाविषयत्वाद् उपाधेः साध्याव्याप्तेः, व्यतिरेकसाधने व्यर्थविशेषणत्वस्योक्तत्वाच्च ॥

### तरङ्गिणी

विषयत्वं बाध्यत्वम्, स्वात्यन्ताभावप्रमां प्रति निषेध्यत्वेन विषयतामात्रं विपरीतप्रमाविषयत्वमिति तयोर्भेदाद् बाध्यत्वे साध्ये विपरीतप्रमाविषयत्वं भवत्युपाधिरित्यर्थः । *ननु*—एतयोरुपाध्योः कथं साध्यव्यापकत्वम् ? उपाधिमति तुच्छे साध्यस्याभावादिति—चेत्, *न* ; मम मत उपाधिमति तुच्छे साध्यस्यापि सत्त्वात्, परमते तत्र साध्योपाध्योर्द्वयोरप्यभावात् । *ननु*—तथापि दोषप्रयुक्तभानत्वस्योपाधेर्न साध्यव्याप्यत्वम्, सर्वप्रत्ययवेद्यत्वेनाविद्यारूपदोषप्रयुक्तघटादिभानविषये तादृशचरमवृत्तिविषये वा ब्रह्मणि साध्यस्याभावेन व्यभिचारादिति—चेत् *न* ; स्वयंप्रकाशत्वेन ब्रह्मणो दोषप्रयुक्तभानत्वाभावादित्यभिप्रायत्वात् । पक्षमात्रव्यावर्तकविशेषणवत्त्वशङ्काऽविषयं संप्रतिपन्नसाधनाव्यापकताकमुपाधिमाह—*अधिष्ठानेति* ॥ जगदध्यासाधिष्ठानेन ब्रह्मणा समानसत्ताऽविद्यारूपदोषस्य नास्ति, इति विशिष्टोपाधिः पक्षे नास्तीत्यर्थः ॥ *ब्रह्मणोऽपीति* ॥ बौद्धकल्पितदोषस्य प्रातिभासिकत्वेन वेदरूपाधिष्ठानेन समानसत्ता नास्ति, इति ब्रह्मण्युपाध्यभावाद् नोपाधेः साध्येन व्यभिचार इत्यर्थः । *ननु* ब्रह्मणीव ब्रह्मणि कल्पिते क्षणिकत्वादावपि मिथ्याभूते धर्मेऽधिष्ठानसमसत्ताकदोषवद्धेतुजन्यज्ञानाविषयत्वादुपाधेः साध्याव्यापकत्वमिति—चेत्, *मैवम्* ; 'अधिष्ठानसमसत्ताके'त्यनेन व्यावहारिकत्वाधबाध्यत्वस्य दोष-

### न्यायामृतकण्टकोद्धारः

पक्षमात्रव्यावर्तकविशेषणता, परमतानुसारेण च साधनाव्यापकत्वम्, तथा प्रकारान्तरमाह—*यद्वेति* ॥ नच—ब्रह्मणीव ब्रह्मणि कल्पिते क्षणिकत्वादावपि मिथ्याभूते धर्मेऽव्यापकत्वमिति—वाच्यम् ; अनात्मवृत्तित्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वसम्भवात्, तादृशस्य च वायुप्रत्यक्षतासाधन उद्भूतरूपवत्त्वादेरुपाधित्वस्वीकारात्, आत्मनि चारोपितक्षणिकत्वादावनात्मवृत्तित्वावच्छिन्नमिथ्यात्वाभावाद् न साध्यव्यापकत्वम् । नच—व्यतिरेके व्यर्थविशेषणत्वाद् नोपाधित्वमिति—वाच्यम् ; उपाधिव्यतिरेकस्य विशिष्टाभावत्वेन वैयर्थ्याभावादित्युक्तत्वात् ॥

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

समव्याप्तिसम्पादकस्याप्य'धिष्ठाने'त्यादिविशेषणस्य यद् ब्रह्मव्यावर्तकत्वम्, तस्य 'साध्यासमानाधिकरणस्याधिकरणं यत् साधनवदि'त्यादिपूर्वोक्तोपाधिलक्षणानौपयिकत्वात् साधनाव्यापकत्वसम्पादकविपक्षव्यावृत्त्यसम्पादकत्वेन पक्षमात्रव्यावर्तकत्वमक्षतम् । आर्द्रेन्धनादेस्त्वार्द्रत्वादिविशेषणकृतायोगोलकादिव्यावृत्तिः साधनाव्यापकत्वसम्पादकत्वादुपाधित्वौपयिकीत्याशयेनाह—*अत एवेति* ॥ समव्याप्तिसम्पादकत्वेऽप्युक्तरीत्या पक्षमात्रव्यावर्तकत्वादेवेत्यर्थः । *ब्रह्मणीवेत्यादि* ॥ स्वजनकाज्ञानविषयावच्छेदकत्वरूपाधिष्ठानत्वघटितोक्तोपाधिर्यथा ब्रह्मणि नास्ति ; तज्जनकाज्ञानाप्रसिद्धेः, तथा तत्र कल्पिते क्षणिकत्वादावपि ; तज्जनका-

न्यायामृतम्

यद्वा—वेदतात्पर्यविषयाद् धर्माधर्मादिरूपात् साक्षिवेद्यात् सुख-दुःखादिरूपाद्वा पक्षैकदेशाद् व्यावृत्तं श्रुतितात्पर्याविषयत्वम्, दोषजन्यधीविषयत्वं वा पक्षमात्राद् व्यावृत्तं प्रतिभासमात्रशरीरत्वं वोपाधिः ॥

अद्वैतसिद्धिः

नापि श्रुतितात्पर्याविषयत्वमुपाधिः ; श्रुतितात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतयां तदभावस्य साधनव्यापकत्वात् । नापि प्रातिभासिकत्वमुपाधिः ; तद्धि ब्रह्मज्ञानेतरबाध्यत्वम्, तस्य च

तरङ्गिणी

विशेषणत्वेन विवक्षितत्वात्, ब्रह्मणि क्षणिकत्वादिकल्पनाहेतोर्दोषस्य वाऽविद्यारूपस्य वा शून्यवाद्युत्थापित-तर्कादेर्व्यावहारिकबाधाबाध्यत्वेन विशिष्टोपाधिविरहस्य तत्रापि सत्त्वात् । यथाच व्यतिरेकसाधने न वैय-र्थ्यम्, तथोक्तम् ॥

*पक्षैकदेशादिति* ॥ क्वचित् साधनवति साध्यव्यतिरेकसाधनमात्रेणापि व्यभिचारज्ञानद्वारोपाधे-र्दोषत्वमित्यर्थः ॥ *श्रुतितात्पर्याविषयत्वमिति* ॥ श्रुतिजन्यप्रमां प्रत्यविषयत्वमित्यर्थः । *एतेन*—ब्रह्मण एव श्रुतितात्पर्यविषयतया तदभावस्य साधनव्यापकत्वमिति—*निरस्तम्* ; तथा सति धर्माद्य-सिद्ध्यापत्त्या यथाकथंचित् श्रुतिजन्यज्ञानविषयत्वस्य ब्रह्मभिन्नेऽप्यङ्गीकार्यत्वात् । उक्ता च परैरपि देवताधिकरणे देवताविग्रहादिप्रमा श्रुतिभ्यः । सुखादेः पक्षैकदेशाद् व्यावृत्तमुपाधिमाह—*दोषजन्येति* ॥ सुखादिधियोऽप्यविद्यावृत्त्युपहितसाक्षिरूपाया अविद्यारूपदोषप्रयुक्तत्वेन नोपाधेः पक्षाद् व्यावृत्तिरस्तीति जन्यत्व-पर्यन्तमुक्तम् । सर्वस्मात् पक्षाद् व्यावृत्तमुपाधिं संजानीते—*पक्षमात्रादिति* ॥ मात्रशब्दः कात्स्न्यार्थः ॥ *प्रतिभासमात्रशरीरत्वमिति* ॥ *ननु* प्रतिभासमात्रशरीरत्वं नाम ब्रह्मज्ञानेतरबाध्यत्वमेव, तस्य च

न्यायामृतकण्टकोद्धारः

*यद्वेति* ॥ नच पक्षैकदेशाद् व्यावृत्तस्योपाधित्वमदृष्टचरमिति—वाच्यम् ; तादृशस्याप्यनणु-त्वादेः क्षित्यादिकं सकर्तृकमित्यादावुपाधित्वदर्शनात् । नच—धर्मादौ वेदतात्पर्यविषयत्वमेव नेति—वाच्यम् ; तथा सति धर्माद्यसिद्धेरन्यत्रोपपादितत्वेन तदसिद्धिप्रसङ्गात् । नच धर्मादौ तात्पर्याङ्गीकारे महातात्पर्यविरोधः ; अवान्तरतात्पर्याङ्गीकारात् । *दोषजन्यधीविषयत्वमिति* ॥ नच—दोषप्रयुक्त-भानत्वेन साङ्कर्यमिति—वाच्यम् ; कुरु-पाण्डवन्यायेन सामान्य-विशेषभावात् । पूर्वं तु सर्वस्मिन् पक्षे दोषप्रयुक्तभानत्वाभावमुपपाद्य साधनाव्यापकत्वेनोपाधित्वमुक्तम्, इदानीं पक्षैकदेशे सुखादौ परसिद्ध-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

ज्ञानविषयब्रह्मावच्छेदकाप्रसिद्धेः । तत्प्रसिद्धिस्तु शुक्तिरूप्यादौ । स्वजनकाज्ञानविषयसमसत्ताकदोषनिवेशे तु तत्राप्यप्रसिद्ध्या साध्याव्यापकत्वमपि । *ब्रह्ममात्रेति* ॥ अवान्तरतात्पर्यविषयत्वं यागादिनिष्ठे स्वर्गादि-साधनत्वे, नतु यागादौ ; 'अर्थेऽनुपलब्धे तत्प्रमाणमि'ति जैमिन्युक्तेः, अज्ञातार्थ एव श्रुतितात्पर्योक्तेः, साधन-त्वादिविशिष्टतया यागादाविव मिथ्यात्वविशिष्टतया दृश्यमात्रे श्रुतितात्पर्यात् साध्याव्यापकत्वापत्तेः परमतात्पर्यमेव

न्यायामृतसौगन्ध्यम्

बोध्यमिति—चेत्, *न* ; विशिष्टाभावस्यातिरिक्तत्वेन वैयर्थ्याभावात् । नहि स्वबाधकाभिमताबाध्य-दोषप्रयुक्तभानत्वनिष्ठा व्याप्तिर्दोषप्रयुक्तभानत्वेनावच्छिद्यते ॥

*यत्तु*—साध्यासमानाधिकरणेत्यादिप्रागुक्तोपाधिलक्षणानाक्रान्तत्वाद् नायमुपाधिरिति, *तन्न* ; व्यभिचारोन्नायकत्वपक्षे हि तल्लक्षणम्, नतु सत्प्रतिपक्षोन्नायकत्वपक्षे, तत्र पक्षावृत्तिः साध्य-

न्यायामृतम्

नच तवापि जगत् प्रतिभासमात्रशरीरम् ; प्रतिकर्मव्यवस्थाद्ययोगादिति दिक् ॥

इति दृश्यत्वाद्यनुमानस्य सोपाधिकत्वम् ॥

अद्वैतसिद्धिः

देहात्मैक्ये मिथ्याभूतेऽप्यसत्त्वेन साध्याव्याप्तेः, व्यतिरेके व्यर्थविशेषणत्वाच्च । नापि प्रतिभासमात्रशरीरत्वमुपाधिः ; दृष्टिसृष्टिपक्षे साधनव्यापकत्वात्, परेषामसिद्धेश्चेति ॥

इति दृश्यत्वाद्यनुमानस्य सोपाधिकत्वभङ्गः ॥

तरङ्गिणी

देहात्मैक्ये मिथ्याभूतेऽप्यसत्त्वेनोपाधेः साध्याव्यापकतेति—चेत्, *मैवम्* : देहात्मनोर्भेदस्य 'मम देहः' इति सर्वानुभवसिद्धत्वेन विशेषदर्शनाद् ऐक्यभ्रमस्यासिद्धतया मिथ्याभूते देहात्मैक्ये मानाभावेन तत्र साध्याव्यापकत्वाभावात् । यथाचैतत्, तथा देहात्म्यैक्याध्यासभङ्गे वक्ष्यते । दृष्टिसृष्टिपक्षेणोपाधेः पक्षाद् व्यावृत्तिरस्तीत्यत आह—*नचेति* ॥ *प्रतिकर्मव्यवस्थेति* ॥ तथाच दृष्टिसृष्टिपक्षस्याप्रामाणिकतयाऽस्त्येवोपाधेः पक्षाद् व्यावृत्तिरिति भावः । कर्म कर्म प्रति=प्रतिकर्म *व्यवस्था=नियमः । ब्रह्मरूपे ज्ञाने घटादीनामध्यासाद् युगपत् सर्वेषां प्रकाशप्रसक्तौ यदिन्द्रियसन्निकर्षजन्यान्तःकरणवृत्त्या यदवच्छिन्नचैतन्यावरणाज्ञानशक्त्याद्यपगमः, तत् चैतन्येन प्रकाश्यत इत्येव व्यवस्था परैरङ्गीक्रियते, सा दृष्टिसृष्टिपक्षे न युज्यते ; अन्योन्याश्रयात्, सति चैतन्यरूपे ज्ञाने घटादिस्वरूपम्, तत्स्वरूपे च सति तेनेन्द्रियसन्निकर्षे जाते तदवच्छिन्नचैतन्यावरकाज्ञानशक्त्यपगमात् चैतन्यरूपसद्ज्ञानमिति । तस्मात् प्रतिकर्मव्यवस्थानुपपत्त्या न जगत् प्रतिभासमात्रशरीरम्, इति नोपाधेः साधनवतः पक्षाद् व्यावृत्तिरिति । पररीत्या चायमनुपाधिर्द्रष्टव्यः ॥

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि । न्यायामृततरङ्गिण्यां दृश्यत्वादेरुपाधयः ॥

इति दृश्यत्वाद्यनुमानस्य सोपाधिकत्वम् ॥

न्यायामृतकण्टकोद्धारः

साधनाव्यापकत्वेनोपाधित्वमुच्यते, इति वाऽसाङ्कर्यात् । *नचेति* ॥ नच—दृष्टिसृष्टिपक्ष इष्टापत्तिरिति—वाच्यम् ; जगतः प्रातिभासिकत्वे प्रतिकर्मव्यवस्थाऽयोगात्, अर्थक्रियाकारित्वं च न स्यात् । ततश्च दृष्टिसृष्टिपक्षस्यायुक्तत्वेन जगतः प्रातिभासिकत्वाभावाद् युक्तोऽयमुपाधिः । नच—देहात्मैक्ये साध्याव्यापकत्वमिति—वाच्यम् ; तदसम्भवस्य प्रागेवोक्तत्वात् ॥

इति दृश्यत्वाद्यनुमानस्य सोपाधिकत्वम् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

निवेश्यमिति भावः । दोषजन्यधीविषयत्वं परोक्तं साधनव्यापकम् । *प्रतिभासमात्रशरीरत्वम्=अज्ञानविषयतानवच्छेदकत्वं प्रातीतिके सर्वत्र स्वकालावच्छेदेनास्ति ; स्वकालान्यकालावच्छेदेन तत्रोक्तविषयतावच्छेदकत्वात्, तथाच तदनवच्छेदकत्वं साध्यं व्याप्नोति, नतु साधनमिति भावः । *परेषाम्=माध्वानाम् । शुक्तिरूप्यादीनामत्यन्तासत्त्वेन तेषु तदसिद्धेः । अपरोक्षतया भासमान एव ह्यज्ञानविषयतानवच्छेदकत्वम्, नित्यपरोक्षे त्वलीके 'तद् न भाती'ति प्रत्ययादज्ञानविषयतावच्छेदकत्वमेव । नच—शुक्तिरूप्यादिकं दोषवशादपरोक्षभ्रमकालेऽपरोक्षतया भाति, इति तदाऽज्ञानविषयतावच्छेदकं सम्भवति, कालान्तरे तूक्तविषयतावच्छेदकम् ; 'न भाती'ति प्रत्ययात्, इति—वाच्यम् ; कालस्यालीकासम्बन्धित्वेनावच्छेदकत्वासम्भवात् । तस्मादधिष्ठानतादात्म्यादेव 'भाती'ति प्रत्ययो भ्रमविषयः, इति साध्याव्यापकत्वमित्यर्थः । नच—अत्यन्तासत्त्वादेव नाज्ञानविषयतावच्छेदकत्वम्, उक्तविषयता हि चित्त्वेव वाच्या, चिदसम्बद्धस्य त्वलीकस्य तदवच्छेदकत्वासम्भव इति—वाच्यम् ; असम्बद्धस्याप्यलीकस्यातीतानागतयोरिव ज्ञानविषयतायामिवाज्ञान-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विषयतायामप्यवच्छेदकत्वसम्भवात् । स्वकालत्वव्यापकस्वधीकत्वं प्रतिभासमात्रशरीरत्वमित्युक्तावपि शुक्तिरूप्यादौ तदसिद्धिः ; असतः स्वकालाप्रसिद्धेः । *चकारः* उक्तोपाधिषु 'दोषान्तरसमुच्चायकः । *तथाहि*—'स्वबाधके'त्यादौ स्वबाधकबाध्यत्वं यदि स्वजनकाज्ञाननिवर्तकज्ञाननिवर्त्यत्वम्, तदा जनकत्वस्य स्वावच्छेदकघटितत्वात् स्वजनकत्वस्य शुक्त्यवच्छिन्नचिद्विषयकाज्ञानत्वादिरूपावच्छेदकभेदेन भिन्नत्वात् स्वनिवृत्तिजनकत्वस्य शुक्तित्वप्रकारकेदंविशेष्यकत्वादिरूपावच्छेदकभेदेन भिन्नत्वादननुगमः । नहि स्वत्वस्यानुगतत्वेऽपि तदनुगमसम्भवः ; द्रव्यजनकतात्वेन रूपेण कपाल-तन्तुत्वाद्यवच्छिन्नजनकतानामनुगमापत्तेः । पल्लवाज्ञानास्वीकारपक्षे शुक्तिरूप्यादिबाधकब्रह्मज्ञानाबाध्यदोषाप्रसिद्धिः । यदि च स्वबाधकबाध्यत्वं स्वमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकत्वम्, तदा निश्चयत्वस्य तत्तद्धर्मितावच्छेदकादिभेदेन नानात्वादननुगमः । 'नेह नानाऽस्ती'त्यादिश्रुत्यादिना दृश्यमात्रस्य मिथ्यात्वेन निश्चितत्वात् तादृशदोषाप्रसिद्धिः । एवं दोषत्वस्यैकस्याभावात् तेन रूपेण सर्वदोषाणामनुगमासम्भवः । अन्यतमत्वरूपेण दोषाणां निवेशेऽनन्तदोषघटितान्यतमत्वस्य दुर्ज्ञेयतापत्तिः । तावदन्यतमत्वोक्तेः स्वरूपतो निवेशेऽविद्यान्यदोषाणामेव तावदन्यतमत्व-

न्यायामृतसौगन्ध्यम्

व्यापक इत्येव हि तल्लक्षणम् । तच्चास्ति प्रकृते ; अत्र साधनाव्यापकत्वस्य निष्प्रयोजनत्वात्, स्वाधिकसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वञ्चोपाधिः ; स्वप्नेऽपि निद्राऽविद्यादिरूपस्तादृशो दोषोऽस्त्येव ॥

*ननु* 'स्वबाधके'त्यादौ स्वत्वस्यानुगतत्वेऽपि स्वबाधकबाध्यत्वं यदि स्वजनकाज्ञाननिवर्तकज्ञाननिवर्त्यत्वम्, तदा जनकत्वस्य स्वावच्छेदकघटितत्वात् स्वजनकत्वस्य शुक्त्यवच्छिन्नचिद्विषयकत्वादिरूपावच्छेदकभेदेन शुक्तित्वप्रकारकेदंविशेष्यकत्वादिरूपावच्छेदकभेदेन च नानाविधस्याननुगमः, तूलाज्ञानास्वीकारपक्षे शुक्तिरूप्यादिबाधकब्रह्मज्ञानाबाध्यदोषाप्रसिद्धिः, यदि च स्वमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकत्वं तत्, तथापि निश्चयत्वस्य तत्तद्धर्मितावच्छेदकादिभेदेन नानात्वादननुगमः ; "नेह नानाऽस्ती"त्यादिश्रुत्यादिजन्येन च मिथ्यात्वनिश्चयेन दोषमात्रस्य निश्चितमिथ्यात्वकत्वात्तादृशदोषाप्रसिद्धिः । अथ जनकत्वं तत्त्वं वाऽखण्डम्, नतु स्वावच्छेदकघटितम्, तूलाज्ञानं चास्तीत्यङ्गीकृत्याद्य एव पक्षः, दोषभिन्नं यत् स्वभिन्नम्, तद्विशेष्यकमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकत्वं तदिति वा पक्षो ग्राह्यः, उक्तश्रुतिजन्यमिथ्यात्वनिश्चयस्तु स्वभिन्नविशेष्यः, स्वभिन्नविशेष्यकमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकदोषप्रयुक्तभानकत्वस्य घटादावपि सत्त्वाद् 'दोषभिन्ने'ति । स्वभिन्नं यद् दोषभिन्नम्, तद्विशेष्यकेण 'घटाविद्ये मिथ्ये'त्यादिनिश्चयेनाविद्यारूपदोषमिथ्यात्वं निश्चितमिति न घटादौ तदिति चेत्, न ; तथापि द्वितीयपक्षे 'शुक्तिरूप्यतज्ज्ञापकदोषौ मिथ्ये'ति निश्चयमादाय साध्याव्यापकत्वात्, यत्र प्रातिभासिकान्तराविशेष्यकं स्वविशेष्यकमिथ्यात्वज्ञानं न जातम्, तत्रापि साध्याव्यापकत्वाच्च, पक्षद्वयेऽपि दोषमात्राननुगतत्वात् साध्याव्यापकत्वात्, अबाध्यान्तवैयर्थ्याच्च । नचान्यतमत्वेन दोषाणामनुगमः ; अनन्तदोषघटिततया युगसहस्रेणापि तद्दुर्ज्ञेयत्वापत्तेः । नच स्वरूपतोऽन्यतमत्वं निवेश्यमिति ; त्वन्मते तस्य स्वरूपतो ज्ञेयत्वे गोत्वादिजात्यपलापापत्तेः, तावदन्यतमत्वस्यैव तत्सम्भवादविद्यान्यदोषाणामन्यतमस्यैव निवेशसंभवेनाबाध्यान्तवैयर्थ्यात् ; साध्याव्यापकत्वस्य तेन रूपेण ग्राहकतर्काभावात् ; अन्यथा प्रातीतिकानामन्यतमत्वेन तादात्म्येनोपाधिसंभवात् तदपेक्षया गुरोरनुधावनस्य तेऽनुचितत्वात्, अविद्यान्यदोषप्रयुक्तभानकत्वावच्छिन्नप्रतियोगिताकाभावत्वस्याप्रसिद्ध्या तेन रूपेण साध्याभावाव्याप्यत्वात्, 'स्वबाधके'त्यादिरूपेण व्यापकताग्राहकतर्काप्रसरादुपाधित्वासंभवात्, स्वाप्नविभ्रमे स्वाप्नादिप्रतीतिकस्यापि दोषत्वेन तत्र स्वबाधकजाग्रदादिबोधबाध्यत्वेन साध्याव्यापकत्वाच्च ; *अत्रोच्यते* ; 'यदीत्याद्ययुक्तम् ; स्वध्वंसप्रयोजकध्वंस-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्वरूपेण निवेशसम्भवेनाबाध्यान्तवैयर्थ्यापत्तिः । तेन रूपेण साध्यव्यापकताग्राहकतर्काभावश्च । अन्यथा प्रातिभासिकानामन्यतमत्वरूपेणैव तादात्म्यसम्बन्धेनोपाधित्वस्यापत्तिः । *किञ्च* स्वाप्नादिभ्रमे प्रातीतिक-दोषस्यापि सम्भवेन तस्य स्वबाधकजाग्रदादिबोधबाध्यत्वेन साध्यव्यापकत्वहानिश्च । एवमुपाध्यन्तरेष्वपि दोषा बोध्याः ॥ *इति लघुचन्द्रिकायां सोपाधिकत्वभङ्गः* ॥

न्यायामृतसौगन्ध्यम्

प्रतियोगित्वसंबन्धेन(१) स्वविशिष्टत्वं हि स्वबाधकबाध्यत्वम् । पल्लवेत्याद्ययुक्तम् ; स्वध्वंसप्रयोजकत्वेना-भिमतं यत्, तस्य वस्तुगत्यैकस्य संबन्धे निवेशात् ; देहात्म्यैक्यब्रह्मक्षणिकत्वादिप्रातीतिकनिवर्तकस्य(२) सप्रकारकस्याविद्यादिदोषानिवर्तकत्वात्, स्वाप्नादिदोषस्य स्वाप्ननिवर्तकनिवर्त्यत्वस्वीकारेऽपि यत्किञ्चि-न्निद्रादृष्टादिदोषस्य तदभावात् । यदि चेत्याद्यपि साधु ; स्वमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकत्वसंबन्धेन स्वविशिष्टस्य तदर्थत्वात्, संबन्धाननुगमस्यादोषत्वात्, "नेहे"त्यादिश्रुतिजन्यस्येश्वरीयज्ञानस्य च मिथ्यात्वनिश्चयरूपतैवासिद्धेः (?) । अथेत्याद्यपि साधु ; तादृशनिश्चयस्योभयमते सर्वांशप्रमात्वस्य विव-क्षितत्वात्, शुक्तिरूप्य-तज्ज्ञापकमिथ्यात्वनिश्चयस्यास्मन्मते ज्ञापकमिथ्यात्वांशे भ्रमत्वात्, स्वनिश्चय-निश्चितमिथ्यात्वकत्वस्य शुक्तिरजतादावेव प्रसिद्धेः, स्वजनकदोषे तदभावात् । तन्नेत्याद्ययुक्तम् ; स्वा-भावादेरेव स्वभिन्नादिपदेनोक्तत्वेन प्रातिभासिकान्तरस्य स्वविशेष्यकमिथ्यात्वज्ञाने भानेऽपि क्षतेर-भावात् । पक्षद्वयेऽपीत्याद्ययुक्तम् ; भ्रमजनकतावच्छेदकत्वेनानुगतदोषप्रसिद्धेः । उक्तं हि प्रत्यक्षमणि-दीधितौ—'भ्रमत्वावच्छिन्नकार्यतानिरूपितकारणताशक्तित्वं च दोषत्वमि'ति । अत एवान्यतमत्वेनापि दोषानुगमः । त्वन्मत इत्याद्ययुक्तम् ; व्यक्त्यन्यतमत्वेनानुगतबुद्ध्युपपत्तावतिरिक्तजात्यसिद्धौ नः क्षत्य-भावात् । अविद्यान्येत्याद्यशुद्धम् ; अविद्यान्यत्वमबाध्यान्यत्वं वेत्यत्र विनिगमनाविरहात्, देहात्म्यैक्या-द्यतिरिक्तदोषाभावे तूक्तविशेषणस्य साध्यव्यापकतासंपादकत्वेनोपाधित्वौपयिकत्वात् । तेन रूपेणेत्या-दिकं तु सत्तावान्, द्रव्यत्वात्, विशिष्टसत्तावान् वा, द्रव्यत्वादित्यादौ व्याप्यत्वाद्यनापत्त्यैव निरस्तम् । अन्यथेत्याद्ययुक्तम् ; तस्याप्युपाध्यन्तरत्वात् । अविद्यान्यदोषेत्याद्ययुक्तम् ; अविद्यान्यदोषप्रयुक्तभान-त्वस्य गुरुत्वात् तादृशाभावासिद्धिः ? केवलान्वयित्वाद्वा ? आद्येऽखण्डाभावस्यातिरिक्तत्वव्यवस्थापनात्, द्वितीये स्वप्रकाशे ब्रह्मण्येव तत्सिद्धेः । स्वाप्नादीत्याद्ययुक्तम् ; यत्किञ्चिन्निद्राऽविद्यादिदोषस्य(३) स्वप्न-बाधकाबाध्यत्वात् ; एवमन्येऽपि दोषा निरसनीयाः ॥

इति दृश्यत्वाद्यनुमानसोपाधिकत्वम् ॥

सौगन्ध्यविमर्शः

(१) तत्त्वज्ञानेनाविद्यामात्रनिवृत्तिः, तत्प्रयुक्तनिवृत्तिस्त्वविद्याध्वंसादेवेति मते हि स्वध्वंसप्रयोजकध्वंसप्रतियोगित्वसम्बन्धेन स्वविशिष्टत्वं स्वबाधकबाध्यत्वं स्यात्, परं तु नेदमद्वैतमतसिद्धम् ; तन्मते तत्त्वज्ञानस्यैवोभयनिवर्तकत्वस्वीकारात्, इति नोक्तरूपं स्वबाधकबाध्यत्वम् । (२) देहात्मैक्यं यावद्व्यवहारमनुवर्तमानत्वाद् व्यावहारिकमेव, न प्रातिभासिकमिति पक्षे तस्य सप्रकारकज्ञानाबाध्यत्वाद् देहात्मैक्यमविद्यादोषश्चैकज्ञाननिवर्त्यमेवेति न दोषः । मतान्तरे तु तस्यापि तूलाज्ञान-कार्यत्वादुभयस्यापि सप्रकारकज्ञाननिवर्त्यत्वमेवेति न दोषः । एतेन—ब्रह्मक्षणिकत्वमपि—व्याख्यातम् । (३) यत्किञ्चिन्निद्रा-दृष्टादिदोषस्तु स्वाप्नबाधकाबाध्योऽप्रसिद्ध एव ॥

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सप्तव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैत-सिद्ध्योः दृश्यत्वाद्यनुमानसोपाधिकत्वविचारः ॥

# अथ दृश्यत्वादीनामाभाससाम्यम्

——: ० :——

न्यायामृतम्

विमतम्, प्रातिभासिकम्, दृश्यत्वात्; शुक्तिरूप्यवत्, ब्रह्म, मिथ्या, व्यवहारविषयत्वात्, असद्विलक्षणत्वाद्वा; शुक्तिरूप्यवदित्याभाससाम्यं च। जगतोऽप्रातिभासिकत्वग्राहि प्रत्यक्षम्, ब्रह्मण-

अद्वैतसिद्धिः

*ननु*—विमतम्, प्रातिभासिकम्, दृश्यत्वात्, ब्रह्म, मिथ्या, व्यवहारविषयत्वात्, असद्विलक्षणत्वाद्वा; शुक्तिरूप्यवदित्याद्याभाससाम्यमिति—चेत्, *न*; जगतो व्यावहारिकसत्त्वबाधे(१) व्यवहारानुपपत्तिः, ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्च, इति प्रतिकूलतर्कपराघातेन तयोरसाधकत्वात्, प्रकृते च प्रतिकूलतर्कस्य निरसिष्यमाणत्वात्। किंच प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वम्? प्रतिभासमात्रशरीरत्वं वा? आद्ये साध्ये देहात्मैक्ये व्यभिचारः, अप्रयोजकत्वं च। द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम्। एवं ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्धसाधनम्, निरुपाधिके व्यवहार-

तरङ्गिणी

*इत्याभाससाम्यं चेति*॥ *ननु*—जगतोऽव्यावहारिकत्वे साध्ये व्यवहारानुपपत्तिः, ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्चेति प्रतिकूलतर्कपराघातेन तयोरसाधकत्वम्, प्रकृते च प्रतिकूलतर्काभावः। किंच प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वम्? प्रतिभासमात्रशरीरत्वं वा? आद्ये साध्ये देहात्मैक्ये व्यभिचारः, अप्रयोजकत्वं च। द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम्; एवं ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्धसाधनम्; अनुपाधिके

न्यायामृतकण्टकोद्धारः

*विमतमिति*। नच—जगतो व्यावहारिकसत्त्वबाधे व्यवहारानुपपत्तिः, ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिः, इति प्रतिकूलतर्कपराहतत्वादितरसाम्यं कथं मिथ्यात्वानुमानस्य? इति—वाच्यम्; मिथ्यात्वानुमानस्यापि यदि जगद् मिथ्या स्यात्, अर्थक्रियाकारि न स्यात्, ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वे ब्रह्मणो निर्विशेषत्वापत्त्या शून्यवादापत्तिश्च स्यात्, इति तर्कपराहतत्वसाम्यात्। *ननु* च—प्रातिभासिकत्वं किं ब्रह्मज्ञानेतरबाध्यत्वम्? प्रतिभासमात्रशरीरत्वं वा? आद्ये देहात्मैक्ये

गौडब्रह्मानन्दी (लघुचन्द्रिका)

*आभाससाम्यमिति*॥ उक्तानुमानाभासो यथा न साधकः, तथा प्रपञ्चमिथ्यात्वानुमानमित्यर्थः। प्रपञ्चमिथ्यात्वानुमाने नानुपपत्तिः, उक्तानुमाने तु साऽस्ति, इत्यतो न तयोः साम्यमित्याशयेनाह—*जगत इत्यादि*॥ *जगतः* = व्यावहारिकमात्रस्य। *व्यावहारिकसत्त्वेति*॥ अज्ञातसत्त्वेत्यर्थः। *व्यव-

न्यायामृतसौगन्ध्यम्

श्रीनृसिंहाय नमः॥ दृश्यत्वादिष्वाभाससाम्यम्। तथाहि—विमतम्, प्रातिभासिकम्, दृश्यत्वात्; ब्रह्म, मिथ्या, व्यवहारविषयत्वात्; असद्विलक्षणत्वाद्वा; शुक्तिरूप्यवदित्याभाससाम्यम्।

*ननु*—*न*; जगतो व्यावहारिकसत्त्वबाधे व्यवहारानुपपत्तिः, ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्चेति प्रतिकूलतर्कपराघातेन तयोरसाधकत्वात्, प्रकृते च प्रतिकूलतर्कस्य निरसिष्यमाणत्वात्। किञ्च प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वम्? प्रतिभासमात्रशरीरत्वं वा? आद्ये देहात्मैक्ये व्यभिचारः, अप्रयोजकत्वञ्च। द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम्। एवं ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्ध-

---

(१) 'जगतोऽव्यावहारिकत्वे साध्ये' इति तरङ्गिण्याधृतः पाठः।

अद्वैतसिद्धिः

विषयत्वरूपो हेतुरसिद्धः, वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽप्यप्रयोजकः। एवमसद्विलक्षणत्वमपि ब्रह्मण्यसिद्धमेव। क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यसत्त्वम्, तद्विलक्षणत्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपम्, तच्च शुद्धे ब्रह्मणि नास्त्येव। नच—बाध्यत्वमसत्त्वम्, तद्विलक्षणत्वं चाबाध्यत्वम्, तच्च ब्रह्मण्यस्त्येवेति—वाच्यम्; अबाध्यत्वेन बाध्यत्वलक्षणमिथ्यात्वसाधने विरोधात्, शुक्तिरूप्यदृष्टान्तस्य साधनविकलत्वाच्च, शून्यवादस्याग्रे निराकरिष्यमाणत्वाच्च ॥

तरङ्गिणी

व्यवहारविषयत्वरूपो हेतुरसिद्धः, वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽप्यप्रयोजकः; एवमसद्विलक्षणत्वमपि ब्रह्मण्यसिद्धमेव; क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यसत्त्वम्, तद्विलक्षणत्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपम्, तच्च शुद्धे ब्रह्मणि नास्त्येव। नच—बाध्यत्वमसत्त्वम्, तद्विलक्षणत्वमबाध्यत्वम्, तच्च ब्रह्मण्यस्त्येवेति—वाच्यम्, अबाध्यत्वेन बाध्यत्वलक्षणमिथ्यात्वे साध्ये विरोधात्। शुक्तिरूप्यदृष्टान्तस्य

न्यायामृतकण्टकोद्धारः

व्यभिचारः, अप्रयोजकत्वं च। द्वितीये दृष्टिसृष्टिपक्षे सिद्धसाधनम्। एवं सोपाधिकस्य ब्रह्मणो मिथ्यात्वे साध्ये सिद्धसाधनम्, निरुपाधिकस्य मिथ्यात्वे साध्ये हेतोरसिद्धिः। नच—वृत्तिविषयत्वं विवक्षितमिति—वाच्यम्; अप्रयोजकत्वादिति—चेत्, न; उभयथाऽप्यदोषात्, देहात्मैक्यभ्रमाभावस्य प्रागुक्तत्वेन न तत्र व्यभिचारः। तदङ्गीकारे वा देहात्मैक्यविवेकबाध्यत्वात्। अप्रयोजकत्वं च मिथ्यात्वानुमानेऽप्यविशिष्टम्। नच—प्रतिभासमात्रशरीरत्वपक्षे सिद्धसाधनम्, तस्य प्रतिकर्मव्यवस्थाद्यनुपपत्त्याऽनिष्टत्वेन सिद्धसाधनानवकाशात्। निरुपाधिकस्यैव मिथ्यात्वसाधनाद् न सिद्धसाधनम्। नच हेत्वसिद्धिः; वृत्तिविषयत्वस्य निरुपाधिके व्यवस्थापितत्वेन व्यवहारविषयत्वसिद्ध्यविरोधात्। नाप्यप्रयोजकत्वम्; मूलानुमानेऽपि साम्यात्, अनुकूलतर्काणां च निरसिष्यमाणत्वात्। *असदिति* (३२५)॥ *ननु* असत्त्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, तद्विलक्षणत्वं हि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वम्। नच तद् ब्रह्मण्यस्ति, इत्यसिद्धिः। किंच बाध्यत्वमसत्त्वम्, तद्विलक्षणत्वं चाबाध्यत्वम्। नच तेन बाध्यत्वरूपमिथ्यात्वसाधनं सम्भवति; विरोधात्, दृष्टान्तस्य साधनवैकल्याच्चेति—चेत्, न; असद्विलक्षणपदेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

द्वारेति* ॥ चक्षुरादिजन्यवृत्तिप्रत्यभिज्ञानादीत्यर्थः। अज्ञातत्वावच्छेदकघटाद्यस्वीकारे चक्षुरादिजन्यवृत्तेर्विषयेन्द्रियसम्बन्धजन्याया अनुपपत्तिः, पूर्वदृष्टस्य दृश्यमानेनैक्यप्रत्यभिज्ञादेश्चानुपपत्तिरिति भावः। *अप्रयोजक इति* ॥ मिथ्यात्वाभावेऽपि ब्रह्मणि मिथ्याभूतवृत्तिविषयत्वस्य सम्भवादिति भावः। ब्रह्मणः साक्षित्वादिना तत्र बाधकप्रमाणं नावतरतीत्यपि बोध्यम्। *तच्चेति* ॥ सत्तादात्म्य-तत्त्वान्यतरवत्त्वरूपमुक्तार्हत्वं निर्धर्मके शुद्धब्रह्मणि नास्ति, किंतु तदुपहितब्रह्मणीत्यर्थः। शुद्धे स्वीकृतमपि तदप्रयोजकमित्याशयेनाह—*शून्यवादस्येति* ॥ दृग्दृश्ययोस्तादात्म्यमनुपपन्नम्। तस्य हि सम्बन्धान्तरसत्त्वे तस्यापि सम्बन्धान्तरमित्यनवस्था। सम्बन्धान्तरासत्त्वे तु न तस्य सम्बन्धत्वमुपपद्यते; असम्बन्धत्वात्। अतस्तस्य मिथ्यात्वं स्वीक्रियते। तथाच स्वप्नेन्द्रजालादाविवानुपपत्तिर्न दोष इत्यसम्बन्धस्यापि सम्बन्धत्वम्। एवं तस्यैव तदनुयोगित्वप्रतियोगित्वविशिष्टरूपेण दृश्य-दृशोरपि मिथ्यात्वं युक्तम्। शुद्धायास्तु दृशस्तद-

न्यायामृतसौगन्ध्यम्

साधनम्, निरुपाधिके हेतुरसिद्धः, एवमसद्विलक्षणत्वमपि ब्रह्मण्यसिद्धम्; क्वचिदप्युपाधौ प्रतीत्यनर्हत्वं ह्यसत्त्वम्। तन्नास्ति शुद्ध इति चेत्, *न*; सुखानुभवपर्यन्तव्यवहारस्यापि स्वाप्निकव्यवहारवद्व्यावहारिकत्वात्। *एतेन*—स एवायं घट इति प्रत्यभिज्ञया जगतो व्यावहारिकत्वसिद्धिरिति—

न्यायामृतम्

स्सत्यत्वश्रुतिश्चानुमानविरोधादप्रमाणम् । विपक्षे च गौरवम् । व्यवहृति-व्यवहार्ययोः संबन्धान्तराभावात्, सर्वव्यवहार्यं व्यवहृतावध्यस्तमित्यादि च बाधकमिति सुवचत्वात् । *इत्याभाससाम्यम्* ॥

---

अद्वैतसिद्धिः

तस्माद् न दृश्यत्वादीनामाभाससाम्यमिति सिद्धम् ॥ *इति दृश्यत्वादीनामाभाससाम्यभङ्गः* ॥

---

तरङ्गिणी

साधनविकलत्वाच्च, शून्यवादस्याग्रे निराकरिष्यमाणत्वात् । तस्माद् न दृश्यत्वादीनामाभाससाम्यम्—इति, *अत्रोच्यते* ; यत्तावदुक्तं जगतोऽव्यावहारिकत्वानुमाने व्यवहारानुपपत्तिरूपप्रतिकूलतर्कपराहतिरिति, *तन्न* ; सुखानुभवपर्यन्तव्यवहारस्याप्यव्यावहारिकत्वेनाप्रतिकूलत्वात् ; स्वप्नोत्थापिततर्कवत् । इहापि प्रतिकूलतर्कस्य वक्ष्यमाणत्वाच्च । *यच्चोक्तम्*—...त्यादि तदपि न ; देहात्मैक्ये हेतोरेवाभावाद् न व्यभिचारः । दृष्टिसृष्टिपक्षस्य चाप्रामाणिकत्वेन सर्वैरङ्गीकाराद् न तस्मिन् साध्ये सिद्धसाधनम् । यच्चोक्तमनुपाधिकस्य न व्यवहार इति, तथा सति तस्यासिद्ध्यापत्त्या तद्व्यवहारस्यावश्यं वाच्यत्वात् । *यच्चोक्तम्*—ब्रह्म क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हमिति, *तदपि न* ; शुद्धस्य ब्रह्मणो भूम्नः "स भगवः कस्मिन् प्रतिष्ठितः ? स्वे महिम्नी"ति प्रश्न-प्रतिवचनाभ्यां स्वोपाधावेव प्रतीत्यर्हत्वाद् नासिद्धिः । एतस्य शुक्तिरूप्यादावपि सत्त्वाद् नासिद्धिः ; निराकरिष्यमाणशून्यवादस्यानिष्टत्वेन परं प्रत्यापाद्यमानत्वात्, जगन्मिथ्यात्वे शून्यवादापाताच्च, मिथ्यात्वातिरिक्तस्य तुच्छत्वस्याभावादित्युक्तत्वात् । तस्माद् युक्तमाभाससाम्यम् ॥

*ननु* आभाससाम्यं कथं दोषः ? इति चेत्, यथायथं सर्वदोषज्ञापकतया । तथाहि—यस्मिन्नाभासे वादि-प्रतिवादिभ्यां यो दोषो ज्ञातः, तद्दोषेतरसकलतदाभासगतसाधक-बाधकवत्तया ज्ञायमानायां स्थापनायां तत्र तस्यापि दोषस्योपस्थितिर्भवति, इति तादृशसकलदोषोत्थापकतया तस्य दोषत्वमिति—प्रोचुः ॥

व्यासाद्रिस्रुततर्काम्बुपूरैः पक्षयुगं युजि । न्यायामृततरङ्गिण्यां मृषायुक्तीतरे समे ॥

*इति दृश्यत्वादीनामाभाससाम्यम्* ॥

---

न्यायामृतकण्टकोद्धारः

सत्त्वेन प्रतीतिविषयत्वस्य विवक्षितत्वात् । नचैवं पूर्वाभेदः ; पूर्वं व्यवहारशब्देनाभिलापस्य विवक्षितत्वात् । अथवा असद्विलक्षणत्वं विवक्षितम् । नच—एवं ब्रह्मण्यसिद्धिः ; ब्रह्मणो भावात्मकत्वादिति—वाच्यम् ; तस्य "सत्यं ज्ञानमि"त्यादिश्रुत्या भावरूपत्वावगमात् । नच तुच्छे व्यभिचारः ; तत्रापि बाध्यत्वरूपमिथ्यात्वसत्त्वादिति । नच विपक्षे बाधकाभावादप्रयोजकत्वम् , अत आह—*विपक्षे चेति* ॥

*इति दृश्यत्वादीनामाभाससाम्यम्* ॥

---

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

संसर्गेण न मिथ्यात्वसिद्धिः ; दृग्दृश्यसम्बन्धानुपपत्तिरूपतर्कस्य तादृशसम्बन्धानुयोगि-प्रतियोगिनोरेव मिथ्यात्वप्रापकत्वात् । *अत एवोक्तमाचार्यैर्बौद्धाधिकारे*—'तस्यासंसृष्टत्वेन न तत्र तर्कावतारः, तर्कस्य संसृष्टमादायैव प्रवृत्तेः' इति ॥ *इति दृश्यत्वादीनामाभाससाम्यभङ्गः* ॥

---

न्यायामृतसौगन्ध्यम्

*निरस्तम्* ; स्वप्नवदुपपत्तेः। देहात्मैक्येत्यशुद्धम् ; सप्रकारकज्ञानबाध्यत्वं हि प्रातिभासिकत्वम्। तच्च देहात्मभेदज्ञानबाध्ये देहात्मैक्येऽस्त्येव। दृष्टिपक्षस्य सर्वकार्य-कारणभावमर्यादापलापकस्य निरसिष्यमाणत्वात्। निरुपाधिकेत्यशुद्धम् ; तस्यासिद्ध्यापत्तेः, वेदान्तानां वैयर्थ्यापत्तेश्च ॥

यत्तु—"अचिन्त्यमव्यवहार्यमि"त्यादिश्रुत्याऽव्यवहार्यब्रह्मणः स्वत एव सिद्धिरुक्तेति, *तन्न* ; अव्यवहार्यादिशब्दैरेव व्यवह्रियमाणत्वात्। क्वचिदप्युपाधावित्यशुद्धम् ; शुद्धस्य ब्रह्मणो भूम्नः "स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नी"ति प्रश्न-प्रतिवचनाभ्यां स्वोपाधावेव प्रतीत्यर्हत्वात्, शून्यवादस्या-निष्टत्वेन परं प्रत्यापाद्यमानत्वात्, जगन्मिथ्यात्वेऽपि तदापत्तेस्तुल्यत्वाच्च। नच—सर्वासत्त्व एव तदापत्तिः, तच्च नास्ति मे ; अधिष्ठानस्य ब्रह्मणः सत्त्वस्वीकारात्, इति—वाच्यम् ; प्रमाणासिद्धस्य त्वन्मते (१)मिथ्यात्वात्, ब्रह्मणः प्रमाणागोचरत्वेनाप्रामाणिकत्वात् सुतरां तदापत्तेः ॥

*इति दृश्यत्वादीनामाभाससाम्यम्* ॥

---

सौगन्ध्यविमर्शः

(१) अस्मन्मते प्रमाणासिद्धत्वं न मिथ्यात्वप्रयोजकम् ; शशशृङ्गादीनामपि मिथ्यात्वापत्तेः, किन्तु बाध्यत्वमेव, तच्च न ब्रह्मणोऽस्ति, इति न ब्रह्मणोऽपि मिथ्यात्वापातः। *इति दृश्यत्वादीनामाभाससाम्यभङ्गः* ॥

---

इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-समव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैत-सिद्ध्योः दृश्यत्वादीनामाभाससाम्यविचारः ॥

---

# अथ प्रत्यक्षयोग्यसत्त्वविचारः

——:०:——

### न्यायामृतम्

'सन् घटः' इत्यादिप्रत्यक्षबाधिताश्च दृश्यत्वादयः । *ननु*—किमिदं सत्त्वम्—यत् प्रत्यक्षसिद्धम् ? परजातिर्वा ? असद्वैलक्षण्यं वा ? अर्थक्रियाकारित्वं वा ? प्रमाविषयत्वं वा ? तद्योग्यत्वं वा ? भ्रमाविषयत्वं वा ? स्वसमानाधिकरणस्वसमानकालीननिषेधाप्रतियोगित्वं वा ? अबाध्यत्वं वा ? नाद्याः ; सिद्ध-साधनात् । न चतुर्थः ; असति प्रमाणाप्रवृत्त्या तद्विषयत्वात् प्राक् सत्त्वस्य वक्तव्यतया तस्य सत्त्वादन्य-

### अद्वैतसिद्धिः

*ननु*—'सन् घटः' इत्याद्यध्यक्षबाधितविषया दृश्यत्वादय इति—चेत्, *न* ; चक्षुराद्य-ध्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेः । तथाहि—न तावत् प्रमाविषयत्वम्, तद्योग्यत्वम्, भ्रमाविषयत्वं वा तादृक् सत्त्वम् ; चक्षुराद्यगम्यभ्रम-प्रमाघटितत्वेन चक्षुराद्ययोग्यत्वात्, वक्ष्यमाणदूषणगणग्रासाच्च, तथाहि—नाद्यः ; असति प्रमाणाप्रवृत्तेः, प्रमाविषयत्वात् प्राक् सत्त्वस्य वक्तव्यत्वेन तस्य तदन्यत्वात्,

### तरङ्गिणी

प्रतिज्ञाश्रयं प्रबलप्रमाणविरोधाख्यं दोषं बाधं विवक्षुः प्रमाणज्येष्ठप्रत्यक्षविरोधं तावदाह—*सन् घट इतीति* ॥ प्रत्यक्षगृहीतसत्त्वविरोधिमिथ्यात्वानुमानं प्रत्यक्षबाधितम्, अग्न्यनौष्ण्यानुमानवदित्यर्थः । *ननु* न मिथ्यात्वानुमानस्य प्रत्यक्षविरोधः ; प्रत्यक्षगृहीतसत्त्वस्यानुमानगृहीताविरोधित्वात्, अनुमान-गृहीतविरोधिसत्त्वस्य च प्रत्यक्षेणाग्रहादित्यभिप्रायेण सत्त्वं पृच्छति—*ननु किमिदमिति* ॥ प्रत्यक्ष-सिद्धमनुमानविरोधीति शेषः ॥ *परजातिरिति* ॥ द्रव्यत्व-गुणत्व-कर्मत्वव्यापिका सत्ताजातिर्वेत्यर्थः । आद्य-द्वितीय-तृतीयान् निराकरोति—*नाद्या इति* । *सिद्धसाधनादिति* ॥ अनुमीयमानमिथ्यात्वेना-विरुद्धतया परजात्यादिरूपस्य सत्त्वस्य मिथ्यात्ववादिना मयाऽपि प्रत्यक्षविषयत्वस्वीकारादेतादृशसत्त्वं प्रत्यक्षविषय इति वचनं मां प्रति सिद्धसाधनमित्यर्थः । चतुर्थेऽपि स्वातन्त्र्येण स्वाभावाविषयकप्रमा-विषयत्वं वा ? यथाकथंचित् प्रमाविषयत्वं वा ? साक्षात् प्रमाविषयत्वं वा ? सत्त्वप्रकारकप्रमा-विषयत्वं वा ? असत्त्वाप्रकारकप्रमाविषयत्वं वा ? इति विकल्पानभिसन्धायाद्यं दूषयति—*असतीति* ॥

### न्यायामृतकण्टकोद्धारः

*स्वसमानाधिकरणेति* ॥ अत्र च स्वसमानकालीननिषेधाप्रतियोगित्वोक्तौ गोत्वादेर्ध्वंसनिष्ठा-त्यन्ताभावप्रतियोगित्वेनाव्याप्तिर्मा भूत्, इत्यतः—*स्वसमानाधिकरणेति* ॥ तावन्मात्रोक्तौ घटादेरपि स्वसमानाधिकरणध्वंसप्रतियोगित्वेनाव्याप्तिः स्यात्, इत्यतः—*स्वसमानकालीनेति* । *सिद्धसाधना-दिति*॥ *सिद्धस्य=मिथ्यात्वविरोधिनः सत्त्वस्य, *साधनात्=विषयीकरणात्, इति यावत् । तेन प्रत्यक्षे कथं सिद्धसाधनत्वदोषः ? इति निरस्तम् । *असतीति*॥ प्रमाविषयत्वातिरिक्तमेव सत्त्वं वक्तव्यम्, अन्यथा

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*चक्षुरादीति* ॥ चक्षुरादिरूपं यदध्यक्षं प्रत्यक्षप्रमाणम्, तद्योग्यस्य मिथ्यात्वविरोधिनः सत्त्वस्य निरूपणासम्भवादित्यर्थः । मिथ्यात्वाभावरूपं सत्त्वं मिथ्यात्वविरोधि, नतु चक्षुरादेर्योग्यम् । तद्योग्यमपि तद्रूपब्रह्मतादात्म्यरूपं सत्त्वं न मिथ्यात्वविरोधीति भावः । *प्रमाणाप्रवृत्तेः = प्रमारूपवृत्तेर्विषयतासम्बन्धेनोत्पा-दकसामग्र्यभावात् । *प्रमाविषयत्वात् = विषयितासम्बन्धेन प्रमोत्पत्तेः । *तस्य = सत्त्वस्य । *तदन्यत्वात् =

### न्यायामृतसौगन्ध्यम्

*ननु*—'सन् घटः' इत्याद्यध्यक्षबाधिता दृश्यत्वादय इत्ययुक्तम् ; प्रत्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वा-

न्यायामृतम्

त्वात्, असतोऽपि व्यवसायद्वारा साक्षाच्चासत्त्वप्रकारकप्रमाविषयत्वाच्च, सत्त्वप्रकारकप्रमाविषयत्वे चात्माश्रयात्, असत्त्वाप्रकारकप्रमाविषयत्वे चासत्त्वस्य सत्त्वनिरूप्यत्वेनान्योन्याश्रयात्। अत एव न पञ्चमः। न षष्ठः; सतोऽप्यसत्त्वप्रकारकभ्रमविषयत्वात्, सत्त्वप्रकारकभ्रमाविषयत्वे चात्माश्रयात्, असत्त्वाप्रकारकभ्रमाविषयत्वे चान्योन्याश्रयात्। न सप्तमः; संयोगादावव्याप्तेः। शुक्तिरूप्यादेरधिकरणाद्यभावेनातिव्याप्तेश्च। नाप्यष्टमः; बाधस्य प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेध-

अद्वैतसिद्धिः

सत्त्वनिरूपणं विना सदर्थविषयत्वरूपप्रमात्वस्य निरूपणे चान्योन्याश्रयात्, मिथ्याभूतस्य शुक्तिरजतसंसर्गस्य व्यवसायद्वारा साक्षाच्च निषेध्यत्वादिना प्रमाविषयत्वाभ्युपगमाच्च। नापि द्वितीयः; योग्यताया अनिरूपणात्। न तृतीयः; असिद्धेः, सर्वस्यैव क्षणिकत्वादिना भ्रमविषयत्वाभ्युपगमात्। अत एव नासत्त्वाप्रकारकप्रमाविषयत्वमपि; अन्योन्याश्रयाच्च। नापि सत्त्वप्रकारकप्रमाविषयत्वम्; आत्माश्रयात्। नाप्यसत्त्वप्रकारकभ्रमाविषयत्वं सत्त्वम्; अन्योन्याश्रयात्। नापि प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः; आत्माश्रयात्। नापि सत्ताजातिः, अर्थक्रियाकारित्वम्,

तरङ्गिणी

असता सह संयोगादीन्द्रियसन्निकर्षव्याप्त्याद्यभावेनासति स्वातन्त्र्येण प्रमाणाप्रवृत्तेः प्रमाणप्रवृत्त्यर्थं प्रमाणप्रवृत्तेः पूर्वं स्वरूपसत्यत्वं वक्तव्यम्। तच्च प्रमाणप्रवृत्त्यधीनप्रमायां निर्वक्ष्यति, इति सत्त्व-प्रमयोरन्योन्यापेक्षा स्यादित्यर्थः। *ननु* स्वातन्त्र्येण प्रमाणप्रवृत्त्यर्थमेव संयोगादीन्द्रियसन्निकर्षापेक्षा, अन्यार्थप्रवृत्तप्रमाणजन्यप्रमाविषयत्वं तु संयोगादिसन्निकर्षादिकं विनैव भविष्यतीति न सत्त्व-प्रमयोरन्योन्यापेक्षा, इति यथाकथंचित् प्रमाविषयत्वमेव सत्त्वमस्त्विति द्वितीयं पक्षं दूषयति—*असतोऽपीति* ॥ तृतीयं दूषयति—*साक्षाच्चेति* ॥ चतुर्थं दूषयति—*सत्त्वप्रकारकेति* ॥ पञ्चमं दूषयति—*असत्त्वेति* । *अत एवेति* ॥ चतुर्थपक्षवद् विकल्प्य तद्दूषणेभ्य एवेत्यर्थः ॥ *सतोऽपीति* ॥ तथाचासम्भव इत्यर्थः। चतुर्थ-पञ्चम-षष्ठानां सत्त्वप्रकाराणां प्रमा-भ्रमघटितत्वेन प्रत्यक्षायोग्यत्वमपि बोध्यम् ॥ *शुक्तिरूप्ययोरिति* ॥ शुक्तेः

न्यायामृतकण्टकोद्धारः

**प्रमाविषयत्वरूपं सत्त्वं कदा स्यादित्युक्ते प्रमाणप्रवृत्तौ सत्यामिति वक्तव्यम्। प्रमाणप्रवृत्तिश्च कदा स्यात्, सत्त्वे सति, इत्यन्योन्याश्रयः। *ननु* सत्त्वे सति प्रमाणप्रवृत्तिरित्येतत् कुत इति? अत उक्तम्—*असति प्रमाणाप्रवृत्त्येति* ॥ *असत्त्वस्येति* ॥ सत्त्वाभावस्यैवासत्त्वादिति भावः। प्रमाघटितत्वेन प्रत्यक्षाविषयत्वाच्चेत्यपि बोध्यम् ॥**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रमाविषयतान्यत्वात्। *व्यवसायेति* ॥ 'इदं रजतं जानामी'त्यस्यां भ्रमस्य प्रमायां व्यवसायांशे रजतस्य विशेषणत्वात्, 'नेदं रजतमि'त्यस्यां निषेधस्य प्रमायां निषेधांशे रजतस्य विशेषणत्वादित्यर्थः। *सर्वस्येति* ॥ क्षणिकार्थास्वीकर्तृभिरिति शेषः। *अत एव=सर्वत्र क्षणिकत्वादिभ्रमविशेष्यत्वादेव। *विषयत्वमपीति* ॥ तादृशसत्त्वमित्यनुषज्यते। *आत्माश्रयादिति* ॥ यद्यपि पूर्वोक्तान्योन्याश्रयस्थल आत्माश्रयत्वमप्यस्ति, प्रकृतेऽप्यन्योन्याश्रयत्वमस्ति; सत्त्वप्रमानिरूपणे तद्विषयत्वरूपसत्त्वनिरूपणम्, तन्निरूपणे च तादृशप्रमानिरूपणमिति; तथाप्यन्योन्याश्रयत्वस्य पूर्ववत् प्रकृते ज्ञातुं शक्यत्वादात्माश्रयत्वस्यापि प्रकृतवत् पूर्वं बोद्धुं शक्यत्वादेकैकमुक्तम्। *प्रतिपन्नेत्यादि* ॥ त्रैकालिकस्य स्वसत्ताभावस्य स्वधीविशेष्यदेश-कालावच्छिन्नत्वरूपेण स्वस्मिन् या धीः—'रजतमत्र नास्ति नासीद् न भविष्यती'त्यादिरूपा,

न्यायामृतम्

त्वेनान्योन्याश्रयात्, *उच्यते* ; तत्रात्मनि यत् सत्त्वम्, तदेवेह मम। उक्तं हि—"यादृशं ब्रह्मणः सत्त्वं तादृशं स्याद् जगत्यपी"ति। तत्र तदनिर्वाच्यं चेत्, इहापि तथाऽस्तु; सत्त्वानिर्वचनेऽपि तद्वदेव स्वरूपपारमार्थ्योपपत्तेः। यदि च तत्रानृतव्यावृत्तिमात्रम्, अबाधितस्वरूपं वा सत्त्वम्; बाधश्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधः, ज्ञानेन निवृत्तिर्वेति नान्योन्याश्रयः, तर्हीहापि तथाऽस्तु; ब्रह्मसाम्यस्यैवापेक्षितत्वात्, अपरिच्छिन्नत्वं तत्र सत्त्वमिति चेत्, *न* ; शुक्ति-रूप्ययोः परिच्छिन्नत्वे, ब्रह्म-शून्ययोश्चापरिच्छिन्नत्वे तुल्येऽपि सत्त्वासत्त्वयोर्व्यवस्थितत्वेन जगत्युक्तपारिभाषिकसत्त्वाभावस्य ब्रह्मणि परिच्छिन्नत्वरूपसत्त्वाभावस्यैवेष्टत्वात्। सौहार्दे तु—

अद्वैतसिद्धिः

असद्वैलक्षण्यं वा ; एतेषां मिथ्यात्वाविरोधित्वेन तत्प्रत्यक्षेण मिथ्यात्वानुमाने बाधाभावात्। नापि वेदान्त्यभिमतमिथ्यात्वाभावः सत्त्वम् ; तुच्छेऽतिव्याप्तेः। नाप्यसद्विलक्षणत्वे सत्यनारोपितत्वम् ; अनारोपितत्वं ह्यारोपाविषयत्वम्, तच्चासम्भवि ; सर्वस्यापि क्षणिकत्वादिनाऽऽरोपविषयत्वात्। नाप्यस्तित्वप्रकारकप्रमां प्रति कदाचित् साक्षाद्विषयत्वम्, कालसंबन्धित्वं वा सत्त्वम्, अस्तित्वं च वर्तमानत्वम्, नतु सत्त्वम्, अतो नात्माश्रयः ; अतीतादिरपि कदाचिद् वर्तत एवेति नाऽव्याप्तिः, आरोपितं च कालत्रयासम्बन्धित्वेन बाधेन बोधितम्, इति न द्वितीयलक्षणेऽतिव्याप्तिरिति वाच्यम्; प्रमात्वस्य सत्त्वघटितत्वेन चक्षुराद्ययोग्यत्वेन च पूर्वोक्तदोषात्, वर्तमानत्वप्रकारकप्रमाविषयत्वेऽपि मिथ्यात्वाविरोधाच्च। द्वितीयमपि न मिथ्यात्वविरोधि ; शुक्तिरूप्यस्यापि प्रतिभासकालसम्बन्धित्वात्, बाधेन तात्त्विककालत्रयसम्बन्धनिषेधेऽप्यतात्त्विककालसंबन्धस्यानिषेधात्। नापि तात्त्विककालसम्बन्धित्वं तत्; तात्त्विकत्वस्याद्याप्यनिरूपणात्, निरूपणे वा शेषवैयर्थ्यात्। *ननु*—भवन्मते यत् सत्त्वं ब्रह्मणि, तदेवेह मम। उक्तं हि—'यादृशं ब्रह्मणः सत्त्वं तादृशं स्याद् जगत्यपि। तत्र स्यात् तदनिर्वाच्यं चेदिहापि तथाऽस्तु नः॥' इति। नच—तत्रापरिच्छिन्नत्वं सत्त्वम्, तच्च न जगतीति—वाच्यम्;

तरङ्गिणी

परिच्छिन्नत्वेऽप्यसत्त्वाभावात्, शून्यस्यापरिच्छिन्नत्वेऽपि सत्त्वाभावादव्याप्त्यतिव्याप्तिभ्यां नापरिच्छिन्नत्वं सत्त्वमित्यर्थः। शुक्ति-रूप्ययोः परिच्छिन्नयोर्मध्ये रूप्य एवासत्त्वम्, नतु शुक्तौ ; तस्या अधिष्ठानत्वेनासत्त्वाभावात्। ब्रह्म-शून्ययोरपरिच्छिन्नयोर्मध्ये ब्रह्मण्येव सत्त्वम्, नतु शून्यस्येत्येवं व्यवस्थितत्वेन नियतत्वेनापरिच्छिन्नत्वातिरिक्तं सत्त्वमन्यदेव वाच्यम्। तच्च भ्रमाधिष्ठानत्वेन शुक्तिकादिजगतोऽपि भविष्यतीति भावः॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तद्विषयत्वस्य शुक्तिरूप्यादिनिष्ठस्याभाव इत्यर्थः। स्वपदैः शुक्तिरूप्यादेरेव ग्रहणम्। *एतेषाम्=प्रमाविषयत्वादीनामसद्विलक्षणत्वपर्यन्तानामुक्तानाम्। *मिथ्यात्वाविरोधित्वेन=मिथ्यात्वात्यन्ताभावमिथ्यात्ववच्छेद-मिथ्यात्वासमानाधिकरणधर्मरूपत्वाभावेन। *बाधाभावात्=बाधहेत्वाभासस्य त्वया वक्तुमशक्यत्वात्। *तत्प्रत्यक्षेणेति* ॥ सत्तायाः प्रत्यक्षसंभवेऽप्यन्ययोर्न स इत्यपि बोध्यम्; प्रत्यक्षबाधस्यैवोपक्रान्तत्वेनाप्रत्यक्षबाधस्य प्रकृतानुपयोगात्। *अस्तित्वेत्यादि* ॥ अस्तित्वप्रकारतानिरूपितं प्रमाविशेष्यत्वमित्यर्थः। *वर्तमानत्वम्=कालसम्बन्धित्वम्, नतु तत्तत्कालवृत्तित्वम्; अननुगमात्, प्रयोजनाभावाच्च। *चक्षुराद्ययोग्यत्वेन चेति* ॥ अनेन मिथ्यात्वाभावाविरूपपूर्वोक्तस्याप्ययोग्यत्वं सूचितम्। *बाधेन तात्त्विकेति* ॥ तात्त्विकत्वेन कालसम्बन्धस्य निषेधेऽपि कालसम्बन्धत्वेनानिषेधात्, कालसम्बन्धत्वेन निषेधपक्षेऽपि प्रतियोग्यभावयोर्भिन्नसत्ताकत्वेनाविरोधादित्यर्थः। *अनिर्वाच्यम्=निर्वक्तुमशक्यम्। *इह=

अद्वैतसिद्धिः

तुच्छस्यापरिच्छिन्नत्वेऽपि सत्त्वानभ्युपगमाद् नापरिच्छिन्नत्वं सत्त्वम्, किं त्वन्यदेव, तच्च ब्रह्मणीव भ्रमाधिष्ठानत्वात् शुक्तिकादेरपि भविष्यतीति—चेत्, नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य यदेव भवतां गोत्रं तदेव ममापि गोत्रमिति वदतो वरस्य भ्राता भवान्!!! यतो जामातृ-श्वशुरयोरेकगोत्रत्वे विवाहानुपपत्तिवद् जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात्। तथाहि—स्वप्रकाशाद्वितीयचैतन्य-रूपत्वमेव ब्रह्मणः सत्त्वम्; तदेव चेद् जडस्यापि जगतः, तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव

तरङ्गिणी

*ननु* जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात्, *तथाहि*—स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वम्, तदेव चेद् जडस्यापि जगतः, तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाश-

न्यायामृतकण्टकोद्धारः

*अत्र कश्चित्*—नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य यदेव भवतां गोत्रं तदेव ममापीति वदतो वरस्य भ्राता भवान्; यतो जामातृ-श्वशुरयोरेकगोत्रत्वे विवाहानुपपत्तिवद् जगद्ब्रह्मणोरेक-सत्त्वे सत्त्वमेव न स्यात्। तथाहि—स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वम्, तदेव चेद् जडस्यापि जगतः, तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः—इत्याह, तदेतदज्ञाताशयस्य वल्गनम्, स्वव्याहतं च। तथाहि—न वयं ब्रह्मसत्त्वमेव जगत्सत्त्वमिति ब्रूमः, येन श्वशुरं प्रति त्वद्गोत्रमेव मद्गोत्रमिति वक्तृवरभ्रातृत्वं स्यात्, किन्तु यादृशं ब्रह्मणः सत्त्वं निरूप्यते, तादृशमेवास्माभिः प्रपञ्चे निरुच्यत इति। न ह्येतावता ब्रह्मसत्त्वमेव जगत्सत्त्वं भवति। नहि त्वत्पुत्रसदृशो मत्पुत्र इत्युक्ते पुत्रैक्यम्, किन्तु गुणसाम्यमेव। एवं प्रकृते

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रपञ्चे। तथा चावयोर्निर्वचनासामर्थ्ये मामेव प्रति न पर्यनुयोग इति भावः। *तुच्छस्येति* ॥ स्वसमानसत्ताकाभावप्रतियोगित्वस्यैव परिच्छेदरूपत्वेनेत्यादिः। नच प्रपञ्चेऽपि परिच्छेद इव तदत्यन्ताभावोऽप्यस्ति; परिच्छेदस्य मिथ्यात्वात्, तथाच तुच्छानुधावनं व्यर्थमिति—वाच्यम्; परिच्छिन्नभेदस्यैवोक्तत्वेन तस्य प्रपञ्चे विरहात्। *अन्यदेव = अबाध्यत्वोपलक्षितस्वरूपत्वमेव। स्वप्रकाशेत्यादि* ॥ वस्तुगत्या स्वप्रकाशाऽद्वितीया चाबाध्यत्वोपलक्षिता या चित्, तत्स्वरूपं ब्रह्मणो धर्मत्वेन कल्पितं सत्त्वम्। तदेव यदि जगतः सत्त्वम्, तदा जडेभ्योऽत्यन्तभिन्नत्वाद् जडधर्मत्वं वक्तुमशक्यम्, अत्यन्तभेदे धर्म-धर्मिभावस्य त्वयाऽप्यस्वीकारात्। तथाच जडात्यन्तभिन्नत्वेन जडत्वविरोध्यपि तादृशसत्त्वं कल्पिताद् जडतादात्म्याद् धर्म इति वाच्यम्। ततश्च ब्रह्मणोऽत्यन्ताभिन्नमपि तत् कल्पितेन ब्रह्मभेदेन यथा ब्रह्मधर्मः, तथा जडादत्यन्ताभिन्नमपि कल्पितेन जडतादात्म्येन जडानां धर्म इति युज्यते; परन्तु यद् ब्रह्मण्यारोपितम्, तत्रैव ब्रह्मधर्मस्य तादृशसत्त्वादेः संसर्गारोपः, शुक्तिधर्मस्य सत्त्वेदन्त्वादेः शुक्त्यारोपितरजतादावेव संसर्गारोपवत्। तथाच रजतत्वविरोधिनः शुक्तिसत्त्वादेः संसर्गारोपान्यथानुपपत्त्या रजतस्य शुक्तावारोपितत्वसिद्ध्येव जडत्वविरोधिब्रह्मसत्त्वादेरारोपान्यथानुपपत्त्या जडानां ब्रह्मण्यारोपितत्वसिद्ध्या मिथ्यात्वसिद्धिरिति भावः। *ननु*—ब्रह्मणोऽबाध्यत्वोपलक्षितस्वरूपत्वे भ्रमाधिष्ठानत्वमेव प्रयोजकम्, तथाच शुक्त्यादिव्यावहारिकप्रपञ्चस्यापि तत एव तदस्तु, ततश्च यथा ब्रह्मस्वरूपं सत्ता, तथा शुक्त्यादि-

न्यायामृतसौगन्ध्यम्

निरुक्तेरिति—चेत्, *न*; यदेव हि तव ब्रह्मणि मिथ्यात्वविरोधि सत्त्वम्, तदेवास्माकं जगत्यपि। नच —ब्रह्मणस्तत्रापरिच्छिन्नत्वं सत्त्वम्, तच्च न जगतीति—वाच्यम्; तुच्छस्यापरिच्छिन्नत्वेऽपि सत्त्वानभ्युपगमात्। *ननु*—यथा वरसमानगोत्रत्वं कन्याया असंभवि, तथा ब्रह्मसमसत्त्वं जगत्यसंभवि।

**अद्वैतसिद्धिः**

जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः। चैतन्यस्यैवावच्छिन्नानवच्छिन्नाज्ञानविषयत्वेन सर्वभ्रमाधिष्ठानत्वाभ्युपगमाद् न भ्रमाधिष्ठानत्वेन शुक्त्यादेः सत्त्वसिद्धिः॥

**तरङ्गिणी**

सत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः, चैतन्यस्यैव चावच्छिन्नानवच्छिन्नाज्ञानविषयत्वेन सर्वभ्रमाधिष्ठानत्वाभ्युपगमाद् न भ्रमाधिष्ठानत्वेन शुक्त्यादेः सत्त्वसिद्धिरिति—चेत्, *मैवम्*; भावानवबोधात्। तवात्मनि यत् सत्त्वम्, तदेवेह ममेत्यस्य यः स्वभावो ब्रह्मणः स एव जगत इति नार्थः, किन्तु यादृशेन सत्त्वेन मिथ्यात्वप्रतिपक्षेण सत्यशब्दावगतेन ब्रह्मणि मिथ्यात्वाभावसंप्रतिपत्तिः, तादृशेन 'सन् घटः' इति प्रत्यक्षसमधिगम्येन घटादिगतेन तेन घटादेरपि मिथ्यात्वाभावसम्प्रत्यय इति। नहि स्वप्रकाशत्वादि मिथ्यात्वप्रतिपक्षभूतम्; 'सर्वं प्रमेयमि'ति ज्ञानस्य स्वप्रकाशस्यापि तव मते मिथ्यात्वात्, अवेद्यत्वादिरूपस्य स्वप्रकाशत्वयुक्तस्याद्वितीयस्य शून्यस्यापि सद्विविक्तत्वादिरूपमिथ्यात्वप्रयुक्तत्वाच्च। ब्रह्मविषयकश्रौतसत्यत्वव्यवहारप्रयोजकराहित्यस्यैव प्रपञ्चे मां प्रति त्वया सिसाधयिषिततया ब्रह्मणि सत्यत्वव्यवहारं प्रति स्वप्रकाशत्वाद्वितीयत्वादेः प्रयोजकत्वे प्रपञ्चे मिथ्यात्वानुमानेन स्वप्रकाशत्वाद्वितीयत्वादिविरहस्यैव साध्यतापत्तौ सिद्धसाधनापत्तेरिति। तस्माद् युक्तम्—

**न्यायामृतकण्टकोद्धारः**

सत्त्वनिर्वचनप्रकारसाम्यमेवायाति। अत एवाह—'यादृशं ब्रह्मणः सत्त्वं तादृशं स्याद् जगत्यपि'। किञ्चास्त्वेकत्वम्, न ह्येतावताऽपरासत्त्वं भवति, नह्येकगोत्रत्वेऽपराभावो वा परस्य गोत्राभावो वा परस्यापारमार्थिकगोत्रत्वं वा भवति, किन्तूभयोरपि वास्तवगोत्रत्वम्। यथोभयोर्ब्राह्मणयोरेकब्राह्मण्याश्रयत्वेऽन्यतरस्याब्राह्मणत्वं न भवति, तथा ब्रह्म-प्रपञ्चयोरेकसत्त्वेऽपरासत्त्वं कुतः? अपि चोभयोरेकसत्त्वे ब्रह्मण एव सत्त्वम्, न प्रपञ्चस्येति कुतः? विपरीतमेव किं न स्यात्? नच—बहूनां सत्त्वे गौरवम्, एकसत्त्वे लाघवमिति—वाच्यम्; प्रामाणिकस्य गौरवस्य न्याय्यत्वात्, प्रमाणानां वक्ष्यमाणत्वात्। *यच्चोक्तम्* ब्रह्मणि स्वप्रकाशज्ञानानन्दात्मकत्वं सत्त्वमिति, *तदतिस्थवीयः*; तथात्वे "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यत्र ज्ञानानन्दादिपदैरेव ज्ञानत्वादेर्लब्धत्वात् सत्यपदवैयर्थ्यम्, सत्यपदेन हि सत्त्वं प्रतिपाद्यम्, सत्त्वं ज्ञानत्वं चैकमेवेति भवतैवोक्तम्। किञ्च सत्यमित्यनेनैव ज्ञानानन्दादिरूपमिति प्रतीतावानन्दादिपदवैयर्थ्यम्; सत्यमित्युक्ते तथा प्रतीतेरभावाच्च। तस्माद् ब्रह्मणि ज्ञानत्वाद्यतिरिक्तं सत्त्वं त्वया निर्वाच्यम्, तादृशमेव जगत्स्वरूपाविरोधि, इति न ब्रह्मसत्त्वेऽपि जगदसत्त्वमित्याशयः॥

*अपरिच्छिन्नत्वमिति* (६३१)॥ तथाचैतादृशसत्त्वस्य जगत्यभावाद् न तस्य सत्त्वमिति भावः। एवं तर्हि परिच्छिन्नत्वं सत्त्वमित्यपि केनचिद् वक्तुं शक्यत्वेन ब्रह्मणि तादृशसत्त्वाभावात् तस्यापि सत्त्वं न स्यात्। नच शुक्ति-रूप्ययोरुभयोरपि परिच्छिन्नत्वाविशेषेऽपि सत्त्वासत्त्वयोर्व्यवस्थितत्वेन तादृश-

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

स्वरूपमपि भेदकल्पनया शुक्त्यादिधर्मः; ननु ब्रह्मधर्मसत्तादेः शुक्त्यादौ संसृष्टतयाऽऽरोपः, यद्बलाद् ब्रह्मणि शुक्त्यादेरारोप आनीयते, तत्राह—*चैतन्यस्यैवेति*॥ *अवच्छिन्नेत्यादि*॥ अवच्छिन्नं चानवच्छिन्नं

**न्यायामृतसौगन्ध्यम्**

तथाहि—स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वम्, तदेव चेद् जडस्यापि जगतः, तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तिरिति—चेत्, *न*; यः स्वभावो ब्रह्मणः, स एव जगत इति हि नार्थः, किन्तु यादृशेन सत्त्वेन मिथ्यात्वविरोधिना सत्यशब्दाधिगतेन ब्रह्मणि मिथ्यात्वाभावसंप्रतिपत्तिः, तादृशेन 'सन् घटः' इति प्रत्यक्षाधिगतेन घटादिगतेन सत्त्वेन घटादेरपि मिथ्यात्वाभावसंप्रत्ययः। न ह्यनन्याधीनापरोक्षत्वरूपस्वप्रकाशत्वाद्वितीयत्व-

न्यायामृतम्

त्रिकाल-सर्वदेशीयनिषेधाप्रतियोगिता । सत्तोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी ॥

सर्वदेश-कालसम्बन्धिनिषेधाप्रतियोगित्वं सत्त्वम् । यदवच्छिन्ने संयोगः, तदवच्छिन्ने

अद्वैतसिद्धिः

*ननु* एवमपि सर्वदेशीय-त्रैकालिकनिषेधप्रतियोगित्वमसत्त्वं तुच्छानिर्वचनीयसाधारणम्, तदभावः

तरङ्गिणी

यदेवात्मनि सत्त्वम्, तदेवेह ममेति ॥ *तं प्रतीति* ॥ त्रिकालसर्वदेशीयनिषेधं प्रतीत्यर्थः । तथाच तत्र नातिव्याप्तिरिति भावः । श्लोकं व्याचष्टे—*सर्वदेशेति* । *सम्बन्धीति* ॥ संसृष्टेत्यर्थः । सर्वावच्छेदेनेत्यपि बोध्यम् । अत एव संयोगे नाव्याप्तिरित्याह—*यदवच्छिन्न इति* ॥ वृक्षभिन्ने सर्वत्र देशे विद्यमानस्य संयोगविशेषात्यन्ताभावस्य वृक्षेऽपि सत्त्वेन सर्वदेशीयस्यापि संयोगात्यन्ताभावस्य सर्वावच्छेदेन वृत्त्यभावाद् यदवच्छिन्ने संयोगः, तदवच्छिन्ने तदत्यन्ताभावो नेति तत्राव्याप्तिः । 'सर्वसंसर्गकप्रतियोगिताके'त्यपि विशेषणम्, तेन सर्वस्मिन् काले सर्वस्मिन् देशे सर्वावच्छेदेन विद्यमानो योऽत्यन्ताभावः, तत्प्रतियोगित्वेऽप्याकाशादौ नाव्याप्तिः ; आकाशादेः समवायेनारोप्यसम्बन्धेनोक्तरूपात्यन्ताभावं प्रति प्रतियोगित्वेऽप्याकाशाद्यत्यन्ताभावस्य सर्वसंसर्गकप्रतियोगित्वाभावात्, संयोगादिना सम्बन्धेनाकाशस्य विद्यमानत्वेन तेन सम्बन्धेन तद-

न्यायामृतकण्टकोद्धारः

सत्त्वस्य पारिभाषिकत्वात् तदभावो जगतीष्ट एवेति न जगतोऽप्यसत्त्वापत्तिरित्याह—*शुक्ति-रूप्ययोरिति* (६३१) ॥ नच—एवं सति ब्रह्मसाम्यप्रतिबन्द्युररीकारो व्याकुप्येनेति—वाच्यम् ; स हि तदा स्यात्, यद्यपरिच्छिन्नत्वस्य सत्त्वशब्दार्थता स्यात्, सैव न सम्भवति ; अन्यथा सत्यानन्दादिपदानां पौनरुक्त्यापत्तेः । तस्मात् सत्त्वशब्दार्थस्यान्यस्यैव वक्तव्यतया तस्य च जगति ममेष्टत्वाद् युक्तं प्रतिबन्दिग्रहणमिति भावः । *देशकालेति* ॥ सर्वदेशकालसम्बन्धी यो निषेधः, तदप्रतियोगित्वमित्यर्थः । अत्र हि निषेधाप्रतियोगित्वं सत्यमित्युक्ते घटादावव्याप्तिः ; तस्य प्रागभावरूपनिषेधप्रतियोगित्वात्, अत उक्तम्—*सर्वदेशसम्बन्धीति* ॥ प्रागभावरूपनिषेधस्य चोपादानदेशमात्रसम्बन्धित्वेन सर्वदेशसम्बन्धित्वाभावाद् नाव्याप्तिः । एवमपि प्रागभावदशायां घट एवाव्याप्तिः ; तदा तस्य सर्वदेशसम्बन्धिनिषेधप्रतियोगित्वात् । नच—उपादानदेशातिरिक्तदेशे घटप्रागभाव-प्रध्वंसाभावयोरभावात्, अत्यन्ताभावस्य च प्रामाणिकप्रतियोगिकस्य सिद्धान्तेऽनङ्गीकाराद् न सर्वदेशसम्बन्धिनिषेधप्रतियोगित्वं तस्य, इति कथमव्याप्तिः ? इति वाच्यम् ; तथापि देशान्तरे घटसंसर्गाभावस्य सद्भावात् तदभावप्रतियोगिकोटौ घटस्यापि प्रवेशेन घटप्रतियोगिकत्वस्य च घटसंसर्गाभाव-घटप्रागभावादौ सत्त्वेन सर्वदेशसम्बन्धितादृशनिषेधप्रतियोगित्वस्य घटे सत्त्वेनाव्याप्तेर्दुष्परिहरत्वात्, अतः 'सर्वकालसम्बन्धी'त्युक्तम् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

च तद् अवच्छिन्नानवच्छिन्नमिति समाहारद्वन्द्वः, तादृशं यदज्ञानविषयत्वं तेनेत्यर्थः । रूप्यादिभ्रमोपादानाज्ञानविषयत्वं शुक्त्याद्यवच्छिन्नम्, शुक्त्यादिप्रपञ्चभ्रमोपादानाज्ञानविषयत्वमनवच्छिन्नम्, तदुभयमपि चित्येव ; जडे स्वतः प्रकाशत्वाप्रसक्त्या तद्वैयर्थ्यादिति भावः । *सर्वदेशीय-त्रैकालिकनिषेधेति* ॥ कालानवच्छिन्नं यत् सर्वदेशावृत्तित्वं तद्विशिष्टात्यन्ताभावेत्यर्थः । *अनिर्वचनीयेति* ॥ प्रातीतिकेत्यर्थः । प्रातीतिक औपनिषदमते तादृशप्रतियोगित्वं सिद्धम्, माध्वमते तु तस्यैव तुच्छत्वात् तत्रैव सिद्धम् ॥

न्यायामृतसौगन्ध्यम्

चैतन्यादि मिथ्यात्वप्रतिपत्तिः ; एतादृशपारिभाषिकस्वप्रकाशत्वं घटादिसाधारणमिति दृश्यत्वभङ्ग उक्तत्वात् । अद्वितीयस्य शून्यस्यापि सद्विविक्तत्वात्, किञ्चिदवच्छिन्नचैतन्यस्य त्वयाऽपि मिथ्यात्वाङ्गीकाराच्च । एवं सर्वदेशीय-त्रैकालिकनिरवच्छिन्नवृत्तिकनिषेधाप्रतियोगित्वं सत्त्वम् ; आकाशस्य

न्यायामृतम्

तदत्यन्ताभावो नेति न तत्राव्याप्तिः, गगनादेरप्यत्यन्ताभावः केवलान्वयी नेत्युक्तत्वेन न गगनादावव्याप्तिः। तुच्छमध्यस्तं चोक्तप्रतिषेधप्रतियोगीत्युक्तत्वाद् नातिव्याप्तिरपि(१) ॥

अद्वैतसिद्धिः

सत्त्वम्, तच्च ब्रह्मणीव जगत्यपीति ब्रूमः। नच संयोगेऽव्याप्तिः; तस्याव्याप्यवृत्तित्वानभ्युपगमात्, तदभ्युपगमे च व्याप्यवृत्तित्वेनाभावो विशेषणीयः। नापि वियत्यव्याप्तिः; तदत्यन्ताभावस्य केवलान्वयित्वानङ्गीकारेण लक्षणस्य विद्यमानत्वादेव। नहि कस्मिंश्चिद् देशे काले वा तस्याभावः; नित्यत्व-विभुत्वभङ्ग-

तरङ्गिणी

त्यन्ताभावासम्भवात्, तदेवाह—*गगनादेरपीति* ॥ *केवलान्वयी नेति* ॥ सर्वसंसर्गकप्रतियोगिताको नेत्यर्थः। *उक्तत्वेनेति* ॥ उक्तप्रायत्वेनेत्यर्थः। "देश-कालावपि 'सदा सर्वत्र देश-कालावि'त्यबाधितप्रतीत्या प्रमेयत्वाभिधेयत्ववत् स्ववृत्ती, अन्योन्यवृत्ती च; अन्यथा त्वन्मतेऽपि तयोः प्रातिभासिकत्वं स्यादि"त्यत्रेत्यर्थः ॥

न्यायामृतकण्टकोद्धारः

एवं च तादृशनिषेधस्य प्रागभावोत्तरकालेऽभावेन सर्वकालसम्बन्धित्वाभावाद् नाव्याप्तिः। नच—एवं देशपदमनर्थकमिति—वाच्यम्; सर्वकालसम्बन्ध्यन्योन्याभावरूपनिषेधमादाय घट एवाव्याप्तेः। नच—एवं सति घटप्रतियोगिकान्योन्याभावस्याकाशरूपत्वात् सर्वदेश-कालसम्बन्ध्याकाशरूपान्योन्याभावमादाय घटेऽव्याप्तिः स्यादेवेति—वाच्यम्; अभावैकस्वभावत्वेन निषेधस्य विशेषितत्वात्। नच—एवमभावैकस्वभावः सर्वकालसम्बन्धी यो निषेधः, तत्प्रतियोगित्वमित्येवास्त्विति—वाच्यम्; अध्वनिष्ठसर्वकालसम्बन्धिनिषेधप्रतियोगित्वस्य गोत्वे सत्त्वेन तत्राव्याप्तिपरिहारार्थं तदुपादानात्। गोत्वसंसर्गनिषेधप्रतियोगित्वस्य निषेधप्रतियोगिकोटिप्रवेशेन सर्वकालसम्बन्धिनिषेधप्रतियोगित्वात् तत्राव्याप्तिनिरासाय तदुपादानमावश्यकमेव। नच—एवमपि व्यधिकरणधर्मावच्छिन्नाभावमादाय सम्बन्धान्तरावच्छिन्नाभावमादाय च घट एवाव्याप्तिरिति—वाच्यम्; समानाधिकरणधर्मावच्छिन्नत्व-स्ववृत्तिताघटकसम्बन्धावच्छिन्नत्वाभ्यामभावस्य विशेषितत्वात्। नच—एतादृशसत्त्वस्य प्रत्यक्षायोग्यत्वादग्रिमप्रत्यक्षबाधोपवर्णनमयुक्तमिति—वाच्यम्; यथा प्रत्यक्षयोग्यत्वं तथाऽनुपदमेवोपपादयिष्यते। वस्तुतस्तु—सर्वदेश-कालसम्बन्धनिषेधपदेनात्यन्ताभावस्योक्तत्वादत्यन्ताभावाप्रतियोगित्वमेव सत्त्वमभिमतमिति न कश्चित् क्षुद्रोपद्रवः। नच—संयोगेऽव्याप्तिः; तस्य सार्वदेशिक-त्रैकालिकनिषेधप्रतियोगित्वादिति—वाच्यम्; संयोगस्याव्याप्यवृत्तितानभ्युपगमात्। नच—आकाशादावव्याप्तिः; तदत्यन्ताभावस्य केवलान्वयित्वादिति—वाच्यम्; 'अत्रेदानीमाकाशः' इति प्रतीत्याऽऽकाशस्य देश-कालयोः सत्त्वेन तदत्यन्ताभावस्य केवलान्वयि-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*जगति=वियदादौ। *कस्मिंश्चिदित्यादि* । मूर्तेषु संयोगेन विभुषु संयोगेन संयुक्तमूर्तसंयोगेन वा गुणादौ संयुक्तसमवायादिनाऽऽकाशस्य सत्त्वेनाकाशात्यन्ताभावस्यासम्भवात्, उत्पत्तिक्षणावच्छेदेन द्रव्ये तत्संभवेऽपि तस्य व्याप्यवृत्तित्वाभावेन प्रकृतानुपयोगात्। यद्यपि कस्मिंश्चिद्देशे काले वाऽऽकाशाभावो विद्यमानोऽपि प्रकृतानुपयुक्तः, तथाऽपि कैमुतिकन्यायेन तथोक्तम्। कस्मिंश्चिद्देशे काले तदसत्त्वे सर्वत्र तत्र सुतरां तदसत्त्वमिति भावः। *नित्यत्वेत्यादि* ॥ यदाऽऽकाशस्य तादृशोऽत्यन्ताभावः, तदा तस्य ध्वंसः प्रागभावो वा

(१) अध्यस्त-तुच्छे तं प्रति प्रतियोगिनी, इति कारिकायामुक्तत्वादित्यर्थः। तन्मतेऽध्यस्तस्य तुच्छत्वेऽपि परीत्येवमुक्तिरिति ज्ञातव्यम् ॥

न्यायामृतम्

(१)'अश्वे गोत्वं कदाचिदपि नास्ती'त्यादौ तत्संसर्ग एव निषिध्यत इति मते देशपदमनपेक्षितम् ।

तरङ्गिणी

*ननु* संयोग-तदत्यन्ताभावयोरैकाधिकरण्याङ्गीकारे संयोग-तदत्यन्ताभावयोरवच्छेदकभेदेन भिन्नाश्रितत्वस्यैवानुभवेन सत्त्वपक्षे सामानाधिकरण्यायोगादित्यनेन विरोध इति—चेत्, *न*; तार्किकादिसाधारणसत्त्वलक्षणपरैतद्ग्रन्थे संयोग-तदत्यन्ताभावयोः सामानाधिकरण्याङ्गीकारस्य मतान्तरे तदनङ्गीकारप्रतिपादकोदाहृतग्रन्थेन विरोधाभावात् । अत्र संयोग-तदत्यन्ताभावयोः सामानाधिकरण्यानङ्गीकाराभिप्रायत्वे यत्र संयोगः, तत्र तदत्यन्ताभावो नेत्येवावक्ष्यत्, न पुनर्यदवच्छिन्ने संयोगः, तदवच्छिन्ने तदत्यन्ताभावो नेतीति । सर्वकाले सर्वदेशे सर्वावच्छेदेन संसृष्टसर्वसंसर्गकप्रतियोगिताकाभावं प्रति प्रतियोगित्वमसत्त्वम्, तदभावः सत्त्वमिति तार्किकादिसाधारणं सत्त्वलक्षणमभिधाय विशिष्यापि सत्त्वलक्षणमाह—*अश्वे गोत्वमिति* ॥

सार्वकालिकनिषेधप्रतियोगित्वं तुच्छस्यैव, न पुनर्घटादेः ; 'अश्वे गोत्वं नास्ती'त्यत्रापि गोत्वाश्वसंसर्ग एव निषिध्यते, स चासन्नेव, ननु गोत्वत्वमिति ये मन्यन्ते, तेषां मते सार्वकालिकनिषेधप्रतियोगित्वमसत्त्वम्, तदभावः सत्त्वमित्येव लक्षणम्, देशपदं तु न देयम् ; अतस्तद्विशेषणीभूतसर्वावच्छेदेनेत्यपि न देयम् । आकाशादेरत्यन्ताभावप्रतियोगित्वाभावात् सत्त्वलक्षणे तत्राव्याप्त्यभावात् सर्वसंसर्गकप्रतियोगिताकेत्यपि न देयमेव ; अन्योन्याभावस्य भावाभावस्वरूपत्वेन न तमादायाव्याप्तिः । नन्वेवम्—अत्यन्ताभावभिन्ने पटादावव्याप्तिरिति—वाच्यम्; तादृशात्यन्ताभावं प्रति घटादेर्निरूपकत्वमात्राङ्गीकारेण तद्विरहत्वरूपतत्प्रतियोगित्वाभावात् ॥

---

(१) सत्त्वस्य लक्षणे कृत्यं पदानां तु विचार्यते । विद्वत्प्रमोदकः स स्याद् दयया श्रीपतेर्गुरोः ॥

तथाहि—अत्र लक्षणे विद्वत्प्रमोदार्थं पदकृत्यादिविचारः क्रियते । तथाहि—सार्वदेशिक-सार्वकालिकनिषेधाप्रतियोगित्वं सत्त्वमित्यत्र सार्वदेशिकनिषेधाप्रतियोगित्वं सत्त्वमित्येवोक्ते समवायिकारणनाशजन्यनाशप्रतियोगिनि किंचित्कालमनाश्रिततया विद्यमाने पटेऽव्याप्तिः स्यात् ; तस्य पटस्य कपालादिदेशेष्वभावस्य सर्वसंमतत्वेन स्वसमवायिदेशेऽवस्थानेन भाव्यम् । समवायिकारणाभावात् तत्रावस्थानासम्भवेन सार्वदेशिकनिषेधप्रतियोगित्वसद्भावेन तदप्रतियोगित्वाभावादव्याप्तिः स्यात्, अतः सार्वकालिकेत्युक्तम् । तथाच तस्य पटस्य समवायिकारणनाशात् पूर्वं समवायिकारणे स्थितत्वेन त्रैकालिकनिषेधाप्रतियोगित्वसद्भावाद् नाव्याप्तिः । *ननु* अत्र निषेधपदस्यात्यन्ताभावपरत्वात् समवायिकारणनाशजन्यनाशप्रतियोगिपटे कथमव्याप्तिः ? नाशस्यात्यन्ताभावत्वाभावेन नाशप्रतियोगित्वादेव तत्रात्यन्ताभावाप्रतियोगित्वमस्तीति कथमव्याप्तिः ? अतः सार्वकालिकपदं व्यर्थमिति चेत्, *न*; निषेधपदस्य संसर्गाभावपरत्वाङ्गीकारात् । तथाच नाशप्रतियोगिनि संसर्गाभावप्रतियोगित्वसद्भावादव्याप्तिः स्यादेवेत्यतः सार्वकालिकपदं सार्थकमेव । सार्वकालिकनिषेधाप्रतियोगित्वमित्येवोक्तौ, 'अश्वे गोत्वं कदापि नास्ती'ति प्रतीत्याऽश्वनिष्ठगोत्वात्यन्ताभावप्रतियोगिनि गोत्वे सार्वकालिकनिषेधप्रतियोगित्वस्यैव सत्त्वेन तदप्रतियोगित्वाभावादव्याप्तिः स्यात्, अतः 'सार्वदेशिके'त्युक्तम् । तथाच गोत्वस्याश्वादिदेशेऽभावेऽपि गवि सत्त्वेन सार्वदेशिकनिषेधप्रतियोगित्वाभावाद् नाव्याप्तिः । *ननु* गोत्वस्य प्रामाणिकतया निषेधप्रतियोगित्वासम्भवाद् गोत्वसंसर्ग एव निषिध्यत इति मते गोत्वेऽश्वनिष्ठसार्वकालिकनिषेधाप्रतियोगित्वसद्भावेन व्याप्तेरेवाभावात् सार्वदेशिकपदं व्यर्थमिति—चेत्, *सत्यमेवेति वदामः* ॥

*ननु* तर्ह्यश्वे गोत्वसंसर्गः कदापि नास्तीति प्रतीत्याऽश्वनिष्ठात्यन्ताभावप्रतियोगिनि गोत्वसंसर्ग एवाव्याप्तिरिति—चेत् *न*; भ्रान्तोऽसि ; अश्वे गोत्वसंसर्गस्यारोपितत्वेनात्यन्तासत्त्वादलक्ष्यत्वमेवेति तत्र लक्षणाभावो न दोषाय । अत एवोक्तम् "अध्यस्ततुच्छे तं प्रति प्रतियोगिनी" इति । *ननु* कथमसदनुमानानां प्रत्यक्षबाधः ? सत्त्वग्राहित्वादिति चेत्, *न*; चक्षुराद्ययोग्यातीतवर्तमानैष्यत्कालदेशाद्यनेकपदार्थघटितसत्त्वस्य कथं प्रत्यक्षसिद्धत्वम् ? चक्षुरादेरेताहृशसत्त्वग्रहणेऽसामर्थ्यादिति—चेत्, *उच्यते*; देश-कालयोश्चक्षुराद्ययोग्यत्वेऽपि साक्ष्युपनीतयोश्चाक्षुषप्रत्यक्षे भानं संभवत्येव । कथमन्यथा—'अत्रेदानीं घटः' इत्यत्रापि तयोर्भानमिति ?

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वाच्यः, तथाचानित्यत्वं स्यात् । यत्र द्रव्य आकाशस्यात्यन्ताभावः, तत्र तस्य संयोगो न जात इति वाच्यम् ; अन्यथा हि तत्संयोग-तदत्यन्ताभावयोर्विरोधः । नच—तत्संयोगस्य वृत्त्यनियामकत्वेन तदत्यन्ताभावाविरोधित्वमिति—वाच्यम् ; चित्सुखीयानुमाने तस्यापि तद्विरोधस्योक्तत्वात् 'अत्राकाशमि'ति प्रत्ययेन तत्संयोगस्य वृत्तिनियामकत्वाच्च । तथाचाकाशस्य यत्र द्रव्येऽत्यन्ताभावः, तत्र तत्संयोगानुत्पत्तेरावश्यकत्वे सर्वमूर्तसंयोगित्वरूपं विभुत्वं न स्यात् । यद्यपि तत्संयोगिनि समवायादिना तदत्यन्ताभावो न विरुद्ध इति वक्तुं शक्यते ; तथापि तदीयसंयोगस्य तदत्यन्ताभावेनैव विरोधो लाघवात्, इति प्रतिपन्नेत्यादिमिथ्यात्वलक्षणोक्ताभिप्रायकमिदम् । अत एव नित्ये जलीयरूपादावपि संयुक्तसमवायादिसम्बन्धेनाकाशसत्त्वाद् न तदत्यन्ताभावः ; अन्यथा हि तादृशरूपादिमत्याकाशसंयोगस्य वक्तुमशक्यतयाऽऽकाशस्य विभुत्वं न स्यात् । *अथवा* यावन्तः सम्बन्धाः प्रसिद्धाः, तावदन्यतमावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रकृते निवेशाद् नित्यरूपादौ तादृशस्याकाशाद्यभावस्यासत्त्वाद् न दोषः । *यत्तु*—सर्वकालवृत्तित्वमेवाभावे विशेषणं देयम्, नतु सर्वदेशीयत्वम् ; अश्वाद्यवच्छेदेन गोत्वाद्यभावो न कदाऽपि वर्तते ; मानाभावात्, 'इदानीमश्वे गोत्वं नास्ती'ति धीस्तु गोत्वाश्वत्वयोरलीकसंसर्गस्यात्यन्ताभावमवगाहते ; नतु गोत्वस्य । तथाच गोत्वादौ सर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वाभावसत्त्वात् तत्र नाव्याप्तिः, सर्वदेशवृत्त्यत्यन्ताभावप्रतियोगित्वाभावस्तु न लक्षणम् ; घटादौ तादृशप्रतियोगित्वसत्त्वात् तत्राव्याप्तेः । घटादेर्हि स्वाधिकरणभूतलादितोऽपसारणकाले तत्रात्यन्ताभावः प्रतीयते । 'अत्र भूतल इदानीं घटो नास्ती'ति धीर्हि घटस्यैवात्यन्ताभावं गृह्णाति । घटस्यैवोक्तकाल उक्तभूतल आरोपसम्भवादारोपितस्यैवालीकत्वेनात्यन्ताभावप्रतियोगित्वात्—इति *माध्वेनोक्तम्*, *तदयुक्तम्* ; गोत्वादेरप्यश्वादावारोपसंभवेन तत्राव्याप्तितादवस्थ्यात्, अलीकस्यैवात्यन्ताभावप्रतियोगित्वमिति नियमे मानाभावाच्च । यदि च तादृशनियमः स्वीक्रियते, तदाऽत्यन्ताभावप्रतियोगिता न केनापि धर्मेण सम्बन्धेन वाऽवच्छिन्ना ; अलीकस्य सर्वदेश-कालासम्बन्धेन धर्मविशेष-सम्बन्धविशेषा-

---

पुनः प्रकारान्तरं चात्रोपदिशन्ति ; तथाहि—सार्वदेशिक-सार्वकालिकनिषेधाप्रतियोगित्वं नाम सार्वदेशिक-सार्वकालिकनिषेधप्रतियोगित्वाभावः । स च प्रत्यक्षयोग्य एव । कथमिति चेत्, उच्यते ; अत्रादावभावस्य प्रत्यक्षयोग्यतायां तन्त्रं किमिति प्रष्टव्यम् । प्रतियोगियोग्यत्वमिति चेत्, *न* ; तथात्वे जलपरमाणौ पृथिवीत्वाभावः प्रत्यक्षः स्यात् ; पृथिवीत्वस्य घटादौ प्रत्यक्षयोग्यत्वात्, अतो न प्रतियोगियोग्यत्वं तन्त्रम्, किं नाम ? मणिकारोक्तरीत्या योग्यानुपलब्धिरेव । *ननु*—तथापि योग्यस्यानुपलब्धिर्योग्यानुपलब्धिः । तथाच पृथिवीत्वस्य घटादौ योग्यस्यानुपलब्धेः सत्त्वादभावो जलपरमाणौ प्रत्यक्षः स्यादित्यतिप्रसङ्गानिस्तार एवेति—चेत्, *न* ; योग्यस्यानुपलब्धिर्योग्यानुपलब्धिरिति नार्थः । किं नाम ? तर्कितप्रतियोगिसत्त्वप्रसञ्जितोपलब्धिप्रतियोगिकाभाव एव हि योग्यानुपलब्धिः । तथाहि—यद्यत्र भूतले घटः स्यात्, तर्ह्युपलभ्येत ; घटस्य महत्त्वसमानाधिकरणोद्भूतरूपत्वेन योग्यत्वात्, नोपलभ्यते ; तस्माद् नास्तीत्येवंरूपा । एवं च जलपरमाणौ पृथिवीत्वाभावो न प्रत्यक्षः ; तत्रोक्तरूपयोग्यानुपलब्धेरभावात् । तत्र हि यदि जलपरमाणौ पृथिवीत्वं स्यात्, तदोपलभ्येत, योग्यव्यक्तिवृत्तिजातेर्योग्यत्वादित्यापादनं कर्तुमशक्यम् ; जलपरमाणोः पृथिवीत्वजातिं प्रत्ययोग्यव्यक्तित्वेन पृथिवीत्वस्य योग्यव्यक्तिवृत्तित्वाभावात्, अत एवमापादनासम्भवेन तत्रोक्तरूपयोग्यानुपलब्धेरभावेन पृथिवीत्वाभावो न प्रत्यक्षः, प्रकृते चास्त्युक्तरूपा योग्यानुपलब्धिः सार्वदेशिक-सार्वकालिकनिषेधप्रतियोगित्वाभावग्राहिका ॥

तथाहि—यद्यत्र घटादौ सार्वदेशिक-सार्वकालिकनिषेधप्रतियोगित्वं स्यात्, तर्ह्युपलभ्येत ; योग्यव्यक्तिवृत्तिधर्मत्वात्, नह्युपलभ्यते ; अतोऽत्र नास्तीत्यापादनसम्भवेनोक्तरूपयोग्यानुपलब्धेः सम्भवादुक्तनिषेधप्रतियोगित्वाभावस्य प्रत्यक्षयोग्यत्वं युक्तमिति ।

अत्र पुनर्निष्कर्षमुपदिशन्ति—निषेधाप्रतियोगित्वमित्यत्रान्योन्याभाव एव नञर्थतया विवक्षितः । तथाच सार्वदेशिक-सार्वकालिकनिषेधप्रतियोगिभिन्नत्वमित्यर्थः । इदं च प्रत्यक्षयोग्यमेव । तथाहि—अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यत्वमेव तन्त्रम्, न प्रतियोगियोग्यत्वम् ; स्तम्भे पिशाचान्योन्याभावस्य प्रत्यक्षत्वात् । यथोक्तं गङ्गेशेन—'स्तम्भे पिशाचान्यो-

### अद्वैतसिद्धिः

प्रसङ्गात् । आकाशात्यन्ताभावस्य केवलान्वयित्वाभ्युपगमे च वृत्तिमत्प्रतियोगिकत्वेनाभावो विशेषणीय इति—चेत्, *न* ; चक्षुराद्ययोग्यानेकपदार्थघटितत्वेनैतादृशसत्त्वस्य ग्रहणे चक्षुरादेरसामर्थ्यात् । नहि सर्वदेशीय-त्रैकालिक-वृत्तिमत्प्रतियोगिक-व्याप्यवृत्तिनिषेधप्रतियोगित्वं कस्यापि प्रत्यक्षम्, येन तद्भावः प्रत्यक्षो भवेत् । वृत्तिमत्प्रतियोगिकत्व-व्याप्यवृत्तित्वपरित्यागेऽपि सर्वदेशीयत्व-त्रैकालिकत्वयोरयोग्यत्वात् । *ननु* स्वदेश-कालवृत्तिनिषेधप्रतियोगित्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमान-

### तरङ्गिणी

(सि०) *अत्र वदन्ति*—नैतादृशं सत्त्वं चक्षुरादियोग्यम् ; चक्षुराद्ययोग्यानेकपदार्थघटितत्वेनैतादृशसत्त्वग्रहणे चक्षुरादेरसामर्थ्यात्, नहि सर्वदेशीय त्रैकालिकनिरुक्तनिषेधप्रतियोगित्वं कस्यचित् प्रत्यक्षम्, येन तदभावः प्रत्यक्षो भवेत् । *ननु* स्वदेश-कालवृत्तिनिषेधप्रतियोगित्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमान-

### न्यायामृतकण्टकोद्धारः

त्वानभ्युपगमात् । नच—प्रत्यक्षयोग्यं सत्त्वं पृष्टम्, नचैतदक्षयोग्यम् ; सार्वदेशिकत्व-त्रैकालिकत्वयोरयोग्यत्वात् । नच—स्वदेश-कालवृत्तिनिषेधप्रतियोगित्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमानकालस्य, सर्व-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

वच्छेदकत्वे अनपेक्ष्यैव तदत्यन्ताभावस्य सर्वत्र सम्भवात् । अत एव 'ध्वंस-प्रागभावप्रतियोगिता तादृशी'ति नव्याः । तथाच तव मते सम्बन्ध-धर्मविशेषाणां संसर्गाभावप्रतियोगितावच्छेदकत्वस्यानुभूयमानस्यापलापापत्तिः । *वृत्तिमत्प्रतियोगिकत्वेति* ॥ वृत्तिमत्त्वेन यत् माध्वभिन्नस्य संमतम्, तन्मात्रनिष्ठप्रतियोगिताकत्वेनेत्यर्थः । यथाश्रुते सर्वदेश-कालवृत्तेर्वृत्तिमत्प्रतियोगिकाभावस्याप्रसिद्धेः, गगन-घटोभयाभावादेरवारणाच्च । *नहीत्यादि* ॥ तादृशवृत्तिमत्प्रतियोगिकाभावस्यातीन्द्रियघटितत्वात् तद्घटितरूपावच्छिन्नं यद्यत्र स्यात्, तदोपलभ्येतेत्यापादनासम्भवात्, अतः सतोऽपि तस्यातीन्द्रियत्वेनानुपस्थितिसम्भवात् । सर्वदेशीयत्व त्रैकालिकत्वादिरूपेण तु सुतरामभावो न प्रत्यक्षः ; तादृशरूपस्यायोग्यत्वात् । तथाच तादृशाभावप्रतियोगितात्वरूपेणापि प्रतियोगित्वस्य प्रत्यक्षासम्भवेनायोग्यतादृशरूपावच्छिन्नप्रतियोगिताकाभावो न प्रत्यक्ष इत्यर्थः । *प्रतियोगित्वा-

### न्यायामृतसौगन्ध्यम्

कालादिवृत्तित्वेन तदभावो न संबन्धसामान्येन केवलान्वयो । *ननु*—चक्षुराद्ययोग्यानेकपदार्थघटितत्वेनैतादृशसत्त्वस्य ग्रहणे चक्षुरादेरसामर्थ्यम् । नहि सर्वदेशीय-त्रैकालिकवृत्तिमत्प्रतियोगिक-व्याप्यवृत्तिनिषेधप्रतियोगित्वं कस्यचित् प्रत्यक्षम्, येन तदभावः प्रत्यक्षो भवेत् ; वृत्तिमत्प्रतियोगिक-व्याप्यवृत्तित्वपरित्यागेऽपि सर्वदेशीयत्व-त्रैकालिकत्वयोरयोग्यत्वादिति—चेत्, *न* ; स्वदेश-कालवृत्तिनिषेधप्रतियोगित्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमानकालस्य सर्वदेशीयमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात् तत्संवलितकालत्रयवर्तिसर्वदेशीयनिषेधप्रतियोगित्वरूपं मिथ्यात्वं नानुमानेन ग्रहीतुं शक्यते ॥

---

न्याभावः प्रत्यक्ष एव ; अधिकरणस्य प्रत्यक्षत्वादि'ति । एवं च प्रकृतेऽन्योन्याभावाधिकरणस्य घटादिजगतो योग्यत्वात् तन्निष्ठं सार्वदेशिक-सार्वकालिकनिषेधप्रतियोगिभिन्नत्वरूपं सत्त्वं प्रत्यक्षयोग्यमेवेति न कोऽपि दोषः । अत एतादृशसत्त्वग्राहिप्रत्यक्षविरोधोऽनुमानस्य सुस्थ इति सर्वमवदातम् । स्वोत्प्रेक्षितान् पक्षानेव केचिदित्याहेति सम्प्रदायः । परैरिति । परैर्मिथ्यात्वं यत्किञ्चिदेवोच्यताम्, नास्माकं तत्र निर्बन्धः । तथाच सामान्यतः पराभिप्रेतं यद् मिथ्यात्वम्, तदभाव इत्यर्थः । असद्विशेषस्य कूर्मरोमादेः प्रधानाभावेन कुत्राऽप्यनारोपात् तत्रातिव्याप्तिवारणाय—असद्वैलक्षण्ये सती''त्युक्तम् । परैरीत्या शुक्तिरूप्येऽतिव्याप्तिवारणाय विशेष्यम् ॥

अद्वैतसिद्धिः

कालस्य, सर्वदेशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात् तत्संवलितं कालत्रयवृत्ति-सर्वदेशीयनिषेधप्रतियोगित्वरूपं मिथ्यात्वं नानुमानेन ग्रहीतुं शक्यत इति—*चेत्, *न* ; स्वदेश-कालवृत्तिसकलनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन तदभावस्य सुतरां तदयोग्य-

तरङ्गिणी

कालस्य, सर्वदेशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात् तत्संवलितकालत्रय-वर्तिसर्वदेशीयनिषेधप्रतियोगित्वरूपं मिथ्यात्वं नानुमानेन ग्रहीतुं शक्यत इति—चेत्, *न* ; स्वदेश-काल-वर्तिसकलनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन तदभावस्य सुतरां तदयोग्यत्वात्, स्वदेश-कालवृत्ति-

न्यायामृतकण्टकोद्धारः

देशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात् संवलितकालत्रयवर्तिसर्व-देशीयनिषेधप्रतियोगित्वरूपं मिथ्यात्वं नानुमानेन ग्रहीतुं शक्यत इति—वाच्यम् ; स्वदेश-कालवृत्तिसकल-निषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वात्, तदभावस्य सुतरामयोग्यत्वात् स्वदेशकालवृत्तियत्किञ्चि-न्निषेधप्रतियोगित्वस्य मिथ्यात्वाविरोधित्वात् ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भाव इति* ॥ योग्यत्वादिति शेषः । वर्तमानकालेति प्रकृतदेशेति च स्वकाल-देशार्थकम् । *तत्र निषेधेति* ॥ स्वकाल-देशवृत्तिनिषेधेत्यर्थः । *तत्संवलितेत्यादि* ॥ स्वदेश-कालवृत्तिघटितो यः कालत्रय-वर्ती सर्वदेशीयनिषेधः, तत्प्रतियोगित्वरूपमित्यर्थः । *यद्यपि*—नेदं दूषणं सम्भवदुक्तिकम् । नहि 'सर्वदेश-कालवृत्ती'त्यत्र देश-कालानां सर्वेषां तत्तद्व्यक्तित्वैर्निवेशः सम्भवति ; तादृशोपस्थितेर्युगसहस्रेणाप्य-सम्भवात्, किंतु देशत्व-कालत्वव्यापकत्वेनात्यन्ताभावो निवेश्यः । तथाच तादृशव्यापकत्वस्य सर्वदेश-कालव्यक्त्यघटितत्वेन स्वदेश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वाभावधीकालेऽपि तादृशमिथ्यात्वस्य धीः सम्भव-त्येव ; स्वदेशनिष्ठात्यन्ताभावाप्रतियोगित्वविशिष्टबुद्धिर्हि स्वदेशनिष्ठात्यन्ताभावप्रतियोगित्वविशिष्टबुद्धौ ग्राह्या-भावनिश्चयविधया विरोधिनी, नतु देशनिष्ठात्यन्ताभावप्रतियोगित्वविशिष्टबुद्धौ । नहि नीलघटाभावबुद्धिर्घट-वत्ताधीविरोधिनी ; देशत्वव्यापकात्यन्ताभावप्रतियोगित्वधियस्तु सुतरां न विरोधिनी ; देशवृत्त्यत्यन्ताभावा-प्रतियोगित्वस्य तद्घटे तस्याभानात् । *अथैवमपि*—घटादेः सत्यत्वमतेऽपि किञ्चित्कालावच्छेदेन सर्वदेशेषु किञ्चिद्देशावच्छेदेन सर्वकालेषु चात्यन्ताभावस्वीकारात् सर्वकालावच्छेदेन सर्वदेशवृत्तिको योऽत्यन्ताभावः, तत्प्रतियोगित्वमेवासत्त्वं वाच्यम्, सर्वदेशवृत्तित्वं च देशत्वव्यापकत्वमेव, तथाचाप्रसिद्धिः, असत्प्रति-योगिकाभावस्य कालावच्छिन्नत्वे मानाभावात्, इति—चेत्, *न* ; अत्र हि देशत्वव्यापककालान-वच्छिन्नाधिकरणताकत्वेन कालत्वव्यापकदेशानवच्छिन्नाधिकरणताकत्वेन वा विशिष्टोऽत्यन्ताभावो निवेश्यः । देशत्वं च कालिकान्यसम्बन्धावच्छिन्नाधिकरणत्वम् । कालत्वं कालिकसम्बन्धावच्छिन्नाधिकरणत्वम् । एवञ्च 'तादृशात्यन्ताभावप्रतियोगी तद्घटः' इति ज्ञानं प्रति 'स्वदेश-कालवृत्त्यत्यन्ताभावाप्रतियोगी तद्घटः' इति ज्ञानस्य प्रतिबन्धकत्वं नास्त्येव ; *तथापि* ; सम्भवदुक्तिकतामङ्गीकृत्य दूषयति—*न स्वदेशेति* ॥ *सकलेत्यादि*॥

न्यायामृतसौगन्ध्यम्

*ननु*—स्वदेश-कालनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन तदभावस्य सुतरां तदयोग्यत्वात् स्वदेश-कालवृत्तियत्किञ्चिन्निषेधप्रतियोगित्वस्य मिथ्यात्वाविरोधित्वमिति— चेत्, *न* ; सर्वदेश-काल-वृत्तिनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेऽपि तदभावरूपसत्त्वस्य योग्यत्वात्, घट आकाशत्वाभाव-वत् पट आकाशत्वसत्त्वे तस्यानेकव्यक्तिगतत्वेन जातित्वापत्त्या घटत्ववत् तदुपलम्भापादानवद् घटे

अद्वैतसिद्धिः

त्वात्, स्वदेश-कालवृत्तियत्किंचिन्निषेधाप्रतियोगित्वस्य मिथ्यात्वाविरोधित्वात्, स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यस्य च स्वप्रतियोगिकात्यन्ताभावाप्रसिद्धया केवलान्वयिनि, सम्बन्धभेदेन घटादौ चासिद्धेः; स्वात्यन्ताभाववयावदधिकरणावृत्तित्वं वा, स्वात्यन्ताभावयत्किंचिदधिकरणावृत्तित्वं वेति विकल्पेन पूर्वोक्तदोषाच्च। तस्मात् तत्प्रकारान्तरस्य निरूपयितुमशक्यत्वाद् मिथ्यात्वाविरोधित्वाच्च स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेव सत्त्वमुपेयम्। तच्च न चक्षुरादियोग्यमित्युक्तम्।

*ननु*—यस्मिन् कस्मिंश्चित् स्वदेश-कालवृत्तिनिषेध एतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन

तरङ्गिणी

यत्किंचिन्निषेधाप्रतियोगित्वस्य च मिथ्यात्वाविरोधित्वात्, स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यस्य च स्वप्रतियोगिकात्यन्ताभावाप्रसिद्धया केवलान्वयिनि, सम्बन्धभेदेन घटादौ चासिद्धेः, स्वात्यन्ताभावयावदधिकरणावृत्तित्वं वा स्वात्यन्ताभावयत्किंचिदधिकरणावृत्तित्वं वेति विकल्पेन पूर्वोक्तदोषाच्च। तस्मात् प्रकारान्तरस्य निरूपयितुमशक्यत्वाद् मिथ्यात्वाविरोधित्वाच्च स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेव सत्त्वमुपेयम्। तच्च न चक्षुरादियोग्यमित्युक्तम्—इति, *अत्र ब्रूमः*; सर्वदेश-कालवृत्तिनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेऽपि तदभावरूपसत्त्वस्य तद्योग्यत्वं सम्भवति, घट आकाशत्वाभाववत् पट आकाशत्वसत्त्वे तस्यानेकव्यक्तिगतत्वेन जातित्वापत्त्या घटत्ववत् तदुपलम्भापादनवद् घटे तादृशाभावप्रतियोगित्वोपलम्भस्याप्यापादनसंभवात्, घटवृत्तिसंसर्गाभावप्रतियोगित्वस्य प्रागभावप्रतियोगित्वादिवद् योग्यत्वात्,

न्यायामृतकण्टकोद्धारः

नच—स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं विवक्षितमिति—वाच्यम्; केवलान्वयिनि स्वप्रतियोगिकात्यन्ताभावाभावेन, घटादौ च सम्बन्धभेदेन स्वप्रतियोगिकात्यन्ताभावसमानाधिकरणतयाऽव्याप्तेः। स्वात्यन्ताभावयावदधिकरणावृत्तित्वं वा यत्किञ्चिदधिकरणावृत्तित्वं वेति विकल्पेन पूर्वोक्तदोषाच्च। तस्मात् प्रकारान्तरस्य निरूपयितुमशक्यत्वाद् मिथ्यात्वाविरोधित्वाच्च स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेव सत्त्वमुपेयम्। तच्च न चक्षुरादियोग्यमित्युक्तमिति चेत्, न; यदि प्रत्यक्षं वर्तमानमात्रग्राहितया त्रैकालिकबाधाभावग्रहणाक्षमम्, तर्हि रजतमिथ्यात्वमपि प्रत्यक्षं न

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तादृशनिषेधानां मध्येऽतीन्द्रियप्रतियोगिकाभावस्यापि सम्भवेन तत्प्रतियोगित्वस्यायोग्यत्वात् तत्साधारणतादृशप्रतियोगितात्वावच्छिन्नाभावो न प्रत्यक्षः। 'यद्यत्र तादृशप्रतियोगित्वं स्यात्, तदोपलभ्येते'त्यापादनासम्भवादिति भावः। *पूर्वोक्तेति*॥ स्वात्यन्ताभावीयसकलाधिकरणवृत्तित्वस्यायोग्यत्वेन सुतरां तदभावस्यायोग्यत्वादित्येवंरूपेत्यर्थः। तथाच व्यवहित-विप्रकृष्टतादृशाधिकरणवृत्तित्वस्य सत्त्वेऽप्यनुपलब्धिसम्भवात् तदुपलब्धेरापादनासम्भवात् तादृशाभावो न प्रत्यक्ष इति भावः। अयोग्यत्वमिन्द्रियासन्निकर्षेण प्रत्यक्षाविषयत्वमेव, तच्चोक्ताभावे नास्ति; सामान्यप्रत्यासत्तिरूपस्यालौकिकस्येन्द्रियसन्निकर्षस्य सत्त्वादित्याशयेन शङ्कते—*नन्वित्यादि*॥ अयोग्यत्वं यदस्माभिरुक्तम्, तद् लौकिकप्रत्यक्षविषयत्वायोग्यत्वमेव; लौकिकप्रत्यक्षरूपस्यैव बाधस्योपक्रान्तत्वात्, तन्मूलीभूतापादनविषयस्य प्रतियोग्युपलम्भस्य लौकिकस्यैवापेक्षितत्वेन तस्यैव मया खण्डनीयत्वात्, तादृशा-

न्यायामृतसौगन्ध्यम्

तादृशाभावप्रतियोगित्वोपलम्भनस्याप्यापादनसंभवात्, घटादिज्ञानानन्तर'मयमिहैव नान्यत्रे'त्यन्यनिष्ठाभावप्रतियोगित्वस्यानुभूयमानत्वात्। किञ्चैतद्देश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वं सेन्द्रियातीन्द्रियवृत्त्यखण्डम्, तच्चैतद्देश-कालवृत्ति यदि घटे स्यात्, तर्ह्युपलभ्येत, यतद्देश-कालवृत्त्यत्यन्ताभावप्रतियोगिनि देशान्तरपाती-

तरङ्गिणी

...ज्ञानानन्तरमयमिहैव नान्यत्रेत्यन्यनिष्ठाभावं प्रति प्रतियोगित्वस्यानुभूयमानत्वात्। नचैवम्—अन्यनिष्ठाभावप्रतियोगित्ववदन्यनिष्ठाभावस्यापि चक्षुरादिना ग्रहः स्यादिति—वाच्यम्; विशेष्यसन्निकर्षाद्यभावेन न तस्य ग्रहणम्; प्रतियोगित्वस्य स्वरूपविशेषात्मनो योग्यत्वेन तदुपलम्भापादनसंभवात्। नच दृष्टान्ता-

न्यायामृतकण्टकोद्धारः

स्यात्; तस्यापि त्रिकालबाध्यरूपत्वेन कालत्रयघटितत्वात्। *ननु* च तत्र रजतत्वविरोधिशुक्तित्वे निश्चिते तेन च रजतत्वाभावे निश्चिते पश्चात् सहकारिवशात् प्रत्यक्षेण मिथ्यात्वनिश्चयः, केवलस्य वर्तमानमात्रग्राहित्वेऽपि सहकारिसमवहितस्यातीतादिग्राहित्वम्, प्रत्यभिज्ञानादौ तथा दर्शनादिति—चेत्, न; तर्हि प्रकृतेऽपि प्रत्यक्षप्रामाण्यान्यथानुपपत्त्या मिथ्यात्वविरोधिन्येककालसत्त्वे निश्चिते, अथवा तेन त्रिकालासत्त्वाभावे निश्चिते तादृशसहकारिवशात् चक्षुरादिनैव त्रिकालाबाध्यत्वलक्षणसत्त्वनिश्चयोपपत्तेः। नच—मूलप्रत्यक्षप्रामाण्यमनिश्चितमिति—वाच्यम्; अग्रे तस्योपपादयिष्यमाणत्वात्। अथवा—अस्तु स्वदेश-कालवृत्तिनिषेधाप्रतियोगित्वरूपसत्त्वग्राहकत्वं प्रत्यक्षस्य, तावताऽपि त्रिकालासत्त्वग्राहकानुमानागमबाधकत्वं कथम्? नच—एककालसत्त्वस्य व्यावहारिकत्वेन मिथ्यात्वाविरोधित्वमिति—वाच्यम्; व्यावहारिकमित्यस्य कोऽर्थः? व्यवहारमात्रम्=वस्तुसत्त्वं नास्तीति वा? अर्थक्रियाक्षमं वा? नाद्यः; तादृशसत्त्वविषयस्य प्रामाण्यानुपपत्तेः। न द्वितीयः; ततोऽतिरिक्तपारमार्थिकसत्त्वाभावेन सत्त्वेऽपि वा तस्यार्थक्रियाकारित्वव्याप्यत्वेन तस्य मिथ्यात्वविरोधित्वात्। नच—स्वदेश-कालवृत्तियत्किञ्चिन्निषेधाप्रतियोगित्वं मिथ्यात्वाविरोधि, स्वदेश-कालवृत्तिसर्वनिषेधाप्रतियोगित्वं तु प्रत्यक्षायोग्यमिति—वाच्यम्; ज्ञानान्तरसहकारेण स्वदेशकालनिष्ठसकलनिषेधाप्रतियोगित्वग्रहस्य सुग्रहत्वात्। नच—ज्ञानरूपप्रत्यासत्त्या प्रत्यासत्त्यनङ्गीकारादयुक्तमिति—वाच्यम्; प्रत्यासत्तित्वाभावेऽपि नियामकत्वस्याङ्गीकृतत्वात्। अत एव ज्ञानावच्छेदकत्वेन सर्वसाक्षिगम्यमित्यङ्गीक्रियते; अन्यथा त्रिकाल-सर्वदेशीयनिषेधप्रतियोगित्वरूपमिथ्यात्वस्यापि प्रत्यक्षासिद्धत्वं न स्यात्; तस्याप्ययोग्यदेश-कालघटितत्वात्। अथवा—स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं सत्त्वम्, तस्य प्रत्यक्षेण गृहीतत्वात् कथं तत्सामानाधिकरण्यरूपं मिथ्यात्वमनुमानेन ग्राह्यम्? नच—केवलान्वयिन्यव्याप्तिः; तस्य स्वप्रतियोगिकात्यन्ताभावाप्रसिद्धेरिति—वाच्यम्; मन्मते प्रमेयत्वादिधर्माणामपि प्रत्येकं पर्यवसितत्वेन मया केवलान्वयिधर्मानङ्गीकारात्। नच—घटादावव्याप्तिः; तस्य सम्बन्धान्तरेण स्वप्रतियोगिकात्यन्ताभावसमानाधिकरणत्वादिति—वाच्यम्; मया विद्यमानपदार्थस्य सम्बन्धान्तरेणाभावानङ्गीकारात्, लाघवात् प्रतियोगित्वस्यैवाभावविरोधित्वात्, प्रतीतेश्च सम्बन्धाभावविषयत्वेनाप्युपपत्तेः, अङ्गीकारे वा स्ववृत्तिताघटकसम्बन्धावच्छिन्नत्वेनाभावस्य विशेषितत्वेन दोषाभावात्। नच—यत्र कुत्रचित् स्वप्रतियोगिकात्यन्ताभावसामानाधिकरण्यं वा? यावदधिकरणेषु स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं वा? आद्ये मिथ्यात्वाविरोधित्वम्, द्वितीये प्रत्यक्षायोग्यत्वमुक्तमिति—वाच्यम्; स्वप्रतियोगिकात्यन्ताभावा-

न्यायामृतसौगन्ध्यम्

न्द्रियासन्निकृष्टघटान्तरे यथा देश-कालयोः परिचायकतया निवेशः, नतु विशेषणतया; अतीन्द्रियसाधारणानामपि सत्ता-जल-पृथिवीत्वानां योग्यव्यक्तिवृत्तितया प्रत्यक्षं स्फुटम्। एतद्देश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वमेतद्देशकालवृत्तितया प्रतीतघटादेस्त्वन्मते मिथ्यात्वम्, नतु देशान्तरादिवृत्त्यभावप्रतियोगित्वमित्युक्तप्रतियोगित्वाभावे घटादौ गृहीते चक्षुरादिना सत्त्वं गृहीतमेव॥

अद्वैतसिद्धिः

प्रत्यासत्तिभूतेनोपस्थापितानां स्वदेशकालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे ग्राह्यः, ततः सार्वदिकसर्वदेशीयनिषेधप्रतियोगित्वस्य ग्रहणं घटे दुर्घटम्, इति—चेत, *न* ; एवं सामान्यलक्षणया सर्वनिषेधेषूपस्थितेष्वपि तत्प्रतियोगित्वाभावस्य चक्षुरादिना ग्रहीतुमशक्यत्वात् । योग्यप्रतियोगिक एव हि संसर्गाभावो योग्यः ॥

तरङ्गिणी

सम्भवः ; मम मते शुक्तिरूप्यस्यैव तादृशनिषेधप्रतियोगित्वेन साक्षिगोचरस्य दृष्टान्तत्वसम्भवात्, तार्किकादिमते व्यतिरेकव्याप्तिसम्भवाच्च । यद्वा—तादृशनिषेधप्रतियोगिभिन्नत्वं सत्त्वम्, तदन्योन्याभावस्तु प्रतियोग्यप्रत्यक्षत्वेऽपि स्तम्भे पिशाचान्योन्याभाववत् प्रत्यक्ष एव, इत्यसद्भेदरूपसत्त्वप्रत्यक्षोपपत्तिरिति । स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमपि सत्त्वं चक्षुरादियोग्यमेव ॥

*तथाहि*—यस्मिन् कस्मिंश्चिद् देश-कालवृत्तिनिषेध एतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन प्रत्यासत्तिभूतेनोपस्थापितानां स्वदेश-कालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे ग्राह्य इति ॥

*ननु*—उक्तविधया सामान्यलक्षणप्रत्यासत्त्या सर्वनिषेधेषूपस्थितेष्वपि तत्प्रतियोगित्वाभावश्चक्षुराद्ययोग्य एव ; योग्यप्रतियोगिक एव हि संसर्गाभावो योग्यः । नचाशेषनिषेधानां प्रतियोगित्वमतीन्द्रियसाधा-

न्यायामृतकण्टकोद्धारः

सामानाधिकरण्यसामान्याभावस्य विवक्षितत्वात् । तस्य च ज्ञानान्तरसहकारेण प्रत्यक्षयोग्यत्वसम्भवात् । अन्यथोक्तसामानाधिकरण्यरूपं रजतमिथ्यात्वं प्रत्यक्षं न स्यादित्युक्तत्वात् । किञ्च यस्मिन् कस्मिंश्चित् स्वदेश-कालवृत्तिनिषेध एतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन प्रत्यासत्तिभूतेनोपस्थितानां स्वदेश-कालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे सुग्राह्यः । नच—सामान्यलक्षणया प्रत्यासत्त्या सर्वनिषेधेषूपस्थितेष्वपि तत्प्रतियोगित्वाभावश्चक्षुरादिना ग्रहीतुं न शक्यते ; योग्य-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

योग्यत्वं चोक्ताभावेऽस्त्येवेत्याशयेन समाधत्ते—*नेति* ॥ *योग्यप्रतियोगिक इति* ॥ स्वप्रतियोग्युपलम्भापादकतायोग्यप्रतियोगिक इत्यर्थः । यादृशप्रतियोगिनः सत्त्वेनेन्द्रियसन्निकर्षादिविशिष्टेन तदुपलब्धिरापादयितुं शक्यते, तादृशप्रतियोगिक इति यावत् । *संसर्गाभाव इति* ॥ अभावमात्रं विवक्षितम् । येन संसर्गेण प्रतियोगिनो वैशिष्ट्यं तदुपलम्भस्यापादकम्, तेन संसर्गेणावच्छिन्नप्रतियोगिताकोऽभावः प्रत्यक्ष इति ज्ञापयितुं संसर्गपदमुक्तम् । तत्संसर्गावच्छिन्नत्वं च तदन्यसंसर्गानवच्छिन्नत्वरूपं बोध्यम् ; तेन प्रागभावप्रतियोगितानां संसर्गानवच्छिन्नत्वेऽपि न क्षतिः । तथाच यद्युक्तप्रतियोगितात्वविशिष्टं प्रतियोगित्वं स्यात्, तदोपलभ्येतेत्यापादनासम्भवाद् नोक्ताभावो लौकिकप्रत्यक्षः । *उक्तं हि दीधित्यादौ*—'यथा विद्यमानमपि वह्नित्वे रासभादिदेशनिष्ठाभावप्रतियोगितावच्छेदकत्वं न गृह्यते ; अभावदेशविप्रकर्षादिनेन्द्रियसन्निकर्षादिरूपग्राहकाभावात्, तथा धूमवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वमपीति नानुपलब्धेः प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वलक्षणयोग्यतेति तदभावो नाध्यक्षः'—इति । *अत्रायं भावः*—यद्यपि प्रतियोगितातदवच्छेदकयोः सत्त्व इन्द्रियसन्निकृष्टत्वापत्त्या प्रत्यक्षापत्तिः ; तथापि धूमवदादेरिन्द्रियासन्निकर्षादतीन्द्रियपिशाच-परमाण्वादिरूपत्वस्यापि सम्भवाच्च तन्निष्ठाभावानामपि तथात्वाच्च तद्घटितरूपेणोक्तावच्छेदकत्वस्य प्रत्यक्षापत्त्यसम्भवाद् नोक्तरूपावच्छिन्नाभावः प्रत्यक्षः । न हि प्रतियोगितावच्छेदकताघटितपर्याप्त्यधिकरणस्य लौकिकप्रत्यक्षापत्त्यसम्भवेऽभावस्य लौकिकप्रत्यक्षम् । किञ्चाभावादिप्रत्यक्षं विना प्रतियोगिताया अपि न प्रत्यक्षापत्तिः ; सम्बन्धप्रत्यक्षे सम्बन्धिप्रत्यक्षस्य हेतुत्वात् । *एतेन*—योग्यप्रतियोगिक इत्यादेर्योग्यप्रतियोगिकान्यः संसर्गाभावो न योग्य इति नार्थः ; उक्तप्रतियोगित्वाभावस्य योग्यायोग्यप्रतियोगिकत्वेन योग्यता-

**अद्वैतसिद्धिः**

**नचाशेषनिषेधानां प्रतियोगित्वमतीन्द्रियसाधारणं चक्षुरादियोग्यम् ।**

**तरङ्गिणी**

रणं चक्षुरादियोग्यम्—इति, *मैवम्* ; घटे मनस्त्वाभावस्य, जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वा-प्रत्यक्षत्वानुपपत्त्या प्रतियोगिप्रत्यक्षत्वस्य संसर्गाभावप्रत्यक्षे योग्यतारूपत्वाभावात्, उक्तोपलम्भापादनेनैवाभावस्य योग्यत्वात्, तस्य च प्रकृतेऽपि सम्भवादित्युक्तत्वात् । असद्भेदरूपसत्त्वप्रत्यक्षत्वस्य च प्रतियोगिप्रत्यक्षं विनाऽप्युपपत्तेश्चेति ॥

**न्यायामृतकण्टकोद्धारः**

**प्रतियोगिकस्यैव संसर्गाभावस्य योग्यत्वात्, अशेषनिषेधानां प्रतियोगित्वं चातीन्द्रियसाधारणमिति**

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

पत्तेः, नाप्ययोग्यप्रतियोगिकः संसर्गाभावो न योग्य इत्यर्थः ; महावायौ योग्यायोग्योद्भूतानुद्भूतरूपसामान्याभावस्य प्रत्यक्षमिति दीधित्यादावुक्तत्वात्, नाप्ययोग्यधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावो न योग्य इत्यर्थः; तावताऽपि स्तम्भे पिशाचादेरिव योग्ये घटादावुक्तप्रतियोगित्ववद्भेदस्य प्रत्यक्षत्वानिराकरणेन बाधसामान्यानुद्धारादित्यादि—*परास्तम्* ; उक्तप्रतियोगित्ववद्भेदप्रत्यक्षेऽप्युक्तयोग्यतायाः प्रतियोग्यनुपलम्भेऽपेक्षणेन तदभावे तादृशप्रत्यक्षाभाव इत्यस्याप्युक्तग्रन्थेन प्रतिपादनात् । अत एवोक्तदीधितिवाक्ये तादृशावच्छेदकत्ववद्भेदस्याप्यनध्यक्षतायां तात्पर्यम् । *अत एव च* 'मूर्तसामान्य-तद्वतोरिवोपाधिसामान्य-तद्वतोरत्यन्ताभावान्योन्याभावौ न योग्यावि'त्यादिकं व्याप्तिग्रहोपायदीधित्यादावुक्तम् । *अतीन्द्रियसाधारणम्*=अतीन्द्रियतादृशाभाव-तत्प्रतियोगित्वघटितत्वेनातीन्द्रियं यत् तादृशाभावप्रतियोगितात्वम्, तद्विशिष्टम् । *चक्षुरादियोग्यम्*=यस्य सत्त्वेन तदुपलब्धिरापादयितुं शक्यते तादृशम् । यदि त्वयोग्यधर्मानवच्छिन्नयोग्यमात्रवृत्तिप्रतियोगिताकाभाव एव योग्यः ; वाय्वादौ रूपाद्यभावस्तु न प्रत्यक्षः, किन्त्वनुमेय इति मतमवलम्ब्यते, तदा यथाश्रुतमेव योग्येत्यादिकं सम्यक् । *यत्तु*—तादृशाभावप्रतियोगित्वं यदि घटे स्यात्, तदोपलभ्येतेत्यापादनं सम्भवत्येव ; घटवृत्तेः संसर्गाभावप्रतियोगित्वस्य योग्यत्वात्, प्रागभावप्रतियोगित्ववत् । अत एव 'अयं घटोऽत्रैव, नान्यत्र' इत्यन्यदेशनिष्ठात्यन्ताभावप्रतियोगित्वस्य घटे प्रत्यक्षम्, अन्यदेशनिष्ठात्यन्ताभावस्तु न प्रत्यक्षः ; विशेष्यसन्निकर्षाद्यभावात् । एवं सर्वदेश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वमपि साक्षिवेद्यत्वाद् योग्यम् । अत एव शुक्तिरूप्यादौ मन्मते तस्य साक्षिवेद्यता स्वीक्रियत इति—*माध्वोक्तम्*, *तन्न* ; प्रागभावस्य हि सत्त्वे किं तत्प्रतियोगित्वं प्रत्यक्षम् ? तदसत्त्वे वा ? *नाद्यः* ; तदोक्तप्रतियोगित्वस्याश्रयासन्निकर्षेणाप्रत्यक्षत्वात् । *अन्त्ये तु* प्रागभावप्रतियोगितात्वेन ? प्रतियोगितात्वेन ? तद्व्यक्तित्वेन वा ? *नाद्यः* ; प्रागभावासन्निकर्षात् प्रागभावप्रत्यक्षासम्भवेन तद्घटितरूपेण प्रत्यक्षासम्भवात् तद्दृष्टान्तेन तादृशात्यन्ताभावप्रतियोगित्वे योग्यतां प्रसाध्य तादृशप्रतियोगितात्वरूपेणोपलम्भापादनस्यासम्भवात् । नच—अभावांशेऽलौकिकस्य, प्रतियोगित्वांशे लौकिकस्योपलम्भस्यापादनं सम्भवतीति—वाच्यम् ; गुरुत्वविशेषवद् घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रत्यक्षापत्त्या प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणांशे प्रतियोग्यंशे च लौकिकस्यैवोपलम्भस्यापादनस्याभावप्रत्यक्षे प्रयोजकत्वात् । *अत एव न द्वितीयः* ; घटत्वादिरूपेण घटादेः प्रत्यक्षं विना तत्संयोगादेः संयोगत्वादिरूपेण प्रत्यक्षाभावेन सम्बन्धप्रत्यक्षं प्रति सम्बन्धितावच्छेदकरूपेण सम्बन्धिप्रत्यक्षस्य हेतुत्वेन प्रागभावत्वरूपेणाप्रत्यक्षे तेन रूपेण प्रत्यक्षासम्भवात्, अन्त्यकल्पे वक्ष्यमाणदोषस्यात्रापि सम्भवाच्च । *नान्त्यः* ; तादृशदृष्टान्तेन घटादौ स्वदेश-कालवृत्त्यत्यन्ताभावप्रतियोगित्वस्यापि तद्व्यक्तित्वेनैव प्रत्यक्षसिद्ध्या तदवच्छिन्नाभावस्यैव प्रत्यक्षसिद्धावपि तादृशाभावप्रतियोगित्वत्वावच्छिन्नाभावप्रत्यक्षानुपपादनात् । 'अयमत्रैव

अद्वैतसिद्धिः

वस्तुतस्तु—सामान्यं नेन्द्रियप्रत्यासत्तिः ; मानाभावात् । नच—महानसीयधूमेन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यात्, सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे तस्यापि प्रत्यासन्नत्वात् तत्र व्याप्तिग्रहे ततोऽनुमितिरिति—वाच्यम् ; पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वेन प्रकारेण गृहीत-

तरङ्गिणी

*अत्र केचित्*—स्वसमानाधिकरणयावदभावप्रतियोगित्वाभावरूपसत्त्वज्ञानाभावाशया प्रतियोगि-ज्ञानाभावं वक्तुं सामान्यस्य प्रत्यासत्तित्वं निराकुर्वन् । तथाहि—सामान्यं नेन्द्रियप्रत्यासत्तिः ; माना-भावात् । नच—महानसीयधूमेन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यादिति सामान्यस्य धूमत्वादेः प्रत्यासत्तित्वे तस्यापि प्रत्यासन्नत्वात् तत्र व्याप्तिग्रहे ततोऽनुमितिरिति—वाच्यम् ; पर्वतीयधूमेन्द्रिय-

न्यायामृतकण्टकोद्धारः

न चक्षुरादियोग्यमिति—वाच्यम् ; अतीन्द्रियसाधारणत्वेऽप्युपनीतस्य प्रतियोगित्वस्य योग्यत्वेन तदभावस्य चक्षुरादिना ग्रहीतुं शक्यत्वात्, अतीन्द्रियस्याप्युपनीतस्य परमाणोर्मानसज्ञानविषयत्वात् । *ननु* सामान्यं नेन्द्रियप्रत्यासत्तिः ; मानाभावादिति चेत्, व्याप्तिग्रहान्यथानुपपत्त्या सामान्यप्रत्यासत्ते-रावश्यकत्वात् ; अन्यथा महानसीयधूमेन्द्रियसन्निकर्षे तत्रैव व्याप्तिग्रहे पर्वतीयधूमेन वह्न्यनुमानं न स्यात् । सामान्यप्रत्यासत्तिस्वीकारे हि धूमत्वसामान्यप्रत्यासत्त्याऽतीतानागतसकलधूमोपस्थितौ

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नान्यत्रे'ति प्रत्यक्षं तु सम्भवत्येव ; सन्निकृष्टदेशान्तरनिष्ठात्यन्ताभावस्य प्रत्यक्षत्वेन तत्प्रतियोगित्वाश्रयस्यापि सन्निकृष्टत्वेन च तादृशप्रतियोगित्वप्रत्यक्षसम्भवात् । देशान्तरासन्निकर्षे तु तादृशप्रत्यक्षं न सम्भवत्येव । किञ्च 'अयमत्रैव नान्यत्रे'त्याकारज्ञानस्य देशान्तरनिष्ठात्यन्ताभावप्रतियोग्ययमित्यर्थकत्वे 'घटत्वमत्रैव नान्यत्रे'ति ज्ञानस्यापि प्रमात्वापत्तिः । अथात्रैवेत्येवकारार्थस्यैव नान्यत्रेत्यनेनानुवादात्, एवकारस्य चैतदन्या-संयुक्तत्वबोधकत्वे 'द्रव्यं द्रव्यमेवे'त्यादौ द्रव्यान्यासंयुक्तत्वस्याप्रसिद्धस्य बोधकत्वासम्भवाद् एतद्देशान्यत्वा-वच्छेदेन वर्तमानात्यन्ताभावप्रतियोग्ययमित्यर्थकत्वं वाच्यम्, तत्र विशेष्यासन्निकर्षस्याभावाप्रत्यक्षत्वे त्वदुक्त-हेतुत्वासम्भवः । न ह्यत्र देशो विशेष्यः, किन्तु विशेषणम् ; 'अयमेव देश एतद्वानि'त्यादावेव देशस्य विशेष्यत्वात् । अथ देश एव विशेष्यपदेनोक्तः, तथाप्ययुक्तम् ; कस्यचिद् देशस्य सन्निकर्षात् । न ह्यते-तदन्यसर्वदेशभानम् ; तस्माद् व्यापकत्वमेवायोग्यम् । नच—मनोभिन्नावृत्तित्वादिघटितेन मनस्त्वत्वेन मनस्त्वोपलब्ध्यापादनासम्भवेऽपि घटादौ मनस्त्वाभाव इव तादृशप्रतियोगित्वोपलम्भापादनासम्भवेऽपि तदभावः प्रत्यक्षोऽस्त्विति—वाच्यम् ; मनस्त्वत्वरूपेण हि न मनस्त्वस्याभावः प्रत्यक्षः ; तादृशरूपस्यायोग्यघटितत्वात् । अत एव 'घटत्वत्वादिना न घटत्वाद्यभावस्य प्रत्यक्षते'ति शिरोमणिः, किन्तु मनस्समवेतत्वेनैव ; घटादौ हि मनस्त्वसत्त्वे मनसो योग्यत्वापत्त्या 'मनस्त्वं यदि घटे स्यात्, तदा मनस्समवेतत्वेनोपलभ्येते'त्यादिरीत्या मनस्समवेतत्वविशिष्टस्योपलम्भापादनसम्भवेन तदभावस्य प्रत्यक्षसंभवः । नच—घटादौ मनस्त्वसत्त्वे गुरुत्वादेरपि मनस्समवेतत्वापत्त्या तेन रूपेणोपलम्भापादनासम्भव इति—वाच्यम् ; मनस्त्वीयसमवायेनाधेय-त्वस्यैव मनःसमवेतत्वरूपत्वात् । सर्वदेशेत्यादिकं तु स्वपित्रादीन् प्रत्येव वाच्यम् ; यादृशाभावो हि तार्किकादीनां प्रत्यक्षः, तस्यैव त्वया साक्षिभास्यताया मां प्रति वाच्यत्वात्, अन्यथाऽतिप्रसङ्गात्, तार्किकादिवाक्यं तूक्तमेव । *ननु*—उक्तप्रतियोगित्वाभावस्य लौकिकप्रत्यक्षासम्भवेऽपि सामान्य-प्रत्यासत्त्या वा ज्ञानप्रत्यासत्त्या वाऽलौकिकप्रत्यक्षमस्तु, तावताऽपि मिथ्यात्वानुमानासम्भवः, न ह्यनुमितौ लौकिकप्रत्यक्षस्यैव बाधविधया विरोधित्वम् ; किं तु तदभावनिश्चयमात्रस्य, तत्राह—*वस्तुत इति* ॥ *सामान्यम्=इन्द्रियलौकिकसन्निकर्षविशिष्टविशेष्यकज्ञानप्रकारीभूतधर्मः । *इन्द्रियप्रत्यासत्तिः=तादृशसामान्या-

**अद्वैतसिद्धिः**

**स्मृतव्याप्तेस्तत्र वैशिष्ट्यग्रहसंभवात्, 'सुरभि चन्दनमि'तिवद् विशेष्येन्द्रियसन्निकर्षविशेषणज्ञानासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः पूर्णत्वात्। व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मताज्ञानस्य हेतुता; महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति, धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्, तच्च सामान्यलक्षणां विनैव; तावतैवानुमितिसिद्धेः।**

**तरङ्गिणी**

सन्निकर्षदशायां धूमत्वेन प्रकारेण गृहीत-स्मृतव्याप्तेस्तत्र वैशिष्ट्यग्रहसम्भवात्, 'सुरभि चन्दनमि'तिवद् विशेष्येन्द्रियसन्निकर्षविशेषणज्ञानतदुभयासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः सत्त्वाद् व्याप्तिस्मृतिप्रकारेण पक्षधर्मताज्ञानस्य हेतुता। महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति; धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्। तच्च सामान्यलक्षणां विनैव; तावतैवानुमितिसिद्धेः। नच—सामान्यप्रत्यासत्तिं

**न्यायामृतकण्टकोद्धारः**

**जातायां पर्वतीयधूमे व्याप्तेर्गृहीतत्वेन तदनुमानसम्भवात्। *यदत्रोक्तं परेण* पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वेन प्रकारेण गृहीत-स्मृतव्याप्तेस्तत्र वैशिष्ट्यग्रहसम्भवात् 'सुरभि चन्दनमि'तिवद् विशिष्टेन्द्रियसन्निकर्ष-विशेषणज्ञानतदुभयासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः पूर्णत्वात्। व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मताज्ञानस्यानुमितिहेतुता। महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयः, धूमत्वेन**

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

आश्रयनिष्ठेनालौकिकविशेष्यतासम्बन्धेन प्रत्यक्षं प्रति कारणीभूतस्येन्द्रियस्य सन्निकर्षविधया कारणम्। *तस्यापि=पर्वतीयधूमस्यापि। *विशेष्येन्द्रियसन्निकर्षेति* ॥ मुख्यविशेष्येन्द्रिययोर्लौकिकसन्निकर्षेत्यर्थः। बहिरिन्द्रियाणां स्वकीयलौकिकसन्निकर्षाश्रयमुख्यविशेष्यकज्ञानजनकत्वनियमाद् मुख्यविशेष्यांशे लौकिकसन्निकर्षस्य बहिरिन्द्रियजन्यप्रत्यक्षेऽपेक्षेति भावः॥ यो यत्र पुराऽवगतः, स एव तत्र संस्कारवशादलौकिकप्रत्यक्षे भाति; यत्र यो न पुराऽवगतः, तत्र तस्य धीरनुमित्यादिरेवेति प्राचीनतार्किकमते, उपनयसन्निकर्षास्वीकर्तृमते, हेतुनिष्ठं साध्यसामानाधिकरण्यमेव व्याप्तिः, न तु साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकमिति पक्षे च, महानसीय एव धूमे गृहीतस्मृतव्याप्तेः पर्वतीयधूमे प्रत्यक्षासम्भवादाह—*व्याप्तिस्मृतीति* ॥ यथाश्रुतार्थकमिदं प्राभाकरादिमते बोध्यम्। *मन्मते तु*—*प्रकारेण=प्रकारतायोग्येन। *विषयः=विषयतायोग्यः। तादृशयोग्यत्वं चोद्बुद्धसंस्कार-ज्ञानयोर्व्याप्तिविषयकयोर्यदन्यतरत्, तद्विषयत्वम्। तथा च प्राभाकरादिमते धूमत्वाद्येकरूपेण व्याप्तिपक्षधर्मताज्ञानयोरिव मन्मते तयोर्वा तेन रूपेण व्याप्तिविषयकोद्बुद्धसंस्कार-पक्षधर्मताज्ञानयोर्वा हेतुत्वम्; व्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य तन्मतेऽनावश्यकत्ववद् मन्मते व्याप्तिज्ञानस्याप्यनावश्यकत्वात्, तादृशज्ञानद्वयोत्तरमुक्तवैशिष्ट्यधीव्यक्तीनामिव व्याप्तिविषयकोद्बुद्धसंस्कारपक्षधर्मताज्ञानोत्तरं व्याप्तिस्मृतिव्यक्तीनामनुमित्युत्पत्त्यर्थं कल्पने महागौरवात्। *उक्तं हि पञ्चपाद्याम्*—'लिङ्गज्ञान-व्याप्तिसंस्कारयोः संभूय लिङ्गिज्ञानहेतुत्वम्; संस्कारानुद्बोधे तदभावात्, तस्माद् लिङ्गज्ञानमेव लिङ्गिसंबन्धसंस्कारमुद्बोध्य तत्सहितं लिङ्गिज्ञानं जनयती'ति। *उद्बोध्य=स्वतः, स्वजन्यवह्निज्ञानादितो वा, स्वपूर्ववर्तिनोऽन्यस्माद्वोद्बोध्य। तेन धूमवत्ताज्ञानस्य कदाचिदुद्बोधकत्वाभावेऽपि न क्षतिः। स्वपूर्ववर्तिन उद्बोधकत्वेऽपि पूर्ववर्तितासम्बन्धेन स्वस्य तद्व्यावर्तकत्वेन परम्परयोद्बोधकत्वम्; करणीभूतव्यक्तिव्यावर्तकत्वेन जाति-गुणयोः करणत्ववत्। अतो लिङ्गज्ञानमेवोद्बोध्य जनयतीति नासङ्गतम्; अन्यस्योद्बोधकत्वेऽपि लिङ्गज्ञानस्य तद्व्यावर्तकत्वेन प्राधान्यविवक्षया तदुक्तेः। व्याप्तिस्मृतिप्रयोजकत्वेन पराभिमतानामुद्बोधकानां शक्तिविशेषरूपे संस्कारोद्बोधे हेतुत्वसम्भवेन तादृशशक्तिमत्संस्कारसहितं लिङ्गज्ञानमनुमितिहेतुः; प्राचीनमत उद्बोधकजनित-

अद्वैतसिद्धिः

नच—सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी न वेत्यनुभूयमानसंशयो न स्यात्, प्रसिद्धधूमे वह्निसंबन्धावगमात्, अप्रसिद्धस्य चाज्ञानादिति—वाच्यम् ; प्रसिद्धधूम एव तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः । तथा चोक्तं मणिकृता—'घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशय-सिसाधयिषे भवत एवे'ति। निश्चितेऽप्यर्थे प्रामाण्यसंशयाहितसंशयवद् धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयादपि तादृशसंशयोपपत्तेश्च । एतेन वायू रूपवान् न वेति संशयोऽपि व्याख्यातः ।

तरङ्गिणी

विना 'धूमो वह्निव्यभिचारी नवे'त्यनुभूयमानः संशयो न स्यात् ; प्रसिद्धधूमे वह्निसम्बन्धावगमात्, अप्रसिद्धस्य चाज्ञानादिति—वाच्यम् । प्रसिद्धधूम एव तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः । तथाचोक्तं मणिकृता—"घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशय-सिसाधयिषे भवतः" इति । निश्चितेऽप्यर्थे प्रामाण्यसंशयाहितसंशयवद् धूमत्वं वह्निव्यभिचारिवृत्ति नवेति संशयादपि तादृशसंशयोपपत्तेश्च । *एतेन*—वायू रूपवान् नवेति संशयोऽपि—*व्याख्यातः* ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शक्तिकस्यैव संस्कारस्य स्मृत्यादिहेतुत्वात् । संस्कारेण स्मृत्यादौ जननीये तत्सहकारित्वमेवोद्बोधकत्वमिति नव्यमते तु तादृशोद्बोधकैः सहितमेव लिङ्गज्ञानं तथा ; संस्कारहेतुत्वे मानाभावात् । नच—व्याप्तिस्मरणोत्तरं यत्र धूमवत्ताज्ञानम्, यत्र वा व्याप्तिविशिष्टधूमवत्तास्मृतिः प्रथमत एव जाता, तत्रानुमित्युत्पत्तये व्याप्तिधीत्वेनापि हेतुत्वस्यावश्यकत्वाद् गौरवमिति—वाच्यम् ; उद्‌बुद्धसंस्कार-व्याप्तिज्ञानयोरेकशक्तिमत्तया हेतुत्वस्य प्राचीनमते स्वीकारात्, केवलसंस्कारादुद्‌बुद्धसंस्कारस्यातिरिक्तत्वेन तत्रैव शक्तिविशेषस्वीकारात् । अनतिरिक्तत्वेऽपि नानुद्‌बुद्धसंस्कारादनुमितिः ; उद्बोधकालावच्छिन्नशक्तिस्वीकारात्, नव्यमते संस्कारोद्बोधकेषु व्याप्तिज्ञानेषु व्याप्तिज्ञाने च पर्याप्ताया एकशक्तेः स्वीकारात् । अत एव नानालिङ्गकपरामर्शेभ्योऽनुमितिरुपपन्ना ; तावत्सु तस्याः सम्भवात् । यदि चानुमितौ पक्ष-साध्यसंसर्गेतरस्य घटादेः स्मृत्यादिसामग्रीतो भानं नानुभवविरुद्धम्, तदा तादृशोद्बोधकेभ्यो व्याप्तिस्मृत्यादिसामग्रीतः पक्षधर्मतायाश्च तस्यां भानमास्ताम् । अत एवोद्‌बुद्धसंस्कारोत्तरं व्याप्त्यादिस्मरणस्य नापलापः ; अनुमितेरेव व्याप्त्यांशे स्मृतित्वस्वीकारात्, अन्यथा त्वनुमितिसामग्री तद्भाने प्रतिबन्धिकाऽस्तु । नच—संस्कारस्याप्यनुमितिजनकत्वे न्यायप्रयोगस्थल उपाध्युद्भावनं नियमतो न स्यात्, तत्कार्यस्य व्यभिचारज्ञानस्यानुमितिकारणसंस्काराप्रतिबन्धकत्वादिति—वाच्यम् ; विरोधिनिश्चयस्य संस्कारनाशकत्वेन व्याप्तिसंस्कारनाशार्थं व्याप्तिधीप्रतिबन्धार्थं वा व्यभिचारज्ञानस्य साधनीयत्वेन नियमत उपाध्युद्भावनसम्भवात्, विरोधिनिश्चयस्य संस्कारानाशकत्वेऽपि विरोधिविषयकसंस्कारे संस्कारनाशकत्वस्यावश्यकत्वेन कारणीभूतसंस्कारविरोधिविषयकसंस्कारजननाय व्यभिचारज्ञापकोपाध्युद्भावनसम्भवाच्च । *ननु*—प्राचां यत्र यस्य निश्चयः, तत्र तस्य रूपान्तरेणापि न संशयः ; समानविशेष्यकताप्रत्यासत्त्यैव तयोर्विरोधित्वात्, तत्राह—*निश्चितेऽपीति* ॥ *वह्निव्यभिचारीति* ॥ वह्निव्याप्यत्वेन निश्चिततत्तद्धूमेभ्यो यद् भिन्नम्, तदित्यर्थः । प्राचां मते यथा 'रूपत्वं पार्थिवादित्रिविधरूपभिन्नवृत्ति न वे'ति संशयकाले वायौ पार्थिवादिरूपविशेषाभावनिश्चयेऽपि 'वायू रूपवान् न वे'ति संशयः, यथा वा 'पार्थिवादिरूपाणि वायुवृत्तित्वाभाववन्ती'ति निश्चयेऽप्युक्तकाले 'रूपं वायुवृत्ति न वे'ति संशयः, तथा 'धूमो वह्निव्याप्यः' इति निश्चयेऽपि 'धूमत्वं तत्तद्धूमभिन्नवृत्ति न वे'ति संशयकाले समानविषयकसंशयस्याप्रतिबन्धकतायामतिरिक्तसम्भावनाया उत्तेजकत्वात् । न चैवम्—तादृशोत्तेजकस्य सदैव सम्भवाद् निश्चयः कदाऽपि विरोधी न स्यादिति—वाच्यम् ; रूपत्वावच्छेदेन पार्थिवादित्रिविधरूपान्यत्वाभावनिश्चयकाले तादृशसंशय-

अद्वैतसिद्धिः

ननु—सिद्धे नेच्छा, किन्तु? असिद्धे, सा च स्वसमानविषयकज्ञानजन्या, तच्च ज्ञानं न सामान्यप्रत्यासत्तिं विना। नच—सिद्धगोचरसुखत्वप्रकारकज्ञानादेवाज्ञाते सुखे भवतीच्छा, समानप्रकारकत्वमात्रस्य नियामकत्वादिति—वाच्यम्; रजतत्वेन प्रकारेण रजतेऽनुभूयमाने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात्। नच प्रकाराश्रयत्वमपि नियामकम्; रजतभ्रमात् शुक्ताविच्छानुदयप्रसङ्गात्। तथा च समानप्रकारकत्वे सति समानविषयकत्वं तन्त्रम्। अत एवाख्यातिपक्षे रजतस्मरणस्यैव शुक्तौ प्रवर्तकत्वमित्यपास्तम्, इति—चेत्, *न*; यतो रजतभ्रमात् शुक्ताविच्छा नास्त्येव, किं त्वनिर्वचनीये रजत इत्यनिर्वचनीयख्यातौ वक्ष्यते। प्रकाराश्रयत्वं नियामकं वदन्नख्यातिवादी परमेवं विभीषणीयः। तथा च प्रकाराश्रय-

तरङ्गिणी

*ननु* सिद्धे नेच्छा, किं त्वसिद्धे, सा च स्वसमानविषयकज्ञानसाध्या। तच्च ज्ञानं न सामान्यप्रत्यासत्तिं विना। नच—सिद्धगोचरसुखत्वप्रकारकज्ञानादेवाज्ञाते सुखे भवतीच्छा, समानप्रकारकत्वमात्रस्य नियामकत्वादिति—वाच्यम्; रजतत्वेन रजतेऽनुभूयमाने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात्। नच प्रकाराश्रयत्वमपि नियामकम्; रजतभ्रमात् शुक्ताविच्छानुदयप्रसङ्गात्। तथाच समानप्रकारकत्वे सति समानविषयकत्वं तन्त्रम्। अत एवाख्यातिपक्षे रजतस्मरणस्यैव शुक्तौ प्रवर्तकत्वमित्यपास्तमिति—चेत्, *न*; यतो रजतभ्रमात् शुक्ताविच्छा नास्त्येव, किंत्वनिर्वचनीये रजते। प्रकाराश्रयत्वं नियामकं वदन्न-

न्यायामृतकण्टकोद्धारः

पर्वतीयधूमज्ञानं चापि जातम्; यद्धर्मावच्छेदेन यद्धर्मज्ञानम्, तद्धर्मज्ञानं तदुपनयसामग्रीति नियमात्। तच्च सामान्यलक्षणां विनैव, तावतैवानुमितिसिद्धेरिति, *तन्न*;

तथा सत्यवच्छेदकानुमितौ व्याप्तिग्रहो न स्यात्। नच—एतादृशं स्थलमेव नास्तीति—वाच्यम्; अयमालोकः? धूमो वा? उभयथाऽपि वह्निव्याप्यो भावः? अभावो वा? उभयथापि प्रमेयवह्निव्याप्यत्वात् 'स वह्निमानि'त्यादाववच्छेदकानुपस्थितावपि व्याप्तिग्रहदर्शनात्। नच—यो वह्निव्याप्यवानिति प्रत्येकवृत्तिव्याप्त्यवच्छिन्ना [illegible] इति व्याप्यतावच्छेदकोपस्थिति-रावश्यिकेति—वाच्यम्; सकलधूमादिनिष्ठप्रत्येकवृत्तिव्याप्त्यैवोपपत्तौ प्रत्येकवृत्तिव्याप्त्यतिरिक्तधूमा-लोकसाधारणमहाव्याप्तिकल्पने मानाभावात्। तथाचैतादृशस्थलेष्ववच्छेदकाज्ञानेन व्याप्तिग्रहासम्भवेन तदुपनयासम्भवाद् अनुमानानुदयप्रसङ्गात् सकलधूमोपस्थित्यर्थं सामान्यप्रत्यासत्तिरावश्यिका। किञ्चानागतया पाकज्ञानान्यथानुपपत्त्याऽपि सामान्यप्रत्यासत्तिरावश्यिकेति। तथाहि—पाकं कृत्वा साधयामीति तावदिच्छा जायते, सा च सिद्धे न सम्भवति; असिद्धविषयत्वनियमादिच्छायाः, किन्त्व-सिद्धे, सा च स्वसमानविषयकज्ञानजन्येत्यसिद्धपाकादिज्ञानमावश्यकम्, तच्च न सामान्यप्रत्यासत्तिं विना सम्भवति। नच—सिद्धगोचरपाकत्वादिप्रकारकज्ञानत्वादेवाज्ञाते पाके भवतीच्छा, समानप्रकारकत्व-मात्रस्य नियामकत्वादिति—वाच्यम्; रजतत्वेन रजतेऽनुभूयमाने घटादौ रजतत्वप्रकारकेच्छा-प्रसङ्गात्। नच—प्रकाराश्रयत्वमपि नियामकम्; रजतभ्रमात् शुक्तावपीच्छानुदयप्रसङ्गात्। नच—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

स्यानुदयेन तस्यासार्वत्रिकत्वादिति भावः। *विभीषणीय इति*॥ वस्तुतस्तन्मते संवादिप्रवृत्तावेव प्रकाराश्रयत्वं नियामकमुच्यते, विसंवादिप्रवृत्तौ तु दोषः, दोषसमवधानोत्तरविशेषणज्ञानं वा; प्रवृत्तिमात्रे तूपस्थितयोरिष्टतावच्छेदक-धर्मिणोरसंसर्गाग्रह इति न दोष इति भावः। नच—एकस्यां रजतव्यक्तौ ज्ञाताया-मन्यस्यां रजतव्यक्तौ प्रवृत्त्यापत्तिरिति—वाच्यम्; ज्ञातरजतानामेकत्रैवान्यत्रापि प्रवृत्तेरन्यथाख्यातिमतेऽ-

**अद्वैतसिद्धिः**

त्वस्य नियामकत्वादन्यथाख्यातिपक्षोऽपि निरस्त एव। नच—तर्हि भ्रमत्वं न स्यात्; 'इदं रजतमि'ति भ्रमत्वाभिमतज्ञानस्य व्यधिकरणप्रकारकत्वानभ्युपगमादिति—वाच्यम्; बाधितविषयत्वेन हि भ्रमत्वम्, न तु व्यधिकरणप्रकारत्वेन; तस्यापि विषयबाधप्रयोज्यत्वादिति हि वक्ष्यते। *ननु*—अभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशयावत्तेजोविरहरूपस्य तमसः प्रत्यक्षता न स्यात्, सामान्यप्रत्यासत्तिं विना प्रतियोग्यनुपस्थितेः, इति—चेत्, *न*; अस्मन्मते तमसो भावान्तर-

**तरङ्गिणी**

ख्यातिवादी परमेवं विभीषणीयः। तथाच प्रकाराश्रयत्वस्य नियामकत्वादन्यथाख्यातिपक्षोऽपि निरस्त एव। नच—तर्हि भ्रमत्वं न स्यात्; 'इदं रजतमि'ति भ्रमत्वाभिमतज्ञानस्य व्यधिकरणप्रकारकत्वानभ्युपगमादिति—वाच्यम्; बाधितविषयत्वेन हि भ्रमत्वम्, नतु व्यधिकरणप्रकारकत्वेन; तस्यापि विषयबाधप्रयोज्यत्वाच्च।

*ननु*—अभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशयावत्तेजोविरहरूपस्य तमसः प्रत्यक्षता न स्यात्, सामान्यप्रत्यासत्तिं विना प्रतियोग्यनुपस्थितेरिति—चेत्, *न*; अस्मन्मते तमसो भावान्तरत्वात्।

**न्यायामृतकण्टकोद्धारः**

रजतभ्रमात् शुक्तिविच्छा नास्त्येव, किंत्वनिर्वचनीयरजत इत्यनिर्वचनीयख्यातौ वक्ष्यत इति—वाच्यम्; 'अनिर्वचनीयख्यातेरग्रे निराकरिष्यमाणत्वेन तत्रेच्छेत्यस्यासम्भवदुक्तिकत्वात्। तथाच

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

प्यापत्तेः, असाधारणकारणकल्पनात्, तदभावाद् व्यक्त्यन्तरे प्रवृत्त्यभावस्य मन्मतेऽपि सम्भवात्। *व्यधिकरणप्रकारकत्वेति* ॥ यादृशप्रकारता स्वनिरूपितविशेष्यतासमानाधिकरणान्यवृत्तिः, तादृशप्रकारताकत्वेत्यर्थः। *स्वम्=प्रकारता रजतादिनिष्ठा। तन्निरूपितविशेष्यतासमानाधिकरणाद् इदंत्वादेर्भिन्ने रजतादौ तस्याः सत्त्वात्। *बाधितेति* ॥ मिथ्येत्यर्थः। विषयत्वेन=विषयत्वघटितम्। *विषयबाधप्रयोज्यत्वात्=भ्रमविशेष्ये विशेषणाभावज्ञानज्ञाप्यत्वात्। तथाच भ्रमत्वज्ञानकाले तादृशाभावज्ञानस्यावश्यकत्वेन तादृशाभावघटितमिथ्यात्वघटितमेव भ्रमत्वं युक्तमिति भावः। *न तु व्यधिकरणेत्यादिनेदं सूचितम्*—तदीयतत्सम्बन्धानधिकरणे तत्सम्बन्धेन तत्प्रकारकधीत्वं तस्य तत्सम्बन्धेन भ्रमत्वमिति लक्षणकरणे सम्बन्धांशे भ्रमत्वं भ्रमे न स्यात्; व्यवह्रियते च तत्र तस्य भ्रमत्वं तान्त्रिकैः, अत एव—साध्ये हेतुसमानकालत्वावगाहिन्या अनुमितेः संसर्गीभूतकालांशे भ्रमत्वमुक्तम्—परामर्शग्रन्थे दीधित्यादौ ॥ *अथ*—उक्तधीत्वं विशेषणस्येव तत्सम्बन्धस्यापि भ्रमत्वमिति—*चेत्*, तर्हि 'ह्रदो वह्निमानि'त्यादिधीः संयोगत्वविशिष्टस्य भ्रमः स्यात्। *अथ*—विशेषणप्रतियोगिकसम्बन्धत्वविशिष्टस्यैव भ्रमत्वं तत्र, न तु सम्बन्धतावच्छेदकमात्रविशिष्टस्येति—*चेत्, तर्हि संयोगेन रूपप्रकारकधी रूपे संयोगत्वविशिष्टस्य भ्रमो न स्यात्। एवं दूरस्थवृक्षद्वय ऐक्यविषयकस्य 'सोऽय'मिति निर्विकल्पकस्य ध्यानादिसमये प्रभाविशेषादिनिर्विकल्पकस्य च भ्रमस्य भ्रमत्वं न स्यात्; व्यवह्रियते च तत्रापि लोके भ्रमात्वम्; तस्माद् बाधितविषयकत्वमेव भ्रमत्वम्। अत एवाबाधितविषयकत्वघटितप्रमात्वमपि निर्विकल्पकसाधारणम्। एतावांस्तु विशेषः—'सोऽयमि'ति वाक्यजन्यप्रमा तत्तेदन्त्वोपलक्षणप्रमाद्वारिका, तज्जन्यभ्रमस्तु तद्भ्रमद्वारक इति। तस्मादैक्यभ्रमो निर्विकल्पकः सम्भवत्येव। ध्यानादिसमये प्रभादिनिर्विकल्पकभ्रमस्तु ध्यात्रादीनामनुभवसिद्ध एव—*इति* ॥ *अस्मन्मते=पूर्वोत्तरमीमांसकयोर्मते। *भावान्तरत्वादिति* ॥ तदुक्तम्—

"नाभावोऽभाववैधर्म्यात्, नारोपो बाधहानितः।
द्रव्यादिषट्कवैधर्म्याद् ज्ञेयं मेयान्तरं तमः ॥" इति।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'तमो नीलं चलती'त्यादिप्रत्ययाद् रूपादिमत्त्वेन घटादिष्विव तमस्यपि तद्बाधाभावेन च गन्धाद्यभावात् पृथिव्यादिद्रव्यगुणादिवैलक्षण्येन च तमो द्रव्यान्तरमित्यर्थः ॥

*किंच* द्रव्यचाक्षुषे आलोकप्रतियोगिकसंयोगो न हेतुः; मणिप्रभादौ तदभावेऽपि चाक्षुषोत्पत्तेः। नाप्यालोकप्रतियोगित्वोपलक्षितः संयोगः; आलोकप्रतियोगिकत्व-संयोगत्वयोर्विशेषण-विशेष्यभावे विनिगमकाभावेन तदवच्छिन्नस्य कारणताद्वयापत्तेः। नापि—अन्यदेशावच्छिन्नादालोकसंयोगात् चाक्षुषोत्पत्त्यसम्भवाद् जातिविशेषस्यैव द्रव्यादिचाक्षुषजनकतायामालोकसंयोगनिष्ठायामवच्छेदकत्वं स्वीकार्यम्, सा च जातिरालोकनिष्ठे वाय्वादिसंयोगेऽपि सम्भवति, अत एव प्रभादि चाक्षुषमिति—वाच्यम्; तादृशजातिः संयोगत्वस्य विभागत्वस्य वा व्याप्येत्यत्र विनिगमकाभावात्। अत एवालोकप्रतियोगिकत्वोपलक्षितविजातीयत्वेनापि न हेतुतासम्भवः; आलोकघटादौ वायुविभागस्य सम्भवेन वायुप्रतियोगिकत्वविशिष्टविजातीयत्वेन हेतुतामादाय विनिगमकाभावापत्तेः, किन्तु तमस्त्वेन प्रतिबन्धकत्वमेव द्रव्यचाक्षुषं प्रति कल्प्यते; तदभावादेवोक्तप्रभादौ चाक्षुषोत्पत्तिः। न च—तमोऽभावत्वेन कारणत्वेऽपि तमःप्रतियोगिकत्वाभावत्वयोर्विशेषण-विशेष्यत्वस्याविनिगम्यत्वेन कारणताद्वयापत्तिरिति—वाच्यम्; स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तमस्त्वविशिष्टे विशेषणतासम्बन्धेन वर्तमानमभावत्वमेव हेतुतावच्छेदकम्, न तु विशेषणतासम्बन्धेनाभावत्वविशिष्टे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वर्तमानं तमस्त्वम्; उक्तप्रतियोगिताकत्वसम्बन्धेनैव तस्य हेतुतावच्छेदकत्वस्य वाच्यतया द्विधोक्तसम्बन्धप्रवेशे गौरवापत्तेः। अभावत्वं वा न निवेश्यते; उक्तप्रतियोगिताकत्वसम्बन्धेन तमस्त्वस्यैव हेतुतावच्छेदकत्वसम्भवात्। न च—भेदवारणायात्यन्ताभावत्वमवश्यं निवेश्यमिति—वाच्यम्; सम्बन्धविशेषावच्छिन्नप्रतियोगिताया अवश्यं निवेश्यतया तत एव तद्वारणात्। *यदि तु*—प्रतिबन्धकस्याभावो न हेतुः, किन्तु प्रतिबन्धकं कार्यप्रागभावे क्षेमसाधारणकारणत्वाश्रयम्। न च—कारणकूटाश्रयक्षणोत्तरक्षणत्वस्य कार्योत्पत्तिव्याप्यतया प्रतिबन्धकसत्त्वेऽपि सकलकारणसत्त्वसम्भवात् कार्योत्पत्त्यापत्तिरिति—वाच्यम्; सकलकारणाश्रयत्वस्य प्रतिबन्धकाभावसहितस्यैवोक्तव्याप्यतावच्छेदके प्रवेशादिति मतमाश्रीयते वा, प्रतिबन्धकाभावस्य हेतुत्वं तद्व्यक्तित्वेनैव, न तु मण्याद्यभावत्वेन, न च—मणि-गगनान्यतरत्वावच्छिन्नाभावव्यक्तेरपि तद्व्यक्तित्वेन हेतुतापत्तिरिति—वाच्यम्; तेन रूपेण दाहादिहेतुत्वेऽन्यथासिद्धेः सर्वैरपि वाच्यत्वात्, तद्व्यक्तेर्मणिसामान्याभावानतिरिक्तत्वाच्चेति मतं वाऽऽश्रीयते, तदा न काऽप्यनुपपत्तिः। नच—उक्तरीत्याऽऽलोकप्रतियोगिकत्व-संयोगत्वयोरपि विशेष्यविशेषणभावव्यवस्थासम्भवात् तत्र पूर्वोक्तो विनिगमकाभावः कथम्? इति—वाच्यम्; प्रतियोगितासम्बन्धेनालोकविशिष्टस्यैव निवेश्यतया पूर्वोक्तगौरवाभावेन विनिगमकाभावस्यावश्यकत्वात्। न ह्यालोकत्वावच्छिन्नत्वं संयोगप्रतियोगितायां प्रामाणिकम्, येन तस्यैव लाघवाद् निवेशेनालोकव्यक्तीनामप्यनिवेशो वाच्यः। नच—'आलोकवानि'त्याकारधीः—'विशिष्टस्य वैशिष्ट्यमि'ति 'विशेष्ये विशेषणं तत्रापि विशेषणान्तरमि'ति च रीत्या, इति तत्र विषयभेदं विना ज्ञानयोर्वैलक्षण्यासम्भवः; "अर्थेनैव विशेषो हि निराकारतया धियामि"त्याचार्योक्तेः, तथा चाद्य आलोकत्वावच्छिन्नप्रतियोगिताकसंयोगत्वेन भानम्, द्वितीये तु केवलं संयोगत्वेनेति प्रामाणिकमेवालोकत्वावच्छिन्नत्वं संयोगीयप्रतियोगितायामिति—वाच्यम्; तत्र तस्य प्रामाणिकत्वेऽपि तादृशकारणतावच्छेदके तन्निवेशे प्रयोजनाभावात्। नच—आलोकव्यक्तीनामानन्त्येन तन्निवेशे गौरवेणोक्तावच्छिन्नत्वेन प्रतियोगितानिवेश एव युक्त इति—वाच्यम्; आलोकत्वावच्छिन्नस्यैकस्यैवावच्छेदकत्वस्य नानाव्यक्तिषु सम्भवेन गौरवाभावात्। तमस्त्वावच्छिन्नप्रतियोगिताकत्वं त्ववश्यमभावे निवेश्यम्; तमस्सत्त्वेऽपि तमो-घटोभयाभावसत्त्वेनातिप्रसङ्गात्। यदि तु विशिष्टवैशिष्ट्यबुद्धावालोकत्वविशिष्टं विषयः, 'विशेष्ये विशेषणमि'ति ज्ञाने तु तदुपलक्षितम्, तद्विशिष्ट-तदुपलक्षितयोश्च भेदस्वीकारादुक्तज्ञानयोर्वैलक्षण्यम्, तदा संयोगीयप्रतियोगिताया आलोकत्वावच्छिन्नत्वमप्रामाणिकमेव। तस्मात् तादात्म्यसम्बन्धेन तमस्त्वेन चाक्षुषं प्रति प्रतिबन्धकत्वम्,

**अद्वैतसिद्धिः**

त्वात्। नच—तथापि तद्व्यञ्जकत्वात् तदपेक्षेति—वाच्यम्; स्वरूपसत एव तादृक्तेजोविरहस्य तमोव्यञ्जकत्वम्, न तु ज्ञातस्य; मानाभावात्, इत्यभ्युपगमात्। अन्येषां मते तादृक्तेजोविरहज्ञानस्यापेक्षितत्वेऽपि प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तत्सम्भवेन तदर्थं सकलप्रतियोगिज्ञानजनिकायाः

**तरङ्गिणी**

नच—तथापि तद्व्यञ्जकत्वात् तदपेक्षेति—वाच्यम्; स्वरूपत एव तादृक्तेजोविरहस्य तमोव्यञ्जकत्वम्, नतु ज्ञातस्य; मानाभावात्, इत्यभ्युपगमात्, अन्येषां तादृक्तेजोविरहज्ञानस्यापेक्षितत्वेऽपि प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तत्संभवेन तदर्थं सकलप्रतियोगिज्ञानजनिकायाः सामान्यप्रत्यासत्तेरनुपयोगात्॥

**न्यायामृतकण्टकोद्धारः**

समानप्रकारकत्वे सति समानविषयकत्वस्यावश्यकत्वेनानागततज्ज्ञानार्थं सामान्यप्रत्यासत्तिस्वीकार आवश्यक एव॥ यदपि चाभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशकतेजोविरहस्य तमसः प्रत्यक्षता न स्यात्; सामान्यप्रत्यासत्तिं विना प्रतियोग्यनुपस्थितेः, इत्याशङ्क्य तमसः स्वमते भावत्वेन समाहितम्, *तत्तुच्छम्*; तमसो भावान्तरत्वेऽपि तद्व्यञ्जकत्वेन प्रौढप्रकाशकयावत्तेजोविरहस्यावश्यापेक्षितत्वेन तस्य च यावत्तेजोरूपप्रतियोगिज्ञानं विना ज्ञातुमशक्यत्वात्, तस्य च सामान्यप्रत्यासत्तिं विनाऽसम्भवात्। नच—स्वरूपसत एव यावत्तेजोविरहस्य तद्व्यञ्जकत्वम्, नतु ज्ञातस्य; मानाभावादिति—वाच्यम्; ज्ञातस्यैव व्यञ्जकताया आवश्यकत्वात्, अन्यथा ध्वनेरज्ञातस्यैव वर्णव्यञ्जकतापत्तौ ध्वन्यश्रवणेऽपि देशान्तरे ध्वन्युत्पत्तेरिह वर्णव्यक्त्यापत्तेः, अत एवालोकोऽपि ज्ञात एव व्यञ्जकः। नच—यावत्तेजोविरहज्ञानस्यापेक्षितत्वेऽपि प्रतियोगितावच्छेदकप्रकारकयत्किञ्चित्प्रतियोगिज्ञानादेव तत्सम्भवे सकलप्रतियोगिज्ञानजनकसामान्यप्रत्यासत्तिस्वीकारो न युक्त इति—वाच्यम्; यावत्तेजोविरहज्ञाने यावत्प्रतियोगिज्ञानस्याप्यावश्यक-

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

कपालादौ घटादेरिव घटादौ। तदवच्छिन्नचिद्गतमूलाविद्यायाः परिणामस्तमः, इति तत्र तत्तादात्म्यसत्त्वात् तत्काले न चाक्षुषम्, प्रभादौ तदभावाच्चाक्षुषम्। तमोध्वंसश्चालोकसंयोगादिरूपः, इति न तत्कल्पने गौरवम्। न च—तमोऽभावत्वेन कारणतापक्षो न युक्तः; लाघवेन चाक्षुषहेतुतया भावरूपस्यैव वस्त्वन्तरस्य सिद्धेर्युक्तत्वादिति—वाच्यम्; तस्य द्रव्यरूपत्वे घटादिचाक्षुषस्थले घटादावालोके च तस्य संयोगद्वयं कल्पनीयम्। अतीन्द्रियत्वसिद्धये स्पार्शनप्रत्यक्षे तादात्म्येन तस्य प्रतिबन्धकत्वम्; उद्भूतस्पर्शस्तत्र न जायते, तत्र तस्य प्रतिबन्धकत्वादिति वा कल्पनीयम्। तस्य चाक्षुषं न जायते; द्रव्यवृत्तिविषयतासम्बन्धेन चाक्षुषं प्रति तत्प्रतियोगिकसंयोगत्वेन हेतुत्वस्वीकारेण तत्प्रतियोगिकत्वविशिष्टसंयोगस्य तत्रासत्त्वादिति वाच्यम्। तथाच तमोऽभावत्वेन कारणत्वे तदपेक्षया न गौरवम्। यदि च तस्य संयोगसम्बन्धेनोक्तहेतुत्वं कल्पनीयम्, न तु तत्संयोगस्येत्युच्यते, तदाऽपि विभागसम्बन्धेन तस्य हेतुतामादाय विनिगमकाभावः, तस्य गुण-क्रियान्यतररूपत्वेऽपि विभागादिरूपत्वे संयोगादिरूपतामादाय विनिगमकाभावः, सामान्यरूपत्वे संयोगो विभागो वा तदाश्रय इति सः, तस्माद् भावरूपस्य तस्यासंभवादभावरूपत्वमेव। स चाभावो न तमोनाशः; आलोकादौ तदसम्भवात्। अत एव न तमःप्रागभावः; किन्तु तमोऽत्यन्ताभाव इति दिक्॥ *न तु ज्ञातस्येति*॥ आलोकस्य तमोनाशकत्वात् तमस आलोकाभावप्रयुक्तत्वेन तमोजन्यस्य तमश्चाक्षुषस्यालोकाभावप्रयुक्तत्वम्। *उक्तं हि विवरणे*—'आलोकविनाशितस्य तमसः पुनर्मूलकारणादेव जन्मे'ति। तथा चालोकस्याभाव एव तमोव्यञ्जकः, न तु तज्ज्ञानमिति भावः। *अन्येषाम्=उक्ततेजोविरहस्तम इति वादिनां वैशेषिकादीनाम्। *प्रतियोगितावच्छेदकेति*॥ प्रौढप्रकाशत्वेत्यर्थः। तच्चोद्भूतानभिभूतरूपवन्महा-

अद्वैतसिद्धिः

सामान्यप्रत्यासत्तेरनुपयोगात्। नच—गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यम्, तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति—साम्प्रतम्; यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वात्। एतेन—प्रागभावप्रतीतिरपि—व्याख्याता॥

तरङ्गिणी

नच—गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यम्, तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति—साम्प्रतम्; यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वनिरूपकत्वात्। एतेन—प्रागभावप्रतीतिरपि—व्याख्याता॥

न्यायामृतकण्टकोद्धारः

त्वात्। नहि प्रतियोगितावच्छेदकप्रकारकयत्किञ्चित्प्रतियोगिज्ञाने यावदभावज्ञानं सम्भवति। तस्मात् यावत्प्रतियोगिज्ञानार्थं सामान्यलक्षणाऽऽवश्यिका॥

अपिच गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यम्, तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपम्, तच्च सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति सामान्यलक्षणाङ्गीकार आवश्यक एव। नच—यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वाद् न तदङ्गीकार इति—वाच्यम्; गोत्वत्वस्य गोत्ववृत्तित्वाद् गोव्यक्तेश्च तद्वृत्तित्वाभावेन गोव्यक्तिरूपताया वक्तुमशक्यत्वात्॥

अपिच व्यभिचारसंशयविषयत्वान्यथानुपपत्त्या सामान्यलक्षणाप्रत्यासत्तिरवश्यमङ्गीकर्तव्या;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

तेजस्त्वं प्रभात्वरूपा जातिर्वा। *गोव्यक्तेरिति*॥ समवेतत्वसम्बन्धेन गोत्वरूपेण तस्या अवच्छेदकत्वमिति भावः। न च—गोसमवेतस्य द्रव्यत्वादेर्घटादौ सत्त्वात् तत्र 'गोत्वं नास्ती'ति धीः प्रमा न स्यादिति—वाच्यम्; उक्तसम्बन्धेन हि विशेषणविधयैव गौरवच्छेदिका। *वस्तुतस्तु*—तत्तद्गोव्यक्तिमात्रनिष्ठावच्छेदकता गोत्वनिष्ठाधेयताविशेषावच्छिन्ना न केनापि धर्मेणावच्छिद्यते; शुद्धव्यक्तिमात्रस्यैवावच्छेदकत्वसम्भवेनानन्तगोव्यक्तित्वादिविशिष्टस्यावच्छेदकत्वे गौरवात्, जातीतरस्यानवच्छिन्नप्रकारत्वाभावेऽप्यनवच्छिन्नावच्छेदकत्वे बाधकाभावात्। तथाच गोत्वरूपे गोपदादुपस्थितस्यापि गोत्वोपलक्षितयत्किञ्चित्स्वरूपस्यैवावच्छेदकत्वेन भानम्। एवं च तत्तद्व्यक्तिरुपलक्षणविधयैवावच्छेदिका; उक्तसम्बन्धेन तद्व्यक्तिविशिष्टस्य गोत्वस्य गवान्तरे सत्त्वाभावेन 'गवान्तरे गोत्वं नास्ती'ति प्रत्ययापत्त्या विशेषणविधयाऽवच्छेदकत्वासम्भवात्। अत एव मूले 'यत्किञ्चिद्गोव्यक्तेरेवे'ति व्यक्तिनिर्देशेन शुद्धव्यक्तेरवच्छेदकत्वमुक्तम्। एवकारस्य त्वयमर्थः—सकलगोवृत्तित्वादेर्भावप्रत्ययेनोपस्थितत्वेन गोत्वस्य विशेषणत्वेऽपि न प्रतियोगितावच्छेदकत्वमिति। अत एव 'गोत्वत्वरूपत्वादि'त्यस्य गोत्वाभावप्रतियोगितावच्छेदकत्वेन भानादित्यर्थः। तथाच यथा 'घटो नास्ती'त्यादिज्ञाने घटसामान्याभावस्य सर्वघटप्रतियोगिकस्यापि विशेषणतया कश्चिदेव घटो भाति, तथा 'गोत्वं नास्ती'ति ज्ञाने सकलगोव्यक्त्यवच्छिन्नप्रतियोगिताकेऽपि गोत्वाभावे प्रतियोगितावच्छेदकतया भासमानेन केनचिद् गवा विशिष्टं गोत्वं विशेषणम्, न तु सर्वैर्गोभिरिति भावः। सकलगोवृत्तित्वस्यावच्छेदके प्रवेशेऽपि तस्य गोवृत्तिभेदप्रतियोगितानवच्छेदकत्वरूपत्वाद् न सामान्यलक्षणापेक्षेत्यपि बोध्यम्। अत्र गोत्वस्य तादात्म्यसम्बन्धेन नावच्छेदकत्वं संभवति; अत्यन्ताभेदे सम्बन्धासम्भवेन तस्य गोत्वेऽसम्बन्धात्, गौरित्याकारकतत्तद्धीप्रकारत्वस्यापि नावच्छेदकत्वम्; अवच्छेदकाभेदे प्रकारभेदेन प्रकारत्वस्याभेदपक्षे तस्यातिप्रसक्तत्वात्, अतो गोव्यक्तिरेवेति युक्तम्। *एतेनेति*॥ अभावबुद्धौ प्रतियोग्यंशे प्रकारीभूतधर्मप्रकारकज्ञानस्यैव विशेषणतावच्छेदकप्रकारकधीविधया हेतुत्वम्; न तु प्रतियोगिभानस्येति स्वीकारेणेत्यर्थः। *व्याख्यातेति*॥ मठत्वादिना विद्यमानघटादिज्ञानाद् भाविघटादिविशेषितप्रागभावत्वेन धीः शब्दादिना जायते;

अद्वैतसिद्धिः

किंचानागतज्ञानस्यापेक्षितत्वेऽनुमानादेव तद् भविष्यति ; तथाच न्यायकुसुमाञ्जलौ—'शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥' इत्यत्र शङ्कोपपादकमनागतज्ञानमनुमानादेवेत्युक्तम् । अनुमानं च—वर्तमानपाकः, पाकपूर्वकालीनः, पाकत्वा-

तरङ्गिणी

किंचानागतज्ञानस्यापेक्षितत्वेऽप्यनुमानादेव तद् भविष्यति, तथाच न्यायकुसुमाञ्जलौ—"शङ्का चेदनुमाऽस्त्येव नचेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥" इत्यत्र शङ्कोपपादकमनागतज्ञानमनुमानादेवेत्युक्तम् । अनुमानं च वर्तमानपाकः, पाकपूर्वकालीनः, पाकत्वादतीतपाकवदित्यादि ।

न्यायामृतकण्टकोद्धारः

सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी नवेत्यनुभूयमानः संशयो न स्यात् । प्रसिद्धधूमे वह्निसम्बन्धावगमात्, अप्रसिद्धस्य ज्ञानाभावात् । नच—प्रसिद्धधूम एव तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तिः, यथा घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशय-सिसाधयिषे भवत एव, निश्चितेऽप्यर्थे प्रामाण्यसंशयाहितसंशयवद् 'धूमत्वं वह्निव्यभिचारिवृत्ति नवे'ति संशयादपि तादृशसंशयोपपत्तेश्चेति—वाच्यम् ; धूमत्वेन संशयासम्भवात्, विशेषप्रकारकनिश्चयस्य सामान्यप्रकारकसंशयविरोधित्वात्, अन्यथा इदंपर्वतीयत्वेन वह्निनिश्चये पर्वतीयत्वेन वह्निसंशयापत्तेः । घटत्वादिनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना संशयादिकं तूपपन्नमेव, निश्चयप्रकारीभूतघटत्वस्य पृथिवीत्वाप्रवेशात् । इह तु धूमत्वस्य तत्तद्धूमत्वप्रविष्टत्वेन विषयत्वात् । 'धूमत्वं वह्निव्यभिचारिवृत्ति नवे'ति संशयाहितसंशयो न भवति, धूमत्वस्य वह्निसम्बन्धितावच्छेदकत्वस्य ग्रहणे विरोधिनिश्चयसत्त्वात्, अन्यथा घटत्वप्रकारेण घटनिश्चयेऽपि 'घटत्वं घटवृत्ति न वे'त्यपि संशयापत्तेः । किञ्च शक्तिग्रहान्यथानुपपत्त्या च तत्स्वीकार आवश्यक एव । सामान्यप्रत्यासत्तिस्वीकारे गोत्वरूपसामान्यप्रत्यासत्त्या सकलगोव्यक्त्युपस्थितौ सत्यां तत्र गोपदशक्तिग्रहे देशान्तरे 'गामानये'त्युक्तेऽपूर्वव्यक्तिलाभोपपत्तिः ; अन्यथैकस्यामेव शक्तेर्गृहीतत्वादपूर्वव्यक्तिलाभो न स्यात् । नच—शक्त्यनुभव-तत्स्मरण-वाक्यार्थज्ञानानां समानप्रकारकत्वेन जन्य-जनकभावाद् न सकलगोव्यक्तिरावश्यिकेति—वाच्यम् ; तथा सति 'सास्नादिमन्तं पिण्डमानये'त्युक्ते गवानयनं न स्यात् ; प्रकारीभूतगोत्वस्यानुपस्थितत्वात् । तथाच न समानप्रकारत्वेन जन्य-जनकभावः । नच—सास्नादिमत्त्वमेव तत्र शक्यतावच्छेदकमिति—वाच्यम् ; लाघवेन गोत्वस्यैव शक्यतावच्छेदकत्वस्वीकारात् ॥

*यदपि चोक्तम्*—अनागतज्ञानस्यापेक्षितत्वेऽनुमानादेव तद् भविष्यतीति, अनुमानं च वर्तमानपाकः पाकपूर्वकालीनः, पाकत्वात्, अतीतपाकवदिति, विमतः प्रदेशो धूमवान्, प्रदेशत्वात्, सम्प्रतिपन्नदेश-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

विद्यमानकार्ये शक्तिमत्तया गृहीताद् लिङ्गादिपदात् प्राभाकरमते भाविकार्यधीवत् । *शङ्केत्यादि* । कालान्तरे देशान्तरे च वर्तमाने धूमे व्यभिचारस्यातीन्द्रियपिशाचादावुपाधित्वस्य वा शङ्का चेदस्ति, तदा देशकालान्तरयोर्भावि-भूतयोर्ज्ञानायानुमानमस्त्येव । जल्पेन प्रतिवादिनं निरस्य तत्त्वबुभुत्सुं प्रत्याह—*तर्कः शङ्कावधिरिति* ॥ *शङ्काया अवधिः* सामग्रीविघटकः । *ननु* तर्कस्यापि व्याप्तिधीमूलकत्वादनवस्था, तत्राह—*व्याघातेति* ॥ *आशङ्का*=उक्तानवस्था । 'यदि सर्वत्र शङ्कसे, तदा धूमाद्यर्थं वह्न्यादौ तवैव प्रवृत्तिर्न स्यात्' इति तर्करूपेण व्याघातेन वारणीयेत्यर्थः । *उक्तमिति* ॥ कालान्तरे व्यभिचरिष्यतीति कालं भाविनमाकलय्याशङ्केयत, तदाकलनं च नानुमानमवधीर्येतेत्यनेनोक्तमित्यर्थः । *पाकपूर्वकालीनः=

अद्वैतसिद्धिः

दतीतपाकवदित्यादि । नच चरमपाके व्यभिचारः; साध्यसिद्ध्युपजीवकस्य व्यभिचारज्ञानस्यादोषत्वात्, अन्यथा सिद्ध्यसिद्धिव्याघातात् । किंच शब्दादपि सकलधूम-पाकादिगोचरज्ञानसम्भवः । नच—शङ्कादिपूर्वं शब्दस्योपस्थितिनियमाभाव इति—वाच्यम्; कदाचिदेव शब्दादनुभूतस्य तदानीं प्रमुष्टतत्ताकस्मृतिसम्भवात् । *ननु*—अनुमितेर्विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः, न चानुमानान्तराद् विशेषणज्ञानम्; अनवस्थानादिति—चेत्, *न*; विशेषणतावच्छेदकप्रकारक-

तरङ्गिणी

नच चरमपाके व्यभिचारः; साध्यसिद्ध्युपजीवकस्य व्यभिचारज्ञानस्यादोषत्वात्, अन्यथा सिद्ध्यसिद्धिव्याघातात् । किञ्च शब्दादपि सकलधूम-पाकादिगोचरज्ञानसम्भवः । नच—शङ्कादिपूर्वं शब्दस्योपस्थितिनियमाभाव इति—वाच्यम्; कदाचिदेव शब्दादनुभूतस्य तदानीं प्रमुष्टतत्ताकस्मृतिसम्भवात् ॥ *ननु*—अनुमितेर्विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः, नचानुमानान्तरात् तद्विशेषणज्ञानम्; अनवस्थानादिति—चेत्, *न*; विशेषणतावच्छेदकप्रकारकज्ञानादेव साध्यविशेषणकपक्षविशेष्यकानुमितिसम्भवात् ॥

न्यायामृतकण्टकोद्धारः

वदित्यादिसकलधूमपाकादिगोचरज्ञानोपपत्तेश्चेति—*तदपि न*; अनुमानस्याभासत्वेन तेनानागतपाकादिज्ञानानुपपत्तेः । कथमनुमानस्याभासत्वम्? इति चेत्, *न*; चरमपाके पाकत्वसत्त्वेऽपि पाक्-पूर्वकालीनत्वाभावेन व्यभिचारात् । नच—साध्यसिद्ध्युपजीवकव्यभिचारज्ञानस्यादोषत्वम्; अन्यथा सिद्ध्यसिद्धिव्याघातादिति—*वाच्यम्*; तर्कितचरमपाकज्ञानमादाय तत्र व्यभिचारज्ञानसम्भवात्, तर्कितस्थले च सिद्ध्यसिद्धिव्याघातासम्भवात् । अत एव तर्कितानेककर्तृज्ञानमादाय कल्पनागौरवादिदानम्, अन्यथाऽनेककर्तृसिद्धौ कल्पनागौरवं न बाधकम्, तदसिद्धौ च कल्पनागौरवेण सुतरां तन्निषेधस्य कर्तुमशक्यत्वम्, इति सिद्ध्यसिद्धिव्याघातस्य वक्तुं सुकरत्वेन कल्पनागौरव-श्रुतहानादिकं किमपि नोद्भाव्यमेव । वस्तुतस्तु—आभासलिङ्गजन्यानुमितेर्भ्रमत्वाद् नानागतपाकादिसिद्धिः, द्वितीयप्रयोगस्य च प्रदेशत्वेन धूमाभावस्यापि साधयितुं सुकरत्वेन प्रतिपक्षग्रस्तत्वाद् न विप्रकृष्टादिधूमसिद्धिः । शब्दादपि न सकलधूमगोचरज्ञानसम्भवः; सकलधूमाद्युपस्थितिं विना तत्र शक्तिग्रहासम्भवेन सकलधूमवाचिपदादपि तज्ज्ञानमशक्यमेव ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

पाककालीनध्वंसप्रतियोगी । *साध्येत्यादि* ॥ प्रकृतानुमानेन साध्यसिद्धौ सत्यामेव चरमपाकं ज्ञात्वा तत्र व्यभिचारो ज्ञातव्यः, तथा च साध्यसिद्ध्युत्तरं व्यभिचारज्ञानं व्यर्थमित्यर्थः । *अन्यथा*=तस्य दोषत्वस्वीकारे । *सिद्धीत्यादि* ॥ भावि यदि ज्ञातम्, तदोक्तानुमानेनैवेति तत्संपत्तौ किं पाश्चात्त्येन व्यभिचारज्ञानेन ? यदि च न ज्ञातम्, तदा तत्र व्यभिचारो ज्ञातुमशक्य इत्युभयथापि व्याघातोक्तिसम्भवादित्यर्थः । पाककालीनध्वंसप्रतियोगिपाकत्वस्य हेतुत्वस्वीकारेऽपि विशेषणं व्यर्थम्; चरमपाकस्यानुपस्थित्या तत्र व्यभिचारस्यावारणीयत्वात्, सिद्धसाधनाच्च । नच—जातायामनुमितौ तस्या व्यभिचारिहेतुकत्वेन भ्रमत्वं व्यभिचारज्ञानेन साध्यत इति न तद् व्यर्थमिति—वाच्यम्; व्यभिचारिहेतुकानुमितित्वस्य भ्रमत्वाव्याप्यत्वात् । *शब्दादिति* ॥ विद्यमाने शक्त्यादिज्ञानादविद्यमानव्यक्तेः शब्दाद् बोधः, समानप्रकारकत्वेन शक्त्यादिज्ञान-शाब्दानुभवयोः कार्य-कारणभावादिति भावः । स्मृतेस्तत्त्वावगाहित्वनियमस्वीकारे धूमत्वादिमात्ररूपेण स्मृत्यसम्भवात् तादृशनियमं परित्यजन्नाह—*प्रमुष्टतत्ताकेति* ॥ तद्देश-कालवृत्तित्वरूपतत्ताविशिष्टधूमत्वादिरूपेण धूमादिविषयकस्यापि संस्कारस्य सत्तांशेऽनुद्बोधादविषयीकृतसत्ताकेत्यर्थः ।

अद्वैतसिद्धिः

ज्ञानादेव साध्यविशेषणकपक्षविशेष्यकानुमितिसम्भवात् । *एतेन*—'सुरभि चन्दनमि'त्यादिविशिष्ट-

तरङ्गिणी

एतेन—'सुरभि चन्दनमि'त्यादिविशिष्टज्ञानाय कल्पिता ज्ञानलक्षणा प्रत्यासत्तिरपि—निरस्ता ; चन्दन-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*ज्ञानादेवेति* ॥ विशेषणज्ञानस्य विशिष्टधीत्वावच्छिन्नं प्रति न हेतुत्वम् ; स्मृतौ व्यभिचारात् । *अथ*—संस्कारसम्बन्धेन हेतुत्वाद् नोक्तव्यभिचार इति—*चेत्*, तर्हि प्रत्यक्षादौ व्यभिचारः । तस्मात् समवायेनैव तस्य विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वं सम्भवदुक्तिकम् । तदपि न युक्तिसहमित्यनुपदं मूले वक्ष्यते । *ननु*—विशेषणतावच्छेदकप्रकारकधीत्वेनापि हेतुत्वे स एव पन्थाः, *सत्यम्* ; 'विशेषणतावच्छेदकप्रकारकज्ञानादि'ति मूलस्य वह्नित्वादिरूपेण वह्निव्याप्त्यादिसंस्कारपरामर्शादित्यर्थः । तथाच संस्कारपरामर्शादेरेव साध्यविशेषणकस्मृत्यनुमित्यादिनियामकत्वम् । *ननु*—वह्नित्वरूपेण पर्वतीयवह्नेरेव पर्वतपक्षकानुमितौ नियमेन भानानुपपत्तिः, व्याप्त्यादिविषयकपरामर्शे महानसीयादिवह्नेरेव त्वन्मते भानात् तस्यैव भानापत्तिः, तस्यापि भानापत्तिर्वा कार्यतावच्छेदके वह्निविशेषानिवेशादिति—चेत्, *न* ; मन्मते स्वतःप्रमात्वस्वीकारेणोत्पत्तौ ज्ञप्तौ च प्रमात्वस्य स्वतस्त्वाद् ज्ञानसामान्यसामग्र्या एव हि प्रमात्वे नियामकत्वम्, न तु गुणस्य ॥

*ननु*—तर्हि ज्ञानसामान्यसामग्रीजन्यतावच्छेदकं प्रमात्वमित्यागतम्, तच्च न सम्भवति ; प्रमात्वस्य ज्ञानसामान्यसामग्र्याश्च विषयभेदेन नानात्वाद् विषयसमसंख्यानां प्रमायां ज्ञानसामान्यसामग्रीहेतुत्वानामापत्तेः, एकस्मिन्नपि विषयेन्द्रियसन्निकर्षव्याप्तिनिश्चयादीनामेकरूपेणैकसम्बन्धेन च हेतुत्वासम्भवेन नानाहेतुत्वापत्तेः, तथाच गुणजन्यतावच्छेदकमेव प्रमात्वं वक्तुं युक्तम् ; समवायाद्येकसम्बन्धेन तत्तद्विशेष्यसंबद्धं यद् विशेषणम्, तद्वृत्तिर्या स्वप्रकारता तदाश्रयवृत्तिधर्मवत्त्वसम्बन्धेन ज्ञानं प्रति तादृशसंबद्धविशेषणवृत्तिधर्मत्वेन हेतुत्वस्यैकस्यैव संभवात्, तादृशधर्मस्तु केवलान्वयिविषयत्वादिकम्, तदाश्रयत्वसम्बन्धेन ज्ञानं घटादौ जायते, तत्र तादृशधर्मो विषयत्वादिकमस्ति, तस्य च विशेषणतासम्बन्धेन हेतुत्वम् ; तस्यैव केवलान्वयिधर्मं प्रति सम्बन्धत्वात्, तादृशप्रकारतामात्रसम्बन्धेन कार्यत्वस्योक्तौ व्यभिचारः ; तादृशधर्मवति सर्वत्र तादृश-प्रकारतासम्बन्धेन ज्ञानानुत्पत्तेः, विशेष्यसम्बद्धतत्तद्विशेषणवृत्तित्वविशिष्टधर्मत्वेन हेतुत्वोक्तौ तु तादृशप्रकारता-मात्रं सम्बन्धोऽस्तु ; विशिष्टस्य कारणस्यान्यत्रासत्त्वेन व्यभिचाराभावादिति—चेत्, *न* ; यद्यपि वह्न्यनु-मितित्वादिकमेव कार्यतावच्छेदकम्, न तु वह्न्यादिप्रमात्वम्, तथापि दोषसहिता या वह्न्यादिविशिष्टज्ञानसामग्री, तदधिकरणक्षणाव्यवहितोत्तरक्षणत्वे वह्न्यादिप्रमावत्त्वव्याप्यतास्वीकारात् तादृशसामग्र्या प्रमैव जायते, दोष-सहितया तु भ्रम एव ; वह्न्यादिभ्रमत्वेन दोषकार्यत्वस्य भट्टमते स्वीकारात्, गुरुमते भेदाग्रहसहितयोर्विशेष्य-विशेषणप्रमयोरिव प्रमाविषयत्वविशिष्टविशेष्य-विशेषणयोर्भेदाग्रहस्यापि भ्रमत्वेन तस्यैव दोषप्रयुक्तत्वादिति कर्म-मीमांसकाः । मनस्त्वेन प्रमात्वावच्छिन्नं प्रत्युपादानकारणत्वस्वीकारात्, मनोघटितया सामग्र्या प्रमैव जायते ; भ्रमत्वावच्छिन्नं प्रति स्वपरिणामाव्यवहितपूर्ववृत्तित्वविशिष्टपल्लवाज्ञानत्वेनोपादानत्वस्वीकारात्, पल्लवाज्ञान-दोषादिघटितसामग्र्या भ्रम एवेत्यौपनिषदाः । *ननु*—तथाप्येकस्मिन् पर्वते विद्यमानानां नानावह्नी-नामनुमित्यादौ भानं स्यादिति—चेत्, स्यादेवेति संक्षेपः ॥

*ज्ञानायेति* ॥ सौरभत्वसामान्यलक्षणया सर्वेषां सौरभाणां नोक्तज्ञाने भानसम्भवः ; सामान्याश्रय-यत्किञ्चिद्व्यक्त्यंशे फलीभूतज्ञानकरणेन्द्रियसन्निकर्षस्य लौकिकस्य तयापेक्षणात् । यदि च तया स नापेक्ष्यते, उक्तज्ञाने यावत्सौरभाणां विशेषणतया भानमिष्टमेव ; 'यावत्सौरभवृत्तिसारभत्वाश्रयवच्चन्दन-मि'त्याकारकत्वसंभवात्, मुख्यविशेष्यतासम्बन्धेन चाक्षुषं तु न सौरभे जायते ; तत्सम्बन्धे तदुत्पत्तौ लौकिकसन्निकर्षस्य हेतुत्वात्, विशेष्यतासम्बन्धस्यैव सामान्यज्ञानकार्यतावच्छेदकत्वाच्चेत्युच्यते, तदा

अद्वैतसिद्धिः

ज्ञानाय कल्पिता ज्ञानलक्षणा प्रत्यासत्तिरपि—*निरस्ता*; चन्दनत्वेन सुरभित्वानुमानोपपत्तेः, अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसङ्गात्। नच—अभावसाध्यककेवलव्यतिरेकिणि साध्य-सिद्धेरनङ्गत्वात् तत्र क्लृप्ताया अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वमिति—वाच्यम्; अर्थापत्ति-

तरङ्गिणी

त्वेन सुरभित्वानुमानोपपत्तेः, अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसङ्गात्। नच—अभाव-साध्यककेवलव्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वात् तत्र क्लृप्ताया अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्व-मिति—वाच्यम्; अर्थापत्तिवादिभिरस्माभिस्तदनभ्युपगमात्। 'पर्वतवार्तिधूमो वह्निव्याप्यः' इति परामर्शात्

न्यायामृतकण्टकोद्धारः

*यदप्युक्तम्*—मानाभावात् ज्ञानलक्षणप्रत्यासत्तिरपि—*निरस्तेति*, *तन्तुच्छम्*; 'सुरभि चन्दनमि'त्यादिविशिष्टप्रत्यक्षस्यैव प्रमाणत्वात्। *ननु* अत्र चन्दनत्वेन सुरभित्वानुमानोपपत्तेर्नेदं विशिष्टप्रत्यक्षम्; अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसङ्गादिति—चेत्, न; अन्यथा 'घटो रूपवानि'त्यादावपि घटत्वेन रूपवत्त्वानुमानोपपत्तेर्विशिष्टप्रत्यक्षता न स्यात्। विशिष्टप्रत्यक्षानुभवस्योभयत्रापि तुल्यत्वात्। नच—एवं पर्वतो वह्निमानित्यादौ प्रत्यक्षमेव स्यादिति—वाच्यम्; अत्र हि वह्निप्रत्यक्षमापाद्यमानं किमलौकिकम्? लौकिकं वा? नाद्यः; अलौकिक-प्रत्यक्षसामग्र्याः समाने विषये मानान्तरसामग्रीतो दुर्बलत्वात्, अन्यथा शब्दादिस्थलेऽपि पदादिस्मारितपदार्थानां मनसैव संसर्गप्रत्यक्षसम्भवेन मानान्तरविलयापत्तेः। *ननु* यदि मानान्तर-सामग्रीतोऽलौकिकप्रत्यक्षसामग्री दुर्बला, तर्हि वस्तुतः स्थाणौ शाखादौ करादिभ्रमात् संशयोत्तर-प्रत्यक्षे पुरुषभ्रमो न स्यात्, तस्यालौकिकत्वात्, किन्त्वनुमितिरेव स्यात्। नच—भ्रमानुमितिसामग्र्य-पेक्षयाऽलौकिकप्रत्यक्षसामग्री प्रबलेति तत्रालौकिकप्रत्यक्षमेव भवति, नानुमितिरिति—वाच्यम्; तथा सति धूलीपटले धूमभ्रमात् वह्न्यनुमितिर्न स्यादिति चेत्, *मैवम्*; फलबलेन दोषघटितसामग्र्या बलवत्त्वकल्पनात्। पुरुषप्रत्यक्षस्थले चालौकिकसामग्र्यां दोषानुप्रवेशेन प्रत्यक्षमेव भवति। धूम-भ्रमात् वह्न्यनुमितिस्थले चानुमितिसामग्र्यां दोषानुप्रवेशादनुमितिरेव, न प्रत्यक्षम्, इति न काप्यनु-पपत्तिः। न द्वितीयः; लौकिकविशेषणसन्निकर्षाभावेन लौकिकप्रत्यक्षासम्भवात्। नच—तस्य कारणत्वे मानाभाव इति—वाच्यम्; तदितरसकलतद्धेतुसत्त्वे पर्वते वह्न्यनुमितिसमये तद्विशिष्ट-प्रत्यक्षानुत्पादस्यैव तत्र मानत्वात्। नच—अत्र प्रत्यक्षमेवोत्पद्यत इति—वाच्यम्; 'वह्निमनुमिनो-मी'त्यबाधितानुभवविरोधात्। किञ्चाभावसाध्यके केवलव्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वात् तत्र क्लृप्ताया अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो दुर्बलत्वमावश्यकमिति नानुमानमात्रोच्छेदः। नच—

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

'सुरभी'त्यादेश्चन्दने सौरभत्वप्रकारकचाक्षुषभ्रमायेत्यर्थः। एवं सुरभित्वेत्यस्य सौरभत्वेत्यर्थः। तथाच चन्दने सौरभत्वभ्रमजनकदोषकाले चन्दनत्वेन सौरभत्वानुमानोपपत्तेरुक्तभ्रमोऽनुमितिरूप एव, न चाक्षुषः, इति ज्ञानं न प्रत्यासत्तिरिति भावः। *अन्यथा=ज्ञानस्य प्रत्यासत्तित्वे*। *पक्षप्रत्यक्षेति*॥ नच—बहिरिन्द्रियस्य स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वेन 'परमाणू रूपवानि'त्यादिज्ञानस्य चाक्षुषत्वाद्य-सम्भवादनुमितित्वमिति—वाच्यम्; मानसत्वसंभवात्। *केवलव्यतिरेकिणि='पृथिव्यां तदितरभेदः' इत्याद्यनुमितौ*। *तदभ्युपगमात्=उक्तानुमित्यस्वीकारात्*। नच—उक्तानुमितेः स्वीकारेऽपि व्यतिरेक-व्याप्तिज्ञानघटितानुमितिसामग्र्या एव क्लृप्तत्वेन तस्या एव बलवत्त्वमायाति, न त्वन्वयव्याप्तिधीघटित-

**अद्वैतसिद्धिः**

वादिभिरस्माभिस्तदनभ्युपगमात् । 'पर्वतवृत्तिधूमो वह्निव्याप्यः' इति परामर्शात् साध्यविशेष्यकपक्षविशेषणकानुमित्यभ्युपगमे तु नैव काऽप्यनुपपत्तिः ; अनुमितेः पक्षविशेष्यकत्वनियमे मानाभावात् ।

**तरङ्गिणी**

साध्यविशेष्यकपक्षविशेषणकानुमित्यभ्युपगमे तु नैव काऽप्यनुपपत्तिः ; अनुमितेः पक्षविशेष्यकत्वनियमे मानाभावात् ॥ किञ्च धूमत्वसामान्यं न स्वरूपतया प्रत्यासत्तिः ; धूलीपटले धूमभ्रमानन्तरं धूमत्वेन सकलधूमनिष्ठ-

**न्यायामृतकण्टकोद्धारः**

**अर्थापत्तिवादिभिरस्माभिस्तदनभ्युपगमात् स्यादेवोक्तदोष इति—वाच्यम् ; व्याप्तिप्रतीतिमपेक्ष्यार्थप्रतीतिजनकत्वरूपानुमानत्वस्यार्थापत्तौ सत्त्वेन तस्या अनुमानताया आवश्यकत्वात् । अन्यथा धूमस्याप्यनुमानत्वं न स्यात् । (१) तस्मात् सामान्यप्रत्यासत्तिस्वीकारे बाधकाभावात्, साधकसद्भावाच्च तया निषेधमात्रप्रतियोग्युपस्थितौ तदभावस्य सुग्रहत्वात् बाध इत्युपपन्नम् । इदं च सामान्यप्रत्यासत्तिमादाय बाधवर्णनम्, तत्र च परोक्तयुक्तिखण्डनं च न्यायमतानुसारेण । अन्यथाऽस्मदीयसामान्यप्रत्यासत्त्यनभ्युपगमस्य परेणावगतत्वात्ननुक्तोपालम्भापत्तेः । नच—सामान्यप्रत्यासत्तिदूषणखण्डनात् भवतामपि सामान्यलक्षणास्वीकारापत्तिरिति—वाच्यम् ; मन्मतेऽनुगतसामान्यस्यैवाभावेन तत्प्रत्यासत्तित्वस्य दूरनिरस्तत्वात् ।**

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

सामग्र्याः, इति तदस्वीकारोक्तिर्व्यर्थेति—वाच्यम् ; तादृशानुमितिस्वीकारे पृथिव्युद्देश्यक-पृथिवीतरभेदविधेयकानुमितिसामग्रीत्वेन 'पृथिवी इतरभेदवती' इत्याकारकानुमित्युपधायकान्वयव्याप्तिसामग्र्याः पृथिवीविशेष्यकतदितरभेदनिष्ठालौकिकप्रकारताशालिप्रत्यक्षं प्रति प्रतिबन्धकत्वकल्पनसम्भवेन तादृशानुमित्यस्वीकारस्योक्तेर्युक्तत्वात् । नच—पृथिवीत्वावच्छेदेन पृथिव्याः पक्षत्वेऽन्वयदृष्टान्ताभावे नान्वयव्याप्तिग्रह इति—वाच्यम् ; पक्षैकदेशस्य घटादेरन्वयदृष्टान्तत्वसम्भवात् । पटादौ साध्यसिद्धावपि न सिद्धसाधनम् ; पृथिवीत्वावच्छेदेन साध्यस्यासिद्धत्वात् । *ननु*—परामर्शाद्युत्तरं जायमानस्य ज्ञानस्यालौकिकप्रत्यक्षत्वस्वीकारे तत्र परामर्शादेरुपयोगो न स्यात्, इष्टापत्तौ च धूमेन पर्वते वह्निर्ज्ञात इति धीः, पक्षतया पर्वते वह्निर्ज्ञात इति धीश्च न स्यात्, तस्मात् प्रत्यक्षसामग्रीविलक्षणसामग्रीकत्वेनाप्रत्यक्षमनुमितिरूपं ज्ञानमङ्गीकार्यमिति नानुमितिमात्रोच्छेद इति—चेत्, *न* ; परामर्शस्य तादृशप्रत्यक्षगतप्रमात्वप्रत्यक्षोपयुक्तत्वात्, वह्न्यादिव्याप्यवद्विशेष्यकवह्न्यादिप्रकारकज्ञानत्वरूपस्य वह्न्यादिप्रमात्वव्याप्यधर्मस्य हि निश्चयो वह्न्यादिप्रमात्वस्य विपरीतज्ञानोत्तरप्रत्यक्षे निश्चये प्रयोजकः, 'पक्षतया जानामी'ति धीस्तु नाङ्गीक्रियते ; तस्या हेतुत्वे प्राभाकरादीनां बहूनां विवादात् । नच 'वह्निमनुमिनोमि' इति सिद्धस्यानुमितित्वस्य कार्यमात्रनिष्ठजातितया परामर्शादिकार्यतावच्छेदकत्वमावश्यकमिति—वाच्यम् ; अनुमितित्वस्य तादृशव्याप्यधर्मवत्तानिश्चयनिश्चितप्रमात्वकप्रत्यक्षत्वरूपत्वेनाजातित्वात् । *अभ्युपगमे तु*=पक्षधरादिस्वीकारादरे तु । *नैवेति* ॥ पर्वतीयवह्नेर्ज्ञानेऽपि तद्विशेष्यकानुमितिसम्भवादित्यादिः । *ननु* पक्षविशेष्यकपरामर्शोत्तरं पक्षीयसाध्यव्यक्त्यज्ञाने साध्यविशेष्यकानुमितेः पक्षधराद्यैरप्यनुक्तत्वात् तत्रानुमित्यपलापादनुपपत्तिरस्त्येव, तत्राह—*अनुमितेरिति* ॥ पक्षविशेष्यकपरामर्शजन्यानुमितेरित्यर्थः । तथाच पर्वतोद्देश्यकवह्निविधेयकानुमितित्वेनैव तादृशपरामर्शविशिष्टत्वेनैव वा तादृशपरामर्शकार्यतास्वीकारात् साध्यविशेष्यकानुमितेरपि तत्संभवाद् नानुपपत्तिः । पक्षीयसाध्यस्य ज्ञातत्वे तस्यानुमितौ विशेषणत्वम्, तदभावे विशेष्यत्वम् । पक्षधरोक्तेरादरस्तु पक्षविशेष्यकत्वानियमज्ञापनमात्रार्थं

(१) ययोर्व्याप्य-व्यापकभावः, तयोरेकेन व्याप्येन व्यापकस्यानुमानम्, *नतु* यद्भावयोर्व्याप्य-व्यापकभावः, तयोरेकेनापरस्य ; तथाच व्यतिरेकव्याप्तेस्तेन विनाऽनुपपन्नरूपोपपादकरूपत्वस्यैव स्वीकाराद् न तदधीनं ज्ञानमनुमितिः, किन्त्वर्थापत्तिरेव, नैवं तु भ्रमः, इति न कोऽपि दोषः ।

**अद्वैतसिद्धिः**

किंच धूमत्वादिसामान्यं न स्वरूपतः प्रत्यासत्तिः ; धूलीपटले धूमभ्रमानन्तरं धूमत्वेन सकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसङ्गात्, तत्र स्वरूपतो धूमत्वाभावात्, नचेष्टापत्तिः ; तदुत्तरकालमनुमित्यनुदयापत्तेः, तथाच धूमत्वज्ञानं प्रत्यासत्तिरिति वाच्यम् । तच्च धूमेन्द्रियसन्निकर्षदशायां धूमज्ञानात्

**तरङ्गिणी**

वह्निव्याप्तिग्रहानुदयप्रसङ्गात्, तत्र स्वरूपतो धूमत्वाभावात्, नचेष्टापत्तिः ; तदुत्तरकालमनुमित्यनुदयापत्तेः ।

**गौडब्रह्मानन्दी ( लघुचन्द्रिका )**

इति भावः । *स्वरूपतः=इन्द्रियसन्निकृष्टनिष्ठज्ञायमानधूमत्वादिव्यक्तित्वेन । *प्रत्यासत्तिः=धूमादिप्रत्यक्षे कारणम् । *धूमनिष्ठेति* ॥ धूमविशेष्यकेत्यर्थः । *तत्र=सकलधूमेषु । ज्ञायमानधूमत्वव्यक्तित्वेन तत्र धूमत्वस्य सत्त्वेऽपि चक्षुस्सन्निकृष्टनिष्ठत्वविशिष्टोक्तव्यक्तित्वरूपेणाभावः । धूमे धूमत्वप्रत्यक्षकाले तद्धूमे तादृशव्यक्तित्वरूपेण धूमत्वसत्त्वं भवति । तथाच तादृशव्यक्तित्वविशिष्टस्य समवायेन हेतुत्वासंभवेऽपि स्वसमवायिवृत्तित्वोपलक्षितधूमत्वसंबन्धेन हेतुत्वमलौकिकधूमनिष्ठमुख्यविशेष्यतासंबन्धेन धूमत्वप्रकारकं प्रत्यक्षं प्रति संभवति, अतो *धूलीपटले धूमभ्रमेत्युक्तम्* । नच—इन्द्रियसन्निकृष्टविशेष्यधीप्रकारीभूतधूमत्वादिव्यक्तित्वेन स्वसमवायिनिष्ठविषयतासम्बन्धेन हेतुत्वं वाच्यम्, अतीतानागतधूमेषु समवायेनोक्तधूमत्वसम्बन्धेन वा धूमत्वाभावात् तत्रोक्तविशेष्यतासम्बन्धेन प्रत्यक्षोत्पत्त्यसम्भवादुक्तविषयतासम्बन्धेनेत्युक्तमिति—वाच्यम् ; विषयता हि यद्यप्यतीतादिषु संबन्धः ; तथाऽपि सविषयकस्यैव, न तु घटत्वादेः । *अथ* घटत्वस्य स्वसमवाय एव संबन्धस्तस्याश्रय इत्युच्येत, तथाप्याश्रयस्य संबन्धः स्ववृत्तिविषयतैव वाच्येति तद्दोषतादवस्थ्यम् । *अथैवम्—स्वसमवायिसंयोगादयोऽपि घटत्वादेः संबन्धा न स्युरिति—*चेत्* न स्युरेव ; अतीतादौ समवायिनं प्रति संयोगस्य वर्तमानेष्वेव संबन्धतया क्लृप्तत्वात् । विषयताया अतीतादिषु सविषयकं प्रत्येव संबन्धतया क्लृप्तत्वेन न घटत्वादिसमवायित्वं तद्वृत्तित्वं वा प्रति संबन्धत्वमिति भावः । *तदुत्तरकालम्=धूलीपटले धूमत्वेन व्याप्तिग्रहोत्तरम् । *अनुमित्यनुदयेति* ॥ 'पर्वतो वह्निमानि'त्याद्यनुमित्यनुदयेत्यर्थः । *ज्ञानमिति* ॥ अत एव 'सा चेन्द्रियसंबद्धविशेषणताऽतिरिक्तैवे'ति मणिवाक्यस्य *सा=सामान्यप्रत्यासत्तिः, *इन्द्रियसंबद्धा=इन्द्रियसंबद्धनिष्ठविशेष्यतानिरूपिता, *विशेषणता=प्रकारता, यस्याः घटत्वादिरूपप्रत्यासत्तेः, सा तथा, अत्रोक्तदोषादुक्तम्—'अतिरिक्तैवे'ति ; घटत्वादिनिष्ठतादृशप्रकारताशालिज्ञानरूपैवेत्यर्थः । अत्र कल्पे धूमनिष्ठालौकिकविशेष्यतासम्बन्धेन धूमत्वप्रकारकचाक्षुषं प्रति चक्षुस्संयुक्तविशेष्यकधूमत्वप्रकारकचाक्षुषत्वेन धूमनिष्ठेन स्वसमानकालीनज्ञानविषयत्वसंबन्धेन हेतुत्वम् । चाक्षुषादिसामान्यज्ञानात् स्पार्शनादिरूपस्य सामान्याश्रयज्ञानस्यानुत्पत्तेरुभयत्र *चाक्षुषत्वोक्तिः* । धूमत्वज्ञानविशेष्ये चक्षुस्संयोगे नष्टे सकलधूमचाक्षुषानुत्पत्तेर्विशेष्यकान्तमुक्तम्* ॥ एवं त्वाचादिप्रत्यक्षेऽपि बोध्यम् । मानसप्रत्यक्षे तु मनोलौकिकसन्निकर्षाश्रयविशेष्यकसुखत्वादिप्रकारकमिवालौकिकमनस्सन्निकर्षाश्रयविशेष्यकमणुत्वादिप्रकारमपि मानसं स्वविषयसामान्याश्रयविशेष्यके हेतुः, अत एवाणुत्वेन यत्किञ्चिदणूपस्थितौ सकलाणुविशेष्यकमानसमुत्पद्यत इति *प्राञ्चः* ॥ *नव्यास्तु*—सामान्यस्य निर्विकल्पकसाधारणज्ञानरूपैवेत्यतिरिक्तेत्यस्यार्थः । तथाच धूमत्वज्ञानत्वमात्रं कारणतावच्छेदकम् । अलौकिकमुख्यविशेष्यतासंबन्धेन धूमनिष्ठेन प्रत्यक्षत्वेन कार्यता । नच—कुत्रचिद् धूमे चक्षुःसंयोगासत्त्वकाल उत्पन्नाद् धूमत्वनिर्विकल्पकादपि सर्वधूमचाक्षुषमुत्पद्येतेति—वाच्यम् ; सामान्यज्ञानजन्यबहिरिन्द्रियजन्यप्रत्यक्षस्य सामान्यप्रकारतानिरूपितविशेष्यताश्रयकिञ्चिद्व्यक्त्यंशे लौकिकविषयताशालित्वनियमेन तादृशव्यक्तौ कारणीभूतेन्द्रियलौकिकसन्निकर्षघटितसामग्र्या अपेक्षणीयत्वात् । एवं च स्मरणादेरिव चाक्षुषादेरपि सामान्यज्ञानात् सामान्याश्रयस्य स्पार्शनादिप्रत्यक्षं जायते—*इत्याहुः* ॥ तत्र नव्यमतस्य सम्यक्त्वात् तदेवादौ दूषयति—*तच्चेत्यादि* । *धूमज्ञानात्=धूमे धूमत्वप्रकारकज्ञानात् ।

अद्वैतसिद्धिः

प्राग् नास्त्येव; निर्विकल्पके मानाभावात्, विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्य-कारणभावानभ्युपगमात्, अवश्यक्लृप्तकार्य-कारणभावविशेषेणैव सर्वव्यवहारोपपत्तेः। नच धूमत्वेन सन्निकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारमसन्निकृष्टधूमगोचरं ज्ञानान्तरमुत्पद्यत इत्यत्र मानमस्ति; धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि, न व्यवहितमित्यनुभवाच्च, अन्यथा 'जगतीगतसकलधूमव्यक्तीरहं साक्षात्करोमी'त्यनुव्यवसीयेत। नचैवमनुभवमात्रशरणैरभ्युपेयते॥

किञ्च सामान्यप्रत्यासत्त्यङ्गीकारे यत् प्रमेयम्, तदभिधेयम्, यत् प्रमेयवत्, तदभिधेयवदित्यादि-

तरङ्गिणी

तथाच धूमत्वज्ञानं प्रत्यासत्तिरिति वाच्यम्, तच्च धूमेन्द्रियसन्निकर्षदशायां धूमज्ञानात् प्राग् नास्त्येव, निर्विकल्पके मानाभावात्, विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्य-कारणभावानभ्युपगमात्, अवश्यक्लृप्तकार्य-कारणभावविशेषेणैव सर्वव्यवहारोपपत्तेः। नच धूमत्वेन संनिकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारमसन्निकृष्ट-धूमगोचरं ज्ञानान्तरमुत्पद्यत इत्यत्र मानमस्ति; 'धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि, न व्यवहितमि'त्यनुभवाच्च, अन्यथा 'जगतीगतसकलधूमव्यक्तीरहं साक्षात्करोमी'त्यनुव्यवसीयेत। नचैवमनुभवमात्रशरणैरभ्युपेयते॥

किञ्च सामान्यप्रत्यासत्त्यङ्गीकारे यत् प्रमेयम्, तदभिधेयम्, यत् प्रमेयवत् तदभिधेयवदि'त्यादिव्याप्तिपरिच्छेदे

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अवश्यक्लृप्तेति*॥ परोक्षज्ञाने परामर्शादेरेव विशिष्टविषयतानियामकत्वम्, प्रत्यक्षज्ञाने तु सन्निकर्षादेस्तदवश्यक्लृप्तम्, तेनैव निर्वाहः। नच—'जातिमान् घटः' इति प्रत्यक्षेऽनवच्छिन्नघटत्वादिप्रकारताया-मवच्छिन्नघटत्वादिविषयताकधीरवश्यं नियामिका वाच्या, अन्यथा 'जातिमानि'त्याकारकप्रत्यक्षे घटत्वादौ नियमेनानवच्छिन्ना प्रकारता स्यात्; इन्द्रियसन्निकर्षादेर्नियामकस्य सत्त्वात्, अनवच्छिन्नत्वं च प्रकारत्वा-निरूपितत्वमिति—वाच्यम्; अनवच्छिन्नत्व-विषयतात्वयोर्विशेष्य-विशेषणभावस्याविनिगम्यत्वेन हेतुताद्वया-पत्त्या संख्यातीतनिर्विकल्पकधीव्यक्तिकल्पनापत्त्या चोक्तविषयताकत्वेन हेतुत्वे गौरवेण तदपेक्षया लाघवादुक्त-प्रकारताशालिप्रत्यक्षहेतुतावच्छेदकतयेन्द्रियसंयोगादिनिष्ठस्य जातिविशेषस्य क्लृप्तत्वेन तेनैव निर्वाहात्। *ननु* माऽस्तु निर्विकल्पकम्; चक्षुरादिसन्निकृष्टविशेष्यकधूमत्वादिप्रकारकचाक्षुषादिकमेव सर्वधूमादि-चाक्षुषादिहेतुरिति प्राचीनमतमवलम्बनीयम्, तत्राह—*नचेत्यादि*॥ *पुरोवर्तिनम्=अव्यवहितम्। *व्यवहितम्=एतदन्यम्। *अन्यथा=उक्तस्य साधकाभावस्य बाधकस्य चास्वीकारे। *सकलधूमेति*॥ *ननु*—धूमत्वेन सर्वधूमानामनुव्यवसाये भानमिष्टमेव, तत्तद्व्यक्तित्वेन तेषां तत्र भानं तु नापादयितुं शक्यम्; तद्रूपेणोपस्थित्यभावादिति—चेत्, *न*; धूमत्वेन सर्वधूमानां तत्र भानापत्तेः कृतत्वात्, तेषां व्यवसाय उपस्थितत्वेनानुव्यवसाये भाने सामग्रीसत्त्वात्, सामान्यप्रत्यासत्तिजन्यभिन्नस्याप्येतद्धूमान्यधूमत्व-प्रकारकज्ञानस्य सत्त्वे 'तादृशविशिष्टं साक्षात्करोमी'ति प्रत्ययस्योपलक्षणविधया तादृशधूमत्वप्रकारकत्वात्तेश्च, तच्च नेष्टम्; अनुभवविरोधात्, तदिदमुक्तम्—*न चैवमनुभवमात्रेत्यादि*॥ 'इमं धूमं साक्षात्करोमि नान्यमि'ति सर्वलोकानुभवः। अत एव धूमप्रत्यक्षवान् पुरुषः 'एतदन्यधूमं साक्षात्करोषि किमि'ति पृष्टो नहि नहीत्येव ब्रूते। *ननु*—चक्षुराद्यसन्निकर्षे लौकिकविषयत्वाभावेन तस्य न 'साक्षात्करोमी'ति प्रत्यये भानम्; लौकिकविषयतायास्तादृशप्रत्यये भानादिति—चेत्, *न* सकलधूमादीनां प्रत्यक्षे भानं किमनुमित्यादिकार्यानु-रोधाद्? अनुव्यवसायानुरोधाद्वा? *तत्राद्यं* पूर्वमेव निरस्तम्; अधुना तु द्वितीयमिति भावात्। नच—'धूमं जानामी'त्यनुव्यवसाये सर्वधूमभानमिति—वाच्यम्; 'इमं धूमं जानामि, न त्वेतदन्यमि'ति व्यवहारस्य सर्व-सिद्धत्वेन समाधानस्य तुल्यत्वात्। *यत् प्रमेयमित्यादि*॥ *सार्वज्ञ्यम्=सर्वसंशयविरोधिज्ञानवत्त्वम्।

अद्वैतसिद्धिः

व्याप्तिपरिच्छेदे सार्वज्ञ्यापत्तिः । नचेष्टैव सा ; 'परज्ञानविषयो घटो न वे'त्यादिसंशयानुपपत्तेः । नच —घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी, प्रमेयमिति निश्चयस्तु घटविषयोऽपि न घटत्वप्रकारक इति—वाच्यम् ; भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वात्, घटत्वस्यापि 'प्रमेयमि'ति ज्ञाने भासमानवैशिष्ट्यप्रतियोगित्वात् । घटत्वप्रकारकनिश्चयस्य घटत्वज्ञानजन्यत्वविशेषणाददोष

तरङ्गिणी

सार्वज्ञ्यापत्तिः । नचेष्टैव सा ; 'परज्ञानविषयो घटो न वे'त्यादिसंशयानुपपत्तेः । नच—घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी, प्रमेयमिति निश्चयस्तु घटविषयकोऽपि न घटत्वप्रकारक इति—वाच्यम् ; भासमान-

न्यायामृतकण्टकोद्धारः

*यद्यपि चोक्तम्*—सामान्यलक्षणाप्रत्यासत्तिस्वीकारे यत् प्रमेयम्, तदभिधेयम्, इत्यादिव्याप्तिपरिच्छेदे सार्वज्ञ्यापत्तिरिति, इष्टापत्तेः । नच—एवं 'परज्ञानविषये घटो न वे'ति संशयानुपपत्तिरिति—वाच्यम् ; समानप्रकारकसमानविशेष्यकनिश्चयस्यैव संशयविरोधित्वेन घटत्वप्रकारकघटविषयकनिश्चयस्य संशयविरोधित्वात् तदभावादेव तदुपपत्तेः, प्रमेयत्वप्रकारकनिश्चयस्य घटविषयकत्वेऽपि घटत्वप्रकारकत्वाभावात् । नच—भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वाद् घटत्वस्यापि 'प्रमेयमि'ति ज्ञाने भासमानवैशिष्ट्यप्रतियोगित्वात् प्रकारत्वमिति—वाच्यम् ; उक्तप्रकारत्वस्यासम्भावितत्वात् । किमत्र भासमानं यद्वैशिष्ट्यं तत्प्रतियोगित्वमित्यर्थः ? उत भासमानं यद्वैशिष्ट्यप्रतियोगित्वं तत्त्वमिति वा ? नाद्यः ; गवि गोत्वमित्यत्रापि गोत्वस्य प्रकारतापत्तेः । नान्त्यः ; 'प्रमेय-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

प्रमेयत्वसामान्यधीस्तादृशज्ञानप्रयोजिका । यत् प्रमेयवत्त्वसामान्यधीस्तु स्वयमपि तादृशधीरूपेणेत्याशयेन सोक्ता । *सेति* ॥ ईशनिष्ठस्य सार्वज्ञ्यस्य सर्वांशे लौकिकप्रत्यक्षरूपत्वेन तत उक्तसार्वज्ञ्यस्य वैलक्षण्यसम्भवादिति शेषः । *परेत्यादि* ॥ *परस्य=उक्तसामान्यज्ञानाधीनसार्वज्ञ्यवतो यो 'ज्ञानविषयो घटो न वे'त्यादिसंशयः, तदनुपपत्तेरित्यर्थः । ज्ञानविषयत्वस्य घटत्व-तदभावसहचरितधर्मत्वेन साधारणधर्मज्ञानस्य संशयहेतोः सम्पादनाय—*ज्ञानविषय इत्युक्तम्* ॥ तावता च धर्मितावच्छेदकप्रकारकधीविषयोक्तधर्मवत्ताज्ञानस्य कारणत्वलाभः । *घटविषयकः=घटत्वविशिष्टविशेष्यकः, घट-घटत्वोभयविशेष्यक इति यावत् । *नेति* । घट इति शेषः । *ज्ञाने भासमानेति* ॥ ज्ञानाद् भासमानेत्यर्थः । तथाच 'प्रमेयमि'ति ज्ञानजन्ये 'प्रमेयवदि'ति ज्ञाने प्रमेयत्वरूपेण घटत्वस्य घटानुयोगिकवैशिष्ट्ये प्रतियोगितया भानात् तादृशज्ञानं घटे घटत्वप्रकारकमिति भावः । *एतेन*—'प्रमेयमि'ति ज्ञानं न घटे घटत्वप्रकारकम् ; घटे भासमानवैशिष्ट्यस्यभासमानं प्रतियोगित्वं प्रकारत्वमिति मतस्यैव स्वीकारेण घटानुयोगित्वविषयतानिरूपिता या वैशिष्ट्यविषयतानिरूपितविषयता, तदाश्रयप्रतियोगित्वस्य प्रकारतात्वेनोक्तज्ञाने तदसम्भवात्, वैशिष्ट्य-तत्प्रतियोगित्वानुयोगित्वानामुक्तज्ञाने विशेष्यतयैव हि भानम्, नतु संसर्गतया, न वा तद्विषयतानां निरूप्य-निरूपकभावः, तथाच तद्भावापन्नवैशिष्ट्यादिसांसर्गिकविषयताशालिज्ञानस्यैवोक्तसंशयविरोधित्वस्वीकाराद् नोक्तदोष—*इति परास्तम्* ॥ शङ्कते—*घटत्वेत्यादि* ॥ *घटत्वज्ञानेति* ॥ *घटत्वांशेऽन्याप्रकारकघटत्वज्ञानेत्यर्थः । *अदोष इति* ॥ उक्तज्ञानजन्यताया घटत्वांशेऽन्याप्रकारकघटत्वप्रकारकप्रत्यक्षत्वेनावच्छेदात् तादृशजन्यतायाः 'प्रमेयवदि'ति ज्ञानेऽभावाद् नोक्तदोष इत्यर्थः । *ननु*—तादृशघटत्वप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति तादृशहेतुत्वासम्भवेऽ-

न्यायामृतसौगन्ध्यम्

*ननु*—स्वात्यन्ताभावासामानाधिकरण्यस्वप्रतियोगिकात्यन्ताभावाप्रसिद्ध्या केवलान्वयिनि, सम्बन्धभेदेन अद्वावौ चासिद्धिः, स्वात्यन्ताभावयावदधिकरणावृत्तित्वं वा स्वात्यन्ताभावयत्किञ्चिदधि-

### अद्वैतसिद्धिः

इति चेत्, न विशेषणज्ञानत्वेनैव तस्य जनकता वाच्या ; तस्याः प्रागेव निरासात् ; स्वरूपसम्बन्धविशेषाभ्युपगमे चानिर्वचनीयवादापत्तेः, इत्यादिदूषणानि बहुतरमूहनीयानि ॥

### तरङ्गिणी

वैशिष्ट्यप्रतियोगिन एव प्रकारत्वात् , घटस्यापि प्रमेयमिति ज्ञाने भासमानवैशिष्ट्यप्रतियोगित्वात्, स्वरूपसम्बन्धविशेषाभ्युपगमे चानिर्वचनीयवादापत्तेः, इत्यादिदूषणानि बहुतरमूहनीयानि ॥

### न्यायामृतकण्टकोद्धारः

**मिति ज्ञानस्य सर्वप्रकारतापत्तेः । तस्मात् स्वरूपसम्बन्धविशेष एव प्रकारत्वम् । एवं प्रमेयमिति ज्ञाने घटत्वस्य प्रकारत्वाभावाद् विरोधिनिश्चयाभावेन संशयाद्युपपत्तेर्न सार्वज्ञ्यापत्तिः । नच—स्वरूपसम्बन्धविशेषाभ्युपगमेऽनिर्वचनीयवादापत्तिरिति—वाच्यम् ; विद्यमानस्वरूपस्यैव सम्बन्धत्वाभ्युपगमेन**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

यीन्द्रियसंयोगादेरेव जातिविशेषेण हेतुत्वस्यावश्यकत्वात् तजन्यत्वमेव विशेषणमस्तु, *किंच* घटत्वांशेऽन्याप्रकारकं घटत्वप्रकारकं प्रत्यक्षं परोक्षं च त्वयापि स्वीकार्यमेव ; आनुभाविकत्वात् । तथाच तस्यैवोक्तसंशयविरोधित्वस्वीकाराद् नोक्तदोष—इति चेत् , *न* ; प्राचीनतार्किकादिमते समानविषयकनिश्चय एव विरोधी, नतु समानाकारः ; अत एव 'अयं जातिमान्' 'अयं तद्व्यक्तित्वविशिष्टवान्' 'अयं पटत्वप्रकारकप्रमाविशेष्यान्यासमवेतवानि'त्यादिघटत्वनिश्चयस्याप्युक्तसंशयविरोधित्वं तैः स्वीक्रियते । तथाच घटत्वांशेऽन्याप्रकारकत्वमनिवेश्य घटत्वप्रकारकत्वनिश्चयत्वेनैव विरोधित्वस्वीकारात् 'प्रमेयवदि'ति निश्चयस्य विरोधित्वं दुर्वारम् । *अत एव*—निर्धर्मितावच्छेदकत्वाद् नोक्तज्ञानं विरोधीत्यपि—*निरस्तम्* ; समानविषयकस्यैव विरोधित्वात् । यद्व्यक्तौ यद्व्यक्त्यभावप्रकारकं यद् ज्ञानम्, तद्व्यक्त्यंशे तद्व्यक्तिविषयकज्ञानस्यैव तत्समानविषयकत्वात् तादृशज्ञानजन्यस्य 'प्रमेयवदिदमि'त्यादिज्ञानस्य विरोधित्वसम्भवाच्च । *ननु*—बौद्धाधिकारे प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषो विषयतेत्युक्तम्, *तत्र शिरोमण्यादिभिर्व्याख्यातम्*—*प्रकाशस्य=ज्ञानस्य,*सतः=विद्यमानस्य, *तदीयतामात्ररूपः=घटादिविषयसम्बन्धरूपः, *विषयता=सामान्यतो विषयता ज्ञानमेव । घटादिविषयता तु घटादिसम्बन्धितत्तद्धीस्वरूपा । विषयस्याविद्यमानत्वेऽपि विद्यमानज्ञानरूपस्य विषयत्वस्य 'इदानीं स विषयो ज्ञातः' 'इदानीं तस्य ज्ञानमि'त्यादिव्यवहारे कालविशेषावच्छिन्नत्वभानमुपपद्यते । विषयस्य विषयतात्वे तु तस्याविद्यमानत्वे विषयत्वस्य तद् नोपपद्यते । अतो ज्ञानमेव विषयतेति ज्ञापनाय 'सतः' इत्यनेन ज्ञानस्य विद्यमानतोक्ता । सम्बन्ध-सम्बन्धिनोश्चाभेदो न दोषाय । सर्वत्र स्वरूपसम्बन्धस्थले तथा कल्पनात्'—इति । तथाच 'प्रमेयवदि'ति ज्ञानस्य घटे घटत्वप्रकारकत्वेऽपि नोक्तसंशयविरोधित्वम् ; ज्ञानरूपविषयताविशेषरूपस्य प्रकारत्वस्य तत्तज्ज्ञानव्यक्तित्वेनैव रूपेण प्रतिबन्धकतावच्छेदके निवेश्यत्वेन 'प्रमेयवदि'तिज्ञानव्यक्तेस्तद्व्यक्तित्वेन तत्र निवेशसम्भवात्, तत्राह—*स्वरूपसम्बन्धेत्यादि* ॥ स्वं न स्वस्य सम्बन्धः ; 'स्वं न स्वीयमि'त्यनुभवात् । *अथ* तत्तद्व्यक्तित्वेन सम्बन्धत्वम्, ज्ञानत्वादिना सम्बन्धित्वम्, इति रूपभेदेन भेदं स्वीकृत्य स्वस्यापि स्वप्रतियोगिकसम्बन्धत्वं वाच्यम्, *तथापि* ज्ञानत्वविशिष्टस्य तद्व्यक्तित्वविशिष्टाभेदे तयोर्भेदासम्भवः, इति भेदे मिथ्यात्वस्य वाच्यत्वेनानिर्वचनीयवादापत्तिः । *अथ तयोरत्यन्तभेदः*, *तदा* भाषान्तरेणातिरिक्तविषयतैव स्वीकृता ।

*ननु*—आस्तामतिरिक्तैव विषयता, *उक्तञ्च* शिरोमण्यादिभिः—"यदि ज्ञानमेव विषयता, तदा 'घटपटा'विति समूहालम्बनस्य घटेऽपि पटत्वप्रकारताशालित्वापत्त्या भ्रमत्वापत्तिः ; तद्धीरूपाया घटत्वप्रकारताया एव पटत्वप्रकारतात्वेन घटे पटत्वस्य प्रकारत्वसत्वात् । *अथ* यथा समवायः केवल

### अद्वैतसिद्धिः

**तस्मात् सामान्यप्रत्यासत्त्या निषेधमात्रप्रतियोगित्वोपस्थितौ तदभावग्रहाद् बाध इत्यनुपपन्नमेव ॥**

### तरङ्गिणी

तस्मात् सामान्यप्रत्यासत्त्या निषेधमात्रप्रतियोगित्वोपस्थितौ तदभावग्रहाद् बाध इत्यनुपपन्नमेव—इति, *अत्र ब्रूमः* ; माऽस्तु सामान्यलक्षणा, तथाऽप्यनागतपाकादेरिव स्वसमानाधिकरणयावदत्यन्ताभावज्ञानमनुमानादिना भविष्यति ॥

### न्यायामृतकण्टकोद्धारः

**स्वरूपहान्यभावादनिर्वचनीयवादानापत्तेः । नहि स्वरूपसम्बन्धविशेषो नाम स्वरूपस्यानिर्वचनीयत्वम्; येनानिर्वचनीयवादापत्तिः स्यात्, इति यत्किञ्चिदेतत् ।**

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

एव सत्तायाः सम्बन्धः, रूपाद्यवच्छिन्नस्तु रूपादेः ; तथा निर्विकल्पकज्ञानं केवलमेव विषयता, सविकल्पं तु तत्तत्प्रकारावच्छिन्नम् । तथाच समूहालम्बनं घटत्वविशिष्टं सद् घटस्य विषयता, नतु पटत्वविशिष्टम् ; यद्विशिष्टं ज्ञानं यस्य विषयता, तत् तत्र विशेषणमुच्यते । नचैवम्—घटत्वविशेषणकज्ञानस्य घटत्वविषयतात्वं न स्यात् ; प्रकारविशिष्टस्यैव सविकल्पकस्य विशेष्यं प्रति विषयतात्वात्, प्रकारीभूतघटत्वादिविशिष्टं तु ज्ञानं न घटत्वादावस्ति ; स्वविशिष्टस्य स्वस्मिन् सत्त्वासम्भवात्, स्वप्रकारोपलक्षितस्य तदुपहितस्य वा तस्य विषयतात्वे घटत्वोपलक्षित-तदुपहितयोः पटेऽपि सत्त्वादुक्तदोषावारणादिति—वाच्यम् ; प्रकारावच्छिन्नं हि ज्ञानं विशेष्यं प्रति विशेष्यता, विशेष्य-विशेषणे प्रति विषयतात्वं तु केवलस्यैव सविकल्पस्य । एवञ्च यद्वृत्तिना येन विशिष्टं यद् ज्ञानं यस्य विषयता, तत्र तस्य तद् भ्रमः । यद्वृत्तिना येन विशिष्टं यद् ज्ञानं यस्य विषयता, तत्र तस्य तत् प्रमा । *वस्तुतस्तु*—येन सम्बन्धेन यद्वृत्तियद्विशेषणविशिष्टेन येन सम्बन्धेन विशिष्टं ज्ञानं यस्य विशेष्यता, तेन सम्बन्धेन तत्र तस्य तत् प्रमेति वाच्यम् । एवं येन सम्बन्धेन यदवृत्तीत्यादिरीत्या भ्रमो वाच्यः । तथाच यद्विशिष्टेन येन सम्बन्धेन विशिष्टं ज्ञानं यत्र विशेष्यता, तत्र तयोराद्यं विशेषणम् ; अन्त्यं संसर्ग इति लभ्यते । विशेषण-संसर्गयोर्वैशिष्ट्यं तु सामानाधिकरण्यमेकस्मिन् ज्ञाने तत्स्वरूपविषयतासम्बन्धेन सम्बन्धित्वम्, ज्ञाने संसर्गस्य वैशिष्ट्यं तु ज्ञानस्वरूपा विषयतैव । नचैवमपि—घटत्वेन घटो ज्ञानविशेष्य इति न स्यात्, घटत्वविशिष्टज्ञानरूपविशेष्यताया विशेष्यशब्देनैव लाभेन घटत्वेनेत्यस्य पुनरुक्तत्वापत्तेरिति—वाच्यम् ; विशेष्यशब्देन किञ्चिद्धर्मविशिष्टेन किञ्चित्सम्बन्धेन विशिष्टं ज्ञानमुच्यते, नतु घटत्वादिधर्मविशिष्टेन समवायेन विशिष्टम् ; तथा सति ज्ञात इत्युक्ते केन रूपेणेति प्रश्नानुपपत्तेः । तथाच 'घटत्वेन घटो ज्ञातः' इत्यादौ घटत्वाद्यभिन्नधर्मविशिष्टसम्बन्धविशिष्टज्ञानरूपविषयतासम्बन्धी घट इत्यर्थकत्वाद् न घटत्वेनेति पुनरुक्त इति चेत्, *न* ; घटत्वे समवायेन घटप्रकारकज्ञानस्यापि घटविशेष्यकत्वापत्त्या 'अयं घटः' इत्याकारकतद्धीव्यक्तित्वादृशसमवायविशिष्टघटविशेष्यतेति वाच्यम् । तथाच घटनिष्ठा तद्धीव्यक्तिविशेष्यता, घटत्वनिष्ठा विशेषणता, समवायनिष्ठा संसर्गतेत्यस्यैव लाघवादापत्तेः, घटेच्छादौ घटादिविषयकज्ञानादीनामनुगतरूपेण कारणत्वाद्यनुपपत्तेश्च । *किञ्च* विशेषणविशिष्टेन संसर्गेण विशिष्टं ज्ञानं विशेष्यस्य विशेष्यता । *अथवा* विशेष्यविशिष्टेन संसर्गेण विशिष्टं ज्ञानं विशेषणं प्रति विशेषणता, तयोराद्यनिष्ठतद्धीरूपविषयता विशेष्यता, अन्त्यनिष्ठतद्धीरूपविषयता संसर्गता । *अथवा* विशेष्यविशिष्टेन विशेषणेन विशिष्टं ज्ञानं संसर्गं प्रति सांसर्गिकविषयता, तयोराद्यनिष्ठा सा विशेष्यता, अन्त्यनिष्ठा सा विशेषणतेत्यस्य विधात्रयस्याविनिगम्यत्वात् प्रागुक्ता विशेष्यादिव्यवस्था दुर्लभा । तस्मादतिरिक्तैव विषयता, तद्विशेषास्तु प्रकारत्वादयः । एवं विषयतात्व-प्रकारतात्वादिकमपि । एतेन प्रतियोगित्वाधिकरण-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वादयोऽपि व्याख्याताः। विषयताया अपि विषयताऽतिरिक्तैव, एवं तस्या अपीति प्रामाणिक्यनवस्था स्वीक्रियत एव; अन्यथानुपपत्तेः। सा च ज्ञाननिष्ठा; ज्ञाननिष्ठानुगतकारणताद्यवच्छेदकतया कल्प्यमानत्वात्। नच—विषयनिष्ठाऽपि सा प्रतियोगितासम्बन्धेन तदवच्छेदिकाऽस्त्विति—वाच्यम्; कारणवृत्तिधर्मस्यैव कारणतावच्छेदकत्वेन कल्पनस्यौचित्यात्। तत्प्रतियोगितया चार्थे विषयत्वव्यवहारः। *परे तु*—विषयत्व-विषयित्वे भिन्ने एव प्रतियोगित्वानुयोगित्वे इव भावाभावयोः—इत्याहुः* ॥ इत्थं च स्वभावविशेष इत्यस्य स्वीयधर्मविशेष इत्यर्थः, *प्रकाशस्येत्यनेन* ज्ञानधर्मस्य विषयतात्वोक्त्येच्छादेर्न स्वधर्मो विषयता, किन्तु घटादिविषयकज्ञानजन्यत्वं घटादिविषयकज्ञानमेव वेति—*प्राञ्चः* ॥ *तन्न*; जन्यतावच्छेदकतयेच्छादावपि विषयतासिद्धेरीश्वरेच्छाया जन्यत्वाभावेन तत्रोक्तरीत्याऽसम्भवात्, ज्ञानोपरमेऽपीच्छादौ सविषयकत्वव्यवहारस्य ज्ञानेनासम्भवात्; इच्छायामेव स्वभावो विषयता, ज्ञाने तु तज्जनकत्वमित्यस्यैवापत्तेश्च। तस्माद् ज्ञान इवेच्छादावप्यतिरिक्तैव विषयता।" *तदयं शिरोमणितदीयटीकासिद्धार्थः।

तथाच 'घटो न वे'ति संशये घटत्वांशेऽन्याप्रकारकत्वघटितरूपेण प्रतिबन्धकत्वे गौरवं यद्यपि; तथापि घटत्वस्य या प्रकारतान्तरनिरूपितप्रकारतान्यप्रकारता; तच्छालिनिश्चयत्वेनैव तत्संभवात् 'प्रमेयवदि'ति निश्चयस्योक्तसंशयविरोधित्वे मानाभावः। नच—उक्तप्रकारतान्यत्वनिवेशे गौरवाद् घटत्वप्रकारतावन्निश्चयत्वेनैव तत्स्वीकारादुक्तनिश्चयस्याप्युक्तविरोधित्वसिद्धिरिति—वाच्यम्; प्रमेयत्वाद्यवच्छिन्नप्रकारताभ्यः शुद्धघटत्वादिप्रकारताया भिन्नत्वेन तद्व्यक्तेर्निश्चयोपरि घटत्वस्य संसर्गतया निवेशेनागौरवात्। नच—जातित्व-तद्व्यक्तित्वादिरूपेण घटत्वप्रकारतावन्निश्चयस्यापि विरोधित्वाद् नोक्तरूपेण प्रतिबन्धकत्वकल्पनं युक्तमिति—वाच्यम्; तादृशनिश्चयस्योक्तविरोधित्वे विवादात्, निश्चिताव्यभिचारकं रूपं परित्यज्य गृह्यमाणव्यभिचारकेण रूपेण कारणत्वकल्पनस्यान्याय्यत्वात्। 'अयं घटत्वत्वविशिष्टवानि'ति निश्चयस्योक्तविरोधित्वे सर्वसंमतत्वेऽपि न क्षतिः; घटत्वत्वस्य घटेतरासमवेतत्वरूपघटत्वव्याप्यतारूपत्वेन तद्विशिष्टप्रकारकनिश्चयत्वेन पृथगेव प्रतिबन्धकत्वस्वीकारादिति—चेत्, *न*; तस्य पूर्वपक्षस्य स्वरूपसंबन्धेत्यादिमूलेन निरस्तत्वात्, स्वं स्वीयज्ञानीयं यद् भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वाभ्यामतिरिक्तं प्रकारताविशेष्यतारूपं तस्य ज्ञानविषययोः सम्बन्धविशेषस्याभ्युपगमेऽनिर्वचनीयस्य विचारासहस्य वादस्योक्तसंबन्धकथनस्यापत्तेरित्यस्योक्तमूलार्थत्वसम्भवात्। *ननु*—कथमुक्तवादो विचारासह इति—चेत्, *अलोच्यते*; न प्रकारता-विशेष्यते क्लृप्तपदार्थातिरिक्ते; भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वयोः क्लृप्तयोरेव तद्रूपतासम्भवात्, सांसर्गिकविषयतामात्रमतिरिक्ते स्वीक्रियते, तथाच संयोगेन घटविशिष्टबुद्धौ संयोगीयप्रतियोगितानिरूपितानुयोगित्वस्य संसर्गतया भानात् संयोगीयसांसर्गिकविषयतानिरूपितप्रतियोगित्वीयोक्तविषयतानिरूपितानुयोगित्वीयोक्तविषयतासत्त्वादुक्तविषयताश्रयप्रतियोगित्वानुयोगित्वयोः प्रकारता-विशेष्यतात्वसम्भवः। नच—प्रकारतां विशेष्यतां वाऽतिरिक्तां स्वीकृत्य तदाश्रयप्रतियोगिकत्वं तदाश्रयानुयोगिकत्वं वा सांसर्गिकविषयत्वम्, नत्वतिरिक्तमित्येव कुतो न स्वीक्रियत इति—वाच्यम्; संयोगेन रूपादिप्रकारकज्ञानस्थले तदसम्भवात्। नच—प्रतियोगित्वादावपि विशेषणांशे प्रकारतामङ्गीकृत्य संयोगादे रूपादिनिष्ठप्रकारतानिरूपितप्रकारताश्रयप्रतियोगित्वनिरूपकत्वरूपं सांसर्गिकविषयत्वमुच्यतामिति—वाच्यम्; प्रतियोगित्वादेः प्रकारतया भानस्य सर्वानुभवविरुद्धत्वात्, निष्प्रकारकज्ञाने निर्विकल्पकीयविषयतायाः क्लृप्तत्वात्। तस्या एव विशेषणविशेष्ययोः स्वीकारात् तयोर्विषयत्वव्यवहारः। तथाच यदीययोः प्रतियोगित्वानुयोगित्वयोः संसर्गता, तत्त्वे सति विषयत्वं प्रकारताविशेष्यते। *वस्तुतस्तु*—यदीयप्रतियोगितात्वेन रूपेण सांसर्गिकविषयता, तत्त्वं प्रकारत्वम्, एवं विशेष्यता। तथाच विशेषण-विशेष्ययोरपि सांसर्गिकमेव विषयत्वम्। तदन्यप्रकारत्वं न स्वीक्रियते; 'घटप्रतियोगिकभूतलानुयोगिकसंयोगेन

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

द्रव्यवानि'त्यादिज्ञाने परेणापि घटत्वाद्यवच्छिन्नसांसर्गिकविषयतायाः स्वीकृतत्वाद् न तत्कल्पनेऽस्माकं गौरवम्। *एतेन* स्वाश्रयसंयोगेन घटत्वप्रकारकज्ञानस्यापि घटत्वविशिष्टप्रकारकत्वापत्तिरित्यादिकम्—*अपास्तम्* ; घटत्वावच्छिन्नप्रतियोगितात्वरूपेण प्रतियोगित्वसंसर्गकज्ञानस्यैव घटत्वावच्छिन्नप्रकारताकशब्देन व्यवहारात्। *अथ*—तादृशसांसर्गिकविषयताकधीत्वादिना कारणत्वादिकल्पनमपेक्ष्य घटत्वावच्छिन्नप्रकारतानिरूपित-संयोगत्वाद्यवच्छिन्नसांसर्गिकविषयताकधीत्वादिना कारणत्वादिकल्पने लाघवात् सांसर्गिकविषयतानात्मक-प्रकारतैव कल्प्यतामिति—चेत्, *न* ; तादृशप्रकारता-विशेष्यतयोः कल्पनामपेक्ष्योक्तगुरुरूपेण कारणत्वादेरेव युक्तत्वात्। प्रतियोगित्वानुयोगित्वविषयता हि विशिष्टबुद्धौ सर्वलोकानुभवसिद्धा। 'अस्मिन् ज्ञाने भूतले घटस्य संयोगः संसर्गतया विषयः' 'तत्र तस्य संयोगो मया संसर्गतया ज्ञातः' इत्यादि-लोकानुभवात्। किंच 'संयोगो न रूपप्रतियोगिकः' इति निश्चये सत्यपि संयोगेन रूपप्रकारकबुद्ध्यापत्तेः 'संयोगो न रूपानुयोगिकः' इति निश्चये सत्यपि रूपे संयोगेन घटादिप्रकारकबुद्ध्यापत्तेश्च विशिष्टबुद्धिमात्रे विशेषणप्रतियोगिता विशेष्यानुयोगिता च न भावीति मतं हेयमेव, तद्धाने तु बाधविधया तद्विरोधिनीति ध्येयम्। *किंच* 'भूतलं घटवदि'त्यादिज्ञानस्य कदाचिद्विशिष्टवैशिष्ट्यबुद्धित्वम्, कदाचित्—'विशिष्ये विशेषणं तत्रापि च विशेषणान्तरमि'त्येवं रीत्या बुद्धित्वमिति व्यवस्थासिद्धये घटत्वाद्यवच्छिन्नप्रतियोगिताक-संयोगत्वेन यत्र सांसर्गिकविषयता, तत्र विशिष्टवैशिष्ट्यधीत्वम्; यत्र तु प्रतियोगितात्वमात्रेण, नतु घटत्वाद्यवच्छिन्नत्वं प्रतियोगितायां भाति, तत्र द्वितीयबुद्धित्वम्; अन्यथा विषयवैलक्षण्यं विना विषयता-वैलक्षण्ये ज्ञानयोर्वैलक्षण्यासंभवात्, "अर्थेनैव विशेषो हि निराकारतया धियामि"त्याचार्योक्तेः, 'अयं घटः' इत्यादौ विशिष्टवैशिष्ट्यस्याविषयत्वेऽपि समवायप्रतियोगित्वानुयोगित्वभानम्; विशिष्टबुद्धिमात्र ऐकरूप्यानु-रोधात्। *अथवा*—प्रतियोगित्वानुयोगित्वयोरेव संयोगादिनिष्ठसांसर्गिकविषयतानिरूपितत्वं प्रकारता-विशेष्यतारूपत्वं च स्वीक्रियते। तथाच शिरोमण्याद्युक्तवाक्ये प्रकारत्वादेः प्रतियोगित्वानुयोगित्वादिक्लृप्त-पदार्थातिरिक्तत्वोक्तिरसङ्गता। उक्तवाक्ये हि "एतेन प्रतियोगित्वाधिकरणत्वादयोऽपि व्याख्याताः" इत्यनेन प्रतियोगित्वानुयोगित्वमतिरिक्तमुक्तम्, "तस्मादतिरिक्तैव विषयते"त्यादिना च प्रकारत्वादि व्यतिरिक्तमुक्तम्, *अथ*—प्रतियोगित्वानुयोगित्वपदमभावनिष्ठानुयोगित्वस्याभावीयप्रतियोगित्वस्य चैव बोधकम्, नतु संबन्ध-प्रतियोगित्वानुयोगित्वयोरपि ; तयोः प्रकारत्वादिशब्देनैवोक्तत्वात्, इति—चेत्, *न* ; अधिकरण-शब्दस्य संबन्धानुयोगितासामान्यवचनत्वेन तत्समभिव्याहृतप्रतियोगिताशब्दस्यापि संबन्धप्रतियोगितासामान्य-वचनत्वात्, आदिपदेनैवाभावीयप्रतियोगित्वादेर्ग्रहणात्। *ननु*—संबन्धप्रतियोगित्वानुयोगित्वयोः प्रति-योग्यनुयोगिस्वरूपत्वस्यैव संभवेन प्रतियोगित्वानुयोगित्वपदं न तदर्थकमिति—चेत्, *न* ; 'तद्व्यक्ति-स्तद्विशिष्टे'ति ज्ञानस्य प्रमात्वापत्त्या तयोरतिरिक्तत्वस्यावश्यकत्वात्। येन हि संयोगेन तद्व्यक्तेर्भूतलादौ प्रमा, तेनैव भूतलादेरपि तस्यां प्रमा। तथाच तस्य संयोगस्य तद्व्यक्तिप्रतियोग्यनुयोगिकत्वेनोक्तापत्तिः स्यादेव, तयोरतिरिक्तत्वे तु तद्व्यक्तिनिष्ठप्रतियोगितानिरूपितानुयोगितायास्तत्तद्व्यक्तिनिष्ठत्वाभावाद् नोक्तापत्तिः। नच—तद्व्यक्तिरूपा या संयोगीयप्रतियोगिता, तन्निरूपितानुयोगितारूपे धर्मिणि संयोगेन तद्व्यक्तिप्रमात्वमित्युक्त्यैवोक्ता-पत्तिवारणसंभवादतिरिक्तयोस्तयोः स्वीकारो न युक्त इति—वाच्यम् ; 'तद्व्यक्तिर्द्रव्यमि'ति प्रमायाः सत्त्वेन द्रव्यत्वरूपेण तद्व्यक्तेस्स्वात्मकानुयोगितानिरूपकप्रतियोगितारूपत्वात् संयोगीयत्वाच्चोक्तापत्तितादवस्थ्यात्। तस्मा-दतिरिक्तप्रतियोगितादेरावश्यकत्वात् तदन्यप्रकारकत्वाद्युक्तिरुक्तवाक्येन युक्ता। यदि चोक्तवाक्ये प्रतियोगि-त्वादिशब्देनाभावप्रतियोगित्वादिकमुच्यते, प्रकारत्वादिशब्देन तु भासमानवैशिष्ट्यप्रतियोगित्वादिकमुच्यते, तथापि तस्य विशिष्टबुद्ध्यविषयत्वोक्तिः 'संबन्धसंबन्धाग्रहेऽपि विशिष्टज्ञानस्योपपादितत्वादि'ति मणि-दीधितिवाक्ये युक्ता; उक्तयुक्तिभिस्तस्य विशिष्टधीविषयत्वस्यावश्यकत्वात्। तस्मात् पक्षधरान्तप्राचीनतार्किकादिसंमतं

न्यायामृतम्

केचित्तु—पराभिप्रेतमिथ्यात्वाभावो वा, असद्विलक्षणत्वे सत्यनारोपितत्वं वा, अस्तित्वप्रकारकप्रमां प्रति कदाचित् साक्षाद्विषयत्वं वा, कालसंबन्धित्वं वा सत्त्वम्। अस्तित्वं च वर्तमानत्वम्, अतीतादिरपि

तरङ्गिणी

*तथाहि*—घटः, अत्यन्ताभावसमानाधिकरणः, धर्मत्वादित्यनेन वा, कपालम्, अत्यन्ताभाववत्, वस्तुत्वादित्यनेन वा घटसमानाधिकरणयावदत्यन्ताभावसिद्धिः। नच—यत्किञ्चिदत्यन्ताभावेनैवानुमितेर्विषयलाभेन न तस्या यावदत्यन्ताभावविषयकत्वमिति—वाच्यम्; साध्यतावच्छेदकाक्रान्तस्य पक्षेऽबाधितस्य पक्षे सर्वस्यैव भानसम्भवात्, अन्यथा विनिगमनाविरहेण नैकस्यापि भानं स्यात्। अत एवानेकवह्निमति पर्वते जायमानाया वह्न्यनुमितेर्विनिगमनाविरहेण तत्र वह्निविषयत्वम्। नच—घटसमानाधिकरणयावदत्यन्ताभावज्ञानेऽपि तत्प्रतियोगित्वाभावो योग्यप्रतियोगिकः कथं प्रत्यक्षविषयः? इति—वाच्यम्; उक्तोपलम्भापादनसम्भवेनैवाभावस्य योग्यत्वात्, स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगिभिन्नत्वरूपसत्त्वप्रत्यक्षे प्रतियोगिप्रत्यक्षत्वस्यानपेक्षणीयत्वाच्च। तस्माद् युक्तं प्रत्यक्षस्य सत्त्वग्राहकत्वमिति ॥

*केचित्त्विति* ॥ परमते तुच्छेऽतिव्याप्तिवारणाय—*पराभिप्रेतेति*। परैरभिप्रेतस्य तुच्छसाधारणमिथ्यात्वस्याभावः सत्त्वमित्यर्थः। अतस्तुच्छे नातिव्याप्तिः। *ननु* पराङ्गीकृतं तुच्छसाधारणं मिथ्यात्वमत्यन्ताभावप्रतियोगित्वादिकमेव, नतु बाध्यत्वादिकम्; तथाच पौनरुक्त्यमिति—चेत्, *मैवम्*; स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वे तात्पर्यात्, अतो न कश्चिद्दोषः ॥ *असद्वैलक्षण्ये सतीति* ॥ असति शुक्तिरूप्ये चातिव्याप्तिवारणाय विशेषण-विशेष्ये। *ननु*—अनारोपितत्वमारोपाविषयत्वम्, तच्चाप्रसिद्धम्; सर्वस्यापि क्षणिकत्वादिनाऽऽरोपविषयत्वादिति—चेत्, *न*; अनारोपितत्वमारोपितभिन्नत्वम्। तच्च मतद्वयेऽप्यस्ति घटादेः, मम मतेऽसत एवारोपितत्वात्, तव मतेऽनिर्वचनीयस्यारोपितत्वात्। घटादेर्ब्रह्मणश्च तद्भिन्नत्वात्। नचैवम्—मम मतेऽसद्वैलक्षण्ये सतीति व्यर्थमिति—वाच्यम्; मम मते तदुपरक्तबुद्धेस्तत्प्रयोजनत्वात्, परं प्रत्यतिव्याप्तिवारकत्वात्। उभयसिद्धप्रयोजनवत्त्वं विशेषणस्य, नतु प्रयोजनस्योभयसिद्धत्वमिति भावः। एतच्च लक्षणं न तार्किकादिसाधारणम्; अतो न तन्मतेऽप्रसिद्धिदोषः ॥ *अस्तित्वप्रकारकेति* ॥ अस्तित्वेनेत्यर्थः। एतच्च विषयत्वविशेषणम्। नच—प्रमात्वस्यार्थसत्त्वघटितत्वेनात्माश्रय इति—वाच्यम्; प्रमात्वस्य जातिरूपत्वेनाभिमतत्वात्। नच—आरोपघटितं प्रमाघटितं च सत्त्वं कथं चक्षुरादियोग्यम्? इति—वाच्यम्; उपनीतस्यापि तद्योग्यत्वसम्भवात्। आत्माश्रयशङ्कां निराकरोति—*अस्तित्वं चेति* ॥ अव्याप्तिशङ्कां निराकरोति—*अतीतादिरपीति* ॥ *ननु* वर्तमान-

न्यायामृतकण्टकोद्धारः

*केचित्त्विति* ॥ नच—जगतोऽपि क्षणिकत्वादिनारोपविषयत्वाद्नारोपितत्वमसंभवीति—वाच्यम्; अत्र ह्यनारोपितत्वं नारोपविषयत्वम्; अप्रसिद्धेः। किन्त्वनध्यस्तत्वम्, तच्च नासम्भवि, जगतोऽध्यस्तत्वस्याद्याप्यसिद्धेः। नचाध्यासघटितत्वाद्चाक्षुषत्वम्; सहकारिवशेन चाक्षुषत्वोपपत्तेः। नच—अनध्यस्तत्वमेव सत्यत्वमिति—वाच्यम्; तुच्छेऽतिव्याप्तेः। *अस्तित्वेति* ॥ नच—प्रमात्वस्य सत्त्वघटितत्वेन चक्षुराद्ययोग्यत्वेन चैतादृशसत्त्वनिर्वचनमयुक्तमिति—वाच्यम्; प्रमात्वस्य तद्वति तत्प्रकारकत्वेनोक्तविधसत्त्वाघटितत्वात्; सहकारिवशेन चक्षुरादिविषयत्वोपपत्तेश्च। *कालसम्बन्धित्वं वेति* ॥ नच—शुक्तिरूप्येऽतिव्याप्तिः; तस्यापि प्रतिभासकालसम्बन्धित्वादिति—वाच्यम्; तथा-

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

भासमानवैशिष्ट्यस्य भासमाने प्रतियोगित्वानुयोगित्वे प्रकारताविशेष्यते इति तु मतमेव रम्यम्। तथाच 'प्रमेयवदि'ति निश्चयस्य 'अयं घटो न वे'ति धीविरोधित्वं दुर्वारम्। *ननु*—भासमानवैशिष्ट्यप्रतियोगिता

### न्यायामृतम्

कदाचिद् वर्तत एव । आरोपितं तु कालत्रयासंबन्धित्वेन बाधबोधितम्, इति न दोषः—*इत्याहुः* ॥

इति प्रत्यक्षयोग्यसत्त्वविचारः ।

---

### तरङ्गिणी

त्वप्रकारकप्रमाविषयत्वं न मिथ्यात्वविरोधि, प्रतिभासकालेऽर्थसत्त्वस्य मिथ्यात्ववादेऽपि सत्त्वादिति—चेत्, *न*; तत्काले स्वरूपेण विद्यमानस्य कालत्रयनिषेधप्रतियोगित्वरूपमिथ्यात्वानुपपत्तेः ॥ *आरोपितं त्विति* ॥

*ननु*—कालसम्बन्धित्वं न मिथ्यात्वविरोधि; शुक्तिरूप्यस्यापि प्रतिभासकालसम्बन्धित्वात्, बाधेन तात्त्विककालत्रयसम्बन्धनिषेधेऽप्यतात्त्विककालसम्बन्धानिषेधात्। नापि तात्त्विककालसम्बन्धित्वं तत्; तात्त्विकत्वस्याद्याप्यनिरूपणात्, निरूपणे वा शेषवैयर्थ्यादिति—चेत्, *मैवम्*; तात्त्विकातात्त्विकपदार्थविभागस्याद्याप्यसत्त्वेन किंचित्कालसम्बन्धिनः सार्वकालिकनिषेधायोगात्। अत एव स्वरूपेण निषेधमनङ्गीकृत्य पारमार्थिकत्वेन निषेधः कैश्चिदुक्तः, इति तस्माद् युक्तः सत्त्वग्राहकप्रत्यक्षबाधः ॥

व्यासाद्रिसृततर्काम्बुपूरैः पक्षयुगं युजि ।
न्यायामृततरङ्गिण्यां सत्त्वलक्षणमीक्ष्यताम् ॥ ९ ॥

इति प्रत्यक्षयोग्यसत्त्वविचारः ।

---

### न्यायामृतकण्टकोद्धारः

सति त्रिकालसम्बन्धित्वरूपमिथ्यात्वानुपपत्तेः । सत्त्वेन प्रतिभासमात्रं प्रातिभासिकत्वम्, न वस्तुसत्त्वमित्यङ्गीकारविरोधाच्च ॥

इति प्रत्यक्षयोग्यसत्त्वविचारः ।

---

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

शुद्धघटत्वादिनिष्ठा तादृशधीविरोधितावच्छेदके निवेश्या, प्रमेयत्वाद्यवच्छिन्ना तु सा ततोऽन्येति नोक्तनिश्चय उक्तविरोधितापत्तिरिति—चेत्, *न*; प्रमेयत्व-घटत्वत्वाद्यवच्छिन्नप्रतियोगितानामन्यतमस्यैव 'घटो न वे'त्यादिज्ञाने भानेन तस्यास्तदन्यत्वे मानाभावात् ॥

इति प्रत्यक्षयोग्यसत्त्वविचारः ।

---

### न्यायामृतसौगन्ध्यम्

करणावृत्तित्वं वेति विकल्पग्रासश्चेति—चेत्, *न* ; येन येन सम्बन्धेन यो यत्र प्रसिद्धः, तत्सम्बन्धावच्छिन्नप्रतियोगिताकाधिकरणावृत्तित्वस्य निर्दोषत्वात्, केवलान्वयिनोऽपि कालिकसम्बन्धेन कालवृत्तित्वात्। नच तुच्छाभावप्रतियोगिताया निरवच्छिन्नत्वेन तत्रातिव्याप्तिः ; बाधादिज्ञानस्य प्रतिबध्यप्रतिबन्धकभावानुरोधेन तुच्छाभावप्रतियोगितायाः स्वावच्छिन्नत्वावश्यकत्वात्, 'शशशृङ्गं नास्ति' इति धीकाले 'नृविषाणमस्ती'तिधीसम्भवात्, समवायेन तद् नास्तीति धीकाले संयोगादिना तदस्तीतिधीसम्भवाच्च, तुच्छज्ञानस्वीकर्तृमते वैज्ञानिकप्रतियोगितावच्छिन्नत्वे बाधकाभावाच्चेति ॥

*इति प्रत्यक्षयोग्यसत्त्वविचारः* ॥

---

### सौगन्ध्यविमर्शः

(१) "यादृशं ब्रह्मणः सत्त्वमि"त्यनेन तरङ्गिण्याद्युक्तरीत्या यदि स्वप्रकाशचैतन्यरूपत्वं सत्त्वं न विवक्ष्यते, किन्तु सत्यशब्दाधिगतं मिथ्यात्वविरोधिरूपान्तरमेव, तर्हि, इदं विवेचनीयम्—कीदृशं वा तत् सत्त्वमिति ; यद्यबाध्यत्वम्, तर्हि सदसद्विलक्षणरूपानिर्वाच्यभिन्नत्वमिति वा ज्ञाननिवर्त्यभिन्नत्वमिति वा स्वसमानाधिकरणात्यन्ताभावप्रतियोगिभिन्नत्वमिति वा वक्तव्यम्। इदं तु सांप्रतं मिथ्यात्वानुमानकाले न निर्णीतं ब्रह्मणीव प्रपञ्चे, इति सत्तानिश्चयात्मकप्रत्यक्षविषयत्वं नोक्तरूपस्य सत्त्वस्य, इति न प्रत्यक्षबाध्यं मिथ्यात्वानुमानम्। वस्तुतस्तु सत्यशब्दबोध्यं सत्त्वमपि—ज्ञानानन्दादिसममिथ्याहारान्यथानुपपत्त्या कल्पितं स्वप्रकाशचैतन्यरूपत्वसमानाधिकरणमस्तीतिप्रतीतिविषयत्वमेव स्वीक्रियते, एतादृशं च सत्त्वं न प्रपञ्चस्य कथमपि सम्भवति ; प्रपञ्चे चैतन्यतादात्म्यस्यैव कल्पनेन चैतन्यत्वस्याकल्पनात्। यथाच स्वप्रकाशत्वं न घटादिसाधारणम्, तथा दृश्यत्वभङ्ग एव व्यक्तीभविष्यति। अवच्छिन्नचैतन्यं तु न वयं स्वप्रकाशचैतन्यरूपं वदामः, इति न कोऽपि दोषः। एतेन—सर्वदेश-कालवृत्त्यत्यन्ताभावाप्रतियोगित्वं सत्त्वमित्यपि—परास्तम् ; अस्याकाशाभाव-प्रमेयत्वादिकेवलान्वयिसाधारण्येन मिथ्यात्वाविरोधित्वात्, सर्वदेशीयत्व-त्रैकालिकत्वयोरयोग्यत्वेन तद्घटित्वस्य प्रत्यक्षाविषयत्वाच्च। उरीकृतं चैतत् तरङ्गिणीकारैरपि ; "माऽस्तु सामान्यलक्षणा ; तथाप्यनागतपाकादेरिव स्वसमानाधिकरणयावदत्यन्ताभावज्ञानमनुमानादिना भविष्यति" इत्यादिना तैरपि सत्त्वस्योक्तविधस्यानुमेयत्वस्यैव स्वीकारात्। शशशृङ्ग-नृशृङ्गादिपदानामलीकपर्यायत्वेन 'शशशृङ्गं नास्ती'ति प्रतीतिकाले 'नरविषाणमस्ती'ति धियोऽसंभवात् तत्तत्संबन्धावच्छिन्नप्रतियोगित्वाभावस्य तुच्छसाधारण्यात्, सम्बन्धसामान्येन सर्वदेशीय-त्रैकालिकनिषेधाप्रतियोगित्वस्य घटादावसिद्धेश्च। तथाच मिथ्यात्वविरोधिप्रत्यक्षयोग्यसत्त्वं न निर्वक्तुं शक्यत इति मन्तव्यम् ॥

इति प्रत्यक्षयोग्यसत्त्वविचारः।

## इति सटिप्पण-तरङ्गिणी-लघुचन्द्रिकादि-सदव्याख्योपव्याख्योपेतयोः न्यायामृताद्वैत-सिद्ध्योः प्रत्यक्षयोग्यसत्त्वविचारः ॥

---

# अथ साक्षिबाधविचारः

——:०:——

अद्वैतसिद्धिः

*ननु*—प्रत्यक्षस्य वर्तमानमात्रग्राहित्वे शुक्तिरूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कथं प्रत्यक्षं स्यात्? अथ तत्र रजतत्वविरोधिशुक्तित्वे साक्षात्कृते तदन्यथानुपपत्त्या च रजतत्वाभावे निश्चिते 'मिथ्यैव रजतमभादि'ति तादृङ्निषेधप्रत्ययः स्वसम्बद्धसर्वावभासकेन साक्षिणैवोपपन्नः, तर्हि साक्षात् स्वविषयस्य गगनादेर्भाविकालनिषेधाप्रतियोगित्वं सकलकालग्राहिणा साक्षिणा गृह्यतामिति—चेत्, *न* ; साक्षिणो विद्यमानसर्वावभासकत्वेनाविद्यमानभाविबाधाभावभासकत्वानुपपत्तेः, साक्षिज्ञानस्य भ्रम-प्रमासाधारणत्वेन प्रमाणाबाधकत्वाच्च ॥

न्यायामृतकण्टकोद्धारः

किञ्च ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव ; प्रामाण्यस्य विषयाबाधरूपत्वेन ततोऽतिरिक्तस्याभावात्। न च—साक्षी भ्रमसाधारण इति—वाच्यम् ; तर्हि तेन निश्चितस्यैक्यागमस्य प्रामाण्यमविश्वसनीयं स्यात्। ततश्चैक्यज्ञानप्रामाण्यस्याप्यनिश्चयः स्यात्। न च—अन्यप्रमाणेन तत्प्रामाण्यनिश्चय इति—वाच्यम् ; प्रमाणान्तरप्रामाण्येऽप्यनिश्चयेनानाश्वासात्। साक्षी च स्वयम्प्रकाशः स्वप्रामाण्यं परप्रामाण्यं चावधारयतीत्यकामेनापि स्वीकरणीयम् ; अन्यथा क्वापि प्रामाण्यसिद्धिर्न स्यादिति ॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*तादृगिति* ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधेत्यर्थः। *साक्षात्* = ज्ञानाज्ञानविशेषणनैरपेक्ष्येण गगनादेः साक्षिभास्यत्वस्वीकारात्। *भाविकालनिषेधेति* ॥ भाविकाले प्रतीयमाननिषेधेत्यर्थः। *साक्षिणः* = प्रमाणवृत्त्यनुपहितसाक्षिणः। *विद्यमानसर्वावभासकत्वेन* = विद्यमानमात्रे तादात्म्येन विद्यमानकाले सम्बद्धतया। *अविद्यमानेत्यादि* ॥ अविद्यमानो यो भाविबाधः = भाविकालावच्छिन्नं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वधीविषयत्वम्, तदभावासाधकत्वादित्यर्थः। उक्तधीविषयत्वस्येदानीं साक्ष्ययोग्यत्वात् तदभावोऽपीदानीं तथा। साक्षिणैव हि तादृग्विषयत्वं ज्ञेयम् ; तत्र मानान्तरस्येदानीमनवतारात्, अवतारे वा तत एव तदभावग्रहसम्भवादिति भावः। अज्ञाततया तादृशाभावग्रहणं तु न वस्तुसाधकम् ; तस्याज्ञातांशे निश्चयत्वाभावात्। साक्षिग्राह्यत्वं स्वीकृत्याह—*भ्रम-प्रमेति* ॥ सुखाद्यंशे प्रमात्वस्येव शुक्तिरूप्याद्यंशे भ्रमत्वस्यापि गृह्यमाणत्वेन त्रिकालनिषेधाप्रतियोगित्वांशेऽपि भ्रमत्वशङ्कासम्भव इति भावः ॥

न्यायामृतसौगन्ध्यम्

किंच प्रत्यक्षस्य वर्तमानमात्रग्राहित्वे शुक्तिरूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं न प्रत्यक्षं स्यात्? अथ तत्र रजतत्वविरोधिशुक्तित्वे साक्षात्कृते तदन्यथानुपपत्त्या च रजतत्वाभावे निश्चिते 'मिथ्यैव रजतमभादि'ति तादृशनिषेधप्रत्ययः स्वसंबद्धसर्वभासकेन साक्षिणैवोपपन्नः, तर्हि साक्षात् स्वविषयस्य गगनादेर्भाविकालनिषेधाप्रतियोगित्वं सकलकालग्राहिणा साक्षिणा ग्राह्यम्। *ननु* नैवम् ; साक्षिणो विद्यमानसर्वावभासकत्वेनाविद्यमानभाविबाधाभावभासकत्वानुपपत्तेः, साक्षिज्ञानस्य भ्रम-प्रमासाधारणत्वेन प्रमाणाबाधकत्वाच्चेति—चेत्, *न* ; (१) जातान्धबधिरस्यापि 'एतावत्कालमहं सुखी

सौगन्ध्यविमर्शः

(१) 'एतावत्कालमहं सुखी स्थितः' इति ज्ञानं हि सुखांशे स्मरणरूपमेव, न त्वनुभवरूपम्, इति न तत्रातीतसुखस्य साक्षिभास्यत्वम्। 'इदानीमहं दुःखी'ति ज्ञानं तु साक्षिज्ञानमपि विद्यमानमेव दुःखं विषयीकरोति। 'इतः परं किं भविष्यती'ति

अद्वैतसिद्धिः

*ननु*—ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव, नहि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नाम, इति—चेत्, *न*; व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तावपि संवादोपपत्तेः, तद्रूपस्य प्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावात्, किन्तु शुक्तिरूप्यादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यविषयकसकलज्ञानवृत्ति व्यवहारकालाबाध्यविषयकत्वमेव। तच्च न भाविकालबाधविरोधीत्युक्तम्। भाविकालबाध-तदभावौ च न मानं विना साक्षिणा ग्रहीतुं शक्यौ, तस्य विद्यमानमात्रग्राहित्वादिति चोक्तम् ॥

न्यायामृतकण्टकोद्धारः

*ननु* व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तावविसंवादोपपत्तौ तद्रूपप्रामाण्यस्य साक्षिणा ग्रहणेऽपि न विरोधः। नच—घटादिज्ञानस्य संवादिप्रवृत्तिजनकतावच्छेदकं प्रामाण्यं त्रिकालाबाध्यविषयकत्वमिति तद्ग्रहणे कथं न विरोधः? इति—वाच्यम्; शुक्तिरूप्यादिज्ञानव्यावृत्तस्य व्यवहारकालाबाध्यत्वस्यैव तदवच्छेदकत्वात्, तस्य च भाविकालविरोधित्वाभावात्। भाविकालबाधाभावश्च न साक्षिणा ग्रहीतुं शक्यते; तस्य विद्यमानमात्रग्राहकत्वादिति चेत्, *मैवम्*; व्यवहारकालाबाध्यत्वं ह्यबाध्यत्वेन व्यवहारमात्रमिति वा? अर्थक्रियारूपव्यवहारनिर्वाहहेतुभूतमबाध्यत्वं वा? नाद्यः;

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*व्यवहारेत्यादि* ॥ व्यवहारकालाबाध्यविषयकत्वमात्रेण ज्ञाने प्रवृत्तिसामान्यप्रयोजकत्वादिसंवादोपपत्तेरित्यर्थः। *ननु* दोषसमवहितप्रमायां प्रमात्वाग्रहेऽपि प्रवृत्त्यापत्तेः प्रमात्वेन ज्ञायमाननिश्चय एव प्रवर्तकः; त्वन्मते च विषयाबाधस्य साक्ष्यग्राह्यत्वात् तस्यानुपपत्तिः, तत्राह—*तद्रूपेति*॥ *ननु* त्वन्मते संवादिप्रवृत्तिर्न स्यात्; तस्यां त्रिकालाबाध्यविषयकत्वेन हेतुत्वकल्पनादित्याशङ्क्य प्रवृत्तौ यादृशमविसंवादित्वम्, तद्घटितमेव प्रमात्वं प्रवर्तकज्ञानेऽपेक्ष्यते, औचित्यादित्याशयेनाह—*न हीत्यादि* ॥ *संवादेति* ॥ व्यवहारकालाबाध्यविषयकेत्यर्थः। *व्यावृत्तमिति* ॥ शुक्तिरूप्यादिविषयकप्रवृत्तेरुक्तसंवादित्वाभावात् शुक्तिरूप्यादिज्ञानाद् व्यावृत्तं प्रामाण्यमुक्तप्रवृत्तिप्रयोजकमिति भावः। *विषयकत्वमेवेति* ॥ स्मृतेरपि संवादिप्रवृत्तिजनक-

न्यायामृतसौगन्ध्यम्

स्थितः' 'इदानीमहं दुःखी' 'इतः परं किं भविष्यती'ति व्यवहारस्य सत्त्वेन साक्षिणः कालत्रयग्रहणाबाध्यकत्वात्, जातान्धादेर्हस्तप्रसारणोत्सर्पणाद्यन्यथानुपपत्त्या 'सावकाशेऽहं तिष्ठामी'त्यनुभवेन च गगनाद्यपि तद्ग्राह्यम्; तथाच स्वयोग्यानां गगनादीनामुक्तबाधाभावः साक्षिणा सुग्रह एव। *यत्तु* विद्यमानं स्वतादात्म्यापन्नं साक्षी भासयतीति, *तन्न*; अधिष्ठानमेव तादात्म्येन स्वस्मिन्नध्यस्तानवभासयतीति त्वन्मतम्, तन्न युक्तम्; शुद्धस्य विश्वाधिष्ठानस्य साक्षित्वाभावात्, साक्षाद् द्रष्टा हि साक्षी, तत्तु विशिष्टमेव मिथ्याभूतं नाधिष्ठानम्; साक्षिसिद्धसुख-दुःखादौ सन्देहाद्यभावेन साक्षिणो भ्रमसाधारण्योक्तेरयुक्तत्वात्। किञ्च ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव। नहि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नाम ॥

*ननु* व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तिसंवादोपपत्तेस्तद्रूपप्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावः, नहि घटादिज्ञानस्य संवादिप्रवृत्तिजनकतावच्छेदकं प्रामाण्यं त्रिकालाबाध्यविषयकत्वम्, किन्तु शुक्तिरूप्यादिव्यावृत्तं व्यवहारकालाबाध्यविषयकसकलज्ञानवृत्ति व्यवहारकालाबाध्यविषयकत्वमेव। तच्च न भाविकालबाधविरोधीत्युक्तम्, भाविकालबाध-तदभावौ च न मानं विना साक्षिणा ग्रहीतुं शक्यौ, तस्य विद्यमानमात्रग्राहित्वादिति चोक्तमिति—चेत्, *न*; वर्तमानमात्राबाध्यत्वग्रहणेनापि तदनु-

### अद्वैतसिद्धिः

*ननु*—तर्हि देहात्मैक्यज्ञानम्, 'उष्णं जलमि'त्यादि ज्ञानं च प्रमा स्यात्; व्यवहारदशायां विषयाबाधादिति—चेत्, *न*; आब्रह्मज्ञानमबाधितत्वेन तेषामपि घटादिज्ञानसमानयोगक्षेमत्वात्। *ननु*—कालान्तरस्थमपि यद् बाधकम्, तदपि किं यत्कालावच्छेदेनानेन स्वार्थो गृहीतः, तत्कालावच्छेदेनैव तन्निषेधति? उतान्यकालावच्छेदेन? आद्ये कथमस्य प्रामाण्यम्? अन्त्ये त्वनित्यत्वादिकमेवेति—चेत्, *न*; अबाध्यत्वरूपप्रामाण्यस्य प्रपञ्चज्ञाने मयाऽनङ्गीकाराद् यत्कालावच्छेदेनैवानेन स्वार्थो गृहीतस्तत्कालावच्छेदेनैव तन्निषेधाभ्युपगमात्। यच्च प्रामाण्यं मयाऽभ्युपेयते, तद् व्यवहारदशायां विपरीतप्रमारूपबाधकस्यानुत्पन्नत्वादस्त्येव।

### न्यायामृतकण्टकोद्धारः

तथा सत्येतादृशस्यापि संवादिप्रवृत्त्युपयुक्तत्वाभावेन तद्ग्राहिणः साक्षिणः प्रामाण्यं न स्यात्। न द्वितीयः; इतोऽतिरिक्तत्रिकालाबाध्यत्वाभावेन साक्षिणाऽस्य ग्रहणे तद्बाधस्यापरिहारात्। नच—तस्य विद्यमानमात्रग्राहित्वमिति—वाच्यम्; अस्या व्यवस्थाया मिथ्यात्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्।

अपिच कालान्तरस्थमपि यद् बाधकम्, तदपि किं यत्कालावच्छेदेनानेन स्वार्थो गृहीतः, तत्कालावच्छेदेनैव? उतान्यकालावच्छेदेन? आद्ये; कथमस्य प्रामाण्यम्? अन्त्ये त्वनित्यत्वादिकमेव स्यात्। नच—अबाध्यत्वरूपप्रामाण्यस्य मया प्रपञ्चज्ञानेऽनङ्गीकारेण यत्कालावच्छेदेनानेन स्वार्थो गृहीतः, तत्कालावच्छेदेन तन्निषेधोऽभ्युपगम्यत इति—वाच्यम्; अबाध्यत्वरूपं प्रामाण्यं प्रपञ्चज्ञाने साक्षिणा सुग्रहमित्युपपादितत्वेन त्वदङ्गीकारस्य निर्मूलत्वेन प्रातिभासिकवैलक्षण्येन घटादेः पारमार्थिक-

### गौडब्रह्मानन्दी ( लघुचन्द्रिका )

त्वात् तत्साधारण्यं न दोषायेति भावः। *अनेन = इदानीन्तनेन प्रपञ्चज्ञानेन। अनित्यत्वादीत्यादिना निषेधस्याव्याप्यवृत्तित्वम्। एवकारात्तु न मिथ्यात्वधीरूपो बाधः; मिथ्यात्वस्य प्रतिपन्नदेश-कालावच्छिन्न-घटितत्वादिति भावः। *अबाध्यत्वेति* ॥ प्रतिपन्नदेश-कालावच्छिन्ननिषेधस्य यत् प्रतियोगित्वम्, तद्धी-विषयत्वसामान्याभावस्यानवच्छिन्नाधिकरणत्वेत्यर्थः। *प्रामाण्यम् = व्यवहारकालावच्छिन्नस्य मिथ्यात्वनिश्चया-विषयत्वस्य य आश्रयः, तद्विषयकधीत्वरूपम् ॥

### न्यायामृतसौगन्ध्यम्

मानात् प्रवृत्तिसम्भवात्, कालान्तरे बाधो ह्यनित्यत्वे पर्यवस्यति(१)। किंच कालान्तरस्थमपि यद्बाधकम्, किं यत्कालावच्छेदेनानेन स्वार्थो गृहीतस्तत्कालावच्छेदेनैव तद् निषेधति? उतान्यकालावच्छेदेन? आद्ये कथमस्य प्रामाण्यम्? अन्त्ये त्वनित्यत्वादिकमेव ॥

### सौगन्ध्यविमर्शः

ज्ञानं तु संशयात्मकम्, न निश्चयात्मकम्. इति न तदपि साक्षिज्ञानम्। 'सावकाशेऽहं तिष्ठामी'ति जात्यन्धादेर्ज्ञानं हस्तप्रसारणाद्य-पेक्षयैव सावकाशग्रहणाद् अनुमितिरूपमेव, न साक्षिप्रत्यक्षम्। तथाच साक्षिणो न कालत्रयावगाहित्वम्, इति सत्त्वं न साक्षिप्रत्यक्षविषयोऽपि। साक्षिचैतन्यं हि स्वतादात्म्यापन्नमेव भासयति। अधिष्ठानचैतन्यं हि स्वतः प्रकाशमानमप्यज्ञान-विषयत्वाद् न प्रमातृचैतन्याध्यासमन्तरा विषयावभासकम्, अत एव—अभेदाभिव्यक्त्यर्था, चिदुपरागार्था, आवरणाभिभवार्था च वृत्तिरिति वेदान्तिनां सिद्धान्तः। तथाचानुक्तोपालम्भनमिदं सौगन्ध्यकाराणाम्—'अधिष्ठानमेव तादात्म्येन स्वस्मिन्नध्यस्तानव-भासयतीति स्वन्मतमि'ति दूषणम्; प्रमातृचैतन्याभिन्नविषयाधिष्ठानचैतन्यस्यैव भासकत्वोरीकरणात्। व्यक्तं चैतद् वेदान्त-परिभाषायां प्रत्यक्षपरिच्छेदे ॥

(१) सत्त्वं विषयं गृह्णन् साक्षी तद्गतमबाध्यत्वमपि गृह्णाति, इदमेवात्रालोचनीयम्—कीदृशं चाऽबाध्यत्वं घटादौ

अद्वैतसिद्धिः

नच—यद् भवतां घटादिबुद्धेः प्रातिभासिकबुद्धितो वैलक्षण्यं विषयस्य व्यावहारिकसत्त्वसाधकम्, तदेवेह मम विषयस्य पारमार्थिकसत्त्वसाधकमस्त्विति—वाच्यम्; प्रातिभासिकबुद्धिवैलक्षण्यं हि घटादिबुद्धेः सप्रकारकज्ञानाबाध्यविषयकत्वादिरूपम्, तद् न पारमार्थिकसत्त्वं घटादेः साधयितुं शक्तम्; देहात्मैक्यज्ञाने ब्रह्मज्ञानाव्यवहितभ्रमे च व्यभिचारात् ॥

न्यायामृतकण्टकोद्धारः

सत्त्वस्य साधयितुं शक्यत्वाच्च। नच—सप्रकारकज्ञानाबाध्यत्वादिरूपस्य प्रातिभासिकवैलक्षण्यस्य न पारमार्थिकसत्त्वसाधकत्वम्; देहात्मैक्ये ब्रह्मज्ञानाव्यवहितभ्रमविषये च व्यभिचारादिति—वाच्यम्; देहात्मैक्यादेः सप्रकारकज्ञानबाध्यत्वस्योक्तत्वेन व्यभिचाराभावात् ।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*अत्रेदं बोध्यम्*—तद्रूपप्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावादिति यदुक्तम्, तत्रापिशब्देन तद्रूपं प्रामाण्यं न साक्षिणा ग्रहीतुं शक्यत इति सूचितम्। तथाच तार्किकादिरीत्या साक्षात्क्रियमाणस्यैव साक्षिभास्यता वक्तुं शक्या; अन्यथा पिशाचाद्यभावस्यापि तदुक्त्यापत्तेः, तार्किकादिरीत्या तु व्यवहारकालावच्छिन्नस्य मिथ्यात्वनिश्चयाविषयत्वस्य न साक्षात्कारः सम्भवति; घटादिकं यदि व्यवहारकाले मिथ्यात्वेन निश्चीयेत, तदा तथा मयोपलभ्येतेत्यापादनासम्भवेन योग्यानुपलम्भाभावात्, पुरुषान्तरीयमिथ्यात्वनिश्चये सत्यपि मयि तदभावेन मम तथोपलम्भाभावसम्भवात्। अथ निश्चीयेतेत्यत्रापि मयेति विशेषणं देयम्, तथापि व्यवहारकालीनस्य भूत-भाविकालघटितस्यापि सम्भवेन तद्घटितस्य बाधस्य सत्त्वेऽपि नोपलम्भसम्भवः, इति न तदापत्तिः। *किंच* मिथ्यात्वमतीन्द्रियासन्निकृष्टाभावाविघटितम्, इति तद्घटितनिश्चयविषयत्वस्य सत्त्वेऽपि सत्त्वेन रूपेणोपलम्भासम्भवाद् नोपलम्भापत्तिः, इति नानुपलब्धेः प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा योग्यतेति। नचैवम्—प्रमात्वस्य स्वतो ग्राह्यत्वाभावाद् दोषासमवहितज्ञानमात्रस्य प्रमात्वग्राहकमानानवतारेऽपि प्रवर्तकत्वमानुभविकं व्याहन्येतेति—वाच्यम्; मिथ्यात्वेनाज्ञातं यत्, तद्विषयकज्ञानत्वरूपप्रमात्वस्य ज्ञानसामान्यग्राहकसाक्षिग्राह्यत्वरूपस्वतोग्राह्यत्वसम्भवात्, प्रवृत्तिसामान्ये तादृशप्रमात्वेन ज्ञायमाननिश्चयस्य हेतुत्वसम्भवात्, 'ज्ञातत्वेनाज्ञातत्वेन च सर्वं साक्षिभास्यमि'ति विवरणोक्तेरज्ञातत्वेन मिथ्यात्वविशिष्टस्य साक्षिभास्यत्वसम्भवात्, भ्रमेऽपि बाधात् पूर्वमुक्तप्रमात्वधीसम्भवेन ततः प्रवृत्तिसम्भवात्। एवं संवादिप्रवृत्तौ व्यवहारकालाबाध्यविषयकत्वेन हेतुत्वे न मानम्; संवादित्वस्य विसंवादित्वस्य वा जन्यतानवच्छेदकत्वात्, अन्यथा विषयनिष्ठा यावन्तो धर्माः, तद्व्यक्तितदन्यव्यक्त्यन्यतरत्वादयः, प्रत्येकं तद्वद्विशेष्यकप्रवृत्तित्वेनापि जन्यतापत्तेरिति भावः ॥

*ननु* दृश्यत्वादिहेतोः प्रत्यक्षबाध्यत्वं माऽस्तु, अनुमानबाध्यत्वं तु स्यात्; येन हेतुना भवतां व्यावहारिकत्वस्यानुमितिः पूर्वं सिद्धा, तेनैव पारमार्थिकत्वस्यानुमितिः सिद्धा; सा चेदानीं जायमानायां मिथ्यात्वानुमितौ प्रतिबन्धिकेत्याशयेन शङ्कते—*नचेति*॥ *प्रातिभासिकेति*॥ ब्रह्माविषयकधीबाध्येत्यर्थः। *विषयकत्वादीति*॥ 'सोऽयमि'ति वाक्यजन्यनिष्प्रकारकधीबाध्यभेदबुद्धेरुक्तवैलक्षण्यात्—'विषयकत्वादी'त्यादिपद-

न्यायामृतसौगन्ध्यम्

*ननु* चाबाध्यत्वरूपप्रामाण्यं प्रपञ्चज्ञाने मया नाङ्गीक्रियते, अतो यत्कालावच्छेदेनैवानेन स्वार्थो

सौगन्ध्यविमर्शः

बधेत इति। यदि व्यवहारकालाबाध्यत्वमात्रम्, तावता तु न मिथ्यात्वविरोधः, त्रिकालाबाध्यत्वे तु घटादौ न प्रमाणं पश्यामः। व्यवहारकालाबाध्यमपि तु वस्तुगत्या न साक्षिग्राह्यम्, साक्षिणा वर्तमानकालीनाबाध्यत्वमात्रस्य ग्रहणात्, इति तदंशेऽनुमानमेव वयं वस्तुगत्या मन्महे, कल्पान्तरीत्या तु व्यवहारकालाबाध्यत्वं साक्षिग्राह्यमिति वर्णितम् ॥

अद्वैतसिद्धिः

*ननु*—'घटः सन्' 'रूप्यं मिथ्ये'ति प्रतीत्योरविशेषे कथं 'घटो मिथ्या' 'रूप्यमिथ्यात्वं न मिथ्ये'ति विशेषः? नच तदपि मिथ्यैव; रूप्यतात्त्विकत्वापत्तेरिति—चेत्, *न*; मिथ्यात्वमिथ्यात्वेऽपि यथा न रूप्यस्य तात्त्विकत्वम्, तत्रोपपत्तेरुक्तत्वात्। नच—पारमार्थिकसत्त्वस्य प्रत्यक्षागोचरत्वे तन्निषेधश्रुतीनामप्रसक्तप्रतिषेधकता स्यादिति—वाच्यम्; तासां चक्षुरादिप्रसक्तद्वैत-निषेधपरत्वात्, पारमार्थिकत्वेन द्वैतनिषेधपरत्वेऽपि नाप्रसक्तनिषेधकत्वम्; परोक्षप्रसक्तेः सम्भवात्, "नान्तरिक्षेऽग्निश्चेतव्यः" इत्यादिवदप्रसक्तप्रतिषेधस्याप्युपपत्तेश्च। नच—अतात्त्विकप्रपञ्चे यदि तात्त्विकत्वमप्यध्यक्षेण न गृह्यते, कथं तर्हि तस्यातत्त्वावेदकत्वम्? नहि तदेव तत्त्वेनावेदयत् तात्त्विकं

न्यायामृतकण्टकोद्धारः

**किञ्च 'घटः सन्' 'रूप्यं मिथ्ये'ति प्रतीत्योरविशेषे कथं घटसत्त्वं मिथ्या? रूप्यमिथ्यात्वममिथ्येति विशेषः? नच तदपि मिथ्यैव; रूप्यतात्त्विकतापत्तेः। यदत्र वक्तव्यम्, तत् सामान्यतो मिथ्यात्वभङ्ग एवोक्तमिति तत्रैवावगन्तव्यम्। किञ्च पारमार्थिकसत्त्वस्य प्रत्यक्षागोचरत्वे कथं तन्निषेधः? अप्रसक्तत्वात्। नच—अपरोक्षप्रसक्त्यभावेऽपि परोक्षप्रसक्तेः सम्भवाद् निषेधोपपत्तिः; "नान्तरिक्षे न दिवी"त्यादिवद-प्रसक्तस्यापि निषेधसम्भवाच्चेति—वाच्यम्; पक्षीकृतातीन्द्रियप्रपञ्चविषये वेदस्य तदुपजीव्यानुमानस्य वाऽपेक्षितत्वात्, तस्य चोपजीव्यत्वेन धर्मिग्राहकतया प्रबलेन बाधे निषेधकस्याप्रामाण्यापत्तेः। अप्रसक्त-प्रतिषेधोऽप्यनुपपन्नः; "नान्तरिक्षे" इत्याद्यप्रसक्तनिषेधस्तु "हिरण्यं निधाय चेतव्यमि"ति विधिस्तुत्यर्थः।**

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

मुक्तम्, तेन ब्रह्मधीबाध्यविषयकत्वसंग्रहः। *तन्निषेधेति* ॥ तेन रूपेण द्वैतनिषेधेत्यर्थः। *अप्रसक्त-प्रतिषेधकतेति* ॥ येन रूपेण यत्र यद् न ज्ञातम्, तेन रूपेण तत्र तन्निषेधकतेत्यर्थः। *चक्षुरादीत्यादि* ॥ दृश्यत्वादिरूपेण चक्षुरादिना ब्रह्मणि ज्ञातस्य द्वैतस्य निषेधपरत्वादित्यर्थः। *नान्तरिक्ष इत्यादि* ॥

यत्र निषेधे तात्पर्यम्, तत्र प्रतियोगिप्रसक्त्यादिकं विना तत्कल्पनवैयर्थ्यात् तदावश्यकता, यत्र तु "नान्तरिक्षे" इत्यादौ न प्रतिषेधपरत्वम्, किन्तु मानान्तरसिद्धतदनुवादद्वारा विधेयस्तुतिपरत्वम्, तत्र न तदावश्यकता। तथाच सत्यत्वविशिष्टद्वैतरूपप्रतियोगिनो ब्रह्मणि ज्ञानरूपां प्रसक्तिं विनाऽपि मिथ्यात्वानुमानादिसिद्धस्य ब्रह्मगतस्य सत्यत्वरूपेण द्वैताभावस्यानुवादद्वारोक्तश्रुतीनां विधेयब्रह्मस्तुतिपरत्वमिति भावः ॥

*अर्थवादाधिकरणे*—'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवी'त्यत्र न प्रतिषेधधीः; प्रतियोगिनोऽ-न्तरिक्षादिनिष्ठचयनस्याप्रसक्तत्वात्, चयनविधिना पृथिव्यां चयनस्य प्रमितत्वेन प्रतिषेधबुद्ध्यसंभवात्, नच—पाक्षिकत्वाय निषेध इति—वाच्यम्; "यद्यग्निं चेष्यमाणः" इति पाक्षिकत्वस्य सिद्धवदनुवादाद्विना तस्य सिद्धत्वात्, तस्मादुक्तवाक्यमप्रमाणमिति प्राप्ते, "न पृथिव्यामि"ति वाक्यं शुद्धपृथिव्यां चयनाभावस्य

न्यायामृतसौगन्ध्यम्

**गृहीतस्तत्कालावच्छेदेनैव तन्निषेधः, यच्च प्रामाण्यं मयाऽभ्युपेयते, तद् व्यवहारदशायां विपरीतप्रमारूप-बाधकस्योत्पन्नत्वादस्त्येवेति चेत्, *न*; क्लृप्तदोषहीनकरणजन्ये प्रपञ्चज्ञाने निर्बीजप्रामाण्यत्यागस्याति-प्रसक्तत्वात्। (१) किंच पारमार्थिकसत्त्वस्य प्रत्यक्षागोचरत्वे त्वदभिमतनिषेधश्रुतीनामप्रसक्तप्रतिषेधता स्यात्। नच—परोक्षप्रसक्तेः सम्भवाद् नाप्रसक्तप्रतिषेधतेति—वाच्यम्; श्रुत्या प्रसक्तस्य श्रुत्या सर्वथा**

सौगन्ध्यविमर्शः

(१) निषेधो हि भ्रान्तिप्रसक्तस्यैव भवति, न तु प्रमाणप्रसक्तस्य। भ्रान्तिप्रसक्तनिषेधो नाप्रसक्तप्रतिषेधः, अन्यथा "न सुरां पिबेत्" इत्यादीनामपि शास्त्रप्रसक्तनिषेधत्वे विकल्पापत्तेः, ब्रह्मणि प्रपञ्चप्रसक्तिस्तु भ्रान्तिनिबन्धनैव, न प्रमानिबन्धना, 'सन् घटः' इत्यादीनां सत्त्वांशे प्रमात्वस्यैतावताऽप्यसिद्धत्वात्, श्रौतबाधेन भ्रमत्वनिर्णयाच्च ॥

अद्वैतसिद्धिः

नाम, दृश्यते च सार्वलौकिकप्रपञ्चे पारमार्थिकत्वानुभव इति—वाच्यम्; न ह्यस्माकं तत्त्वावेदकत्वं तद्वति तत्प्रकारकत्वम्, तद्भिन्नत्वमतत्त्वावेदकत्वम्, किं त्वबाधितविषयकत्वं तत्त्वावेदकत्वम्, बाधितविषयकत्वं चातत्त्वावेदकत्वम्, अबाधितविषयकत्वं च श्रौते ब्रह्मज्ञान एव, तद्भिन्नज्ञाने तात्पर्यवद्वेदत्वेनैव तत्त्वावबोधकत्वात्। तथाच प्रपञ्चप्रत्यक्षस्य तात्त्विकत्वागोचरत्वेऽप्यतत्त्वावेदकत्वं सङ्गच्छते। सार्वलौकिकी पारमार्थिकत्वप्रसिद्धिस्तु जलगतपिपासोपशमनसामर्थ्यप्रसिद्धिवत् परोक्षतयाऽप्युपपन्ना नापरोक्षत्वपर्यवसायिनी ॥

तस्माद्ध्यक्षयोग्यस्य सत्त्वस्येहानिरुक्तितः। नाध्यक्षबाधो मिथ्यात्वलिङ्गस्यात्रोपपद्यते ॥
न लौकिकं न सामान्यजन्यं साक्ष्यात्मकं न च। प्रत्यक्षं बाधते लिङ्गं मिथ्यात्वस्यानुमापकम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीविश्वेश्वरसरस्वतीश्रीचरणशिष्य-श्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ प्रत्यक्षयोग्यसत्त्वानिरुक्त्या प्रत्यक्षबाधोद्धारः।

न्यायामृतकण्टकोद्धारः

नच प्रकृते पारमार्थिकत्वनिषेधस्य विधिस्तुतिरूपं (१) प्रयोजनमस्ति; वेदान्तानां लक्षणया ब्रह्मपरत्वाङ्गीकारेण स्तुत्यर्थत्वासम्भवात्। किञ्च प्रपञ्चतात्त्विकत्वागोचरत्वे कथं प्रत्यक्षस्यातत्त्वावेदकत्वम्? नच—न प्रत्यक्षस्य तत्त्वावेदकत्वम्, तद्ध्यबाधितविषयकत्वम्, नच तदस्ति प्रत्यक्षे, किन्तु श्रौतज्ञान एवेति—वाच्यम्; अस्य मिथ्यात्वसिद्ध्युत्तरकालीनत्वेनेतरेतराश्रयत्वात् ॥

तस्माद्ध्यक्षयोग्यस्य सत्त्वस्येह निरुक्तितः। प्रत्यक्षबाधो मिथ्यात्वलिङ्गस्यात्रोपपद्यते ॥
लौकिकं चैव सामान्यजन्यं साक्ष्यात्मकं त्वपि। प्रत्यक्षं बाधते लिङ्गं मिथ्यात्वस्यानुमापकम् ॥

इति कण्टकोद्धारे मिथ्यात्वानुमानस्य प्रत्यक्षबाधः।

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

नित्यानुवादो "हिरण्यं निधाय चेतव्यमि"ति विहितहिरण्यस्तुत्यर्थः, तदुपपादकम्—"नान्तरिक्षे" इत्यादिकम्, यथाऽन्तरिक्षादौ न चयनम्, तथा शुद्धपृथिव्यामिति *सिद्धान्तितम्* ॥ *तात्पर्यवदिति* ॥ तात्पर्यम्= तत्परता, ब्रह्मपरतेति यावत्। *पिपासोपशमनेति* ॥ दुःखविशेषानुत्पादेत्यर्थः। *सामर्थ्येति* ॥ प्रयोजकशक्तीत्यर्थः। *पर्यवसायिनी = विशिष्टा। *न लौकिकमित्यादि* ॥ लौकिकादिप्रत्यक्षं न मिथ्यात्वानुमापकस्य बाधकम्। नापि पारमार्थिकत्वसाधकं लिङ्गं तद्बाधकमित्यर्थः ॥

इति श्रीपरमानन्दसरस्वतीपूज्यपादशिष्य-श्रीब्रह्मानन्दसरस्वती(२)विरचितायामद्वैतसिद्धिटीकायाम् अद्वैतलघुचन्द्रिकायां प्रत्यक्षयोग्यसत्त्वासम्भवात् प्रत्यक्षबाधोद्धारः ॥

न्यायामृतसौगन्ध्यम्

निषेधासम्भवात्, श्रुति-प्रत्यक्षाननुगृहीतानुमानस्याप्रमाणत्वाच्च। नच—"नान्तरिक्षेऽग्निश्चेतव्यः", इत्यादिवदप्रसक्तप्रतिषेधत्वेनाप्युपपत्तिः; निषेधश्रुतेर्वैयर्थ्यापत्तेः ॥

---

(१) विधिर्द्विविधः—अप्रवृत्तप्रवर्तकः, अज्ञातज्ञापकश्च। आद्यं विधित्वं कर्मोपासनाकाण्डगतानाम्, द्वितीयं वेदान्तानामिति बहूचभाष्यभूमिकायां व्यक्तम्। अतश्च—वेदान्तस्तावकत्वेन निषेधवाक्यानामर्थवादत्वमपि न बाधितम्।

(२) अभिनवद्रविडाचार्यसंगृहीतपरम्परायां प्रकाशानन्दादयो ब्रह्मानन्दसरस्वतीनां पूर्वाचार्या इति यद् निरूपितम्, तदिदं न साक्षाद् ब्रह्मानन्दसरस्वतीपरम्पराचार्याभिप्रायम्, किन्तु वार्तिककारीयपरम्पराभिप्रायम्। एतेषामाश्रमपरम्परा तु परमानन्दसरस्वतीपादानां साक्षाद्गुरवः के वेति न जानीमः ॥

न्यायामृतसौगन्ध्यम्

*यत्तु*—यत्र प्रतिषेधे तात्पर्यम्, तत्र प्रतियोगिप्रसक्तिरपि; तां विना तत्कल्पनावैयर्थ्यात् तदावश्यकता, यत्र तु "नान्तरिक्षे" इत्यादौ न प्रतिषेधपरत्वम्, किन्तु मानान्तरसिद्धतदनुवादद्वारा विधेयस्तुतिपरत्वम्, तत्र न तदावश्यकता। तथाच सत्यत्वविशिष्टद्वैतरूपप्रतियोगिनो ब्रह्मणि ज्ञानरूपां प्रसक्तिं विनाऽपि मिथ्यात्वानुमानादिसिद्धस्य ब्रह्मगतस्य सत्यत्वरूपेण द्वैताभावस्यानुवादद्वारोक्तश्रुतीनां विधेयब्रह्मस्तुतिपरत्वमिति, *तन्न*; पुंधीचमत्कारानुमानमात्रप्राप्तस्य श्रुत्याऽनुवादासम्भवात्। उक्तं च वाचस्पतौ "तर्काप्रतिष्ठानादि"त्यत्र—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥" इति।

(१) अनाद्यायाः श्रुतेरुत्तरकालप्रवृत्तानुमानगृहीतग्राहित्वेनानुवादकत्वोक्तेस्तुच्छत्वाच्च। किंच त्वदभिमतातात्त्विके प्रपञ्चे यदि तात्त्विकत्वमध्यक्षेण न गृह्यते; कथं तर्हि तस्य त्वदुक्तमतत्त्वावेदकत्वम्? नहि तदेव तत्त्वेनावेदयदतत्त्वावेदकम्। नच—अबाधितविषयत्वकत्वं तत्त्वावेदकत्वं श्रौते ब्रह्मज्ञान एवेति—वाच्यम्; वैषम्ये बीजाभावात् (२)।

इति सर्वतन्त्रस्वतन्त्रवनमालिमिश्रकृतौ न्यायामृतसौगन्ध्ये प्रत्यक्षयोग्यसत्त्वनिर्वचनेन मिथ्यात्वानुमानस्य प्रत्यक्षबाधः।

सौगन्ध्यविमर्शः

(१) अत एव सगुणवाक्यानामनुवादकत्वमित्यद्वैतराद्धान्तः। अनुवादकत्वं हि प्रमाणान्तरयोग्यार्थकत्वेनानादीनामपि वेदान्तानाम्; अन्यथा "अग्निर्हिमस्य भेषजमि"त्यादीनामप्यनादित्वादनुवादकत्वायोगात्, इत्यादि देवताधिकरणभामत्यादौ न्यायवार्तिकतात्पर्यटीकायां च व्यक्तम्॥

(२) तत्त्वावेदकत्वलक्षणप्रामाण्यं हि कालत्रयाबाध्यविषयकत्वेन, घटादीनां तु साक्षिणा प्रत्यक्षेण वा पूर्वोक्तप्रकारेण कालत्रयाबाधो न गृह्यते, ब्रह्मसाक्षात्कारबाध्यत्वात्तु न घटादीनां स्वरूपतोऽपि कालत्रयाबाध्यत्वमस्ति, अतो न दोषः॥

इति सौगन्ध्यविमर्शे प्रत्यक्षबाधोद्धारः।



